॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

# ॥ अथ श्रीपृथ्वीचंद्रचरित्रं प्रारभ्यते ॥

( कर्ता— श्रीलब्धिसागरसूरिः )

( द्वितीयावृत्तिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

श्रीपार्श्वं नौमि सर्वज्ञं । निर्दोषं त्रिजगन्नतं ॥ वांछंत्याकर्ण्य यद्वाणीं । विबुधा न सुधामपि ॥ १ ॥ धर्मेण सत्कुलारोग्यं । राज्यरामारमा नृणां ॥ सुलभं केवलं ज्ञानं । पृथ्वीचंद्रनरेंद्रवत् ॥ २ ॥ तथाहि—सर्वद्वीपाधिपो द्वीपो । जंबूद्वीपो विराजते ॥ मध्यस्थो वलयाकारः । सदा योजनलक्षयुक् ॥ ३ ॥ तत्रास्ति भारतं क्षेत्रं । नेत्रं किमु क्षितिस्त्रियः ॥ पदार्थाः सुगमाः सर्वे । जायंतेऽत्र यदाश्रयात् ॥ ४ ॥ तत्र देशाः सहस्राणि । द्वात्रिंशत् षट्खंड-

गाः ॥ पंचविंशतिरार्यास्तु । सार्धा अन्ये ह्यनार्यकाः ॥ ५ ॥ अंगवंगकलिंगाद्याः । कोशलः कुरुजांगलौ ॥ पंचालः सिंधुसौराष्ट्रौ । काशीमगधवत्सकाः ॥ ६ ॥ जंगीकुणालसंदर्भा । लाटवैराटवेदिकाः ॥ दशार्णमालवोद्भूताः । कुशार्तः सूरसेनकः ॥ ७ ॥ विदेहोऽर्धं च कैकेय्या । भुवोऽर्हच्चक्रिशौरिणां ॥ इत्यार्या अपरेऽनार्याः । कथिताः किल कोविदैः ॥ ८ ॥ विहारधैर्यदात्साधो–रार्यभूता अनार्यकाः ॥ अनार्या अभवन् देशाः । कत्यार्या अपि संप्रति ॥ ९ ॥ नाभिभूः स्वाह्वयान् देशान् । ददौ सूनुशताय यान् ॥ तेष्वेकसप्ततितम—महाराष्ट्राय योऽर्पितः ॥ १० ॥ स देशः सन्निवेशोऽस्ति । महाराष्ट्राभिधो भुवि ॥ सत्यापयन् महच्छब्दं । विद्यावित्तविलासतः ॥ ११ ॥ उदाराः स्फारशृंगारा—स्तारहाराः स्फुरगिरः ॥ विलसंति जना यस्मिन् । सलीलं देवीदेववत् ॥ १२ ॥ सुखस्थानं प्रतिष्टानं । पुरं तत्रास्ति पावनं ॥ प्रतिष्टा यस्य सर्वेषु । नगरेषु गरीयसी ॥ १३ ॥ तस्मिन् कुवलयोल्लासी । बिभ्राणः सकलाः कलाः ॥ निष्कलंकोऽद्भूतो भूपः । पृथ्वीचंद्रोऽस्ति चंद्रवत् ॥ १४ ॥ यस्मिन् कुर्वति साम्राज्यं । दुःखदोहदरिद्रताः ॥ दुष्कालो वैरिगर्वेषु । वर्धंते जातु नो जने ॥ १५ ॥ मंत्री परमहंसोऽस्ति ।

विवेकी राजहंसवत् ॥ वलक्षपक्षकस्तस्या—स्थानमानसमंडनं ॥ १६ ॥ तेनामात्येन मत्यैव ।
राज्ये निष्कंटकीकृते ॥ भोगी भोगान्नृपो भुंक्ते । वरवैजववासवः ॥ १७ ॥ निशांते चान्यदा
स्वप्ने । सुसुप्तः स इतः सुखं ॥ स्फाराकारां स्फुरद्धारां । चलत्कुंडलधारिणीं ॥ १८ ॥ तेजःपुं-
जमयीं कंठे । क्षिपंतीं सुमनःस्रजं ॥ साक्षाल्लक्ष्मीमिवालोक्य । वाद्यनादैरथोत्थितः ॥ १९ ॥
युग्मं ॥ अहो स्वप्नो मया शिष्टो । दृष्टोऽयं चिंतयन्निति ॥ स्मृतस्वदैवतः श्रांतो । मल्लयुद्धा-
दिखेदतः ॥ २० ॥ कृतसन्मर्दनस्नाना—लेपनो दिव्यचीवरः ॥ मौलिकुंडलकेयूर—हारी हा-
हारविभूषितः ॥ २१ ॥ शीर्षोपरिधृतछत्रः । पार्श्वचालितचामरः ॥ राजामात्यादिभिः सेव्यः
। स्वर्णसिंहासनस्थितः ॥ २२ ॥ चिरं जीव चिरं नंद । बंदिवृंदैरिति स्तुतः ॥ सौधर्मेंद्रः सु-
धर्मां व । सभां भूपो व्यभूषयत् ॥ २३ ॥ चतुर्भिः कलापकं ॥ तं महीनं सभासीनं । प्रती-
हारो व्यजिज्ञपत् ॥ दूतः स्वामिन्नयोध्यात । आगतो द्वारि तिष्टति ॥ २४ ॥ तस्याज्ञा की-
दृशी राज्ञा—ज्ञप्तो भ्रूसंज्ञया ततः ॥ सहसागत्य सोऽपीति । नृपं नत्वा न्यवेदयत् ॥ २५ ॥
स्वामिन् स कोशलादेशो । निवेशो धर्मकर्मणां ॥ न प्रवेशो द्विषां यत्र । क्लेशो नास्ति नि-

वासिनां ॥ २६ ॥ अयोध्यास्ति पुरी तत्र । न रोध्या यारिभिः कदा ॥ यस्य जन्माश्रिता लं-
का । नगरी न गरीयसी ॥ २७ ॥ दुर्गः स्वर्गसमो यत्र । सज्ज्योतिर्द्योतितांबरः ॥ खातिका
भाति चाप्यब्धेः । स्वसागाधजलैर्भृता ॥ २८ ॥ प्रासादकलशा यत्र । सदोद्योताः सुवर्णजाः ॥
स्पर्धंते सूर्यबिंबेनो-दयास्तौ वहतान्वहं ॥ २९ ॥ यत्रास्ति विपणीश्रेणिः । फलदा कल्पवल्ली-
वत् ॥ अखंममंरुपाधारा । सुमनोराजिराजिता ॥ ३० ॥ शोभितेक्ष्वाकुसद्वंशो । हंसोपमो वि-
वेकवान् ॥ महाराजकुलोत्तंसो । लब्धाशंसो जगत्यपि ॥ ३१ ॥ सोमदेवो नृपस्तत्र । राजते रा-
ज्यतेजसा ॥ रूपात्कामो नयाद्रामो । भीमकांतगुणान्वितः ॥ ३२ ॥ युग्मं ॥ स्वशीलशालि-
नी तस्य । राज्ञी कमललोचना ॥ हारिणी रूपसंपद्भि—र्लावण्यमृतसारणी ॥ ३३ ॥ तयो-
र्भोगवतोर्जाता । स्नेहसागरमग्नयोः ॥ मंजरी मन्मथद्रोः किं । तनया रत्नमंजरी ॥ ३४ ॥
पालिता पंचधात्रीभिः । पाठिता गुरुणा कलाः ॥ पावनं यौवनं प्राप्ता । वर्धमाना दिने दिने
॥ ३५ ॥ इतश्च कलिकालाभो । वर्षाकालः किलागमत् ॥ नाशयन् कमलोल्लासं । कुर्वन् मा-
र्गं च दुर्गमं ॥ ३६ ॥ इला सकंदला यत्र । जृंभितं मलिनैर्घनैः ॥ प्रह्वीभूतं द्विजिह्वैश्च । स्वयं

संवर्धितं जन्मैः ॥ ३७ ॥ तमप्यालोक्य विश्वेशं । जीवनोपायहेतुना ॥ सर्वे लोका गलच्छोका । हर्षोत्कर्षभृतोऽब्रवन् ॥ ३८ ॥ तदा वर्धापितो राजा । वनपालेन केनचित् ॥ त्वत्कारितं सरः स्वामिन् । सिंधुवत्सलिलैर्भृतं ॥ ३९ ॥ सद्वर्धापनिकां तस्मै । दत्वा शक्त्याधिकां मुदा ॥ सरःप्रति ससारासौ । हंसवत्सपरिच्छदः ॥ ४० ॥ तद् दृष्ट्वा मुदितो राजा । गृहमागत्य सत्वरं ॥ चरणार्थं द्विजातिभ्यो । मुहूर्तं शुद्धमग्रहीत् ॥ ४१ ॥ इतश्च कमलोल्लासं । दिक्प्रकाशं च कुर्वती ॥ तन्वती सुगमान् मार्गान् । द्योतयंतीडुभानुभाः ॥ ४२ ॥ शोषयंती भुवः पंकं । स्वच्छयंती जलाशयान् ॥ वर्षाभिः स्पर्धमानेव । शरल्लक्ष्मीः समागता ॥ ४३ ॥ युग्मं ॥ आश्विनश्वेतपंचम्यां । रम्याम्बरवानिह ॥ गत्वासीनो नृपः प्रौढे । सरःपालीस्थमंडपे ॥४४॥ देवशर्मसोमशर्म—यज्ञशर्माग्निशर्मकाः ॥ देवदत्तसोमदत्त—यज्ञदत्ताग्निदत्तकाः ॥ ४५ ॥ मुकुंदानंदगोविंद—जिष्णुकृष्णाः सविष्णवः ॥ सोमनाथजगन्नाथ—पद्माकरदिवाकराः ॥४६॥ पुराणस्मृतिवेदज्ञा । इत्याद्या अपरे द्विजाः ॥ राजादेशान्महामंत्रै—रकार्षुः शांतिकं तदा ॥ ॥ ४७ ॥ त्रिभिर्विशेषकं ॥ कर्पूरदेवी कस्तूरी । सारसी राजहंस्यपि ॥ इत्याद्याभिः प्रशस्या-

भि—र्वयस्याभिः परिवृता ॥ ४८ ॥ तद्विलोकितुमायाता । कुमारी रत्नमंजरी ॥ नृपं नत्वा तदुत्संगे । निविष्टा शिष्टचेष्टया ॥ ४९ ॥ युग्मं ॥ भूपस्तद्रूपमालोक्य । विस्मयादित्यचिंतयत् ॥ योग्योऽनुपमरूपाया । अहो अस्या वरोऽत्र कः ॥ ५० ॥ अथातिशीतलस्वच्छ-सुस्वादुसलिलैर्भृतं ॥ रविभाराजिराजीव-राजिकिंजल्कपिंजलं ॥ ५१ ॥ कोकचातकसत्क्रौंचं । हंससारससंकुलं ॥ सुखोत्तरच्चटच्छोक-पृथुसोपानशोभितं ॥ ५२ ॥ स्नानपानसुसंतुष्ट-पांथाशीर्वादसुंदरं ॥ पालीस्थदेवकुलिका-दंभस्फुर्जद्ध्वजव्रजं ॥ ५३ ॥ मनोविनोदकं याव-त्सरः पश्यत्यसौ दृशा ॥ कोऽपि हंसवरस्ताव-च्छुभगस्तत्करेऽपतत् ॥ ५४ ॥ चतुर्भिः कलोपकं ॥ सत्यं निरंजनो हंसो । वर्ततेऽयं मनोहरः ॥ सदैव मानसासीनो । योगवासिष्ठसंवरः ॥ ५५ ॥ इति स्तुत्वा तमुर्वीशो-स्पृशत्कोमलपाणिना ॥ क्षणं मे तात देहीति-वदंत्या दुहितुर्ददौ ॥ ५६ ॥ यावद्वाला मरालं तं । करे कृत्वा विलोकते ॥ तावदुड्डीन एवासौ । तामादाय स्वपक्षयोः ॥५७॥ राजाह दुःखितो भो भो । भट्टा धावत धावत ॥ श्रुत्वेति झटिति स्वास्त्रै-र्विकटा मिलिता भटाः ॥ ५८ ॥ वादिते रणतूर्यौघे । दिक्चक्रे पूरिते रवैः ॥ नेशुर्विप्राः क्रियां त्यक्त्वा । त्रे-

सुर्वालावलादयः ॥ ५९ ॥ कुमारीहारिणं हंसं । वीक्ष्य लीनं सरोंबुजे ॥ तारकास्तत्प्रविष्टास्तु । दैवयोगान्न लेभिरे ॥ ६० ॥ नृपः सपरिवारोऽथ । निराशो गृहमागतः ॥ ज्ञात्वा माता शुचाक्रांता—मूर्छन्मोहान्मुहुर्मुहुः ॥ ६१ ॥ उपचारात्सचैतन्या । राज्ञी कमललोचना ॥ जगाद हंसहंसेति । योगिनीव वियोगिनी ॥ ६२ ॥ यतः—चिंतातुराणां न सुखेन निद्रा । कामातुराणां न भयं न लज्जा ॥ अर्थातुराणां स्वजनो न बंधुः । क्षुधातुराणां न बलं न तेजः ॥ ६३ ॥ तयोर्दुःखार्तयोरेवं । बुधैर्बोधितयोर्बहु ॥ आशावशादतिक्रांता । षण्मासी दिव्यमासवत् ॥ ६३ ॥ अथांगरागतुल्यान्न—मंजरीपिंजरीकृता ॥ लसत्किंशुकनीरंगी । कोकिलाकुलकज्जला ॥ ६४ ॥ कुंदहासा सतिलका । वासांका हंसनूपुरा ॥ वनश्रीर्मुमुदे वीक्ष्य । वसंतं पतिमागतं ॥ ६५ ॥ युग्मं ॥ केचिज्जायंति नृत्यंति । रमंते केऽपि रासके ॥ मज्जंति दीर्घिकास्वेके । खेलंति कति दोलया ॥ ६६ ॥ छटां कुर्वंति चान्येषां । केऽपि कुंकुमवारिभिः ॥ कति पुष्पाणि चिन्वंति । सप्रिया यत्र भोगिनः ॥ ६७ ॥ आरामिकेण विज्ञप्तो । रम्यारामविलोकने ॥ तदा राजा गजारूढः । प्रस्थितः परिवारयुक् ॥ ६८ ॥ दृष्ट्वा सरः स्मरन्पुत्रीं । दत्तं के-

नचिदंबुजं ॥ निजे करांबुजे कुर्वन् । हृष्टः प्राप्याशु तां ततः ॥ ६९ ॥ मातायातां च तां श्रुत्वा । जाता संतोषिता ततः ॥ अस्तोको मिलितो लोको । गतः शोको द्विषां गृहे ॥ ७० ॥ वाद्यंते वर्यतूर्याणि । गीयंते वरगीतयः ॥ दीयंते भूरिदानानि । क्षीयंते स्वयमापदः ॥ ७१ ॥ मिष्टान्नैर्भोजिताः सर्वे । सद्वस्त्रैः परिधापिताः ॥ सुवाजिगजतांबूल—मानदानेन सत्कृताः ॥ ७२ ॥ जरणं मार्गणेन्द्रानां । जरणं सरसोऽप्यभूत् ॥ जातं पुनः पुनः पुत्री—प्राप्त्या वर्धापनं मुदा ॥ ७३ ॥ कृतार्थो जगतीजानि—र्गजारूढोंगजायुतः ॥ तोरणाद्युत्सवैः स्वर्ग—पुराभे प्राविशत्पुरे ॥ ७४ ॥ क गता कुत आयाता । शुभे इत्यद्भुतं नृपः ॥ दिव्यगामशृणोदेवं । तद्वक्तु केवली बली ॥ ७५ ॥ गृहे गत्वा नृपेणोक्ता । मंत्रिणः स्वीयमंत्रितं ॥ विवाहार्हा सुता जाता । कथं निश्चिंततास्ति वः ॥ ७६ ॥ विज्ञैस्तैरिति विज्ञप्तं । धन्या कन्या सुलक्षणा ॥ वरं वृणोति चेदिष्टं । तदा दोषो न कस्यचित् ॥ ७७ ॥ ज्ञाताकूतास्ततो दूता । राज्ञादिष्टा इति स्वयं ॥ सकलानचलाधीशा—नानयामासुराशु ते ॥ ७८ ॥ शिल्पिभिर्निर्मकपः प्रौढः । प्रारब्धोऽहमिहागतः ॥ इति विज्ञाय विज्ञप्तिं । स्वामिन्नागम्यतां द्रुतं ॥ ७९ ॥

पृथ्वीचंद्रनृपोऽपीति । मत्वा मुदितमानसः ॥ प्रतस्थे सुमुहूर्तेऽथ । चतुरंगचमूयुतः ॥ ७० ॥ महाकाया गिरिप्राया । गजा उन्मूलितद्रुमाः ॥ मदधाराधराश्चेलुः । शरणागतरक्षकाः ॥ ७१ ॥ गच्छंति तुरगास्तुंगा—स्तरंगाः कटकांबुधेः ॥ मंडिताः फेनपिंडेन । चला हेषारवाकुलाः ॥ ७२ ॥ कटके प्रकटा यांति । सर्वास्त्रैर्विकटा भटाः ॥ संकटाद्रक्षकाः पत्यु—र्जयलक्ष्म्याश्च लंपटाः ॥ ७३ ॥ अस्त्रैः पूर्णा भटाकीर्णाः । साश्वा घंटासुघोषणाः ॥ पूरयंति महावेगा । रथाः स्वामिमनोरथान् ॥ ७४ ॥ इति सैन्ययुतो मार्गे । मानितो मानिभिर्नृपैः ॥ पुरग्रामाकरान् पश्यन् । भूपः प्राप्तोऽटवीमिमां ॥ ७५ ॥ तमालतालहिंताल—बब्बूलबदरीयुता ॥ पलाशखदिरारिष्ट—बिभीतकबिभीषणा ॥ ७६ ॥ क्वचिच्च घूर्घुरद्व्याघ्रा । क्वचिद्गर्जन्मृगेंद्रका ॥ क्वचिद्भूकरफूत्कारा । शृगालकुलव्याकुला ॥ ७७ ॥ क्वचिद्दावानलज्वाला—धूमस्तोमतमोमयी ॥ क्वचिन्महाप्रवाहाढ्य—नदीभिरतिदुर्गमा ॥ ७८ ॥ क्वचित्कलकलारकाल—करालोत्तालकोकिला ॥ क्वचिददृश्यमार्गा च । पर्वतैः सर्वतः स्थितैः ॥ ७९ ॥ मार्गस्तु दुर्गमो ह्येषा—टवी नूनं दवीयसी ॥ भिल्ला मिलंति किं चात्र । यावच्चिंतयतीति सः ॥ ८० ॥

उच्छिता एव तावत्ते । चकितं कटकं ततः ॥ अटव्युपरि भूत्वाथ । परिप्राप्तं पुरं परं ॥ ९१ ॥ विस्मिताः सैनिकाः सर्वे । किमिदं व्यमृशन्मिथः ॥ इदं किमिंद्रजालं वा । किंचित्स्वप्नावलोकनं ॥ ९२ ॥ कोऽपि वक्ति सुधीः सत्य—मटव्यामपतच्चमूः ॥ पृथ्वीचंद्रश्चिरं जीया—द्यस्य पुण्यादिहागता ॥ ९३ ॥ मित्रीभवत्यरिः पुण्या—ज्जलं स्थलति पुण्यतः ॥ पुण्याद्राजायते रंकोऽरण्यं पुण्यात्पुरायते ॥ ९४ ॥ सौभाग्यभाग्यतारोग्य—संपत्तिस्फूर्तिकीर्तयः ॥ भवंति प्राणिनां पुण्या—त्तस्मात्तच्चतुरश्चरेत् ॥ ९५ ॥ मित्रं शत्रुर्भवेत्पापा—द्विषं स्यात्पापतोऽमृतं ॥ पापाद्रंकायते राजा । पापाद्दुःखीयते सुखी ॥ ९६ ॥ दुःखदौर्भाग्यदारिद्र्य—दैन्यदौर्जन्यदासताः ॥ न दूरे पापिनां तस्मात् । तन्न तन्वीत तत्ववित् ॥ ९७ ॥ फलमित्यादि तत्प्रोक्तं । शृण्वानाः पुण्यपापयोः ॥ सानंदाः सकला लोकाः । प्रापुः परिसरं पुरः ॥ ९८ ॥ नृपः सपरिवारोऽपि । सहकारतरोरधः ॥ तस्थौ स्वस्थो लसत्पुण्य—पाटवः पटमंडपे ॥ ९९ ॥ अथ तत्र भयत्रस्तः । कातरस्तरलेक्षणः ॥ पश्चादालोकयन् स्वामिन् । रक्ष रक्षेति च ब्रुवन् ॥ १०० ॥ चौरः कोऽप्यवनौ मूर्तो । भयानकरसः किमु ॥ दीनो दयावतस्तस्य । चरणं शरणं गतः ॥१॥

युग्मं ॥ मा त्रीर्मा त्रीरिति ब्रूते । यावद्भूपः कृपानिधिः ॥ उदायुधा नरास्ताव-दागतास्तं न्यवेदयन् ॥ २ ॥ सौम्याकारस्तु मूर्त्यायं । चौरः पौरजनार्दकः ॥ कठोरकर्मणा घोरः । कौर्यरक्तश्च सर्वदा ॥ ३ ॥ दुर्गमुल्लंघयत्येष । त्रोटयन् लोहशृंखलां ॥ कपाटान् स्फाटयत्येव—मुद्घाटयति तालकान् ॥ ४ ॥ बद्धो रज्जुं छिनत्त्येष । उद्याति प्रतिहक्तितः ॥ धावत्यन्निमुखं रुद्धो । दिव्यं सर्वं करोति च ॥ ५ ॥ अद्य दुर्गप्रणालेऽसौ । प्रविशन् पातितस्ततः ॥ बद्धोऽपि मोचयित्वा स्वं । प्रविष्टः शरणं तव ॥ ६ ॥ तदयं गोमुखो व्याघ्रः । स्थाप्यो नैव निजांतिके ॥ समर्प्यो द्रुतमस्माकं । लास्यामो ह्यन्यथा बलात् ॥ ७ ॥ केतुना सर्वशत्रूणां । राज्ञा समरकेतुना ॥ तलारक्षा नियुक्ताः स्मो । वयं पद्मपुरे त्विह ॥ ८ ॥ ज्ञास्यतीदं नृपश्चेत्ते । गर्वमंतं नयिष्यति ॥ स्तेनं यछत निर्दोषा । निजे मार्गे च गछत ॥ ९ ॥ पृथ्वीचंद्रनरेशोऽपि । निशम्य हसितो मनाक् ॥ उल्लाव्य सर्वशस्त्राणि । सुभटा उत्थितास्ततः ॥ १० ॥ किंचित्तैः प्रहता एते । प्रणष्टा दंरुपाशिनः ॥ प्रविष्टा नगरे कष्टा-द्राजानं तद्व्यजिज्ञपन् ॥ ११ ॥ शृंगारिता गजा राज्ञा । प्रौढाः प्रक्करिता हयाः ॥ रथाः संपूरिताः शस्त्रैः । पत्तयः प्रगुणीकृताः

॥ १२ ॥ वाद्यमानसुनिःस्वान— निर्घोषघनगर्जितः ॥ मदाढ्यकरिकल्लोलो । हयालिफेनपिंकवान् ॥ १३ ॥ चंचध्ध्वजचलच्चारु—रथबोहिच्छसंकुलः ॥ जयलक्ष्मीप्रदो राज्ञः । प्रासरत् कटकांबुधिः ॥ १४ ॥ युग्मं ॥ ततो बहिर्गतो राजा । ससैन्यः कानने स्थितः ॥ प्रथमं प्राहिणोद्दूतं । सोऽथ गत्वा तमभ्यधात् ॥ १५ ॥ अमानमानमारूढ । मूढ किं म्रियसे मुधा ॥ अस्माकं स्वामिनोऽद्यापि । भजाज्ञां कुशलं व्रज ॥ १६ ॥ श्रुत्वोचुर्मंत्रिणः किं रे । मूर्खशेखर भाषसे ॥ कूपमंडुकवच्चैक—दर्शी पश्यसि नापरं ॥ १७ ॥ सेवंते सर्वराजानः । पृथ्वीचंद्रं नृपं ह्यमुं ॥ वदेति स्वं प्रभुं चेत्त्वं । राजपंक्तौ तदा भज ॥ १८ ॥ अन्यथा राज्यहानिस्ते । मानम्लानिश्च भाविनी ॥ जीवन्मुक्तोऽसि दूतत्वा—द्याहि त्वं पाहि जीवितं ॥ १९ ॥ दूतेनोक्ते ततो राजा—चलदाकुलितः क्रुधा ॥ पृथ्वीचंद्रनृपोऽप्यागात् । प्रगुणीभूय संमुखं ॥ २० ॥ सैन्यद्वयेऽथ मिलिते । व्योम्नि धूलिभिरावृते ॥ निशाह्नोः प्राक्प्रतीच्योश्च । नान्ययोरंतरं ह्यभूत् ॥ २१ ॥ वाद्यंते रणतूर्याणि । कुट्यंते पटहाः स्फुटं ॥ घोष्यंतेऽसंख्यशंखाश्च । नाद्यंते घनभेरयः ॥ २२ ॥ धीरैर्वीरैर्भृशं हृष्टं । नष्टं सकलकातरैः ॥ स्वर्वधूभिस्तदा तुष्टं । संस्तुतं स-

वधाद्राज्ञः ॥ २३ ॥ शकित शेषनागेन । दिक्चक्रं चलितं पुनः ॥ घूर्णितं किल कूर्मेण । समस्तैः क्षुब्धमब्धिभिः ॥ २४ ॥ केशाकेशी दंष्ट्रादंष्ट्री । खड्गाखड्गी शराशरी ॥ कुंताकुंती चक्राचक्री । द्वंद्वयुद्धमभूत्तयोः ॥ २५ ॥ वैरिवीरैरथो भग्ने । स्वसैन्ये दैन्यसंयुते ॥ पृथ्वीचंद्रः क्षणं याव—च्चित्ते चिंतातुरोऽजनि ॥ २६ ॥ वीरः कोऽप्यागतस्ताव—द्दिवो दिव्यप्रभाववान् ॥ पातयित्वाखिलास्त्राणि । करेभ्यः किल वैरिणां ॥ २७ ॥ गृहीत्वा सैन्यतः शीघ्रं । बध्ध्वा समरकेतुकं ॥ पृथ्वीचंद्राग्रतो मुक्त्वा—ऽदृश्यीभूतः क्षणादपि ॥ २८ ॥ युग्मं ॥ सैन्ये जयारवे जाते । पृथ्वीचंद्रश्चमत्कृतः ॥ उन्मोच्य परिधाप्येति । कृपालुस्तमबोधयत् ॥ २९ ॥ अरे त्वं बालभूपालः । पालयन्मेदिनीमपि ॥ न वेत्सि क्षात्रियं धर्मं । मत्तो मत्तोऽर्थयन्निमं ॥३०॥ मेरुचूला चलत्यत्र । कदाचिद्बध्यतेऽनिलः ॥ वार्धिर्मुंचति मर्यादां । कंपते च कुलाचलाः ॥३१॥ तमःस्तोमो रवेर्बिंबा—त्तापव्यापः सुधाकरात् ॥ शीतोऽग्नेः क्षत्रियो दद्या—च्छरणस्थं तथापि नो ॥ ३२ ॥ युग्मं ॥ पापरक्तास्तथा जिह्वा । नार्पयंत्याश्रितं हि ये ॥ हीनो दीनो मतस्तेभ्यः । क्षत्रियो योऽर्पयेदमुं ॥ ३३ ॥ ते हि श्लाघ्या नराः स्वीयैः । प्राणैः रक्षंति चापरान् ॥ परप्रा-

णैर्निजप्राणान् । पोषयंतोऽधमाः खलु ॥ ३४ ॥ चलं राज्यं चला लक्ष्मी–श्चलमायुश्चलं वपुः ॥ असारेऽप्यत्र संसारे । निश्चलं जीवरक्षणं ॥ ३५ ॥ हेमभूम्यादिदानानां । प्रत्यहं क्षीयते फलं ॥ फलं त्वभयदानस्य । वर्धते हि दिने दिने ॥ ३६ ॥ परमायुः परं रूपं । परमंगं परं बलं ॥ इदं दयाकल्पवल्ल्या । बुधैरुक्तं फलं कलं ॥ ३७ ॥ निशम्येति प्रशांतोऽवक् । शरणस्थः शृणु प्रभो ॥ धन्योऽसि त्वमहं येना–रक्षकेभ्योऽस्मि रक्षितः ॥ ३८ ॥ अमारयिष्यन्मामेते–ऽहारयिष्यं नृजन्म तत् ॥ श्रुत्वेति सुंदराकारं । तंप्रति नृपतिरवक् ॥ ३९ ॥ त्वं तु मूर्त्या सदाकारो । ह्याचारस्ते किमीदृशः ॥ इति पृष्टे स आचष्ट । श्रूयतां मच्चरित्रकं ॥ ४० ॥ अंगदेशे गतक्लेशे । नगरं श्रीपुरं बभौ ॥ तत्र लक्ष्मीधरः श्रेष्ठी । दशकोटीधनेश्वरः ॥ ४१ ॥ भार्या लक्ष्मीवती तस्य । सुतोऽभूत् ख्यातयोस्तयोः ॥ नाम्ना च श्रीपतिर्ज्ञेयो । रूपादिगुणमंडितः ॥ ४२ ॥ पितर्युपरते तस्मिन् । सुतस्याभाग्ययोगतः ॥ रक्षितं स्वं वणिक्पुत्रै–र्दायादैर्भक्षितं कियत् ॥ ४३ ॥ किंचित्प्रवहणे क्षिप्तं । गृहीतं वार्धिना धनं ॥ दग्धं च वह्निना किंचिद् । भूम्यामेव स्थितं कियत् ॥ ४४ ॥ ग्रस्तं च तस्करैः किंचि–न्मुषितं भिल्लधाटि-

न्निः ॥ अन्यायादर्थहितं राज्ञा । व्ययितं च गृहव्यये ॥ ४५ ॥ मध्ये च दशकोटीनां । ल-
क्षमेकं च संस्थितं ॥ चेदिदं यास्यति तर्हि । न मया प्रापयिष्यते ॥ ४६ ॥ स श्रीपतिर्विचिं-
त्येति । रत्नद्वीपगमोत्सुकः ॥ नानाक्रयाणकैर्युक्तं । पोतं सज्जीचकार च ॥ ४७ ॥ तस्मिन् पो-
तं समारूढे । वादिता भेरयो भृशं ॥ दत्ताः प्रयाणढक्काश्च । पटहैर्गर्जितं नभः ॥ ४८ ॥ ऊ-
र्ध्वीकृतश्च कूपोऽपि । शीघ्रमुत्तंभितः सढः ॥ दिशोऽपि पूजिताः सर्वाः । सर्वतो लंबिता ध्व-
जाः ॥ ४९ ॥ कियत्यब्धौ गते पोते । विषमा वायवो ववुः ॥ वार्दलैर्व्यापितं व्योम । तरंगौ-
घैर्विजृंभितं ॥ ५० ॥ तद्वीक्ष्य केऽपि हा दैवे—त्यूचुस्तु भयकातराः ॥ मातरं पितरं केऽपि ।
स्मरंति स्वप्रियां सुतं ॥ ५१ ॥ सहसा वहनं भग्नं । पर्वतास्फलितं ततः ॥ फलकं श्रीपतेरेकं
। करे लग्नं च दैवतः ॥ ५३ ॥ गुर्वादेशमिवासाद्य । तत्काष्टफलकं दृढं ॥ सुखेनांबुनिधिं ती-
र्णो । भववत्स त्रिभिर्दिनैः ॥ ५४ ॥ सोऽटन्नब्धितटे पीत्वा । सरसः सरसं जलं ॥ फलान्या-
स्वाद्य हृद्यानि । सुस्थितश्चलितः पथि ॥ ५५ ॥ कोऽप्यत्र मिलितो योगी । नतस्तेन विवे-
किना ॥ जगौ सगौरवं लाहि । त्वमेकं देहि मे पुनः ॥ ५६ ॥ अथावक् श्रीपतिः स्वामिन् ।

पूर्वमेकं प्रयच्छ मे ॥ नितरां निर्धनान्मत्तः । पश्चाल्लाहि यथोचितं ॥ ५७ ॥ बंधछोटनकां वि-
द्यां । पाठसिद्धां प्रदाय सः ॥ अधावन्मस्तकं छेत्तुं । योगी तस्य निजासिना ॥ ५८ ॥ सोऽथ
मृत्युभयान्नष्टः । प्रणाल्यां प्राविशत्पुरः ॥ एभिरारक्षकैर्बद्धो—ऽन्यस्य चौरस्य शंकया ॥ ५९॥
विद्यया छोटयित्वा स्वं । त्वच्छरणमागतः ॥ स चाहं श्रीपतिर्ज्ञेयः । कृपया रक्षितस्त्वया
॥ ६० ॥ कुस्त्रीमाया नभश्छाया । यथा स्वप्नाः शरद्घनाः ॥ असत्स्नेहोंगिनां देहो । मम ल-
क्ष्मीस्तथाभवत् ॥ ६१ ॥ मत्वाऽसारं च संसारं । दर्शनाद्वचनात्तव ॥ महाराज विरक्तोऽहं ।
गृहीष्ये तापसव्रतं ॥ ६२ ॥ इत्याख्याय स्थिते तस्मि—न्नवक्समरकेतुराट् ॥ स्वामिन् कुर्वंति
सांनिध्यं । शूरा विघ्नं हरंति ते ॥ ६३ ॥ दृष्ट्वा तवाद्भुतं भाग्यं । वैराग्यं च ममाजनि ॥ क-
रिकर्णा वियद्वर्णा । यथा पर्णानि पिप्पले ॥ ६४ ॥ अर्कतूलं तालमूलं । नदीकूलं घनागमे ॥
वास्तरंगाः खलासंगा । यथा रंगाः पतंगजाः ॥ ६५ ॥ यथा ध्वजांचलस्ताद्व—ग्भवश्चंचल
एव हि ॥ ज्ञात्वेति तापसो भावी । परं राज्यं गृहाण मे ॥ ६६ ॥ त्रिभिर्विशेषकं ॥ पृथ्वीचं-
द्रोऽप्यवग्वाचं । राजन् मा जन्म हारय ॥ अज्ञात्वा धर्ममर्म त्वं । कुर्वन् क्लेशकरं तपः ॥६७॥

श्लाघ्यते सफलः शाखी । सजलस्तु घनागमः ॥ सबलः सुभटो यद्वत् । सकलः सकलो जनः ॥ ६७ ॥ सदानो द्यूतसंयुक्तः । समानो मानवो मतः ॥ सगानोऽपि च गंधर्वः । सज्ञानस्तु यतिर्यथा ॥ ६९ ॥ सजयो वर्ण्यते वादी । नेतापि सनयो यथा ॥ शिष्यः सविनयः शिष्टः । सभयः साधकः शुभः ॥ ७० ॥ सरयो भ्राजते वाजी । सलयो जापकारकः ॥ सहयो राजते राजा । धर्मस्तु सदयस्तथा ॥ ७१ ॥ सदा पद्मधरस्तंबः । कृतपीकोऽप्यवंशजः ॥ शरवद्भजते लक्षं । गुणैर्युक्तो नरोत्तमः ॥ ७२ ॥ भूमिशय्योऽपि नग्नोऽपि । पशुप्रायः स तापसः ॥ खानितो मृत्तिकां लाति । यः स्नात्यगलितैर्जलैः ॥ ७३ ॥ समिद्भिस्तापयत्यग्निं । ददाति विविधाहुतीन् ॥ उड्डापयत्यसौ वायु—मत्ति श्यामादिकान् कणान् ॥ ७४ ॥ त्रोटयेत्फलपुष्पाणि । तरुशाखाश्च मोटयेत् ॥ सेवालकंदमूलानि । भक्षयेत्प्रासुकोज्झितः ॥ ७५ ॥ तत्राश्रितांस्त्रसान्निघ्न—न्निति षण्णां विराधकः ॥ स्वयं ब्रुडन् भवाब्धौ यः । स कथं परतारकः ॥ ७६ ॥ त एव गुरवः सेव्या । महाव्रतधुरंधराः ॥ करंडा गुणरत्नानां । तरंडा भवसागरे ॥ ७७ ॥ यतः —जह लोहसिला अप्पंपि । बोलेइ तहवि लग्गपुरिसंपि ॥ इअ सारंभो य गुरु । परमप्पाणं

च वोलेइ ॥ ७८ ॥ कृतमोहद्विषद्दंभा—श्चंभास्तीव्रतपस्त्विषा ॥ अप्रमत्तत्वभारंभा । अखंडाः शीलपालने ॥ ७९ ॥ तपःशोषितस्वीयांगाः । पात्राणि प्रशमांभसां ॥ दात्रात्रा ममतावल्ल्यां । मात्रादिस्वजनाऽरताः ॥ ८० ॥ सुदर्शनधरा व्यस्त—नरकाः समतास्थिराः ॥ साधवो माधवायंते । भव्यारामविकासने ॥ ८१ ॥ सुकाष्ठाः स्वल्पसंगाश्च । सगुणा यानपात्रवत् ॥ ये तरंति भवांभोधिं । तारयंत्यपरानपि ॥ ८२ ॥ पंचभिः कुलकं ॥ निर्लज्जोऽस्थिधनो नग्नो । जटालो धूलिधूसरः ॥ पाषाणपुत्रिकासक्तः । कपाली विषभक्षकः ॥ ८३ ॥ सर्पभृद् वृषभारूढो—ऽट्टहासी नाटकप्रियः ॥ ईश्वरो मन्यते योऽज्ञैः । स बाल इव खेलति ॥ ८४ ॥ जलशायी पतिर्लक्ष्म्या । अपि यो गोपिकारतः ॥ मुक्तिगमी न कामीव । हरिः कपटपंडितः ॥ ८५ ॥ एवं ब्रह्मादयो देवाः । सस्त्रीकाः शस्त्रधारिणः ॥ तोषरोषपरा राग—द्वेषाढ्याः स्युर्न मुक्तिदाः ॥ ८६ ॥ वीतरागो गतद्वेषः । सर्वज्ञः श्रितवत्सलः ॥ कांत एकांतशांतः स्या—न्मुक्तयेऽर्हन्न चापरः ॥ ८७ ॥ सूर्यखद्योतयोर्ध्वांत—द्योतयोर्ग्रावपोतयोः ॥ यशःकलंकयोः पुण्य—पापयो राजरंकयोः ॥ ८८ ॥ आनंदशोकयोः साधु—लोकयोर्घूककोकयोः ॥ क्षारकर्पूरयोः पार—पुरयोर्भी·

रुधीरयोः ॥ ८९ ॥ स्नूहीखर्जूरयोर्मूर्ख—दक्षयोर्निःस्वयक्षयोः ॥ विप्रश्वपाकयोर्नीच—नाकिनोर्हंसकाकयोः ॥ ९० ॥ क्रोष्टुकेसरिणोरौष्ट्र—करिणोः स्थलवारिणोः ॥ विषपीयूषयो रोष—तोषयोर्गुणदोषयोः ॥ ९१ ॥ एवं स्यादंतरं यादृक् । शुभाशुभपदार्थयोः ॥ तादृग्यथोचितं ज्ञेयं । विज्ञैर्देवकुदेवयोः ॥ ९२ ॥ नैव दीपो विना तैलं । विनार्कं न यथा दिनं ॥ न प्रतीतिर्विनोदर्कं । वादस्तर्कं विना न च ॥ ९३ ॥ गुरुं विना न विद्या स्यात् । फलं नैव विना तरुं ॥ नाब्धिपारो विना नावं । धर्मो भावं विना न हि ॥ ९४ ॥ रोगो नैव विनाऽजीर्णं । भोगो नैव विना धनं ॥ न हि योगो विनाभ्यासं । न शोको ममतां विना ॥ ९५ ॥ शक्तिर्नैव विना जीवं । सूक्तिर्नैव विना कविं ॥ तृप्तिर्नान्नं विना तद्व—न्मुक्तिर्नैव विना जिनं ॥ ९६ ॥ तथा च-विनश्येत्कुनृपे राज्यं । यथा कार्यं विलंबतः ॥ वाणिज्यं लेखकालस्या—द्राज्यं च बहुतापतः ॥ ९७ ॥ प्रासादः पिप्पलाद्राज—प्रसादः खलसंगमात् ॥ कुपंक्तिताच्छात्रो भ्रंस्या—च्छात्रं क्षयविकारतः ॥ ९८ ॥ अभिमानभराद्दानं । संतानं च कुसंगतः ॥ ध्यानं युवतीसंसर्गा—ज्ज्ञानं च खरसंगतः ॥ ९९ ॥ निष्पन्नं शलभैः क्षेत्रं । नेत्रं चाप्यर्कदुग्धतः ॥ स्वश्लाघया गुणौघश्च ।

तथा धर्मोऽपि हिंसया ॥ २०० ॥ ततस्त्यक्त्वा कुदेवेन्द्रां । सेवस्व तु त्वमर्हतः ॥ सुगुरुं कुगुरुत्यागा-द्धर्मं हिंसानिरासतः ॥ १ ॥ एतां तत्वत्रयीं प्राप्य । दुष्प्रापां रत्नकोटितः ॥ जीवः संसारकांतारं । मुक्त्वा मुक्तिश्रियं श्रयेत् ॥ २ ॥ पृथ्वीचंद्रनृपस्येति । पीत्वा तत्वकिरं गिरं ॥ प्रबुद्धौ तौ क्षणाद्याव-त्कुरुतः संयमे मनः ॥ ३ ॥ कोऽप्यकोपी मुनिस्ताव-दागमद्गगनाध्वना ॥ मनोरथरथा यस्मा-न्न स्खलंति सतां क्वचित् ॥ ४ ॥ स चारणमुनिः सर्वै-र्वंदितो देशनामदात् ॥ यां निपीय सुधादेश्यां । चित्ते चैते चमत्कृताः ॥ ५ ॥ पृथ्वीचंद्रनृपे न्यस्य । राज्यं राजाथ सोत्सवं ॥ श्रीपतिश्च विरक्तौ तौ । प्राव्राजिष्टां तदंतिके ॥ ६ ॥ गुरुमासेव्य गीतार्थौ । तप्त्वा तीव्रतरं तपः ॥ कालेन केवलालोकं । कलयंतौ शिवं गतौ ॥ ७ ॥ युग्मं ॥ ततः पद्मपुरे गत्वा । रक्षादक्षं स्वमंत्रिणं ॥ भूपः परमहंसाख्यं । स्थापयित्वाग्रतोऽचलत् ॥८॥ अयोध्यानगरीं प्राप्तः । प्रयाणैः सप्तभिश्च सः ॥ सोमदेवेन सोऽन्येत्यो-त्तारके स्थापितः सुखं ॥ ९ ॥ मकरध्वजचंद्रौ च । मदनध्वजभूपतिः ॥ सिंहरथो हरिकेतुः । सिंहकेतुस्तथैव च ॥ १० ॥ धूमकेतुर्जितारिश्च । जितशत्रुर्यशोधरः ॥ श्रीभानुश्चंद्रकांतश्च । अन्ये तत्रागता नृ-

पाः ॥ ११ ॥ निष्पादितः सूत्रधारैः । स स्वयंवरमंरूपः ॥ सर्वत्र पद्मिनीपत्रैः । श्रियेवाछादि-
तस्ततः ॥ १२ ॥ शस्ता भुवि बभुर्यत्र । कुंनकाः शातकुंभजाः ॥ उत्तंन्तिता मणिस्तंनाः । प-
ट्टाः स्फटिकसंनवाः ॥ १३ ॥ कुर्वाणा नाटकं चित्रं । स्फुटं स्फटिकपुत्रिका ॥ स्तंनलग्ना ज-
नैस्तत्र । स्वर्वधूवदमन्यत ॥ १४ ॥ दुकूलनिर्मलोल्लोचे । लंबितान् वरमौक्तिकान् ॥ प्रालं-
वान् वीक्ष्य विज्ञोऽव—ग्सत्यं तारकितं नन्नः ॥ १५ ॥ द्योतंते स्वर्णकुंनाश्च । स्फुरंत्यत्र पता-
किकाः ॥ गंधा मघमघायंते । कर्पूरमृगनान्निजाः ॥ १६ ॥ वाद्यंते हृद्यवाद्यानि । गीयंते शु-
नगीतयः ॥ नाटकानि विधीयंते । दीयंते संपदोऽर्थिनां ॥ १७ ॥ कुसुमप्रकरः क्षिप्तो । रचि-
ता तोरणावलिः ॥ नामांकितानि न्यस्तानि । स्वर्णसिंहासनानि च ॥ १८ ॥ सप्तन्निः कुलकं ॥
प्रेष्य दूतांस्तथाहूताः । सोमदेवनृपेण च ॥ नूपास्तत्र स्फुरद्रूपा । आगता आसने स्थिताः
॥ १९ ॥ सुरूपं स्वासनासीनं । छत्रचामरमंबरं ॥ पृथ्वीचंद्रं निरीक्ष्येति । चिंतयामासुराशु ते
॥ २० ॥ नन्वेनं वरिता कन्या—स्माकमागमनं वृथा ॥ लोकास्तु तद्गुणालोका—न्मुदिता
अस्तुवन्निति ॥ २१ ॥ युग्मं ॥ अक्षरेषु यथोंकारो । ह्रींकारो मंत्रमंमले ॥ द्वीपेषु जंबूद्वीपो-

ऽयं । दीपानां रत्नदीपकः ॥ २२ ॥ ज्योतिश्चक्रे यथा चंद्र । इंद्रः सर्वसुपर्वसु ॥ शेषनागोऽन्यनागेषु । श्रीरागो रागसंततौ ॥ २३ ॥ ऐरावणः करिव्राते । मंडलेशेषु रावणः ॥ पर्वतानां यथा मेरुः । स्वस्तरुर्जाति शाखिनां ॥ २४ ॥ कुंडलं स्त्रीविभूषासु । स्थिरेषु ध्रुवमंडलं ॥ पूरेषु स्वर्णदीपूरः । कर्पूरश्च सुगंधिषु ॥ २५ ॥ प्रधानेष्वन्वयः श्रेष्ठो । यथा धान्येषु शुक्लकं ॥ दानेष्वभयदानं च । ज्ञानं ज्ञानेषु केवलं ॥ २६ ॥ रसेषु चामृतं षट्सु । मतेष्वर्हन्मतं मतं ॥ घृतं भोज्येषु भूपेषु । पृथ्वीचंद्रो नृपस्तथा ॥ २७ ॥ सोमदेवनरेंद्रेण—कारिता वेत्रिणाथ सा ॥ कृतस्नानांगरागागात् । सदस्यंबरडंबरा ॥ २८ ॥ हारनूपुरकेयूर—मुख्यभूषणभूषिता ॥ श्रीमूलमुखतांबूला । नयनांजनराजिता ॥ २९ ॥ रूपपात्रेण गात्रेण । जयंती जगतीसतीः ॥ मस्तके विधृतछत्रा । पार्श्वयोः श्रीकरीवरा ॥ ३० ॥ नरवाहनमारूढा । व्यूढा चारुसखीगणैः ॥ करात्तसुमनोमाला । बाला जनपरिवृता ॥ ३१ ॥ दर्शिताध्वा प्रतीहार्या । विविधातोद्यपूर्वकं ॥ आगता मंडपे तत्र । कुमारी यावदद्भुता ॥ ३२ ॥ पंचभिः कुलकं ॥ स्मरापस्मारदोषेण । तावत्क्षुभितचेतसः ॥ विविधां कुर्वते चेष्टां । स्वेष्टां तत्राखिला नृपाः ॥ ३३ ॥ हृदि

ध्यायंति ते किं नु । रंभेयं वा तिलोत्तमा ॥ उर्वशी देवकन्या वा । त्यक्त्वा स्वर्गमिहागता ॥ ३४ ॥ केयूरांश्चालयत्येको । हारं संचालयेत्परः ॥ अब्जमुच्चालयेत्कश्चि—दुच्चालयति कंडुकं ॥ ३५ ॥ मुखमालोकयेत्खड्गे । कोऽपि कश्चित्तु दर्पणे ॥ मित्राणां दर्शयत्यन्यः । कुंडलं कांतिमंडलं ॥ ३६ ॥ पठन्नन्योक्तिवक्रोक्ती । स्वभावं ज्ञापयेत्परः ॥ भट्टैश्च स्वयशः कश्चि—द्भाणयत्यङ्गिसंज्ञया ॥ ३७ ॥ पंचभिः कुलकं ॥ तस्मिन् जगज्जनप्रीति—प्रसरेऽवसरे ततः ॥ अमिलन्मानवाः सिद्धाः । खेचरा देवदानवाः ॥ ३८ ॥ यशोधरी प्रतीहारी । प्रति राजसुतामवक् ॥ कुमारि चित्रकारि त्व—द्भाग्यमस्तीह निःसमं ॥ ३९ ॥ मिलितास्त्वत्कृते भूपाः । कलिता भूरिसंपदा ॥ चलिता वरितुं त्वं त—त्फलितास्तन्मनोरथाः ॥ ४० ॥ आकर्णय सकर्णे त्वं । राजायं मकरध्वजः ॥ दशलक्षमागधस्वामी । पुरे राजगृहे बभौ ॥ ४१ ॥ दृष्टः करोत्ययं हर्षं । हृष्टो हरति चापदं ॥ रुष्टो मुष्णाति सर्वस्वं । तुष्टः पुष्णाति चाश्रितं ॥ ४२ ॥ मुखे गीरुल्लसत्यस्य । वसत्यसिलता करे ॥ बहुलोहा सुवर्णाढ्या । परहृद्भेदिनी सदा ॥ ४३ ॥ करात्तकरवालं त—द्रसालं च गुणश्रिया ॥ अमुं भूपालमुद्भालं । सकलं प्रबलं वृणु ॥ ४४ ॥

अथेश्वरो महैश्वर्यो । वाराणस्या नरेश्वरः ॥ चंद्रास्यश्चंद्रनामायं । चंद्रतुल्यलसद्यशाः ॥४५॥
प्रौढां गजघटां दृष्ट्वा । गुंफितामस्य संगरे ॥ सपक्षपर्वताशंका । क्षणमुत्पद्यते हरेः ॥ ४६ ॥
वेगतो व्यापिनीं वीक्ष्य । वाजिराजिं रणांगणे ॥ संपद्यतेऽरिचित्ते च । कालक्षुब्धाब्धिवीचि-
भा ॥ ४७ ॥ त्रैलोक्याद्भुतसौभाग्य—मालोक्योत्फुल्लया दृशा ॥ कुरुष्व मे ह्यमुं नूनं । स्व-
स्रजा भूभुजं वृणु ॥ ४८ ॥ अथ वैदर्भदेशांतः । श्रीकुंडिनपुराधिपः ॥ महाध्वजः स्ववंशाग्रे ।
राजायं मदनध्वजः ॥ ४९ ॥ यो हरत्यार्जुनीं कीर्त्तिं । धनुर्धारितया ततः ॥ करोत्यभिनवं
कर्णा—वतारं स्वर्णदानतः ॥ ५० ॥ असंख्यगुणरत्नानां । रोहणं स्वांतकोमलं ॥ सौजन्यामृ-
तभृंगारं । श्रृंगारं नृपपर्षदः ॥ ५१ ॥ मनोहरमपारं च । गजाश्वरथपत्तिभिः ॥ तदमुं कुरु
भर्तारं । क्षिप्त्वा वरस्रजं स्वयं ॥ ५२ ॥ युग्मं ॥ अथ गौडमहादेशो—त्तंसो हंसपुरेश्वरः ॥
अयं सिंहरथो राजा । सिंहो वैरिकरिव्रजे ॥ ५३ ॥ केतकीकुंदकर्पूरो—ज्ज्वलैर्यत्कीर्तिमंड-
लैः ॥ भुवने प्रसृतैरेवं । ब्राह्मी सृष्टिर्नवीकृता ॥ ५४ ॥ कालिंदी स्वर्णदी भूता । कैलासा-
भोंजनाचलः ॥ शेषायंतेऽखिला नागा । बलदेवायते हरिः ॥ ५५ ॥ शंभुः शुक्लोऽभवत्कंठ-

कालकूटं सुधायते ॥ गजा देवगजायंते—ऽर्णवाः क्षीरार्णवोपमाः ॥ ५६ ॥ विश्वरंजनचातुर्यं । समृद्ध्याप्यविनश्वरं ॥ अमुं नरेश्वरं शीघ्रं । कुरु त्वं जीवितेश्वरं ॥ ५७ ॥ सद्गोटमुकुटाकार–श्रीपुरप्रचुरप्ययं ॥ हरिकेतुरिति नृपः । कूपः सर्वर्द्धिसंपदां ॥ ५८ ॥ अवंशजानपि स्तब्धान् । रणे वितरणे तथा ॥ सशब्दान् मार्गणानाशु । करोत्यथ सलक्षकान् ॥ ५९ ॥ सन्त्राजनागतानेक–नृपवृंदसन्त्राजनं ॥ एनमुरूह्य भूयास्त्वं । न्नाग्यसौन्नाग्यन्नाजनं ॥ ६० ॥ इत्याद्या ये प्रतीहार्या । वर्णिताः सकला नृपाः ॥ कुलांगदेशवेषाद्यै–र्दोषैस्ते निंदितास्तया ॥ ६१ ॥ यं यं पश्यति सा भूपं । सानंदो जायतेस्म सः ॥ यो यो मुक्तस्तया सैष । श्यामोऽभूद्दवदग्धवत् ॥ ६२ ॥ मुखचंद्रं निरीक्ष्याथ । पृथ्वीचंद्रनरेशितुः ॥ कुमार्याः प्रासरत्प्रेम–सागरः प्रीतनागरः ॥ ६३ ॥ प्रतीहारी पुनः प्राह । तामन्निप्रायवेदिनी ॥ दृष्टे यत्रासि सोल्लासा । पिब तस्य कथामृतं ॥ ६४ ॥ आसीच्चक्रधरोऽयोध्या–नगरे सगरः पुरा ॥ लक्षाणि चतुरशीतिः । प्रशस्ता यस्य हस्तिनः ॥ ६५ ॥ जंगमा गरुत्माः किं नु । तावंतश्च तुरंगमाः ॥ मनांसीव सतां प्रौढा–स्तावंतश्च रथाः खलु ॥ ६६ ॥ निःस्वानानि च वाद्यंते । न्नज्यंते वैरिणो यतः ॥

कोट्यः षण्णवतिर्ग्रामा । अभिरामाः सुखश्रिया ॥ ६७ ॥ तावंतोऽस्य पताकिन्यां । पत्तयः श-
स्त्रपाणयः ॥ संबाधनान्यबंधानि । सहस्राणि चतुर्दश ॥ ६८ ॥ तावंत्येव प्रधानानि । निधा-
नानि नवाभवन् ॥ देवताकृतयत्नानि । रत्नानि च चतुर्दश ॥ ६९ ॥ द्वासप्ततिसहस्राणि ।
नगराण्यकराणि च ॥ पत्तनानि सहस्राण्य-ष्टचत्वारिंशदत्र च ॥ ७० ॥ चतुर्विंशतिसहस्र—
मडंबानां कुटुंबिनां ॥ खेटानि सार्थपेटानि । सहस्राणि च षोडश ॥ ७१ ॥ सपादकोटिरैश्व-
र्य—धारिणामधिकारिणां ॥ चतुःषष्टिसहस्रांक—मंतःपुरं सनूपुरं ॥ ७२ ॥ भूपालाः प्रणमप्रा-
ला । द्वात्रिंशच्च सहस्रकाः ॥ सहस्राण्यभवन् यक्षाः । प्रत्यक्षाः पंचविंशतिः ॥ ७३ ॥ सुवर्ण-
रौप्यरत्नाना—माकराः प्रश्रुताकराः ॥ षट्त्रिंशदस्य लक्षाणि । बंधुरा दीपिकाधराः ॥ ७४ ॥ सा
राणां सूपकाराणां । सषष्टिः त्रिशती मता ॥ नव ध्वजधराः कोट्यो । यस्येत्याद्याः समृद्धयः
॥ ७५ ॥ षट्खंडसाधनी स्फूर्त्ति-मती सौभाग्यभाजिनी ॥ कीर्तिर्दिगंतगा यस्य । स चक्री स-
गरो बभौ ॥ ७६ ॥ सुपवित्रचरित्रोऽभूत् । सुतस्तस्य भगीरथः ॥ येनाब्धौ वाहिता गंगा ।
स्वकीर्तिः क्षालिताभितः ॥ ७७ ॥ तस्य वंशे यशोमित्र—कुंतलाद्या दशांगजाः ॥ पित्रार्पिते म-

हाराष्ट्रे । राज्यं चक्रे च कुंतलः ॥ ७७ ॥ तस्य वंशे नृपा नैके । जयंतश्च जयध्वजः ॥ देव-
चंद्रस्तथा देवा—नीक इत्यादयोऽभवन् ॥ ७९ ॥ तेषां वंशावलिं बह्वीं । पृथग्वक्तुं न पार्य-
ते ॥ पृथ्वीशेखरराट् ख्यातो । देवानीकसुतः परं ॥ ८० ॥ प्रतिष्ठानपुरं येन । स्थापितं चा-
र्जितं यशः ॥ निदर्शनं च स्वर्गस्य । पृथ्व्याः प्रत्यक्षमर्पितं ॥ ८१ ॥ अमुं जानीहि सुज्ञाने ।
पृथ्वीचंद्रं तदात्मजं ॥ राज्ञामाखंडलं कीर्त्या । पूरितावनिमंडलं ॥ ८२ ॥ आकरं गुणरत्ना-
नां । गांभीर्यक्षीरसागरं ॥ दानवारिदधाराभं । धैर्यमेरुमहीधरं ॥ ८३ ॥ स्वःकुमारं च रूपे-
णा—वतारं च गुरोर्धिया ॥ लब्धप्रशंसं चातुर्ये । राजहंसविवेकिनं ॥ ८४ ॥ गंगाजलं सुनै-
र्मल्ये । सौम्यत्वे शशिमंडलं ॥ परस्त्रीत्यागगांगेयं । गांगेयद्युतिभृत्तनुं ॥ ८५ ॥ प्रद्योतनं प्र-
तापेन । प्रचंडाखंडशासनं ॥ द्योतकं राजराजीनां । पालितार्हतशासनं ॥ ८६ ॥ पंचभिः कु-
लकं ॥ कैरविण्या यथा चंद्रे । पद्मिन्याश्च यथा रवौ ॥ तथास्तु रागवत्यास्ते । रागोऽस्मिन्ने-
व संगते ॥ ८७ ॥ प्रतीहारीवचांसीति । शृण्वंती तन्वती मुदं ॥ नूपुरोद्यद्रणत्कारं । कुर्वंती
चरणद्वयं ॥ ८८ ॥ भजंती पुलकं गात्रे । त्यजंती चान्यतस्त्रपां ॥ पृथ्वीचंद्रगलेऽमुंचत् । कु-

मारी कुसुमस्रजं ॥ ८९ ॥ ज्वलंति तदाकाले—ऽग्नितो जयजयारवाः ॥ सविवेका मुदोत्से-
का । लोकाः कलकलंत्यथ ॥ ९० ॥ विद्याधरा वरस्मेर—पुष्पवृष्टिं प्रकुर्वते ॥ सुवृत्तं सुवृत्तं चे-
ति । भट्टाद्या उच्चरंति च ॥ ९१ ॥ वादयंति च वाद्यानि । विविधान्यथ वाद्यकाः ॥ गायंति
गायना दध्यु—र्धवलं सधवाः स्त्रियः ॥ ९२ ॥ इतश्च धूमकेतुर्यो—ऽष्टाशीतिग्रहसंकुले ॥ तद्दै-
वतबलो भूपो । राजलोकेऽस्ति संस्थितः ॥ ९३ ॥ धूमकेतुरिति नाम्ना । तदात्मपरिणामतः ॥
दृष्टोऽप्यरिष्टदः क्रोधा—ध्मातो धूमसमद्युतिः ॥ ९४ ॥ पृथ्वीचंद्रस्य कंठेऽभूत् । पुष्पमाला य-
दा तदा ॥ क्रोधमाला मुखे तस्य । जाता वृत्तोचितं यतः ॥ ९५ ॥ धूमकेतुं सुरं स्मृत्वा ।
करालेन क्रुधामुना ॥ उज्वालितो निजः खड्गो । वेतालाग्नेन भासुरः ॥ ९६ ॥ कंठस्थरुंडमा-
लो यः । कपालकर्त्रिकाकरः ॥ यमदूतः किमायातो—ऽग्निभूतो हि बुभुक्षया ॥ ९७ ॥ श्र-
वणे सूर्पकाकारे । पट्टकोपमितौ पदौ ॥ कपोलौ कूपिकारूपा—वारक्ते किल चक्षुषी ॥ ९८ ॥
विकरालं वहन् वेष—मुदरं कुंभसोदरं ॥ पिंगलं केशजालं च । ज्वलज्ज्वालानलं शिरः ॥९९॥
तथा जल्पत्यसौ क्रौर्या—त्फेत्कारं च शिवा यथा ॥ तथा हसत्यट्टहास्यैः । कंपते पृथिवी यथा

॥ ३०० ॥ निरीक्ष्य रक्षोरूपं तं । धूमकेतुं स्वरूपतः ॥ बभूवुः सुभटाः सर्वे । भयेन भ्रांतचेतसः ॥ १ ॥ धूमकेतुः कुमारीं तां । रथे चारोपयत्यथ ॥ धावंति सुभटा याव—द्भूत्तावत्किलाद्भुतं ॥ २ ॥ प्रसृतेऽथ तमःस्तोमे । स्वभुजोऽपि न दृश्यते ॥ गजा गलगलारावै—र्ज्ञायंते चीत्कृते रथाः ॥ ३ ॥ हया हेषारवैरेव । पताकाः किंकिणीस्वनैः ॥ ड्मड्मकशब्दैश्च । निःस्वानगमनागमाः ॥ ४ ॥ एवं मध्याह्नमारभ्य । षडपि प्रहरानभूत् ॥ गर्भावासोपमं ध्वांतं । लोकदारुणदुःखदं ॥ ५ ॥ ततः प्रभाते संजाते । ध्वांतव्राते गते सति ॥ तिग्मांशुमंडलं प्रौढ—मारूढमुदयाचलं ॥ ६ ॥ पलायितं घूककुलं । नक्षत्रपटलं तथा ॥ नभःस्थलमथाशोभि । दिग्मंडलमदीपि च ॥ ७ ॥ कमलिन्यः प्रसीदंति । फुल्लंति कमलानि च ॥ विविधकुसुमोद्यान—मभूत्परिमलोल्लसत् ॥ ८ ॥ दृश्यंते हस्तिकाः पूर्वं । पूरिताः स्वस्तिका अपि ॥ तुरंगाश्च विहंगाश्च । रथा राज्यपथा अपि ॥ ९ ॥ राजा परिजनश्चापि । वर्णः स्वर्णादिवस्तु च ॥ समंजरी डुमाली च । नैव सा रत्नमंजरी ॥ १० ॥ सोमदेवः सचिंतोऽभूत् । परिवारश्च शोकवान् ॥ पृथ्वीचंद्रश्च तद् ज्ञात्वा । कंप्रकायश्च कातरः ॥ ११ ॥ निर्लवणा रसवती ।

निर्लक्षणा सरस्वती ॥ खंडहीनं च पक्वान्नं । विनाज्यं भोजनं तथा ॥ १२ ॥ संगमो रहितः प्रेम्णा । वेगहीनस्तुरंगमः ॥ चंदनं गंधहीनं च । तरुहीनं च नंदनं ॥ १३ ॥ फलहीनो यथा वृक्षो । दक्षो वक्तृत्ववर्जितः ॥ कुंडलं कर्णहीनं च । नासोनं मुखमंडलं ॥ १४ ॥ नायको न्यायहीनश्च । निर्विवेकश्च दायकः ॥ भिक्षुश्च तपसा हीन । ईक्षुश्च रसवर्जितः ॥ १५ ॥ वस्त्रहीनश्च शृंगारो—ऽलंकारो हेमवर्जितः ॥ तांबूलरहितो भोगो । योगस्तत्वविवर्जितः ॥ १६ ॥ मौर्वाहीनश्च कोदंडो । बाहुदंडो ह्यकंकणः ॥ बालश्चरणहीनश्च । भूपालो राज्यवर्जितः ॥ १७ ॥ प्रासादः स्तंभहीनश्च । प्रसादो दानवर्जितः ॥ कृपाणो मुष्टिना हीनो । बाणः पक्षविवर्जितः ॥ १८ ॥ अशोकश्च विना छायां । कोकः कोकींविना यथा ॥ सभालोकस्तथा भाति । न विना रत्नमंजरीं ॥ १९ ॥ गीतं वीतं पुरा तत्र । विलीनं नृत्यकं तथा ॥ चित्रं कुर्यान्न वादित्रं । न लास्यं हास्यदं तथा ॥ २० ॥ काले च दुःषमाख्येऽत्र । भूमिकंपोऽभवत्पुनः ॥ यत्र स्तंभास्तथा कुंभाः । कंपंते मुकुटास्तथा ॥ २१ ॥ दोडूयंते च दोष्मंतः । कोकूयंते च कातराः ॥ त्रस्यंति स्वासनात्केचि—न्नश्यंति केऽपि दूरतः ॥ २२ ॥ युग्मं ॥ इ-

तश्च पृथिवीपीठं । विदार्य विवरे वरे ॥ निकटे प्रकटीभूता । तेजःपुंजकरंबिता ॥ २३ ॥ सिंहासनोपविष्टा च । दृष्टा काचिन्नरैः सुरी ॥ दधानांकस्थितां रत्न—मंजरीमिह सुंदरीं ॥२४॥ युग्मं ॥ सा सस्नेहं स्वबाहुभ्यां । तामुत्पाट्य कुमारिकां ॥ बहिर्मुक्त्वा तिरोभूता । जनश्चित्रमयोऽजनि ॥ २५ ॥ राजवृंदममंदं च । सानंदं सर्वतोऽमिलत् ॥ मंगलानि प्रवृत्तानि । निवृत्तानि भयानि च ॥ २६ ॥ पृथ्वीचंद्रकुमारीभ्यां । युतो राजा गृहं ययौ ॥ भोजनमंडपसौधे । पताका लंबितास्ततः ॥ २७ ॥ निष्पाद्यतेऽत्र पकान्नं । धान्यं संस्क्रीयते बहु ॥ वैवाहिकजनव्राता । बहुमानान्निमंत्रिताः ॥ २८ ॥ मंडितान्यासनान्याशु । सर्वतः भासुराणि च ॥ मुच्यंते स्वर्णविस्तीर्ण—स्थालकच्चोलकानि च ॥ २९ ॥ सुखासिकाः सुपकान्नाः । शालिन्यः शालिदालयः ॥ नालिकेरस्य पकान्नं । गवामाज्ययुतं वरं ॥ ३० ॥ सखंडा मंडका दुग्ध—दधिघोलकरंबकाः ॥ सुगंधाः परिवेष्यंते । परिवेषकपूरुषैः ॥ ३१ ॥ आचमनांते कर्पूर—पत्रपूगादिभियुतं ॥ तांबूलं भोगमूलं च । सर्वेषां दीयते नृणां ॥ ३२ ॥ पृथ्वीचंद्रनृपो जज्ञे । कारिताभ्यंगमज्जनः ॥ प्रधानपरिधानाढ्यः । स्वर्णभूषणभूषितः ॥ ३३ ॥ हारादिरत्नशृंगारः । सार-

तांबूलभृन्मुखः ॥ प्रौढवारणमारूढो । मूर्धस्थातपवारणः ॥ ३४ ॥ पूजितः सधवस्त्रीभि—श्चामराभ्यां च वीजितः ॥ गीयमानगुणग्रामो । गंधर्वैर्वाद्यपूर्वकं ॥ ३५ ॥ लोकैर्विलोक्यमानश्च । निर्निमेषं पदे पदे ॥ परीतः परिवारेण । प्राप्तो वैवाहमंरूपे ॥ ३६ ॥ वर्धापितो वरस्त्रीभि—रुत्तीर्य वरवारणात् ॥ शरावसंपुटं भंक्त्वा । ततो राजगृहं गतः ॥ ३७ ॥ वरश्चतुरिकामध्ये । स्वकुलाचारमाचरन् ॥ परिणिन्ये सुमांगल्ये । वर्तिते रत्नमंजरीं ॥ ३८ ॥ षड्भिः कुलकं ॥ ददौ च धनरत्नादि । नृपोऽस्मै पाणिमोचने ॥ आलोकयंतस्तौ लोका । घनं प्रमुदितास्तदा ॥ ३९ ॥ स्तुवंत्येके वररूपं । रूपं वध्वाश्च केचन ॥ जनाः केऽप्यद्भुतं भाग्यं । सौभाग्यं च तयोः परे ॥ ४० ॥ श्रृंगारं श्लाघयंत्येके । परिवारं च केऽप्यहो ॥ कुलं कतिपये लोकाः । शीलमन्ये च निर्मलं ॥ ४१ ॥ लावण्यं वर्णयंत्येके । पुण्यं केचिद्विवेकिनः ॥ इति पौरगिरः शृण्वन् । सोऽगमद्धाम सप्रियः ॥ ४२ ॥ सोमदेवनृपेणापि । दानमानाशनादिना ॥ तथान्ये सत्कृता भूपा । यथैक्यं मेनिरे च ते ॥ ४३ ॥ गीतनृत्यविनोदेन । श्वशुरार्पितवांछितः ॥ सुधारसमयं सोऽपि । समयं गमयत्यथ ॥ ४४ ॥ अथ पात्राणि नृत्यंति । तत्र चित्रकराण्यहो ॥

पुस्तकानि प्रशस्तानि । वाचयंति वचस्विनः ॥ ४५ ॥ माद्यंति प्रकटीकर्तुं । मल्ला मल्लकलां कलां ॥ रज्यंते रागिणो रागे । राजरंजनहेतवे ॥ ४६ ॥ याचंते याचकास्तत्र । प्रभूतं स्वं मनीषितं ॥ वंचयंति न केऽप्यन्यान् । संचिन्वंति नयं स्वयं ॥ ४७ ॥ स्वयमेव त्यजंतीह । वादिनः कूटकारणं ॥ नृपाज्ञ्यां सर्वदा ह्याज्ञ्यां । सप्रज्ञा सा सज्ञा कृता ॥ ४८ ॥ चतुर्भिः कलापकं ॥ कदाचिदासनासीनं । पृथ्वीचंद्रनृपान्वितं ॥ सोमदेवावनीपालं । वनपालो व्यजिज्ञपत् ॥ ४९ ॥ धर्मनाथो जिनः स्वामि—न्नुद्याने समवासरत् ॥ तच्चरित्रं पवित्रं प्रा—क्कमायातं निशम्यतां ॥ ५० ॥ इहैव भरतक्षेत्रे । पुरे रत्नपुराभिधे ॥ समस्तकमलोल्लासी । भानुवद्भानुभूपतिः ॥ ५१ ॥ सुव्रतास्य महाराज्ञी । मध्यरात्रौ गृहांतरे ॥ अपश्यच्छयने सुप्ता । स्वप्नानिति चतुर्दश ॥ ५२ ॥ गजो वृषो हरिः श्रीः स्रग् । शशी भानुर्ध्वजो घटः ॥ सरो वार्धिर्विमानं च । रत्नौघोऽग्निर्बुधैर्मताः ॥ ५३ ॥ तत्र चाधिश्रितो लक्ष्म्या । सप्तांगैः सुप्रतिष्ठितः ॥ अखंडशुंडादंडश्च । प्रचंडस्तनुतेजसा ॥ ५४ ॥ मदमत्तश्चतुर्दंतो । दानाविलकपोलकः ॥ चलत्कर्णोऽचलोत्तुंगः । स्वप्ने दृष्टस्तया गजः ॥ ५५ ॥ युग्मं ॥ विशालककुदः कुंद—का-

सहासोज्ज्वलद्युतिः ॥ वर्तुलश्यामलोत्तुंग—शृंगश्रंचत्पदस्थितिः ॥ ५६ प्रसन्नवदनः स्नि-ग्ध—रोमराजिविराजितः ॥ दृढगात्रः स्फुरन्नेत्रो । द्वितीये वृषभस्तया ॥ ५७ ॥ युग्मं ॥ के-सरापूरितस्कंधो । हेमसत्पिंगपांकुरः ॥ रक्तताबुर्ललल्लोल—स्तीक्ष्णदंतो दृढाननः ॥ ५८ ॥ रक्तकिंशुकप्रख्यौष्टः । पुच्छेनाच्छोटयन् भुवं ॥ तृतीये तरलाक्षं सा । केसरिणं ददर्श च ॥ ५९ ॥ शरदिंदुमुखीं दीर्घ—लोचनां हारहारिणीं ॥ सुश्रृंगारां च बिभ्राणां । कुंडले द्युतिमंडले ॥ ६० ॥ करस्फुरन्निधानां च । सिच्यमानां च दिग्गजैः ॥ पद्मां पद्मार्थिनी तुर्ये । पद्मगां प-श्यतिस्म सा ॥ ६१ ॥ युग्मं ॥ चंपकाशोकपुन्नाग—पाटलोत्पलशालिनीं ॥ मल्लिकायूथिका-जाति—केतकीकुंदमालिनीं ॥ ६२ ॥ बंधुराद्भुतगंधेन । वासयंतीं दिशो दश ॥ मंजुगुंजद-लिश्लिष्टां । पुष्पमालां च पंचमे ॥ ६३ ॥ युग्मं ॥ रोहिणीनायकं चारु—चकोरप्रीतिदायकं ॥ कैरविणीप्रियं तार—तारावलिपरिव्रतं ॥ ६४ ॥ स्फटिकोपलसंकाश—माकाशे भासयत्करं ॥ षष्टे च सुधयाकीर्णं । संपूर्णं सकलेंदुकं ॥ ६५ ॥ युग्मं ॥ लभंते देवता अर्चा । यस्मान्मार्गा वहंति च ॥ कथयंति मुनयो धर्मं । न तिष्टंति तमांसि च ॥ ६६ ॥ विकसंति सरोजानि ।

रथांगा उल्लसंति च ॥ यस्योदये तमादित्यं । सप्तमेऽथ ददर्श सा ॥ ६७ ॥ युग्मं ॥ प्रासाद-
शिखरारूढं । प्रौढदंडाग्रमंडितं ॥ रत्नाढ्यपट्टिकालग्नं । हेमकुंभेन भूषितं ॥ ६८ ॥ अभितः
शोभितस्वर्णं । मध्ये सिंहविमंडितं ॥ वातेनांदोलितं किंचिद्—ध्वजमैक्षत साष्टमे ॥ ६९ ॥
युग्मं ॥ सुवर्णघटितं रत्न—संस्थानामृतपूरितं ॥ नवमे पूर्णकुंभं सा । कल्पपत्रालिमंडितं
॥ ७० ॥ भ्रमंति भ्रमरा हंसा । रमंते यत्र सुस्थिताः ॥ विश्राम्यंति चकोराश्च । सारसाः क्रौं-
चपक्षिणः ॥ ७१ ॥ विचित्रशतपत्रादि—कजराजिविराजितं ॥ तापहारि लसद्वारि । दशमे
पद्मवत्सरः ॥ ७२ ॥ युग्मं ॥ नक्रचक्रमहामत्स्य—मत्स्यपाठीनपीठकाः ॥ तिमिंगलादयो यत्र ।
चोत्पतंति पतंति च ॥ ७३ ॥ उल्लसल्लोलकल्लोल—संचरद्वहनव्रजं ॥ एकादशे महावार्धिं ।
मौक्तिकादियुतं च सा ॥ ७४ ॥ युग्मं ॥ वादित्रगीतनृत्यादि—क्रीडापरसुरीसुरं ॥ कर्पूरपूरक-
स्तूरी—वासवासितदिग्भरं ॥ ७५ ॥ शोभमानस्फुरद्भित्ति—विच्छित्तिस्तंभकुंभकं ॥ विमानं
द्वादशे स्वप्ने । सापश्यद्गगनाश्रयं ॥ ७६ ॥ युग्मं ॥ वज्रवैडुर्यसत्सूर्य—कांतकर्केतनादिभिः ॥
पूरितं दूरिताघौघं । रत्नराशिं त्रयोदशे ॥ ७७ ॥ रमणीयशुभावर्त—ज्वलज्ज्वालावलिभृतं ॥

कमनीयं विशालं च । निर्मलं कांतिमंडलैः ॥ ६८ ॥ देवाननसमानं च । सिच्यमानं घृतामृतैः ॥ स्वप्ने सा सुव्रतापश्य-न्निर्धूमाग्निं चतुर्दशे ॥ ६९ ॥ जजागार गुणागारान् । वीक्ष्य तांस्तत्क्षणादसौ ॥ निमग्नानंदपीयूषे । लग्ना चिंतयितुं हृदि ॥ ७० ॥ अहो अद्यादृष्ताः स्वप्ना । दृष्टाः शिष्टा मयाखिलाः ॥ भवितारः फलान्येषां । मिष्टानि सुरशाखिवत् ॥ ७१ ॥ शयनीयादथोत्थाय । हंसगत्या चलंती च ॥ सा जयेत्याशिषानंदात् । स्वस्वामिनमबोधयत् ॥ ७२ ॥ स्थित्वासने तदादेशात् । साथ स्वप्नानजिज्ञपत् ॥ स्वामिन् समादिशामीषां । फलं किं भावि चावयोः ॥ ७३ ॥ संबुध्य सौवबुद्ध्या स । यथातथमचीकथत् ॥ प्रिये प्रियंकरा एते । त्वया दृष्टाः सपुण्यया ॥ ७४ ॥ राज्यलाभो रमालाभो । भोगलाभस्तथावयोः ॥ पवित्रपुत्रलाभोऽपि । भाव्येषामनुभावतः ॥ ७५ ॥ ततः सा मुदिता जाता । स्वस्था स्वस्थानमागता ॥ सखीयुक्ता सुवार्ताभिः । सुजागरमजागरत् ॥ ७६ ॥ स्वप्नपाठकतः प्रातः । स्वप्नार्थमवगम्य च ॥ राजा राज्ञीयुतोऽत्यंत-मानंदं मनसा दधौ ॥ ७७ ॥ ततश्च समये पूर्णे । पूर्णिमेंदुसमद्युतिः ॥ पूर्वस्यामिव तत्कुक्षौ । सोऽपि प्रभुरवातरत् ॥ ७८ ॥ सर्वेऽकुर्वन् सुपर्वाण-स्तदानंदाज्जयार-

वं ॥ षट्पंचाशच्च साह्लादा । दिक्कुमार्योऽमिलन्निति ॥ ८९ ॥ अष्टावूर्ध्वनिवासिन्य—स्त·
थाष्टावप्यधःस्थिताः ॥ रुचकद्वीपदिग्वासाः । षट्त्रिंशन्मिलिताश्च ताः ॥ ९० ॥ तद्द्वीपवि·
दिशां सत्का—श्चतस्रः सकला इति ॥ आगत्य सूतिकर्माणि । चक्रुर्मातुस्तथार्हतः ॥ ९१ ॥
सौधर्मदेवलोकेऽथ । सुरेंद्रः कंपितासनः ॥ वज्रमुछालयन् कोपात् । ज्ञात्वार्हज्जन्म चावधेः
॥ ९२ ॥ त्यक्त्वा सिंहासनं सप्ता—ष्टौ पदान्यगमन्मुदा ॥ शक्रस्तवमथाचख्यौ । कृतकुंरु·
चितांजलिः ॥ ९३ ॥ स्थित्वा सिंहासने सोऽथ । हरिणैगमेषिणा ॥ सुघोषाघंटया सर्वा—
न्नाकिनोऽज्ञापयत्ततः ॥ ९४ ॥ कृतं पालकदेवेन । लक्षयोजनविस्तरं ॥ विमानं पालकाह्वान—
मारुह्येहाययौ हरिः ॥ ९५ ॥ अंबां नत्वा जिनं लात्वा । मुक्त्वा तत्प्रतिबिंबकं ॥ विधाय पं-
चधा रूपं । सामरो मेरुमागतः ॥ ९६ ॥ त्रिषष्टिरपि तत्रेंद्राः । सुरकोटियुताः परे ॥ स्वं स्वं
विमानमारूढा । आगता हर्षसंगताः ॥ ९७ ॥ रत्नैरूप्यमृत्कुंभैः । कलशैर्जलसंभृतैः ॥ चतुः-
षष्ट्यधिकैरष्ट—सहस्रैस्ते पृथक्पृथक् ॥ ९८ ॥ मज्जयंति जिनं चारु—चंदनैरर्चयंति च ॥
अर्चयंति पुण्यपुष्पैः । कल्पवृक्षादिसंभवैः ॥ ९९ ॥ आरात्रिकं विधायांते । तथा मंगलदीप·

कं ॥ चैत्यवंदनकतूर्य—शक्रस्तवपुरस्सरं ॥ ४०० ॥ केचिन्नृत्यंति माद्यंति । हर्षात्केचित्सुरा वराः ॥ वादयंति च वाद्यानि । केचिज्ञायंति संगताः ॥ १ ॥ इति युक्त्यात्मशक्त्या च । स्वभक्त्या हरयोऽखिलाः ॥ जिनजन्मोत्सवं कृत्वा । स्वं स्वं स्थानकमागताः ॥ २ ॥ पंचरूपी पुनः शक्रो । विमुच्य सदने जिनं ॥ द्वात्रिंशत्स्वर्णकच्चोला—दीनि वस्तूनि वर्षयन् ॥ ३ ॥ रत्नकोटिमधिस्थाप्य । वामहस्तांगुले सुधां ॥ श्रीदामकुंडले वस्त्रे । उत्सीर्षे न्यस्य द्यामगात् ॥ ४ ॥ युग्मं ॥ प्रातः सुतस्तवायात । इति वर्धापितो नृपः ॥ दासीभिरमुना ताभ्यः । सद्वर्धापनिका ददे ॥ ५ ॥ कृतोत्सवावलिश्चैवं । प्राकारोऽलंकृतस्ततः ॥ तथा प्रतोलीद्वाराणि । ध्वजैः श्रृंगारितानि च ॥ ६ ॥ मंचातिमंचारचिता । निचिताश्च पताकिकाः ॥ अंचिताः पंचवर्णैश्च । कुसुमप्रकरैस्ततः ॥ ७ ॥ आयांत्यद्भुतपात्राणि । पात्राणि नर्तयंति च ॥ संस्क्रीयंते च गात्राणि । गात्राण्यपि पठंत्यलं ॥ ८ ॥ तोरणानि निबध्यंते । कारणानि सदा मुदां ॥ सद्वंदनकमालाश्च । विशाला मंगलश्रिया ॥ ९ ॥ दह्यंते धूपकस्तूर्यो । लभ्यंते सघृता गुडाः ॥ इति नृणां क्षणात्रानि । घनान्यपि दिनान्ययुः ॥ १० ॥ यतः पूर्वमभून्मातु—र्धर्मकर्मणि

दोहदः ॥ पित्रा नाम ततो दत्तं । धर्मनाथ इति प्रन्नोः ॥ ११ ॥ बाल्ये तेनामृतं पीतं । गृ-
हीतं यौवनं ततः ॥ धन्याया राजकन्यायाः । पाणिग्रहणकं कृतं ॥ १२ ॥ द्वे लक्षे शरदां सा-
र्धे । ह्यनुभूता कुमारता ॥ पंचलक्षाणि राज्यश्री—र्भुक्ता नोगवतार्हता ॥ १३ ॥ ततो विर-
क्तचित्तेन । लोकांतिकमरुद्गिरा ॥ अब्ददानं मुदा दत्वा । संयमश्रीर्वृतामुना ॥ १४ ॥ द्वे वर्षे
छद्मतां भुक्त्वा । प्राप्य केवलमुज्ज्वलं ॥ भूमौ विहरति स्वामी । करोत्युपकृतिं सतां ॥ १५ ॥
सजामाता ततो राजा । निशम्यारामिकादिति ॥ सार्धद्वादशरैलक्षा—ण्यदत्तास्मै सविस्मयं
॥ १६ ॥ ततश्च कलिता ऋद्ध्या । राजाद्याश्चलिता जनाः ॥ दृष्टाः समवसरणं । दृष्ट्वालंकर-
णं भुवः ॥ १७ ॥ आयांति सकला देवा । इति निष्पादयंति तत् ॥ आदौ संवर्तिका वाता ।
विस्तरंति सुरैः कृताः ॥ १८ ॥ तृणाद्यपहरंत्येते । सुगंधिनो घनाघनाः ॥ कुर्वंति सुजलैर्वृष्टिं ।
किरंति कुसुमोत्करं ॥ १९ ॥ कृत्वा रत्नमयं पीठं । पंचवर्णानि तत्र च ॥ वर्षंत्याजानु पुष्पा-
णि । सुगंधान्यमरास्ततः ॥ २० ॥ प्राकारा रत्नरैरूप्यैः । सुरैर्निर्मापितास्त्रिधा ॥ कपिशीर्षाव-
लिस्तेषु । मणिरत्नसुवर्णजाः ॥ २१ ॥ चतसृणां प्रतोलीना—मुन्नयोः पार्श्वयोर्बभुः ॥ उच्चैः

स्वर्णमयाः स्तंभा । ऊर्ध्वस्थमणिकुंभकाः ॥ २२ ॥ तत्र शक्रधनुर्मानं । शोभते रत्नतोरणं ॥ पालका पुण्यलक्ष्म्याश्च । भाति वंदनमालिका ॥ २३ ॥ छत्राणि च विचित्राणि । पवित्राणि विभांति च ॥ रूपाणि स्वर्णपुत्रीणां । स्वरूपाणि सुकर्मणां ॥ २४ ॥ पंचवर्णध्वजा न्यस्ताः । सिंहशार्दूलमंकिताः ॥ मध्यभागे विभात्यत्र । पीठं मणिविनिर्मितं ॥ २५ ॥ तत्र चाशोकवृक्षोऽस्ति । दक्षः शोकनिवारणे ॥ प्रत्यक्षकल्पवृक्षाभ—श्चैत्यवृक्षो महानिह ॥ २६ ॥ तच्छायायां रत्नसिंहा—सनं चार्हत आसनं ॥ सयत्नं रचितं रत्नै—स्तदधः पादपीठकं ॥ २७ ॥ पंचदशात्र छत्राणि । पवित्राणि विरेजिरे ॥ स्फुरत्सहस्रपत्राणि । किं नु तीर्थकरश्रियः ॥ २८ ॥ सुराः सचामराः पार्श्वे । पुनरस्तार्कमंडलं ॥ बभौ भामंडलं पृष्ठे । तीर्थश्रीकर्णकुंडलं ॥ २९ ॥ धर्मचक्रं ज्वलत्यग्रे । यतः स्खलति दुर्मतिः ॥ वाद्यंते दिव्यभेर्योऽपि । शब्दैर्व्योम गर्जितं ॥ ३० ॥ ध्वजो झलहलत्यैंद्रः । सहस्रयोजनोन्मितः ॥ दिव्यः परिमलो विश्व—व्यापी महमहत्यहो ॥ ३१ ॥ अवादिताश्च वाजित्र—कोटया वादयंति च ॥ जैना जनाश्च रज्यंते । गुणैर्गहगहत्यलं ॥ ३२ ॥ प्रभुर्नवनवस्वर्ण—पद्मेषु स्थापयन् पदौ ॥ पृष्टार्थानर्थयन् रम्ये । वि-

पुरे समुपाविशत् ॥ ३३ ॥ पापतो मोचयन् भव्या—न्निजदर्शनमात्रतः ॥ प्राच्याः स प्रा-
विशत्प्रौढ—मध्यास्त पुनरासनं ॥ ३४ ॥ ततस्त्रिजगतः स्वामी । चामीकरसमद्युतिः ॥ सुखं च-
तुर्मुखो भूत्वा । विलोक्यास्तिकसन्मुखं ॥ ३५ ॥ सद्यो द्वादश संपूर्णा । पूरयित्वा च पर्षदं ॥
चूरयित्वा महामोहं । दूरयित्वा कुदर्शनं ॥ ३६ ॥ सर्वसंशयहारिण्या । साधारण्याखिलांगि-
नां ॥ सुधासारानुकारिण्या । विस्तारिण्या शिवश्रियः ॥ ३७ ॥ वाण्या योजनगामिन्या । ध-
र्ममादिशति स्वयं ॥ यतो भवाब्धिमुल्लंघ्य । भव्यालिर्लभते शिवं ॥ ३८ ॥ अथ द्वावपि रा-
जानौ । प्रविश्य सप्रदक्षिणं ॥ प्रभुं प्रणम्य चासीनौ । पृथ्वीचंद्रोऽस्तवीत्पुनः ॥ ३९ ॥ जय
त्वं जगदाधार । जगद्वंद्य जगन्नुत ॥ जगज्जयिन् जगद्ध्येय । जगत्त्रयशिरःस्थित ॥ ४० ॥
जय त्वं भानुभूपाल—कुलदीपनदीपक ॥ पादाब्जविनयानम्र—विश्वविश्ववनीपक ॥ ४१ ॥ जय
त्वं सुव्रताकुक्षि—सुंदराकरहीरकः ॥ क्रोधरोधकद्रोहादि—मोहमल्लावधीरकः ॥ ४२ ॥ जय त्वं
निर्मलध्यानः । केवलज्ञानभास्करः ॥ निरंजनो निराकारः । सिद्धानंतचतुष्टयः ॥ ४३ ॥ त्वं
माता त्वं पिता नेता । भ्राता त्राता त्वमेव मे ॥ त्वं देवस्त्वं गुरुर्धर्म—स्तुभ्यमेव नमोनमः

॥ ४४ ॥ स्तुत्वेति तनुदीधित्या । सर्वां विस्मापयन् सभां ॥ पृथ्वीचंद्रः पुनर्नाथं । नत्वा तत्वामृतं पपौ ॥ ४५ ॥ यथा—सद्वंशवासो महिला सुशीला । सौभाग्यमंगे च रमाभिरामा ॥ सुता विनीताः स्वजनो मनोज्ञः । पचेलिमा पुण्यतरोः फलालिः ॥ ४६ ॥ फलान्यमूनि धर्मस्य । ज्ञेयानि भविका अहो ॥ सुखाधारोऽवतारोऽयं । प्रथमं निर्मले कुले ॥ ४७ ॥ कुकुलेऽवतरेदंगी । चेत्तत्पुण्यं करोति किं ॥ तन्म्लेच्छभिल्लकैवर्त—व्याधादीनामनेकशः ॥ ४८ ॥ यत्रावतीर्य कृत्वाघं । मृत्वा जीवो व्रजत्यधः ॥ निरर्थकं व्रजत्येव । प्राप्तोऽयं मानवो भवः ॥ ४९ ॥ अतः कमलवज्जीवै—र्दुर्लभं कुलमुत्तमं ॥ सश्रीकं विधिना युक्तं । गुणाढ्यं नालसंस्थितं ॥५०॥ यतः—वंसाणं जिणवंसो । सव्वकुलाणं च सावयकुलाइं ॥ सिद्धिगइयगमणं । मुत्तिसुहं सव्वसुक्खाणं ॥ ५१ ॥ सप्रशंसः स वंशोऽपि । षट्त्रिंशद्राजभेदभूः ॥ तीर्थकृच्चक्रभृच्छौरि—रामाद्या यत्र जज्ञिरे ॥ ५२ ॥ अन्यानि च कुलान्यत्र । कलिकाले बहून्यपि ॥ भेदाश्चतुरशीतिर्थे—द्विप्राणां वणिजामपि ॥ ५३ ॥ परं व्याख्यायते तत्तु । सदा यत्रांबु गल्यते ॥ शुष्कंधनानि ज्वाल्यंते । निर्जीवो दल्यते कणः ॥ ५४ ॥ संधानस्योपयोगो ना—नंतकायं न भक्ष्यते ॥ यत्र

देवादयोऽर्च्यंते । प्रोच्चार्यंते व्रतानि च ॥ ५५ ॥ सामायिकावश्यकानि । समाचर्यंत एव हि ॥ त्यज्यते च निशाहारः । स्मर्यंते परमेष्टिनः ॥ ५६ ॥ भांडागारोऽपि पुण्यस्य । भ्रियते देव-दानतः ॥ वार्यतेऽन्यप्रियासंगः । सम्यक्त्वं ध्रियते दृढं ॥ ५७ ॥ आलोचनाजलेनापि । पापं प्रक्षाल्यते निजं ॥ परिग्रहप्रमाणेन । लोभादात्मा निवार्यते ॥ ५८ ॥ पौषधो निरतीचारः । सर्वपर्वसु पाल्यते ॥ संभाल्यंतेऽनंतकाय—भक्ष्यादि नियमाः सदा ॥ ५९ ॥ धर्मकर्मोद्भवैर्य-त्र । पंफल्यते मनोरथैः ॥ चेद्भवेत्प्रबलं पुण्यं । तदेदृग् प्राप्यते कुलं ॥ ६० ॥ कुले लब्धेऽपि शुद्धेऽपि । चिंतायोगोऽशुभस्त्रिया ॥ तत्पुण्यस्य वियोगः स्यात् । सा चोक्ता पुनरीदृशी ॥६१॥ अलक्ष्मीरिव सा साक्षात् । कपिकच्छुरिवाहृता ॥ भंजका स्वकुटुंबस्य । परचित्तस्य रंजका ॥ ६२ ॥ पटिष्टा कपटेऽनिष्टा । स्वयं निष्ठुरभाषिणी ॥ शिक्षिता प्रत्युत क्लेश—कारिणी सु-खहारिणी ॥ ६३ ॥ फूत्कुर्वंती सर्पिणीव । वल्गंती शार्दूलीव सा ॥ अर्गला पुण्यमार्गस्य । नरकस्य प्रतोलिका ॥ ६४ ॥ स्वसा दाहज्वरस्येव । प्रदीपनसखी तथा ॥ गृहिणां गृहवासे-ऽपि । नारी नारकदुःखदा ॥ ६५ ॥ प्राच्यं पुण्यं पवित्रं चे—त्सुकलत्रं तदाप्यते ॥ यथोदारा

सदाचारा । निर्मला शीलशालिनी ॥ ६६ ॥ विवेकिनी विनीता च । विदुरा सत्यवादिनी ॥ पात्रदानोल्लसत्पाणि—र्वाणीमाधुर्यशालिनी ॥ ६७ ॥ देवे गुरौ भृशं भक्ता । पुण्यासक्ता निरंतरं ॥ गेहिनी देहिनीव श्रीः । प्राप्यते पूर्वपुण्यतः ॥ ६८ ॥ तदासौ स्वांगसौभाग्यं । तदा भाग्यं भवेद्यदा ॥ सा पृष्टा मधुरं वक्ति । चलंतीह मरालवत् ॥ ६९ ॥ निभालयति सद्दृष्ट्या । पालयत्यपि यः कृपां ॥ द्वात्रिंशल्लक्षणः सर्व—शास्त्रेषु च विचक्षणः ॥ ७० ॥ श्यामताजितरोलंब—लंबकेशकलापवान् ॥ अर्धचंद्रसदृग्भालो । दोलाभश्रवणद्वयः ॥ ७१ ॥ कामकोदंडवक्रभ्रूः । शुककिंशुकनाशिकः ॥ सदृक् सकलचंद्रास्यो । मुक्तालिदंतपंक्तिकः ॥७२॥ कपाटपृथुलोरःश्री—र्नवस्वर्णसमद्युतिः ॥ अखंडवरदोर्दंड—मंडितः पुण्यतो नरः ॥ ७३ ॥ नरो न रोचते कस्मै । सुभगोऽपि विना धनं ॥ तदपि प्राप्यते पुण्यै—र्नोपायैरपि भूरिभिः ॥ ७४ ॥ देवानाराधयंत्येके । कुविद्यां साधयंति च ॥ प्रविशंति रणावन्या—मध्यासंति रिपोः सभां ॥ ७५ ॥ सेवंतेऽन्यायिनं भूपं । मार्गयंति जनं जनं ॥ पतंति रसकूपे च । चटंति विकटांबुधौ ॥ ७६ ॥ क्षेत्राणि खेटयंत्युच्चै—र्हिंडंति च गृहे गृहे ॥ धनार्थं प्राणिनो घ्नंति । ख-

नंति पृथिवीं परे ॥ ७७ ॥ आरोहंति गिरेः शृंगे । वहंति बहुपोट्टलान् ॥ सहंते पापतः क्ले-
शं । नार्थलेशं लजंति ही ॥ ७८ ॥ सुवर्णमणिमाणिक्य—मुक्ताविद्रुमहीरकाः ॥ पुण्याढ्यजर-
थाश्वाश्च । श्रीविलासा लसंत्यहो ॥ ७९ ॥ तनयाः सत्यपि द्रव्ये । लवंत्यद्भुतलाग्यतः ॥ त
एव नयवंतश्चे—त्तदा स्वर्णे सुगंधता ॥ ८० ॥ एते च कुसुता बाल्ये । लालिताः पालिता
अपि ॥ बहुधनव्ययात्कन्याः । पितृभ्यां परिणायिताः ॥ ८१ ॥ मातरं गणयंति नो । निघ्नंति
च गुरोर्वचः ॥ लणंति निष्ठुरं पित्रोः । स्वप्रियाप्रेरिता ध्रुवं ॥ ८२ ॥ वर्षंति च कुपात्रेषु । कु-
स्थाने विलसंति च ॥ ग्रसंति भूमिमन्येषां । चाटूक्तैरुल्लसंति च ॥ ८३ ॥ श्रवज्ञषंति शिक्षा-
यां । दूषयंति गुरून् परं ॥ उल्लसंत्यशुलं कृत्वा । नाभ्यसंति शुलक्रियां ॥ ८४ ॥ पापव्या-
पादिहाप्यंते । पितृलिः कुसुता इति ॥ सुपुत्राः खलु लव्यानां । जायंते सुकृतोदयात् ॥८५॥
संतः सौलाग्यवंतश्च । धर्मरक्ता विवेकिनः ॥ गुणवंतो रताः पित्रो—र्लक्तिमंतो जिने गुरौ
॥ ८६ ॥ निजं निरुपमं पुण्यं । चेत्तदा मित्रमुत्तमं ॥ दुष्टप्रकृतयश्चैके । प्रौढाकृतय एनसि
॥ ८७ ॥ मुखे मिष्टा हृदि दुष्टाः । पश्यंति च परछलं ॥ विगोपयंति निर्दोषान् । रोदयंति च या-

चकान् ॥ ૮૮ ॥ परोपकारविमुखाः । सीदंत्यन्यप्रशंसया ॥ हृष्यंते स्वगुणस्फात्यो—पेक्षंते तृणवत्परं ॥ ૮૯ ॥ उद्घाटयंत्यन्यदोषान् । पातयंत्यापदि स्वकान् ॥ राज्ञः स्तोकेन मानेना—पमानयंति सद्गुरून् ॥ ૯૦ ॥ अधर्मकर्मकर्तारो । जल्पंति परमर्म ये ॥ विषवृक्षवनानीव । त्याज्या दूरेण दुर्जनाः ॥ ૯૧ ॥ संतः स्वच्छस्वभावाः स्युः । सुभावा धर्मकर्मणि ॥ परोपकारं कुर्वंति । धरंति परमर्म नो ॥ ૯૨ ॥ प्रकाशयंत्यन्यदोषान् । हास्येनापि न सर्वथा ॥ आत्मानं वासयंत्येव । गुणगंधैः परोद्भवैः ॥ ૯૩ ॥ उद्योतयंति स्वं वंशं । पालयंति गुरोर्वचः ॥ निभालयंति तत्वानि । चालयंत्यनयान्मनः ॥ ૯૪ ॥ स्वचित्तं निर्मलीकृत्य । वित्तं पात्रे वपंति ये ॥ ते संतापहराः सेव्या—श्चंदनानीव सज्जनाः ॥ ૯૫ ॥ इति धर्मफलं ज्ञात्वा । लात्वा जैनीं गिरं हृदि ॥ परिहार्यः प्रमादोऽयं । कार्यो धर्मोद्यमः सदा ॥ ૯૬ ॥ परं सहजवत्पूर्वं । प्रमादः सेवितश्चिरं ॥ त्यक्तुं न शक्यते धर्मे । कातरैर्बहुभिर्जनैः ॥ ૯૭ ॥ श्रीसंग्रहस्मराहाराः । प्रमादाश्च भवे भवे ॥ अभ्यस्तास्तेन बालाद्यै—र्वेद्यंते गुर्वशिक्षिताः ॥ ૯૮ ॥ दानशीलतपोभावाः । साराः पूर्वे कदापि हि ॥ नाभ्यस्तास्तद्गुरूक्तास्तु । बुध्यंते न बुधैरपि ॥૯૯॥

सहजेनाकृत्रिमेणो—पाधिधर्मो हि जीयते ॥ वणिग्गणिकयोरत्र । कथाप्याकर्ण्यतां यथा ॥ ५०० ॥ जंबूद्वीपेऽत्र भरते—ऽभवल्लक्ष्मीपुरं पुरं ॥ वार्धिवत्कलितं लक्ष्म्या । प्रौढं शोभितरंगवत् ॥ १ ॥ ज्ञाता दाता जनत्राता । रिपूच्छेता प्रतापवान् ॥ कांतभीमगुणस्तत्र । जितारातिर्नृपो बभौ ॥ २ ॥ श्रृंगारे संगरे तादृग् । नैवाहारविहारयोः ॥ यादृग् रसः कलाभ्यासे । तस्य शास्त्रविनोदिनः ॥ ३ ॥ अबला बालगोपाला । अधीताः सकलाः कलाः ॥ तद्राज्ये नाद्भुतं यस्मा—द्यथा राजा तथा प्रजा ॥ ४ ॥ अन्यदा स सभासीनो । मंत्रिसामंतसंयुतः ॥ गीतनृत्यविनोदज्ञान् । विज्ञान् वीक्ष्य वचोऽवदत् ॥ ५ ॥ हंहो पिककुले गीतं । नृत्यं केकिषु संमतं ॥ विज्ञानमूर्णनाभादौ । युद्धं वा कुर्कुटादिषु ॥ ६ ॥ शुके वाक्पटुता चेति । पशूनां सहजास्त्विह ॥ दुर्लभा वादविद्या या । सद्यो ह्युत्तरानुगा ॥ ७ ॥ राजानोऽपि च रज्यंते । कृपणा दानदायिनः ॥ प्रत्यक्षा अपि यक्षाः स्यु—र्वादे जयवतां सतां ॥ ८ ॥ तन्निशम्य कलापात्रं । राज्ञश्चामरधारिणी ॥ कामसेना ततोऽवादीत् । साभिमाना त्विदं वचः ॥ ९ ॥ गीते स्फुर्तिः स्थितिर्नृत्ये । वाद्येषु निरवद्यता ॥ वादेष्वनवसादत्वं । त्वत्प्रसादा-

न्मम प्रजो ॥ १० ॥ कलास्तास्ताः स्वयं कुर्वे । न वादो वादिनं विना ॥ अत्र कोऽपि न वादार्हो । येनेछा मम पूर्यते ॥ ११ ॥ इतस्तत्रातिवृद्धस्य । श्रीदत्तव्यवहारिणः ॥ सुतः सुरेंद्रसंज्ञोऽस्ति । समेतः स्वामिसेवने ॥ १२ ॥ राजमान्योऽवदान्यश्च । सत्कलाकेलिकौतुकी ॥ तजर्वपर्वतं ठेत्तुं । वज्राजमवदद्वचः ॥ १३ ॥ युग्मं ॥ या हीना पुरुषात्प्रोक्ता । प्रभुताधीकलादिनिः ॥ किंत्वाहारकलिन्यां चा—धिका तेनातिनिंदिता ॥ १४ ॥ तस्या नार्या अनार्याया । नाम ग्राह्यं न पर्षदि ॥ सा हि कथितदुर्गंध—रब्बातोऽप्यधमा मता ॥ १५ ॥ वदंती स्वगुणान् गर्वा—ज्जणिके गुणिनां गणे ॥ स्वं विगोपयसि त्वं रे । ग्रहिलेव गरीयसी ॥ १६ ॥ नैवार्थसिद्धिरत्रापि । नारीन्जिः स्यान्नरं विना ॥ अंगुलिन्जिर्विनांगुष्टं । कवलोऽपि न गृह्यते ॥ १७ ॥ सासूयं वेश्ययावादि । ततोऽवज्ञाय तद्वचः ॥ स्त्रिया हरादयो देवा । निर्जिताः किं कथा नृणां ॥ १८ ॥ तपस्वी च यशस्वी च । तावद्विद्याधरोऽथवा ॥ ध्यानी मौनी गुणी तावन्न यावद्वीक्षितः स्त्रिया ॥ १९ ॥ न जवेद्भूयसां पुंसां । सत्कारो वनितां विना ॥ क्रियंते पावना दंता । एकयापि शलाकया ॥ २० ॥ इत्युच्चैर्विवदंतौ तौ । राज्ञा विज्ञेन जाषितौ ॥ मा

वादः क्रियतां मिथ्या । तथ्यां संधां विधीयतां ॥ २१ ॥ ततो गणिकयागादि । नो सन्याः श्रूयतां वचः ॥ उपाधिः सहजाद्वृद्धः । प्रतिज्ञातं मयेति च ॥ २२ ॥ यस्मान्मंदोऽपि मेधावी । याति रंकोऽपि राजतां ॥ कृपणोऽपि च दाता स्या—न्निर्धनोऽपि धनेश्वरः ॥ २३ ॥ डुर्गंधं वस्तु सद्गंधि । नीरसं सरसं तथा ॥ अलं शीतलमप्युष्णं । नीचस्थः पुनरुच्चगः ॥ २४ ॥ उपाधिना नृपेणेव । के के नोपकृता इति ॥ अनेन नूनं संपूर्णं । विश्वं विश्वमपीक्ष्यते ॥ २५ ॥ पार्थिवप्रेरितः प्राह । सुरेंद्रः शृणु वेश्यके ॥ यमवत्तवोपाधेश्च । गर्वं निर्मूलयाम्यहं ॥ २६ ॥ अस्माकं संमतं श्रेष्टं । नो सन्याः सहजं खलु ॥ यत्सहोदरवत्स्वीयं । सामिप्यं नैव मुंचति ॥ २७ ॥ विनाशयति नो किंचित् । पदवीं प्रत्युतार्पयेत् ॥ सहजेन समं विश्वे । किंचिन्नास्तीह सुंदरं ॥ २० ॥ विवेकं सुगतिं शौक्ल्यं । शुभगीःस्वरचित्रतां ॥ हंसे शुके पिके केकिन्यपि यन्नियतं ददौ ॥ २ए ॥ स्वर्णे वर्णो मणौ तेजो । मृगनाजौ सुगंधिता ॥ इक्षौ रसस्तथेत्यादौ । विख्याता तस्य सत्कृतिः ॥ ३० ॥ सहजं वर्धमानं त—न्नरित्वं चक्रवर्तितां ॥ कैवल्यं तीर्थकृत्वं च । सिद्धत्वमपि यछति ॥ ३१ ॥ दृष्टांतप्रतिदृष्टांतै—रिति प्रवदतोस्तयोः ॥ म-

ध्याह्नसमयो जातः । श्रांतः कोऽपि न चेतयोः ॥ ३२ ॥ राज्ञादिष्टं तयोर्जातो । देवतावसरो- ऽधुना ॥ मूर्तिमंतौ स्वदृष्टांतौ । निष्पाद्यौ स्वस्ववेश्मनि ॥ ३३ ॥ सदस्यागत्य षण्मास्यां । मह्यं दर्शयतं युवां ॥ परीक्षां युवयोः सम्यग् । ज्ञात्वा जयपराजयौ ॥ ३४ ॥ इष्टदानं धनादानं । करिष्ये च ततः क्रमात् ॥ स्वीकृत्य तौ च पार्षद्या । अगमन्निजसद्मनि ॥ ३५ ॥ क्षुधाक्रांतो- ऽपि हे वत्स । उत्सूरः कथमागतः ॥ इति पृष्टोऽथ पित्रासौ । सुरेंद्रः सकलं जगौ ॥ ३६ ॥ पिता प्राह तया सार्धं । कथं वादस्त्वया कृतः ॥ स्त्रीषु कुर्यान्न तं विद्वान् । वेश्यायां तु वि- शेषतः ॥ ३७ ॥ यतः—बालसखित्वमकारणहास्यं । स्त्रीषु विवादकुजनधनसेवा ॥ गर्दभया- नमसंस्कृतवाणी । षट्सु जनो लघुतामुपयाति ॥ ३८ ॥ सुतोऽवग् तात सजातं । का शिक्षा तत्र दीयते ॥ यतनीयं त्वयाथो हि । यथा शोभावयोर्भवेत् ॥ ३९ ॥ ज्ञास्ये वत्स यथायो- ग—मित्युक्त्वाभ्यर्च्य दैवतं ॥ तातः सह सुतेनाथ । बुभुजे समयोचितं ॥ ४० ॥ क्षणं सु- सोहितः श्रेष्ठी । पृष्टः पुत्रेण तज्जये ॥ स आह लाहि तन्मर्म । तस्मिन् ज्ञाते जिता हि सा ॥ ४१ ॥ सुरेंद्रेणापि तद् ज्ञातुं । स्ववयस्यो नियोजितः ॥ स सौगंधिकरूपेण । पण्यस्त्रीपाटके

गतः ॥ ४२ ॥ कर्पूरागुरुकक्कोल— कस्तूरीपुटवासकैः ॥ वर्तिचंदनबाह्लीक—धूपैः पूर्णान् स-
मुफकान् ॥ ४३ ॥ जातिकोशलवंगैला—सिंदूरैः पूरितान् पुटान् ॥ नानापुष्पार्कसंयुक्ताः ।
कुंपिका दौःस्थ्यलुंपिकाः ॥ ४४ ॥ मंरूयित्वार्पयंस्तासां । जोगांगं त्वपरं शुचि ॥ स्थितः स्व-
स्तरिकायां स । ज्ञातवान्नाम धाम च ॥ ४५ ॥ हास्येन वाग्विलासेन । तत्समर्घ्यार्पणेन च
॥ असौ दासीर्वशीचक्रे । कामसेनपणस्त्रियः ॥ ४६ ॥ ताः सदौत्सुक्यमायांत्यः । पृष्टाः प्रे-
म्णान्यदामुना ॥ युष्मद्गृहे विवाहोऽस्ति । सुतोत्पत्तिश्च पर्व किं ॥ ४७ ॥ यतोऽस्ति वः स-
दौत्सुक्यं । काचिद्वार्तापि नोच्यते ॥ कथ्यते पृच्छ्यते किंचित् । तदिदं प्रीतिलक्षणं ॥ ४८ ॥
तान्निरूचे वयं चेट्यो । गृहसूत्रं कथं तव ॥ त्वत्प्रीतेः स्वामिनीजक्ति—रस्माकं पतिवल्लभा
॥ ४९ ॥ सोऽप्यवक् परवार्तान्नि—रर्लं मे व्यवसायिनः ॥ हसित्वा ता गता गेहं । स तथैव
च तस्थिवान् ॥ ५० ॥ तासामेकातिजल्पाकी । चेटिका लोलपेटिका ॥ मानदानेन संतुष्टा
। पृष्टा तेन जगाद सा ॥ ५१ ॥ मम गाणिक्यमाणिक्यं । कामसेनास्ति नायिका ॥ कुर्वत्या
वणिजा वाद—मुपाधिः स्वीकृतस्तया ॥ ५२ ॥ मासषट्कावधिर्दत्तो । राज्ञा निष्पाद्यतेऽथ

सः ॥ पूर्णप्रायोऽवधिस्तेनौ—त्सुक्यं मा पृछ चाग्रतः ॥ ५३ ॥ अवक् सौगंधिको जद्रे । छुः-स्थितस्य ममान्वहं ॥ बिजर्ति नोदरं वार्ता । त्वज्जीष्टा क्रियते ततः ॥ ५४ ॥ अर्धा वार्ता च जुक्तं च । सुखं दत्ते कदापि नो ॥ धत्से यदि मयि प्रीतिं । तदाग्रे ब्रूहि याहि वा ॥ ५५ ॥ साख्यद्ददासि किंचिन्मे । तदा सर्वं वदाम्यहं ॥ नान्यथाथ गृहं यामि । रुष्यति स्वामिती चिरात् ॥ ५६ ॥ पटवासं ततस्तेन । विना मूल्यं वितीर्य सा ॥ पृष्टाथ लोजिनो यस्मात् । स्वल्पाद्दहुविनाशकाः ॥ ५७ ॥ साह बिफालिकाबाला । दुग्धाद्यैः पालितास्तया ॥ शिक्ष्यंते नटवन्नृत्यं । तानमानादिनाधुना ॥ ५८ ॥ गृहकृत्यरताः काश्चि—द्दास्योऽन्या वाद्यवादकाः ॥ तद्दालपालकाः काश्चि—त्कांस्यतालपराः पराः ॥ ५९ ॥ पूर्णेऽवधौ कृतार्थाथ । लात्वा तान्नृपपर्षदि ॥ अस्माकं स्वामिनी नृत्यं । तेषां दर्शयिता मुदा ॥ ६० ॥ वादांते च ततो राजा । तुष्टः स्वर्णांबरादिना ॥ स्वामिनीं सपरिवारां । परिधापयिता स्वयं ॥ ६१ ॥ सर्वस्वं वणिजो हर्ता । जविता जुवि नो यशः ॥ न कस्याग्रे त्वया वाच्य—मत्रार्थे शपथं कुरु ॥ ६२ ॥ ज्ञापयिष्ये विनास्मानं । न कस्य शपथोऽत्र मे ॥ तेन प्रत्यायितेत्युक्त्वा—ऽयासीद्दासी निजे

गृहे ॥ ६३ ॥ सोऽपि संक्षिप्य तत्सर्वं । सुरेंद्राय न्यवेदयत् ॥ उंदुरान् सुंदरानेष । संजग्राह
पितुर्गिरा ॥ ६४ ॥ कामसेनावधौ पूर्णे । नृपं विज्ञाप्य केनचित् ॥ आनाय्य चामरछत्र—
वादित्रशीविकादिकं ॥ ६५ ॥ स्नापयित्वा बिडालांस्तान् । मस्तकन्यस्तशेखरान् ॥ स्वर्णपट्ट-
लसत्कंठान् । कज्जलांजितलोचनान् ॥ ६६ ॥ कर्णपूरस्फुरत्कर्णान् । तांबूलबहुलाननान् ॥ ग्रै-
वेयकाद्भुतग्रीवान् । सहारहृदयानपि ॥ ६७ ॥ बाहुरक्षकयुग्बाहून् । मेखलायुक्तटीतटान् ॥
सुवर्णनूपुराकीर्ण—घुर्घुरीघुर्घरत्पदान् ॥ ६८ ॥ शीबिकांतर्लसच्छय्या—रोहितानंशुकावृतान् ॥
पुरोवादितवादित्रान् । पार्श्वचालितचामरान् ॥ ६९ ॥ कयाचिद्विधृतछत्रान् । काभिश्च दत्त-
गीतकान् ॥ अहो उपाधिरायाति । जनाः पश्यत पश्यत ॥ ७० ॥ दासीभिरेवमुद्घोष्य—
माणान् काभिः पदे पदे ॥ लोकैर्विलोकितान् मार्गे । सा राजकुलमानयत् ॥ ७१ ॥ सप्तभिः
कुलकं ॥ सशरावशिरोन्यस्त—साखुकुंभो जनान्वितः ॥ सुरेंद्रोऽपि जनैः पृष्टः । किमेतत्सहृ-
जं खिदं ॥ ७२ ॥ नाडंबरः कथं सोऽस्य । न स्यादित्युत्तरं वदन् ॥ तातमत्यान्वितो ज्ञाति-
युतो राजसभां ययौ ॥ ७३ ॥ ततो राज्ञासनस्थेना—दिष्टं दृष्टांतविस्तरे ॥ नाट्यार्थं वेश्यया

संमतः सद्भि—र्भव्यानां सहजोपमः ॥ अभव्यानां तु सर्वत्रो—पाधिरूपो निरूपितः ॥ ९६ ॥ समग्रामाप्य सामग्रीं । भव्या मर्त्यादिकां ततः ॥ स्वभावात्क्रियतां धर्मो । यथा स्यात्सहजं सुखं ॥ ९७ ॥ यतः—ध्वजाधारेण सच्चैत्यं । हारेण हृदयं यथा ॥ द्रव्येण सदनं शील—शृंगारेण शरीरकं ॥ ९८ ॥ अलंकारेण कर्णौ च । केशभारेण मस्तकं ॥ प्राकारेण पुरं भाति । प्रहारेण भटो यथा ॥ ९९ ॥ कुंडलेनाबला चंद्र—मंडलेन च शर्वरी ॥ पुष्पं परिमलेनेव । कमलेन सरोवरं ॥ ६०० ॥ नदी विभाति पूरेण । सूरेण दिवसो यथा ॥ सत्प्रभावनयास्तिक्यं । धर्मो भावनया तथा ॥ १ ॥ श्रुत्वा वाणीं जिनेंद्रस्य । संशयव्रततिच्छिदां ॥ उभाभ्यामपि भूपाभ्यां । विज्ञप्तं विनयादिति ॥ २ ॥ स्वामिन् संदेहसंदोहो । भज्यते भवतांगिनां ॥ ततः संदेहहर्तेति । बिरुदं प्रथितं तव ॥ ३ ॥ यतः—उल्लंघ्यते समुद्रोऽयं । भारंडैर्मशकैर्न हि ॥ गजेंद्रो म्रियते सिंहैः । शशकैर्न कदाचन ॥ ४ ॥ संग्रामे युध्यते शूरै—र्न हि दीनैः कदाचन ॥ वर्षा वर्षति मेघं च । नो शरद्गर्जितापि हि ॥ ५ ॥ विषं जेजीयतेऽहीनां । गरुडैर्न च कुकुटैः ॥ कंठे च ध्रियते हारो । भोगिभिर्न च मर्कटैः ॥ ६ ॥ बध्यते वार्धिसेतुश्च ।

पर्वतैर्न च कर्करैः ॥ गजेंद्रैर्भिद्यते दुर्ग—प्रतोली न च बर्करैः ॥ ७ ॥ उदारैर्दार्यते दौःस्थ्यं । न तु दुःस्थैः किलार्थिनां ॥ छिद्यंते संशया आप्तै—र्न तद्भस्थैरिहांगिनां ॥ ८ ॥ तेन विज्ञप्यते देवा–वयोस्तान् संशयान् हर ॥ ये जाताः प्राक् तडागे चा–टव्यामाजौ स्वयंवरे ॥९॥ तीर्थनाथस्ततोऽवादी—द्गंभीरमधुरस्वरः ॥ श्रूयतां प्राग्भवौ यत्रा—नुभवः कर्मणामसौ ॥१०॥ क्षेत्रेऽत्र भरताख्ये च । भृगुकच्छपुरं बभौ ॥ वासिनां यत्र सन्नीरै—र्नर्मदा शर्मदा सदा ॥ ११ ॥ राजमंत्रिमहामात्या–रक्षकव्यवहारिणः ॥ सेनानीसंधिकृच्छ्रेष्ठि–सार्थवाहादयस्तथा ॥ १२ ॥ स्वर्णकारादयो यत्र । वसंति विविधा जनाः ॥ घंटारणरणन्नादाः । प्रासादा उल्लसंति च ॥ १३ ॥ पद्मश्रीनामकं यत्र । पद्मपंक्तियुतं सरः ॥ द्रोणाख्यो राजते राजा । सागरः पूरणः सुतौ ॥ १४ ॥ तौ यावन्नावमारुह्य । कदाचिन्नर्मदाजले ॥ प्रवृत्तौ मत्स्यहिंसायां । तावदेकोऽब्रवीत्तिमी ॥ १५ ॥ कृत्वा रे पापिनौ पापं । दुर्गतिं च गतौ युवां ॥ सविलापं च संतापं । लभेथां मास्म तत्फलं ॥ १६ ॥ मदुक्तं चेन्न मन्येतां । तटस्थं वां पितामहं ॥ मुनींद्रं प्रव्रतं गत्वा । श्रुत्वेति चकितौ तकौ ॥ १७ ॥ नदीमुत्तीर्य तीरस्थं । भक्त्या प्रणमतां मुनिं ॥

पूर्वं । तूर्यघोषोऽत्र कारितः ॥ ७४ ॥ ततो झांकारझल्लरि । धोंकारकरमर्दलं ॥ ऑंकारविस्फुरद्वंखं । स्फुटत्पटहपावनं ॥ ७५ ॥ मिलद्रणझणत्तालं । वंशवीणाद्भुतारवं ॥ कलकंठीकृतोद्गीतं । तानमानं समूर्छनं ॥ ७६ ॥ ध्रुवमस्त्यादिषट्त्रिंश-द्भाषाषड्रागबंधुरं ॥ षोडशोत्तुनटत्पात्रं । सा नाटकममंडयत् ॥ ७७ ॥ त्रिभिर्विशेषकं ॥ राजापि निर्निमेषाक्षः । पश्यंस्तन्नाट्यमद्भुतं ॥ पिबन् गीतरसं साक्षात् । सुधामग्न इवाजनि ॥ ७८ ॥ वीक्षमाणाः सदस्यास्त—स्तंभिता इव मूर्छिताः ॥ चित्रिता इव किं ध्यान-धराः क्षुत्तृड्विवर्जिताः ॥ ७९ ॥ किमिदं किमिदं भो भो । इत्यद्भुतरसाकुलाः ॥ स्वर्गोपमं सुखं सद्यो । लेभिरे दुर्लभं तदा ॥ ८० ॥ युग्मं ॥ अहो नृत्यमहो गीत—महो पात्राण्यहो कला ॥ अहो अदृष्टपूर्वोऽय—मुपाधिर्दर्शितोऽनया ॥ ८१ ॥ किं चास्यै दीयते किंवा । स्वर्णदानं चमत्कृतः ॥ सर्वो राजादिको लोको । यावद्दानोन्मुखोऽजनि ॥ ८२ ॥ तंदुलान् बहुलान् कृत्वा । सभांतर्विरचान् शनैः ॥ सुरेंद्रेणोंडुरा मुक्ता—स्तावन्निष्कास्य कुंभतः ॥ ८३ ॥ इतस्तद्गंधमाघ्राय । स्वीयजातिस्वभावतः ॥ तत्पृष्टे धाविता वेगा—न्नृत्यं त्यक्त्वा बिडालकाः ॥ ८४ ॥ हाहा हर्षेऽतिशोकोऽयं । हा-

ह्यानूदमृते विषं ॥ निःसृतोऽहिर्विवाहे हा । पूर्णिमायाममावसी ॥ ७५ ॥ हा बिडालैर्नाट्य-
काले । नष्टो लग्नोऽप्ययं रसः ॥ इत्यशेषः सभालोको । हाहाकारमयोऽजनि ॥ ७६ ॥ राज्ञा-
प्यज्ञाततत्त्वेन । सुरेंद्रोऽपृच्छि वत्स किं ॥ विज्ञप्तममुना स्वामिन् । बलीयः सहजं त्विदं ॥ ७७ ॥
अनयोपाधिना बाल्ये । दुग्धाद्यैः पालितैरपि ॥ अदृष्टमूषकाहारै—श्चिरान्नृत्यं च शिक्षितैः
॥ ७८ ॥ मानम्लानिर्बिडालैश्च । धनहानिः पणस्त्रियः ॥ कारिता नृत्यभंगेन । स्वीयजातिस्व-
भावतः ॥ ७९ ॥ जातिस्वभावतां किंचा—नन्यस्तामपि वीक्ष्य च ॥ आखूनधावंस्ते पृष्ठे ।
सहजं दुस्त्यजं यतः ॥ ८० ॥ प्रत्यूहे हंत नाट्यस्य । दूषका नहि मूषकाः ॥ तंदुलाः प्रति-
कूला न । स्थापितं सहजं हि तत् ॥ ८१ ॥ श्रुत्वा राजादयो दानं । तस्यादुस्तत्र चिंतितं ॥
अन्यत्राभ्युन्नतो मेघो । वृष्टो ह्यन्यत्र दैवतः ॥ ८२ ॥ लात्वा सर्वं धनं राज्ञा । कामसेनाप-
मानिता ॥ स्वगृहेषु गता लोकाः । सहजस्तुतितत्पराः ॥ ८३ ॥ सुरेंद्रो न्यायनिस्तंद्रो । राज्ञा
विज्ञैश्च मानितः ॥ निरुपाधौ सदा धर्मे । सहजे निरतोऽजनि ॥ ८४ नाट्यं हित्वा यथाधाव
–नाखुपृष्ठौ बिडालकाः ॥ धर्मं त्यक्त्वा तथा पापाः । प्रमादे विलगंति ही ॥ ८५ ॥ धर्मोऽयं

पूर्वं । तूर्यघोषोऽत्र कारितः ॥ ७४ ॥ ततो ऽांकारऋृंझेरि । धोंकारकरमर्दलं ॥ ओँकारविस्फुरत्खं । स्फुटत्पटहपावनं ॥ ७५ ॥ मिलद्रणझणत्तालं । वंशवीणाद्भुतारवं ॥ कलकंठीकृतोद्गीतं । तानमानं समूर्छनं ॥ ७६ ॥ ध्रुवमस्त्यादिषट्त्रिंश-द्भाषाषड्रागवंधुरं ॥ षोडशोतुन्नटत्पात्रं । सा नाटकममंडयत् ॥ ७७ ॥ त्रिभिर्विशेषकं ॥ राजापि निर्निमेषाक्षः । पश्यंस्तन्नाट्यमद्भुतं ॥ पिबन् गीतरसं साक्षात् । सुधामग्न इवाजनि ॥ ७८ ॥ वीक्षमाणाः सदस्यास्त——स्तंभिता इव मूर्छिताः ॥ चित्रिता इव किं ध्यान-धराः क्षुत्तृड्विवर्जिताः ॥ ७९ ॥ किमिदं किमिदं भो भो । इत्यद्भुतरसाकुलाः ॥ स्वर्गोपमं सुखं सद्यो । लेभिरे दुर्लभं तदा ॥ ८० ॥ युग्मं ॥ अहो नृत्यमहो गीत—महो पात्राण्यहो कला ॥ अहो अदृष्टपूर्वोऽय—मुपाधिर्दर्शितोऽनया ॥ ८१ ॥ किं चास्यै दीयते किंवा । स्वर्णदानं चमत्कृतः ॥ सर्वो राजादिको लोको । यावद्दानोन्मुखोऽजनि ॥ ८२ ॥ तंडुलान् बहुलान् कृत्वा । सभांतर्विरलान् शनैः ॥ सुरेंडोणांडुरा मुक्ता—स्तावन्निष्कास्य कुंभतः ॥ ८३ ॥ इतस्तद्गंधमाघ्राय । स्वीयजातिस्वभावतः ॥ तत्पृष्टे धाविता वेगा—न्नृत्यं त्यक्त्वा बिडालकाः ॥ ८४ ॥ हाहा हर्षेऽतिशोकोऽयं । हा-

हान्नूदमृते विषं ॥ निःसृतोऽहिर्विवाहे हा । पूर्णिमायाममावसी ॥ ८५ ॥ हा बिडालैर्नाट्य-
काले । नग्नो लग्नोऽप्ययं रसः ॥ इत्यशेषः सन्नालोको । हाहाकारमयोऽजनि ॥ ८६ ॥ राज्ञा-
प्यज्ञाततत्वेन । सुरेंद्रोऽपृछि वत्स किं ॥ विज्ञतममुना स्वामिन् । बलीयः सहजं त्विदं ॥८७॥
अनयोपाधिना बाल्ये । दुग्धाद्यैः पालितैरपि ॥ अदृष्टमूषकाहारै—श्चिरान्नृत्यं च शिक्षितैः
॥ ८८ ॥ मानम्लानिर्बिडालैश्च । धनहानिः पणस्त्रियः ॥ कारिता नृत्यजंगेन । स्वीयजातिस्व-
भावतः ॥ ८९ ॥ जातिस्वभावतां किंचा—नन्यस्तामपि वीक्ष्य च ॥ आखूनधावंस्ते पृष्ठे ।
सहजं दुस्त्यजं यतः ॥ ९० ॥ प्रत्यूहे हंत नाट्यस्य । दूषका नहि मूषकाः ॥ तंदुलाः प्रति-
कूला न । स्थापितं सहजं हि तत् ॥ ९१ ॥ श्रुत्वा राजादयो दानं । तस्यादुस्तत्र चिंतितं ॥
अन्यत्वाभ्युन्नतो मेघो । वृष्टो ह्यन्यत्र दैवतः ॥ ९२ ॥ लात्वा सर्वं धनं राज्ञा । कामसेनाप-
मानिता ॥ स्वगृहेषु गता लोकाः । सहजस्तुतितत्पराः ॥ ९३ ॥ सुरेंद्रो न्यायनिस्तंद्रो । राज्ञा
विज्ञैश्च मानितः ॥ निरुपाधौ सदा धर्मे । सहजे निरतोऽजनि ॥ ९४ नाट्यं हित्वा यथाधाव
—न्नाखुप्राप्तौ बिडालकाः ॥ धर्मं त्यक्त्वा तथा पापाः । प्रमादे विलगंति ही ॥ ९५ ॥ धर्मोऽयं

संमतः सद्भि—र्भव्यानां सहजोपमः ॥ अभव्यानां तु सर्वत्रो—पाधिरूपो निरूपितः ॥ ए६ ॥ समग्रामाप्य सामग्रीं । भव्या मर्त्यादिकां ततः ॥ स्वभावात्क्रियतां धर्मो । यथा स्यात्सहजं सुखं ॥ ए७ ॥ यतः—ध्वजाधारेण सच्चैत्यं । हारेण हृदयं यथा ॥ द्रव्येण सदनं शील—शृंगारेण शरीरकं ॥ ए८ ॥ अलंकारेण कर्णौ च । केशभारेण मस्तकं ॥ प्राकारेण पुरं भाति । प्रहारेण भटो यथा ॥ एए ॥ कुंडलेनाबला चंद्र—मंडलेन च शर्वरी ॥ पुष्पं परिमलेनेव । कमलेन सरोवरं ॥ ६०० ॥ नदी विभाति पूरेण । सूरेण दिवसो यथा ॥ सत्प्रभावनयास्तिक्यं । धर्मो भावनया तथा ॥ १ ॥ श्रुत्वा वाणीं जिनेंद्रस्य । संशयव्रततिच्छिदां ॥ उभाभ्यामपि भूपाभ्यां । विज्ञप्तं विनयादिति ॥ २ ॥ स्वामिन् संदेहसंदोहो । भज्यते भवतांगिनां ॥ ततः संदेहहर्तेति । बिरुदं प्रथितं तव ॥ ३ ॥ यतः—उल्लंघ्यते समुद्रोऽयं । भारकैर्मशकैर्न हि ॥ गजेंद्रो म्रियते सिंहैः । शशकैर्न कदाचन ॥ ४ ॥ संग्रामे युध्यते शूरै—र्न हि दीनैः कदाचन ॥ वर्षा वर्षति मेघं च । नो शरद्गर्जितापि हि ॥ ५ ॥ विषं जेजीयतेऽहीनां । गरुडैर्न च कुर्कुटैः ॥ कंठे च ध्रियते हारो । भोगिभिर्न च मर्कटैः ॥ ६ ॥ बध्यते वार्धिसेतुश्च ।

पर्वतैर्न च कर्करैः ॥ गजेंद्रैर्भिद्यते दुर्ग—प्रतोली न च बर्करैः ॥ ७ ॥ उदारैर्दार्यते दौःस्थ्यं ।
न तु दुःस्थैः किलार्थिनां ॥ छिद्यंते संशया आप्तै—र्न तद्मस्थैरिहांगिनां ॥ ८ ॥ तेन विज्ञ-
प्यते देवा—वयोस्तान् संशयान् हर ॥ ये जाताः प्राक् तत्रागे चा—टव्यामाजौ स्वयंवरे ॥९॥
तीर्थनाथस्ततोऽवादी—द्गंभीरमधुरस्वरः ॥ श्रूयतां प्राग्भवौ यत्रा—नुभवः कर्मणामसौ ॥१०॥
क्षेत्रेऽत्र भरताख्ये च । भृगुकच्छपुरं बभौ ॥ वासिनां यत्र सन्नीरै—र्नर्मदा शर्मदा सदा
॥ ११ ॥ राजमंत्रिमहामात्या—रक्षकव्यवहारिणः ॥ सेनानीसंधिकृच्छ्रेष्ठि—सार्थवाहादयस्तथा
॥ १२ ॥ स्वर्णकारादयो यत्र । वसंति विविधा जनाः ॥ घंटारणझणन्नादाः । प्रासादा उल्लसं-
ति च ॥ १३ ॥ पद्मश्रीनामकं यत्र । पद्मपंक्तियुतं सरः ॥ द्रोणाख्यो राजते राजा । सागरः
पूरणः सुतौ ॥ १४ ॥ तौ यावन्नावमारुह्य । कदाचिन्नर्मदाजले ॥ प्रवृत्तौ मत्स्यहिंसायां । ता-
वदेकोऽब्रवीत्तिमी ॥ १५ ॥ कृत्वा रे पापिनौ पापं । दुर्गतिं च गतौ युवां ॥ सविलापं च सं-
तापं । लभेथां मास्म तत्फलं ॥ १६ ॥ मदुक्तं चेन्न मन्येतां । तटस्थं वां पितामहं ॥ मुनींद्रं
पृच्छतं गत्वा । श्रुत्वेति चकितौ तकौ ॥ १७॥ नदीमुत्तीर्य तीरस्थं । भक्त्या प्राणमतां मुनिं ॥

सोऽपि धर्माशिषं दत्वा । जगाद करुणान्वितः ॥ १८ ॥ पितामहश्च युवयो—श्चारित्रं पालयाम्यहं ॥ युवां च कुरुथोऽकार्य—मपवित्रममेध्यतः ॥ १९ ॥ यत्पापं नवतोरिष्टं । तत्पापं किल दारुणं ॥ करोति विस्फुरत्प्रांते । संतापं खलु देहिनां ॥ २० ॥ तथा च—तेन स्वर्णेन किं कार्यं । कर्णस्त्रुटति येन च ॥ हेमक्षुर्या तया किं च । स्फुटति स्वोदरं यया ॥ २१ ॥ उपाध्यायेन किं तेन । ज्ञानं त्रस्यति येन च ॥ स्वामिना तेन किं कार्यं । येनाऽमानः पदे पदे ॥ २२ ॥ तेन धर्मेण किं कार्यं । विवादो येन वर्धते ॥ वरेण तेन किं कार्यं । सादो येनोपपद्यते ॥ २३ ॥ तेन मित्रेण किं कार्यं । प्रमादो येन जायते ॥ गृहेण तेन किं कार्यं । फूत्कुर्याद्यत्र सर्पकः ॥ २४ ॥ तया स्त्रिया च किं कार्यं । संतापोऽनुदिनं यया ॥ तया क्रीडया किं चात्र । यया पापमवाप्यते ॥ २५ ॥ वत्सौ मत्स्यमुखे भूत्वा । मे पूर्वभवसुहृदा ॥ युवां जागरितौ पापा—द्भवांतरेण निवारितौ ॥ २६ ॥ पातकं हरतं तस्मात् । कुरुतं धर्ममुत्तमं ॥ उक्त्वेति मुनिना तौ च । ग्राहितौ धर्ममुत्तमं ॥ २७ ॥ ततस्तावागतौ गेहे । धर्मं साधयतोऽनिशं ॥ कारयामासतुर्जैनान् । प्रासादान् शुभभावतः ॥ २८ ॥ धरतो हृदि सम्यक्त्वं । त-

त्वानि पठतो नव ॥ यछतो विविधं दानं । ध्यायतो ध्यानमार्हतं ॥ २ए ॥ षम्नावश्यकरक्तौ
च । व्रतोच्चारं च रक्ततः ॥ स्मरतश्च नमस्कारं । विचारं शृणुतः श्रुतेः ॥ ३० ॥ प्रविस्तारय-
तः कीर्ति—प्राग्नारमजितोऽनिशं ॥ सारं च बिभ्रृत. पुण्य—नांमागारं च शाश्वतं ॥ ३१ ॥
अथ द्रोणनृपस्ताभ्यां । निजं राज्यं ददौ मुदा ॥ स्वयं तु सप्रियः शांतः । संयमं समहं ल-
लौ ॥ ३२ ॥ तपस्तप्त्वा स कालेन । बलींद्रो दानवेष्वभूत् ॥ प्रियाराध्यार्हतो वाणी—रिं·
द्राणी तस्य चाजनि ॥ ३३ ॥ इतश्च सागरो राजा । युवराजश्च पूरणः ॥ पद्मश्रीर्युवराजस्त्री—
स्त्रयो धर्माद्दिवं ययुः ॥ ३४ ॥ नोगान् नुक्त्वा च संजातः । सगरस्त्वं नराधिप ॥ पूरणः पृ-
थिवीचंद्रः । पद्मश्री रत्नमंजरी ॥ ३५ ॥ चत्वारो ये च संदेहा । नवतोः संति चित्तयोः ॥
सद्यश्छिनद्मि तान् ह्यां—स्तदाकर्णयतं द्रुतं ॥ ३६ ॥ यावत्सरस्तटे वीक्ष्य । स्वांकस्थां र-
त्नमंजरीं ॥ प्रौढेयं कस्य देयेति । चिंतां चित्तेऽकरोन्नृपः ॥ ३७ ॥ बलिना दानवेंद्रेण । ज्ञा-
त्वा तावन्निजावधेः ॥ सा नीता हंसरूपेण । पृथ्वीचंद्रस्य हेतवे ॥ ३७ ॥ षण्मासान् स्था-
पिता पार्श्वे । प्रस्तावे च ततोऽर्पिता ॥ श्रीरुपदर्शिता स्वप्ने । पृथ्वीचंद्रनरेशितुः ॥ ३ए ॥ अ-

टव्यामपि संग्रामे । सान्निध्यं प्रकटीकृतं ॥ क्षिप्ता साथ रथेऽपाय—हेतुना धूमकेतुना ॥४०॥
तं निपात्य तदैंद्राण्या । प्राचीनपुण्ययोगतः ॥ पातालेऽरक्षि षट्यामान् । विघ्ने शांतेऽर्पयच्च तां
॥ ४१ ॥ पृथ्वीचंद्र प्रधानं ते । नाग्यसौनाग्यमद्भुतं ॥ नावीह केवलज्ञानं । गजारूढस्य
ते यतः ॥ ४२ ॥ हार्या नातःपरं कार्या—श्चत्वारः संशया नृपौ ॥ यतः पूर्वनवस्नेहो । देवा-
नामपि दुस्त्यजः ॥ ४३ ॥ नवत्रये गते मुक्तिः । सोमदेवस्य नाविनी ॥ श्रुत्वेति तौ हृदि हृ-
ष्टौ । नत्वार्हतं गतौ नृपौ ॥ ४४ ॥ शिवगामी ततः स्वामी । व्यहरन्महिमंरूले ॥ जगज्जन-
मनःशस्यो—ल्लासी घन इवोन्नतः ॥ ४५ ॥ सोमदेवमथापृच्छ्य । पृथ्वीचंद्रोऽचलत्ततः ॥ स-
हितो रत्नमंजर्या । प्रतिष्ठानपुरं गतः ॥ ४६ ॥ बद्धानि तोरणान्यत्र । मंचोन्मंचाश्च निर्मिताः
॥ मौक्तिकस्वस्तिका न्यस्ता । वैजयंत्योऽपि लंबिताः ॥ ४७ ॥ मंत्रिमुख्यास्तथा पौराः । प्री-
तिपूरेण पूरिताः ॥ वर्याणि स्वीयकार्याणि । त्यक्त्वान्निमुखमागताः ॥ ४८ ॥ त्रुट्यमाने महा-
हारे । बुध्यमाने च वेणिन्निः ॥ किरीटे स्फुट्यमाने च । स्फाट्यमाने दुकूलके ॥ ४९ ॥ पौ-
रसंघट्टतस्तत्र । तारान्नरणभूषितः ॥ पृथ्वीचंद्रः प्रियायुक्तः । प्राविशन्नव्यचंद्रवत् ॥ ५० ॥ यु-

ग्मं ॥ पट्टराज्ञी ततोऽनेन । स्थापिता रत्नमंजरी ॥ तत्तद्गुणार्जिता कीर्ति—र्व्याप्ता तस्य जगत्त्रये ॥ ५१ ॥ भुंजानाभ्यां सुखं ताभ्यां । भोगान्नवनवान् सदा ॥ विवेकसुंदरः साक्षा—द्रम्यरूपपुरंदरः ॥ ५२ ॥ प्रतापबंधुरः सारो । राज्यभारधुरंधरः ॥ नाम्ना महीधरः पुत्रो । जनितो वर्धितो गुणैः ॥ ५३ ॥ युग्मं ॥ नवलक्षाः सहस्राणि । नवतिश्च नवाधिका ॥ आसन्नवशतान्यस्य । नवाब्दान्यखिलायुषः ॥ ५४ ॥ इतश्च कन्यकुब्जेशः । सिंहकेतुर्नराधिपः ॥ महाबलयुतोऽकस्मा—द्धूमकेतुर्नराधिपः ॥ ५५ ॥ स सैन्येंधन आयातः । प्रतिष्टानपुरोपरि ॥ सर्वेषामपि लोकाना—मातंको मानसेष्वभूत् ॥ ५६ ॥ युग्मं ॥ चरैर्ज्ञातारिवृत्तांतो । नृपतिः कुपितस्ततः ॥ करवालं करालं स्वं । लीलयोल्लालयन् करे ॥ ५७ ॥ गजारूढः सैन्ययुक्तः । प्रस्थितः शत्रुसन्मुखं ॥ वादिता रणभंभाश्च । गर्जितं गगनांगणं ॥ ५८ ॥ असमं समरारंभं । वीक्ष्य वैराग्यरंजितः ॥ पृथ्वीचंद्रश्च निस्तंद्र—श्चेतसीति व्यचिंतयत् ॥ ५९ ॥ त्रिभिर्विशेषकं ॥ अहो आत्मन् किमारब्धं । ये तु दारुणदुःखदाः ॥ दुर्गतौ पातिनः सर्व—घातिनोऽपि भवे भवे ॥ ६० ॥ अंतरंगारयस्ते तु । पोषिता दुर्धिया त्वया ॥ मातृपित्रादीनां प्राप्ता ।

ये तवानेकशः पुरा ॥ ६१ ॥ बाह्यद्विषां तावदेषां । वधार्थं धावतस्तव ॥ का बुद्धिरथ का शुद्धिः । सिद्धिर्वा किमु तावकी ॥ ६२ ॥ क्रोधयोधस्त्वया रोध्यो । विरोधो येन निर्मितः ॥ उपमानं गिरेर्यस्य । तं मानं त्वमपाकुरु ॥ ६३ ॥ माया विषलताप्राया । छिंधि तामार्जवासिना ॥ लोभः क्षोभकरो हेयः । कामं कामं शमापय ॥ ६४ ॥ पंचभिः कुलकं ॥ शुक्लध्यानानलेनैवं । दग्धे कर्मेधने घने ॥ तस्याभूत्केवलालोको । लोकालोकप्रकाशकः ॥ ६५ ॥ दिवि दुंदुभयो नेदुः । पुष्पोत्क्षेपस्ततोऽजनि ॥ सौवर्णं प्रकटीभूतं । सहस्रदलमुत्पलं ॥ ६६ ॥ अहो सत्वमहो तत्व—महो शक्तिरहो मतिः ॥ अहो ध्यानमहो ज्ञानं । कष्ट रे कर्मलाघवं ॥६७॥ उच्चैरिति प्रशंसंतो । भक्तिप्राग्भारनिर्भराः ॥ आसन्नमागता देवा । विज्ञप्तिमिति तेनिरे ॥ ६८ ॥ गुहायां च गिरेः श्रृंगे । तथैव विजने जने ॥ ध्यानमौनधरास्तीव्र—तपसा कृशतां गताः ॥ ६९ ॥ सर्वसंगविनिर्मुक्ता । युक्ताः पंचमहाव्रतैः ॥ अवनौ मुनयः संति । बहवः केवलोज्ज्वलाः ॥ ७० ॥ त्वं गृहस्थो गजारूढो । बाह्यारिमभिधावितः ॥ विजयादंतरारीणा—मद्भुतः केवली मतः ॥ ७१ ॥ तत्प्रशस्यो नमस्योऽसि । मुनींद्र महतामपि ॥ अंगीकृत्य य-

तेलिंगं । पर्षदो हर्षदो नव ॥ ७२ ॥ देवतादत्तलिंगोऽथ । गजं त्यक्त्वा कजं श्रितः ॥ विहाय वैरितां वेगा—दंदितः सिंहकेतुना ॥ ७३ ॥ सुरासुरनरैः सेव्यः । पृथ्वीचंद्रश्च केवली ॥ इत्यदाद्देशनां क्लेश—नाशिनीं सुखवासिनीं ॥ ७४ ॥ भो भव्याः प्राप्य सामग्रीं । स्वमनःकामितासये ॥ सेवध्वं धर्मकल्पद्रुं । सच्छायं सुमनोरमं ॥ ७५ ॥ तस्य शाखाश्चतस्रः स्यु—श्चतुराशासु विस्तृताः ॥ दानशीलतपोभाव—भेदैर्भिन्नाः फलान्विताः ॥ ७६ ॥ तत्र दानं शिवश्रीणां । निदानं प्रथमं मतं ॥ यतो दाता गृहीता च । स्यातां द्वावपि मुक्तिगौ ॥ ७७ ॥ ऊर्वी गुर्वी ततोऽब्दोऽब्धि—रगस्त्यश्च रवींदुकौ ॥ अर्हन्महांस्तस्य हस्तौ । दानदातुः करादधः ॥ ७८ ॥ यत्र तत्रापि वा दानं । दत्तं नैव निरर्थकं ॥ तदल्पमपि चेत्पात्रे । फलितः स्वस्तरुस्तदा ॥ ७९ ॥ खंडोऽपि द्वितीयाचंद्रो । नरेंद्रः सोऽपि चेच्छिशुः ॥ तप्तं चेत्कांचनं तच्च । घृष्टं चेच्चंदनं तदा ॥ ८० ॥ मर्दितोऽपि च कर्पूरः । शूरश्चेदरिवेष्टितः ॥ कृष्णा चेत्सापि कस्तूरी । गौरी सा चेच्छिवोक्षिता ॥ ८१ ॥ बालोऽपि चेद्ध्रुवं चंद्रो । वार्दलं चेत्तदाप्यहः ॥ चलं चेन्निर्मलं ध्यानं । पात्रे दानं च चेन्मनाग् ॥ ८२ ॥ यः स्वल्पमपि निर्दोषं । पात्रे दत्ते

स्वभावतः ॥ भवेदत्र परत्रायं । सुखी ध्वजभुजंगवत् ॥ ७३ ॥ तथा ह्युज्जयिनीपार्श्वे । शालिग्रामे मनोरमे ॥ ठक्कुरः सिंहपालोऽभू—द्यशोदेवी च तत्प्रिया ॥ ७४ ॥ राज्यपालस्तयोः पुत्रो । विचित्रो गुणसंपदा ॥ किंतु द्यूते रतो यस्मात् । विधाता रत्नदूषकः ॥ ७५ ॥ नाशितस्वो मृते ताते । द्यूतादशनमर्थयन् ॥ मालाभाणीत्यसौ वत्स । काष्ठान्यानय काननात् ॥७६॥ भुक्त्वा च पर्शुमादाय । वेगतोऽसौ वनं गतः ॥ छिंदन् वृक्षं वरं साक्षा—द्यक्षेणोक्तः सदक्षरं ॥ ७७ ॥ अन्यदर्थय सद्बुद्धे । छिंधि मैनं मदाश्रमं ॥ सोऽवग्वरं च याचिष्ये । काले डुरिति रक्षितः ॥ ७७ ॥ लात्वान्यैधांसि गेहेऽगात् । सोऽन्येद्युर्गमितांबरः ॥ ख्यातो ध्वजभुजंगोऽभू—ज्जीर्णं परिदधद् ध्वजं ॥ ७९ ॥ भोज्यार्थी द्यूततो नूनं । सोऽन्यदोज्जयिनीं गतः ॥ हारितस्वोऽत्र कासार-पाल्यां देवकुले स्थितः ॥ ८० ॥ सार्थे बहुबलिवर्दे । सार्थेशस्याथ कस्यचित् ॥ याति चैकवृषपृष्ठात् । सशोणी पतिता जले ॥ ८१ ॥ दृष्टा ध्वजभुजंगेन । दृष्ट्या नान्येन केन सा ॥ संभालयन् सार्थवाह—स्तां न वीक्ष्यागतोऽत्र सः ॥ ८२ ॥ पृष्टो ध्वजभुजंगोऽत्र । सार्थवाहेन संस्थितः ॥ भद्र किं पतिता गोणी । दृष्टा सारमयी मम ॥ ८३ ॥

तां विना निधनं याति । सार्थोऽयं तद्ददाशु मे ॥ यथा दृष्टा च तेनोक्ता । दरिद्रेणाप्यलोभतः ॥ ९४ ॥ लब्ध्वा गोर्णीं ततः स्थानात् । सार्थेशो विस्मितो हृदि ॥ तमागत्याह सत्यांबु—सिंधो बंधो वचः शृणु ॥ ९५ ॥ अवि चलइ मेरुचूला । उग्गमइ सूरोवि पच्छिमे दिसए ॥ पाणव्वएवि न परं । संतो पुण विप्पयारंति ॥ ९६ ॥ सत्पुरिसाण य मज्के । पढमं लेहं लहंति ते चेव ॥ जे विसमदसापत्तावि य । सयणपइयं न मुंचंति ॥ ९७ ॥ मम हेममयीं गोर्णीं । प्रदर्श्योपकृतं त्वया ॥ ग्रहाणार्थं यथा मे स्यात् । किंचित्प्रत्युपकारिता ॥ ९८ ॥ सोऽवक् परोपकारस्य । मूल्यं गृह्णाम्यहं न हि ॥ चला लक्ष्मीश्चलाः प्राणा । उपकारो हि निश्चलः ॥ ९९ ॥ द्यूतकृत्तं ततो मत्वा । तस्यानीहशिरोमणेः ॥ सार्थेशो यत्नतो रत्न—पट्टसारमढौकयत् ॥ १०० ॥ नैव स्थास्यति मे हेत—द्धिचिंत्येति च सोऽब्रवीत् ॥ सार्थेश त्वमितः कुत्र । गंता वद विदांवर ॥ १ ॥ तेनोक्तं सज्जनोत्तंस । गंताहं दक्षिणापथं ॥ मन्नाम्ना तन्नृपायेदं । ढौक्यमुक्त्वेति सोऽर्पयत् ॥ २ ॥ स्वीकृत्य तच्चलन्नग्रे । तद्देशे श्रीपुरे गतः ॥ अरिमर्दनराजाग्रे—ऽमुंचत्तत्प्राभृतं च सः ॥ ३ ॥ किमेतदिति राज्ञोक्ते । निर्निमित्तोपकारिणा ॥

स्वामिन् ध्वजभुजंगेन । प्रेषितं तव हेतवे ॥ ४ ॥ निशम्येत्यादि तद्वार्तां । हृष्टो राजाऽन्वदृ-
नृशं ॥ तत्कृते सार्थवाहस्य । हस्तिपंचशतीमदात् ॥ ५ ॥ वलमानो विशालायां । प्राप्तस्तत्रै-
व तस्थुषः ॥ ददौ ध्वजभुजंगस्य । तां नृपप्रेषितामसौ ॥ ६ ॥ क यास्यसीति तत्पृष्टः । स्प-
ष्टमाचष्ट सार्थपः ॥ कन्यकुब्जाभिधे देशे । नगरे मणिमंदिरे ॥ ७ ॥ तत्र को गुणवानस्ती-
त्युक्ते सोऽप्यवदत्पुनः ॥ लोकोऽस्तोकः पुनर्वेश्या । देवदत्ता विशेषतः ॥ ८ ॥ सन्मित्र कुत्र
बध्नामि । किमेतां चारयाम्यतः ॥ तस्यै दद्यास्त्वमित्युक्तः । सोऽपीतश्चलितः क्रमात् ॥ ९ ॥
इतश्च देवदत्तास्ति । सार्धं देवेंद्रभूभुजा ॥ रममाणा पणीकृत्य । हस्तिपंचशतीं तदा ॥ १० ॥
राज्ञा सा रूपलुब्धेन । जिता मूल्यमनिच्छता ॥ यावत्तन्नार्पितं तावत् । तेन साथ स्वसात्कृ-
ता ॥ ११ ॥ इत्याप्तपारवश्या सा । यावच्च दुःखिता स्थिता ॥ तावदागत्य सार्थेशो । ददौ
तां गजमालिकां ॥ १२ ॥ तान् लात्वा मुदिता साख्यत् । श्रेष्ठिन्नवसरेऽधुना ॥ येनामी प्र-
हितास्तस्य । वद नामादि मत्पुरः ॥ १३ ॥ यतः—करचुलुयपाणिएणं । अवसरदिन्नेण मु-
च्छिर्ज जियइ ॥ पच्छा मुयाण सुंदरी । घम्मसयदिन्नेण किं तेण ॥ १४ ॥ तेन ध्वजभुजंगस्य ।

सर्वाथ कथिता कथा ॥ चमत्कृता निशम्यैतां । देवदत्ताप्यदोऽवदत् ॥ १५ ॥ यत्कृतेऽप्युप-
कुर्वीत । लोकः स्तोकोऽस्ति सोऽप्यहो ॥ विरलः सरलः कश्चित् । कोऽपि कुर्वीत योऽकृतः
॥ १६ ॥ वरुवानलवत्कुक्षि—न्नरयो भूरयोऽवनौ ॥ जीमूत इव कोऽप्येको । जगत्तापशमाप-
कः ॥ १७ ॥ स्वयं ध्वजभुजंगोऽयं । निर्धनो वसनोझितः ॥ अपरानुपकुर्वाणः । सज्जनेष्ववतं-
सति ॥ १८ ॥ संकटान्मोचिता राज्ञो । येनाहं दुःखिता खलु ॥ गजपंचशतीदाना—दनृणी-
स्यामतः कुतः ॥ १९ ॥ यदा यासि तदा ब्रूहि । मम संदेशकं त्वकं ॥ ममोपरि कृपां कृत्वा ।
स्वामिन्नागम्यतामिह ॥ २० ॥ स्वदासीवदहं कुर्वे । यथा न्नक्तिं स्वशक्तितः ॥ इत्युक्त्वा सा-
र्थवाहस्य । स्वर्णरत्नादि सार्पयत् ॥ २१ ॥ हृष्टाथ करिणो दत्वा । सा स्वं भूपादमोचयत् ॥
कामी लब्धाश्च तत्पृष्टा । प्रहृष्टा सर्वमाह सा ॥ २२ ॥ न्नूशक्रोऽपि चमच्चक्रे । तद्गुणग्रामरं-
जितः ॥ द्विधापि मुत्कलीभूता । वेश्या वेश्म समागता ॥ २३ ॥ अथ सार्थपतिर्गत्वा । त-
त्प्राचिकमवोचत ॥ स्वदत्तं दर्शयित्वाथ । स्वं स्थानमगमत्ततः ॥ २४ ॥ अथ ध्वजभुजंगश्च ।
चिंतयामास चेतसि ॥ प्रैषीदेषा न किंचिन्मे । ततो मद्दर्शनार्थिनी ॥ २५ ॥ परीक्षणं स्वज्ञा-

ग्यस्य । पूर्वं देशस्य वीक्षणं ॥ अस्या आकंदणं चास्ति । ततो यामीति सोऽचलत् ॥ २६ ॥
इतश्च वापिका कापि । कार्यते तत्र भूभुजा ॥ नव लक्षाणि दत्वात्र । मुक्तं पंचकुलं किल
॥ २७ ॥ केऽपि कर्मकरा धूलिं । वहंत्यन्ये खनंति च ॥ पाषाणान् घटयंत्येके । केचित्सोपा-
नकारिणः ॥ २८ ॥ उत्कृष्टमध्यनीचानां । त्रिविधं दीयतेऽशनं ॥ वरमध्यकुरूपाभिः । स्त्रीभि-
श्च परिवेष्यते ॥ २९ ॥ दुःस्थितोऽथ पथश्रांतः । क्षुधाक्रांतः स आगतः ॥ नीचकर्मकरोऽ-
न्नार्थी । नीचपंक्तौ निवेशितः ॥ ३० ॥ लंबस्तनी बिभत्सा च । दुर्गंधातिकुरूपिणी ॥ कुचे-
लोच्छिष्टहस्ताऽस्य । परिवेषयितुं गता ॥ ३१ ॥ नाशिकामोटनं कुर्व—न्नवग् ध्वजभुजंगकः ॥
दर्शनाद्भ्रांतकारिण्या । अस्या हस्तेन नाद्म्यहं ॥ ३२ ॥ सदन्नं वा कदन्नं वा । परं दद्यात्सु-
रूपिणी ॥ श्रुत्वाहासि कुलैर्दाता । देवदत्ता तवात्र न ॥ ३३ ॥ सोऽवग्दत्तेऽशनं चेत् सा ।
किं हारयथ भोस्तदा ॥ अभाव्यमिति तैरूचे । दद्मः सर्वां गृहश्रियं ॥ ३४ ॥ परं चेन्न ददा-
त्येषा । त्वं हारयसि किं तदा ॥ सोऽब्रवीन्मे धनं नास्ति । तत्पदे मस्तकं हि वः ॥ ३५ ॥ त-
त्रार्थे साक्षिणो जाता । ज्ञापितानेन केनचित् ॥ देवदत्तागता वेगात् । सांजलिस्तं व्यजि-

ज्ञपत् ॥ ३६ ॥ स्वामिन्नागम्यतां गेहे । कारयाम्यशनादिकं ॥ अद्य जाता कृतार्थाहं । यतोऽनुजगृहे त्वया ॥ ३७ ॥ सोऽवग् स्नात्वा च भुक्त्वात्रा—गमिष्यामि गृहे तव ॥ समग्रामपि सामग्रीं । गेहादानाय्य तत्क्षणात् ॥ ३८ ॥ स्वहस्तनिर्मितैः स्नाना—सनपानाशनादिभिः ॥ तथा तथा स सच्चक्रे । चमच्चक्रे जनो यथा ॥ ३९ ॥ दध्यौ राजकुमाराणां । या दत्ते न कदा दृशं ॥ याति राजकुले नैव । या चारुकरिणीं विना ॥ ४० ॥ पथिकस्याकरोद्भक्ति—मेतस्य पादचारिणी ॥ ततश्छादितरूपोऽयं । सुरो विद्याधरोऽथवा ॥ ४१ ॥ कुलकं ॥ सोऽथ प्राप्य नृपादेश—मारोप्य प्रौढवाजिनं ॥ कुमारस्फारशृंगारः । पुरे प्रावेशितस्तया ॥ ४२ ॥ परोपकारप्रवणेन येन । प्रहृत्य पंचेभशतानि पूर्वं ॥ व्यमोचि वेश्या नृपपारवश्या । जीयात्कुमारः प्रभयातिमारः ॥ ४३ ॥ इति शृण्वन् स पौरेभ्यो । नीतो राजकुले तया ॥ पूर्वं ज्ञातस्वरूपेण । भूपेन बहुमानितः ॥ ४४ ॥ विज्ञप्तो वेश्यया राजा । किमपि प्रार्थये प्रभो ॥ राज्ञोक्तं यदभीष्टं ते । त्वं सुंदरि तदर्थय ॥ ४५ ॥ साभ्यधाद्रूपसंपूर्णो । भवेऽस्मिन् वल्लभो ह्ययं ॥ त्वत्प्रसत्त्याथ मे भूया—द्राज्ञोचे तत्तवोचितं ॥ ४६ ॥ नत्वा ध्वजभुजंगोऽपि । श्रीदेवेंद्रं

व्यजिज्ञपत् ॥ भवत्पंचकुलेभ्योऽपि । लभ्यं मे देव दापय ॥ ४७ ॥ कुलान्याकार्य राज्ञोक्त-मस्य लभ्यं प्रदीयतां ॥ तानि ध्वजभुजंगं च । नत्वा भक्त्या न्यवेदयन् ॥ ४८ ॥ अस्माकं हि धनं सर्वं । त्वदायत्तमवेहि तत् ॥ जीवंति नः कुटुंबानि । तथा कुरु दयानिधे ॥ ४९ ॥ लात्वार्धं तानि मुक्तानि । कुमारेण कृपावता ॥ राज्ञादिष्टे गृहे सोऽपि । देवदत्तायुतो ययौ ॥ ५० ॥ भुंजानो विषयान् स्वेछं । दोगुंदक इवामरः ॥ कुमारो मुदितोऽन्येद्यु—र्विज्ञप्तो देवदत्तया ॥ ५१ ॥ स्वामिन्नकुंठितोत्कंठं । स्वं पुरं दर्शयस्व मां ॥ तेनोक्तं तत्र गत्वाहं । वासयित्वा पुरं वरं ॥ ५२ ॥ कृत्वा गृहं पुरे पश्चा—त्वामाकारयितास्म्यहं ॥ षट्पदी ॥ इत्युक्त्वागात्स तं वृक्ष—मर्चयच्च सुमादिना ॥ प्रत्यक्षं यक्षमित्येष । स्वं प्रार्थितमथार्थयत् ॥ ५३ ॥ हेमरत्नसहस्र—धनधान्यादिभिर्भृतं ॥ गजाश्वरथपुंस्त्रीभिः । संपूर्णं देहि मे पुरं ॥ ५४ ॥ श्रुत्वा वाचं तदीयां तां । यक्षेणाचिंत्यशक्तिना ॥ पुरं स्वर्गपुरं नाम्ना । सद्रूपं प्रकटीकृतं ॥ ५५ ॥ अभिषिक्तः स तद्राज्ये । यक्षसान्निध्यतो जनैः ॥ राजा ध्वजभुजंगोऽपि । वसुधाविदितोऽजनि ॥ ५६ ॥ आनाय्य देवदत्तां तैः । पट्टराज्ञी कृतामुना ॥ अन्याः स्वयंव-

रायाता । धन्याः कन्या विवाहिताः ॥ ५७ ॥ मात्रादिवर्गमाकार्य । राज्यं राजा स पालयन् ॥ वनपालेन विज्ञप्तो । गुर्वागमनमन्यदा ॥ ५८ ॥ समृद्धः सपरिवारो । वने गत्वानमद्गुरुं ॥ उपविष्टश्च सभ्येषु । ज्ञानिनादायि देशना ॥ ५९ ॥ धर्मात्कुलबलारोग्य—साम्राज्यराज्यसंपदः ॥ अधर्माद्विपरीतं त्वं । तदर्थेऽसि निदर्शनं ॥ ६० ॥ किमेतदिति राज्ञोक्ते । पुनरप्यगदद्गुरुः ॥ पल्लीशश्चंरूपालाख्यो । भ्रष्टस्त्वं राज्यतस्तथा ॥ ६१ ॥ लुंटयन् सार्थमुल्लंगो । भंजन् ग्रामाननेकशः ॥ स्त्रीसाटकास्तथाकर्षन् । त्वं पापमिव मूर्तिमत् ॥ ६२ ॥ अटव्यामन्यदा भ्राम्यन् । वीक्ष्य सार्थोज्झितान्मुनीन् ॥ धनुरारोप्य रे मुंडा । यूयं वस्त्राणि मुंचत ॥ ६३ ॥ न चेच्छरैः सितैर्हन्मी—त्युक्त्वाधावस्त्वमुत्सुकः ॥ देव्या स्तंभित आश्चर्य—मयोऽबोधीति साधुना ॥ ६४ ॥ प्राग्भवे पातकं कृत्वा । वत्स जातोऽत्र दूषितः ॥ कुर्वन्नत्रापि तत्प्रेत्य । पुनर्दुःखी भविष्यसि ॥ ६५ ॥ यतः—वहमारणअप्भरकाणं । दाहिणपरधणविलोवणाइणं ॥ सव्वजहन्नो उदर्ज । दसगुणिर्ज इकसकयाणं ॥ ६६ ॥ तिव्वतरेण य पएसे । सयगुणिर्ज सयसहस्सकोडिगुणो ॥ कोडाकोडीगुणो वा । हुज्ज विवागो बहुतरो वा ॥ ६७ ॥ बुद्धः

श्रुत्वेत्यसौ जीतः । स्थूलादत्तव्रतो मुनीन् ॥ क्षमयित्वा गृहे लात्वा । वस्त्रान्नैः प्रत्यलाजयत्
॥ ६७ ॥ क्लिसं बहुतरं कर्म । तेन श्रद्धावता तदा ॥ तत्पत्न्या चंद्रवत्यानु–मोदितं गर्वितं
मनः ॥ ६७ ॥ जीवस्त्वं चंद्रपालस्य । दुःस्थः सुस्थः शुजाशुजात् ॥ चंद्रवती देवदत्ता । वे-
श्या जाताथ गर्वतः ॥ ७० ॥ शृएवन्नृपः स्मरन् जातिं । लात्वा धर्मं गृहं गतः ॥ जोगान् जु-
क्त्वाद्यकल्पेऽभूत् । समयेन शिवंगमी ॥ ७१ ॥ पात्रदानफलं प्रोक्त–मिति सर्वं समासतः ॥
अथ द्वितीयशाखेयं । श्लाघ्यते शीलमुज्ज्वलं ॥ ७२ ॥ अर्गला दुर्गतिद्वारे । प्रतोली शिव-
पत्तने ॥ उपसर्गे महामंत्रो—ऽजीष्टदाने मरुन्मणिः ॥ ७३ ॥ सुखानां शाश्वतं सौख्यं । दुः-
खरोगे महौषधं ॥ शरीरस्य विजूषार्थं । विजूषणमदूषणं ॥ ७४ ॥ पोषणं पुण्यपुण्यानां । शो-
षणं जववारिधेः ॥ तोषणं विश्वविश्वानां । मोषणं दुष्टकर्मणां ॥ ७५ ॥ हास्यादज्ञानतश्चापि
। शीलं पालितमुत्तमैः ॥ सिद्धये स्यादिहामुत्रा—नंतमत्या यथा पुरा ॥ ७६ ॥ तथाहि—
सुप्रतिष्ठपुरे राजा । रतिकेलिः किलाजवत् ॥ आसीत् श्रेष्ठी च माकंदी । रतिमत्यपि तत्प्रि-
या ॥ ७७ ॥ अर्हद्दासो गुणावास—स्तयोर्नययुतः सुतः ॥ कांता जिनमती चास्य । सुतानं-

तमतिस्तथा ॥ ७८ ॥ मृते पितरि कालेना—र्हद्दासः श्रावकोऽजवत् ॥ कुटुंबजारधौरेयो ।
व्यवहारिगणाग्रणीः ॥ ७९ ॥ कुलीनयानंतमत्या । सद्गुणस्थानकस्थया ॥ मृद्धिकयेव मा-
धुर्यं । बालया प्रापि हेलया ॥ ८० ॥ अथ पर्यूषणापर्व—एयागते सर्वहर्षदे ॥ प्रारंज्यर्हद्गृहे
पुर्यां । श्राद्धैरष्टाह्निकोत्सवः ॥ ८१ ॥ अर्हद्दासेन तत्राद्यं । कृतं स्नात्रं सविस्तरं ॥ गीतनृत्य-
वरातोद्य—ध्वजपूजापुरस्सरं ॥ ८२ ॥ श्रेष्ठिश्रेष्ठोऽष्टवार्षिक्या—नंतमत्या युतस्ततः ॥ गत्वा पौ-
षधशालाया—मवंदत गुरून्मुदा ॥ ८३ ॥ सचित्तमैथुनादीनां । श्रेष्ठिनेऽष्टाह्निकावधि ॥ निय-
मा गुरुन्निर्दत्ताः । प्रत्याख्यानं च कारितं ॥ ८४ ॥ जक्तानंतमतिर्हास्यात् । पाल्यं ब्रह्मव्रतं
त्वया ॥ जगवन् पालयिष्यामि । जावादिति तयोदितं ॥ ८५ ॥ कियत्यपि गते काले । वी-
क्ष्य तां यौवनोन्मुखीं ॥ विलोकते पिता यावत् । कुलाद्यैः प्रवरान् वरान् ॥ ८६ ॥ ज्ञात्वानं-
तमतिस्तावत् । प्रोवाच पितरंप्रति ॥ मालोकय वरांस्तात । परिणेष्याम्यहं न हि ॥ ८७ ॥
सोऽवक् सुते पुमांसः स्युः । कदाचिदविवाहिताः ॥ यादृशी तादृशी नारी । परिणीतैव शो-
जते ॥ ८८ ॥ सुताह तात नैकांतं । जारतीयं यतो जुवि ॥ मान्या नारी कुमारी हि । प्रवी-

णा ब्रह्मसंज्ञवा ॥ ७ए ॥ जिनपादरता पूर्वं । या गंगेवात्तसंवरा ॥ चेदीश्वरं वृणोत्येषा । लज्जते सा कदर्थनां ॥ ए० ॥ ततो ममात्तशीलाया । विवाहो नोचितः पितः ॥ व्रतविराधकस्त्रीणां । जीवितान्मरणं वरं ॥ ए१ ॥ यतः—वरमग्गिंमि पवेसो । वरं विसुद्धेण कम्मणा मरणं ॥ मा गहियव्वयज्नंगो । न जीवियं खलियसीलस्स ॥ ए२ ॥ आचष्ट शिष्टवाग् श्रेष्टी । वत्से स्वछे विमत्सरे ॥ ब्रह्मव्रतं त्वयादायि । केषां पार्श्वे कदा वद ॥ ए३ ॥ सावग्पर्यूषणापर्वा—ष्टाह्निकाद्यदिने पितः ॥ तद्व्रतं गुरुन्निर्दत्तं । गृहीतं ज्ञावतो मया ॥ ए४ ॥ पिताह पुत्रिके हास्या—त्तदुक्तं गुरुन्निस्तदा ॥ चेत्त्वयोच्चरितं सत्यं । तथाप्यष्टाह्निकावधि ॥ ए५ ॥ साप्यधाद्गुरुन्निर्हास्या—दुक्तं सत्यीकृतं मया ॥ हसता केनचिद्दत्तां । पिबत्येव सुधां सुधीः ॥ ए६ ॥ शीलं पाव्यं गुरोर्वाचा । पालयिष्याम्यहं ततः ॥ मयापि गुरुन्निश्चापि । नावधिः प्रकटीकृतः ॥ ए७ ॥ जगाद जनको वत्से । त्वं तदाप्यष्टवार्षिकी ॥ मुग्धा किमिति जानासि । किं शीलं तस्य के गुणाः ॥ ए७ ॥ सावदद्य तदा वेद्मि । शीलं सर्वव्रतोत्तमं ॥ गुणास्तु ज्ञाग्यसौज्ञाग्य—कीर्तिस्फुर्तिसुखादयः ॥एए॥ किंच—स्फोटयेत्कामकुंज्नं को । दिव्यं ठिक्करिकाकु-

ते ॥ हारं वा त्रोटयेत्सार-मर्थे दवरकस्य कः ॥ ७०० ॥ अंगारार्थे च कश्चारु-चंदनं ज्वालयत्यहो ॥ कीलिकार्थे च को मूढः । प्रासादं पातयत्यहो ॥ १ ॥ झटित्युज्झति पीयूषं । कः पुमान् पादधावने ॥ वायसोड्डायनार्थं वा । कश्चिंतामणिमुत्सृजेत् ॥ २ ॥ तथास्य मैथुनस्यार्थे । शीलभंगं करोमि किं ॥ हन्यंते जंतवो यत्र । नवलक्षाणि निश्चितं ॥ ३ ॥ यतः—मेहुणसन्नारूढो । नवलक्खं हणइ सुहुमजीवाणं ॥ इय आगमवयणाउ । हिंसा जीवाणमिह पढमा ॥ ४ ॥ इति ज्ञात्वा मयाऽजीवं । मनोवाग्तनुभिः सदा ॥ शीलं पाल्यं विवाहस्य । कार्या वार्तापि न त्वया ॥ ५ ॥ श्रुत्वा पिता सुतावाचं । मौनमाश्रित्य तस्थिवान् ॥ तथानंतमतिः स्वस्था । त्रिवेलं जिनमर्चति ॥ ६ ॥ करोत्यावश्यकं द्विश्च । पर्वादिषु च पौषधं ॥ निष्पादयेद्रसवतीं । सरसां निजपाणिना ॥ ७ ॥ रुचिरान् रचयत्येषा । स्वस्तिकांश्च गृहांगणे ॥ सखीयुक्ता गृहोद्याने । खेलत्यांदोलनादिना ॥ ८ ॥ त्रिभिर्विशेषकं ॥ अथ वैताढ्यशैलस्थ—श्रीपुष्पपुरवासिना ॥ रूपवत्या स्त्रिया सार्धं । गच्छता मलयाचलं ॥ ९ ॥ सद्विमानाधिरूढेन । नामतो रूपवेगिना ॥ विद्याधरेण दृष्टासौ । खेलंती किल दोलया ॥ १० ॥ युग्मं ॥ निरूप्याद्-

भुतरूपां तां । रूपवेगी सुवेगवान् ॥ कामबाणैस्तथा विद्धो । नालं गंतुं यथा पुरः ॥ ११ ॥ प्रियाज्ञिया च तां हर्तु–मशक्तश्चलितस्ततः ॥ गृहे मुक्त्वा प्रियां पश्चा–द्वलित्वात्वागतो द्रुतं ॥ १२ ॥ हृत्वा तां स्वविमाने चा–रोप्यानंतमतीमसौ ॥ भोगार्थं चाटु कुर्वाणो । यावदेति निजं पुरं ॥ १३ ॥ तथा विलोक्य तां बालां । क्षुब्धो मम पतिर्ध्रुवं ॥ भयान्मां सदने मुक्त्वा । तामाहर्तुं द्रुतं गतः ॥ १४ ॥ पुरो मम कियद्याती–त्यालोच्य किल धाविता ॥ विमानाधिरूढा ताव–न्मिलिता रूपवत्यवग् ॥ १५ ॥ त्रिभिर्विशेषकं ॥ निःकृष्ट दुष्ट पापिष्ट । रेरे निष्कृप निस्त्रप ॥ परस्त्रीलुब्ध कामांध । कुशील विषयाकुल ॥ १६ ॥ कृत्याकृत्यं न जानासि । न शृणोषि हिताहितं ॥ न पश्यसि परं स्वं वा । रे मूढ बधिरांधवत् ॥ १७ ॥ विमुच्य मामिमां हर्तुं । चलितो विदितो मया ॥ त्यजैनामाशु नो चेत्त्वां । मारयिष्ये चपेटया ॥ १८ ॥ रूपवेगी भयभ्रांतः । स्त्रियः क्रोधकिरा गिरा ॥ वने विमुच्य तां नष्टः । कामासिः कामिनां हि किं ॥ १९ ॥ वनेऽनंतमतिर्भिल्लै–र्भ्रमंती वीक्षितादृभुता ॥ प्राथ्यर्मानाप्यनिच्छंती । दुष्टैः स्वस्वामिनेऽर्पिता ॥ २० ॥ खट्वापादेऽथ बध्वा तां । कशाघातैश्च मारयन् ॥ भो-

गार्थमिति पल्लीश—स्तया प्रोक्तः कटूक्तिभिः ॥ २१ ॥ दुराचार कुलांगार । सतीं मां त्वं प-
रित्यज ॥ नो चेत्ते भविता मृत्यु—रेतया मे चपेटया ॥ २२ ॥ श्रुत्वेति भयभीतेन । मुक्ता
भिल्लेन सा क्रुधा ॥ विक्रीता विबुधाह्वस्य । सार्थवाहस्य चांतिके ॥ २३ ॥ तेनापि गृहवासा-
र्थ—मभ्यर्थ्याभरणानि च ॥ दीयमानाप्यवांछंती । बहुरोषजुषा ततः ॥ २४ ॥ भद्दिलाह्वे पुरे
दत्ता । वीरमत्यै पणस्त्रियै ॥ तयाप्यात्मकुलाचारं । शिक्षितापि करोति न ॥ २५ ॥ युग्मं ॥
तत्प्रेरितान्नटान् धूर्ता—श्चौरान् द्यूतकरादिकान् ॥ समेतान् शीलभंगाय । तिरश्चक्रे महा-
सती ॥ २६ ॥ अस्मतः कठिना ह्येषा । न कुर्यान्मत्कुलोचितं ॥ चेद्ददाति कदा शापं । मृ-
त्युर्भावी तदा मम ॥ २७ ॥ द्रव्यं तथापि मा यातु । विचिंत्येति पणांगना ॥ चंद्रसारनरें-
द्रस्या—र्पयत्साधिकमूल्यतः ॥ २८ ॥ नृपोऽप्यनुपमं रूपं । तस्या वीक्ष्यातिविस्मितः ॥ स्व-
र्णरत्नादि सत्कार—सारं मुक्त्वाग्रतोऽवदत् ॥ ३० ॥ इदं पद्माक्षि शृंगारं । धारयांगे मनोह-
रं ॥ सौख्यमूलं दुकूलं च । परिधेहि नवं नवं ॥ ३१ ॥ पट्टराज्ञीपदं लात्वा । ममापि स्वा-
मिनी भव ॥ सपत्नीहृदि दत्तांहि—श्चौगान् भुंक्ष्व मया समं ॥ ३२ ॥ सतीमतल्लिकावादी-

त् । शीलभूषान्वितो मम ॥ अंगार एव श्रृंगार—स्त्वद्दत्तं वस्त्रमस्त्रवत् ॥ ३३ ॥ त्वं दीनवचनं जल्पन् । राजन् रंकायसे स्वयं ॥ सर्वस्वामिन्यहं शीलात् । कथं स्यां तव रंकिका ॥ ३४ ॥ हृदि सर्वकुशीलानां । पदं दत्वा सदा मया ॥ स्वीकृतं ब्रह्म त्यक्ताश्च । भोगा रोगा इवार्तिदाः ॥ ३५ ॥ क्षुन्त्यत्वब्धिश्चलत्वद्रिः । सुवर्णे श्यामतास्तु वा ॥ तथापि वाङ्मनःकायैः । शीलं नैव त्यजाम्यहं ॥ ३६ ॥ श्रुत्वेति क्रुद्धभूपेन । तप्तसंदंशका अपि ॥ प्रेरिता नालगंस्तस्या । अहो शीलविजृंभितं ॥ ३७ ॥ ततश्च देवता क्रुद्धा । जिनशासनसेवका ॥ बध्ध्वा निबिडबंधेन । नृपमेवमवोचत ॥ ३८ ॥ रे कुशील किमेतस्याः । शीलभंगं करोषि वै ॥ फलं लभस्व पूर्णं तु । नरकेऽनुभविष्यसि ॥ ३९ ॥ न करिष्यामि वैरूप्य—मस्या इति वदन्नृपः ॥ बंधनाच्छिथिलो देव्या । कृतः शीले च निश्चलः ॥ ४० ॥ अहो महासती त्वं मे । स्वसा मातास्यतः परं ॥ स्वस्थात्र स्वेच्छया तिष्ट । पवित्रय पदैः पुरं ॥ ४१ ॥ उक्त्वेति सत्कृता राज्ञा । वस्त्राद्यैर्निर्गताथ सा ॥ शीलमत्यार्यया सार्धं । मिलितागादुपाश्रये ॥ ४२ ॥ प्रवर्तिनीं धर्ममूर्त्तिं । नत्वा तत्र सुखं स्थिता ॥ साधर्मिकाभिर्भक्त्या सा । गृहेष्वाकार्य भोज्यते ॥ ४३ ॥

यतः——साहम्मियाण वच्छलं । कायव्वं भत्तिणिब्भरेण सया ॥ देवाणं सव्वदंसीणं । सासणस्स पभावणं ॥ ४४ ॥ अथ पुत्रीवियोगेना——र्हद्दासः खेदमेदुरः ॥ बहुदुःखाकुलः कालं । गमयेत्सकुटुंबकः ॥ ४५ ॥ अन्यदा दुःखतः श्रेष्ठी । तत्र स्थातुमशक्तिवान् ॥ नंतुं तीर्थानि दुःखानि । विस्मारयितुमुत्सुकः ॥ ४६ ॥ तद्बोधनाय संभाष्य । कुटुंबं चलितस्ततः ॥ भ्रमन्नमंश्च सातीर्थानि । भद्दिलाख्ये पुरेऽगमत् ॥ ४७ ॥ शालकेनापणस्थेन । समराख्येण वीक्षितः ॥ सायं सदनमानीतः । श्रेष्ठी सुप्तः सुखं निशि ॥ ४८ ॥ शयनात्प्रातरुत्थाय । सोऽगान्नंतुं जिनान् गुरून् ॥ भोजनाय तदाहूता । समरेणानंतमत्यपि ॥ ४९ ॥ सापि तस्य गृहे गत्वा । स्वस्तिकैः शस्तमंगणं ॥ रसै रसवतीं रम्यां । कृत्वा स्वोपाश्रयं गता ॥ ५० ॥ समराकारितः श्रेष्ठी । भुक्तये गृहमागतः ॥ स्वस्तिकाद्यद्भुतं दृष्ट्वा । सुतां स्मृत्वा ततोऽरुदत् ॥ ५१ ॥ किं रोदिषीति पृष्टोऽसौ । समरेणाखिलं जगौ ॥ श्रुतावर्त्तं यतः स्वीये । दुःखमुक्तं लघूभवेत् ॥ ५२ ॥ स्वस्तिकालोकनेनात्र । स्मृतानंतमतिर्मम ॥ तेन रोदिमि त्वं ब्रूहि । कस्या एषाद्भुता कृतिः ॥ ५३ ॥ समरोऽवक्तलाढ्येका——त्रैका साधर्मिकास्ति हि ॥ तस्याः कृतिरियं सोऽवग् । तामा-

नय यथेक्ष्यते ॥ ५४ ॥ साहूता समराख्येन । श्रेष्ठिना चोपलक्षिता ॥ तया तातश्च विज्ञा-
तः । सर्वे मुमुदिरे हृदि ॥ ५५ ॥ भोजनानंतरं पुत्र्या । पितुरुत्संगसंस्थया ॥ उक्त्वा वृत्तां-
तमित्यूचे । बाष्पगद्गदया गिरा ॥ ५६ ॥ तात दुःखं मया भुक्तं । स्थाने स्थानेऽप्यनेकधा ॥
बहवोऽपि भवा दृष्टा । एकस्मिन्नपि जन्मनि ॥ ५७ ॥ दुःखं स्त्रीकुक्षिमध्ये प्रथममिह वसेद्ग-
र्भवासे नराणां । बालत्वे चापि दुःखं मलमलिनतनुस्त्रीपयःपानमिश्रं ॥ तारुण्ये चापि दुःखं
भवति विरहजं वृद्धभावेऽप्यसारे । संसारे रे मनुष्या वदत यदि सुखं लभ्यमस्तीह किंचि-
त् ॥ ५८ ॥ भवोदधितरीं दीक्षा—मादास्येऽनुमता त्वया ॥ सोऽवग् सर्वं शुभं भावि । जी-
वंती मिलितासि चेत् ॥ ५९ ॥ इतस्तत्रत्यभूपस्य । देहे दाहज्वरोऽजनि ॥ मनाक् स याति
नो शांति—मुपाये बहुधा कृते ॥ ६० ॥ रसांगैरौषधैर्वैद्याः । प्रकुर्वंति प्रतिक्रियां ॥ जपंति
मांत्रिका मंत्रां—स्तंत्रं तन्वंति तांत्रिकाः ॥ ६१ ॥ ग्रहशांतिं निमित्तज्ञा । रचयंति प्रयत्नतः
॥ यजंति याज्ञिका यज्ञां—स्त्रिकचत्वरकादिषु ॥ ६२ ॥ जलस्थलगता देवी—रर्चयंत्यर्चका अ-
पि ॥ परं दुर्जनवत्तस्य । गुणः केनापि नाभवत् ॥ ६३ ॥ तदा किंकृत्यतामूढैः । प्रधानैर्गोत्रदे-

वता ॥ पूजिता पुष्पभोगाद्यै–र्निशायामित्यभाषत ॥ ६४ ॥ आजन्मवर्जितोद्वाहा । त्रिधा या शीलपालिनी ॥ यदा तस्याः स्वहस्तेन । पादौ प्रक्षाल्य वारिणा ॥ ६५ ॥ पिबत्यमृतवत्तत्तु । शरीरेण स्पृशत्यपि ॥ तदा मंत्रिवरा भो भो । राजा नैरुज्यमंचति ॥ ६६ ॥ युग्मं ॥ तन्निशम्य महामात्यै–र्मुदितैरखिले पुरे ॥ पटहो वादितः स्पष्टः । स्पृष्टः केनापि नो परं ॥ ६७ ॥ किं हि देवी मृषाभाषा । किंवा नास्ति सतीदृशी ॥ किं कुर्मोऽथेति पुर्लोके । सशोके दिवि गीरभूत् ॥ ६८ ॥ भो लोकाः श्रूयतां सत्यं । सास्ते समरसद्मनि ॥ अर्हद्दाससुतानंत–मतिर्नाम्ना महासती ॥ ६९ ॥ राजादेशात्तदामात्या—स्तत्र गत्वा सुखासने ॥ महासतीं समारोप्य । नृपसद्मन्यथानयन् ॥ ७० ॥ सत्याः सिंहासनस्थायाः । पादौ प्रक्षाल्य भूपतिः ॥ पपौ पादांबुपीयूषं । पस्पर्श वपुषा पुनः ॥ ७१ ॥ नृपो निरामयः स्वर्ण—मयद्युतिधरोऽधिकं ॥ प्रशस्यवाग् शशंसैव—मुपलक्ष्य महासतीं ॥ ७२ ॥ भो मया स्वगृहायाता । कामधेनुर्न मानिता ॥ न्यक्कृता कल्पवल्ली वा–ऽवज्ञाता यदियं पुरा ॥ ७३ ॥ त्वं धन्या त्वं तु तत्वज्ञा । त्वं सतीषु शिरोमणिः ॥ माता पिता कुलं विश्वं । त्वया सर्वं पवित्रितं ॥ ७४ ॥ पूर्वं स्वसा-

धुना माता । मम त्वं प्राणितार्पणात् ॥ नुत्वेति नितरां नत्वा । क्षामिता सा पुनः पुनः ॥ ७५ ॥ दिव्यभूषादिकं दत्वा । विसृष्टा भूभुजा ततः ॥ सुखासने समासीना । छत्रचामरशोभिता ॥ ७६ ॥ वादित्रपूर्वकं सार–परिवारपरिवृता ॥ नट्टगंधर्वपुलोकै—र्जीवजीवेति घोषिता ॥ ७७ ॥ इत्यनंतमतिः सद्य । आगता त्यक्तरागता ॥ पितरं मातुलं नत्वा । दीक्षारत्नमयाचत ॥ ७८ ॥ नरेशादेशमासाद्य । पित्रा कृतमहोत्सवा ॥ महसेनगुरोः पार्श्वे । प्राव्राजित्सा महासती ॥ ७९ ॥ तपंती सुतपस्तीव्रं । क्षिपंती कर्म सद्व्रतैः ॥ कालेन किल मृत्वा सा । स्वर्गेऽभूत्सप्तमे सुरः ॥ ८० ॥ भुक्त्वा सप्तदशायुश्च । सागराणि ततश्च्युतः ॥ विदेहेषु नरो भूत्वा । चारित्रं प्राप्य सेत्स्यति ॥ ८१ ॥ इति शीलं स्फुरल्लीलं । सदृष्टांतं निवेदितं ॥ अथ तृतीयशाखेयं । किंचिद्विस्तार्यते मया ॥ ८२ ॥ पद्मोल्लासी तमोध्वंसी । सच्चक्रसुखदायकः ॥ तपस्तपन एवास्ति । सतेजा द्वादशात्मकः ॥ ८३ ॥ वृथा न करणीयं च । तत्कषायाग्नितापितं ॥ तपः पारदवद्दत्ते । कल्याणं दौःस्थ्यपारदं ॥ ८४ ॥ दाहकः कर्मकाष्ठानां । जीवस्वर्णविशुद्धिकृत् ॥ तपःपावक एवात्र । नृणां निबिमजाड्यहृत् ॥ ८५ ॥ दूरमासन्नमायाति ।

दुराराध्यं सुसाध्यतां ॥ सुगमं दुर्गमं वस्तु । प्रभावात्तपसोंगिनां ॥ ७६ ॥ देवाः सेवाकरा यक्षाः । प्रत्यक्षाश्च तपस्विनां ॥ मित्रीभूतानि भूतानि । राजानो मानदायिनः ॥ ७७ ॥ अन्याः प्रकृतयः सर्वाः । क्षिप्यंते परिणामतः ॥ निकाचितानि कर्माणि । क्षीयंते तपसा परं ॥ ७८ ॥ हिंसादिनापि दुश्चीर्ण—कर्मा धर्मात्प्रवार्जितः ॥ तद्भवे लभते तीव्र—तपसा सालवच्छिवं ॥ ७९ ॥ तथाहि भरतक्षेत्रे । शालिग्रामे च सुंदरे ॥ ग्रामणीर्ग्राम्यलोकानां । सालाह्वः क्षत्रियोऽभवत् ॥ ८० ॥ कुग्रामवासतो नित्यं । कुसंगाभ्यासतस्तथा ॥ आसन्नमुक्तिरप्येष । कारकः क्लिष्टकर्मणां ॥ ८१ ॥ पापर्द्धिनिरतो नित्यं । हंति जीवान्निरागसः ॥ वक्ति भाषां मृषाऽदत्तं । गृह्णात्यह्राय चान्यतः ॥ ८२ ॥ सदैव विषयाकांक्षी । परदारान्निषेवते ॥ आरंभतत्परोऽत्यंतं । संचिनोति परिग्रहं ॥ ८३ ॥ अभक्ष्यभक्षको बाढं । पेयापेयविवर्जितः ॥ शृणोति नैव धर्माख्यां । ख्यातोऽयं पापकर्मसु ॥ ८४ ॥ पापर्द्धिप्रस्थितेनाथ । कोऽपि दृष्टोऽध्वगो धनी ॥ तेन लोभाभिभूतेन । धनं लात्वा हतो रहः ॥ ८५ ॥ स दैवाद्व्यंतरो जातो—ऽवधेस्तं वीक्ष्य निर्दयं ॥ कथं विडंबयाम्येनं । विडंब्य मम घातिनः ॥ ८६ ॥ हन्मि चेन्मम को-

पस्य । नास्ति किंचित्फलं तदा ॥ दुःखं येन मृतस्यास्य । दृग्भ्यां पश्याम्यहं न हि ॥ ९७ ॥
ततस्तथा करोम्येष । जीवेद्दुःखयुतो यथा ॥ ममापि पश्यतो ह्येनं । फलं कोपस्य संभवेत्
॥ ९८ ॥ विचिंत्येत्यागतोऽदृश्य—स्तत्पार्श्वे गगनस्थितः ॥ कोपारूगधगन्नाह । व्यंतरो वैरि-
णंप्रति ॥ ९९ ॥ रे दुष्ट क च यासि त्वं । कृत्वाऽकृत्यं ममोपरि ॥ ज्ञानान्मयाधुना ज्ञातं ।
फलं भुंक्ष्व स्वकर्मणः ॥ १०० ॥ इत्युक्त्वाद्भुतया शक्त्या । सोऽधिष्ठाय तदंगकं ॥ नरकाद-
धिकास्तस्य । वेदना उपपादयत् ॥ १ ॥ सालो गत्वा गृहे दत्वा । स्वकुटुंबस्य तद्धनं ॥ वेद-
नया स्वयं ह्येको । रारटीति कटुस्वरं ॥ २ ॥ मांत्रिकास्तांत्रिका वैद्या । आनीताः स्वजनैस्त-
तः ॥ चिकित्सां तस्य कुर्वंति । मंत्रैस्तंत्रैस्तथौषधैः ॥ ३ ॥ उपाया निष्फलास्तस्मिन् । संजा-
ता ईक्षुपुष्पवत् ॥ निरादराः क्रमाज्जाता—स्तंप्रति स्वजना अपि ॥ ४ ॥ भार्या तस्य च भो-
ज्यादि—भक्तिं भर्तुः करोति न ॥ पितुराज्ञां न मन्यंते ॥ पोषितास्ते सुता अपि ॥ ५ ॥
सुतास्नुषादिको वर्गो । वदतीति वचस्तदा ॥ अथासौ म्रियते नापि । न मंचमपि मुंचति
॥ ६ ॥ विकरालः स्वयं सालः । पूत्करोति यथा यथा ॥ स्पर्धते वर्धते तस्य । व्यथा देहे

तथा तथा ॥ ७ ॥ इतस्तत्रागताः शांताः । समसागरसूरयः ॥ रात्रौ सालगृहासन्ना—श्चये साधुयुताः स्थिताः ॥ ८ ॥ सतां गणयतां तेषा—मागमं मधुरस्वरं ॥ श्रुत्वा तत्रागतः सालः । पृष्टुं तान् किंचिदौषधं ॥ ९ ॥ गुरून्नत्वा स पप्रछ । यूयं विज्ञा दयालवः ॥ मंत्रतंत्रौषधाद्यं मे । ब्रूत यांति यया रुजः ॥ १० ॥ रात्रौ मां निबिडं बध्ध्वा । कोऽपि कोपीव कुट्टयेत् ॥ निर्मायं वदतोपायं । येनापायो व्रजत्ययं ॥ ११ ॥ गुरुराह मुधा मूढ । दुःखं दत्वा शमेछसि ॥ आस्वाद्य लसुनं किंवा । कर्पूरोजारमीहसे ॥ १२ ॥ कोऽपि किं कोद्रवानुप्त्वा । क्षेत्रे शालीन् लुनात्यहो ॥ स्वकरारोपितानिंबा—ल्लभेताम्रफलानि किं ॥ १३ हसन् हंति परप्राणान् । पापी स्वप्राणहृद्रुये ॥ स एव तद्विपाकं तु । भुंजानः किमु रोदिति ॥ १४ ॥ हास्यतः क्रीडया वापि । प्रजल्पन्नधिकं पुमान् ॥ प्राप्नुवन् मुखपाकादि । कस्मै क्रुध्यति बालिशः ॥ १५ ॥ अधर्मैः स्वं धनीकर्तु—मन्यं निधनतां नयेत् ॥ हृदि दौःस्थ्यादिदुःखानि । नैव जानीनि जासयेत् ॥ १६ ॥ वेत्ति जोगिनमात्मानं । परनारीषु लंपटः ॥ तप्तायःपुत्रिकास्पर्शं । नरके नैव चिंतयेत् ॥ १७ ॥ विभुज्य भुज्यते भूयो । मांसादि बहु पापिभिः ॥ परं ते

कुंभिकापाके । पच्यंते नरकाधिपैः ॥ १७ ॥ ततः साल विशालानि । कृत्वा पापान्यनेकशः ॥ इदानीं वेदनोद्विग्नः । किमुद्वेगं वहस्यहो ॥ १९ ॥ वराक दुःखमद्यापि । बिंदुमात्रं तवोदितं ॥ समुद्रसदृशं तच्च । संप्रति त्ववशिष्यते ॥ २० ॥ भीतोऽवग् भगवन् सोऽथ । कृपां कृत्वां समादिश ॥ पातकापारपाथोधेः । पारं प्राप्नोम्यहं यथा ॥ २१ ॥ गुरुराह कृतं कर्म । याति नानुभवं विना ॥ याति तीव्रतपोभिस्त—दपि बद्धं निकाचितं ॥ २२ ॥ कठिनान्यपि कर्माणि । संचितानि भवांतरे ॥ प्रज्वाल्यंते वनानीव । ज्वलत्तीव्रतपोऽग्निना ॥ २३ ॥ विप्रस्त्रीबालगोहत्या—कारकः क्रोधधारकः ॥ दृढप्रहारी तपसा । भवे तस्मिन् शिवं ययौ ॥२४॥ स आह भगवन् पूर्व—पातकेभ्यो बिभेम्यहं ॥ मम किंचित्तपो ब्रूहि । तदपायो यथा भवेत् ॥ २५ ॥ त्वरितं त्वथ सूरींद्रै—रुक्तस्तस्य तपोविधिः ॥ तमाहत्येति सालेन । गृहीतोऽभिग्रहो महान् ॥ २६ ॥ जघन्येनाष्टमं कृत्वा । परेणाकारितो ह्यदः ॥ भोज्ये प्रासुकमाहार—मकृतं चाप्यकारितं ॥ २७ ॥ यदा नीरुग्भविष्यामि । दीक्षां लास्यामि तद्दिने ॥ सा तु नार्हाधुना व्याधे—र्वैयावृत्त्यक्षमस्य मे ॥ २७ ॥ गुरुभ्यो नियमं लात्वा । पालयत्येष साह-

सी ॥ तेऽन्यत्र विहृताः स्थित्वा । दिनत्रयं तदाग्रहात् ॥ २९ ॥ तपस्यंतं क्षमावंतं । गृहव्या-
पारवर्जितं ॥ वीक्ष्य तं व्यंतरः शांत—श्चित्ते चेति व्यचिंतयत् ॥ ३० ॥ शत्रौ मित्रे सुखे
दुःखे । जीविते मरणे समं ॥ एनं भावयतिं कस्मा—न्निर्दयः पीडयाम्यहं ॥ ३१ ॥ पीडया-
स्य किमायाति । मत्करे पापमाप्यते ॥ इति तत्याज वैरं स । साम्याद्याम्यत्यरिर्यतः ॥ ३२ ॥
तद्देहान्निर्गते देवे । स्वस्थीभूतस्तदैव सः ॥ पृष्ट्वा कुटुंबकं स्वीयं । प्राव्राजीद्गुरुसन्निधौ ॥ ३३ ॥
दशमद्वादशे पक्ष—मासक्षपणकानि च ॥ तथा द्वित्रिचतुर्मासीं । सुखं चक्रे तपोऽप्यसौ
॥ ३४ ॥ गुरुभक्तौ च सिद्धांते । वैयावृत्ये व्रते रतः ॥ एकादशांगधार्येष । कियद्भिर्दिवसैर-
भूत् ॥ ३५ ॥ तीव्रेण तपसा प्राप्त—बहुलब्धियुतोऽथ सः ॥ गुर्वादेशादथैकाकी । प्रतिमां
च प्रपन्नवान् ॥ ३६ ॥ अन्यदा प्रतिमास्थस्या—सन्ने गजपुरस्य च ॥ सहमानस्योपसर्गान् ।
कृतान् देवेन केनचित् ॥ ३७ ॥ क्षपकश्रेणिमाप्तस्य । शुक्लध्यानाग्निना मुनेः ॥ दग्धकर्मेंधन-
स्यापत् । केवलज्ञानमुज्ज्वलं ॥ ३८ ॥ युग्मं ॥ अमरा भक्तिसंयुक्ताः । कुर्वंते केवलो सवं ॥
तत् श्रुत्वा सकलो लोको । मुनींद्रं नंतुमागतः ॥ ३९ ॥ सालोऽथ केवली स्वीयं । सभायां

चरित्तं जगौ ॥ यथा मया पुरा कर्म । निबद्धं नरकोचितं ॥ ४० ॥ तत्तीव्रतपसा क्षिप्त्वा । प्राप्तोऽहं श्रियमीदृशीं ॥ यूयं कुरुत तद्यत्नं । लभ्यते निर्वृतिर्यथा ॥ ४१ ॥ शाखा धर्मद्रुमस्यैवं । तृतीया गदिताद्भुता ॥ चतुर्थी कथ्यमानास्ति । पावना भावनामयी ॥ ४२ ॥ यथा सलक्षणा वाणी । कृपाणिर्मुष्टिना यथा ॥ यथा कूपयुता द्रोणी । क्षोणी राजन्वती यथा ॥ ४३ ॥ सेना सेना यथैवाज्य—वती रसवती यथा ॥ तथा भावयुता भांति । दानशीलतपोगणाः ॥ ४४ ॥ दारिद्र्यदारणं दानं । शीलं दुर्गतिवारणं ॥ कर्महर्तृ तपो ज्ञेयं । भाव एव शिवप्रदः ॥ ४५ ॥ दानादीनि विना भावं । भवंति नैव सिद्धये ॥ इलातीपुत्रवद्भावो । भविनां खलु मुक्तिदः ॥ ४६ ॥ तथाहि भरतेऽमुष्मि—न्निलावलयभूषणं ॥ इलावर्धननामासीत् । पुरं पुरवरं पुरा ॥ ४७ ॥ तत्रारिदमनो राजा । राजते राजसन्निभः ॥ अजितो जृंभिता शुभ्रा । कीर्तिरिवास्य कौमुदी ॥ ४८ ॥ बंधुदत्तोऽभवत्तत्र । श्रेष्टी श्रेष्टो धनश्रिया ॥ भार्या बंधुमती तस्य । हरस्येवास्ति पार्वती ॥ ४९ ॥ तयोर्भुजानयोर्भोगान् । प्रेमामृतनिमग्नयोः ॥ अपुत्रयोः कियान् कालो । देवदेव्योरिवागमत् ॥ ५० ॥ श्यामास्यामन्यदालोक्य । श्रेष्टिनीं

श्रेष्ठ्यवोचत ॥ आः प्रिये किं तमोग्रस्ता । चंद्रज्योत्स्नेव वीक्ष्यसे ॥ ५२ ॥ किं तेऽस्ति मंरू-
नं न्यूनं । किं किमप्यस्ति पातितं ॥ किं मानिनि न मे मानं । मृतः को वा पितुर्गृहे ॥५२॥
यत्ते चित्तेऽस्ति तत्सर्वं । सुंदरि त्वं निवेदय ॥ त्वद्दुःखे दुःखिनो मेऽथ । वेलां न क्रमते
मनः ॥ ५३ ॥ साह सर्वं ममास्त्येव । त्वत्प्रसत्त्या सुखप्रदं ॥ प्रियार्पय परं पुत्रं । सर्वमेनं वि-
ना वृथा ॥ ५४ ॥ यतः—तारुण्णं लावण्णं । पियपिमं भूसणाइ संसारे ॥ सव्वं पलालसरिसं ।
इक्केण विणा सुपुत्तेण ॥ ५५ ॥ सोऽवक् सुंदरि संदिग्धे । दैवायत्ते च वस्तुनि ॥ न विषाद-
विषास्वादो । विधेयो विधिवेदिभिः ॥ ५६ ॥ मयि ते कृत्रिमं प्रेम । तेनेयं भवितव्यता ॥ इ-
त्युक्त्वा रोदितुं लग्ना । सोद्विग्नाश्वासितामुना ॥ ५७ ॥ अतःपरं च मा रोदी—र्धैर्यरत्नं त्व-
माश्रय ॥ मंत्रः श्मशानसाध्योऽपि । मया तु साधयिष्यते ॥ ५८ ॥ स्वमूर्ध्ना यक्षमार्चिष्ये ।
त्वदुक्त्याहमतःपरं ॥ यतिष्ये च तथा भद्रे । यथा ते भविता सुतः ॥ ५९ ॥ सावग् धृत्वा-
खिलं कष्ट—माराधय पुरः सुरीं ॥ इलातीं सप्रभावा सा । तुष्टा दास्यति नौ सुतं ॥ ६० ॥
तद्गिरा सद्दिने गत्वा । प्रासादे कुसुमादिभिः ॥ सोऽभ्यर्च्य भावतो देवीं । विज्ञप्तिं व्यतनो-

दिति ॥ ६१ ॥ देवि त्वमद्भुता माता । जगद्दौर्गत्यचूरणे ॥ त्वं तु कल्पलता ख्याता । विश्ववांछितपूरणे ॥ ६२ ॥ संतानाभावतो दीनं । लीनं तव पदद्वये ॥ पुत्रार्पणेन मां पाहि । लाहि वा मम जीवितं ॥ ६३ ॥ विज्ञप्येति स्थितः श्रेष्ठी । देव्यादिष्टो दिनत्रये ॥ साहसात्तव तुष्टास्मि । पुत्रो भूयात्तवाद्भुतः ॥ ६४ ॥ किं चास्य नाम मन्नाम्ना । देयमाख्याय सा स्थिता ॥ हृष्टः श्रेष्ठी गतो गेहे । गर्भं बंधुमतिर्दधौ ॥ ६५ ॥ समये च सुतो जातः । पित्रा कृतमहोत्सवः ॥ तस्यैलापुत्र इत्याख्या । दत्ता स्वजनसाक्षिकं ॥ ६६ ॥ पालितो वरधात्रीभिः । पाठितः पाठकेन च ॥ ततः कामकरिक्रीडा—वनं स प्राप यौवनं ॥ ६७ ॥ मित्रान्वितोऽन्यदोद्याने । कुमारः क्रीडितुं गतः ॥ क्रीडंतीं सुरूपां धन्यां । नटकन्यां निरैक्षत ॥ ६८ ॥ अहो वक्त्रमहो नेत्रे । अहो पाणी अहो पदे ॥ इति चिंतयितुं लग्नः । प्राग्भवप्रेमतोऽथ सः ॥ ६९ ॥ चलोऽपि तन्मनोभृंग—स्तस्या आस्यांबुजं पिबन् ॥ युक्तं यन्निश्चलो जातो । न जातिमपि वीक्षते ॥ ७० ॥ नटेभ्योऽप्रार्थयत्कन्या—मर्थेन बहुनापि सः ॥ तेऽब्रुवन्न वयं दद्म । एतां हेम्नापि तोलितां ॥ ७१ ॥ सुहृद्भिः स गृहं नीतो । वपुषा न तु चेतसा ॥ क्षुधां तृषां

रतिं निद्रां । नाचिंतयदचेतनः ॥ ७२ ॥ ततः पुनः सुहृद्भिस्ते । प्रार्थ्यमाना अदोऽवदन् ॥ भूत्वा सहचरोऽस्माकं । पठित्वा नोऽखिलाः कलाः ॥ ७३ ॥ स्वविद्यया स्वमार्जित्वा । जामाता भविता गृहे ॥ इत्युपायेन नः कन्या । तेनोद्वाह्या न चान्यथा ॥ ७४ ॥ ज्ञात्वेति जनकोऽजल्प—न्मुंच नीचवधूस्पृहां ॥ विवाहयामि ते वत्स । द्वात्रिंशदून्यकन्यकाः ॥ ७५ ॥ निर्मलोऽपि सुवृत्तोऽपि । प्रौढस्त्रीहृदयोचितः ॥ नरो नार्या गले लग्नो । हारवन्नमयेद्गुणं ॥७६॥ मात्रादिस्वजनैरुक्तं । त्वमुदुंबरपुष्पवत् ॥ दुर्लभो देवतादत्त—स्तन्माऽनुचितमाचर ॥ ७७ ॥ तावदूनं यशस्ताव—त्तावद्गुणगणः स्फुरन् ॥ मान्योऽपि महतां ताव—द्यावदाचरत्वानयं ॥ ७८ ॥ इति शिक्षां कुलं लज्जां । विवेकमपि सोऽत्यजत् ॥ स्मरांधकाररुद्धाना—मालोकः संनवेत्कुतः ॥ ७९ ॥ स्वीकृत्य सर्वमप्येष । नटैः सार्धं च पर्यटन् ॥ अंजसाजनि तत्तुल्यो—ऽन्यासो हि वासतो यतः ॥ ८० ॥ वंशं त्यक्त्वा निजस्कंधे । प्रौढं वंशं वहत्यहो ॥ गुणसारं वहेन्मूर्ध्ना । मुक्त्वा सोऽप्यद्भुतान् गुणान् ॥ ८१ ॥ हित्वा च निर्मलां विद्यां । नटविद्यां च शिक्षितः ॥ अजित्वा करणान्येष । करणानि च साधयेत् ॥ ८२ ॥ समस्तान्यस्ततद्विदो ।

विवाहसमयोचितं ॥ स्वशक्त्यार्जयितुं द्रव्य–मसौ बेनातटे गतः ॥ ७३ ॥ तत्र श्रीदत्तराजानं । मिलित्वा स व्यजिज्ञपत् ॥ स्वामिन्नवसरं देहि । तां खेलामि कलां यथा ॥ ७४ ॥ नाखेलयां नटः कश्चि—न्न खेलति न खेलिता ॥ श्रुत्वा चमत्कृतो भूप—स्तद्दिनेऽवसरं ददौ ॥ ७५ ॥ ततः सांतःपुरस्तस्थौ । गवाक्षे वीक्षितुं नृपः ॥ उच्चमंचेषु चासीना । मंत्र्याद्या नागरास्तथा ॥ ७६ ॥ विन्यस्तोऽभ्रंलिहो वंश—स्तस्योर्ध्वं फलकं महत् ॥ स्थापितौ प्रांतयोस्तस्य । लोहकीलावुन्नावुन्नौ ॥ ७७ ॥ तस्योपरि समारुह्य । ननर्त प्रकटं नटः ॥ इभ्यसौधशिरःस्वर्ण—यष्ट्यां क्रीडाकलापिवत् ॥ ७८ ॥ युग्मं ॥ ढक्कानिःस्वानभेर्यादि—घोषणैर्बधिरांबरं ॥ मृदंगतालसद्वंश—वीणादिमधुरस्वरं ॥ ७९ ॥ अथः कोकिलकंठाभि—र्गायकीभिः समेतया ॥ नर्तक्याश्रितसंगीतं । गीतं गीतं तथा तथा ॥ ८० ॥ सुधा मुधा च तस्याग्रे । शर्करा कर्करायिता ॥ स्वशिरांस्यतिधुन्वानै–र्यथा सभ्यैः प्रशंसितं ॥ ८१ ॥ त्रिभिर्विशेषकं ॥ खड्गखेटकभृत्पाणि—श्चरणाहितपादुकः ॥ सावधानतया सोऽथ । वंशस्याग्रे ननर्त च ॥८२॥ नानानृत्यानि कुर्वन् स । लोहकीलेषु पादुके ॥ प्रवेशयन् जनैर्दृष्टः । कौतुकाक्षिप्तमानसैः

॥ ९३ ॥ अहो कला मनुष्योऽयं । खगो वायमिति स्तुवन् ॥ दानोत्सुकोऽपि सज्योघो । रा-
ज्ञो दानं प्रतीक्षते ॥ ९४ ॥ कन्याकांक्षी च कामांधो । मृतिमिच्छन्नृपोऽस्य च ॥ मया नैक्षि
पुनः खेल । त्वमिति प्रेरयत्यमुं ॥ ९५ ॥ इलापुत्रोऽपि दानार्थी । खेलन्नपि पुनः पुनः ॥ अ-
बोधत् स्वदृशा राज्ञः । कुदृष्टिं कन्यकोपरि ॥ ९६ ॥ इतश्च निकटे श्रेष्ठि—सौधे प्रोषितभ-
र्तृकां ॥ पार्वणेंदुसमानास्यां । सुदृशं कुंददंतकां ॥ ९७ ॥ कंकेलिपल्लवोल्लासि—पाणिपादधरां
वरां ॥ स्तनभारनतां साक्षात् । शृंगाररससारणिं ॥ ९८ ॥ दृष्ट्वान्नं युवतीं कांचि—द्ददतीं शु-
भभावतः ॥ अजिह्मब्रह्मणो यूनो—ऽप्यधोन्यस्तदृशो मुनेः ॥ ९९ ॥ विरक्तोऽचिंतयच्चित्ते ।
धन्या मान्या मुनीश्वराः ॥ न पश्यंत्याननं स्त्रीणां । ये बाल्याच्छीलपालकाः ॥ १००० ॥ कुल-
कं ॥ यतः—ते कहं न वंदणिज्जा । रूवं दठूण परकलत्ताणं ॥ धाराहयव्व वसहा । महीय-
लं जं पलोयंति ॥ १ ॥ धिग्मां योऽहं निजं वंशं । न्यक्कृत्य सुखदं सतां ॥ अमुं डुवंशमा-
रूढः । प्रत्यहं मरणप्रदं ॥ २ ॥ दृष्टाः श्रुता अपि स्पृष्टा । येऽनंतभवदुःखदाः ॥ धिगस्तु वि-
षयानेतान् । यकारेणाधिकान् विषात् ॥ ३ ॥ सर्वं त्यक्त्वादृता ह्येषा । न सकृत्सेविता मया ॥

द्वावपि प्रेमनिर्ब्भरौ ॥ २५ ॥ गुरोः पार्श्वे व्रतं लात्वा । तपस्यंतौ स्वरागिणौ ॥ ब्राह्मणी कुत्सिताः शूद्रा । इत्यनिंदन् मुनीन्मदात् ॥ २६ ॥ समाधिना विपद्योत्ता—वपि जातौ सुरोत्तमौ ॥ ततश्च्युतोऽथ संजातो । व्यवहारिकुले नवान् ॥ २७ ॥ गर्वान्नटसुता चैषा । रक्तौ प्राग्नवरागतः ॥ विरक्तौ संयमाभ्यासा—देव केवलिनौ समं ॥ २८ ॥ शत्रोरपि महाशत्रू । अनलाच्च महानलौ ॥ रोगादपि महारोगौ । रागद्वेषौ त्यजेत्सुधीः ॥ २९ ॥ एतावरतिमुद्वेग—मिहैव कुरुतस्तरां ॥ प्रेत्य दौर्गत्यदुःखानि । दुरितानि नवे नवे ॥ ३० ॥ मनोभुवि समुद्भूतौ । रागद्वेषौ विषद्रुमौ ॥ मृत्युदौ छायया छेद्यौ—रुच्छेद्यौ साम्यपर्शुना ॥ ३१ ॥ ततो नव्याः पुरा जित्वा । रागद्वेषौ च दुर्जयौ ॥ कुरुध्वमार्हतं धर्मं । लनध्वं निवृतिं यथा ॥ ३२ ॥ श्रुत्वा धर्मं सवृत्तांतं । केऽपि संयममुत्तमं ॥ व्रतानि द्वादशान्येऽपि । सम्यक्त्वं कति लेभिरे ॥ ३३ ॥ चंद्रसूर्या इवावन्यां । नव्योद्योतकराश्चिरं ॥ विहृत्य केवलाधारा—श्चत्वारोऽपि शिवं ययुः ॥ ३४ ॥ इदमिलासुतकेवलिवृत्तकं । हृदि विचार्य कुकार्यनिवर्तकं ॥ नजत नव्यजनाः सम्नावनां । श्रयत मुक्तिपुरीमतिपावनां ॥ ३५ ॥ चतुर्धा धर्मकल्पद्रु—श्चतुर्मुखजिनोदितः ॥

गतीश्चतस्रोऽप्युल्लंघ्य । दत्तेऽनंतचतुष्टयं ॥ ३६ ॥ पृथ्वीचंद्रकेवलिनः । श्रुत्वैवं धर्मदेशनां ॥
सद्यः सुधामिवास्वाद्य । सभ्या मुमुदिरे हृदि ॥ ३७ ॥ स्वीचक्रुः केऽपि चारित्रं । निबद्धं प्र-
गुणैर्गुणैः ॥ यानपात्रमिवागाध—जव्यांजोनिधितारकं ॥ ३८ ॥ चतुरा उच्चरंतिस्म । व्रतानि
द्वादशापरे ॥ तमोहराण्यदोषाणि । सालोकान्यर्कबिंबवत् ॥ ३ए ॥ कियद्भिरपि सम्यक्त्वं ।
सन्माणिक्यमिवादृतं ॥ निस्त्रासं निर्मलं स्वेष्ट—प्रदं दौर्गत्यवारकं ॥ ४० ॥ अन्नद्यानंतका-
यादि–नियमा गृहीताः परैः ॥ कल्पद्रुमा इवोदार–छायाः सद्यः फलप्रदाः ॥ ४१ ॥ इतः कु-
वलयोल्लासी । पापतापं समापयन् ॥ गोजिर्विनाशयन् विश्वे । दोषोद्भूतं तमोजरं ॥ ४२ ॥
सत्तारकमुनिभ्राजि । विहृत्यात्र घनाश्रये ॥ केवली पृथिवीचंद्र—श्चंद्रवच्च शिवं ययौ ॥४३॥
युग्मं ॥ सिंहासने सुरेंद्रेणा—जिषिक्तो विविधोत्सवैः ॥ प्रतिष्टानपुरे राज्यं । चक्रे राजा म-
हीधरः ॥ ४४ ॥ इति नवरसचित्रं दुःखवल्लिलवित्रं । जिनवचनपवित्रं मोहजूमिखनित्रं ॥ नि-
वृतिनयनमित्रं मारमानादिजैत्रं । पृथिविमुनिचरित्रं वः श्रियेऽस्तु पवित्रं ॥ ४५ ॥ वर्षे सत्त-
शराङ्कचंद्रगणिते चैत्रस्य चाद्ये दिने । सद्योगे भृगुरेवतीज्ञुवि बलात् श्रीदेवगुर्वोगिरा ॥ मंदे-

सत्यं यतः करो दग्धः । प्रोक्तकोऽपि न खादितः ॥ ४ ॥ एषास्थिचर्मसंपूर्णा । मया राज्ञापि काम्यते ॥ पथि ह्री घुर्घुरायेते । लब्ध्वा ह्येकास्थि कुर्कुरौ ॥ ५ ॥ क्षणिकं सुखमाधातुं । सर्वस्वं हारितं मया ॥ न पश्येल्लकुटाघातं । बिडालो हि पयः पिबन् ॥ ६ ॥ धिगस्तु निर्विवेकं मां । नृपं चामुं जिघांसुकं ॥ एतां चानर्थदां कन्या—मतस्तां व्युत्सृजाम्यहं ॥ ७ ॥ इलापुत्र इति ध्यायन् । जातजातिस्मृतिस्ततः ॥ घनघातिक्षयादाप । निर्मलां केवलश्रियं ॥ ८ ॥ कुलकं ॥ स्वस्यां मत्वा नृपस्येच्छां । प्रियस्य च कदर्थनां ॥ नृत्यगीतैः स्वयं खिन्ना । दध्याविति च नर्तकी ॥ ९ ॥ पार्श्वस्थायां पट्टराज्ञ्या—मवरोधे महत्यपि ॥ ह्रीह्री मामधमां भूपो । वांछन्नपि न लज्जते ॥ १० ॥ कुलं त्यक्त्वाहृतं नृत्यं । येन नाप्तं फलं च मे ॥ नृपः कौतुकदंभेन । मदर्थं तं जिघांसति ॥ ११ ॥ स्थाने स्थाने च नृत्यंत्या । गायंत्या च जने जने ॥ दुर्भरोदरपूर्त्यर्थं । मया स्वात्मा विडंबितः ॥ १२ ॥ धिग्भूपं धिगिमं मां च । विषयान् धिग्भवं च धिग् ॥ तदैव केवलं लेभे । चिंतयंतीति सापि च ॥ १३ ॥ कुलकं ॥ अनुरक्ता च भक्ताहं । सेवे देवमिव प्रियं ॥ तस्यां मय्यंतिकस्थायां । भूपः कामायतेऽधमां ॥ १४ ॥ स्वार्थं धि-

गस्तु धिक्कलेदं । नव्यां मत्वा प्रजोर्मनः ॥ चिंतयंतीति वैराग्यात् । पट्टराज्याप केवलं ॥१५॥
अहो राजा दुराचारः । कृपणकन्यकेच्छया ॥ कलेदाणमिषाद्भूयो । नटहत्यां लन्निष्यते ॥१६॥
यावन्न दास्यति भूप—स्तावदेषोऽपि नर्तिता ॥ अथो मिथो ब्रुवल्लोक—वाक्यं श्रुत्वेति कर्ण-
योः ॥ १७ ॥ स्वीयं दुश्चिंतितं मत्वा । राजा दध्यौ स्वमानसे ॥ सत्यं वदति लोकोऽयं । यः
स्मातः परमेश्वरः ॥ १८ ॥ विण्मूत्ररुधिरश्लेष्मा—द्युच्चद्दुर्गंधपूरिता ॥ जलैर्धौता बहिः पूता
। मदिराघटिकेव या ॥ १९ ॥ स्त्री निंदिता परेषां च । नृणां तु विशेषतः ॥ तस्या अर्थे
मया स्वार्त्ता । नटोऽपि बहु नर्तितः ॥ २० ॥ पापितोऽपि सपापोऽहं । कठिनात्कठिनोऽप्य-
हं ॥ कृपणात्कृपणोऽहं च । मूढान्मूढतरोऽस्म्यहं ॥ २१ ॥ कुलकं ॥ नावयन्निति भूपालो ।
लेजे केवलमुज्ज्वलं ॥ जगृहुः केवलिवेषं—श्चत्वारोऽथ सुरार्पितान् ॥ २२ ॥ अहो चतुर्णां
संयोगो । लाघवं कर्मणामहो ॥ इत्युद्घोष्य समीपस्थै—र्वादिता नेरयः सुरैः ॥ २३ ॥ वंशं
मुक्त्वा सुवर्णाब्जे । स्थितश्चेलासुतो मुनिः ॥ जनेन चेति विज्ञप्तो । नव्यां किं प्रेम सोऽप्य
वक् ॥ २४ ॥ तथाहि—पुरेऽन्नवद्धसंताख्ये । देवदत्ताभिधो द्विजः ॥ देवश्रीस्तस्य पत्नीति ।

द्वावपि प्रेमनिर्भरौ ॥ २५ ॥ गुरोः पार्श्वे व्रतं लात्वा । तपस्यंतौ स्वरागिणौ ॥ ब्राह्मणी कुत्सिताः शूद्रा । इत्यनिंदन् मुनीन्मदात् ॥ २६ ॥ समाधिना विपद्योभा—वपि जातौ सुरोत्तमौ ॥ ततश्च्युतोऽथ संजातो । व्यवहारिकुले भवान् ॥ २७ ॥ गर्वान्नटसुता चैषा । रक्तौ प्राग्भवरागतः ॥ विरक्तौ संयमाभ्यासा—देव केवलिनौ समं ॥ २८ ॥ शत्रोरपि महाशत्रू । अनलाच्च महानलौ ॥ रोगादपि महारोगौ । रागद्वेषौ त्यजेत्सुधीः ॥ २९ ॥ एतावरतिमुद्वेग—मिहैव कुरुतस्तरां ॥ प्रेत्य दौर्गत्यदुःखानि । दुरितानि भवे भवे ॥ ३० ॥ मनोभुवि समुद्भूतौ । रागद्वेषौ विषद्रुमौ ॥ मृत्युदौ बाधया छेद्यौ—रुच्छेद्यौ साम्यपर्शुना ॥ ३१ ॥ ततो भव्याः पुरा जित्वा । रागद्वेषौ च दुर्जयौ ॥ कुरुध्वमार्हतं धर्मं । लभध्वं निर्वृतिं यथा ॥ ३२ ॥ श्रुत्वा धर्मं सवृत्तांतं । केऽपि संयममुत्तमं ॥ व्रतानि द्वादशान्येऽपि । सम्यक्त्वं कति लेभिरे ॥ ३३ ॥ चंद्रसूर्या इवावन्यां । भव्योद्योतकराश्चिरं ॥ विहृत्य केवलाधारा—श्चत्वारोऽपि शिवं ययुः ॥ ३४ ॥ इदमिलासुतकेवलिवृत्तकं । हृदि विचार्य कुकार्यनिवर्तकं ॥ भजत भव्यजनाः समभावनां । श्रयत मुक्तिपुरीमतिपावनां ॥ ३५ ॥ चतुर्धा धर्मकल्पद्रु—श्चतुर्मुखजिनोदितः ॥

गतीश्चतस्रोऽप्युल्लंघ्य । दत्तेऽनंतचतुष्टयं ॥ ३६ ॥ पृथ्वीचंद्रकेवलिनः । श्रुत्वैवं धर्मदेशनां ॥
सद्यः सुधामिवास्वाद्य । सज्या मुमुदिरे हृदि ॥ ३७ ॥ स्वीचक्रुः केऽपि चारित्रं । निबद्धं प्र-
गुणैर्गुणैः ॥ यानपात्रमिवागाध—भव्यांभोनिधितारकं ॥ ३८ ॥ चतुरा उच्चरंतिस्म । व्रतानि
द्वादशापरे ॥ तमोहराण्यदोषाणि । सालोकान्यर्कबिंबवत् ॥ ३९ ॥ कियद्भिरपि सम्यक्त्वं ।
सन्माणिक्यमिवादृतं ॥ निस्त्रासं निर्मलं स्वेष्ट—प्रदं दौर्गत्यवारकं ॥ ४० ॥ अभक्ष्यानंतका-
यादि–नियमा गृहीताः परैः ॥ कल्पद्रुमा इवोदार–छायाः सद्यः फलप्रदाः ॥ ४१ ॥ इतः कु-
वलयोल्लासी । पापतापं समापयन् ॥ गोभिर्विनाशयन् विश्वे । दोषोद्भूतं तमोभरं ॥ ४२ ॥
सत्तारकमुनिभ्राजि । विहृत्यात्र घनाश्रये ॥ केवली पृथिवीचंद्र—श्चंद्रवच्च शिवं ययौ ॥४३॥
युग्मं ॥ सिंहासने सुरेंद्रेणा—भिषिक्तो विविधोत्सवैः ॥ प्रतिष्टानपुरे राज्यं । चक्रे राजा म-
हीधरः ॥ ४४ ॥ इति नवरसचित्रं दुःखवल्लिलवित्रं । जिनवचनपवित्रं मोहभूमिखनित्रं ॥ नि-
वृतिनयनमित्रं मारमानादिजैत्रं । पृथिविमुनिचरित्रं वः श्रियेऽस्तु पवित्रं ॥ ४५ ॥ वर्षे सप्त-
शशांकचंद्रगणिते चैत्रस्य चाद्ये दिने । सद्योगे गुरुरेवतीभुवि बलात् श्रीदेवगुर्वोर्गिरा ॥ मंदे-

नापि मया समर्थितमिदं बोधस्य हि हेतवे । विज्ञैश्चेदिह दूषणं मयि कृपां कृत्वैव तद्बोध्यतां ॥ ४६ ॥ स्वछे श्रीचंद्रगछे जिनमुनिपरमाः पाठकाश्चैत्रशाखा—विख्याता देवभद्राः सुविहितशिरसि स्फारकोटीरतुल्याः ॥ आचाम्लादीनि कृत्वा सततमतिरतैरागमोक्तक्रियायां । पद्मावत्या प्रदत्तं स्फुटमिह बिरुदं यैर्गृहीतं तपेति ॥ ४७ ॥ तस्मिन् विस्मयकृत्क्रियावति तपापक्षे व्यतीतेष्वहो । सूरींद्रेषु कियत्सु गछपतयः श्रीरत्नसिंहा बभुः ॥ तत्पट्टे च नृपत्यहंमदसुरत्राणादिभिर्मानिते । कीर्तिश्रीरतिदे तथा चिरतरं सौभाग्यभाग्यान्विते ॥ ४८ ॥ श्रीउदयवल्लभाह्वा । बभूवुर्गुरवोऽद्भुताः ॥ यत्प्रतापजितोऽद्यापि । द्यौमणिर्व्योम नोज्झति ॥ ४९ ॥ जातास्ततोऽथ ख्याताः श्री—ज्ञानसागरसूरयः ॥ यच्छीललीलया ध्वस्तः । स्मरोऽप्यापदनंगतां ॥ ५० ॥ श्रीउदयसागराख्या । विख्याता गुरवोऽभवन् ॥ यत्प्रज्ञया ह्यवज्ञातो । गुरुरपि दिवं गतः ॥ ५१ ॥ तत्पट्टे जयवद्भिः श्री—लब्धिसागरसूरिभिः ॥ पृथिवीचंद्रचरित्रं । श्रीशतीर्थे कृतं हितं ॥ ५२ ॥ यावन्मेरुर्महीपीठे । चंद्रार्कौ यावदंबरे ॥ ग्रंथोऽयं जयतात् तावद्धर्मलक्ष्मीसुखप्रदः ॥ ५३ ॥ प्रत्यक्षरं गणित्वा हि । चरित्रेऽत्र विनिश्चितं ॥ सहस्रमेकं श्लो-

कानाऽमेकषष्ट्यधिकं स्फुटं ॥ ५४ ॥ इति श्रीपृथ्वीचंद्रचरित्रं समाप्तं ॥ श्रीरस्तु ॥

॥ समाप्तेयं ग्रंथस्य द्वितीयावृत्तिर्गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहम् ॥
संसारकाननतटे ह्यटताऽलिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितम् ॥२॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ॥
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥



आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीविक्रमचरित्रं ॥

( पंचदंडकथात्मकं )

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४३८. विक्रमसंवत्—१९६८. सने १९१२.

किं रु.–३–०–०

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीविक्रमचरित्रं प्रारभ्यते ॥

( पंचदंडकथात्मकं )

छपावी प्रसिद्ध करनार पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

प्रणम्य जगदानंद—दायकान् जिननायकान् ॥ गणेशान् गौतमाद्यांश्च । गुरून् संसारतारकान् ॥ १ ॥ सज्ज्ञानान् शोभनाचारान् । शास्त्रबोधनकारकान् ॥ पंचदंडातपत्रस्य । कथां वक्ष्ये समासतः ॥ २ ॥ युग्मं ॥ तथाहि मालवे देशे—ऽवंत्यां श्रीविक्रमो नृपः ॥ राज्यं करोति सत्वात्मा । कर्मसाक्षीव भूतले ॥ ३ ॥ एकदा विक्रमो राज—पाटिकायां चतुष्पथे ॥ गच्छन् गांछिकवाटस्य । मध्ये सौधोपरिस्थितां ॥ ४ ॥ कांचिन्नारीं सश्रृंगारा—मश्रृणोदिति वादिनीं ॥ देहि रे दासि वेगेन । सन्मार्जनीं गृहांगणे ॥ ५ ॥ युग्मं ॥ तयोक्तं स्वामिनि श्रीमान् । राजा गच्छति विक्रमः ॥ नरेंद्रो नरनाथोऽयं । महीशो महिमानिधिः ॥ ६ ॥ सन्मार्जनीरजस्तस्य । लगिष्यति वरानने ॥ अ-

सत्यत्वमनीतित्व—मरीतित्वं भवेन्मम ॥ ७ ॥ उक्तं च—अजारजः खररज—स्तथा संमार्जनीरजः॥ दीपमंचकयोश्छाया । हंति पुण्यं दिवाकृतं ॥ ८ ॥

दासीयं निर्विवेकेति । लोकोऽयं कथयिष्यति ॥ राजापि कोपसाटोपो । मां हनिष्यति सत्वरं ॥ ९ ॥ उवाच स्वामिनी तस्या । यद्भयं तव वर्तते ॥ तस्य किं पंचदंडात—पत्रं मूर्ध्नि प्रवर्तते ॥ ॥ १० ॥ स्वामिन्युक्तं वचः श्रुत्वा । प्रमार्जंती गृहांगणं ॥ वेत्रिणा वारिता पूर्वं । ताडिता यष्टिमुष्टिभिः ॥ ११ ॥ अन्यैरपि घनैर्लोकै—र्दृष्ट्वा तदसमंजसं ॥ हक्किता हीनजातीया । वचनैः क्रोधमिश्रितैः ॥ १२ ॥ रे मूर्खे दुष्टपापिष्टे । दृष्टिहीनासि किं पुरः ॥ सद्वंशं श्रीमतामीशं । विक्रमार्कं न पश्यसि ॥ १३ ॥ यः सर्वजगदाधारो । यं स्तौतींद्रः स्वपर्षदि ॥ येन राजन्वती भूमि—र्यस्मै मह्यो ह्यलं न कः ॥ १४ ॥ दारिद्र्यं न यतो लोके । यस्य कीर्त्तिर्दिगंतगा ॥ यस्मिन् सर्वे गुणाः संति । तस्यावज्ञां करोषि किं ॥ १५ ॥ सावदत् स्वामिनी मे या । सा देवेशैः प्रगीयते ॥ नृपोऽयं स्वस्य मानस्य । हानिकारी भविष्यति ॥ १६ ॥ इति तस्या वचः श्रुत्वा । साहंकारं नृपानुगैः ॥ दंभहस्तैर्गले धृत्वा । प्रमार्जिन्या हतानने ॥ १७ ॥ गता सा स्वामिनीपार्श्वे । रुदंती विमना मनाक् ॥ कथं

रोदिषि हे वत्से। इति पृष्टा स्फुटं जगौ ॥ १८ ॥ हताहं विक्रमादित्य—जनैरित्युदिते सति ॥ दंभं
समर्पयामास । स्वामिनी सर्वकामदं ॥ १९ ॥ अथ सा स्वामिनीदंभं । गृहीत्वा तत्र रेखया ॥ व-
ज्रभित्तिमिवाकार्षीत । यामुल्लंघ्य न याति कः ॥ २० ॥ हस्त्यश्वपत्तिसामंत—राजन्यैकगणोऽखिलः
॥ चित्रन्यस्त इव स्थाने । तस्थौ रुंधितविग्रहः ॥ २१ ॥ अथ राजा समारुह्य । रणरंगं गजोत्तमं ॥
उल्लंघनार्थं तद्रेखां । वेगादागाज्जयाय सः ॥ २२ ॥ तस्या मंत्रप्रभावेण । सप्रभावोऽपि निष्प्रभः
॥ आसीत् शैलोऽपि वज्रेण । हन्यते तीक्ष्णतेजसा ॥ २३ ॥ फालभ्रष्टो यथा सिंह—स्तालभ्रष्टो य-
था नटः ॥ धनभ्रष्टो धनी धर्म—कर्मभ्रष्टो मुनीश्वरः ॥ २४ ॥ दीपघूकौ निशाभ्रष्टौ । सेकभ्रष्टा व-
नस्पतिः ॥ भ्रष्टा सती सतीत्वेन । शोभां न दधतेतरां ॥ २५ ॥ तथा राजापि विज्ञायः । पश्चादा-
गत्य संसदि ॥ सिंहासनमलंकृत्य । प्रतीहारमथादिशत् ॥ २६ ॥ तां पंचदंभकछत्र—वादिनीं स्त्रीं
समानय ॥ नृपाज्ञया गृहं गत्वा । सोऽवग्वृद्धां गृहस्थितां ॥ २७ ॥ तव गृहे याधिकवादिनी स्त्री ।
तामाह्वायत्येष नृपः सकोपः ॥ या वक्त्यदृष्टं न श्रुतं न भूतं । न भावि भूमौ गगने रसातले ॥
॥२८॥ सा वृद्धा वक्ति मे पुत्री । देवदमनिकाभिधा ॥ या कूटं न युगांतेऽपि । वदति देवपूजिता

॥ २९ ॥ अधुना स्वर्णपल्यंके । सुखनिद्रां गता सती ॥ न चोत्थापयितुं शक्या । प्राणेभ्योऽप्यतिवल्लभा ॥ ३० ॥ अहं समागमिष्यामि । नृपस्योत्तरदायिनी ॥ परैर्नीतां प्रभूतां गां । यो वालयति सोऽर्जुनः ॥ ३१ ॥ प्रतीहारेण साकं सा । सहर्षा राजसद्मनि ॥ सुखासनसमासीना । गता गर्वभरान्विता ॥ ३२ ॥ नृपेणासनदानादि । कृत्वा पृष्ठा मनस्विनी ॥ विद्याबलमदोन्मत्ता । कास्ति नारी गृहे तव ॥ ३३ ॥ बाह्यांगणे यथा सन्मा—र्जनी गर्वेण दापिता ॥ इत्युक्ते सावदद्वृद्धा । भूपंप्रति मितं वचः ॥ ३४ ॥ पुत्रीरत्नं मम स्वामि—न्नधोभूस्वर्गवल्लभं ॥ देवानां दानवानां तु । यस्याः संगस्तु दुर्लभः ॥ ३५ ॥ नृपः प्रोवाच हे भद्रे । पुत्री यास्ति तव गृहे ॥ कुमारिकाथवा व्यूढा । कथय प्रकटं मम ॥ ३६ ॥

सा जगादाथ सानंदा । न व्यूढास्ति नृपोत्तम ॥ स वरो भविता तस्याः । पंचदंडातपत्रभृत् ॥ ३७ ॥ इति तस्या वचः श्रुत्वा । विक्रमार्को महीपतिः ॥ सहर्षोऽसौ जगादैनां । छत्रस्योत्पत्तिवादिनीं ॥ ३८ ॥ छत्रस्य तस्य कः कर्ता । विद्यते दिवि भूतले ॥ सावक् खड्गेन हे राजन् । कोऽपि विद्यां न यच्छति ॥ ३९ ॥ उक्तं च—विनयेन विद्या ग्राह्या । पुष्कलेन धनेन वा ॥ अथवा

विद्यया विद्या । चतुर्थे नास्ति कारणं ॥ ४० ॥ सिंहासणे निसन्नं । सोवागं सेणिज नरवरिंदो ॥ विज्जं मग्गइ पयज । इय साहुजणस्स सुन्नविणाउ ॥ ४१ ॥ प्रणम्य चरणौ तस्या–स्तस्योत्पत्तिं कृतांजलिः ॥ पृष्टवान् शिष्यवद्राजा । सा जगादावनीपतिं ॥ ४२ ॥ तुष्टाहं तव राजेंद्र । पंचादेशान् कुरुष्व मे ॥ यथा भवति ते छत्रं । दुर्लभं पंचदंडजं ॥ ४३ ॥ प्रथमादेशतः पुत्रीं । जित्वा मे त्वं विवाहय ॥ पश्चात शेषांस्तथादेशान् । चतुरः कुरु त्वं नृप ॥ ४४ ॥

नृपांगीकरणं ज्ञात्वा । सापि गत्वा निजौकसि ॥ पुत्रीं स्नातसुशृंगार—सारां वस्त्रैरलंकृतां ॥ ॥ ४५ ॥ चंदनागुरुकर्पूर—मृगनाभिविमिश्रितैः ॥ कुंकुमैश्चार्चितां देह—शोभां कृत्वा महत्तमां ॥ ॥ ४६ ॥ भोजयित्वा सतांबूलां । मुद्रिकामंडितां करे ॥ सुखासनसमासीनां । पंचदासीभिरन्वितां॥ ॥ ४७ ॥ प्राहिणोद्देवदमनीं । मूर्त्तामिव सरस्वतीं ॥ हरंतीं चतुराणां तु । चित्तं नृपतिवेश्मनि ॥ ॥ ४८ ॥ चतुर्भिः कलापकं ॥ नृपतिश्चिंतयामास । तां दृष्ट्वा स्त्रीशिरोमणिं ॥ पौलोमी पार्वती रंभा । लक्ष्मीः कर्पूरमंजरी ॥ ४९ ॥ खेचरी व्यंतरी मेना । किं वा पातालकन्यका ॥ वाणीलीलावती धन्या । कन्यैषा केन निर्मिता ॥ ५० ॥ युग्मं ॥ उक्तं च—तारुण्यद्रुममंजरी किमथवा

कंदर्पसंजीवनी । किं लावण्यनिधानभूमिरथवा संपूर्णचंद्रावली ॥ किं नारी किमु किन्नरी किमथवा विद्याधरी वाथ किं । केयं केन कियच्चिरेण कियता कस्मै कथं निर्मिता ॥ ५१ ॥ नृपराजं समायासी—त्पश्यंती वक्रया दृशा ॥ सुखासनसमासीना । सुमुखी सा मदोद्धुरा ॥ ५२ ॥ नृपः प्रोवाच कल्याणि । कस्मिन् द्यूते प्रगल्भता ॥ विद्यते सुमुखि तेऽत्र । कथयाशु मृगेक्षणे ॥ ५३ ॥ वाक्यं श्रुत्वेति नृपस्य । सावदद्वरवर्णिनी ॥ यानि द्यूतानि वर्त्तंते । मालवेशजगत्त्रये ॥५४॥ तानि सर्वाणि जानामि । सर्वेभ्योऽपि यशस्करं ॥ सारीद्यूतं तु शूराणां । सन्मुखो यत्र मार्यते ॥ ५७ ॥ प्रतियुद्धं गमो यत्र । चरेण गृहपूरणा ॥ साहसेन च जीव्येत । मारितापि हि सारिका ॥ ५८ ॥ गमे नष्टे चरं कुर्या—च्चरे नष्टे तु साहसं ॥ साहसे हारितं दृष्ट्वा । हन्यात्पादेन पट्टकं ॥ ५९ ॥ ततो भूपानुगाः पट्टं । त्रिंशत्सारीसमन्वितं ॥ पाशद्वययुतं तत्र । क्रीडनार्थमथानयन् ॥ ६० ॥ रंतुं तत्र तया सार्धं । प्रवृत्तोऽयं महीपतिः ॥ एकैकं पाशकं लात्वा । मनोवांछितदं ततः ॥ ६१ ॥ अथ भोजनवेलायां । वस्त्रेणाछाद्य पट्टकं ॥ भोजनार्थं गतो गेहे । राजा सापि मनस्विनी ॥ ६२ ॥ द्वितीयेऽह्नि तृतीयेऽह्नि । जातेऽपि सा न जीयते ॥ तया महीपतिरपि । मंत्रसिद्धावुभावपि ॥६३॥

अन्येद्युर्विक्रमश्चित्ते । चिंतयामास दुःखितः ॥ मया रावणवत्कार्य—मनालोच्य त्विदं कृतं ॥ ६४ ॥ उक्तंच—एकं तावदकृत्यमेतदतुलं यन्मैथिलीयं हृता । द्वितीयैकमिदं विमृश्य यदियं तस्मै तदा नार्पिता ॥ तार्तीयिकमिदं तु यत्कपिजनैर्बद्धोऽद्य वारांनिधिः । पश्चात्तापमहो चकार हृदये ह्येवं ततो रावणः ॥ ६५ ॥ सहसा विदधीत न क्रिया—मविवेकः परमापदां पदं ॥ वृणुते हि विमृश्यकारिणं । गुणलुब्धाः स्वयमेव संपदः ॥ ६६ ॥ जो मति पाछल उपजे । सो मति पहेलां होय ॥ काज न विणसे आपणुं । लोक हसे नही कोय ॥ ६७ ॥ न रेखा लंघिता पूर्वं । नेयं जिता मया हहा ॥ मानस्य म्लानिता ह्येषा । त्यातुं मोक्तुं न शक्यते ॥ ६८ ॥ इति चिंतां प्रपन्नस्य । नयनं तस्य दक्षिणं ॥ स्फुरितं कार्यसंसिद्धि—सूचकं तत्क्षणं ध्रुवं ॥ ६९ ॥ तदा स विक्रमादित्यः । साहस्येकशिरोमणिः ॥ सत्त्वमेवावलंब्याथ । चित्ते चिंतितवानिति ॥ ७० ॥ देवेशा दानवा यक्षाः । साहसाद्वशवर्त्तिनः ॥ अतः साहसमेवैकं । सर्वकार्यप्रसाधकं ॥ ७२ ॥ उक्तं च—रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा । निरालंबो मार्गश्चरणरहितः सारथिरपि ॥ रविर्यात्यध्वानं प्रतिदिनमपारस्य नभसः । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ७३ ॥ घटो जन्मस्थानं मृगपरिजनो

र्भूर्जवसनो । वने वासः कंदैरशनमपि कृच्छ्रं कृशवपुः ॥ अगस्त्यर्षिः सोऽपि यदपिबदपारं जलनिधिं । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ७४ ॥ विपक्षः श्रीकंठो जडतनुरमात्यः शशधरो । वसंतः सामंतः सुमगणशरः सैन्यमबला ॥ तथापि त्रैलोक्यं जयति मदनो देहरहितः । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ७५ ॥ विजेतव्या लंका चरणतरणीयो जलनिधि–र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ॥ तथाप्येको रामः सकलमवधीद्राक्षसकुलं । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ७६ ॥ इति निश्चित्य चित्तेऽसौ । दानं दत्वा यथोचितं ॥ राज्यं तृणसमं मत्वा । प्राणत्यागपरोऽभवत् ॥ ७७ ॥ गृहीत्वा शस्त्रिकां तीक्ष्णा—मुपदेवं गतो नृपः ॥ स्वामिन् राज्यकृते पूजां । करोमि शिरसाधुना ॥ ७८ ॥ तुष्टोऽथ देवस्तं प्राह । कार्यं तव भविष्यति ॥ राज्यचिंता ममैवास्ति । वेतालस्तव रक्षकः ॥ ८० ॥ शनैर्यथा गर्भवृद्धिः । फलपाकः शनैः शनैः ॥ टिट्टिभेन निजांडानि । किं न नीतानि सागरात् ॥ ८१ ॥ उक्तंच—अनिर्वेदः श्रियो मूलं । चंचुर्मे लोहसन्निभा ॥ अहोरात्राणि दीर्घाणि । समुद्रः किं करिष्यति ॥ ८२ ॥ सप्रमोदस्ततो राजा । कृतवेषांतरः पुरे ॥ रात्रौ शुभाशुभं ज्ञातु–मस्थात्त्रिकचतुष्पथे ॥ ८३ ॥ वयोवृद्धादितोऽ-

श्रौषी-द्वार्त्तामिति नरेश्वरः ॥ हीनजात्या स्त्रिया सार्धं । राज्ञो वादो न युज्यते ॥ ८४ ॥ हारितं चेत्तदा देशे-ऽप्यपकीर्त्तिर्भविष्यति ॥ जिता तु गांछिकापुत्री । को यशः किं नु पौरुषं ॥ ८५ ॥ उक्तंच—बालसखित्वमकारणहास्यं । स्त्रीषु विवादोऽसज्जनसेवा ॥ गर्द्दभयानमसंस्कृतवाणी । षट्सु नरो लघुतामुपयाति ॥ ८६ ॥ भ्रमन्नेवमसौ राजा । कौचीकांदविकापणे ॥ समागाद् हृदयाक्रांत-चिंताजालसमुत्सुकः ॥ ८७ ॥ तत्र वादं प्रकुर्वत्यः । कतिसख्यो मिथस्तदा ॥ दृष्टा विक्रमभूपेन । हस्ततालयुता इति ॥ ८९ ॥ अस्मद्भवीं देवदमाभिधानां । न जेष्यतेऽयं चतुरोऽपि राजा ॥ भूताः पिशाचाः सुरशाकिनीगणा—स्तया जिता मंत्रबलेन येन ॥ ९० ॥ अथ तासां वचः श्रुत्वा । साहस्यैकशिरोमणिः ॥ नृपतिः करवालं स्वं । करे कृत्वा वने गतः ॥ ९१ ॥ श्रीविक्रमो गंधवहं श्मशानं । प्राप्तस्तदा साहसतश्च भीमं ॥ उत्तालवेतालगणैरलंकृतं । रौद्रं महारौरवश्वभ्रसन्निभं ॥ ॥ ९२ ॥ राक्षसा भीषणा यत्र । भ्रमंति कृत्तिकाकराः ॥ कीकसं कर्त्तयंतिस्म । नकुला नखैर्मुखैः ॥ ९३ ॥ प्रेता भूता करालाश्च । दंतैः कुद्दालसन्निभैः ॥ भापयंति हसंतिस्म । सूर्पोष्ठाः कूपनासिकाः ॥ ९४ ॥ पिशाचाः शाकिनी रौद्रा । डाकिनी च भयंकरा ॥ योगिन्यो व्यंतरा यक्षा । यत्र

खेलंत्यनेकशः ॥ ८५ ॥ उक्तंच—क्वचित्करालकंकाल—कूटानुकृतपर्वतं ॥ क्वाप्यनाथशबोद्भूत—पूतिकीटकुलाकुलं ॥ ८६ ॥ क्वचिदुत्तालवेतालं । क्वचित्फेर्वतिभैरवं ॥ सोऽगात्प्रेतवनं प्रेत—पति-क्रीडावनोपमं ॥ ८७ ॥ अथ तस्मिन्महारौद्रे । श्मशाने तु परिभ्रमन् ॥ सिद्धवटसमीपस्थं । गत्वा देवगृहं स्थितः ॥ ८८ ॥ ममरूणां वटे नादं । शुश्राव पृथिवीपतिः ॥ सावधानमना याव—दद्राक्षीद्भैरवं ततः ॥ ८९ ॥ कृष्णरक्ततनुच्छायं । कर्बुरश्वानवाहनं ॥ ताम्रनेत्रं दीर्घदंतं । सकपालं सनूपुरं ॥ १०० ॥ भूतैः प्रेतैः पिशाचैश्च । रक्षोभिः क्षेत्रपैस्तथा ॥ कात्यायनीभिः संयुक्तं । चामुंडाद्यैरनेकशः ॥ १ ॥ भ्रमंतं नृपतिं दृष्ट्वा । नवीनं पुरुषं तदा ॥ क्षेत्रपेण समागत्य । पृष्टः कस्त्वं नृपो जगौ ॥ २ ॥ क्षेत्रस्वामिन्नहं पांथः । पथश्रांत इहागतः ॥ यूयं किमर्थं भ्रमथ । पृष्टवान् क्षेत्रपं नृपः ॥ ३ ॥ इत्युक्ते क्षेत्रपोऽवादी—दहो चिंतातुरोऽनिशं ॥ भ्रमाम्युपवने भीष्मे । नृपरक्षाकृते त्वहं ॥ ॥ ४ ॥ पांथः प्रोवाच हे स्वामिन् । कथ्यतां तथ्यभाषया ॥ किमस्ति संकटं तस्य । विक्रमार्कस्य नृपतेः ॥ ५ ॥ सोऽवदत् शृणु भूपेंद्रो । महासंकटसागरे ॥ पतितोऽस्ति समं देव—दमन्या द्यूतखेलने ॥ ६ ॥ सा देवदमनी पांथ । मान्या सुरनरासुरैः ॥ तदग्रेऽस्मादृशा भांति । क्षेत्रपाः किं-

करा इव ॥ ७ ॥ सविस्मयो नृपोऽवादी-द्वचनं क्षेत्रपंप्रति ॥ भवेत्तस्य कथं रक्षा । वद क्षेत्रपते द्रुतं ॥ ८ ॥ क्षेत्रपः कथयामास । शृणु त्वं पांथकोत्तम ॥ बुद्ध्या सिध्यति यत्कार्यं । न तत्क्लेशशतैरपि ॥ ९ ॥ उक्तं च—यस्य बुद्धिर्बलं तस्य । निर्बुद्धेस्तु कुतो बलं ॥ वने सिंहो मदोन्मत्तः । शशकेन निपातितः ॥ १० ॥ वरं बुद्धिर्न सा विद्या । बुद्धिरेव गरीयसी ॥ बुद्धिहीना विनश्यंति । यथा ते सिंहकारकाः ॥ ११ ॥ अतोऽहं नृपकार्यार्थी । जंबूद्वीपस्य मध्यगं ॥ गतो महाविदेहाख्यं । द्वात्रिंशद्विजयान्वितं ॥ १२ ॥ विजये पुष्कलावत्यां । नगरी पुंडरीकिणी ॥ तत्र सीमंधरस्वामी । तीर्थकृदस्ति केवली ॥ १३ ॥ चतुःषष्टिभिः संसेव्यो । देवेंद्रैर्भक्तिनिर्भरैः ॥ भासुरैर्नरनाथौघैः । सेव्यमानपदांबुजः ॥ १४ ॥ चतुर्मुखः चतुःशाल—श्चतुर्धाधर्मदेशकः ॥ चतुर्गतिभ्यो भव्यानां । नित्यं योऽस्ति निवारकः ॥ १५ ॥ चतुस्त्रिंशदतिशयैः । प्रातिहार्यैस्तथाष्टभिः ॥ सुरासुरनराणां तु । कोटाकोटीभिरावृतः ॥ १६ ॥ तस्य व्याख्याक्षणे देवा । उपविश्य यथासभं ॥ व्याख्यांते चोत्थिता ह्येते । समकालं ससंभ्रमं ॥ १७ ॥ तदा पृष्टः सुरश्चैको । मया देवानुगो दृढं ॥ क यास्यंति सुरा ह्येते । कथ्यतां तथ्यभाषया ॥ १८ ॥ तेनोक्तं शृणु भो भद्र । गमिष्यंति सुरा इमे मेरौ जिनाल-

ये नूनं । जिनपूजामहोत्सवे ॥ १९ ॥ देवेंद्रा दानवाधीशा । विद्यासिद्धाश्च किन्नराः ॥ सुरांगनाः समेष्यंति । तत्र नृत्यविचक्षणाः ॥ २० ॥ इति तद्वचनं श्रुत्वा । मया पृष्टः सुरोत्तमः ॥ तस्मिन्नवसरे स्वामिन् । जनः कोऽपि समेष्यति ॥ २१ ॥ देवो जगाद भो मुग्ध । शृणु मे वचनं खलु ॥ सर्वलक्षणसंपूर्णा । नारीवृंदशिरोमणिः ॥ २२ ॥ विद्याबलेन गांधर्व—कलाकौशलकोविदा ॥ आयास्यत्यवंत्याश्चात्र । देवदमनिकाभिधा ॥ २३ ॥ युग्मं ॥ श्रुत्वेत्यहमपि तत्र । द्रष्टुं कौतुकमद्भुतं ॥ गतो गगनमार्गेण । रत्नसानौ जिनालये ॥ २४ ॥ पूजां कृत्वा जिनेंद्रस्य । सुरेंद्रा रंगमंडपे ॥ उपविश्य तदा नृत्यं । कारयामासुरादरात् ॥ २५ ॥ उक्तं च—सयं पमज्जणे पुणं । सहस्सं च विलेवणे ॥ सयसाहस्सिया माला । अणंतं गीयवाइए ॥ २६ ॥ विद्याधरी तथा नारी । व्यंतरी सिद्धकन्यका ॥ किन्नरी नागिनी यक्षा । प्रत्येकं चतुरश्च ताः ॥ २७ ॥ द्वात्रिंशत्संख्ययाऽप्येयु—र्नाटकार्थं जिनालये ॥ हाहाप्रहाहाहूहूवादि—गंधर्वास्तुंबरुमुखाः ॥ २८ ॥ विद्युन्माल्यादयस्तूर्य—वादकाः समुपागताः ॥ द्वीपाधिष्टायकाः सर्वे । नागेशाश्चांबुधीश्वराः ॥ २९ ॥ सप्त स्वरास्त्रयो ग्रामा । मूर्छाश्चैकोनविंशतिः ॥ तानाश्चैकोनपंचाशत । श्रुतिद्वात्रिंशतिस्तथा ॥ ३० ॥ श्रीरागमुख्यषड्रागा ।

भाषाः षट्त्रिंशता युताः ॥ अष्टौ तेषां प्रतीहारा । मूर्त्ताः सर्वे समाययुः ॥ ३१ ॥ षट्पंचाशत्कोटितालं । पंचवाद्यसमन्वितं ॥ चक्रगोलकगोस्पंद–भावैर्नाट्यं विनिर्मितं ॥ ३२ ॥ सा देवदमनी तत्र । रंगभावैरनेकशैः ॥ प्रनृत्यंती मया दृष्टा । मूर्त्तेव हंसवाहना ॥ ३३ ॥ विसृज्य नाटकं शक्रो । गतो देवगणैर्वृतः ॥ कथितं तत्र सर्वेषां । भावि नाट्यं दिनाष्टकं ॥ ३४ ॥ अहं श्रीविक्रमस्यैत— द्वदितुं द्राक् समागतः ॥ अग्निको भ्रातृतुल्यो मे । तस्य स्वामी तु विक्रमः ॥ ३५ ॥ भूपोऽवंत्यां गृहे नास्ति । गतः सायं चतुष्पथे ॥ अत्र सिद्धवटे स्थानं । ममास्ति पुरुषोत्तम ॥ ३६ ॥ संबंधोऽयं मयाभाणि । भो पांथ ते पुरोऽखिलः ॥ सज्जनं चरितं तस्याः । कथयिष्यामि भूपतेः ॥ ३७ ॥ कृतांजलिर्नृपः प्राह । क्षेत्रस्वामिन्नहं नृपः ॥ चिंतया ह्यनया देव । भ्रमन्नस्मि त्वितस्ततः ॥ ३८ ॥ चिताचिंताद्वयोर्मध्ये । चिता सर्वसुखप्रदा ॥ चिंता दुःखौघजननी । दीर्घानुस्वारसंयुता ॥ ३९ ॥ स्वामिंस्ते वांछितं दास्ये । वेतालस्य बलिं पुनः ॥ उपायः कथ्यतां देव । येन सा जीयते मया ॥ ४० ॥ उवाच विक्रमं भूपं । क्षेत्रपालः स हर्षितः ॥ त्यज चिंतां नृपाधीश । समग्रां साहसं भज ॥ ४१ ॥ तुष्टोऽहं भूप सर्वाणि । कार्याणि तव संप्रति ॥ विद्धि सिद्धानि मंत्रोऽयं । न कथ्यः

कस्यचित्पुरः ॥ ४२ ॥ अस्या अवसरो भावी । शक्राग्रे पूर्णिमादिने ॥ नृत्यस्य तत्र गंतव्य । त्व-
याभिकसहायतः ॥ ४३ ॥ किंचिच्चिह्नं तदा तस्या—स्त्वया ग्राह्यं सुबुद्धिना ॥ सर्वं स्वरूपं मनसि ।
धार्यमामूलचूलतः ॥ ४४ ॥ क्रीडनावसरे पश्चा—त्तद् ज्ञाप्यमसमंजसं ॥ एवं कृते च सा नूनं ।
चलचित्ता भविष्यति ॥ ४५ ॥ इत्युदित्वा नृपस्याग्रे । क्षेत्रपः स तिरोदधे ॥ नृपोऽप्यगान्निजावासं
। कार्यसिद्धिचिकीर्षया ॥ ४६ ॥ प्रभातसमये रेमे । तया सह नरेश्वरः ॥ भोजनावसरे पट्ट—मा-
त्यैनां व्यसर्जयत ॥ ४७ ॥ स्नात्वा पुष्पादिसामग्रीं । कृत्वा चाष्टप्रकारकां ॥ जिनेंद्रं शुभभावेन ।
पूजयामास भूपतिः ॥ ४८ ॥ उक्तं च—कुसुमाक्खयधूवेहिं । दीवइ वासेहिं सुंदरफलेहिं ॥ पूआ
घयसलिलेहिं । अट्ठविहा तस्स कायव्वा ॥ ४९ ॥ इंद्रस्याराधनं चैव । यक्षिणीनां विशेषतः ॥ स
चकार यथायोग्यं । ततो नैवेद्यपूर्वकं ॥ ५० ॥ जिनस्यारात्रिकं कृत्वा । मांगल्यदीपसंयुतं ॥ मुद्रा-
त्रिकेण सध्यान—लीनोऽभूद्भूमिवासवः ॥ ५१ ॥ धर्मकार्यमिदं कृत्वा । सहायाग्रे महीपतिः ॥ वे-
तालयक्षदेवानां । नैवेद्यकमढौकयत् ॥ ५२ ॥ शतमूटं कणिकान्नं । तावन्मात्रं घृतं गुडं ॥ एला-
लवंगसन्मिश्रं । नालिकेरफलैर्युतं ॥ ५३ ॥ शर्कराद्राक्षसुस्वादं । चारुबीजावलीयुतं ॥ खर्जूरदाडि-

मोन्मिश्रं । जातिफलसमन्वितं ॥ ५४ ॥ तप्ततामकटाहेषु । गोदुग्धैः पूरितेषु च ॥ पाचितं विधि-
ना सूदै-र्नैवेद्यं लपनश्रिकं ॥ ५५ ॥ इति सामग्रीं कृत्वा—ऽहूय वेतालं क्षेत्रपं चायं ॥ पूजां वि-
धाय पुष्पै-र्नैवेद्यं ढौकयामास ॥ ५६ ॥ सजलं फलदीपयुतं । सचंदनं भावभक्तितो नृपतिः ॥ अ-
न्येषां देवानां । कार्यार्थं पूजनं चक्रे ॥ ५७ ॥ संतोष्य क्षेत्रपालं । वेतालं चाग्निकं समारुह्य ॥ द्वी-
पनदीगिरिसागर-मवगाह्य गतो नृपो मेरुं ॥ ५८ ॥ कंदे चैकसहस्रं । योजनसहस्रपंच मेखला प्र-
थमा ॥ तावन्मात्रा चान्या । द्वाषष्टिसहस्रपरिमाणा ॥ ५९ ॥ षट्त्रिंशच्च सहस्रा । पुनस्तृतीयापि
मेखला मेरोः ॥ लक्षोपरि च चत्वा—रिंशत्पृथुला चूलिका ज्ञेया ॥ ७४ ॥ भुवि भद्रशालमुपवनं
। नंदनसौमनसे मेखलायुगले ॥ चूलायां पांडुकवन-मुपरितनजिनगृहसमेतं ॥ ७५ ॥ सप्तदश
प्रासादाः । शाश्वतऋषभजिनमुख्ययुग्बिंबाः ॥ श्रीवारिषेणचंद्रा-नननामा वर्द्धमानजिनाः ॥ ७६ ॥
श्रीविक्रमस्तत्र जिनालयेषु । कृत्वा तु पूजां महतीं जिनानां ॥ श्रीमंडपे यावदुपैति धन्य—स्ता-
वत्सुरौघः समुपागतो द्राक् ॥ ७७ ॥ जिनं नमस्कृत्य यथोचितेषु । शक्रेषु सिंहासनमाश्रितेषु ॥
स्तुतिं प्रकुर्वन् हरिणा स दृष्टो । नृपः सुरूपः शुभभावयुक्तः ॥ ७८ ॥ न कथं दीणुद्धरणं । न कथं

साहम्मियाण वच्छ्लं ॥ हिययंमि वीअराउ । न धारिउ हारिउ जम्मो ॥ ७९ ॥ अन्नन्नदेसजाया । अन्नन्नाहारवड्ढियसरीरा ॥ जिणसासणं पवन्ना । सव्वे ते बांधवा भणिया ॥ ८० ॥ ज्ञात्वा साधर्मिकं स्वं सुरपतिरवदन्यस्य सिंहासनार्द्धे । देवेंद्रस्य प्रभावान्नृपकुलतिलकोऽदृश्यतां प्राप सोऽयं ॥ भो राजन् मानवेंद्रस्त्वमसि गुरुगुणैर्वंदनीयोऽवनीशै—र्द्वात्रिंशद्भेदबद्धं वरचतुरतया नाट्यमालोकयस्व ॥ ८१ ॥ सौधर्मेंद्रो ह्यवादीत्सकलसुरगणानास्यतामासनेषु । आकार्यंतामनेके परिकरसहिता गीतनाट्यप्रवीणाः ॥ गंधर्वाः सिद्धयक्षा युवतिजनयुताः किन्नराः किल्बिषाश्च । संगीतार्थं समेताः सुरपतिवचसा हर्षसंपूर्णचित्ताः ॥ ८२ ॥ प्रणम्य शक्रं हरिणैगमेषी । कृतांजलिर्विज्ञपयांचकार ॥ वृंदाष्टकं वै नटीनां समेत—मिहास्ति कस्यावसरः प्रदीयते ॥ ८३ ॥ सुरांगना किन्नरनारीसिद्धा । विद्याधरी व्यंतरी राजकन्यका ॥ यक्षांगना नागकुमारिका च । नाट्यप्रवीणा सकला विशेषतः ॥ ॥ ८४ ॥ एवंविधं तस्य वचो निशम्य । शक्रो मुदं चेतसि संदधानः ॥ ज्ञानादभिप्रायमथोऽवगम्य । नृपस्य तत्संमददं वचोऽवक् ॥ ८५ ॥ या मानिनी देवदमाभिधाना । संगीतभावे बहुसावधाना ॥ नारीगुणैर्नायकतां दधाना । सा नृत्यकार्ये भवतु प्रधाना ॥ ८६ ॥ श्रीविक्रमेणोक्तमथाग्निकस्य ।

ग्राह्यं त्वया नूपुरमत्र पादात् ॥ अस्याश्च माला खलु पुष्पकाणां । तांबूलबीटं च तथैव ग्राह्यं ॥८७॥ देवानां दमनी विवेश चतुरा नृत्यार्थमंतःसभां । मोहंती मदगौरवेण वशिनां लोकत्रये तस्थुषां ॥ का चैषा वररूपयौवनवती विद्यागुणैर्भारती । सृष्टा नैव मया हरेण हरिणा जातेति चिंता विधेः ॥ ८८ ॥ लयैर्मानैस्तालैर्गमकनिवहैर्हस्तकरणैः । परिपादन्यासैर्मृदुतरशरीरेयमबला ॥ घनैरानद्धा-द्यैस्ततविततवाजित्रनिवहै—र्महानृत्यं चक्रे सुरपतिवरानंदजनकं ॥८९॥ ततस्तस्या दत्वा प्रचुरतरव-स्त्रादिनिकरं । सुरेंद्रो नत्वा श्रीजिनपतिवरान् स्थानमगमत् ॥ नृपादेशं कृत्वा सकलमपि लात्वा बलबलात् । स वेतालस्तूर्णं पुरपरिसरेभूपमनयत् ॥ ९० ॥ एवं कृत्वा नृपतिस्तु स्वगेहे । सुप्तो यावत्तावदागत्य साथ ॥ पादांगुष्टं मोटयित्वा ह्यवोचत् । स्वामिन्नेवं सुप्यते भाग्यवद्भिः ॥ ९१ ॥ यतः—अलसस्य कुतो विद्या । अविद्यस्य कथं धनं ॥ अधनस्य कुतो मित्र—ममित्रस्य कुतो बलं ॥ ९४ ॥ अबलस्य कुतो मान—ममानस्य कुतो यशः ॥ यशोरहितदेहस्य । जीवनान्मरणं वरं ॥ ९५ ॥ हसन्नथ स्माह नृपो लघुत्वं । स याति योऽन्यस्य करोति भंगं ॥ निद्राक्षणस्याधमतां प्र-पन्नो । ज्ञात्वापीति किं नु कृतं त्वयैतत् ॥ ९६ ॥ उक्तं च—निद्राभंगं कथाछेदं । परछिद्रप्रकाश-

नं ॥ शक्रोऽपि लघुतां याति । कुर्वन् कर्म तथाविधं ॥ ९७ ॥ सा प्राह भूपं न जिता त्वयाहं । क-
थं मुधा गर्वभरं विधत्से ॥ रेखापि मद्दासीकृता न चालिता । निश्चिंतता टिट्टिभवत्तवास्ति ॥ ९८ ॥
उत्क्षिप्य टिट्टिभः पादौ । शेतेंबरधरणोत्सुकः ॥ स्वचित्तकल्पितो गर्वः । कस्य नाम न विद्यते ॥
॥ ९९ ॥ घरत्तीतर घरणीत्तणी । कुट्टण को न समत्थ ॥ समरांगण जम्मसंमुहा । विरला वाहे ह-
त्थ ॥ २०० ॥ श्रीविक्रमार्को नृपतिर्बभाषे । गर्वान्वितां देवदमाभिधानां ॥ का त्वं ममाग्रे ह्यबला
हि योषि—देखर्वगर्वाख्यगिरींद्ररूढा ॥ १ ॥ मया मुधा कौतुकतोऽद्ययाव—त्त्वं जिता नीचकु-
लप्रसूता ॥ गतं हृतं वस्तु निजं न वेत्ति । गर्वं कथं सा वहते विमूढा ॥ २ ॥ श्रुत्वा वार्तामिति
नृपमुखात्सा सशंका बभूव । प्रच्छन्नं स्वं रजनिजनितं वेत्ति किं विक्रमार्कः ॥ गतं पुष्पं शीर्षात्करतल-
गतं बीटकमपि । ध्रुवं जानात्येषश्चरणपतितं नूपुरयुग्मं ॥ ४ ॥ चिंताभरव्याकुलमानसा सा । नृपेण
सह क्रीडयितुं प्रवृत्ता ॥ पट्टे नृपेणामुचि पादनूपुरं । दृष्ट्वा च सा तत्स्खलनं जगाम ॥ ५ ॥ सुगं-
धपूगीफलपत्रपूर्णं । यद्बीटकं शक्रकरप्रदत्तं ॥ तद्दर्शितं भूपतिना सरंगं । निरीक्ष्य साभूद्विमना
विशेषात् ॥ ६ ॥ चिंतार्णवे भूरिनिमग्नमानसा । सा रं स्खलिता खलु सारिपाशे ॥ तस्मिन् क्षणे

देवतरुप्रसूत—मदर्शयत्पुष्पमथो नृपेंद्रः ॥ ७ ॥ नार्युत्तमा देवदमाभिधाना । दृष्ट्वा त्रयं तत्र सुरालये गतं ॥ स्वं गुप्तकार्यं प्रकटं विदित्वा । सर्वांगशैथिल्यमवाप साथ ॥ ८ ॥ जित्वा तामन्यचित्तां नरपतिरवदद्रात्रिवृत्तं समग्रं । साप्याख्यद्भूयमेनं सुरपतिरचितं देव जानीथ कस्मात् ॥ सोऽवक् तत्रागतोऽहं गगनगतिबलात् शक्रसिंहासनार्द्धे । स्थानं कृत्वा ह्यलदयस्तव चरितमिदं दृष्टवान् सिद्धविद्यः ॥ ९ ॥ प्रणम्य पादौ नृपकंठपीठे । मालां न्यधाद्देवतरुप्रसूतां ॥ सा दुंदुभिवादनस्वर्णपुष्पवृष्ट्यादि देवैश्च कृतं सहर्षैः ॥ १० ॥ नीचादप्युत्तमां विद्या—ममेध्यादपि कांचनं ॥ विषादप्यमृतं ग्राह्यं । स्त्रीरत्नं दुष्कुलादपि ॥ ११ ॥ विचार्येति महीपाल—स्तामपि परिणीतवान् ॥ नदद्भिःस्वानमांगल्य—महोत्सवपुरस्सरं ॥ १२ ॥ विवाहमांगल्यपरंपराभि—र्हृष्टैः समैः पौरजनैः समेतः ॥ वधूयुतो नृपवरः स्वगेहं । जगाम सत्कंकणबद्धहस्तः ॥ १३ ॥ श्रीविक्रमार्कस्य नरेश्वरस्य । श्रीपंचदंडातपछत्रबंधे ॥ पद्ये महाश्चर्यकरे यथोक्ते । प्रस्ताव एष प्रथमो बभूव ॥ १४ ॥

॥ अथ द्वितीयः प्रस्तावः प्रारभ्यते ॥

प्रभातसमये राजा । गत्वा श्वशुरवेश्मनि ॥ प्रणम्य श्वशुरं श्वश्रूं । बभाषे विनयान्वितः ॥१॥

वद विद्यावतां ज्येष्टे । कार्यमेकं कृतं मया ॥ द्वितीयं त्वन्मुखात् श्रुत्वा । करोमि सुमुखेऽधुना ॥
॥ २ ॥ इति श्रीविक्रमार्कस्य । श्रुत्वा वचनमुत्तमं ॥ हर्षोत्कर्षप्रपूरेण । पूरिता सोत्तरं ददौ ॥ ३ ॥
सावदत्कुंकणे देशे । बह्वाश्चर्यसमाकुले ॥ नंदनोद्यानवद्भांति । वृक्षा यत्र सदाफलाः ॥ ४ ॥ सु-
भगाः शोभनाकारा । धनाढ्या धनदोपमाः ॥ संति लोकाः सदा शोक-मुक्ता मुक्ताफलामलाः ॥
॥ ५ ॥ तत्रोपवनभूमिश्च । नंदनवनसन्निभा ॥ सज्जना न मदोन्मत्ता । मदोन्मत्ता मतंगजाः ॥
॥ ६ ॥ सदारंभाः सदारंभ—वर्जिता वर्जितैनसः ॥ यत्र लोका विभांतिस्म । सुषमाकालजा इव ॥
॥ ७ ॥ महाजना महोत्साहा । महच्छाया वनेऽर्जुनाः ॥ अर्जुना इव भांत्यत्र । पुरुषाः पौरुषान्वि-
ताः ॥ ८ ॥ सोपारकपुरं तत्र । नाकिनगरसन्निभं ॥ विद्यते विबुधा लोका । वसंति यत्र श्रीयुताः
॥ ९ ॥ तस्मिन् विप्रोऽस्ति विद्यावान् । सोमशर्माभिधानतः ॥ सरलः शोभनाकारः । षट्कर्मनिय-
माश्रितः ॥ १० ॥ उमादेवी प्रिया तस्य । पतिभक्ता प्रियंवदा ॥ या सदा प्रमदावृंदे—वंदितास्ति
प्रियंकरा ॥ ११ ॥ द्वात्रिंशल्लक्षणोपेता—श्छात्रा स्त्रिषष्टिसंख्यकाः ॥ तयोर्गृहे पठंतिस्म । शुभशास्त्रा-
ण्यनेकशः ॥ १२ ॥ स पाठयति पुण्येन । विप्रो विद्यावतां वरः ॥ अप्रमत्ततया शास्त्रं । सर्वान् हि-

जकुमारकान् ॥ १३ ॥ द्विजप्रियाप्युमादेवी । सर्वेषां भोजनादिकं ॥ प्रयच्छति महाभक्त्या । यथेच्छं
निजपुत्रवत ॥ १४ ॥ गच्छ तस्य गृहे शीघ्रं । रूपं कृत्वा द्विजन्मनः ॥ लेखशालिकसामग्री । सर्वा
ज्ञेया प्रयत्नतः ॥ १५ ॥ पठितव्यं त्वया वत्स । स्वेच्छयैकाग्रचेतसा ॥ आमूलचूलतो ग्राह्यं । तस्या
वृत्तं त्वया पुनः ॥ १६ ॥ इति मे कथितं कार्यं । द्वितीयं कुरु सत्वरं ॥ येन ते पंचदंभात—पत्रं
मूर्ध्नि स्फुटं भवेत् ॥ १७ ॥ प्रतिश्रुत्य तथा भूपो । योजितांजलिसंपुटः ॥ अवददनघे सर्वं । करि-
ष्ये कार्यमद्भुतं ॥ १८ ॥ श्वश्रूं नत्वा हृदि ध्यात्वा । कार्यं बुद्धिमतां वरः ॥ आगत्य सदनं रूप-
परावर्त्तमथाकरोत् ॥ १९ ॥ वेतालस्कंधमारुह्य । कुंकणे स गतः क्रमात् ॥ यस्मिन् पदे पदे देशे
। वाप्यारामसरांसि च ॥ २० ॥ सुगंधशालिक्षेत्राणि । यत्रेक्षुपूगिवाटिकाः ॥ कदलीफलनारिंग—
वृक्षाः संति मनोहराः ॥ २१ ॥ युग्मं ॥ तालतमालहिंताल—चंपकाशोकपादपाः ॥ जातिलवंगक-
कोल—खर्जुरीबीजपूरकाः ॥ २२ ॥ दाडिमीयूथिकाचूत—शाल्मलीशालिपादपाः ॥ रोहिणीमोहि-
नीरक्तां—जनीप्रभृतिवल्लिकाः ॥ २३ ॥ हिंगिभेद्रुमीब्राह्मी—धातकीबदरीगणाः ॥ रक्तस्नुहीपांडु-
पत्री—श्वेतार्कतगरादयः ॥ २४ ॥ नागवल्लीमहामेदा । मेदमालावनीचराः ॥ पंचांगीश्वेतगुंजाश्च ।

वद विद्यावतां ज्येष्टे । कार्यमेकं कृतं मया ॥ द्वितीयं त्वन्मुखात् श्रुत्वा । करोमि सुमुखेऽधुना ॥
॥ २ ॥ इति श्रीविक्रमार्कस्य । श्रुत्वा वचनमुत्तमं ॥ हर्षोत्कर्षप्रपूरेण । पूरिता सोत्तरं ददौ ॥ ३ ॥
सावदत्कुंकणे देशे । बह्वाश्चर्यसमाकुले ॥ नंदनोद्यानवद्भांति । वृक्षा यत्र सदाफलाः ॥ ४ ॥ सु-
भगाः शोभनाकारा । धनाढ्या धनदोपमाः ॥ संति लोकाः सदा शोक-मुक्ता मुक्ताफलामलाः ॥
॥ ५ ॥ तत्रोपवनभूमिश्च । नंदनवनसन्निभा ॥ सज्जना न मदोन्मत्ता । मदोन्मत्ता मतंगजाः ॥
॥ ६ ॥ सदारंभाः सदारंभ—वर्जिता वर्जितैनसः ॥ यत्र लोका विभांतिस्म । सुषमाकालजा इव ॥
॥ ७ ॥ महाजना महोत्साहा । महच्छाया वनेऽर्जुनाः ॥ अर्जुना इव भांत्यत्र । पुरुषाः पौरुषान्वि-
ताः ॥ ८ ॥ सोपारकपुरं तत्र । नाकिनगरसन्निभं ॥ विद्यते विबुधा लोका । वसंति यत्र श्रीयुताः
॥ ९ ॥ तस्मिन् विप्रोऽस्ति विद्यावान् । सोमशर्माभिधानतः ॥ सरलः शोभनाकारः । षट्कर्मनिय-
माश्रितः ॥ १० ॥ भमादेवी प्रिया तस्य । पतिभक्ता प्रियंवदा ॥ या सदा प्रमदावृंदै—र्वंदितास्ति
प्रियंकरा ॥ ११ ॥ द्वात्रिंशल्लक्षणोपेता—श्छात्रास्त्रिषष्टिसंख्यकाः ॥ तयोर्गृहे पठंतिस्म । शुभशास्त्रा-
ण्यनेकशः ॥ १२ ॥ स पाठयति पुण्येन । विप्रो विद्यावतां वरः ॥ अप्रमत्ततया शास्त्रं । सर्वान् छि-

जकुमारकान् ॥ १३ ॥ द्विजप्रियाप्युमादेवी । सर्वेषां भोजनादिकं ॥ प्रयछति महाभक्त्या । यथेछं
निजपुत्रवत ॥ १४ ॥ गछ तस्य गृहे शीघ्रं । रूपं कृत्वा द्विजन्मनः ॥ लेखशालिकसामग्री । सर्वा
ज्ञेया प्रयत्नतः ॥ १५ ॥ पठितव्यं त्वया वत्स । स्वेछयैकाग्रचेतसा ॥ आमूलचूलतो ग्राह्यं । तस्या
वृत्तं त्वया पुनः ॥ १६ ॥ इति मे कथितं कार्यं । द्वितीयं कुरु सत्वरं ॥ येन ते पंचदंभात—पत्रं
मूर्ध्नि स्फुटं भवेत् ॥ १७ ॥ प्रतिश्रुत्य तथा भूपो । योजितांजलिसंपुटः ॥ अवददनघे सर्वं । करि-
ष्ये कार्यमद्भुतं ॥ १८ ॥ श्वश्रूं नत्वा हृदि ध्यात्वा । कार्यं बुद्धिमतां वरः ॥ आगत्य सदनं रूप-
परावर्त्तमथाकरोत् ॥ १९ ॥ वेतालस्कंधमारुह्य । कुंकणे स गतः क्रमात् ॥ यस्मिन् पदे पदे देशे
। वाप्यारामसरांसि च ॥ २० ॥ सुगंधशालिक्षेत्राणि । यत्रेक्षुपूगिवाटिकाः ॥ कदलीफलनारिंग—
वृक्षाः संति मनोहराः ॥ २१ ॥ युग्मं ॥ तालतमालहिंताल—चंपकाशोकपादपाः ॥ जातिलवंगक-
कोल-खर्जुरीबीजपूरकाः ॥ २२ ॥ दाडिमीयूथिकाचूत—शाल्मलीशालिपादपाः ॥ रोहिणीमोहि-
नीरक्तां—जनीप्रभृतिवल्लिकाः ॥ २३ ॥ हिलिंगीभेद्धुमीब्राह्मी-धातकीबदरीगणाः ॥ रक्तस्नुहीपांडु-
पत्री—श्वेतार्कतगरादयः ॥ २४ ॥ नागवल्लीमहामेदा । मेदमालावनीचराः ॥ पंचांगीश्वेतगुंजाश्च ।

व्याघ्रसिंहीविषापहाः ॥ २५ ॥ श्रीकांडशल्लशाल्मूर—नालिकेरीमहाफलाः ॥ अधोपुष्पीनागकंबा—
तूवरीमुषकर्णिकाः ॥ २६ ॥ हारहूराशंखपुष्पी—श्वेताश्वगिरिकर्णिकाः ॥ राजादनीकाकवल्ली—नागफ-
ण्याद्यनेकशः ॥ २७ ॥ कुलकं ॥ दिव्यगृहाण्यसंख्यानि । नदीद्रहशतानि सः ॥ पश्यन् सागरमर्या-
दां । प्राप सोपारकं पुरं ॥ २८ ॥ यत्रारघट्टखाट्कारा । मोदयंतेतरां मनः ॥ पुरलक्ष्मीभुजोत्क्षिप्त—
कंकणालिस्वना इव ॥ २९ ॥ यत्र श्रीजिनचैत्येषु । ध्वजछायाश्चलाचलाः ॥ यछंति पंकजव्याजा
त् । श्रियं पंकजवासिनीं ॥ ३० ॥ यत्र प्रासादशिखर—स्थितैर्लोकैर्विलोक्यते ॥ समग्रं तत्पुरं रम्यं
। राजराजिनिषेवितं ॥ ३१ ॥ लक्ष्मीलतायाः कलमालवालं । पृथ्वीपुरंध्र्यास्तिलकं ललाटे ॥ सुरां-
गनायाः किल केलिसद्म । निश्छद्मलोकैर्भृतमाविभाति ॥ ३२ ॥ हेलाविनिर्जितसुरेंद्रपुरानुकारं ।
सत्श्रीगृहं वसुमतीतिलकायमानं ॥ रत्नादिवस्तुनिकरैः कमनीयगेहं । सोपारकं पुरवरं जनसंकुलं
तत् ॥ ३३ ॥ लंकालकादिनगराणि बहूनि जित्वा । प्रासादलग्नकलशाग्रध्वजछलेन ॥ नृत्यं करोति
नितरां वरगीतवाद्य—निर्घोषरंगसुभगं यशसाभिरामं ॥ ३४ ॥ युग्मं ॥ सोपारके पुरे रम्ये । तत्रार्ह-
द्गृहभासुरे ॥ चतुरैर्नागरैर्युक्ते । भक्तैर्देवगुरून्प्रति ॥ ३५ ॥ सद्धर्माचारनिरता । विरताः पापक-

र्मणः ॥ यतयो भांति रागादि—वैरिवारनिवारकाः ॥ ३६ ॥ पुरे तत्र विवेकाढ्या । धनाढ्या धार्मिका घनं ॥ धनं वपंति क्षेत्रेषु । सप्तसंख्येषु नित्यशः ॥ ३७ ॥ माणिक्यहेमनिकरै—र्भृतं यस्य चतुष्पथं ॥ दृष्ट्वा जलनिधिं मन्ये । केवलं सलिलैर्भृतं ॥ ३८ ॥ अद्राक्षीद्विक्रमो भूपः । पुरं तन्नाकसन्निभं ॥ हृष्टचित्तो विवेशाथ । तत्रासौ साहसैकधीः ॥ ३९ ॥ ददर्श मेरुशृंगाग्र—सन्निभं जिनमंदिरं ॥ चलध्ध्वजगणव्याजा—दाव्हयद्भव्यकानिव ॥ ४० ॥ द्विसप्ततिजिनागारैः । परितः परिवेष्टितं ॥ दुर्जनश्रेणिसंत्यक्तं । युक्तं भव्यजनोत्करैः ॥ ४१ ॥ मंडपैर्महिमागारैः । सारैः सप्तभिरावृतं ॥ नानावाद्यादिनिर्घोष—पूरैर्बधिरितांबरं ॥ ४२ ॥ चतुर्द्वारं चतुर्दिक्षु—तोरणैः स्वर्णरत्नजैः ॥ सशोभं सुरनगाकारं । सश्रीकं स्वर्विमानवत् ॥ ४३ ॥ कुलकं ॥ विवेश मंदिरे भूपो । भूरिभावभरान्वितः ॥ आशातना दश त्यक्त्वा । कृत्वा नैषेधिकीत्रयं ॥ ४४ ॥ उक्तंच—तंबोल १ पान २ भोयण ३ । वाहण ४ थीभोग ५ सूअण ६ निठवणं ७ ॥ मुत्तुच्चारं ८ जूअं १० । वज्जे जिणमंदिरं संतो ॥ ॥ ४५ ॥ कश्चित्तत्र समायातः । श्रीसर्वज्ञजिनार्चकः ॥ कुसुमाक्षतनैवेद्य—धूपसामग्रीकान्वितः ॥ ॥ ४६ ॥ नृपालस्तंप्रति प्राह । कस्त्वं पुण्यवतां वर ॥ इति पृष्टेऽवदत्तथ्यं । स जिनेश्वरपूजकः ॥

॥ ४७ ॥ अहं देपालनामा भो । जिनानां भक्तिकारकः ॥ भवभोगपरित्यक्त । आजन्मतोऽस्मि शीलवान् ॥ ४८ ॥ त्रिकालं श्रीजिनेंद्रस्य । भक्त्या करोमि पूजनं ॥ सचित्ताहारवर्जं च । सदैकासनभोजनं ॥ ४९ ॥ संध्याद्वये प्रतिक्रांतिं । चतुःपर्वसु पौषधं ॥ विदधामि वरं ध्यानं । पिंडस्थादिचतुर्विधं ॥ ५० ॥ इत्युक्ते भूपतिः प्रोचे । तं योग्यं श्रावकोत्तमं ॥ युक्त्या युगादिनाथस्य । मे कारापय पूजनं ॥ ५१ ॥ भूपयोग्यं ततस्तेन । धौतं धूपेन वासितं ॥ अभ्यंगं सर्वतः शुक्लं । वस्त्रयुग्मं समर्पितं ॥ ५२ ॥ परिधाय ततो राजा । योजितांजलिसंपुटः ॥ त्रिधा प्रदक्षिणां दत्वा । त्रिःप्रणामं तथाकरोत् ॥ ५३ ॥ श्रीनाभिनंदनं देवं । नत्वा चानंदसंश्रितः ॥ निर्मलैर्जलधारौघैः । स्नपयामास भूपतिः ॥ ५४ ॥ काश्मीरकुंकुमोन्मिश्रै–र्घनसारसमन्वितैः ॥ चंदनैश्चर्चयामास । जीवंतस्वामिनं जिनं ॥ ५५ ॥ सौवर्णाभरणैर्भव्यै—रंगं सोऽथ जगद्गुरोः ॥ भूषयामास भूमिभृ–द्भवभूरिभयापहं ॥ ५६ ॥ चंपकाशोकजातीनां । पुष्पैर्मालां महोत्तमां ॥ कृत्वा युगादिनाथस्य । कंठपीठे न्यधान्नृपः ॥ ५७ ॥ अन्यैः सुगंधपुष्पाद्यै—र्नवांगेषु जिनोत्तमं ॥ पूजयामास पुण्यात्मा । पापपंकनिवारकं ॥ ५८ ॥ समग्रामंगपूजां च । कृत्वा कारुण्यसागरः ॥ अग्रपूजां ततोऽकार्षी–न्नैवेद्यफल-

धूपनैः ॥ ५९ ॥ आरात्रिकं चकारोच्चै-र्मंगलदीपसंयुतं ॥ इत्यग्रपूजनं नृपो । विधाथ भावमासदत्
॥ ६० ॥ शुभासने समासीनो । मस्तकन्यस्तहस्तकः ॥ एकचित्ततयावस्था—त्रिकं भावेन भावयन्
॥ ६१ ॥ त्रिककुत्रीक्षणं त्यक्त्वा । त्रिधा भूमिप्रमार्जनं ॥ वर्णमुद्रात्रिकं कृत्वा । प्रणिधानं त्रिधाक-
रोत् ॥ ६२ ॥ इति दशत्रिकैर्नृपः । पूजयित्वा जिनेश्वरं ॥ महाहर्षप्रपूरेण । सुभगत्वममन्यत ॥
॥ ६३ ॥ जिनं जितभयं चित्ते । निवेश्य परया मुदा ॥ एकाग्रमनसा चक्रे । स स्तुतिं भववारिणीं
॥ ६४ ॥ अहो मे सफलं जन्म । सर्वे पूर्णा मनोरथाः ॥ लब्धा सर्वार्थसंपत्ति—र्दृष्टो यत् त्रिजग-
द्विभुः ॥ ६५ ॥ जय त्रिभुवनाधीश । जय संसारतारक ॥ भवांबुधिनिमज्जंतं । मामुत्तारय तारय
॥ ६६ ॥ धन्यः स मासो दिवसोऽपि धन्यः । स एव सापि घटिका हि धन्या ॥ यत्र प्रभुर्भाग्यव-
ता जनेन । दृष्टो जगत्स्वामी कृपानिवासः ॥ ६७ ॥ इति स्तुतिं जिनेंद्रस्य । कृत्वा भावपुरस्सरं ॥
सार्धं तेनार्चकेनासौ । प्रासादाद्बहिरागमत् ॥ ६८ ॥ स्थित्वा तत्र क्षणं श्राद्धं । तं जिनेश्वरपूजकं
॥ सोऽपृच्छच्च गृहं तस्य । सोमशर्मद्विजन्मनः ॥ ६९ ॥ तेनोक्तं सोमशर्माणो । बहवोऽत्र द्विजाः
खलु ॥ शतानि पंच लभ्यंते । खल्वाटाश्चैकनेत्रकाः ॥ ७० ॥ सहस्रशो द्विनेत्राश्च । विना चिह्नं

किमुच्यते ॥ नृपः प्रोवाच भो भद्र । शृणु चिह्नं वदामि ते ॥ ७१ ॥ यस्य पत्नी ह्युमादेवी । ध-
र्मिष्ठो यः प्रवर्त्तते ॥ षट्कर्मनिरतो नित्यं । पापकर्मपराङ्मुखः ॥ ७२ ॥ अथ देवार्चकः प्राह । ज्ञा-
तं तस्य गृहं मया ॥ यस्य गृहे पठंतिस्म । त्रिषष्टिलेखशालिकाः ॥ ७३ ॥ स पाठयति पुण्यार्थं ।
शास्त्रं सर्वान् स्वशक्तितः ॥ पोषते पुत्रवत् छात्रान् । तत्पत्नी भोजनादिना ॥ ७४ ॥ गेहं चतुष्पथे
स्पष्टं । लेखशालासमन्वितं ॥ समीपे वटवृक्षस्य । तस्यास्ति सोमशर्मणः ॥ ७५ ॥ गच्छ वत्स सुखं
तत्र । पठनं ते भविष्यति ॥ अहं तु जिनबिंबानां । करिष्याम्यत्र पूजनं ॥ ७६ ॥ अथ श्रीविक्र-
मादित्यः । श्रुत्वा तद्वचनं वरं ॥ चकार बालरूपं च । स्वकीयं नववार्षिकं ॥ ७७ ॥ पट्टिकां लेखि-
नीं सैष । खटिकाभाजनं करे ॥ गृहीत्वा छात्रसामग्री—सहितश्चलितः पथि ॥ ७८ ॥ गतो वेगेन
तत्स्थानं । पंडितं प्रणनाम च ॥ अपूर्वोऽयमिति ज्ञात्वा । कस्त्वं पृष्टो द्विजेन सः ॥ ७९ ॥ कुतो
वा त्वं समायातः । किं कार्यमिह विद्यते ॥ बालः प्रोवाच सुग्रामात् । पठनार्थमिहागतः ॥ ८० ॥
युष्माकं सकलं कार्यं । करिष्ये विनयान्वितः ॥ भोजनं तु करिष्यामि । सद्विप्राणां गृहेष्वहं ॥
॥ ८१ ॥ इत्युक्ते पंडितोऽवादीत् । वत्स यत्कथितं त्वया ॥ गत्वा गृहांतस्ते मातु—रग्रे सर्वं निवे-

दय ॥ ८२ ॥ कुटुंबसम्मतेनैव । यत्कार्यं क्रियते शुभं ॥ कालेन भवति छात्र । परिणामे हि सुंदरं
॥ ८३ ॥ कुटुंबकलहे न स्यात । कदा कार्यं महद्गुणं ॥ अचिरेणैव कालेन । भवेत्तद्दुःखदायकं
॥ ८४ ॥ इति तद्वचनं श्रुत्वा । भूपालस्त्वमृतोपमं ॥ गत्वा वेगेन गेहांत । उमादेवीं ननाम सः
॥ ८५ ॥ मातर्मूर्खोऽस्मि विद्यार्थी । गृहे तव समागतः ॥ तथा कुरु यथा विद्वान् । भवामि भूतले
भृशं ॥ ८६ ॥ इत्युक्ते सावदद्विप्री । पतिभक्ता प्रियंवदा ॥ सत्यमुक्तं त्वया वत्स । न विद्या लक्ष-
णैर्विना ॥ ८७ ॥ द्वात्रिंशल्लक्षणोपेतो । यो भवेद्विप्रदारकः ॥ तं पाठयामि पुण्येन । ददामि भो-
जनं गृहे ॥ ८८ ॥ आगच्छ त्वं समीपं मे । यथा पश्यामि वत्सक ॥ लक्षणान्यंगजातानि । वर्ण-
रेखांकितानि ते ॥ ८९ ॥ गत्वा तदंतिकं भूप—श्छात्ररूपः प्रसन्नवाक् ॥ हस्तौ रेखांकितौ तस्या
। दर्शयामास साहसात् ॥ ९० ॥ तयासौ वीक्षितः स्वर्ण—वर्णः श्यामलकुंतलः ॥ विशालभाल-
फलक—स्तैलकुंपिकनाशिकः ॥ ९१ ॥ पूर्णेंदुवदनः शुक्ति—कर्णः प्रसृतलोचनः ॥ कंबुग्रीवो दृढस्कं-
धः । पृथुवक्षा महाभुजः ॥ ९२ ॥ कमलोदारसौंदर्य—पाणिपादतलछविः ॥ सुरेंद्र इव रूपाढ्यो ।
महातेजोयुतस्तथा ॥ ९३ ॥ सिंहमध्यो हयकटिः । पीनोरुर्गुप्तजानुकः ॥ एणीजंघश्च कमठ—पृ-

ष्टपीठः समक्रमः ॥ ९४ ॥ उक्तं च—इह भवति सप्तरक्तः । षडुन्नतः पंचसूक्ष्मदीर्घश्च ॥ त्रिविपुललघुगंभीरो । द्वात्रिंशल्लक्षणः स पुमान् ॥ ९५ ॥ पाणिपादतले रक्ते । नेत्रांतानि नखानि च ॥ तालुजिह्वाधरौष्ठानि । सप्तरक्तः प्रशस्यते ॥ ९६ ॥ वक्षः कुक्षिश्च घ्राणं च । स्कंधौ शीर्षं ललाटकं ॥ षडुन्नतं भवेद्यस्य । स भवेद्भाग्यवान्नरः ॥ ९७ ॥ सूक्ष्माण्यंगुलिपर्वाणि । दंतकेशनखास्त्वचः ॥ पंच सूक्ष्माणि यस्य स्युः । स भोगी भूतले भवेत् ॥ ९८ ॥ बाहू च लोचने चैव । जानुनाशे तथैव च ॥ स्तनयोरंतरं चैव । पंच दीर्घं प्रशस्यते ॥ ९९ ॥ ग्रीवा लिंगं च जंघा च । ज्ञेयमेतल्लघु त्रयं ॥ स्वरः सत्त्वं च नाभिश्च । त्रिगंभीरं प्रशस्यते ॥ ३०० ॥ उरुः शिरो ललाटं च । त्रिविस्तीर्णं च सौख्यदं ॥ एतैश्च लक्षणैर्युक्तं । रूपं सा वीक्ष्य हर्षिता ॥ १ ॥ नावाबंधो वज्रबंध । ऊर्ध्वरेखांकुशा यवाः ॥ शंखशक्तिचंद्रलेखा । यूपस्तूपौ च वापिका ॥ २ ॥ छत्रं ध्वजः पताका च । तोरणं सिंहवारिधी ॥ काकपदं गृहादर्शं । मत्स्यमकरकूर्मकाः ॥ ३ ॥ पद्मचामरश्रीवत्स–रथकुंभकमंडलाः ॥ मालास्वस्तिकवृक्षाश्च । ज्ञेयानि लक्षणानि हि ॥ ४ ॥ मुख्यं शिरः शरीरे हि । तत्रापि मुखमुत्तमं ॥ तत्रापि नाशिका श्रेष्ठा । ततोऽपि लोचने वरे ॥ ५ ॥ वर्णाद्वरतरः स्नेहः । स्नेहाद्वरतरः

स्वरः ॥ स्वराद्वरतरं सत्त्वं । सर्वं सत्वे प्रतिष्टितं ॥ ६ ॥ न श्रीस्त्यजति रक्ताक्षं । नार्थः कनकपिंगलं ॥ दीर्घबाहुं तथा शौर्यं । न मांसोपचितं सुखं ॥ ७ ॥ उरोविशालो धनधान्यभोगी । शिरोविशालो नृपपुंगवश्च ॥ कटिविशालो बहुपुत्रदारः । पादे विशालः सततं सुखी च ॥ ८ ॥ चक्षुःस्नेहेन सौभाग्यं । दंतस्नेहेन भोजनं ॥ त्वचास्नेहेन शय्यावान् । पादस्नेहेन वाहनं ॥ ९ ॥ अकर्मकठिनौ पाणी । पादौ यानेऽपि कोमलौ ॥ पाणिपादाविति यस्य । तस्य राज्यं भवेद् ध्रुवं ॥१०॥ औदार्यधैर्यगांभीर्य—विवेकविनयादिकाः ॥ सर्वे गुणा ददृशिरे । तस्मिन् गात्रे सुशोभने ॥११॥ सर्वलक्षणसंपूर्णं । ज्ञात्वा तं छात्रमुत्तमं ॥ उत्संगे स्वे निधायाशु । विप्रपत्नी ह्यभाषत ॥ १२ ॥ भो भद्र पठ निश्चिंतो । निजमंदिरवन्मुदा ॥ भोज्याच्छादनशय्यादि—दानं दास्यामि ते सदा ॥१३॥ अभ्यंतरगुणाः पंच । वर्त्तते तव विग्रहे ॥ बाह्याः पंच मया दत्ता । भविष्यंति शुभावहाः ॥ १४ ॥ उक्तं च—आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः । पंचांतराः पठनवृद्धिकरा भवंति ॥ आचार्यपुस्तकनिवाससहायभोज्या । बाह्याश्च पंच पठनं परिवर्द्धयंति ॥ १५ ॥ त्रिषष्टिर्लेखशालायां । पठंतः संति बालकाः ॥ चतुःषष्टितमस्त्वं मे । सर्वेभ्योऽपि महत्तरः ॥ १६ ॥ गुरौ दशम्यां पुष्पर्क्षे । चरे लग्ने

चरांशके ॥ पंडिताग्रे समागत्य । विद्यारंभं चकार सः ॥ १७ ॥ पंडितः पाठयामास । तं छात्रं नि
जपुत्रवत् ॥ पंडितं विक्रमार्कोऽपि । ध्यायyamास तातवत् ॥ १८ ॥ पुत्राधिकतया तस्य । भोजना-
च्छादनादिकं ॥ पादप्रक्षालनं स्नानं । विप्रपत्नी करोति च ॥ १९ ॥ गंधोदकैर्वरं स्नानं । सुतैलाभ्यं-
गसंयुतं ॥ लभते शालिदाल्याज्य—शाकैर्मिश्रं स भोजनं ॥ २० ॥ भमादेवी तु सर्वेषां । वस्त्रा-
लंकरणादिकं ॥ प्रयच्छति मुदा भक्त्या । सुखखाद्याद्यनेकधा ॥ २१ ॥ अन्यदाचिंतयच्चित्ते । विक्र-
मार्को महीपतिः ॥ एतौ द्वौ धर्मसंयुक्तौ । षट्कर्मनिरतौ सदा ॥ २२ ॥ विप्रो विद्यावतां श्रेष्ठो । ध-
र्मिष्ठो लोभवर्जितः ॥ भमादेवी विशेषेण । सती शांता पतिव्रता ॥ २३ ॥ किंचिदपि ह्यसौ दानं
। गात्रेभ्यो ह्यक्षतादिकं ॥ पर्वांतरविवाहेषु । न गृह्णाति द्विजोत्तमः ॥ २४ ॥ रूप्यसिद्धिश्च तत्पार्श्वे
। स्वर्णसिद्धिरपि ध्रुवं ॥ पितृभ्रातृपितृव्याणा—मंतर्धानं न दृश्यते ॥ २५ ॥ न करोत्येष देशेषु ।
व्यवसायं महर्द्धिकं ॥ राज्ञो दानं न चादत्ते । ग्रामादिस्वर्णरत्नजं ॥ २६ ॥ गृहव्ययो घनतरो । द्र-
व्यागतिस्तु नेक्ष्यते ॥ महाश्चर्यमतश्चित्ते । जायते मे वचोऽतिगं ॥ २७ ॥ न ज्ञायतेऽप्यथ स्त्रीणां
। चरित्रं मुग्धया दृशा ॥ भवंति हृदये दुष्टा । धूर्ता मिष्टा मुखे हि ताः ॥ २८ ॥ यतः—मुखं प-

झदलाकारं । वाचश्चंदनशीतलाः ॥ हृदयं कर्त्तरीतुल्यं । त्रिविधं धूर्त्तलक्षणं ॥ २९ ॥ रविचरियं ताराचरियं । इंदुचरियं च राहुचरियं च ॥ जाणंति बुद्धिमंता । स्त्रीचरियं न जाणंति ॥ ३० ॥ इति शास्त्रक्रमं ज्ञात्वा । वेत्तुं तच्चरितं च सः ॥ सुप्तोऽप्यसुप्तवद्राजा । स्थितः कपटनिद्रया ॥ ३१ ॥ पंडिताय ततः शय्यां । सज्जीकृत्य द्विजप्रिया ॥ सर्वेषां छात्रकाणां तु । शय्याप्रावरणं ददौ ॥ ३२ ॥ सर्वेषु तेषु सुप्तेषु । मंदंमंदं च सोत्थिता ॥ निद्रां विलोक्य सर्वेषां । छात्राणां सरलात्मनां ॥ ३९ ॥ विप्रपत्नी विचारज्ञा । स्नानं कृत्वा तरोस्तले ॥ निर्मलैर्वसनैश्चांगं । भूषयामास धूपितैः ॥ ४० ॥ पूजयामास सा दंडं । चंदनैः कुसुमैर्वरैः ॥ पंचांगेन नमस्कारं । चकार चतुराशया ॥ ४१ ॥ दृष्ट्वा तच्चरितं रात्रि—संजातं जनतेश्वरः ॥ ससंभ्रममथोत्थाय । तत्तरुकोटरेऽविशत् ॥४२॥ नैवेद्यं ढौकयित्वा सा । दंडस्याग्रे ततोऽवदत् ॥ हे सिद्धदंड मे कार्यं । कुरु त्वं कामितप्रदं ॥४३॥ इत्युक्त्वा तं करे कृत्वा । वेश्मद्वारं पिधाय च ॥ सागता प्रांगणे बाह्ये । पूज्यदंडसमन्विता ॥४४॥ रेखात्रयं च दंडेन । कृत्वा सा बहिरागता ॥ दंडप्रभावतश्छात्रा । जाताः सुप्ता मृता इव ॥ ४५ ॥ गृहरक्षां ततः कृत्वा । सुसिद्धं मंत्रमुत्तमं ॥ ध्यात्वारूढा च सा वृक्षं । निजकार्यचिकीर्षया ॥ ४६ ॥

दंडेनास्फालयामास । सा तदा तं तरुं मुदा ॥ गच्छगच्छेप्सितं स्थान-मिति मुखाज्जजल्प च ॥४७॥
श्रुत्वेति विक्रमो नृपः । साहसैकशिरोमणिः ॥ प्रच्छन्नं स्थितवान् वृक्ष-कोटरे दृढतां श्रयन् ॥४८॥
अथ मंत्रप्रभावेण । दंडस्यास्फालनेन च ॥ प्रवृत्तो गगने गंतुं । द्रुमो देवविमानवत् ॥ ४९ ॥
गिरिगह्वरमुल्लंघ्य । नदीतीराण्यनेकशः ॥ गत्वा कुत्र समुत्तस्य । स्थितः स्वर्णाद्रिसन्निधौ ॥ ५० ॥
तत्रास्ति नगरी स्वर्ण-संचयाख्यातिविश्रुता ॥ द्रुमाद् द्रुतं समुत्तीर्य । पुरीमध्यं विवेश सा ॥५१॥
राजाप्यदृष्टरूपः सन् । गतस्तच्छायया सह ॥ शोभां सौधाट्टगां पश्यन् । व्यंतरामरनिर्मितां ॥ ५२ ॥
चंडशालां चतुर्द्वारां । सा प्रवेशं चकार च ॥ तत्र संति महावीरा । द्वारे द्वारे त्रयोदश ॥ ५३ ॥
क्षणं तैः स्थापिता तत्र । क्षेत्रपैः सा मनस्विनी ॥ उमादेवि स्थानकेऽस्मि-न्नागता किं घनैर्दिनैः ॥
॥ ५४ ॥ इति तैर्यामिकैः पृष्टा । कदा पूजां करिष्यसि ॥ अस्माकं सकलानां त्वं । चारुभोज्या-
दिकैर्घनैः ॥ ५५ ॥ उमादेव्यप्युवाचैवं । स्थिरतां भजत क्षणं ॥ दास्ये कृष्णचतुर्दश्यां । युष्माकं
वांछिताशनं ॥ ५६ ॥ इत्युक्त्वा सा गता मध्ये । यत्र त्रिपुरभैरवः ॥ त्रिषष्टियोगिनीयुक्तः । सत्सिं-
हासनसंस्थितः ॥ ५७ ॥ योगिन्यश्चैता—

कामाख्या १ त्रिपुरा २ चंडी ३ । चांमाली ४ दीरी ५ दारिका ६ ॥ माया ७ मायाविनी ८ रौद्री ९ । चामुंमा १० कर्णमोटिका ११ ॥ ५८ ॥ कामी १२ कामा १३ महाकाली १४ । विकाली १५ वरदा १६ वरा १७ ॥ तारणी १८ तोतला १९ तारा २० । तुमारी २१ भूतडामरी २२ ॥ ५९॥ कौमारी २३ कुब्जिका २४ सुंमा २५ । ञंमा २६ वापी २७ चरेश्वरी २८ ॥ तारंगी २९ त्रासचाडी च ३० । तसा ३१ त्रस्तासुरा ३२ स्वरी ३३ ॥ ६० ॥ ब्राह्मका ३५ वज्रका ३६ चापि । अर्बुदा ३७ गिरिगह्वरी ३८ ॥ गांधारी ३९ कंदिको ४० द्वाली ४१ । गत्रामी ४२ कलसेविका ४३ ॥ ६१ ॥ महामाया ४४ सैरिन्रा च ४५ । सर्वास्त्रा ४६ सर्वकामदा ४७ ॥ आशापुरी ४८ सिरिपूटा ४९ । सिद्धसिकोत्तरी ५० शिवा ५१ ॥ ६२ ॥ शंखिनी ५२ हिंगुला ५३ ज्वाला ५४ । महाज्वाला ५५ महेश्वरी ५६ ॥ काकिनी ५७ सैंधवी ५८ सोमा ५९ । भूता ६० च भूतभैरवी ६१ ॥ ६३ ॥ भूतकेशी ६२ विवस्त्रा च ६३ । वाराही ६४ वरदायका ६५ । पंचषष्टिभिः कोटीभिः । संयुताः सकलाश्च ताः ॥ ६४ ॥ प्रत्येकं पूजयामास । योजितांजलिसंपुटा ॥ ऊर्ध्वीभूय स्तुतिं चक्रे । सैकचित्ता द्विजप्रिया ॥ ६५ ॥ उक्तं ताभिर्बहुदिनै-रागता त्वं कथं शुभे ॥ जगाद भैरवस्तत्रा—वसरज्ञो

विनोदिवाक् ॥ ६६ ॥ कथमायाऽर्विर्तेयं । सिद्धदंडप्रभावतः ॥ भवतीभिरपि मुग्धाभि—र्दत्तोऽस्यै पूर्वमेष किं ॥ ६७ ॥ सिद्धे कार्ये कथं पूजां । करोत्येषाधुनाथ वः ॥ व्याधिमुक्तो भवेत्प्राणी । वैद्योऽपि कुपितो ध्रुवं ॥ ६८ ॥ उक्तं च—आतुरत्वे पिता वैद्यः । स्वस्थीभूते च बांधवः ॥ नीरोगत्वे तथा जाते । रिपोरप्यधिकीभवेत् ॥ ६९ ॥ तयोक्तं मा वद स्वामि—न्निदं वाक्यं विशारद ॥ अद्य यावन्न संपूर्णा—ऽभवत्सामग्रिका मम ॥ ७० ॥ जाता साद्यैव संपूर्णा । तेनात्राहमथागता ॥ निमंत्रणमसामग्र्यां । भवतां क्रियते कथं ॥ ७१ ॥ द्वात्रिंशल्लक्षणोपेता—श्चतुःषष्टिश्च बालकाः ॥ मिलिताः संति मद्गृहे । पंडितेन सहाधुना ॥ ७२ ॥ अथ पूजाविधिं ब्रूत । दुर्घटं यच्च तत्कृतं ॥ फलपुष्पाक्षतादीनि । बहूनि संति मद्गृहे ॥ ७३ ॥ ताभिरुक्तं शृणु श्रेष्ठ । कृष्णचतुर्दशीदिने ॥ रवौ पुष्पे महामातृ—मंडलं कुरु सत्वरं ॥ ७४ ॥ चतुःशालं चतुर्द्वारं । रेखादुर्गसमन्वितं ॥ कपिशीर्षैर्युक्तं । चतुर्दिक्षु तु शोभनैः ॥ ७५ ॥ ह्रींकारं मूर्ध्नि संस्थाप्य । क्रोंकारं पार्श्वयोर्द्वयोः ॥ ओंकारं पादयोः कृत्वा । ततो रेखात्रयं कुरु ॥ ७६ ॥ मद्दांतं मंडलं मध्ये । कृत्वा षट्कोणसंयुतं ॥ पूर्वादिदिक्क्रमेणैवं । कुरु कोणांश्च षोडश ॥ ७७ ॥ चंदनाक्षतकर्पूर—कुंकुमैर्जलमिश्रितैः ॥ कुरु त्वं शु-

भावेन । पूजनं तत्र मंडले ॥ ७८ ॥ विधाय विधिना पूजां । भोगाभरणसंयुतां ॥ चतुःषष्टिषु कोणेषु । षट्कोणसहितेषु च ॥ ७९ ॥ तन्मध्ये पंक्तिं न्यस्य । दिक्षु षोडश षोडश ॥ छात्रान् संस्थाप्य संपूज्य । भोजनं परिवेषय ॥ ८० ॥ दंडः स्थाप्यस्त्वया तेषा–मग्रे सिंदुरकुंकुमैः ॥ कुसुमादिभिरभ्यर्च्य । तिलकाक्षतपूर्वकं ॥ ८१ ॥ कृत्वा प्रणामं दंडस्य । पंचांगं भावपूर्वकं ॥ पूर्वदत्तो महामंत्रः । स्मरणीयः क्षणं तदा ॥ ८२ ॥ अस्माकं कल्पनीयास्ते । प्रत्येकं जलदानतः ॥ अंगीकृतं नमस्कृत्य । तया तथेति तद्वचः ॥ ८३ ॥ अथ सा तरुमारुह्य । स्वगृहद्वारमागता ॥ तथैवागत्य राजापि । सुप्तः प्रथमतः पुनः ॥ ८४ ॥ रेखात्रयमपाकृत्य । गृहमध्ये प्रविश्य सा ॥ उपाध्यायं जजागार । सछात्रमरुणोदये ॥ ८५ ॥ उपाध्यायः प्रभाते च । गतो देहस्य चिंतया ॥ लात्वा कमंडलुं तस्य । पृष्टे श्रीविक्रमोऽप्यगात् ॥ ८६ ॥ दंतधावनवेलायां । बालकेन द्विजोत्तमः ॥ पृष्टस्त्वं कानि शास्त्राणि । तात जानासि चार्थतः ॥ ८७ ॥ इति पृष्टे नृपेणाथ । पंडितो बुद्धिसागरः ॥ अववद्वदनाद्वाणीं । घनगर्जविजित्वरीं ॥ ८८ ॥ जानामि तर्कलक्षण–वैद्यकसिद्धांतवेदमुख्यानि ॥ स्मृतिपुराणछंदो—ऽलंकारादीन्यप्यनेकानि ॥ ८९ ॥ बालेनोक्तं परं भावि । स्वकीयं वेत्सि वा न

वा ॥ तेनोक्तं न हि जानामि । जानासि यदि त्वं वद ॥ ९० ॥ यतः—अश्वप्लुतं माधवगर्जितं च । स्त्रीणां चरित्रं भवितव्यतां च ॥ अवर्षणं चापि सुवर्षणं च । देवो न जानाति कुतो मनुष्यः ॥ ९१ ॥ सोऽवदत्ते सच्छात्रस्य । स्वामिन् पश्यामि संकटं ॥ भीतो वृद्धोऽवदत्तर्हि । यद्भाव्यं तद्भविष्यति ॥ ९२ ॥ यतः—भवितव्यं भवत्येव । नालिकेरफलांबुवत् ॥ गंतव्यमाशु यात्येव । गजभुक्तकपित्थवत् ॥ ९३ ॥ सुखस्य दुःखस्य न कोऽपि दाता । परो ददातीति कुबुद्धिरेषा ॥ पुराकृतं कर्म यदेव भुज्यते । तदेव लोकेन न तत्र संशयः ॥ ९४ ॥ अवश्यंभाविभावानां । प्रतीकारो भवेद्यदि ॥ तदा दुःखैर्न लिप्येत । नलरामयुधिष्ठिराः ॥ ९५ ॥ विक्रमश्चिंतयामास । असौ मुग्धोऽस्ति बान्धवः ॥ उपायः क्रियते येन । सर्वे जीवंति बालकाः ॥ ९६ ॥ परप्राणैर्निजप्राणान् । सर्वे रक्षंति जंतवः ॥ निजप्राणैः परप्राणान् । यो रक्षत्युत्तमश्च सः ॥ ९७ ॥ अथ विक्रमभूपालः । पालिताखिलविष्टपः ॥ सर्वेषामुपकारार्थ—मिदं वचनमब्रवीत् ॥ ९८ ॥ तस्मै पत्न्या निशावृत्तं । कथितं निखिलं ततः ॥ आकाशगमनं क्षेत्र—देवीसंतोषणादिकं ॥ ९९ ॥ इत्युक्ते सभयोऽवादी—द्विप्रो गरुडभाषया ॥ तद्भयाच्च कथं गता—स्माभिः संप्रति बुध्यते ॥ ४०० ॥ उक्तं च—लवणस-

मो नत्थि रसो । विन्नाणसमो बंधवो नत्थि ॥ मरणसमं नत्थि भयं । खुहासमा वेयणा नत्थि ॥१॥ भूपः प्रोवाच भो स्वामिन् । शृणु मे वचनं हितं ॥ कृतेन येन कार्येण । सर्वेषां जीवितं भवेत् ॥ ॥ २ ॥ अहं करोमि यत्कार्यं । भवद्भिश्छात्रसंयुतैः ॥ तत्कर्त्तव्यमवश्यं च । छात्राः सर्वेऽपि शिक्षि-ताः ॥ ३ ॥ प्रतिपन्नं भयत्रांते—स्तैः सर्वैर्नृपभाषितं ॥ जीवितार्थं न कुर्वंति । किंकिमापदि मानवाः ॥ ४ ॥ एतस्याश्चरितं सर्वं । न कथ्यं कस्यचित्पुरः ॥ यतो दुष्टा ह्यसौ नूनं । विषवल्लीव जंगमा ॥ ५ ॥ इत्यसौ गुप्तमंत्रं च । कृत्वोपाध्यायसंयुतः ॥ सहितश्छात्रवृंदैश्च । स्थितस्तत्र समाधितः ॥ ६ ॥ उमादेवीं ततो नत्वा । सोऽध्ययनायोपाविशत् ॥ अथ सायमुपाध्याय—मुपागत्येति सावदत् ॥ ७ ॥ यदा भूस्त्वं ग्रहग्रस्तो । मर्त्तुकामस्तदा मया ॥ चतुःषष्टिक्षणैः पूजा । मानितास्ति वरप्रदा ॥ ८ ॥ यूयं मद्भाग्ययोगेन । महादेव्याः प्रसादतः ॥ निरामयाश्च संजाता । हर्षो जातो ममापि च ॥ ९ ॥ यदादिशसि मे स्वामिन् । रात्रिजागरपूर्वकं ॥ करोमि पूजां रक्षार्थं । भवतां स्वजनैः सह ॥ १० ॥ प्रतिपन्नं च तेनापि । तदा विप्रेण भीरुणा ॥ अथ सा कारयामास । सामग्रीं सकलां गृहे ॥ ११ ॥ गोधूममाषतैलाज्य—यवमुद्गाश्च तंदुलाः ॥ इत्यादिसप्तधान्यानि । शर्करा-

मरिचानि च ॥ १२ ॥ जीरकं सुरभिखंड—दधिदुग्धगुडं मधु ॥ पंचामृतस्य पात्राणि । सूत्रं कौ-
सुम्भरंजितं ॥ १३ ॥ कर्पूरचंदने धूपः । कस्तूरी केशरं वरं ॥ गुग्गुलं दर्भदूर्वादि । सूत्रं कौमारी-
कर्त्तितं ॥ १४ ॥ पुष्पाणि चंपकाशोक—जातिसेवंतिकानि च ॥ जासूदकर्णवीरादि—बिल्वपत्रा-
ण्यनेकशः ॥ १५ ॥ सदशश्वेतवस्त्राणि । सिंदूरं सा समानयत् ॥ जलचूर्णादिकं सर्वं । तयाऽऽ प्रगु-
णीकृतं ॥ १६ ॥ मातॄणां मंडलं कृत्वा । स्वसखीजनमेलकं ॥ रात्रिजागरणं गोत्र—देवीसंतर्पणं
तथा ॥ १७ ॥ मध्याह्ने सा चतुःषष्टि–बालकानपि सद्विजान् ॥ निवेश्य विष्टरे सर्वान् । दिक्षु दिक्षु
च षोडश ॥ १८ ॥ संस्थाप्य मंडलस्यांत–रुपाध्यायं निजं पतिं ॥ चांदनैस्तिलकैः पुष्पैः । पूजया-
मास भक्तितः ॥ १९ ॥ तेषामग्रे च प्रत्येकं । स्थालानापूर्य पूपकैः ॥ अन्यान्यपि च भोज्यानि ।
ढौकयामास सा शुभा ॥ २० ॥ नवग्रहाणां नैवेद्यं । दिक्पालानां विशेषतः ॥ पूजां च क्षेत्रदेवी-
ना—मकार्षीद्भक्तिनिर्भरः ॥ २१ ॥ छात्राणां मूर्ध्नि सिंदूरं । रक्तपुष्पाण्यनेकशः ॥ क्षिप्त्वा शिवनि-
कापट्टे । न्यधाद्दंम् च सिद्धिदं ॥ २२ ॥ पुष्पचंदननैवेद्यैः । पूजां कृत्वा महत्तमां ॥ विधिना सि-
द्धदंभस्य । प्रणामं तु चकार सा ॥ २३ ॥ देवीनां क्षेत्रपालानां । नामोच्चारणपूर्वकं ॥ ध्यानलीना

दाणं तस्थौ । मस्तकन्यस्तहस्तका ॥ २४ ॥ जलेन यावत्संकल्पं । ददाति हृष्टमानसा ॥ तावद्दर्भं
गृहीत्वा त-द्ययौ वेगेन नृपतिः ॥ २५ ॥ सच्छात्रः पंडितो नष्टो । नृपपृष्ठे भयाकुलः ॥ सावदत्तिष्ठ
तिष्ठेति । पृष्ठलग्ना कियत्पदं ॥ २६ ॥ सर्वे पश्चादपश्यंतो । भयभ्रांताः क्षुधातुराः ॥ जलधौ भाटकं
कृत्वा । नावमारुरुहुर्वरां ॥ २७ ॥ उक्तं च—खलानां कंटकानां च । द्विविधैव प्रतिक्रिया ॥ उप-
लैर्मुखभंगो वा । दूरतो वा पलायनं ॥ २८ ॥ गतो द्वीपं कटाहाख्यं । वेगेन पोतवाहकः ॥ नृपे-
णाभरणं दत्वा । विसृष्टो बहुमूल्यदं ॥ २९ ॥ यदा ते द्वीपमध्यं तु । प्रविष्टा ददृशुस्तदा ॥ पुरं भृ-
तं धनैर्धान्यै—र्द्विचतुष्पदवर्जितं ॥ ३० ॥ सच्छात्रः पंडितो ह्युक्तो । नृपेणाथ सुबुद्धिना ॥ अधुना-
स्मिन् वने यूय—मलक्षीभूय तिष्ठत ॥ ३१ ॥ अहं यावत्पुरीमध्ये । गत्वा ज्ञात्वा यथातथं ॥ आग-
च्छामि द्रुतं ताव—त्प्रतीक्षध्वं समुद्यताः ॥ ३२ ॥ इत्युक्त्वाथ प्रविष्टोऽयं । नृपः साहससेवधिः ॥ पुरी-
चतुष्पथं पौर—गणैस्त्यक्तं धनैर्भृतं ॥ ३३ ॥ पश्यन् सुवर्णमाणिक्य—मणिमौक्तिकसंचयान् ॥ हा-
रार्धहारकेयूर—मुद्रिकाप्रभृतीनपि ॥ ३४ ॥ हारांस्तारांस्तरलकिरणान् कोटिशः शंखशुक्तीन् । भा-
स्वत्कांतीन्मरकतमणीन् पद्मरागाननेकान् ॥ दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भंगान् । सं-

लक्ष्यंते सलिलनिधयस्तोयमात्रावशेषाः ॥ ३५ ॥ पुष्पाणि चंपकादीनि । केतकादीन्यनेकधा ॥ क्वचिच्चासौ लवंगैला—ऽऽक्षादीन्यप्यलोकयत् ॥ ३६ ॥ चंदनागुरुकर्पूरं । पश्यन् सौगंधिकापणे ॥ ग्रतोऽयं चचालाथ । कस्तूरीकेसरादिकान् ॥ ३७ ॥ एवं च चतुरशीति—हट्टश्रेणिषु दत्तदृग् ॥ राजा विलोकयांचक्रे । धनधान्यक्रयाणकान् ॥ ३८ ॥ देवगृहेषु देवाना—मग्रे मुक्तान्मनोहरान् ॥ स्वर्णरूप्यमयान् कुंभान् । गंधोदकभृतान् घनान् ॥ ४० ॥ प्रतिगृहं तथैवासौ । नानाभोजनपूरितान् ॥ स्थालान् वीक्ष्य जनैस्त्यक्ता—नसौ विस्मयतां गतः ॥ ४१ ॥ युग्मं ॥ तथैव गृहमध्येऽसौ । वस्त्रश्रेणिं मनोहरां ॥ ललनानरसंत्यक्तां । दृष्ट्वा विस्मयमाप सः ॥ ४२ ॥ धर्मशालासु सर्वत्र । धर्मोपकरणान्यसौ ॥ पुस्तकासनपात्रादी—न्यपि शून्यान्यलोकयत् ॥ ४३ ॥ क्रमाद्गतो नृपावासं । प्रतोलीतोरणान्वितं ॥ गवाक्षजालिकामंच—प्रपंचं सप्तभूमिकं ॥ ४४ ॥ स्वर्णकुंभत्रयोपेतां । सिंहांकां गजसंयुतां ॥ विचित्रशालभंजीभि—रन्वितां स्वर्विमानवत् ॥ ४५ ॥ वाजित्रघटिकागार—घटीयंत्रसमन्वितां ॥ प्रतोलीं पौरलोकैश्च । त्यक्तां दृष्ट्वा स विस्मितः ॥ ४६ ॥ युग्मं ॥ धृत्वाथ साहसं राजा । सद्मामंतर्गतो यदा ॥ तत्र सिंहासनछत्र—चामरादीन्यपश्यत ॥ ४७ ॥ तत्र भद्रासनान्येष । कांचना-

नि च भूमिपः ॥ शून्यान्यालोक्य सर्वत्र । चित्ते विस्मयमाप्तवान् ॥ ४८ ॥ प्रकारैः सप्तदशभि-स्तदा निष्पादितानि च ॥ भोज्यानि भोज्यशालायां । दृष्टवान् नृपतिर्नयी ॥४९॥ एवं विलोकयन्नेष । शून्यं सकलमंदिरं ॥ साहसी स क्रमेणागा-दुपरितनभूमिकां ॥ ५० ॥ तत्र कांचनपल्यंके । शय्योपरिस्थितां वरां ॥ सोऽपश्यत्सर्वशृंगार-संयुतां च बिमालिकां ॥ ५१ ॥ लुठंतीं गौरवर्णां तां । श्वेतांजनयुताक्षिणीं ॥ प्रक्षरदश्रुधाराभिः । सशोकां स निरैक्षत ॥ ५२ ॥ जगाद साहसं धृत्वा । नृपः का त्वं सुलोचने ॥ कथं रुदसि किं दुःखं । वद तेऽस्ति ममाग्रतः ॥ ५३ ॥ इत्युक्ता विक्रमार्केण । सा न शक्नोति जल्पितुं ॥ स्वपादसंज्ञया प्राह । प्रकटं पृथिवीपतेः ॥ ५४ ॥ गृहाण कुंपिकामेनां । कृष्णांजनयुतामथ ॥ तेनांजय त्वं मे नेत्रे । नृपेनापि तथा कृतं ॥ ५५ ॥ सा दिव्यरूपसंयुक्ता । जाता कन्या मनस्विनी ॥ किमेतदिति भूपेन । पृष्टोवाच तदा त्वियं ॥५६॥ आस्यतामासनेऽमुष्मिन् । साहसैकशिरोमणे ॥ यथाहं सकलां वार्तां । वदाम्यामूलचूलतः ॥ ५७ ॥ पुरं कनकनामेदं । राजा कनकशेखरः ॥ राज्ञी कनकवत्यस्ति । तस्य वामांगहारिणी ॥ ५८ ॥ कियत्यपि गते काले । मनोरथशतैरहं ॥ सुमुहूर्त्ते तया जाता । सुता पुत्रत्रयोपरि ॥ ५९ ॥ दिने

दिने वर्धमाना । पित्रोरानंददायिनी ॥ संपूर्णचंद्रवत्सौम्या । निष्कलंकाऽभवं परं ॥ ६० ॥ उद्यापनेन मे नाम । दत्तं कनकमालिका ॥ शिक्षित्वा सर्वशास्त्राणि । पाठिताहं प्रमोदतः ॥ ६१ ॥ अतिरूपाथ जाता च । यौवनेन क्रमादहं ॥ तदा चिंतातुरो जातो । वरस्यार्थे पिता मम ॥ ६२ ॥ जातेति शोको महतीति चिंता । कस्य प्रदेयेति महान् वितर्कः ॥ दत्ता सुखं प्राप्स्यति वा न वेति । कन्यापितृत्वं खलु नाम कष्टं ॥ ६३ ॥ कुलं सुशीलतायुक्तं । विद्यां वित्तं वपुर्वयः ॥ दृष्ट्वा वराय पितृभ्यां । कन्यका हि प्रदीयते ॥ ६४ ॥ पिताथाचिंतयन्मे तु । गुणाः सर्वे न संतु वा ॥ परं साहसिनो देया । वरराजस्य कन्यका ॥ ६५ ॥ यतः—उद्यमं साहसं धैर्यं । बलं बुद्धिः पराक्रमं ॥ षडेते यस्य विद्यंते । तस्माद्देवोऽपि शंकते ॥ ६६ ॥ इति निश्चित्य नृपालो । नानादेशागतान् जनान् ॥ अपृच्छत्कन्यकायास्तु । वरार्थं स पृथक्पृथक् ॥ ६७ ॥ सभालोका नृपस्याग्रे । वचस्तथ्यमथोऽवदन् ॥ स्वामिन् श्रीमालवेशोऽस्ति । साहसैकगुणावधिः ॥ ६८ ॥ नृपोऽवग् विक्रमः क्वैष । सार्वभौमो नरेश्वरः ॥ क्व चाहं कूपसंतुल्य—कटाहद्वीपदर्दुरः ॥ ६९ ॥ परं केनाप्युपायेन । प्रेष्यते तत्र कन्यका ॥ स्वयंवरा वृणोत्येनं । गुणज्ञा गुणसागरं ॥ ७२ ॥ यतः—वरं विलोकये:

त्कन्या । माता वित्तं पिता कुलं ॥ बांधवाः स्वजनांश्चैव । मिष्टान्नमितरे जनाः ॥ ७३ ॥ विसृज्याथ सत्नां राजा । गृहे यावत्समागतः ॥ तावन्नृमांसभक्ष्येकः । पुर्यां कुणप आगतः ॥ ७४ ॥ सकलोऽपि पुरीलोको । नृपराज्ञीसमन्वितः ॥ मुक्त्वा च सकलं वस्तु । जीवं लात्वा पलायितः ॥ ७५ ॥ उक्तंच—त्यजेदेकं कुलस्यार्थे । ग्रामस्यार्थे कुलं त्यजेत् ॥ ग्रामं जनपदस्यार्थे । आत्मार्थे पृथिवीं त्यजेत् ॥ ७६ ॥ अमेध्यमध्ये कीटस्य । सुरेंद्रस्य सुरालये ॥ समाना जीविताकांक्षा । समं मृत्युभयं द्वयोः ॥ ७७ ॥ अहमेका बलादेव । पापिना तेन पाणिना ॥ धृत्वा कृतांजनेनैव । बिडाली भयविह्वला ॥ ७९ ॥ कृष्णांजनेन सद्रूपां । करोति मां स दुष्टहृद् ॥ मया पृष्टोऽन्यदा सोऽथ । मम त्वं किं करिष्यसि ॥ ८० ॥ सोऽवदत्परिणेष्यामि । शुभेऽह्नि त्वां सुलोचने ॥ मयोक्तं त्वं तु दैत्येशो । दुर्गंधाहं क मानुषी ॥ ८१ ॥ भिन्नजातिस्थयोस्तेन । कुणपेश्वर गर्हितः॥ कथं न्नाव्यावयोर्योगो । लोकद्वयविरुद्धकृत् ॥ ८२ ॥ क्रव्यादोऽसौ ततोऽवादी—न्मानसे हर्षितस्तदा ॥ खेदं मा कुरु हे कांते । सर्वं भव्यं भविष्यति ॥ ८४ ॥ संबंधं शृणु मे भद्रे । पूर्वं विद्याधराग्रणीः ॥ वैताढ्ये दक्षिणश्रेण्यां । पुरे गगनवल्लभे ॥ ८५ ॥ राजा पवनवेगोऽभूत् । श्रीमती तस्य गेहिनी ॥ तयोर्द्वौ

तनुजन्मानौ । मेघपद्मरथाह्वयौ ॥ ८६ ॥ ज्येष्ठो मेघरथः श्रेष्ठः । कनिष्ठोऽहं कुलाधमः ॥ शिशुत्वे पाठितः पित्रा । परं जातो विषोपमः ॥ ८७ ॥ जिनाज्ञापालको मेघ—रथः शिवरथोपमः ॥ वैराग्यवानहं रागी । पुनः कामातुरो भृशं ॥ ८८ ॥ तत्रैकदागात् श्रुतपारगामी । भद्रो यशोभद्रमुनींद्रवर्यः ॥ सद्धर्मकल्पद्रुमवारिवाहः । संसारदाहौघघनप्रवाहः ॥ ८९ ॥ चिंतामणिर्जंगमकल्पवृक्षो । दक्षो दयावांश्च परोपकारी ॥ ज्ञानैस्त्रिभिः सूर्यकरोपमानैः । प्रबोधयन् भव्यगणांबुजानि ॥ ९० ॥ युग्मं ॥ ततस्तं सकलो लोको—ऽशोको धर्मधुरंधरं ॥ मुनिं मोहारिमथनं । नंतुं तत्र समाययौ ॥ ॥ ९१ ॥ नृपः सपरिवारस्तं । संवेगरससागरं ॥ नत्वा मार्दवभावेन । शुश्राव धर्मदेशनां ॥ ९२ ॥ धर्माशिषं मुनिर्दत्वा । सुवैराग्यरसानुगां ॥ भवांबुधितरीप्रायां । प्रारेभे धर्मदेशनां ॥ ९३ ॥ धर्मो दुःखौघनाशाय । धर्मो निर्वृतिशर्मदः ॥ धर्मो नरकसंताप—वारको भवतारकः ॥ ९४ ॥ स चैकधा द्विधा त्रिधा । चतुर्धा पंचधा भवेत् ॥ बहुधा बुद्धिभेदेन । सर्वज्ञोक्त इह ध्रुवं ॥ ९५ ॥ एकधा स दयामूलो । द्विधा विरतिसंज्ञकः ॥ त्रिधा तत्वत्रयाचार—श्चतुर्धा दानकर्मणि ॥ ९६ ॥ पंचधा व्रततो ज्ञेयः । संयमे दशसप्तधा ॥ ध्यानमौनक्रियायोगैः । शतधानेकधा मतः ॥ ९७ ॥ नृज-

न्म दुर्लभं प्राप्य । सुकुलं साधुसंगमं ॥ यो धर्मं न करोत्यत्र । स यातिं नरकावनिं ॥ ९८ ॥
भोगा रोगप्रदा ज्ञेया । यौवनं क्षणभंगुरं ॥ संध्यारागाभ्रछायेव । नित्यं संसारचेष्टितं ॥ ९९ ॥
यत्प्रातस्तद्दिनार्धे न । यद्दिनार्धे न तन्निशि ॥ यन्निशि तन्निशीथे न । संसारोऽनित्य एव हि ॥
॥ १०० ॥ धर्महीनो दिनो यामो । मुहूर्त्तं घटिका लवः ॥ आवली समयश्चापि । यो गतो नि-
ष्फलश्च सः ॥ १ ॥ अहो संसारकूपेऽस्मिन् । जीवाः कुर्वंति कर्मभिः ॥ अरघट्टघटीन्याया-द्गमाग-
मक्रियां ध्रुवं ॥ २ ॥ अंतःक्लिन्नस्य विष्टाद्यै-र्मलैः श्रोतोद्भवैर्बहिः ॥ चिंत्यमानं किमप्यस्य । शरीर-
स्य न शोभनं ॥ ३ ॥ इदं शरीरं कर्पूर-कस्तूरीप्रभृतीन्यपि ॥ दूषयत्येव पाथोद-पयांस्यूषरभूरिव ॥
॥ ५ ॥ विरज्य विषयेभ्यो ये-स्तेपे मोक्षफलं तपः ॥ तैरेव फलमेतस्य । जगृहे तत्ववेदिभिः ॥
॥ ६ ॥ चारित्रेण विहीनः । श्रुतवानपि नो प्रशस्यते सद्भिः ॥ शीतलजलसंपूर्णः । कुलजैश्चांडाल-
कूप इव ॥ ७ ॥ यशोभद्रमुखात् श्रुत्वा । राजा सद्धर्मदेशनां ॥ राज्ये मेघरथं न्यस्य । प्रव्रज्यां
जगृहे मुदा ॥ ८ ॥ महाव्रतधरो धीरो । मुनिः कनकशेखरः ॥ विहरन्नवनीपीठे । गिरिमष्टापदं य-
यौ ॥ ९ ॥ चत्वार्यष्टौ दश द्वौ च । जिनान्नत्वा सुभक्तितः ॥ विजेतुमंतरंगारीन् । शुभध्यानमथा-

करोत् ॥ १० ॥ अचिंतयच्च धिगिदं । सदा गदपदं वपुः ॥ मुधैव मुग्धाः कुर्वंति । तन्मूर्छां तुच्छबुद्धयः ॥ ११ ॥ शरीरमंतरुत्पन्नै–र्व्याधिभिर्विविधैरिदं ॥ दीर्यते दारुणैर्दुःखै–र्दारुकीटगणैरिव ॥ १२ ॥ बहिर्हि सुंदराकार—मंतरेतन्मलाविलं ॥ न्यग्रोधस्य फलमिव । मध्ये कृमिकुलाकुलं ॥ १३ ॥ रुजो लुंपंति कायस्य । तत्कालं रूपसंपदं ॥ महासरोवरस्येव । वारि सेवालवल्लरी ॥ १४ ॥ शरीरं श्लथते लालाः । पतंति मुखतोऽभितः ॥ धिक् स्वरूपं हि संसारे । जराभिभूतदेहिनः ॥ १५ ॥ रूपं लवणिमा कांतिः । शरीरं द्रविणान्यपि ॥ संसारे तरलं सर्वं । कुशाग्रजलबिंदुवत् ॥ १६ ॥ ततो विनश्वरस्यास्य । शरीरस्य शरीरिणः ॥ अकामनिर्जरासारं । तप एव महत्फलं ॥ १७ ॥ अमेध्यपूर्णे कृमिजालसंकुले । स्वभावदुर्गंधयुते विनश्वरे ॥ कलेवरे मूत्रपुरीषसंग्रहे । रमंति मूढा विरमंति पंडिताः ॥ १८ ॥ संसारासारतां ज्ञात्वा । ज्ञानेनायुःक्षयं तथा ॥ संलेखनां विधायासौ । समाराधनपूर्वकं ॥ १९ ॥ शुभभावनया युक्तो । वियुक्तः पापकर्मतः ॥ गृहीत्वानशनं चांते । पंचमं कल्पमासदत् ॥ २० ॥ ततो मेघरथो राजा । वैताढ्यश्रेणिनायकः ॥ जिनधर्मरतो नित्यं । व्यसनानि न्यवारयत् ॥ २१ ॥ ममोक्तं तेन भो भ्रात—र्जिनधर्मे मतिं कुरु ॥ त्यज दुर्जनवद्दूरं । मिथ्यात्वं

दुर्गतिप्रदं ॥ २२ ॥ मिथ्यात्वं दुःखदौर्गत्य—निगोदभयदायकं ॥ मिथ्यात्वं परमो वैरी । मिथ्यात्वं परमं तमः ॥ २३ ॥ वरं व्याधिर्वरं मृत्यु । र्वरं वैरी वरं विषं ॥ परं मिथ्यात्वसंसर्गो । न वरं भवकारणं ॥ २४ ॥ यतः—मूलं बोधिद्रुमस्यैतद् । द्वारं मोक्षपुरस्य च ॥ स्तंभो निर्वाणहर्म्यस्य । निदानं सर्वसंपदां ॥ २५ ॥ गुणानामेक आधारो । रत्नानामिव सागरः ॥ पात्रं चारित्रवित्तस्य । सम्यक्त्वं श्लाघ्यते न किं ॥ २६ ॥ युग्मं ॥ अवतिष्ठति नाज्ञानं । जंतौ सम्यक्त्ववासिते ॥ प्रचारस्तमसः कीदृग् । भुवने भानुभासिते ॥ २७ ॥ तिर्यग्नरकयोर्द्वारे । दृढा सम्यक्त्वमर्गला ॥ देवमानवनिर्वाण—सुखद्वारैककुंचिका ॥ २८ ॥ भवेद्वैमानिकोऽवश्यं । जंतुः सम्यक्त्ववासितः ॥ यदि चोद्वांतसम्यक्त्वो । बद्धायुर्वापि नो पुरा ॥ २९ ॥ अंतर्मुहूर्त्तमपि यः समुपास्य जंतुः । सम्यक्त्वरत्नममलं विजहाति सद्यः ॥ बंभ्रम्यते भवपथे सुचिरं न सोऽपि । सम्यक्त्वयुक्तमनुजस्य किमुदीरयामः ॥ ३० ॥ इति मत्वा ततो भ्रात—र्मिथ्याभ्रांतिं त्यज द्रुतं ॥ निंबस्य सहकारस्य । फलपाकं विलोकय ॥ ३१ ॥ जन्मन्येकत्र दुःखाय । रोगांधत्वमरिर्विषं ॥ अपि जन्मसहस्रेषु । मिथ्यात्वमचिकित्सितं ॥ ३२ ॥ मिथ्यात्वेनालीढचित्तो नितांतं । तत्वं मुख्यं नैव जानाति मूढः ॥ किं जात्यंधाः

कुत्रचिद्वस्तुजाते । रम्यारम्यव्यक्तिमासादयंति ॥ ३४ ॥ न सर्वज्ञा न नीरागाः । शंकरब्रह्मविष्णवः ॥ प्राकृतेभ्यो जनेभ्योऽपि । तेषां गर्हितचेष्टितं ॥ ३५ ॥ स्त्रीसंगः काममाचष्टे । द्वेषं चायुधसंग्रहः ॥ व्यामोहं चाक्षसूत्रादि । देहाशौचं कमंडलुः ॥ ३६ ॥ गौरी रुद्रस्य सावित्री । ब्रह्मणः श्रीर्मुरद्विषः ॥ शचींद्रस्य रवे रत्ना—देवो दक्षात्मजा विधोः ॥ ३७ ॥ तारा बृहस्पतेः स्वाहा । वह्नेश्चेतोभुवो रतिः ॥ धूमोर्णा श्राद्धदेवस्य । दारा एवं दिवौकसां ॥ ३८ ॥ सर्वेषां शस्त्रसंबंधः । सर्वेषां मोहचेष्टितं ॥ तेषां हि विदितं लोके । कामभावविजृंभितं ॥ ३९ ॥ बुद्धस्यापि न देवत्वं । मोहात् शून्यत्ववादिनः ॥ प्रमाणासिद्धे शून्यत्वे । शून्यवादकथा वृथा ॥ ४० ॥ गौरीविनायकस्कंद—समीरणपुरस्सराः ॥ निगद्यंते कथं देवाः । सर्वदोषनिकेतनाः ॥ ४१ ॥ यः पशुर्गूथमश्नाति । स्वपुत्रं च वृषस्यति ॥ शृंगादिभिर्हंति जंतून् । सा वंद्यास्तु कथं नु गौः ॥ ४२ ॥ स्थानं तीर्थर्षिदेवानां । सर्वेषामपि गौर्यदि ॥ विक्रीयते दुह्यते च । हन्यते च कथं हि सा ॥ ४५ ॥ जलेन यदि शुद्धिः स्या—त्तदा मत्स्येषु सा न किं ॥ अंतरंगा च शुद्धिस्तु । कषायत्यागतो भवेत् ॥ ४६ ॥ वरं नरकवासो हि । न पुनर्वाम्यं कुलं ॥ वरमेकांतमूकत्वं । न वेदमुखरं मुखं ॥ ४७ ॥ वरं वराकश्चार्वा-

को । योऽसौ प्रकटनास्तिकः ॥ वेदोक्तितत्परश्छद्म—तापसो न तु जैमनिः ॥ ४८ ॥ देवोपहार-
व्याजेन । यज्ञव्याजेन येऽथवा ॥ घ्नंति जंतून् गतघृणा । घोरां ते यांति दुर्गतिं ॥ ४९ ॥ कुदेवं
कुगुरुं धर्मं । त्यज हिंसापरायणं ॥ भज रत्नत्रयं रम्यं । देवं धर्मं गुरुं शुभं ॥ ५० ॥ जिनधर्मरता
ये च । विरताः पापकर्मणः ॥ ज्ञातव्या बांधवास्ते तु । विपरीताश्च वैरिणः ॥ ५३ ॥ अतो बांधव
नो युक्तं । त्वया सह प्रजल्पनं ॥ मम ते संस्तवेनापि । हीयते शुद्धदर्शनं ॥ ५४ ॥ यतः—सं-
का कंखा वितिगिछा । पसंस तह संथवो कुलिंगीसु ॥ सम्मत्तस्स अइयारे । परिहरियवा पयत्तेण
॥ ५५ ॥ उक्त्वा मेघरथोऽथैवं । स्थितो मे बांधवाग्रणीः ॥ तस्य वाक्यं तु मे जातं । भृते कुंभे
जलं यथा ॥ ५६ ॥ मयोक्तं वाक्यमेतत्ते । कर्णे तप्तत्रपूपमं ॥ भाति भ्रातः शिवादन्यो । देवो ना-
स्ति जगत्त्रये ॥ ५७ ॥ भवे भवे सदा भूया—न्मतिर्मे मोहविह्वला ॥ जिनेंद्रे नो युगांतेऽपि ।
जीविते मरणेऽथवा ॥ ५८ ॥ अनेन वचसा मेघ—रथो राजातिपीडितः ॥ पुरान्निष्कासयामास ।
मां भ्रातरमपि क्षणात् ॥ ५९ ॥ अहं सकोपः कैलाशे । गत्वा शिवनिकेतने ॥ शिवस्याराधनं भ-
क्त्या—कुर्वमुग्रतपोरतः ॥ ६० ॥ धूम्रपानमहाध्यान—मौनैरशनवर्जितैः ॥ दिनैः कतिपयैः शंभुः ।

प्रत्यक्षोऽभून्ममाग्रतः ॥ ७१ ॥ महादेवो जगन्नाथः । सुरासुरगणैर्वृतः ॥ मद्भाग्येन प्रभूतेना—वोचदेष ममाग्रतः ॥ ७२ ॥ वद वत्स त्वया कस्मा—त्तपसाहं वशीकृतः ॥ याचस्व वांछितं तेऽस्ति । चित्ते तत्पूरयाम्यहं ॥ ७३ ॥ सोऽवक् तर्हि मे देहि । प्रिये येन न कैरपि ॥ विभो सुरासुरैर्भूपै—र्दोषै रोगैर्जलाग्नितः ॥७४॥ शंभुः प्रोवाच भो भद्र । न कोऽप्येवंविधो भुवि ॥ भूतश्च भवति भावी । संसारे योऽवतारकृत् ॥ ७५ ॥ परं गृहाण मे दण्डं । विजयाख्यं जयप्रदं ॥ अनेन ते भविष्यंति । नष्टा विश्वेऽपि शत्रवः ॥ ७६ ॥ वश्यं भविष्यति सर्वं । त्रैलोक्यं ते क्षणादपि ॥ अस्यैव घाततो ज्ञेयं । मरणं नान्यतस्तव ॥ ७७ ॥ ततस्तं विजयं नाम्ना । दण्डं लात्वा शुभे दिने ॥ अहं पलाशी संजातो । रसनालौल्यदोषतः ॥ ७८ ॥ मानवोऽहं नृजाता त्व—मुभयोः संगतिर्वरा ॥ सफला सर्वकार्येषु । निश्चितं हि भविष्यति ॥ ७९ ॥ विजयाख्यमिमं दण्डं । पूजयित्वाष्टमीदिने ॥ निजं पुरं गमिष्यामि । विवाह्य त्वां मनस्विनि ॥ ८० ॥ तत्र मेघरथं हत्वा । जिनभक्तं ममाग्रजं ॥ वैताढ्यश्रेणयो राज्यं । गृहीष्येऽहं निजं प्रिये ॥ ८१ ॥ त्वं प्रिया चेच्चकोराक्षि । स्वर्गलोकसुखेन किं ॥ त्वं प्रिया यदि न स्यान्मे । स्वर्गलोकसुखेन किं ॥ ८२ ॥ त्वां प्रियां पट्टराज्ञीं मे । दृष्ट्वा

वामांगहारिणीं ॥ सुरासुरनरेशाश्च । भविष्यंति सुविस्मिताः ॥ ८३ ॥ पट्टाभिषेकवेलायां । विद्याधरपुरंध्रयः ॥ आवां वर्धापयिष्यंति । पुष्पैर्मुक्ताफलान्वितैः ॥ ८४ ॥ इत्युक्त्वा स च पापात्मा । कृत्वा मामोतुवल्लभां ॥ श्वेतांजनप्रयोगेण । गतो रात्रौ समेष्यति ॥ ८५ ॥ विक्रमाय प्रदत्तां मां । स बलात्परिणेष्यति ॥ वरं व्याघ्रवने वासो । न पुनः क्रूरचेष्टितैः ॥ ८६ ॥ आमूलचूलतः सर्वं । वृत्तमुक्तं नरोत्तम ॥ परं कथं त्वमायातः । स्थाने यमसभोपमे ॥ ८७ ॥ अयं दुष्टोऽतिपापिष्टो । निकृष्टः क्रूरकर्मकृत् ॥ यदा ज्ञास्यति भो भद्र । तदा त्वां मारयिष्यति ॥ ८८ ॥ मम स्वकर्मदोषेण । यद्भाव्यं तद्भविष्यति ॥ त्वरितं गच्छ शिष्ट त्वं । मा मुधा मरणं व्रज ॥ ८९ ॥ उक्तं च—समीहितं यन्न लभामहे वयं । प्रभो न दोषस्तव कर्मणो मम ॥ दिवाप्युलूको यदि नावलोकते । तदापराधः कथमंशुमालिनः ॥ ९० ॥ पत्ते वसंतमासे । ऋद्धिं पावंति सयलवणराइ ॥ जं न हु पत्त करीरे । ता किं दोसो वसंतस्स ॥ ९१ ॥ इति तस्या वचः श्रुत्वा । दयालुर्विक्रमो नृपः ॥ करुणारसकासारो । जातः सजललोचनः ॥ ९२ ॥ स्वरूपं प्रकटीकृत्य । जगाद नरनायकः ॥ विक्रमं मां शुभ्रे विद्धि । मा भैषीर्न भयं मम ॥ ९३ ॥ निशम्येति प्रहृष्टा सा । जाता कनकमालि-

का ॥ इष्टस्य दर्शनं कस्य । न भवेदमृतोपमं ॥ ९४ ॥ अथ नृपंप्रति साह । स्वामिन् देवार्चनं यदा ॥ करोत्ययं नृमांसाशी । तदाहूतो न जल्पति ॥ ९५ ॥ श्रीमद्विजयदंडं स । संस्थाप्य पूर्वतोमुखं ॥ महाभक्त्या प्रणामं तु । करोति घटिकाद्वयं ॥ ९६ ॥ तदा त्वया स हंतव्यो । दंडेन शिरसि छलात् ॥ यथासौ प्रेतसदनं । याति स्वेनैव कर्मणा ॥ ९७ ॥ राजा जजल्प विश्वस्तं । नाहं हन्मि वरानने ॥ शूराः साहसिनो व्यक्तं । मारयंति मदोध्धुरान् ॥ ९८ ॥ तदा तयोक्तं संलीय । त्वमत्र स्थिरतां भज ॥ संज्ञामहं करिष्यामि । दंडो ग्राह्यस्तदा त्वया ॥ ९९ ॥ तस्मिन् गृहीते दुष्टोऽसौ । निष्प्राणो मृत एव हि ॥ द्वंद्वयुद्धं ततः कार्यं । सह तेन तदा त्वया ॥ ६०० ॥ अंगीकृतं नरेंद्रेण । दाक्षिण्यात्तद्वचो हितं ॥ बिडालीरूपिणी श्वेतां—जनेन तेन सा कृता ॥ १ ॥ क्षणांतरे स चायातः । क्रूरो विद्याधराधमः ॥ कृत्वा स्वाभाविकं रूपं । तस्याः पुनरुवाच तां ॥ २ ॥ अद्य मनुष्यगंधोऽत्र । समायाति कथं प्रिये ॥ सावग्मनुष्यरूपाहं । मम गंधोऽन्यथा वृथा ॥ ३ ॥ जजल्पासौ प्रिये तूर्णं । कुरु स्नानादिकां क्रियां ॥ श्रीमद्विजयदंडस्य । यथा पूजा विधीयते ॥ ४ ॥ यदा पूजनवेलायां । कश्चिदत्रैति मानवः ॥ तदा मे भोजनं दंड—नैवेद्यं च भवेद् ध्रुवं ॥ ५ ॥

स्नानं कृत्वा हरस्यार्चां । चकार स तया सह ॥ दंभं न्यस्य पुरोऽभ्यर्च्य । प्रणाममकरोन्मुदा ॥ ६ ॥ यावत्तस्थौ च ध्यानेऽसौ । तावदागत्य नृपतिः ॥ दंभं जग्राह वेगेन । निधानं निर्धनो यथा ॥ ७ ॥ देवार्चनं विधायाथो—र्ध्वीभूतः खेचराधमः ॥ नृपेण हक्कितस्ताव—त्साहसैकधनेन सः ॥ ८ ॥ रे पापिष्ट नृमांसाशिन् । कुरु शस्त्रं ममोपरि ॥ सुप्तं दीनं भयभ्रांतं । न हन्मि प्रथमं त्वहं ॥ ९ ॥ जिनं जिनोक्तसिद्धांतं । जैनं मुनिं गृहस्थकं ॥ विराधयंति ये तेषां । प्राणहर्ता करो मम ॥ १० ॥ अथ दंभं स्वकीयं स । गतं विज्ञाय साहसी ॥ कृतगव्यूतिरूपोऽरं । नृपं हंतुमधावत ॥ ११ ॥ अग्निकस्कंधमारुह्य । विक्रमोऽपि पराक्रमी ॥ जघान मस्तके तं स । पलादं पापकारकं ॥ १२ ॥ स तु सप्तगुणं विद्या—रूपं कृत्वा नृपोपरि ॥ क्रव्यादश्च मदोन्मत्तो—ऽपतत्पाषाणखंडवत् ॥ १३ ॥ तदाग्निकेन सद्वज्र—रूपेण रक्षितो नृपः ॥ तदा परस्परं युद्धं । तयोर्जातं भयंकरं ॥ १४ ॥ राज्ञा विजयदंडेन । हतो मूर्ध्नि निशाचरः ॥ धरित्र्यां पतितो वेगा—द्वेतालेन च भक्षितः ॥ १५ ॥ पुष्पवृष्टिः कृता देवै—र्दुंदुभिनादपूर्वकं ॥ तत्पुरं पूरयामास । वेतालः सनृपैर्नरैः ॥ १६ ॥ श्रीविक्रमं नृपं दृष्ट्वा । राजा कनकशेखरः ॥ परमानंदपूरेण । पूरितोऽमृतकुंभवत् ॥ १७ ॥ पंचवर्णसुपुष्पौघै—

गुंफितां रत्नगर्भितां ॥ विक्रमस्य न्यधात्कंठे । वरमालां नृपांगजा ॥ १८ ॥ ततः सहर्षो नृपतिः स्व-
कन्यां । रक्तां ददौ जीवितदायकस्य ॥ श्रीविक्रमार्कस्य नृपस्य भक्त्या । प्रक्षाल्य पादौ परया समृ-
द्ध्या ॥ १९ ॥ तामुद्वाह्य नृपतितिलको दंडमादाय हस्ते । तं वेतालं कृतगजतनूं सप्रियो ह्यारुरोह
॥ वेगादागात्पुरपरिसरे सोमशर्मास्ति यत्र । सच्छात्रैस्तैः परिवृत इतो मार्गयन् भूपमार्गं ॥ २० ॥
पंडितस्य सच्छात्रस्य । राजा कनकशेखरः ॥ वस्त्रालंकरणैः सार्धं । ददौ भोजनमुत्तमं ॥ २१ ॥ स्व-
र्णसंकलिका रत्न—जटिता मुद्रिका घनाः ॥ छात्राणां स्वर्णमाणिक्य–घटितान् घुर्घरान् ददौ ॥२२॥
पट्टकूलानि बहुशो । तथैव सुखभक्तिकाः ॥ अदात्प्रमुदितो भूपो । तेषां भूपानुगामिनां ॥ २३ ॥
वेतालस्य स्कंधमारोप्य सर्वान् । छात्रान् राजा पंडितं स्वां प्रियां च ॥ सोपाराख्ये पत्तनेऽगाद्युगा-
दि–प्रासादे श्रीनाभिपुत्रं ननाम ॥ २४ ॥ नमस्कृत्य देवं यदा विक्रमार्को । वरे मंडपे छात्रयुक्तः
समागात् ॥ तदा लोकहाहारवं शोकयुक्तं । पृथिवीपतिश्चाशृणोदुग्रसत्वः ॥ २५ ॥ ज्ञात्वा कोलाह-
लं तं नरपतितिलको विस्मितो देवभक्तं । पृच्छांचक्रे किमेतद्वद वरवचनं भो भयं किं जनानां ॥
भूतप्रेतासुराणां वनगजजनितं क्रूरभूपोद्भवं वा । येनासौ लोकवर्गो नयनजलयुतो याति शोकैक-

चित्तः ॥ २६ ॥ स प्राह शृणु भूपाल । पुरेऽस्मिन् जातमद्भुतं ॥ अरिष्टं शिष्टलोकानां । गदितुं यन्न शक्यते ॥ २७ ॥ तथापि कथयिष्यामि । तवाग्रे पुरुषोत्तम ॥ पुरेऽस्मिन्नस्ति शांतात्मा । सोमशर्मा द्विजोत्तमः ॥ २८ ॥ तस्य सर्वगुणाधारा । शीलालंकारधारिणी ॥ उमादेवी महाशांता । कांता कांतानुगाऽभवत् ॥ २९ ॥ कर्पूरामृतचंदन-सारैरिव चंद्रकिरणसंयुक्तैः ॥ सा निर्मिता नितांतं । विधिना विधिपूर्वकं जनानंदा ॥ ३० ॥ अभाग्ययोगतस्तस्या । गृहे दुष्कर्मदोषतः ॥ अज्ञातकुलशीलस्तु । शिष्य एकः समाययौ ॥ ३१ ॥ त्रिषष्टिछात्रका आसन् । द्वात्रिंशल्लक्षणान्विताः ॥ तत्र हि पाठशालायां । विद्याध्ययनतत्पराः ॥ ३२ ॥ अन्नपानादिकं सर्वं । प्रयच्छंती द्विजप्रिया ॥ नित्यं तेषां च छात्राणां । सा पुपोष स्वपुत्रवत ॥३३॥ तयान्यदा चतुर्दश्यां । महामातुश्च पूजनं ॥ कृतं पुरस्य रक्षार्थं । छात्राणां पंडितस्य च ॥ ३४ ॥ अज्ञातकुलशीलेन । तेन धूर्तेन पापिना ॥ हृतं तन्मंगलं सर्वं । परं शांतिप्रदायकं ॥ ३५ ॥ स नष्टो बालवेषेण । गृहीत्वा दंडमुत्तमं ॥ तत्पृष्टे वंचिता नष्टा-श्छात्राः पंक्तिसंयुताः ॥ ३६ ॥ न ज्ञायतेऽथ ते सर्वे-ऽवटे क्षिप्ता विनाशिताः ॥ मारिता वा भक्षिताश्च । तेन राक्षसरूपिणा ॥ ३७ ॥ पतिव्रता सत्ययुक्ता । योगिनीभिश्च रक्षिता ॥ कृ-

राभिः क्रूरचेष्टाभि—र्विप्रपत्नी च सा सती ॥ ३९ ॥ गात्राणां पितरस्तेषां । वियोगविधुराशयाः ॥
महादुःखार्णवे मग्ना । मरणार्थमिहागताः ॥ ४० ॥ तेषां दुःखेन लोकाश्च । सर्वे नगरवासिनः ॥
संति समागता ह्यत्र । नदीतीरे चितांतिके ॥ ४१ ॥ मूलतोऽयं मया तूक्तो । वृत्तांतस्ते जयंकरः ॥
न ज्ञायते च किं भावि । शोभनं वाप्यशोभनं ॥ ४२ ॥ क्षमादेवीं ब्राह्मणीं योगिनीभि—र्भुक्तां
ज्ञात्वा प्रेषयामास गात्रान् । तेषां पार्श्वे पितृवर्गं समेषां । हर्षोपेतं कारयामास राजा ॥ ४४ ॥ सो-
पारकाधीश्वरविश्वनाथः । श्रीविक्रमार्कस्य नृपस्य पादौ ॥ नत्वातिभक्त्याभयदानदातुः । पुरे प्रवेशं
च चकार हर्षात् ॥ ४५ ॥ निजांगजातां महनीयरूपां । श्रीविश्वनाथः परया महर्द्ध्या ॥ व्यवाहय-
न्मालवभूमीपाय । रम्ये मुहूर्त्ते जयमालिकाख्यां ॥ ४६ ॥ श्रीविक्रमस्तस्य नराधिपस्य । विवाह्य क-
न्यां स्वजनैः समेतः ॥ सोपारकाख्यं नगरं सहर्षो । विलोकयामास महर्द्धियुक्तः ॥ ४७ ॥ अथो-
परोधात्तनयां कृशोदरीं । ददौ सुतारां सुभगां द्विजोत्तमः ॥ स सोमशर्मा नवकंकणांकित—श्री-
विक्रमार्काय मुदातिगौरवात् ॥ ४८ ॥ श्रीविक्रमार्को नृपतिर्वधूभ्यां । द्वाभ्यां युतो दंभयुगान्वितश्च
॥ पुरीं स्वकीयां प्रययौ महोत्सवैः । सतोरणां केतुगणैर्विराजितां ॥ ४९ ॥ तौ द्वौ दंभौ गांछिका-

याः पुरस्ता—न्मुक्त्वा राजा पादयुग्मं ननाम ॥ मातः कार्यं सिद्धमेतद् द्वितीयं । सत्कार्यार्थी भूपतिस्तामवोचत् ॥ ५० ॥ श्रीविक्रमार्कस्य नरेश्वरस्य । श्रीपंचदंडातपत्रबंधे ॥ पद्ये महाश्चर्यकरे यथोक्तः । प्रस्ताव एष द्वितयो बभूव ॥ ५१ ॥

॥ अथ तृतीयः प्रस्तावः प्रारभ्यते ॥

अथ श्रीविक्रमादित्य । आदित्य इव सप्रभः ॥ तृतीयकार्यसिद्ध्यर्थं । सोद्यमः समजायत ॥१॥
प्रेते गत्वा स तां श्वश्रूं । नत्वा बुद्धिमतां वरः ॥ आदेशं याचयामास । साहसी शुद्धमानसः ॥२॥
वद स्वामिनि मे कार्यं । तृतीयं ज्ञानलोचने ॥ येन कृतेन छत्रं ते । जामातुर्मस्तके भवेत् ॥३॥
सावदद्विबुधश्रेष्ट । वत्स स्वच्छमते शृणु ॥ मानसे साहसं धृत्वा । कार्यं कुरु महत्तरं ॥ ४ ॥ स्तंभतीर्थपुरे गत्वा । श्रीजयकर्णभूपतेः ॥ गृहात्तृतीयभूम्यास्त्वं । पेटामानय सत्वरं ॥ ५ ॥ तथेत्युक्त्वा ततो राजा । गत्वा स्वकीयवेश्मनि ॥ अग्निकस्कंधमारुह्य । ययौ तत्र पुरे क्षणात् ॥ ६ ॥ बाह्योद्याने क्षणं राजा । लोकान् वीक्ष्य महर्द्धिकान् ॥ कलत्रपुत्रसंयुक्तान् । मंडपेषु च विस्मितः ॥ ७ ॥ सरांसि शतसंख्यानि । देवकुलान्यनेकशः ॥ सुसंचारजलास्तत्र । वापीकूपाः सहस्रशः ॥ ८ ॥ प्र-

पाः पौरजनानंदा । अमंदा दानशालकाः ॥ वाटिका वनराजी च । पुष्करिण्यो मठाश्रमाः ॥ ९ ॥
द्रुमाः सदाफला यत्र । रामा रम्या रमोपमाः ॥ धनाढ्या धनदाकारा । नराश्चानंददायकाः ॥ १० ॥
वरा वरांगनाः काम—नायिका इव भांति च ॥ यत्रालंकरणोपेताः । पूर्णचंद्राननाः खलु ॥ ११ ॥
वृक्षाः कल्पद्रुमाकारा । धेनवः कामधेनवः ॥ सरांस्यमृतकुंडानि । वाप्यः कूपाः सुधोदकाः ॥१२॥
प्रासादा मेरुकैलाश—शिखराभा मनोहराः ॥ गृहाणि देवभवन—सदृशानि त्वनेकधा ॥ १३ ॥
अश्वा उच्चैःश्रवाकारा । गजा ऐरावणोपमाः ॥ जंगमानीव हर्म्याणि । रथा रविरथोपमाः ॥ १४ ॥
बहुप्रकारभोज्यानि । शाकपाकान्यनेकशः ॥ भुक्त्वा पौरजनो गेहं । याति गौरवगर्वितः ॥ १५ ॥
विक्रमेण जनः पृष्टः । कथं यूयं पुराद्बहिः ॥ अत्राथ गृहं त्यक्त्वा । संशयो मे महानिति ॥ १६ ॥
तेनोक्तं शृणु भो पांथ । यत्पृष्टमुत्तम त्वया ॥ एषा लीलाविलासाख्या । नगरी स्वःपुरीसमा ॥१७॥
नामानि च चत्वार्यस्या । नगर्याः प्रविभांति वै ॥ त्र्यंबावती भोगवती । लीलावत्यमरावती ॥ १८ ॥
सिद्धकिन्नरगंधर्वै–र्विद्याधरसुरासुरैः ॥ नागव्यंतरज्योतिष्कैः । क्रीडनार्थमिव कृता ॥ १९ ॥ ताम्रर-
जतगांगेय—रत्नमाणिक्यविद्रुमैः ॥ कृतान्यागारहट्टानि । राजंतेऽत्र सदाभितः ॥ २० ॥ धूमेन

श्यामलीयंते । सोल्लोचानि गृहाण्यतः ॥ कारणाज्जनवर्गोऽयं । बहिः पाकं करोति वै ॥ २१ ॥ इ-
ति श्रुत्वा नृपस्तूर्णं । मध्याह्ने नगरंप्रति ॥ गच्छन् विलोकयामास । वप्रं विस्मयकारकं ॥ २२ ॥ प-
रिखाजलसंव्याप्त—द्वात्रिंशद्गोपुरान्वितः ॥ गवाक्षैः शालभंजीभि—र्दत्तशोभः स वप्रकः ॥ २३ ॥
शंखावर्त्तप्रतोल्याः स । द्वारपालैरलक्षितः ॥ विवेश वसुधाधीशो । निजकार्यचिकीर्षया ॥ २४ ॥
नानाचित्रांकितानेक—हट्टराजिविराजिता ॥ चंद्रसूर्योपलैर्बद्धा । रथ्या शीतोष्णवारकैः ॥ २५ ॥ म-
णिप्रतिबिंबितमुक्ता—प्रालंबनमिषेण यत्र शेषाहिः ॥ भवनानि बिभर्त्ति सदा । बहुधात्मानं विभज्ये-
व ॥ २६ ॥ विघ्नोऽभिसारिकाणां । भवनगणः स्फटिकप्रभाविकटः ॥ यत्र विराजत्यन्वितः । प्रकटं र-
जतपटलकुट्टाकः ॥ २७ ॥ यत्र त्रिनयनज्वलन—ज्वालावल्या पुरा हि ज्वलितोऽयं ॥ जीवति मा-
नसजन्मा । शशिवदनावदनकांतिपीयूषैः ॥ २८ ॥ रतिक्लमितललितललना—श्रमजललवनोदी सु-
रभिश्च ॥ पंकजपरिमलपटलै—र्वासितदेहो वहत्यनिलः ॥ २९ ॥ नवबिशकिसलयकवलन—प्रोद्य-
तकलहंसकलकलैर्यत्र ॥ कमलवनेषु प्रसरति । लक्ष्म्या इव नूपुरारावः ॥ ३० ॥ नृत्यन्मुग्धमयूरा
। मरकतमणिजा गृहावली सततं ॥ सेंद्रायुधघननिवहा । प्रावृट् मूर्तेव यत्रास्ते ॥ ३१ ॥ शशिकि-

रणप्रावरण—स्फटिकहर्म्येषु हरिणशावाक्ष्यः ॥ यत्र विभ्रांति सुधांबुधि-रंगत्तरंगोत्कृता इवाप्सरसः ॥
॥ ३२ ॥ लंकालकाद्या नगरी—र्निर्जित्यातिप्रमोदतः ॥ चंचलैर्नृत्यतीवालं । या निकेतनकेतुभिः
॥ ३३ ॥ पुरशोभां नृपः पश्यं—स्त्वरितं राजमंदिरे ॥ भूमिद्वयमतिक्रम्य । तृतीयां भूमिमासदत् ॥
॥ ३४ ॥ दृष्टा तत्र विशालाक्षी । कन्या संपूर्णलक्षणा ॥ नारीवृंदवृता तेन । नानालंकारधारिणी
॥ ३५ ॥ सर्वांगसुंदरीं श्यामां । सुभगां शोभनाशयां ॥ सरस्वतीव सकल—कलाकौशलपेशलां
॥ ३६ ॥ तां दृष्ट्वा नृपतिश्चित्ते । चिंतयामासिवानिति ॥ एषा नूनं नृपसुता । श्रीजयकर्णनृपतेः ॥
॥ ३७ ॥ युग्मं ॥ चिंतातुरा कथं ह्येषा । दृश्यते तरलाकृतिः ॥ सखीभिः सरसैर्वाक्यै-र्वाचितापि न
जल्पति ॥ ३८ ॥ सनिःश्वासा च स्वे गल्ले । दत्तहस्ता नतानना ॥ जलार्द्रनयना गीत-नृत्यरंग-
विवर्जिता ॥ ३९ ॥ कुत्रापि दत्तसंकेता । रोगार्त्ता विरहातुरा ॥ वियोगिनी वा केनापि । निष्क-
लंका कलंकिता ॥ ४० ॥ विलोकयाम्यहं तात्र—च्चरित्रं छन्नवृत्तितः ॥ कुत्रास्ति रत्नमंजूषा-स्या
यया मम कार्यकं ॥ ४१ ॥ ततो दिनात्यये वामा । रामावृंदं विहाय सा ॥ शिरोऽर्त्तिव्याजतः सु-
प्ता । सख्यः सर्वा गृहं ययुः ॥ ४२ ॥ जातेऽथ विजने नीत्वा । मंजूषां रत्नसंयुतां ॥ सा ददर्श दृ-

ढीकृत्य । गता भूमिं चतुर्थिकां ॥ ४३ ॥ राजाप्यनुपदं गत्वा । गवाक्षे गरुडेशवत् ॥ उपविश्य च-
तुर्दिक्षु । वीक्षांचक्रे विशारदः ॥ ४४ ॥ असावेवं सुखासीनः । समाधिध्यानतत्परः ॥ योगीवैकाग्र-
चित्तात्मा । तस्थौ पेटां विलोकयन् ॥ ४५ ॥ अथ सा राजकन्यापि । नामतो रत्नमंजरी ॥ सर्वत्रा-
लोकयामास । निजकार्यचिकीर्षया ॥ ४६ ॥ तया नृपो न दृष्टोऽसौ । तत्रासन्नोऽपि मुग्धया ॥
अलक्षीभूतदेहो य-द्विक्रमार्को महीपतिः ॥ ४७ ॥ अथ प्रोद्घाट्य मंजूषां । लात्वा दंडं महागुणं ॥
सुवर्णपट्टे संस्थाप्य । तस्य पूजां चकार सा ॥ ४८ ॥ धूपाक्षतफलैः पुष्पै-र्वासनैवेद्यदीपकैः ॥
प्रकारैरष्टभी रम्यै-र्भूरिभावभरान्विता ॥ ४९ ॥ द्वितीयं पट्टमानीय । नवभागैरलंकृतं ॥ कुंकुमा-
गुरुकर्पूर-चंदनाद्यैस्तु चर्चितं ॥ ५० ॥ तस्योपरि च मंजूषां । निवेश्य ध्यानसंयुता ॥ मार्गं गवे-
षयामास । गवाक्षस्था वरानना ॥ ५१ ॥ विक्रमोऽदृश्यरूपेण । गवाक्षोपरि संस्थितः ॥ तावत्कोऽ-
पि युवागत्य । तारस्वरमिमां जगौ ॥ ५२ ॥ प्रहितोऽस्मि तवानेतुं । विद्यासिद्धे वरानने ॥ कन्य-
कुब्जपुरीशस्य । सुतेन नरब्रह्मणा ॥ ५३ ॥ इति शब्दं समाकर्ण्य । सा कन्या सहसोत्थिता ॥ गृ-
हीत्वा दंडरत्नं त-द्गवाक्षद्वारमागता ॥ ५४ ॥ तत्पृष्ठलग्नो नृपोऽपि । गवाक्षद्वारदेशगः ॥ प्रच्छन्नवृ-

त्या चरितं । सकलं च व्यलोकयत् ॥ ५५ ॥ सा जगादेति भो दूत । शीघ्रमागच्छ त्वं त्विह ॥ न कोऽप्यस्ति गृहस्यांत–र्मा कृथाः कस्यचिद्भयं ॥ ५६ ॥ अधःस्थोऽहं कथं तुर्यां । भूमिं स्वामिनि सेवकः ॥ आगच्छामि विनोपायं । रज्जुसोपानकादिकं ॥ ५७ ॥ इति तद्वचनं श्रुत्वा । कुमारी रत्नमंजरी ॥ दृढीकृत्य करे दंड–ममुंचच्चपलं ह्यधः ॥ ५८ ॥ स प्रभावान्वितो दंडो । रज्जुरिव तदाभवत् ॥ पाणिभ्यां तं गृहीत्वा स । आरूढो भूमिकां वरां ॥ ५९ ॥ प्रणम्य परया भक्त्या । स स्वामिन्याः पुरोऽवदत् ॥ कृत्वा वेगेन सामग्रीं । समागच्छ वरानने ॥ ६० ॥ यद् ग्राह्यं तद्गृहाणाशु । विलंबावसरो न हि ॥ नित्यं प्रच्छन्नकार्यस्य । स्युर्विघ्नानि पदे पदे ॥ ६१ ॥ स युवा तव रूपेण । मोहितो मदनातुरः ॥ क्षणं नास्ति क्षमः स्थातुं । तवांगसंगमं विना ॥ ६२ ॥ नृपः श्रीविक्रमादित्य—श्चलचित्तोऽभवत्तदा ॥ गमिष्यति कदाप्येषा । पेटा ग्राह्या मया ध्रुवं ॥ ६३ ॥ पुनश्चिंतितवान् भूप । एषा बाला कुमारिका ॥ अस्याश्चेत्किंचित्स्यादत्र । पेटामध्ये हि सांप्रतं ॥ ६४ ॥ तदादत्तं कथं ग्राह्यं । मया पुण्यवताधुना ॥ स्त्रीघातपातकं चेत्स्यात् । कदाचिद् दुण्यनाशतः ॥ ६५ ॥ यतः—एकस्यैकं क्षणं दुःखं । मार्यमाणस्य जायते ॥ सपुत्रपौत्रस्य पुन—र्यावज्जीवं हृते धने ॥

॥ ६६ ॥ पतितं विस्मृतं नष्टं । स्थितं स्थापितमाहितं ॥ अदत्तं नाददाति स्वं । परकीयं क्वचित्सुधीः ॥ ६७ ॥ अयं लोकः परो लोको । धर्मो धैर्यं धृतिर्मतिः ॥ मुष्णता परकीयं स्वं । मुषितं सर्वमप्यदः ॥ ६८ ॥ चौर्यपापद्रुमस्येह । वधबंधादिकं फलं ॥ जायते परलोके त—त्फलं नरकवेदना ॥ ६९ ॥ दिवसे वा रजन्यां वा । स्वप्ने वा जागरेऽपि वा ॥ सशल्य इव चौर्येण । नैति स्वास्थ्यं नरः क्वचित् ॥ ७० ॥ वरं वह्निशिखापातः । सर्पास्यं चुंबितं वरं ॥ वरं हालाहलं लीढं । परस्वहरणं न तु ॥ ७१ ॥ प्रायः परस्वलुब्धस्य । निःशूका बुद्धिरेधते ॥ हंतु भ्रातॄन् पितॄन् दारान् । सुहृदस्तनयान् गुरून् ॥ ७२ ॥ परस्वं तस्करो गृह्णन् । वधबंधादि नेक्षते ॥ पयःपायीव लकुटं । बिडाल उपरि स्थितं ॥ ७३ ॥ स्वर्णादिकेऽप्यन्यधने पुरःस्थे । सिद्धा मनीषा दृषदीव येषां ॥ संतोषपीयूषरसेन तृप्ता—स्ते द्यां लभंते गृहमेधिनोऽपि ॥ ७४ ॥ अहं तु विक्रमादित्यो । जगदृणनिवारकः ॥ परोपकारैकरतो । विरतः पापकर्मणः ॥ ७५ ॥ कथं मयास्या मंजूषा । ग्राह्या नु कारणं विना ॥ राजधर्मादपि नृपा । न गृह्णंति छलं विना ॥ ७६ ॥ वृश्चिको दीर्घपृष्ठोऽपि । व्याघ्रो व्यालो भयंकरः ॥ विराधिताः दुःखदाः स्यु—र्दुष्टाः सर्वेऽपि जंतवः ॥ ७७ ॥ इति चिंतार्णवे मग्नो । विक्रमार्को

महीपतिः ॥ उपायं चिंतयामास । छलं किंचिद्विलोकयन् ॥ ७८ ॥ इतश्चाकाशमार्गेण । शुक ए-
कः समाययौ ॥ कराब्जे रत्नमंजर्याः । समुद्रं लेखमार्पयत् ॥ ७९ ॥ एकांते सा समुन्मुद्र्य । हर्ष-
पूरभृता भृशं ॥ तं लेखं वाचयामास । सखीप्रेषितमुत्तमं ॥ ८० ॥ स्वस्तिश्रीमदुज्जयिन्याः । सा दे-
वदमनाभिधा ॥ त्रंबावत्यां महापुर्यां । श्रीजयकर्णभूपतेः ॥ ८१ ॥ सुताया रत्नमंजर्या । हृदालिं-
गनपूर्वकं ॥ सप्रणयं महानंदं । सोत्कंठं कथयत्यदः ॥ ८२ ॥ अस्माकं कुशलं ह्यत्र । कुशलं वः
प्रवर्ततां ॥ अनया किंवदंत्याशु । विकास्यं चित्तवारिजं ॥ ८३ ॥ वदाम्येतन्महाकार्यं । परिणीता
वयं पुनः ॥ दैवयोगात् क्षितीशेन । विक्रमेण विवेकिना ॥ ८४ ॥ जन्मोद्वाहस्तथा मृत्युः । पूर्व-
कर्मानुगं समं ॥ नूनं भवति लोकेऽत्र । नान्यथा सखि कर्हिचित ॥ ८५ ॥ अन्यथा चिंतितं कार्यं
। दैवेन क्रियतेऽन्यथा ॥ सुप्यते मनसान्येन । प्रभातं चान्यथा भवेत् ॥ ८६ ॥ यतः—अन्नं ग-
यस्स हियए । अन्नं वाहस्स संधियसरस्स ॥ अन्नं फणिणो हियए । हयविहिणा पुणो कयं अन्नं
॥ ८७ ॥ भवितव्यं भवत्येव । नालिकेरफलांबुवत् ॥ गंतव्यं गच्छति चैव । गजभुक्तकपित्थवत् ॥
॥ ८८ ॥ सपत्नीभिः समं वासः । पुत्रस्यापि न दर्शनं ॥ पूर्यते कापि न स्वेच्छा । धिग् जन्म नृ-

पयोषितां ॥ १ ॥ घोरे वने वरं वासो । व्याघ्रव्यालसमाकुले ॥ रागरोषसमाकीर्णे । न पुनर्नृपसद्मनि ॥ २ ॥ सपत्नीत्वं पराशा च । गमने द्वाररक्षणं ॥ पितृगृहेऽपि गमन—मनोवांछा न पूर्यते ॥ ३ ॥ किं क्रियतेऽथवा कस्य । कथ्यते दुःखमांतरं ॥ यो यथा वर्त्तते कालः । स तथा सेव्यते जनैः ॥ ४ ॥ तथापि त्वं सखी प्राण—वल्लभा दुःखनाशिनी ॥ मम जीवितहंसस्य । मानसत्वं बिभर्षि च ॥ ५ ॥ निश्चलं यदि सख्यत्व—मस्ति मान्ये ममोपरि ॥ तदा त्वयापि मे स्वामी । वरणीयो नृपोऽनघे ॥ ८ ॥ यथावां स्वल्पया सुभ्रु । विद्यया गगनाध्वना ॥ विविधानीह तीर्थानि । नमावश्चैकचित्ततः ॥ ९ ॥ इति मे लिखितं पत्रे । वाच्यमेकाग्रचित्तया ॥ तत्पत्रं शतधा कृत्वा । क्षेपणीयं जले पुनः ॥ १० ॥ यथेदं कोऽपि नो वेत्ति । मंत्रं नौ प्राणवल्लभे ॥ एवंविधानि कार्याणि । गोप्यानि हि प्रयत्नतः ॥ ११ ॥ उक्तं च—षट्कर्णो भिद्यते मंत्र—श्चतुःकर्णश्च धार्यते ॥ द्विकर्णस्यैव मंत्रस्य । ब्रह्माप्यंतं न गच्छति ॥ १२॥ सखि कदापि कस्याग्रे । न कथ्यं पत्रवृत्तकं ॥ विक्रमार्को न जानाति । यथासौ धूर्त्तराजराट् ॥ १३ ॥ अधुना नष्टचर्यायां । गतोऽस्ति गुणसागरः ॥ न ज्ञायते स केनापि । रूपांतरविशेषतः ॥ १४ ॥ तस्य पादतले रेखा—स्त्यंगुष्ठांगुलिसंगता ॥

विषमा सत्रिशूलांका । पद्मयुग्माग्रगामिनी ॥ १५ ॥ अनेन चिह्नमात्रेण । त्वया ज्ञेयो नराधिपः ॥ स सर्वभाषाचतुर—श्चित्रवाक् चित्ररूपभृत् ॥ १६ ॥ वाचयित्वेति पत्रं सा । कृत्वा च जलमध्यगं ॥ हृदि चिंतातुरा जाता । सख्याः स्नेहेन विह्वला ॥ १७ ॥ किं कर्तव्यं मया ताव—द्वरद्वितयचिंतया ॥ विक्रमो नरब्रह्मात्र । कस्यात्मायं प्रदीयते ॥ १८ ॥ इति दोलागतं चेतः । संस्थाप्य स्थिरया धिया ॥ चिंतनेनाथवा किं स्याद् । यद्भाव्यं तद्भविष्यति ॥ १९ ॥ स वटस्ते सुराः पंच । ददति च हरंति च ॥ अदान पातय कल्याणि । यद्भाव्यं तद्भविष्यति ॥ २० ॥ आरोहति गिरिशिखरं । समुद्रमुल्लंघ्य याति पातालं ॥ विधिलिखिताक्षरमालं । फलति कपालं न भूपालः ॥ २१ ॥ जो जत्तियस्स अब्भस्स । भायणं तस्स तत्तियं होइ ॥ वुठेवि दोणमेहे । न डुंगरे पाणियं ठाइ ॥२२॥ भग्नाशस्य करंडपीडिततनोर्म्लानेंद्रियस्य क्षुधा । कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ॥ तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा । स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये वा बलं ॥२३॥ इति चिंताप्रपन्ना सा । हृदि चाकुलतायुता ॥ तं पत्रं स्फाटयामास । गुप्तवार्तासमन्वितं ॥ २४ ॥ जग्राहादृश्यरूपेण । तदा विक्रमभूमिराट् ॥ तत्पत्रं शतधाभूतं । कार्यार्थी कोविदोत्तमः

॥ २५ ॥ शुकराजो जगादाथ । स्वामिनि चपलं मम ॥ आदेशं देह्यहं यामि । प्रतिपत्रं समर्पय
॥ २६ ॥ सावदत् शुकराज त्वं । मदीयं द्वितीयं वपुः ॥ त्वमेव जंगमं पत्रं । तस्याश्चापि ममापि
हि ॥ २७ ॥ लेखाद्दूता भवंत्येके । अन्ये कथनकर्मठाः ॥ निःस्पृष्टार्था इह स्तोका । दृश्यंते ता-
दृशा भुवि ॥ २८ ॥ कोविदोऽसि च धन्योऽसि । कृतज्ञोऽसि शुकोत्तम ॥ तस्या मद्वचनेनैवं । वा-
च्यं वचनमुत्तमं ॥ ३१ ॥ अहमत्र स्थिता तत्र । त्वं तत्रस्था ममांतिके ॥ इति मे कथितं वाच्यं ।
त्वया तस्याः शुकोत्तम ॥ ३२ ॥ खर्जूरहारहूराम्र—राजादनोरुदाडिमैः ॥ भोजयित्वा तथा चान्यै—
र्घृतकूरविमिश्रितैः ॥ ३३ ॥ कंठाभरणसंयुक्तै—र्हाटकैर्नूपुरैस्तथा ॥ संभूष्य परया भक्त्या । तं कीरं
सा व्यसर्जयत् ॥ ३४ ॥ कृत्वा प्रणामं तस्याश्च । लात्वा वचनमुत्तमं ॥ शुकराजः स्वमार्गेण । च-
लितो मालवंप्रति ॥ ३५ ॥ ततो दूतो जगादैनां । वेला लगति भामिनि ॥ रात्रिः स्तोका घनो
मार्गो । गंतव्योऽस्ति शुभानने ॥ ३६ ॥ अथ तेनैव दंडेन । मंजूषासहितां च तां ॥ यावच्चोत्तार-
यामास । स दूतो नरब्रह्मणः ॥ ३७ ॥ तावत् श्रीविक्रमादित्यः । साहसैकशिरोमणिः ॥ गवाक्षद्वार-
मागत्य । मंजूषां तु पराकरोत् ॥ ३८ ॥ विलोकयत्यसौ याव—त्तावत्पेटां न पश्यति ॥ यन्मध्येऽ-

स्ति सहस्रांशु—किरणैर्निर्मितं पटु ॥ ३९ ॥ पंचरूपं विचित्रं च । पंचवर्णैः प्रपंचितं ॥ वर्षाशीतोष्णताखेद—वारकं जयकारकं ॥ ४० ॥ देवार्पितं बहुगुणं । छत्राकारं सुशीतलं ॥ वस्त्रं यस्य गुणान् वक्तुं । सहस्राक्षोऽपि न क्षमः ॥ ४१ ॥ घटितं जातरूपेण । रत्नमौक्तिकसंयुतं ॥ अष्टोत्तरशतघुर्घूर—शोभितं चाभितो हि तत् ॥ ४२ ॥ चतुर्भिः कलापकं ॥ अन्यानि बहुमूल्यानि । रत्नान्याभरणानि च ॥ तव संति तत्तां मुक्त्वा । गम्यते किं नु कोविद ॥ ४३ ॥ पाणिभ्यां रज्जुमादाय । पुनर्वातायने चट ॥ विलोक्यानय मंजूषां । गम्यते चपलं यतः ॥ ४४ ॥ मा भैषीर्भुवने कोऽपि । नास्ति यस्य भयं तव ॥ सोऽवदन्मम सिंहस्य । शृगालेभ्यो भयं कुतः ॥ ४५ ॥ शतसहस्रयोद्धारो । मानवा ये मदोध्धुराः ॥ देवा व्यंतरदैत्याश्च । मां जेतुं खलु नो ह्यलं ॥ ४६ ॥ इति तद्वचसा रुष्टो । विक्रमोऽवक्रविक्रमः ॥ वक्रं शस्त्रं करे धृत्वा । स्थितस्तद्वर्त्मनि तदा ॥ ४७ ॥ स दूतश्चटितो रज्जू—मादाय पाणिना द्रुतं ॥ पेटां गवेषयामास । गवाक्षे गर्वपूरितः ॥ ४८ ॥ सर्वत्रालोकयत् पेटां । सावधानतयाथ सः ॥ यावन्न लभते ताव—द्विक्रमेणेति भाषितः ॥ ४९ ॥ कस्त्वं किं कारणं चात्र । केन कार्येण चागतः ॥ कस्मै स्वस्तिप्रदानाय । कस्माद्देशादिहागतः ॥

॥ ५० ॥ कस्य दूतोऽथवा कस्मिन् । स्थाने गच्छसि मानव ॥ व्यक्तं वद ममाग्रे त्व–मसि रात्रिंचरोऽथवा ॥ ५१ ॥ इत्युक्तः स क्रुधाध्मातो । भृकुटीभीषणाननः ॥ मदत्रयेण मत्तांगो । महीशंप्रत्यवोचत ॥ ५२ ॥ मत्तस्तु मदिरामत्तः । प्रमत्तो धनगर्वितः ॥ उन्मत्तः स्त्रीमदांधश्च । मदत्रयमुदाहृतं ॥ ५३ ॥ कन्यकुब्जनरेंद्रस्य । भृत्योऽहं नरवर्मणः ॥ यस्य प्रतापदावाग्नौ । पतंगाः सर्वभूमिपाः ॥ ५४ ॥ स रुष्टो यमरूपोऽस्ति । हृष्टः कल्पद्रुमोपमः ॥ तस्य प्रतिशरीरोऽस्मि । गर्विष्टोऽहं पराक्रमी ॥ ५५ ॥ वराक रंक किं मे त्वं । पृच्छस्यागमकारणं ॥ जंबूको मृगराजस्य । मुधा स्पर्धां करोति किं ॥ ५६ ॥ रे चौरार्पय पेटां मे । कथं मर्तुं च वांछसि ॥ मृगेंद्रस्य समीपे मे । त्वं खलु मृगपोतकः ॥ ५७ ॥ इति गर्वयुतं तस्य । दूतो वचनमब्रवीत् ॥ अर्कतूलनिभं जातं । नृपचेतसि तत्परं ॥ ५८ ॥ इत्युक्त्वा विरते तस्मिन् । विक्रमोऽवग्नृपोत्तमः ॥ स्वास्याद्यः स्वगुणान् वक्ति । ज्ञेयोऽसावधमाधमः ॥ ६० ॥ उक्तं च—न सौख्यसौभाग्यकरं जनानां । स्वास्येन वै स्वीयगुणप्रकाशनं ॥ गुणास्तु राजंति परोदिता हि । संसत्सु मौनाढ्यगुणोज्ज्वलानां ॥ ६१ ॥ गुणिनि गुणज्ञो रमते । नाऽगुणिनि गुणयुक्तस्य परितोषः ॥ अलिरेति वनात्कमलं । न दर्दुरस्त्वेकवारमपि ॥

॥ ६२ ॥ गुणा गुणज्ञेषु गुणीभवंति । ते निर्गुणं प्राप्य भवंति दोषाः ॥ सुस्वादतोयाः प्रवहंति न-
द्यः । समुद्रमासाद्य भवंत्यपेयाः ॥ ६३ ॥ नागुणी गुणिनं वेत्ति । गुणी गुणिषु मत्सरी ॥ गुणी
च गुणरागी च । विरलः सरलो जनः ॥ ६४ ॥ पुरा श्रेष्ठी वराकोऽभू—द्वसंतपुरपत्तने ॥ पराक्र-
मेण तत्साम्य—स्त्वं मे चेतसि वर्तसे ॥ ६५ ॥ भोजनावसरेऽन्येद्यु—र्भर्जितः पर्पटः स्त्रिया ॥
श्रेष्ठिना च समुद्धाय । मुष्टिना शतधा कृतः ॥ ६६ ॥ श्रेष्ठिनो लवणं सापि । चोत्तारयति नर्मतः
॥ हृदि विषादमापन्ना । दृष्ट्वा पत्युः पराक्रमं ॥ ६७ ॥ भासि तथाविधस्त्वं मे । यथा स श्रेष्ठिनंदनः
॥ नृपोक्तमिति श्रुत्वा स । करवालं करेऽकरोत् ॥ ६८ ॥ स्मर चौरेष्टदेवं ते । तृणं दंतैर्गृहाण वा
॥ नत्वा मत्पादौ रक्ष स्व—मन्यथा मृत्युमाप्स्यसि ॥ ७१ ॥ इति तद्वचसः प्रांते । विक्रमेण हतो
हृदि ॥ पपात सहसा भूमौ । जीवान्मुक्तश्च वेगतः ॥ ७२ ॥ विक्रमार्कस्ततस्तस्य । रूपं कृत्वा यथा-
तथं ॥ गृहीत्वा पेटिकां तां च । रज्ज्वाधश्च समागतः ॥ ७३ ॥ पेटीपाणिं नरं दृष्ट्वा । जगाद रत्न-
मंजरी ॥ आरुह्य गम्यते करभीं । घटीयोजनगामिनीं ॥ ७४ ॥ उष्ट्रिकां सज्जीकृत्यासौ । तां च-
टाप्य सपेटिकां ॥ त्वरितं चालयामास । विक्रमो मालवंप्रति ॥ ७५ ॥ रत्नमंजर्यथोऽवादी—न्मार्गेऽ-

यं पूर्वदिग्गतः ॥ नरवर्मपुरं याम्यां । किं गछसि दिगंतरं ॥ ७६ ॥ तयेत्युक्ते नृपः प्राह । रोषारु-
णविलोचनः ॥ अयं मार्गः सुखग्राह्यो । दुःखग्राह्यः परः खलु ॥ ७७ ॥ पूर्वयाम्यदिशोः किं ते ।
वर्तते नु प्रयोजनं ॥ यत्र यात्युष्ट्रिका ह्येषा । तत्रारूढाध्वनि व्रज ॥ ७८ ॥ अथ नृपंप्रति प्राह ।
सा दूना रत्नमंजरी ॥ किं नु त्वया गृहीतास्मि । कृत्वाहं क्रयविक्रयं ॥ ७९ ॥ नूनं त्वं च वदन्नेवं ।
न भृत्यो नरवर्मणः ॥ आराधयंति यद्भृत्याः । स्वामिवत्स्वामिवल्लभां ॥ ८० ॥ विराधयंति ये वा-
चा । भृत्याः स्वस्वामिवल्लभां ॥ तेषां तु नरके घोरे । वासो भवति निश्चितं ॥ ८१ ॥ चालयस्वो-
ष्ट्रिकां याम्यां । नरवर्मपुरंप्रति ॥ नृपः प्रोवाच हे भद्रे । चल त्वं मौनधारिणी ॥ ८२ ॥ कः स्वा-
मी नरवर्मा ते । को भृत्यो नरवर्मणः ॥ स्वेछाचारी नभोगामी । द्यूतकारोऽस्मि निर्दयः ॥ ८३ ॥
इति तस्य वचः श्रुत्वा । तप्तलोहोपमं हृदि ॥ विललाप विषण्णा सा । गद्गदस्वरभाषिणी ॥ ८४ ॥
भयाकुला भयभ्रांता । भाग्यहीनोभयच्युता ॥ हा मुधा दुष्टदैवेन । पातिताहं दरोदधौ ॥ ८५ ॥
विलापमिति कृत्वा सा । जगाद नरनायकं ॥ कुत्र गंतासि मां लात्वा । सपेटां वद धूर्तक ॥ ८६ ॥
सोऽप्यधात् शृणु राजेंद्र—पुत्रिके कमलानने ॥ पुराकृतेन पापेन । पतिता त्वं करे मम ॥ ८७ ॥

अहं हारितसर्वस्वो । मुक्त्वा भार्यां निजे पणे ॥ तन्मोटनाय चायात—स्त्रंभावत्यां धनापहः ॥८८॥ दास्यामि द्यूतकारेभ्यः । पेटामध्यस्थितं धनं ॥ त्वां च दत्वा निजां भार्यां । मोचयिष्यामि मानिनि ॥ ८९ ॥ सावदत्कास्ति ते भार्या । भाग्यहीनस्य भो वद ॥ सोऽवक्कंटकभिल्लस्य । समीपे त्वधमेऽस्ति सा ॥ ९० ॥ पतीयसि यदि त्वं मां । तदा त्वामेव गेहिनीं ॥ करोमि द्यूतकारोऽहं । त्यक्त्वा तां शुभ्रलोचने ॥ ९१ ॥ तत् श्रुत्वा चिंतयामास । कुमारी रत्नमंजरी ॥ हा दैवाद् द्यूतकारोऽयं । कथं मे मिलितः पतिः ॥ ९२ ॥ उक्तं च—जूआरीघर रीधडी । मांकडकंठे हार ॥ घेलीमाथे बेडलुं । रहे केटली वार ॥ ९३ ॥ दमयंती नलनरवरें । राणी तजी निरधार ॥ पांडव पांचाली तजी । ए जुगारी आचार ॥ ९४ ॥ द्यूतं सदैव व्यसनं हि यस्य । आरक्तकाणां लकुटप्रपाताः ॥ सदैव तस्योपरि संपतंति । हा द्यूतकारं शतधा धिगस्तु ॥ ९८ ॥ इति ध्यात्वा विषण्णा सा । जगाद नृपशेखरं ॥ अहो मे प्राक्कृतं कर्म । फलभोगे समागतं ॥ ९९ ॥ उदयति यदि भानुः पश्चिमायां दिशायां । विकसति यदि पद्मं पर्वताग्रे शिलायां ॥ प्रचलति यदि मेरुः शीततां याति वह्नि—स्तदपि न चलतीयं भाविनी कर्मरेखा ॥ ८०० ॥ कर्मणो हि प्रधानत्वं । किं कुर्वंति

शुभा ग्रहाः ॥ वशिष्ठदत्तलग्नोऽपि । रामः प्रव्रजितो वने ॥ २ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्मांडभांडोदरे । विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे ॥ रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः । सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ३ ॥ क्व च हरिचंद्रः क्वास्य जदास्यं । क्व पृथुसूनुः क्व च नटलास्यं ॥ क्व च वनकष्टं क्वासौ रामः । कट रे विकटो विधिपरिणामः ॥ ४ ॥ किं करोमि क्व गच्छामि । कस्याग्रे पूत्करोम्यहं ॥ पितुर्गृहं सखीस्नेहो । नरवर्मा त्रयं गतं ॥ ६ ॥ एकभ्रष्टो भवत्येकः । परश्चोभयभ्रष्टकः ॥ अहं तु सर्वथा भ्रष्टा । जाता स्वकर्मदोषतः ॥ ७ ॥ पितुर्गृहं गतं चाद्यं । कन्यकुब्जाधिपो गतः ॥ सख्युक्तो विक्रमादित्यो । दूरस्थः सोऽपि सांप्रतं ॥ ८ ॥ मा चिंतयसि रे चित्त । खेदं किंचिन्मनागपि ॥ ललाटे लिखितं यच्च । भविष्यति तदेव हि ॥ ९ ॥ यो मे गर्भगतस्यापि । वृत्तिं कल्पितवान् खलु ॥ स एव सांप्रतं नूनं । चिंतां मे हि विधास्यति ॥ १० ॥ नृपः प्रोवाच हे भद्रे । का सखी तव वर्तते ॥ उक्तो ययास्ति ते चित्त—चौरको विक्रमाधिपः ॥ ११ ॥ इत्युक्ते सुमुखी प्राह । द्यूतकार वचः शृणु ॥ महाविद्यावती श्रेष्ठा । नारीवृंदोत्तमास्ति या ॥ १२ ॥ देवदानवगंधर्वै—र्मान्यते नितरां हि या ॥ सा देव-

दमनीनाम्ना । विक्रमार्कस्य गेहिनी ॥ १३ ॥ इति वार्तां प्रकुर्वाणौ । राजकन्यावनीप्रभू ॥ देशसीमां व्यतिक्रम्य । प्रापतुः पावकं गिरिं ॥ १४ ॥ उद्याने तत्पुरासन्ने । नंदनोद्यानसन्निभे ॥ करभीं स्थापयामास । प्रभातसमये नृपः ॥ १५ ॥ देवताराधनं कृत्वा । नमस्कृत्य गुरून् तथा ॥ नृपो जिनं हृदि ध्यात्वा । कृत्यं प्राभातिकं व्यधात् ॥ १६ ॥ दृष्ट्वा तत्र स चायातं । चारणश्रमणद्वयं ॥ हर्षप्रकर्षपूरेण । त्रिधाशुद्ध्या ननाम तत् ॥ १७ ॥ उपविश्य तथापृच्छ—न्मुनी राजा स हर्षितः ॥ कुतो युवां समायातौ । क तीर्थे च गमिष्यथः ॥ १८ ॥ यौवने च कथं कस्मा—द्भवद्भ्यां व्रतमादृतं ॥ कथं वैराग्यमापन्नं । संसारार्णवतारकं ॥ १९ ॥ उक्तं च—शैशवेऽभ्यस्तविद्याश्च । यौवने विषयेष्विणः ॥ वार्धके धृतचारित्राः । संतो हि विदिता भुवि ॥ २० ॥ प्रथमे वयसि नाधीतं । द्वितीये नार्जितं धनं ॥ तृतीये नार्जितो धर्म—श्चतुर्थे किं करिष्यति ॥ २१ ॥ मुनिर्जगाद भो राजन् । सत्यमुक्तं त्वया पुनः ॥ लौकिकव्यवहारोऽयं । न शास्त्रोक्तमिदं वचः ॥ २२ ॥ उक्तं च—बाल्य एव चरेद्धर्म—मनित्यं खलु जीवितं ॥ फलानामिव पक्कानां । देहनाशो हि निश्चितः ॥ २४ ॥ यतः—संझारागजलबुब्बुवोवमे । जीविए य जलबिंदुचंचले ॥ जुव्वणे य नईवेगसन्निभे । तहवि

जीव किमयं न बुझसि ॥ २५ ॥ जअणं जुवणकमणं । अजमणं एगदिवसमझंमि ॥ सूरस्सवि तिन्नि गई । का गणणा इअरलोअस्स ॥ २६ ॥ यत्प्रातस्तन्न मध्याह्ने । यन्मध्याह्ने न तन्निशि ॥ निरीक्ष्यते भवेऽस्मिन ही । पदार्थानामनित्यता ॥ २७ ॥ शरीरं देहिनां सर्व—पुरुषार्थनिबंधनं ॥ प्रचंडपवनोध्धूत—घनाघनविनश्वरं ॥ २८ ॥ कल्लोलचपला लक्ष्मीः । संगमाः स्वप्नसन्निभाः ॥ वातव्यतिकरोत्क्षिप्त—तूलतुल्यं च यौवनं ॥ ३० ॥ जीयं जलबिंदुसमं । संपत्तीउ तरंगलोलाउ ॥ सुवणयसमं च पिम्मं । को धम्मविलंबणं कुणइ ॥ ३१ ॥ अनित्यानि शरीराणि । विभवो नैव शाश्वतः ॥ धर्मरत्नेन यो हीनः । स हीनः सर्ववस्तुषु ॥ ३२ ॥ अहो संसारजालस्य । विपरीतः क्रियाक्रमः ॥ क्षणेन दृश्यते रम्य—मरम्यं भवति क्षणात ॥ ३३ ॥ भवारण्यं मुक्त्वा यदि जिगमिषुर्मुक्तिनगरीं । तदानीं मा कार्षीर्विषयविषवृक्षेषु वसतिं ॥ यतश्छायाप्येषां प्रथयति महामोहमचिरादयं जंतुर्यस्मात्पदमपि न गंतुं प्रभवति ॥ ३४ ॥ संसारासारतां ज्ञात्वा । राज्यं त्यक्त्वा महाद्भुतं ॥ सर्वसंगपरित्यागा—दस्माभिर्व्रतमादृतं ॥ ३५ ॥ चारित्रेण विहीनः । श्रुतवानपि नो प्रशस्यते सद्भिः ॥ शीतलजलसंपूर्णः । कुलजैश्चांडालकूप इव ॥ ३६ ॥ संसारमार्गे भ्रमतोऽस्य जंतोः । पूर्वा-

र्जितानल्पकुकर्मयोगात् ॥ एकः खलु तीर्थकरप्रणीतो । धर्मो हि ज्ञेयोऽत्र शरण्यरूपः ॥ ३७ ॥ यच्च पृष्टं त्वया भूप । कुतो युवां समागतौ ॥ अस्मत्स्थानस्वरूपं त्वं । सावधानतया शृणु ॥ ३८ ॥ देशा हि लोकविख्याता । भ्रमंति यत्र देहिनः ॥ यथा बंगतिलंगांड्र—कलिंगकन्यकुब्जकाः ॥ ३९ ॥ तत्वतो मे शृणु राजन् । भवागमनकारणं ॥ निगोदानंतकायानां । मध्ये पूर्वमहं स्थितः ॥ ४० ॥ स द्विधानंतकायोऽपि । सूक्ष्मबादरभेदतः ॥ सूक्ष्मो द्विधा ह्यपर्याप्तः । पर्याप्तोऽपि भवेत्क्रमात् ॥ ४१ ॥ अपर्याप्तो द्विधा ज्ञेयो । जघन्योत्कृष्टभेदतः ॥ एवं चतुर्धा सूक्ष्मश्च । निगोदोऽनंतकायकः ॥ ४२ ॥ एवं स्थितिविशेषेण । बादरोऽपि चतुर्विधः ॥ तत्र भ्रांतः क्रमेणाहं । मरणोत्पत्तिप्रयोगतः ॥ ४४ ॥ अनंतकालं तत्राहं । भ्रांतः स्थितिविशेषतः ॥ सहमानो बहुधा छेद—भेदनादिपरंपरां ॥ ४५ ॥ द्वात्रिंशद्भेदतः ख्याताः । सिध्धांतेऽनंतकायकाः ॥ शूच्यग्रेऽनंतजीवानां । तत्र स्थानं प्रवर्तते ॥ ४६ ॥ अथ जीवा द्विधा ज्ञेया । मुक्तसंसारिभेदतः ॥ अनादिनिधनाः सर्वे । ज्ञानदर्शनलक्षणाः ॥ ४७ ॥ मुक्ता ह्येकस्वभावाः स्यु—र्जन्मादिक्लेशवर्जिताः ॥ अनंतदर्शनज्ञान—वीर्यानंदमयाश्च ते ॥ ४८ ॥ संसारिणो द्विधा जीवा—स्त्रसस्थावरभेदतः ॥ द्वावपि तौ द्विधा पर्या—प्तापर्याप्तविशेषतः ॥ ४९ ॥

पर्याप्तयस्तु षडिमाः । पर्याप्तत्वनिबंधनं ॥ आहारो वपुरक्षाणि । प्राणा भाषा मनोऽपि च ॥ ६० ॥
स्युरेकाक्षविकलाक्ष—पंचाक्षाणां शरीरिणां ॥ चतस्रः पंच षम् वापि । पर्याप्तयो यथाक्रमात् ॥६१॥
एकाक्षाः स्थावरा भूम्यप्—तेजोवायुमहीरुहः ॥ तेषां तु पूर्वे चत्वारः । स्युः सूक्ष्मा बादरा अपि
॥ ६२ ॥ प्रत्येकाः साधारणाश्च । द्विप्रकारा महीरुहः ॥ प्रत्येका बादरा एवं । ते भवंति चतुर्विधाः
॥ ६३ ॥ पर्याप्तापर्याप्ताश्चेति । जघन्योत्कृष्टभेदतः ॥ साधारणा द्विधा ज्ञेयाः । सूक्ष्मबादरसंज्ञया ॥
॥ ६४ ॥ पर्याप्तापर्याप्तोत्कृष्ट—जघन्यस्थितितोऽष्टधा ॥ एवमेकेंद्रियभेदा—श्चत्वारिंशच्चतुर्युताः ॥
॥ ६५ ॥ तेष्वेकेंद्रियकेष्वेवं । भ्रांतोऽहं बहुवारकं ॥ प्रेरितः कर्मराजेन । सहमानो विविधापदं ॥
॥ ६६ ॥ त्रसा द्वित्रिचतुःपंचें—द्रियत्वेन चतुर्विधाः ॥ तत्र पंचेंद्रिया द्वेधा । संज्ञिनोऽसंज्ञिनोऽपि
च ॥ ६७ ॥ शिक्षोपदेशालापान् ये । जानंते तेऽत्र संज्ञिनः ॥ संप्रवृत्तमनःप्राणा—स्तेभ्योऽन्ये
स्युरसंज्ञिनः ॥ ६८ ॥ स्पर्शनं रसनं घ्राणं । चक्षुः श्रोत्रमितींद्रियं ॥ तस्य स्पर्शो रसो गंधो । रूपं
शब्दश्च गोचरः ॥ ६९ ॥ द्वींद्रियाः कृमयः शंखा । गंडूपदा जलौकसः ॥ कपर्दशुक्तिकाद्याश्च ।
विविधाः कृमयो मताः ॥ ७० ॥ यूका मत्कुणमत्कोट—लिक्षाद्यास्त्रींद्रिया मताः ॥ पतंगमक्षिकाभृं-

ग—दंशाद्याश्चतुरिंद्रियाः ॥ ७१ ॥ तिर्यग्योनिभवाशेषा । जलस्थलखचारिणः ॥ नारका मानवा
देवाः । सर्वे पंचेंद्रिया मताः ॥ ७२ ॥ मनोभाषाकायबल—त्रयमिंद्रियपंचकं ॥ आयुरुच्छ्वासनिः-
श्वासा । इति प्राणा दश स्मृताः ॥ ७३ ॥ सर्वजीवेषु देहायु–रुच्छ्वासा इंद्रियाणि च ॥ विकला-
संज्ञिनां भाषा–पूर्णानां संज्ञिनां मनः ॥ ७४ ॥ उपपातभवा देवा । नारका गर्भजाः पुनः ॥ ज-
रायुपोतांडभवाः । शेषाः संमूर्छनोद्भवाः ॥ ७५ ॥ संमूर्छिनो नारकाश्च । जीवाः पापा नपुंसकाः ॥
देवाः स्त्रीपुंसवेदाः स्यु–र्वेदत्रयजुषः परे ॥ ७६ ॥ सर्वे जीवा व्यवहार्य–व्यवहारितया द्विधा ॥ सू-
क्ष्मा निगोदा एवांत्या–स्तेभ्योऽन्ये व्यवहारिणः ॥ ७७ ॥ इह लक्षाणि योनीना—मशीतिश्चतुरु
त्तरा ॥ सर्वज्ञोक्ता हि शास्त्रेषु । सर्वेषामपि जन्मिनां ॥ ७८ ॥ एकाक्षा बादराः सूक्ष्माः । पंचाक्षाः
संज्ञ्यसंज्ञिनः ॥ सद्वित्रिचतुरक्षाश्च । पर्याप्ता इतरेऽपि च ॥ ८२ ॥ एतानि जीवस्थानानि । जिनो-
क्तानि चतुर्दश ॥ मार्गणा अपि तावंत्यो । ज्ञेयास्ता नामतो यथा ॥ ८३ ॥ गतींद्रियवपुर्योग—
वेदज्ञानक्रुधादयः ॥ संयमाहारदृग्लेश्या–भव्यसम्यक्त्वसंज्ञिनः ॥ ८४ ॥ मिथ्यादृष्टिसास्वादन—स-
म्यग्मिथ्यादृशोऽपि च ॥ अविरतिसम्यग्दृष्टि–र्विरतोऽविरतोऽपि च ॥ ८५ ॥ प्रमत्तश्चाप्रमत्तश्च । नि-

वृत्तिबादरस्तथा ॥ अनिवृत्तिबादरश्चा—पि सूक्ष्मसंपरायकः ॥ ૮૬ ॥ ततः प्रशांतमोहश्च । क्षीणमोहश्च योगवान् ॥ अयोगवानिति गुण—स्थानानि स्युश्चतुर्दश ॥ ૮૭ ॥ मिथ्यादृष्टिर्भवेन्मिथ्या—दर्शनस्योदये सति ॥ गुणस्थानत्वमेतस्य । भद्रकत्वाद्यपेक्षया ॥ ૮૮ ॥ मिथ्यात्वस्यानुदयेऽनं—तानुबंध्युदये सति ॥ सास्वादनसम्यग्दृष्टिः । स्याडुत्कर्षात् षडावलिं ॥ ૮૯ ॥ सम्यक्त्वमिथ्यात्वयोगा—न्मुहूर्तं मिश्रदर्शनं ॥ अविरतसम्यग्दृष्टि—रप्रत्याख्यानकोदये ॥ ૯૦ ॥ विरताविरतस्तु स्यात् । प्रत्याख्यानोदये सति ॥ प्रमत्तः संयमी प्राप्त—संयमो यः प्रमाद्यति ॥ ૯૧ ॥ सोऽप्रमत्तः संयतो यः । संयमी न प्रमाद्यति ॥ उभावपि परावृत्त्या । स्यातामंतर्मुहूर्त्ततः ॥ ૯૨ ॥ कर्मणां स्थितिघातादी—नपूर्वान् कुरुते यतः ॥ तस्मादपूर्वकरणः । क्षपकः शमकश्च सः ॥ ૯૩ ॥ यद्बादरकषायाणां । प्रविष्टानां मिथोमिथः ॥ परिणामा निवर्तंते । निवृत्तिबादरोऽपि सः ॥ ૯૪ ॥ परिणामा निवर्तंते । मिथोमिथः प्रयत्नतः ॥ अनिवृत्तिबादरः स्यात् । क्षपकः शमकोऽपि सः ॥ ૯૫ ॥ लोभाभिधः संपरायः । सूक्ष्मकिट्टीकृतो यतः ॥ स सूक्ष्मसंपरायः स्यात् । क्षपकः शमकोऽपि सः ॥ ૯૬ ॥ अथोपशांतमोहः स्या—न्मोहस्योपशमे सति ॥ मोहस्य तु क्षये जाते । क्षीणमोहः प्रवक्ष्यते ॥ ૯૭ ॥

सयोगकेवली घाति—क्षयादुत्पन्नकेवलः ॥ योगानां तु क्षये जाते । स एवायोगकेवली ॥ ९८ ॥
इति संसारमार्गोऽयं । भव्यस्य भवसागरे ॥ गतागतं प्रकुर्वंति । यत्र संसारिणः समे ॥ ९९ ॥
पुद्गलानां परावर्ता । बहवोऽपि मया कृताः ॥ सद्भाग्ययोगतः सम्यग् । तत्वं प्राप्तं तथाधुना ॥९००॥
पंचेंद्रियत्वं मानुष्य—मार्यं देशं वरे कुले ॥ जन्म लब्ध्वा बोधिबीजं । प्राप्तं चारित्रमुत्तमं ॥ १ ॥
त्यक्त्वा राज्यं धनं धान्यं । ज्ञात्वा संसारचेष्टितं ॥ गुरोरनुज्ञया तीर्था—न्नमामि वसुधास्थितान् ॥२॥
तीर्थानामुत्तमं तीर्थं । सिद्धिदं सर्वकामदं ॥ श्रीशत्रुंजयनामास्ति । मोक्षमार्गप्रकाशकं ॥ ३ ॥ अ-
स्यामेवावसर्पिण्या—मयोध्यानगरे शुभे ॥ ईक्ष्वाकुवंशसंजातो । युगलाचारवारकः ॥ ४ ॥ श्रीम-
न्नाभिकुलोत्तंसो । विनीतापुरनायकः ॥ पंचशतधनु कायः । स्वर्णाभो वृषलांछनः ॥५॥ चतुरशीति-
लक्षाणां । पूर्वाणां मध्यतस्तथा ॥ त्रिंशतिपूर्वलक्षाणि । कुमारत्वे जिनः स्थितः ॥ ६ ॥ त्रिषष्टिल-
क्षपूर्वान् स । राज्यं कृत्वा महर्द्धिकः ॥ दानं सांवत्सरं दत्वा । जग्राह चरणं वरं ॥७॥ वर्षांते स्वी-
यपौत्रस्य । गृहे कृत्वा च पारणं ॥ गते वर्षसहस्रे च । केवलज्ञानमाश्रितः ॥ ८ ॥ उत्पन्ने केवल-
ज्ञाने । देशनायां जगद्गुरोः ॥ प्रव्रजितं भरतस्य । पुत्राणां शतपंचकं ॥ ९ ॥ सप्तशती च पौत्रा-

णां । दीक्षिता भरतस्य तु ॥ अन्येऽपि बहवो भव्या । लेभिरे चरणं वरं ॥ १० ॥ विहरन् स्वाम्य-
योध्यायां । गणेशैः परितो वृतः ॥ विश्वविश्वजनानंद—दायकः समुपागतः ॥ ११ ॥ जगाम भर-
तो नाथं । वंदितुं विनयान्वितः ॥ पुंडरीकं मुनिं दृष्ट्वा । तत्र दुर्बलतां गतं ॥ १२ ॥ युग्मं ॥ पप्र-
च्छ स्वामिनं भक्त्या । कथं मे दुर्बलः सुतः ॥ स्वामी तु कथयामास । खिद्यतेऽयं सुतस्तव ॥ १३ ॥
भरतोऽप्यवदत्स्वामिन् । गृहीतं व्रतमुत्तमं ॥ शत्रौ मित्रे समे ज्ञाते । कथं खेदोऽस्य जायते ॥१४॥
जगाद भरतं स्वामी । लक्षैरेकोत्तरैर्भवैः ॥ निबद्धं कर्म सत्तायां । स्थितं ह्युदयमागतं ॥ १५ ॥
भरतः स्वामिनं प्राह । केनेदं तपसा विभो ॥ याति कर्म क्षयं दत्वा । सिद्धिं शाश्वतसौख्यदां ॥
॥ १६ ॥ जगदीशो जगादाथ । श्रीशत्रुंजयपर्वते ॥ संलेखनां करोत्येष । तदा यायात् शिवं द्रुतं
॥१७॥ श्रुत्वेति पुंडरीकोऽथ । मुनिभिः पंचकोटिभिः ॥ युतो गतस्तत्र तीर्थे । मुक्तिं प्राप्तोऽविनश्व-
रां ॥ १८ ॥ उक्तं च—पल्योपमसहस्रैकं । ध्यानाल्लक्षमभिग्रहात् ॥ दुःकर्म क्षीयते शत्रुं—जये
चेति जिनोऽवदत ॥ २० ॥ शत्रुंजये गिरौ दृष्टे । ह्यसंख्यभवपातकं ॥ नाशं प्रयाति गारुड—मं-
त्रेणेवाहिजं विषं ॥ २१ ॥ पुंडरीकमुखा यत्र । मुनयः पंचकोटयः ॥ सिद्धा नमिविनम्याद्या । जि-

तात्मानो द्विकोटयः ॥ २२ ॥ द्राविडो वालिखिल्लश्च । साधुर्निर्दशकोटिभिः ॥ प्रद्युम्नः शांबकः सिद्धौ । सार्धं सार्धत्रिकोटिभिः ॥ २३ ॥ पांडवा नारदा मुक्ताः । शुकसेलगसूरयः ॥ निर्वृत्तो भरतो रामो—ऽपरे दशरथात्मजाः ॥ २४ ॥ को मीयेदंगुलैर्व्योम । को वा नीरं समुद्रजं ॥ श्रीशत्रुंजयसंसिद्धान् । गणयेदमरोऽपि कः ॥ २५ ॥ अस्मिन् शत्रुंजये तीर्थे । राजन् यात्रा मया कृता ॥ अथाहं सर्वशृंगेषु । यात्रां कर्तुमिहागतः ॥ ३० ॥ यथा रैवतशृंगं च । तथायं पावको गिरिः ॥ सिद्धक्षेत्रस्य ज्ञातव्यं । सिद्धानां स्थानमुत्तमं ॥ ३१ ॥ उक्तं च—रामसूआ दुन्नि जणा । लाडनरिंदाय पंचकोडीउ ॥ पावाइ सेलसिहरे । सिद्धिं गया ते नमंसामि ॥ ३२ ॥ मुनी तीर्थे च नत्वाथ । चचालाग्रे नृपोत्तमः ॥ नदीगिरिगुहाकीर्णां । प्राप्तो भीमां महाटवीं ॥ ३३ ॥ वराहव्याघ्रसिंहादि—दुष्टव्यालैकशृंगिकैः ॥ घूकघूत्कारवृंदैश्च । सा बभूवातिभीषणा ॥ ३४ ॥ तत्र क्षुधापिपासार्त्तो । रोषारुणविलोचनः ॥ मनुष्यगंधमाघ्राय । सिंह एकः समाययौ ॥ ३५ ॥ सिंहनादं ततः श्रुत्वा । भयार्त्ता रत्नमंजरी ॥ जगादोच्चैः समायातं । हा कष्टं प्राणनाशकं ॥ ३६ ॥ रक्षकः कोऽपि नास्त्यत्र । महाटव्यां महाभटः ॥ स्त्रीहरणे हि शूरोऽयं । कातरः सिंहमारणे ॥ ३७ ॥ इति मर्मवचः श्रुत्वा ।

विक्रमार्को महीपतिः ॥ बाणमारोपयामास । कोदंडे शब्दवेधकं ॥ ३८ ॥ संस्थाप्य करभीं सोऽथ । मुमोच धनुषः शरं ॥ शरेण विद्धः सिंहोऽपि । पपात सहसा भुवि ॥ ३९ ॥ विक्रमो विक्रमी भूप—स्ततोऽवग् रत्नमंजरीं ॥ सिंहदेहस्थितं बाणं । भयं त्यक्त्वा समानय ॥ ४० ॥ गता सा कंपमानांगी । पराधीना कुमारिका ॥ दृष्ट्वा मृगारिं निर्जीवं । बाणं लात्वा समाययौ ॥ ४३ ॥ दत्वा नृपाय तं बाणं । तत्रस्था सा व्यचिंतयत् ॥ द्वात्रिंशल्लक्षणोपेतः । कोऽप्ययं सुभगाग्रणीः ॥ ४४ ॥ कदाचिद्विक्रमो राजा । भाग्यसंयोगतो भवेत् ॥ तदा मे फलितं बीजं । पूर्वपुण्यद्रुसंभवं ॥ ४५ ॥ इति चिंतातुरां तां स । समादाय नृपोत्तमः ॥ गिरिमार्गमतिक्रम्य । प्राप रत्नपुरं पुरं ॥ ४६ ॥ तस्योद्याने विषण्णः स । बध्ध्वा करभिकां तरौ ॥ क्षणमेकं तु सुष्वाप । तले तस्यैव शीतले ॥ ४७ ॥ करोम्यहं क्षणं निद्रां । सावधानतया त्वया ॥ चिंतनीयोष्ट्रिका तावत् । पुनः पेटासमन्विता ॥ ४८ ॥ मृगेंद्रमारणं कस्य । न कथ्यं रत्नमंजरि ॥ त्वया चात्रोपवेष्टव्यं । यावन्निद्रां करोम्यहं ॥ ४९ ॥ युग्मं ॥ इत्युक्त्वा सोऽथ सुष्वाप । भयार्ता रत्नमंजरी ॥ वनं विलोकयामास । श्वापदध्वनिसंकुलं ॥ ॥ ५० ॥ अथ निद्रावशं प्राप्तं । विलोक्य वसुधाधिपं ॥ पदोर्विलोकयामास । लक्षणानि नृपस्य

सा ॥ ५१ ॥ अंगुष्ठमध्यतो रेखां । पादमध्यानुगामिनीं ॥ शंखचक्रांकुशयुतां । दृष्ट्वा चित्ते चमत्कृता ॥ ५२ ॥ असौ नूनं विक्रमार्को । मालवेशो महाबलः ॥ सखीप्रोक्तः समस्त्येव । लक्षणैश्चोपलक्षितः ॥ ५३ ॥ तस्मिन्नवसरे तस्या । वामलोचनहस्तयोः ॥ शुभदं स्फुरणं चैव । समकालमजायत ॥ ५४ ॥ उक्तं च—शिरसः स्फुरणे राज्यं । बाहोश्च प्रियमेलकः ॥ चक्षुषः स्फुरणे प्रीतिरधरस्या प्रियागमः ॥ ५५ ॥ नरस्य दक्षिणांगानि । प्रोक्तानि परमर्षिभिः ॥ विपरीतानि नारीणां । ज्ञातव्यान्यत्र कोविदैः ॥ ५६ ॥ निश्चित्य विक्रमादित्यं । तं नूनं हर्षिताथ सा ॥ भर्तारं मनसा कृत्वा । पादसंवाहनं व्यधात् ॥ ५७ ॥ ततो राजा जजागार । क्षुधार्त्तश्च व्यचिंतयत् ॥ मुक्त्वा नगरमध्येऽह—मस्यै भोज्यं समानये ॥ ५८ ॥ एनां कुत्रापि मुंचामि । सपेटां निर्जने वने ॥ यथेमां कोऽपि नो वेत्ति । साप्यथो क्व गमिष्यति ॥ ५९ ॥ तत्रास्त्येको महातुंगः । प्रासादो मेरुसन्निभः ॥ तन्मध्यमंडपे मुक्त्वा । तां जगाम नृपः पुरं ॥ ६० ॥ कांदविकापणे गत्वा । मुक्त्वा रसवतीं वरां ॥ गृहीत्वा तत्कृते भोज्यं । यावद्भूपः समाययौ ॥ ६१ ॥ तावदुष्ट्रीं च पेटां तां । तामपि रत्नमंजरीं ॥ न पश्यतिस्म तत्रासौ । विस्मयाकुलमानसः ॥ ६२ ॥

इति ज्ञात्वा विषण्णोऽसौ । तरुभ्रष्टो यथा कपिः ॥ अभूत्कर्तव्यमूढात्मा । क्षणमात्रं महीपतिः ॥ ६३ ॥ पूर्वस्यां पश्चिमायां च । दक्षिणस्यां दिशि पदं ॥ विलोकितं नरेंद्रेण । तच्छुद्धिं नाप्तवान् परं ॥ ६४ ॥ एषा गता पुरीमध्ये । स्वेच्छया वा भविष्यति ॥ छित्राण्यतो दिनान्यत्र । स्थित्वा तां शोधयाम्यहं ॥ ६५ ॥ यदा लब्धा तदा श्रेष्टं । न लब्धा चेत्तदा मया ॥ त्रंबावत्यां नगर्यां हि । गंतव्यं सर्वथा पुनः ॥ ६६ ॥ विलोक्यः कान्यकुब्जो वा । देशः श्रीनरवर्मणः ॥ कदाचिद्धि भवेत्तत्र । गता सा रत्नमंजरी ॥ ६७ ॥ इति निश्चित्य मनसि । नगरांतर्विलोकयन् ॥ स्थितः स्थिरतया भूपो । भाग्यसौभाग्यभूषितः ॥ ६८ ॥ इतश्च रत्नमंजर्याः । संबंधोऽभूद्यथा तथा ॥ श्रूयतां सावधानेन । मनसाथाखिला जनाः ॥ ६९ ॥ तत्र रत्नपुरे वेश्या । नाम्नास्ति नृपकुंचिका ॥ निधानं कामभूपस्य । शृंगारतरुवाटिका ॥ ७० ॥ रूपलक्षणसंपूर्णं । सर्वशृंगारभूषितं ॥ गुणाढ्यमस्ति तद्गेहे । कन्यकाशतपंचकं ॥ ७१ ॥ लक्ष्मीरिव धने नैषा । रूपतो मन्मथप्रिया ॥ भाति भूभामिनीमध्ये । शास्त्रवादे सरस्वती ॥ ७२ ॥ तस्याश्चास्ति जनानंद—दायकः कीरपुंगवः ॥ सर्वलक्षणसंपूर्णो । नामतो विबुधप्रियः ॥ ७३ ॥ तस्य भ्रातृद्वयं वृद्धं । विद्यागुणसमन्वितं ॥ सकलं शोभ-

नाकार—मस्त्यवंतीपुरीस्थितं ॥ ७४ ॥ विदग्धमंडनश्चैको—ऽपरो विद्याविशारदः ॥ श्रीविक्रमगृहे ऽस्त्याद्यो—ऽन्यो देवदमनीगृहे ॥ ७५ ॥ विद्याविशारदो लेखं । त्रंबावत्यां समर्प्य च ॥ स्नेहाऽत्र पुरे भ्रातु—र्मिलनार्थं समागतः ॥ ७६ ॥ सहोदरं समायातं । विलोक्य विबुधप्रियः ॥ अभ्युत्था नासनादिभि—स्तस्य स्वागतमातनोत ॥ ७७ ॥ यतः—वदनं नैव सानंद—मासनं न न भाषणं ॥ न कार्यवादपृछा च । तस्य पार्श्वे गतेन किं ॥ ८० ॥ वदनं यस्य सानंद—मासनं चैव भाषणं ॥ कार्यवादस्य पृछा च । गम्यते तस्य सन्निधौ ॥ ८१ ॥ प्रणम्य परया भक्त्या । गुरुवन्निजबांधवं॥ दर्शयामास स्नेहं सः । भ्रातृस्नेहो ह्यलौकिकः ॥ ८२ ॥ उक्तं च—देशे देशे कलत्राणि । मित्राणि च पदे पदे ॥ तं देशं नैव पश्यामि । यत्र भ्राता सहोदरः ॥ ८३ ॥ अपुत्रस्य गृहं शून्यं । दिशः शून्या अबांधवाः ॥ मूर्खस्य हृदयं शून्यं । सर्वशून्या दरिद्रता ॥ ८४ ॥ स्नानभोजनपानाद्यै—र्भक्तिं कृत्वा महत्तमां ॥ एकांते तेन सार्धं स । वार्तां कर्तुं प्रचक्रमे ॥ ८७ ॥ अद्य मे सफलं जन्म । वर्षं मासो दिनादि च ॥ अमेयामृतपूरेण । हृदयं पूरितं शुभं ॥ ८८ ॥ अहो अकुसुमं बीज—मद्य वृष्टिरमेघजा ॥ अकस्मात्स्वर्णवृष्टिर्मे । यदद्भूतं भ्रातृदर्शनं ॥ ८९ ॥ क गत्वा किं महा-

कार्यं । कृत्वात्रैव त्वमागतः ॥ भ्रातर्मे मानसाब्जस्य । विकासनदिवाकरः ॥ ९० ॥ विद्याविशारदो-ऽवादीत् । श्रूयतां विबुधप्रिय ॥ कृत्वाहं स्वामिनीकार्यं । स्तंभतीर्थादिहागतः ॥ ९१ ॥ उज्जयिन्यां गमिष्यामि । मिलित्वा त्वां सहोदरं ॥ सा देवदमनी राज्ञी । मार्गं मे मार्गयिष्यति ॥ ९२ ॥ किं कृतं च त्वया तत्र । कार्यं वद सहोदर ॥ सोऽवक् स्वामिनीकार्यं मे । प्रकटं नैव कथ्यते ॥ ९३ ॥ यतः—षट्कर्णो भिद्यते मंत्र—श्चतुःकर्णः स्थिरीभवेत ॥ द्विकर्णस्याथ मंत्रस्य । ब्रह्माप्यंतं न गच्छति ॥ ९४ ॥ दिवा निरीक्ष्य वक्तव्यं । रात्रौ नैव च नैव च ॥ संचरंति महाधूर्ता । वटे वररुचिर्यथा ॥ ९५ ॥ सोऽवग् वररुचिः कोऽसौ । पंडितो वटमध्यगः ॥ येन तत्र स्थितेनाशु । धूर्तत्वं कृतमद्भुतं ॥ ९६ ॥ शृणु बांधव विज्ञस्य । विक्रमार्कस्य भूपतेः ॥ सभाशृंगारभूतोऽस्ति । विद्वान् वररुचिर्वरः ॥ ९७ ॥ स चतुर्दशविद्यावान् । वादविद्याविशारदः ॥ पुराणस्मृतिवेदादि—सर्वशास्त्रेषु पारगः ॥ ९८ ॥ अन्यदा विक्रमार्कस्य । शुको देशान्निरीक्षितुं ॥ विदग्धमंडनो नाम्ना । प्रयातो गगनाध्वना ॥ १००० ॥ स षण्मासावधिं कृत्वा । देशे देशे परिभ्रमन् ॥ क्रमेण च विशश्राम । पद्मिनीपुरपत्तने ॥ १ ॥ कस्यापि श्रेष्ठिनो गेह—गवाक्षेऽसावुपाविशत् ॥ तत्र रंभासमाकारं । क-

न्यावृंदं विलोकयन् ॥ २ ॥ तन्मध्यादेकयावादि । शुकोऽयं शुकशेखरः ॥ श्रीविक्रमस्य नृपस्य । जीवितादपि वल्लभः ॥ ३ ॥ विदग्धमंडनो ह्येष । नामतश्चार्थतः परः ॥ महाविद्यावतां श्रेष्टः । शुकजातिकुलाग्रणीः ॥ ४ ॥ वयस्याभिरथान्याभिः । सा प्रोक्ता सखि त्वं कथं ॥ वेत्सि कीरं कलावंतं । विक्रमादित्यनृपतेः ॥ ५ ॥ सावोचच्छो मया दृष्टो—ऽभूत्पुरोज्जयिनीपुरि ॥ पितृवेश्मस्थया सख्यः । शुकोऽयं गुणसागरः ॥ ६ ॥ ज्ञानस्य प्रत्ययः सारः । प्रत्यक्षो ह्यनुमानतः ॥ रौक्यमुच्चारतः सारं । मानं सारं प्रदानतः ॥ ७ ॥ ततः सावक् शुकं चेत्त्वं । विक्रमस्य शुको यदि ॥ तदागत्य द्रुतं विद्वन् । मे पाणौ समुपाविश ॥ ८ ॥ इति तस्या वचः श्रुत्वा । हृदानंदकरं वरं ॥ मानृदसत्यवागेषा । कीरश्चिंतितवानिति ॥ ९ ॥ आगतस्तत्क्षणादेष । करांभोजे मरालवत् ॥ तस्याः सापि च हर्षेण । तत्कालं पूरिताभवत् ॥ १० ॥ हस्तसंवाहनं कृत्वा । कुशलप्रश्नपूर्वकं ॥ सावोचत् शुकराजेंद्र । हृष्टाहं तव दर्शनात् ॥ ११ ॥ उक्तं च—साधूनां दर्शनं पुण्यं । तीर्थभूता हि साधवः ॥ तीर्थं पुनाति कालेन । सद्यः साधुसमागमः ॥ १२ ॥ परोपकारनिपुणः । परकार्यप्रसाधकः ॥ अद्य त्वं मम भाग्येन । दृष्टिगोचरतां गतः ॥ १३ ॥ यतः—कस्यादेशात्क्षपयति तमः सप्तसप्तिः

प्रजानां । छायां कर्तुं त्विह विटपिनामंजलिः केन बद्धः ॥ अभ्यर्थ्यंते नवजलमुचः केन वा वृष्टिहेतोः । प्रायेणैवं परहितविधौ साधवो बद्धकक्षाः ॥ १४ ॥ छायामन्यस्य कुर्वंति । स्वयं तिष्ठंति चातपे ॥ फलंति च परस्यार्थे । नात्महेतोर्महाद्रुमाः ॥ १७ ॥ पिबंति नद्यः स्वयमेव नांभः । खादंति न स्वादुफलानि वृक्षाः ॥ पिबंति गावो न स्वयं पयांसि । वर्षंति मेघाश्च स्वयं परार्थे ॥ १८ ॥ पुंसः संति सहस्रशः स्वभरणव्यापारबद्धादराः । स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ॥ दुःपूरोदरपूरणाय पिबति श्रोतःपतिं वाडवो । जीमूतस्तु निदाघसंभृतजगत्संतापविछित्तये ॥ १९ ॥ एके सत्पुरुषाः परार्थरचकाः स्वार्थं परित्यज्य ये । सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ॥ तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नंति ये । ये तु घ्नंति निरर्थकं परहितं ते के न जानीमहे ॥ २० ॥ इति सत्पुरुषं ज्ञात्वा । प्रार्थयामि तवांतिके ॥ यदुत्तमनरे याञ्चा । मोघापि शुभदायका ॥ २१ ॥ यथा—जातं वंशे भुवनविदिते पुष्करावर्तकानां । जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ॥ तेनार्थित्वं त्वयि विधिवशाद्दूरबंधुर्गतोऽहं । याञ्चा मोघावरमधिगुणे नाधमे लब्धकामा ॥ २२ ॥ ममोक्तं शुकराजेंद्र । कथ्यं विक्रमभूपतेः ॥ वदिष्यसि यदा नैव । स्त्रीहत्यापा-

तर्कं तव ॥ २३ ॥ पद्मतुल्यौ रदौ रक्तौ । तिलकं मंजरीयुतं ॥ मुखे दशांगुलीक्षेपः । कथ्यमेतत्त्वयानघ ॥ २४ ॥ श्रुत्वा वाक्यं त्वया प्रोक्तं । शुकोऽगात्ऽगनाध्वना ॥ उज्जयिन्यामधीशस्य । कथितं तत्तयोदितं ॥ २५ ॥ संसदि तस्य राज्ञोऽस्ति । विदुषां शतपंचकं ॥ बुद्धिप्रपंचकथकं । ग्रासभक्षणतत्परं ॥ २६ ॥ तेषां मध्ये महाश्रेष्ठो । ज्येष्ठभावेन नायकः ॥ विद्वान् वररुचिर्नाम्ना । धाम्ना सुरगुरूपमः ॥ २७ ॥ तानाकार्य शुकप्रोक्तं । गदित्वेत्यादिशन्नृपः ॥ विमृश्य त्रिदिनं याव—त्तथ्यं कथ्यं ममाग्रतः ॥ २८ ॥ नृपोक्तमिति श्रुत्वा ते । ययुर्वररुचेर्गृहं ॥ विमृशंति विषण्णास्ते । किंकर्तव्यजडात्मकाः ॥ २९ ॥ कथं कथ्यो नृपस्याग्रे । तच्चित्तस्थोऽयमर्थकः ॥ भूमिमध्ये परैः क्षिप्तं । निधानं नैव लभ्यते ॥ ३० ॥ मेघानां गर्जितं स्त्रीणां । चरित्रं भवितव्यतां ॥ अवर्षणं च वृष्टिं च । नैव जानंति मानवाः ॥ ३१ ॥ प्रहेलिकां समस्यां च । निधानं भूमिमध्यगं ॥ गर्भोत्पत्तिं विपत्तिं च । नैव जानंति मानवाः ॥ ३२ ॥ कदाचिद् ज्ञानयोगेन । देवतानां प्रसादतः ॥ जानंति मानवा ये तु । देवताभा भवंति ते ॥ ३३ ॥ इति चिंतातुराणां च । गतं तेषां दिनद्वयं ॥ तृतीये दिवसे राजा । कथयामास संसदि ॥ ३४ ॥ यद्येते पंडिताः सर्वे । विमृश्य शुकभाषितं ॥ अर्थं न

कथयिष्यंति । मारयिष्यामि तानहं ॥ ३५ ॥ इति श्रुत्वाथ ते सर्वे । पंडिताः प्रपलायिताः ॥ गिरिगह्वरगर्तासु । स्थिता भूमिगृहेषु च ॥ ३६ ॥ यतः—पंथसमा नत्थि जरा । दारिद्दसमो पराभवो नत्थि ॥ मरणसमं नत्थि भयं । खुहासमा वेयणा नत्थि ॥ ३७ ॥ प्रणष्टो नगरं मुक्त्वा । वररुचिर्दिनात्यये ॥ प्रेतवनसमीपस्थे । प्रविष्टो वटकोटरे ॥ ३८ ॥ अथार्धरात्रिवेलायां । भूतप्रेतगणोऽखिलः ॥ आगत्य वटशाखासु । स्थाने स्थाने ह्युपाविशत् ॥ ३९ ॥ तेषां मध्ये महावृद्धो । जर्जरीभूतविग्रहः ॥ भूतो भूरिगुणागारो—ऽस्त्यवधिज्ञानसंयुतः ॥ ४० ॥ प्रतिपन्नः पुत्ररूपेण । तस्योत्संगे गदाधरः ॥ शिशुरेकः समागत्य । विमनाः संस्थितस्तदा ॥ ४१ ॥ पृष्टं वृद्धेन भूतेन । किमद्य विमनाः शिशो ॥ उवाच बालो भो तात । वयमद्य बुभुक्षिताः ॥ ४२ ॥ वृद्धोऽवदद्भो भवतां । प्रगे भोज्यं भविष्यति ॥ वसापिशितरक्तास्थि—दुग्धमोदकमिश्रितं ॥ ४३ ॥ सोऽवक् तात कथं भोज्यं । सर्वेषां नो भविष्यति ॥ वृद्धोऽवदत्प्रगे भूपः । पंडितान् पीलयिष्यति ॥ ४४ ॥ शिशुरुवाच भो तात । कोऽन्यायो विहितोऽस्ति तैः ॥ शुकोक्तं सर्ववृत्तांतं । भूतस्तस्मै न्यवेदयत् ॥ ४५ ॥ बालकः प्राह मे तात । तदर्थं कथय स्फुटं ॥ बालनारीनरेंद्राणां । ग्रहो ग्रथिलसन्निभः ॥ ४६ ॥ केशस-

न्मार्जनीहेतो—र्वल्लभीशसुताग्रहे ॥ कृतो द्विपक्षसंसारो । रंकेण व्यवहारिणा ॥ ४७ ॥ सीताया ग्रहतो जातं । हिरण्यमृगमारणं ॥ सीताया हरणं चैव । लंकारावणभंजनं ॥ ४८ ॥ राज्ञो ग्रहस्तथैवास्ति । कौरवाणां कुलक्षयः ॥ दुर्योधनकृतो जातो । बंधुमरणसंयुतः ॥ ४९ ॥ वृद्धो भूतस्ततोऽवादीत् । पद्मिनीपुरपत्तने ॥ व्यवहारिसुतारत्नं । नाम्ना तिलकमंजरी ॥ ५० ॥ द्वात्रिंशल्लक्षणोपेता । रक्ता विक्रमभूपतौ ॥ दशभिर्दिवसैर्ह्येया । ह्यवस्थां दशमीं गता ॥ ५१ ॥ यतः—पोयणपुरंमि नयरे । वणिगसुआ तिलयमंजरीणामा ॥ रत्ता तवंमि नरवर । दसमीं वञ्जं दसे दिवसे ॥ ॥ ५२ ॥ यदुक्तं भूतनाथेन । श्रुतं तद्वररुचिना ॥ वटमध्यस्थितेनाशु । हर्षोत्कर्षप्रदायकं ॥ ५३ ॥ प्रगे वररुचिः सोऽथ । निर्गत्य वटकोटरात् ॥ गतोऽवंतीपुरीमध्ये । सर्वथा भयवर्जितः ॥ ५४ ॥ एके धृता गताः केऽपि । पुंभिता राजपूरुषैः ॥ दृष्ट्वा वररुचिः प्राह । भ्रीयंतेऽमी कथं द्विजाः ॥५५॥ कथयिष्यति यद्राजा । तस्य दास्यामि चोत्तरं ॥ केसरितो हि नष्ट्वा क्व । यास्यंति मृगपोतकाः ॥ ॥ ५६ ॥ नृपांतिकं समागत्यो—त्तरं सत्यं स चोचिवान् ॥ जीविताहं ततो दानं । नृपो वररुचेर्ददौ ॥ ५७ ॥ गत्वा नृपेण सा तत्र । म॒होत्सवपुरस्सरं ॥ विवाहिता वरे लग्ने । कन्या तिलकमंज-

जरी ॥ ५८ ॥ दिने द्वितीये द्यूतेन । पृष्टोऽसौ वृद्धद्यूतराट् ॥ स्वामिन् किमपि नो भोज्यं । संजा-
तं नैव कुत्रचित् ॥ ५९ ॥ अवधिज्ञानतो भूतो । विज्ञायेति जगाद तं ॥ श्रुतं सर्वं ममोक्तं च ।
विदुषा वटकोटरे ॥ ६० ॥ इति श्रुत्वा शुकः प्राह । भ्रातरं कोविदं शुकं ॥ न कोऽप्यस्त्यत्र यो
मंत्रं । शृणुयान्नौ सहोदर ॥ ६१ ॥ बंधोरनुग्रहेणोक्तं । तेन सर्वं यथातथं ॥ मिलित्वा शुकराजेंद्रो
। गतोऽवंत्यां स हर्षितः ॥ ६२ ॥ सुप्तया वेश्यया सर्वं । ज्ञातं कीरनिवेदितं ॥ चित्ते सा चिंतया-
मास । पापा पापप्रपंचिका ॥ ६३ ॥ समेष्यत्यद्य कल्ये सा । मार्गेऽस्मिन् रत्नमंजरी ॥ बुद्धिबला-
न्मया ग्राह्या । शृंगारतरुमंजरी ॥ ६४ ॥ ध्यात्वेत्यनिशमायाति । तत्र मार्गे सुरालये ॥ विलोकना-
य पापात्मा । कुद्भावयुताथ सा ॥ ६५ ॥ भोजनार्थं यदा राजा । तां मुक्त्वा नगरं गतः ॥ त-
स्मिन् क्षणे समायाता । तत्र सा रूपजीविका ॥ ६६ ॥ विलोक्य कन्यारत्नं सा । त्रैलोक्यैकमनो-
हरं ॥ हर्षोत्कर्षप्रपूरेण । पूरिता साभवत् क्षणात् ॥ ६७ ॥ चिंतयामास चित्ते सा । मम भाग्यं मह-
त्तरं ॥ प्राप्तेयं जगदानंद—दायिनी गजगामिनी ॥ ६८ ॥ कापीयं स्वर्वधू रुष्टा । स्वर्गादत्र समा-
गता ॥ किं वा विद्याधरी कापि । मंत्रसाधनसोद्यमा ॥ ६९ ॥ किं वा पातालकन्येयं । विषोद्विग्ना-

त्र ह्यागता ॥ किंवा रतिरिंद्राणी । पार्वती वा हरिप्रिया ॥ ७० ॥ यतः—भद्रे कासि सुरांगना कि-
मथवा विद्याधरी किन्नरी । किं वा नागकुमारिका बुधसुता किंवा महेशप्रिया ॥ पौलोमी किमु च-
क्रवर्त्तिदयिता तीर्थाधिपोल्लंघनात् । शापात् क्रुद्धमुनीश्वरस्य वचसा त्वं कानने दृश्यसे ॥ ७२ ॥ स्वं-
गितं साथ संगोप्य । धूर्ता मायैकमंदिरं ॥ तस्याः समीपमागत्य । गणिकेत्यवदच्च तां ॥ ७३ ॥
आगता त्वं कुतो भद्रे । कुत्र देशे तु यास्यसि ॥ किं गोत्रं कः पिता तेऽथ । व्यूढा वा त्वं कुमा-
रिका ॥ ७४ ॥ वत्से कथय मे शीघ्रं । काभिधा तव वर्तते ॥ श्रुतेन येन मे चित्तं । महानंदेन
पूर्यते ॥ ७५ ॥ इत्युक्ता सावदत् श्रेष्ठां । तां दृष्ट्वा स्त्रीशिरोमणिं ॥ नृपमाता महेभ्यस्य । मातेय-
मिति चिंतयन् ॥ ७६ ॥ त्र्यंबावतीमहाराज—श्रीजयकर्णभूपतेः ॥ जयश्रीकुक्षिसंभूता । सुताहं र-
त्नमंजरी ॥ ७७ ॥ हर्षाश्रुपूरिता वेश्या । मायया कुटिलाशया ॥ जगाद तर्हि हे पुत्रि । मम त्वं
भगिनीसुता ॥ ७८ ॥ आगच्छ परमप्रेम—रसामृतसरोवरे ॥ शृंगाररससर्वस्वे । मम गेहं पवित्रय
॥ ७९ ॥ तयोक्तं मातर्मे स्वामी । पतित्वेन वृतोऽस्ति यः ॥ स गतोऽस्ति पुरीमध्ये । भोजनादि-
जिघृक्षया ॥ ८० ॥ आगमिष्यति सोऽत्रैव । मदर्थं भोजनादिकं ॥ गृहीत्वा नरराजेंद्र । क्षणमेकं

प्रतीक्ष तत् ॥ ८१ ॥ रूपाजीवा बलाणैवं । जामातापि समेष्यति ॥ अत्र मुक्ता जना मे तं । द-
र्शयिष्यंति मद्गृहं ॥ ८२ ॥ इति मायाप्रपंचेन । वंचिता रत्नमंजरी ॥ सपेटा करन्नीयुक्ता । गता
सार्धं तया द्रुतं ॥ ८३ ॥ मायया हि महापापै—र्वंच्यते सरलो जनः ॥ मत्स्यः समुद्रमध्यस्थो ।
वध्यते बुद्धियोगतः ॥ ८४ ॥ द्यूतकारे नटे धूर्ते । वेश्यायां च विशेषतः ॥ माया कृत्वा निजावा-
सं । स्थितास्ति खलु शाश्वती ॥ ८५ ॥ मायामविश्वासविलासमंदिरं । डुराशयो यः कुरुते धनाश-
या ॥ सोऽनर्थसार्थं न पतंतमीक्षते । यथा बिडालो लकुटं पयः पिबन् ॥ ८६ ॥ कुशलजननवंध्यां
सत्यसूर्यास्तसंध्यां । कुगतियुवतिमालां मोहमातंगशालां ॥ शमकमलहिमानीं डुर्यशोराजधानीं ।
व्यसनशतसहायां दूरतो मुंच मायां ॥ ८७ ॥ विधाय मायां विविधैरुपायैः । परस्य ये वंचनमाचरं-
ति ॥ ते वंचयंते त्रिदिवापवर्ग—सुखान्महामोहसखाः स्वमेव ॥ ८८ ॥ मुग्धप्रतारणपरायणमुज्जि-
हीते । यत्पाटवं कपटलंपटचित्तवृत्तेः ॥ जीर्यत्युपप्लवमवाप्यमिहैव कृत्वा । नापथ्यभोजनमिवामयमा-
यतौ तत् ॥ ८९ ॥ माया डुर्गतिकृद्भवेत्परभवे क्लेशाय चास्मिन्नपि । श्रीवीरेण सुरोऽपि कैतवपरः
कुब्जीकृतो मुष्टिना ॥ किं कर्णस्य न निष्फला युधि कला विप्रब्रुवान्नामवत् । किं श्रीशो न ज-

गाम वामनतनुर्दैन्यं बलेर्बंधने ॥ ९० ॥ सर्वेऽप्येते कषायाः सदृशबलभृतः किंतु तीव्रैव माया । य-
ज्जित्वाषाढभूतिं नटमिव नटयामास गौरीव चंडं ॥ स्त्रीत्वं स्त्रीलिंगभावादिव नृषु न ददौ मल्लिमु-
ख्येषु या किं । सख्यं दुर्दांतदैत्यं कितवमृगदृशीभूय विष्णुर्जघान ॥ ९१ ॥ प्राकारवलयाकीर्णं ।
प्रतोलीसप्तशोभितं ॥ इंद्रागारसमाकारं । शोभितं सप्तभूमिकं ॥ ९२ ॥ गवाक्षतोरणैर्जाल—जा-
लैर्वरबलानकैः ॥ जलागारैर्गृहैर्गुप्तै । रमाक्रीडानिकेतनं ॥ ९३ ॥ रजतस्वर्णमाणिक्य—रत्नभित्ति-
विराजितं ॥ वापिकादीर्घिकावर्ण्य—वनराजिसमाकुलं ॥ ९४ ॥ विविधैश्चित्रितं चित्रै—र्विचित्रैर्व-
स्तुभिर्भृतं ॥ कामक्रीडाकलाभ्यास—कोविदैराश्रितं जनैः ॥ ९५ ॥ नानादेशांतरायात—लोकै-
र्लीलाविलासकैः ॥ कामिनीनयनानंद—दायकैरभितो भृतं ॥ ९६ ॥ मनोज्ञतोरणैः पंच—शतैर्वा-
तायनैर्युतं ॥ पूरितं वरकन्याभि—र्धन्याभिः शतपंचभिः ॥ ९७ ॥ एवंविधं महासौध—ममरागारस-
न्निभं ॥ गीतनृत्यादिसहितं । रत्नमंजरी चैकदा ॥ ९८ ॥ कुलकं ॥ विवेश वेश्यया सार्धं । सौ-
धांता रत्नमंजरी ॥ विषादहर्षमिश्रेण । चेतसा विह्वला तदा ॥ ९९ ॥ वेश्यया दत्तसंकेतं । दासी-
वृंदमथाययौ ॥ तालव्यजनवातेन । तस्यास्तापमपाकरोत् ॥ ११०० ॥

गंधोदकेन तस्याश्च । दास्या प्रक्षालितौ करौ ॥ चरणावपि तत्राथ । संस्थाप्य स्वर्णभाजने ॥
॥ १ ॥ चीनांशुकानि योग्यानि । दासी तां पर्यधापयत् ॥ भूषणानि महर्घ्याणि । तस्या अंगेषु
च न्यधात् ॥ २ ॥ अन्या भोज्यानि भव्यानि । कृते तस्याः समानयत ॥ सुरभिघृतयुक्तानि । सु-
स्वादूनि सुगंधतः ॥ ३ ॥ इति बह्वादरं दृष्ट्वा । रत्नमंजर्यथोऽवदत् ॥ का जातिर्भवतां कर्म । किमा-
चारश्च कः खलु ॥ ४ ॥ विसंस्थुलं विकाराढ्यं । सहासं लज्जयोज्झितं ॥ नारीवृंदं निराशंकं । नृही-
नं दृश्यते कथं ॥ ५ ॥ लज्जा विभूषणं लोके । नारीणां तु विशेषत. ॥ लज्जाहीनाः पशुप्रायाः ।
कुलटास्ताः पणांगनाः ॥ ६ ॥ श्रुत्वा तद्वचनं वेश्या । द्वासप्ततिकलानिधिः ॥ उवाच वचनं चारु ।
चातुर्यजितभारती ॥ ७ ॥ न वेत्स्यस्मद्गृहाचारं । स्वर्विमानसमं शुभे ॥ मनसा चिंतितं कार्यं ।
समग्रं ते भविष्यति ॥ ८ ॥ कारयिष्यंति ते स्नानं । दास्यः श्रमहरं सदा ॥ वरचंपकपानीयै—मृ
गनाभिविमिश्रितैः ॥ ९ ॥ नित्यं नवनवैर्भोज्यै—र्नानाशाकादिसंयुतैः ॥ भोजनावसरे भोज्यं ।
दास्यो दास्यंति ते सदा ॥ १० ॥ देवदूष्याणि वस्त्राणि । विविधानि वरानने ॥ अर्पयिष्यंति ते
दास्यः । सदा चाटूक्तितत्पराः ॥ ११ ॥ राजानो राजपुत्रा ये । देशेशा मंडलाधिपाः ॥ श्रेष्ठिनः

सार्थवाहाश्च । ते भविष्यंति किंकराः ॥ १२ ॥ छत्रचामरवादित्र—सुखासनहयान् गजान् ॥ आनयिष्यंति राजान—स्तवाज्ञावशवर्तिनः ॥ १३ ॥ भोगा नवनवास्तेऽत्र । भविष्यंति मृगेक्षणे ॥ नरा नवनवा नित्यं । पतिष्यंति पदांबुजे ॥ १४ ॥ त्वया नेत्रत्रिभागेन । दृष्टास्ते वशवर्तिनः ॥ मुनयोऽपि भविष्यंति । सुरासुरनृसेविताः ॥ १५ ॥ सुभगे किं बहूक्तेन । नरत्वे सुरवैभवं ॥ मनसा चिंतितं सर्वं । देववत्ते भविष्यति ॥ १६ ॥ इति तद्वचनं श्रुत्वा । चिंतयामास चेतसि ॥ तस्याः स्वरूपं विज्ञाय । विषण्णा रत्नमंजरी ॥ १७ ॥ पूर्वकर्मभवोऽहो मे । विपाको बलवत्तरः ॥ दिव्यपत्युर्यतो भ्रष्टा । चटितास्याः करे हहा ॥ १८ ॥ प्राणांतेऽपि न मुंचामि । शीलव्रतमहाधनं ॥ नारीणां परमो धर्मो । निजशीलस्य पालनं ॥ १९ ॥ शीलव्रतविहीनानां । नारीणां नरके स्थितिः ॥ निगोदामेध्यमध्ये वा । गदितास्ति जिनोत्तमैः ॥ २० ॥ कलिः कलंकः परलोकदुःखं । यशश्श्रुतिधर्मधनस्य हानिः ॥ हास्यास्पदत्वं स्वजनैर्विरोधो । भवंति दुःखानि कुशीलभाजां ॥ २१ ॥ दत्तस्तेन जगत्यकीर्तिपटहो गोत्रे मषीकुर्चक—श्चारित्रस्य जलांजलिर्गुणगणारामस्य दावानलः ॥ संकेतः सकलापदां शिवपुरद्वारे कपाटो दृढः । शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचिंतामणिः ॥

॥ २६ ॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं । शीलं ह्यप्रतिपातिवित्तमनघं शीलं सुगत्यावहं ॥ शीलं दुर्गतिनाशनं सुविमलं शीलं सुकीर्त्यास्पदं । शीलं निर्वृतिहेतुरेव परमः शीलं तु कल्पद्रुमः ॥ २७ ॥ क्षणिके भावनादाने । तपोऽप्यनियतस्थिति ॥ यावज्जीवं तु जीवस्य । दुष्करं शीलपालनं ॥ २८ ॥ सीतया दुरपवादभीतया । पावके स्वतनुराहुतीकृता ॥ पावकस्तु जलतां जगाम यत् । तेन शीलमहिमा विजृंभते ॥ २९ ॥ व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजंति क्षयं । कल्याणानि समुल्लसंति विबुधाः सान्निध्यमभ्यासते ॥ कीर्त्तिः स्फुर्त्तिमियर्त्ति यात्युपचयं धर्मः प्रणश्यत्यघं । स्वर्निर्वाणसुखानि सन्निदधते ये शीलमाबिभ्रते ॥ ३० ॥ हरति कुलकलंकं लुंपते पापपंकं । सुकृतमुपचिनोति श्लाघ्यतामातनोति ॥ नमयति सुरवर्गं हंति दुर्गोपसर्गं । रचयति शुचिशीलं स्वर्गमोक्षौ सलीलं ॥ ३१ ॥ तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारंगति । व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति ॥ विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां—नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद् ध्रुवं ॥ ३२ ॥ किंच—संपदि यस्य न हर्षो । विपदि विषादो रणे च धीरत्वं ॥ तं भुवनत्रयतिलकं । जनयति जननी सुतं विरलं ॥ ३३ ॥ रत्नमंजर्यथोऽ-

वादी—हृत्वा मां भगिनीसुतां ॥ त्वयात्राहं समानीता । वद स्वामी ममास्ति क ॥ ३७ ॥ वेश्या
वश् मृगशावाक्षि । वरेण किं करिष्यसि ॥ बहवस्ते वरा नित्यं । मनोवांछितपूरकाः ॥ ३८ ॥ सा-
थो तद्वचनं श्रुत्वा । कर्णे तप्तत्रपूपमं ॥ उवाच वचनं चारु । चतुरा रत्नमंजरी ॥ ३९ ॥ प्राणात्य-
येऽप्यहं वेश्या—गेहे स्थास्यामि नो खलु ॥ सतीत्वमेकभर्तृत्वं । ब्रुवंति हि मनीषिणः ॥ ४० ॥
विटकोटिनिघृष्टांगाः । संचारस्थानसन्निभाः ॥ निर्लज्जा निस्त्रपाः पापाः । कृत्याकाराः पणांगनाः ॥
॥ ४१ ॥ या विनष्टविटकोटिनिघृष्टाः । कोमला वचसि चेतसि दुष्टाः ॥ पापकर्मकरणेऽतिपटिष्ठा—
स्ता भजेत ननु कः खलु वेश्याः ॥ ४२ ॥ विषेण वह्निना वातो । कूपे हि पतनेन वा ॥ झंपापा-
तेन जिह्वाग्र—खंडनेनाहियोगतः ॥४६॥ तीक्ष्णशस्त्रेण पाषाण—शकलेनाथ रज्जुना॥ वज्रेण भो-
ज्यत्यागाद्वा । प्राणत्यागं करोम्यहं ॥ ४७ ॥ वेगेन कुरु सामग्रीं । करोमि काष्टभक्षणं ॥ तव गृ-
हेऽन्नपानादि । नैव लास्यामि निश्चितं ॥ ४८ ॥ अथ साह मृगाक्षि त्वं । वरं वृणु यथेप्सितं ॥ य-
स्य सार्थे समायाता । मृतोऽसौ मारितोऽथवा ॥ ४९ ॥ अत्र राजा हयानीक—स्वामी भूरिपराक्र-
मः ॥ सुरप्रियोऽभिधानेन । धाम्ना जितदिवाकरः ॥ ५० ॥ महागुणो महामान्यो । महाकुलसमु-

ङ्गवः ॥ कन्यकुब्जपुरेशस्य । भ्राता हि नरब्रह्मणः ॥ ५१ ॥ सहोदरेण साकं स । कलिं कृत्वा त्वि-
हागतः ॥ एकं पतिं तमासाद्य । कृतार्थं कुरु यौवनं ॥ ५२ ॥ उत्तिष्ठ शोभनाकारे । निरीक्षस्व
वरंप्रति ॥ सोऽत्रायातोऽस्ति कार्येण । मित्रवृंदसमन्वितः ॥ ५३ ॥ जालांतरगवाक्षेण। नरं सुसं दद-
र्श सा ॥ तदैव तेन खड्गेन । निहता लघुमूषिका ॥ ५४ ॥ मित्राणामग्रतस्तेन । दोर्दंडयोः परा-
क्रमं ॥ कृतं व्याख्यानयामास । वराको रंकशेखरः ॥ ५५ ॥ इति तच्चरितं दृष्ट्वा—ऽचिंतयद्रत्न-
मंजरी ॥ मृगारिमारकः सोऽथो—ऽयं तु मूषकमारकः ॥ ५६ ॥ उत्तमं तं पतिं त्यक्त्वा । हा वृ-
णोमि कथं न्वमुं ॥ मानसं ननु मुक्त्वा किं । हंसी खेलति पल्वले ॥ ५७ ॥ध्यात्वेति सावदद्देश्यां
। स पतिर्वा हुताशनः ॥ येन सार्धं समायाता । येन सिंहो विनाशितः ॥ ५८ ॥ अथ वह्निप्रवे-
शार्थं । सपदि कृतनिश्चया ॥ उवाच गणिकामेषा । काष्ठानि मम दीयतां ॥ ५९ ॥ तस्या वाचं
निशम्येति । वेश्या चित्ते व्यचिंतयत् ॥ मम गृहे हठादेषा । नैव स्थास्यति निश्चितं ॥ ६० ॥ ध्या-
त्वेति गणिकावृंदं । मेलयित्वा तदा द्रुतं ॥ चितायाः सर्वसामग्रीं । साकुर्वत्तटिनीतटे ॥ ६१ ॥ सा-
रुह्य शिबिकां नव्यां । वेश्यावृंदसमन्विता ॥ पंचशब्दादिवादित्र—वादनैः कृतमंगला ॥ ६२ ॥ न-

रनारीशतैर्वंद्य—माना मौनावलंबिनी ॥ नरनाथयुता शीर्ष—धृतश्वेतातपत्रका ॥ ६३ ॥ चामरैर्वीज्यमाना च । शृण्वंतीति जनोदितं ॥ धन्यैषा गणिकापुत्री । सेवते या हुताशनं ॥ ६४ ॥ गता चितागृहद्वारं । कृत्वा स्नानमुवाच सा ॥ भो लोकाः श्रूयतां तथ्यं । काष्ठभक्षणकारणं ॥ ६५ ॥ कुलकं ॥ तदा रत्नपुराधीशः । सामंतादिसमन्वितः ॥ आगतो निकटं तस्याः । श्रोतुं वचनमुत्तमं ॥ ६६ ॥ ततः पप्रच्छ राजेंद्रः । कथं त्वं काष्ठभक्षणं ॥ करोषि करुणागारे । बालत्वेऽप्यतिदुःखिता ॥ ६७ ॥ अथ सा प्राह राजेंद्रा—ऽलभमाना निजं पतिं ॥ दुःखेन तेन देहं स्वं । दहामि दहने ध्रुवं ॥ ६८ ॥ नृपोऽवोचद्गुणागारे । स पतिस्ते गुणाकरः ॥ साहस्येकशिरोरत्नं । केन चिह्नेन लभ्यते ॥ ६९ ॥ सावदत् शृणु राजेंद्र । तस्य लक्षणमुत्तमं ॥ येन त्वेकेन बाणेन । मृगारिर्निहतो निशि ॥ ७० ॥ रूपांतरेण केनापि । परीक्षितुं हि मे मनः ॥ यद्यस्तीह तदागत्य । वार्यतां मां स वह्नितः ॥ ७१ ॥ अन्यथा तस्य मे हत्या—पातकं देहघाततः ॥ इत्युक्त्वा सा चितामध्ये । विवेश वह्निसंयुता ॥ ७२ ॥ तत्र श्रीविक्रमो राजा । रूपांतरविशेषतः ॥ तां विलोकयितुं पेटा—मुष्ट्रीं चासीत्समागतः ॥ ७३ ॥ पतिभक्तां च तां ज्ञात्वा । विक्रमः सपदि त्विमां ॥ चकर्ष पादघातेन ।

कृत्वारं स्तंभशश्रितां ॥ ७४ ॥ ततो जयजयारावः । समभूल्लोकमध्यतः ॥ उपलक्षितः क्षितीशेन । विक्रमो निजरूपभाक् ॥ ७५ ॥ एवं रत्नपुराधीशो । दृष्ट्वा तं विक्रमं नृपं ॥ पपात पादयोस्तस्य । भक्त्या विनयसंयुतः ॥ ७६ ॥ जगाद सोऽद्य मे पुण्यं । प्राक्कृतं फलितं प्रभो ॥ पवित्रं नगरं जातं । भवतां पादरेणुना ॥ ७७ ॥ धन्यास्ते तरवस्तथा जनपदा ग्रामाकरा नागराः । सारासारविचारचारुचतुरास्ते सज्जनाः सज्जनाः ॥ येषां श्रीनृपराजराजिचरणन्यासैः पवित्रीयते । छाया भूमितलं गृहांगणवरं देहो मनो निर्मलं ॥ ७८ ॥ श्रीविक्रमार्कस्य नृपस्य कंठे । मुमोच मालां मणिमौक्तिकैर्युतां ॥ धन्या तु सा धन्यतरैः प्रशस्या । वादित्रशब्दान्वितनाटकैः सह ॥ ७९ ॥ पुरप्रवेशं परया महर्द्ध्या । चकार राजा वरतूर्यनादैः ॥ महर्द्धिलोकैः कृतमंगलस्य । श्रीविक्रमार्कस्य गुणाकरस्य ॥ ॥ ८० ॥ श्रीरत्नगराधीशो । विवाह्य रत्नमंजरीं ॥ हस्त्यश्वस्वर्णरत्नादि । ददौ विक्रमभूभुजे ॥ ॥ ८१ ॥ इतश्च रणतूर्याणां । नादैर्बधिरितांबरं ॥ आच्छादितार्कसद्बिंबं । सैन्योच्छलितरेणुभिः ॥८२॥ हस्त्यश्वरथसामंत—मंमलीकपदातिभिः ॥ सन्नाहशस्त्रसंयुक्तैः । पूरितं परमर्द्धिकं ॥ ८३ ॥ सैन्यं तत्र समायांतं । लोकानां भयकारकं ॥ दृष्ट्वा कातरतां प्राप्ता । नरा नेशुर्दिशो दिशं ॥ ८४ ॥ सक-

रनारीशतैर्वंद्य—माना मौनावलंबिनी ॥ नरनाथयुता शीर्ष—धृतश्वेतातपत्रका ॥ ६३ ॥ चामरैर्वीज्यमाना च । शृण्वंतीति जनोदितं ॥ धन्यैषा गणिकापुत्री । सेवते या हुताशनं ॥ ६४ ॥ गता चितागृहद्वारं । कृत्वा स्नानमुवाच सा ॥ भो लोकाः श्रूयतां तथ्यं । काष्टभक्षणकारणं ॥ ६५ ॥ कुलकं ॥ तदा रत्नपुराधीशः । सामंतादिसमन्वितः ॥ आगतो निकटं तस्याः । श्रोतुं वचनमुत्तमं ॥ ६६ ॥ ततः पप्रच्छ राजेंद्रः । कथं त्वं काष्टभक्षणं ॥ करोषि करुणागारे । बालत्वेऽप्यतिदुःखिता ॥ ६७ ॥ अथ सा प्राह राजेंद्रा—ऽलभमाना निजं पतिं ॥ दुःखेन तेन देहं स्वं । दहामि दहने ध्रुवं ॥ ६८ ॥ नृपोऽवोचद्गुणागारे । स पतिस्ते गुणाकरः ॥ साहस्यैकशिरोरत्नं । केन चिह्नेन लभ्यते ॥ ६९ ॥ सावदत् शृणु राजेंद्र । तस्य लक्षणमुत्तमं ॥ येन त्वेकेन बाणेन । मृगारिर्निहतो निशि ॥ ७० ॥ रूपांतरेण केनापि । परीक्षितुं हि मे मनः ॥ यद्यस्तीह तदागत्य । वार्यतां मां स वह्नितः ॥ ७१ ॥ अन्यथा तस्य मे हत्या—पातकं देहघाततः ॥ इत्युक्त्वा सा चितामध्ये । विवेश वह्निसंयुता ॥ ७२ ॥ तत्र श्रीविक्रमो राजा । रूपांतरविशेषतः ॥ तां विलोकयितुं पेटा—मुष्ट्रीं चासीत्समागतः ॥ ७३ ॥ पतिभक्तां च तां ज्ञात्वा । विक्रमः सपदि त्विमां ॥ चकर्ष पादघातेन ।

निरीक्ष्य ॥ संस्मृतप्रधनकुंजरकुंभो । मंक्षु वीररसमूर्त्तिरचालीत् ॥ १ ॥ कामयुद्धकलितः खलु वीरो । वीक्ष्य वेणिमथ स्वीयप्रियायाः ॥ चेतसि त्वसिलतां हि विचिंत्य । कोऽपि युद्धगमनोत्सुक आसीत ॥ २ ॥ स्पर्द्धया लसदसेश्चलवेणिं । कुंभिकुंभसुभगां च कुचालिं ॥ बाणपातपरिस्पर्द्धिकटाक्षान् । वीक्ष्य केऽपि सुभटा रणमीयुः ॥ ३ ॥ आशिषं वलितकंठजनन्याः । कोऽप्यमन्यत वरां शकुनालिं ॥ सैव संयति यतः सुभटानां । रक्षणे कवचतां प्रतिपेदे ॥ ४ ॥ वल्लभास्मि तव चेत्करिकुंभां—स्तूर्णमेव च विदार्य मदर्थे ॥ मौक्तिकानि हि समानय नाथ । कांतयोक्त इति कोऽपि रणेऽगात् ॥ ५ ॥ अस्मि वीरजननीति जनन्या । अस्मि वीररमणीति रमण्या ॥ प्रेरितः पटुभटः किल कोऽपि । युद्धसन्मुखमगात्समरोत्कः ॥ ६ ॥ पत्युरेव पुरतः सुतमेका । स्माह वीरमुकुटं समरोत्कं ॥ विक्रमं युधि तथा विदधीथा । नो यथा भवति वत्स विकल्पः ॥ ११ ॥ कंपितः पतसि पादयुगे मे । नेत्रकोणकहतोऽपि भयार्तः ॥ युध्यसे किमिषुभिर्युधि नाथ । कांतयेति हसितश्चलितोऽन्यः ॥ १२ ॥ मा कृथा युधि वृथास्म कलंकं । मां निधाय हृदये हृदयेश ॥ जीवितेऽपि मरणेऽपि कदापि । त्वामहं प्रिय न वै प्रजहामि ॥ १३ ॥ कोऽपि पाणिकृतकाष्ठकृपाणो । बालकोऽप्यनुपतन्

लोऽपि पुरीलोको । जज्ञे भयसमाकुलः ॥ राजा युद्धोद्यतश्चासी—द्रवीररसान्वितः ॥ ८५ ॥ षट्त्रिंशद्राजवंश्याश्च । बहवः शस्त्रपाणयः ॥ अभ्येयुस्त्वरितं तत्र । मूर्ता वीररसा इव ॥ ८६ ॥ सूर्यवंश्याः शशिवंश्या । यादवाः पारमारकाः ॥ चोहाणाश्च कदंबाख्या । ईक्ष्वाकाः करटाः शिवाः ॥८७॥ चंदेलाश्च सिसोदाश्च । गोहिला गूढविक्रमाः ॥ चापोत्कटा मोरकाश्च । छिंदसिह्लारसैंधवाः ॥८८॥ सोलंका राष्ट्रकूटाश्च । पालका मंकुआणकाः ॥ महाराष्ट्रा निकुंताश्च । प्रतिहारास्तु दाधिमाः ॥ ॥ ८९ ॥ कुलाचाराः कुलापाश्च । भाटीवंश्याश्च वाघलाः ॥ हरिवंश्या डोणकाश्च । खटिंशाश्चापि माथुराः ॥ ९० ॥ षट्त्रिंशदायुधोपेता । महायोद्धा महर्द्धिकाः ॥ समायाता मदोन्मत्ता—स्ते तत्र समरोत्सुकाः ॥ ९१ ॥ एवं सामग्रिकां सर्वां । कृत्वा रत्नपुराधिपः ॥ सर्वानाकारयामास । सेवकान् ग्रासभक्तकान् ॥ ९२ ॥ शूरास्तु हर्षपूरेण । पूरिताः पौरुषान्विताः ॥ कातराश्च भयभ्रांता । भग्नांगा जज्ञिरे तदा ॥ ९३ ॥ नानातूर्यानकध्वानैः । क्ष्वेडाबृंहितहेषितैः ॥ तदा नादमयं विश्व—मिदं विश्वमजायत ॥ ९४ ॥ युद्धतूर्यनिनदैर्बलवद्भि—र्द्राग् विजित्य वचनान्यबलायाः ॥ विस्मृतस्मररसो रणरौद्रः । प्रादुरासीदिह वीररसश्च ॥ ९५ ॥ कोऽपि वीरमुकुटः परिरभ्यन् । प्रेयसीं स्तनघटौ च

निरीक्ष्य ॥ संस्मृतप्रधनकुंजरकुंभो । मंक्षु वीररसमूर्त्तिरचालीत् ॥ १ ॥ कामयुद्धकलितः खलु वीरो
। वीक्ष्य वेणिमथ स्वीयप्रियायाः ॥ चेतसि त्वसिलतां हि विचिंत्य । कोऽपि युद्धगमनोत्सुक आ-
सीत ॥ २ ॥ स्पर्द्धया लसदसेश्चलवेणिं । कुंभिकुंभसुभगां च कुचालिं ॥ बाणपातपरिस्पर्द्धिकटा-
क्षान् । वीक्ष्य केऽपि सुभटा रणमीयुः ॥ ३ ॥ आशिषं वलितकंठजनन्याः । कोऽप्यमन्यत वरां श-
कुनालिं ॥ सैव संयति यतः सुभटानां । रक्षणे कवचतां प्रतिपेदे ॥ ४ ॥ वल्लभास्मि तव चेत्करि-
कुंभा—त्तूर्णमेव च विदार्य मदर्थं ॥ मौक्तिकानि हि समानय नाथ । कांतयोक्त इति कोऽपि र-
णेऽगात् ॥ ५ ॥ अस्मि वीरजननीति जनन्या । अस्मि वीररमणीति रमण्या ॥ प्रेरितः पटुभटः कि-
ल कोऽपि । युद्धसन्मुखमगात्समरोत्कः ॥ ६ ॥ पत्युरेव पुरतः सुतमेका । स्माह वीरमुकुटं समरो-
त्कं ॥ विक्रमं युधि तथा विदधीथा । नो यथा भवति वत्स विकल्पः ॥ ११ ॥ कंपितः पतसि पाद-
युगे मे । नेत्रकोणकहतोऽपि भयार्तः ॥ युध्यसे किमिषुभिर्युधि नाथ । कांतयेति हसितश्चलितो-
ऽन्यः ॥ १२ ॥ मा कृथा युधि वृथास्म कलंकं । मां निधाय हृदये हृदयेश ॥ जीवितेऽपि मरणेऽपि
कदापि । त्वामहं प्रिय न वै प्रजहामि ॥ १३ ॥ कोऽपि पाणिकृतकाष्ठकृपाणो । बालकोऽप्यनुपतन्

जनकं स्वं ॥ हन्मि शत्रुसुभटानिति जल्पन् । भक्तिशक्तिभिरधारि जनन्या ॥ १४ ॥ अस्मि वीर-
तनया वरवीर—प्रेयसी च कुरु वीरसवित्रीं ॥ अद्य हृद्यसमरैरिति माता । काचिदिह निजपुत्रमु-
वाच ॥ १५ ॥ कातराः स्वगृहे केऽपि । गत्वा स्त्रीवेषधारकाः ॥ कूर्चमुत्तार्य संजाताः । प्रसविष्य इव
स्त्रियः ॥ १६ ॥ कातराणां गृहे राज्ञो । दूताः क्रूरा यमाननाः ॥ आकारणार्थमागत्यो—पविष्टा भ्रां-
तचेतसः ॥ १७ ॥ तैराहूतो भयभ्रांतः । शुष्कौष्ठो गद्गदस्वरः ॥ अभितो व्यस्तवसनो । विकीर्ण-
निजमूर्धजः ॥ २० ॥ ब्रुवन् लज्जाविनिर्मुक्तो । विलुंठन् स पदे पदे ॥ निस्ससार निजागेहात् ।
शुष्कास्यो ग्रथिलाकृतिः ॥ २१ ॥ त्रिभिर्विशेषकं ॥ तदा रत्नपुराधीशः । विक्रमश्च नृपोऽप्यथ ॥ स-
न्नह्य सन्मुखौ जातौ । पश्चिमस्यां दिशि क्रमात् ॥ २२ ॥ अग्र्यैररीन् प्रति प्रोक्तं । के यूयं कस्य
सेवकाः ॥ स्कंधावारस्य कः स्वामी । परसीमाक्रमणं कथं ॥ ३२ ॥ प्रोक्तमागंतुकैस्तथ्यं । श्रीजय-
कर्णनृपतिः ॥ सुताया रत्नमंजर्या । अत्र पृष्टेऽस्ति चागतः ॥ ३३ ॥ तत्र जातस्ततो घोर। उभयोः
सैन्ययो रणः ॥ नानातूर्यनिनादैश्चा—भितो बधिरितांबरः ॥ ३४ ॥ पत्तिः पदातिं रथिनं रथेशः ।
तुरंगवाहं तुरगाधिरूढः ॥ गजाधिरूढो हि गजप्ररूढं । समाह्वयन् युद्धकृतेऽत्र वीराः ॥ ३५ ॥ उभा-

लितः संयति रेणुरश्वैः । सांद्रीकृतः स्यंदनचक्रचक्रैः ॥ विस्तारितः कुंजरकर्णतालै—रनुक्रमेणाथ
रुरोध सूर्यं ॥ ३६ ॥ अथ श्रीविक्रमादित्यं । भूपं ज्ञात्वा रणांगणे ॥ नेशुर्दिशोदिशं वीरा । युध्य-
मानं मदोद्धतं ॥ ३७ ॥ अश्रौषीच्च तदा वार्तां । श्रीजयकर्णनृपतिः ॥ परिणीता विक्रमेण । नृपे-
न मम कन्यका ॥ ३८ ॥ श्रीजयकर्णनृपाल—स्त्वरितं स्वमतंगजं ॥ मुक्त्वा च पादचारेण । श्री-
विक्रमार्कमभ्यगात् ॥ ५१ ॥ ततो विक्रमनृपालं । पूज्यं पूज्यक्रियोचितं ॥ जयकर्णो ननामाथ ।
क्षमयित्वा निजागसं ॥ ५२ ॥ ततः प्रवर्तितो रंगो—ऽमंदानंदयुतस्तदा ॥ उभयोर्नृपयोश्चारु—
विवाहव्यग्रचित्तयोः ॥ ५३ ॥ कृत्वा विवाहं परया समृद्ध्या । श्रीस्तंभतीर्थाधिपराजपुत्र्याः ॥ आका-
रयामास समग्रलोकं । पुरीस्थितं विक्रमभूमिपालः ॥ ५४ ॥ गाणिक्यमाकार्य ततो नृपेंद्रः । पौरा-
णिकैः पौरजनैः समेतः ॥ कृत्यं बभाषेऽमृतकुंडिकायाः । पणांगनायाः सकलं च तस्याः ॥ ५५ ॥
ततो धृत्वा वेश्यां सकलमपि हृत्वा नरपतिः । समुद्रां मंजूषां धनमपि च तस्या हि सदनात् ॥ ख-
रारोपं कृत्वा श्रवणयुगलं घ्राणसहितं । निघृष्य छित्वा तां निजजनपदाद्दूरमकरोत् ॥ ५६ ॥ वि-
बुधप्रियनामानं । कीरं तस्या गृहीतवान् ॥ विक्रमश्च वधूयुक्तः । प्रापत्स्वीयं पुरं क्रमात् ॥ ५७ ॥

बाह्योद्याने स्थित्वा । पुरप्रवेशादिसकलसामग्रीं ॥ कृत्वा राजावंतीं । विवेश वरवाद्यनिर्घोषैः ॥ ५८॥ विविधैर्वर्द्धापनकै—र्वर्धाप्यमानो रत्नमंजरीयुक्तः ॥ पौरजनानंदकरः । क्रमेण सोऽगान्निजावासं ॥ ॥ ५९ ॥ कृत्वा कार्यं वर्यमार्योचितं स । श्वश्रूगेहे भूपतिराजगाम ॥ तस्याः पेटामग्रतोऽथो विमुच्य । पूज्येऽथाहं किं करोमीत्यवोचत् ॥ ६० ॥ श्रीविक्रमार्कस्य नरेश्वरस्य । श्रीपंचदंडातपछत्रबंधे ॥ पद्ये महाश्चर्यकरे यथोक्तः । प्रस्ताव एष तृतीयो बभूव ॥ ६१ ॥

॥ अथ चतुर्थः प्रस्तावः प्रारभ्यते ॥

एवं श्रीविक्रमादित्यः । कार्यं कृत्वा तृतीयकं ॥ चतुर्थकार्यकरणे । ह्यादेशं याचते च तां ॥ ॥ १ ॥ कथय स्वामिनि शीघ्रं । किं नु कार्यं करोम्यथ ॥ पंचदंडातपत्रस्य । येन सिद्धिः स्फुटा भवेत् ॥ २ ॥ सावदत् शृणु राजेंद्र । व्रजास्मिन्नगरे निशि ॥ धन्यस्य श्रेष्ठिनो गेहे । वेषांतरयुतो द्रुतं ॥ ३ ॥ रात्रौ प्रछन्नवृत्त्या यत् । कार्यं भवति तत्र च ॥ आमूलचूलतः सर्वं । त्वया ज्ञेयं नृपोत्तम ॥ ४ ॥ इति श्रुत्वावनीनाथो । गतो निजगृहं वरं ॥ उपविश्य सभामध्ये । जनानां चेति पृष्टवान् ॥ ५ ॥ धनाढ्यो धन्यनामास्ति । कोऽप्यत्र वणिजोऽग्रणीः ॥ कीदृशः कुत्र तद्गेहं । केना-

चारेण वर्तते ॥ ६ ॥ किं वयस्तस्य के पुत्राः । का नार्या शीलभूषणा ॥ किं कर्म कुरुते सोऽथ । तत्सर्वं मम कथ्यतां ॥ ७ ॥ इति श्रुत्वा नृपस्याथ । वचनं संसदि स्थिताः ॥ सभ्या विचारयामासुः । स्मृतिबुद्धिमतां वराः ॥ ८ ॥ ततस्ते कथयामासुः । स्वामिन्नत्र पुरोत्तमे ॥ अनेके धन्यनामानो । विद्यंते वणिजोऽधुना ॥ ए ॥ सदाचाररताः केऽपि । कदाचाररताः परे ॥ द्यूतकारास्तथा केऽपि । केऽपि मांसाशने रताः ॥ १० ॥ मद्यपाने रताः केचि—त्केचिद्वेश्यारतास्तथा ॥ परदाररताश्चौर्ये । केऽपि मिथ्याप्रलापिनः ॥ ११ ॥ स्वद्रोहे परद्रोहे च । परद्रव्यग्रहे रताः ॥ केचिद्रताः कूटसाक्ष्ये । देवद्रव्यस्य भक्षकाः ॥ १२ ॥ अन्ये तु धार्मिकाः संति । धर्मकर्मपरायणाः ॥ दानशीलतपोभाव—धर्मवर्गाश्रिता नराः ॥ १३ ॥ स्वदारतोषिणो नित्यं । परस्त्रीदर्शनेंधकाः ॥ परापवादने मूका । विरताः परवंचने ॥ १४ ॥ नित्यं संतोषसहिता । विजितांतरवैरिणः ॥ सद्दानपुण्यवंतश्च । वशीकृतनिजेंद्रियाः ॥ १५ ॥ परं धनेन धर्मेण । धरायां धनदोपमः ॥ धार्मिकाणां धुरि ख्यातो । धन्यो नाम्नास्ति श्रेष्ठिकः ॥ १६ ॥ सुश्रावकगुणैर्युक्तो । वियुक्तो व्यसनैरयं ॥ योग्यः सद्धर्मरत्नस्य । जिनाज्ञातत्परः सदा ॥ १७ ॥ एकविंशतिसंख्यैश्च । सुगुणैर्मौक्तिकैरिव ॥ भूषितो भाति भव्यात्मा । ध-

न्यो धर्मवतां वरः ॥ ४४ ॥ गृहिधर्मानुगैः पंच—त्रिंशद्गुणगणैर्युतः ॥ गुणा हि कथ्यमानास्ते । संक्षेपेण निशम्यतां ॥ ४५ ॥ न्यायसंपन्नविभवः । शिष्टाचारप्रशंसकः ॥ कुलशीलसमैः सार्धं । कृतोद्वाहोऽन्यगोत्रजैः ॥ ४६ ॥ पापभीरुः प्रसिद्धं च । लोकाचारं समाचरन् ॥ अवर्णवादी न कापि । राजादिषु विशेषतः ॥ ४७ ॥ अनतिव्यक्तगुप्ते च । स्थाने सुप्रातिवेश्मके ॥ अनेकनिर्गमद्वार—विवर्जितनिकेतनः ॥ ४८ ॥ कृतसंगः सदाचारै—र्मातापित्रोश्च पूजकः ॥ त्यजन्नुपप्लुतं स्थान—मप्रवृत्तश्च गर्हिते ॥ ४९ ॥ व्ययमायोचितं कुर्वन् । वेषं वित्तानुसारतः ॥ अष्टभिर्धीगुणैर्युक्तः । शृण्वानो धर्ममन्वहं ॥ ५० ॥ अजीर्णे भोजनत्यागी । काले भोक्ता च सात्म्यतः ॥ अन्योन्याप्रतिबंधेन । त्रिवर्गमपि साधयन् ॥ ५१ ॥ यथावदतिथौ साधौ । दीने च प्रतिपत्तिकृत् ॥ सदानभिनिविष्टश्च । पक्षपाती गुणेषु च ॥ ५२ ॥ अदेशकालयोश्चर्यां । त्यजन् जानन् बलाबलं ॥ वृत्तस्थज्ञानवृद्धानां । पूजकः पोष्यपोषकः ॥ ५३ ॥ दीर्घदर्शी विशेषज्ञः । कृतज्ञो लोकवल्लभः ॥ सलज्जः सदयः सौम्यः । परोपकृतिकर्मठः ॥ ५४ ॥ अंतरंगारिषड्वर्ग—परिहारपरायणः ॥ वशीकृतेंद्रियग्रामो । गृहिधर्माय कल्प्यते ॥ ५५ ॥ वृद्धत्ववयसा व्याप्तो । जर्जरीभूतविग्रहः ॥ श्वासकासादि

पक्ष

रोगेण । पीडितोऽस्ति परं हि सः ॥ ५६ ॥ वदनं दशनैस्त्यक्तं । देहो मांसेन चाखिलः ॥ त्वक् तस्य तेजसा त्यक्ता । वृद्धो जातोऽस्ति सोऽधुना ॥ ५७ ॥ उक्तं च—गात्रं संकुचितं गतिर्विगलिता दंताश्च नाशं गता । दृष्टिर्भ्राम्यति रूपमेव ह्रसते वक्त्रं च लालायते ॥ वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते । धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ ५८ ॥ पृथ्वीतले जरा कष्टं । कष्टं धनविपर्ययः ॥ कष्टं मृत्युः सुपुत्रस्य । कष्टात्कष्टतरी क्षुधा ॥ ५९ ॥ एवंविधोऽपि धर्मिष्टो । वर्याचाररतो ह्यसौ ॥ त्रिकालं विदधे पूजां । पौषधं सर्वपर्वसु ॥ ६३ ॥ सामायिकादिषट्कर्म—कर्ता हर्ता कुकर्मणः ॥ मुनिवद्विषयासंग—विमुक्तः प्रियवाक् सुधीः ॥ ६४ ॥ अष्टादशस्वर्णकोटी—नायकोऽपुत्रवानसौ ॥ अनारतं निजं द्रव्यं । सप्तक्षेत्रेषु यच्छति ॥ ६५ ॥ शृणु राजन् चरित्रं त—द्भार्याया भुवनाद्भुतं ॥ यया धन्यो नितांतं स । सुखी सौभाग्यवानभूत् ॥ ६६ ॥ अस्यात्रैव पुरे श्रीमान् । श्रीपतिर्नामतोऽर्थतः ॥ वरेण्यो वणिजां श्रेष्टो । ज्येष्टो लोकेषु सर्वदा ॥ ६७ ॥ पंचानां मध्यतः पूज्यः । पंचाचारप्रपालकः ॥ पंचेंद्रियवशीकर्ता । वीर्यपंचाननोपमः ॥ ६८ ॥ तत्प्रिया श्रीमती नाम्ना । श्रीपतेः श्रीर्यथा यया ॥ पुत्रत्रयोपरि प्राज्ञा । सुता जाता वरानना ॥ ६९ ॥

सुतजन्मोत्सवे सर्वो । जनो यात्यत्र हर्षतां ॥ श्रूयते नैव शास्त्रेषु । सुताजन्मोत्सवः क्वचित् ॥७०॥ यतः—जातेति शोको महतीति चिंता । कस्मै प्रदेयेति महान् वितर्कः ॥ दत्ता सुखं प्राप्स्यति वा न वेति । कन्यापितृत्वं खलु नाम कष्टं ॥ ७१ ॥ वरं व्याघ्रयुतारण्य—सेवनं विषभक्षणं ॥ वंध्यात्वं विवरे वासो । न सुतामुखदर्शनं ॥७४॥ आबाल्यादपि या नित्यं । गृहद्रव्यविनाशिनी ॥ पाणिग्रहणवेलायां । गृहसर्वस्वहारिणी ॥ ७५ ॥ इत्यस्ति लोकविख्यातं । सुताजन्मोत्सवो न हि ॥ तथापि व्यवहारी स । सुताजन्मोत्सवं व्यधात् ॥ ७६ ॥ पुत्रजन्मोत्सवमिव । तस्या जन्ममहं व्यधात् ॥ गुरूघृतादिदानैः स । स्वजनानप्यतोषयत् ॥ ७७ ॥ पंचशब्दादिवादित्रै—र्गृहं नादमयं व्यधात् ॥ षष्टिजागरणं नाम—स्थापनं च पिताकरोत् ॥ ७९ ॥ सा रत्नमंजरीनाम्ना । सर्वांगगुणपूरिता ॥ ववृधे स्वजनानंद—दायिनी भामिनी वरा ॥ ८० ॥ सर्वलक्षणसंयुक्ता । त्यक्ता दोषशतैः सदा ॥ अगण्यपुण्यलावण्य—शालिनी गजगामिनी ॥ ८१ ॥ रूपेण विजितानेक—नाकस्थनाकिनायिका ॥ चतुःषष्टिकलोपेता । सर्वशास्त्रविशारदा ॥ ८२ ॥ सारदेव च या भाति । भामिनी भूरिभूषणा ॥ निर्दूषणा नितांतेन । वेधसा निर्मिता वरा ॥ ८३ ॥ सयौवनापि सानंग—संगरंगवि-

वर्जिता ॥ निर्विकारा विवेकाढ्या । पुंमनोहारिणी परं ॥ ८४ ॥ निरता धर्मशास्त्रेषु । विरता पाप-
कर्मणि ॥ परं नृद्वेषिणी नैव । पाणिग्रहणमिच्छति ॥ ८५ ॥ अनेकधा सखीभिः सा । पृष्टा किंचि-
न्मनोगतं ॥ भावं प्रकाशते नैव । हंत सा कांतवर्जिता ॥ ८६ ॥ श्रीमती श्रीमती सापि । नित्य-
मारोप्य वक्षसि ॥ तां पृच्छतिस्म हे वत्से । वरं न वृणुषे कथं ॥ ८७ ॥ सावक् नरं सुरं सिद्धं । त-
था खेचरपुंगवं ॥ विद्याधरं च गांधर्वं । वरं नैव वृणोम्यहं ॥ ८८ ॥ मंत्रैस्तंत्रैस्तथा यंत्रै—रौषधैर्व-
श्यकार्मणैः ॥ अन्यैरपि तथोपायै—स्तस्याश्चित्तं न चालितं ॥ ८९ ॥ सर्वावयवसंपूर्णा । सर्वलक्ष-
णसंयुता ॥ सर्वसौंदर्यसहिता—ऽवर्ध्दतेंडुकलेव सा ॥ ९० ॥ त्रिजगन्मोहिनीमान—युता सासी-
ज्जितेंद्रिया ॥ तत्स्वरूपं च नो वेधा । अपि जानाति हृद्गतं ॥ ९१ ॥ उद्यौवनमदोन्मत्ता । तारु-
ण्यद्रुममंजरी ॥ लावण्यकूपिकेवासौ । जाता विंशतिवार्षिका ॥ ९२ ॥ अत्रांतरे धनाढ्यस्य । ध-
न्यस्य दयिता मृता ॥ श्रेष्टिनस्तस्य वृद्धस्य । सप्ततिवर्षसंगिनः ॥ ९३ ॥ सा प्रातिवेशिमकी रत्न—
मंजरी शीलभूषणा ॥ धन्यं तं श्रेष्टिनं वृद्धं । भार्यात्यक्तमथावदत ॥ ९४ ॥ धन्य त्यज प्रियाशोकं
। सहर्षं कुरु मानसं ॥ त्वामहं स्वपतिं कृत्वा । पालयामि पतिव्रतं ॥ १०० ॥ धन्याहं कृतपुण्याहं ।

निस्तीर्णाहं भवार्णवात् ॥ यथा पतिव्रतत्वेन । करोमि निर्मलां तनुं ॥ १ ॥ धन्योऽवदच्च हे भद्रे । त्वं सुरूपा सयौवना ॥ यूनां हि श्रेष्ठिपुत्राणां । योग्या वामांगसंगता ॥ २ ॥ यतः—अनुचितफलाभिलाषी । विधिनैव निवार्यतेऽधमः पुरुषः ॥ द्राक्षापाचनकाले । मुखरोगो भवति काकानां ॥ ॥ ३ ॥ वांछति हि वरं कन्या । माता वित्तं पिता कुलं ॥ स्वाजन्यं बांधवाश्चापि । मिष्टान्नमितरे जनाः ॥ ४ ॥ मूर्खनिर्धनदूरस्थं । शूरं मोक्षाभिलाषिणं ॥ त्रिगुणाधिकवर्षीयं । तस्मै देया न कन्यका ॥ ५ ॥ बधिरक्लीबमूकानां । खंजांधजडचेतसां ॥ सहसा घातकर्तॄणां । नूनं देया न कन्यका ॥ ६ ॥ कुलजातिविहीनानां । पितृमातृवियोगिनां ॥ गेहिनीपुत्रयुक्तानां । नूनं देया न कन्यका ॥ ७ ॥ कुशीलचौर्ययुक्तानां । मद्यमांसरतात्मनां ॥ वैदेशिकस्वगोत्रिणां । नूनं देया न कन्यका ॥ ८ ॥ सदैवोत्पन्नभक्षिणा—मालस्यवशवर्तिनां ॥ बहुवैराग्ययुक्तानां । नूनं देया न कन्यका ॥ १० ॥ उक्तं च—कुलं च शीलं च सनाथता च । विद्या च वित्तं च वपुर्वयश्च । एते गुणा यत्र वरे भवेयु—स्तस्मै प्रदेया जनकेन कन्या ॥ ११ ॥ इत्युक्त्वा विरते तस्मिन् । धन्ये धर्मवतां वरे ॥ उवाच वचनं तथ्यं । धन्या सा रत्नमंजरी ॥ १२ ॥ अहं न भोगसौख्यार्थे । नार्थ-

ग्रहणकांक्षया ॥ संतत्यर्थं न मानार्थं । न भयार्थं न लज्जया ॥ १३ ॥ केवलं पुण्यवांछार्थं । शी-
लपालनतत्परा ॥ त्वां सुशीलं वरं लब्ध्वा । कुमारीत्वं त्यजाम्यहं ॥ १४ ॥ पतिव्रता तदासक्ता । प-
तियुक्ता पतिप्रिया ॥ पत्या सहैव या याति । सा नारी वंशभूषणा ॥ १५ ॥ जरायुक्तं निजं नाथं ।
त्यक्त्वा या रमते परं ॥ पितुर्गृहे घनं याति । नायिका साधमा मता ॥ १६ ॥ पत्युर्वाचमवज्ञाय ।
या च सन्मुखभाषिणी ॥ पत्यौ द्वेषयुता नित्यं । नायिका साधमा मता ॥ १७ ॥ कलिप्रिया महा
क्रूरा । निर्दया मर्मभाषिणी ॥ परगृहाटने रक्ता । नायिका साधमा मता ॥ २० ॥ अधोमुखी कूप-
गल्ला । घनरोमयुतांगका ॥ लंबोष्ठी स्थूलकेशा च । नायिका साधमा मता ॥ २१ ॥ काकस्वरा क-
रालाक्षी । लंबजिह्वारदान्विता ॥ दर्शयंती मुहुर्नाभिं । नायिका साधमा मता ॥ २२ ॥ कुशीला
कुलटा कूट—प्रिया क्लेशविधायिनी ॥ कठोरवाक्या काणाक्षी । नायिका साधमा मता ॥ २३ ॥ प-
तिभक्तिरता नित्यं । पत्युच्छिष्टान्नभक्षका ॥ पतिप्रेमपरानंदा । पतिदुःखेन दुःखिता ॥ २४ ॥ एवं-
विधा तु या नारी । कुलत्रयकशोपला ॥ प्रशस्यते बुधैर्लोके । गृहलक्ष्मीनिभा सदा ॥ २५ ॥ म-
या वृतो वरस्त्वं हि । मनसा पुरुषोत्तम ॥ कथयित्वेति मालां सा । तस्य कंठेऽध्यरोपयत् ॥ २६ ॥

विवाहिता शुभे लग्ने । पित्रापि प्रमुदाथ सा ॥ तातदत्तं धनं लात्वा । धन्या धन्यगृहे ययौ ॥२७॥
पत्युः पादौ त्रिकालं सा । प्रक्षाल्य चरणोदकं ॥ तदेव पिबति नित्यं । पतिभक्तिपरायणा ॥२८॥
सतीगुणयुता मौन—वृत्ता च मृदुभाषिणी ॥ गृहकार्यरता जाता । सा सद्धर्मपरायणा ॥२९॥
महासती महामान्या । महोत्साहा मदच्युता ॥ सा महेश्वरपत्नीव । जाता जगति विश्रुता ॥३०॥
तस्याश्चरणनीरेण । वातपित्तकफोद्भवाः ॥ रोगाः सर्वे क्षयं यांति । कुष्टान्यष्टादशाप्यहो ॥३१॥
अपुत्राणां मनुष्याणां । पुत्रप्राप्तिः क्षणाद्भवेत् ॥ स्थावरं जंगमं चैव । विषं नैव प्रसर्पति ॥३२॥
सौम्यदृष्ट्या तया दृष्टं । शुष्कमप्यार्द्रतां व्रजेत् ॥ क्रूरदृष्ट्या पुनश्चार्द्रं । शुष्कं भवति निश्चितं ॥
॥ ३३ ॥ अतिवृष्टिरनावृष्टि—र्मूषकाः शलभास्तथा ॥ पराभवंति नो तत्र । तस्या एव प्रभावतः ॥
॥ ३७ ॥ मतंगजो हयो व्याघ्रः । सर्पो दावानलो जलं ॥ तत्र तस्याः प्रभावेण । प्रभवंति कदापि न ॥ ३९ ॥ इति लक्षणसंयुक्ता । दानशीलतपोऽन्विता ॥ चतुःषष्टिकलोपेता । लक्ष्मीर्मूर्त्तिमतीव सा ॥ ४० ॥ स धन्योऽस्ति महाराज । व्यवहारी रमेश्वरः ॥ तस्य प्रियाप्रबंधोऽय—मस्माभिः कथितोऽखिलः ॥ ४१ ॥ पृथ्वीमृणविहीनां स । कृत्वा स्तोकदिनैः खलु ॥ सद्भार्यः स्वर्गलोके च ।

संप्रयास्यति निश्चितं ॥ ४४ ॥ इति तद्वचसः प्रांते । विसर्ज्य सकलां सभां ॥ भूपतिस्तद्गृहे गंतुं । रूपांतरमथाकरोत् ॥ ४५ ॥ नृपो दिनांतेऽथ सुपांथवेषो । धृत्वा करे पुष्करपात्रमेकं ॥ कषायवस्त्रान्वितदेहयुक्तो । रुद्राक्षमालाभिर्विभूषितांगः ॥ ४६ ॥ केदारमुद्रांकितस्वांगुलीकः । प्रोद्दंडदंडांकितपाणिपद्मः ॥ गंगामृदा चर्चितद्वादशांगो । गतश्च तत्राथ स कौतुकार्थी ॥ ४७ ॥ युग्मं ॥ गत्वा तद्गेहांतः । प्रोवाच परिस्फुटं स नृमीशः ॥ सुभगे सुभगाकारे । अतिथिश्चागां तवागारे ॥ ४८ ॥ उक्तं च—अतिथिश्चापवादी च । द्वावेतौ मम बांधवौ ॥ अपवादी हरेत्पाप—मतिथिः स्वर्गदायकः ॥ ४९ ॥ भस्मना शुध्यते कांस्यं । ताम्रमम्लेन शुध्यति ॥ रजस्वला स्त्री स्नानेन । गृही दानेन शुध्यति ॥ ५० ॥ इत्युक्ते यतिभक्ता तं । पांथवेषधरं नृपं ॥ सासने चोपवेश्याथ । रम्यं भोज्यमकारयत ॥ ५१ ॥ तांबूलादींस्ततो दत्वा । बाह्यांगणभुवि तथा ॥ रम्यां शय्यां विधायासौ । शयनार्थं तमादिशत् ॥ ५२ ॥ नृपोऽप्यदृश्यरूपोऽथ । पश्यन् विविधचेष्टितं ॥ सुप्तोऽपि जजागार । ज्ञातुं तच्चरितं तदा ॥ ५३ ॥ अथ सा संध्याकाले । पत्युः पादोदकं च पीत्वा द्राक् ॥ गेहापवरकमध्ये । निनाय निजवल्लभं भक्त्या ॥ ५४ ॥ गंगापुलिनसुकोमल—शय्यायां सुरभिपुष्पयुक्तायां ॥

सुष्वाप धन्यः श्रेष्टी । निवेश्य चरणौ प्रियोत्संगे ॥ ५९ ॥ सा पतिचरणौ नत्त्या । संवाहयति स्वकीयपाणिभ्यां ॥ शीलवतीशृंगारा । पतिव्रताधर्मसंयुक्ता ॥ ६० ॥ अथ निद्रां गते पत्यौ । धर्मध्यानार्थमागता ॥ गृहपौषधशालायां । विशालायां मुदाथ सा ॥ ६१ ॥ संस्थाप्य स्थापनाचार्यं । कृत्वा स्वीयासनं स्थिरं ॥ सामायिकादिषट्कर्म—करणे सा मतिं दधौ ॥ ६२ ॥ एकाग्रचित्ततां कायं । कृत्वा च वचनं स्थिरं ॥ त्रिधा शुद्ध्या शुभध्यानं । ध्यापयामास सा शुभा ॥ ६३ ॥ पंचानां परमेष्टिनां । कृत्वा सा स्मरणं घनं ॥ स्मृत्वा सद्धर्मशास्त्राणि । सामायिकमपारयत् ॥ ६४ ॥ समर्प्य गृहकार्यं च । सर्वं परिजनस्य सा ॥ कपाटदृढकरणादि । प्रययौ पतिसन्निधौ ॥ ६५ ॥ राजा श्रीविक्रमादित्य । आदित्यसमसुप्रभः ॥ विलोकयन् विशेषेण । सुप्तः कपटनिद्रया ॥ ६६ ॥ सुप्ते परिजने सर्वे । मंदं मंदं गतो नृपः ॥ जालांतरस्थितो द्वारि । तच्चरित्रं व्यलोकयत् ॥ ६७ ॥ निशार्द्धसमये कोऽपि । साहसी चौरनायकः ॥ द्रव्यार्थी खात्रपातेन । प्रविष्टो धन्यसद्मनि ॥ ६८ ॥ तं दृष्ट्वा जागृता रत्न—मंजरी सा व्यचिंतयत् ॥ कोऽयं रूपश्रिया मार—सदृशो विश्वमोहकः ॥ ६९ ॥ किमिंद्रः किमु वा चंद्रो । ह्यथवा किं दिवाकरः ॥ देवः किमथवा साक्षा—दयं मकरकेतनः ॥

॥ ७० ॥ कलंकी रजनीजानि—स्तपनस्तापकः पुनः ॥ अनंगस्तु मनोजन्मा । तत्कोऽयं सुभगाग्रणीः ॥ ७१ ॥ त्रिभिर्विशेषकं ॥ तं दृष्ट्वा रूपवंतं सा । चिंतयंतीति मानसे॥ विषयैः परिभूतांगानंगबाणैर्घनं हता ॥ ७२ ॥ उवाच वचनं चारु । चतुरा रत्नमंजरी ॥ चौरं कामाकुलीभूता । प्राणनाथावधार्यतां ॥ ७३ ॥ एष देहो गृहं चैत—द्धनधान्यसमन्वितं ॥ देवलोकविमानाभं । त्वदायत्तमतः परं ॥ ७४ ॥ प्रसीद परमानंद—दायकस्त्वं तु नायक ॥ भोगं भुंक्ष्व मया सार्धं । न सहेऽहं विलंबनं ॥ ७५ ॥ इति तद्वचनं श्रुत्वा । स जगौ चौरनायकः ॥ कंपमानो भयभ्रांतः । शृणु सौम्ये वचो मम ॥ ७६ ॥ अमेध्यमध्ये कीटस्य । सुरेंद्रस्य सुरालये ॥ समाना जीवितव्याशा । समं मृत्युभयं द्वयोः ॥ ७७ ॥ द्यूतकारी तथा चौर—चर्ययाहं धनार्जकः ॥ वेश्याव्यसनसंयुक्तो । वियुक्तो गृहबंधुभिः ॥ ७८ ॥ अतो धनार्थं त्वद्गेहे । प्रविष्टो निष्फलोऽभवं ॥ जागृति हि जने चौरा । न गृहीतुं धनं ह्यलं ॥ ७९ ॥ इति चौरवचः श्रुत्वा । विवशा रत्नमंजरी ॥ कामबाणविभिन्नांगा । विरहानलपीडिता ॥ ८० ॥ कुलमार्गं परित्यज्य । व्यथिता मन्मथेषुभिः ॥ पूरिता पापपूरेण । तस्योत्तरमिदं ददौ ॥ ८१ ॥ नाथाथ शृणु मे वाक्यं । चौरस्त्वं पुरुषोत्तमः ॥ मम मानसमीनस्य

। जालवत्प्रतिभाससे ॥ ८२ ॥ मामकीनो मनोमीनो । वसन् हि रागसागरे ॥ गृहीतो रूपजाले-
न । त्वया तेनासि धीवरः ॥ ८३ ॥ सक्तः स्पर्शे नागः । शब्दे हरिणो रसे तु मीनश्च ॥ पतन्
पतंगो दीपे । नष्टो गंधेन भृंगश्च ॥ ८४ ॥ विषयगणः कापुरुषं । करोति वशवर्तिनं न सत्पुरुषं ॥
बध्नाति मशकमेव हि । लूतातंतुर्न मातंगं ॥ ८५ ॥ विषस्य विषयाणां च । दूरमत्यंतमंतरं ॥ उप-
भुक्तं विषं हंति । विषयाः स्मरणादपि ॥ ८६ ॥ ये नैकांगुलितर्जनामपि गुरोः सोढुं समर्था नरा ।
मानाभ्युन्नतमानसाश्च सकलं पश्यंत्यधस्ताज्जगत् ॥ ते कामेन कदर्थिता धृतिभिदा पादैर्हता योषि-
ता—माज्ञां मूर्धभिरुद्वहंति कृपणा राज्ञामिव प्रोल्बणां ॥ ८७ ॥ यौवनं धनसंपत्तिः । प्रभुत्वमवि
वेकिता ॥ एकैकमप्यनर्थाय । किं पुनस्तच्चतुष्टयं ॥ ८८ ॥ अनादाविह संसारे । दुर्वारो मकरध्व-
जः ॥ विडंब्यमाना येनात्र । वीराः स्युरपि कातराः ॥ ९० ॥ एते दुःखमया इमे विषमया एते हि
मायामया । एतेभ्योऽपि किमस्ति निंदितमथैतेभ्यो विरूपं च किं ॥ इत्थं रे विषयेषु लोलुपतया
तैस्तैः प्रकारैः सखे ॥ । चेतस्त्वं विनिवार्यमाणमपि धिग् बद्धस्पृहं धावसि ॥ ९१ ॥ अवश्यं याता-
रश्चिरतरमुषित्वापि विषया । वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ॥ व्रजंतः स्वातंत्र्याद-

तुलपरितापाय मनसः । स्वयं त्यक्ता ह्येते शमसुखमनंतं विदधति ॥ ७२ ॥ विषयसुखं दुग्धमिव । स्वादयति जनो विडाल इव मुदितः ॥ नोत्पाटितलकुटमिव । पश्यति यममहह किं कुर्मः ॥ ७३ ॥ अविदितपरमानंदो । वदति जनो विषय एव रमणीयः ॥ तिलतैलमेव मिष्टं । येन न दृष्टं घृतं क्वापि ॥ ७४ ॥ भुंक्ष्व भोगान् मया सार्धं । फलं मानुषजन्मनः ॥ गृहाण सुकुमालं च । ममांगकं मुररीकुरु ॥ ७५ ॥ चौरः प्रोवाच हे कांते । त्वयोक्तमसमंजसं ॥ वृद्धं पतिं यतस्त्यक्त्वा । स्वकीयं मां तु वांछसि ॥ ७६ ॥ लोकद्वयविरुद्धेना—नेन पापेन कर्मणा ॥ परस्त्रीसंगदोषेण । ममापि नरकं भवेत् ॥ ७७ ॥ किंच स्मृतावपि—गते मृते प्रव्रजिते । क्लीबे च पतिते पतौ ॥ पंचस्वापत्सु नारीणां । पतिरन्यो विधीयते ॥७८॥ जीवति तव नाथेऽहं । कथं संगं करोमि ते ॥ विचार्य विचारज्ञे । नीतिशास्त्रविदां वचः ॥ ७९ ॥ इत्युक्तं चौरराजेन । वचनं नीतिसंयुतं ॥ श्रुत्वा च मदनांधा सा । तस्य चेत्युत्तरं ददौ ॥ १०० ॥ सुभगायं ध्रुवं वृद्धो । मृतोऽस्ति मम वल्लभः ॥ न प्रत्येसि तदागत्य । तं मृतं प्रविलोकय ॥ २ ॥ यावदागत्य चौरोऽसौ । करोत्यस्यास्यदर्शनं ॥ तावत्तया तस्य कंठे । दत्तोंगुष्ठोऽसुनाशकः ॥ ४ ॥ अहो नारीचरित्रं तु । दुर्घटं घटनातिगं ॥ वेधा

अपि न जानाति । का कथा मानुषस्य तु ॥ ५ ॥ यासामंचलवातेन । कामरोगो हि वर्धते ॥ तासामालिंगने पुंसां । किं चित्रं मरणं भवेत् ॥ ६ ॥ आसन्नमेव ललना भजते मनुष्यं । विद्याविहीनमकुलीनमसंस्तुतं च ॥ प्रायेण भूमिपतयः प्रमदा लताश्च । पार्श्वस्थमेव किल संपरिवेष्टयंति ॥ १० ॥ नितंबिन्यः पतिं पुत्रं । पितरं भ्रातरं क्षणात् ॥ आरोपयंत्यकार्येऽपि । दुर्वृत्ताः प्राणसंशये ॥ ११ ॥ संमोहयंति मदयंति विडंबयंति । निर्भर्त्सयंति रमयंति विषादयंति ॥ एताः प्रविश्य सदयं हृदयं नराणां । किं नाम वामनयना न समाचरंति ॥ १२ ॥ स्फुरन्मायावर्त्तः सहजचपलत्वोर्मिनिकरः । करालक्रूरत्वप्रकरमकरव्रातसहितः ॥ चलच्चेतःपोतो हतहृदयपातालविवरो । गभीरोऽयं योषिज्जलधिरिह के के न पतिताः ॥ १४ ॥ स्मितेन भावेन च लज्जया भिया । पराङ्मुखैरर्धकटाक्षवीक्षितैः ॥ वचोभिरीर्ष्याकलहैश्च लीलया । समस्तभावैः खलु बंधनं स्त्रियः ॥ १५ ॥ अहह गृही क्व नु कुशली । बध्ध्वा संसारसागरे क्षिप्तः ॥ यद्यपि लभते पोतं । पुनस्तयैव निमज्ज्यते प्रसभं ॥ ॥ १६ ॥ भार्यानिगडं दत्वापि । न संतुष्टः प्रजापतिः ॥ भूयश्च पुत्ररूपेण । यच्छति गलशृंखलां ॥ ॥ १७ ॥ एता हसंति च रुदंति च कार्यहेतो—र्विश्वासयंति च वरं न च विश्वसंति ॥ तस्मान्नरेण

कुलशीलसमन्वितेन । नार्यः श्मशानघटिका इव वर्जनीयाः ॥ १८॥ भूमौ निक्षिप्य तं धन्यं । श-य्यायां स्वेच्छयाथ सा ॥ तेन सह विविधैर्भंगै—र्मुदा रंतुं प्रचक्रमे ॥ १९ ॥ विविधैश्चुंबनैः सा तं । सुनर्मवचनैस्तथा ॥ आलिंगनपरिष्वंगै—स्तोषयामास संमदात् ॥ २० ॥ हर्षयुक्तैश्च सीत्कारै—स्तांबूलार्पणकैर्मिथः ॥ तयोस्तदा प्रवृत्तश्च । स्मररंगोऽतिहर्षदः ॥ २१ ॥ त्रियामायास्ततः प्रांते । सोऽवदच्चौरनायकः ॥ यास्याम्यहं निजं स्थानं । मृगशावविलोचने ॥ २२ ॥ यतः—रात्रिंचराः पुनश्चौराः । दिने प्रच्छन्नवृत्तयः ॥ कुर्कुटस्वरमाकर्ण्य । द्रुतं यांति दिशोदिशं ॥ २३ ॥ अथावदत्सा हे स्वामिन् । विना त्वां प्राणवल्लभ ॥ हाहा कथं भविष्यामि । विरहानलपीडिता ॥ २४ ॥ प्राणेश त्वां विना प्राणान् । कथं रक्षामि संप्रति ॥ नित्यं रात्रौ त्वयागत्य । पावनीयं गृहं मम ॥ २५ ॥ त्वां विना तु गृहं देहो । यौवनं हृदयं मम ॥ संजातं त्वधुना शून्यं । कथ्यते किं मुहुर्मुहुः ॥ २६ ॥ तां जिह्वां शतधा कृत्वा । प्रक्षिपामि दिशोदिशं ॥ यया प्राणेश गच्छ त्व—मिति वाक्यं वदाम्यहं ॥ २७ ॥ यतः—मा गा इत्यपमंगलं व्रज इति स्नेहेन हीनं वच—स्तिष्ठेति प्रभुता यथारुचिवच-स्तच्चाप्युदासीनता ॥ त्यक्तं सांप्रतमाचरामि रुचिरं यत्सोपचारं वचः । स्मर्तव्या वयमादरेण सहसा

यामः पुनर्दर्शनं ॥२९॥ चौरोऽप्युवाच हे सुभ्रु । लावण्यगुणसागरे ॥ त्वं मे मानसहंसस्य । भाससे वागुरा वरा ॥ ३२ ॥ हे प्रिये प्राणदासि त्वं । प्राणान् मुक्त्वा तवांतिके ॥ यामि स्वस्ति तवैवास्तु । समेष्यामि दिनात्यये ॥ ३३ ॥ वदंतमिति तं चौरं । श्रुत्वा विक्रमभूपतिः ॥ करवालकरः क्रूरो—ऽभूत्सज्जो द्वारदेशगः ॥ ३४ ॥ यावत्स खात्रमार्गेण । याति चौरोऽथ शंकितः ॥ तावत्साह कथं स्वामिन् । त्वया कष्टेन गम्यते ॥ ३५ ॥ मुख्यद्वारं समुद्घाट्य । गच्छ त्वं जीवितेश्वर ॥ पुनः प्रसादं कृत्वा मे । मानसाब्जं विकासयेः ॥ ३६ ॥ ततः कपाटमुद्घाट्य । यावद्याति बहिरसौ ॥ राज्ञासिना हतस्तावत् । स चौरः पारदारिकः ॥ ४६ ॥ तत्क्षणादेव पंचत्वं । प्राप्तवांश्च पपात सः ॥ अत्युग्रपुण्यपापानां । फलमत्रैव जन्मनि ॥ ४७ ॥ उक्तं च—द्रौपद्या वचनेन कौरवशतं निर्मूलमुन्मूलितं । सुग्रीवस्य विधाय मोहमतुलं वाली हतस्तारया ॥ सीतासक्तमनास्त्रिलोकविजयी प्राप्तो वधं रावणः । प्रायः स्त्रीवचनप्रपंचनिरताः सर्वे क्षयं यांति वै ॥ ४८ ॥ एकं पश्यति नेत्रवक्रचलितै रामान्यमाभाषते । आलिंगत्यपरं प्रयच्छति करेणान्यस्य तांबूलकं ॥ संकेतं दिशतीतरस्य हसितैरन्यं हरेत्स्त्रीजनो । यस्तस्यामनुरागमेत्यनिपुणो धिक् तं मनुष्याधमं ॥ ४८ ॥

न विषं नामृतं किंचि—देकां मुक्त्वा नितंबिनीं ॥ सैवामृतमयी रक्ता । विरक्ता विषरूपिणी ॥ ४७ ॥ रक्ता हरति सर्वस्वं । प्राणानपि विरागतः ॥ अहो रागे विरागे च । कष्टं कष्टात्खलु स्त्रियः ॥ ५० ॥ प्राज्ञं विनीतं स्वाचारं । विद्वांसमपि मंत्रिणं ॥ छलयंति नरं नित्य—मेता योषितिपिशाचिकाः ॥ ५१ ॥ इंदुलेखेव कुटिला । संध्येव क्षणरागिणी ॥ नीचगा निम्नगेवासौ । वर्जनीया नितंबिनी ॥ ५२ ॥ ज्ञात्वा तच्चरितं सर्वं । चौरं हत्वा स्ववेश्मनि ॥ गतः श्रीविक्रमादित्यः । सुष्वाप शयने तथा ॥ ५४ ॥ अथ चौरं हतं ज्ञात्वा । गत्वा तन्निकटं च सा ॥ दुःखिता भूरिमोहेन । चकार परिदेवनं ॥ ५५ ॥ हा प्राणनाथ प्राणेश । जीवितेश शुभंकर ॥ मां मुक्त्वा क्व गतोऽसि त्वं । विरहानलपीडितां ॥ ५६ ॥ कथं हाहा भविष्यामि । त्वां विनाहं जनोत्तम ॥ आजीवितं स्वहस्तः । महादुःखाब्धिमध्यगा ॥ ५७ ॥ विलप्य बहुधा चैवं । सेति चित्ते व्यचिंतयत् ॥ अहो मम द्वयं ताव—न्नतं गौरवकारणं ॥ ५८ ॥ लौकिकस्तु गतो भर्ता । गतो लोकोत्तरः पुनः ॥ गतो धर्मः कुले जात—स्त्रैलोक्यव्यापकोऽयशः ॥ ६३ ॥ प्रभाते किं करिष्यामि । पतिहीना सुतैर्विना ॥ लोकद्वयविरुद्धेना—नेन पापेन कर्मणा ॥ ६४ ॥ हाहा दैवाथ जाताहं । सर्वशृंगारवर्जिता ॥ प-

तिहीना च निर्भाग्या । विधवा करुणास्पदा ॥ ६५ ॥ वंचिता वस्त्रभूषाभि—स्तांबूलरहितानना ॥ जाता हा संप्रति दीना । कुंकुमादितिरस्कृता ॥ ६६ ॥ अधोमुखी गल्लन्यस्त—हस्ता हातःपरं कथं गृहकोणस्थिता कालं । गमयिष्यामि हा कथं ॥ ६७ ॥ नित्यं रटंती रंकेव । सदाश्रुमलिनानना ॥ लोकानां पुरतः स्वास्यं । दर्शयिष्यामि हा कथं ॥ ७० ॥ वरं विषं वने वासो । व्याघ्रवक्त्रविशोधनं ॥ वरं गुहाप्रवेशश्च । सिंहस्य भयकारिणः ॥ ७१ ॥ वैश्वानरे जले झंपा—पातो वरतरः खलु ॥ न वरं विधवायास्तु । जीवनं लोकनिंदितं ॥ ७२ ॥ विचिंत्येति समुत्थाय । साहसाश्रितमानसा ॥ सा परिवारमुत्थाप्य । रात्रिवृत्तं ततोऽवदत् ॥ ७३ ॥ रजन्यामद्य नो गेहे । स्तेनः कश्चित्समागतः ॥ मारितस्तेन मे प्राण—वल्लभो जरयान्वितः ॥ ७९ ॥ स तीर्थयात्रिको धन्यो । धावमानस्तदा मम ॥ प्राणेशरक्षणार्थं तु । हतः पापेन तेन सः ॥ ८० ॥ जागृताहं क्षणादेव । तावन्नष्टा गतोऽधमः ॥ स स्तेनोऽथ करोमि किं । हा दैवेन हता त्वहं ॥ ८१ ॥ भर्तारं मे तथा चैनं । भर्तुरर्थे मृतं ध्रुवं ॥ गृहीत्वा कानने प्राणान् । त्यजामि वह्निना द्रुतं ॥ ८२ ॥ नार्योऽन्या हि मृते नाथे । रुदंति करुणारसं ॥ वर्धापयंति वलयैः । खंडितैश्च करच्युतैः ॥ ८३ ॥ अहं तु हर्षपूरेण । पूरिता

पतिवर्त्मगा ॥ यास्यामि स्वर्गलोकं हि । लोकवृंदैः स्तुता सती ॥ ७७ ॥ अथ सा स्वामिनो देहं ।
चौरस्यापि कलेवरं ॥ शुद्धोदकेन प्रक्षाल्य । पूजयामास संमदात् ॥ ७८ ॥ प्रभातसमये जाते ।
उज्जयिन्या जनोऽखिलः ॥ सतीपादार्चनरतो । गलदश्रुः समागतः ॥ ७९ ॥ हा मातस्त्वां विना
लोकः । सशोकः किं करिष्यति ॥ रोगदोषभयभ्रांतः । कस्याग्रे पूत्करिष्यति ॥ ८० ॥ अद्य त्रि-
भुवनं शून्य—मवंती रंडिताखिला ॥ जनाशा निष्फला जज्ञे । त्वयि देवि दिवं गते ॥ ८१ ॥
श्रीविक्रमो जनैर्गत्वा । विज्ञप्तो विनयान्वितैः ॥ सतीशिरोमणिर्याति । पतिवर्त्मानुगामिनी ॥८२॥
प्रत्यक्षा कामधेनुः सा । कल्पवल्लीव जंगमा ॥ धन्यस्य दयिता धन्या । मान्याखिलजनव्रजैः ॥
॥ ८३ ॥ पादप्रक्षालनाद्यस्या । वातपित्तकफोद्भवाः ॥ रोगाः सर्वे प्रयांतिस्म । ह्यभिघातविषोद्भवाः
॥ ८४ ॥ अपुत्राः पुत्रसंयुक्ता । निर्धना धनपूरिताः ॥ तस्याः शीलप्रभावेण । भूताद्याः प्रभवंति
न ॥ ८५ ॥ इति तेषां वचः श्रुत्वा । तदा शृंगारसुंदरी ॥ जगाद भूपतिं नत्वा । पट्टराज्ञी पतिव्र-
ता ॥ ८६ ॥ सतीपादोदकं शीघ्र—मानयामि तवाज्ञया ॥ येन मे याति वंध्यात्वं । कुलवृद्धिस्तव
प्रभो ॥ ८७ ॥ जगाद नृपतिर्ज्ञात—तच्चरित्रः प्रियांप्रति ॥ सद्योऽहमानयिष्यामि । सत्याः पादोदकं

तव ॥ ९८ ॥ नगरीवासिनां नृणां । नृपतिश्चोत्तरं ददौ ॥ सतीशिरोमणेस्तस्या । उत्सवं कुरुत द्रु-
तं ॥ ९९ ॥ तत्रागच्छाम्यहं याव—त्तावत्स्थेयं नदीतटे ॥ तस्याः पादौ यथा नत्वा । किंचित्पृच्छा-
मि तामहं ॥ १०० ॥ अथ ते नगरीलोकाः । समागत्य तदोकसि ॥ घोटिकां स्वर्णपर्याणां । स-
ज्जीचक्रुर्मनोहरां ॥ १ ॥ क्षैरेयीं शर्करायुक्तां । सुगंधिद्रव्यमिश्रितां ॥ रसाढ्यां प्रगुणीचक्रु—र्भो-
जनार्थं सतीकृते ॥ २ ॥ जग्ध्वा रसवतीं साथ । भुक्तशेषामसौ ददौ ॥ लोकेभ्यः सर्वरोगाणां ।
विनाशाय दुराशया ॥ ३ ॥ अक्षताशिषदानादि—पादप्रक्षालनांजसा ॥ लोकं संतोष्य सा धर्म-
ध्यानकार्यमथाकरोत् ॥ ४ ॥ सप्तक्षेत्रीव्ययं देव—पूजनं गुरुवंदनं ॥ ज्ञानार्चनं संघभक्तिं । दीनो-
द्धरणकादिकं ॥ ५ ॥ धर्मस्याराधनं क्रोध—मानमायादिवर्जनं ॥ क्षामणं सर्वजीवानां । पापस्था-
नविसर्जनं ॥ ६ ॥ चतुर्णां शरणं सर्व—तीर्थानां वंदनं तथा ॥ दुष्कार्यगर्हणं चैव । पुण्यानामनु-
मोदनं ॥ ७ ॥ अनित्यतादिभावानां । भावनं भूरिभावतः ॥ तथा चतुर्विधाहार—त्यजनं हर्षतो
व्यधात् ॥ ८ ॥ कुलकं ॥ पंचानां परमेष्ठीनां । स्मरणं चैकचित्ततः ॥ सा चकार तदा शीघ्रं । शु-
भभाववशं गता ॥ ९ ॥ प्रासादोद्धरणे धर्म—शालायाः करणे तथा ॥ साधर्मिकेभ्यः सर्वं स्वं ।

स्वकीयं सा समार्पयत् ॥ १० ॥ इति धर्मे व्ययं कृत्वा । शुद्धसम्यक्त्ववासिता ॥ लौकिककार्यकरणं । कारयामास सा सती ॥ ११ ॥ गोधूमदानं गोदानं । महीं स्वर्णघटादि च ॥ यावतः सा ददौ दक्षा । ब्राह्मणानां विशेषतः ॥ १२ ॥ अन्येषां स्वजनानां च । पंगुबधिरकुष्टिनां ॥ तथैवांधादिदीनानां । धनं साथ ददौ मुदा ॥ १३ ॥ यतः—पात्रे धर्मनिबंधनं तदितरे प्रोद्यद्दयाख्यापकं । मित्रे प्रीतिविवर्धनं रिपुजने वैरापहारक्षमं ॥ भृत्ये भक्तिभरावहं नरपतौ सन्मानसंपत्करं । भट्टादौ तु यशस्करं वितरणं न क्वाप्यहो निष्फलं ॥ १४ ॥ दानं महिमनिधानं । कुशलविधानं कलंककरिसिंहः ॥ श्रीकलकंठीचूतं । सिद्धिवधूसंगमे दूतं ॥ १५ ॥ दानेन देवा हि वशीभवंति । दानेन वैराण्यपि यांति नाशं ॥ परोऽपि बंधुत्वमुपैति दाना—द्दानं हि सर्वव्यसनानि हंति ॥ १६ ॥ आर्तेषु दीनेषु रुजार्दितेषु । बालेषु वृद्धेषु तथांधकेषु ॥ सुश्रद्धया स्वल्पमपि प्रदत्तं । स्यादक्षयद्रव्यकृते नराणां ॥ १७ ॥ सर्वकार्याणि कृत्वा सा । श्वेतवस्त्रैरलंकृता ॥ मायाविनी गृहद्वारे । ददौ कुंकुमहस्तकान् ॥ १९ ॥ मनुष्यकोटिसंस्तूय—माना नारीगणैर्वृता ॥ पंचशब्दादिवादित्र—बधिरीकृतदिग्गणा ॥ २० ॥ नारीकदंबकैः पृष्टे । गीयमानगुणोत्करा ॥ लोकैश्च संस्तुतासंख्यै—रथारूढा चचाल

सा ॥ २१ ॥ युग्मं ॥ भत्ता महिलाण गई। भत्ता सरणं च जीवियं भत्ता ॥ तम्मग्गाणुसरणं। पइवयाणं खु निद्दिठं ॥ २२ ॥ चिंतयंतीति गाथार्थं। दृढं कृत्वा निजं मनः ॥ हसंती बाह्यहर्षेण। हृदि दुःखेन पूरिता ॥ २३ ॥ पदे पदे स्वर्णरूप्य—पुष्पैर्माणिक्यमिश्रितैः ॥ लोकैर्वर्ध्याप्यमाना सा। क्रमादागाच्चतुष्पथं ॥ २४ ॥ एवं प्राप्ता पुरीबाह्ये। रेवतीतटिनीतटे ॥ यत्रास्ति मणिभद्राख्य—यक्षेंद्रस्य गृहं वरं ॥ २५ ॥ समुत्तीर्य ततश्चाश्वात्। स्थित्वा तत्र तरोस्तले ॥ याचकेभ्यो ददौ दानं। सा स्वकीर्त्तिनिबंधनं ॥ २६ ॥ इतस्तत्र महीपालो। विक्रमार्कः समाययौ ॥ सापि स्नानं चकाराथ। गत्वा यवनिकांतरे ॥ २७ ॥ ददौ सा स्वांगलग्नानि। भूषणान्यर्थिनां मुदा ॥ पश्चाद्वर्त्ती-पयामास। राजानं सपरिच्छदं ॥ २८ ॥ चिरं जीव चिरं नंद। चिरं पालय मेदिनीं ॥ चिरमाश्रितलोकानां। पूरय त्वं मनोरथान् ॥ २९ ॥ राजन् राजकुलोत्तंस। वंशदीपक विश्वजित् ॥ वंशवृद्धिवरस्तेऽस्तु। मम सत्याः प्रभावतः ॥ ३० ॥ एवमुक्त्वा पुरो राज्ञो—ऽमुंचत्साक्षतमुष्टिकां ॥ शृंगारसुंदर्यर्थं च। पादप्रक्षालनोदकं ॥ ३१ ॥ तस्याः पादौ नमस्कृत्य। राज्ञी शृंगारसुंदरी ॥ ययाचे चाशिषं प्रीता। सतींमन्या जगाद सा ॥ ३२ ॥ अविधवा भव पुत्रवती भव। प्रियहिता दयिता

त्व सर्वदा ॥ त्व सुतीव्रसतीव्रतधारिणी । भव सदैव रमासहचारिणी ॥ ३३ ॥ या मुकुंदपदपंक-
जभृंगी । या नृपांगणविनोदकुरंगी ॥ क्षीरसागरविलोडनजाता । सा स्थिरा भवतु मन्मथमाता ॥
॥ ३४ ॥ इत्युदित्वा गुरून्नत्वा । क्षमयित्वाखिलान् जनान् ॥ गृहीत्वा दीपकं हस्ते । सा चितागार-
मागमत् ॥ ३५ ॥ तां निवार्य तदा राजा । प्रतिलोकानिति जगौ ॥ दूरे स्थित्वा क्षणं यूय—मे-
कांतं कुरुत द्रुतं ॥ ३६ ॥ किंचित्पृछामि संदेह—महं सतीशिरोमणेः ॥ येन मे हृदये सौख्यं । जा-
यते हर्षदायकं ॥ ३७ ॥ कृतं निर्व्यजनं लोकै—स्तत्क्षणादेव कोविदैः ॥ मंदंमंदं ततो राजा । पृ-
ष्टवांस्तां महासतीं ॥ ३८ ॥ त्रिकालज्ञा त्रिदोषज्ञा । त्रिधा त्रैलोक्यपावनी ॥ त्रियामाकार्यकर्त्री
त्व—महो सतीमतल्लिका ॥ ३९ ॥ पतिव्रतत्वं ते चाहो । पतिघ्ने परलालसे ॥ पतिद्वयसमायुक्ते ।
पत्युरंगुष्टदायके ॥ ४० ॥ एवंविधैर्गुणैर्युक्ता । मुधा त्वं म्रियसे कथं ॥ भुंक्ष्व भोगान्नवनवान् । यौ-
वनं च कृतार्थय ॥ ४१ ॥ मौर्ख्यात्त्वया वृतो नान्यो । वरो यौवनतायुतः ॥ वंचनायैव लोकानां ।
वृद्धः परिणीतस्त्वया ॥ ४२ ॥ स्वर्लोकं प्रापितः सोऽपि । गलेंगुष्टप्रदानतः ॥ चौरेण च समं रात्रौ
। रंत्वाथ म्रियसे कथं ॥ ४३ ॥ केवलं वंचनायैव । लोकानां सुंदरि त्वया ॥ ख्यापितं जगति स्वी-

यं । सतीत्वं वामलोचने ॥ ४४ ॥ स्त्रीचरित्रं विमुच्यातः । कथ्यतां तथ्यभाषया ॥ अहं कस्यापि नो वक्ष्ये । समस्तं चरितं तव ॥ ४५ ॥ सावदत शृणु राजेंद्र । मा पृच्छ चरितं मम ॥ यथा प्रवर्तते कालः । स तथैवोपसेव्यते ॥ ४६ ॥ अंगुष्ठाग्रे ज्वलंतं स्वं । मुक्त्वेक्षसे नगाग्रगं ॥ तेनासि त्वं महामूर्खः । स्त्रीचरित्रस्य पृच्छकः ॥ ४७ ॥ हरिहरादयो देवा । मुनयः कपिलादिकाः मानवाश्चक्रवर्त्याद्याः । कामिन्यग्रे तु किंकराः ॥ ४८ ॥ अनिंद्या गुरवो गावः । कांचनं सलिलं स्त्रियः ॥ पृथ्वी चैव षडेतानि । यो निंदति स निंद्यते ॥ ४९ ॥ समुद्रमध्यं नारीणां । चरित्रं मेघगर्जितं ॥ भविष्यजीवरूपत्वं । न जानंति सुरा अपि ॥ ५४ ॥ भूलोकस्वर्गलोकस्य । नागलोकस्य भूपते ॥ चरित्रं पृच्छ मे पार्श्वे । मा स्त्रीणां चरितं पुनः ॥ ५५ ॥ तथापि पृच्छसि यन्मां । तत्त्वं मुग्धोऽसि भूपते ॥ कथितेन च संतापो । भविष्यति परं तव ॥ ५६ ॥ अग्रे विगोपितस्त्वं च । गांध्या तस्याश्च किंकरः ॥ जातो हि पंचदंडात–पत्रस्यापि गवेषकः ॥ ५७ ॥ नाहं सा सत्यभामास्मि । देवानां दमनी न हि ॥ मारयित्वैकमेवाहं । जाताहं परागिणी ॥ ५८ ॥ बिले बिले त्वया दृष्टा । गोधागोनसमूषकाः ॥ दृष्टिविषो न दृष्टोऽस्ति । दृष्टोऽपि जीवितापहः ॥ ५९ ॥ शुक्तिशंखकपर्दा-

द्याः । सागरे भ्रमता त्वया ॥ विलोकिता विशेषज्ञ । न दृष्टः कौस्तुभः परं ॥ ६० ॥ कंटकाकुल-
कंथेर—करीरादिद्रुमास्त्वया ॥ दृष्टाः संति घना राजन् । न दृष्टः कल्पपादपः ॥ ६१ ॥ रणभूर्विष-
नृः क्रूरा । मरुभूमिर्विलोकिता ॥ रत्नमुक्ताभृता भूमि—र्न दृष्टा कापि कोविद ॥ ६२ ॥ एवं त्रि-
भुवने राजन् । भ्रमता भाग्ययोगतः ॥ कलाः सर्वास्त्वया दृष्टाः । स्त्रीचरित्रं न चेक्षितं ॥ ६३ ॥
नाधमाहं न मूर्खाह—महं स्त्रीणां शिरोमणिः ॥ स्वं यशो नृतले मुक्त्वा । गमिष्यामि सुरालये ॥
॥ ६४ ॥ गृहसत्कं न जानासि । त्वं चरित्रं तु नृपते ॥ गच्छ त्वं स्वेच्छया गेहं । मुखम्लानिं च मा
कुरु ॥ ६५ ॥ कदापि तवसंदेहो । मानसे स्यात्तदा व्रज ॥ कोचीकांदविकागारे । पृच्छ मे चरितं
समं ॥ ६६ ॥ अथास्तु स्वस्ति ते नृप । मिथ्यादुष्कृतपूर्वकं ॥ इत्युदित्वा चितामध्ये । प्रविष्टा रत्न-
मंजरी ॥ ६७ ॥ पुरीनिवासिनो लोकाः । सशोकाः सकलास्तदा ॥ तारस्वरं च पूच्चक्रु—स्तालोद्घा-
दनपूर्वकं ॥ ७० ॥ अथ राजापि विच्छायो । राहुग्रस्तो यथा रविः ॥ शल्यशंकासमायुक्तो । गृहमा-
गाद्दिनात्यये ॥ ७१ ॥ विक्रमार्कोऽवनीपाल—श्चिंतयामास चेतसि ॥ यामि वेषांतरीभूतः । कोची-
कांदविकागृहं ॥ ७२ ॥ विचिंत्येत्युज्जयिन्याः स । पांथवेषश्चतुष्पथे ॥ गत्वा कौतुकतो लोका—

निति पप्रच्छ भूमिपः ॥ ७३ ॥ क्वास्ति कांदविकानां तु । वाटकस्तुंदपोषकः ॥ यत्र देशांतरायातो । भुंक्ते पांथो बुभुक्षितः ॥ ७४ ॥ इति पृष्टे जनोऽवादीत् । पांथ भो गच्छ सत्वरं ॥ सत्रागारे हि पांथानां । कोचीकांदविकागृहे ॥ ७८ ॥ स्वर्णरूप्यमयं यत्र । शोभते तोरणत्रयं ॥ प्रतोलीसप्तसंयुक्तं । देवतागारसन्निभं ॥ ७९ ॥ मणिमाणिक्यसंबद्धा । यत्र भूमिस्तमोऽपहा ॥ पंचवर्णा सचित्रा च । स्वर्णभित्तिर्विराजते ॥ ८० ॥ द्राक्षोदकेन संपूर्णा । यत्र वाप्यो मनोहराः ॥ चतुर्दिक्षु विराजंते । चत्वारः पंकजैर्युताः ॥ ८१ ॥ सदाफला सपापुष्पा । सदा सांद्रद्रुमैर्युता ॥ सुगंधा सरसा तत्र । वनालिर्नंदनोपमा ॥ ८२ ॥ सप्तभूमियुतं गेहं । परिखापरिवेष्टितं ॥ गवाक्षाढ्यं च तत्रास्ति । सुरेंद्रागारसन्निभं ॥ ८३ ॥ कोचीकांदविका तत्र । वसति रम्यरमायुता ॥ प्रत्यक्षा कल्पवल्लीव । वांछितार्थफलप्रदा ॥ ८४ ॥ राज्यार्थी लभते राज्यं । सुतार्थी लभते सुतं ॥ भोगार्थी लभते भोगं । तस्याः पादप्रसादतः ॥ ८५ ॥ विद्याधरैर्नरैः सिद्धैः । किन्नरैर्व्यंतरामरैः ॥ ज्योतिष्कैर्दानवैश्चापि । नम्यते सा शुभंकरा ॥ ८६ ॥ शतसहस्रशो लोकाः । पथिकास्तद्गृहेऽनिशं ॥ कुर्वंति भोजनं नित्य—मुत्तमाधममध्यमाः ॥ ८७ ॥ रुष्टा सास्ति यमाकारा । संतुष्टा सर्वकामदा ॥ तस्याः सद्दर्शनं

पुण्यै—रेव लोकैस्तु लभ्यते ॥ ८८ ॥ इति श्रुत्वा महीनाथः । कौतुकोत्तालमानसः ॥ चित्ते चिं-
तातुरीभूतो । जगाम तद्गृहांतिकं ॥ ८९ ॥ परावृत्य ततो रूपं । प्रतोलीद्वारमागमत् ॥ अदृष्टरू-
पो नृपश्च । सौधसोपानमाश्रयत् ॥ ९० ॥ अनेकद्वारसंपूर्णं । नानाविधजनाकुलं ॥ भूमिगृहगणै-
र्युक्तं । तोरणैरप्यलंकृतं ॥ ९१ ॥ सामंतदेशपालादि—मंडलीकशतैर्युतं ॥ प्रछन्नस्त्रीशतैः सेव्यं ।
पुष्पधूपसुगंधितं ॥ ९२ ॥ पंचशब्दादिनिर्घोष—युक्तनाट्यसुशोभितं ॥ स्वर्विमानसमाकारं । तद्-
गृहं नृप ऐक्षत ॥ ९३ ॥ त्रिभिर्विशेषकं ॥ एकत्र स्नानपट्टेषु । स्नाप्यंते बहवो जनाः ॥ पांथाः किं-
करवृंदैश्च । शीतोष्णसलिलव्रजैः ॥ ९४ ॥ अन्यत्र हाटकस्थालैः । स्वर्णपट्टोपरिस्थितैः ॥ भोजनैः
सप्तदशभि—र्भोज्यंते बहवो जनाः ॥ ९५ ॥ कुंकुमाविलगोशीर्ष—चंदनैश्च सुगंधिभिः ॥ विलि-
प्यंते महाभक्त्या । लोकास्तत्र प्रवासिनः ॥ ९६ ॥ वरांबरांगनाभोग—लाभमग्नैकमानसाः ॥ दी-
र्घिकाजलकल्लोलै । रमंतः संति पांथकाः ॥ ९७ ॥ वंशवीणामृदंगादि—वाद्यैर्बधिरितांबरं ॥ विचि-
त्रचित्रितानेक—कौतुकैश्चातिभासुरं ॥ ९८ ॥ गतो मध्यसभां राजा । स्थितः प्रछन्नवृत्तितः ॥ को-
चीकांदविका दृष्टा । तत्र तेन सखीयुता ॥ ९९ ॥ स्वर्णसिंहासनासीना । गंगोर्मिनिभचामरैः ॥

वीज्यमानालिवृंदेन । देवीव स्वर्गमध्यगा ॥ १०० ॥ विक्रमः कौतुकोत्तान–मानसोऽथ निरीक्ष्य तां ॥ कथं मयैषा प्रष्टव्या । चिंतयामासिवानिति ॥ १ ॥ तावत्पार्श्वगता दासी । स्वामिनीसंज्ञया द्रुतं ॥ विक्रमार्कं करे धृत्वा । मज्जनागारमाविशत् ॥ २ ॥ कोटिपाकादिभिस्तैलै–र्मर्दितो भूमिवासवः ॥ सुगंधजलसंपूर्णैः । कलशैः स्नापितो भृशं ॥ ३ ॥ कोमलवसनेनांगं । सन्मार्ज्याथ विशांपतेः ॥ भूषणैर्वरवस्त्रैश्च । विशेषेण विभूषितं ॥ ४ ॥ भोजनस्थानके याव–द्भोजनं कारयंति ताः ॥ भोजनं न करिष्यामि । प्राणांतेऽपीति सोऽवदत् ॥ ५ ॥ यतः—न भोक्तव्यं न भोक्तव्यं । रात्रावत्र युधिष्ठिर ॥ तपस्विना विशेषेण । गृहिणापि विवेकिना ॥ ६ ॥ ये रात्रौ च सदाहारं । वर्जयंति विवेकिनः ॥ तेषां पक्षोपवासस्य । फलं मासेन जायते ॥ ७ ॥ नैवाहुतिर्न च स्नानं । न श्राद्धं देवतार्चनं ॥ न दानं फलदं रात्रौ । भोजनं तु विशेषतः ॥ ८ ॥ दिवसस्याष्टमे भागे । मंदीभूते दिवाकरे ॥ नक्तं तद्धि विजानीया–न्निषिद्धं तत्र भोजनं ॥ ९ ॥ देवैस्तु भुक्तं पूर्वाह्णे । मध्याह्ने ऋषिभिस्तथा ॥ पितृभिरपराह्णेऽथ । सायं तु दनुजैः स्मृतं ॥ १० ॥ संध्यायां यक्षरक्षोभि–र्ज्ञेयं भुक्तं तु भोजनं ॥ सर्ववेलामतिक्रम्य । रात्रौ भुक्तमभोजनं ॥ ११ ॥ यजुर्वेदेऽप्युक्तं—उलूककाक-

मार्जार—गृध्रमंडलसूकराः ॥ अहिवृश्चिकगोधाश्च । जायंते रात्रिभोजनात् ॥ १२ ॥ करोति विर-
तिं धन्यो । यः सदा रात्रिभोजनात् ॥ स स्वकीयायुरर्धोप—वासानां फलमाप्नुयात ॥ १३ ॥ रज-
नीभोजनत्यागे । ये गुणाः संति तानिह ॥ न सर्वज्ञादृते कश्चि—दपरो वक्तुमीश्वरः ॥ १४ ॥
इति ज्ञात्वा महादोषं । रात्रिभोजनसंभवं ॥ जैनशास्त्रसमाख्यातं । प्रत्याख्यातं मयास्ति तत् ॥
॥ १५ ॥ श्रुत्वेति भूपतिप्रोक्तं । दास्यस्ता विस्मितास्ततः ॥ आनयन् वसुधाधीशं । कोचीकांदवि-
कांतिके ॥ १६ ॥ कुरु प्रणामं स्वामिन्या । अस्या नृप यतोऽस्ति ते ॥ या प्रिया देवदमनी । त-
स्या मातुरियं स्वसा ॥ १७ ॥ कृत्वा प्रणामं तस्याः स । संयोज्य करसंपुटं ॥ अलंचक्रे तया दत्त-
मासनं मानवेंद्रराट् ॥ १८ ॥ सविस्मयो नृपस्तत्र । निविष्टस्तु व्यचिंतयत ॥ कथमदृष्टरूपं मा—मे-
षा जानाति पश्यति ॥ १९ ॥ इति चिंताप्रपन्नस्य । सा नृपस्य शुभाशया ॥ कोचीकांदविकावादी
—द्वचनं विश्ववंदिता ॥ २० ॥ सकुटुंबस्य ते भूयात् । कुशलं पृथिवीपते ॥ घनैर्दिनैः समायातः
। स्वकार्येणासि त्वं नृप ॥२१॥ स्वकार्यमेव लोकानां । मिष्टं नास्त्यपरस्य तु ॥ त्वमप्युत्पन्नकार्यत्वा-
दायातोऽसि नृपोत्तम ॥ २२ ॥ सर्वोत्कृष्टगुणाढ्याया । महासतीशिरोमणेः ॥ नार्या मदनमंजर्याः ।

स्त्रीचरित्रगवेषकः ॥ २४ ॥ स्त्रीचरित्रं न जानासि । भुवने महिमाद्भुतं ॥ तेन त्वं नृमिराजेंद्र । नूनं मुग्धोऽधुनाप्यसि ॥ २५ ॥ स्त्रीचरित्रं यदि ज्ञातु—मिच्छा ते नृप वर्तते ॥ मंजूषायां तदा त्वस्यां । प्रविश त्वं विचक्षण ॥ २६ ॥ तयेत्युक्तो नृपस्तत्र । प्रविष्टो हृदि विस्मितः ॥ तावत्समागतस्तत्र । मंत्रीशो बुद्धिसागरः ॥ २७ ॥ मंत्रिमुद्राधरो देश—स्वामी नृपतिवल्लभः ॥ सर्वकर्ता सर्वहर्ता । स चासीत्खलु धीनिधिः ॥ २८ ॥ निष्कस्थालं करे धृत्वा । मणिमुक्ताफलैर्भृतं ॥ पपात पादयोस्तस्या । विनयादित्युवाच च ॥ २९ ॥ ममोपरि प्रसीद त्वं । चिंतितार्थफलप्रदे ॥ भोगं शृंगारसुंदर्या । समं वांछामि कामदे ॥ ३० ॥ तयोक्तं त्वं समारोह । मंजूषां तदिमां द्रुतं ॥ गृहाणेमं च मे दंडं । व्रज तत्र यथेच्छया ॥ ३१ ॥ इति तस्या वचः श्रुत्वा । लात्वा दंडं स हर्षितः ॥ विनयात्तां नमस्कृत्य । मंजूषामारुरोह च ॥ ३२ ॥ दंडप्रभावतो व्योम्नि । स एवं नृपसंयुतः ॥ गतः स्थिता नृपावासे । यत्र शृंगारसुंदरी ॥ ३३ ॥ गवाक्षमार्गतस्तस्याः । प्रासादे सोऽविशद् द्रुतं ॥ तं दृष्ट्वा हर्षसंयुक्ता । जाता शृंगारसुंदरी ॥ ३४ ॥ मुक्त्वासनं महामूल्यं । योजितांजलिसंपुटा ॥ सस्नेहं हर्षसंयुक्तं । साथो वचनमब्रवीत् ॥ ३५ ॥ आगम्यतां जीवितेश । कृतार्थां च कुरुष्व मां ॥

विरहानलदावाग्निं । मां समालिंग्य शामय ॥ ३६ ॥ अहं तवैकचित्तास्मि । दूरस्थापि तवांतिके ॥
त्वत्सौख्ये सुखसंबद्धा । त्वदुःखेऽस्मि च दुःखिता ॥ ३७ ॥ अज्ज कयत्थो जम्मो । अज्ज कयत्थं
च जीवियं मझ ॥ अज्ज कयत्थो दिवसो । सामी तुह संगमेणं च ॥ ३८ ॥ अथ सा मंत्रिराजस्य
। राज्ञी शृंगारसुंदरी ॥ स्नानादिकं व्यधादुच्चै-र्बहुमानपुरस्सरं ॥ ३९ ॥ भोजनं विविधैर्भोज्यै—
र्भोजयामास मंत्रिणं ॥ सा तांबूलादिकं दत्वा । शय्यास्थाने समानयत् ॥ ४० ॥ आसनादिकभे-
दैश्च । विविधैर्भोगभंगिभिः ॥ राज्ञी तं रंजयामास । मंत्रिणं मानसप्रियं ॥ ४१ ॥ भुक्त्वा भोगान्
निशाशेषे । सावोचन्मंत्रिशेखरं ॥ गताथ रजनी स्वामिन् । क्षणमात्रप्रमाणतः ॥ ४२ ॥ तयेत्यु-
क्तेऽथ मंत्रींद्रः । प्रोवाच तां प्रियांप्रति ॥ सौम्ये यास्याम्यहं गेहं । विलंबः श्रेयसेऽत्र न ॥ ४५ ॥
कदाचिद्विक्रमो राजा । त्वायादत्र वरानने ॥ तदा किमुत्तरं देयं । त्वया मया च कोविदे ॥४६॥
इति मंत्रिवचः श्रुत्वा । राज्ञी शृंगारसुंदरी ॥ उवाच वचनं चारु । चतुरा चित्तहारिणी ॥ ४७ ॥
मुक्त्वा त्वन्मानसं चात्र । गृहीत्वा मानसं मम ॥ त्वं यास्यलं बहूक्तेन । जीवितेश जयी भव ॥
॥ ४८ ॥ लब्ध्वाथावसरं स्वामिन् । पुनर्बुद्धिमतां वर ॥ तव दर्शनसूर्येण । मनोऽब्जं मे विकासयेः

॥ ४९ ॥ त्वया वाच्यः प्रणामो मे । लगित्वा पादयोः परं ॥ कोचीकांदविक्यास्तस्या । यस्याः सि-
द्धिः किलेदृशी ॥ ५० ॥ अथ श्रीविक्रमादित्य—श्चिंतयामास चेतसि ॥ अहो शृंगारसुंदर्या—श्च-
रित्रं पापकारकं ॥ ५१ ॥ न प्रतिष्ठां न सौजन्यं । न लज्जां न च गौरवं ॥ न च स्वामिहितं वा-
माः । पश्यंति मदनांधलाः ॥ ५२ ॥ नूनं निरंकुशा नारी । तत्करोत्यसमंजसं ॥ यत्क्रुधा सिंहशा-
र्दूल—व्याला अपि न कुर्वते ॥ ५३ ॥ दूरतस्ताः परित्याज्याः । प्रादुर्भावितदुर्मदाः ॥ विश्वोपता-
पकारिण्यः । करिण्य इव योषितः ॥ ५४ ॥ स कोऽपि नास्ति मंत्रोऽत्र । देवो नास्ति तथा दिवि
॥ येन नारीपिशाचीयं । वश्यतां नीयते भुवि ॥ ५५ ॥ संपीव्याघ्राहिदंष्ट्राग्नि—यमजिह्वाविषव्रजान्
॥ जगज्जिघांसुना नार्यः । कृताः क्रूरेण वेधसा ॥ ५६ ॥ यदि स्थिरा भवेद्विद्यु—त्तिष्ठंति यदि वा-
यवः ॥ तदैव महिलानां हि । स्थिरीभवति मानसं ॥ ५७ ॥ श्रीविक्रमस्तच्चरितं समग्रं । ज्ञात्वाऽ-
निमेषांकितलोचनोऽभूत् ॥ व्यचिंतयच्चान्यबलां किमेनां । सतीत्वभ्रष्टां कुलटामथाहं ॥ ५९ ॥ इ-
ति मनसि विचिंत्य विक्रमार्क—स्त्वरिततरं दयया समाकुलोऽभूत् ॥ क्वाहं भूमिपतिः परोपकारी ।
क्वैषा नारी वराकी गर्हणीया ॥ ६० ॥ ध्यात्वेति सुध्यानपरो नृपोत्तमः । प्रियाचरित्रं सकलं हृदि

स्मरन् ॥ तस्यां स्थितोऽयं वरपेटिकायां । व्यचारयत्संसृतिनाटकं तत् ॥ ६१ ॥ समागत्य दंडेन हत्वा सभूपां । वरां पेटिकां व्योममार्गेण मंत्री ॥ मुदा संयुतो कोचीगेहं प्रधानं । ननामांह्रियुग्मं च तस्याः प्रकामं ॥ ६२ ॥ समर्प्य दंभं पुरतोऽथ कोच्या । राज्ञीनतिं विज्ञपयांचकार ॥ तदाशिषं प्राप्य स बुद्धिसागरो । गतो गृहं स्वं गुरुगौरवान्वितः ॥ ६३ ॥ मुक्त्वा पेटां विक्रमो भूमिपालः । कोच्याः पादौ विस्मितोऽसौ ननाम ॥ शीर्षे हस्तौ योजयित्वा जगाद । ज्ञातं सर्वं तेऽद्य मातः प्रसादात् ॥ ६४ ॥ सा जगाद सुमुखी नृपोत्तम । पृछसे किमपि पृछ तद्वदि ॥ स्त्रीचरित्रमिति विश्वचित्रकृद् । ज्ञेयमत्र गहनं त्वया खलु ॥ ६५ ॥ महासतीत्वेन विभूषितांगी । या श्रूयते पंचवरा तु द्रौपदी ॥ तृप्तिं परं सा न गता हि पंचभिः । श्रीनारतोक्तं शृणु राजशेखर ॥ ६६ ॥ ऋषीणां पारणायैव । कथमाम्रद्रुमो ह्ययं ॥ अकालेऽपि फलेत्तूर्णं । नारदर्षे वद ध्रुवं ॥ ६७ ॥ पृष्टो युधिष्टिरेणेति । नारदोऽसौ मुनीश्वरः ॥ तथ्यं जगौ धर्मपुत्रं । प्रति सोऽपि तदा ध्रुवं ॥ ६८ ॥ द्रौपदी पंचवाक्यानि । सत्यानि वदते यदा ॥ अकाले आम्रवृक्षोऽयं । फलैश्च फलते तदा ॥ ६८ ॥ इत्युक्ता नारदेनाशु । जगाद द्रौपदी द्रुतं ॥ सन्नासमक्षं सत्यं सा । सतीव्रजमतल्लिका ॥ ६९ ॥ पं-

चापि मम रोचंते । पांडवास्तात सुंदराः ॥ तथापि बलीयान् कामो । मतिः षष्ठेऽपि जायते ॥७० ॥ रहो नास्ति क्षणो नास्ति । नास्ति प्रार्थयिता नरः ॥ तेन नारद नारीणां । सतीत्वमुपजायते ॥ ॥ ७१ ॥ दृष्ट्वा परं नरं नार्या । भोगेच्छा जायते ध्रुवं ॥ गावस्तृणमिवारण्ये । जिघृक्षंति नवं नवं ॥ ॥ ७२ ॥ सुरूपं पुरुषं दृष्ट्वा । भ्रातरं पितरं सुतं ॥ क्लिद्यंते योनयः स्त्रीणा—मामपात्रमिवांभसा ॥ ॥ ७३ ॥ इति निशम्य वचो वचनातिगं । नृपवरो हृदये परमां मुदं ॥ बहु बभार धृतिं स्मृतिम-ध्यगं । स्मरति चेतसि सत्यवतीकृतं ॥ ७५ ॥ कोची जगाद नरराजशिरोवतंस । भाग्यान्वितोऽसि वरवर्षशतं च जीव ॥ नारीचरित्रमखिलं परिहृत्य ह्यन्यान् । विश्वे विलोकय वरान् विविधप्रकारान् ॥ ७६ ॥ सद्रत्नाभरणान्वितं बहुगुणं सर्वार्थकामप्रदं । सर्वव्याधिहरं सदा फलकरं विश्वेशलक्ष्मीधरं ॥ कल्पद्रूपमदंडरत्नममलं संयोज्य जाते प्रगे । कोचीकांदविका नृपस्य परमप्रीत्या ददौ भक्तितः ॥ ७७ ॥ दंडं गृहीत्वा वररत्नतुल्यं । श्रीविक्रमार्को निजगेहमागात् ॥ कृत्वा तु तुर्यं वरकार्यमेवं । समाधिसुध्यानपरो बभूव ॥ ७८ ॥ श्रीविक्रमार्कस्य नरेश्वरस्य । श्रीपंचदंडातपछत्रबंधे ॥ पद्ये महाश्चर्यकरे यथोक्ते । तुर्यो बभूव प्रवरः प्रबंधः ॥ ७९ ॥

॥ अथ पंचमः प्रस्तावः प्रारभ्यते ॥

प्रणम्य चरणौ श्वश्रा । मस्तकन्यस्तहस्तकः ॥ आदेशं पंचमं भक्त्या । ययाचे भूमिवासवः
॥ ८० ॥ तयोक्तं शृणु राजेंद्र । देहि राजपरिग्रहं ॥ प्रक्षाल्य चरणौ भक्त्या । विश्वरूपपुरोधसे ॥
॥ ८१ ॥ श्रुत्वेत्युवाच राजेंद्रः । सुगमं कार्यमुत्तमं ॥ अहं शीघ्रं करिष्यामि । किंचिदेतन्न दुष्करं
॥ ८२ ॥ सा प्राह शृणु राजेंद्र । दुष्करादपि दुष्करं ॥ कार्यमेतद्यतो विप्र—स्त्वद्दानं नैव लास्यति
॥ ८३ ॥ तथापि कुरु तत्कार्य—मनघं ते भविष्यति ॥ श्रुत्वेति भूपराजोऽपि । त्वरितं गृहमागतः
॥ ८४ ॥ विश्वरूपमथाकार्य । प्रभातसमये नृपः ॥ सिंहासने वरे भक्त्या । स्थापयित्वा सुभक्तितः
॥ ८५ ॥ प्रणम्य तं महानंद—दायकं विप्रमुत्तमं ॥ सन्मानं कृतवांस्तस्य । भूरिभावसमन्वितः ॥
॥ ८६ ॥ युग्मं ॥ स्वर्णस्थालं स चानाय्य । विशालं पयसा भृतं ॥ चरणौ क्षालयामास । तस्य
विप्रस्य भक्तितः ॥ ८७ ॥ ऊर्ध्वीभूय स्तुतिं चक्रे । योजितांजलिसंपुटः ॥ ततोऽवक् स प्रसद्य त्वं ।
दानं मे लाहि वांछितं ॥ ८८ ॥ अहं कृतयुगाचार—रीत्या दानं ददामि ते ॥ गोस्वर्णरत्नमाणि-
क्य—गजाश्वभूमिगर्भितं ॥ ८९ ॥ कृतयुगे समाहूय । द्वापरे गृहमागते ॥ त्रेतायां याचिते दानं

ग्रामाणां शतपंचकं ॥ हयानामयुतं भव्यं । नागानां च सहस्रकं ॥ ९९ ॥ स्वर्णस्थालगवाराम—रथदासालयस्य च ॥ महिषीवस्त्रभृत्यानां । सर्वेषां शतपंचकं ॥ ९९ ॥ एवंविधं महादानं । तस्मै दातुं समुत्सुकः ॥ राजा बभूव हर्षेण । परं गृह्णाति नैव सः ॥ १०० ॥ विप्रो वदति हे राजन् । पापो राजपरिग्रहः ॥ मया न जीर्यते भूरि—भवकोटिशतैरपि ॥ १ ॥ सर्वः परिग्रहो घोरो । भूपतीनां विशेषतः ॥ भूपदानमतस्त्याज्यं । भुवि मोक्षाभिलाषिभिः ॥ २ ॥ भवकोटिसहस्राणि । नरकेऽतीवदारुणे ॥ कुंभीपाके निगोदे च । गर्भावासे स पच्यते ॥ ३ ॥ वेदागमविरुद्धं तद् । षड्दर्शनैश्च गर्हितं ॥ पुराणधर्मशास्त्रैश्च । निंदितं नीतिकोविदैः ॥ ४ ॥ श्रीविक्रममहाराज । सद्धर्मजनवल्लभ ॥ दानाग्रहो न कर्तव्य—स्त्वया भाग्यवता मम ॥ ५ ॥ ब्राह्मणत्वं विवेकत्वं । नृत्वं धर्मक्रियापि हि ॥ व्रतं यज्ञादिकार्यं च । यांति राज्ञः परिग्रहात् ॥ ६ ॥ यतः—षट्कर्मरहितो विप्रो । मातंगसदृशो मतः ॥ राज्ञो दानप्रतिग्राही । तस्मादप्यधिको मतः ॥ ७ ॥ दशशूनासमश्चक्री । दशचक्रिसमो द्विजः ॥ दशद्विजसमा वेश्या । दशवेश्यासमो नृपः ॥ ८ ॥ यतः—ये शांतदाताः श्रुतिपूर्णकर्णा । जितेंद्रियाः प्राणिवधे विरक्ताः ॥ परिग्रहे संकुचिताश्च नित्यं । ते ब्राह्मणास्ता-

रयितुं समर्थाः ॥ ९ ॥ किं बहूक्तेन हे राजन् । प्राणत्यागेऽप्यहं तव ॥ परिग्रहं न गृह्णामि । किं
खेदयसि मां वृथा ॥ १० ॥ अहं माधुकरीं वृत्तिं । कृत्वा प्राणस्य धारणं ॥ करोमि धर्मनिरतो ।
वह्निहोत्रपरायणः ॥ ११ ॥ नीरागस्य तृणं नारी । निरीहस्य तृणं नृपः ॥ तृणं ज्ञानवतां सर्वं । तृ
णं शूरस्य जीवितं ॥ १२ ॥ इत्युक्त्वा निश्चयं स्वीयं । दत्वाशिषं द्विजोत्तमः ॥ नृपेण प्रणतो भ-
क्त्या । स जगाम निजं गृहं ॥ १३ ॥ अथ विक्रमभूपाल-श्चिंतयामास चेतसि ॥ स्नेहो धर्मो दया-
दानं । न बलेन भवंत्यमी ॥ १४ ॥ अथ चिंतातुरो भूपः । किं कर्तव्यजडस्तदा ॥ विषण्णास्यः क्ष-
णं तस्थौ । साहस्यैकशिरोमणिः ॥ १५ ॥ पराक्रमेण यत्कार्यं । न सिध्यति कदाचन ॥ तत्सिध्य-
ति मनुष्याणा—मुपायैर्बुद्धिमिश्रितैः ॥ १६ ॥ सामवाक्यैस्तथा दानै-र्भेददंभाद्युपायकैः ॥ क्षणेन
कार्यसिद्धिः स्या—ज्जनानां जयकांक्षिणां ॥ १७ ॥ किंचिच्छिद्रं विलोक्याथा—ऽसत्यं तस्य द्विज-
न्मनः ॥ अपाये पातयाम्येनं । यथा लाति स मे धनं ॥ १८ ॥ विलोकयाम्यहं किंचि—त्तस्य दो-
षं तु गर्हितं ॥ आनये निग्रहस्थाने । ततोऽमुं लोकसाक्षिकं ॥ १९ ॥ अथ विक्रमभूपालः । कृत्वा
रूपांतरं निजं ॥ गृहीत्वा च करे खड्गं । द्विजगेहांतिकं ययौ ॥ २० ॥ तत्रास्ति सर्वतोभद्र—यक्ष-

स्यायतनं वरं ॥ यः पुरीजनलोकानां । वांछितार्थफलप्रदः ॥ २१ ॥ तन्मध्यमवनीपालः । प्राविश-
त्साहसान्वितः ॥ स्वकार्यसाधने लोकाः । किं न कुर्वंति दुर्घटं ॥ २२ ॥ सूर्येण स्वस्त्रियोऽर्थे हि ।
शरीरं घर्षितं निजं ॥ मुनिना कालिकार्येण । व्रतभंगस्तथा कृतः ॥ २३ ॥ वर्षाकालेऽपि मौनींद्रो ।
रत्नकंबलमानयत् ॥ आषाढभूतिनात्याजि । व्रतं मोदकलीप्सया ॥ २४ ॥ तथा देवकुले छन्न—वृ-
त्त्या स्थित्वा नरेश्वरः ॥ पुरोहितगृहद्वारे । दत्तदृष्टिः स्थिरोऽभवत ॥ २५ ॥ निशीथसमये विप्र—
पुत्री गोमतीसंज्ञका ॥ आगता सर्वशृंगारा—भरणादिभिर्भूषिता ॥ २६ ॥ पुष्पचंदनतांबूल—फ-
लनैवेद्यसंभृतं ॥ लात्वा करंडकं तस्या । दासी पृष्टे समाययौ ॥ २७ ॥ यक्षेशस्य ततः पूजां । कृत्वा
सा शुभभावतः ॥ प्रदीपमालाकलित—मारात्रिकमपि व्यधात् ॥ २८ ॥ विक्रमोऽदृश्यरूपेण । स्थि-
तस्तत्र समाधिना ॥ ध्यानांतेऽथ तया दासी । भाषिता पार्श्ववर्तिनी ॥ २९ ॥ याहि वेगेन सोम-
स्य । मालाकारस्य वेश्मनि ॥ तत्पुत्रीं च जयंतीं त्व—मत्रानय शुभानने ॥ ३० ॥ निर्जनेऽस्यै
त्वया कथ्यं । यथा कोऽपि शृणोति न ॥ यतोऽवंत्यां महाधूर्ताः । संति विक्रमसन्निभाः ॥ ३१ ॥
तथेति सा प्रतिश्रुत्य । क्रमेण तद्गृहं गता ॥ आयांती मिलिता मार्गे । परं सेंदुसमानना ॥३२॥

दास्या निवेदितं तस्यै । गोमत्याकारणादिकं ॥ त्वरितं हर्षपूरेण । पूरिता साज्ञवत्क्षणात् ॥ ३३ ॥
सागत्य यक्षराजेंद्रं । पूजयित्वातिभक्तितः ॥ ततोऽसौ सह गोमत्या । वार्तां कर्तुं प्रचक्रमे ॥ ३४ ॥
जयंती प्राह कल्याणि । पातालनगरेऽधुना ॥ शृंगारमंजर्युद्वाहे । गंतव्यं गोमति ध्रुवं ॥ ३५ ॥
गोमती प्राह हे बाले । त्वं त्वथाकारितागता ॥ नागते परमद्यापि । हरितालीहिरण्यके ॥ ३६ ॥
कोचीकांदविकापुत्री । हरिताली निमंत्रिता ॥ विलोक्यतेऽन्यथा पश्चा—त्सोपालंभं प्रदास्यति ॥
॥ ३७ ॥ सूराख्यस्वर्णकारस्य । शक्तींद्राकुक्षिसंभवा ॥ पुत्री हिरण्यकाख्या या । सापि सार्थे विलो-
क्यते ॥ ३८ ॥ जयंत्यवक् तदा सुभ्रु । तद्द्वयं चाग्रतो गतं ॥ सामग्रीं सकलां कृत्वा । श्मशाने
गंधवाहने ॥ ४० ॥ पाटलाकेतकीजाती—चंपकादिसुमावलिं ॥ गृहीत्वा मद्गृहात् शीघ्रं । गते ते
ह्यधुना सखि ॥ ४१ ॥ शृंगारमंजरीं कन्यां । यः कोऽपि परिणेष्यति ॥ तस्य नरोत्तमस्यास्य—मा-
वामीक्षावहे द्रुतं ॥ ४२ ॥ गोमती प्राह जानेऽहं । नागपुत्रस्तिलाह्वयः ॥ चिपटास्यो दीर्घदंतो ।
वक्रनाशो विरूपभाक् ॥ ४३ ॥ एवंविधो विरूपास्य—स्तस्य भर्ता भविष्यति ॥ पितृभ्यां तस्य द-
त्तास्ति । भवेदन्योऽपि भाग्यतः ॥ ४४ ॥ इति वार्तां प्रकुर्वत्यौ । यक्षराजस्य सद्मतः ॥ बाह्यमंडप-

मागत्य । ते चित्तेऽध्यायतामिति ॥ ४५ ॥ रिक्तपाणि कथं सख्या । गंतव्यं सखि वेश्मनि ॥ तेन
पुष्पफलादीनि । गृहीत्वा तत्र गम्यते ॥ ४६ ॥ तेनाथ मातुकः कोऽपि । भारवाहो विलोक्यते ॥
सर्वं पुष्पादिभारं य । उत्पाटयति सांप्रतं ॥ ४७ ॥ श्रुत्वेति विक्रमो नृपो—ऽवसरज्ञो निजं वपुः
॥ मातुकसदृशं कृत्वा । तत्रासन्नापणे स्थितः ॥ ४८ ॥ दासी शब्दं चकाराथ । कोऽप्यस्ति भारवा-
हकः ॥ राजा जगाद भारार्थी । त्वहं तिष्ठामि मातुकः ॥ ४९ ॥ सावगागच्छ भो शीघ्रं । त्वमेवात्र
विलोक्यसे ॥ फलपुष्पादिकं भारं । त्वरितं मस्तके कुरु ॥ ५० ॥ शीर्षे भारं समुत्पाट्य । चचाल
विक्रमो नृपः ॥ पातालकौतुकं द्रष्टुं । निजकार्यचिकीर्षया ॥ ५१ ॥ रजन्यामंधकारे ते । करे कृ-
त्वा तमोहरं ॥ वर्त्मनि दंडरत्नं च । गोपुरं प्रापतुः क्रमात ॥ ५२ ॥ प्रतोलीद्वारमुद्घाट्य । दंडरत्ने-
न भांडवत् ॥ कथितं मातुकस्याथ । कपाटं त्वं दृढीकुरु ॥ ५३ ॥ प्रेतवने महाघोरे । जग्मतुस्ते च
निर्भये ॥ वेतालव्यालसंकीर्णे । शिवाफेत्कारभीषणे ॥ ५४ ॥ एवंविधे महारौद्रे । प्रेतराजगृहोप-
मे ॥ श्मशाने ते क्षणं स्थित्वा । मातुकस्येत्यवोचतां ॥ ५५ ॥ स्थातव्यं भो त्वयात्रैव । श्मशाने
तावदेव हि ॥ आगच्छावः सखीसत्कं । यावत्कृत्वा च कार्यकं ॥ ५६ ॥ मातुकः प्रत्युवाचैवं । स्थि-

तोऽत्राहं बिन्नेम्यथ ॥ छलेयुर्मां महापापा । वेताला भूतराक्षसाः ॥ ६० ॥ अहं समागमिष्यामि । युष्मत्पृष्ठे समाधिना ॥ ताभ्यां मिथो विमृश्योक्तं । श्रुत्वा तद्वाक्यमुत्तमं ॥ ६१ ॥ त्वमप्यागछ तर्हि त्वं । कृत्वा भारं च मस्तके ॥ समायातास्ततः सर्वे । सिद्धाख्यवटसन्निधौ ॥ ६२ ॥ मिलिते तत्र सख्यौ द्वे । ये पुरा तत्र प्रस्थिते ॥ जातो हर्षश्च सर्वासां । सखीनां मिलने तदा ॥ ६३ ॥ यतः—पापान्निवारयति योजयते हिताय । गुह्यं च गुह्यति गुणान् प्रकटीकरोति ॥ आपद्गतं च न जहाति ददाति काले । सन्मित्रलक्षणमिदं प्रवदंति संतः ॥ ६४ ॥ प्राप्ताः क्रमेण पाताल—विवरं ताः समातृकाः ॥ शिलामेकां समुत्पाट्य । तत्र च प्राविशन् द्रुतं ॥ ६५ ॥ प्रासादश्च समायातो । मनोहरसरस्तटे ॥ तत्र श्रीपार्श्वनाथस्य । धरणेंद्रेण कारितः ॥ ६६ ॥ तत्र श्रीपार्श्वनाथस्य । प्रतिमानां चतुष्टयं ॥ भाति मनोहरं दिव्य—प्रभामंडलमंडितं ॥ ६७ ॥ दंडादिसर्ववस्तूनि । मातृकस्य समर्प्य ताः ॥ कर्तुं पूजां जिनेंद्रस्य । प्राविशन् जिनसद्मनि ॥ ६८ ॥ यतः—श्रीतीर्थपांथरजसा विरजीभवंति । तीर्थेषु बंभ्रमणतो न भवे भ्रमंति ॥ द्रव्यव्ययादिह नराः स्थिरसंपदः स्युः । पूज्या भवंति भुवि तीर्थमथार्चयंतः ॥ ६९ ॥ नृपोऽथ सकलं लात्वा । दिव्यरूपधरो ययौ ॥ पुरीमध्ये च साक्षा-

ख्या—द्वेतालस्य धियां निधिः ॥ ७० ॥ तत्र शृंगारसुंदर्या । विवाहाय समागतं ॥ कुरूपं तं वरं दृष्ट्वा । पौरास्तु जहसुर्भृशं ॥ ७१ ॥ तस्याः शृंगारसुंदर्याः । पितरावपि दुःखितौ ॥ वरं निरीक्ष्य जातौ तं । महाचिंतापरायणौ ॥ ७२ ॥ विक्रमस्याज्ञया वह्नि—वेतालस्तं कुरूपिणं ॥ वरं च गोपयामास । क्वापि भूमिगृहे द्रुतं ॥ ७३ ॥ विधाय वररूपं स । विक्रमोऽथ समाययौ ॥ तां कन्यां परिणेतुं च । वेतालस्य सहायतः ॥ ७४ ॥ इतश्च गोमतीमुख्याः । सख्यस्ता जिनपूजनं ॥ विधाय वहिरायाता । मातृकं ददृशुर्न च ॥ ७५ ॥ विषण्णास्यास्ततः सर्वाः । सख्यस्ताश्च समाययुः ॥ शृंगारसुंदरीपार्श्वे । विवाहावसरे तदा ॥ ७६ ॥ परं तासां तदा सर्वे । शकुनाः शुभसूचकाः ॥ संजाताः पथि सोत्साहा—स्तेन ता बभूवुः क्षणात् ॥ ७७ ॥ यतः—कन्यासाधुमहीशमित्रमहिषीदुर्वादिवर्धापनं । वीणामृन्मणिचामराक्षतफलछत्रांबुदीपध्वजाः ॥ वस्त्रालंकृतिमद्यमांसकुसुमस्वर्णादिभिक्षातवो । गोमीनायुधदर्पणासिकलशा ज्ञेयाः शुभा दक्षिणे ॥ ७८ ॥ सर्वास्ताश्चिंतयंतिस्म । शकुनैरेभिरुत्तमैः ॥ किं भविष्यत्यहोऽस्माकं । श्रेयो जानीमहे न हि ॥ ७९ ॥ क्रमात्प्रापुः सखीगेहं । देहं देही यथामलः ॥ आलिंग्य स्वां सखीं सर्वा । विष्टरे ताः स्थितास्तदा ॥ ८० ॥ हस्तमेलापको जज्ञे

। वरवध्वोस्तदा मिथः ॥ प्रछन्नमुखयोश्चारु-गीतनादमनोहरः ॥ ८१ ॥ मुखोद्घाटनकं चक्रे । वरवध्वोस्ततस्तदा ॥ जायमाने वरे गाने । द्विजेन जनसाक्षिकं ॥ ८२ ॥ दृष्टा वरेण सा कन्या । कन्यया स वरोऽपि च ॥ मूर्छिता सापतद्भूमौ । वरं दृष्ट्वा कुरूपिणं ॥ ८३ ॥ सशोकसखीवृंदेन । तालव्यजनवायुना ॥ सचेतना तदाकारि । कन्या शृंगारमंजरी ॥ ८४ ॥ सहसोत्थाय सा गेह-मध्यं गत्वा स्वगोत्रजां ॥ नत्वाथ सर्वतोभद्र-यक्षराजं ननाम सा ॥ ८५ ॥ गोमत्यादिसखीवृंदं । सखीदुःखेन दुःखितं ॥ तस्याः पार्श्वे समागत्य । यक्षराजमदोऽवदत् ॥ ८६ ॥ स्वामिन् सर्वगुणाधार । सर्वकामफलप्रद ॥ सौभाग्यसौख्यदाता त्वं । सर्वाधिव्याधिनाशकः ॥ ८७ ॥ आराधितस्त्वमस्माभि-रेकचित्ताभिरेव च ॥ संतुष्टेन त्वयेदृक्किं । वरो दत्तोऽधमाधमः ॥ ८८ ॥ अस्मत्कर्मविपाकेन । पूर्वोपार्जितपापतः ॥ आराधिते द्रुमे कल्पे । प्राप्तं निंबफलं कटु ॥ ८९ ॥ यतः—शशिनि खलु कलंकं कंटकं पद्मनाले । उदधिजलमपेयं पंडिते निर्धनत्वं ॥ धनवति कृपणत्वं ज्ञानवंतो दरिद्राः । स्वजनजनवियोगो निर्विवेकी विधाता ॥ ९० ॥ एवं विलप्य ताः कन्या । यक्षस्याग्रे घनस्वरं ॥ प्रोचुरथ जीवेनाल-मात्मघातपरा वयं ॥ ९१ ॥ इत्युक्त्वा तीक्ष्णशस्त्रेण । यावत्कुर्वंति तास्तदा ॥

शीर्षच्छेदं तदा यक्षो—ऽवग् मा कुरुत साहसं ॥ ९२ ॥ पंचानामप्ययं भर्ता । मया दत्तो नरोत्तमः ॥ भवद्भिः परिणेतव्यो । महीशो महिमानिधिः ॥ ९३ ॥ इत्युक्ता यक्षराजेन । ताः सर्वा अपि कन्यकाः ॥ चिक्षिपुर्वरमाला द्राक् । कंठे तस्य कुरूपिणः ॥ ९४ ॥ अथ ता विमृशंतिस्म । विक्रमोऽयं नृपो ध्रुवं ॥ विद्याकुरूपभागेवं । जातोऽस्ति खलु कौतुकात ॥ ९५ ॥ विचिंत्येत्यथ ताः प्रोचुः । स्वामिन् स्वं प्रकटीकुरु ॥ रूपं यथा वयं यामः । प्रमोदं परमं प्रिय ॥ ९६॥ विक्रमोऽपि तदा तासां । प्रमोदाय द्रुतं व्यधात् ॥ स्वकीयं मूलरूपं स । दिव्यं देवेशसन्निभं ॥ ९७ ॥ तत्क्षणादेव वेतालः । सर्वं दंडादिकं तदा ॥ आनीय दत्तवांस्ताभ्यो । विस्मिताभ्यो मुदाथ सः ॥ ९८ ॥ अथ ताश्चिंतयामासु—र्मर्टुकीभूय विक्रमः ॥ नूनं समागतोऽस्माभिः । सहैवाहो नृपोत्तमः ॥ ९९ ॥ जाता सुमनसां वृष्टि—र्वैतालेन कृता तदा ॥ आकाशे दुंदुभिध्वानो । बभूवातीवहर्षदः ॥ १०० ॥ इतः कुरूपभाक् सोऽथ । वरो गुप्तनिवासतः ॥ वेतालेन विमुक्तो द्रा—गागात्स्वजनकांतिके ॥१॥ वरस्वजनवर्गोऽथ । पातालेशं व्यजिज्ञपत् ॥ केनापि धूर्तराजेन । वृतास्माकं वधूर्ध्रुवं ॥ २ ॥ दुर्बलानामनाथानां । बालवृद्धतपस्विनां ॥ अन्यायैः परिभूतानां । सर्वेषां पार्थिवो गतिः ॥ ३ ॥ निश-

म्येति वचस्तेषां । पातालेशः क्रुधातुरः ॥ सुभटान् प्रेषयामास । वरग्रहणहेतवे ॥ ४ ॥ वेतालो बं-
धयामास । द्रुतं तान् सुभटानपि ॥ तेऽपि जाता विषण्णास्या । रुदंतः करुणस्वरं ॥ ५ ॥ इतो वि-
ज्ञपयामासु—र्गत्वा पौरा नृपं तदा ॥ विक्रमोऽयं नराधीशो । वरोऽस्त्यत्र समागतः ॥ ६ ॥ श्रुत्वे-
ति नागनाथोऽपि । तत्रागत्यातिविस्मितः ॥ ननाम विक्रमं नृपं । महासत्वेन विश्रुतं ॥ ७ ॥ ततो
विक्रमनृपेन । कस्याप्यन्यस्य कन्यका ॥ संतोष्य द्रव्यदानेन । तद्वरायापि दापिता ॥ ८ ॥ सकु-
टुंबोऽथ नागेशो । बहुमानपुरस्सरं ॥ रत्नाभरणवस्त्रादि । विक्रमार्काय चार्पयत् ॥ ९ ॥ हस्तमोच-
नवेलायां । विक्रमार्कनृपाय सः ॥ विषद्वयहरो दंडो । मुदा तात्रिः समर्पितः ॥ १० ॥ जातः पर-
मया ऋद्ध्या । विवाहस्य महोत्सवः ॥ पंचकन्यायुतो नृपः । क्रमात्प्राप्तो निजं पुरं ॥११॥ वधूपंचक-
संयुक्तो । राजा श्वश्रूगृहं ययौ ॥ तं दंडं च पुरो मुक्त्वा । तस्याः पादौ ननाम सः ॥१२॥ सावदत्
कार्यसिद्धिस्ते । जाता जगति विश्रुता ॥ दुर्लभं यत्त्वया प्राप्तं । छत्रं सर्वार्थसिद्धिदं ॥ १३ ॥ ततो
विक्रमनृपालः । पालिताशेषविष्टपः ॥ स्वगृहं स्ववधूयुक्तो । वियुक्तश्चितयागमत् ॥ १४ ॥ प्रभाते
विक्रमो राजा । पूजयित्वा जिनं मुदा ॥ प्रावर्तत जिनागारे । ततो ह्यष्टाह्निकोत्सवं ॥ १५ ॥ स्व

णेसिंहासने न्यस्य । प्रतिमां त्रिजगद्गुरोः ॥ स्वयं स्नात्रं चकारोच्चैः । स तस्या विधिपूर्वकं ॥ १६ ॥ देवदूष्येण वस्त्रेण । निर्जलीकृत्य तां नृपः ॥ चंदनैश्चर्चयामास । घनसारविमिश्रितैः ॥ १७ ॥ सुगंधपुष्पप्रकरै—र्भूषणैर्भूरिकांतिभिः ॥ जिनेंद्रं पूजयामास । मुक्तिदं मानवेश्वरः ॥ १८ ॥ एवमष्टाह्निकप्रांते । पूजां कृत्वा महत्तमां ॥ जिनेंद्राणां स्वयं भावा—द्ददौ दानं नृपोत्तमः ॥ १९ ॥ नवग्रहाणां नैवेद्यं । दिक्पालानामपि तदा ॥ पंचानां लोकपालानां । भक्त्या सोऽथ बलिं ददौ ॥ ॥ २० ॥ तदेंद्रेण समागत्य । संतुष्टेन नृपाय च ॥ दत्तं सिंहासनं दिव्यं । दिव्यनाट्यसमन्वितं ॥ ॥ २१ ॥ सुमुहूर्त्ते दिने शुद्धे । सर्वग्रहबलान्विते ॥ नृपेणाकारि दंडानां । तेषां छत्रं महाद्भुतं ॥ ॥ २२ ॥ चतुर्दिक्षु चतुर्दंभाः । पंचमो मध्यदेशगः ॥ शोभंते पंच छत्रे ते । लोकपाला इवाश्रितः ॥ २३ ॥ श्रीविक्रमार्कोऽथ शुभे मुहूर्त्ते । सिंहासने शक्रवरप्रदत्ते ॥ श्रीपंचदंडांकितछत्रयुक्ते । स्थितः सभायां सुमहोत्सवेन ॥ २४ ॥ श्रीविक्रमार्कस्य नरेश्वरस्य । श्रीपंचदंडातपछत्रबंधे ॥ पद्ये महाश्चर्यकरे यथोक्ते । प्रस्ताव आसीत्खलु बाणसंज्ञः ॥ २५ ॥ यावद्भूधरसागरा रविशशिनक्षत्रवृंदानि च । धर्माधर्मविचारणैकनिपुणं यावज्जगद्राजते ॥ तावद्विक्रमभूमिपालविलसत्कीर्त्तिप्रभामिश्रि

तो । ग्रंथोऽयं जिनशासने हि विदुषां चित्ते चिरं नंदतात् ॥ २६ ॥ इति श्रीपंचदंडकथात्मकं श्रीविक्रमार्कचरित्रं समाप्तं ॥ श्रीरस्तु ॥ आ ग्रंथ श्रीजामनगरनिवासी पंम्डित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयगुरुप्रसादात् ॥

---

॥ श्रीजिनाय नमः ॥

# ॥ श्रीहरिविक्रमचरित्रं ॥

( कर्ता—श्रीजयतिलकसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४२. विक्रमसंवत—१९७२. सने—१९१६.

किं. रु.-८-०-०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर. ☜

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीहरिविक्रमचरित्रं प्रारभ्यते ॥

(कर्ता—श्रीजयतिलकसूरिः)

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

श्रीतीर्थाय नमस्तस्मै। पंचशाखश्रिये सदा ॥ पंचैते वितता यस्य । शाखाः श्रीपरमेष्टिनः ॥ १ ॥ अर्हंतस्ते जयंत्यत्र । निःस्नेहा रत्नदीपकाः ॥ स्पर्धां करोत्यलोकेन । येषां ज्ञानमयं महः ॥ २ ॥ सिद्धेभ्योऽपि नमस्तेभ्यो । मुक्तेभ्यः कर्मकश्मलैः ॥ मूर्ध्नि चूडामणीयंते । लोकपुंसः सदैव ये ॥ ३ ॥ शिवं गतेषु सर्वेषु । शासनं धारयंति ये ॥ पंचधाचारधारिभ्य । आचार्येभ्यो नमः सदा ॥ ४ ॥ उपाध्याया जयंत्यत्र । सूत्रार्थजलराशयः ॥ गृहीत्वार्थजलं येभ्यो । घना वर्षंति साधवः ॥ ५ ॥ मूलोत्तरगुणैः शुद्धं । चारित्रं पालयंति ये ॥ सर्वेभ्योऽपि त्रिधा तेभ्यः । साधुभ्यो भुवने नमः ॥ ६ ॥ इत्थं कृतनमस्कारो । भव्यानां बोधहेतवे ॥ हरिविक्रमराजर्षे—र्वक्ष्ये चरितमद्भुतं ॥ ७ ॥ संतः शृ·

एवंतु चित्राढ्यं । सदसद्व्यक्तिहेतवे ॥ दानशीलतपोभावो—पदेशैः प्रचुरं त्विदं ॥ ८ ॥ सर्वतो दे-
शतश्चापि । चारित्रं द्विविधं मतं ॥ यतीनां गृहिणां चापि । सर्वोत्तमफलप्रदं ॥ ९ ॥ हरिविक्रमव-
त्पूर्वं । द्वितीयं वीरसेनवत् ॥ चारित्ररत्नममलं । प्रतिपाद्यं विवेकिभिः ॥ १० ॥ तद्यथा—

इहास्ति भरतक्षेत्रे । दक्षिणार्धस्य मंडनं ॥ अयोध्येति जगत्ख्याता । पुरी धनदनिर्मिता ॥ ११ ॥
गंभीरनीरसंपूर्ण—परिखापरिवेष्टिता ॥ द्युसत्पुरीव या भाति । क्षीराब्धिप्रतिबिंबिता ॥ १२ ॥ म-
णिरत्नमयावास—शृंगोद्गतकरोत्करैः ॥ ज्योतिश्चक्रमिवाकिंचि—त्करं या दूरमस्यति ॥ १३ ॥ पद्मा-
नां बोधसंकोचै—र्जनो जानाति सर्वदा ॥ उदयास्तावपि भानो—र्यत्र रत्नमयौकसि ॥ १४ ॥ तत्रास-
मुद्रभूनाथो । नामतोऽजितविक्रमः ॥ राजीवाक्षोऽभवद्राजा । द्दप्तारिकरिकेसरी ॥ १५ ॥ रणांगणे क-
रे यस्य । कृपाणः काल आबभौ ॥ जयलक्ष्म्या इवाकृष्टो । वेणीदंड इवोज्ज्वलः ॥ १६ ॥ श्रीम-
कांतैर्गुणैर्भूपे । वसुधां यत्र शासति ॥ रजन्याः प्रथमे यामे । प्रदोषो न पुनर्जने ॥ १७ ॥ तस्यासी-
द्वल्लभा भार्या । कुलीना शीलशालिनी ॥ कमलश्रीरिति ख्याता । नाम्ना धाम्नामरीनिभा ॥ १८ ॥
राज्ञो रतिर्यथा तस्यां । तथान्यांतःपुरीषु न ॥ राकायां स्याद्यथा चंद्र—स्तिथिष्वन्यासु नो तथा

॥ १९ ॥ रूपं कला गुणाः सर्वे । यौवनं राज्यसंपदः ॥ सुखगामाखुरेतस्याः । पत्न्या लाभेन तं ध्रुवं
॥ २० ॥ कमलश्रीतनूजन्मा । तस्यामीत्तनयः प्रियः ॥ हरिविक्रमनामा च । सत्वसारपराक्रमः ॥ २१ ॥
सूरोऽपि लोकसंतापी । हानिकृल्लुधचेतसां ॥ अस्थैर्यभाजनं तेन । कुमारेण कथं समः ॥ २२ ॥
धृतदोषोदयः शुक्ले—कपक्षः खंम्नासहः ॥ कलंकी तेन सोमोऽपि । कुमारेण कथं समः ॥ २३ ॥
वक्रो जलमयो देवै—र्मथितो नूबहिःकृतः ॥ हतरत्नः समुद्रोऽपि । कुमारेण कथं समः ॥ २४ ॥
परोपकारशून्यश्री—रहस्यः कठिनाकृतिः ॥ गुणैस्तन्मेरुशैलोऽपि । कुमारेण कथं समः ॥ २५ ॥
सागरादपि गंभीरो । मेरोरपि गुणैर्गुरुः ॥ आदित्यादपि तेजस्वी । सौम्यश्चंद्रमसोऽपि यः ॥ २६ ॥
सदैव पितृपादाब्ज—सेवाहेवाकिमानसः ॥ सकृतौ बद्धकक्षो यो । विवेकी राजहंसवत ॥ २७ ॥ स-
ज्जनोदयसंतुष्टः । परदुःखेन दुःखितः ॥ सत्यसाहससंयुक्तः । कलावान् शुद्धकर्मठः ॥ २८ ॥ दान-
शीलः कविर्प्रोक्ता । कुमारो मारविग्रहः ॥ बभूवातिविनीतो यो । यौवनश्रीसमन्वितः ॥ २९ ॥ यु-
गमं ॥ विलोक्य सर्वकार्येषु । समर्थं हरिविक्रमं ॥ राजा तं युवराजत्वे—ऽभ्यषिंचद्दिवसे शुभे ॥ ३० ॥
तत्रानुरक्तस्य नृपस्य । द्वितीयमिव मानसं ॥ सामंतो वैरिसिंहाख्यः । प्रियं मित्रं सुमित्रजः ॥ ३१ ॥

रणवीरः सुतस्तस्य । वैरिवारसुदुस्सहः ॥ युवराजस्य सन्मित्रं । बभूवाबालकालतः ॥ ३२ ॥ अन्ये-
ऽपि राजसामंत—मंत्रीभ्यश्रेष्टिसूनवः ॥ बहवो गुणिनस्तद्वत् । भेजिरे हरिविक्रमं ॥ ३३ ॥ राजा-
थान्यदिने प्रातः । कृतप्राभातिकक्रियः ॥ सिंहासनमलंचक्रे । उदयाद्रिमिवार्यमा ॥ ३४ ॥ सामंता-
मात्यमित्राद्यै—र्नक्षत्रैरिव वेष्टितः ॥ राजा रराज राजेव । सदिवीवात्र संसदि ॥ ३५ ॥ यावन्नीति
कथाकाव्यै । राजानंदयति प्रजाः ॥ तावत्सेवार्थमायातः । समित्रो हरिविक्रमः ॥ ३६ ॥ अवरुह्य
करिस्कंधा—न्मित्रहस्तावलंबितः ॥ बंदिभिः स्तूयमानोऽसा—वारक्षकजनैर्वृतः ॥ ३७ ॥ दर्श्यमाना-
ध्वसंचारः । पुरोभूतेन वेत्रिणा ॥ प्रविवेश सभामध्य—मुत्साह इव मूर्तिमान् ॥ ३८ ॥ युग्मं ॥ प्र-
णम्य चरणौ भक्त्या । पितुस्तद्दृष्टिदर्शिते ॥ राजांतिके बुध इवो—पाविशन्मंत्रिसंयुतः ॥ ३९ ॥
कुमारः कुशलोदंतं । पृष्टो राज्ञेत्युवाच सः ॥ युष्मत्प्रसादतोऽस्माकं । सर्वेषां कुशलं प्रभो ॥ ४० ॥
तौ राजयुवराजौ द्वा—विंद्रोपेंद्राविव श्रिया ॥ यावद्राज्यकथालीना—वन्योन्यं तत्र तिष्ठतः ॥ ४१ ॥
अभूत्तावन्महामंत्री । मान्यो नरपतेरपि ॥ जराजर्जरसर्वांगो । नाम्ना मंत्री महोदधिः ॥ ४२ ॥ यस्य
वक्षःस्थले रोम—समूहः शुशुभे सितः ॥ हृदयस्थविवेकेंदोः । करोत्कर इवामलः ॥ ४३ ॥ सर्वांग

सुंदरं दृष्ट्वा । कुमारं तं विशेषतः ॥ गुणान् ग्राहयितुं युक्त्या । विनीतमपि सोऽब्रवीत् ॥ ४४ ॥
शृणु वत्स विनीतोऽसि । मान्यथा त्वं विकल्पय ॥ पितुस्तेऽपि गुणाधानं । मय्यायत्तं यतोऽन्वहं
॥ ४५ ॥ गुणानां गौरवं मुक्त्वा । रूपगर्वं करोति यः ॥ तस्माद् दूरं प्रणश्यंत्य—विवेकसाध्वसाद्गु-
णाः ॥ ४६ ॥ कलाकलापसंपूर्णः । शशीव प्रथमोदये ॥ महर्घ्योऽपि गुणैः सौम्यो । रागं प्राप्नोति
पूरुषः ॥ ४७ ॥ क्षणाद्विघटते लक्ष्मीः । क्षणात्संघटते पुनः ॥ वायूद्भ्रांतशरत्काल—मेघच्छायेव चंच-
ला ॥ ४८ ॥ मलिनं कुरुते लक्ष्मी—र्गुणैर्यद्यपि निर्मलं ॥ वात्येव वर्धिता दूरं । क्षणेन पुरुषं ख-
लु ॥ ४९ ॥ यथा न छल्यसे लक्ष्म्या । तथा वत्स समाचर ॥ हालयेवानया नूनं । नरो मुह्यति
युक्तया ॥ ५० ॥ हरंति न यथा चित्तं । तव वत्स मृगेक्षणाः ॥ वशीकुर्वंति नात्मानं । विषयाश्च
तथाचर ॥ ५१ ॥ हरंति नेंद्रियस्तेना । विवेकद्रविणं तव ॥ यथा तथैव कर्तव्या । सावधाना मतिः
सदा ॥ ५२ ॥ हितं प्रसन्नगंभीरं । श्रुत्वैवं मंत्रिणो वचः ॥ कुमारः सुंदराकारः । प्रत्युवाच विचक्ष-
णः ॥ ५३ ॥ तात स्वगुरुतातुल्यं । सर्वं सत्यं त्वयोदितं ॥ विहितो मतिदीपो मे । युष्माभिर्भृशमु-
ज्ज्वलः ॥ ५४ ॥ अत्रांतरे नराधीशो । विसृज्याशेषसंसदं ॥ हरिविक्रमसंयुक्तः । समुत्थाय गृहं य-

यौ ॥ ५५ ॥ आत्मीयं मंदिरं गत्वा । कृत्वा स्नानाशनादिकं ॥ विनोदैर्गमयामास । युवराजोऽथ
वासरं ॥ ५६ ॥ ततः सायं विधायोच्चैः । संध्याकृत्यमगात्पुनः ॥ राज्ञः सपादसेवार्थं । सर्वावसरदाधि-
नः ॥ ५७ ॥ तत्र साहसवार्तान्निः । प्राग्यामे व्यतिते सति ॥ शयनार्थं नृपादिष्टः । कुमारोऽगान्नि-
जं गृहं ॥ ५८ ॥ उपवासगृहं मित्र—पत्तिमुख्यं विसृज्य च ॥ सप्तभौमिकसौधाग्र—मारुरोह कु-
मारकः ॥ ५९ ॥ तत्र वासगृहे रम्ये । कोमले तूलिकातले ॥ सराजन्यकुमारोऽस्ति । यावच्चिंताप-
निद्रहक् ॥ ६० ॥ निशीथसमयस्ताव—त्प्रसुप्ताशेषनागरः ॥ प्रावर्तताखिले विश्वे । मूकीभूत इव
क्षणात ॥ ६१ ॥ संचरद्घूकघूत्कारैः । पूत्कारैरिव यामिकान् ॥ निद्रया निर्भरं सुप्तान् । यत्र जागर-
यत्युषा ॥ ६२ ॥ रक्षःपिशाचवेताल—शाकिनीभूतपंक्तयः ॥ भीषयंते जनं यत्र । मूर्ता इव विप-
त्तयः ॥ ६३ ॥ शुचीभेद्यतमिस्रेऽस्मिन् । समये राजनंदनः ॥ दिव्यमाकस्मिकं गीतं । शुश्राव श्रव-
णप्रियं ॥ ६४ ॥ ततोऽसावतिगांधर्व—कलाकौशलकोविदः ॥ दध्यावपूर्वसंगीत—श्रवणाक्षिप्तमान-
सः ॥ ६५ ॥ अहो चित्रमहो चित्रं । श्रवणेंद्रियसौख्यदं ॥ प्रायो न मर्त्यलोकेऽस्मिन् । श्रूयते गी-
तमीदृशं ॥ ६६ ॥ बहूनामिह गंधर्व—गंधर्वाणामपि पृथक् ॥ श्रूयते वेणुवीणादि—भिन्नोऽप्येक

इव स्वरः ॥ ६७ ॥ यस्य मे संति गंधर्वाः । प्रसिद्धा ये भुवस्तले ॥ तेनेदृग्गेयमश्रावि । मया नान्यत्र कुत्रचित ॥ ६८ ॥ तावन्न मर्त्यसंगीत—मेतद्भवति निश्चितं ॥ क्व पंचमस्वरोच्चारः । काके कोकिलसन्निन्ने ॥ ६९ ॥ अपूर्वश्रवणेनोच्चै—रपूर्वदर्शनेन च ॥ श्रुती नेत्रे च सफले । कर्तव्ये चाद्य वै मया ॥ ७० ॥ ह्रियते न विवेकस्व—मद्वचौरैस्तथाचर ॥ अद्येति मंत्रिणादिष्टं । गीतात्तदपि लंध्यते ॥ ७१ ॥ जव्यं जवतु मे वा मा । सर्वथैव मया पुनः ॥ इदानीमस्य गीतस्य । कार्यं मूलविशोधनं ॥ ७२ ॥ ध्यायन्निति समुत्थाय । दृढबद्धोत्तरीयकः ॥ हारालंकृतहृदयः । कटीबद्धासिधेनुकः ॥ ७३ ॥ करवालकरोऽचाली—न्निभृतारोपितक्रमः ॥ अनुनीतमृग इव । यामिकैरप्यलक्षितः ॥ ७४ ॥ युग्मं ॥

अथ राजपथे गच्छन् । गच्छता वीरचर्यया ॥ ददृशेऽसौ नरेंद्रेण । हारोद्योतेन विक्रमः ॥ ७५ ॥ उपलक्ष्य निजं पुत्रं । राजा चिंतितवानिति ॥ किमर्थं कुत्र वा याति । निःसृत्यैष पुराद्बहिः ॥ ७६ ॥ किं करिष्यत्ययं तत्र । साहसं चास्य कीदृशं ॥ ज्ञास्याम्येतदहं सर्व—मनुगच्छाम्यलक्षितः ॥ ७७ ॥ ध्यात्वेति नृपतिर्मार्गे । सांधकारपथावृतः ॥ सुतमार्गानुसंलीनो । मौनी दूरस्थितो ययौ ॥ ७८ ॥ द्वा-

वप्येतौ गतौ याव–दुपप्राकारभित्तिकं ॥ पितुः प्रपश्यतस्ताव—त्कुमारः सज्जतामधात् ॥ ७९ ॥ विद्यु·
द्दंडानुकारेणो—ड्डीयोर्ध्वमुग्ररंहसा ॥ अलंघयत्कुमारोऽथ । प्राकारं तं सखातिकं ॥ ८० ॥ क्रमेणा·
नेन राजापि । पुरीबाह्यमगादद्रुतं ॥ परस्परमविज्ञातौ । तत्र चेलतुरग्रतः ॥ ८१ ॥ कुमारः कौतु·
काकृष्ट—स्त्वरितं त्वरितं व्रजन् ॥ क्षणेन प्रापदुद्यानं । तत्रैकं नगराद्बहिः ॥ ८२ ॥ शक्रावतारना·
मानं । मणिरत्नशिलामयं ॥ प्रासादं स वनस्यांत—रभ्रलिहं समैक्षत ॥ ८३ ॥ उच्चैर्दंडमिषाद्बाहु—
मूर्ध्वीकृत्य मुहुर्मुहुः ॥ व्याबाधतीव ज्ञानां यो । रथ्यानुपरियायिनः ॥ ८४ ॥ मणिरत्नप्रभावेन । रा-
त्रौ यः प्रसर्पता ॥ दूरेण कुरुते ध्वांतं । स्वप्रभावेण पापवत् ॥ ८५ ॥ द्रुमैर्दूरस्थितैर्नीलै—र्भाति
यः परिवेष्टितः ॥ भव्यानां पातकैर्भूतै—रिवालब्धप्रवेशनैः ॥ ८६ ॥ मणिभूमिषु संक्रांत–रूपद्रुकुसु
मोत्करैः ॥ सर्वत्राद्भुतसौरभ्यो । योऽली त्वंचयते भृशं ॥ ८७ ॥ आवास इव यः श्रीणां । दुर्गं धर्म-
नरेशितुः ॥ क्षेत्रं सुबुद्धिबीजानां । निधानं ध्यानसंपदां ॥ ८८ ॥ प्रासादं तं समालोक्य । सप्रसाद·
जुषा हृदा ॥ कुमारः स्फाररोमांच—श्चिंतयामास विस्मयात् ॥ ८९ ॥ अहो एकेन गीतस्य । कौतु-
केनावशोऽभवं ॥ अत्र प्राप्ता परं बह्वी । कौतुकानां परंपरा ॥ ९० ॥ प्रथमं तावदीदृक्षं । रत्नकांचन-

निर्मितं ॥ दृष्टं जिनेंद्रभवनं । सर्वपापक्षयंकरं ॥ ९१ ॥ अपूर्वरूपास्तत्रैते । देवा विद्याधरा अपि ॥
देवसेवां वितन्वाना । दृष्टाश्चादृष्टपूर्वकाः ॥ ९२ ॥ निजमाहात्म्यसंपन्न—सर्वज्ञाः किल देवताः ॥ से-
वंते तु कथंकारं । देवा एते जिनेश्वरं ॥ ९३ ॥ हुं ज्ञातमथवा यद्धि । देवानामपि दुर्लभं ॥ अत्य-
द्भुतं फलं किंचि—त्तद्याचंते जिनेश्वरं ॥ ९४ ॥ अस्तु तावदिमं देवं । सुरविद्याधरार्चितं ॥ दुःप्रा-
प्यफलदातारं । नमस्याम्येव संप्रति ॥ ९५ ॥ निश्चित्येति पदाक्षेपैः । कंपयन्न् म महीतलं ॥ सुरसं-
घकृताशंको । निःशंकः प्राप मंम्पं ॥ ९६ ॥ माररूपे कुमारेऽस्मिन् । सुरनारीदृशोऽपतन् ॥ विकस्व-
रे नवांभोजे । मधुलिट्पंक्तयो यथा ॥ ९७ ॥ काचित्कुमारमुद्दिश्य । केशपाशं मनोहरं ॥ तूणीर-
मिव कामस्य । पुष्पबाणैरपूपुरत् ॥ ९८ ॥ काचिच्चकार सहसा । पीनोन्नतपयोधरा ॥ जृंभणं चांग-
भंगं च । कुमारालिंगनेच्छया ॥ ९९ ॥ काप्यपश्यन्निजां श्रोणिं । काचिच्च रणनूपुरं ॥ अदर्शयत्क-
रं काचि-न्नृत्यंती निजलीलया ॥ १०० ॥ बबंध मेखलां काचि—त्त्रोटयित्वा कटीतटे ॥ कटाक्षसा-
यकैः काचि—त्तं युवानं जघान च ॥ १ ॥ इत्यालोकरसावेशा—दात्मन्येकाग्रमानसाः ॥ कुर्वन् सु-
रीर्जगामाशु । द्वारं जिनगृहस्य सः ॥ २ ॥ मोहांधकारमार्तंडः । कर्मकक्षहुताशनः ॥ आवर्त्यादिजि-

नस्तेन । रंगमंडपमीयुषा ॥ ३ ॥ विस्मयानंदसंपूर्णः । प्रशांतजिनदर्शनात् ॥ रोमांचितो महाभक्त्या । प्रांजलिः स समस्तवीत् ॥ ४ ॥ नमामि त्वां भवांभोधि—निस्तारकशिरोमणिं ॥ निःशेषदोषरहितं । महितं सर्वदा सुरैः ॥ ५ ॥ त्वयि दृष्टे जगन्नाथ । ममांगे पुलकच्छलात ॥ आनंदाश्रुजलैः सिक्तो—कुरितः पुण्यपादपः ॥ ६ ॥ तेषां वृथा कृते नेत्रे । वंचितास्ते तपस्विनः ॥ जगदेकहितव्यस्त्वं । दृष्टो यैश्च जिनेश्वरः ॥ ७ ॥ जानेऽहमद्य जातोऽस्मि । विवेकोऽद्य मयार्जितः ॥ प्रभूतपुण्यैर्जातोऽसि । यस्त्वं लोचनगोचरः ॥ ८ ॥ प्रशांताय स्वरूपाय । निर्विकाराय तायिने ॥ चिंतातीतप्रदायाद्य । देवदेव नमोऽस्तु ते ॥ ए ॥ इति स्तुत्वा प्रणम्योच्चै—र्वृषभस्वामिनं जिनं ॥ मन्यमानः कृतार्थं स्वं । स पार्श्वं द्युसदां ययौ ॥ १० ॥ सुरसंघमिमं ज्ञात्वा । निर्निमेषेक्षणादिभिः ॥ चिह्नैः स समभाषिष्ट । प्रशशंस च साहसी ॥ ११ ॥ कृतार्था भोः सुरा यूयं । यज्जिनेंद्रपदार्चनं ॥ निरंतरं प्रकुरुथ । पुण्यं चिन्वथ शाश्वतं ॥ १२ ॥ तद्विज्ञानं समृद्धिः सा । कलास्ता एव ते गुणाः ॥ साध्यते यैर्जिनेंद्राणां । प्रत्यहं पूजनक्रमः ॥ १३ ॥ सावष्टंभमिदं जल्पन् । भासमानोऽधिकाधिकं ॥ हृदयेऽमरनारीणां । कामवत्प्रतिबिंबितः ॥ १४ ॥ सप्रश्रयं ससंरंभं । सोऽन्यधायि सुरैरिति ॥ अस्माकमति-

थिस्त्वं ह्य—वास्यतां हरिविक्रम ॥ १५ ॥ इति तेषां वचः श्रुत्वा । दत्तफालो मृगारिवत् ॥ उच्चैर्म-
णिमयं मत्त—वारणं सोऽधिरूढवान् ॥ १६ ॥ तत्र स्थितो महोत्साह—स्त्रिदशैः परितो वृतः ॥ स-
मासीनो हरिरिव । शुशुभे हरिविक्रमः ॥ १७ ॥

अथ दृष्टसुताचारो । राजाप्यजितविक्रमः ॥ दध्याविवमसामान्य—प्रमोदैर्मेदुरे हृदि ॥ १८ ॥
अहो साहसमेतस्य । सत्वं चाहो ह्यनुत्तरं ॥ अहो वचनवैचित्र्य—महो रूपमहो कलाः ॥ १९ ॥
अहो गुणानुरागित्व—महो चित्तप्रसन्नता ॥ अहो श्रद्धाद्भुता धर्मे । पुत्रस्याहो जिताक्षता ॥ २० ॥
युग्मं ॥ रूपेण रम्यवेषेण । प्रतापेन च नंदनः ॥ सुरानपि जयत्येष । मानवानां तु का कथा ॥ २१ ॥
एतस्यैवाप्यहं कुर्वन् । पुत्रस्यांगस्य रक्षणं ॥ तिष्ठाम्यधः स्थितो मत्त—वारणस्यास्य निश्चलः ॥ २२ ॥
विचिंत्येति नृपः खड्ग—हस्त एकाग्रमानसः ॥ अनुरक्तोऽनुगामी च । तस्थौ दत्तक्षणः सुते ॥ २३ ॥
कृते प्रेक्षणके रम्ये । जिनेंद्रपुरतः सुरैः ॥ क्रमाप्तावसरैर्हृष्टैः । प्रारेभे खेचरैः क्षणः ॥ २४ ॥ गीतै-
र्नृत्यैश्च वादित्रै—स्तालमानलयानुगैः ॥ विद्याधरामराः सर्वे । रंजितास्तत्र नाटके ॥ २५ ॥ नाट-
कोत्तरगांधर्व—गुणेन रंजितो ददौ ॥ गंधर्वेभ्यो निजं हारं । कुमारः स उदारधीः ॥ २६ ॥ सह

स्वांशुकरप्रोत—नक्षत्रौघमिवोज्ज्वलं ॥ आवासं सर्वरत्नानां । क्षीरार्णवमिवोच्चकैः ॥ २७ ॥ दीयमा-
नं कुमारेण । हारं तं विश्वभूषणं ॥ निरीक्ष्य निभृतं देवा । अन्योन्यं विस्मिता जगुः ॥ २८ ॥ भोः
पश्यत सुराः सर्वे । कुमारस्यास्य चेष्टितं ॥ चिंत्यमानमिदं सम्य—क्कस्यानंदं करोति न ॥ २९ ॥
अमर्त्यसदृशं रूप—मैश्वर्यं निर्जितामरं ॥ वेषो विदग्धमुग्धोऽस्य । लावण्यमसमं पुनः ॥ ३० ॥ अ-
नुरागो गुणिन्युच्चैः । काप्यपूर्वा गुणज्ञता ॥ दानशक्तिरसामान्या । सर्वमस्मिन्नमानुषं ॥ ३१ ॥ ते-
जःश्रीपरिपूर्णानां । जातिर्नैवात्र कारणं ॥ दहति द्रुमसंघातं । वह्निस्तृणभवोऽपि हि ॥ ३२ ॥ ते-
जस्विनोऽप्यमी जाताः । सर्वे रोरा इवामराः ॥ मनुष्यमात्रजातस्य । कुमारस्य पुरोऽधुना ॥ ३३ ॥
अत्रांतरे न्यगादीति । कुमारोऽमिततेजसा ॥ सौधर्मवासिना शक्र—सामानिकसुपर्वणा ॥ ३४ ॥
त्रैलोक्याद्भुतरूपेण । लक्षणैर्ज्ञानतोऽपि च ॥ हरिविक्रम जानामि । न सामान्योऽसि मानवः ॥ ३५ ॥
दर्शनेन तवेदानी—मात्मनः कृतकृत्यतां ॥ नेत्राणां निर्निमेषत्वं । जानामि सफलं तथा ॥ ३६ ॥
यात्रा च सफलीभूता । मम गोष्ठ्या तवानया ॥ वसुधा बहुरत्नेयं । मयाद्येति विनिश्चितं ॥ ३७ ॥
तन्न सीदति चेत्कार्यं । हृच्च ते चेन्न दूयते ॥ तदेहि मित्रराजन्य । याव आवां जिनांतिके ॥ ३८ ॥

ओमित्युक्ते कुमारेण । द्वावप्युत्थाय तौ ततः ॥ जग्मतुः श्रीयुगादीश—पुरतोऽमरमानवौ ॥ ३९ ॥
तत्रामरेण जगदे । कस्य स्यान्न गुणादरः ॥ स्वीकुरु त्वमलंघ्यं त—न्मद्वचो गुणिनां वर ॥ ४० ॥ पू-
र्वजन्मागतस्नेहा—च्छुभकर्मोदयाच्च वा ॥ स्यात्संबंधोऽत्र जंतूनां । तृतीयं नास्ति कारणं ॥ ४१ ॥
सेवका इव जाताः स्मो । यद्यप्यावर्जिता गुणैः ॥ वयं तव तथाप्याशु । कार्यं किमपि दिश्यतां ॥ ४२ ॥
अमरोक्तिमिति श्रुत्वा । हाहेति पिहितश्रुतिः ॥ कुमारोऽथ जगादैवं । जल्पथानुचितं किमु ॥ ४३ ॥
यूयं देवा यतः पूज्या । मर्त्या वः सेवका वयं ॥ अतो युष्मत्प्रसादेन । सर्वं संपद्यतेऽत्र नः ॥ ४४ ॥
देवोऽप्युवाच हे राज—न्नमोघं देवदर्शनं ॥ इति वाक्यं वृथा मानू—त्तेन त्वयि ममाग्रहः ॥ ४५ ॥
अतो विचार्य कर्तव्यं । मद्वचः सर्वथा त्वया ॥ इहार्थे देवपादानां । शपथाः संति तेऽधुना ॥ ४६ ॥
ऋषभस्य प्रभावेणा—कृतांगो वज्रवद्भव ॥ इत्युक्त्वास्पर्शि देवेन । तद्देहोऽमिततेजसा ॥ ४७ ॥ वि-
द्याधरामरादिभ्यो । जलाग्निरिपुसंकटे ॥ अत ऊर्ध्वं भयशंका । न कार्या जीवितावधि ॥ ४८ ॥
कुमारेणामरोऽभाणि । कोशीकृत्य कराविति ॥ यद्युष्माकं प्रसादेन । भवेत्तन्नो भवत्विह ॥ ४९ ॥ अ-
थापृच्छ्य कुमारं तं । तिरोऽभूत्सहसा सुरः ॥ कराः सूर्यमिवाप्यन्ये । गंधर्वाद्यास्तमन्वगुः ॥ ५० ॥ त-

त्सर्वं क्षणिकं दृष्ट्वा । गंधर्वाणां पुरं यथा ॥ कुमारः स्थित एकाकी । चेतसीति व्यचिंतयत ॥ ५१ ॥
ऋद्धिरूपादिकाः सर्वे । यथाह्रो ह्युसदां गुणाः ॥ तथा सौजन्यमेतेषा–मसामान्यं च दृश्यते ॥ ५२ ॥
स्वभावेनोपकुर्वंति । संतो न प्रतिवांछया ॥ सिंचंति कृषिनं मेघा । याचंते न च वेतनं ॥ ५३ ॥
सतां चेतांसि नेछंति । चाटूक्तिं न प्रतिक्रियां ॥ अनुवृत्तिं विलंबं च । प्राप्यावसरमर्थिनां ॥ ५४ ॥
बहुप्रकारमित्यादि । ध्यायन् देवगुणव्रजं ॥ प्रणम्यादिजिनं तस्मा—त्कुमारो निर्ययौ बहिः ॥ ५५ ॥
दध्याविति नरेंद्रोऽपि । ततः पुत्रमनुव्रजन् ॥ सार्धं सुपर्वणानेन । मंत्रितं किं जिनांतिके ॥ ५६ ॥
अस्तु तावन्ममानेन । किं ध्यानेन प्रयोजनं ॥ नानेनास्ति समः कोऽपि । यो देवैरिति वर्ण्यते
॥ ५७ ॥ ज्ञातो न परमद्यापि । पुत्रस्यैको गुणो मया ॥ अस्ति नामानुरूपो य—द्विक्रमोऽस्यान्य-
थाथवा ॥ ५८ ॥ स्वयमेवात्र पश्यामि । कोपयित्वा कथंचन ॥ कीदृक्कोपाद्भवेदेष । कीदृगस्य प्रग-
ल्भता ॥ ५९ ॥ विचिंत्येति नरेंद्रेण । हक्कादानपुरस्सरं ॥ रुद्धाद्वारं द्रुतं गत्वा । बभाषे हरिविक्र-
मः ॥ ६० ॥ रेरे त्वं कस्य को वासि । कस्यैकाकिबलेन च ॥ भ्रमस्यस्यां तमस्विन्यां । मलिम्लुच
श्वोच्चकैः ॥ ६१ ॥ आकर्ण्येति कुमारोऽथ । दध्यौ रोमांचितो हृदि ॥ निषिद्धापि ममाकाल—च-

र्यागृह्णुणहेतवे ॥ ६२ ॥ दृश्यंतेऽत्र नरा वीराः । श्रूयंते तद्वचांस्यपि ॥ स्वैरालापसुखैश्चापि । स्वा·
त्मानो तुष्यते चिरं ॥ ६३ ॥ दृश्यते विविधाश्चर्यं । पौरुषं चाधिरोहति ॥ तेन दोषाविहारेऽपि ।
निर्दोष इव न्नाति मे ॥ ६४ ॥ इति चिंतयता तेन । नंदनेन नरेश्वरः ॥ अभाणि सस्मितं वाक्य
—मक्षुद्रहृदयो द्रुतं ॥ ६५ ॥ त्वं कस्येति त्वयोक्तं य—द्वाक्यं ते तदसंगतं ॥ यतः सर्वो जनोऽ·
प्यत्र । पूर्वं पित्रोर्न संशयः ॥ ६६ ॥ प्रत्यक्षोऽस्मि पुमान् वीर। न व्याघ्रो न च राक्षसः॥ प्रत्यक्षेऽपि
प्रमाणे त्वं । कोऽसीत्युक्तिर्वृथा तव ॥ ६७ ॥ बलेन कस्य यच्चोक्तं । प्रथमं तन्निशाबलं ॥ दुर्बलस्य
बलं राज्ञो । द्वितीयं मेऽत्र तायिनः ॥ ६८ ॥ सोल्लंठं तद्वचः श्रुत्वा । राजा चिंतितवानिति ॥ अ·
स्याक्षुद्रहृदो वक्र—मृदूनि वचनान्यहो ॥ ६९ ॥ तं चुकोपिषुराहस्म । साधिक्षेपं ततो नृपः ॥ नो
राज्ञोऽस्य प्रधानोऽसि । त्वमेवेत्यनुमीयते ॥ ७० ॥ स्वेभ्योऽपि पंचभूतेभ्यो । न किं निर्लज्ज लज्ज-
से ॥ राज्ञो बलं ममाग्रे त्व—मश्रद्धेयमिह ब्रुवन् ॥ ७१ ॥ उवाच विक्रमो वीर । न प्रधानतया तु
किं ॥ दुर्बलत्वं समुद्दिश्य । स्वस्मिन् राजबलं ब्रुवे ॥ ७२ ॥ संरक्षति प्रजा राजा । यावतीर्जगतीत-
ले ॥ किं जानात्ययं सर्वाः । स्थानेनाभिधया च भोः ॥ ७३ ॥ यावती यस्य या शक्तिः । सर्वथा

तां व्यनक्ति सः ॥ दोषोक्तावेव सा तेऽस्ति । नैवान्यत्र महायशः ॥ ७४ ॥ दध्यौ नृपः कुमारस्य ।
शक्तौ सत्यामहो क्षमा ॥ योऽत्र निर्भर्त्सितोऽप्येवं । न क्रुध्यति मनागपि ॥ ७५ ॥ ध्यायन्निति प्र
चिक्षेप । निष्ठुरं वचनं नृपः ॥ प्रशांतस्यास्य कोपाय । सिंहस्येव शरं भटः ॥ ७६ ॥ रेरे कापुरुष ब्रूषे
। किमयुक्तं ममाग्रतः ॥ धृतोऽसि त्वं मया पातु । राजा यद्यस्ति शक्तिमान् ॥ ७७ ॥ सुतः स्माह
दृढं कुर्या । माछोटं करतस्तव ॥ इतरः स्माह पर्यंतो । वितर्काणां तवाभवत ॥ ७८ ॥ अन्यच्च सैष-
ते राजा । नगराभ्यंतरे बली ॥ बाह्ये पुनरहं राजा । स्वैराचारविहारवान् ॥ ७९ ॥ कुमारश्चिंतया
मास । क एष निजपौरुषं ॥ प्रजल्पति दुराचार—स्ताताधिक्षेपया गिरा ॥ ८० ॥ यादृशस्तादृशो
वास्तु । सैष आत्महितं ब्रुवन् ॥ अवजानन् महाराज—मुपेक्ष्यं स्यात्कथं मम ॥ ८१ ॥ कुमारेण
ततोऽभाणि । सत्यं वीर त्वयोदितं ॥ प्रायस्त्वमेव राजासि । वक्ष्येवं कथमन्यथा ॥ ८२ ॥ ततः स-
त्यं यदीदं ते । राजतां स्वां प्रकाशय ॥ कृपाणं च गृहाणाशु । वीरोऽस्मि समरोद्यतः ॥ ८३ ॥ यो-
त्स्यावहे नियुद्धेन । नासिनेति नृपोदिते । यथेच्छा ते तथैवेह । योत्स्येऽहमिति सोऽब्रवीत् ॥ ८४ ॥
त्यक्त्वा कृपाणमेतौ द्वौ । संयम्य च शिरोरुहान् ॥ अन्योन्याभिमुखौ मल्ला—विवास्थातां रणोद्यतौ

॥ ८५ ॥ इतश्च दूरमुड्डीय । प्रस्फोटितभुजो दृढं ॥ वज्रवद्धरणीपीठे । कुमारः सहसापतत ॥ ८६ ॥
उत्पातादिव तत्पाता—च्चकंपे भूः समंततः ॥ फलानीव च वृक्षेभ्यः । पेतुस्तत्पादपंक्तयः ॥ ८७ ॥ पा·
तयत्यद्रिशृंगाणि । कुमारः पाददर्दुरैः ॥ भूमंभलं चकारोच्चैः । शेषाहेरपि दुर्वहं ॥ ८८ ॥ पतद्द्रु·
मसहस्रं त—द्भस्यत्प्रासादमंदिरं ॥ राज्ञोऽप्यभवद्भयदं । कुमारपरिवल्गितं ॥ ८९ ॥ तत्र खंडकपा·
लाख्य—क्षेत्रपालस्य मंदिरं ॥ पपात सहसा तस्य । शिखरं तद्भयादिव ॥ ९० ॥ प्रासादपतनात्क्रु·
द्धो । विश्वस्यापि भयंकरः । मूर्तः काल इवैषोऽभि—दधावे हरिविक्रमं ॥ ९१ ॥ बध्ध्वा परिकरं
याव—त्पर्वताविव जंगमौ ॥ नियुद्धाय स्थितावेता—वन्योन्यं जनकांगजौ ॥ ९२ ॥ अतिदीर्घस्न·
साजालै—र्वेष्टितावयवः कृशः ॥ लतावितानसंनद्धः । शुष्कस्ताल इव द्रुमः ॥ ९३ ॥ गवलश्या·
मलच्छायो—ञ्जनाद्रिरिव जंगमः ॥ आलक्ष्यः कपिलैः केशै । रोषधीज्वलनैरिव ॥ ९४ ॥ विहसन्न·
यनो दीर्घ—जंघो विभ्रत्कृपाणिकः ॥ व्याघ्रचर्मैकवसनः । कटीबद्धाहिमेखलः ॥ ९५ ॥ अग्निज्वा·
लासमानाभि—र्दुर्वाग्भिस्ताडयन् भृशं ॥ क्षेत्रपालः कुमारं तं । तावत्तत्पार्श्वमागमत् ॥ ९६ ॥ चतु·
र्भिः कलापकं ॥ कालं करालं बीभत्सं । कुमारोऽपि निरीक्ष्य तं ॥ उत्पन्नकौतुको भूपं । पप्रच्छातु·

ब्रसाहसः ॥ ९७ ॥ हे वीर किमिदं सत्वं । जीवयोनिरथास्य का ॥ तिर्यग्जातिभवः कोऽपि । कीटोऽयमथवा किमु ॥ ९८ ॥ यतो निर्याति यामिन्यां । कीटा इति जनश्रुतिः ॥ किं वा कोऽपि मनुष्योऽय—मपूर्वद्वीपसंभवः ॥ ९९ ॥ एतत्स्वरूपमाज्ञातुं । ममास्ति कौतुकं महत् ॥ राज्ञोचे त्वरया मास । स एव कथिता स्वयं ॥ २०० ॥ इतः क्षेत्रपतिः शीघ्रं । कुमारं निकषागतः ॥ जाज्वल्यमानकोपाग्नि—ज्वालामिव गिरं जगौ ॥ १ ॥ रे दुःशिक्षित रे दुष्ट । दुर्विनीत नराधम ॥ ज्ञातः खंडकपालोऽहं । किं न खंडपतिस्त्वया ॥ २ ॥ अस्यां पुरि प्रसिद्धं मां । वसंतमिह कानने ॥ अविज्ञाय निजं यत्त्वं । विक्रमं दर्शयस्यमुं ॥ ३ ॥ युवराज उवाचाथ । तद्वाक्याज्ञातनिश्चयः ॥ मा ब्रूहि क्षेत्रपाल त्वं । वाक्यमेवमनिश्चितं ॥ ४ ॥ मनोवचनकायाना—मेकेनापि पराभवं ॥ यदि त्वं तत्वमेवासि । प्रमाणं ज्ञानवान् सुरः ॥ ५ ॥ क्षेत्रपालस्ततोऽवादी—द्विधायापि हि दुर्नयं ॥ इदानीं मद्भयेनोच्चै—र्भाषसेऽलीकमुत्तरं ॥ ६ ॥ विस्मृतं किं पदन्यासैः । प्रकंपितभुवस्तव ॥ अधुनैव कृतं यन्मे । दृढप्रासादपातनं ॥ ७ ॥ कुमारः स्माह साम्योक्त्यै—र्यद्येवं त्वं न मन्यसे ॥ तद् ब्रूहि रोचते किं ते । तद्यथाशु करोम्यहं ॥ ८ ॥ उवाच क्षेत्रपालोऽथ । रे त्वं येनासि गर्वितः ॥ निर्मूलं

तं रणे दर्पं । हरिष्यामि तवाधुना ॥ ९ ॥ ततः कुमारेणाहूतौ । नृपालक्षेत्रपालकौ ॥ अहमेकोऽपि योत्स्ये भो । द्वावप्येतं समं युवां ॥ १० ॥ बभाषे क्षेत्रपालोऽथ । प्राग्युध्यस्व मया समं ॥ पश्चाद्योत्स्यते तुभ्यं । तत्कुर्या रे सहामुना ॥ ११ ॥ कुमारेण नृपः प्रोचे । वीर त्वं व्रज साम्प्रतं ॥ क्षेत्रपालममुं जित्वा । पश्चाद्योत्स्ये त्वया समं ॥ १२ ॥ कुर्वन्निति भुजास्फोट—निर्घातध्वनितांबरः ॥ दुढौके क्षेत्रपालेन । कुमारो रणकौतुकं ॥ १३ ॥ युगपन्मिलितौ तौ द्वौ । कुमारक्षेत्रपालकौ ॥ रेजतुर्वीरबीभत्सौ । रसाविव रणोद्यतौ ॥ १४ ॥ क्षणादग्रे क्षणात्पृष्टे । क्षणादूर्ध्वं क्षणादधः ॥ आक्षिपन् क्षेत्रपालं तं । कुमारो युयुधेतरां ॥ १५ ॥ कुमारनिष्ठुराघात—ताडितो रुधिरं वमन् ॥ क्षेत्रपालः पपातोर्व्यां । कंपमानो द्रुपत्रवत ॥ १६ ॥ आश्वास्य तं क्षणं याव—त्प्रहारायोद्यतः पुनः ॥ वेतालसैन्यमुत्तालं । तावदैक्षत नृपनुः ॥ १७ ॥ रोमांचितो रणरसाद् । दृष्ट्वा वेतालसैन्यकं ॥ दध्याविति महासत्वो । हर्षकल्लोलसंकुलः ॥ १८ ॥ अनेनैकेन युद्धक्षु—त्प्रशाम्यति कथं मम ॥ सर्वं सैन्यं प्रहरति । न यावन्मां रणांगणे ॥ १९ ॥ अनेकधा कुमारस्तान् । महौजाश्चिंतयन्निति ॥ प्राहरद्भूरिवेतालान् । शृगालानिव केसरी ॥ २० ॥ हस्तपादचपेटाभिः । क्रीडया ताडयन् भृशं ॥ ते-

षामेकोऽप्यनेकानां । पीमां ज्वर इवाकरोत् ॥ २१ ॥ विनिःकृत्य भुजादंडौ । छित्वा पादौ बलीयसा
॥ स कीटानिव वेतालान् । लोठयामास भूतले ॥ २२ ॥ किमेभिर्मारितैरेवं । कृपयैव विमुच्य तान् ॥
तं क्षेत्रपालमेवांह्रौ । सोऽग्रहीत्पुरतः स्थितं ॥ २३ ॥ भ्रमयित्वा तमाकाशे । स तेनैवायुधेन तान् ॥
वेतालान् यावदाहंति । नश्यतो विरसस्वरं ॥ २४ ॥ तावदात्मानमेवैक्य—मपश्यद्राजसन्निधौ ॥ त-
द्वेतालबलं सर्वं । नाज्ञासीच्च गतं क्वचित ॥ २५ ॥ क्षेत्रपालः ससैन्योऽपि । पलायामासिवान् किंतु
॥ बहुमायाथवा जाति—र्वैतालानां निशम्यते ॥ २६ ॥ वक्रोष्टिकां विधायेति । लीलया नृपनंदनः
॥ वसुधाधिपमभ्यागा—द्यावद्रणचिकीर्षया ॥ २७ ॥ बभाण भूपतिस्ताव—द्रे मामस्पर्श्य मा स्पृश ॥
यद्वेतालांगसंघर्षा—ल्लिप्तोऽसि रुधिरामिषैः ॥ २८ ॥ युग्मं ॥ संभृतं निर्मलैर्नीरै—रितोऽस्ति नि-
कषा सरः ॥ स्नात्वा तत्रैहि रे शीघ्र—मावाभ्यां योत्स्यते ततः ॥ २९ ॥ तथेति खड्गमादाय । स्ना-
नार्थं तनयो ययौ ॥ राजा तु दृष्टसामर्थ्य—श्चिंतयामास चेतसि ॥ ३० ॥ मयैतस्य परीक्षासा । सू
नोर्विक्रमशालिनः ॥ ससैन्यः क्षेत्रपालोऽपि । यत्राशक्तो वयं तु के ॥ ३१ ॥ एतस्य प्रतिमल्लोऽस्ति ।
संगरे सुभटो यदि ॥ पर्वतारातिरेवैको । न पुनर्मानवो जनः ॥ ३२ ॥ त्यागेन जीवितस्यास्य । ज-

यमिछंति मानिनः ॥ पराजयः पुनस्तेषा—मपि पुत्राद्विराजते ॥ ३३ ॥ चेत्समेष्यत्ययं स्नात्वा ।
संग्रामोत्कः कथंचन ॥ निश्चितं तन्न मोक्षोऽस्ति । ततोऽप्रहरणस्य मे ॥ ३४ ॥ विचिंत्येति ततः
स्थाना—च्छीघ्रगत्या नरेश्वरः ॥ चंम्पिकाम्रवने गत्वा । चम्पीपृष्ठौ न्यलीलयत ॥ ३५ ॥ युवराजोऽपि
युद्धार्थी । स्नात्वा सरसि रंहसा ॥ रणोर्व्यामागतस्तत्रा—दृष्ट्वा नृपमचिंतयत् ॥ ३६ ॥ सुजटः स
कथं नात्र । दृश्यते क्व पलायितः ॥ अथ देवकुले कापि । संस्थितो मां प्रतीक्षते ॥ ३७ ॥ ततो
देवगृहाराम—स्थानादिषु च सर्वतः ॥ भ्रामं भ्राममपश्यंस्तं । व्याजहारैवमुच्चकैः ॥ ३८ ॥ भो भोः
प्रचंम्पदोर्दम्प । सर्ववीरशिरोमणे ॥ अहमत्र समेतोऽस्मि । नायासि त्वं कथं भट ॥ ३९ ॥ अयुद्ध-
कुशलं भीरुं । निःसहं चावगत्य मां ॥ परित्यजसि भोः शूर । किं दूरमवहेलया ॥ ४० ॥ नादृष्ट-
विक्रमेऽवज्ञा । युक्ता पुंस्यपरीक्षिते ॥ अतस्त्वमिह मां वीर । परीक्षस्व रणोद्यतं ॥ ४१ ॥ इति पू-
त्कृत्य बहुधा । कुमारस्तत्र कानने ॥ तदेव चंम्पिकागेह—मेत्य तां चंम्पिकां जगौ ॥ ४२ ॥ भगव-
त्यत्र मार्गेऽहं । गछन् येनार्थितो रणं ॥ पुमान्न ददृशे कापि । स मया वीक्षितोऽप्यलं ॥ ४३ ॥ त-
त्त्वं मां दर्शयस्वाशु । मत्पितुर्दोषभाषकं ॥ उपेक्षेऽहं कथं ताद—ग्दुर्भटं वैरिसन्निभं ॥ ४४ ॥ न

चेद्दर्शयसे तं मां । तदा चंद्रि तवाग्रतः ॥ उत्तमांगमिदं छित्वा । विधास्ये हृद्विशल्यतां ॥ ४५ ॥ इ-
ति तन्निश्चयं श्रुत्वा । चंद्रिकांतरितो नृपः ॥ पुत्रमृत्युभयोद्भ्रांत--श्चिंताब्धौ पपात सः ॥ ४६ ॥
पातितः कथमत्राहं । पुत्रेणानेन संकटे ॥ यत्संदेहतुलारूढं । जीवितं मे सुतस्य वा ॥ ४७ ॥ रुष्टाः
स्वं च परं चापि । गुरवो मारयंति हि ॥ तत्किं करोमि मूर्खेण । मयानर्थः स्वयं कृतः ॥ ४८ ॥ प्र-
ज्ज्वाल्यते सुखेनाग्निः । परं दूरं स वर्धितः ॥ निर्वाप्यते कथमपि । प्रयत्नैर्भूरिभिर्भृशं ॥ ४९ ॥ कार्यं
किमपि तद्दैवा--त्संपन्निष्पद्यते दृढं ॥ तीक्ष्णापि नो प्रविशति । यत्र धीर्धीमतो ह्यपि ॥ ५० ॥ रा-
ज्ञीति चिंतया व्यग्रे । कुमारः कृतसाहसः ॥ आचकर्ष कृपाणं स । कोशाच्छेत्तुं निजं शिरः ॥ ५१ ॥
अत्रांतरे स्थितः पृष्ठे । चंद्रिकायाः स्थिराशयः ॥ प्रत्युत्पन्नमती राजा । बभाषे चंद्रिकामिषात् ॥ ५२ ॥
विरमाशु स्वघातात्त्वं । माकार्षीः पुत्र साहसं ॥ तव सत्वेन संतुष्टा । प्रत्यक्षा चंद्रिकास्म्यहं ॥ ५३ ॥
दर्शयेऽहं पुमांसं तं । कथं यस्त्वद्भयाद्द्रुतः ॥ धावंति नश्यतां पृष्ठे । न च ये वीरमानिनः ॥ ५४ ॥
जगदेऽथ कुमारेण । तर्ह्येवं स कथं जगौ ॥ अहमेव बद्धो राजा । प्राकाराग्र्यं ऽरेऽरः ॥ ५५ ॥ त-
तश्चंद्रिकया प्रोचे । न नरः कोऽपि सोऽपरः ॥ एवमेव विनोदेन । मयैव त्वं प्रतारितः ॥ ५६ ॥ नि-

शम्येति सुतोऽवादी—त्तन्मां देवि समादिश ॥ शीघ्रं याम्यविनीतं मां । जानंतु गुरवस्तु मा ॥ ५७ ॥
इत्युदित्वा कुमारोऽसौ । निर्ययौ चंम्किागृहात् ॥ राजापि हृष्टवदनः । स्वीयावासं तदन्वगात् ॥ ५८ ॥
निपिद्धदुष्टसंचारं । निर्व्यापारं स्वमंदिरं ॥ प्रविवेश कुमारोऽथ । धर्मवन्मुनिमानसं ॥ ५९ ॥ परा-
गैः सुरनिःपौष्पै—र्विशालं मृदुमुज्ज्वलं ॥ हंसवक्रांगपुलिनं । पल्यंकं सोऽध्यशिश्रियत् ॥ ६० ॥
निर्विकल्पां स्थिरक्षेत्रां । निरुद्धकरणक्रियां ॥ अतुल्यसुखदां निद्रां । समाधिमिव सोऽकरोत् ॥ ६१ ॥
कुमारोऽथ जजागार । बंदिवृंदजयारवैः ॥ वंशादिशब्दमिश्रान्नि—र्गंधर्वाणां च गीतिभिः ॥ ६२ ॥ वि-
कस्वरमुखांभोज—श्वासवासित दिङ्मुखः ॥ कुमारोऽभून्निशाशेषे । प्रत्यूष इव मूर्तिमान् ॥ ६३ ॥
उन्मीलन्नयनः पाणी । संपुटीकृत्य मूर्धनि ॥ ऋषभाय नमस्कृत्य । तल्पं तत्याज राजसूः ॥ ६४ ॥
कृत्वा प्रभातकार्याणि । रणवीरादिभिः समं ॥ युवराजो ययौ सेवा—हेवाकी पितुरंतिके ॥ ६५ ॥
निशाविहारे तत्ताद्द—ग्दृष्टाशेषपराक्रमः ॥ युवराजं नृपः पश्यन् । विस्मयेनेत्यचिंतयत् ॥ ६६ ॥ पू-
र्वोपार्जितपुण्येन । येऽतिशायिगुणार्द्धयः ॥ निर्गर्वास्ते सुपर्वाणो—ऽप्यनेन स्वगुणैः कृताः ॥ ६७ ॥
आवर्जिताः सुरा येन । सावष्टंभं स्वबंधुवत् ॥ क तत्प्रागल्भ्यमभ्यस्त—मनेनादृष्टनाकिना ॥ ६८ ॥ ए-

तस्यानन्यसामान्या । गीतरागरसज्ञता ॥ त्यागोऽपि विश्वालंकार—हारदानक्रियागुरुः ॥ ६९ ॥ अ-
नुभूय कुमारत्वं । जराकालमहं गतः ॥ सेहे पुनर्न केनापि । मम हक्का रणांगणे ॥ ७० ॥ एतेनाहं
तृणमिव । मत्वा तावद्वितर्कितः ॥ ममापि हृदि यावत्तु । जाता कापि विलक्षता ॥ ७१ ॥ मुष्ट्या-
घातैः प्रहरति । रणेऽस्मिन् रक्षसां गणं ॥ पेतुर्दंतास्थिखंडानि । फलानीव महीरुहां ॥ ७२ ॥ चंड्या
देव्याः शरण्याया—स्तुष्टितोऽस्मि प्रसादतः ॥ प्रापयिष्ये त्वदुन्याय—सदृशं फलमन्यथा ॥ ७३ ॥
अथ किं वर्ण्यते तस्य । तदैकं कृत्यमद्भुतं ॥ विचिंत्यमानं हृत्कस्य । चमत्कुर्यान्न यत्क्षणात् ॥ ७४ ॥
अस्मादृशोऽपि जायंते । जनकत्वे यदीदृशां ॥ सद्धर्मकर्मसंयोगो । घुणाक्षरनयो यथा ॥ ७५ ॥
पित्रोरेव प्रकाशार्थ—मीदृशां जन्म केवलं ॥ द्युवीव दिनयामिन्यो—रुदयो रविचंद्रयोः ॥ ७६ ॥
इति पुत्रगुणव्यूह—चिंताव्यग्रमना नृपः ॥ पुरस्थमपि नापश्य—त्कुमारं नतिसादरं ॥ ७७ ॥ साव-
धानोऽभवद्याव—च्चेतसा क्षितिवासवः ॥ दृष्टिप्रसादमिच्छंतं । तावदग्रे ददर्श तं ॥ ७८ ॥ नमस्कारप-
तन्मौलि-मालतीदामचर्चितौ ॥ पितुः पादौ ननाम स्व-केनानुक्रमना इव ॥ ७९ ॥ अत्रास्यतामि-
ति प्रोक्ते । राज्ञा लोचनसंज्ञया ॥ महाप्रसाद इत्युक्त्वो—पाविशन्मंत्रिसंयुतः ॥ ८० ॥ क्षणं का

व्यकथासक्तः । क्षणं गीतरसे रतः ॥ कुमारो यावदास्थान्यां । पित्रादेशेन तस्थिवान् ॥ ८१ ॥ इत-
श्चान्यानि नृपेण । सालंकारः सुवेषवान् ॥ विलोकयते बहिर्गच्छ—ल्लोकोऽयं कथमद्य भोः ॥ ८२ ॥
अथोवाच महामंत्री । सम्यग्दृष्टिर्महोदधिः ॥ गच्छत्ययं महाराज । वंदितुं पूर्बहिर्गुरुं ॥ ८३ ॥ जैत्रो-
द्याने महाराज । बहुशिष्यपरिवृतः ॥ रत्नाकराभिधः सूरिः । समायातोऽस्ति सर्ववित् ॥ ८४ ॥ तपः
शोषितगात्रोऽपि । यो लावण्यमनोहरः ॥ आकर्णगतनेत्रोऽपि । नेहलोकविलोकनः ॥ ८५ ॥ प्र
विष्टं हृदि भव्यानां । दुःसाध्यं सर्वकोटिभिः ॥ अपूर्व इव मार्तंडो । हंति मोहतमोऽपि यः ॥ ८६ ॥
यस्य मध्येऽस्ति निःशेषं । नास्ति किंचिद्यतः परं ॥ श्रुतरत्ननिधानं यः । स्वयंभूरमणोपमः ॥ ८७ ॥
उपशक्रावतारं स । चतुर्ज्ञानसमन्वितः ॥ विशाले प्रासुके स्थाने । तत्रासीनोऽस्ति सूरिराट् ॥ ८८ ॥
तेनेहागतमात्रेण । कर्णे कंठे मुखे हृदि ॥ बध्ध्वा गुणैरिवात्मीयै—राकृष्येत पुरीजनः ॥ ८९ ॥
ततः पुत्रयुतो राजा । श्रुत्वा तस्य गुणोत्करान् ॥ नमस्कर्तुं ययौ तत्र । भक्तिविस्मयनोदितः ॥ ९० ॥
उद्यानं प्रविशन्नेव । राजा गगनविस्तृतं ॥ तारागणमिवाकीर्णं । साधुवर्गं ददर्श सः ॥ ९१ ॥ पुरो
गतस्ततोऽपश्य—द्दीप्यमानं च तेजसा ॥ अष्टाब्धुपाणिकुमुद—मीलकसूरवज्जुरं ॥ ९२ ॥ तद्दर्शने

नृपस्यापि । हर्षबाष्पजलच्छलात् ॥ पापालोकनमलिने । इव प्रक्षालिते दृशौ ॥ ९३ ॥ क्ष्मातल-
मिलन्मौलि—जानुपाणियुगस्ततः ॥ क्ष्मापालो नमश्चक्रे । क्ष्मापालपतिं गुरुं ॥ ९४ ॥ स्थिरनि-
क्षिप्तनेत्रेण । तेनात्युन्नतपाणिना ॥ धर्मलाभाशिषा नृप—मभ्यनंद्यत सूरिणा ॥ ९५ ॥ अनुज्ञयेष्टं
मुनीन्नत्वो—पविष्टं पादसन्निधौ ॥ नृपं संभाष्य गुरुणा । प्रारेभे धर्मदेशना ॥ ९६ ॥ अनादिनि-
धनो जीवो । नभोभोग इवान्वहं ॥ अन्योन्यघनसंयोगं । कार्यते कर्मवायुभिः ॥ ९७ ॥ अनादिः
कर्मसंयोगो—ऽस्य संसारप्रवाहतः ॥ कलंकसंक्रमोऽहो हि । चंद्रस्य ज्ञायते कथं ॥ ९८ ॥ श्रय-
त्यनेकरूपाणि । कर्मवह्न्यभितापितः ॥ पित्तलारसवज्जीवः । संसारेऽस्मिन् विधेर्वशात् ॥ ९९ ॥ जीवे
स्वच्छ इवादर्शे । कर्मभृत्योपढौकिते ॥ रूपं नरादिकं नास्ति । तद्यत्संक्रामतीह न ॥ ३०० ॥ स एव
तनुते पापं । तत्किमप्यात्मकर्मभिः ॥ उत्पद्यते क्षणाद्येन । नरके दुःखदुःसहे ॥ १ ॥ जीवानशर-
णान् दीना—ननाथानतिदुर्बलान् ॥ निरागसोऽपि यो हंति । नरकं याति स ध्रुवं ॥ २ ॥ दुःखो-
त्पादकमन्येषां । परद्रोहकरं वचः ॥ असद्भूतं च यो ब्रूते । नरकं याति स ध्रुवं ॥ ३ ॥ जीवस्यापि
हि जीवोऽर्थ । इत्यदत्तो न गृह्यते ॥ यो लाति निर्घृणोऽन्यस्वं । नरकं याति स ध्रुवं ॥ ४ ॥ पर-

दारकनाश्लेषं । मनसापीछतीह यः ॥ तप्तायसांगनाश्लेष—रूपं श्वभ्रे स कार्यते ॥ ५ ॥ असंतुष्टा भृशं
येऽत्र । महारंभपरिग्रहाः ॥ यांति ते नरके जीवा । मूर्छाछादितचेतसः ॥ ६ ॥ अन्नादिकं निशा
यां यो । भुंक्ते नृपशुरेव सः ॥ प्रयाति नरके घोरे । तमस्तोमसमाकुले ॥ ७ ॥ सदैव व्यसनासक्ताः
। कषायकलुषाशयाः ॥ रौद्रध्यानपराः पापाः । पतंति नरकावनौ ॥ ८ ॥ सहंते तत्र दुःखानि । छे-
दनादीन्यनेकशः ॥ अपि नास्ति सुखं तेषां । चक्षुर्मीलनमात्रकं ॥ ९ ॥ ततश्च्युत्वायुषि क्षीणे । भवं
भ्रांत्वा स्युरत्रसाः ॥ उत्पद्यंते ततो जीवा । विकलेंद्रियजातिषु ॥ १० ॥ पंचेंद्रियेषु तिर्यक्षु । सिं-
हनागादिकेषु च ॥ उत्पद्य नरके घोरे । जायंते क्रूरकर्मणा ॥ ११ ॥ भ्रामं भ्रामं शरीरीति । बहु-
धा जीवयोनिषु ॥ मनुष्यत्वं समाप्नोति । कथंचित्पुण्ययोगतः ॥ १२ ॥ चातकः खे यथाप्नोति । मे-
घांभोबिंदुमर्थयन् ॥ कथंचिदपि जीवोऽपि । तथेदं जन्म मानुषं ॥ १३ ॥ यथैकवेलं फलितो ॥ रंभा-
द्रुर्न पुनः फलेत ॥ मनुष्यत्वात्तथा जीवः । प्रायो नाप्नोति मर्त्यतां ॥ १४ ॥ स्वप्नराज्याद्यथा भ्रष्टः ।
पुमान्नाप्नोति तत्पुनः ॥ एवं मर्त्यभवाज्जीवो । न पुनर्मानुषं भवं ॥ १५ ॥ सुदुर्लभं मनुष्यत्वं । ल-
ब्ध्वा बुद्धिमंता ततः ॥ फलं संग्राह्यमेतस्य । शुद्धधर्मसमाश्रयात् ॥ १६ ॥ चिंतारत्नमिव द्यूत—का-

जाति । धर्मः सम्यक्त्ववर्जितः ॥ यथा संपूर्णदेहेऽपि । पुमान्नयनवर्जितः ॥ २९ ॥ निसर्गाधिगमा-
ख्याभ्यां । भेदाभ्यां तद् द्विधा भवेत ॥ कर्मक्षयोपशांतिभ्यो । जायते तन्निसर्गजं ॥ ३० ॥ शास्त्रा-
धिगमतो जातं । तत्स्यादधिगमाभिध ॥ तत्वश्रद्धानतारूपं । ज्ञातव्यमपि तद् द्विधा ॥ ३१ ॥ शम-
संवेग निर्वेदा—नुकंपास्तिक्यलक्षणैः ॥ लक्षणैः पंचभिः सम्यक् । सम्यक्त्वमुपलक्ष्यते ॥ ३२ ॥
स्थैर्यं प्रभावना शक्तिः । कौशलं जिनशासने ॥ तीर्थसेवा च पंचास्य । भूषणानि प्रचक्ष्यते ॥ ३३ ॥
शंका कांक्षा विचिकित्सा । मिथ्यादृष्टिप्रशंसनं ॥ तत्संस्तवश्च पंचापि । सम्यक्त्वं दूषयंत्यमी ॥ ३४ ॥
इदं नरेंद्र सम्यक्त्वं । प्रतिपद्यस्व सर्वथा ॥ अस्मिन् सिद्धेऽत्र सिद्ध्यंति । सर्वा धर्मक्रिया यतः ॥ ३५ ॥
धर्मानुष्टानमप्यल्पं । शुद्धसम्यक्त्वसंयुतं ॥ विशेषतो महाराज । सफलं भवति ध्रुवं ॥ ३६ ॥ प्रति-
पाल्यमिदं सम्य—ग्द्वादशव्रतसंयुतं ॥ एष एव महाराज । गृहिधर्मो यतः स्मृतः ॥ ३७ ॥ निशम्ये-
ति नराधीशो । धर्मं सम्यक्त्वभूषितं ॥ जग्राह सह पुत्रेण । निधानं रोरवन्मुदा ॥ ३८ ॥ ततः प्र-
मोदेन गुरुं प्रणम्य । सुतेन सार्धं च पुरं प्रविश्य ॥ द्विधाप्यसाध्यान् विषयान् विशेषा—त्सोऽसाध-
यद्धर्मगुणेन युक्तः ॥ ३३९ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्वां-

धवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये कुमारपरीक्षाधर्माधिगमो नाम प्रथमः सर्गः समाप्तः. ॥ श्रीरस्तु. ॥

---

॥ अथ द्वितीयः सर्गः प्रारभ्यते ॥

अथान्यदा महाराजं । पुत्रामात्यादिसंयुतं ॥ आस्थानस्थं नमस्कृत्य । प्रतिहारो व्यजिज्ञपत ॥ १ ॥ प्रेषितो वैरिसिंहेन । दूरात्त्वरितमागतः ॥ लेखवाहोऽस्ति तद्द्वारे । स्वामिनादिश्यतां मम ॥ २ ॥ भ्रूसंज्ञानुमतेनाथ । वेत्रिणा तत्क्षणागतः ॥ पथश्रांतो रजोलिप्तो । लेखवाहः प्रवेशितः ॥ ३ ॥ प्रणम्य शिरसा नृपं । विज्ञप्तिं स समाश्रयत ॥ उन्मुद्र्य च द्रुतं राजा । वाचयामास तामिति ॥ ४ ॥ स्वस्ति श्रीकृतवासाया—मयोध्यायां पुरि स्थितं ॥ राजाधिराजमानम्य । सश्रीकाजितविक्रमं ॥ ५ ॥ हरिविक्रमसंज्ञेन । युवराजेन संयुतं ॥ ईश्वरं षण्मुखेनेव । जयंतेनेव वासवं ॥ ६ ॥ विजयाढ्यमहासैन्या—द्वैरिसिंहो नरेश्वर ॥ सेनापतिः सविनयं । द्रुतं विज्ञपयत्यदः ॥ ७ ॥ त्रिभिर्विशेषकं ॥ स्यात्समर्थोऽसमर्थोऽपि । पुष्टः स्वामिबलोष्मणा ॥ सूर्यकांतो दहेद्विश्वं । नप्तः किं नार्क-

तेजसा ॥ ८ ॥ संकीर्णानूनमहाराज । या नूभूधरकोटिभिः ॥ प्रतापभ्रमणार्थं ते । मया सा विक-
टीकृता ॥ ९ ॥ कदाचित्कोपयुक्तेन । शीतलेनापि कर्हिचित् ॥ मया कदापि सन्मान–दानतः सा-
धिता मही ॥ १० ॥ नखांशुशरिकाजाले । तव पादाब्जपंकजे ॥ निलीना ये नृपा राजं—स्त एव
सुखिनः क्षितौ ॥ ११ ॥ युष्माकं पादपीठं ये । न मुंचंति तरंम्ववत् ॥ रिपवस्ते न मज्जंति । मत्कृ-
पाणमहार्णवे ॥ १२ ॥ तापसा ये वने जाता । जग्मुरब्धेः परं तटं ॥ विमुच्य तान् महाराज । म-
यान्ये रिपवो हताः ॥ १३ ॥ इति निःशेषभूपीठं । निःकंटकचिकीरहं ॥ यावद् द्रविड भूपाल–म-
धिगच्छामि सेनया ॥ १४ ॥ तावत्सोऽसहमानोऽपि । बलमस्माकमाकुलः ॥ कांचीं विमुच्य सहसा ।
विषमं दुर्गमाश्रयत् ॥ १५ ॥ तत्रास्ति द्रविडस्यांते । मलयाचलसंनिधौ ॥ अलंघ्यं मनसाप्यन्यै—
रलंघ्यपुरपत्तनं ॥ १६ ॥ पंचाशत्कोशमानाभि—र्गहनाभिर्वनद्रुमैः ॥ निर्जलाभिश्चतुर्दिक्ष—टवी-
भिः परिवेष्टितं ॥ १७ ॥ युग्मं ॥ लूयते पल्लवोऽप्यासा—मटवीनां यदि प्रभो ॥ तदैव व्यंतरः कोऽपि
। तव सैन्यं दुनोत्यलं ॥ १८ ॥ विनयानतिपूजाभि—र्न तुष्यति मनागपि ॥ स जन्मांतरवैरीव ।
कुप्यति प्रत्युताधिकं ॥ १९ ॥ बलेन व्यंतरस्यास्य । दुर्गस्य च वनस्य च ॥ कोशसैन्यबलेनापि ।

स शत्रुर्बलवान् भृशं ॥ २० ॥ अतो महाबलाख्यस्य । क्षत्रियस्यास्य सत्वरं ॥ विनिग्रहाय देवेन । कोऽप्युपायो विधीयतां ॥ २१ ॥ विज्ञप्त्यर्थमिति ज्ञात्वा । सत्कृत्य पवनाभिधं ॥ नृपः प्रसाददानेन । व्यसृजल्लेखवाहकं ॥ २२ ॥ मंत्रकार्ये ततो दृष्टी । राज्ञा दत्ता महोदधौ ॥ यतोऽतिगहने कार्ये । मंत्रिबुद्धिर्विवेचका ॥ २३ ॥ मंत्रिणोक्तं महाराज । गुरुकार्यमिदं खलु ॥ सेनान्या वैरिसिंहेन । युक्तं व्यज्ञापि तेन वः ॥ २४ ॥ कार्ये पौरुषसाध्येऽत्र । मंत्रः सर्पति मंत्रिणां ॥ दैवायत्ते पुनस्तेषां । विघटंतेऽपि बुद्धयः ॥ २५ ॥ स्वसामर्थ्याधिके कार्ये । प्रवर्तेत नरो यदि ॥ अपकीर्तिं च मृत्युं च । प्राप्नोति स तदा ध्रुवं ॥ २६ ॥ अविचार्य निजां शक्तिं । विक्रामत्यनृतेऽत्र यः ॥ विनश्यति स एवाशु । जीमूते शरभो यथा ॥ २७ ॥ तद्देवासौ सुरो याव—न्नोपद्रवति ते बलं ॥ वैरिसिंहः ससैन्योऽपि । तावदाकार्यतामिह ॥ २८ ॥ ततोऽभाणि नरेंद्रेण । सत्यमेव त्वयोदितं ॥ एष एव महामंत्रो । ममापि हृदये भवेत ॥ २९ ॥ अत्रांतरे कुमारोऽपि । शांतगंभीरया गिरा ॥ व्यजिज्ञपन्महाराजं । महामात्यं च हृष्टहृत् ॥ ३० ॥ गुरूणां पुरतो वक्तुं । शिशूनां नोपयुज्यते ॥ तथापि निजचापल्या—दासंगाद्वा ब्रवीम्यहं ॥ ३१ ॥ माकुपस्तात मह्यं त्वं । कटूक्त्या प्रियभाषिणे ॥ नरोऽविमृ-

एकनारः । प्राप्नुवंतीह लाघवं ॥ ३२ ॥ पूर्वं परीक्ष्य मूर्खोऽपि । सर्पकंटकवर्जिते ॥ मार्गे शुभे पद-
न्यासं । करोति गमनोद्यतः ॥ ३३ ॥ किंतु युष्मादृशा राज—न्नतिगीष्पतिबुद्धयः ॥ कार्येऽपि नैव
कुर्वंति । गुणदोषविचारणां ॥ ३४ ॥ षड्गुणाः संधिसंग्राम—प्रमुखाः स्युर्विभूतये ॥ भूपतीनां म-
हाराज । यथायोग्यं प्रयोजिताः ॥ ३५ ॥ संधियोग्ये रिपौ देव । विग्रहो नैव युज्यते ॥ कोपनं हि
मृगाराते—र्नराणां मृत्यवे भवेत् ॥ ३६ ॥ विरोध्यते महान्नैव । सहसा चेद्विरोधितः ॥ ततो नो त्य-
ज्यते जीवं—स्त्यक्तोऽनर्थाय निश्चितं ॥ ३७ ॥ सत्वमंत्रवतां पुंसां । कार्यं गुर्वपि सिध्यति ॥ देवा-
स्तस्यापि भृत्यंति । यस्य मंत्रः स साहसः ॥ ३८ ॥ परमंडलप्रत्याशां । दूरे मुंचत्वसाहसाः ॥ स्वमं-
ल्पमपि शत्रुं । न क्षमा वैर्युपद्रवात् ॥ ३९ ॥ उपशाम्यति यः शत्रौ । स कथं नाभिभूयते ॥ य-
तेरेव समो भूपो । विजिगीषोऽस्तु नो पुनः ॥ ४० ॥ विलीयतां स गर्भस्थः । पुमान्निर्बुद्धिसाहसः
॥ कोपप्रसादौ नो यस्या—नुरूपौ भवतो भुवि ॥ ४१ ॥ निस्तेजसि नृपे को न । क्षारवन्निक्षिपे-
त्पदं ॥ जीवंतोऽपि मृतास्ते हि । ये नाक्रामंति वैरिणं ॥ ४२ ॥ ततो देहि ममादेशं । सत्वरं मा
विचारय ॥ महाबलं जयाम्येनं । नाहं चेत्तन्न ते सुतः ॥ ४३ ॥ तवादेशप्रवृत्तोऽहं । भविष्याम्यगु-

र्गुरुः ॥ गुरुभिः स्थापितेऽश्माऽपि । देवत्वं लभते ननु ॥ ४४ ॥ तव पादरजःसंगा—द्भविता मे-
ऽपि योग्यता ॥ निर्गंधमपि सूत्रं हि । पुष्पयोगाच्छिरश्चटेत ॥ ४५ ॥ जल्पतीति कुमारेऽस्मिन् । सा-
वष्टंभं च युक्तिमत् ॥ अचिंतयन्नृपः पुत्र—वृत्तं दृष्टं वरं निशि ॥ ४६ ॥ ब्रूते यदेष तत्ताहृ—ग्भिः-
संदेहं करोति च ॥ मन्ये लोकत्रयेऽप्यस्या—साध्यं किंचिन्न विद्यते ॥ ४७ ॥ प्रेषयिष्यामि चेन्नैनं ।
तच्चेतो विघटिष्यते ॥ दुर्घटं स्याद्विघटितं । चास्य स्फाटिकखंडवत् ॥ ४८ ॥ उपचारशतैः सानु—कू
लैः स्नेहोऽत्र वर्धते ॥ हीयते पुनरप्येका—पचारान्नासमात्रतः ॥ ४९ ॥ विचार्येति नराधीशो । ब-
भाषे च महोदधिं ॥ यदि ते संमतं मंत्रिन् । कार्यं निश्चीयतामिह ॥ ५० ॥ कर्णे स्थित्वा ततो रा-
ज्ञा । संदेहाकुलमंत्रिणः ॥ तत्सर्वं पुत्रवृत्तांतं । यथा दृष्टमथाऽवदत् ॥ ५१ ॥ अथ तौ वर्धितोत्सा-
हौ । ज्ञातकौमारविक्रमौ ॥ राजामात्यौ च मन्येतां । तद्वचः सम्यगोमिति ॥ ५२ ॥ पित्रोः कृतन-
मस्कारो । बहुसैन्यसमन्वितः ॥ युवराजस्ततोऽचाली—ज्जिगीषुर्दिवसे शुभे ॥ ५३ ॥ सैन्यभारस-
माक्रांता । तस्याश्वैर्निहता खुरैः ॥ रजश्छलाद्ययौ स्वर्गं । पूत्कर्तुमिव मेदिनी ॥ ५४ ॥ सूरोऽपि य-
स्य धूलीभि—र्दृष्टीनाभिस्तिरोदधे ॥ चातुरंगं बलं तस्य । न जाने किं करिष्यति ॥ ५५ ॥ अति-

कुमारः सबलः प्राप । मलयाद्रेरुपत्तिकां ॥ ५६ ॥ उप· क्रम्य पुरग्राम—संकुलां विपुलां क्षितिं ॥ आवासान् दापयामास । कुमारः समभूतले ॥ ५७ ॥ वाते· तीरं समुद्रस्य । मलयाद्रिवनांतिके ॥ धुन्वतीव निजं शिरः ॥ ५८ ॥ ना· नांदोलिता यत्र । भाति तालद्रुमावली ॥ विस्मयाद्गुरुसैन्यस्य । कुमारस्य वनातिथेः ॥ ५९ ॥ नाग· लिकेरीद्रुमा यत्र । फलभारैर्नता बभुः ॥ कुर्वंतीव नमस्कारं । यत्रेक्षांचक्रिरे भटैः ॥ ६० ॥ तत्र श्री· वल्लीपरिरंभ—निर्भराः क्रमुकद्रुमाः ॥ कामिनां मिथुनानीव । गुप्यन्गुरुशते रम्यं । खंडकक्कोल—लवंगैलासुगंधयः ॥ समुद्रगिरिपर्यंता । रमयामासुरीश्वरं ॥ ६१ ॥ प्रतीहारशताकीर्णं । विप· यथास्थानं निवेशितैः ॥ कायमानैरनेकैश्च । पटीमंडपकोटिभिः ॥ ६२ ॥ चिंतां विधाय लोकस्य णिश्रेणिशोभितं ॥ विलोक्य शिविरं सर्वं । निजावासं ययौ नृपः ॥ ६३ ॥ कृतस्नानाशनो । विसृज्याखिलभूपतीन् ॥ तद्देशकालयोग्याभि—र्वार्ताभिर्यामम‌क्षिपत् ॥ ६४ ॥ पद्मसंकोच· याव—दपराह्णे नृपात्मजः ॥ आस्ते सुखेन शय्यायां । तावदस्तं ययौ रविः ॥ ६५ ॥ नवोन्मीलित· भीत्येव । सूर्यमार्गानुगामिभिः ॥ मकरंदैरिवारक्ता । प्रतीची दिग्व्यभादसौ ॥ ६६ ॥ संध्यारात्रि· मालया । गंधलुब्धैरिवालिभिः ॥ तस्तरे गगनं सर्वं । श्यामलैस्तिमिरोत्करैः ॥ ६७ ॥

कवेलायां । विद्याभृद्भिर्जिनाग्रतः ॥ पुष्पोत्कर इवोत्क्षिप्तो । बभौ तारागणो दिवि ॥ ६८ ॥ युवरा-
जोऽथ तेजस्वी । सर्वावसरसंसदि ॥ सिंहासनमलंचक्रे । शशीव गगनं दिवि ॥ ६९ ॥ चामरैर्वी-
जितः पार्श्वे । शशांकः किरणैरिव ॥ नक्षत्रैरिव स क्षत्रैः । परिवव्रे समंततः ॥ ७० ॥ दीपिकाभिः
प्रभूताभि—स्ताराभिरिव तत्सदः ॥ विस्तीर्णं गगनमिव । शुशुभे विग्रहाहतं ॥ ७१ ॥ संधिविग्रहवा-
र्तां स । गलानिव नियोगिनः ॥ शिक्षयित्वाथ निद्रालु—रुपाध्याय इवोत्थितः ॥ ७२ ॥ स्थाने
स्थाने नियुक्तांग—रक्षलक्षभयंकरं ॥ अज्ञानकीटिकामात्र—स्यापि दुर्गमागमं ॥ ७३ ॥ सर्वतः पि-
हितद्वारं । वज्रपंजरसन्निभं ॥ शय्यागृहं सपल्यंकं । विवेश हरिविक्रमः ॥ ७४ ॥ युग्मं ॥ विशाल-
तूलिकोत्संगे । निद्राणस्यातिनिर्भरं ॥ कुमारस्य निशाशेषे । यावच्चैतन्यमाययौ ॥ ७५ ॥ ददर्श
तावदात्मान—मेकमेव वनांतरे ॥ श्रीखंडपल्लवानां स । तल्पस्योपरि संस्थितं ॥ ७६ ॥ इंद्रजालमिदं
किं वा । किं वा स्वप्नावलोकनं ॥ प्रत्यक्षानुभवः किं वा । दध्याविति सविस्मयात ॥ ७७ ॥ परितः
सिंहशार्दूल—शब्दोत्त्रासितकुंजरं ॥ प्रत्यक्षं वनमालोक्य । निश्चिकायेति चेतसि ॥ ७८ ॥ नूनं
सुरेण केनापि । जह्रे विद्याधरेण वा ॥ वियोजितः स्वलोकेभ्यो । जीववत्कथमन्यथा ॥ ७९ ॥ क

तथा स्वगृहं योध—लक्षैः सुपरिरक्षितं ॥ बालश्रीमारजोगेह—मिवाश्वदृश्यतां गतं ॥ ८० ॥ गजा-
श्वरथपत्तीनां । समूहोऽपि तिरोदधे ॥ चातुरंगे यथा द्यूत—फलके क्रीडया कृतः ॥ ८१ ॥ कर्तुं न
युज्यते शूचा—मथवैव विवेकिनां ॥ क्लीबानामिव धीराणां । पतितानां महापदि ॥ ८२ ॥ नयमा-
र्गस्थितस्यापि । कस्य पुंसो न जायते ॥ इहलोके विपत्कीला—स्फालनं दैवयोगतः ॥ ८३ ॥ य-
थापत्पतितस्य स्या—त्पुंसो हृदि च धीरिमा ॥ तथा न लक्ष्यते संप—त्सुखितस्यात्र कर्हिचित् ॥ ८४ ॥
एवं यावद्विकल्पाली । हृदये तस्य खेलति ॥ तदवस्थामिव द्रष्टुं । तावत्सूरः समुद्गतः ॥ ८५ ॥ के-
नोत्तमस्य पुंसोऽप—हारः कृत इति क्रुधा ॥ आताम्रानिव मार्तंडो । व्यकीरत् किरणोत्करान् ॥ ८६ ॥
अरण्ये स्थलपद्मिन्यः । पद्मवक्त्रैर्विकस्वरैः ॥ नितांतमदिरारक्तान् । पिबंतिस्म रवेः करान् ॥ ८७ ॥
विकसत्पद्मकोशेभ्यो । निर्याती भ्रमरावली ॥ पद्मिनीकृतगंडूष—ध्वांतधारोपमा बभौ ॥ ८८ ॥ वि-
लोक्य काननोद्देशान् । रमणीयाननेकशः ॥ सत्वमालंब्य दध्यौ स । कुमारः स्फारितेक्षणः ॥ ८९ ॥
नान्यत्किमपि कार्यं मे । वनेऽस्मिन् विद्यतेऽधुना ॥ यथेष्टमिति पश्यामि । निर्वृतोऽहं वनश्रियं
॥ ९० ॥ पुमांसं नित्यसुखिनं । रमयेत्क्षणदुःखता ॥ निंबवन्मधुराहारं । शीतार्तमिव पावकः ॥ ९१ ॥

ध्यात्वेत्युत्थितो राजा । भ्रामं भ्रामं वने वने ॥ जहर्ष राजसूरुच्चै—र्दर्शं दर्शं द्रुमश्रियं ॥ ९२ ॥
विक्रमैकरसः क्वापि । दृष्ट्वा सिंहपदानि सः ॥ भिन्नेभकुंभमुक्तांका—न्यधावत्तद्युयुत्सया ॥ ९३ ॥
क्वचित्कपोलकंडूति—भग्नद्रुममहारवं ॥ श्रुत्वेभक्रीडनरसा—त्कलावानभ्यदुद्रुवत ॥ ९४ ॥ क्वचि
त त्रस्तमृगीनेत्र—दर्शनादस्मरद्वने ॥ भोगिनीदीर्घनयन—कटाक्षान् भोगिनां वरः ॥ ९५ ॥ इति
पश्यद्वनं याव—द्वंभ्रमीति ससंभ्रमी ॥ पपात दृक्पथे ताव—द्वनेभोऽस्याद्रिसन्निभः ॥ ९६ ॥ गव-
लश्यामलच्छायः । शुशुभे यो मतंगजः ॥ अत्यांजनेयवेगश्री—रंजनाद्रिरिवास्थिरः ॥ ९७ ॥ लून-
पक्षः सुरेंद्रेण । भयेन त्वरितं व्रजन् ॥ उच्चैरद्रिरिवाजाड्यो । निर्यद्दानांबुनिर्झरः ॥ ९८ ॥ निर्गत्य
वामपार्श्वेण । कंदरेभ्यो मतंगजः ॥ दधावेऽभियुवत्यारा—द्रोषेण स्थपुटाध्वना ॥ ९९ ॥ दन्तशूच्य-
ग्रभिन्नांह्रि—तलास्ताः स्खलितक्रमाः ॥ ययौ स निकषा नारी । मूर्तो मृत्युरिव द्विपः ॥ १०० ॥ ता-
सां मध्यात्ततस्तेन । वरैका युवती धृता ॥ दीर्घसर्पानुकारेण । करेण करिणा द्रुतं ॥ १ ॥ अथ
सा ददृशे तेन । गजेंद्रकरगोचरा ॥ पद्मिनीव नृपेणोच्चै—र्विक्षिपंती करांबुजान् ॥ २ ॥ इतश्चेतश्च
नेत्राणि । क्षिपंती भयविह्वला ॥ आत्मरक्षमपश्यंती । विलुलत्कुंतला भृशं ॥ ३ ॥ हा हा मातर्गृ-

हीतास्मि । रक्ष मां करिराक्षसात ॥ विचिंतितं मया चान्य—द्विधात्रा कृतमन्यथा ॥ ४ ॥ मार्यमा-
णामिमां मां भो । रक्षंतु वनदेवताः ॥ नानामनोरथापूर्णा । मृत्युमाप्नोम्यहं ननु ॥ ५ ॥ आरं‍टंती-
ति दीनास्या । कृतमृत्यूचिता क्रिया ॥ श्येनेनात्तेव चटिका । व्याघ्रेणात्ता मृगी यथा ॥ ६ ॥ पंच-
भिः कुलकं ॥ दृष्ट्वाथ तदवस्थां तां । कुमारेण कृपालुना ॥ उपेत्य पुरतो हस्ती । सधैर्यमधिचिक्षि-
पे ॥ ७ ॥ हा दुष्ट मत्तमातंग । भीतां गृह्णन्निमां स्त्रियं ॥ न लज्जितोऽसि निस्त्रिंश । स्थूलत्वादपि
किं निजात् ॥ ८ ॥ वीर्यं तदूर्जितं तत्ते । न स्थूलत्वं तदीदृशं ॥ उपयोक्ष्यते स्त्रीघाते । न पुनः
सिंहमारणे ॥ ए ॥ रे निःकृपातिदीनाना—मबलानां मनागसां ॥ एतासां मारणेन त्वं । मातंगो-
ऽस्य मृषाभिधः ॥ १० ॥ सावष्टंभमिति श्रुत्वा । प्रतिशब्दैर्भृतांबरं ॥ राज्ञस्तर्जास्ततो हस्ती । तस्या-
भिमुखमैक्षत ॥ ११ ॥ राजापि तस्य पुरत । ईषद्वक्रितकंधरः ॥ क्षणं स्थित्वा गतिवशाद् । दूरं शी-
घ्रतरं ययौ ॥ १२ ॥ प्रधावितं गजं दृष्ट्वा । राजा दक्षतया ततः ॥ चचाल वामपार्श्वेण । दक्षिणे-
न च वामतः ॥ १३ ॥ तमन्वटाट्यमानस्य । रोषेणांधस्य दंतिनः ॥ शुंडादंडग्रहाद्बाला । पतात स-
हसा भुवि ॥ १४ ॥ विलोक्य तां निराबाधां । बुटितां युवतीमिभात ॥ कुमारः स्माह हे बाले । प-

त्रायस्व रयादितः ॥ १५ ॥ ततो जगाद सा बाला । नरकल्पतरो ननु ॥ रक्षार्थं मे तृणात्राया । मात्मानं त्वं विनाशय ॥ १६ ॥ गजोऽथ पश्चिमे भागे । न्नभुजा मुष्टिनाहतः ॥ वलित्वा सहसा कोपा—द्धावे नु नृपात्मजं ॥ १७ ॥ परिजह्रे नरेंद्रेण । सा बाला योजनांतरे ॥ द्विगुणीकृतवेगेन । सहेभेनानुधावता ॥ १८ ॥ उपागतमिति ज्ञात्वा । कृत्वा विंटलिकां नृपः ॥ चिक्षेप करिणस्तस्य । पुरो वंचयितुं द्रुशं ॥ १९ ॥ अथ सोऽपि करी याव—त्पर्यणंसीत्क्रुधांधलः ॥ नृबुद्ध्या तत्र दंताभ्यां । निमग्नाभ्यां महीतले ॥ २० ॥ लब्धलक्षतया ताव—द्धृत्वा तद्दंतयोः पदौ ॥ आरुरोहाग्रभागेण । कुंभस्थानं स सिंहवत ॥ २१ ॥ उत्तिष्ठति करी यावद् । धुन्वन् वेगेन कंधरां ॥ तावत्कुंभे जघानैष । दूरमुड्डीय मुष्टिना ॥ २२ ॥ ततोऽतिनिष्ठुराघात—ताम्रितो विरसं रटन् ॥ करास्याभ्यां वमन् रक्तं । निर्ययौ स करी ततः ॥ २३ ॥ ज्ञात्वा दीनमुखं क्लांतं । गतरोषं च दंतिनं ॥ त्यक्त्वान्येन पथा यातो । जितकासी नृपात्मजः ॥ २४ ॥

इतश्च दूरमारूढो । गगनं गगनाध्वगः ॥ एतस्यानन्यसामान्य—गजशिक्षामिवेक्षितुं ॥ २५ ॥ तापार्तस्तृषितः क्लांतः । कुमारोंबुदिदृक्षया ॥ बंभ्रमीति वनं याव—द्वीणानादं तदाश्रृणोत् ॥ २६ ॥

सम्यग्निशम्य संगीतं । दध्याविति महीपसूः ॥ निर्मानुषे वनेऽमुष्मिन् । कुतः स्याद्गीतसंभवः ॥ २७ ॥ प्रासादोऽत्रापि भविता । तन्नूनं कोऽपि तादृशः ॥ ध्यायन्निति ययौ याव–द्वनं तावद्ददर्श सः ॥ २८ ॥ विस्मयात्तद्वनं लवंगपूगपुन्नाग—नागरप्रमुखैर्द्रुमैः ॥ कर्पूरागुरुकक्कोल—चंदनैर्नंदनोपमं ॥ २९ ॥ विस्मयात्तद्वनं याव—द्विवेश वशिनां वरः ॥ प्रासादं तावदद्राक्षी—त्तं स्फाटिकशिलामयं ॥ ३० ॥ अतिस्वच्छतया भित्ते—र्बहिःस्थं दृश्यतेंतरा ॥ अंतःस्थं च बहिर्यत्र । सर्वं स्थावरजंगमं ॥ ३१ ॥ वृक्षपुष्परजःपुंजं । शिखरे यस्य पातितं ॥ क्षालयंति सदा रात्रौ । चंद्रकांतजलोर्मयः ॥ ३२ ॥ विशाले प्रांगणे तस्य । ददृशे तेन दीर्घिका ॥ सिद्धेः शिलेव लोकांते । चंद्रबिंबमिवांबरे ॥ ३३ ॥ तस्यां पुष्करपूर्णायां । ततः स्नातो नरेंद्रसूः ॥ बाह्याभ्यंतरसंताप—ममुंचत्तीर्थदर्शनात ॥ ३४ ॥ प्रासादस्य ततस्तस्य । प्रविश्यांतः प्रसत्तिभाक् ॥ चंद्रप्रभजिनं भक्त्या । प्रणिपत्यैवमस्तवीत् ॥ ३५ ॥ चंद्रांकाय नमस्तुभ्यं । चंद्रप्रभ जिनेश्वर ॥ चंद्राभयशसे चंद्र—कांतनिर्मलकांतये ॥ ३६ ॥ उल्ललास मनोऽब्धिर्मे । तव वक्त्रेंदुदर्शनात ॥ दृष्टिर्वेलाभवत्तेन । हर्षबाष्पांबुसंकुला ॥ ३७ ॥ कर्णपालीयुतं नेत्र–पद्मं कांतिजलैर्भृतं ॥ संतापं दृष्टमप्यास्य । सरस्ते हरते जिन ॥ ३८ ॥ प्रीत्या दृष्टोऽसि यन्नेत्रै—र्वन्द्वुस्तानि

निर्मलं ॥ निर्धूतपापपंकानि । हर्षबाष्पजलच्छलात् ॥ ३९ ॥ इति स्तुत्वा प्रभापुंजं । श्रीमच्चंद्रप्र-
भं जिनं ॥ स्तंभमूले कुमारः स । आसांचक्रे जिनाग्रतः ॥ ४० ॥ इतश्चैकांबरां बालां । वीणान्य-
स्तकरांगुलीं ॥ नवयौवनरम्यांगीं । वीक्षांचक्रे नृपांगजः ॥ ४१ ॥ द्वितीयां च जिनाचैक—तानां ग-
र्भगृहांतरे ॥ निःशेषभुवनस्त्रैण—रूपातिशयशालिनीं ॥ ४२ ॥ युग्मं ॥ गंधोदककृतस्नात्रा । मुख-
माछाद्य वाससा ॥ ममार्ज जिनकायं सा । द्वितीया जलमक्षिपत् ॥ ४३ ॥ बभौ प्रतिबिंबिता सा ।
निर्मले जिनवक्षसि ॥ भक्तेयमिति तुष्टेन । वासितेवांतरर्हता ॥ ४४ ॥ श्रीखंडाद्यैस्तया लिप्तः । पू-
जितः पुष्पदामभिः ॥ चंद्रप्रभुर्बभौ क्षीर—नीराकर इवोर्मिभिः ॥ ४५ ॥ पूजाविधिं समाप्याशु
। स्तुत्वा च स्तवनैर्भृशं ॥ गायंती वीणया सापि । जिनं तत्रैव तस्थुषी ॥ ४६ ॥ गीतांते च जिनं
नत्वा । यावत्पश्चाद्विलोकितं ॥ तया स ददृशे ताव—त्कुमारो मारसोदरः ॥ ४७ ॥ हर्षपूरस्तया त-
स्या । उल्ललास तदीक्षणात ॥ यथा स्वेदमिषादंगा—दसौ बाह्ये विनिर्ययौ ॥ ४८ ॥ भृंगभ्रांतान्न-
तांभोज—पत्रशोभामलिम्लुचैः ॥ सा तं विलोकयामास । नेत्रैर्वक्रितकंधरा ॥ ४९ ॥ कदाचिदपि
नाम्नातो । योऽनुभूतो न कुत्रचित् ॥ अपूर्वः कोऽपि तस्याः स । विकारोऽभूत्तदा हृदि ॥ ५० ॥ बभूव

वीक्षितं तस्याः । स्खलितं प्रतिवीक्षितैः ॥ अनुरागरसोल्लासा—त्कुमारस्यापि दुःसहं ॥ ५१ ॥ तस्या नयनवल्लीषु । दृष्टमात्रासु नृपभूः ॥ शूरोऽपि हतहृदयः । क्षणमात्रं बभूव सः ॥ ५२ ॥ त्रपाभराद-शक्ता सा । स्थातुं तस्य दृशोः पुरः ॥ द्वितीयबालिकाहस्त—ग्राहं गर्भगृहं ययौ ॥ ५३ ॥ शक्नोमि सखि नो वक्तु—मपि लज्जावशादहं ॥ दूरे तिष्टतु कर्तव्य—मन्यदस्य महात्मनः ॥ ५४ ॥ स एवैष महासत्वो । येनाहं दुष्टकुंजरात् ॥ स्वजीवितं तृणमिवा—वगणय्य विमोचिता ॥ ५५ ॥ तत्त्वं याहि बहिः शीघ्रं । कुर्वालापं सहामुना ॥ देहि तांबूलमाद्यादि । सर्वमस्मै यथोचितं ॥ ५६ ॥ इत्यादिष्टा गृहीत्वा सा । बाला प्रवरमासनं ॥ इंद्रनीलमणीमत्त—वारणे सममंडयत् ॥ ५७ ॥ ऊचे च नृपजं देव । प्रसीदासनमाश्रय ॥ स्वामिन्या मेऽपसाधं मा । देहि पूजैकचेतसः ॥ ५८ ॥ कुमारः स्माह नागांसि । देवपूजाजुषां क्वचित ॥ तानि संत्यपि नश्यंति । दूरं धर्मानुभावतः ॥ ५९ ॥ देव-लोकपवित्रेऽहं । स्थास्याम्यत्रैव भूतले ॥ प्रस्तावः प्रतिपत्तेर्न । गुरुदेवपुरो यतः ॥ ६० ॥ पुनः पुण्योपरोधेन । तस्या दाक्षिण्यसेवधिः ॥ पद्मं हंस इवोत्सुक्या—लंचकारासनं नृपः ॥ ६१ ॥ कर्पूर-मिश्रतांबूलं । मूर्तं रागमिवार्पयत् ॥ तस्मै सौजन्यसाराय । सा बाला स्पृहयालवे ॥ ६२ ॥ विलेप-

पसी भक्त्या । स्थापितं च वरासनं ॥ ८६ ॥ अनुज्ञातः कुमारोऽप्य—नया पूर्वोपविष्टया ॥ वरासने पुरस्तस्या । आसांचक्रे कृतांजलिः ॥ ८७ ॥ तापसी सा जगादाथ । कुशलं तु सदा तव ॥ विश्वोपकारिणो नित्यं । विश्वकल्याणसद्मनः ॥ ८८ ॥ नूनं परोपकाराय । जन्म युष्मादृशां भवेत् ॥ कल्पद्रूणां स्वकार्येण । जातु संकल्पना यतः ॥ ८९ ॥ परोपकारसक्तानां । येषां दुःखं सुखायते ॥ ते कुत्रेति मतिर्मेऽभू—द्भवता सापि निह्नुता ॥ ९० ॥ पुरुषोत्तम विश्वेऽस्मिन् । पुरुषो भूष्यते गुणैः ॥ विभूषितास्त्वया ते तु । निःसीमत्वाद्गुणा ध्रुवं ॥ ९१ ॥ उपकार्येत येनात्मा—प्यन्यकार्यप्रसाधने ॥ प्राप्नोत्यत्र गुरुत्वं स । त्वमिवेति ममाशयः ॥ ९२ ॥ यथा यथेति सद्भूत—गुणांस्तुष्टाव तस्य सा ॥ तथा तथा कुमारोऽपि । ह्रीणोऽभूदधिकाधिकं ॥ ९३ ॥ अथाक्षिप्य वचस्तस्या । जजल्प हरिविक्रमः ॥ भगवति गुणा के मे । कोऽहं मे किं च शंसनं ॥ ९४ ॥ दोषाणां मिश्रता यत्र । स गुणो नैव भाति मे ॥ दोषाभावे न नैर्मल्यं । स एव स्याद्गुणो यदि ॥ ९५ ॥ कोऽप्यधिकगुणो यस्मा—त्स गुणित्वं लभते कथं ॥ स एवात्र गुणी यस्मा—न्नाधिकोऽस्ति यतः परः ॥ ९६ ॥ निर्गुणोऽपीति मादृक्षे । जने या ते गुणित्वधीः ॥ सा पक्षपातबुद्धिर्वा—त्मतुल्यावलोकनं ॥ ९७ ॥

सर्वं गुणमयं विश्वं । जाति यद्गुणशालिनां ॥ गुणाढ्यमपि पश्यंति । निर्गुणं गुणवर्जिताः ॥ ९८ ॥
इति ब्रुवंतं नृपजं । रंजिता सा तपस्विनी ॥ निजगादेति नेदीय–स्तपोवनमितोऽस्ति नः ॥ ९९ ॥
गह्वावस्तत्र निःशेषा । शेषा गोष्टी करिष्यते ॥ एवमस्त्विति तद्वाक्यं । प्रतिपेदे नरेंद्रसूः ॥ २०० ॥
वालतापसयोर्द्वंद्वं । मुक्त्वा पार्श्वे नरेशितुः ॥ जगाम सह बालाभ्यां । तापसी सा तपोवनं ॥ १ ॥
राजसूः क्षणमात्रेण । तापसाभ्यां परिवृतः ॥ गह्वस्तदुपरोधेन । वीक्षांचक्रे तपोवनं ॥ २ ॥ तपोवन-
समीपस्थ—न्यग्रोधस्य तरोस्तले ॥ कुमारं स्थापयित्वैक—स्तापसस्त्वरितं ययौ ॥ ३ ॥ गत्वा कुल-
पतेः पादौ । प्रणम्येति शशंस सः ॥ गुरो कुमार आयातो–ऽस्त्यधो न्यग्रोधशाखिनः ॥ ४ ॥ श्रुत्वा
तद्वचनं हृष्ट—स्तापसैः परितो वृतः ॥ वल्गुनामा कुलपति—र्हरिविक्रमम्भ्यगात् ॥ ५ ॥ तापसी-
स्वामिनी सापि । तापसीभिः समन्विता ॥ दधिदूर्वाद्यर्घपात्र—पाणिभिः संमुखं ययौ ॥ ६ ॥ कृत-
मंगलगीताभि—स्तापसीभिः परिवृतः ॥ तस्मै समंडलाचार्यो । ददावर्घादिकं स्वयं ॥ ७ ॥ पटुवा-
ग्वटुकादिष्टा—श्रममार्गो नृणां वरः ॥ प्राप कुलपतेः पर्ण—कुट्या अग्रिममंडपं ॥ ८ ॥ पूर्वोपवि-
ष्टगुरुणा—नुज्ञातो विष्टरेऽथ सः ॥ आसांचक्रे नमस्कृत्य । मंमलाचार्यमंजसा ॥ ९ ॥ उपविष्टेषु

सर्वेषु । यथा स्थानं तपस्विषु ॥ बभाषे मंगलाचार्यो । नृपं कुशलवार्तया ॥ १० ॥ एषोऽप्यानम्रशि-
रसि । संयोज्य करकुड्मलौ ॥ बभाणेति ममाद्यैव । कुशलं वः प्रसादतः ॥ ११ ॥ विज्ञपयामि किं-
चिच्च । भगवन्नवधार्यतां ॥ प्रथमं मे गतं पापं । श्रीचंद्रप्रभदर्शनात ॥ १२ ॥ भगवत्याः प्रणामाच्च ।
ततोऽपि तव दर्शनात ॥ मुनीनां दर्शनात्पश्चा—त्सर्वथा विलयं गतं ॥ १३ ॥ इत्यादि बहुधा पु-
ण्य—राशिभूतस्य मे हृदि ॥ संतापमेतदेवानु—चिताचरणमश्नुते ॥ १४ ॥ यत्सर्वविश्वपूज्या मे ।
यूयं कुरुथ गौरवं ॥ अगौरवपदे तेन । भवद्भिः स्थापितोऽस्म्यहं ॥ १५ ॥ यः पूजातिक्रमः पूज्ये ।
क्रियते स हरेध्ध्रुवं ॥ अपि पूर्वार्जितं पुण्यं । दूरे तन्नूतनागमः ॥ १६ ॥ वयमेते कुशीलाः क ।
क यूयं शीलसागराः ॥ तत्कथ्यतां कथं पूज्यो । दुःशीलः शीलशालिनां ॥ १७ ॥ विनयार्हानगा-
रेषु । गृहिणां भक्तिरौचिती ॥ न पुनः साधुलोकस्य । गृहस्थेषु कदाचन ॥ १८ ॥ एतावतैव ल-
भते । गृहस्थः शुद्धिमात्मनः ॥ सच्चरित्रमुनीनां य—त्कुरुते पादसेवनं ॥ १९ ॥ कामधेनुसमा सा-
धु—सेवेयं गृहमेधिनां ॥ कामविज्ञानदा चात्र । परत्र स्वर्गदायिनी ॥ २० ॥ संतोषो मनसो दुःख
—विस्मृतिर्बुद्धिशुद्धिता ॥ तत्वार्थाधिगमश्च स्युः । साधुसेवागुणा अमी ॥ २१ ॥ अदृष्टमपि मध्य-

स्थं । पापं गलति गेहिनः ॥ नीरं चंडोपलस्येव । मुनिचंडस्य दर्शनात ॥ २२ ॥ गृहस्थस्य कृतं
यन्मे । भवद्भिः पूजनादिकं ॥ चित्तं डुनोति न्नोः पूज्या—स्तदेवानुचितं मनाक् ॥ २३ ॥ इत्यु-
क्त्वा विरते तस्मिन् । समस्तैर्मुनिपुंगवैः ॥ शिरोऽवधूननं चक्रे । नखछोटनया समं ॥ २४ ॥ शुद्ध-
तत्वं विना विश्व—स्वामित्वं न भवेदिह ॥ तदपि स्यात्पुनर्देव—गुरुन्नक्तिर्न दृश्यते ॥ २५ ॥ त्व-
स्मिन् पुनर्गुणाः सर्वे । निवसंतोऽविरोधिनः ॥ शशिनश्च कराः कं न । सुखयंति सुधामयाः ॥ २६ ॥
ध्यात्वेति निपुणं धीमान् । गुरुस्नेहवशंवदः ॥ प्रारेन्ने गदितुं तस्य । पुरस्तापसनायकः ॥ २७ ॥ स्व-
गुरुत्वानुमानेन । कुमाराभिहितं त्वया ॥ गुरुदेवनतानां य—न्नराणां गुरुता न्नवेत ॥ २८ ॥ परमत्र
न दोषो न । दोषः सर्वस्तवैव हि ॥ असामान्यगुणस्थानं । येनात्मा विहितः स्वयं ॥ २ए ॥ पुरु-
षेषु स्थिता नूनं । पूज्यंते गुणिन्निर्गुणाः ॥ बहुमानोऽन्यथा तेषां । गुणानां क्रियते कथं ॥ ३० ॥
सामान्येऽप्यतिथौ कार्यं । गौरवं मुनिन्निः खलु ॥ किं पुनस्त्वयि युक्तं न । निःसामान्ये नृपात्मज
॥ ३१ ॥ राजेत्यभ्यागतश्चेत्यु–पकारीति गुणीति च ॥ वर्णानां च गुरुरिति । त्वं पूज्योऽसीह सर्वथा
॥ ३२ ॥ सुखसाधितधर्माणां । निखिलाश्रमवासिनां ॥ गुरुवत्पालकस्तेन । पूज्यो भवति न्नूपतिः

॥ ३३ ॥ इत्युक्ते कुलपतिना । प्रत्यवग्नृपसूः पुनः ॥ जानंति गुरवः कार्य–मयुक्तं युक्तमेव वा ॥ ३४ ॥
अथ संपादिताशेष—भोजनादिविधिर्नृपः ॥ विशश्राम सुखं तत्र । वार्तयंस्तापसैः समं ॥ ३५ ॥ प-
प्रछाथ कुमारस्तं । तापसाधीश्वरं निशि ॥ श्रीचंद्रप्रजनाथस्य । प्रासादः केन कारितः ॥ ३६ ॥ ता-
पसा अपि किं यूयं । जिनधर्माधिवासिताः ॥ इति पृष्टे कुमारेण । प्रत्युवाच तपस्विराट् ॥ ३७ ॥
यक्षो मलयमेघाख्यो । मलयाद्रयधिदैवतं ॥ परमश्रावकोऽत्रास्ति । प्रासादस्तेन कारितः ॥ ३८ ॥ प्र-
तिपन्नांगजा तस्य । चंद्रश्रीरस्मदाश्रमे ॥ तस्याः संसर्गतो जाता—स्तद्धर्माभिमुखा वयं ॥ ३९ ॥ इ-
त्यादिधर्मवार्ताभि—र्गमयित्वा विभावरीं ॥ पुनः प्रातर्ययौ देव—गृहं तापससंयुतः ॥ ४० ॥ नम-
स्कृत्य जिनेंद्रं स । मत्तवारणमाश्रयत ॥ प्रासादं चारुमालोक्य । निजनेत्रे कृतार्थयन् ॥ ४१ ॥ इत
श्च यक्षनारीभिः । प्रविष्टाभिर्जिनालयं ॥ नानाप्रकारयुक्ताभिः । प्रारेभे मज्जनोत्सवः ॥ ४२ ॥ पु-
ष्पमालार्चिताः काभि—श्चर्चिताश्चंदनेन च ॥ सुगंधोदकसंपूर्णा । जिनाग्रे कलशा भृताः ॥ ४३ ॥
सुगंधपुष्पमालाभिः । पूर्णाः पटलिकाः सुरैः ॥ यक्षकर्दमसंपूर्णाः । पात्रिकाश्चोपनिन्यिरे ॥ ४४ ॥
प्रगुणीचक्रिरे धूप—घट्योऽपि सुरकिंकरैः ॥ झल्लरीभेरीमुख्यानि । वाद्यानि प्रहतानि च ॥ ४५ ॥

मृदंगनादगंभीरं । गीतध्वनिमनोहरं ॥ प्रारब्धं जिनपुरतो । नर्तकीभिः प्रनर्तितुं ॥ ४६ ॥ इतश्च विहितस्नानो । वसानो दिव्यवाससी ॥ नाम्ना मलयमेघः स । यक्षराजः समाययौ ॥ ४७ ॥ बहुयक्षसमेतः स । यक्षणीभिः परिवृतः ॥ श्रीचंद्रप्रभनाथस्य । स्नानं चक्रे यथाविधि ॥ ४८ ॥ विलेपनं च पूजां च । विधाय विधिवत्तदा ॥ गंभीरार्थैर्महास्तोत्रै—स्तुष्टाव जिननायकं ॥ ४९ ॥ कृतकृत्यस्ततो भूत्वा । गत्वा चोपनृपात्मजं ॥ यक्षराजो वचोभिस्तं । सादरैः समभाषत ॥ ५० ॥ स्वागतं ते कुमारेंद्र । बभूव सुखरात्रिकं ॥ शरीरे कुशलं चास्ति । जगत्कुशलकारिणि ॥ ५१ ॥ परिणामसुखार्थं ते । कृतस्यैकाकिनो मया ॥ ममोपरि किं मालिन्यं । हृदयं वहतेऽधुना ॥ ५२ ॥ दूरस्थितस्य सैन्यस्या—निवृत्तिः कापि नैधते ॥ प्रतापपालितस्येह । चित्तं तेन महाशय ॥ ५३ ॥ जल्पाकमिति तं यक्षं । प्रसन्नास्यः कुशेशयः ॥ सुष्टुश्लिष्टोक्तिविन्यासं । जगाद युवभूपतिः ॥ ५४ ॥ वंदनेन जिनेंद्रस्य । यतीनां दर्शनेन च ॥ श्रावकस्य च संगेन । सर्वत्र कुशलं मम ॥ ५५ ॥ पूर्वोक्तकारणैर्मृष्टं । यत्राप्येतच्चिरंतनं ॥ मालिन्यं तत्कथं दध्या—न्मामकं हृदयं त्वयि ॥ ५६ ॥ राज्यं बलं शरीरं च । प्रभावा भवतामिह ॥ रक्षंति तत्कथं मेऽस्त्व—निवृत्तिः सैन्यसंभवा ॥ ५७ ॥ प्रतिकूलकृतं

सौख्यं । दुःखवन्मानिनां भवेत ॥ अनुकूलकृतं दुःख-मपि स्यात्सुखतोऽधिकं ॥ ५७ ॥ चित्तशुद्धिः सतामेव । मालिन्यं हरते हृदि ॥ मलिनेंऽभसि निक्षिप्तं । कतकक्षोदवन्मलं ॥ ५९ ॥ परिणामसुखं कार्यं । सुखं दुःखमिवौषधं ॥ दुःखं करोति बालानां । न तु तत्वार्थवेदिनां ॥ ६० ॥ यक्षराजो जगादाथ । सत्यमेतत्त्वयोदितं ॥ ईदृक्कुतो विवेकः स्या—द्विना त्वां हरिविक्रम ॥ ६१ ॥ किंचिद्वच्मि त्वमेकाग्र—मानसः शृणु मे वचः ॥ परिज्ञाय ततः कुर्या—द्राजपुत्र यथोचितं ॥ ६२ ॥ नन्वेषैकांगवीरत्व—साधिताशेषभूपतेः ॥ कन्या श्रीवीरसेनस्य । चंद्रश्रीगर्भसंभवा ॥ ६३ ॥ स्वसौंदर्यजिताशेष—युवतिर्वर्ण्यते कथं ॥ प्रत्यक्षाग्रेऽपि या जाता । तवात्र ह्यस्तने दिने ॥ ६४ ॥ हरिविक्रम जानीहि । नाम्ना भुवनसुंदरीं ॥ एतां मम सुतां देहं । हृदयं जीवमेव वा ॥ ६५ ॥ जाता यथैषा तनया यथा च । प्रवर्धिताकारि यथा च दक्षा ॥ यथाभवच्च त्वयि सानुरागा । सर्वं तथा त्वं शृणु हे कुमार ॥ ६६ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये कुमारापहारो नाम द्वितीयः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ तृतीयः सर्गः प्रारभ्यते ॥

विद्यतेऽत्र पुरी चंपा । निःकंपारिसमागमे ॥ श्रीवीरसेननामाऽभू—त्तत्र सागरभूपतिः ॥ १ ॥ अ-
प्रियाभूत्तस्य चंद्रश्री—श्चंद्रश्रीरिव निर्मला ॥ चित्तं तु वृत्तमेतस्या । भिद्यते न घनैरपि ॥ २ ॥ अ-
न्यदा केवलज्ञान—कलितौ मुनिपुंगवौ ॥ विद्याधरसुरैः सार्धं । तदुद्यानं समीयतुः ॥ ३ ॥ सांतः-
पुरपरीवारः । श्रुत्वा तद्देशनां नृपः ॥ भवेद्वैराग्यः सुतं राज्ये—ऽमरसेनं न्यवीविशत् ॥ ४ ॥ जिनचै-
त्येषु सर्वत्र । कारयित्वा महोत्सवं ॥ आपृच्छ्य नगरीलोकान् । सन्मान्य सचिवानपि ॥ ५ ॥ दी·
नादिभ्यो धनं यच्छन् । वीरसेननराधिपः ॥ केवलज्ञानिनः पार्श्वे । प्रवव्राज ततः सुधीः ॥ ६ ॥ चं-
द्रश्रीस्तु समं पत्या । प्रव्रजंती मुदा तदा ॥ अभाणि गुरुणा वत्से । व्रतयोग्यासि नाधुना ॥ ७ ॥
संजातगर्भभावेन । व्रतविघ्नोऽस्ति तेऽधुना ॥ कालांतरेण भविता । प्रव्रज्यायोग्यता पुनः ॥ ८ ॥
ततो गुरुनिषेधोत्थ—दुःखाग्निप्लुष्टचेतना ॥ पपात सहसा भूमौ । वज्रपातहतेव सा ॥ ९ ॥ मूर्छा-
विधुरसर्वांगी । सहसा ददृशेऽथ सा ॥ सकृपं वीरसेनेन । न पुनः स्नेहनिर्भरं ॥ १० ॥ शीतोप-
चारैर्बहुभिः । लब्धसंज्ञा सती ततः ॥ जगदे सेति चंद्रश्री—रकलंकाख्यसूरिणा ॥ ११ ॥ विज्ञात·

निर्बंधो वर्तते दोषो । नारीष्वन्यासु तन्न हि ॥ १२ ॥ वि-
परमार्थायां । विवेकिन्यां त्वयीति चेत् ॥ विशेषो लभ्यते कथं ॥ १३ ॥
वेकिनोऽपि चेष्टंते । निर्विवेकसमं यदि ॥ सविवेकाविवेकानां । विशेषो लभ्यते कथं ॥ १३ ॥
चंद्रश्रीरवदच्छोको । भगवन्नेष एव मे ॥ प्राव्राजीद्दयितो यन्मे । भविष्यामि कथं त्वहं ॥ १४ ॥ ए-
तदेवास्ति मे दुःखं । नान्यत्किंचिद्विभोऽथवा ॥ मस्तके मंदपुण्यानां । न पतंति करा गुरोः ॥ १५ ॥
गुरुः स्माहेति चंद्रश्रीः । खेदं मा कुरु संप्रति ॥ प्रव्रज्याया विलंबस्ते । बहूनां बोधहेतवे ॥ १६ ॥ चा-
रित्रमोहनीयं ते । कर्म नाद्यापि शाम्यति ॥ चारित्रग्रहणे काल—विलंबस्तेन निर्मितः ॥ १७ ॥
अस्मिन्नेव भवे भद्रे । प्रव्रज्यां प्राप्य निर्मलां ॥ सार्धं त्वं वीरसेनेन । निर्वाणं लप्स्यसे ध्रुवं ॥ १८ ॥
आकर्ण्येति गुरोर्वाक्यं । दुःखं तत्याज सर्वथा ॥ ननाम च महाभक्त्या । गुरुं वीरं मुनीनपि ॥ १९ ॥
ततश्चामरसेनोऽपि । गुरून्नत्वा यथाविधि ॥ जनन्या निजया सार्धं । प्रविवेश निजां पुरीं ॥ २० ॥
राज्यं सोऽमरसेनोऽथ । पालयामास पैतृकं ॥ प्रौढप्रतापसंयुक्तो । न्यायवान् पितृवर्त्मना ॥ २१ ॥ प्र
वर्धमानगर्भश्री—श्चंद्रश्रीरपि नित्यशः ॥ स्मरंती दयितं मेने । गृहवासं हि गुप्तिवत् ॥ २२ ॥ पत्यु-
र्वियोगदावाग्नि—जातदाघज्वरं पुनः ॥ येनाप निर्वृतिं तस्या । उपायः समभून्न सः ॥ २३ ॥ संधु

द्धितो भृशं तस्याः । शीतैर्व्यजनवायुभिः ॥ जज्वाल चांदनरसै—र्दुस्सहो विरहानलः ॥ २४ ॥ वि-
वेकिनोऽपि तद्दुःखं । जायते गुरुमोहतः ॥ विवेकश्छाद्यते येन । सूर्योऽभ्रपटलैर्यथा ॥ २५ ॥ वि-
वेकश्चादितोऽप्युच्चै—रुपकारी विपत्स्विह ॥ घनछन्नोऽपि हंत्येव । रवी रात्रितमोभरं ॥ २६ ॥ प्रत्या-
शया गुरुस्तस्य । गुरुदुःखभरापि सा ॥ आत्मानं धीरयामास । जिनेंद्रवचनैः सदा ॥ २७ ॥ प्रवर्ध-
मानसंतापा । देवी साथान्यवासरे ॥ सौधस्योपरि शय्यायां । विलपंती स्थिता निशि ॥ २८ ॥ कश्चि-
दूर्ध्वस्तथासीनः । कश्चिद्दासीजनस्तथा ॥ पादसंवाहनाव्यग्रः । कश्चिदासीच्च पाणिना ॥ २९ ॥ क-
श्चित्केशविवरणं । कश्चिद्व्यजनचालनं ॥ वीरसेनकथां कश्चि—त्कुर्वंस्तत्प्रीतये स्थितः ॥ ३० ॥ अ-
त्रांतरे विलासश्री—र्जगादाद्यापि देवि किं ॥ तवानुरागविच्छित्ति—र्देवंप्रति न लक्ष्यते ॥ ३१ ॥ य-
द्यदैवाभवद्देवि । तत्तदेव व्यलीयत ॥ किमात्मा खिद्यतेऽप्राप्य—तीतसौख्यस्य हेतवे ॥ ३२ ॥ सां-
प्रतं तु गुरुस्थाने । पूज्यास्ते देवि तेऽभवन् ॥ अनुरागः कथं कर्तुं । तेषु पूज्येषु युज्यते ॥ ३३ ॥
गृहभूमिमतिक्रम्य । प्राप्ता ये यतिभूमिकां ॥ निजभूमेर्विरुद्धोऽनु—रागस्तेषु विगानकृत् ॥ ३४ ॥ त-
तश्चंद्रश्रिया प्रोचे । सख्येवं किंतु मे मनः ॥ स्नेहस्थानं प्रस्खलित—मपि याति हि तत्र वै ॥ ३५ ॥

तावत्पपात सहसा । कृष्णः सर्पोऽबरान्महान् ॥ ३६ ॥
इत्यादिस्वैरसंलापै—र्यावत्तिष्ठंति तत्र ताः ॥ तावत्पपात सहसा । कृष्णः सर्पोंबरान्महान् ॥ ३६ ॥
दुस्सहो निर्मित इव । चंद्रश्रीपापकर्मभिः ॥ यो मृत्योरिव पर्यायः । कालदंष्ट्र इवाबलौ ॥ ३७ ॥ ऋ-
ग्रोन्नतफणास्फारः । प्रसर्पत्पन्नगोऽशुभत् ॥ देवीग्रहकृते हस्तो । यमेनेव प्रसारितः ॥ ३८ ॥ रजनी-
रूपराक्षस्याः । प्रसर्पंत्याः समंततः ॥ निर्गतो रसनादंडो । देवीमत्तुमिवाबभौ ॥ ३९ ॥ गुरुदुःखैर्न-
विष्यद्भिः । पुरतः सर्पदंष्ट्रतः ॥ हस्तालंब इवाकारि । देव्या उत्क्षेपणंप्रति ॥ ४० ॥ दुःखौघैर्गिव्य-
मानाया । देव्या गिलनहेतवे ॥ मुखं विकासितं स्वस्या—हिना दुष्टेन तेन च ॥ ४१ ॥ दिव्युते-
ऽहिः फणारत्नैः । परिसर्पन्नितस्ततः ॥ तमोभिः पिहितां देवीं । वीक्ष्यमाण इव स्फुटं ॥ ४२ ॥ नि-
र्गतेन मुखाज्जिह्वा—युग्मेनेति ब्रुवन्निव ॥ मरणं हरणं वाप्या—गतमद्यैव देवि ते ॥ ४३ ॥ नि-
तांतभीषणाकारं । दृष्ट्वा तं कालपन्नगं ॥ भीवेपमानसर्वांगः । परिवारो व्यदुद्रवत ॥ ४४ ॥ दिग्मा-
तंगकराकारं । वीरपत्नी विलोक्य तं ॥ सस्मारार्हन्नमस्कार—महामंत्रं सचेतना ॥ ४५ ॥ नमस्कार-
महामंत्र—प्रभावध्वस्ततांडवः ॥ निश्चेष्ट इव संजज्ञे । तत्कालं पन्नगेश्वरः ॥ ४६ ॥ विद्याबलेन वि-
हित—घनवातोध्धुतद्रुमः ॥ पातयन्मंदराग्राणि । रजोभिश्छादयन् दृशः ॥ ४७ ॥ एकीकुर्वन्निव द्या-

वा—पृथिव्यौ पांशुपूरणात ॥ चंद्रकेत्वभिधानोऽथ । खेचरः खे समाययौ ॥ ४८ ॥ युग्मं ॥ अ
दृश्येनैव तेनैत्य । घनरेणुतमोभरे ॥ परीवारसमक्षं सा । जह्रे वीरस्य वल्लभा ॥ ४९ ॥ मृदुतूली-
तलत्यागा—त्तत्पाणिस्पर्शनादपि ॥ मेनेऽपहृतमात्मानं । चंद्रश्रीः खेचरेण सा ॥ ५० ॥ ह्रियमा-
णेति सा दध्यौ । चंद्रश्रीर्व्योमचारिणा ॥ कारणेन हृता केना—नेनाहं पापकर्मणा ॥ ५१ ॥ अ-
थवेदं मम स्तोकं । परोक्षे तस्य भूपतेः ॥ बहु दृष्टव्यमद्यापि । मया दुःखैकयोग्यया ॥ ५२ ॥ पापा-
त्मा खेचरः कोऽयं । हृत्वा मां किं करिष्यति ॥ रागद्वेषोत्कटः कोऽपि । भविता चिंत्यतेऽथ किं ॥ ५३ ॥
सरागो द्वेषयुक्तो वा । परनारीं हरेन्नरः ॥ प्रथमः कामविवशो । द्वितीयस्तु क्रुधा ज्वलन् ॥ ५४ ॥
समस्ते भुवनेऽप्यस्ति । हेतुर्नापहृतेः परः ॥ अत्र मूलमनर्थानां । रागद्वेषौ यतो ननु ॥ ५५ ॥ प्रहृ-
त्य वाथ किं कर्ता । तस्या मे शीलवर्मणः ॥ इष्टे द्वे एव यस्यास्तु । शीलरक्षाथवा मृतिः ॥ ५६ ॥
सुलज्जः स्त्रीस्वभावाद्यः । स शोकः क्रियते कथं ॥ शोकान्न यांति दुःखानि । स्वकर्मोपस्थितानि य-
त ॥ ५७ ॥ यद्यद्दुःखं ततो भावि । विहितं मम कर्मभिः ॥ तत्तदेव मया सर्वं । सोढव्यं दिनतां
विना ॥ ५८ ॥ चिंतयंतीति चंद्रश्री—र्हृत्वा सा चंद्रकेतुना ॥ निन्ये मलयशैलस्य । शृंगस्योपरि

रंहसा ॥ ५९ ॥ विमुच्य तत्र विद्याभृ—त्तद्रूपं यावदीक्षते ॥ विस्मयस्मेरनेत्रोऽभू—त्तावदंगितवद्ध
शं ॥ ६० ॥ अहो चित्रमियं राज्ञी । त्रैलोक्याद्भुतरूपभृत ॥ यस्यैषा सकला जार्या । सफलं तस्य
जीवितं ॥ ६१ ॥ नन्वेषा भ्रूधनुर्मुक्तै—स्तीक्ष्णैर्लोचनसायकैः ॥ ससुरासुरमर्त्यानि । जगति जयति
क्षणात् ॥ ६२ ॥ संपूर्णस्य सदैतस्या । निःकलंकस्य शाश्वतः ॥ इतरः क्रियते चंद्रो । मुखेंदोरव-
तारणं ॥ ६३ ॥ एतस्या अतिविस्तीर्ण—मुन्नतोरुपयोधरं ॥ विद्याधरामरेंद्राणां । गम्यं वक्षःस्थलं ख-
वत ॥ ६४ ॥ परोक्षे वीरसेनस्य । चाक्रांतो बलिभिर्भृशं ॥ प्रक्षीणो मध्य एतस्या । अधिकं मध्यदे-
शवत ॥ ६५ ॥ नितंबस्थलशालाया—मूरुस्तंभनियंत्रितः ॥ निरंतरं वसत्यस्याः । कामो मत्त इव द्वि
पः ॥ ६६ ॥ शोभोपचितमेतस्या । यद्यदंगं विलोक्यते ॥ तत्तदेवातिरम्यत्वा—दनुरागं दधात्यलं
॥ ६७ ॥ प्रकृत्या शीलकलिता । प्रकृत्यान्वा विशेषतः ॥ परस्त्रीशेषविमुखा । भवेदेषा कथं मम
॥ ६८ ॥ एवं विकल्पसंकल्प—व्याकुलो यावदस्ति सः ॥ तावद्भणितुमारेभे । इदं चंद्रश्रिया खगः
॥ ६९ ॥ किं जह्रेऽहं त्वया खेटा—नुरागेण क्रुधाथवा ॥ हृता यद्यनुरागेण । प्रारंभस्ते ततोऽफलः
॥ ७० ॥ क्रोधेन वा हृता चेत्त—द्धहि मां मा चिरं कुरु ॥ देवीमिति ब्रुवाणां तां । चंद्रकेतुः पु-

नर्जगौ ॥ ७१ ॥ बंधुः पवनकेतुर्मे । हतः पत्या पुरा तव ॥ दिनानि तंप्रतीयंति । न क्षमो वैरशु-
द्धये ॥ ७२ ॥ हता त्वं तेन वैरेण । पतिमुक्तासि सुंदरि ॥ प्रणष्टं देवि तद्वैरं । दर्शनेन तु तेऽधु-
ना ॥ ७३ ॥ मारणात्मकबुद्धीनां । क्रुद्धानां वैरिणामपि ॥ यद्दृष्टमनुरागाय । तद्रूपं वर्ण्यते बुधैः
॥ ७४ ॥ तव जानाम्यहं शीलं । गुणैश्च रंजितं जगत ॥ भवद्गुणानुरक्तानां । यन्नो भवति तत्कुरु
॥ ७५ ॥ चंद्रश्रीः स्माह भो ब्रूषे । किं मृषा मतिमोहितः ॥ यद्ब्रूषे गुणरक्तं स्व—मपि दोषानुरा-
गिणं ॥ ७६ ॥ योऽनुरागः परस्त्रीषु । संमतो दोष एव सः ॥ युक्तोपेक्षैव तत्खेट । तव दोषानुरागि-
णः ॥ ७७ ॥ नोचितानुचितं वेत्सि । रागांध सत्यमन्यथा ॥ धृष्टोऽपीब्भस्यरिष्ट त्वं । राजहंसप्रियां
कथं ॥ ७८ ॥ अनुरागो मृगस्य स्याद् । दुःखहेतुस्तु केवलं ॥ मनोरथस्याप्यगम्ये । कलत्रे गज-
वैरिणः ॥ ७९ ॥ न भीमसीव खद्योतो—ऽभिधावन्मां रविप्रभां ॥ धक्ष्यसे त्वं कथं खेट । मत्पुरस्तु
विना बलं ॥ ८० ॥ नभोगमनशक्तिस्ते । यदि जाता कथंचन ॥ ततः स्वं साररूपं त्व—मियतैवा-
त्र मन्यसे ॥ ८१ ॥ अथवा तव को दोष—स्त्वद्गोत्रं चापि पापकृत ॥ चंडालस्य कुलं मुक्त्वा । प-
रो गोमांसमत्ति कः ॥ ८२ ॥ अपि भ्रातृवधं दृष्ट्वा । परस्त्रीहतिसंभवं ॥ ह्री महामोहमूढस्त्व—म-

द्यापि न निवर्तसे ॥ ७३ ॥ रक्तमांसवसापूय—मलाद्यशुचिपूरितां ॥ गाहंते परस्त्रीरूपां । नदीं वैतरणीं नराः ॥ ७४ ॥ बिंबोष्ठकुसुमामुच्च—रोमांचकंटकाकुलां ॥ आलिंगंति नरा मूढाः । परस्त्रीकूटशाल्मलीं ॥ ७५ ॥ दृष्टैरपि नरैः पापं । तैरालिंगति केवलं ॥ मनोऽपि धावते येषां । परस्त्रीसेवनेछया ॥ ७६ ॥ श्वानस्तेन नराः शीघ्रं । ये नात्मपरताजुषः ॥ परस्त्रीमातृभगिनी—व्यक्तिस्तेषां यतो न हि ॥ ७७ ॥ सेव्यते सानुरक्तेति । कथं पुंसानुरागिणा ॥ दुःखानां कारणं या स्त्री । परत्रेह च विद्यते ॥ ७८ ॥ परस्त्रीसेवमानं मां । कोऽवगंतेति विद्धि मा ॥ आत्मैव भविता शत्रु—रतोऽकार्यं कुरुष्व मा ॥ ७९ ॥ जल्पंतीमिति तां चंद्र—श्रियं देवीं स खेचरः ॥ हृदुल्लसत्क्रुधा ताम्र—नेत्रद्वंद्वोऽब्रवीदिति ॥ ८० ॥ नास्मासु तेऽनुरागश्चे—त्तन्मा भवतु कर्हिचित ॥ अश्रोतव्यानि वाक्यानि । पुनस्त्वं भाषसे कथं ॥ ८१ ॥ दुर्भाषणफलं चैत—त्तवोपस्थितमत्र तत् ॥ मोदये हठेन यदहं । त्वां त्यजामि च नाधुना ॥ ८२ ॥ चंद्रश्रीस्तद्वचः श्रुत्वा । शीलभंगभयात्ततः ॥ मुमोच मलयस्याग्रादात्मानं शूलिकानिभात् ॥ ८३ ॥ शीलजीवितयोः शीलं । प्रियमेव कुलस्त्रियां ॥ यतः क्व खंडितं शीलं । लभ्यते जीवितं पुनः ॥ ८४ ॥ त्रैलोक्यदुर्लभं शीलं । रक्षंत्या निजजीवितं ॥ एतस्मिन्

समये देव्या । तृणेन तुलितं समं ॥ ९५ ॥ अत्रांतरे पतंती सा । तत्कालं ददृशे मया ॥ नाम्ना
मलयमेघेन । मलयाचलवासिना ॥ ९६ ॥ अस्याः सत्वेन तुष्टेन । वात्सल्येनार्हतस्य च ॥ मयै-
षा मृदुपाणिभ्यां । प्रत्यग्राहि कृपालुना ॥ ९७ ॥ सुरूपां त्रिदशीकल्पां । तां दृष्ट्वाहमचिंतयं ॥
सुलक्षणानयाकृत्या । नारी कापीयमुत्तमा ॥ ९८ ॥ आपांडुरकपोलाभ्यां । वक्ति चापन्नसत्वतां ॥
अतीवगुणरूपाढ्या । कृशांगी चारुलोचना ॥ ९९ ॥ गूढगर्भांगभाजालै—र्धवलीकृतदिङ्मुखा ॥
शरदभ्रापह्नुतेंदु—रिवैषा कौमुदी निशा ॥ १०० ॥ चिंतयन्निति दोर्भ्यां तां । गिरिगह्वरवर्त्मना ॥
पांचालिकामिवादाय । भुवनं विविशे निजं ॥ १ ॥ तत्र मुक्त्वा मनोहारि—पल्यंके मृदुतूलिके ॥
दूरासनोपविष्टोऽहं । बभाषे सुंदरीमिमां ॥ २ ॥ मान्नैषीस्त्वं मया वत्से । पतंती मलयाग्रतः ॥ ना-
म्ना मलयमेघेन । धृता राज्ञात्र वासिना ॥ ३ ॥ गुणिनो हृदयं धत्ते । पक्षपातं गुणिष्विह ॥ इत्या-
नीता गुणवति । मया त्वं भवने निजे ॥ ४ ॥ ततो गेहं तवैवेदं । पिता तेऽहं स्थिरा भव ॥ प्र-
सूतिसमयोऽप्यस्ति । समीपस्ते वरानने ॥ ५ ॥ निःशल्यया त्वया पश्चा—त्कर्तव्यं समयोचितं ॥ इ-
त्युक्ते स्वस्थचित्ता सा । चंडश्रीरिदमब्रवीत् ॥ ६ ॥ तव गेहं वसंत्या मे । मनःखेदोऽस्ति नाप्यणुः ॥

समीपे जनको यस्या । असि त्वं पक्षपातकृत् ॥ ७ ॥ मयि ताताशरण्यायां । पतितायां महापदि ॥
पुण्योदयमिवोन्मुच्य । त्वां कारुण्यं करोति कः ॥ ८ ॥ यदि त्वां नाग्रहीष्ये मां । पतंतीं गिरिशृंग-
तः ॥ अन्नविष्यं शृगालानां । योग्याहं मांसपिंमवत् ॥ ९ ॥ ततोऽभाणि मया वत्से । गुणैरेभिस्त्व-
दाकृतेः ॥ एभिश्च लक्षणैर्दुःखं । नार्यः पश्यंति जातु न ॥ १० ॥ तदेति पूर्वकर्मानु—भावसंजनि-
तं यदि ॥ तथापि न स्थिरं तिष्ठे—त्तत्प्रसादाद्विनश्यति ॥ ११ ॥ आश्वासिता मयेत्येषा । निर्नया
भवनांतरे ॥ भ्रमंती ददृशे यक्ष—वनिताभिः ससंभ्रमं ॥ १२ ॥ चंडश्रीरूपसौभाग्य—दर्शनादि-
सचेतसां ॥ विकल्पा बहवस्तासां । प्रबभूवुः परस्परं ॥ १३ ॥ शापभ्रष्टेव देवीयं । किं वा दानवसुंद-
री ॥ आनीता यक्षराजेन । विद्याधरवधूः किमु ॥ १४ ॥ केयं कस्य कथं चात्र । संप्राप्ता केन हे-
तुना ॥ अत्यद्भुतेन रूपेण । जगदानंददायिनी ॥ १५ ॥ निजरूपसमं रूपं । त्रैलोक्येऽप्यवलोकि-
तं ॥ न दृष्टं त्वनया क्वापि । कौतुकादागतेह तत् ॥ १६ ॥ गर्वितानां स्वरूपेण । सुरदैत्यादियोषि-
तां ॥ खर्वयंत्यथवा गर्वं । सर्वतो बंभ्रमीति किं ॥ १७ ॥ विकल्पाकुलमेवं तं । परिवारमहं निजं ॥
कोशीकृत्य करौ मूर्ध्नि । स्नेहेन प्रत्यभाषिषि ॥ १८ ॥ देवीव स्वामिनीवाथ । गुरुवज्जननीव वा ॥

निर्विशंकं ज्ञवतीभि—र्दृष्टव्येयं महासती ॥ १ए ॥ एषा हि वीरसेनस्य । प्रिया भार्या महीपतेः ॥ विद्याधरेण केनापि । वैरादपहृता सती ॥ २० ॥ शृंगे मलयशैलस्य । तेनानीय च पाप्मना ॥ बला- त्कारेण संज्ञोक्तुं । प्रारेन्ने शीलशालिनी २१ ॥ स्वस्य निर्मलशीलस्य । रक्षार्थं शिखरात्ततः ॥ आ- त्मा प्रपातयांचक्रे । निर्विशंकतयानया ॥ २२ ॥ आकृष्टेनेव पुण्येन । प्रतिगृह्य मया ततः ॥ इहा- नीतावधिज्ञान—ज्ञानवृत्तेन संमदात् ॥ २३ ॥ पवित्रदेहचरिता । धन्या पुण्यवती सती ॥ यत्रैषा वसति स्थानं । पवित्रं स्यात्तदप्यहो ॥ २४ ॥ ज्ञवेदखंडशीलो यो । जिनधर्मैकतत्परः ॥ आस्ताम न्यजनास्तां तु । नमस्यंति सुरा अपि ॥ २५ ॥ शीलमेवेह चारित्रं । तपोऽपि च गुणा अपि ॥ शीलं विना न चारित्रं । न तपो न गुणा अपि ॥ २६ ॥ तेषां विरतिहीनाना—मपि शीलं सुदु- र्लज्ञं ॥ पालयंस्तत्कथं वंद्यो । देवानामपि नो पुमान् ॥ २७ ॥ मणिरत्नमयानीह । नानालंकरणा- न्यपि ॥ सुप्रापाणि तु उःप्राप—मेकं शीलविभूषणं ॥ २ठ ॥ विभूषिताप्यलंकारैः । शीलालंकार- वर्जिता ॥ गौरिवाशुचिगृध्ना स्त्री । लोकमध्ये न शोज्ञते ॥ २ए ॥ देवतेवेति युष्माक—मेषा पू- ज्या सदा ननु ॥ गुणानां गुरुता यस्मा—त्पूजाहेतुर्ज्ञवेदिह ॥ ३० ॥ संपद्यमानसर्वेहा । चंद्रश्रीर्म-

त्प्रभावतः ॥ तस्थाविव निजे गेहे । [illegible]ता ॥ ३१ ॥ यथा यथैधते गर्भो । मन्यतेऽ-
सौ तथा तथा ॥ आनंदनिर्मितमिव । विश्वं गर्भानुभावतः ॥ ३२ ॥ चंद्रश्रीगर्भमाहात्म्य-संभवे भ-
वने मम ॥ संजज्ञिरे शुभा भावा । निमित्तशकुनैः समं ॥ ३३ ॥ प्रमोदो यदा दंपत्यो—र्निर्निमि-
त्तमवर्धत । भृत्यभावं तथा सर्वे । प्रपन्ना वैरिणोऽपि मे ॥ ३४ ॥ असाध्यमपि सिद्धं त—त्कार्यं य-
च्चिंतितं मया ॥ अकांडेऽपि प्रचंडोऽह—मभूवं वज्रिणोऽपि च ॥ ३५ ॥ इत्याद्या बहुधाभूवन् । शु
भा भावा मदालये ॥ चंद्रश्रीचारुगर्भस्य । प्रभावेण गरीयसा ॥ ३६ ॥ ततोऽभाणि मया पुत्रि ।
यदेषोऽभ्युदयो मम ॥ अभूतपूर्व एवाभू—त्तत्ते गर्भस्य वैभवं ॥ ३७ ॥ एतद्गुणानुभावेन । तर्क-
यामि तवोदरे ॥ महाप्रभावमुद्भूतं । गुरुसत्वं किमप्यहो ॥ ३८ ॥ सतेजोऽतिशयः कोऽपि । देहे ते
गर्भसंभवः ॥ अस्माकमपि नेत्राणां । दुर्धर्षो यः प्रवर्तते ॥ ३९ ॥ मयाभिनंदिता पुत्री । चंद्रश्री-
रिति भूरिशः ॥ पालयामास तं गर्भं । ततो हृष्टमनाः सती ॥ ४० ॥ कालक्रमेण पूर्णेषु । नवमासे-
षु सत्तमः ॥ प्रशस्ततिथिनक्षत्र—योगयुक्ते शुभे दिने ॥ ४१ ॥ उत्तरोत्तर वर्धिष्णुं । जगद्वंद्यां सु-
निर्मलां ॥ सुतां सा सुषुवे शुक्ल—द्वितीयेंदुकलामिव ॥ ४२ ॥ युग्मं ॥ तत्कालं दुंदुभेर्नादो । ब

भुवानाहतो दिवि ॥ पपात पुष्पवृष्टिश्चा—लक्ष्योऽभून्मंगलध्वनिः ॥ ४३ ॥ उल्ललास ततो हर्ष—स्तत्कालं सूतिकागृहे ॥ चंडश्रीपरिचर्यायै । स्थितानां यक्षयोषितां ॥ ४४ ॥ वर्धितोऽहं परीवार—जनेनागत्य संमदात ॥ परितुष्टो मनोहारि । वर्धापनमकारयं ॥ ४५ ॥ निवृत्ते सूतिकाकृत्ये । दृष्ट्वा तां कुलबालिकां ॥ सर्वलक्षणसंपूर्णा—मवदं राजवल्लभां ॥ ४६ ॥ हे चंडश्रीस्तवैवैषा—वतीर्णा पुत्रिकामिषात् ॥ पूर्वपुण्यपरिणतिः । प्रत्यक्षा नात्र संशयः ॥ ४७ ॥ जानेंगलक्षणैरेभिः । पुत्रि ज्ञानवलेन च ॥ भविष्यतीह पुत्र्येषा । विश्वकल्याणभाजनं ॥ ४८ ॥ संसारस्येव सारं ते । भूतलस्येव भूषणं ॥ त्रैलोक्यस्येव तिलकः । कन्यारत्नं बभूव भोः ॥ ४९ ॥ संभाव्यमीदृशै रत्नै—र्युष्मादृक्षाश्य एव वा ॥ रोहणाद्रेर्विना खानी । रत्नानां नापराचले ॥ ५० ॥ कार्यं कारणसदृक्षं । लोके भवति निश्चितं ॥ सहकारद्रुमान्निंब—फलं स्यान्नैव कर्हिचित् ॥ ५१ ॥ परिणेष्यति चैनां यो । राज्यं नूनं स भोक्ष्यते ॥ चतुःसमुद्रपर्यंतं । भूपालैर्लालितक्रमः ॥ ५२ ॥ इत्युदित्वा तदा रक्षां । मातृपुत्र्योर्विधाय च ॥ तद्योग्याहारसामग्रीं । स्थितः संपादयन्नहं ॥ ५३ ॥ अतिक्रांते ततो मासे । कृतकर्तव्यताविधिः ॥ महर्ध्यां वर्धितानंदो । नामधेयमहं व्यधां ॥ ५४ ॥ अस्या नास्त्यपरा कापि ।

भुवने सुंदरी कनी ॥ नाम्नेयं विदधे तेन । मया भुवनसुंदरी ॥ ५५ ॥ एवमेषा प्रतिदिनं । ववृधे मम वेश्मनि ॥ कल्पवल्लीव साश्चर्यं । सुरस्त्रीप्रतिलालिता ॥ ५६ ॥ परस्परं कराग्रेषु । गृह्यमाना सुरीजनैः ॥ राजहंसीव पद्मिन्याः । पद्मिनीं संचचार सा ॥ ५७ ॥ ववृधे सा गुफामध्ये । राजपुत्री यथा यथा ॥ तथा तथाभवन् यक्षा—स्त्यक्तवैराः परस्परं ॥ ५८ ॥ हृदीति न विधातव्यं । प्रभावाः स्युः स्त्रियः कथं ॥ किं न हंति तमश्चांद्री । वर्धमानकला निशि ॥ ५९ ॥ दूरादथ प्रणश्यंति । भुजंगाश्चाटवीभुवः ॥ यत्रास्ति नागदमनी । तनुरप्यौषधीवरा ॥ ६० ॥ चिक्रीड भवनोद्याने । परीता यक्षिणीजनैः ॥ क्रीडानदीषु रम्यासु । सा क्रीडासरसीषु च ॥ ६१ ॥ क्रीडानदीषु मसृण—पुलिने वालुकाकृतैः ॥ रेमे जिनेंद्रभुवनैः । सा शुद्धहृदया सदा ॥ ६२ ॥ स्वगृहे च भुवन—मध्ये संस्थाप्य सा जिनं ॥ आनर्चोज्ज्वलनेपथ्या । कुसुमैर्धर्मवांछया ॥ ६३ ॥ विभूषणैर्विभूष्याथ । कदाचित्केलिपुत्रिकाः ॥ पादेषु जिनचंद्राणां । पातयामास सुंदरी ॥ ६४ ॥ एवं निसर्गसम्यक्त्व—परिणामापि बालिका ॥ केलीर्निर्जनयामास । वृद्धानां धर्मशासनां ॥ ६५ ॥ विज्ञानविषयं दृष्टं । श्रुतं वा किंचनापि यत ॥ तयाग्राहि च तत्सर्व—मुपदेशं विनापि हि ॥ ६६ ॥ दिशो दर्शनमात्रायो—पाध्यायाः

प्रतिभावतां ॥ रवेर्दर्शनमात्रेण । विकसंत्यंबुजानि यत ॥ ६७ ॥ प्रपेदे साथ तारुण्यं । लोचनानं
ददायकं ॥ ससुरासुरलोकस्य । लोभनीयगुणोज्ज्वलं ॥ ६८ ॥ वसंतं वनराजीव । पद्मिनीव शरत्स-
रः ॥ यौवनं प्राप्य सा रेजे । सर्वांगे सुंदराकृतिः ॥ ६९ ॥ मोहनं विश्वनेत्राणां । धर्मस्य द्वेषणो
पमं ॥ उच्चाटनं जिताक्षाणां । वशीकरणवन्नृणां ॥ ७० ॥ स्तंभनं रम्यतायाश्च । बाल्यचेष्टनशांति-
कं ॥ तारुण्यं तरलेक्षणाक्ष्यां । तस्यां लब्धपदं बभौ ॥ ७१ ॥ युग्मं ॥ अन्यदा वीक्ष्य चंडश्रीः । पु-
त्रीं तां प्राप्तयौवनां ॥ धर्मानुष्टानबुद्ध्या मां । व्यजिज्ञपन्नृपात्मजा ॥ ७२ ॥ इह तात भवांभोधौ ।
मानुष्यं प्राप्य दुर्लभं ॥ आत्महितं हि कर्तव्यं । सर्वारंभेण धीमता ॥ ७३ ॥ धर्मं विना भवेत्तन्न ।
लोकेऽत्र परमार्थतः ॥ धर्म एवोद्धरेज्जीवं । धर्मावस्थासु यत्कृतं ॥ ७४ ॥ निधानमिव निःस्वानां ।
दुःखिनामिव बांधवः ॥ रोगिणामिव वैद्योऽयं । धर्मः परमसौख्यदः ॥ ७५ ॥ बहूक्तेन सृतं तात । त
त्किं यन्नास्ति धर्मतः ॥ उत्तरोत्तरकल्याणं । पारंपर्यकृदप्ययं ॥ ७६ ॥ प्राग्यथेक्षुरसः क्वाथो । गुडो
भवति पिंडितः ॥ स एव खंडतां याति । शर्करात्वं ततोऽपि वा ॥ ७७ ॥ नरविद्याधरामर्त्या—सं-
ख्यसौख्यस्य कारणं ॥ एवं स्याज्जिनधर्मोऽपि । क्रमेणानंतसौख्यदः ॥ ७८ ॥ अनुज्ञाता ततस्तात ।

युष्माभिर्धर्मकर्मणि ॥ प्रवर्तेऽहं नवोद्विग्ना । संप्रत्येकाग्रमानसा ॥ ७९ ॥ दौहित्री तु तवैवैषा । चिं-
तनीया त्वयैव हि ॥ कस्यापि राजपुत्रस्य । दातव्या योग्यताभृतः ॥ ८० ॥ निगदंतीति सुंदर्यां ।
जगदे जननी निजा ॥ एतदेवांब कृत्यं ते । कर्तव्यमविलंबितं ॥ ८१ ॥ त्वत्पादनखचंद्राणा—मं-
शुमाला न किं धृताः ॥ शेषा इव सपत्नीभिः । प्रणामसमये पुरा ॥ ८२ ॥ पर्यभ्रामि न किं वैरी
—वनिताभिस्तवाग्रतः ॥ एकाग्रचित्तनेत्राभि—र्दृष्टिमार्गानुसारतः ॥ ८३ ॥ चराचराणि नो चेलुः ।
प्रचलंत्यां जगंति किं ॥ स्थितायां त्वयि नो तस्थुः । किंत्वलीनानि तानि च ॥ ८४ ॥ एतावदपि ते
सर्वं । वैभवं क्षयमागतं ॥ इदानीं सुंदरीव त्व—मेका तिष्ठसि रंध्रगा ॥ ८५ ॥ व्यामोहमंब माका-
र्षीः । का वाहं त्वं तु का कथा ॥ अपूर्वः किमु ते मातः । संसारो नाटकोपमः ॥ ८६ ॥ अपाया-
स्तव सर्वेऽपि । यौवनेन समं गताः ॥ सर्वातंकविमुक्ता त्व—मिदानीं धर्ममाचर ॥ ८७ ॥ जल्पं ।-
मिति तां माता । शिरश्चुंबनपूर्वकं ॥ वत्साए पुत्रि पुत्री त्वं । हितं प्रकटितं त्वया ॥ ८८ ॥ विवेक
ईदृशः कस्य । प्रगल्भानि वचांसि वा ॥ कार्यस्य निश्चयश्चापि । त्वां विनान्यस्य हे सुते ॥ ८९ ॥
ततस्तद्विषयेऽभूवं । निश्चिंता पुत्रि सर्वथा ॥ भविष्यतीति मत्वा त्वं । सुखिनीह परत्र च ॥ ९० ॥

प्रोचे मयाथ चंडश्रीः । स्नेहगद्गदया गिरा ॥ सेवमानां प्रव्रज्यां हि । कथं त्वां वारयाम्यहं ॥ ए१ ॥
वत्से भुवनसुंदर्यो । ज्ञानान्यालंबनानि मे ॥ चित्तस्थितानि जल्पंत्या । परमार्थमिहाधुना ॥ ए२ ॥
परिभाव्य परं वत्से । मद्वचोत्तानननिश्चितं ॥ निर्विकल्पा प्रवर्तस्व । धर्मकर्मणि संप्रति ॥ ए३ ॥ इ-
तश्चादूरदेशेऽस्ति । तापसानां तपोवनं ॥ वल्गुनामा कुलपति—र्मन्मित्रं तत्र वर्तते ॥ ए४ ॥ तस्या-
श्रमे शुभ्रे तिष्ट । धर्मानुष्टानतत्परा ॥ तपःशोषितकर्मा त्वं । तापसीवेषधारिणी ॥ ए५ ॥ वीरसे-
नमुनीशोऽपि । स्थितायामेष्यति त्वयि ॥ कार्याणीह भविष्यंति । सुंदराण्यपराण्यपि ॥ ए६ ॥ युव-
योर्दर्शनप्रीति—र्मातृपुत्र्योर्भविष्यति ॥ एषापि लप्स्यते विश्व—दुर्लभं ते पतिं सुता ॥ ए७ ॥
मणिस्फटिकरत्नाश्म—मयं चास्ति वनावृतं ॥ श्रीचंडप्रभदेवस्य । भवनं कारितं मया ॥ ए८ ॥ य-
तमाने जिनार्चादौ । युवां भोस्तत्र नित्यशः ॥ निजनिःशेषदुःकर्म—निर्घातार्थं च तिष्टतः ॥ एए ॥
चंद्रश्रियानुमेनेऽथो । मदीयं वचनं ततः ॥ वीरसेनमुनीशस्य । दर्शनोत्सववांछया ॥ १०० ॥ ततो-
ऽन्यदिवसे शस्त । आपृच्छ्य वटवासिनः ॥ निःससार मया सार्धं । सपुत्री वीरवल्लभा ॥ १ ॥ तपो-
वनं गता देवी । ददर्श जिनमंदिरं ॥ विकस्वरांबुजां वापी—मुद्यानं च मनोरमं ॥ २ ॥ ततोऽस्या-

भिर्महाभक्त्या । समस्तैरपि पूजितः ॥ विधिना वंदितो देवः । स्तुतश्च स्तवनैर्भृशं ॥ ३ ॥ ततस्त-
पोवनं गत्वा । चंद्रश्रीः सा समर्पिता ॥ वल्गुनाम्नः कुलपतेः । संभाष्य स्नेहतो मया ॥ ४ ॥ प्रति-
पाद्य कुलाचार्य—स्तामाहस्म तपोरतां ॥ मत्समीपोऽजे तिष्ठ । स्वधर्मकर्म कुर्वती ॥ ५ ॥ त्रसस्था-
वरजीवानां । रक्षां विदधती ततः ॥ ध्यानाध्ययनसक्ता सा । तस्थौ तत्रोटजे सती ॥ ६ ॥ त्रिसंध्यं
वंदते देवा—नागत्यात्र जिनालये ॥ प्रासुकं यन्मुनिस्नान—कृते पिबति तज्जलं ॥ ७ ॥ आत्मा-
र्थं तापसैः पक्वं । नीवारादिकमोदनं ॥ प्रासुकं परिपाकाच्च । भुंक्ते रंभाफलादिकं ॥ ८ ॥ सेषा कुमार
चंद्रश्री—राश्रिता भावसाधुतां ॥ तपांसि तपते बाढं । वांछती गुरुसंगमं ॥ ९ ॥ चंद्रश्रियस्तनूजा
या । सैषा भुवनसुंदरी ॥ प्रत्यहं पूजयत्यत्र । चंद्रप्रभजिनेश्वरं ॥ १० ॥ चारणर्षिमुखाद्धर्मं । शृणोति
मन्मुखादपि ॥ साक्षाल्लक्ष्मीः सुतैषा मे । वसंती भवने सदा ॥ ११ ॥ अनुरूपवराकांक्षा—प्रेरितोऽ
स्या महीतले ॥ बंभ्रमीमि च सर्वत्र । कुमार मधुराकृते ॥ १२ ॥ क्षीयंते त्रीणि वस्तूनि । वर्धतेऽसौ
यथा यथा ॥ मनो मे मध्यदेशोऽस्या । युवानश्च सुरासुराः ॥ १३ ॥ जनकस्य सुता नाम । महा-
दंडो ह्यदोषजः ॥ अपि पूर्णधना नाना—सुतार्थित्वं तनोति यत ॥ १४ ॥ यस्मै दत्ता निजा पुत्री ।

तस्याल्पस्यापि दुर्वचः ॥ महानपि पिता सर्वं । सहते नतमस्तकः ॥ १५ ॥ सुगुणापि सुजातिश्च ।
ज्ञानविज्ञानवत्यपि ॥ परस्य स्यात्सुता नूनं । माला मालाकृतो यथा ॥ १६ ॥ स्वांगोत्पन्नापि सन्ना-
या—स्कंधांतमपि वर्धिता ॥ सुता चूतस्य शाखेव । स्यादन्यस्य फलदायिनी ॥ १७ ॥ कियद्वेति सुता
यस्य । स एवाशेषदुःखभूः ॥ नयेन ददृशे दुःखं । स सूतां कौतुकात्सुतां ॥ १८ ॥ एतदर्थं मया
सर्वं । भ्रामं भ्रामं महीतलं ॥ निरीक्षांचक्रिरे तत्र । बहवो राजसूनवः ॥ १९ ॥ आगत्य च कथं ते-
षा—मस्याः गुणकुलादिकं ॥ अदर्शयमहं रूपं । समालिख्य पटे तथा ॥ २० ॥ कुमारकोटिसंकी-
र्णे—ऽप्येतावति जगत्यहो ॥ स कोऽपि नास्ति योऽह्लादं । करोत्यस्या यदि ध्रुवं ॥ २१ ॥ गतोऽ-
थ पुर्ययोध्यायां । भ्रमंस्तीर्थनिनंसया ॥ शक्रावतारतीर्थे त्वा—मपश्यं निश्यहं तदा ॥ २२ ॥ देव-
कुमार इत्येष । मेने प्राग्दर्शनात्ततः ॥ पश्चादक्षिनिमेषाद्यै—र्निश्चिक्येऽहं कथंचन ॥ २३ ॥ जिन-
स्तवनमस्कार—सुपर्वावर्जनादिकं ॥ आसनं हारदानं चा—मिततेजःप्रसादनं ॥ २४ ॥ सर्वं विलो-
कितं तत्र । परीक्षार्थं ततो मया ॥ खर्परकपालदंभेन । संग्रामोऽपि तवेक्षितः ॥ २५ ॥ भीमं क्षेत्र-
पते रूपं । विचक्रे तत्तदा नृप ॥ दृश्यते येन दृष्टेन । कृतांतोऽप्यत्र निश्चितं ॥ २६ ॥ निस्त्रिंशपा-

णिघातात्ते । विश्रस्तं संधिबंधनं ॥ मम देहे तथा वीर । दृढं जातं चिराद्यथा ॥ २७ ॥ पराक्रमो ग-
रीयांस्ते । स कोऽपि हरिविक्रम ॥ युद्धे येनाभवं शस्त्रं । देवदर्पापहोऽपि सन् ॥ २८ ॥ विधृत्य त्व-
वता पादे । भ्रमितोऽहं तथा तदा ॥ यथाद्यापि ममाभाति । विश्वं भ्राम्यदिवाजय ॥ २९ ॥ एतत्स्व-
रूपमखिलं । यथावस्थं मयापि ते ॥ अस्या भुवनसुंदर्याः । कथितं रागकारणं ॥ ३० ॥ कथं ते स-
दृशं रूपं । लिखितुं शक्यते पटे ॥ यदाम्नायं विधातापि । कथंचन विनिर्ममे ॥ ३१ ॥ त्रिविष्टपेऽ-
प्यपूर्वं य—द्रूपं तद् दृष्टमेकशः ॥ धर्तुं न शक्यते चित्ते । धृतं वालिख्यते कथं ॥ ३२ ॥ आलि-
ख्याकारमात्रं त—त्तथापि निजशक्तितः ॥ रूपं चित्रपटे पुत्र्या । विस्मितायाः मयार्पितं ॥ ३३ ॥ त-
तस्तद्रूपवीक्षातो । विस्मयस्मेरलोचना ॥ परावर्तितचित्तेव । बाला विकृतिधीरभूत् ॥ ३४ ॥ कर्तव्ये
हृदये स्वप्ने । सत्कथायां मनोरथे ॥ आलापे ध्यानमार्गेऽपि । सर्वत्रास्यास्त्वमेव हि ॥ ३५ ॥ हरि-
विक्रम रूपेण । विजितस्तव मत्सरात् ॥ त्वयि प्रसक्तचित्तेति । हंति मां पंचसायकः ॥ ३६ ॥ उत्कं-
ठाकृतहुंकाराः । कंठेऽस्याः प्रसरंति च ॥ पंचमस्य स्वरोद्गारा । इव कामस्य दीपिकाः ॥ ३७ ॥ संक-
ल्पितप्रियाश्लेष—हल्लेखोल्लासिमानसा ॥ खिद्यते मुक्तनिःश्वासा । न पश्यंती पुरः प्रियं ॥ ३८ ॥ द-

यितेन वियुक्तायां । रथांगयामश्रुपुरितं ॥ क्षिपति स्नेहभावेन । समदुःखेयमीक्षणं ॥ ३९ ॥ त्वां स
मालिख्य सर्वांग—सुंदरं चित्रभूमिषु ॥ आत्मानं तव पादेषु । पतंतं लेलिखीति सा ॥ ४० ॥ दे-
वानां दानवानां च । सूचयत्युपयाचितं ॥ तवैषा दुर्लभा लोके । प्रत्याशाप्रेरिता सती ॥ ४१ ॥ य-
था यथेप्सितं चापि । न भवेत्तव दर्शनं ॥ तथा तथाधिकं चित्ते । सुंदर्या दुःखमेधते ॥ ४२ ॥ तव
दुस्सहविरहा—त्सलिलस्येव मत्स्यिका ॥ नलिनीदलपल्यंके । धत्तेऽसौ तप्तवेल्लिकां ॥ ४३ ॥ तव
दर्शनदुःस्थाया—स्तथास्या दुःखमेधितं ॥ अथासन् ज्ञाततत्वाया । यथा मृत्युमनोरथाः ॥ ४४ ॥
दृष्ट्वेमां मरणावस्था—मनुरक्तां सुतां त्वयि ॥ तद्दुःखदुःखितावादी—त्प्रति मां दयिता मम ॥ ४५ ॥
उपेक्षसे कथं नाथ । पुत्रीं भुवनसुंदरीं ॥ यतः परिजनेनास्याः । कथिता मे विपद्गुरुः ॥ ४६ ॥
प्रतिबिंबं यदा हारि—विक्रमं ददृशेऽनया ॥ तदाप्रभृति संलीना । दुःखश्रेणिरिह प्रभा ॥ ४७ ॥ सु-
खदोऽपि प्रियोऽप्राप्त । एधते दुःखमीप्सितं ॥ अप्राप्यमानमंभोऽति—शीतलं स तृषां यथा ॥ ४८ ॥
सर्वथा तत्प्रवर्तस्व । सुतादुःखोपशांतये ॥ मा भवत्त्वहितं दैव—योगात्प्रियतमान्यथा ॥ ४९ ॥ त-
तोऽहं तद्वचो जात—कंपोद्वेगभयाकुलः ॥ किंकर्तव्यतया मूढ—श्चिंतारत्नाकरेऽपतं ॥ ५० ॥ तत्किं

करोम्युपायो वा । कः कार्ये दुःकरे भवेत ॥ आः किमापतितं तन्नो । गृह्णतां मुंचतां न यत ॥ ५१ ॥ कैषास्ति मलयारण्ये । दूरस्थे मानुषोझिते ॥ अयोध्यायां वसन्नस्ति । दूरे क हरिविक्रमः ॥ ५२ ॥ सोऽस्या न नाम न रूपं । न स्थानं न कुलं गुणान् ॥ न जानातीदृशं नैवा—नुरागं मरणांतिकं ॥ ५३ ॥ जातानुरागमन्योन्यं । मिथुनं योज्यते सुखं ॥ अयोऽप्युभयसंतप्तं । संघटेतात्र नान्यथा ॥ ५४ ॥ दूरस्थावप्यदूरे तौ । ययोः स्नेहः परस्परं ॥ दूराद् दूरतरौ ज्ञेयौ । निःस्नेहावप्यदूरगौ ॥ ५५ ॥ योजनानां सहस्राणि । विना प्रेमपदांतरं ॥ अनुरागवतां पुंसां । लंकापि स्याद्गृहांगणं ॥ ५६ ॥ दूरस्थोऽप्यब्जिनीनाथो । विकासयति पद्मिनीं ॥ एकस्थानस्थितमपि । कर्ण पश्यति नेक्षणं ॥ ५७ ॥ श्यद्दूरात्कथंकारं । दृष्टसारं हरामि तं ॥ ह्रियमाणोऽथ सर्व स । स्थापयिष्यति संशये ॥ ५८ ॥ चिं-तयन्निति निशम्य—हं यावद्धरिविक्रम ॥ मलयागमनं ताव—त्कथितं ते चरैर्मम ॥ ५९ ॥ ततस्त-पोवनं गत्वा । परिज्ञातत्वदागमः ॥ वल्गुचंद्रश्रियोः सर्वा । पुत्रीचेष्टामभाषिषि ॥ ६० ॥ ताभ्यां च ज्ञातवृत्ताभ्या—महमेवमभाषिषि ॥ यद्राज कुमारं त—मानयात्र कथंचन ॥ ६१ ॥ ततोऽहं त्वद्ध-योज्ञांतो । गतस्ते कटकं निशि ॥ जहार च प्रसुप्तं त्वां । निधानमिव तस्करः ॥ ६२ ॥ तदुपायां

स्तरणे मुक्त्वा । कोमले निकषाश्रमं ॥ कुमार त्वां स्थितो दूरा—द्वनवृक्षैस्तिरोहितः ॥ ६३ ॥ कथं चिदपनिंडोऽय—मिह मां गुरुविक्रमः ॥ दृष्टा ततो न मे मोक्ष । इत्यालोच्य पलायितः ॥ ६४ ॥ संप्राप्तेन निजावासं । सुंदर्याः कथितं मया ॥ मलयागमनं तेऽत्रा—नयनं च प्रमोदकृत ॥ ६५ ॥ विरहानलदग्धा सा । तवागमनवार्तया ॥ वर्षाभिर्भूरिवाग्रीष्म—तप्ता रोमांचिताभवत् ॥ ६६ ॥ प्रम्लानतनुनालैपा । शुष्यद्वदनपंकजा । सा जीविता तवोदंता—त्पद्मिनी जीवितादिव ॥ ६७ ॥ एकानंदमयं विश्वं । मन्यमाना तवागमात् ॥ जनन्याकारिता बाला । जगामैषा जिनालयं ॥ ६८ ॥ मयेयं गुणरत्नाढ्या । कुमार सुपयोधरा ॥ कल्पवल्लीव भूमीव । कामगौरिव ते ददौ ॥ ६९ ॥ इदंतः प्रसृतानंदो—ऽपि यद्ववचनादनु ॥ कुमारो निजधीरत्वा—द्रागचिह्नान्यधुक्षत ॥ ७० ॥ रक्तानां च विरक्तानां । महतामेकरूपता ॥ स्ताघं जानाति कोंभोधे—र्बुध्यातिनिपुणोऽपि हि ॥ ७१ ॥ दध्याविति कुमारोऽत्र—यत्कार्यं दुःकरं मम ॥ गुरुदेवप्रसादेन । तत्सिद्धमिव भाति मे ॥ ७२ ॥ मनोरथेऽपि यल्लाभे । सुरेंद्राणां स्फुरेन्न हि ॥ अप्रयत्नेन संपन्ना । सा मे भुवनसुंदरी ॥ ७३ ॥ ममास्ति पूर्वजननो—पार्जितं सुकृतं ननु ॥ तेनैषा घटिता या न । संघटेतापि वज्रिणः ॥ ७४ ॥ द्वीपांतरेऽ-

प्यरण्येऽपि । पुरे देशांतरेऽपि वा ॥ अनुकूलो विधिर्नूनं । संयोजयति दुर्घटं ॥ ७५ ॥ किंतु तात महामंत्रि-पुरो यज्जल्पितं मया ॥ युवतीरत्नलाभेन । तत्कालांतरितं भवेत् ॥ ७६ ॥ विजेतव्योऽस्ति सोऽलंघ्य—दुर्गो वैरी महाबलः ॥ बलेन तस्य देवस्य । यो मे सैन्यानि लुंपति ॥ ७७ ॥ तत्किं करोमि युगप—त्कार्ये मे द्वे उपस्थिते ॥ गुरुणी अपि द्वे वापि । कर्तव्ये सुधियादृते ॥ ७८ ॥ यद्येतां दुर्लभामत्र । कन्यां परिणयाम्यहं ॥ ततो विषयलांपट्य—दोषोत्थं मेऽयशो भवेत् ॥ ७९ ॥ अन्यच्च तातपादाज्ञा—भंगोत्थो दोष एधते ॥ असमर्था जयेऽरीणा-मिति स्फुरदकीर्तयः ॥ ८० ॥ ममैषा पूर्वपुण्येन । सत्यं संपादिता यदि ॥ चिरेणापि ममैवैषा । तत्किं भूरिविकल्पनैः ॥ ८१ ॥ तातादिष्टं ततः कार्यं । करिष्याम्यहमुद्यमं ॥ चिंतयिष्यामि सिद्धेऽस्मिन् । सर्वं पश्चाद्यथोचितं ॥ ८२ ॥ ध्यात्वेति जगदे यक्षो—ऽजितविक्रमसूनुना ॥ युष्मदावरणं सत्रं । ममैव हृदयंगमं ॥ ८३ ॥ कुर्वतां परकार्याणि । स्वकार्येऽनादरः सतां ॥ धवलीकुरुते विश्वं । न कलंकं निजं शशी ॥ ८४ ॥ किंतु मे हृदयं यक्ष । वर्ततेऽन्यत्र सादरं ॥ प्रवर्तते न वः कार्ये । बहुधाप्यनुकूलिते ॥ ८५ ॥ ततो यक्षोऽब्रवीदेवं । माजल्पीर्निष्ठुरं वचः ॥ श्रुतेनानेन वचसा । हताशा म्रियते सुता ॥ ८६ ॥ कुमा-

रेण ततोऽन्नाणि । सदा एतद्विसृज्यतां ॥ एकांते ते यतः सर्वं । कथयामि हृदि स्थितं ॥ ८७ ॥ परि-
ग्रहस्ततः सर्वो । निर्गत्य जिनमंदिरात् ॥ विछायवदनो यक्ष—भवनं तत्क्षणाद्ययौ ॥ ८८ ॥ तदा
तां श्रोतुकामाया । गेहस्थायाः सखीजनः ॥ निःश्वासैरवदत्तस्या । हृद्दुःखमवदन्नपि ॥ ८९ ॥ तथा-
रूपं जनं दृष्ट्वा । प्रावदत्सुंदरी कनी ॥ यूयं सर्वेऽपि संतापं । कुरुध्वं केन हेतुना ॥ ९० ॥ जगदे
परिवारेण । कुमारोक्तं जुघुक्षता ॥ दूरं यास्यंति संतापाः । स्वामिन्या नस्त्वया द्रुतं ॥ ९१ ॥ भ-
विता त्वत्प्रसादेना—स्माकं सुस्थितचेतसां ॥ नैव सुंदरि दुःखं । संतापः क तदुद्भवः ॥ ९२ ॥ चे-
ष्टाविरुद्धवचनं । श्रुत्वा तेषां सभासदां ॥ साशंका सा समुत्तस्था—वाप्तालीभिः परिवृता ॥ ९३ ॥
गत्वा वासगृहस्यांतः । शंकाशंकुसमाकुला ॥ परमार्थमजानाना । पप्रच्छ स्नेहला सखीः ॥ ९४ ॥
एषा पततु मा दुःख—वारिधाविति सुंदरी ॥ अलीकोत्तरदानेन । ताभिराश्वासिता भृशं ॥ ९५ ॥
ततः कूटोत्तरोत्पन्ना—धिकमन्यदचिंतयत ॥ वेदितुं परमार्थं सा । तदोपायाननेकशः ॥ ९६ ॥ त्य-
क्त्वा वासगृहं बाला । ययावन्यत्र वेश्मनि ॥ पप्रच्छापरदासेषु । दासं किंचिदसंस्तुतं ॥ ९७ ॥ एको
यक्षसुरस्तस्याः । पृच्छाहेतुं विदन्नपि ॥ हरिविक्रमवक्त्रोक्तं । यथा श्रुतमथावदत् ॥ ९८ ॥ तन्निश्च-

तुं पुनः पृष्टः । सुरोऽन्योऽथ जगाद तां ॥ मुग्धे प्रलपसि त्वं किं । सोऽन्यत्रासक्तमानसः ॥ ९९ ॥
ततोऽसौ वचसा तेन । हृदि संजातनिश्चया ॥ पपात सहसा भूमौ । मूर्छामुकुलितेक्षणा ॥ ३०० ॥
हृदयोपरि मुक्तेन । बभौ सैकेन पाणिना ॥ स्फुटप्रियवियोगेन । धारयंती बहून्निजं ॥ १ ॥ तां वि-
लोक्य तथावस्थां । कृतहाहारवस्तदा ॥ आजगाम रथोदास—स्तत्र सर्वसखीजनः ॥ २ ॥ हरिचंद-
ननीरेण । सार्धं व्यजनवायुना ॥ अभ्यषिंचत्सखी काचि—त्तामश्रूणि विमुंचती ॥ ३ ॥ उत्पाट्य
च निजोत्संगे । स्थापयामास कापि तां ॥ बबंध केशपाशं च । लुठंतं कापि भूतले ॥ ४ ॥ शिरः
संवाहयामास । काचिद्बाहुलतां तथा ॥ स्वस्य पाणितलेनोच्चैः । काचित्पादतलं पुनः ॥ ५ ॥ क-
थंचिल्लब्ध चैतन्या । शिशिरोपक्रमैर्भृशं ॥ सखीभिर्वक्तुमारेभे । पुनर्भुवनसुंदरी ॥ ६ ॥ कथयास्मा-
कमार्तानां । सुंदरि त्वं दुनोषि किं ॥ आश्वासय सखीवर्ग—मेनं वचनदानतः ॥ ७ ॥ उन्मील्य
चक्षुषी किंचि—त्ततोऽसौ स्मृतवल्लभा ॥ ताडयामास भालं स्वं । निःश्वसंत्यात्मपाणिना ॥ ८ ॥ वि
लपंत्यतिदुःखेन । बाला सा करुणस्वरं ॥ निजं दैवमुपालेभे । प्राणप्रियवियोगदं ॥ ९ ॥ हाहा
हताश रे दैव । कथमीदृक्कृतं त्वया ॥ पाणौ निधानमारोप्य । कथं जह्रे हुतं पुनः ॥ १० ॥ ह-

रिविक्रम येऽपि स्यु—रलापा दुर्जनस्य न ॥ कथं ते सुजनस्यापि । निर्ययुर्निष्ठुरास्तव ॥ ११ ॥
असदृग्योगसंभूतं । मन्ये लग्नं तवायशः ॥ कुर्वाणस्य प्रियायोगं । तच्चाभूदधिकं विधेः ॥ १२ ॥ य-
द्यभूवमनिष्टाहं । प्रियेणाऽढ़्किता कथं ॥ मृतायां मयि दुःखं ना—भविष्यत्त्यागसंभवं ॥ १३ ॥ अ-
निष्टा यद्यहं तेऽस्मि । तथाप्यंगीकुरुष्व मां ॥ सत्तामात्रेण ते मन्ये । कृतार्थं स्वं महौजसः ॥ १४ ॥
अंतःपुरे धनेऽपीष्टा । भवेदेकाथवोभयी ॥ एवं न वेत्ति को राज्ञां । चेष्टितं किल भूतले ॥ १५ ॥
स्वामिन् समस्तलोकस्य । जातोऽस्यानंदहेतवे ॥ कथं मे त्वनुरक्तायै । दुःखभारं प्रयच्छसि ॥ १६ ॥
प्रलपंतीति सा बाला । रुदंती करुणस्वरं ॥ निःशेषं रोदयांचक्रे । यक्षराजपरिच्छदं ॥ १७ ॥ इतश्च
यक्षभार्यागा—त्सहसा जिनमंदिरात् ॥ सदुःखा तत्र बह्वीभिः । सखीभिः परिवारिता ॥ १८ ॥ वि-
लपंतीं ततो बाढं । दृष्ट्वा भुवनसुंदरीं ॥ सदुःखा यक्षभार्यापि । समुपेत्येदमब्रवीत् ॥ १९ ॥ न के-
वलं प्रियोऽगात्ते । वत्से रोदिषि किं मुधा ॥ तव तातोऽपि नो जाने । सह तेन गतः क्वचित ॥ २० ॥
सोऽस्ति वत्से स्वसामर्थ्य—तृणीकृतसुरासुरः ॥ शंकते हृदयं मेऽतो । न जाने किं भविष्यति ॥ २१ ॥
परीक्षार्थं सहानेन । युध्यमानस्य यत्पुरा ॥ यक्षस्याभूदयोध्यायां । तत्स्मृत्वा कंपतेऽद्य हृत् ॥ २२ ॥

श्रुत्वा तद्वचनं क्रूरि—दुःखभारासहेव सा ॥ पपात पुनरेवोर्व्यां । मूर्छाछादितचेतना ॥ २३ ॥ यत्न लोकैर्बहूपायैः । पुनरानीतचेतना ॥ यक्षेशमाह्वयंतीव । मुक्तकंठं रुरोद सा ॥ २४ ॥ हा तात विश्ववात्सल्य । परदुःखैकदुःखिनः ॥ एवं परिजनं मुक्त्वा । गतोऽसि त्वं क्व संप्रति ॥ २५ ॥ अधन्याया अपुण्यायाः । कारणेन कथं मम ॥ आत्मानं विश्वकल्पद्रुं । संशये स्थापयस्त्वलं ॥ २६ ॥ उत्पद्यंते विलीयंते । कृमिवन्मादृशा घनाः ॥ विश्वोपकारिणस्तात । दुर्लभास्त्वादृशाः पुनः ॥ २७ ॥ सुप्रसारितबाहुभ्यां । दूरादाघ्राय मूर्धनि ॥ उत्संगेऽत्र विना त्वां क—स्तात मां स्थापयिष्यति ॥ २८ ॥ कः कर्ता मे प्रियं तात । लालयिष्यति मां च कः ॥ मद्दुःखदुःखितः कोऽत्र । भविता त्वामृते पितः ॥ २९ ॥ इत्यनेकप्रलापायाः । कुमार्याः प्रियताततयोः ॥ दुःखेनोभययोर्जीव—लोको दुःखमयोऽभवत ॥ ३० ॥ सुतायास्तादृशीं श्रुत्वा । पारंपर्येण दुर्दशां ॥ चंद्रश्रीः करुणापूर्ण—हृदया तत्र चागमत ॥ ३१ ॥ कृताभ्युत्थानया पुत्र्या । प्रणतासनसंस्थिता ॥ धीरयंती सुतां माता । जगादाथ प्रियंवदा ॥ ३२ ॥ खेदं त्वं पुत्रि माकार्षी—स्तातार्थे किंचनापि यत ॥ नाकालमृत्युजं देवाः । प्राप्नुवंति पराभवं ॥ ३३ ॥ जाने तस्मिन् कुमारोऽपि । शत्रुत्वं न करोति वै ॥ तातेन न यतः कोऽपि ।

नोपकारिणि शत्रुत्वं ।
कृतस्तस्यापकारकः ॥ ३४ ॥ किंतु त्वां ददता तस्य । तातेनोपकृतं खलु ॥ ज्ञविष्यति च तातोऽपि
प्रकाशयति सज्जनः ॥ ३५ ॥ तत्कारणेन केनापि । कुमारेण समं गतः ॥ विषमिश्रसुधातु·
। शंकां त्वं तत्र माकृथाः ॥ ३६ ॥ दयितार्थेऽपि शोकं न । कर्तुमर्हसि सुंदरि ॥ विपरीतः पुनर्ज्ञेयो ।
ल्यः । सुखदुःखमयः प्रियः ॥ ३७ ॥ गुणवाननुरागी वा । संयुक्तश्च सुधासमः ॥ प्रकृत्या दुःखदास्ते तु ।
दयितः कालकूटवत् ॥ ३८ ॥ कांक्षते विषयेभ्यो हि ॥ प्रियसंगोऽथ नंदनि ॥ को नाम विषयासक्तः ।
सुखं वै वासनाकृतं ॥ ३९ ॥ प्रारंभे विषया मिष्टाः । परिणामेऽतिदारुणाः ॥ संसारे दुःखमेवास्ति ।
सुखी दृष्टोऽत्र सुंदरि ॥ ४० ॥ सम्यग्ज्ञानेन चित्ते स्वे । परिभावय सुंदरि ॥ मधुरेणाप्यसंपद्य—
सुखं किंचिन्न तत्वतः ॥ ४१ ॥ यदि नेच्छति स त्वां त—त्तन्निर्बंधेन तेऽपि किं ॥ विरक्ते तु परायत्ते । दे·
मानेनात्रामृतेन किं ॥ ४२ ॥ अनुरक्ते निजायत्ते । निर्धनेऽप्यनुरज्यतां ॥ अन्यं तथाविधं किंचि
वेंडेऽप्यनुरज्य मा ॥ ४३ ॥ वत्से वारय निःस्नेहाद् । हृदयं हरिविक्रमात ॥ राजपुत्री जगादेति ।
—द्वरं ते वरिता पिता ॥ ४४ ॥ ततश्चंडश्रियो वाक्यं । श्रुत्वा तप्तत्रपूपमं ॥ प्रियंकराप्यनिष्टासि ।
द्विगुणीकृतदुःखधीः ॥ ४५ ॥ मातस्त्वं सविवेकापि । तत्वज्ञा चतुरापि च ॥

जल्पंनीति ममाधुना ॥ ४६ ॥ सतां कुलवधूनां च । हृदस्येव पतत्रिणः ॥ गतिरेकैव सा नूनं । य-
त्रासक्तं परं मनः ॥ ४७ ॥ अनलो वाऽनिलो वापि । ममांगं हरिविक्रमः ॥ अंब स्पृशति नान्य-
स्तु । यावज्जीवं नरो ध्रुवं ॥ ४८ ॥ विवाहोऽत्र कुलीनानां । भवेच्चित्तानुरागजः ॥ पाणिग्रहादिकं
यच्च । तत्सर्वं ज्ञापनं जनैः ॥ ४९ ॥ सोऽनुरागोंब मे जात—स्तस्मिन्नाजितविक्रमौ ॥ अन्यत्र क्रि-
यमाणस्तु । भवेत्पापफलं ध्रुवं ॥ ५० ॥ शुभाशुभा मनोवृत्तिः । पुण्यापुण्यनिबंधनं ॥ प्रमाणं सैव
तन्मात—स्त्वनुष्ठानं न तां विना ॥ ५१ ॥ चंद्रश्रीरवदद्वत्से । विषमं कार्यमागतं ॥ ईदृशस्तव नि-
र्बंध—स्तस्य चान्यादृशं मनः ॥ ५२ ॥ ब्रवीमि ते स्फुटं वत्से । गती द्वे हि विवेकिनां ॥ इहलो-
कसुखा लक्ष्मीः । प्रव्रज्यामुत्र वा सुखी ॥ ५३ ॥ जगादाथ सुता मात—स्त्वया सत्यमुदीरितं ॥
विचार्याहं करिष्यामि । तत्पुरो यद्भविष्यति ॥ ५४ ॥ तदेहि तव गच्छावः । कृत्वा मध्याह्नपूजनं ॥
स्थास्याम्यंब भवत्पार्श्वे । तत्रैवाहं तपोवने ॥ ५५ ॥ चंद्रप्रभगृहं गत्वा । कृत्वा पूजादिकं ततः ॥ ज-
ननीतनये याव—ज्जग्मतुः तापसाश्रमं ॥ ५६ ॥ तावत्कुलपतिस्तत्रो—पागत्येति जगाद तां ॥ मा
खिद्यस्व सुते किंचि—त्संसारो हि सदेदृशः ॥ ५७ ॥ संबोध्येति च रक्षार्थं । विमुच्य तत्र ताप-

सान् ॥ जगाम निजमास्थानं । साशंकः तापसेश्वरः ॥ ५८ ॥ तस्थुषी तत्र सा बाला । रक्ष्यमाणा
तपोधनैः ॥ बभ्राम परितोऽरण्ये । मनोमोदनहेतवे ॥ ५९ ॥ हरिविक्रमविरहाग्नि—ना सा तु ता-
पिता तथा ॥ यथा तस्या निराशाया । आसन् मृत्युमनोरथाः ॥ ६० ॥
अथान्यदिवसे प्रातः । पूजां कृत्वा जिनेशितुः ॥ प्रासादस्य समीपस्थ—मुद्यानं प्रविवेश सा
॥ ६१ ॥ तापसांश्च बभाणैवं । यावद्यक्षस्य मंदिरं ॥ गत्वा त्वरितमायामि । तावदत्रैव तिष्ठत ॥ ६२ ॥
इत्युक्त्वा सातिदुःखार्ता । गत्वोद्यानमचिंतयत् ॥ ममेदृशेन दुःखौघ—दायिना जीवितेन किं ॥ ६३ ॥
मृत्युनास्य वरं त्यागः । क्षणदुःखेन केन यत ॥ तिरोभवति तद् दुःखं । पूर्वं विस्मृतिमेति न
॥ ६४ ॥ जीवंती हि पुनर्दुःखे । दौर्भाग्यविरहोद्भवे ॥ आजन्मावधि नो सोढुं । शक्तास्मि कथम-
प्यहं ॥ ६५ ॥ जगदेऽथ जनन्यापि । द्वे गती यद्विवेकिनां ॥ इहलोके सुखा लक्ष्मी—र्दीक्षा वा
सुखदापरे ॥ ६६ ॥ प्रियवर्जातिपापायाः । पूर्वपक्षो न मे भवेत ॥ दीक्षापि विषमा नूनं । शैलोत्पा-
टनसंनिभा ॥ ६७ ॥ तदेकमपि संपन्नं । तत्वतोंब वचो न मे ॥ पापिष्ठाया अनिष्ठायाः । क्लिष्टकर्मो-
दयादिह ॥ ६८ ॥ यद्याप्यात्मवधः शास्त्रे । निषिद्धोऽस्ति तथाप्यहं ॥ दुःखोद्विग्नात्र केनापि । मरि-

ष्यामि न येन वै ॥ ६९ ॥ दौर्भाग्यदूषितांगानां । दुर्लभस्नेहकारिणां ॥ अपि भग्नाभिमानानां ।
। मृत्युरेव महौषधं ॥ ७० ॥ वियोगेन कुमारस्य । विस्मारितविवेकधीः ॥ उद्यानान्निर्ययौ बाला ।
त्वरितं मृत्युहेतवे ॥ ७१ ॥ अचिंतयच्च यास्यामि । तत्र यत्र गजादहं ॥ रक्षिता तेन यत्प्राय—स्त-
त्रेभः स भविष्यति ॥ ७२ ॥ क्षिप्त्वात्मानं पुरस्तस्य । स्मृतपंचनमस्क्रिया ॥ दुःखावासममुं देहं । प-
रित्यक्ष्यामि निश्चितं ॥ ७३ ॥ महापयोधराक्रांता । नीलोत्पलविलोचना ॥ पद्मास्या श्वाससौरभ्या ।
शरच्छ्रीरिव साभ्रमत् ॥ ७४ ॥ गजस्थाने भ्रमंतीय—मदृष्ट्वेभमचिंतयत ॥ सोऽपीभो बहुपापायाः ।
न स्वं दर्शयते मम ॥ ७५ ॥ हा हा यद्यदधन्याहं—मिच्छामि स्यान्न तत्क्वचित् ॥ मरणं सुलभं य-
न्मे । जातं तदपि दुर्लभं ॥ ७६ ॥ इति मृत्युपरिणामा । यावद् द्वे योजने गता ॥ पुरोऽगाधजलं
बाला । तावद्दैक्षत नीरधिं ॥ ७७ ॥ यः फेनपटलाकीर्ण—कल्लोलैः परिवेष्टितं ॥ भीतवत्पातिरत्नानि ।
प्राकारैः स्फाटिकैरिव ॥ ७८ ॥ गंभीरैर्जलनिर्घोषैः । सर्वतः पूरितांबरैः ॥ निषेधतीव यो दूरा—न्मृ
त्युकार्योद्यतां च तां ॥ ७९ ॥ मलयास्फालनान्नीर—नादकारैर्वदतीव यः ॥ सर्वं सहे च संतापं ।
गंभीरोऽहमिहान्वहं ॥ ८० ॥ मकरग्राहमीनानां । समूहैरतिभीषणं ॥ अपायबहुलं तस्याः । स्वं प्र-

काशयतीव यः ॥ ८१ ॥ घोरं तं सागरं दृष्ट्वा । कृतपंचत्वनिश्चया ॥ मनसीदं चिंतयंती सा—त्य-
नंदच्च नृपात्मजा ॥ ८२ ॥ शेते नरोत्तमो यत्र । यस्मादमृतसंभवः ॥ रत्नाकरे तनुं तत्रा—हो त्य-
क्ष्यामि श्रिया गृहे ॥ ८३ ॥ मुमूर्षतीति सा याव—त्तावद्वार्धितटीस्थितां ॥ ददर्श लोहमंजूषां । ज-
तुसंरुद्धसंधिकां ॥ ८४ अचिंतयच्च मंजूषा । केषामहो अयोमयी ॥ विलोकयामि मध्येऽस्याः । किं
भविष्यति चित्रकृत ॥ ८५ ॥ सा यावदुपमंजूषां । गत्वा तिष्ठति मौनिनी ॥ तन्मध्ये रुदितं ताव-
दश्रोषीद्वालयोषितः ॥ ८६ ॥ पप्रच्छ जातकारुण्या । गुरुशब्देन सुंदरी ॥ रुदतीं तामये कासि । तवा-
वस्था किमीदृशी ॥ ८७ ॥ मध्यनारी ततोऽवादी—त्प्रवक्ष्यामि तवाखिलं ॥ वज्रकोष्ठादमुष्मान्मां ।
पूर्वं तावद्विमोचय ॥ ८८ ॥ एषिष्ट संधिविवरै—र्यावज्जत्वपनीय सा ॥ वीक्षांचक्रे वरां नारीं । तावत्तत्र
सुरीसमां ॥ ८९ ॥ तयैव कथितोपायैः । सुंदर्योद्घाटिते सति ॥ मंजूषायाः पिधाने सा । निर्ययौ न-
रकादिव ॥ ९० ॥ सर्वांगसुंदराकारा । सुकुमालांह्रिपाणिका ॥ नवे वयसि तिष्ठंती । मध्यस्त्री दद-
शे तया ॥ ९१ ॥ दृष्ट्वा भुवनसुंदर्या । रूपं सापि वरांगना ॥ स्वचित्ते चिंतयामास । विस्मयोत्ता
नमानसा ॥ ९२ ॥ किमेषा सुसदां नारी । क्रीडनार्थमिहागता ॥ नूनं न मर्त्यलोकेऽस्मिन् । रूपं

संभवतीदृशं ॥ ९३ ॥ संसारे पश्य रूपाणि । निःसीमानि गुणा अपि ॥ भवंति तेषु यो गर्वं । ध-
त्ते नूनं स मूढधीः ॥ ९४ ॥ चिंतयंतीति सा नारी । सुंदर्याभाणि हे सखि ॥ न स्याच्चेच्चित्तपीडा
ते । वृत्तांतं ब्रूहि तन्निजं ॥ ९५ ॥ ततोऽसावभणन्नारी । श्रूयतां यदि कौतुकं ॥ इहास्ति नगरी र
म्या । तामलिप्ती तटेंबुधेः ॥ ९६ ॥ नाम्ना हेमरथो राजा । तत्रास्ति महिमोज्ज्वलः ॥ तस्य चास्ति
प्रिया भार्या । नाम्ना हि गुणसुंदरी ॥ ९७ ॥ तयोरहं सुता नाम्ना । धूमरीव तमोमयी ॥ गुरुशोकां-
धकारेण । जीवलोककृतांधना ॥ ९८ ॥ यौवनं प्रतिपन्नाहं । ततो यूनां मनोहरं ॥ उत्पादितमनो-
जन्म—शृंगारं यद्वसंतवत ॥ ९९ ॥ कृताभिलाषा आजग्मु—र्यविदेशांतराद्वराः ॥ मत्पितोवाच ते-
षां तु । करिष्येऽहं स्वयंवरं ॥ ४०० ॥ क्रीडार्थमहमन्येद्यु—रुद्यानमगमं ततः ॥ क्रीडाभिर्विविधाभि-
श्चा—क्रीडं भूरिसखीयुता ॥ १ ॥ रममाणा मया सर्वाः । सख्यो जगदिरे तदा ॥ वस्त्रांचलेन बध्ध्वा
द्य—श्चुपताशोकपादपं ॥ २ ॥ ओमित्यंगीकृते ताभि—र्बद्धानि नयनानि हि ॥ भ्रमंतिस्म वनं
सर्वाः । सख्यस्तरुजिघृक्षया ॥ ३ ॥ यावद्विरहिता ताभि—रहमेकाकिनी स्थिता ॥ अपश्यं तावदेकं
च । विद्याधरकुमारकं ॥ ४ ॥ मां समालोक्य सहसा । बभूव मदनाकुलः ॥ विद्याधरकुमारः स ।

निर्विलंबं जहार मां ॥ ५ ॥ मलयाद्रेर्दरीमध्ये । मुक्त्वा मां सोऽब्रवीदिति ॥ प्रियेऽहमनुरक्तोऽस्मि । त्वमंगीकुरु मां प्रिये ॥ ६ ॥ विद्याधरोऽस्मि सुभगे । विद्याशक्तिसमन्वितः ॥ चित्रवेगाभिधो जात—मनःक्षोभस्त्वदीक्षणात् ॥ ७ ॥ ततोऽहं भयसंभ्रांता । यावद्यच्छामि नोत्तरं ॥ तेनाहं भणिता ताव—त्खेचरेणाधिकाधिकं ॥ ८ ॥ आविःकृतस्वकीयानु—रागस्यापि वचोभरैः ॥ प्रत्युत्तरं मया तस्य । नैव दत्तं कथंचन ॥ ९ ॥ तस्य प्रार्थयमानस्य । चाटूक्त्या दिनपंचकं ॥ ममावज्ञावशात्क्रोध—ज्वलनो भृशमज्वलत् ॥ १० ॥ ततोऽहं बहुधा तेन । भापिता हि तथा यथा ॥ मूर्छाछलेन मे नष्टं । साध्वसेनेव जीवितं ॥ ११ ॥ भीमवाक्यैर्मया नैषि । यदा भापितयापि सः ॥ मंजूषायां ततस्तेन । क्षिप्तास्मीह दुरात्मना ॥ १२ ॥ तत्कृतां मां समुद्भ्रांतः । क्षिप्त्वाकृष्य च सोऽवदत् ॥ विनष्टं किंचनाद्यापि । कन्ये मां दयितं कुरु ॥ १३ ॥ अब्धिमध्यादिहानीय । तटे मुक्त्वाधुना तु मां ॥ जल्पित्वेति न जानेऽहं । काप्यसौ खेचरो गतः ॥ १४ ॥ तवैष स्वीयवृत्तांतः । संक्षेपात्कथितो मया ॥ कासि त्वमिति पृच्छंती । त्वां लज्जे देव्यहं पुनः ॥ १५ ॥ जानामीति न चासि त्वं । मर्त्यलोकोद्भवा ननु ॥ असुरी किन्नरी वा त्व—मन्यां कन्यां घटेत न ॥ १६ ॥ हृदीति चिंतयामास । ततो भु-

वनसुंदरी ॥ सुराणां मानवानां च । मुग्धैषा वेत्ति नांतरं ॥ १७ ॥ तत्किं मे कथितेनेह । परमार्थेन संप्रति ॥ अस्या एव वचो मन्ये । तथेति प्रतिजल्पनात् ॥ १८ ॥ ध्यात्वेति सुंदरी स्माह । सत्यं ज्ञानं सखि त्वया ॥ मलयाधिपतिर्यद् । इहास्ति जनको मम ॥ १९ ॥ त्वरितं याहि विद्याभृ—त्स पुनस्त्वां ग्रहीष्यति ॥ स्थास्याम्यत्र तव स्थाने । मंजूषायामहं पुनः ॥ २० ॥ इमां विधाय मंजूषां । जतुपूरितसंधिकां ॥ नातिदूरस्थिते वेगा—त्प्रयाहि त्वं तपोवने ॥ २१ ॥ इत्युक्त्वा राजपुत्रेऽस्मि—न्निराशीभूतमानसा ॥ चंडश्रीदुहिता मध्ये । मंजूषां प्रविवेश सा ॥ २२ ॥ पुनर्भुवनसुंदर्या । सोचे मे माकृथा भयं ॥ अत्र स्थितापि नैवाहं । म्रिये देवप्रभावतः ॥ २३ ॥ अतः पिधेहि मंजूषां । निःशंकं देहि संधिषु ॥ उपदावाग्निसंदीप्तं । त्वरितं जतुनो रसं ॥ २४ ॥ कृत्वा मुग्धस्वभावा सा । तत्तथैव कुमारिका ॥ विद्याधरभयतस्ता । जगामाशितपोवनं ॥ २५ ॥ इतश्च सहसा विद्या—धरपुत्रः समागतः ॥ एतांप्रति जगादेति । कर्कशस्वरमुच्चकैः ॥ २६ ॥ किं पापे गतदाक्षिण्ये । निर्लज्जे स्नेहवर्जिते ॥ न मां वांछसि भर्तारं । वेगेन कथयाधुना ॥ २७ ॥ पर्यंतो नूनमेषोऽभू—त्कियतो दिवसान् पुनः ॥ मूढ स्नेहानुबंधेन । स्थास्यामि तव संनिधौ ॥ २८ ॥ प्र-

क्षिप्य मीनसंकीर्णे । घोरे त्वां मकराकरे ॥ अहं यास्यामि वैताढ्ये । तत्र त्वं तु मरिष्यसि ॥ २९ ॥
वीरसेनसुता श्रुत्वा । वचो विद्याधरस्य तत ॥ रोमांचं वपुषोवाह । मरणे कृतनिश्चया ॥ ३० ॥ अहो
पुण्यप्रभावेण । सर्वो मृत्युविधिर्मम ॥ प्रियावज्ञासुदुःखायाः । सानुकूलोऽभवत्खलु ॥ ३१ ॥ प्रत्युत्तर
मनाकर्ण्य । जातामर्षः स खेचरः ॥ तामुत्पाट्याथ मंजूषां । चचाल गगनाध्वना ॥ ३२ ॥ मध्ये र-
त्नाकरं क्रुद्धो । नभःस्थोऽगाधपाथसि ॥ आस्फोट्य सर्ववीर्येण । मंजूषां खेचरोऽक्षिपत् ॥ ३३ ॥ वि-
द्याधरो निवृत्याथ । मलयाचलमागतः ॥ तत्र स्थित्वा क्षणं वेगा—न्मध्येऽब्धिं पुनरागतः ॥ ३४ ॥
उपशांतपरिणामो । विद्याधरशिरोमणिः ॥ पुनराकर्षयामास । मंजूषां विद्यया ततः ॥ ३५ ॥ वि-
द्याबलेन सर्वत्र । नीरधाववगाहिते ॥ न दृष्टा क्वापि मंजूषा । न ज्ञाता च क्वचिद्गता ॥ ३६ ॥ ता-
मपश्यंश्च मंजूषां । चेतसीति व्यचिंतयत ॥ स्त्रीहत्याजनितं पापं । निस्तरिष्याम्यहं कथं ॥ ३७ ॥
अनेकशो मया क्षिप्ता । निष्काशिताप्यनेकशः ॥ विलोकितापि निपुणं । मंजूषा किं न लभ्यते
॥ ३८ ॥ अनेकधैवं हृदि शोचयित्वा । स्वयं विलोक्यांबुनिधौ पुनस्तां ॥ न क्वापि पश्यन्ननु ताप-
निघ्नः । स चित्रवेगोऽगमदात्मधाम ॥ ३९ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरि-

विरचिते तद्बांधवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये भुवनसुंदरीसंबंधवर्णनो नाम तृतीयः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

---

॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥

इतश्च यक्षवृत्तांतं । ज्ञातुमुत्कंठिते जने ॥ समागात्कोऽपि यक्षस्य । मंदिरे किंकरः सुरः ॥ १ ॥ उपविश्य यथास्थानं । परिवारपरिवृतः ॥ यक्षोदंतमुवाचैवं । स पृष्टः सर्वसंसदा ॥ २ ॥ तदा देवगृहे जाते । विजने हरिविक्रमः ॥ अशेषं कथयामास । तातादेशं हृदि स्थितं ॥ ३ ॥ यक्षो जगाद युक्तस्ते । विवेको हरिविक्रम ॥ बाध्यते पितृकार्येण । कार्यमन्यद्धि गुर्वपि ॥ ४ ॥ जननी जनकः स्वामी । गुरुश्चापि विशेषतः ॥ यतो दुःप्रतिकाराणि । चत्वार्येतानि सर्वथा ॥ ५ ॥ निर्वर्त्य प्रथमं कार्य—मिदं रिपुजयादिकं ॥ पश्चात्तु सह मत्पुत्र्या । कुर्यास्त्वं पाणिपीडनं ॥ ६ ॥ तिष्ठात्र त्वमथैवाह—मानयामि महाबलं ॥ वैरिणं तव तं बध्ध्वा । समीपे क्षणमात्रतः ॥ ७ ॥ उवाच विक्रमः सत्य—मिदं किंतु महाबलं ॥ तस्य कस्यापि देवस्य । तेनाजेयो बभूव सः ॥ ८ ॥ यक्षेणाभाणि यस्त

स्या—रेः सुरः पक्षपातकृत् ॥ स पुनर्व्यंतरो देवो । दुर्जेयो मादृशामपि ॥ ९ ॥ संजातगुरुसाम-
र्थ्य—स्तवाहमनुभावतः ॥ तं देवमपि जेष्यामि । तस्यारेर्गणना तु का ॥ १० ॥ हरिणोचे न को
वेत्ति । सामर्थ्यं ते महासुर ॥ किंचाहमेव शक्नोमि । जेतुं ससुरवैरिणं ॥ ११ ॥ यक्षेणाभाणि मा-
कार्षी—रुपरोधं ममाधुना ॥ आवां द्वावपि गच्छावो—ऽलंघ्यदुर्गं नराधिप ॥ १२ ॥ एवमस्त्विति
निर्बंधा—त्प्रतिपन्नोऽमुना किल ॥ कुमारेण समं यक्ष । उत्पपाताल्पसेवकः ॥ १३ ॥ भणितं हरिणा
पूर्वं । गम्यते व्यंतरांतिकं ॥ कृत्वा तमनुकूलं त्व—लंघ्यदुर्गं गमिष्यते ॥ १४ ॥ यक्षो जगाद नैवं
भो । राजनीतौ निगद्यते ॥ येन सार्धं विरोधोऽस्ति । साध्यते पूर्वमेव सः ॥ १५ ॥ प्रतिपक्षविघा-
ताय । रिपुं साधयतस्तव ॥ पश्चात्तेन समं यच्च । कर्तव्यं तत्करिष्यते ॥ १६ ॥ आमेत्युक्त्वा विमा-
नाधि—रूढः स हरिविक्रमः ॥ खड्गपाणिः किरीटेन । कुंडलाभ्यां च शोभितः ॥ १७ ॥ चालिता-
भ्यां च यक्षेण । चामराभ्यां विराजितः ॥ कटकं वैरिसिंहस्य । प्रेक्षमाणो निशागमे ॥ १८ ॥ रजन्याः
प्रथमे यामे । यक्षनिर्मिततेजसा ॥ विलोकयन् रिपोः सैन्यं । जगामालंघ्यपत्तनं ॥ १९ ॥ त्रिभि-
र्विशेषकं ॥ वैरिसिंहस्य सैन्येन । परितः परिवेष्टितं ॥ प्रकाशितैः स्वतेजोभिः । प्रासादैः सुंदरं पुरं

॥ २० ॥ जाग्रद्यामिकसंघात—कोलाहलभयंकरं ॥ परचक्रभयव्यग्रं । सोऽलंघ्यपुरमागमत ॥ २१ ॥
युग्मं ॥ कुमारः सहसा प्राप । मंदिरं सप्तभौमिकं ॥ महाबलनरेंद्रस्य । मणिकांचननिर्मितं ॥ २२ ॥
स्थाने स्थाने स्थितैर्वक्रैः । सेवकैः परिवेष्टितं ॥ चतुरंगचमूचक्र—निरुद्धद्वारभूमिकं ॥ २३ ॥ यु-
ग्मं ॥ यक्षो जगाद सत्यार्थ—मिदं दुर्गं नृपांगज ॥ न लंघ्यतेऽरिभिर्वर्ष—सहस्रैरपि सादरैः ॥ २४ ॥
जित्वा महाबलं शत्रु—मिमं दुर्गं नृपांगज ॥ त्वं विधेह्यात्मसाद्यस्मा—दीदृशं नापरं भुवि ॥ २५ ॥
कुमारोऽवग्विलंबेन । कृतमद्यैव गम्यते ॥ समीपे वैरिणस्तस्या—धुनैवास्तु विनिश्चयः ॥ २६ ॥ पुरो
गत्वा ततो यक्ष—स्तं जगाद महाबलं ॥ किं भोः स्वपिषि निश्चिंतो । वेगेनोत्तिष्ठ भूपते ॥ २७ ॥
निरुत्साहो नराधीशः । प्राप्नोति व्यसनानि यत ॥ उत्साह एव तस्माच्च । स्वामिनः प्रथमो गुणः
॥ २८ ॥ महापराक्रमे शत्रौ । प्राप्ते ते हरिविक्रमे ॥ भाविन्युपेक्षिता निद्रा । दीर्घदीर्घैव रोगवत
॥ २९ ॥ दूतोऽहं प्रेषितस्तेन । समीपे तव भूपते ॥ इदमाकर्णयैकाग्रो । हरिविक्रमवाचिकं ॥ ३० ॥
त्यज शौंडीरतां गर्वं । सेवां मन्यस्व मे पितुः ॥ भुंजानस्तिष्ठ भो भूप । राज्यलक्ष्मीं यथासुखं ॥ ३१ ॥
अथवा तातसेवां न । मन्यसे तद्रणं कुरु ॥ द्वौ पक्षौ गदितावेतौ । यो रोचेत तमाचर ॥ ३२ ॥

वपुरामोटयन् वेगा—दुत्तस्थौ शयनान्नृपः ॥ ३३ ॥
इत्युक्ते यक्षराजेन । निद्राघूर्णितलोचनः ॥ वपुरामोटयन् वेगा—दुत्तस्थौ शयनान्नृपः ॥ पितापि तस्य को वा यः । सेवां कारयतीह मां
जगदे च बलः कस्त्वं । कश्चापि हरिविक्रमः ॥ पितापि तस्य को वा यः । सेवां कारयतीह मां
जगदे च बलः कस्त्वं । कश्चापि हरिविक्रमः ॥ तस्याः स्वरूपमस्माक—मपूर्वं जन्मतोऽ
॥ ३४ ॥ का सेवैवोच्यते दूत । पुंसा सा क्रियते कथं ॥ तस्याः स्वरूपमस्माक—मपूर्वं जन्मतोऽ
पि हि ॥ ३५ ॥ स चेद्दर्शयते सेवा—स्वरूपं प्रथमं मम ॥ सेवाभ्यासं करिष्येऽहं । ततस्तेन क्रमे-
णं नोः ॥ ३६ ॥ यक्षोऽब्रवीच्च कोऽसि त्व—मपूर्वं जन्मतोऽपि हि ॥ इदं त्वनुचितं प्रोक्तं । यत्को-
ऽसौ हरिविक्रमः ॥ ३७ ॥ दुर्गे संकोचितांगस्त्वं । क्षिप्तो येनासि गर्भवत् ॥ कथं न वेत्स्यलंघ्यं तं ।
विपाकमिव कर्मणां ॥ ३८ ॥ अज्ञातवस्तुतत्वस्य । दोषः कोऽत्राथवा तव ॥ अज्ञानेन कृतं नून—
मेतद् दुर्नयभाषणं ॥ ३९ ॥ स्वबुद्धिकल्पितं गर्व—मात्मन्यावहतीह यः ॥ अवाप्नोत्युपहासं स ।
स्वं दधाति च संशये ॥ ४० ॥ अलमुक्त्वा नराधीश । स एव हरिविक्रमः ॥ दर्शयिष्यति तातं स्वं
। सेवा कार्यास्ति यस्य वै ॥ ४१ ॥ सेवास्वरूपमद्यैव । स एवाविःकरिष्यति ॥ न्यायेन तव केनापि
। मा राजन्नुत्सुको भव ॥ ४२ ॥ नैव यन्निर्वहत्यग्रे । शिष्टो जल्पति तत्कथं ॥ प्राप्नुवंति लघुत्वं हि ।
नरोऽसत्यार्थवादिनः ॥ ४३ ॥ दृष्टव्योऽसि महावीर । राजराजपुरः स्थितः ॥ सेवाबद्धांजलिर्व्यग्रः ।

शृणुत सर्वेऽपि । सामंताः सैन्यनायकाः ॥ अतुल्यशक्तिकः सोऽसौ । प्रतापाद्भुतविक्रमः ॥ ६८ ॥ ह-रिविक्रमनामा यो—ऽजितविक्रमनंदनः ॥ देवो लोहार्गलो दूरं । भीत्या यस्य पलायिनः ॥ ६९ ॥ प्रभुं मन्यध्वमेनं त—द्विरोधं त्यजताधुना ॥ हरिविक्रमदेवस्य । वंदध्वं पादपंकजं ॥ ७० ॥ इत्युक्ता-स्तेन ते सर्वे । स्वचेतसि चमत्कृताः ॥ प्रणेमुस्तस्य पश्यंनः ॥ प्रतापं हरिविक्रमं ॥ ७१ ॥ सर्वेषु रा जमार्गेषु । नगरे हरिविक्रमः ॥ आज्ञामुद्घोषयामास । निजामभयपूर्वकं ॥ ७२ ॥ आनाय्य त्वरितं वैरि-सिंहं सेनापतिं ततः ॥ संस्थाप्य च पुराध्यक्षान् । लोकान्नावर्जयन्नृपः ॥ ७३ ॥ यतो मलयमेखे-ना—पजह्रे हरिविक्रमः ॥ सैन्यमानाययामास । तन्निजं मलयांतिकात् ॥ ७४ ॥ महाबलनरेंद्रं तं । सभार्यं कोशसंयुतं ॥ समर्प्य निजसैन्यस्य ॥ तानांतिकमचीचलत् ॥ ७५ ॥ इत्यलंघ्यपुरे याव-द्भुं-जानो राज्यसंपदं ॥ हरिविक्रमभूपालो । वर्तते निजदेशवत ॥ ७६ ॥ यक्षेण प्रेषितस्ताव—दहमत्र समागमं ॥ युष्माकं कुशलोदंत—कथनाय सभासदः ॥ ७७ ॥ स्वामिनेति च संदिष्ट—मस्ति वो वदनेन मे ॥ कार्या भुवनसुंदर्या । युष्माकं भक्तिरादरात् ॥ ७८ ॥ इत्युक्ते यक्षराजस्य । किं-करेण परिग्रहः ॥ निवृत्तिकथनायाशु । प्रजिघायाश्रमे सुरं ॥ ७९ ॥ सुरेण कथिते वृत्ते । चंद्रश्री

रित्यभाषत ॥ न जाने कापि सा वत्सा । ययौ भुवनसुंदरी ॥ ८० ॥ ततो निवृत्य गत्वा स । य-
क्षावासं न्यवेदयत् ॥ यक्षपत्न्या स एवाशु । प्रैषीद्यक्षस्य संनिधौ ॥ ८१ ॥ स यक्षकिंकरः शीघ्रं ।
गत्वा यक्षेश्वरं जगौ ॥ सर्वं भुवनसुंदर्या । वियोगविवशादिकं ॥ ८२ ॥ यक्षाग्रे कथ्यमानं तत् । श्रु-
त्वापि हरिविक्रमः ॥ हाहेत्युक्त्वा मुमूर्छाशु । त्रिशूलेनेव भेदितः ॥ ८३ ॥ ततो यक्षकृतैः शीतो-प-
चारैर्लब्धचेतनः ॥ विललाप लुलत्केशः । स यथा प्राकृतो जनः ॥ ८४ ॥ त्रैलोक्याद्भुतसौंदर्ये ।
हा हा भुवनसुंदरि ॥ निःकृपस्य त्वयात्मा मे । कारणेन कथं हतः ॥ ८५ ॥ त्वयैव सकलं विश्वं ।
नारीरत्नेन भूषितं ॥ तया विना न भात्यद्य । तदेतच्छिन्नशीर्षवत् ॥ ८६ ॥ मन्निमित्तमृते जातं । य-
त्पापं तत्कथं मम ॥ घोरैरपि तपोयोगैः । शांतिं यास्यति सर्वथा ॥ ८७ ॥ हा देवि त्वयका चक्रे ।
तथाहं त्रिजगत्यपि ॥ अदृष्टव्यमुखो जातो । यथा चाग्राह्यनामकः ॥ ८८ ॥ यद्गुणाकर्णने विश्वं ।
दत्तकर्णं पुराभवत ॥ विधास्यति श्रुती गाढं । मम नाम्नि श्रुतेऽपि तत ॥ ८९ ॥ प्रत्यनीका गुरौ
ये च । ये च विश्वासघातकाः ॥ बालस्त्रीघातका ये च । ते स्युरग्राह्यनामकाः ॥ ९० ॥ यन्मयान्य-
भवे पापं । कृतं तत्फलितं त्विह ॥ यद्भविष्यति चैतेन । तन्न जानाम्यहं पुरः ॥ ९१ ॥ त्वद्वियोगा-

कतिचिद्दिवसैः पुनः ॥ ४४ ॥ ततो यद्वचःक्रुद्धः । स्फुरदोष्ठः समुत्थितः ॥ बद्धकेशो दृढं मूर्ध्नि ।
दधानः क्षुरिकंकटौ ॥ ४५ ॥ निशितासिकरो याव—द्भूवाशु महाबलः ॥ तावत्तत्र समागाच्च । दु-
र्धर्षो हरिविक्रमः ॥ ४६ ॥ युग्मं ॥ हरिविक्रमतेजोभि—रिव ज्वलितविग्रहः ॥ श्यामांगस्तत्क्षणा-
ज्जातो । निःप्रतापो महाबलः ॥ ४७ ॥ अचिंतयच्च दुर्गेऽस्मिन् । यत्नेन सुररक्षिते ॥ दुष्टधीः कीटि-
काप्येति । नैव द्वादशयोजनं ॥ ४८ ॥ गगने भूतले चापि । खेचरामरभूस्पृशां ॥ अलंघ्यं दुर्गमे-
तद्धि । लोहार्गलसुरावतात् ॥ ४९ ॥ चिंतयन्नित्यसौ वैरी । विक्रमेणाशु तर्जितः ॥ रेरे नाम म-
हावीर्य । वीर्यं स्वं दर्शयाधुना ॥ ५० ॥ क्षुब्धस्य तस्य सहसा । हरिविक्रमतर्जनात ॥ पपात कंप-
मानस्य । करवालः करग्रहात ॥ ५१ ॥ ईषद्विहस्य जगदे । कुमारेण बलं तव ॥ दृष्टं माभैरभीति-
स्ते । नहन्मि गलितायुधं ॥ ५२ ॥ कौतुकेन तु पृच्छामि । सोऽपि क व्यंतरस्तव ॥ मन्ये बलं यथा
तेऽस्ति । तस्याप्येवं भविष्यति ॥ ५३ ॥ महाबलो जगादाथ । यथार्थाख्यस्त्वमेव भोः ॥ समानो
हरिणा यस्य । विक्रमः प्रकटो भुवि ॥ ५४ ॥ मादृशानां तु नामानि । संत्यन्यत्र यथा तथा ॥ पु-
नस्त्वद्विषये नूनं । लभंते न यथार्थतां ॥ ५५ ॥ पराजयोऽपि देवस्या—ऽपावन्यत्र दूषणं ॥ स

एव नूषणं मेऽनू—त्पुनस्त्वद्विषयेऽधुना ॥ ५६ ॥ एतावतैव मन्ये स्वं । कृतार्थं देव यत्त्वया ॥ स्व यमेत्य विजिग्येऽह—मपरैरिह दुर्जयः ॥ ५७ ॥ एषोऽहं भृत्य एतच्च । दुर्गमेष परिग्रहः ॥ कोश दारादि ते सर्वं । गृहाण त्व यथेच्छया ॥ ५८ ॥ लोहार्गलसुरेणापि । प्रागेवाख्यायि मे प्रभो ॥ मम मार्गं तु मोक्षिश । संप्राप्ते हरिविक्रमे ॥ ५९ ॥ साधु साध्विति यक्षोऽपि । जल्पन्नूचे ततः सुधीः ॥ एषैव स्वामिनो भक्ति—र्यत्सर्वांगसमर्पणं ॥ ६० ॥ विवेक ईदृशः कस्य । कस्येदृक्कार्यनिश्चयः ॥ कुमारविषये जातो । यथैकाग्रहृदस्तव ॥ ६१ ॥

अथोदियाय सूरोऽपि । हतारितिमिरोत्करः ॥ हरिविक्रमवन्नयस्य । पादौ नूधरमूर्धनि ॥ ६२ ॥ निगूढकोशसारास्ता । गूढसंकोचदुःखिनाः ॥ पद्मिनीव प्रजाः सर्वा । व्यकसन्नुदिते हरौ ॥ ६३ ॥ गतेंगरक्ततां यक्षे । श्वेतछत्रविनूषितः ॥ कुमारो वलनीपाठे । बहिर्निर्गत्य संस्थितः ॥ ६४ ॥ महाब-लसमुद्धूत—चामरोत्क्षिपद्वयः ॥ सर्वांगरत्ननेपथ्य—शोणाभापुंजरंजितः ॥ ६५ ॥ युग्मं ॥ हरिवि-क्रमचंडस्य । दर्शनात्क्षुब्धविस्तृतः ॥ महाबलबलांभोधिः । संचचाल समंततः ॥ ६६ ॥ निषिध्यामा-त्यसंदोह—मूर्ध्वीकृत्य नुजं निजं ॥ बलान्निवारयामास । युयुत्सूनि महाबलः ॥ ६७ ॥ भो भोः

शृणुत सर्वेऽपि । सामंताः सैन्यनायकाः ॥ अतुल्यशक्तिकः सोऽसौ । प्रतापाद्भुतविक्रमः ॥ ६८ ॥ हरिविक्रमनामा यो—ऽजितविक्रमनंदनः ॥ देवो लोहार्गलो दूरं । भीत्या यस्य पलायितः ॥ ६९ ॥ प्रभुं मन्यध्वमेनं त—द्विरोधं त्यजताधुना ॥ हरिविक्रमदेवस्य । वंदध्वं पादपंकजं ॥ ७० ॥ इत्युक्ता-स्तेन ते सर्वे । स्वचेतसि चमत्कृताः ॥ प्रणेमुस्तस्य पश्यंतः ॥ प्रतापं हरिविक्रमं ॥ ७१ ॥ सर्वेषु राजमार्गेषु । नगरे हरिविक्रमः ॥ आज्ञामुद्घोषयामास । निजामभयपूर्वकं ॥ ७२ ॥ आनाय्य त्वरितं वैरि-सिंहं सेनापतिं ततः ॥ संस्थाप्य च पुराध्यक्षान् । लोकान्नावर्जयन्नृपः ॥ ७३ ॥ यतो मलयमेघेना—पजह्रे हरिविक्रमः ॥ सैन्यमानाययामास । तन्निजं मलयांतिकात् ॥ ७४ ॥ महाबलनरेंद्रं तं । सभार्यं कोशसंयुतं ॥ समर्प्य निजसैन्यस्य ॥ तानांतिकमचीचलत् ॥ ७५ ॥ इत्यलंघ्यपुरे याव—द्भुंजानो राज्यसंपदं ॥ हरिविक्रमनृपालो । वर्तते निजदेशवत ॥ ७६ ॥ यक्षेण प्रेषितस्ताव—दहमत्र समागमं ॥ युष्माकं कुशलोदंत—कथनाय सभासदः ॥ ७७ ॥ स्वामिनेति च संदिष्ट—मस्ति वो वदनेन मे ॥ कार्या भुवनसुंदर्या । युष्माकं भक्तिरादरात् ॥ ७८ ॥ इत्युक्ते यक्षराजस्य । किंकरेण परिग्रहः ॥ निवृत्तिकथनायाशु । प्रजिघायाश्रमे सुरं ॥ ७९ ॥ सुरेण कथिते वृत्ते । चंद्रश्री

रित्यन्नापत ॥ न जाने क्वापि सा वत्सा । ययौ भुवनसुंदरी ॥ ८० ॥ ततो निवृत्य गत्वा स । य-
क्षावासं न्यवेदयत् ॥ यक्षपत्न्या स एवाशु । प्रैषीद्यक्षस्य संनिधौ ॥ ८१ ॥ स यक्षकिंकरः शीघ्रं ।
गत्वा यक्षेश्वरं जगौ ॥ सर्वं भुवनसुंदर्या । वियोगविवशादिकं ॥ ८२ ॥ यक्षाग्रे कथ्यमानं तत् । श्रु-
त्वापि हरिविक्रमः ॥ हाहेत्युक्त्वा मुमूर्छाशु । त्रिशूलेनेव भेदितः ॥ ८३ ॥ ततो यक्षकृतैः शीतो-प-
चारैर्लब्धचेतनः ॥ विललाप लुलत्केशः । स यथा प्राकृतो जनः ॥ ८४ ॥ त्रैलोक्याद्भुतसौंदर्ये ।
हा हा भुवनसुंदरि ॥ निःकृपस्य त्वयात्मा मे । कारणेन कथं हतः ॥ ८५ ॥ त्वयैव सकलं विश्वं ।
नारीरत्नेन भूषितं ॥ तया विना न भात्यद्य । तदेतच्छिन्नशीर्षवत् ॥ ८६ ॥ मन्निमित्तमृते जातं । य-
त्पापं तत्कथं मम ॥ घोरैरपि तपोयोगैः । शांतिं यास्यति सर्वथा ॥ ८७ ॥ हा देवि त्वयका चक्रे ।
तथाहं त्रिजगत्यपि ॥ अदृष्टव्यमुखो जातो । यथा चाग्राह्यनामकः ॥ ८८ ॥ यद्गुणाकर्णने विश्वं ।
दत्तकर्णं पुराभवत ॥ पिधास्यति श्रुती गाढं । मम नाम्नि श्रुतेऽपि तत ॥ ८९ ॥ प्रत्यनीका गुरौ
ये च । ये च विश्वासघातकाः ॥ बालस्त्रीघातका ये च । ते स्युरग्राह्यनामकाः ॥ ९० ॥ यन्मयान्य-
भवे पापं । कृतं तत्फलितं त्विह ॥ यद्भविष्यति चैतेन । तन्न जानाम्यहं पुरः ॥ ९१ ॥ त्वद्वियोगा-

ग्निनिर्दग्ध—स्वत्संस्थापापक्ष्णितः ॥ अपवित्रो बन्धुवाहं । श्मशानांगारवद्भृशं ॥ ९२ ॥ इति प्र-
लापविधुरं । कुमारं गुह्यकेश्वरः ॥ वचोभिर्धीरयामास । कोमलैर्मधुरोज्ज्वलैः ॥ ९३ ॥ प्रलपसि कि·
मेवं त्वं । विक्रमाद्भुतविक्रम ॥ अनुष्ठानमिदं जाति । स्त्रीणामेव नृणां ननु ॥ ९४ ॥ चेतांसि सा·
हसस्वानां । कोमलानि स्वभावतः ॥ तान्येव स्युः कठोराणि । विकल्पे सति वज्रवत् ॥ ९५ ॥
जानाम्यवधिना वत्स । वत्सा भुवनसुंदरी ॥ अविनष्टांगचारित्रा । जीवंती विद्यते क्वचित ॥ ९६ ॥
ततस्तिष्ठ त्वमत्रैव । वीक्ष्याहं भुवनेऽखिले ॥ त्वया सह सुतामेनां । घटयिष्यामि निश्चितं ॥ ९७ ॥
इत्युक्त्वा गुह्यकाधीश । आपृच्छ्य हरिविक्रमं ॥ अदृश्यमान आकाश—मार्गेणानिलवद्ययौ ॥ ९८ ॥
विक्रमोऽपि वियोगाग्नि—दाहसंतप्तमानसः ॥ लोटयामास पल्यंके—ऽवतक्षेनाकुलस्थितिः ॥ ९९ ॥
अथ तद्दुःखदावाग्नि—दह्यमानतनुर्भृशं ॥ सेनान्या वैरिसिंहेन । सप्रश्रयमवाचि सः ॥ १०० ॥ तवाव-
गतनिःशेष—शास्त्रार्थस्य महामतेः ॥ किंचित्कार्यं प्रबोधा हि । साधयंति न मादृशां ॥ १ ॥ खेदं
तथापि नो कर्तु—मर्हसि त्वं नरोत्तम ॥ विरुद्धं निःफलारंभं । कर्मेदं यद्भवादृशां ॥ २ ॥ देहक्षयो
जने हास्यं । दीनत्वं बुद्धिविस्मृतिः ॥ प्रारब्धकार्यनाशश्च । शोकेनेह नरेश्वर ॥ ३ ॥ शोकं कुर्युः

तोलयित्वा
कथं तेऽत्र । यन्नाम्ना कंपते जगत ॥ पराक्रमेण तां देवीं । शत्रुश्रियमिवानय ॥ ४ ॥ न वेत्सि
निजं जीवं । कृपाणतुलयात्र ये ॥ अर्पयंति द्विषां वीराः । स्वमर्थं साधयंति ते ॥ ५ ॥ अफलं
किमिदं देव । सदुःखं त्वयि दुःखिते ॥ निःशेषं भुवनं यस्मा—त्त्वदाधारेण वर्तते ॥ ६ ॥ सेनानीव
त्यज तच्छोकं । प्रक्षीणजनसेवितं ॥ साधिताशेषकार्यार्थ—मवष्टंभं विधेहि भोः ॥ ७ ॥ हाहा प्रिया-
चनेनेति । प्रकृत्यापि स धीरधीः ॥ पुनरागतचैतन्यो—ऽन्वक्तत्वार्थवेदकः ॥ ८ ॥ एवं परोप-
व्यतिकर—वज्रपातानुभावतः ॥ उचितानुचितः सर्वो । व्यापारो मम विस्मृतः ॥ ९ ॥ भणितोऽहं त-
देशार्हा—श्चेद्भविष्यंति मादृशाः ॥ धीरता तन्निराधारा । बभूव भुवनेषु हि ॥ १० ॥ कथितं गु-
दर्थाय । सेनान्या युक्तमेव तत ॥ दयितार्थे प्रवर्तिष्ये । निजवीर्योद्यमादिभिः ॥ ११ ॥ विचिंत्येति
ह्येकेनापि ॥ यज्जीवंत्यस्ति मत्प्रिया ॥ आविःकुर्वे तदर्थं त—त्सर्वथा निजपौरुषं ॥ १२ ॥ त्वद्-
कुमारस्तं । सेनान्यमवदत्पुनः ॥ सेनापते विना त्वां तु । कोऽन्यो जगति मे हितः ॥ १३ ॥ अ-
चनानिलेनोच्चै—र्नुन्नः खेदो रजो यथा ॥ मनोरत्नाद्ययौ दूरं । स्वभावेनात्मना मम ॥ १४ ॥ ज्ञात्वे-
त्रांतरे कुमारस्य । कार्यं कर्तुमिवोद्यतः ॥ प्रविवेशापरांभोधौ । मित्रो देवीमवेक्षितुं ॥ १५ ॥

वासक्तमेतस्या । नाम्ना धाम्ना च तं हरिं ॥ ईर्ष्यारागमिवोवाह । संध्याव्याजेन पश्चिमा ॥ १६ ॥
लुप्तान्योन्यदृगालोके । मूर्ते दुःखे तयोरिव ॥ ममज्ज तिमिरे विश्वं । समस्तं अस्तभास्करं ॥ १७ ॥
निद्रांतरितचैतन्यं । प्रशांतजनचेष्टितं ॥ विश्वं तद्दुःखदुःखेन । प्राप्तमूर्छमिवाभवत् ॥ १८ ॥ कु·
मारः समये तत्र । कृतदेवार्चनाविधिः ॥ सामंतशतसंकीर्णे । तस्थावास्थानमंडपे ॥ १९ ॥ विसृज्या·
स्थानमुचित—वेलायां स्तोकसेवकः ॥ शय्यागृहं जगामाथ । कुमारो हरिविक्रमः ॥ २० ॥ दत्वा प्र
सादसन्मानं । विसृष्टाशेषसेवकः ॥ मृदुतूलीसनाथायां । शय्यायां स उपाविशत् ॥ २१ ॥ अथासौ
चिंतयामास । विविक्ते वासवेश्मनि ॥ भविष्यति कथं नूनं । दयितादर्शनं मम ॥ २२ ॥ आत्मानं
क्षिप्यते याव—त्संशये मरणांतिके ॥ तावन्न साध्यते कार्यं । वांछितं साहसप्रियैः ॥ २३ ॥ गती
द्व एव सत्वैक—धनानां भवतः किल ॥ स्वकार्यकरणं शीघ्रं । मरणं वाथ सर्वथा ॥ २४ ॥ अद्य
कृष्णाष्टमी जाता—स्म्यद्यैवाहमुपोषितः ॥ अतो गत्वा बहिः किंचि—त्साधयामि सुरं हठात् ॥ २५ ॥
इति ध्यात्वोत्थितो वीरः । करवालसखस्ततः ॥ निर्ययौ शयनावासा—द्यामिकैरप्यलक्षितः ॥ २६ ॥
प्राकारं खातिकायुक्त—मतिलंघ्यांगलाघवात् ॥ कलयंस्तृणवद्विश्वं । स्वशक्त्या पितृकाननं ॥ २७ ॥

क्रीडौक इव भूतानां । मृत्योरिव च मंदिरं ॥ २८ ॥
सूरागारं यमस्येव । जन्मस्थानं श्रियामिव ॥ ...भवदंति समं यत्र । विवदंतः पिशाचकैः ॥ २९ ॥
युग्मं ॥ ईषद्दग्धचितामध्या–च्छवमाकृष्य राक्षसाः ॥ भूतग्राहकसंकुलाः ॥ ३० ॥ ज्व-
वर्तंते यत्र पंथानः । सौनिकापणसंनिभाः ॥ चर्मामिषवसाकीर्णा । यत्समुत्पत्तिबीजवत ॥ ३१ ॥ यद्-
लच्चिताशतज्ज्वाला–ग्रस्यमाननभस्तलं ॥ भाति प्रलयकालाग्ने–र्यत्समुत्पत्तिबीजवत ॥ ३२ ॥ श्मशाने भैरवा·
घोरघूकघूत्कार–रवैर्बधिरितांबरं ॥ मुंचतीवोरुहंकारं । सर्वं बलयितुं जगत् ॥ ३३ ॥ कापालिक·
ख्यस्या–त्रास्ति देवस्य मंदिरं ॥ कापालिकमठश्चैकः । समीपे तस्य वेश्मनः ॥ ३४ ॥ निर्दयौ स्व-
गुरुः शूल–पाणिस्तत्र मठे वसन् ॥ चंडरुद्रश्च तच्छिष्यः । क्षुद्रविद्याप्रसाधकः ॥ ३५ ॥ कुमारो बं-
ध्याद्भुतां । जलस्थलनभोगती ॥ तौ विद्यासिद्धिमिच्छंतौ । वधेनोत्तमपुंस्त्रियोः ॥ ३६ ॥ मोचया-
भ्रमीतिस्म । श्मशाने तत्र भीषणे ॥ विविधान् भूतसंघातान् । पश्यन्नक्षुद्रमानसः ॥ ३७ ॥ क-
मास वेतालै–र्निरुद्धं मांत्रिकं क्वचित् ॥ स विद्यासाधकानां च । साहायमकरोत्क्वचित ॥ ३८ ॥ कुर्वन्
चिद्राक्षसवेताल–पिशाचीशाकिनीगणं ॥ विमुक्तघोरहुंकारो । वारयन् दुर्नयादिह ॥ ३९ ॥ यावद्भन्नपदं
पितृवने तस्मि–न्नुपकाराननेकशः ॥ कापालिकमठं प्राप । क्रमेण हरिविक्रमः ॥

तत्र । प्राविशद्धरिविक्रमः ॥ शूलपाणिं गुरुं ताव—द्ददर्शासनसंस्थितं ॥ ४० ॥ पार्श्वे मुक्तत्रिशूलं तं । परिव्राजकविस्मयुतं ॥ भीमं कुमार आलोक्य । स्तंभेनांतरितः स्थितः ॥ ४१ ॥ तस्मिन्नेकाग्रहृदये । कुमारे तत्र तस्थुषि ॥ अकांडेऽपि त्रिशूलं त—ज्जज्वाल ज्वलनोपमं ॥ ४२ ॥ शूलपाणिस्ततः प्राह । परिचारकपूरुषं ॥ पश्य वत्स त्रिशूलं मे । कंपमानं ज्वलद्भृशं ॥ ४३ ॥ नरः प्रोवाच भगवन् । किमेतत्कंपतेऽधुना ॥ स स्माह पुरुषः कोऽपि । तिष्ठतीह सलक्षणः ॥ ४४ ॥ तस्मादस्य कपालान् स्यु—र्येन ते सर्वसिद्धयः ॥ कंपमानमिदं शूल—मित्यावेदयते मम ॥ ४५ ॥ एवमेव कपालार्थं । शिष्यो भ्रमति भूतलं ॥ ललाटे लिखितं यत्त—त्स्थानस्थैरपि लभ्यते ॥ ४६ ॥ भवाचोपासकः कोऽपि । तादृशो नात्र नेक्ष्यते ॥ स स्माह किं विकल्पेन । नान्यथा मम भाषितं ॥ ४७ ॥ दृढबद्धजटाजूटो । भस्मोधूलितविग्रहः ॥ स्कंधसंस्थितखट्वांग—स्तन्वन् डमरुकध्वनिं ॥ ४८ ॥ हठेनाकृष्टकेशाग्रां । कांचिदेकां स्त्रियं वहन् ॥ चंडरुद्रोऽवतीर्यागा—दितः स्वगुरुसंनिधौ ॥ ४९ ॥ युग्मं ॥ ततो गुरुर्जगादेति । चंडरुद्र सलक्षणं ॥ नरो वा युवती वापि । किं लब्धं भ्रमता त्वया ॥ ५० ॥ स जगाद गुरो नीधौ । मंजूषाक्षेपि केनचित ॥ नभःस्थेन मया दृष्टा । द्रागाकृष्टा च सा

कार्यसिद्धिर्न-
जलात् ॥ ५१ ॥ तन्मध्ये वनितारत्न—मिदं लब्धं मया वरं ॥ अनेनाद्योपहारेण । कार्यसिद्धिर्न-
विष्नति ॥ ५२ ॥ दध्याविति कुमारोऽथ । त्रिशूलस्यास्य कौतुकं ॥ सलक्षणं नरं दृष्ट्वा । दीप्यते
कंपते च यत् ॥ ५३ ॥ एषा का च वरा नारी । दिव्यलक्षणलक्षिता ॥ ज्ञास्याम्येतत्कथंकार—
मंधकारे वनेऽधुना ॥ ५४ ॥ शूलपाणिस्ततः स्माह । चंडरुडाल पश्य भोः ॥ कथितं मतत्रिशूलेन
। नरं सर्वांगलक्षणं ॥ ५५ ॥ शिष्यः स्माह गुरो नेह—रमंतो भवति शोभनः ॥ आत्मायत्तं यद-
स्तीह । तदेव प्राग्वशीकुरु ॥ ५६ ॥ सिद्धप्राये विधौ काल—विलंबो विघ्नकारकः ॥ सिद्धं विमुच्य
नासिद्धं । कर्तव्यं कार्यमत्र तत ॥ ५७ ॥ गुरुणोचे भवत्वेव—मुपहारं कुरु स्त्रियाः ॥ माकार्षीद्वि-
घ्नमेतस्याः । कोऽपि पक्षविधायकः ॥ ५८ ॥ कंपमानतनुं नारीं । दीनस्वरविलापिनीं ॥ तां गृहीत्वा
स केशेषु । निन्ये भैरवमंदिरं ॥ ५९ ॥ दक्षत्वेन कुमारोऽपि । प्रविश्य प्राक् सुरालयं ॥ स्तंभेनां·
तरितस्तस्थौ । पश्यन्निर्घृणचेष्टितं ॥ ६० ॥ ततस्तां सुकुमारांगीं । केशेष्वाकृष्य पापधीः ॥ पातया·
मास भूपीठे । पपातातिप्रकंपिता ॥ ६१ ॥ पश्चात्कृतकरत्वेना—मुग्रोन्नतपयोधरां ॥ नरकेशमया र-
ज्ज्वा । नारीमेतां बबंध सः ॥ ६२ ॥ ज्वालयित्वा ततो दीपं । नरस्य वसया भृशं ॥ भैरवार्चाविधिं

सर्वं । प्रथमं निरपीपठत ॥ ६३ ॥ पूजां निवर्त्य कन्यायाः । समीपे स समेत्य च ॥ स्नपितां तां
चकारोच्चै । रक्तचंदनचर्चितां ॥ ६४ ॥ रक्तस्य कणवीरस्य । मालामानंदमूर्धनि ॥ अग्रमस्याः पुरः
प्राप । ह्युच्चिक्षेप च गुग्गुलं ॥ ६५ ॥ गृहीत्वा कर्त्रिकां तीक्ष्णां । चंमरुडो जगाद तां ॥ अभीष्टं स्मर
देवं वा । शरणं याहि कस्यचित् ॥ ६६ ॥ सा जगाद मया ध्यात—श्चंद्रप्रभजिनेश्वरः ॥ तथा पं-
चनमस्कारं । प्राणांतेऽपि स्मराम्यहं ॥ ६७ ॥ स एवार्हन्नमस्कारः । शरणं मे भवे भवे ॥ द्वितीय-
श्च महाराज—कुमारो हरिविक्रमः ॥ ६८ ॥ तस्यास्तद्वचनं श्रुत्वा । गुणद्वेषी रुषारुणः ॥ बालां का-
पालिको वक्तुं । प्रारेभे स्फुरिताधरः ॥ ६९ ॥ समाकृष्टं नमस्कार—मंत्रेण च तवागतं ॥ चंद्रप्रभ-
जिनस्मृत्या । चाधुना मरणं ननु ॥ ७० ॥ लोहार्गलस्य यो वैरी । शरणं हरिविक्रमं ॥ तं प्रपन्नासि
तेनैव । मरणं ते समागतं ॥ ७१ ॥ लोहार्गलं महादेवं । भगवंतं च भैरवं ॥ असरिष्ये यदि त्रा
ण—मभविष्यत्तदा तव ॥ ७२ ॥ किंचिदद्यापि नो नष्टं । दैवतं स्मर भैरवं ॥ लोहार्गलं च येन स्या
—न्मरणे रक्षणं तव ॥ ७३ ॥ ततो जगाद सा बाला । कापालिक किमिहसि ॥ संप्राप्ते मरणांतेऽ-
पि । देवो मे हृदि नापरः ॥ ७४ ॥ मरणं जीवितं च स्या—त्प्राणिनां निजकर्मणा ॥ न मारयति

देवोऽत्र । म्रियमाणं च नावति ॥ ७५ ॥ शांतसंसारकर्तव्य—श्चंद्रप्रभजिनेश्वरः ॥ भवे भवे स ए-
वास्तु । ततो मे शरणं सदा ॥ ७६ ॥ भयानि हंति सर्वाण्य—पमृत्युं च निषेधति ॥ स्मर्यमाणो
नमस्कारः । सर्वविघ्नविनाशकः ॥ ७७ ॥ तृणायंते यमाकर्ण्य । लोहार्गलमुखा अपि ॥ जन्मनीह
परत्रापि । कुमारः शरणं स मे ॥ ७८ ॥ कुमारो निश्चयं तस्याः । श्रुत्वेत्यर्हन्नमस्कृतौ ॥ जातपक्षो
विशेपात्तां । मेरुतुल्याममन्यत ॥ ७९ ॥ किं कारणं प्रपन्ना मा—मेषा स्त्री शरणं पुनः ॥ भवनेऽल्प-
प्रदीपाभे । सम्यग्वेद्मीति नाधुना ॥ ८० ॥ मम सैन्येऽथवा काचि—द्राजपुत्री भविष्यति ॥ शर-
णं पक्षपातेन । तेनैषा मां प्रपद्यते ॥ ८१ ॥ अत्रांतरे कुमारस्य । खादचक्रे हृदि शल्यवत् ॥ इहा-
गतापि किं नु स्या—द्देवी भुवनसुंदरी ॥ ८२ ॥ अथवा मे कश्च पुण्य—संपदेवंविधा भवेत् ॥ से-
वैषा ह्यथवान्यापि । पश्यामि निजजीववत् ॥ ८३ ॥ कुमारे चिंतयत्येवं । पापः प्रकृतिनिर्घृणः ॥ द-
ष्टोष्ठो भृकुटीभीमो । विमुक्तगुरुहुंकृतिः ॥ ८४ ॥ केशग्राहं गले याव—न्निवेशयति कर्तिकां ॥ का-
पाली तावदाक्षिप्तः । कुमारेण गुरुस्वरं ॥ ८५ ॥ युग्मं ॥ पापचेष्टित निस्त्रिंश । दुष्टादृष्टव्यतुंड रे ॥
चंडालस्याप्य कृत्यं त—त्किमारब्धं त्वयात्र तत् ॥ ८६ ॥ शतखंडः कथं नाभू—द्विलीनोऽसि कथं न

वा ॥ उत्तमस्त्रीवधछाया—प्रभावेणाधुनैव हि ॥ ८७ ॥ तवैतौ शटितौ किं न । हस्तौ प्रकृतिकर्क·
शौ ॥ एतस्याः केशपाशे यौ । प्रेरितौ हठकृष्टये ॥ ८८ ॥ इतश्च सहसा बाला । कुमारमवलोक्य सा
॥ संजीवितेव शरणं । प्रपद्यैवमभाषत ॥ ८९ ॥ हा निःकारणवात्सल्य । भयार्ता रक्ष रक्ष मां ॥ नि·
स्त्रिंशकर्मनिरता—त्कापालिकयमादितः ॥ ९० ॥ अर्हत्पंचनमस्कार—प्रभावप्रेरितो मम ॥ प्रत्य·
क्षो नररूपस्त्वं । पुण्यराशिरिवोत्थितः ॥ ९१ ॥ हरिणाभाणि नेतव्यं । साधर्मिकि न सर्वथा ॥
प्रभावेण जिनेंद्राणां । गता दूरं भियस्तव ॥ ९२ ॥ सत्यमेव त्वयाभाणि । नमस्कारप्रभावतः ॥
इवाकृष्टोऽहमायातः । प्रकटः पुण्यराशिवत ॥ ९३ ॥ चंडरुद्रो जगादाथ । ज्वालां मुंचन्मुखेन सः ॥
क एष पापकर्मा मे—तरायेऽत्र प्रवर्तते ॥ ९४ ॥ रेरे मोचयितुं भेकीं । सर्पेण गिलितामिव ॥
मयेमां भेकवज्जातः । क एष पुरतो मम ॥ ९५ ॥ हरिणाभाणि मन्येऽह—मात्मानं तव दर्श·
नात् ॥ रेरे पाखंडि चंडाला—पवित्रमिव संप्रति ॥ ९६ ॥ कथं न हृदयं पाप । त्रुट्यत्कुक्षि तवा·
स्फुरत् ॥ विदग्धदग्धसंकल्पं । विश्वसौरकयोषितः ॥ ९७ ॥ श्रुत्वा तथाविधालापान् । कापालिककु·
मारयोः ॥ त्रिशूलहस्त आयातः । शूलपाणिरथो गुरुः ॥ ९८ ॥ ज्वालाभिस्तिसृभिर्भाति । त्रि·

शूलं तस्य जाज्वलत ॥ मंत्राकृष्टैस्त्रिभिर्दीप्तै—रधिष्ठितमिवाग्निभिः ॥ ९९ ॥ विलोक्य तं तथारूपं ।
कंपमाना भयेन सा ॥ पाहि पाहीति जल्पंती । कुमारशरणं ययौ ॥ २०० ॥ छित्वा क्षुरिकया बं-
धान् पृष्ठौ निक्षिप्य बालिकां ॥ निपात्य तं क्षितौ पश्चा—द्बाहुबंधं बबंध सः ॥ १ ॥ चंडरुडं तथै-
वाशु । निबध्याथ तयोर्द्वयोः ॥ अवध्यौ लिंगिनौ तेन । नासां कर्णौ च सोऽच्छिदत् ॥ २ ॥ त्रिशू-
लानलज्वालाभि—र्भृशमुद्योतिते गृहे ॥ प्रत्यभिज्ञानमन्योन्यं । जातं कन्याकुमारयोः ॥ ३ ॥ नरें-
द्रदुहितुः पूर्व—मासीत्कंपो भयेन यः ॥ दर्शनेन कुमारस्य । भावभिन्नस्तथैव सः ॥ ४ ॥ दूरासं-
भाविताlोक—विस्मयस्मेरलोचनौ ॥ स्वानि स्वानि च पुण्यानि । तौ द्वावभिननंदतुः ॥ ५ ॥ ला-
भोऽलंघ्यपुरस्यापि । योऽनिष्टस्तन्मृतेरभूत् ॥ कुमारो दर्शनेनास्याः । प्रशशंस तमेव सः ॥ ६ ॥ ब-
हुना किं तयोस्तत्र । परस्परनिरीक्षणात् ॥ जातं किमपि तत्सौख्यं । त्रैलोक्ये यस्य नोपमा ॥ ७ ॥
मिथो वियुक्तयोर्यस्तु । भवो दुःखमयोऽभवत् ॥ स एव युक्तयोर्जात—स्तयोः सुखमयस्तदा ॥ ८ ॥
अनेनात्ता कथमिति । पृष्टा सा राजसूनुना ॥ अधोमुखी जगादाथ । सलज्जा राजनंदनी ॥ ९ ॥
अवज्ञातमिवात्मानं । मत्वा मृत्युचिकीर्षया ॥ गता सागरकूलेऽहं । मध्ये मंजूषमक्षिपं ॥ १० ॥ ए-

तदेवाभिजानामि । समाकृष्य ततः परं ॥ अत्रानीता कथंकार—मनेनाहं न वेद्मि तत ॥ ११ ॥ उ-
वाच विक्रमो दूर—मज्ञातमत्स्वरूपया ॥ नात्मैव केवलं क्षिप्त—स्त्वया विश्वं च संशये ॥ १२ ॥ यद्
हृद्यपि न संमाति । यदन्योन्यं च पीडकं ॥ कथं तद् हृदये कार्यं । विधृतं स्तनवत्त्वया ॥ १३ ॥ बहु-
शास्त्रज्ञया देवि । त्वया चतुरचित्तया ॥ विवेकयुक्तयापीह । न ज्ञातं हृदयं मम ॥ १४ ॥ राजांग-
जा जगादाद्य । स्त्रीणां पूर्वोदिताः गुणाः ॥ मोहितानां प्रियप्रे[illegible] । सर्वे नश्यंति तत्क्षणात् ॥ १५ ॥
किंतु चित्रं ममाख्यात । कथं यूयमिहागताः ॥ अमनोज्ञेऽतिबीभत्से । बहुप[illegible] श्मशा[illegible]के ॥ १६ ॥
स्वविकल्पप्रकाशार्थं । जा[illegible]ज्ञेन भूभुजा ॥ ऊचे लीलाविहारेण—नैवमेवागतोऽस्म्यहं ॥ १७ ॥
कुमारो जयतीहेति । ददनाशीषमंबरात ॥ यक्षो मलयमेघोऽथ । सपरिवार आययौ ॥ १८ ॥ हरिवि-
क्रम नंद त्वं । यावच्चंद्रदिवाकरौ ॥ त्वमप्यविधवा भूया । वत्से भुवनसुंदरि ॥ १९ ॥ इत्याभास्य
समीपेऽग—त्स कुमारीकुमारयोः ॥ पृष्ट्वान्योन्यं च ते वार्तां । सर्वे निजगृहं ययुः ॥ २० ॥ यक्षो
जगाद राजेंद्रो—प्रवासेनापि पीडितः ॥ सं[illegible] जागरश्चापि । पर्यंके स्वपिहि क्षणं ॥ २१ ॥ इत्या-
मेत्युक्त्वा सुतूलीके । तल्पे मुकुलितेक्षणः ॥ क्षणमात्रं च सुष्वाप । कुमारः सुखनिद्रया ॥ २२ ॥

तती भुवनसुंदर्या । पृष्टो यक्षः पुनर्वद ॥ कः पर्ववासरोऽद्यास्ति । येन राजाप्युपोषितः ॥ २३ ॥
यक्षोऽवोचत्त्वयापि द्वा—वुपवासौ कृतौ कथं ॥ आत्मा वा केन कार्येण । जलधौ च प्रवाहितः ॥ २४ ॥
बालावोचन्मयावज्ञां । श्रुत्वास्योत्पन्नखेदया ॥ तात निःशेषमप्येत—द्विदधे स्नेहमूढया ॥ २५ ॥ य
क्षोऽवोचदयं चापि । वियुक्तः सहसा त्वया ॥ स्नेहेन मोहितस्तेऽल—मुपावासन्मुमूर्षया ॥ २६ ॥
बालोवाच यथा मेऽस्ति । स्नेहोऽमुष्मिन्नये पितः ॥ अनुरागस्तथैवास्य । संजवेत्किं ममोपरि ॥ २७ ॥
ततश्चाकथयद्यक्ष—स्तस्याः सर्वं यथा पुरा ॥ हरिरूचे करिष्यामि । विवाहं विग्रहादनु ॥ २० ॥ स-
हानेन यथा प्राप्त—स्तत्र चारिर्यथा जितः ॥ मूर्छितश्च यथा तस्या । वृत्तांतश्रवणेन सः ॥ २ए ॥
कथितं विस्तरेणेति । यक्षेण नृपचेष्टितं ॥ श्रुत्वा हृष्टमना बाला । पुलकांगीत्यचिंतयत् ॥ ३० ॥ म
न्ये धन्यमधन्यं वा—त्मानं हेतुद्वयेन तु ॥ कुमारस्यानुकूल्येन । दुःखदायितया तथा ॥ ३१ ॥ त-
न्नास्ति लभ्यते यन्न । लोके न्यायेन केनचित् ॥ मन्ये त्वस्यानुकूलं तु । देवानामपि दुर्लभं ॥ ३२ ॥
सर्वेषामेव पुण्यानां । गुरुपुण्यानि तानि तु ॥ कुमारस्य मनोवृत्ति—रेकाग्रा मयि यैः कृता ॥ ३३ ॥
लभ्यते सुकुलोत्पत्ती । रूपं लक्ष्मीर्गुणा अपि ॥ दुर्लभो वल्लभस्यात्म—न्यनुरागो जनस्य तु ॥ ३४ ॥

कुमारविषये याव—ध्यायंतीत्यस्ति सुंदरी ॥ विज्ञाता रजनी ताव—त्पठितं चेति मागधैः ॥ ३५ ॥
नरेंद्र रजनी नष्टा । मोहिताखिलविष्टपा ॥ मूर्ता मूर्छेव लोकानां । प्रज्ञातानिलवीजिता ॥ ३६ ॥ मु-
क्त्वा गिरिदरीलीनं । तमोवृंदं नरेश्वर ॥ सूरप्रतापनिहतं । तवारिमिव निष्ठितं ॥ ३७ ॥ उदये ते-
ऽपि सूरस्य । लुप्ततेजस्वितेजसः ॥ विनश्यत्यरिनक्षत्र—गणः खद्योतसार्थवत् ॥ ३८ ॥ रेखामात्री-
कृतं मित्र—मंडलं शोभते नवं ॥ नखक्षतमिव प्राच्या । वध्वा प्रागीशसंभवे ॥ ३९ ॥ अर्धीकृतं
रवेर्बिंबं । भाति देवारुणच्छवि ॥ इवाधरदलं संध्या—वध्वाया बकरागवत ॥ ४० ॥ संध्यावधू रवे-
र्बिंबं । सहस्रांशुप्रदीपकं ॥ कांचनारात्रिकस्थालं । देवोत्तारयतीव ते ॥ ४१ ॥ इत्थं मंगलजल्पाक—
कृतकोलाहलस्वरैः ॥ प्रबुद्धः सहसात्याक्षी—त्पल्यंकं नरनायकः ॥ ४२ ॥ कृतप्रत्यूषकर्तव्यो । वैरि-
सिंहनतक्रमः ॥ सामंतशतदुर्लंघ्य । आस्तास्थाने ततो नृपः ॥ ४३ ॥ देवीलाभावसानं च । कथ-
यामास गुह्यकः ॥ सेनानीमुख्यलोकानां । वृत्तांतं तदशेषकं ॥ ४४ ॥ कुमारीरत्नलाभेन । हर्षरोमां-
चशालिनां ॥ ततोऽभूत्सर्वलोकानां । तदानंदमयं दिनं ॥ ४५ ॥ वर्धापनं पुरे तत्र । महर्द्ध्या का-
रितं तदा ॥ प्रदत्तं च महादानं । कृतं चैत्येषु चार्चनं ॥ ४६ ॥ अतिक्रांते दिने तस्मि—न्नानंदज-

रनिर्भरे ॥ यक्षेणाभाण्यहं यामि । प्राग्गृहीत्वा सुतां नृप ॥ ४७ ॥ आगंतव्यं त्वयाप्याशु । तत्र रा-
जन् यथा वयं ॥ कारयामो हि सर्वर्द्ध्या । सुतोद्वाहं त्वया सह ॥ ४८ ॥ आमेत्युक्ते कुमारेण । गु-
ह्यकः सुतया सह ॥ निजावासं ययौ तदा—नंदितात्मपरिग्रहः ॥ ४९ ॥ इतश्च पवनो नाम्ना । प्र-
तिहारनिवेदितः ॥ लेखं समर्पयामास । कुमारस्य कृताननतिः ॥ ५० ॥ शिरस्यारोप्य लेखं तं । नृपः
स्वयमवीवचत् ॥ स्वस्त्ययोध्यापुरीमध्या—द्राजेंद्रोऽजितविक्रमः ॥ ५१ ॥ दुर्गेऽलंघ्यपुरे पुत्रं । वै-
रिसिंहसमन्वितं ॥ युवराजं समाख्याति । दत्ताशीर्हरिविक्रमं ॥ ५२ ॥ युग्मं ॥ श्रीवीरसेनराट्पुत्री ।
तत्रास्ति मलयाचले ॥ उपायेन तु केनापि । सैपोद्वाह्या त्वया द्रुतं ॥ ५३ ॥ परिणीय च तां क-
न्यां । दुर्गे मुक्त्वा च सैन्यपं ॥ आगंतव्यं त्वयाप्यत्र । सकलत्रेण सत्वरं ॥ ५४ ॥ लेखार्थमनुकूलं
तं । दृष्ट्वा च नृपनंदनः ॥ उद्वाहोत्सवकार्येषु । निजलोकानतीत्वरत ॥ ५५ ॥ प्रशस्तेऽह्नि पुरा-
त्तस्मा—न्निर्गत्य शकुनैः शुभैः ॥ बहुसैन्यवृतः प्राप । कुमारो मलयाश्रमं ॥ ५६ ॥ भूमिभागे समे
तत्र । निजं सैन्यं न्यवेशयत् ॥ कुमारः कुलपत्याद्यै—र्नंदितोऽखिलतापसैः ॥ ५७ ॥ इतश्च गुह्य-
काहूतो । वीरसेनसुतोऽपि सः ॥ आययौ सपरिवारो । जननीदर्शनोत्सुकः ॥ ५८ ॥ मातुः कृतन-

मस्करो—ऽमरसेनः शुचं दधत् ॥ जगदे यक्षराजेन । मा खिद्यस्व नराधिप ॥ ५९ ॥ शोच्यंते ते कथं राजन् । येऽत्यंतसुकृताश्रयाः ॥ सुपर्वाणोऽपि दासत्वं । येषां कुर्वंति सर्वदा ॥ ६० ॥ स्वसुर्विवाहसंबंधं । प्रस्तुतं चिंतयाधुना ॥ तव चेतसि चेद्भाति । कुर्वे तत्साधुसंगमं ॥ ६१ ॥ हरिविक्रमनामास्ति । ख्यातोऽत्राजितविक्रमैः ॥ तस्मै तवानुजानामि । दीयतां त्वदनुज्ञया ॥ ६२ ॥ उवाचामरसेनोऽथ । तात पृष्ठव्यमत्र किं ॥ युष्मभ्यं रोचते यत्त—त्सर्वं संमतमेव मे ॥ ६३ ॥ ततः परमहर्षेण । प्रारेभे गुह्यकेश्वरः ॥ तस्या भुवनसुंदर्या । विवाहोत्सवमुत्तमं ॥ ६४ ॥ द्विक्रोशमानभूपीठं । समीकृत्य बबंध सः ॥ कर्केतनेंद्रनीलादि—चारुरत्नशिलोत्करैः ॥ ६५ ॥ विवाहमंडपं रम्यं । तस्योपरि चकार सः ॥ नानामणिशिलारत्न—हरिचंदनदारुभिः ॥ ६६ ॥ सुवर्णशिखरै रम्यो । मणिरत्नविचित्रितः ॥ गुरुत्वरुद्धभूमध्यो । मेरुवद्देवतोषकृत् ॥ ६७ ॥ चतुर्द्वारनिबद्धोच्च—तोरणैर्ध्वजशोभितः ॥ दिव्यांगवसनोल्लोचै । रुद्धसूर्यातपागमः ॥ ६८ ॥ मुक्तावचूलकलितः । स्तंभाग्रानद्धचामरः ॥ उत्तुंगवेदिकान्यस्त—सिंहासनमनोहरः ॥ ६९ ॥ यक्षनारीसमारब्ध—मंगलाचारबंधुरः ॥ वेणुवीणास्वनोन्मिश्र—प्रसरन्मंगलध्वनिः ॥ ७० ॥ इत्येवं यक्षराजेन । रम्यतारंजितामरः ॥ विदधे-

मरसेनस्य । भवनद्वारि मंडपः ॥ ७१ ॥ पंचभिः कुलकं ॥ बन्धुवामरसेनस्य । राज्ञः श्रीविक्रमस्य च ॥ विशेषोज्ज्वलनेपथ्यो । जनः सैन्यैः सहागतः ॥ ७२ ॥ अवधिज्ञानतो ज्ञात—सुलग्नो यक्ष-पुंगवः ॥ जगादामरसेनस्य । राजलग्नं समीपगं ॥ ७३ ॥ आहूतोऽमरसेनेन । कृत्वा स्नानादिकं ततः ॥ हरिचंदनलिप्तांगः । श्वेतांबरविराजितः ॥ ७४ ॥ मुकुटाद्यैरलंकारै—र्भूषितः कृतमंगलः ॥ नारी-गीतरवापूर्ण—दिगंतश्छत्रशोभितः ॥ ७५ ॥ वाद्यमानोरुवादित्रो । भट्टोद्घुष्टजयारवः ॥ वरो जयेभ-मारूढो । मंडपद्वारमाययौ ॥ ७६ ॥ त्रिभिर्विशेषकं ॥ सुवर्णमुशलस्पृष्ट—भालस्तत्र कृतक्रियः ॥ म-ध्यविवेशपादेन । संपुटं स्फोटयन् वरः ॥ ७७ ॥ ततो मातृगृहे गत्वा । प्राप्ते लग्नक्षणे वरः ॥ पाणिं जग्राह कन्याया । विधिना निजपाणिना ॥ ७८ ॥ ततश्चतुरिकामध्ये । प्रज्ज्वलंतं हविर्भुजं ॥ चतुः-प्रदक्षिणीकृत्य । कन्यापाणिं मुमोच सः ॥ ७९ ॥ ददावमरसेनोऽथ । भगिन्याः करमोक्षणे ॥ अष्टौ दंतिसहस्राणि । दशलक्षाणि वाजिनां ॥ ८० ॥ सुरथानां च लक्षार्धं । हेमरत्नमहोत्करान् ॥ का-श्मीरकामरूपादि—विषयानप्यनेकशः ॥ ८१ ॥ नानावस्त्राणि रम्याणि । दिव्यान्याभरणानि च ॥ वसुः स्वसृपतेश्चापि । तथान्यदपि वस्तु सत ॥ ८२ ॥ त्रिभिर्विशेषकं ॥ इत्थं विवाहे विनिवर्तितेऽ-

नयो—र्दीनाशनोज्ञानविधानकर्मभिः ॥ सर्वेऽपि तत्रैव दशाह्निकोत्सवं । चक्रुः स्थिता यवनरेश्व
रादयः ॥ ८२ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिग·
णिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये भुवनसुंदरीपाणिग्रहणो नाम चतुर्थः सर्गः समाप्तः.

---

॥ अथ पंचमः सर्गः प्रारभ्यते ॥

अथान्यदा जनान् कुर्व—न्नुत्कर्णान् सहसांबरे ॥ गंभीरो दुंदुभेर्नाद—स्तत्रोच्चैर्व्यानशे दिशः
॥ १ ॥ एकाग्रमनसो याव—त्कौतुकोत्तानलोचनाः ॥ किमेतदिति राजानः । सर्वेऽप्युत्पश्यतां ययुः
॥ २ ॥ वीरसेनमुनिस्ताव—त्प्राप्ताचार्यपदः पुरा ॥ उत्पन्नकेवलज्ञानो । मुनिवृंदपरिवृतः ॥ ३ ॥
जंगमः कल्पशाखीव । गीर्वाणगणसेवितः ॥ दुर्लभो हीनपुण्यानां । संप्राप्तो मलयाचलं ॥ ४ ॥ यु-
ग्मं ॥ समीकृत्य ततो भूमिं । सुगंधोदकवृष्टिभिः ॥ सिषिचुः पुष्पवृष्टिं च । मुमुचुः सुरभिं सुराः
॥ ५ ॥ उत्तप्तचारुकनक—पद्मं मृदुदलोच्चयं ॥ गीर्वाणा रचयामासुः । प्रौढकर्णिकया युतं ॥ ६ ॥
गुणरत्नसमृद्धस्य । श्रीसंघस्य नमस्क्रियां ॥ विधाय कमलस्यांत—रासांचक्रे मुनीश्वरः ॥ ७ ॥ सूर·

सेनविचित्रर्पि—शेखशशोकसादराः ॥ अन्येऽपि सूरिमुनयः । पार्श्वे तस्य समासदन् ॥ ८ ॥ विक्र-
मामरसेनौ तौ । समेत्य सपरिछदौ ॥ गुरुपादान् ववंदाते । मुनीनपि यथाक्रमं ॥ ९ ॥ चंद्रश्रियं पु-
रस्कृत्य । यक्षिणीयक्षसंयुतः ॥ सार्धं भुवनसुंदर्या । यक्षराजः समाययौ ॥ १० ॥ महिमानं विधाया-
थ । नक्त्या केवलिनो गुरोः ॥ कृतप्रणाम आयोज्य । करावास्त यथोचितं ॥ ११ ॥ कुलपत्यादयः
सर्वे । बालवृद्धाश्च तापसाः ॥ सापत्याः सकलत्राश्च । प्रसूनफलपाणयः ॥ १२ ॥ तत्रागत्य गुरोः पा-
द—मूले पुष्पफलादिकं ॥ प्रविमुच्योचितस्थाने । गुरोः पुर उपाविशन् ॥ १३ ॥ युग्मं ॥ ततः के-
वल्युवाचेदं । साधूनां कल्पते न जोः ॥ सावद्यमनवद्यानां । कंदमूलफलादिकं ॥ १४ ॥ युष्माक-
मागमे ये च । कथिता धर्महेतवः ॥ त एवार्हन्मते पाप—हेतवः परिकीर्तिताः ॥ १५ ॥ ततः कुल-
पतिः स्माह । कथमेतन्महामुने ॥ केवली पुनराहस्म । श्रूयतां कथयामि भोः ॥ १६ ॥ सम्यग्ज्ञा-
नेन संयुक्तं । मोक्षमार्गस्य साधकं ॥ धर्मानुष्ठानमाख्यातं । सर्वं तत्वार्थवेदिनिः ॥ १७ ॥ पुनर्ज्ञा-
नेन हीनं य—त्क्रमदंधनरोत्तमं ॥ तदनर्थफलं प्रांते । नवरं क्लेशकारकं ॥ १८ ॥ ज्ञानेन ज्ञायते जीवा
—जीवादिस्तत्वसंचयः ॥ जीवरक्षा परं धर्मा—नुष्ठानं सफलं हि तत् ॥ १९ ॥ यावज्जीवनिकायाः

षद् । न ज्ञाता जिनशासनात् ॥ करोति तावदज्ञानी । जीवानां रक्षणं कथं ॥ २० ॥ जीवो भू-
मिरियं तां तु । यूयं खनथ शुद्धये ॥ कथं स्याद्भवतां धर्मो । जीवान् भूकायिकान् घ्नतां ॥ २१ ॥ ज-
लं चापि भवेज्जीवः । कुरुध्वे तेन नित्यशः ॥ अर्घदानं तथा स्नानं । धर्मबुद्ध्या सुरार्चनं ॥ २२ ॥
जीवोऽग्निरपि तत्रोच्चै—र्यवव्रीहितिलादिकं ॥ हव्यं जुहुथ धर्माय । परमार्थपराङ्मुखाः ॥ २३ ॥ जी-
वोऽनिलोऽपि तं यूयं । धर्मबुद्ध्या सदाहथ ॥ दीपे यथानलं यस्मा—द्विधाय व्यजनानिलं ॥ २४ ॥
एते वनस्पतेर्जीवाः । कंदमूलफलादयः ॥ निर्विकल्पा निरीहत्व—बुद्ध्या भक्षयतेऽथ तान् ॥ २५ ॥
वहथेमं जटाभारं । यूकालक्षस्य मंदिरं ॥ उपागान् ध्यायथानेकान् । यूकोच्छेदनहेतवे ॥ २६ ॥ इ-
त्युक्तं यदनुष्ठानं । युष्माकं धर्महेतवे ॥ जिनागमे च तत्सर्वं । भणितं पापहेतवे ॥ २७ ॥ एवमेवे-
ति ते सर्वे । जगुः केवलिनं पुनः ॥ अज्ञानचेष्टितं नूनं । सर्वं नस्तापसव्रतं ॥ २८ ॥ पूर्वदेशं य-
था गंता । दिग्मूढनरशासनात् ॥ न प्राप्नोतीप्सितं स्थानं । दक्षिणाभिमुख व्रजन् ॥ २९ ॥ अंधानु
मार्गलग्नोंध । उत्पथेन यथा व्रजेत् ॥ प्रभो वयं तथा भ्रांता । अज्ञानगुरुशासनात ॥ ३० ॥ नष्टं
नाद्यापि किंचिन्नः । पततो भवसागरे ॥ स्वधर्मदानतः स्वामि—न्नुद्धराज्ञानमोहितान् ॥ ३१ ॥ गु-

रुः स्माह ततो जीवो । नात्यंतोऽनादिसंसृतौ ॥ दृष्टदुःखस्तथाप्यस्य । नोद्वेगो दुःखहेतुषु ॥ ३२ ॥
जीवस्य दुःखकृत्कर्म । कर्मणो हेतवस्त्वमी ॥ मिथ्यात्वं च कषायाश्च । प्रमादोऽविरतिस्तथा ॥ ३३ ॥
एभिर्निर्वर्तितं कर्म । ज्ञानावृत्यादिनाष्टधा ॥ तद्भेदानां शतं ज्ञेय—मष्टपंचाशदुत्तरं ॥ ३४ ॥ प्रकृ
त्या सुखितस्येद—मष्टधा कर्म देहिनः ॥ चतुर्गत्युपयोगानि । दुःखानि जनयेद्भृशं ॥ ३५ ॥ कर्म
दुःखमयं दुःखा—नुभवं दुःखहेतु च ॥ कर्मायत्तः सुखं जीवो । न लेशमपि सेवते ॥ ३६ ॥ दुःखं
प्राप्नोति नीरोगं । यथांगं व्याध्यधिष्टितं ॥ कर्मरोगैस्तथा ग्रस्तो । ही जीवो दुःखभाग्भवेत ॥ ३७ ॥
उत्पद्यंते यथापथ्या—शिनो जीवा ह्यनेकशः ॥ पापापथ्याशिनो जंतोः । कर्मवृद्धिर्भवेत्तथा ॥ ३८ ॥
कर्मशत्रुर्महानेषो—ऽपकारी देहसंस्थितः ॥ उपेक्षितः किलात्मानं । विनाशयति रोगवत् ॥ ३९ ॥
यथा कश्चिन्नरो रोगी । वेदनाविधुरो भृशं ॥ निर्विण्णमानसो रोग—हरं वैद्यं विलोकते ॥ ४० ॥ प्र·
पद्यते ततः सर्वां । सद्वैद्यकथितां क्रियां ॥ त्यक्तापथ्यश्च पथ्याशी । व्याधिदुःखेन मुच्यते ॥ ४१ ॥
रोगातंकविहीनः स । प्राप्तारोग्यसुखस्ततः ॥ स्तौति वैद्यक्रियां सर्वां । वैद्यं च मनुते बहु ॥ ४२ ॥
तथा कर्मरुजा ग्रस्तो । जन्ममृत्यादिदुःखितः ॥ ईक्षते सुगुरुं भव्यो । निर्विण्णो भववासतः ॥ ४३ ॥

लब्धे गुरौ ततस्तस्यो—पदेशकरणे रतः ॥ प्रमादरहितः शुद्धां । प्रव्रज्यां च प्रपद्यते ॥ ४४ ॥ ना-
नाविधतपोयुक्तः । शुद्धभैक्ष्यान्नभोजनः ॥ सर्वत्राप्रतिबद्धश्च । बंधुव्यामोहवर्जितः ॥ ४५ ॥ कुर्वन् गु-
रूपदिष्टां स । सर्वां साधुक्रियां ततः ॥ निःसंदेहं विमुच्येत । कर्मरोगैश्चिरार्जितैः ॥ ४६ ॥ ततोऽहं
वच्मि सर्वान् भो । दुर्लभो गुरुसंगमः ॥ न कर्मव्याधयः किंतु । क्षीयंते गुरुभिर्विना ॥ ४७ ॥ इ-
त्युक्ते गुरुणावादी—चंडश्रीर्भगवन् यदि ॥ योग्यतास्ति प्रव्रज्याया—स्तदा मे देहि सत्वरं ॥ ४८ ॥
चंडश्रीसहिताः सर्वे । कुलपत्यादितापसाः ॥ सापत्याः सकलत्राश्च । दीक्षिता गुरुणा ततः ॥ ४९ ॥
अन्येऽपि तत्र बहवो । विक्रमामरसेनयोः ॥ प्रतिबुद्धा नरा दीक्षां । जगृहुर्गुरुसंनिधौ ॥ ५० ॥ अथो
भुवनसुंदर्या । लब्धावसरया तदा ॥ अपृच्छि केवलज्ञानी । संदेहं हर मे प्रभो ॥ ५१ ॥ यद्सौ म-
लयमेघोऽयं । पितेव स्नेहमावयोः ॥ प्रकाशयंति किं नाथ । महीस्पृग्जन्मनोरपि ॥ ५२ ॥ प्रकृत्या
करणोद्भवः । किं वा पूर्वभवागतः ॥ स्नेहोऽस्य भगवन् ब्रूहि । ममास्ति कौतुकं महत् ॥ ५३ ॥
केवली स्माह हे वत्से । इहास्ति गुरुकारणं ॥ कथयामि समासेन । शृणु त्वं सावधानहृत् ॥ ५४ ॥
इहास्ति भारते वर्षे । कोशलेषु पुरी वरा ॥ विशाला विजया नाम्ना । समृद्धजनसंकुला

॥ ५५ ॥ तस्यामृषभदत्ताख्यो । बभूव वणिजां वरः ॥ भार्या चानंतलक्ष्म्याख्या । कुलीना तस्य व-
ल्लभा ॥ ५६ ॥ सुतोऽजनि तयोर्धर्म—कर्माभावित चित्तयोः ॥ धर्मदत्तोऽभिधानेन । पवित्रगुणसं-
युतः ॥ ५७ ॥ बालत्वादपि जातः स । विषयेषु पराङ्मुखः ॥ कर्मक्षयोपशांतिभ्यो । भाविभव्य-
तयाथवा ॥ ५८ ॥ संप्राप्तयौवनोऽप्येष । लक्ष्मीवान् सुभगाग्रणीः ॥ प्रार्थ्यमानविवाहोऽपि । तरुणी-
भिरनेकधा ॥ ५९ ॥ जितेंद्रियः प्रशांतात्मा । निर्मोहः स्वजनादिषु ॥ आपृच्छ्य पितरं धर्मः । प्रा-
व्राजीद्गुरुसंनिधौ ॥ ६० ॥ युग्मं ॥ अभ्यस्तसंयमाचार—स्तपःशोषितविग्रहः ॥ एकत्वप्रतिमां धर्मः ।
प्रपेदे गुर्वनुज्ञया ॥ ६१ ॥ एकरात्रिं वसन् ग्रामे । नगरे पंचरात्रकं ॥ विहरन्निति संप्राप । धर्मद-
त्तो महाटवीं ॥ ६२ ॥ बहुभिः क्रूरसत्वौघै—ररण्ये तत्र भीषणे ॥ तस्थौ प्रतिमया साधु—रेकस्मिन्
गिरिगह्वरे ॥ ६३ ॥ तस्य साम्यप्रभावेण । त्यक्तवैराः परस्परं ॥ सेवंते तं मुनिं व्याघ्र—करिसिंह-
मृगादयः ॥ ६४ ॥ धर्मोपदेशं शृण्वंति । भद्रकीभावमागताः ॥ जीवघातं न कुर्वंति । सावद्याहारव-
र्जिताः ॥ ६५ ॥ इतश्च विषमे तत्र । भूभागे नातिदूरगा ॥ पल्ली यमपुरीत्यस्ति । प्रसिद्धा जगती-
तले ॥ ६६ ॥ तत्राभूद्व्याघ्रराजाख्यो । निःकृपः पल्लिकापतिः ॥ बहुसिंहगजव्याघ्र—मारणे नि-

रतः सदा ॥ ६७ ॥ अन्यदा शुश्रुवे तेन । निजमंदिरतस्थुषा ॥ पल्लीमध्ये महालोके । तु·
मुलः सहसोत्थितः ॥ ६८ ॥ किमेतदिति पृष्टोऽथ । तेन लोकोऽवदन्नृप ॥ रौद्रसिंहोऽवती-
र्णोऽस्ति । पल्लीपरिसराद्बहिः ॥ ६९ ॥ क रे स दर्शयास्माक—मित्युक्त्वा व्याघ्रनृपतिः ॥ स-
धनुः सशरः सासि—श्चचाल मृगयारतिः ॥ ७० ॥ पल्लीबहिर्ययौ याव—त्तावत्सिंहं ददर्श सः ॥
आवक्रदीर्घलांगूल—भासुरं विश्वभूषणं ॥ ७१ ॥ सिंहालोके समारोप्य । बाणं धनुषि सोऽक्षिपत ॥
पादाभ्यां चोर्ध्वमुड्डीय । वंचयामास केसरी ॥ ७२ ॥ तद्विधौ तौ विलोक्य द्वौ । धर्मदत्तो महामु-
निः ॥ उत्पन्नकरुणः कामं । कायोत्सर्गमपारयत ॥ ७३ ॥ तयोः समीपमागत्य । भुवं पश्यन् पदे प-
दे ॥ उवाचेति प्रशांतात्मा । सोंतरालस्थितो मुनिः ॥ ७४ ॥ भो व्याघ्रराज पल्लीश । भो भोः सिं-
ह महाबल ॥ युवां मे शृणुतं वाक्य—मपरोषावुभावपि ॥ ७५ ॥ किं व्याघ्रराज सिंहेना—पराद्धं
तेन हंसि यत् ॥ भायुपकार एवात्र । निमित्तो नापकारकः ॥ ७६ ॥ सर्वस्यापकृतौ वृत्तिः । सुकरो·
पकृतौ न तु ॥ यदेव दुःकरं सद्भि—राम्नातव्यं तदेव हि ॥ ७७ ॥ व्याघ्रराजोऽवदत्साधो । सर्व ग-
त्वोपघातिनि ॥ अस्मिन् प्रकृतिनिस्त्रिंशे—ऽप्यनुकंपा कथं तव ॥ ७८ ॥ मुनिराहस्म सत्यं भो । उ-

पेद्दयः खलु निर्गुणः ॥ उपेक्षां गुणिनः कुर्वन्न । संसारी स्यात्पुनर्जनः ॥ ७९ ॥ वने वसति सर्वो· ऽपि । सगुणः श्वापदव्रजः ॥ संसर्गेण ममामुत्र । चतुर्विंशतियोजने ॥ ८० ॥ अनेन कारणेनाहं । वच्मि त्वां पल्लिपते ॥ मा मारय मृगारातिं । गुणवंतं निरागसं ॥ ८१ ॥ सदयः स्यान्न चेत्सिंह— स्तवोपरि ततः कथं ॥ अस्मात्प्रकृतिवीरात्त्वं । मुच्यते करगोचरः ॥ ८२ ॥ माज्ञासीः शरघातान्मे । भीतोऽयं पर्यपासरत् ॥ दयापरवशत्वेन । किंतु त्वामत्र नापतत् ॥ ८३ ॥ क्रोधाग्निविवशस्त्वं तु । प्रा हापीरत्र निर्दयं ॥ अत्यपि त्वयि कारुण्य—मुद्वहत्येष केसरी ॥ ८४ ॥ क्रोधो नाम नराधीश । हव्य· वाहो निरिंधनः ॥ अभ्यंतरः पिशाचोऽयं । पारवश्यमहेतुकं ॥ ८५ ॥ मुषित्वा गुणरत्नानि । क्रोध· श्चौर इव क्षणात ॥ विडंबयति लोकेऽस्मि—न्नरं निःस्वमिवोच्चकैः ॥ ८६ ॥ क्रोधो जन्म श्वानेन । संयोगं यः करोत्यलं ॥ त्यक्तलज्जांबरो ब्रूते—ऽसभ्यानि वचनानि सः ॥ ८७ ॥ धत्ते मनोविपर्या· सं । क्रोधो मद्यमिव क्षणात् ॥ अनुशास्ति परं द्वेष्टि । गुरुं च पितरं च यत् ॥ ८८ ॥ मकराकरव· त्क्रोधः । क्रूरत्वागाधदुस्तरः ॥ ये पुनः प्रविशंत्येनं । निमज्जंतितरां तु ते ॥ ८९ ॥ क्षणमात्रभवः क्रोधः । प्रेमापि चिरसंचितं ॥ दूषयत्यचिरादेव । कूपांभोविषलेशवत ॥ ९० ॥ मन्यंते दुर्धियोऽन्य·

प्रव्रतु लज्जोऽहं । स्वयं तां कथयन्निजां ॥ १५ ॥ त्यक्तार्जवतयेत्यात्म—प्रशंसापरया गिरा ॥ मा·
याप्रत्ययमानंदं । मुनिः कर्माशुभं पुनः ॥ १६ ॥ स्वस्थानं श्रेष्टिमुख्यास्ते । ययुरानम्य संयतं ॥ वि·
जहारानगारोऽप्य—न्यत्रागर्हिततद्वचः ॥ १७ ॥ कृतसंलेखनौ प्रांते । मृत्वानशनतो मुनी ॥ सनत्कु·
मार एवैतौ । सुरौ जातौ महर्द्धिकौ ॥ १८ ॥ ज्ञातपूर्वभवा ज्ञाना—त्स्नेहबद्धाः परस्परं ॥ कालं
निर्गमयामासु—स्त्रयोऽपि त्रिदिवौकसः ॥ १९ ॥ सिंहजीवस्ततश्च्युत्वा । पूर्वभत्रैव भारते ॥ महेंद्र·
पालनामाभू—त्पुरे राजगृहे नृपः ॥ २० ॥ धर्मदत्तमुनेर्जीवो । मायाप्रत्ययकर्मणा ॥ च्युत्वा त्रिदि·
वतस्तस्मा—त्तत्रैव नगरे किल ॥ २१ ॥ राज्ञो महेंद्रपालस्यां—गश्रियो वारयोषितः ॥ पुत्री मद·
नमंजूषा । बभूव गुणशालिनी ॥ २२ ॥ मंत्री सुमतिनामाभू—द्विप्रजीवस्ततश्च्युतः ॥ तस्यैवः नृपते·
स्तत्र । नगरे बुद्धिसेवधिः ॥ २३ ॥ मंत्री मदनमंजूषा—मन्वभूदनुरागवान् ॥ पूर्वजन्मसमायात—गु·
रुस्नेहानुभावतः ॥ २४ ॥ महेंद्रश्रीमहादेवी । राज्ञोऽभूत्परमार्हती ॥ तस्या मदनमंजूषा । सखीभावं
समासदत ॥ २५ ॥ महेंद्रश्रीसुसंगा—त्कृत्वा धर्मं जिनोदितं ॥ एषा मदनमंजूषा । ब्रह्मलोकं तदा·
ययौ ॥ २६ ॥ राजा महेंद्रपालश्च । सुमतिश्चापि धीसखः ॥ संसारे विरतावेता—वुभौ जगृहतुर्व्रतं

॥ २७ ॥ ब्रह्मलोके समुत्पन्नौ । राजामात्यमुनी अपि ॥ ते त्रयोऽपि समं तत्र । मित्राण्यासन् पर-
स्परं ॥ २८ ॥ ततोऽप्यनंतसेनस्य । दत्तायाश्च सुतावुभौ ॥ राजामात्यसुरौ जातौ । कौशांब्यां पुरि बां-
धवौ ॥ २९ ॥ धरश्च भरतश्चापि । नाम्ना ख्यातौ उभाविह तौ ॥ तृतीयस्तु तयोर्जाता । चंद्रबालाभि-
धा स्वसा ॥ ३० ॥ भरतश्चंद्रबाला च । द्वावेतौ लांतके गतौ ॥ धर्मध्यानेन कल्पेऽगा—द्धरजीव-
स्तु पंचमे ॥ ३१ ॥ उज्जयिन्यां ततो जातः । श्रावकः स वणिक्सुतः ॥ सौधर्मेऽपि ततो देव—स्त-
तो राजा महीतले ॥ ३२ ॥ मलयाद्रौ ततोऽप्येष । यक्षो मलयमेघकः ॥ पूर्वं सिंहस्य यो जीवो ।
वत्से जानीहि तं त्वमुं ॥ ३३ ॥ च्युतः पूर्वतरं सौख्यं । भुक्त्वा लांतककल्पतः ॥ ततो भरतजीवो-
ऽपि । बभूव हरिविक्रमः ॥ ३४ ॥ चंद्रबालासुरश्च्युत्वा—ऽभूस्त्वं भुवनसुंदरी ॥ चंद्रश्रीगर्भसंभूता । व-
त्से मम सुतोत्तमा ॥ ३५ ॥ चंद्रश्रियां तु यक्षस्य । स्नेहः शीलगुणोद्भवः ॥ भवत्यां भवसंबंधा—
द्बभूव सुतरां पुनः ॥ ३६ ॥ धर्मदत्तमृगाराति—भिल्लादिभववर्धितः ॥ स्नेहोऽनुवर्तते युष्मां—स्ते-
नैष प्रियकारकः ॥ ३७ ॥ उवाच सुंदरी स्वामिन् । कथमेतन्ममाभवत् ॥ अल्पस्य दुरितस्यापि ।
विपाकः विरसं फलं ॥ ३८ ॥ केवली स्माह हे वत्से । प्रव्रज्या ह्यतिदुःकरा ॥ स्खलितं स्तोकमप्य-

स्मिन् । क्रुद्धेनापकृतं मया ॥ नेदं विदंति सोढव्यं । मया शतगुणं पुरः ॥ ९१ ॥ यद्यथा क्रियतेऽन्यस्य । तत्तथैवाशुभं शुभं ॥ आदर्श इव सर्वं हि । संक्रामत्यात्मनि क्षणात ॥ ९२ ॥ प्रत्यक्षेण परीक्षस्व । परलोकं तदेव यत् ॥ दुर्वाचा दुर्वचो घातो । घातेन प्राप्यते पुनः ॥ ९३ ॥ तत्पल्लीश त्यज क्रोधं । परिणामाशुभावहं ॥ सिंहे न केवलं मैत्रीं । कुरु सर्वेषु जंतुषु ॥ ९४ ॥ बालत्वादपि पल्लीश । विषवृक्ष इवोन्नतः ॥ जगत्संहारहेतुस्त्वं । परलोकपराङ्मुखः ॥ ९५ ॥ अपि लब्धं मनुष्यत्व—मलब्धं धर्मवर्जितं ॥ उपार्जयसि यत्पाप—कर्मभिर्बहुपातकं ॥ ९६ ॥ प्राणिहिंसामिषाशित्वं । मद्यपानं च चौरिका ॥ परनारीपरीरंभ—श्चैतत्तव कुलव्रतं ॥ ९७ ॥ एतानि तु महाश्वभ्रं । नयंति निश्चितं नरं ॥ यस्माद्दर्शयते युक्तं । स्वसामर्थ्यं महाविषं ॥ ९८ ॥ अद्याप्यात्मानमीक्षस्व । त्यज त्वं पातकक्रियां ॥ परलोकसुखं धर्मं । कुरु सर्वदयामयं ॥ ९९ ॥ पल्लीपते वरं सिंह—स्तिर्यङ्ङपि दयापरः ॥ न त्वं राजन् मनुष्योऽपि । यः पापकरणोद्यतः ॥ १०० ॥ पल्लीपतिस्ततोऽवोच—द्भगवन्नेवमेव हि ॥ वरमेष गुणी सिंहो । नाहं जंबुकसंनिभः ॥ १ ॥ वचोमात्रैः क्रियाशून्यैः । किं ममैभिर्महामुने ॥ योग्योऽस्मि चेदहं धर्मं । विशुद्धं तं ममादिश ॥ २ ॥ इत्युक्त्वा सशरं चापं । बभंज विर-

तो वधात् ॥ उपशांतमना धर्म—कथनेन प्रबोधितः ॥ ३ ॥ पंचभिर्मुष्टिभिर्लोचं । कृत्वा संगविव·
र्जितः ॥ प्रव्रज्यां प्रतिजग्राह । निरवद्यक्रियेछया ॥ ४ ॥ प्रशशंसे जनैरेवं । धर्मदत्तमुनिस्ततः ॥
क्रूरान् बोधयते भिल्लां—स्तिरश्चोऽप्येष यछमी ॥ ५ ॥ अथ भिल्लमुनिर्धर्म—दत्तं नापि क्षणं जहौ ॥
संजातातिगुरुस्नेहः । सार्धं सर्वत्र चाभ्रमत ॥ ६ ॥ धर्मदत्तमृगेंद्रौ च । समभूतां परस्परं ॥ अत्यंत-
प्रीतिसंयोगा—देकचित्ताविवानिशं ॥ ७ ॥ सिंहः कालक्रमेणाथ । शुभभावो दिने दिने ॥ विहि·
तानशनः प्रांते । नमस्कारं हृदि स्मरन् ॥ ८ ॥ मृत्वा सनत्कुमारे स । महर्द्धिरमरोऽभवत् ॥ विमाने
सुप्रभे सप्त—सागरोपमजीवितः ॥ ९ ॥ युग्मं ॥ विहरन् धर्मदत्तोऽपि । भिल्लसाधुसमन्वितः ॥
आजगाम महोद्याने । विजयाख्याः पुरो बहिः ॥ १० ॥ श्रेष्ठी वृषभदत्तोऽथ । वास्तव्योऽपि जनोऽ·
खिलः ॥ धर्मदत्तमुनेः पार्श्वे । समागाद्गुणरागतः ॥ ११ ॥ आनंदिते जने तस्मिन् । धर्मदेशनया·
मुना ॥ अवाप्यावसरं श्रेष्ठी । पप्रछ मुनिपुंगवं ॥ १२ ॥ पारंपर्येण भगव—न्नस्माभिरिति शुश्रुवे ॥
प्रतिबुद्धो भवत्संगा—त्क्रूरोऽपि श्वापदव्रजः ॥ १३ ॥ मुनिराहस्म युष्माभि—र्यथाश्रावि तथैव तत् ॥
एष पल्लिपतिर्जातः । प्रत्यक्षो मुनिपुंगवः ॥ १४ ॥ तिर्यक्प्रबोधशक्तिर्या । साक्षाद्भिल्लपतेरपि ॥ एनं

पूर्वंतु लज्जोऽहं । स्वयं तां कथयन्निजां ॥ १५ ॥ त्यक्तार्जवतयेत्यात्म—प्रशंसापरया गिरा ॥ मा· यापत्ययमानंदं । मुनिः कर्माशुभं पुनः ॥ १६ ॥ स्वस्थानं श्रेष्ठिमुख्यास्ते । ययुरानम्य संयतं ॥ वि· जहारानगारोऽथ—न्यत्रागर्हिततद्वचः ॥ १७ ॥ कृतसंलेखनौ प्रांते । मृत्वानशनतो मुनी ॥ सनत्कु· मार एवैतौ । सुरौ जातौ महर्द्धिकौ ॥ १८ ॥ ज्ञातपूर्वभवा ज्ञाना—त्स्नेहबद्धाः परस्परं ॥ कालं निर्गमयामासु—स्त्रयोऽपि त्रिदिवौकसः ॥ १९ ॥ सिंहजीवस्ततश्च्युत्वा । पूर्वमत्रैव भारते ॥ महेंद्र· पालनामाभू—त्पुरे राजगृहे नृपः ॥ २० ॥ धर्मदत्तमुनेर्जीवो । मायाप्रत्ययकर्मणा ॥ च्युत्वा त्रिदि· वतस्तस्मा—त्तत्रैव नगरे किल ॥ २१ ॥ राज्ञो महेंद्रपालस्यां—गश्रियो वारयोषितः ॥ पुत्री मद· नमंजूषा । बभूव गुणशालिनी ॥ २२ ॥ मंत्री सुमतिनामाभू—द्विप्रजीवस्ततश्च्युतः ॥ तस्यैवः भूपते· स्तत्र । नगरे बुद्धिसेवधिः ॥ २३ ॥ मंत्री मदनमंजूषा—मन्यभूदनुरागवान् ॥ पूर्वजन्मसमायात–गु· रुस्नेहानुभावतः ॥ २४ ॥ महेंद्रश्रीमहादेवी । राज्ञोऽभूत्परमार्हती ॥ तस्या मदनमंजूषा । सखीभावं समासदत ॥ २५ ॥ महेंद्रश्रीसुसंगा—त्कृत्वा धर्मं जिनोदितं ॥ एषा मदनमंजूषा । ब्रह्मलोकं तदा· ययौ ॥ २६ ॥ राजा महेंद्रपालश्च । सुमतिश्चापि धीसखः ॥ संसारे विरतावेता—वुभौ जगृहतुर्व्रतं

॥ २७ ॥ ब्रह्मलोके समुत्पन्नौ । राजामात्यमुनी अपि ॥ ते त्रयोऽपि समं तत्र । मित्राण्यासन् परस्परं ॥ २८ ॥ ततोऽप्यनंतसेनस्य । दत्तायाश्च सुतावुभौ ॥ राजामात्यसुरौ जातौ । कौशांब्यां पुरि बांधवौ ॥ २९ ॥ धरश्च भरतश्चापि । नाम्ना ख्यातौ भुवीह तौ ॥ तृतीयस्तु तयोर्जाता । चंद्रबालाभिधा स्वसा ॥ ३० ॥ भरतश्चंद्रबाला च । द्वावेतौ लांतके गतौ ॥ धर्मध्यानेन कल्पेऽगा—द्धरजीवस्तु पंचमे ॥ ३१ ॥ उज्जयिन्यां ततो जातः । श्रावकः स वणिक्सुतः ॥ सौधर्मेऽपि ततो देव—स्ततो राजा महीतले ॥ ३२ ॥ मलयाद्रौ ततोऽप्येष । यक्षो मलयमेघकः ॥ पूर्वं सिंहस्य यो जीवो । वत्से जानीहि तं त्वमुं ॥ ३३ ॥ च्युतः पूर्वतरं सौख्यं । भुक्त्वा लांतककल्पतः ॥ ततो भरतजीवोऽपि । बभूव हरिविक्रमः ॥ ३४ ॥ चंद्रबालासुरश्च्युत्वा—ऽभूस्त्वं भुवनसुंदरी ॥ चंद्रश्रीगर्भसंभूता । वत्से मम सुतोत्तमा ॥ ३५ ॥ चंद्रश्रियां तु यक्षस्य । स्नेहः शीलगुणोद्भवः ॥ भवत्यां भवसंबंधा—द्बभूव सुतरां पुनः ॥ ३६ ॥ धर्मदत्तमृगाराति—भिल्लादिभववर्धितः ॥ स्नेहोऽनुवर्तते युष्मां—स्तेनैष प्रियकारकः ॥ ३७ ॥ उवाच सुंदरी स्वामिन् । कथमेतन्ममाभवत ॥ अल्पस्य दुरितस्यापि । विपाकः विरसं फलं ॥ ३८ ॥ केवली स्माह हे वत्से । प्रव्रज्या ह्यतिदुःकरा ॥ स्खलितं स्तोकमप्य-

त्व । वर्जनीयं प्रयत्नतः ॥ ३९ ॥ इति पूर्वभवं श्रुत्वा । विशेषस्नेहनिर्भरौ ॥ सार्धं गुह्यकराजेन । दं-
पती तौ बभूवतुः ॥ ४० ॥ गीतार्थं स्थापयामास । बंधुदत्ताभिधं गुरुं ॥ नवदीक्षितशिक्षार्थं । वी-
रसेनः स केवली ॥ ४१ ॥ राज्ञाथामरसेनेन । सुंदर्या विक्रमेण च ॥ नत्वोचे भगवन् कार्यः । प्र-
सादो दर्शनेन वः ॥ ४२ ॥ इत्युक्तः केवलज्ञानी । सुरविद्याधरान्वितः ॥ धर्मवृष्टिकृतेऽन्यत्र । ययौ
क्वापि स मेघवत ॥ ४३ ॥ आपृच्छ्य गुह्यकाधीशं । हरिविक्रमभूपभूः ॥ चचालामरसेनेना—नुयातो-
ऽभिनिजां पुरीं ॥ ४४ ॥ ततो भुवनसुंदर्या । सख्यः सर्वा बभाषिरे ॥ सर्वे यक्षजनाश्चापि । भृशं
गद्गदया गिरा ॥ ४५ ॥ सख्योऽहं नैव विस्मार्या । दूरीभूतापि संप्रति ॥ इत्युक्त्वा सहालीभिः । स-
बाष्पनयना भवत् ॥ ४६ ॥ चंद्रप्रभं ननामाथ । भालस्पृष्टमहीतला ॥ दीर्घिकां च क्षणं दृष्ट्वा । द-
दर्शोद्यानपादपान् ॥ ४७ ॥ पादलग्नकरोत्तंसा । यक्षराजं ननाम च ॥ सिंचंतीव पदौ बाष्प—मिषे-
ण स्नेहबिंदुभिः ॥ ४८ ॥ जगाद यक्षराजोऽथ । खेदं मा कुरु पुत्रि हे ॥ दत्ता वराय योग्याय । शो-
चनीयासि नो यथा ॥ ४९ ॥ प्रतिक्रियां करिष्यामि । वत्सेऽहं ते पुनः पुनः ॥ त्वया चिंतितमा-
त्रोऽपि । नन्वेष्यामि तवांतिके ॥ ५० ॥ बहुप्रकारमित्युक्त्वा । गुरुकष्टेन सुंदरी ॥ वरयानं समारु-

ह्य । चचाल सपरिच्छदा ॥ ५१ ॥ निर्वर्त्यामरसेनं तं । त्रिभिर्मार्गोत्प्रयाणकैः ॥ अलंघ्यनगरे वैरि—सिंहं मुक्त्वाचलद्बहिः ॥ ५२ ॥ सौराज्यरंजितं लोकं । पश्यन्मार्गे पुरे पुरे ॥ अयोध्यां नगरीं प्राप । ससैन्यो हरिविक्रमः ॥ ५३ ॥ पुरो गतेन पुंसाथ । कथिते विक्रमागमे ॥ कारयामास राजेंद्रः । पुरीमध्ये महोत्सवं ॥ ५४ ॥ राजमार्गा व्यराजंत । प्रसिक्ताः कुंकुमद्रवैः ॥ दर्शयंतीव रागं स्वं । मूर्तं यत्र वरागमे ॥ ५५ ॥ गृहे गृहे निबद्धोच्च—तोरणानां च पल्लवैः ॥ इव पल्लवितं जाति । यत्रोत्सवरसेन खं ॥ ५६ ॥ वातो धूतपताकाग्रैः । सौधशृंगैर्मनोहरा ॥ कुमारागमहृष्टा नू—श्चेलोत्क्षेपमिवाकरोत् ॥ ५७ ॥ इति कारितपूःशोभो । राजेंद्रोऽजितविक्रमः ॥ महर्द्ध्या सपरीवारः । कुमाराभिमुखं ययौ ॥ ५८ ॥ सुतेन प्रणतो राजा । प्रहृष्टोऽजितविक्रमः ॥ प्रवेशं कारयामास । पुरीमध्ये वधूवरं ॥ ५९ ॥ रूपं भुवनसुंदर्या । दृष्ट्वा लोकश्चमत्कृतः ॥ परस्परं जगादाद्य । कृतार्थे मेऽद्य चक्षुषी ॥ ५९ ॥ एतस्या जन्मना पंच । कृतार्थान्यभवन्निह ॥ भवः स्रष्टा दृशौ द्रष्टुः । पितृस्वसुरयोः कुले ॥ ६० ॥ इत्यादि बहुधा लोका—लापं शृण्वन्नरेश्वरः ॥ हर्षरोमांचसंयुक्तः । प्राविशन्नृपमंदिरं ॥ ६१ ॥ विहितोचितकर्तव्यो । वधूट्या प्रणतस्तदा ॥ भूया अविधवा वत्से । ददावा-

शीषमित्यसौ ॥ ६२ ॥ श्वश्र्वाशीषमथादाय । निजस्थानं वधूर्ययौ ॥ ननामाथ महाभक्त्या । मातरं हरिविक्रमः ॥ ६३ ॥ सार्धं भुवनसुंदर्या । कुमारो हरिविक्रमः ॥ अर्थधर्माविरोधेना—भुक्त वैषयिकं सुखं ॥ ६४ ॥ घनानुरागसंयुक्त—मदृष्टविरहासुखं ॥ अतिप्ररूढविश्रंभं । विषादेर्ष्याविवर्जितं ॥ ६५ ॥ विश्वैकप्रार्थनायोग्यं । विशिष्टजनसंस्तुतं ॥ मनोऽभिराममन्योन्या—शंकाशंकुजितं सदा ॥ ६६ ॥ त्रिभिर्विशेषकं ॥ राज्यभारं समस्तं तं । निवेश्य हरिविक्रमे ॥ भार्यामात्ययुतो दीक्षां । जग्राहाजितविक्रमः ॥ ६७ ॥ भूमंडले समस्तेऽथ । राजापि हरिविक्रमः ॥ निर्जितारिजनं राज्य—मेकछत्रमपालयत ॥ ६८ ॥ अथो भुवनसुंदर्या । महिष्याः कुक्षिसंभवः ॥ सूरविक्रमनामाभू—त्तनयो विनयोज्ज्वलः ॥ ६९ ॥ सकलशास्त्रकुशलं । कुमारं प्राप्तयौवनं ॥ विलोक्य नृपतिश्चक्रे । युवराजं शुभे दिने ॥ ७० ॥ निधाय पुत्रे युवराजसंपदं । शच्येव देव्या सहितो दिवानिशं ॥ महीमहेंद्रो हरिविक्रमस्ततः । स्वर्गोपमं राज्यमपालयच्चिरं ॥ ७१ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिविलिखिते हरिविक्रमचरित्रे महाकाव्ये पूर्वभवसंबंधराज्याभिषेकवर्णनो नाम पंचमः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

॥ अथ षष्ठः सर्गः प्रारभ्यते ॥

अथान्यस्मिन् दिने राजा । सौधवातायने स्थितः ॥ ऊचे भुवनसुंदर्या । विश्रंभस्नेहगर्भितं ॥ १ ॥ संसारेऽस्मिन् महाराज । क्षणिके जन्म मानुषं ॥ लब्ध्वा पुंसा तथा कार्यं । परत्र स्यात्सुखी यथा ॥ २ ॥ अमुमेवाधमा लोकं । परं चामुं च मध्यमाः ॥ उत्तमाः पुनरिच्छंति । लोकमेव परं नराः ॥ ३ ॥ मध्यमोत्तमहीनानां । दुर्लभा उत्तमा नराः ॥ पंचषा मध्यमाः संत्य—धमैस्तु पूरितं जगत् ॥ ४ ॥ त्यक्त्वान्यत्पक्षयुग्मं चे—दुत्तमत्वं कथंचन ॥ लभ्यतेऽत्र तदा किं न । लब्धं जगति चंचले ॥ ५ ॥ तत्वार्थवर्जितं सर्वं । स्वरूपं संसृतेरिदं ॥ तत्रापि प्रतिबंधो यः । परिणामे स दुःखदः ॥ ६ ॥ स्वामिन्नध्यवसायोऽयं । सदा स्फुरति मे हृदि ॥ सम्यक् चित्तं तु देवस्य । ज्ञातुमिच्छामि संप्रति ॥ ७ ॥ ईषद्विहस्य सस्नेहं । जगाद हरिविक्रमः ॥ ऋजुके हृदयं मेऽपि । न ज्ञातं कियद्दिनैः ॥ ८ ॥ बहूनि स्युः कलत्राणि । श्रेयःप्रत्यूहहेतवे ॥ त्वत्सदृक्षं पुनः पुण्यैः । परलोकहितं भवेत् ॥ ९ ॥ नावोचं त्वद्भयेनाहं । किमपि त्वयि सुंदरि ॥ तवावगतचित्तस्तु । यतिष्ये श्रेयसेऽधुना ॥ १० ॥ इत्यन्योन्यं तयोर्याव—त्संसारोद्विग्नचित्तयोः ॥ प्रवर्तंते सदालापाः । केवली ताव-

दायथौ ॥ ११ ॥ शक्रावतारतीर्थस्य । समीपे ज्ञानिनं स्थितं ॥ उद्यानपाल आगत्य । कथयामास
नृपतेः ॥ १२ ॥ सांतःपुरपरीवारो । राजा पौरजनावृतः ॥ वंदनार्थं चचालाशु । दानं दत्वा यथोचि-
तं ॥ १३ ॥ प्राप्योद्यानभुवं राजा—वतीर्य जयकुंजरात ॥ त्यक्त्वा च राजचिह्नानि । गुर्वास्थानं वि-
वेश सः ॥ १४ ॥ सार्धं भुवनसुंदर्या । पौरामात्यजनैः समं ॥ राजा परमया भक्त्या । ववंदे ज्ञानिनं
मुनिं ॥ १५ ॥ मुनिवृंदं ततो नत्वा । विशुद्धे वसुधातले ॥ आसांबभूव भूपालो । धर्मश्रवणवांछ-
या ॥ १६ ॥ संभाष्य भूपतिं मेघ—गंभीरोदारया गिरा ॥ जयाख्यः केवली स्माह । धर्मं सर्वसभा
सदां ॥ १७ ॥ धर्मं शृणुत भो भव्याः । श्रुत्वा धारयतांतरा ॥ हेयं त्यजत चाहेय—मंगीकुरुत स-
र्वथा ॥ १८ ॥ आविःकृतभवाशेष—सद्भावं धर्मकारणं ॥ सम्यग्ज्ञानं प्रयत्नेना-दरणीयं तदेव हि
॥ १९ ॥ सम्यग्ज्ञानविहीनस्तु । न वेत्ति भवनिंदितं ॥ अज्ञातभववैगुण्यः । संसारान्न निवर्तते
॥ २० ॥ संसारार्थविरक्तानां । धर्मारंभा भवंति यत् ॥ अविरक्तास्तु गृह्णंति । परमार्थधिया भवं ॥ २१ ॥
सम्यग्ज्ञानसमेतस्तु । मोहद्रोहपरायणः ॥ सर्वं संसारविस्तारं । निःसारं मनुतेतरां ॥ २२ ॥ संसारे
यद्यदत्रास्ति । नृणां व्यामोहकारणं ॥ तत्तत्सर्वमनित्यं हि । ज्ञातव्यं बुद्धिमज्जनैः ॥ २३ ॥ हरिवि-

ऋम राज्य त । सप्ताग वर्ततऽत्र यत ॥ स्वाम्यमात्यसुहृत्कोश—राष्ट्रदुर्गबलान्वितं ॥ २४ ॥ बोहित्थस्येव राज्यस्य । तवैतस्य विनिश्चितः ॥ न रक्षा क्रियते दैवै—रप्यपुण्यानिलाहते ॥ २५ ॥ युग्मं ॥ दृष्टांतोऽत्र स्फुटो राजा । सूरसेनो महाबलः ॥ पुण्यक्षयेन यस्यासी—द्रक्षा राज्यस्य केनचित् ॥ २६ ॥ पप्रच्छाथ महाराजः । संयोज्य करकुड्मलौ ॥ सूरसेनः स को राजा । राज्ये तस्य बभूव किं ॥ २७ ॥ उवाच केवली राजन् । श्रूयतां महती कथा ॥ सूरसेननरेंद्रस्य । वीरसेनगुरोः पितोः ॥ २८ ॥

इहास्ति भरतक्षेत्रे । चंपा नाम्ना महापुरी ॥ तत्रारूर्जितविद्वेषी । सूरसेनो महाबलः ॥ २९ ॥ रणांगणे चिरं येन । दूरं त्रासितवैरिणा ॥ सरोषमिव संक्रांतः । स्वासावात्याविलोकितः ॥ ३० ॥ पूर्वजन्मानुसंबंधि—निर्भरस्नेहशालिनी । शृंगारवत्यभून्नाम्ना । तस्य भार्या प्रियंवदा ॥ ३१ ॥ राज्यं रूपं च सौभाग्यं । स्वामित्वं विभवं तथा ॥ अनुकूलकलत्रेण । सफलं मन्यतेस्म सः ॥ ३२ ॥ श्लाघ्यानि तस्य सौख्यानि । भुंजानस्य समं तया ॥ एकमेवाभवद् दुःखं । यत्पुत्रो न हि जायते ॥ ३३ ॥ अन्यदा सुखशय्यायां । पुत्रचिंतापरो निशि ॥ अपनिद्रो नराधीश—श्चिंतयामास चेतसि

॥ ३४ ॥ मंमनं मृतकस्येवां—धकार इव नर्तितं ॥ इदं राज्यं विना पुत्रं । सर्वं मेऽस्तींद्रजालवत् ॥ ३५ ॥ निर्मूलः पादपः कूपः । शुष्काशेषशिराजलः ॥ वंशश्च पुत्ररहित । एते न स्युश्चिरायुषः ॥ ३६ ॥ पिता माता कुलं जातिः । सर्वं पुत्रेण चाप्यते ॥ अपुत्राणां सदप्येत—दस्तं याति हि निश्चितं ॥ ३७ ॥ व्युच्छिन्नानि यथा मत्तो । गुरुण्यपि कुलान्यपि ॥ तथा किं मे कुलस्यापि । विच्छेदो भविताधुना ॥ ३८ ॥ सूरसेनाख्यविच्छिन्नो । वंश इत्यत्र दुःश्रवं ॥ श्रोतुं शक्नोमि नो वाक्यं । यतिष्येऽहं सुताय तत ॥ ३९ ॥ इति चिंतापरो याव—द्भूवोर्वीपतिस्तदा ॥ तावद्विलोकयामास । प्रद्योतं जालकाध्वना ॥ ४० ॥ तं दृष्ट्वा चिंतयामास । किं प्राच्यामीदृशं महः ॥ प्रभाता रजनी किंवा । किंवा चंद्रोद्गमो भवेत् ॥ ४१ ॥ इदानीमेव सुप्तोऽहं । शय्यायामर्धरात्रिके ॥ अद्य कृष्णचतुर्दश्या । दिनं चंद्रोद्गमः कथं ॥ ४२ ॥ किमप्यत्र महच्चित्रं । तद्भविष्यति निश्चितं ॥ तत्र गत्वा च पश्यामि । स्वरूपं महसः स्वयं ॥ ४३ ॥ ध्यात्वेति नृपतिः खड्ग—हस्तो वंचितयामिकः ॥ त्यक्तशय्यागृहः शीघ्रं । निर्ययौ नगराद्बहिः ॥ ४४ ॥ उद्योतवशतः प्राप । वासुपूज्यजिनेशितुः ॥ भवनं देवसंघात—सुंदरं राजकुंजरः ॥ ४५ ॥ दृष्ट्वा देवविमानानि । मेने नृपः स्वचेतसि ॥ एतेषामेव तेजोऽदः ।

स्फुरत्प्रतिरविप्रभं ॥ ४६ ॥ तदद्य सुंदरं जातं । यदत्राहं समागतः ॥ सर्वं मे सफलं जातं । वासु-
पूज्यस्य दर्शनात् ॥ ४७ ॥ इत्युक्त्वा नृपतिर्याव—त्त्वरितं द्वारमासदत् ॥ तावन्मनुष्य इत्येष । द्वार-
स्थैः स्खलितोऽमरैः ॥ ४८ ॥ ऊचे नृपेन भो द्वाःस्था । मां मुंचत जिनांतिके ॥ तिर्यग्नरामराणां हि
। सदा साधारणो जिनः ॥ ४९ ॥ ऊचुर्द्वाःस्थाः क्षणं तिष्ठ । यावद्याति सुरेश्वरः ॥ निजस्थाने गते
शक्रे । वासुपूज्यं नमेस्ततः ॥ ५० ॥ सुरः स्माहास्ति चेच्छक्र—स्ततो यामि विशेषतः ॥ वासुपूज्यं
विलोक्यापि । पश्चात्पश्यामि वासवं ॥ ५१ ॥ देवैरूचे ततः पुण्यैः । सुरेंद्रो दृश्यते नृप ॥ स्यात्कथं
पुण्यहीनानां । शक्रस्य मुखदर्शनं ॥ ५२ ॥ नृपेणोचे मया सार्धं । वादो युष्माभिराहतः ॥ वासु-
पूज्यजिनालोकः । किं न स्यात्पुण्यकारणं ॥ ५३ ॥ वासुपूज्यनमस्कार—प्राप्तपुण्यमहाभरः ॥ वी-
क्षतेऽप्यपवर्गं तु । किमिमं न सुरेश्वरं ॥ ५४ ॥ इत्यालपन्नपि प्राप । न प्रवेशं यदांतरा ॥ स्खलि-
तस्तैस्तदा वक्तुं । प्रारेभे नृपतिः पुनः ॥ ५५ ॥ स्खल्येयोऽहं भवद्भिः किं । निर्विवेकैः शिखंडि-
भिः ॥ मर्यादैव सतां किंतु । प्रतिरोधकृते क्षमा ॥ ५६ ॥ इत्युक्त्वा वसुधाधीश । आकृष्यासिं पु-
नर्जगौ ॥ समर्थोऽस्ति भवन्मध्ये । यः स स्खलतु मां सुरः ॥ ५७ ॥ देवैस्त्राणयसंबंधं । किं रे ज-

ल्पसि मानुष ॥ भवंति ते कथं संतः । स्वशक्तिं ये न जानते ॥ ५८ ॥ ततो राज्ञा समं युद्धे ।
प्रारब्धे द्वारपालकैः ॥ गत्वांतः कथितं केना—प्यमरेण सुरेशितुः ॥ ५९ ॥ ततोऽज्ञापि सुरेंद्रेण ।
कोऽप्ययं मानवो महान् ॥ स्याद्विक्रमेण यः स्वेन । देवानामपि सन्मुखः ॥ ६० ॥ चित्रं किमथवा
जाति—स्तेजसो नात्र कारणं ॥ ज्वलंत्यपि न काष्ठानि । संघर्षेण परस्परं ॥ ६१ ॥ आकारयत तं
शीघ्र—मित्युक्ते बलवैरिणा ॥ धावमानैः सुरै राजा । निन्ये वासवसन्निधौ ॥ ६२ ॥ प्राग् नत्वा वा-
सुपूज्यांह्रि—कमलं नृमिवासवः ॥ वासवं च ततो नत्वा । सप्रश्रयमदोऽवदत् ॥ ६३ ॥ सकलस्या-
पि लोकस्य । नाथस्त्वमसि वासव ॥ नाथो मध्यमलोकस्या—हं तथापि तवाज्ञया ॥ ६४ ॥ कथं
ते स्खलितो दुष्टै—र्द्वारपालैः सुरेश्वर ॥ ज्ञात्वा मानुष इत्येभि—स्तृणतुल्यश्च लेखितः ॥ ६५ ॥
तद्वचःश्रवणाज्जात—हर्षोत्फुल्लविलोचनः ॥ सुरनाथो नृनाथं तं । जगाद वदतांवरः ॥ ६६ ॥ म-
नुष्याणां तु या शक्ति—रिंद्राणामपि सा कथं ॥ करोति विरतिं मर्त्यः । शक्रस्तत्रापि न क्षमः
॥ ६७ ॥ अस्माभिरपि राजन् प्राग् । मर्त्यत्वं प्राप्य दुर्लभं ॥ पालितार्हद्वचोभिस्तु । प्राप्ता वासवता-
धुना ॥ ६७ ॥ दग्ध्वा दुःकर्मणां राशिं । मुक्तिं प्राप्नोति मानवः ॥ समर्थस्यापि देवस्य । शक्तिरेवं-

विधा कथं ॥ ६८ ॥ नमामोऽपि वयं राजन् । मनुष्यान् धर्मवासितान् ॥ ज्ञानदर्शनचारित्र—पवि-
त्रान् व्रतधारिणः ॥ ६९ ॥ तदेते सर्वथा न स्यु—र्द्वारपाला विवेकिनः ॥ यतः कोपोऽपि नो क-
र्तु—मुचितो भवता खलु ॥ ७० ॥ नरेंद्रोऽथ जगादेंद्र । त्वद्दर्शनरसेन मे ॥ त्वद्वचः श्रवणेनापि
। निर्वाणः क्रोधपावकः ॥ ७१ ॥ सुरेंद्रेण ततोऽवादि । नैसर्गिकवचेन ते ॥ विनयेन च तुष्टोऽस्मि
। वरं वृणु नरेश्वर ॥ ७२ ॥ नृपेणाज्ञापि यद्भूरि—पुण्यानां स्यात्प्रभावतः ॥ जातं ते दर्शनं तेन ।
त्रैलोक्यस्यापि दुर्लभं ॥ ७३ ॥ दर्शनेन तवानेन । वराः सर्वेऽपि दुर्लभाः ॥ प्रवर्तते सुराधीश ।
करस्था मम संप्रति ॥ ७४ ॥ उवाचेंद्रः किमेतेन । वृणु त्वं मनसि स्थितं ॥ देवानां दर्शनं यस्मा-
दमोघं स्यान्महीतले ॥ ७५ ॥ जगदेऽथ नरेंद्रेण । यद्येषोऽस्ति तवाग्रहः ॥ ततस्तव प्रसादेन । पु-
त्रोऽस्त्वनुपमो मम ॥ ७६ ॥ उवाचेंद्रो मया ज्ञातं । ज्ञानेनावधिनाधुना ॥ देवलोकात्सुरश्च्युत्वा ।
भविता तव नंदनः ॥ ७७ ॥ इत्युक्त्वा वासुपूज्याय । नमस्कृत्वा च वासवः ॥ निःशेषसुरसंयुक्तः ।
सहसैव तिरोदधे ॥ ७८ ॥ प्रहृष्टो नरनाथोऽपि । जिनेंद्रनतिपूर्वकं ॥ अलक्षितश्च केनापि । निजं
स्थानं पुनर्ययौ ॥ ७९ ॥ सुखशय्याप्रसुप्तस्य । चिंतवोर्वीपतेः क्षणात् ॥ गतांधकारिताशेष—जीवलो-

का तमस्विनी ॥ ८० ॥ उदियाय ततः सूरः । प्रजामार्गप्रकाशकः ॥ तिरस्कृतान्यतेजस्वि—नृपस्ये-
व मनोरथः ॥ ८१ ॥ अथान्यदिवसे देवी । सा शृंगारवती निशि ॥ गर्भं बभार राजेंद्र—सूरसेनां-
गसंभवं ॥ ८२ ॥ निशाशेषे ददर्शाथ । स्वगर्भं वीरपूरुषैः ॥ सेव्यमानं तदा स्वप्ने । देवराजमिवा-
मरैः ॥ ८३ ॥ तं दृष्ट्वाकथयद्देवी । स्वप्नं राज्ञस्तदैव हि ॥ राजाप्यानंदयामास । सुतजन्मोदितेन
तां ॥ ८४ ॥ गर्भानुभावतस्तस्या । बभूवुर्दोहदा इति ॥ एकीकृतचतुर्वार्धि—जले स्नानं करोम्यहं
॥ ८५ ॥ आसन्नान् दर्पणान् हित्वा । तीक्ष्णासिफलकादिषु ॥ देवी गर्भानुभावेन । दिदृक्षुर्मुखपं-
कजं ॥ ८६ ॥ सुभटानामपि प्रायो । ये स्युरुत्त्रासकारकाः ॥ श्रुता अपि समं सिंहैः । क्रीडितुं
तैरियेष सा ॥ ८७ ॥ वर्धमाने ततो गर्भे । भुवनानंददायिनि ॥ उत्पाता वैरिसौधेषू—त्पन्ना ददृ-
शिरे जनैः ॥ ८८ ॥ अनिमित्तमकांडेऽपि । चेलु सिंहासनान्यहो ॥ अरीणां मुकुटाः पेतु—र्दृढ-
बद्धा अपि क्षणात् ॥ ८९ ॥ चकार कौशिकः स्थानं । तेषां मंदिरमूर्धनि ॥ विरसं रारटंत्युच्चैः । शृ-
गाली चाविशत्पुरे ॥ ९० ॥ इत्यादिकान् बहूत्पातान् । दृष्ट्वा सूरनृपाऽरयः ॥ साशंका मंत्र-
यामासु—र्मंत्रिभिः स्वस्ववेश्मनि ॥ ९१ ॥ प्रधानेऽथ दिने देवी । शुभे लग्ने शुभे क्षणे ॥ सुखेन

सुपुवे पुत्रं । तेजःपुंजविराजितं ॥ ९२ ॥ अंतःपुरेऽथ नारीणां । हर्षकोलाहले सति ॥ देवीधा
त्रीसुता गत्वा । कल्याणश्रीर्जगौ नृपं ॥ ९३ ॥ दिष्ट्याद्य वर्धसे देव । देव्याः सत्पुत्रजन्मना ॥ इ-
त्युक्ते भूमिपोऽप्यस्यै । ददावाभरणादिकं ॥ ९४ ॥ इतश्च सिद्धचंद्राख्यो । नैमित्तिक उपागतः ॥
दत्वाशीर्वादमित्यूचे । ज्योतिःशास्त्रविशारदः ॥ ९५ ॥ देव लग्नमिदं पूर्वं । तुङ्गकेशं शुभं पुरः ॥
साधयत्यखिलं कार्यं । यत्र जातः सुतस्तव ॥ ९६ ॥ महर्ध्या कारयामास । पुत्रजन्मोत्सवं नृपः ॥ य-
थेप्सितं ददौ दानं । तुष्टश्च सुतजन्मना ॥ ९७ ॥ पुत्रजन्मोत्सवा याव—त्प्रवर्तंते पुरे पुरे ॥ उ-
त्पाता वैरिणां ताव—त्स्पर्धयेव पुरेऽभवन् ॥ ९८ ॥ उत्पातकारणं सर्वै—श्चतुर्दिक्षु स्थितैर्नृपैः ॥
स्वस्वनैमित्तिकाः पृष्टा । जगदुः पुनरीदृशं ॥ ९९ ॥ यथा शक्रप्रसादेन । सूरसेनस्य भूपतेः ॥ दे-
वलोकात् समुत्पन्नः । पुत्रः प्रौढप्रतापवान् ॥ १०० ॥ यदि वर्धिष्यते सोऽत्र । धर्मकर्मानुयोगतः ॥
तत्तेन भवतां वंश—श्छेत्स्यते मूलतोऽपि हि ॥ १ ॥ युष्मन्नगरसौधेषू—त्पाता एतेन हेतुना ॥ यु-
ष्माकं बालकः सोऽसा—वुत्थितो धूमकेतुवत् ॥ २ ॥ नैमित्तिकवचांसीति । श्रुत्वा तैः सर्वराजकैः ॥
एकत्वं कर्तुमारेभे—ऽन्योन्यस्यापि विरोधिभिः ॥ ३ ॥ यावदद्यापि गर्भस्थो । जातोऽवाप्नोति नोद-

यं ॥ तावत्तत्र वयं गत्वा । तं हन्मो जनकान्वितं ॥ ४ ॥ मंत्रयित्वेति ते सर्वे । समदुःखा नराधिपाः ॥ प्रचेलुः स्वस्वसेनाभि—र्भ्रादयंतो धरातलं ॥ ५ ॥ इदं विपक्षभूतानां । चेष्टितं कथितं चरैः ॥ सूरसेननरेंद्रस्य । हृष्टस्य सुतजन्मना ॥ ६ ॥ तदैव रिपवः सर्वे । समकालं समेत्य ते ॥ सेनाभिर्वेष्टयामासुः । पुरीं चंपां समंततः ॥ ७ ॥ सूरसेननरेंद्रोऽथ । प्रासादशिखरस्थितः ॥ हर्म्यामप्रासपर्यंतं । रिपुसैन्यं व्यलोकयत ॥ ८ ॥ तृतीयेऽपि दिने राजा । दृष्ट्वा पुत्रमुखं ततः ॥ चक्रेऽभिधानकरणं । तस्य संगरकौतुकी ॥ ९ ॥ स्वप्नेऽयं सेवितो वीरै—र्गर्भस्थो वीरसेनया ॥ वेष्टितश्चाधुना जातो । वीरसेनाभिधोऽस्तु तत ॥ १० ॥ कृतकृत्यस्ततः पत्नी—पुत्ररक्षां विधाय सः ॥ ताडयामास संग्राम—भेरीं वैरिभयंकरां ॥ ११ ॥ भेरीरवेण युद्धोक्ताः । सूरसेनमहाभटाः ॥ निर्ययुर्नगरीमध्या—द्रोमांचकवचोल्बणाः ॥ १२ ॥ कृतकल्याणसंभारो । धृतछत्रो नरेश्वरः ॥ जयवारणमारूढो । निर्ययौ बलवेष्टितः ॥ १३ ॥ सूरसेनं पुरीमध्या—न्निर्गछंतं विलोक्य तं ॥ भयोद्भ्रांतं द्विषत्सैन्यं । सर्वतः समनह्यत ॥ १४ ॥ पार्श्वस्थितैर्महामात्यै—र्भणितः सूरभूपतिः ॥ शत्रुसैन्यं घनं देव । निर्गतस्त्वं किमुत्सुकः ॥ १५ ॥ दुर्गस्थिता नरेंद्रास्तु । छलावस्कंददायिनः गुर्वप्यरिबलं बुद्ध्या । जयंत्यल्पबला अपि ॥ १६ ॥ कृ-

स्ते देव न जानाति । शक्राध्यक्षं पराक्रमं ॥ एषां च बहुधा भग्नः । कृपाणः शिरसि त्वया ॥ १७ ॥ सर्वथा रक्षणीयोऽयं । कुमारो देव तत्त्वया ॥ एतषामेष आरंभो । यत्कुमारजिघांसया ॥ १८ ॥ चंपामध्ये कुमारस्य । रक्षार्थं यदि तिष्ठसि ॥ एतावतैव तत्किं ते । विक्रमोऽपरथा भवेत ॥ १ए ॥ सूरोऽप्युवाच मा ब्रूत । भो एवं मंत्रिकुंजराः ॥ देहरक्षां करिष्यंति । देवतास्तस्य संप्रति ॥ २० ॥ माशंकध्वमलीकं भो । वीरसेनस्य विघ्नकं ॥ मम तस्यापि मृत्युर्न । जानामि शकुनैरिह ॥ २१ ॥ संबोध्य मंत्रिणोऽप्येवं । वचनैर्वीरतोचितैः ॥ राजा रचितसेनाग्रो । ढुढौके शत्रुसेनया ॥ २२ ॥ इतश्च गगने सिद्ध—विद्याधरसुरासुराः ॥ पश्यंतः संगरं प्रापु—र्नावकाशं कथंचन ॥ २३ ॥ निःशेषपृथिवीपीठे । येऽभवन् वसुधाधिपाः ॥ सर्वे ते मिलितास्तत्र । सुहृदोऽसुहृदोऽपि च ॥ २४ ॥ मिलिता वैरिणामष्टौ । सहस्रास्तत्र भूभुजां ॥ द्वाविंशत्सैनिकानां चा—क्षौहिण्यः सर्वसंख्यया ॥ २५ ॥ अक्षौहिण्यस्तथैवाष्टौ । सूरसेननरेशितुः ॥ किरीटिनां च चत्वारो । राज्ञामासन् सहस्रकाः ॥ २६ ॥ अत्रांतरे नभस्यासीत् । सुराणां तुमुलो महान् ॥ जगत्क्षयः किमारब्धो । नृपालैरिति संप्रति ॥ २७ ॥ सुरासुरगणैः सर्वैर्मिलित्वा बलयोर्द्वयोः ॥ दूतः प्रैषि नरेंद्राणा—मुभयेषां हितेच्छया ॥ २८ ॥ प्राग्गत्वा सूरसेनस्य ।

पार्श्वे दूतोऽब्रवीदिति ॥ किमारब्धो रणोऽत्राय—मसंख्यप्राणिनां क्षयः ॥ २९ ॥ यैरेव सह वैरं तै-
र्युध्यंतां सैन्यनायकाः ॥ जीयंते तज्जये नान्यै—स्तत्कार्या हार्यते तथा ॥ ३० ॥ उवाच सूरसेनोऽ-
थ । संमतं सुरदूत मे ॥ दुष्टभूपानिमान् किंतु । बोधयात्र समागतान् ॥ ३१ ॥ दूतस्ततो गतोऽन्ये-
षां । समीपे प्रतिबोध्य तान् ॥ युद्धे प्रवर्तयामास । पत्तियुद्धव्यवस्थया ॥ ३२ ॥ अष्टभिस्तुरगैर्वाह्यं ।
सहस्रध्वजभूषितं ॥ आरुरोह रथं सूरः । प्रभूतायुधपूरितं ॥ ३३ ॥ पूर्वदेशाधिपो राजा । बलवान्
गुरुविक्रमः ॥ हरिषेणाभिधः सूर—सेनस्याभिमुखोऽभवत् ॥ ३४ ॥ क्रुद्धः सूरावलोकेन । चापमा-
रोप्य रंहसा ॥ हरिषेणोऽक्षिपत्पंच—बाणान् प्रहरणान् रिपोः ॥ ३५ ॥ सूरोऽपि द्विगुणान् बाणान् ।
मुक्त्वा चिच्छेद तानपि ॥ अर्धैरर्धैश्च तच्छत्र—ध्वजचिह्नान्यपाहरत् ॥ ३६ ॥ हरिषेणस्ततः क्रुद्ध—स्ता-
म्राक्षो विंशतिशरान् ॥ संधाय सूरसेनस्या—भिमुखं प्राक्षिपत्पुनः ॥ ३७ ॥ दक्षत्वेन च सूरोऽपि ।
खंडयित्वा शरान् हरेः ॥ शरैस्तद्द्विगुणैर्मौर्विं । चापं चाश्वानपातयत् ॥ ३८ ॥ हरिषेणस्ततो झंपां
। दत्वा सूररथंप्रति ॥ यावदेत्यर्धचंद्रेषु—हतस्तावदधोऽपतत् ॥ ३७ ॥ पतिते हरिषेणेऽथ । सूरसेन-
नैर्मुदा ॥ हतो हतोऽरिरित्युच्चै—श्चक्रे कलकलो महान् ॥ ३८ ॥ तुमुलश्रवणात्क्रुद्ध । उत्तस्थौ

डविंम्श्वरः ॥ तर्जयन् सूरसेनं तं । नाम्नामरमहानृपः ॥ ३९ ॥ सहसारोप्य कोदंडं । मुमुचे चैक-
मुष्टिना ॥ त्रिशतान् शत्रवे सोऽथ । सूरंप्रति शिलीमुखान् ॥ ४० ॥ सूरेणाप्यखिलाणांस्तान् । खंड-
यित्वा निजैः शरैः ॥ संधत्ते न पुनर्याव—त्तावन्मुक्ता दशेषवः ॥ ४१ ॥ छिन्नमेकेन कोदंडं । छत्र-
मेकेन सारथिः ॥ एकेनैकेन मौलिश्च । षड्भिर्बाणैस्तुरंगमाः ॥ ४२ ॥ आरुह्यान्यरथं सूर्यं । म-
त्वा चैकं धनुर्धरं ॥ जग्राह पाणिना कुंतं । यमो दंडमिवामरः ॥ ४३ ॥ सूरोऽपि वैरिणा क्षिप्तं । कुं-
तमर्धपथेऽपि तं ॥ मौदमुद्गरघातेन । खंडशः कृतवांस्तदा ॥ ४४ ॥ करेणोद्भ्राम्य चिक्षेपा—मरतेजाः
कणायुधं ॥ एकभारप्रमाणायो—मयं सूराभिसन्मुखं ॥ ४५ ॥ दृष्ट्वा नभसि दुर्वारं । तन्मृत्युं
देहिनामिव ॥ सुरासुरैस्ततश्चक्रे । हाहाकाररवो महान् ॥ ४६ ॥ तदापतद्विलोक्याशु । सूरो नभ-
सि सूरवत् ॥ उत्प्लुत्य च करग्राह—ममुंचच्चामरंप्रति ॥ ४७ ॥ तेनामरस्तथा चूर्णी—चक्रेऽलं स-
रथस्तदा ॥ यथा तस्य च धूलीनां । नांतरं लेभिरे जनाः ॥ ४८ ॥ साधुकारं निशम्याथ । सूरसेन-
स्य विस्तृतं ॥ पश्चिमेलापती राजा । जगाद स्मराजिधः ॥ ४९ ॥ नाममात्रेण सूरस्त्वं । कथं भ्र-
मसि संगरे ॥ मात्मानं मारयामीषां । जनानां वचसा मुधा ॥ ५० ॥ एषां च कौतुकं राजन् । द्व

चापि तव संशये ॥ राज्यं चापि शरीरं च । त्यज त्वं मा मुधा हयं ॥ ५१ ॥ त्वया यौ निहतौ यु-
द्धे । हरिषेणामरौ नृपौ ॥ तदप्यागो मया सोढ—स्त्वत्प्रसादपरेण ज्ञोः ॥ ५२ ॥ ततो रक्त प्रयत्ने-
ना—स्मीयं राज्यं च जीवितं ॥ तमस्माकं नराधीश । दुर्जातं सुतमर्पय ॥ ५३ ॥ स ते कुलस्य दे-
शस्य । पुरस्य विभवस्य च ॥ जातः पुत्रमिषात्सर्व—कषो राजन् यमः खलु ॥ ५४ ॥ पुत्रं समर्प-
येत्युक्तिं । श्रुत्वा दूनोऽथ सूरराट् ॥ दष्टोष्टो भृकुटीभीमः । प्रतिपक्षं जगाविति ॥ ५५ ॥ रेरे मृमर
दोषो न । तवेदं जल्पतः सतः ॥ दोषस्तु वदनस्यास्य । तवासत्यप्रलापिनः ॥ ५६ ॥ दोषदुष्टं य-
देवास्ति । तन्निग्राह्यं नराधिपैः ॥ हनिष्यामि मुखं तत्ते । रक्षेस्त्वमिह यत्नतः ॥ ५७ ॥ इत्युक्त्वा वा-
मपादेन । दूरमुड्डीय सूरराट् ॥ आजघान मुखं रात्रो—र्विद्युदुत्पातलीलया ॥ ५८ ॥ कृत्वेति या-
वदायाति । स्वं रथं सूरभूपतिः ॥ तावद् मृमरसिंहेन । पादे दध्रे स्वपाणिना ॥ ५९ ॥ धृतो धृत
इति प्रोच्चै—र्जातः कलकलस्तदा ॥ जहसे दत्तातालं चा—न्योन्यं दुर्जनराजभिः ॥ ६० ॥ सूरोऽप्य-
न्येन दक्षस्तं । हत्वा पादेन वक्षसि ॥ वमंतं रक्तमास्येन । पातयामास शात्रवं ॥ ६१ ॥ वामं पादं
विमोच्याथ । सूरो यावन्निजं रथं ॥ तावत्क्रोधारुणाक्षः स । मृमरः सहसोत्थितः ॥ ६२ ॥ उत्तीर्य

स्वरथाद्वीरं । भ्रमरः प्रबलो बलैः ॥ उच्चिक्षेप ससूतं तं । ससूरं सहयं रथं ॥ ६३ ॥ रथं भ्रमयते
याव—त्सोंबरे तावदुच्चकैः ॥ दत्वा झपां ससूतोऽपि । सूरस्तस्य रथं ययौ ॥ ६४ ॥ भ्रमयित्वा रथं
याव—दास्फाट्य च भुवा सह ॥ सोऽगान्निजं रथं ताव—त्ससूतं सूरमैक्षत ॥ ६५ ॥ दध्यौ च मु-
ष्टिनाकाशं । हतं वा खंम्मितास्तुषाः ॥ काष्ठान्येव मया चूर्णी—कृतानि न पुना रिपुः ॥ ६६ ॥ अ-
स्तु तावद्वपित्वेवं । सूरस्यानिघ्नतोऽपि हि ॥ आरुरोह रथं स्वीयं । स रिपुः सुभटाग्रणीः ॥ ६७ ॥
आछिद्य सर्वशस्त्राणि । सूरसेनकराद्बली ॥ पाणिभ्यां भुजयोः सूरं । जग्राह भ्रमरो दृढं ॥ ६८ ॥
भुजयोर्धृत एवायं । सूरः पादेन तं रिपुं ॥ निःसहं ताडयामास । वक्त्रस्युतांतलोहितं ॥ ६९ ॥ ततः
स पादघातेन । वेदनाविधुरोऽभवत् ॥ श्लथसर्वांगसंधानो । मूर्छामीलितलोचनः ॥ ७० ॥ रंजितः
पौरुषेणास्य । स्वयं सूरः स्ववाससा ॥ चकार पवनं तस्य । सेकं च शिशिरांभसा ॥ ७१ ॥ आ-
स्वस्थं तमुवाचैव—मिहैव स्वरथे स्थितः ॥ युध्यस्व भोः समीपस्थं । यास्याम्यन्यरथं त्वहं ॥ ७२ ॥
गुरुत्वसदृशं शूर—व्यवहारं विलोक्य सः ॥ अभिमानधनाधीश । उवाच भ्रमरः पुनः ॥ ७३ ॥ क-
न्यैव गृह्यते दत्ता । जयश्रीर्न तु सूर हे ॥ तन्निषेवितमार्गेण । गृहीष्यामि रथं हठात ॥ ७३ ॥ सा-

वधानो जवेमैवं । भाणीर्यत्कथितं न मे ॥ इत्युक्त्वा तेन सूरोऽथ । प्रक्षिप्तो गगनांगणे ॥ ७४ ॥ पतंतं खंमयिष्यामि । सूरमर्धेंडुसायकैः ॥ दृग्वेधी लघुसंधानः । स यावदित्यचिंतयत् ॥ ७५ ॥ तावत्सूरेण दूरं खे । प्रक्षिप्तैनैकखेचरात् ॥ हृताकृष्टासिदंडेन । हतः स क्रमशोऽपतत् ॥ ७६ ॥ पतिते तत्र निःसीमो—चरदेशाधिपो बली ॥ नरसिंहाभिधानेन । समागात्समरांगणे ॥ ७७ ॥ हतप्राक्पश्चिमापाच्य—देशाधिपतिसेनया ॥ स्वस्वामिमारणोत्पन्न—रोषया स परिवृतः ॥ ७८ ॥ विषमोऽरिरिति त्यक्त—व्यवस्थो युगपच्चलत् ॥ चक्रव्यूहे गतः सर्व—सेनया समढौकत ॥ ७९ ॥ युग्मं ॥ आगच्छत्तद्बलं दृष्ट्वा । प्रेरितात्मबलो नृपः ॥ यावदभ्येति तावच्च । सैन्येन निर्गमो ददे ॥ ८० ॥ पूर्वसंकेतदत्तेन । मार्गेणागत्य सूरराट् ॥ नृसिंहं तर्जयामास । मध्ये तुंगमहारथं ॥ ८१ ॥ यथा यथाविशन्मध्ये । चक्रव्यूहस्य सूरराट् ॥ शत्रुसैन्यैः परावेष्टि । परितः स तथा तथा ॥ ८२ ॥ उल्लंघ्य क्षत्रियाचारं । समकालं द्विषां बलैः ॥ सर्वशस्त्रसमूहेन । हंतुं प्रारंभि सूरराट् ॥ ८३ ॥ जातखेदैरथाकाशे । सुरविद्याधरामरैः ॥ हाहारवो व्यधादुच्चै—रसमंजसदर्शनात् ॥ ८४ ॥ अशेषारिप्रयत्नानां तु । तेषां प्रहरतामपि ॥ अक्षुब्धहृदयः सूरः । प्राप शात्रवसंनिधिं ॥ ८५ ॥ नरसिंहस्ततः स्माह । रेरे स-

म चमूचराः ॥ वेष्टध्वं मारयध्वं च । सूरमासं मदंतिकं ॥ ८६ ॥ ततस्तैर्निहते सूते । रथे च कण-
शः कृते ॥ अभिजातिगजेष्वेकः । सूरः सिंह इवास्फुरत् ॥ ८७ ॥ इतश्चेत्यनवन्मंत्रो । देवानां ग
गने मिथः ॥ अपहृत्य नराधीशं । रक्षामो वैरिवर्गतः ॥ ८८ ॥ ध्यात्वेति खेचरैः सर्वै-र्व्यवस्थाका-
रिभिः सुरैः ॥ युध्यमानोऽपजह्रेऽथ । सूरसेनो नरेश्वरः ॥ ८९ ॥ प्रौढवीररसेनैवं । प्रहरंस्तान् सु-
रानपि ॥ तैः सर्वैर्जगदे बाढं । सूरसेनो नभःस्थितः ॥ ९० ॥ सूरसेन प्रहार्षीमा । पक्षपातकृतोऽ-
स्मकान् ॥ असमंजससंग्रामा—द्धृतोऽस्माभिर्महाबलः ॥ ९१ ॥ प्रत्यागतस्वचैतन्यः । स्वस्थः सूरम-
हीपतिः ॥ आत्मानं गगनेऽपश्य—द्देवविद्याधरैर्वृतं ॥ ९२ ॥ सूरः सुरानुवाचेति । किमर्थं भो धृतो-
ऽस्म्यहं ॥ कथं द्रक्ष्यामि जीवंश्च । हन्यमानं निजं सुतं ॥ ९३ ॥ मृते मयि भवेद्यच्च । तदस्तु न
मनोव्यथा ॥ तन्मां विमुंचताद्यापि । हनिष्याम्यरिमंडलं ॥ ९४ ॥ ऊचे देवादिकैः सत्य—मिदं
ब्रूते नरेश्वरः ॥ स्वपुत्ररक्षणायैव । रणारंभोऽस्य संप्रति ॥ ९५ ॥ पुत्रस्यैव वधायैषां । नृपाणामपि
संगरः ॥ सर्वथा पात तद्ब्रूय—मस्य पुत्रं च वल्लभां ॥ ९६ ॥ इत्युक्ते शृंगारवती । वीरसेनसुतान्वि-
ता ॥ आनीता सूरसेनस्य । पार्श्वे विद्याधरैस्ततः ॥ ९७ ॥ सूरसेनहतारीणां । सैन्यानि स्वाम्यभा-

वतः ॥ नृसिंहमेव नृपालं । निःकंटकमथाश्रयत ॥ ९८ ॥ सूरसेनस्य सैन्यं च । ज्ञात्वा सूरं रणे ह-
तं ॥ बभूवानायकं दीन—मपश्यदपि नंदनं ॥ ९९ ॥ किंकर्तव्यतया मूढं । स्थितं चंपां प्रविश्य च
॥ वेष्टितं नरसिंहस्य । परितः प्रबलैर्बलैः ॥ २०० ॥ क्षीणे कालक्रमेणाथ । मध्ये धान्यतृणादिके ॥
प्रतिबोध्य प्रधानानि । नृसिंहोऽविशदंतरा ॥ १ ॥ स एवाशेषनृपीठे । नृसिंहोऽभून्नरेश्वरः ॥ राज-
धानी कृता येन । चंपा सूरवियोजिता ॥ २ ॥ अथ ते चिंतयामासुः । सुराः सूरापहारिणः ॥ पूर्व-
स्थित्यधिके राज्ये । स्थापयाम इमं कचित ॥ ३ ॥ परस्परं निगदतां । तेषामेकेन नाकिना ॥ तदा
तत्कालमाख्यायि । भ्रमता भूतलेऽखिले ॥ ४ ॥ धातकीखंडभरते—ऽयोध्यायां पुरि सांप्रतं ॥ अपु-
त्रो विमलश्रेष्ठी । दैवयोगाद्दिवं गतः ॥ ५ ॥ तस्य राज्ये नरेंद्रं भोः । सूरसेनं महाबलं ॥ तत्र नी-
त्वा सुरा द्वीपे । संस्थापयत संप्रति ॥ ६ ॥ इति तद्वचनं श्रुत्वा । सुरास्तत्कार्यकारिणः ॥ सन्नार्य स-
सुतं सूरं । यावत्तत्र नयंति ते ॥ ७ ॥ तावत्स्वावर्तयंत्याः स्वं । देव्याः पार्श्वांतरं पथि ॥ कथंचिद्दैव-
योगेन । विबुद्ध्य पतितः सुतः ॥ ८ ॥ पतितः पतितः पुत्र । इत्युक्त्वा मूर्छितावुभौ ॥ धार्यमाणाव-
पि सुरैः । पतितौ सहसा भुवि ॥ ९ ॥ देवैः प्रापितचैतन्यौ । शिशिरोपक्रमैस्ततः ॥ तावाश्वास्य सुतं

त्रथा—वीक्षितुं जगतीतले ॥ १० ॥ प्रतिशैलं प्रतिगृहं । प्रतिवृक्षं प्रतिस्थलं ॥ विलोकितोऽपि स-
र्वत्र । न दृष्टस्तैः क्वचिच्च सः ॥ ११ ॥ ततः स्माह महीनाथो । न कार्यं राज्यसंपदा ॥ करिष्याम्य-
हमत्रैव । प्राणत्यागं तु कानने ॥ १२ ॥ चंदनागुरुकाष्टौघै—श्चितां कृत्वा नृपस्ततः ॥ आगादुपचि-
तां याव—त्सपत्नीको मृतीच्छया ॥ १३ ॥ नभसा गच्छता ताव—द्भणितं चारणर्षिणा ॥ भविता भूप
पुत्रेण । जीवतस्तव संगमः ॥ १४ ॥ स्वमात्मघातपापेन । मा लिंपस्व नरेश्वर ॥ मुनेर्गच्छत एवेति ।
वाक्यं श्रुत्वा स जीवितः ॥ १५ ॥ विरतो मरणाद्देवै—र्नीतोऽथ धातकीभुवि ॥ चक्रवर्तिमहाराज्ये—
ऽयोध्यायां च प्रतिष्टितः ॥ १६ ॥ राज्ये तत्र प्रजाः सर्वा । यथासुखमपालयत ॥ नाभुक्त विषया-
न् पुत्र—वियोगेन हि दुःखितः ॥ १७ ॥ तत्र राज्यश्रियं सर्वां । माहात्म्यं विक्रमं तथा ॥ तृणव-
न्मन्यतेस्मैष । सर्वं पुत्रवियोगतः ॥ १८ ॥ खिद्यमानोऽभिमानस्थो । हृदये सूरनृपतिः ॥ अनावि-
कृतहृद्भावो । विकल्पौघानचिंतयत् ॥ १९ ॥ इंद्रत्वमपि नो दत्ते । तुच्छं राज्यं तु किं सुखं ॥ द्विद्-
पराभवपात्राय । मह्यं सुतवियोगिने ॥ २० ॥ मनस्विनां विदेशेषु । दारिद्र्यमपि शोभते ॥ मित्रा-
मित्रैरदृष्टं तु । न राज्यमपि राजते ॥ २१ ॥ दूरीकृतस्वदेशस्य । वियुक्तस्य स्वसूनुना ॥ पराभूतस्य

चामित्रे । राज्यं मे गुप्तिबंधवत ॥ २२ ॥ निहतो नरसिंहेन । सूर इत्ययशो मम ॥ स वीरसेनपुत्र-
श्चे—त्परिमाष्टर्यैव नापरः ॥ २३ ॥ एकत्रैव भवे दृष्टौ । द्वौ भवौ सूरजभुजा ॥ जंबूद्वीपे भवेद्राजा
। धातकीखंडकेऽपि च ॥ २४ ॥ तान्येतानि हतविधे—र्वर्तंते चेष्टितानि वै ॥ शक्यंते यानि न
ध्यातु—मपि निष्णातबुद्धिभिः ॥ २५ ॥ कदापि श्रूयते यन्न । यच्चोक्तं भात्यलीकवत् ॥ हेलयैव
विधिः कार्यो । विधत्ते तदकार्यधीः ॥ २६ ॥ निर्भाग्याणां नराणां स्या—द्विपरीतमिहेति यत् ॥ प्र-
त्यक्षं मम निःशेषं । जातं स्वानुभवेन तत् ॥ २७ ॥ इत्याद्यनेकसंकल्प—परः कालमलंघयत् ॥ वि-
देशागमनात्पुत्र—वियोगाच्च सुदुःखितः ॥ २८ ॥ पुत्रपातादिकोत्पन्न—शोकसंभारव्याकुला ॥ कु-
रुरीव रुदत्येषा । तस्थौ देव्यपि दुःखिता ॥ २९ ॥ द्वयोरपि तयोर्जग्मु—श्चारणर्षिगिरा ततः ॥ वी-
रसेनसुतालोक—वांछया तत्र वासराः ॥ ३० ॥

पतितोऽथ कराहव्या । वीरसेनसुतस्तदा ॥ पथ्यर्धे वनदेवीभि—र्गृहीतो नियतेर्वशात् ॥ ३१ ॥
गिरिशृंगे कृतोत्तुंग—भवने तूलिकातले ॥ तं विमुच्य प्रयत्नेन । सर्वांगं ददृशुर्मुदा ॥ ३२ ॥ प्रश-
स्तलक्षणं दृष्ट्वा । सुकुमारांह्रिपाणिकं ॥ बालकं तं वनामर्यो । जजल्पुस्ताः परस्परं ॥ ३३ ॥ सलि

पश्चात्त दृश्यंते । नररत्नानि तान्यहो ॥ दृष्टैर्नश्यति यैर्गर्वो । देवानामपि दूरतः ॥ ३४ ॥ गुरुगर्वो हरि· र्येन । वज्रेण प्रतिवैरिणा ॥ तदेवास्य लुठत्पाद—तले संप्रति दृश्यते ॥ ३५ ॥ कुलाचलशिरश्चि· त्रं । मीनशंखाब्जलांछितः ॥ श्रीनिवासो विज्ञात्येष । पद्महृद इवापरः ॥ ३६ ॥ तत्कोऽप्येष महावं· शो—द्भूतो नृपतिनंदनः ॥ शात्रवेणापहृत्यात्र । नूनं क्षिप्तो भविष्यति ॥ ३७ ॥ ताभिर्ज्ञानेन वि ज्ञात—सर्वभावाभिरन्वहं ॥ पालितो गुरुरागेन । वीरसेनो नृपात्मजः ॥ ३८ ॥ मनश्चिंतास्तनिःशेष —वस्तूनां सुरयोषितां ॥ तन्नात्रृद्भुवने तासां । यन्नाशु समपद्यत ॥ ३९ ॥ वर्धमानांगलावण्यः । पु- ण्यश्रीपरिवेष्टितः ॥ क्रमात्कुमारभावं स । प्रपेदे पठनोचितं ॥ ४० ॥ अवधिज्ञानविज्ञात-कलाशा- स्त्रविचक्षणं ॥ कलासु कुशलं चक्रु—र्देव्यस्ता एव भूपजं ॥ ४१ ॥ तस्य मूर्ध्नि सितछत्रं । पार्श्वत· श्चामरद्वयं ॥ स्थितं दिव्यप्रभावेण । गछतस्तिष्ठतोऽपि च ॥ ४२ ॥ गिरिशृंगे नदीतीरे । कानने च मनोहरे ॥ अज्ञातकुलपित्रादि—संबंधः सोऽभ्रमन्मुदा ॥ ४३ ॥ स्वेछाविहारी सूरराजसूनुः । सुब्र- ह्मचारी विधृतातपत्रः ॥ वनामरीकर्मकरैः परीतः । सदा विजह्रे स कुमारराजः ॥ ४४ ॥ इत्यागमिक- श्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिविलिखिते हरिविक्रमचरिते

महाकाव्ये श्रीविक्रमराजप्रतिबोधावसरश्रीसूरसेनवीरसेनजन्मराज्यापहारवर्णनो नाम षष्ठः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

॥ अथ सप्तमः सर्गः प्रारभ्यते ॥

अथान्यदा भ्रमन् वीरो । गिरिनद्यास्तटं ययौ ॥ अपश्यत्तापसानां च । वृंदं स्नानजपोद्यतं ॥ १ ॥ विलोक्यादृष्टपूर्वं तं । तापसा अवदन्निति ॥ बंभ्रमीति किमेषोऽत्रीः । कोऽपि विद्याधरेंद्रसूः ॥ २ ॥ अथवा कोऽपि भूवासि—राजसूनुर्भविष्यति ॥ केनापि कारणेनात्रा—रण्यमध्ये समागतः ॥ ३ ॥ अपूर्वमस्य माहात्म्यं । राजपुत्रस्य दृश्यते ॥ निरालंबं च यच्छत्रं । निरपेक्षे च चामरे ॥ ४ ॥ अयं चामानुषाचार—व्यवहारपरिच्छदः ॥ तत्किं देवकुमारोऽयं । देवा दासाः कथं न चेत् ॥ ५ ॥ तेषां तपस्विनां पार्श्वे । विकल्पानिति कुर्वतां ॥ वीरसेनः समायातः । सुरकिंकरसेवितः ॥ ६ ॥ देवामी तापसाः सर्वे । नमस्कारक्रियोचिताः ॥ इत्युक्ते परिवारेण । कुमारो वंदतेस्म तान् ॥ ७ ॥ युगपत्तापसैः सर्वै—रुन्नताग्रकरैस्ततः ॥ सत्याशीर्वाददानेन । कुमारः सोऽभिनंदितः ॥ ८ ॥ पृष्टस्तैः

कुशलोदंतं । तेषामाख्याय तं निजं ॥ कुमारस्तानपृछद्दोः । क्वात्र युष्माकमाश्रमः ॥ ९ ॥ तापसैः
कथितं नाति—दूरस्थे प्रवराश्रमे ॥ गुणवान् मंम्लाचार्यो । यजनामास्ति नो गुरुः ॥ १० ॥ गत्वा-
श्रमपदं तस्मा—त्तापसाख्यातवर्त्मना ॥ ननाम मंडलाचार्यं । विनयेन नृपात्मजः ॥ ११ ॥ दत्ताशि-
षा मुनीशेन । सगौरवमथासितः ॥ पृष्टः स्वागतमाचख्यौ । स प्रसादेन वः सदा ॥ १२ ॥ अत्यद्भु-
तांगलावण्यं । दृष्ट्वा तं तापसेश्वरः ॥ दध्याविति मुदा चित्ते । सर्वांगं पुलकं वहन् ॥ १३ ॥ अ-
स्य दर्शनमात्रेण । चक्षुः स्फुरति दक्षिणं ॥ रोमांचते शरीरं मे । बाष्पायेते च चक्षुषी ॥ १४ ॥ त-
त्किं कारणमत्र स्या—त्पूर्वं तावन्न संस्तवः ॥ नैतानि च निमित्तानि । शरीरेऽवितथानि मे ॥ १५ ॥
ध्यात्वेति मुनिपः प्राह । कुमार त्वं सुतो यथा ॥ दृष्टमात्रोऽपि मे चित्त—मानंदयसि सर्वथा ॥ १६ ॥
कोऽसि त्वं पितरौ कौ ते । किं कुलं वससि क्व च ॥ किं नाम कथयाशेषं । निजं व्यतिकरं मम
॥ १७ ॥ उवाच वीरसेनोऽथ । नाहं जानामि किंचन ॥ जनन्यो मम जानंति । समस्तं भगवन्नि-
दं ॥ १८ ॥ दर्शनेन ममानंदो । यस्ते प्रसरति प्रभो ॥ तत्रेदं कारणं नूनं । भविष्यति मुनीश्वर
॥ १९ ॥ जन्मांतरागतस्नेह—संभारोद्भावितात्मनां ॥ भवांतरप्रिये दृष्टे । हृदयं वहते मुदं ॥ २० ॥

अथवा यतयो यूयं । मैत्री युष्मास्ववस्थिता ॥ विजृंभते प्रकृत्या वः । सर्वत्र सदयं मनः ॥ २१ ॥
सर्वत्र समचित्तानां । युष्माकं हृदयं मयि ॥ कथं सकरुणं जातं । विशेषेण तदुच्यतां ॥ २२ ॥ य-
द्यस्ति योग्यता तर्हि । स्वरूपं कथयात्मनः ॥ इति पृष्टे कुमारेण । गुरुरूचे सगद्गदं ॥ २३ ॥ कु-
मारेऽत्रपाकारि । कथ्यमानं यदप्यदः ॥ तथापि भवता पृष्ट—मलंघ्यवचसा ब्रुवे ॥ २४ ॥ इहा-
सीद्वत्स चंपायां । सूरसेनो नरेश्वरः ॥ नाम्ना बृहस्पतिर्मंत्री । तस्याहं मंदिरेऽभवं ॥ २५ ॥ न लं-
घयति मे वाक्यं । जनकस्येव सोऽनिशं ॥ इंद्रेण तोषितेनास्मा—यपुत्राय ददे सुतः ॥ २६ ॥ का-
लक्रमेण जातेऽस्मिन् । पुत्रे तृतीयवासरे ॥ निःशेषदिग्धराधीशैः । सहसा वेष्टिता पुरी ॥ २७ ॥
श्रीवीरसेन इत्याशु । कृत्वा नाम सुतस्य सः ॥ संग्रामेऽपि जितारातिं—रणक्षेत्रे हतो नृपः ॥ २८ ॥
निःकंटकीकृते सूर—सेनेनोर्वीतले भृशं ॥ नरसिंहोऽन्नवद्राजा । चंपापुर्यामदो रिपुः ॥ २९ ॥ सू-
रसेने हते राज्ञि । वयं यावद्गताः सुतं ॥ तावत्तमपि पश्यामो । नैव मातृसमन्वितं ॥ ३० ॥ किंक-
र्तव्यतया मूढा—स्ततोऽलं दीनमानसाः ॥ नरसिंहेन सर्वेऽपि । कुमार विधृता वयं ॥ ३१ ॥ वत्सा-
मात्या हताः केऽपि । दंडिताः केऽपि तेन ते ॥ देशान्निर्वासिताः केऽपि । क्षिप्ताः के चापि चारके

॥ ३२ ॥ सपुत्रः सकलत्रोऽहं । धृतस्तेन दुरात्मना ॥ बुद्धिमानिति वध्योऽयं । समादिष्टं च घाति·
नां ॥ ३३ ॥ टंकछिन्नगिरेः शृंगा—त्पातितोऽहं नरैस्ततः ॥ पतन्नंतरा वृक्ष—शाखाग्रे दैवयोग·
तः ॥ ३४ ॥ उत्तीर्याथ शनैस्तस्मा—द्भयभीतोऽद्रिगह्वरे ॥ गमयित्वा दिनं सर्वं । निर्गतोऽहं नि·
शागमे ॥ ३५ ॥ पुत्रस्नेहेन चंपायां । तत्रैवाहं पुनर्गतः ॥ न दृष्टः पुत्रकः क्वापि । बहारक्षकरक्षि·
तः ॥ ३६ ॥ जीर्णदेवकुलस्योर्ध्वं । गृहीत्वा गुप्तमंसकान् ॥ अतिवाह्य दिनं तत्र । वभ्रमीमि पुरे
निशि ॥ ३७ ॥ शुद्धिं विधाय पुत्रस्य । यामि तत्र दिवा पुनः ॥ ध्यायामि च बहूपाया—न्न च मो·
चयितुं क्षमः ॥ ३८ ॥ संस्थितोऽस्म्यन्यदा तत्र । यावद्देवकुले किल ॥ तावदागात्तलारक्षो । रौद्रो·
ऽह्नः प्रथमे दले ॥ ३९ ॥ क्षणमात्रोपविष्टस्य । तस्याधो मत्तवारणे ॥ दृष्टिर्देवकुलस्तंभा—तराले
सहसापतत् ॥ ४० ॥ गुप्ताज्यमिश्रपोलीनां । खंमान्युत्तारयत्यधः ॥ ददृशे कीटिकाश्रेणि—स्तेनो·
परिमतूतलात् ॥ ४१ ॥ विमृश्य हृदये तेन । समादिष्टा निजा नराः ॥ किं कोऽप्यस्ति न वा रेरे ।
आरुह्योपरि पश्यत ॥ ४२ ॥ तत्रारूढैस्ततो रौद्रै—र्दृष्टोऽहं यंत्रितश्च तैः ॥ पातितश्च महीपीठे । पा·
प्मभिर्दूरनूमितः ॥ ४३ ॥ उपराजं ततो नीतं । दृष्ट्वा मामवदन्नृपः ॥ पर्वतादप्ययं क्षिप्तः । पापि·

ष्टो जीवितः कथं ॥ ४४ ॥ रे दंमकारकाः शीघ्र—मेनमर्पयताधुना ॥ निर्घृणानां प्रकृत्यैव । चंमा-
लकुलजन्मनां ॥ ४५ ॥ ततोऽहमर्पितस्तेषां । चौरवद्वधहेतवे ॥ नणितं चेति मंत्र्येष । सूरसेनस्य
नृपतेः ॥ ४६ ॥ जीवत्यस्मिन् मृतो नैव । सूरो जानीत नो इति ॥ जनो यथा न जानाति । स-
र्वथैनं तथाहत ॥ ४७ ॥ इत्युक्त्वा ते तदायत्तं । मां कृत्वा च पुरीं ययुः ॥ वध्यस्थानमहं नीत—श्चं-
मालैस्तैर्द्रुतं पुनः ॥ ४८ ॥ निशितासिकरैस्तत्र । नणितस्तैर्नयंकरैः ॥ स्मरेष्टदेवतं मंत्रि—न्नृसिं-
हः कुपितस्त्वयि ॥ ४९ ॥ इतश्चैकनिषादेन । सकृपेणोपलक्ष्य मां ॥ जगदेऽर्पयतैनं मे । पुमांसं
बलिहेतवे ॥ ५० ॥ पूर्वं देव्या मयामानि । पुरुषो बलिरेकदा ॥ चामुंमापुरतो नीत्वा । मारयिष्या-
म्यहं ततः ॥ ५१ ॥ ओमिति प्रतिपन्ने तै—स्तेनाहं चंमिकापुरः ॥ आनीतोऽन्ये तु चांमालाः । नि-
वृत्य स्वगृहं ययुः ॥ ५२ ॥ कृत्वा प्रणाममेतेन । मुक्तोऽहं नणितं च मे ॥ यथा न स्यात्कुलछेदो—
ऽस्माकं कुर्यास्तथा त्वकं ॥ ५३ ॥ ततस्तेन विमुक्तोऽहं । निशायां परितो भ्रमन् ॥ विहाय च तदुद्दे-
श—मरण्येऽत्र समागतः ॥ ५४ ॥ तापसाश्रममायातं । दृष्ट्वा मां गुरुरब्रवीत ॥ शोकं वहसि किं
मंत्रिन् । सविवेकेऽधुना हृदि ॥ ५५ ॥ दुःखान्यधर्मतः संति । पुनः सौख्यानि धर्मतः ॥ सत्या चे-

दुःखतो भीति-र्धर्मं तत्कुरु सौख्यदं ॥ ५६ ॥ तद्वचःश्रवणाच्चित्ते । मयापीति विचिंतितं ॥ युदुक्तं कुलनाथेन । तत्तथैव न संशयः ॥ ५७ ॥ स्वस्वामिमरणात्मीय—पुत्रभार्यावियोगजं ॥ पूर्वजन्मार्जिताधर्मा—न्मम दुःखमुपस्थितं ॥ ५८ ॥ भावयित्वेति तस्यैव । पार्श्वे कुलपतेर्मया ॥ संसारोद्विग्नचित्तेन । जगृहे तापसव्रतं ॥ ५९ ॥ मां संस्थाप्य निजे स्थाने । ततः कुलपतिः स्वयं ॥ पंचत्वं प्राप कालेन । तापसोचितवर्त्मना ॥ ६० ॥ तत्र वत्स स्वरूपं स्व—मिदमावेदितं मया ॥ इत्युक्त्वा मौनमालंब्य । तस्थौ कुलपतिस्ततः ॥ ६१ ॥

इतश्च सहसा देव-दुंदुभिध्वनिरुत्थितः ॥ आगतश्च सुरः कोऽपि । कुमाराह्वानहेतवे ॥ ६२ ॥ सुरेणोचे जनन्यस्त्वा—माह्वयंति कुमार हे ॥ उत्पन्नकेवलज्ञान-मुनिपार्श्वेऽधुना स्थिताः ॥ ६३ ॥ ततोऽभाणि कुमारेण । यूयमप्येत भोः प्रभो ॥ केवलज्ञानिनं साधुं । तं पश्यामि सुरैर्वृतं ॥ ६४ ॥ ओमित्याभाष्य ते सर्वे । गत्वा केवलिसंसदं ॥ प्रणेमुस्तं महाभक्त्या । कुमारमुनिपादयः ॥ ६५ ॥ उक्ते केवलिना धर्मे । दयासारे सभासदां ॥ पप्रछ तापसाधीशः । संयोज्य करकुड्मलौ ॥ ६६ ॥ भगवन्नस्य वृत्तांतं । कुमारस्याखिलं वद ॥ क एष कस्य पुत्रो वा । कथं वसति कानने ॥ ६७ ॥ त-

तः केवलिना सर्वो । यथावस्थो निवेदितः ॥ कुमारागमनांतः स । वृत्तांतः सूरनूनुजः ॥ ६८ ॥ श्रुते व्यतिकरे तस्मिन् । कुमारस्य पुनर्नवः ॥ बभूव शोकसंभार—स्तापसेश्वरचेतसि ॥ ६९ ॥ तदैव मंगलाचार्यै । कुमाराश्लेषकारिणि ॥ पृष्टं काननदेवीभिः । किं स्यादस्य तपस्व्ययं ॥ ७० ॥ ततो भगवतोक्तं स्वं । चरित्रं तापसेश्वरः ॥ श्रुत्वा विज्ञापयामास । तं साधुं सर्ववेदिनं ॥ ७१ ॥ यथा मे कथितं स्वामिन् । प्रत्यक्षं चरितं त्वया ॥ परलोकहितं धर्मं । तथाख्याहि मुनीश्वर ॥ ७२ ॥ केवली कथयामास । यतिधर्मं तपस्विनां ॥ क्षांत्यादिदशभिर्भिन्नं । पूर्वप्रांताविरोधिनं ॥ ७३ ॥ श्रुत्वा ते कुलपत्याद्या । धर्मं केवलिभाषितं ॥ उन्मूल्य च जटाजूटं । जैनदीक्षां प्रपेदिरे ॥ ७४ ॥ कुमारः सूरवृत्तांतं । शृण्वन् संजातमत्सरः ॥ धर्मोपदेशमश्रौषी—त्तदादेयधिया न हि ॥ ७५ ॥ मूर्छितांतर्महारोष—मुक्तनिःश्वासनिःसहं ॥ कुमारं वीक्ष्य देवीभिः । पप्रच्छे केवली पुनः ॥ ७६ ॥ भगवन्नेष पुत्रो नः । समर्थः किं द्विषज्जये ॥ भविष्यति पितृभ्यां च । मिलिष्यति समं न वा ॥ ७७ ॥ केवल्युवाच पुत्रोऽयं । विधाय रिपुनिग्रहं ॥ जननीजनकौ द्वीपा—त्समानेता द्वितीयतः ॥ ७८ ॥ भविष्यंत्यस्य बहवः । प्रत्यूहाः सूरजन्मनः ॥ किंतु पुण्यानुभावेन । सर्वे यास्यंति ते क्षयं ॥ ७९ ॥

ततोऽसौ गुर्वमर्षेण । मुक्तगंभीरहुंकृतिः ॥ प्रणम्य मुनिनाथं तं । सन्नामध्याद्विनिर्ययौ ॥ ८० ॥ ग-
त्वा स्वं भवनं वीर—सेनो मात्राद्यलक्षितः ॥ निजाभिमानरक्षार्थं । निरगात्तद्वनाद्बहिः ॥ ८१ ॥
विक्रमैकपरीवारः । पुण्यसंभारभूषितः ॥ निर्जलं निर्जनं प्राप । कांतारं स भयंकरं ॥ ८२ ॥ सप्त-
रात्रं वने तत्र । पानाशनविवर्जितः ॥ बंभ्रमीतिस्म खिन्नांगः । शुष्कजिह्वौष्ठतालुकः ॥ ८३ ॥ अ-
थान्यदा स मध्याह्ने । पूर्णं तपति भास्करे ॥ तृष्णापीडितसर्वांगः । कंठस्थप्राणितोऽभवत् ॥ ८४ ॥
मूर्छया पतितं भूमौ । वीरं मिलितलोचनं ॥ ददर्श खेचराधीश—स्तदा घनबलाभिधः ॥ ८५ ॥ त्रै-
लोक्याद्भुतरूपं तं । विलोक्यनिकषा गतः ॥ पस्पर्श पाणिना मंदं । मंदं चैतन्यहेतवे ॥ ८६ ॥ तृ-
षया पीडितं ज्ञात्वा । तमुन्मीलितलोचनं ॥ उत्पाट्याद्रिनदीतीरं । निनाय खेचराग्रणीः ॥ ८७ ॥ ज-
लसेकादथावाप्त—चैतन्यः सुरनंदनः ॥ विद्याधरं जगादेति । त्वयाहं जीवितोऽधुना ॥ ८८ ॥ मन्ये
परोपकारैक—हृदयानां भवादृशां ॥ त्रैलोक्येऽप्यखिले नून—मुपमानं न विद्यते ॥ ८९ ॥ श्रूयंते
युग्मिनामेवो—पकारिणः सुरद्रुमाः ॥ सर्वोपकारिणः संतो । विरलास्तु भवादृशाः ॥ ९० ॥ निर्ज-
ले निष्फलेऽरण्ये । पतितस्य ममाधुना ॥ विद्याधरेंद्र पुण्याना—मुदयेन त्वमागतः ॥ ९१ ॥ तत्र

चेन्नान्नविष्यस्त्व—मरण्ये खेचरेश्वर ॥ मृतस्य मम वेलैषा—भविष्यन्नात्र संशयः ॥ ९२ ॥ जवा-
च खेचरः सर्वं । पुंसां पुण्यवतां न्नवेत् ॥ पुण्यानुन्नावसंपद्य—मानवांछितसंपदां ॥ ९३ ॥ क्षुधित-
स्याशनं पानं । तृषितस्याध्वयायिनः ॥ यानं संपद्यते पुण्य—प्रभावात्पुण्यशालिनः ॥ ९४ ॥ तानि
ते लक्षणान्यंगे । दृश्यंते यानि सत्तम ॥ प्रणाशयंति दुःखानि । कल्याणानि तु कुर्वते ॥ ९५ ॥
न सामान्यनरोऽसि त्वं । सर्वलक्षणलक्षितः ॥ इत्युक्ते खेचरेंद्रेण । वीरसेनोऽब्रवीत्पुनः ॥ ९६ ॥
खेचरेंद्र गमिष्यामि । चंपायामहमुत्सुकः ॥ व्यापृतो गुरुकार्येणा–नुमन्यस्व महाशय ॥ ९७ ॥ खे-
चरानुज्ञया वीरः । प्रविलंघ्य महाटवीं ॥ प्रविवेश पुरीं चंपां । सविस्मयजनेक्षितः ॥ ९८ ॥ अनि-
वृत्तिवशात्तान्नि—र्वनदेवीभिरादरात् ॥ कुमारस्यांगरक्षार्थं । द्वौ सुरौ प्रहितावनु ॥ ९९ ॥ प्रविश-
न्नेव चंपां स । वीरस्ताभ्यामधिष्ठितः ॥ केनापि पठितं श्लोक—युग्मं राजपथेऽशृणोत् ॥ १०० ॥
विलंबः खलु सोढव्यः । पुंसा कार्यचिकीर्षया ॥ काले फलति नाकाले । प्रयुक्तोऽपि पराक्रमः ॥ १ ॥
कार्यं फलं च कालेन । पक्वं न्नवति पेशलं ॥ गृह्यमाणमकाले तु । विरसं न च सुंदरं ॥ २ ॥ श्रु-
त्वेदं चिंतयामास । कुमारः स्थिरधीर्हृदि ॥ कालांतरेण मे कार्य–संसिद्धिर्न्नविता किल ॥ ३ ॥ श-

कुनेन्योऽपि सर्वेभ्यः । शब्दस्यैवाधिकं बलं ॥ इत्येतन्मानितं मेऽस्तु । शकुनं नान्यथाधुना ॥ ४ ॥
ऽस्तु तावदहं पुर्या—मस्यां स्थास्यामि लीलया ॥ ध्यायन्निति स्थितो याव—त्कुमारो राजवर्त्मनि
॥ ५ ॥ तावद्राजकुलं गछन् । सामंतः कोऽप्युपागतः ॥ करेणुपृष्टमारूढः । पत्तिन्निः परितो वृतः
॥ ६ ॥ दत्तफालस्ततो वीरो । दूरं सिंहकिशोरवत् ॥ आरुह्य करिणीपृष्टं । तदुपांत्य उपाविशत ॥ ७ ॥
क एष इति साशंकं । कोलाहलपरे जने ॥ मा नैस्त्वमिति सामंतं । समनाषत राजसूः ॥ ८ ॥
सामंतः स्माह कोऽसि त्वं । किंकारणमिहागतः ॥ उवाच वीरसेनोऽथ । किं मे तप्त्या करिष्यसि
॥ ९ ॥ सामंतः स्माह नायामि । विश्वासं ते तदुत्तर ॥ उत्तीर्याशु स जग्राह । वीरः पुछे करेणु-
कां ॥ १० ॥ तदाकृष्टा पदमपि । नाचालीत्करिणी यदा ॥ वीरो निहंतुमारेने । तद्भृत्यैरायुधैस्तदा
॥ ११ ॥ वीरो दक्षतया तेषा—मायुधानि समग्रहीत ॥ भंक्त्वा मुमोच सर्वाणि । पुनर्दिव्यानुनाव-
तः ॥ १२ ॥ विमुक्तस्तेन सामंतो । राजांतिकमुपेत्य सः ॥ सर्वं कुमारवृत्तांतं । जगाद श्यामलाननः
॥ १३ ॥ नरसिंह उवाचाथ । कश्चायं कस्य वा सुतः ॥ बालोऽप्यबालचरितो । वीरो विक्रमगर्वितः
॥ १४ ॥ सर्वैरपि ततोऽभाणि । देव न ज्ञायते ननु ॥ मूलशुद्धिः कुमारस्य । कोऽप्यसावद्भुतः परं

अन्येद्युर्निर्ययौ राज—पाटिकाहेतवे नृपः ॥ हस्त्यश्वरथपादाति—सेनाभिः परिवारितः ॥ १६ ॥ जयवारणमारूढ—श्छत्रचामरशोभितः ॥ पठ्यमानयशो भट्टै । राजा प्राप चतुष्पथं ॥ १७ ॥ वीर- सेनस्तदा तस्या—श्रौषीद्भोगावलीमिति ॥ सूरश्रीग्रसने राहु—र्नरसिंहो जयत्ययं ॥ १८ ॥ श्रुत्वा स्तुतिपदं तस्य । पितृन्यत्कारसूचकं ॥ कुमारमानसे क्रोध—पावकोऽधिकमज्ज्वलत् ॥ १९ ॥ भृकु- टीभीषणं भालं । विधायाताम्रलोचनः ॥ सिंहनादं मुमोचोच्चै—र्निस्सहं नृपनंदनः ॥ २० ॥ सिंह- नादेन वित्रस्त—सिंहपृष्टमहारथं ॥ बभूव सहसा सैन्यं । नृसिंहस्यासमंजसं ॥ २१ ॥ आस्फालित- भुजादंडो । मध्यसैन्यं विवेश सः ॥ विद्रावितेतरबलो । दुढौके चेभसेनया ॥ २२ ॥ गृहीत्वैकं रथं तेना—पसार्य करिणां घटाः ॥ नृसिंहस्यापि स प्राप । वारणं रणकौतुकी ॥ २३ ॥ उड्डीय लीलया दूर—मारुरोहारिवारणं ॥ मौलिं निःकृष्य जग्राह । केशेषु स च शात्रवं ॥ २४ ॥ चौरबंधं बबंधा- शु । नरसिंहं नराधिपं ॥ उत्पाट्य दक्षिणं बाहु—मुवाचेति च सूरसूः ॥ २५ ॥ भो भोः शृणुत सा- मंता । बद्धः सूरसुवा मया ॥ सोऽयं यः सूरराहुं स्वं । भाणयत्यात्मवंदिभिः ॥ २६ ॥ युष्माकं सु- भटो योऽस्ति । स एनं मोचयत्विह ॥ कथयिष्यथ मैवं य—न्नास्माकं कथितं किल ॥ २७ ॥ परस्परं

च ते सर्वे । सामंता मंत्रिणो भटाः ॥ जगदुर्मौलिविन्यस्ताश्च । विस्मयोत्फुल्ललोचनाः ॥ २८ ॥ वीरसे-
नः स एवैष । सूरसेनस्य नंदनः ॥ स्वप्ने यः कुलदेवीभि—र्देवस्याग्रैव जल्पितः ॥ २९ ॥ जातस्य
सूरपुत्रस्य । तस्यासन् विंशतिसमाः ॥ वर्षविंशतिदेशीय । एषोऽपि प्रतिभाति यत् ॥ ३० ॥ अयं स
एव तन्नूनं । नान्यस्मिन् शक्तिरीदृशी ॥ संवदिष्यति तद्वाक्यं । यन्निमित्तविदोदितं ॥ ३१ ॥ किं ब्रू-
मः कुर्महे किं वा । द्वयोरपि गजस्थयोः ॥ अस्माभी रक्ष्यते कोऽत्र । कोऽत्र वा मार्यते कथं ॥ ३२ ॥
संग्रामितमथ श्रुत्वा । नरसिंहं नरेश्वरं ॥ विमुक्तदीर्घनिःश्वासं । विलुलत्कुण्डलं ॥ ३३ ॥ त्रुट-
न्मुक्तावलीहारं । कनकश्रीमुखं तदा ॥ आगादंतःपुरं सर्वं । विलपत्करुणस्वरं ॥ ३४ ॥ युग्मं ॥ त-
थावस्थं पतिं दृष्ट्वा । प्रारेभे जल्पितुं तया ॥ भो भोः कुमार त्रायस्व । मा मारय पतिं मम
॥ ३५ ॥ मुंच मुंच महावीर । नृसिंहमपि शात्रवं ॥ अपकारकरे यस्मा—त्संतः स्युरुपकारिणः ॥ ३६ ॥
राजपुत्र भवादृक्ष—प्रार्थनाश्चेत्फलंति न ॥ तद्ब्रूहि दुःस्थितं विश्व—मिदं स्यात्सुस्थितं कथं ॥ ३७ ॥
त्वमेव बांधवोऽस्माक—मबंधूनां कुमार तत् ॥ भर्तृभिक्षाप्रदानेन । विधेहि करुणामिह ॥ ३८ ॥ तासां
स करुणालापान् । श्रुत्वार्द्रहृदयस्ततः ॥ सोऽवोचत्कनकश्रीर्जोः । सत्यं वो बांधवोऽस्म्यहं ॥ ३९ ॥

प्रस्तावेऽत्र विमुक्तोऽस्ति । स्वसारो वचसैष वः ॥ दुष्टात्मापि सपत्नोऽपि । निग्रहोचितविग्रहः ॥ ४० ॥
किंतु नो विस्मरत्येत—द्यदक्तत्रेण मे पितुः ॥ अनेनापकृतं तच्च । कार्यं कालांतरे मया ॥ ४१ ॥
कथंचिद्दैवयोगेन । मृगेणापि कृतं हरेः ॥ विस्मरेत्तत्कथं तस्य । यावन्न शतशः कृतं ॥ ४२ ॥ सूर-
ग्रासतमोवाक्य—मद्यप्रभृति चेत श्रुतं ॥ तत्ते कालेन यद्भावि । तत्तदैव भविष्यति ॥ ४३ ॥ ततो
वारवधूहस्ताद् । गृहीत्वा चामरद्वयं ॥ छत्रं च करिणः स्कंधा—दुत्ततार स सूरसूः ॥ ४४ ॥ तत्तथा-
विधमाहात्म्य—दर्शनोत्पन्ननिश्चयाः ॥ सूरसेनजनाः सर्वे । वीरसेनमथाश्रयन् ॥ ४५ ॥ स्वजनांतः
स्थिते नाथ । धृतछत्रेण मूर्धनि ॥ चामरैर्वीज्यमानेन । तत्रापृच्छि निजो जनः ॥ ४६ ॥ क्वास्तीह
निहितो गुप्तौ । बृहस्पतिसुतो ननु ॥ बंधुदत्तोऽभिधानेन । येन तं मोचयामहे ॥ ४७ ॥ इत्युक्ते
स्तैः प्रदेशः स । दर्शितो मंत्रिसूरपि ॥ मोचयित्वा समं मात्रा । सुहृदं तं चकार सः ॥ ४८ ॥ तत्र
स्थितस्य केनापि । कुमारस्यान्यवासरे ॥ प्रधानपुरुषेणोक्त—मेकांते हितकांक्षिणा ॥ ४९ ॥ ना-
शिक्यनगरे देव । स विचित्रयशा नृपः ॥ वेष्टितोऽस्त्यरिसैन्येन । सूरसेनस्य यः सुहृत् ॥ ५० ॥ त-
देष सूरसेनस्य । नृपः परमबंधुवत् ॥ मन्यते नरसिंहस्य । नाज्ञां सर्वमहीपतेः ॥ ५१ ॥ अनेन का-

रणेनास्य । नगरस्यारिसेनया ॥ बभूवुर्द्वादशाब्दानि । वेष्टितस्य समंततः ॥ ५२ ॥ प्रक्षीणधान्यय-
वस—मंतःपीडितपूरुषं ॥ अद्य कल्येऽथवा देव । तत्पुरं भंक्ष्यते ननु ॥ ५३ ॥ श्रुत्वेति वीरसेनोऽ-
थ । निर्गत्य नगरान्निजात ॥ कतिभिः स्वजनैः सार्धं । नाशिक्यनगरीं ययौ ॥ ५४ ॥ विलोक्य न-
गरं सर्वं । वेष्टितं सोऽरिसेनया ॥ बंधुदत्तं विचित्रस्य । पार्श्वे प्रेष्येत्यवीवदत् ॥ ५५ ॥ स्थिरो भव
नराधीश । माभैषीर्निजचेतसि ॥ मावादीर्दीनवाक्यानि । माभिमानं निजं त्यज ॥ ५६ ॥ यद्यहं सूर-
सेनेन । जातोऽस्मि कोऽपि मानुषः ॥ तदद्यैव करिष्यामि । पुरमुद्वेष्टितं तव ॥ ५७ ॥ बंधुदत्तो नृ-
पादेशा—न्मुक्तोंतर्द्वारपालकैः ॥ वीरसेनः स्वयं चागा—न्मध्ये रिपुबलं ततः ॥ ५८ ॥ हरिधर्मा-
भिधानस्य । गत्वा सेनापतेर्गृहं ॥ पश्चाद्बाहुं बबंधाशु । वीरस्तं साहसाग्रणीः ॥ ५९ ॥ तं पुरस्कृत्य
सेनान्यं । सर्वेषामपि पश्यतां ॥ ययौ नाशिक्यनगरी—गोपुरे सूरनंदनः ॥ ६० ॥ धृते तस्मिन्नृ-
पाः सर्वे । प्रणष्टाः सैन्यवासिनः ॥ महारोधाद्विमुक्तोऽथ । जनोऽपि स्वस्थतां गतः ॥ ६१ ॥ बंधुदत्तो-
क्तवृत्तांत—श्रवणात्स्वस्थमानसः ॥ वीरसेनकथां शृण्वन् । विचित्रश्चिरमागमत ॥ ६२ ॥ इतश्च वी-
रसेनस्य । प्रधानैः परिढौकितः ॥ हरिधर्मश्चमूनाथो । विचित्रयशसः पुरः ॥ ६३ ॥ कथितं चेति दे-

वायं । वीरसेनेन चौरवत् ॥ एकांगेनैव बद्धोऽथ । प्रेषितश्च त्वदंतिके ॥ ६४ ॥ तदेतस्य यथायोग्यं । विधेहि त्वं तथा स्वयं ॥ मन्मुखेनेति विज्ञप्तं । कुमारेण तवाधुना ॥ ६५ ॥ विचित्रेणोक्तमत्रैव । तावत्तिष्ठत्वयं नृपः ॥ यावद्वीरस्य वेगेन । प्रवेशं पुरि कारये ॥ ६६ ॥ इत्युक्त्वा वेत्रिणा शोभां । कारयित्वा चतुष्पथे ॥ बंधुदत्तान्वितो राजा । कुमाराभिमुखं ययौ ॥ ६७ ॥ गजादुत्तीर्य राजेंद्रः । कुमारदर्शनोत्सुकः ॥ प्रसारितभुजो दूर—मालिलिंग नृपात्मजं ॥ ६८ ॥ कुमारोऽपि ननामोच्चै । रा जानं पितृवत्तदा ॥ पुत्रवत्परमस्नेहा—द्राज्ञा शिरसि चुंबितः ॥ ६९ ॥ आरुह्य कुंजरं वीरो । लो· कलोचनचंद्रमाः ॥ प्रविवेश पुरीमध्ये । राजामात्यपरीवृतः ॥ ७० ॥ क्वागतोऽस्मि स्थितोऽहं क्व । को· ऽहं कार्यं ममात्र किं ॥ कुमारेक्षावशाल्लोक । इत्यज्ञासीदनिंदत्त्व । लो· सीदात्मवेद्यपि ॥ ७१ ॥ अवाज्ञासीदनिंदच्च । लो· कोऽन्यदर्शितं जनैः ॥ कुमारवपुषि न्यस्त—मनोनयनचेतनः ॥ ७२ ॥ कुमारदर्शनोत्पन्न—विस्म· यानंदनारीणां ॥ लोकानां बहुधाऽभूव—न्नालापाश्च परस्परं ॥ ७३ ॥ सोऽसौ येन स्वदोर्दंड—खंडि· तापरविक्रमः ॥ एकेनैव नृसिंहस्य । बद्धः सेनापतिः क्षणात् ॥ ७४ ॥ संसारसारभूतोऽय । कुमारो नंदताच्चिरं ॥ गर्भवासोपमाद्येन । रोधकान्मोचिता वयं ॥ ७५ ॥ रूपलावण्यवैदग्ध्य—विक्रमोपश·

मादिषु ॥ यत्रैकस्तत्र नान्योऽस्ति । सर्वेऽप्यत्र स्थिताः पुनः ॥ ७६ ॥ दर्शनादस्य नेत्राणि । वक्त्राणि गुणकीर्तनात् ॥ चेतांसि चिंतनाच्चासन् । सफलानि शरीरिणां ॥ ७७ ॥ इत्यनेकविकल्पानां । गोचरं नृपनंदनं ॥ प्रावेशयन्निजे सौधे । परमर्द्ध्या महीपतिः ॥ ७८ ॥ विचित्रयशसा राज्ञा—भ्यधायीति सुहृत्सुतः ॥ अत्र राजा कुमार त्वं । वयं तु तव सेवकाः ॥ ७९ ॥ उचितं यद्यथाकाले । तदादेश्यं त्वयात्र नः ॥ परकीयमतिः कार्या । नात्र राज्ये कदाचन ॥ ८० ॥ निजावाससमं राजा । वीरसेनस्य कुट्टिमं ॥ अर्पयित्वा पुरीमध्ये । कारयामास स क्षणं ॥ ८१ ॥ बद्धं नृपं प्रतिविमोच्य महीभृतांतं । तस्थौ स्वकीय इव तत्र पुरे कुमारः ॥ रक्षाकृते वनसुरीविनियोजितौ च । स्वस्थानमभ्युपगतौ सुरकिंकरौ तौ ॥ ८२ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्ग्रांधवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये श्रीहरिविक्रमप्रतिबोधावसरप्रोक्तश्रीसूरसेनसुतवीरसेनकुमारावदातवर्णनो नाम सप्तमः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

———

॥ अथाष्टमः सर्गः प्रारभ्यते ॥

इतश्च तस्य नृपस्य । विजयाकुक्षिसंभवा ॥ चंद्रश्रीरिति विख्याता । सुताभूत्प्राप्तयौवना ॥ १ ॥
वीरसेनावदातानां । पीत्वा कर्णपुटे रसं ॥ तं दिदृक्षुर्गवाक्षस्था । तस्थौ सा तृप्तिवर्जिता ॥ २ ॥ रा-
जांगणमथायातो । वीरसेनस्तयेक्षितः ॥ गजारूढो धृतछत्र—चामरद्वयशोभितः ॥ ३ ॥ ये न दृ-
ष्टाः श्रुताः क्वापि । न कवेश्च गिरां पथि ॥ वीरालोके विकारास्ते । तस्याः कामकृतोऽभवन् ॥ ४ ॥
तदेकमानसा जाता । चंद्रश्रीस्तत्क्षणादपि ॥ कुमारेणापि तद्भावो । ज्ञातो दृष्टिविकारतः ॥ ५ ॥
आत्मानुरागिणं याव—चंद्रश्रीस्तं समीक्षते ॥ तेन तावदकांडेऽपि । दृष्टिरूर्ध्वं प्रसारिता ॥ ६ ॥ अ-
थ तेन महावेगा—दृगनाभिमुखं तदा ॥ विशुद्धमानुकारेण । हरिवत्करणं ददौ ॥ ७ ॥ उत्पतंतं
समालोक्य । विषादाश्चर्यसंयुतः ॥ बभूव हृदये तस्या । वरविद्याधरभ्रमः ॥ ८ ॥ जनानां तुमुलो
जातो । राजसौधांगणे तदा ॥ कथमुत्पतितो दूरं । महच्चित्रमहो इति ॥ ९ ॥ वियुक्तस्तेन सर्वो-
ऽपि । परिवारः सभास्वता ॥ म्लानास्यपंकजो जातः । सहसा कमलाकरः ॥ १० ॥ हट्टे देवकुले
मार्गे । गृहे राजगृहेऽपि च ॥ खेदविस्मयमिश्रैक—हृदयः पूर्जनोऽभवत ॥ ११ ॥ तन्मनोहरसप्या-

सी—त्पुरं चंडश्रियाः क्षणात् ॥ तज्जीवविरहाद्भूरि—शोकसंतापकारकं ॥ १२ ॥ हा किं दृष्टोऽसि
दृष्टश्चे—त्किं नष्टोऽसि महामते ॥ तन्नूनं मम संताप—हेतवेऽत्र तवागमः ॥ १३ ॥ त्वया चेद् हृ-
दयं जह्रे । मम तद्दर वच्मि न ॥ तन्निवासा परं ब्रूहि । दुःखश्रेणिः स्थिता कथं ॥ १४ ॥ देशं व्र-
जेप्सितं ते मे-ऽपि पूर्यतां मनोरथाः ॥ त्वत्तोऽन्यः शरणं मे स्या—न्नेहामुत्र च जन्मनि ॥ १५ ॥
ध्यायंत्यामित्थमेतस्यां । श्रुत्वा जनमुखान्नृपः ॥ प्रासादस्याग्रमारोह—त्तद्वीक्षितुं समंततः ॥ १६ ॥ रा-
ज्ञा सपरिवारेण । चिरमूर्ध्वं विलोकिना ॥ विलोकितोऽपि नो दृष्टो । राजसूर्गगनाध्वनि ॥ १७ ॥
कथंचिद्दैवयोगेन । मायं पततु भूतले ॥ अश्वारोहैश्चतुर्दिक्षु । योजनांतमरक्षितः ॥ १८ ॥ मध्या-
ह्नेऽथ महाराजो । ललाटंतपभास्वति ॥ अलभ्यमानतच्छुद्धि—रुत्ततार शिरोगृहात् ॥ १९ ॥ मध्ये
सौधमुपासीनो । वरसिंहासने नृपः ॥ निःशेषं मंत्रिणां वर्गं । वक्तुमेवं प्रचक्रमे ॥ २० ॥ पश्यताहो
महामात्या । अयं जह्रे सुरेण किं ॥ विद्याधरेण वान्येन । केनचिद् दुष्टबुद्धिना ॥ २१ ॥ स्वस्वबु-
द्ध्या महामात्यै—र्यथा दृष्टं यदत्र यैः ॥ तत्तथा कथितं सर्वैः । क्रमेण नृपतेः पुरः ॥ २२ ॥ ततो
मंत्रिशिरोरत्नं । मान्यो नरपतेरपि ॥ प्रज्ञाकर उवाचेदं । किं भो ब्रूतासमंजसं ॥ २३ ॥ प्रमाणं यदि

मे बुद्धि—वीरशब्दं वहेत्स चेत् ॥ अक्रनांगं क्षणेनात्र । तत्तं पश्यत धीसखाः ॥ २४ ॥ इतश्च सहसा जज्ञे । राजसौधाजिरे तदा ॥ उत्खातालानपट्टेन—लोककोलाहलो महान् ॥ २५ ॥ परस्परनिघर्षेण । पतज्जनपरंपरं ॥ बभूव नगरं सर्वं । व्याकुलं गजदत्तहृक् ॥ २६ ॥ अथाशेषपुरीलोको । हस्तिसंपातभीतितः ॥ प्राकारवल्लभीवृक्ष—शिखराण्यधिरूढवान् ॥ २७ ॥ राजापि तत्क्षणादेव । व्याकुलः सह संसदा ॥ प्रासादाग्रं समारुह्य । व्याजहारोच्चकैरिति ॥ २८ ॥ रे धावताशु गृह्णीत । ढौकयध्वं करेणुकां ॥ गजेंद्रमश्ववारौघैः । कुरुध्वं परिवेष्टितं ॥ २९ ॥ तस्मिन् राजकुलेऽशेषे । योधलक्षसमाकुले ॥ न स कोऽप्यभवद्येन । स गजः क्रियते वशं ॥ ३० ॥ इतश्च खेचरव्रात—स्तूयमानपराक्रमः ॥ प्राकारादिस्थितैः पौरै—र्दृश्यमानः सविस्मयं ॥ ३१ ॥ वामेतरकराश्लिष्ट—खेचरस्कंधबंधुरः ॥ अवतीर्य नभोमध्या—त्कुमारः पुनराययौ ॥ ३२ ॥ युग्मं ॥ तदालोकवशाल्लोक—हर्षकोलाहलैर्भृशं ॥ क्रुद्धस्य करिणः कुंभे । कुमारश्चरणं दधौ ॥ ३३ ॥ सिंहपोत इवारूढे । कुमारे तत्र कुंजरः ॥ निर्मदः सहसा जज्ञे । हतो मर्मणि मुष्टिना ॥ ३४ ॥ राज्ञा सपरिवारेण । ततो हृष्टो गजस्थितः ॥ हर्षपूर्णहृदा चेति । तुष्टुवे सूरनंदनः ॥ ३५ ॥ यत्राकृतिस्तत्र गुणाः । प्रज्ञाकरकृता-

स्पदाः ॥ निर्विकल्पं कुमारेऽस्मिन् । सत्यापितमिदं वचः ॥ ३६ ॥ निःशेषदोषसंपूर्णे । संसारे स्थानवर्जितैः ॥ मन्ये सर्वगुणैरेष । निर्दोष इति संश्रितः ॥ ३७ ॥ कृतदोषोदयं स्तौमि । चंद्रस्यापि न चेष्टितं ॥ हतदोषोदयं विश्वे । सूरस्य स्फुरितं पर ॥ ३८ ॥ इत्येवं बहुधा कुर्वन् । राजा तद्गुणसंकथाः ॥ ऊचे मझाकरेणेति । देवेदमिदमेव हि ॥ ३९ ॥ विषमोऽपि वशीचक्रे । वारणस्तत्क्षणादपि ॥ वीरसेनकुमारेण । गजशिक्षापटीयसा ॥ ४० ॥ जल्पन् जयजयारावं । नानाशीर्वादबंधुरं ॥ प्रसरत्परमानंदं । जातं राजकुलादिकं ॥ ४१ ॥ उपरिष्टात्कुमारस्य । मुक्ता विद्याधरैरथ ॥ भ्रमरध्वनिवाचाला । पुष्पवृष्टिर्नभस्तलात ॥ ४२ ॥ तथा कथंचिदेतेन । तदा व्यालो वशीकृतः ॥ बालानामपि सुग्राह्यः । प्रशांतात्मा यथाजनि ॥ ४३ ॥ स्वपरीवारविद्याभृ—त्परीतः करिणीस्थितः ॥ आलाने दंतिनं बध्ध्वा । कुमारोऽगान्नृपांतिकं ॥ ४४ ॥ प्रणम्य शिरसा नृपं । वीरः खेचरसंयुतः ॥ उपविष्टः सभामध्ये । पृष्टश्च जगतीभुजा ॥ ४५ ॥ अश्रद्धेयमसंभाव्यं । चरित्रं किमिदं तव ॥ अपूर्वं यच्चमत्कारं । करोति महतामपि ॥ ४६ ॥ कौतुकोत्तानचित्ताना—मस्माकं कथयाधुना ॥ स्ववृत्तांतं यथा वत्स । संतोषः स्यात्सभासदां ॥ ४७ ॥ इत्युक्ते नृभुजा तेन । लज्जानम्रमुखः क्षणं ॥ वीरसेनकुमा·

रोऽथ । जगाद वदतांवरः ॥ ४८ ॥ कियंतीह महाराज । शृणोष्यस्मादृशामिति ॥ अज्ञानबालचापल्य—चेष्टितानि महामते ॥ ४९ ॥ आज्ञाभंगकृतं मास्तु । दुर्विनीतत्वमत्र मे ॥ इति तन्मे यथावृत्तं । ब्रूहि त्वं चंद्रशेखर ॥ ५० ॥ जगाद खेचराधीश—स्ततोऽसौ चंद्रशेखरः ॥ देवाद्य स्यादह—मनुमत्या ब्रवीम्यदः ॥ ५१ ॥ वैताढ्ये दक्षिणश्रेणौ । श्रीवासेऽस्ति महापुरे ॥ नाम्ना कमलकेतुः स । ख्यातो विद्याधरांगजः ॥ ५२ ॥ प्रकृत्या रूपवानेष । युवतीजनवल्लभः ॥ मायावी विषयासक्तो । निंदिताचरणोद्यतः ॥ ५३ ॥ ग्रामाकरपुरद्रोण—रम्यभूमितले सदा ॥ स्वेच्छया विहरन्नेष । न केनापि निवारितः ॥ ५४ ॥ अन्येद्युर्मथुरापुर्यां । पृष्टस्तेन मुनीश्वरः ॥ भगवन् कस्य हस्तेन । मरणं मे भविष्यति ॥ ५५ ॥ मुनिनोचे ततस्तेऽस्ति । मरण भूमिगोचरात् ॥ कमलः स्माह सत्यं भो । नोक्तं श्वेतपट त्वया ॥ ५६ ॥ संतीहोरुप्रभावाढ्याः । खेचरा असुराः सुराः ॥ तेषामपि न ग्राह्योऽहं । भूचराणां तु का कथा ॥ ५७ ॥ अवमन्य मुनेर्वाक्य—मुत्पत्य नभसा च सः ॥ कामरूपाभिधे देशे । ज्योतिषीं नगरीं ययौ ॥ ५८ ॥ तत्रास्त्यर्थपतिर्नाम्ना । श्रावको वणिजाग्रणीः ॥ पद्मदेवी प्रिया तस्य । सुशीला रूपशालिनी ॥ ५९ ॥ मुक्त्वार्थपतिमन्यं तु । नरं नेच्छति सा सती ॥

तस्याः संति हृदि त्वन्ये । पुमांसो युवतीसमाः ॥ ६० ॥ कामग्रहाभिभूतोऽथ । क्रमलोऽर्थपतेः प्रियां
॥ पद्मदेवीं जहारोच्चै—रनुरागवशंवदः ॥ ६१ ॥ सा जगादांबरे नीता । वत्स बांधव किं कृतं ॥ किं-
निमित्तमहं सौध—शृंगादपहृता त्वया ॥ ६२ ॥ ततो रोषेण केशेषु । गृहीत्वा तां महासतीं ॥ ज-
घान मुष्टिभिर्गाढं । स पापो भीषणाकृतिः ॥ ६३ ॥ अनेनैव सतीत्वेन । पापे प्राप्स्यसि दुर्दशां ॥
अज्ञातहृदयानिष्ट—शब्दैर्यज्जल्पसीदृशं ॥ ६४ ॥ वत्सोऽत्र भण्यते पुत्रो—ऽनुरक्तोऽहं पुनस्त्वयि ॥
तद् ब्रूहि वत्सशब्देन । भर्तात्र कथमुच्यते ॥ ६५ ॥ इत्युक्ते तेन सावोच-द्वत्स एवासि वत्स मे ॥
खंडशोऽहं कृतापि त्वां । नैवेच्छामि कथंचन ॥ ६६ ॥ मर्त्यत्वं दुर्लभं लब्धं । शुद्धं तदपि जन्मना ॥
प्रबोधो जिनतत्वेषु । सम्यक्त्वाधिगमोऽप्यभूत् ॥ ६७ ॥ सिद्धांतस्य श्रुतं सारं । कृतं तद्भणितं तथा ॥
प्रक्षालितो मयाशेष—स्तपसा जन्मकश्मलः ॥ ६८ ॥ तदेतस्मिन् कथंकार—मसमंजसचेष्टिते ॥
परिणामाहिते कुर्वे । दुःशीलाचरणे मनः ॥ ६९ ॥ त्वमप्यज्ञान माकार्षी—र्निजगोत्रकलंकनं ॥ म-
हतां मरणांतेऽपि । विरुद्धाचरणं न यत ॥ ७० ॥ रक्षार्थं निजशीलस्य । पद्मदेवी नभश्वरं ॥ साम्ना
यावद्भयाचेति । तावत्स पुनरब्रवीत ॥ ७१ ॥ आः पापे बहु किं ब्रूषे । स्वपांडित्यं ममापि किं ॥ शि-

दयस्यद्य जानामि । चेत्त्वं यासि ममाग्रतः ॥ ७२ ॥ अतःपरं न मे वाक्यं । मन्यसे तदहं तव ॥
शिरश्छेदं करिष्यामि । तीक्ष्णनिस्त्रिंशधारया ॥ ७३ ॥ विज्ञाय तन्मनः पद्मा । सस्मारार्हन्नमस्क्रि-
यां ॥ साकारानशनं चापि । जग्राह निजचेतसि ॥ ७४ ॥ तवात्र समये राजन् । पुरे परमबंधुवत ॥
इमं कुमारमालोक्य । गजारूढमुवाच सा ॥ ७५ ॥ हा कुमार महावीर । रक्ष मां राक्षसादतः ॥ बां-
धव त्वां विना कोऽपि । न हि मां रक्षितुं क्षमः ॥ ७६ ॥ पद्मा मृत्युभयोद्विग्ना । यावदेवं जगाद सा
॥ तावत्कमलकेतुः स । तामिति प्रत्यभाषत ॥ ७७ ॥ अनेन त्वं कुमारेण । भूभारेण ममाग्रतः ॥
रक्षस्यात्मानमाः पापे । दक्षत्वं ते गतं हि तत ॥ ७८ ॥ मत्कोपानलज्वालायां । त्वयात्मा नैव के-
वलं ॥ प्रतिकूलतयैषोऽपि । वराकश्चिक्षिपे ध्रुवं ॥ ७९ ॥ इत्युक्त्वासिं समाकृष्य । सोऽवोचन्नम्रमस्तकः ॥
कुमाराधम रे रक्ष । त्वमेतां शरणागतां ॥ ८० ॥ ऊर्ध्व ईशे कुमारोऽथ । निशम्य तस्य गर्जितं ॥ निशि-
तासिकरं खेट-मुत्पश्योऽपश्यद्दंतिके ॥ ८१ ॥ त्रातः पाहीति वाक्येन । संजातकरुणारसः ॥ खेटदुर्वचना
जात-तीव्रामर्षप्रदुःसहः ॥ ८२ ॥ तोलयित्वा निजं सत्व-माकृष्य क्षुरिकां सितां ॥ सर्वस्थाम्ना प्रतोच्चैः
। कुमारः खेचरंप्रति ॥ ८३ ॥ युग्मं ॥ उत्प्लुत्य पृष्ठमारूढः । कुमारः कमलस्य सः ॥ गृहीतकबरीमूलः । क्षु-

रीहस्तोऽब्रवीदिति ॥ ८४ ॥ अरे मुंच स्वसारं मे । रक्षामि त्वामहं यथा ॥ शुद्धशीला प्रयात्वेषा ।
निजं गेहं पतिव्रता ॥ ८५ ॥ यथा न भज्यते यष्टिः । सर्पोऽपि म्रियते न च ॥ उभयोरपि रक्षा-
स्तु । शीलस्यास्यास्तवापि च ॥ ८६ ॥ विनैवोत्तरमेषोऽथ । कुमारं निजचेतसि ॥ तृणवन्मन्यमानो-
ऽलं । भ्रमयामास चक्रवत् ॥ ८७ ॥ भ्रमयामास मायी तं । गगने स यथा यथा ॥ तथा तथा कु-
मारोऽपि । पीडयामास तं गले ॥ ८८ ॥ निरुद्धोच्छ्वासनिःश्वासः । पापस्तत्याज जीवितं ॥ स व-
मन् रुधिरं मूर्त—पद्मदेव्यनुरागवत् ॥ ८९ ॥ प्रागदृश्यैस्ततोऽस्माभि—र्गुरुपौरुषतोषितैः ॥ प्रत्यग्रा-
हि कुमारोऽयं । पतन्नाकाशमण्डलात ॥ ९० ॥ कुमारो जगदेऽस्माभि-र्बहुमानपुरस्सरं ॥ त्वया साधु
महासत्व । दुष्टनिग्रहणं कृतं ॥ ९१ ॥ दुष्टनिग्रहणेनेह । साधूनां पालनेन च ॥ त्वय्येव घटते वीर ।
राजत्वं सत्वशालिनः ॥ ९२ ॥ इत्यादि बहुधास्माभिः । सद्भूतगुणगर्भिता ॥ स्तुतिरश्रावि दुर्वाक्य
—वदनेन महात्मना ॥ ९३ ॥ अथोवाच कुमारस्तां । स्वसारं स्नेहनिर्भरं ॥ शीलोज्ज्वले ममा-
ख्याहि । यत्कृत्यं सांप्रतं ननु ॥ ९४ ॥ पद्मदेवी जगादाथ । खल खेचरराक्षसात ॥ नाहमेव त्वया
किंतु । रक्षितं जगदप्यदः ॥ ९५ ॥ त्वं स्वामी बांधवोऽपि त्वं । त्वं माता त्वं पिता मम ॥ त्वं गुरुः

प्राणदस्त्वं च । तत्किं नासि कुमार यत् ॥ ९६ ॥ निःशेषविश्वरक्षातः । प्राप्तपुण्यमहाभरः ॥ आचं-
द्रार्कं कुमार त्वं । नंद कल्याणभाजन ॥ ९७ ॥ मां प्रापयापविघ्नं तं । मम स्थानं महाशय ॥ तथा
कुरु च मे भर्ता । यथा प्रत्येति सर्वथा ॥ ९८ ॥ मद्भ्रात्राथ सुवेगेन । प्रापिता निजवेश्म सा ॥ कु-
मारस्तु सहास्माभि—रिह राजन् समाययौ ॥ ९९ ॥ चमत्कृतोऽवदातेन । नृपतिः सजया सह ॥
स्तावं स्तावं तदा वीरं । व्यसृजन्निजवेश्मनि ॥ १०० ॥ राजपुत्र्यानुरागः स्वो । दर्शितः सूरजन्मनः ॥
प्रेष्यांगरागमालादि । प्रछन्नं स्वसखीजनैः ॥ १ ॥ चंद्रश्रीर्ददृशे कन्या । क्रीडंती वेश्मकानने ॥ अ-
शोकशेखराख्याभ्यां । विद्याभृद्भ्यामथान्यदा ॥ २ ॥ कार्यांतरेण यातेऽथ । सहसा शेखरे खगे ॥
अशोकश्चिंतयामास । चंद्रश्रीकरपीडनं ॥ ३ ॥ विद्ययावेत्य तां कन्यां । वीरसेनानुरागिणीं ॥ वि-
मानादवरोह्याशु । जहाराशोकखेचरः ॥ ४ ॥ ततः परिजनेनोच्चै—श्चक्रे कलकलो महान् ॥ विमा-
नं च तिरोधत्त । पौराणामूर्ध्वचक्षुषां ॥ ५ ॥ ततो विजयवत्याख्य—देत्वा राजपदांतिके ॥ पाहि
पाहीति जल्पंती । सुताया हरणं द्रुतं ॥ ६ ॥ देवीवचनमाकर्ण्य । मूर्छाविधुरचेतनः ॥ पपात सह-
सा नृपः । पुत्रीदुःखेन भूतले ॥ ७ ॥ मीलिताक्षिदलो म्लान—सर्वांगावयवस्तदा ॥ चंद्रश्रीविरहे

सोऽसौ । जातः कुमुदखंमवत् ॥ ८ ॥ चिरेण लब्धचैतन्यो । विललाप नरेश्वरः ॥ हा वत्से लद्दय·
से नेत्रैः । कथं शृंगारबंधुरा ॥ ९ ॥ सा निःशेषकलायुक्ता । त्रृषिता सा सुधामयी ॥ चंडश्री राहु
रूपेणां—तरिता केन पाप्मना ॥ १० ॥ देव्यप्युवाच हे वत्से । कां पश्यामि स्मरामि किं ॥ कां चा·
लिंगामि चंडश्री—स्त्वां विना गुणसुंदरि ॥ ११ ॥ हसितं क्रीमितं यातं । जल्पितं चापि तत्तव ॥
स्मृत्वा न दीर्यते मे हृ—त्तदाश्चर्यमिदं महत् ॥ १२ ॥ प्रज्ञाकरेण नृपालः । सकलत्रोऽथ बोधितः ॥
लोकोपरोधलज्जाद्यै—स्तस्थौ विहितभोजनः ॥ १३ ॥ अथाचख्यौ विलासश्री—र्देव्यै चंद्रश्रियः सखी ॥
परस्परानुरागं तं । चंडश्रीवीरसेनयोः ॥ १४ ॥ प्रियपुत्रीवियोगार्त्या—तिदूना राजवल्लभा ॥ इत्या
हानिष्टसंयोग—दुःखे हि पतिता सुता ॥ १५ ॥ श्लाघ्यते मृत्युरप्यत्र । दीप्ते चाग्नौ प्रविश्यते ॥ अ·
निष्टजनसंयोगो । नैकः सोढुं तु शक्यते ॥ १६ ॥ न वत्से केवलं तेऽम्ब—त्पितुस्तेऽपि मनोरथः ॥
कुमाराय प्रदातव्या । चंडश्रीरिति निश्चितः ॥ १७ ॥ सिद्ध्यंति तुच्छपुण्यानां । कथं वत्से मनोरथाः
॥ इत्युक्त्वा मुक्तकंठं सा । रुरोद नृपतेः प्रिया ॥ १८ ॥ पारंपर्येण लोकानां । वीरसेनेन शुश्रुवे ॥
अनिछंत्यपि चंद्रश्री—र्हृता विद्याधरेण यत् ॥ १९ ॥ विरहानलतप्तोऽपि । प्रकृत्या धीरमानसः ॥

चिंतयामास चित्ते स । कुमारः स्फारविक्रमः ॥ २० ॥ जननीजनकोद्भूतो । यद्यहं कोऽपि पूरुषः ॥
जित्वा हठेन तं खेटं । चंद्रश्रियमिहानये ॥ २१ ॥ यदि जीवति चंद्रश्री—जंबूद्वीपे वसेच्च चेत ॥
गत्वा दुर्गमपि स्थानं । तत्तां नूनमिहानये ॥ २२ ॥ कामातुरो नरः कोऽत्र । युक्तायुक्तं विचारये-
त् ॥ वल्लभाध्वानुलग्नानां । किमपि स्याद्यदस्तु तत् ॥ २३ ॥ जानेऽहं हृदयं तस्याः । कुलीनाया मदा-
हितं ॥ प्राणांतेऽपि परं याति । पुमांसं नात्र निश्चितं ॥ २४ ॥ इति निश्चित्य वीरः स । निर्ययौ
नगराद्बहिः ॥ अमी विघ्नं करिष्यंती—त्यज्ञापितसुहज्जनः ॥ २५ ॥ चतुर्दिक्षु विलोक्याथ । शकुनं
दक्षिणंप्रति ॥ चचाल प्रेरितश्चारु—शकुनेन स सूरसूः ॥ २६ ॥ उल्लंघितधरापीठो । न ज्ञाताध्व-
परिश्रमः ॥ स मार्गे वर्धितोत्साह—स्त्वरितं त्वरितं ययौ ॥ २७ ॥ सागरः सारणीमात्रो । लोष्टुमात्रो
महागिरिः ॥ पृथ्वी गोष्पदमात्रा स्या—न्नराणां धीरचेतसां ॥ २८ ॥ स्थाने स्थाने नदीतीरे । का-
नने गिरिगह्वरे ॥ पश्यंश्चंद्रश्रियं प्रापा—रण्यानीमेष साहसी ॥ २९ ॥ तस्यामटाट्यमानः स । नी-
रदर्शी तृषातुरः ॥ सारसस्वरविज्ञातं । ददर्शैकं महासरः ॥ ३० ॥ जलकेलिं विधायोच्चैः । पीत्वा त
त्रामलं जलं ॥ निर्माय प्राणवृत्तिं च । फलैर्यावत्तटे स्थितः ॥ ३१ ॥ मध्ये सरो महाद्वीपं । प्रासादं

च तदंतरा ॥ दृष्ट्वा संगीतकं ताव—च्छुश्राव श्रवणप्रियं ॥ ३२ ॥ को देवः किं च संगीत—मि
ति ज्ञातुं समुत्सुकः ॥ स पश्यन् गमनोपायं । यावत्पालिशिरोऽध्यगात ॥ ३३ ॥ एको वनगजस्ताव
—त्पानीयं पातुमागतः ॥ तं वीक्ष्य चिंतयामास । कुमारश्चेतसीति सः ॥ ३४ ॥ एतमारुह्य गच्छामि ।
सरोंतः कियतीं भुवं ॥ ततस्तीर्त्वा भुजाभ्यां तु । द्वीपे यास्यामि हेलया ॥ ३५ ॥ ध्यात्वेति वश्यमा-
नीतं । गजमारुह्य तत्क्षणात ॥ ययौ स सरसीमध्यं । जलावर्तातिदुस्तरं ॥ ३६ ॥ ततः पार्ष्णिप्रहारे-
ण । पश्चाद्व्यावर्त्य तं गजं ॥ उत्प्लुत्य लंघितावर्तो । द्वीपांतः स तदापतत् ॥ ३७ ॥ प्रासादप्रांगणे
दृष्ट्वा । विद्याधरवधूगणं ॥ व्यापृतं देवपूजायां । गीतनृत्यपरायणं ॥ ३८ ॥ प्रासादांतः प्रविश्या
थ । पोम्दशं जिननायकं ॥ चामीकरमयं भक्त्या । श्रीशांतिं प्रणनाम सः ॥ ३९ ॥ युग्मं ॥ मेरुश्रृं-
गमिवोत्तुंगं । प्रासादं यावदीक्षते ॥ चारणर्षियुगं ताव—दुत्तीर्णमिह पुष्करात ॥ ४० ॥ प्रदक्षिणा-
त्रयं कृत्वा । नत्वा शांतिजिनेश्वरं ॥ अशोकस्य तरोर्मूले । प्रासुके तदुपाविशत् ॥ ४१ ॥ महामुनी
महाभक्त्या । कुमारेण नतौ ततः ॥ तस्मै धर्माशिषं दत्वा । धर्मवार्तां प्रचक्रतुः ॥ ४२ ॥ तावपृच्छ-
त्कुमारोऽथ । महर्षी कथ्यतां मम ॥ केनेदं कारितं चैत्यं । बिंबं चापि महासरः ॥ ४३ ॥ इति पृष्टौ

चिंतयामास चित्ते स । कुमारः स्फारविक्रमः ॥ २० ॥ जननीजनकोद्भूतो । यद्यहं कोऽपि पूरुषः ॥
जित्वा हठेन तं खेटं । चंद्रश्रियमिहानये ॥ २१ ॥ यदि जीवति चंद्रश्री—र्जंबूद्वीपे वसेच्च चेत् ॥
गत्वा दुर्गमपि स्थानं । तत्तां नूनमिहानये ॥ २२ ॥ कामातुरो नरः कोऽत्र । युक्तायुक्तं विचारये-
त् ॥ वल्लभाध्वानुलग्नानां । किमपि स्याद्यदस्तु तत् ॥ २३ ॥ जानेऽहं हृदयं तस्याः । कुलीनाया मदा-
हितं ॥ प्राणांतेऽपि परं याति । पुमांसं नात्र निश्चितं ॥ २४ ॥ इति निश्चित्य वीरः स । निर्ययौ
नगराद्बहिः ॥ अमी विघ्नं करिष्यंती—त्यज्ञापितसुहृज्जनः ॥ २५ ॥ चतुर्दिक्षु विलोक्याथ । शकुनं
दक्षिणांप्रति ॥ चचाल प्रेरितश्चारु—शकुनेन स सूरसूः ॥ २६ ॥ उल्लंघितधरापीठो । न ज्ञाताध्व-
परिश्रमः ॥ स मार्गे वर्धितोत्साह—स्त्वरितं त्वरितं ययौ ॥ २७ ॥ सागरः सारणीमात्रो । लोष्टुमात्रो
महागिरिः ॥ पृथ्वी गोष्पदमात्रा स्या—न्नराणां धीरचेतसां ॥ २८ ॥ स्थाने स्थाने नदीतीरे । का-
नने गिरिगह्वरे ॥ पश्यंश्चंद्रश्रियं प्रापा—रण्यानीमेष साहसी ॥ २९ ॥ तस्यामटाट्यमानः स । नी-
रदर्शी तृषातुरः ॥ सारसस्वरविज्ञातं । ददर्शैकं महासरः ॥ ३० ॥ जलकेलिं विधायोच्चैः । पीत्वा त
त्रामलं जलं ॥ निर्माय प्राणवृत्तिं च । फलैर्यावत्तटे स्थितः ॥ ३१ ॥ मध्ये सरो महाद्वीपं । प्रासादं

च तदंतरा ॥ दृष्ट्वा संगीतकं ताव—च्छुश्राव श्रवणप्रियं ॥ ३२ ॥ को देवः किं च संगीत—मि
ति ज्ञातुं समुत्सुकः ॥ स पश्यन् गमनोपायं । यावत्पालिशिरोऽध्यगात ॥ ३३ ॥ एको वनगजस्ताव
—त्पानीयं पातुमागतः ॥ तं वीक्ष्य चिंतयामास । कुमारश्चेतसीति सः ॥ ३४ ॥ एतमारुह्य गच्छामि ।
सरोंतः कियतीं भुवं ॥ ततस्तीर्त्वा भुजाभ्यां तु । द्वीपे यास्यामि हेलया ॥ ३५ ॥ ध्यात्वेति वश्यमा-
नीतं । गजमारुह्य तत्क्षणात ॥ ययौ स सरसीमध्यं । जलावर्तातिदुस्तरं ॥ ३६ ॥ ततः पार्ष्णिप्रहारे-
ण । पश्चाद्व्यावर्त्य तं गजं ॥ उत्प्लुत्य लंघितावर्तो । द्वीपांतः स तदापतत् ॥ ३७ ॥ प्रासादप्रांगणे
दृष्ट्वा । विद्याधरवधूगणं ॥ व्यापृतं देवपूजायां । गीतनृत्यपरायणं ॥ ३८ ॥ प्रासादांतः प्रविश्या
थ । पोम्दशं जिननायकं ॥ चामीकरमयं भक्त्या । श्रीशांतिं प्रणनाम सः ॥ ३९ ॥ युग्मं ॥ मेरुशृं-
गमिवोत्तुंगं । प्रासादं यावदीक्षते ॥ चारणर्षियुगं ताव—दुत्तीर्णमिह पुष्करात ॥ ४० ॥ प्रदक्षिणा-
त्रयं कृत्वा । नत्वा शांतिजिनेश्वरं ॥ अशोकस्य तरोर्मूले । प्रासुके तदुपाविशत् ॥ ४१ ॥ महामुनी
महाभक्त्या । कुमारेण नतौ ततः ॥ तस्मै धर्माशिषं दत्वा । धर्मवार्तां प्रचक्रतुः ॥ ४२ ॥ तावपृच्छ-
त्कुमारोऽथ । महर्षी कथ्यतां मम ॥ केनेदं कारितं चैत्यं । बिंबं चापि महासरः ॥ ४३ ॥ इति पृष्टौ

कुमारेण । तौ तुर्यज्ञानिनौ मुनी ॥ समासेन कथां वक्तुं । तयोर्वृद्धः प्रचक्रमे ॥ ४४ ॥ चैत्योत्प-
त्तिकथामेतां । परमानंददायिनीं ॥ सुश्रावक त्वमेकाग्र—मानसः शृणु संप्रति ॥ ४५ ॥
इहास्ति जगतीपीठे । विंध्या नाम्नी महाटवी ॥ बहुजीवविचारेण । गहना जिनगीरिव ॥ ४६ ॥
मुनिवत्तरवो यस्यां । शीतातपवहाः सदा ॥ सच्छायाः सुमनोरम्या । वर्तंते वनवासिनः ॥ ४७ ॥ नि-
वसंति शुका यत्र । क्वापि न्यग्रोधपादपे ॥ सद्भार्या बहवः पुत्र—पौत्राद्यैः सहिता भृशं ॥ ४८ ॥
दिवा भ्रांत्वाटवीमध्ये । गृह्णंतीप्सितभोजनं ॥ संध्यायां ते पुनः सर्वे । लीयंते तत्र पादपे ॥ ४९ ॥
अथ तेषु शुकेष्वेको । विशेषगुणभूषितः ॥ जराजीर्णवपू राज—शुकोऽभूत्प्रियया सह ॥ ५० ॥
तस्य पुत्रावुभौ राज-शुकौ कोमलमूर्तिकौ ॥ मृदुचंचुपुटौ सूक्ष्म—नीलपक्षौ बभूवतुः ॥ ५१ ॥ दू-
रेण यातयोः पित्रो—रुड्डीयान्यदिनेऽथ तौ ॥ प्रत्यासन्ने पुलिंदस्य । शालिक्षेत्रे प्रपेततुः ॥ ५२ ॥
पतितौ पाशबंधे तौ । धृतौ भिल्लेन वेगतः ॥ सलक्षणाविति क्षिप्तौ । पंजरे कीरकुंजरौ ॥ ५३ ॥ त-
त्रागतेन जडेण । सार्थवाहेन तौ शुकौ ॥ दत्वा मूल्यं पुलिंदाय । गृहीतौ गुणिनाविति ॥ ५४ ॥
यत्किंचनापि जडः स । कौतुकात्तावपीपठत् ॥ ताभ्यां तत्पठितं सर्वं । पूर्वाधीतमिव द्रुतं ॥ ५५ ॥

पुत्रवद्वल्लभौ कीरौ । लालयन् सार्थनायकः ॥ पुरं रत्नपुरं प्राप । निर्विलंबप्रयाणकैः ॥ ५६ ॥ महाप्रतापस्तत्रासी—द्राजा श्रीरत्नशेखरः ॥ देवी रत्नवती चास्य । गुणरत्नविभूषिता ॥ ५७ ॥ अपूर्ववस्तुदानेन । तोषितेन महीभुजा ॥ मुक्तं शुल्कादिकं तस्य । वस्तूनां क्रयविक्रये ॥ ५८ ॥ अन्येद्युर्भूमिनाथेन । प्रहितेन प्रयोजनात् ॥ दृष्टं कीरयुगं राज्ञः । पुंसा भद्रस्य वेश्मनि ॥ ५९ ॥ स्फुटपाठौ शुकौ दृष्ट्वा । तेनाख्यातौ महीपतेः ॥ भद्रमाकार्य तेनापि । याचितौ तौ महादरात् ॥ ६० ॥ तं भद्रोऽप्युवाच राजेंद्र । तवालंघ्यं वचः सदा ॥ कीरयुग्मं ममाप्येत—दभीष्टं जीवितादपि ॥ ६१ ॥ तं व्याघ्रदुस्तटीन्यायं । संवीक्ष्यात्मन्युपस्थितं ॥ समर्पितो लघुः कीरो । भद्रेणानाय्य भूपतेः ॥ ६२ ॥ शुकेनागतमात्रेण । चक्रे जयजयारवः ॥ भूपतेः श्लोकसंदर्भ । पेठे च षट्पदादिकं ॥ ६३ ॥ पृष्टेऽथ कुशलोदंते । राज्ञा कीर उवाच सः ॥ भद्रानुभावतो राजन् । कुतोऽस्त्यकुशलं मम ॥ ६४ ॥ नायं स्थानमवज्ञाया । राजकीरः किलान्यवत् ॥ इत्यर्पयत भो भूत्या । देव्यै मे लालनाकृते ॥ ६५ ॥ सत्कृतः परितुष्टेन । राज्ञा वस्त्रादिदानतः ॥ निजावासं ययौ भद्रः । शुकविश्लेषदुःखितः ॥ ६६ ॥ ततो रत्नवतीदेवी । सुभाषितशतानि तं ॥ पाठयंत्यतियत्नेन । पालयामास पुत्रवत् ॥ ६७ ॥ राजराज्ञी-

करांभोज—पंजरस्थस्य लीलया ॥ अतिचक्राम कीरस्य । तत्रैकः परिवत्सरः ॥ ६८ ॥ अथ तत्र स- मायातो । भव्यांभोजनभोमणिः ॥ बहुशिष्यपरीवारो । मोहमल्लाभिधो गुरुः ॥ ६९ ॥ सांतःपुरप- रीवारः । पौरलोकसमन्वितः ॥ विवंदिषुर्गुरुं राजा । गच्छन् कीरेण भाषितः ॥ ७० ॥ तवागच्छामि राजेंद्र । सार्धं युष्माभिरप्यहं ॥ दृष्टव्यदर्शनेनैव । फलं गृह्णामि चक्षुषोः ॥ ७१ ॥ एहीत्यनुमतो रा- ज्ञा । गजारूढः शुकः स हि ॥ चचाल सह नृपेन । कुर्वन् धर्मकथां पथि ॥ ७२ ॥ प्रणम्य सपरि- वारं । मोहमल्लं नृपो गुरुं ॥ उत्संगीकृतरक्तास्यः । प्रासाशीरुपविष्टवान् ॥ ७३ ॥ नत्वा सूरिमुवाचे- ति । कीरः कोविदकुंजरः ॥ कौतुकोत्ताननेत्राब्ज—निःशेषजनवीक्षितः ॥ ७४ ॥ भगवन् यन्मया वापि । तिर्यक्त्वमिह जन्मनि ॥ जानामि तत्फलं जातं । पूर्वदुःकृतकर्मणः ॥ ७५ ॥ एतस्यापगमो येन । स्यात्कर्म तं प्रशाधि मां ॥ निर्विस्रोऽस्मि मुनिस्वामि—न्नमुष्मात्कीरजन्मनः ॥ ७६ ॥ ततोऽ- सौ कथयामास । सूरिर्गंभीरया गिरा ॥ भवाब्धौ पोतवत्कर्म । शुकस्य सदसोऽपि च ॥ ७७ ॥ संसा- रनगरस्यास्मिं—श्चतुर्गतिचतुःपथे ॥ अनंतशः परिभ्रांतो । जीवः कर्मवशंवदः ॥ ७८ ॥ नानायोनि- ङुमाकीर्णे । भवारण्येऽत्र भीषणे ॥ चंचलप्रकृतिर्जीवः । कपिवत्परिवर्तते ॥ ७९ ॥ एकेंडियादिजीवे-

पु । भ्रामं ग्राममनेकधा ॥ पंचेंद्रियेषु तिर्यक्षु । दुःखं त्वं सहसेऽधुना ॥ ८० ॥ न केवलमितो मो-
क्ष—स्तव तिर्यग्भवाच्छुक ॥ भविता भवमोक्षोऽपि । जिनधर्मस्य निश्चयात ॥ ८१ ॥ संसारसागरे
कीर । पतितानां शरीरिणां ॥ प्रापणे मोक्षतीरस्य । जिनधर्मस्तरंडवत ॥ ८२ ॥ तन्नास्ति जगतीम-
ध्ये । वस्तु कल्पद्रुमादिकं ॥ जिनधर्मैकसत्वानां । जीवानां यन्न सिद्ध्यति ॥ ८३ ॥ जीवाः पतंति
ते घोरे । नरकांधावटे कथं ॥ येषां संपद्यते जैन—धर्मो हस्तावलंबवत् ॥ ८४ ॥ तदुद्विग्नेन कीरः
त्वा—च्छुकराज त्वया ननु ॥ जिनेंद्रगदिते धर्मे । कर्तव्यः परमादरः ॥ ८५ ॥ द्विविधः स पुनर्धर्मो ।
यतिश्रावकभेदतः ॥ क्षांत्यादिदशधामुख्यो । द्वितीयो द्वादशव्रतः ॥ ८६ ॥ द्विविधस्यास्य धर्मस्य ।
सम्यक्त्वं मूलकारणं ॥ शुभात्मभावरूपं त—न्मुक्तं शंकादिदूषणैः ॥ ८७ ॥ इति विस्तरतो धर्मः ।
कथितो जिनदेशितः ॥ साधुश्रावकयोर्भेदा—द्गुरुणा तत्र संसदि ॥ ८८ ॥ निशम्यैनं सभासीनां ।
नृपाद्यानां शुकस्य च ॥ जिनधर्मपरिणामः । सर्वेषामभवत्तदा ॥ ८९ ॥ गृह्णत्सु केषु सम्यक्त्वं । व्रतं
केषु जनेषु च ॥ शुकोऽथ पुरतो भूत्वा । गुरुं नत्वा व्यजिज्ञपत् ॥ ९० ॥ निम्नानामपि संसार—वा-
सनिर्विण्णचेतसां ॥ भगवन् जैनधर्मोऽयं । कथं निर्वहतेऽत्र नः ॥ ९१ ॥ नृपतिस्तद्वचः श्रुत्वा । क-

रुणार्द्रितचेतसा ॥ सहर्षस्तं शुकं प्राह । मया मुक्तोऽथ पंजरात् ॥ ९२ ॥ कुरु यथेप्सितं याहि । ध-
र्मकार्यं ममाज्ञया ॥ कृतार्थं मन्यमानः स्वं । गुरोरधिगमादिना ॥ ९३ ॥ गुरुं जगाद भगवन् । वि-
मुक्तः पंजराद्यथा ॥ भवद्वचनतो मोक्ष्ये । तथैव भवपंजरात् ॥ ९४ ॥ नत्वा गुरुं नराधीशं । समा-
पृच्छ्य च संमदात् ॥ तेषां प्रपश्यतां कीर । उड्डिड्ये गगनाध्वनि ॥ ९५ ॥ वीरसेन स कीरोऽत्र ।
प्रदेशे परितो वसन् ॥ द्वादशव्रतमासोक्तं । गृहिधर्ममपालयत ॥ ९६ ॥ कर्मलाघवतस्तस्य । सर्वेषां
पक्षिणां रुते ॥ परिज्ञानं बभूवोच्चै—र्वचनेऽपि च पाटवं ॥ ९७ ॥ भद्रपार्श्वे तु यः कीरः । समभू-
त्पंजरस्थितः ॥ कथंचिद्दैवयोगेन । मार्जारेण स भक्षितः ॥ ९८ ॥ मृत्वा सोऽपि वनेऽमुष्मिन् ।
श्येनोऽभून्नियतेर्वशात् ॥ क्रमेण प्राप वृद्धिं च । विनिघ्नन् पक्षिणां गणं ॥ ९९ ॥ अन्येद्युर्भ्रमता
तेन । श्येनेन स महाशुकः ॥ ददृशे कानने तत्र । बुभुक्षाक्षामकुक्षिणा ॥ २०० ॥ धावित्वा त्व-
रितं तेन । गृहीतः कीरकुंजरः ॥ नमो जिनेभ्य इत्युक्त्वा । श्येनं तद्भाषयाब्रवीत ॥ १ ॥ प्रतीक्षस्व
क्षणं श्येन । तावत्त्वं क्षुधितोऽपि सन् ॥ गृहीत्वानशनं याव—द्देहिनां क्षामयाम्यहं ॥ २ ॥ श्येन-
स्तद्वचनं श्रुत्वा । विस्मयाक्रांतमानसः ॥ अपसृत्य ततो दूरा—त्तस्थौ तन्न्यस्तलोचनः ॥ ३ ॥ कीरे-

णोचे महाश्येन । तदेवाद्य दुनोति मां ॥ जैनो धर्मो न लब्धो य-ज्ज्यायसा बांधवेन मे ॥ ४ ॥
विंध्याटव्यामुभौ जातौ । शुकावावां वटद्रुमे ॥ शालिक्षेत्रे पुलिंदेन । धृतौ भडस्य चार्पितौ ॥ ५ ॥
रत्नशेखरनृपस्य । भडेणाहमथार्पितः ॥ न जाने तेन मद्बंधुः । स यत्कापि समर्पितः ॥ ६ ॥ पृथ-
गेव भवे प्रायः । कर्मबंधः शुभाशुभः ॥ जातयोरेकमात्रापि । यथा तस्य ममाप्यभूत् ॥ ७ ॥ तस्ये-
ति वचनं शृण्वन् । प्राप मूर्छां शशादनः ॥ जातजातिस्मृतिः स्वस्थः । कीरमेवं जगाद च ॥ ८ ॥
स एवाहं पुरा योऽभू—ज्ज्येष्ठभ्राता तवाग्रजः ॥ मार्जारनिहतो जातो—ऽधुना श्येनोऽत्र कानने
॥ ९ ॥ ततः कीरेण तस्याग्रे । विदधे धर्मदेशना ॥ श्येनोऽपि तस्य वाक्यानि । शुश्रावैकाग्रमा
नसः ॥ १० ॥ हत्वा यः प्राणिसंघातं । कुरुते मांसभक्षणं ॥ तिलमात्रं सुखं तस्य । दुःखं मेरुसमं
भवेत् ॥ ११ ॥ एकस्य स्यात्क्षणं तृप्ति-रन्यस्य जनुषः क्षयः ॥ तत्कथं मार्यते प्राणि—गणः क्षणि-
कतृप्तये ॥ १२ ॥ वराका वंचिता नूनं । परलोकसुखेन ते ॥ जन्मापि निष्फलं तेषां । येषां मांसा-
शने मतिः ॥ १३ ॥ अशाश्वतस्य तुच्छस्य । शरीरस्यास्य हेतवे ॥ मारयंतीह ये जीवान् । किं ते ज
गति शाश्वताः ॥ १४ ॥ श्येनः स्माह मया मांस—मद्यप्रभृति वर्जितं ॥ वरं धर्माक्षरं भ्रातः । कि-

मप्याख्याहि मेऽपरं ॥ १५ ॥ ततो यथा समाख्यातो । गुरुणा धर्म आदरात् ॥ सम्यक्त्वभूषितस्ते-
न । श्येनस्य कथितस्तथा ॥ १६ ॥ श्रुत्वा धर्मं तदा श्येनः । सर्वज्ञोपज्ञमादरात् ॥ प्रतिपेदे विशु-
द्धात्मा । भावतः सिद्धसाक्षिकं ॥ १७ ॥ प्रतिपाल्य ततो धर्मं । शुकश्येनौ शुभाशयौ ॥ गृहीतान-
शनं प्रांते । जातौ वैमानिकौ सुरौ ॥ १८ ॥ सौधर्मे सागरायुष्के । विमाने शशिशेखरे ॥ उत्पेदा-
ते सुपर्वाणौ । समकालौ समायुषौ ॥ १९ ॥ तदैवावधिना ज्ञात्वा । प्राग्भवं पुण्यकारणं ॥ आया-
तौ तत्र तौ यत्र । शुकश्येनकलेवरे ॥ २० ॥ कारयित्वा सुरैरत्र । संस्कारं श्येनकीरयोः ॥ अन्यो-
न्यमूहितं ताभ्यां । स्वकल्याणं विधित्सया ॥ २१ ॥ संसारवासिजीवानां । दुर्लभो जिनभाषितः ॥
कर्मभिः परतंत्राणा—मेष धर्मो दयामयः ॥ २२ ॥ यथा स्यादावयोः स्वर्ग—च्युतयोर्बोधिसंगमः ॥
तथोपायं प्रकुर्वेऽत्र । जातिस्मरणहेतवे ॥ २३ ॥ कृतेन येन जायेत । जातिस्मरणमावयोः ॥ परेषा-
मुपकारोऽपि । कुशलाध्वप्रदर्शनात् ॥ २४ ॥ जिनेंद्रभवनं कुर्वः । स्वान्ययोरुपकारकं ॥ बोधिप्रदं भ-
वेदत्र । निःशेषाशर्मनाशनं ॥ २५ ॥ ध्यात्वेति विदधे ताभ्यां । स्वर्णरत्नमणीमयं ॥ श्रीशांतिनाथ-
भवनं । त्रैलोक्योदरभूषणं ॥ २६ ॥ संसारसागरोत्तान—यानपात्रसमस्तथा ॥ देवः श्रीशांतिनाथोऽ-

त्र । ताभ्यामत्र प्रतिष्ठितः ॥ २७ ॥ रक्षितुं दुष्टलोकेभ्यः । परितः सरसी कृता ॥ तदंतश्च जलावर्त-
स्तारकस्यापि रोधकः ॥ २८ ॥ इति कृत्वा गतौ स्वर्गं । तौ सुरौ धर्मतत्परौ ॥ भुंजानौ दिव्यसौख्या-
नि । चक्रतुः काललंघनं ॥ २९ ॥ ततश्च्युत्वात्र वैताढ्ये । सिद्धार्थनगरे वरे ॥ जातावमितवीर्यस्य ।
शीलवत्याश्च नंदनौ ॥ ३० ॥ पितरौ चक्रतुर्नाम्नी । अकलंकामलाविति ॥ जातयोर्युग्मभावेन । त
योः काले तनुजयोः ॥ ३१ ॥ साधिताखिलविद्यौ तौ । संप्राप्तनवयौवनौ ॥ विजह्रतुर्यथासौख्यं । कृ-
तदारपरिग्रहौ ॥ ३२ ॥ आबालकालमेताभ्यां । धर्मघोषगुरोर्मुखात ॥ जिनधर्मस्तवांभोधौ । प्रति
पेदे तरंभवत् ॥ ३३ ॥ प्रकृत्याल्पकषायौ तौ । प्रमादपरिवर्जितौ ॥ प्राग्जन्मप्रतिबद्धेन । सुखं स्ने-
हेन तस्थतुः ॥ ३४ ॥ अष्टापदजिनश्रेणि—मन्येद्युर्वंदितुं गतौ ॥ सौधर्मेंद्र विमानौघै—स्तत्राया-
तमपश्यतां ॥ ३५ ॥ पूर्वागताविति प्रोक्तौ । कुर्वंतौ जिनपूजनं ॥ दृष्ट्वा शक्रेण सोल्लास—मिंद्राणी-
ति विज्ञापिता ॥ ३६ ॥ देव्येतौ देवपूजायां । व्यापृतौ यौ तवाग्रतः ॥ तावेतौ श्येनकीरांकौ । सु-
रौ सुधर्मवासिनौ ॥ ३७ ॥ ततोऽभिवंद्य शक्रेण । तौ द्वौ संभाषिताविति ॥ युवयोः श्येनकीरांकौ ।
कुशलं वर्ततेऽत्र नोः ॥ ३८ ॥ अज्ञातदेवजन्माख्या—वूचतुस्तौ हरिंप्रति ॥ प्रसादेनेंद्र युष्माक-

मावयोः कुशलं सदा ॥ ३९ ॥ ज्ञानवानपि देवेंद्र । कथमावां परागया ॥ आमंत्रयसि नेमे नौ ।
नाम्नी विद्याभृतो हरि ॥ ४० ॥ उवाचेंद्रः प्रसिद्धे ये । युवयोरभिधे पुरा ॥ स्वर्गेऽभूतां मयाहूतौ ।
ताभ्यामेवाधुना युवां ॥ ४१ ॥ कथमित्युदिते ताभ्यां । हरिः कीरभवादितः ॥ अष्टापदागतिं याव—
त्तच्चरित्रमथावदत् ॥ ४२ ॥ जातिस्मृतिस्तयोर्जज्ञे । शृण्वतोः पूर्वजन्मनी ॥ स्वचैत्यदर्शनोत्कंठा—त
रलीभूतचेतसोः ॥ ४३ ॥ जिनपूजां विधायाथ । वासवेनोक्तमेतयोः ॥ गच्छामस्तत्र चैत्ये वां । वि-
द्याधरकुमारकौ ॥ ४४ ॥ आमेत्युक्त्वा गताः सर्वे । शक्रविद्याधरादयः ॥ विमानानां समूहेन । छा
दयंतो दिशोऽखिलाः ॥ ४५ ॥ तत्रागत्य महाभूत्या । विधायाष्टाह्निकामहं ॥ देवराजः स्वयं चक्रे ।
प्रशंसामेतयोस्तदा ॥ ४६ ॥ युवां धन्यौ सुरत्वं च । सफलं युवयोस्तथा ॥ तल्लब्ध्वा कारितं याभ्या
—मीदृशं जिनमंदिरं ॥ ४७ ॥ बुद्धिमंतस्त एवात्र । लब्ध्वा यैश्चपलां श्रियं ॥ एवंविधोपयोगेना
—ददते पुण्यमक्षयं ॥ ४८ ॥ को जानाति नृणां संख्या । तेषां ये छलिताः श्रिया ॥ छलिता यैः
परं लक्ष्मी—श्चित्रास्ते संति विष्टपे ॥ ४९ ॥ संगमे स्वल्पसौख्यायां । भंगुरायां क्षणादपि ॥ स्थिरा-
शा विदुषां न स्या—द्वेश्यायामिव संपदि ॥ ५० ॥ इति मत्वा यथाशक्त्या । कृतो धर्मोद्यमो न यैः ॥

शरीरश्रीसुखं तेषां । लब्धं सर्वं निरर्थकं ॥ ५१ ॥ इत्युक्त्वा हरिणा चक्रे । तयोर्नाम तदाख्यया ॥
अकलंकमिदं चैत्य—ममलं च सरोवरं ॥ ५२ ॥ इति कृत्वा गते शक्रे । तौ विद्याधरनंदनौ ॥ आ-
त्मीयं नगरं गत्वा । धर्मकर्माणि चक्रतुः ॥ ५३ ॥ वातायनोपविष्टाभ्यां । ताभ्यामन्यत्र वासरे ॥ प्र-
सृतं द्राग्विलीनं च । शारदभ्रं विलोकितं ॥ ५४ ॥ दृष्टनष्टं तदालोक्या—कलंकः खेचरोऽवदत ॥
व्याप्ताशेषनभः पश्य । क्षणेनाभ्रं कथंगतं ॥ ५५ ॥ एष एवात्र दृष्टांतः । प्रत्यक्षो मोहघातकः ॥ ल-
घुत्वं पदार्थानां । विबुधानां प्रदर्शयन् ॥ ५६ ॥ कालदंडे स्थिते मूर्ध्नि । संसारे क्रियते कथं ॥ ल-
क्ष्मीविषयबंधूनां । प्रत्याशा मोहकारिणी ॥ ५७ ॥ स्थिराशा क्रियते तस्यां । कथं लक्ष्म्यां चलैव
या ॥ यदुद्योतोऽपि जायेत । व्यामोहस्यैव कारणं ॥ ५८ ॥ ज्वालयंती गुणव्रातं । क्षयं स्नेहस्य कु
र्वती ॥ बहपाया स्थिरा नैव । लक्ष्मीर्दीपशिखा यथा ॥ ५९ ॥ स्वजनादिषु को मोहः । परेषां प-
रमार्थतः ॥ संसारबंधुभूतेषु । धर्मप्रत्यूहहेतुषु ॥ ६० ॥ यदि रोगार्दितं जीवं । स्वजनो दीनताश्रितं ॥
पात्यपि म्रियमाणं न । स्वाजन्यं तस्य तत्किमु ॥ ६१ ॥ सौख्ये वैषयिके तुच्छे । बहुदुःखेऽपि रज्य·
ते ॥ यदीष्टविरहादीनि । दुःखानि स्युर्न कर्हिचित् ॥ ६२ ॥ अनुभूतं सुखं स्वर्गे । तृप्तिस्तेनापि ना·

भवत ॥ जीवस्यास्य कथं रंक—सौख्यैस्त्वैर्निर्विषयति ॥ ६३ ॥ मृत्युर्नायाति तद्याव—द्विनिर्जितसुरासुरः ॥ तावद् व्रतं गृहीत्वावां । गृह्णीवो जन्मनः फलं ॥ ६४ ॥ अमलेन ततोऽभाणी—त्थमेवेदं न चान्यथा ॥ अनुज्ञाप्य गुरून् भ्रातः । कुर्वः कार्यमिदं द्रुतं ॥ ६५ ॥ आपृच्छ्य पितरौ तौ द्वा—वकलंकजिनौकसि ॥ धर्मघोषगुरोः पार्श्वे । निःक्रांतावत्र बांधवौ ॥ ६६ ॥ तावेवावां मुनी श्राद्ध । शुकोऽहं श्येन एष सः ॥ संक्षेपेण चरित्रं ते । मयोक्तमावयोरिदं ॥ ६७ ॥ उवाच वीरसेनोऽथ । महच्चित्रमिदं विभो ॥ धर्मप्रभावतो कीरो । यच्छ्येनोऽपि दिवं गतः ॥ ६८ ॥ उवाचाथ पुनः साधु—र्नाश्चर्यं भोः किमप्यदः ॥ नास्त्यसाध्यं यतो विश्वे । धर्मस्यास्येह किंचन ॥ ६९ ॥ जिनधर्मोऽत्र सर्वेषां । जीवानामयसामिव ॥ धत्ते कल्याणतां सिद्ध—रसवत्परिणामगः ॥ ७० ॥ आस्तामस्य विशेषेणा—नुष्ठानं दूरतो नरः ॥ श्रद्दधानोऽप्यमुं धर्मं । लभते पापशोधनं ॥ ७१ ॥ ध्यातमेव ददात्यर्थं । चिंतारत्नं न चाधिकं ॥ न याति यत्र चिंतापि । धर्मस्तु शिववर्त्मवत् ॥ ७२ ॥ मनुष्यत्वे ततो लब्धे । निःशेषगुणसंयुते ॥ जिनधर्मे महाभाग । कुरु त्वं सम्यगादरं ॥ ७३ ॥ इत्युक्ते मुनिना तेन । मिथ्यात्व तमसः क्षयात ॥ सम्यक्त्वैकपरिणामो । वीरसेनोऽब्रवीदिति ॥ ७४ ॥ मुनिनाथ

नमस्कार—महामंत्रपुरस्सरं ॥ कुमारस्य प्रदत्तानि । व्रतानि गृहमेधिनः ॥ ७५ ॥ उक्तं चेति कु-
मारेंद्र । मंत्रोऽयं सर्वकार्यकृत् ॥ जलज्वलनशस्त्रादि—स्तंभं च कुरुते क्षणात ॥ ७६ ॥ लप्स्यसे
वांछितार्थं त्व—मप्रमादी सदा भव ॥ तन्नास्ति यन्न प्राप्नोति । नरो ह्यत्राविषादभाग् ॥ ७७ ॥ महाप्र-
साद इत्युक्त्वा । वीरः प्राप्तः सरस्तटं ॥ नमस्कारप्रभावेण । जलावर्तमलंघयत् ॥ ७८ ॥ अध्वान-
मतिचक्राम । चिंतयन्निति चेतसि ॥ अरण्येऽपि मया प्राप्तं । धर्मरत्नं सुदुर्लभं ॥ ७ए ॥ कथमाग
मनं मेऽत्रा—रण्ये क्व च जिनालयं ॥ अनभ्रवृष्टिवच्चैष । क्व च साधुसमागमः ॥ ८० ॥ पूर्वपुण्यप-
रीपाक-वशादेतद्यथाभवत् ॥ चंद्रश्रीदर्शनं नूनं । भविष्यति तथैव मे ॥ ८१ ॥ अथाटवीं समुल्लंघ्य ।
कुमारस्त्वरितक्रमः ॥ संध्यायां वनपर्यंते । प्रापैकं नगरं पुरः ॥ ८२ ॥ यावत्प्रयाति वासार्थं । वीरस्त-
न्नगरंप्रति ॥ तावदायांतमैक्षिष्ट । लोकमातंकसंकुलं ॥ ८३ ॥ आरोहत्पिंडिकं पश्चा—त्पश्यंतं पु-
नः पुनः ॥ पृष्टिस्कंधकटीसंस्थ—रुदद्बालकदंबकं ॥ ८४ ॥ युग्मं ॥ ईषद्विहस्य वीरेण । दोष्णोर्नि-
क्षिप्तचक्षुषा ॥ किं किमिति जनः पृष्टो । नश्यद्विस्मितचेतसा ॥ ८५ ॥ तद्दर्शनेन संजात—बहुमा-
नो जनोऽवदत् ॥ मा सुंदर पुरो गच्छ द्रुतं । पश्चादपव्रज ॥ ८६ ॥ कुमारेण ततोऽभाणि । पश्चात्का-

यें न किंचन ॥ पुर एव गमिष्यामि । विशेषविधिनोत्सुकः ॥ ८७ ॥ लोको जगाद भो भद्र । ग· मयित्वा निशामिह ॥ उद्गते त्वं पुनः सूर्ये । कार्याय पुरतो व्रजेः ॥ ८८ ॥ कुमारः कथयामास । मा भैष्ट तिष्ठत स्थिराः ॥ भवतां भोः कुतो भीति—र्यतो नश्यथ कातराः ॥ ८९ ॥ अपहाय नि· जान् बालां—स्त्यक्त्वा विलपतीं प्रियां ॥ नराखातुं निजप्राणा—न्नश्यतश्च कास्ति पौरुषं ॥ ९० ॥ अ· न्यदैव हि मर्तव्यं । जीवैर्मरणधर्मभिः ॥ तच्चेत्परोपकारेऽस्मिन् । स्यात्पर्याप्तं न किं तदा ॥ ९१ ॥ भीतित्राणकृतां मृत्यु—रपि पुंसां महोत्सवः ॥ अत्राणकारिणां मृत्यु—समं स्याज्जीवितं पुनः ॥ ९२ ॥ सावष्टंभमिति श्रुत्वा । कुमारस्य वचस्तदा ॥ परिवव्रे स एवाशु । विश्वस्तैर्बहुभिर्जनैः ॥ ९३ ॥ युव· भिर्बालवृद्धैश्च । निःखिलैर्नागरैर्जनैः ॥ वीरस्मान् रक्ष रक्षेति । बभणे सूरनंदनः ॥ ९४ ॥ मा भैष्ट भो जना याव—ज्जीवितं धारयाम्यहं ॥ तावद्वः संमुखं कोऽपि । नेक्षते सोऽब्रवीदिति ॥ ९५ ॥ इ· तश्च दृष्ट्वा तं वी.रं । नानालोकपरीवृतं ॥ तत्रागात्तुरगारूढ—स्तत्पुरस्यापि भूपतिः ॥ ९६ ॥ ददृ· शेऽसौ नरेंद्रेण । लोकव्रजजनतावृतः ॥ वातोध्धूतवनश्रेणि—परीतः शैलराडिव ॥ ९७ ॥ अक्षुब्ध हृदयं दृष्ट्वा । स्थिरयंतं पुरीजनं ॥ वीरसेनं नराधीशो—ऽप्युत्ततार तुरंगमात् ॥ ९८ ॥ नृपस्तं स·

मत्राविष्ट । स्नेहसौरैर्वचोभरैः ॥ कुशलं वीर ते देहे । आगतश्च कुतो भवान् ॥ ९९ ॥ वीरो जगाद कुशल—मद्य त्वद्दर्शनेन मे ॥ नाशिक्यनगराद्राज—न्नागतः पथिकोऽस्म्यहं ॥ ३०० ॥ उपविश्येह न्यग्रोध—तरुमूले नरेश्वर ॥ निःशेषं त्वं ममाख्याहि । भयव्यतिकरं निजं ॥ १ ॥ एवमस्त्विति भूपालः । कुमारः पूर्जनोऽपि च ॥ उपविष्टस्ततो राजा । जगाद भयकारणं ॥ २ ॥ श्रूयतां वीरराजेंद्र । यः पुरात्र पुरेऽभवत् ॥ कथ्यमानः समासेन । वृत्तांतोऽत्यद्भुतो मया ॥ ३ ॥

आसीद्वीर पुरा वीर—पुरे प्रकटविक्रमः ॥ नाम्ना समरसिंहोऽत्र । राजा विजितशात्रवः ॥ ४ ॥ शुद्धवंशसमुत्पन्ना । तस्य कंठावलंबिनी ॥ भार्या विजयसेनाख्या—हारयष्टिरिव प्रिया ॥ ५ ॥ तयोरभिधया विश्व—सेनोऽहं तनयः पुनः ॥ निजवंशविनाशाय । जातो वंशफलं यथा ॥ ६ ॥ कुमारत्वं ततः प्राप्तः । पितृभ्यां ग्राहितः कलाः ॥ इत्थं प्रवर्तमानानां । सुखं नो यांति वासराः ॥ ७ ॥ इतश्चात्र पुरे वीर । पूज्यस्तातस्य वेदवित् ॥ वेदोक्तधर्मनिरतो । भट्टोऽभून्मधुसूदनः ॥ ८ ॥ वेदोक्तविधिना यज्ञा—नश्वमेधादिकानसौ ॥ चकार याज्ञिकः स्वर्ग—गमनाय निरंतरं ॥ ९ ॥ बलिवैश्यदेवसंध्या—पितृगोविप्रपूजनं ॥ अशूद्रभोजी त्रिःस्नाता । विदधे विधिवत्सदा ॥ १० ॥ तेनास-

ज्ञानको माता । परिग्रहश्च पूर्जनः ॥ निजवेदविधानेन । स्वदीक्षाणां प्रवर्तितः ॥ ११ ॥ अनिरुद्धः
सुतस्तस्य । सोमाकुक्षिसमुद्भवः ॥ अधीती सर्वशास्त्रेषु । पितृभक्तोऽस्ति वेदवित ॥ १२ ॥ योग्योऽ-
यमिति संचिंत्य । पुरन्नृपालसाक्षिकं ॥ मधुसूदननाम्नेन । स्वव्यापारे सुतः कृतः ॥ १३ ॥ वेदोक्त
विधिना त्यक्त—सर्वारंभपरिग्रहः ॥ परिव्राजकचारित्र—धार्यभून्मधुसूदनः ॥ १४ ॥ निर्गत्य नगरा-
न्नाना—तीर्थदर्शनकांक्षया ॥ ग्रामं ग्रामं भुवं सर्वां । प्राप वाणारसीमसौ ॥ १५ ॥ तत्र गंगातटे
ध्यान—मारूढः पुलिने तदा ॥ भिक्षाभोजी दिनान्यस्य—वाहयन्मधुसूदनः ॥ १६ ॥ अथ कर्मव-
शात्तस्य । क्षयरोगोऽतिदुःसहः ॥ बभूव दुःप्रतिकारः । शुभध्यानविनाशकः ॥ १७ ॥ ततस्तेन महा-
बाधा-विह्वलेन विचिंतितं ॥ यत्साध्यं मम तत्सिद्धं । सर्वं मानुषजन्मनि ॥ १८ ॥ द्विजजातिर्मया प्रा
प्ता । वेदाधीतिश्च निर्मिता ॥ इष्टा यज्ञा अनेके च । पालिता ब्राह्मणी क्रिया ॥ १९ ॥ स्वधर्मनि-
रतो लोको-ऽप्यनेको विहितो मया ॥ भुक्तं न शूद्रभक्तं च । देवो विष्णुश्च पूजितः ॥ २० ॥ आ-
त्मानुरूपः पुत्रोऽपि । जातो यः किल मां पुरा ॥ गमयति गतिपूर्ववां । पिंडदानादिकर्मभिः ॥ २१ ॥
स्नानं स्नानं च तीर्थेषु । व्रते सन्यासिनां स्थितं ॥ प्राप्तं वाणारसीस्थाने । गंगातीरं सुदुर्लभं ॥ २२ ॥

स्वर्गः करस्थितो नून—मेकैकेनापि कर्मणा ॥ किं पुनर्न भवेत्स्वर्ग—हेतुभिर्बहुभिर्मम ॥ २३ ॥ तावत्संप्रति गंगायां । स्वर्गसोपानपद्धतौ ॥ देहं त्यक्त्वा सुखेनाहं । व्रजामि त्रिदशालयं ॥ २४ ॥ एवं स मृत्वा गंगायाः । सलिले नियतेर्वशात् ॥ अत्रैव नगरे वीर । संजातो ब्रह्मराक्षसः ॥ २५ ॥ जघान प्राणिसघातं । विनोदेनैव सोऽन्वहं ॥ यतो मांसासृग्मद्यादि—र्भीमाप्यस्य मनोहरा ॥ २६ ॥ अथान्यदावदद्रूक्ष—स्वरेणासौ नभःस्थितः ॥ रेरे समरसिंह त्व—माकर्णय वचो मम ॥ २७ ॥ सोऽहं तव गुरुर्जातो । राक्षसो मधुसूदनः ॥ मह्यं नरबलिं देहि । पुर्यां च भ्रमणं निशि ॥ २८ ॥ श्रुत्वा तद्वचनं तातः । पौरलोकोऽपि भीतिमान् ॥ किंकर्तव्यतया मूढ—श्चिंतयामासिवानिति ॥ २९ ॥ कृ· तोर्ध्वदेहकर्तव्यो । निरुद्धेनात्मजन्मना ॥ स्वर्गं गतो न किं येन । ब्रूते रक्षस्त्वमात्मनः ॥ ३० ॥ युग्मं ॥ यदि राक्षस एवायं । संजातः पूर्वकर्मणा ॥ तत्कथं निजशिष्याणा—मुपकारपरोऽभवत ॥ ३१ ॥ सा भक्तिः प्रणयः सोऽपि । तद्दानं मान्यता च सा ॥ यच्चक्रेऽस्माभिरेतस्य । विस्मृतं किं तदप्यहो ॥ ३२ ॥ ध्यायतीति नृपो याव—त्तावदेवं जगाद सः ॥ रेरे मे जल्पतो दक्ष । दक्ष प्रत्युत्तरं न किं ॥ ३३ ॥ पर्यालोच्य ततो राज्ञा—गादि सानुनयं वचः ॥ रक्षराज त्वमस्माकं । पूजा·

द्धोऽस्यधुनाधिकं ॥ ३४ ॥ ब्रूहि किं ते प्रियं कुर्म । इत्युक्ते राक्षसोऽवदत् ॥ नित्यं नरबलिं रात्रौ ।
पूर्विहारं च दत्त मे ॥ ३५ ॥ नृपो जगाद मैवं ज्ञो । ब्रूहि नामापि पुंबलेः ॥ अन्यत्किमपि याच-
स्व । बलिं त्वं मोदकादिकं ॥ ३६ ॥ पुनर्जगाद रक्षोऽहं । नैव तुष्यामि मोदकैः ॥ महामांसेन तो-
ष- स्या—त्सिंहानामिव रक्षसां ॥ ३७ ॥ बालत्वादपि राजेंद्र । ममैतद्वल्लभं पुरं ॥ याचे पुरविहारं
त्वां । निशायां तेन हेतुना ॥ ३८ ॥ नृपेणोचे पुनर्मैव—मादेशं देहि मे प्रभो ॥ स्वमहं नैव र-
क्षामि । तुभ्यं दत्वा पुरीजनं ॥ ३९ ॥ रक्षो जगाद यद्येवं । त्रायस्व तत्पुरीजनं ॥ वयं तु राक्षसा
एते । कुर्मः कार्यं बलादपि ॥ ४० ॥ वचः खरतरं तस्य । श्रुत्वा राजा जगाविति ॥ भो ज्ञो मंत्री-
श्वरा ब्रूत । यत्कर्तव्यं ममाधुना ॥ ४१ ॥ मंत्रिवर्गो जगादैवं । देवकार्ये न मंत्रधीः ॥ अस्माकं स्फु-
रति स्वामिन् । पुरुषार्थपटीयसी ॥ ४२ ॥ राज्ञाथ पुनराख्यायि । मंत्रोऽयं निश्चितो मया ॥ निजदे-
हप्रदानेन । यज्जनं पामि राक्षसात् ॥ ४३ ॥ कर्णजापं ततोऽवोच—न्मंत्रिवर्गो नरेश्वरं ॥ देवात्मर-
क्षणेनात्र । यत्स्यात्त्वं तत्समाचर ॥ ४४ ॥ परिच्छदेन लोकेन । देशेन नगरेण च ॥ आत्मैव नर-
नाथेन । रक्षितव्यो यतः सदा ॥ ४५ ॥ पालिता मैव पूराजा । सर्वं कालेन सिध्यति ॥ देवास्माक-

मयं मंत्रो । जानासि त्वमतः परं ॥ ४६ ॥ नृपेणोक्तं मया पूर्वं । यडुक्तं तत श्रुतं न किं ॥ परप्रा-
णप्रदानेन । नैवात्मानमवाम्यहं ॥ ४७ ॥ अलमुक्त्या मम द्रोह—शपथा भवतां यदि ॥ यूयं वार-
यथामात्याः । परत्राणोद्यतं हि मां ॥ ४८ ॥ ततस्तातेन जगदे । सत्यमालंव्य चेतसि ॥ त्वं निः-
शेषजनस्थाने । खाद मामेव राक्षस ॥ ४९ ॥ रक्षो जगौ नराधीश । न स कोऽप्यस्ति ते नरः ॥
ददासि प्रत्यहं यं मे । ढौकसे त्वं यदात्मना ॥ ५० ॥ नृपेणोचेऽत्र निःशेष—नरनाथोऽस्मि राक्ष-
स ॥ दत्तं जानीहि निःशेषं । तुभ्यं दत्त मयात्मनि ॥ ५१ ॥ एवमस्त्विति वाक्येन । रक्षसा जल्पि-
तं ततः ॥ पुरो भव शुचीभूय । येनाद्मि त्वां बुभुक्षितः ॥ ५२ ॥ ततो बाष्पजलैः पूर्वं । पश्चात्कल-
शवारिभिः ॥ तातेनाहं निजे राज्ये—ऽभिषिक्तो लोकसंगतः ॥ ५३ ॥ पौरामात्यजनास्तेन । परि-
वारोऽपि जल्पितः ॥ युष्माभिर्व्यवहर्तव्यं । निजयोग्यानुसारतः ॥ ५४ ॥ तदामात्यादिभिर्लोकै—र्वच-
सा नोत्तरं ददे ॥ मुक्तस्थूलाश्रुभिः किंतु । कथितं दुःखमात्मनः ॥ ५५ ॥ सर्वांगविहितस्नानो ।
रक्तमाल्यविलेपनः ॥ प्रजापालो बभूवाशु । रक्तांबरधरस्ततः ॥ ५६ ॥ हाहेति जल्पता पौर—जने-
नाथ निरीक्षितः ॥ पौररक्षा कृते मन्य—मानः स्वं तृणतूलवत् ॥ ५७ ॥ पश्यन् सुजनसंघाता—न्निंद्य-

मानात्मपौरुषात् ॥ रुदंतं च पुरं सर्वं । वारयन् धीरमानसः ॥ ५८ ॥ सर्वेषां पश्यतां तातो । राक्ष-
सेन बलीयसा ॥ उत्क्षिप्याशु यमेनेव । निन्ये क्वापि न वेद्मि तत् ॥ ५९ ॥ त्रिभिर्विशेषकं ॥ मु-
क्ताक्रंदरवं वीर । मूर्छामीलितलोचनं ॥ निश्चेष्टं सकलं जातं । तत्क्षणान्नगरं तदा ॥ ६० ॥ तदाप्र-
भृति पापः स । रजन्यां राक्षसः सदा ॥ बंभ्रमीति पुरे घोरे । रक्षोलक्षसमन्वितः ॥ ६१ ॥ संध्यायां
नगरात्तस्य । भयेन प्रतिवासरं ॥ निर्गच्छति जनः सर्वः । प्रगे याति पुनः पुरे ॥ ६२ ॥ एवं निरंतरं वी-
र । यातायातं वितन्वतां । अस्माकं दुःखदग्धानां । कियंतो वासरा ययुः ॥ ६३ ॥ पुनरेत्यान्यदा र-
क्षो । निर्मर्यादं नभःस्थितं ॥ नरमेकं ययाचेऽस्मान् । प्रत्यहं बलिहेतवे ॥ ६४ ॥ भयभीतैस्ततोऽ-
स्माभि—श्चंमालकुलचेष्टितैः ॥ एकैकः प्रत्यहं तस्य । प्रतिपेदे पुरीजनः ॥ ६५ ॥ कुर्वतो जनसं-
हारं । तस्यैवं पापकर्मणः ॥ संवत्सरो व्यतीयाय । नाद्याप्येष प्रशाम्यति ॥ ६६ ॥ इति वृत्तांतमाक-
र्ण्य । कुमारः स्माह दुःखितः ॥ अहो कष्टमहो कष्टं । जगदज्ञानमोहितं ॥ ६७ ॥ करुणारहितो ध-
र्मः । क्रियायुक्तोऽपि निष्फलः ॥ सौरभ्यगुणयुक्तोऽपि । चंदनद्रुरिवावनौ ॥ ६८ ॥ इतश्चैका कटीसं-
स्थ—बालका रुदती भृशं ॥ अनुलग्नांधस्थविरा । तत्रागात्कुलबालिका ॥ ६९ ॥ हा रक्ष राक्षसा-

त्पापा—न्निस्तारकममुं द्वयोः ॥ भर्तारं मेऽतिदुःस्थाया । वृद्धायास्तनयं नृप ॥ ७० ॥ कुमारेण नृपः
पृष्ट । एषा विलपतीति किं ॥ राजा जगाद तस्याश्च । बालको वै भविष्यति ॥ ७१ ॥ वीरसेनस्ततो-
ऽवोचद् । दृष्ट्वा वृद्धां वधूं च तां ॥ तद्दुःखदुःखितो बाढ—मुपकारमतिर्नृपं ॥ ७२ ॥ आस्तां ता-
वद्विचारोऽहं । गच्छामि पुरमंतरा ॥ पश्चाद्राजन् यथा भव्यं । करिष्यामि तथैव तत् ॥ ७३ ॥ नृपेण
पौरलोकैश्च । वार्यमाणोऽपि सादरं ॥ अवमन्य कुमारस्ता—नचालीन्नगरंप्रति ॥ ७४ ॥ प्रविवेश पु-
रं वीरो । रक्षोरुद्धगमागमं ॥ सभयं वीक्ष्यमाणस्तै । राक्षसैः स्वच्छमानसः ॥ ७५ ॥ पश्यन् पिशाच-
संघातान् । क्वचित्फेत्कारकारिणः ॥ क्वचित्करालवेतालान् । धावमानानितस्ततः ॥ ७६ ॥ कपालक-
र्तिकाहस्ता । राक्षसीः कापि भीषणाः ॥ प्रापैकं चत्वरं तत्र । कुमारो नगरे भ्रमन् ॥ ७७ ॥ युग्मं ॥
ददर्श चत्वरे तत्र । कुमारो राक्षसेश्वरं ॥ रक्षःपिशाचवेताल—भूताद्यैः परिवेष्टितं ॥ ७८ ॥ नृपद-
त्तं नरं भीत्या । कंपमानं द्रुपलवत् ॥ धृत्वा केशेषु रोषेण । पातयंतं धरातले ॥ ७९ ॥ युग्मं ॥ दृ-
ष्ट्वा तं राक्षसं वीरः । कृपया त्वरितं व्रजन् ॥ जगदेति समीपस्थो । मा मारय भिया मृतं ॥ ८० ॥
परित्राणेन भीतानां । प्राणिनां जगतीतले ॥ रक्षो राजगुरुत्वं स्या—द्गुरूणां करुणाजुषां ॥ ८१ ॥

दीयतेऽत्र भवे यत्त—दमुत्र प्राप्यतेऽधिकं ॥ ददद् दुःखं जनो दुःखी । सुखी च स्यात्सुखं ददत् ॥ ८२ ॥ भीतेऽतिदुर्बले चाशा—विहीने त्राणवर्जिते ॥ कृपास्थाने न साधूनां । निर्घृणत्वं जने भवेत् ॥ ८३ ॥ प्रसन्नामिति निःक्षोभां । गिरं श्रुत्वा स राक्षसः ॥ क एष इति कोपेन । दृष्टवान् वीरसन्मुखं ॥ ८४ ॥ रक्षो जगाद कोऽसि त्वं । केन कार्येण वा निशि ॥ रक्षःपिशाचसंकीर्णां । प्रविष्टो नगरीमिमां ॥ ८५ ॥ पलायस्व ततस्ताव—द्यावदेतैर्न भक्ष्यसे ॥ अपूर्वोऽसि स्वरूपं त्वं । जानास्यस्मत्पुरस्य न ॥ ८६ ॥ जगाद राजपुत्रोऽथ । ज्ञातुं तस्याशयं मृदु ॥ अपूर्वः सत्यमज्ञात—पूःस्वरूपोऽहमागतः ॥ ८७ ॥ तदाख्याहि स्वरूपं स्वं । पूःस्वरूपं च देव मे ॥ इत्युक्ते तेन सोऽवादी—दीषद्धृष्टो निशाचरः ॥ ८८ ॥ त्यक्त्वा क्रीडां निजां रात्रौ । नगरभ्रमणं तथा ॥ निष्फलायासमात्रं तु । को ददात्युत्तरं तव ॥ ८९ ॥ वीरो जगाद यद्येवं । तमिस्रायां क याम्यहं ॥ गतोऽन्यत्र पिशाचाद्यै—रुपद्रोक्ष्येऽतिनिर्दयैः ॥ ९० ॥ राक्षसेंद्र यथा जाता । मां दृष्ट्वा करुणा तव ॥ अनुकंपां तथान्ये तु । न करिष्यंति निर्घृणाः ॥ ९१ ॥ रक्षो जगाद तिष्ठ त्वं । तावदत्रैव पांथ रे ॥ यावद्भक्षि नरं दत्तं । राज्ञाहं सपरिच्छदः ॥ ९२ ॥ कुमारः स्माह जग्धेन । किं तेनात्र भविष्यति ॥ तृप्तिरित्यु-

त्कवंतं तं । वीरसेनोऽवदत्पुनः ॥ ९३ ॥ अस्य मांसेन मन्ये किं । तृप्तिः स्यात्सर्वदा तव ॥ तेनास्य भक्षणे कामं । त्वं करोषि महाग्रहं ॥ ९४ ॥ पिशाचः स्माह नैवं भोः । क्षणमात्रं धृतिर्मम ॥ प्रलयानलसंकाशा । बुभुक्षा बाधते पुनः ॥ ९५ ॥ वीरेण जगदे कष्टं । हा हा युष्मादृशा अपि ॥ क्षणसौहित्यकार्येण । कुर्वंतीत्यसमंजसं ॥ ९६ ॥ को दोषस्तत्र मूढाना—मज्ञानांधशरीरिणां ॥ हेयोपादेयकार्येषु । विवेको येषु नेक्षते ॥ ९७ ॥ सत्यार्थो म्लेछजातिस्त्वं । तत्वज्ञो ज्ञानवान् सुरः ॥ अस्माकं ज्ञानहीनाना—मनुशास्यः कथं पुनः ॥ ९८ ॥ एतज्जानामि येनैव । कुदेवत्वं गतो भवान् ॥ तेनैवाज्ञानदोषेण । लप्स्यसे नरकं पुनः ॥ ९९ ॥ पुनरेव जगादैष । राक्षसः क्रियतां किमु ॥ अस्माकमीदृशं जातं । कुदेवत्वं भवेऽत्र यत ॥ ४०० ॥ भक्ष्यं नरामिषं पेयं । रक्तं प्रेतवने स्थितिः ॥ यद्बीभत्सं जगत्यत्र । शृंगारस्तु स एव नः ॥ १ ॥ सर्वेषां व्यवहारोऽत्र । स्वस्वज्ञातिविवक्षया ॥ निजजातिस्थितिं तस्मा—त्कुर्वतां नो न दोषता ॥ २ ॥ वीरः स्माह यदात्थ त्वं । वचस्तन्न सुसंगतं ॥ यज्जातिप्रत्ययेनात्र । व्यवहारः शरीरिणां ॥ ३ ॥ प्रकृत्यात्मा विशुद्धोऽयं । स्वस्थः स्फटिकसन्निभः ॥ उपाधिभेदतो याति । नानावर्णविकारतां ॥ ४ ॥ उपाधिस्तु निजं कर्म । तद्

द्वधा चाशुभं शुभं ॥ शुभः शुभेन जीवः स्या—दशुभेनाशुभः पुनः ॥ ५ ॥ अतोऽहं वच्मि मानै-
षीः । पापकर्मातिदुःसहं ॥ जीवहत्यामिषग्रास—मद्यपानादिकर्मभिः ॥ ६ ॥ राक्षसेश्वर निंद्येना—
नेन त्वं क्रूरकर्मणा ॥ नानाविधानि दुःखानि । लप्स्यसे नरके ध्रुवं ॥ ७ ॥ सकोपमिव दष्टोष्टः । पु-
नराहस्म राक्षसः ॥ त्वं धार्मिकोऽसि चेत्पांथ । तत्पापानि परित्यज ॥ ८ ॥ प्रसक्तं तव वाक्येन । म-
नोनिवृत्तिकारकं ॥ नाहं परोक्षधर्मार्थं । मुंचाम्याचारमात्मनः ॥ ९ ॥ इत्युक्त्वा राक्षसो भूमौ । पा-
तयित्वा नरं ततः ॥ करालां कर्तिकां स्वीया—मस्थिखंडे न्यशातयत् ॥ १० ॥ दृष्ट्वा तं निर्घृणं वी-
रः । करुणारसपूरितः ॥ जगादेति करं गृह्णन् । मैनं मारय कातरं ॥ ११ ॥ पिशाचेंद्र यदीच्छा ते ।
पुंसो रक्तामिषादिषु ॥ तदैनं पुरुषं मुंच । खाद मां मे वचः कुरु ॥ १२ ॥ रक्षो जगाद न त्वं मे ।
राज्ञा दत्तोऽसि तत्कथं ॥ अपूर्वं पथिकं जाता—लापं च त्वामहं ग्रसे ॥ १३ ॥ वीरः स्माह ममा ऽ-
न । जीवितव्येन किं पुनः ॥ यस्यैवं पुरतो दीनं । विलपन् मार्यते नरः ॥ १४ ॥ अज्ञातप्रार्थना-
भंग—दुःखेन प्रार्थितो मया ॥ रक्षैनं पुरुषं खाद । मामेष प्रणयस्तव ॥ १५ ॥ रक्षो जगाद यद्ये-
वं । तर्ह्येष मुमुचे मया ॥ आगच्छ त्वरितं येन । खादामि त्वां बुभुक्षितः ॥ १६ ॥ अपसार्य नरं वीरः ।

समर्थं त्वं च रक्षसे ॥ उवाचेति भृशं खाद । पीडितः क्षुधया चिरं ॥ १७ ॥ रक्षो जगाद नैवं त्वां । हन्मि देहि स्वयं पुनः ॥ आत्मानं खंमशः कृत्वा । मांसखंडानि सत्वरं ॥ १८ ॥ उचितस्ते विवेकोऽयं । सज्जनस्य ब्रवीमि किं ॥ इत्युक्त्वा निजमेवासि—माचकर्ष स वीरराट् ॥ १९ ॥ मांसमुत्कृत्य यावच्च । राक्षसाय ददाति सः ॥ तावत्तेन भुजादंडः । स खड्गः स्तंभितः क्षणात् ॥ २० ॥ ततो रक्षो जगादेति । त्वं मांसं किं ददासि न ॥ क्षुधार्तः सपरीवारो—ऽस्म्यहं त्वं तु विलंबसि किं ॥ २१ ॥ वीरो जगाद यद् ब्रूषे । तदेव घटते किल ॥ त्वमेवाथ प्रमाणं मे । बहुनोक्तेन किं मम ॥ २२ ॥ ततः स्मृत्वा नमस्कारं । कुमारो निजचेतसि ॥ उत्कीलितभुजो याव—न्निजांगे वाहयत्यसिं ॥ २३ ॥ तावत्त्वरितमागत्य । संभ्रांतो राक्षसः करे ॥ धृत्वा कुमारमाहस्म । परिहासः कृतो मया ॥ २४ ॥ रक्षात्मानं महावीर । सर्वकल्याणभाजनं ॥ तव वाक्यामृतेनाह—मपि तृप्तोऽस्मि सर्वथा ॥ २५ ॥ क्षुधा नष्टा प्रशांता मे । सत्वसंहारिणी मतिः ॥ प्रणाशितं त्वया मोह—तिमिरं रविणा यथा ॥ २६ ॥ मृत्योर्विरम तद्वीर । करिष्येऽहं तवोदितं ॥ तुष्टोऽस्मि रंजितोऽनेन । चरित्रेण भृशं तव ॥ २७ ॥ वीरो जगाद तावत्त्व—मस्मै यच्छाभयं खलु ॥ पश्चात्कालोचितं कार्यं । प्रवक्ष्यामस्तवान्वहं ॥ २८ ॥ र-

द्दो जगाद हे वीर । नरस्यास्य पुरस्य च ॥ अन्यस्यापि हि जीवस्या-भयं दानं मया ददे ॥ २९ ॥
अत्रांतरे कुमारोऽयं । चिंतयामासिवानिति ॥ अकलंकामलौ साधू । यद्यायातस्तदा वरं ॥ ३० ॥
कुमाररक्तसोरेव—मालापेषु भवत्स्विह ॥ विलीना सहसा रात्रि—र्नगरस्यापदा समं ॥ ३१ ॥ विबु-
धदर्शनोऽज्ञात—यथार्थवस्तुविस्तरः ॥ रक्षोमोह इवानश्य—त्तिमिरौघो निपातकृत् ॥ ३२ ॥ उदि-
याय जगच्चक्षुः । सत्पदार्थप्रकाशकं ॥ रविबिंबं विवेकाख्य—रत्नवद्रक्षसो हृदि ॥ ३३ ॥ इतश्चान्या-
गतं तत्र । चारणश्रमणद्वयं ॥ विद्याधरामरैः स्तूय—मानं गगनवर्त्मना ॥ ३४ ॥ पश्यत्सु तेषु सर्वे-
षु । पुरोद्यानेऽवतीर्य तत ॥ देवनिर्मितसौवर्ण—पद्मद्वंद्वमशिश्रियत ॥ ३५ ॥ वीरः स्माह महास-
त्वा—गच्छ वंदामहे द्रुतं ॥ मुनिद्वंद्वं महापाप—पंकक्षालनजीवनं ॥ ३६ ॥ दर्शनेन तयोर्मोहो ।
याति पापं च नश्यति ॥ स्याद्विवेकप्रकाशश्च । विशेषगुणहेतवे ॥ ३७ ॥ रक्षो जगाद यद्येवं । वि-
लंबोऽद्यापि तत्किमु ॥ इत्युदित्वा ततः सर्वे । साधुपार्श्वे गता द्रुतं ॥ ३८ ॥ पुरि प्रेष्य नरं तं च ।
नृपः पौरजना अपि ॥ वीरेणाकारिताः सर्वे । मुनिपार्श्वे समाययुः ॥ ३९ ॥ तत्र देवकृतं दृष्ट्वा ।
महिमानं मुनिद्वये ॥ दध्याविति कुमारेंद्रो । विस्मयोत्तानलोचनः ॥ ४० ॥ अकलंकामलौ साधू ।

एतौ तौ चिंतितागतौ ॥ उत्पन्नं निश्चितं मन्ये । केवलज्ञानमेतयोः ॥ ४१ ॥ अन्यथा कथमंभोजा—सनमुख्याः सुरैः कृताः ॥ दृश्यंतेऽतिशया ह्येते । केवलज्ञानसूचकाः ॥ ४२ ॥ ध्यायन्निति कुमारः स । नत्वा केवलिनौ मुनी ॥ सार्धं नृपेन पौरैश्च । रहसा चोपविष्टवान् ॥ ४३ ॥ अथोचे केवलज्ञानी । धर्मं गंभीरया गिरा ॥ रहःकुमारनृपाल—पौरलोकसुपर्वणां ॥ ४४ ॥ समाकर्णयतैकाग्राः । श्रुत्वा धारयतांतरा ॥ तथा चिंतयतात्मानं । सुखिनः स्थ यथा सदा ॥ ४५ ॥ इहाज्ञानं महाकष्टं । श्वभ्रपातफलं यतः ॥ अज्ञाननिहता जीवा । युक्तायुक्तं विदंति न ॥ ४६ ॥ उदितार्केंदुलक्ष्यं स्या—दपि स्फुटं पदार्थकं ॥ निरालोकं जगत्सर्व—मज्ञानांधशरीरिणां ॥ ४७ ॥ शारीरं मानसं दुःखं । यत्किमप्यत्र संभवेत ॥ नरनारकतिर्यक्षु । जीवोऽज्ञानी तदाप्नुयात् ॥ ४८ ॥ विपरीतं सर्वमपि । जानात्यज्ञानमोहितः ॥ अधर्मं धर्ममाचष्टे—ऽप्यदेवं देवमेव च ॥ ४९ ॥ पापानुष्टानमप्याह । धर्मानुष्टानमेव सः ॥ अपेयं पेयमाचष्टे । भक्ष्यं चाभक्ष्यमेव हि ॥ ५० ॥ इत्यनेकभवाभ्यस्त—दुरंताज्ञानमोहितः ॥ जीवः कर्मानुभावेन । मिथ्या धर्मेषु लीयते ॥ ५१ ॥ जीवाः कुधर्मशास्त्रोप—देशैर्व्यामोहिता भृशं ॥ मोक्षमार्गं परित्यज्य । पतंति भववर्त्मनि ॥ ५२ ॥ अज्ञानगुरुसंदिष्टं । हि-

त्वा मिथ्यापथं ततः ॥ आप्तोक्तं प्रतिपद्यध्वं । सम्यग्ज्ञानपथं जनाः ॥ ५३ ॥ कुमारेण ततोऽन्नाणि ।
प्रसन्नो रजनीचरः ॥ त्वदाज्ञया पुरं राजा । विशत्वेष समं जनैः ॥ ५४ ॥ रक्षो जगाद प्रत्यक्षं । गु-
रूणां नरनायकः ॥ वसत्वत्र पुरे सार्धं । प्रजाभिर्निरुपद्रवं ॥ ५५ ॥ त्यक्तान्येष्वपि सत्वेषु । मया
पीडा कुमार तां ॥ साधर्मिकेषु लोकेषु । न त्यक्षामि कथं पुनः ॥ ५६ ॥ भगवंतं प्रणम्योच्चैः । कु-
मारोऽथ नृपाग्रहात् ॥ शृण्वन् पौरप्रशंसोक्ती—र्जगाम नृपमंदिरं ॥ ५७ ॥ विधाय स्नानदेवार्चा—
भोजनादिविधीनथ ॥ गुरुसेवां वितन्वान—स्तस्थौ कत्यपि वासरान् ॥ ५८ ॥ भावितं जिनधर्मेण ।
ज्ञात्वा भूपं समुत्सुकः ॥ स चंद्रश्रियमन्वेष्टुं । निर्ययौ नगरात्ततः ॥ ५९ ॥ अनेकनगरग्राम—
द्रोणदुर्गनगादिषु ॥ पश्यंश्चंद्रश्रियं वीरो । बंभ्रमीतिस्म भूतले ॥ ६० ॥ लंघिताशेषपृथ्वीको । निरं-
तरप्रयाणकैः ॥ वीरसेनः समुद्रस्य । तीरदेशं समासदत् ॥ ६१ ॥ प्रसारितेक्षणोऽपश्यत । सागरं पा-
रवर्जितं ॥ अगम्यमकलाकारं । स यथा परमं पदं ॥ ६२ ॥ आलोक्य सागरं दध्यौ । वीरसेनश्चिरं
हृदि ॥ इयतीं भुवमायात—श्चंद्रश्रीः कापि नेक्षिता ॥ ६३ ॥ प्रयासो निष्फलो जातः । प्रियाया द-
र्शनं विना ॥ यन्न श्रुतं मया कापि । लघुत्वं तन्ममागतं ॥ ६४ ॥ ध्यायन्निति श्रांतमनाः स यात्र—

त्समुद्रतीरे परिभ्रमीति ॥ आकस्मिकं तस्य बभूव ताव—त्तत्रैव यत्तत् शृणु भूमिपाल ॥ ६५ ॥
इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिविलिखिते हरि·
विक्रमचरित्रे महाकाव्ये श्रीहरिविक्रमराजप्रतिबोधावसरप्रोक्तकमलकेतुहननचंद्रश्रीहरणवीरसेनानु·
व्रजनो नामाष्टमः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

---

॥ अथ नवमः सर्गः प्रारभ्यते ॥

नाशिक्यनगरे पूर्वं । हतो विद्याधरोऽमुना ॥ नाम्ना कमलकेतुर्यो । भ्राताऽभूत्तस्य सोदरः ॥ १ ॥
नाम्ना पवनकेतुः स । क्रुद्धो भ्रातृवधाद्भृशं ॥ विद्याबलेन विज्ञाय । तत्र त्वरितमाययौ ॥ २ ॥ तेन
तत्र तदा दृष्टः । कुमारो दुःसहो द्विषां ॥ एकोऽपि वेष्टितोऽनेकै—र्योधैरिव महाबलः ॥ ३ ॥ दृष्ट्वा
तं खेचरो दुरा—दहश्यो विद्यया ततः ॥ वात्या व्यतिकरेणोर्ध्व—मुत्पाट्यानयदंबरे ॥ ४ ॥ कु·
मारश्चिंतयामास । केनाप्यपहृतो ननु ॥ विद्याधरेण पापेन । क्षेप्तुंकामेन सागरे ॥ ५ ॥ को नाम
तस्य दोषो हि । स्वकर्मफलमीदृशं ॥ मूढा नराः प्रकुप्यंति । परस्मायविवेकिनः ॥ ६ ॥ नान्यः शु·

त्रुर्न वा मित्रं । किंत्वात्मैव भवेदिह ॥ तद्भावभावितो यस्मा—द्वर्तेते तावुभावपि ॥ ७ ॥ त्रैलो-
क्यमपि दुष्टस्य । रिपुवत्परिभासते ॥ तदेव शुद्धचित्तस्य । निजबांधववत्पुनः ॥ ८ ॥ मयाप्यपकृतं
ह्यस्मिन् । मह्यं दुह्यत्ययं ततः ॥ लोकेऽपकुरुते कोऽपि । शत्रुर्निष्कारणो न हि ॥ ९ ॥ मयाऽवि-
षादिना सर्वं । तत्सोढव्यमुपस्थितं ॥ ज्ञात्वैव गुरुणाख्यात—मविषादी भवेरिति ॥ १० ॥ चिंतिते-
नालमन्येन । चिंतयामि तमेव तु ॥ नमस्कारमहामंत्रं । विपत्सागरतारकं ॥ ११ ॥ चिंतयन्निति
तेनाथ । दूरमुत्क्षिप्य रंहसा ॥ विद्याबलेन मुमुचे । कुमारः सागरांभसि ॥ १२ ॥ अतिवेगवशादेष ।
कुमारोऽगादधस्तलं ॥ नमस्कारप्रभावेण । नीरैरस्पृष्टविग्रहः ॥ १३ ॥ अथ तत्र समुद्भांतः । कुमारो
नियतेर्वशात् ॥ ददर्शैकं महासौधं । शुद्धस्फटिकनिर्मितं ॥ १४ ॥ तद् दृष्ट्वा विस्मितो वीर—श्चिंत-
यामास चेतसि ॥ अदृष्टपूर्वमाश्चर्यं । किमिदं नीरधाविह ॥ १५ ॥ गर्भे रत्नाकरस्याहो । सौधमस्पृ-
ष्टमंभसा ॥ असंभाव्यमिदं सर्वं । तावत्पश्याम्यहं पुरः ॥ १६ ॥ इति यावत्पुरो यात—स्तावद् द्वार-
भुवि स्थितां ॥ खेटकासिकरां वृद्धां । स्त्रीमेकां स तदैक्षत ॥ १७ ॥ तां विलोक्य कुमारः स । हृष्टो
हृद्येवमस्मरत् ॥ प्रक्ष्यामि भवनस्यास्य । स्वरूपमहमेतकां ॥ १८ ॥ प्राप्तनिःकारणानंदः । स्फुरद्भक्ति-

णलोचनः ॥ सोऽथानुकूलशकुन—प्रेरितोऽगात्तदंतिके ॥ १९ ॥ उपेत्य भणितं तेन । वृद्धमातर्न-
मोऽस्तु ते ॥ कृपाणग्रहणे कोऽयं । वृद्धत्वे समयस्तव ॥ २० ॥ गृहीत्वा धर्मसन्नाहं । जहि दुःकर्म-
शात्रवान् ॥ क्षमाखड्गप्रहारेण । संतोषफलकावृता ॥ २१ ॥ श्रुत्वेदं वचनं प्राह । जरत्याशीःपुरस्सरं
॥ यत्त्वया भणितं वत्स । तत्तथैव न चान्यथा ॥ २२ ॥ परं न शक्यते कर्त्तुं । धर्मः परवशैर्जनैः ॥
पुनः स्माह कुमारोऽथ । कस्येदं सौधमद्भुतं ॥ २३ ॥ कथं मध्ये समुद्रस्य । को वसत्यत्र वेश्मनि ॥
खेटकासिकरा कस्य । भीत्या त्वं द्वारि तिष्ठसि ॥ २४ ॥ ततो जगाद सा वृद्धा । बाष्पाविलविलोच-
ना ॥ विमुच्य दीर्घनिःश्वासं । वत्स किं कथयाम्यहं ॥ २५ ॥ दर्शनेनापि ते जातः । परितोषो म-
माधुना ॥ अतः कल्याणमूर्ते त्वं । शृणु सर्वं मयोदितं ॥ २६ ॥ वैताढ्ये उत्तरश्रेणौ । पुरे गगन-
शेखरे ॥ राजा चित्रगतिर्नाम्ना । तस्य भानुमती प्रिया ॥ २७ ॥ अशोकोऽस्ति तयोः पुत्रः । कु-
शलः सर्वकर्मसु ॥ अन्यदा स ययौ भ्राम्य—न्नाशिक्यनगरे वरे ॥ २८ ॥ विचित्रयशसो राज्ञ—स्त-
त्र दृष्टा सुता कनी ॥ अभिधानेन चंद्रश्री—श्चंद्रश्रीरिव सुंदरा ॥ २९ ॥ अनुरागवशात्तेन । सा-
न्यस्मिन्ननुरागिणी ॥ रममाणा वरोद्याने । सहसापहृता तदा ॥ ३० ॥ गच्छता गगने तेन । पृष्टो वि-

द्याधरो मुनिः ॥ ममैषा भगवन्नारी । भविष्यति स्थिरा न वा ॥ ३१ ॥ मुनिनाभाण्यशोकः स । समरे तव पार्श्वतः ॥ वीरसेनेन कन्येय—मचिरेण गृहीष्यते ॥ ३२ ॥ वीरसेनस्य नासाध्यं । किमप्यस्तीति चिंतयन् ॥ ततोऽसौ भयसंभ्रांतो । बभ्रामाखिलभूतलं ॥ ३३ ॥ नास्त्यत्र वसुधापीठे । तद्गुप्तं स्थानकं कचित् ॥ संगोप्य यत्र रक्षामि । तस्माच्चंद्रश्रियं किल ॥ ३४ ॥ चिंतयित्वेति तेनात्र । विद्यासामर्थ्यतः क्षणात् ॥ अलक्ष्यं भवनं चक्रे । सलिलांतः पयोनिधौ ॥ ३५ ॥ दकस्फाटिकपाषाणै—र्निर्मितं सप्तभूमिकं ॥ देवानामपि नो गम्यं । मनुष्याणां तु का कथा ॥ ३६ ॥ ध्यायंती वीरसेनं तं । चंद्रश्रीः सात्र तिष्ठति ॥ बंधुजीवाभिधानाहं । मुक्ता तेनात्र रक्षितुं ॥ ३७ ॥ एतदेवास्ति मे दुःखं । वीरसेनः स मे यतः ॥ प्रियं मित्रं सुतस्यान्यः । स्वामी चाशोकखेचरः ॥ ३८ ॥ चंद्रपीनसुवेगाख्या—वुभौ स्तो मम नंदनौ ॥ वधे कमलकेतोस्तौ । तस्य मित्रे बभूवतुः ॥ ३९ ॥ स्वामी चित्रगती राजा—स्माकं समभवत्पुरा ॥ तस्य सूनुरशोकोऽपि । सांप्रतं स पुनः प्रभुः ॥ ४० ॥ एकस्यापि द्वयोर्मध्ये । प्रत्यपायो भवेद्यदि ॥ सुतयोः कुशलं तन्न । वत्साहमिति दुःखिता ॥ ४१ ॥ अपायबहुलं मध्यं । सागरस्येति सर्वदा ॥ चिंतयंत्यत्र तिष्ठामि । सावधानासिधारिणी ॥ ४२ ॥ विश्वा-

सस्थानमेपेति । नानाभ्यर्थनया भृशं ॥ तेनाहं स्थापिता द्वारे । वत्साशोकेन रक्षितुं ॥ ४३ ॥ दुः-
खकारणमेतन्मे । वत्स जानीहि संप्रति ॥ पुत्रस्य मित्रमेकोऽयं । द्वितीयः स्वामिनः सुतः ॥ ४४ ॥
समानौ द्वावपि द्वौ च । प्रियावेतौ सुतौ मम ॥ एतयोर्दैवयोगेन । पश्य वैरमुपस्थितं ॥ ४५ ॥ त-
वैष कथितः सर्वः । संबंधो भवनादिकः ॥ स्वशोककारणं गोप्य—मपि सर्वं प्रकाशितं ॥ ४६ ॥ कु-
मारः पतितो योऽम्बु—त्क्षारपाथोनिधौ पुरा ॥ चंद्रश्रीरिह श्रुत्वेति । सुधांभोधौ ममज्ज सः ॥ ४७ ॥
एषापदपि संजाता । संपद्दैववशान्मम ॥ मनोवल्लभचंद्रश्री—प्रवृत्तिश्रवणादिह ॥ ४८ ॥ यद्यथा लि-
खितं धात्रा । तत्तथैवेति निश्चितं ॥ ध्यात्वेति विधुरेऽपि स्यु—र्न धीराः क्वापि कातराः ॥ ४९ ॥
ध्यायंतमिति तं दृष्ट्वा । प्रमोदपुलकान्वितं ॥ कुमारं सुंदराकारं । पुनर्नारी जगाद सा ॥ ५० ॥
पुत्र त्वं कः कुतो वात्र । किं सुरः खेचरोऽथवा ॥ कथं वा भवनं ज्ञातं । त्वयेदं कथयाखिलं ॥ ५१ ॥
वीरसेनो जगादाथ । मनुष्योऽहं महीं भ्रमन् ॥ समुद्रतटतो दैव—योगेनात्र प्रवेशितः ॥ ५२ ॥ बं-
धुजीवा पुनः स्माह । न नृणां शक्तिरीदृशी ॥ तरितुं सागरं शक्ता । विना पोतं न ते यतः ॥ ५३ ॥
विना पोतं त्वया वत्स । लंघितः सागरः पुनः ॥ कथंचित्स्यादिदमपि । प्रवेशोऽत्र न संभवेत् ॥ ५४ ॥

मनुष्यो नासि तद्वत्स । जानेऽहमनुमानतः ॥ ममाख्याहि स्वरूपं स्वं । कथ्यं चेदिह विद्यते ॥ ५५ ॥ तथेति भणितो वीरो । दध्यौ किं मे विकल्पितैः ॥ मायावी खेचरो लोके । दुर्दशां पतितस्त्वहं ॥ ५६ ॥ यथार्थवेदनं तन्न । कार्यं बुद्धिमता यतः ॥ यतितव्यं परिज्ञाय । देशं कालं च पात्रतां ॥ ५७ ॥ ध्यात्वेति सोऽवदत्सर्वं । वक्ष्यामि समयांतरे ॥ स्वस्वरूपं तु मे ब्रूहि । काशोकः सोंब संप्रति ॥ ५८ ॥ एवमस्त्वित्युदित्वाह । कुमारंप्रति खेचरी ॥ वृत्तांतो यस्त्वया पृष्टः । सोऽशोकस्य निशम्यतां ॥ ५९ ॥ वीरसेनाभियोगस्य । परिज्ञानस्य हेतवे ॥ प्रहितेनैत्य खेटेन । कथितं तस्य संप्रति ॥ ६० ॥ निहतो बंधुवैरेण । वीरः पवनकेतुना ॥ इत्याकर्ण्य गतोऽशोकः । सत्यवार्ताविधित्सया ॥ ६१ ॥ वीरोऽवादीदशोकेन । परिणीताथवा न सा ॥ वृद्धोवाच पतिं वीर—सेनात्सान्यं न मन्यते ॥ ६२ ॥ त्रैलोक्ये न स कोऽप्यत्रा—ऽस्त्युपायो यो न चिंतितः ॥ अशोकखेचरेंद्रेण । तदाराधनहेतवे ॥ ६३ ॥ सा त्वेकाग्रमना बाला । जगाद पृच्छकंप्रति ॥ शरणं वीरसेनो मे । जन्मन्यत्र परत्र च ॥ ६४ ॥ भविष्यति कथंकारं । चंद्रश्रीदर्शनं मम ॥ ध्यायन्निति कुमारः स । शुश्राव रुदितं स्त्रियाः ॥ ६५ ॥ प्रकटीकृतकारुण्य—स्तद्दुःखेनैव दुःखितः ॥ सोऽपृच्छद् दुःखिता चात्र । युवती

कांत रोदिति ॥ ६६ ॥ बंधुजीवा जगादाथ । चंडश्रीः सैव रोदिति ॥ मरणं वीरसेनस्य । श्रुत्वा व-
त्सातिदुःखिता ॥ ६७ ॥ कियन्मात्रमिदं वत्स । प्राक् श्रुत्वाशोकसाद्धिकं ॥ तथा मूर्छां गता सात्र ।
जीविताशापि नो यथा ॥ ६८ ॥ दृष्टः कस्या अपि स्नेहो । बालाया न मयेदृशः ॥ एतस्या वीरसे-
नेऽत्र । यादृशो वत्स वर्तते ॥ ६९ ॥ अत्र वातायने वत्स । तावत्त्वं तिष्ठ निर्मले ॥ रुदंतीं तामहं
गत्वा । वारयामि तु बालिकां ॥ ७० ॥ एवं कुर्वित्यनुज्ञाता । सौधस्योपरि सा गता ॥ कुमारोऽप्यन्य-
मार्गेणा—रूढः प्रछन्नपादमुक् ॥ ७१ ॥ सप्तमीं भूमिकां गत्वा । निर्यूहांतरितः स्थितः ॥ पश्यंश्चंद्र-
श्रियं दीनां । पतितां विषमापदि ॥ ७२ ॥ दृष्ट्वा तामबलां दध्यौ । मद्वियोगेन हा कथं ॥ पापे-
न स्थापिता दुःखे—ऽशोकेनैषा प्रिया मम ॥ ७३ ॥ शुष्को नूनं समुद्रोऽय—मस्या विरहवह्निना ॥
शोकाश्रुसलिलैर्मन्ये । पुनः पूर्णीबभूव सः ॥ ७४ ॥ चिंतयन्निति यावत्स । तस्थौ तत्र तिरोहि-
तः ॥ अशोकस्तावदायातः । सहसैव तदंतिके ॥ ७५ ॥ विकस्वरमुखांभोजः । क्रमकंपितमंदरः ॥
आसांचक्रे समीपे स । वृद्धया दत्तविष्टरः ॥ ७६ ॥ अथ शत्रुं समायातं । ज्ञात्वा वीरोऽद्विपद् दृशं ॥
रोमांचितो रणरसा—न्निशितासौ महाभुजः ॥ ७७ ॥ शृणोमि तावदेषोऽत्र । किं जल्पति करोति

किं ॥ करिष्याम्युचितं पश्चा—द्यथावसरदर्शनात् ॥ ७८ ॥ ध्यात्वेत्यस्थात्कुमारः स । निर्यूहेण तिरोहितः ॥ तद्वचःश्रवणे दत्त-श्रुतिव्यापारकारणः ॥ ७९ ॥ उवाच खेचरो वृद्धा-मुद्दिश्यांब स शात्रवः ॥ पवनेन हतो नून—मिति वाक्यं तथैव तत ॥ ८० ॥ औषधेन विना व्याधि—र्दुःकर्म तपसा विना ॥ एवमेव विना युद्धं । पश्य प्रतिहतो रिपुः ॥ ८१ ॥ पापः पापोदयेनैव । हन्यते नेति चित्रकृत् ॥ श्यद्भिर्दिवसैरंब । जातोऽद्य सुस्थितोऽस्म्यहं ॥ ८२ ॥ तत्किं कार्यमिहास्माकं । कारायामिव नीरधौ ॥ उषितेन स्ववैरिघ्ने । गच्छामोऽधुना पुनः ॥ ८३ ॥ पुत्र त्वमेव जानासी—त्युक्तेऽथो बंधुजीवया ॥ चंद्रश्रीविरहेणे तेन । फुल्लाक्षेण पराङ्मुखी ॥ ८४ ॥ वीरसेने कुरंगाक्षि । निर्बंधं त्यज संप्रति ॥ यद्यनिष्टोऽस्मि मन्यस्व । त्वं तथापि पतिं तु मां ॥ ८५ ॥ अनुरक्ते कदाप्यत्र । रज्यतेऽनिष्टभर्तरि ॥ पुण्यैर्भवति संयोगो-न्योन्यस्यासक्तचित्तयोः ॥ ८६ ॥ अंब त्वं कथयैतस्या । यामो वैताढ्यपर्वतं ॥ प्रसन्ना तत्र यातस्य । चंद्रश्रीर्मे भविष्यति ॥ ८७ ॥ बंधुजीवा ततोऽवोच—ज्ज्ञात्वा सर्वं त्वमेव भोः ॥ ईदृकार्ये न दक्षाहं । वत्स वृद्धास्मि येन वै ॥ ८८ ॥ उवाच खेचरो मात—रन्यागन्तां मम ॥ दत्तं कदापि दूरेऽस्तु । वाचा कर्तव्यताऽपि च ॥ ८९ ॥ प्रत्यहं चेतसाप्येषा । भणितं

न करिष्यति ॥ भविष्यति तदा कोप—ज्वलितं हृदयं मम ॥ ९० ॥ इत्युक्त्वा बालिका तेन । भ-
णितोत्तिष्ठ दुर्मते ॥ प्राप्स्यसि सांप्रतं नाद्य । निर्वाहं निश्चयस्तव ॥ ९१ ॥ अनुकूलैरियत्कालं । भ-
णिता त्वं वचोभरैः ॥ सांप्रतं प्रतिकूलैस्तु । वच्मि भाव्यं यदस्तु तत् ॥ ९२ ॥ तदुत्तिष्ठ भवाग्रे मे ।
न चेत्प्राप्स्यसि सांप्रतं ॥ मम कोपानलज्वाला—मध्ये शलभतां ध्रुवं ॥ ९३ ॥ प्रतीकारं तु कः क-
र्ता । मयि क्रुद्धेऽत्र विष्टपे ॥ यस्याशां त्वं कृतवती । हतः सोऽपि तवेप्सितः ॥ ९४ ॥ तदेष निश्च-
यो मेऽस्ति । तवेष्टं यत्तदाचर ॥ मां जीवसि पतीयंती । मरिष्यस्यन्यथा ध्रुवं ॥ ९५ ॥ एवमुक्तापि
सा दत्ते । यावत्तस्यापि नोत्तरं ॥ स विलक्षः पुनः स्माह । तावत्क्रोधारुणेक्षणः ॥ ९६ ॥ पश्य मे
वचनेष्वस्या । अवज्ञाहो सुदुर्धियः ॥ भणिता बहुधाप्येवं । दत्ते तदपि नोत्तरं ॥ ९७ ॥ अवज्ञावि-
षवृक्षस्य । भुंक्ष्वातिविरसं फलं ॥ इत्युक्त्वा सहसोत्तस्थौ । खड्गपाणिः स खेचरः ॥ ९८ ॥ बंधुजीवा
जगादाथ । मा मा त्वं कुरु साहसं ॥ अशोकखेचरस्वामि—न्नवध्या युवती भवेत् ॥ ९९ ॥ क्रोधां-
धकारपूरेण । श्यामलीकृतलोचनः ॥ वृद्धावाक्यमवज्ञाय । दधावे प्रतिकन्यकां ॥ १०० ॥ अशोकेन
ततः खड्ग—माकृष्य भणिता कनी ॥ नासि त्वं सांप्रतं पापे ॥ झाक् स्मराभीष्टदैवतं ॥ १ ॥ मूर्तं य-

मभिवालोक्य । तमशोकं समीपगं ॥ कंपमाना भयेनोच्चै—श्चंडश्रीरवदद्वचः ॥ २ ॥ शरणं मे स-
दैवास्तु । चंद्रप्रभजिनेश्वरः ॥ द्वितीयो वीरसेनश्च । शरणागतवत्सलः ॥ ३ ॥ श्रुत्वेति कुपितो याव
—त्खड्गं खेटः स मुंचति ॥ तर्जयंस्तावदायातो । वीरसेनस्तदंतिके ॥ ४ ॥ रे पापकर्म निस्त्रिंश । रे
निर्लज्ज नराधम ॥ भयकंप्राबलाघाते । कथं ते चेष्टते मनः ॥ ५ ॥ एतौ हस्तौ न किं जातौ । श-
तखंडौ तवाधम ॥ अखंडशीलबालायाः । प्रहरंतौ नभश्चर ॥ ६ ॥ येषां न करुणास्थाने । करुणा
निःकृपात्मनां ॥ तेषां नामापि न ग्राह्यं । स्यात्पापानां भवादृशां ॥ ७ ॥ निर्गुणेषु विधातव्या—वज्ञा
यन्नीतिरीदृशी ॥ सगुणायां महारोषो । मूर्खस्यात्र कथं तव ॥ ८ ॥ अथ पापधियां पाप—स्थानयो-
ग्यैककर्मणां ॥ गुणिनां गुणवारोऽपि । दोषत्वेन निवर्तते ॥ ९ ॥ इत्यालापवशादावि:—कृतात्मो-
दारमानसं ॥ वीरसेनं विलोक्याथ । दध्याविति नभश्चरः ॥ १० ॥ तदलीकं किलाभूद्य—त्पवनेनैव
मारितः ॥ प्रविष्टोऽत्रापि गंभीरे । समुद्रभवने कथं ॥ ११ ॥ को वात्र विस्मयो नूनं । वीरस्यैतादृशः
क्वचित ॥ गम्यागम्यविभागः किं । वज्रस्येव न संभवेत ॥ १२ ॥ पश्चादपि हि मर्तव्यं । कियद्भिर्दि-
वसैस्ततः ॥ अनेनाभग्नमानस्य । वरं मृत्युर्ममाधुना ॥ १३ ॥ चिंतयन्निति खेटः स । जगदे सुरजन्म-

ना ॥ किं चिंतयसि माभैषी—र्हन्मि नाहं व्रजाशु भोः ॥ १४ ॥ मुक्तशस्त्रान सलज्जांश्च । भीरु-
कानपि मूर्छितान् ॥ न मे प्रहरते हस्तो—ऽयुध्यमानांश्च योषितः ॥ १५ ॥ त्वया मे हरता कांतां ।
यद्यप्यपकृतं मयि ॥ तथापि गच्छ मुक्तोऽसि । न सामान्यभटो यतः ॥ १६ ॥ वक्रोक्तिकां विधायाथा
—शोकोऽवोचत्कुमार हे ॥ शक्तिं पश्यामि ते पश्चा—त्करिष्यामि यथोचितं ॥ १७ ॥ विद्याधरोऽ-
स्मि विद्याभि—र्भूरिभिः शक्तिसंयुतः ॥ स्यां त्वय्यप्यसमर्थश्चे—त्सर्वं तन्मम निष्फलं ॥ १८ ॥ दर्प-
स्ते दूरमारूढः । कमलस्य निपातनात ॥ अधुना स निराधारः । क्व यास्यति हते त्वयि ॥ १९ ॥
चंडश्रीः कीर्तिवन्मूर्ता । विजये तेऽथवा मम ॥ आजन्म किं नरोद्गीता । रणे भवतु निश्चला ॥ २० ॥
अज्ञातविक्रमो दूरा—न्निजबुद्ध्यैव गर्वितः ॥ कथं मां जल्पसीति त्वं । न सामान्यभटोऽसि यत्
॥ २१ ॥ भवेयुर्युवतीपार्श्वे । य उच्चैःखलनिःस्वनाः ॥ पर्याप्तं किं न संग्रामे । निर्वहंति त एव चेत
॥ २२ ॥ उत्तिष्ठ सन्मुखीभूय । बहुना जल्पितेन किं ॥ धीराणां कातराणां च । लभ्यते समरेंतरं
॥ २३ ॥ उवाच वीरसेनोऽथ । सत्यं खेचर जल्पितं ॥ स्वकीयोक्तेषु निर्वाहो । नराणां दुर्लभः ख-
लु ॥ २४ ॥ तन्मा जल्प स्थिरीभूय । संचालय निजायुधं । मम दास्यति निस्त्रिंशः । पूर्वोक्तानां

तवोत्तरं ॥ २५ ॥ इतश्चावधिना ज्ञात्वा । पूर्वास्ता वनदेवताः ॥ सान्निध्याय कुमारस्य । तत्रैत्यास्थु-
रलक्षिताः ॥ २६ ॥ अथ खड्गं परित्यज्य । खेटेनादायि मुद्गरः ॥ भ्रमयित्वा प्रक्षिप्तश्च । वीरसेनभटं-
प्रति ॥ २७ ॥ कुमारेणापि खड्गं स्वं । मुक्त्वा तेनैव खेचरः ॥ मुद्गरेण तथा जघ्ने । यथा मूर्छाव
शोऽभवत ॥ २८ ॥ प्रहारेंधनसंदीप्त—क्रोधवह्निर्नभश्चरः ॥ द्वे रूपे निर्ममावष्ट—भुजादंडसमन्विते
॥ २९ ॥ दृष्ट्वा ते निघ्नती रूपे । विविधायुधभीषणे ॥ युगपन्निःस्वने चक्रे । कुमारः करमुद्गरैः
॥ ३० ॥ निष्ठुराघातनिर्भग्न-लंबमानभुजोत्करे ॥ आछिन्नशाखावृक्षाभे । ते रूपे प्रतिरेजतुः ॥ ३१ ॥
चत्वार्यष्टौ द्विरष्टौ च । द्वात्रिंशद् द्विगुणान्यपि ॥ कृतानि तेन रूपाणि । कुमारेण तु जघ्निरे ॥ ३२ ॥
अशोकोऽथ कुमारस्या—सदृक्सामर्थ्यदर्शनात ॥ सर्वात्मना स्वशक्तिं च । प्रयोक्तुमुद्यतोऽभवत्
॥ ३३ ॥ कोपावेशवशादस्त्र—धरः सोऽग्रचरो बभौ ॥ कुमारातंकतो निर्य—दिव रुंधन् स्वजीवितं
॥ ३४ ॥ खेटो जगाद रे दुष्ट । गृहाणासिं न जीवसि ॥ अकाले मम हस्तेन । पश्य पाप यमाल-
यं ॥ ३५ ॥ वीरसेनस्तदुक्तेन । सावष्टंभेन हर्षितः ॥ खड्गपाणिर्महोत्साह—स्तस्याभिमुखमाययौ
॥ ३६ ॥ भटाभ्यां पुलकस्ताभ्यां । स्वस्वदेहे विलोकितः ॥ हृदीप्सितजयश्रीणां । परिरंभादिवोत्थि-

तः ॥ ३७ ॥ खेचरप्रहराक्रुध्धो । वीरेणेति प्रजल्पिते ॥ अशोकेन प्रहारोऽसे-र्निर्दयं मुमुचे त-
तः ॥ ३८ ॥ वंचयित्वा प्रहारं तं । वीरेण मुमुचे पुनः ॥ खड्गाखड्गि तयोरेवं । चिरं पववृते रणं
॥ ३९ ॥ तयोरेवं रणे युध्य-मानयोरतिमत्सरात् ॥ अशोकस्य कृपाणस्य । धारा भग्ना समंततः
॥ ४० ॥ ततो विलोक्य खेटं तं । कुमारो गलितायुधं ॥ तत्याजापि निजं खड्गं । क्षात्रं धर्मं प्रका-
शयन् ॥ ४१ ॥ युयुधाते ततो वीरौ । नियुद्धेन परस्परं ॥ नानाकरणबंधेन । मुक्तशस्त्रावुभावपि
॥ ४२ ॥ प्राप्यावसरमभ्रामि । कुमारेणाथ खेचरः ॥ गृहीत्वा पादयोरूर्ध्वं । क्षेत्रपेणेव गोलकः
॥ ४३ ॥ हारमुक्ताद्युतिश्वेती-कृतालोलकचोच्चयः ॥ अशोकोऽज्ञाद्वपुर्दम्भं । जयशंसीव चामरं ॥ ४४ ॥
कर्णनासामुखद्वारै-र्निर्यद्रुधिरधारया ॥ प्रलयांभोदवद्भ्राम्यन् । बभौ खेटो नभस्तले ॥ ४५ ॥ भ्र-
मयित्वा क्षितौ याव-दास्फालयति खेचरं ॥ नमो जिनेभ्य इत्युक्तं । तावत्तेन वचस्विना ॥ ४६ ॥
कुमारस्तत्समाकर्ण्य । हा हा हतोऽस्मि पापधीः ॥ साधर्मिको मया हंतुं । प्रारब्ध इत्यचिंतयत्
॥ ४७ ॥ ततो मुक्तः शनैर्भूमौ । कुमारेण स खेचरः ॥ आश्वासितश्च शिशिरै--रुपचारैरनेकधा
॥ ४८ ॥ स प्रत्यागतचैतन्यो । दृष्टिभ्यां यावदीक्षते ॥ तावत्कृत्यायमानं तं । कुमारं पुर ऐक्षत

॥ ४९ ॥ अशोकः स्माह किं शत्रुः । प्रतिघ्नन्नपि रक्षितः ॥ त्वया कुमार क्रुद्धोऽह–मदीनवचनोऽधुना ॥ ५० ॥ वीरोऽवोचन्न मे शत्रु–स्त्वं मित्रं निश्चितं पुनः ॥ मरणांतेऽपि नो यस्य । विस्मृतोऽर्हन्नमस्कृतिः ॥ ५१ ॥ आस्तामत्यंतहृद्भक्ति– संयुक्तं जिननाम भोः एवमेव मुखेनापि । भाषमाणः सखासि मे ॥ ५२ ॥ मृत्यावुपस्थिते नूनं । पातुं शक्तिर्न मादृशां ॥ जिननामाक्षरं त्वेकं । त्रायते मृत्युकोटितः ॥ ५३ ॥ विद्याधरेंद्र यत्किंचि–त्क्रोधेनापकृतं मया ॥ तत्क्षंतव्यं त्वया सर्व–मविवेकोऽत्र कारणं ॥ ५४ ॥ व्याधिदोषेण मलिनी–भवंत्यपि सुनिर्मलाः ॥ पुमांसः स्फटिकस्वछा । दोषकृद्व्याधिरेव तत् ॥ ५५ ॥ श्रुत्वेति वचनं तस्य । जातलज्जः स खेचरः ॥ इत्यधोवदनो दध्या–वपश्यन्नेव संमुखं ॥ ५६ ॥ अधमोत्तमयोः पुंसोः । प्रत्यक्षं दृश्यतेंतरं ॥ अधमोऽहं यथैवात्र । कुमारस्तु यथोत्तमः ॥ ५७ ॥ तत्तदेवाधमं कर्म । चिंत्यते यद्यदेव मे ॥ अधमत्वं भवेत्पुंसो–ऽधमानुष्ठानतो ध्रुवं ॥ ५८ ॥ एतस्या मरणं सर्वं । लोकेऽत्यात्युत्तमं पुनः ॥ एतेनोत्तम एवायं । कुमारो भाति मे हृदि ॥ ५९ ॥ जाता अप्युत्तमे वंशे–ऽधमा अधमकर्मणा ॥ इतरेऽप्युत्तमा लोके । भवंत्युत्तमकर्मणा ॥ ६० ॥ अपकारी परः शत्रु–र्बलवान् मारणोद्यतः ॥ प्रहानीतोऽप्यनेनाहं । तथापीह

ति रक्तिनः ॥ ६१ ॥ गंभीरत्वं समुद्रस्य । कुंभजचुलुकोन्मितं ॥ अप्रमाणं तु साधूनां । हृदयं स्ता-
घवर्जितं ॥ ६२ ॥ सर्वथाहं स्वकृत्येन । लज्जितो दृष्टिमप्यलं ॥ संधानं नात्र दूरेऽस्तु । प्रत्युत्तरवि-
धानता ॥ ६३ ॥ जीवितं मान एवात्र । तदनेन हृतं मम ॥ तन्निर्जीवोऽस्मि दत्तेऽत्र । शवोऽपि क-
थमुत्तरं ॥ ६४ ॥ ध्यात्वेति सहसाशोकः । प्रत्युत्तरवचोविना ॥ अदृश्यरूपतां जातः । क्षणात्स्वप्नपु-
मानिव ॥ ६५ ॥ अथापश्यन्नशोकं तं । कुमारो भवनांतरे ॥ बंधुजीवांप्रति स्माह । सविषादमिदं व-
चः ॥ ६६ ॥ अस्मादृशां कथं यातु । प्रभवोऽपि पराक्रमः ॥ खेदाय जायते योत्र । सतीर्थ्यानामपी-
दृशां ॥ ६७ ॥ बंधुजीवावदद्वत्स । खेदस्तस्य न कोऽपि हि ॥ त्वच्चेष्टाविस्मयेनैष । स्वकृत्येनापि ल-
ज्जितः ॥ ६८ ॥ सुजनास्ते गुणैर्येषां । हृदये पतितैरिह ॥ निर्दोषा इव सौजन्य—मभ्यस्यंत्यपि दु-
र्जनाः ॥ ६९ ॥ तत्वसौजन्य संजाता—नुरागस्यानुमीयते ॥ स्वस्वरूपावलोकेना—शोकस्य म-
हती त्रपा ॥ ७० ॥ इदानीं मम संतोषो । यत्कुमार तवानया ॥ राजपुत्र्या समं योगः । कुशलं
स्वामिनश्च मे ॥ ७१ ॥ वीरसेनस्त्वमेवासि । विज्ञातो विक्रमादिभिः ॥ कस्यान्यस्य मनुष्यस्य ।
वत्स स्याद्भक्तिरीदृशी ॥ ७२ ॥ ये गुणाः कथिता वत्स । सुताभ्यां तव मेऽत्र ते ॥ जाताः शतगु-

णाः सर्वे । त्वयि दृष्टे गुणोत्तर ॥ ७३ ॥ चिरं जीव चतुर्वार्धि—वसुधायाः पतिर्भव ॥ अनुरूपप्रिया-
योगा—दुपभुंक्ष्व सुखानि च ॥ ७४ ॥ कुमारोऽथ जगादांब । तव पुत्रौ तदा मम ॥ वधस्यानंतरं
शत्रो—रभूतामुपकारिणौ ॥ ७५ ॥ तत्राभविष्यतां चेन्न । तावहं सह पद्मया । भगिन्या निरवष्टं-
भो—ऽपतिष्यं तद्ध्रुवो भुवि ॥ ७६ ॥ इत्यादि तद्गतानेक—गुणग्रहणगर्भितं ॥ प्रेमालापं तदा च-
क्रे । कुमारः सह वृद्धया ॥ ७७ ॥ ततश्चंद्रश्रियः पार्श्वे । कुमारोऽगादनुद्रुतः ॥ तयाप्यभ्युत्थितो दू-
रा—द्दर्शितामानमानया ॥ ७८ ॥ कुमारे युध्यमानेऽस्या । देहचेष्टा भयेन याः ॥ शृंगारमिश्रिता जा-
ता—स्ता एव प्रियदर्शनात् ॥ ७९ ॥ वीरसेनोऽवदच्चंद्र—श्रियं विरहदुर्बलां ॥ अदृष्टबंधुविरहा—ति-
दुःखं देवि लंघितां ॥ ८० ॥ यथा गच्छंति सौख्यानि । तथा दुःखानि कर्मणा ॥ हर्षखेदौ तथाप्य-
त्र । विमूढानां शरीरिणां ॥ ८१ ॥ दशायां विषमायां चे—द्धीरत्वं नोपयुज्यते ॥ तत्तस्य समये कु-
त्रो—पयोगः क्रियते जनैः ॥ ८२ ॥ तन्नारीसुलभं खेदं । मृगाक्ष्युद्वह मा हृदि ॥ अनुकूलोऽस्ति
चेद्दैवो । बंधूनां मेलयामि तत ॥ ८३ ॥ चंद्रश्रीरिदमाकर्ण्य । हर्षोत्फुल्लविलोचना ॥ हृदंतः प्रसर-
त्प्रेम—गर्भं प्राणप्रियं जगौ ॥ ८४ ॥ त्वमार्यपुत्र मा विद्धि । यद्बंधुविरहार्दिता ॥ त्वद्वियोगाति-

दुःखेन । पिहितं तदपीह मे ॥ ७५ ॥ पितृमातृसखीबंधु—जनो बाल्ये प्रियो भवेत ॥ तरुणीनां तु तारुण्ये । एक एव प्रियः प्रियः ॥ ७६ ॥ विरसे जीवलोकेऽस्मिन् । सुखं स्वप्रियसंगमात् ॥ तद्वि-रहात्परं दुःखं । गुरु नान्यत्र किंचन ॥ ७७ ॥ तदलं चिंतितेनात्रा—न्येन त्वं प्रिय चिंतय ॥ उत्तार त्वरितं घोरा—त्संसारादिव सागरात् ॥ ७८ ॥ इत्यालापपरौ याव—त्तिष्ठतस्तौ परस्परं ॥ सौधस्याग्रे महांस्ताव—न्निर्घातः सहसाभवत ॥ ७९ ॥ माभैस्त्वमिति संधीर्य । कुमारस्तां भयातुरां ॥ आरुरोहोपरिष्टात्त—त्कारणज्ञानहेतवे ॥ ८० ॥ यावज्जगाम सौधाग्र—मपश्यत्तावदायसं ॥ रज्ज्वातिदीर्घया बद्धं । यानपात्रस्य नंगरं ॥ ८१ ॥ तस्यानुमार्गमायातं । सोऽपश्यद्बर्बरद्वयं ॥ क्षारोदध्यंबुसंपर्का—द्दग्धदेहमिवासितं ॥ ८२ ॥ दध्यौ राजसुतो नूनं । यानपात्रं किमप्यदः ॥ नंगरस्थं परं नैवा—वगच्छाम्यागतं कुतः ॥ ८३ ॥ तदेतावेव पृच्छामि । चिंतयित्वेति तेन तौ ॥ भाषितौ बर्बरौ नष्ट्वा । बब्रुवाणौ भयातुरौ ॥ ८४ ॥ बर्बराभ्यां द्रुतं गत्वा । यानपात्रप्रभोः पुरः ॥ ऊचे सौधकुमारादि—वृत्तांतो वीक्षितो यथा ॥ ८५ ॥ तं निशम्य तरीनाथो—ऽश्रद्दधानो वचः पुनः ॥ प्रेषयामास निर्भीकान् । निर्यामकनरान् स्थितान् ॥ ८६ ॥ पृष्टास्तेऽथ कुमारेण । कुशलोदंतपूर्वकं ॥ यानपात्रस्य वृ-

त्तांत—माचख्युः स्वस्थमानसाः ॥ ९७ ॥ पुराच्चंद्रपुरादेष । प्रद्युम्नो नाम नौपतिः ॥ द्वीपं महाक-
टाहाख्यं । स्वार्जनाय गतोऽभवत ॥ ९८ ॥ अर्जयित्वा धनं तत्र । गच्छतः स्वपुरंप्रति ॥ मंदवातव-
शात्तस्य । मासद्वयमभूत्पथि ॥ ९९ ॥ जातं पुनरसामान्यं । प्रातरेवाद्य वार्दलं ॥ तेनात्र स्खलितः
पोतो । निक्षिप्तो नंगरो जले ॥ २०० ॥ श्रुत्वा नंगरनिर्घातं । बर्बरौ धावितौ द्रुतं ॥ युष्मद्दर्शनवृ-
त्तांत—स्ताभ्यामेत्य च भाषितः ॥ १ ॥ अश्रद्धानवता नुन्नाः । प्रद्युम्नेन वयं ततः ॥ अहं निर्याम-
कस्तस्य । सर्वे कर्मकरास्त्वमी ॥ २ ॥ यानपात्रस्य वृत्तांतं । निशम्येति व्यचिंतयत् ॥ कुमारः सुंदरः
पोतः । परतीरे व्रजेऽधुना ॥ ३ ॥ वीरः स्माह मनुष्योऽहं । संप्राप्तो दैवयोगतः ॥ अत्रात्मना द्विती-
योऽस्मि । गंतुकामः परं तटं ॥ ४ ॥ निर्यामकेण भणित—माश्वेतद्भणितेन किं ॥ प्रापयामः परं
तीरं । सानुकूलोऽनिलो यदि ॥ ५ ॥ ततस्ते सह वीरेण । जग्मू राजसुतांतिकं ॥ भणिता सा कु-
मारेण । यामः पोतेन सुंदरि ॥ ६ ॥ प्रमाणं तव वाक्यं मे । प्रियेत्युक्त्वा समुत्थिता ॥ चंद्रश्रीर्वी-
रसेनश्च । प्रोचे निर्यामिकैरिति ॥ ७ ॥ अनेनोक्तं स्वनेत्राणि । नासाकर्णमनेन च ॥ पिधाय व-
स्तुना वार्धा—वमुतस्तरतं युवां ॥ ८ ॥ श्रुत्वा तद्वचनं तौ नु । बंधुजीवाकृतानती ॥ राजकन्याकु-

मारौ द्वा—वपि पोतमवापतुः ॥ ९ ॥ यानपात्रविलग्नं त—द्युग्ममैक्षत पोतपः ॥ मंदरक्षुब्धक्षीरा-
ब्धि—निर्गतेंदुश्रियाविव ॥ १० ॥ यथा श्रुतं तथा दृष्टं । रूपं तं राजनंदनं ॥ अभ्युत्तस्थौससंभ्रां-
तः । प्रद्युम्नः स्वजनैः समं ॥ ११ ॥ प्राक् चंडश्रियमारोप्य । कुमारोऽथाधिरूढवान् ॥ प्रद्युम्नेन स्व-
यं दत्त—बाहुस्थानासनस्थितिः ॥ १२ ॥ समुद्रपातवृत्तांतं । पृष्टः सोऽचीकथत्तथा ॥ प्रद्युम्नेन यथा
ज्ञातो । निरुत्सैकपराक्रमः ॥ १३ ॥ असाध्यमीदृशां पुंसां । किंचिन्नास्तीह भूतले ॥ इति ध्यायति
पोतेशे । सानुकूलोऽनिलो ववौ ॥ १४ ॥ उत्पाव्य नंगरं पोतः । पूरितस्तत्क्षणादपि ॥ चचाल वा-
युवेगेन । स्पर्धयन् मनसा समं ॥ १५ ॥ पंचभिर्दिवसैः पोतः । प्रेरितः पृष्टिवायुना ॥ मध्ये वारि-
निधेरेक—माससाद शिलोच्चयं ॥ १६ ॥ प्रद्युम्नस्तं गिरिं दृष्ट्वा । जगादेति नृपात्मजं ॥ पश्य देव
पुरः शृंगै—र्विलिखंतं नभो नगं ॥ १७ ॥ द्वियोजनशते अस्मा—न्नगेंडादुत्तरं तटं ॥ जानीहि देव
संप्राप्ता । एष एवानिलो यदि ॥ १८ ॥ प्रक्षीणं बहुभिर्घस्रैः । शाकेंधनजलादिकं ॥ अतोऽत्र पर्वते
देव । धारयिष्यामि वाहनं ॥ १९ ॥ नगे विशालशृंगेऽत्र । युवामप्यवरोहतं ॥ विश्रम्य स्वेछया स्व-
स्थौ । वाहनं चटतं पुनः ॥ २० ॥ तथेत्युक्ते कुमारेण । पोतः प्राप क्षणेन तं ॥ सप्रद्युम्नकुमारश्च ।

राजकन्याप्यवातरत् ॥ २१ ॥ ददर्श तं कुमारोऽथ । नगेंद्रं हंति यः क्रुधा ॥ नभोलग्नैर्महावृक्षैः । फ-
लितैर्व्योमचारिणां ॥ २२ ॥ वीरसेनस्ततस्तत्र । विजहार यथासुखं ॥ समर्प्य सार्थवाहस्य । चंद्रश्रि-
यमजीरुकः ॥ २३ ॥ श्रीखंडद्रुमखंडेषु । निर्झरेषु गुहासु च ॥ कुमारो गिरिशृंगेषु । सिंहवन्निर्भ-
योऽभ्रमत् ॥ २४ ॥ अन्यानि रमणीयानि । पश्यन्नद्रिवनानि सः ॥ जगाम वाहनाद् दूरं । द्वियो-
जनमिते पथि ॥ २५ ॥ ददर्शस्तत्र वृक्षाणां । गहनं सूरनंदनः ॥ वसुधालग्नशाखाभि—र्निरुद्धा-
र्ककरागमं ॥ २६ ॥ कुमारः कौतुकेनांत—र्निविशेद्यावमीक्षते ॥ यावत्तावदिहाश्रौषी—ज्ज्ञानकोला-
हलं बहु ॥ २७ ॥ श्रीखंडद्रुममैक्षिष्ट । प्रविष्टः शनकैः पुरः ॥ प्रारब्धयुद्धसंरंभं । बलं विद्याभृतां त-
था ॥ २८ ॥ संनद्धं तद्बलं दृष्ट्वा । दध्याविति नरेंद्रसूः ॥ युद्धार्थं चलिता एते । क्वापि विद्याध-
राः किल ॥ २९ ॥ अस्तु तावदमी यांति । क्व युध्यंते तथा कथं ॥ पादपांतरितः सर्वं । पश्यामि
व्योमचारिणां ॥ ३० ॥ निभृतो यावदेवं स । तस्थौ पश्यन्नभश्चरान् । बंधुदत्तं निजं मित्रं । रुद्धं तै-
स्तावदैक्षत ॥ ३१ ॥ उपलक्ष्य निजं मित्रं । वीरसेनो व्यचिंतयत् ॥ ममैव मित्रमापन्नः । कथमी-
दृग्दशां हहा ॥ ३२ ॥ अथवास्ति न सावस्था । संभवेद्या नरस्य न ॥ पतितस्य दशाकूपे । हंत दै-

व प्रज्ञावतः ॥ ३३ ॥ तावत्पश्यामि कुर्वंति । किमेतेऽस्य नभश्चराः ॥ पश्चादलोचितं यत्त-त्करिष्या-
मि स्वयं त्वहं ॥ ३४ ॥ इतश्च बंधुदत्तस्तै—र्नीतः स्वस्वामिसंनिधौ ॥ नमस्कृत्य निजस्वामी । भणि-
तश्चेति खेचरैः ॥ ३५ ॥ नाशिक्यनगरे पूर्वं । युष्माभिः प्रेरिता वयं ॥ वैताढ्याद्रेरशोकस्य । शुद्ध्यै
बहुमायिनः ॥ ३६ ॥ तत्रास्माभिः श्रुतं देवा—शोकेनोद्यानतो हृता ॥ चंद्रश्रीः सा विमानेन । रा-
वणेनेव जानकी ॥ ३७ ॥ श्रूयते वीरसेनोऽत्र । तस्याः कोऽप्यनुधावितः ॥ स महासुभटो देव । त्रै-
लोक्योत्कृष्टविक्रमः ॥ ३८ ॥ विश्वातिशायिरूपश्रीः । ससत्वः प्रार्थितो जनैः ॥ प्राणानपि ददात्येष ।
कियन्मात्रं धनं पुनः ॥ ३९ ॥ एवं गुणवति तस्मिन् । कुमारे सानुरागिणी ॥ चंद्रश्रीनिर्भरप्रेम—
निघ्ना रक्ततरांतरा ॥ ४० ॥ तस्याः शरीरमात्रं सो—ऽशोको हरतु विद्यया ॥ न पुनस्तस्य शक्तिः
सा । तस्या हरति हृद्यया ॥ ४१ ॥ नाशिक्यपुरलोकेभ्यो । वार्तैषा देव शुश्रुवे ॥ इति ज्ञापयितुं
प्रैषि । सुहृदश्च तवांतिके ॥ ४२ ॥ अस्माभिस्त्वीक्षिता देव । दक्षिणाशा समंततः ॥ मूलशुद्धिरशो-
कस्य । तथापि क्वाप्यवापि न ॥ ४३ ॥ अरण्यानि तथास्माभि—र्भ्रमद्भिर्देव वीक्षितं ॥ चंडिकाभवनं
रक्त-हस्तकैः परिमंडितं ॥ ४४ ॥ अतिरौद्राटवीसंस्थ—मतिभीमपरिच्छदं ॥ अतिभीषमतराकार—भैरवी-

मूर्तिगर्भितं ॥ ४५ ॥ युग्मं ॥ अवतीर्णा वयं तत्र । प्रदोषे देव विस्मयात् ॥ परिभ्रमितुमारब्धा । विद्ययादृश्यमूर्तयः ॥ ४६ ॥ एको योगीश्वरस्तत्र । चामुंडाभुवनांतिके ॥ भ्रमद्भिर्ददृशेऽस्माभि-रघोरगणसंकुलः ॥ ४७ ॥ वेष्टितं योगिनीयोगि-वृंदैस्तं योगिनायकं ॥ विलोक्यादृश्यवपुषः । पार्श्वे तस्य स्थिता वयं ॥ ४८ ॥ इतश्चैष कुतोऽप्यागा-त्पुरुषः खेचरेश्वर ॥ कृतानतिश्च लब्धाशी-र्वादस्तत्रोपविष्टवान् ॥ ४९ ॥ प्रशांतदर्शनोत्पन्न-पक्षेणापृच्छि योगिना ॥ स नरस्त्वं कुतः किं ते । चात्रागमनकारणं ॥ ५० ॥ अनेनापि प्रतिप्रोचे । योगिन्निदं यथातथा ॥ कथनीयं रहोयोग्यं । कार्यं गुरुतरं ननु ॥ ५१ ॥ विसृष्टस्तेन सर्वोऽपि । प्रत्यासन्नो जनः क्षणात् ॥ उपविष्टौ रहो द्वौ तौ । वयं चापि तदंतिके ॥ ५२ ॥ वंचयित्वा यथोद्याना-त्तामशोकेन मायिना ॥ चंद्रश्रीः सा हृता वीर-सेनश्चानुगतो यथा ॥ ५३ ॥ वीरसेनवियोगाग्नि-संतप्तोऽहमपि प्रभो ॥ निजमित्रानुमार्गेण । प्रवृत्तो दर्शनाशया ॥ ५४ ॥ इत्येवमादि यद् वृत्तं । तस्याख्यातं किलामुना ॥ अस्माभिः शुश्रुवे सर्वं । तत्तिरोहितमूर्तिभिः ॥ ५५ ॥ अपृच्छि योगिना देव । विशेषेणैष ना पुनः ॥ चंद्रश्रीर्गाढमासक्ता । वीरसेने किमस्ति भोः ॥ ५६ ॥ अनेनोक्तं प्रभो सोऽसौ । शेखरः सोऽप्यशोककः ॥ प्रताम्यतो मु

धा तस्यां । चित्रन्यस्तस्त्रियामिव ॥ ५७ ॥ वीरसेनगुणैर्बद्ध—मिवास्या हृदयं स्त्रियाः ॥ नरांतरे न
यात्यत्र । योगिनाथैकनिश्चयः ॥ ५८ ॥ अशोकशेखराभ्यां स । मन्मित्रं न समो गुणैः ॥ अका
र्यकरणे भीरु—र्योऽन्यकार्ये कृतादरः ॥ ५९ ॥ योगीश्वर यतो विश्वे । नासाध्यं तव किंचन ॥ त·
था कुरु प्रसादात्ते । यथा मे मित्रसंगमः ॥ ६० ॥ श्रूयंते यन्महात्मानः । परदुःखापहारिणः ॥ दुः·
खितानां ततोऽस्माकं । त्रयाणां मेलनं कुरु ॥ ६१ ॥ इत्युक्त्वैष पपातोच्चै—र्योगिनः पादपद्मयोः ॥
तेनापि भणितं भद्र । समाकर्णय मद्वचः ॥ ६२ ॥ नानयामि यदींद्राणा—मंकात्सुरपतेरपि ॥ मा·
ज्ञासीस्त्वं महासत्व । मम सामर्थ्यमेव तत् ॥ ६३ ॥ अथ प्रत्येति लोकोऽयं । कथं वचनमात्रतः ॥
प्रत्यक्षं वीक्ष्यते याव—न्महतां न विचेष्टितं ॥ ६४ ॥ तवोपरोधनुन्नस्य । ततः कियदिदं मम ॥ चं·
डश्रीसहितं संघ—टयिष्ये सुहृदं तव ॥ ६५ ॥ अप्यहं वेद्मि मित्रं ते । जगत्प्रकटविक्रमं ॥ श्रीका·
मरूपदेशेषु । श्रुतं यद्गुणकीर्तनं ॥ ६६ ॥ हत्वा तं कमलं यस्या । रक्षिते शीलजीविते ॥ सुश·
ब्दा यद्यशोदका । मूर्ता सार्थपतेः प्रिया ॥ ६७ ॥ अद्याष्टमीनिशीथे मे । कर्तव्यं भद्र विद्यते ॥ नि·
र्विघ्नं मंत्रसंसिद्धिः । कृते तस्मिन् भविष्यति ॥ ६८ ॥ साहाय्यं तत्त्वया कार्य—मवश्यं सत्वशालि·

ना ॥ मम पुण्यैररण्येऽस्मिन् । मेलितस्त्वं न संशयः ॥ ६७ ॥ योजयिष्यामि मित्रं ते । सकलत्रं तथा कृते ॥ इत्युक्ते योगिनाथेन । जगादैष पुनः प्रभो ॥ ७० ॥ अस्तु ते कार्यसंसिद्धिः । प्रसादो भगवन् महान् ॥ ममापि मित्रसंयोगो । भवतु त्वत्प्रभावतः ॥७१॥ ततो जगाद योगींद्रो । गच्छावः कार्यसिद्धये ॥ द्वियाममात्ररजनी । न यावद्वीर गच्छति ॥ ७२ ॥ कृतचंडीपदार्चौ द्वा—वप्यात्तोपस्करौ ततः ॥ अतिभीष्मश्मशानोर्व्यां । जग्मतुर्भयवर्जितौ ॥ ७३ ॥ कृत्वा मंडलपूजादि—विधिं तत्र स योगिराट् ॥ जगाद बंधुदत्तं त—मुपविष्टः समाधिना ॥ ७४ ॥ इदं भो योगिनीक्षेत्रं । सप्रत्यूहं भयावहं ॥ भूतराक्षसवेताल—पिशाचशतसंकुलं ॥ ७५ ॥ सावधानस्ततो दिक्षु । सर्वासु क्षिप्तलोचनः ॥ तथा तिष्ठ यथा कस्या—प्यवकाशो भवेन्न हि ॥ ७६ ॥ अनेनोचेऽथ माकार्षी—रशंकां कामपि प्रभो ॥ अत्र स्थितोऽस्म्यहं याव—त्को वक्रं तावदीक्षते ॥ ७७ ॥ तदेकाग्रमनास्त्यक्ता—तंकः साहससंयुतः ॥ त्वं कार्यं साधय स्वीयं । योगीश्वर समाधिना ॥ ७८ ॥ निरातंकस्ततः सोऽस्य । वचनैर्धैर्यसंयुतैः ॥ प्रसाधितान्यकर्तव्यो । योगींद्रो ध्यानमाश्रितः ॥ ७९ ॥ एषोऽपि देव पुरुषः । परितस्तं सुयोगिनं ॥ बंभ्रमीति स्म रक्षार्थं । खड्गपाणिर्विचक्षणः ॥ ८० ॥ भ्रमावेणास्य पुंसः प्रा—

नवन्नो दुष्टदेवताः ॥ निर्विघ्नं ध्यानयोगोऽपि । प्राप कोटिं परां क्रमात् ॥ ७१ ॥ निर्विघ्नं वर्तमाने-
ऽस्मिन् । ध्याने योगीश्वरो यदा ॥ विजेतिस्म बिजीषाग्नि-र्वह्निभिर्न मनागपि ॥ ७२ ॥ गिरिशृंग-
पतद्ग्राव-शब्दांभोमेघवर्जितः ॥ अभूत्खम्खमारावो । दक्षिणस्यां तदा दिशि ॥ ७३ ॥ दधावैष पु-
मान् देव । शब्दं श्रुत्वातिनिर्भयः ॥ माभैस्त्वं योगिनाथेति । प्रजल्पन् दक्षिणामुखः ॥ ७४ ॥ श्या-
मं दारुणदंष्ट्राढ्यं । रोदसीस्तंभसंनिभं ॥ विकरालं पुरः क्षेत्र—पालं तावत्समैक्षत ॥ ७५ ॥ रेरे दु-
ष्टमते सिद्धिं । मामवज्ञाय वांछसि ॥ अधिक्षिपन्निति प्राप । क्षेत्रपालोऽस्य संनिधौ ॥ ७६ ॥ बभा-
षाथ पुमानेष । निर्भयः क्षेत्रपंप्रति ॥ क्रोधं संहर शांतात्मा । भव क्षेत्रपतेऽधुना ॥ ७७ ॥ देवा-
नां तु कथं रोषः । स्फुरत्याराधके जने ॥ यद्येष दुर्विनीतोऽस्ति । तत्स्वयं लप्स्यते फलं ॥ ७८ ॥
निहतं निजदोषैस्तु । कथं घ्नंति महाशयाः ॥ निष्फला आयुधारंभा । भुक्तक्ष्वेडे नरे ननु ॥ ७९ ॥
मनोभक्त्या सुराः साध्याः । स्युस्तास्ते तु करोम्यहं ॥ माकार्षीर्योगिनो विघ्नं । क्षेत्रपाल किमप्यहो
॥ ८० ॥ क्षेत्रपालस्ततः श्रुत्वा । वचोऽस्य विनयान्वितं ॥ ईषत्प्रशांतहृदयो । जगाद पुनरेव तं
॥ ८१ ॥ यादृशं चेष्टते योऽत्र । स तादृग्लभते फलं ॥ स्वीयदुर्विनयेनैषो—ऽयाचितं भक्ष्यमागतं

॥ ९२ ॥ अल्पर्द्धिका वयं क्षुद्रा । देवतास्तुच्छबुद्धयः ॥ पश्यामश्छलमेवात्र । सावधानेषु नेश्महे
॥ ९३ ॥ तद्योग्येष मया लब्धः । पतितः सर्वथा छले ॥ नैवेद्यं मंडलस्थाले । दत्तो दुर्विनयेन मे
॥ ९४ ॥ किंस्वरूपस्त्वया योगी । ज्ञातो यद्येष मुग्ध भोः ॥ साहाय्यं विषमं कर्तुं । प्रतिपन्नं तद-
स्य किं ॥ ९५ ॥ अनेनोचे पुनर्देव । क्षेत्रपालसुरंप्रति ॥ सांप्रतं यद्भवत्यत्र । तदस्त्वेनं त्यजामि
न ॥ ९६ ॥ सगुणे निर्गुणे वापि । स्वीकृतं पालयंति ये ॥ तेषामेवावगच्छामि । सौजन्यं हि म-
हात्मनां ॥ ९७ ॥ क्षेत्रपालो जगादाथ । साहाय्यं निर्गुणेऽपि चेत् ॥ करिष्यसि तदा मृत्युं । ल-
प्स्यसे गुणवानपि ॥ ९८ ॥ ततो रम्यतमं जातं । योगिनैकेन मे किमु ॥ हान्यामस्तु बुद्धदाया ।
उपशांतिः क्षणादपि ॥ ९९ ॥ श्रुत्वा क्षेत्रपतेर्वाक्यं । ज्वलितः कोपवह्निना ॥ करवालकरोऽवादी
—त्ततः स्वामिन्नयं नरः ॥ ३०० ॥ यथा यथा सुर इति । विनयेनाहमर्थये ॥ तथा तथाधिकं त्वं
तु । किमर्थं कोपवानसि ॥ १ ॥ भवंति ते च सद्भावाः । सुरा वा येऽथवा नराः ॥ सामसाध्या न
ते यांति । दंडेनोपशमं पुनः ॥ २ ॥ इत्युक्त्वासिं समुत्पाट्य । क्षेत्रपालस्य सन्मुखं ॥ दधावैष पु
मान् देव । दुर्धर्षस्तेजसा भृशं ॥ ४ ॥ संग्रामतृषितं दृष्ट्वा । ततोऽमुं क्षेत्रपालिकः ॥ करसंपुटम-

श्यस्य—मुत्पाट्याथ जगौ पुनः ॥ ५ ॥ असिना तव किं सिद्धं । किंवा वाक्यैः पुरोदितैः ॥ कः क-
रिष्यति रक्षां ते । धृतस्य करसंपुटे ॥ ६ ॥ ततः कथंचिदेतेन । स्थितेन करसंपुटे ॥ भिन्ना दा-
रुणदंष्ट्रस्य । छिद्रेण रसना प्रभो ॥ ७ ॥ यावत्पिनष्टि कोपेन । कणशः क्षेत्रपः प्रभो ॥ आरोह-
च्छिरसा ताव—न्निर्गत्यास्य कथंचन ॥ ८ ॥ यावत्प्रसारयत्यूर्ध्वं । पाणिं स्कंधे ततो ययौ ॥ स्कंधा-
च्छीर्षं पुनः प्राप । प्रहरन्निशितासिना ॥ ९ ॥ द्वाभ्यामपि कराभ्यां स । यावद् गृह्णात्यमुं समं ॥ वि-
पुलं कर्णयोश्छिद्रं । प्रविवेशैष ना तदा ॥ १० ॥ संचरन् कृमिवच्छिद्रां—तरेष्वेष नरः प्रभो ॥ धू-
नयित्वा शिरस्तेन । कथंचित्पातितो भुवि ॥ ११ ॥ इतश्च सिद्धसाध्यः स । योगींद्रः सहसोत्थि-
तः ॥ दधावे क्रोधविवशः । क्षेत्रपालंप्रति स्वयं ॥ १२ ॥ तत्तेजोऽसहमानः स । क्षेत्रपालः पलायि-
तः ॥ न जाने क्वापि वेगेन । गतो विद्याधरेश्वर ॥ १३ ॥ अपश्यन् योगिनाथस्तं । बनाष इत्यमु
नरं ॥ संजाता मंत्रसंसिद्धिः । सुजन त्वत्प्रभावतः ॥ १४ ॥ यदीह नाभविष्यस्त्वं । ततोऽस्य करसं-
पुटे ॥ अलप्स्ये ह्यपरित्राणो—ऽतिथिभावं यमश्रियः ॥ १५ ॥ अलमुक्त्वा ततो बाह्य—वस्तुभिः किं
ब्रवीम्यहं ॥ क्रीतं स्वजीवितव्येना—यत्तं ते मेऽपि जीवितं ॥ १६ ॥ अनेनोचेऽथ भगवं—स्तव वि-

श्वोपकारिणः ॥ जीवितं वर्धतां मेऽपि । मित्रेणास्तु समागमः ॥ १७ ॥ योगी जगाद तेऽद्यापि । बं-
धुदत्तास्ति संशयः ॥ अग्निं प्रज्ज्वालयाशोक—शेखरौ प्राग्जुहोमि तौ ॥ १८ ॥ कार्यं करोमि नि-
र्विघ्नं । हुतयोस्तु तयोर्द्वयोः ॥ यस्मात्तौ बहुविद्याभिः । समर्थौ सिद्धमंत्रकौ ॥ १९ ॥ तत्त्वमानय का-
ष्ठानि । चिताग्निं चानयाम्यहं ॥ इत्युक्त्वा स्वस्वकार्याय । जग्मतुस्तावुभावपि ॥ २० ॥ देवास्माकं भ
यं जातं । वचसा योगिनस्ततः ॥ प्रत्यक्षयोगिशक्तीनां । चिंतनं चेति चेतसि ॥ २१ ॥ हूयते चेद-
शोकोऽत्र । केवलस्तद्वरं पुनः ॥ यदस्माकं विभुरपि । हूयते तदशोभनं ॥ २२ ॥ विध्यापितस्ततोऽ-
स्माभि—र्जलेनाशु चितानलः ॥ पवनंजयेन योगी । प्रक्षिप्तश्चांबुधेर्जले ॥ २३ ॥ दृष्टोऽस्माभिर्भ्रम-
न्नेषो—ऽप्यरण्ये काष्ठहेतवे ॥ अत्र नास्ति रिपुः कोऽपी—ति द्रुमालंबितासिकः ॥ २४ ॥ ज्ञात्वाव-
सरमस्माभिः । सर्वैः संभूय खेचरैः ॥ महाबलोऽप्ययं बद्धो । नरः सबलरज्जुभिः ॥ २५ ॥ विलो
क्यास्मानयं देव । कुर्वन् वक्रोष्ठिकां मुखे ॥ पश्चाद्बद्धमहाबाहुः । पार्श्वेऽस्माकं सुखं स्थितः ॥ २६ ॥
तव देवापकारीत्या—नीतोऽस्माभिरयं पुमान् ॥ प्रमाणं सांप्रतं त्वं तू—क्त्वेति ते मौनमाश्रिताः
॥ २७ ॥ श्रुत्वेति बंधुदत्तस्य । वृत्तांतं हृदये तदा ॥ वीरसेनः कुमारः स । भृशं दूनो व्यचिंतयत

॥ २८ ॥ हाहा मम वियोगेन । निरपेक्षः स्वजीविते ॥ अरण्ये कथमेकाकी । बंभ्रमीतिस्म मत्सुहृत् ॥ २९ ॥ विश्वोपकारिणां प्रायो । नराणामीदृश ज्ञुवि ॥ उत्पत्तिर्ज्ञायते चिंता-मणीनामिव पुण्यतः ॥ ३० ॥ सर्वथा तन्मयाकारि । सुंदरं न यदस्य तु ॥ अनाख्याय विनिर्यात—श्चंडश्रीदर्शनाशया ॥ ३१ ॥ यद्भाव्यं तत्तथैव स्या—दथवा चिंतितेन किं ॥ सांप्रतं शेखरस्यास्य । प्रतिवाक्यं शृणोम्यहं ॥ ३२ ॥ इतश्च खेचराधीशः । शेखरो वाक्यमब्रवीत् ॥ तद्वाक्यानिलसंदीप्त—क्रोधवह्निदुरीक्षणः ॥ ३३ ॥ रे पाप रक्षति त्वां यो । न तं पश्यामि संप्रति ॥ स्वक्रोधानलज्वालासु । त्वामेवात्र जुहोम्यहं ॥ ३४ ॥ पक्षवत्कीटिकानां हि । मृत्युकाले कुबुद्धयः ॥ ज्ञायंतेऽत्र मनुष्याणां । तव दोषोऽथवा किमु ॥ ३५ ॥ श्रुत्वा शेखरदुर्वाक्यं । बंधुदत्तो जगावथ ॥ रक्षाक्षमं सुमित्रं मे । भुजादंडावुभावथ ॥ ३६ ॥ शेखरः स्माह दोर्भ्यां भोः । पूर्वं तत्किं न रक्षितः ॥ बध्ध्वा त्वं यदिहानीतो—ऽमीभिश्चौरपुमानिव ॥ ३७ ॥ बंधुदत्तस्ततोऽवोच—त्सोढव्यं कार्यमिछता ॥ पुंसा कार्पटिकेनेव । सर्वं बंधवधादिकं ॥ ३८ ॥ तथाहि—

शालिग्रामाभिधो ग्रामो । धनधान्यसमाकुलः ॥ दक्षिणापथदेशस्य । ज्ञूभागे वर्तते ज्ञुवि

॥ ३९ ॥ धनपालो वणिक्तत्र । बहुसंपत्समन्वितः ॥ बभूव कार्तिकस्तस्या—भिधया तनयस्तथा ॥ ४० ॥ सुखेन तस्थतुस्तत्र । पितापुत्रावुभावपि ॥ तैलतंदुलवस्त्रादि—क्रयविक्रयतत्परौ ॥ ४१ ॥ अथान्यदा समीपस्थं । ग्रामं लुंटाकलुंटितं ॥ शालिग्रामजनो दृष्ट्वा । भयभीतोऽभवद्भृशं ॥ ४२ ॥ श्रेष्ठ्युवाच ततः पुत्रं । वत्सैतद् द्रविणं बहु ॥ क्वचिदावां निक्षिपावो । गुप्तं स्थानं विलोकय ॥ ४३ ॥ लुंटाकलुंटिते ग्रामे । खनित्वार्थः स्वयं किल ॥ निक्षिप्तोऽपि गृहे दूरं । भूमध्ये तस्करैर्हृतः ॥ ४४ ॥ निक्षिपावस्ततो वत्स । निजगेहाद्बहिर्धनं ॥ इत्युक्ते जनकेनाथ । जगाद तनयः पुनः ॥ ४५ ॥ ग्रामस्यास्य बहिस्तात । शून्यं देवकुलं महत् ॥ विद्यते स्थापयावोऽर्थं । तस्मिन्नावां रहो निशि ॥ ४६ ॥ इत्यालोच्य गृहीत्वार्थं । जग्मतुस्तावुभावपि ॥ शून्यदेवकुले तत्र । रात्रौ ज्ञातौ न केनचित् ॥ ४७ ॥ गर्भगेहं खनित्वार्थं । स्थापयित्वा प्रयत्नतः ॥ न जानाति यथा कोऽपि । तथा कृत्वा च निर्गतौ ॥ ४८ ॥ जनकः स्माह निःशेषं । पश्य देवकुलं सुत ॥ मास्तु कार्पटिकः कोऽपि । पथिको वात्र पूरुषः ॥ ४९ ॥ सुतेन पश्यता तत्र । दृष्टः कार्पटिकः पुमान् ॥ निश्चेष्टो मृतकमिव । पतितः कोऽपि कोणके ॥ ५० ॥ आकार्य पितरं तेन । दर्शितेऽथ पितावदत् ॥ उत्थापयेति पुत्रेणो—त्था-

पिनोऽपि स नोत्थितः ॥ ५१ ॥ श्वासोच्छ्वासविहीनं तं । विलोक्य कार्तिकोऽवदत् ॥ निर्जीवोऽयं मृतस्तात । गच्छावो निजवेश्मनि ॥ ५२ ॥ पिता जगाद यद्येत—न्मृतकं वत्स तन्न किं ॥ उच्छून-मथ चैतस्य । दुर्गंधो दुःसहो न किं ॥ ५३ ॥ मम बुद्धिं कुरु त्वं त—देतस्य छिंधि नासिकां ॥ निर्विकल्पं सुतेनाथ । निःकृता तस्य नासिका ॥ ५४ ॥ तथापि निश्चले तस्या—ऽब्रुवाणे जनकोऽब्रवीत ॥ वत्सैतस्य नरस्याशु । छिंधि कर्णावुभावपि ॥ ५५ ॥ तथा कृते विनिश्चित्य । मृतकं पितृनंदनौ ॥ सुप्तौ तौ गृहमागत्यो—त्तस्थौ कार्पटिकः पुनः ॥ ५६ ॥ खनित्वा स्थानकं तेना—कृष्टं तद् द्रविणं ततः ॥ गृहीत्वा स्तोकमन्यच्च । निक्षिप्तं काननांतरे ॥ ५७ ॥ तस्यैव श्रेष्ठिनो हट्टे । प्रातः कार्पटिको गतः ॥ कनकमर्पयामास । वस्तूनां क्रयहेतवे ॥ ५८ ॥ उपलक्ष्य निजं सर्वं । स्वाभिज्ञानैश्च निश्चितं ॥ निर्विकारमनाः श्रेष्ठी । जगौ कार्पटिकंप्रति ॥ ५९ ॥ नास्ति साहसिकः कोऽपि । त्वया तुल्यो महीतले ॥ कार्पटिक कथं सोढं । कर्णनासाविकर्तनं ॥ ६० ॥ उक्तं कार्पटिकेनाथ । श्रेष्ठिन्नेतद्धि दुःसहं ॥ किंतु नास्तीह तद्यन्न । कार्यार्थी सहते नरः ॥ ६१ ॥ ततस्त्वमपि मैवं रे । शेखरान्यद्विकल्पय ॥ कार्यार्थिना मयाप्येव—मेवात्मा नियंत्रितः ॥ ६२ ॥ इतश्च स्वामि-

रेकार—वचः श्रुत्वातिदुःश्रवं ॥ सर्वैलक्ष्यमिवाशेषं । शेखरास्थानमक्षुभत् ॥ ६३ ॥ युगपत्सुभटैः स-
र्वै-र्बंधुदत्ते महौजसि ॥ क्रोधवह्नेरिव ज्वालाः । प्रक्षिप्ताः शोणदृष्टयः ॥ ६४ ॥ ज्वालामुखादिविद्याभृ
—त्सुभटेषु समंततः ॥ प्रक्षुब्धेषु जगादोच्चै—र्महाभैरवखेचरः ॥ ६५ ॥ रे बंधुदत्त कस्यैवं । बलेन
त्वं प्रजल्पसि ॥ एतावतैव मत्तो य—स्त्रुटितः क्षेत्रपालतः ॥ ६६ ॥ कर्णतालतलाघाता—न्मशक-
स्त्रुटितो यदि ॥ तत्किं शक्तिर्गजेंद्रस्य । मशकानां न मारणे ॥ ६७ ॥ सावष्टंभं वचः श्रुत्वा । भै-
रवस्येति गर्वितं ॥ उपहास्यास्पदं कुर्वन् । सुभटांस्तानुवाच सः ॥ ६८ ॥ अरे ज्वालामुखमुख्याः ।
सर्वे शृणुत मद्वचः ॥ किं भापयथ संग्राम—शूरं मां भयभाषितैः ॥ ६९ ॥ इहासिधेनुखड्गादि—
मुष्ट्यादानोच्चहुंकृतैः ॥ क्षुभ्यंति बालका बाढं । न पुनः सुभटा जनाः ॥ ७० ॥ यावन्न तीक्ष्णखड्गा-
नां । प्रहारा हृदये स्थिताः ॥ रिपूणां समरे तावद् । दृष्टा न स्युः पराङ्मुखाः ॥ ७१ ॥ बलेन भा-
षसे कस्ये—त्युक्तं भैरव यत्त्वया ॥ तदाकर्णय भाषे य—द्बलेन कथयामि तं ॥ ७२ ॥ योऽस्तीह
जगति ख्यातो । दुःस्थानां कल्पपादपः ॥ लक्ष्मीवल्लीमहाकंदो । मेदिनीकर्णकुंडलः ॥ ७३ ॥ अरि-
कुंभिघटासिंहो । वीरचक्रशिरोमणिः ॥ कमलकेतुकांतानां । गुरुर्वैधव्यकर्मणि ॥ ७४ ॥ तस्य श्रीश्री-

रसेनस्य । बलेनाहं ब्रवीमि जोः ॥ क्षेत्रपालवचो यच्च । प्रोक्तं तदपि नोचितं ॥ ७५ ॥ परोपकारशूराणां । तृणतुल्याः सुमानिनां ॥ क्षेत्रपालादयोऽपि स्यु—र्न मे मृत्युभयंकराः ॥ ७६ ॥ चतुर्भिः कलापकं ॥ अबलोऽहं बली शत्रु—र्न तेषामिति कल्पना ॥ स्वजीवं सत्वसंयुक्ता—स्तोलयंति तृणेन ये ॥ ७७ ॥ शेखरः स्माह चंडश्री—र्वीरसेनोऽपि सोऽधुना ॥ लब्धेनानेन लब्धं हि । सर्वं ज्वालामुखात्मजैः ॥ ७८ ॥ पश्यास्य गाढधृष्टत्वं । निःशंकं यत्पुरो मम ॥ अस्मन्मित्ररिपोर्नाम । गृह्णात्येषोऽसुखाकरं ॥ ७९ ॥ नामापि वीरसेनस्य । दुनोति हृदयं मम ॥ तद्गुणश्रवणं यत्तु । मन्ये मरणमेव तत् ॥ ८० ॥ इतः पवनकेतुः स । स्वसैन्यैश्छादयन् दिशः ॥ संप्राप्तः सहसा तत्र । भ्रातृवैरविशुद्धये ॥ ८१ ॥ मिलितेषु तयोस्तत्र । बलेष्वंतरितो द्रुमैः ॥ वीरसेनो निजे चित्ते । चिंतयामास साहसी ॥ ८२ ॥ अमीभिर्बहुभिः किं मे । सिंहस्येव शृगालकैः ॥ पश्यामि तावदेतैः किं । बंधुदत्ते विधीयते ॥ ८३ ॥ इति ध्यायति वीरेऽस्मिन् । बंधुजीवा नभोऽध्वनः ॥ सहसोत्तीर्य तत्रागा—च्चंदनद्रुमकानने ॥ ८४ ॥ ससंभ्रमं समुत्थाय । नत्वा तां विनयेन सः ॥ पप्रच्छ कुशलोदंतं । कुतश्चागमनं तव ॥ ८५ ॥ ततः प्रोवाच सा वत्स । वैताढ्ये यावदंबुधेः ॥ गता तावदहं स्मेक्षे । न-

न्गो विद्याधरावृतं ॥ ८६ ॥ नानाचिह्नैर्विमानौघै—र्वादित्रैर्विविधैस्तथा ॥ ज्ञातं पवनकेतोस्त—त्क-
टकं प्रस्थितं क्वचित ॥ ८७ ॥ अदृश्यया मया विद्या—शक्त्या खेचरजल्पितैः ॥ निश्चितं वीरसेन-
स्यो—परि प्रस्थितमेतकं ॥ ८८ ॥ वैरी पवनकेतुः स्या-ज्ज्ञातृवैरेण तत्तव ॥ एकांगनाभिलाषेण ।
शेखरः सोऽपि शात्रवः ॥ ८९ ॥ हत्वा हठेन तं वीरं । ग्रहीष्यावस्तदंगनां ॥ इत्येतावागतौ सर्वा-
रंभेणात्र तवोपरि ॥ ९० ॥ एकाकिनापि वीरेण । जित्वाशोकं पयोनिधौ ॥ निक्षिप्तापि गृहीता सा ।
चंद्रश्रीर्येन मानिना ॥ ९१ ॥ नैकेन पवनेनैष । जीयते शेखरेण वा ॥ एकत्र मिलितावेतौ । का-
रणेनामुनाधुना ॥ ९२ ॥ मत्वैवं त्वामहं वत्स । पश्यंतीह समागता ॥ सावधानस्ततस्त्वं तु । प्रती-
कारं विचिंतय ॥ ९३ ॥ अन्यच्च खेचरो विद्यु—त्गतिनामा मया सुत ॥ वेताढ्ये प्रेषितो ह्यस्ति ।
स्वसुतज्ञानहेतवे ॥ ९४ ॥ वीरसेनोऽवदन्मातृ—हृदयानि स्वभावतः ॥ स्नेहलानि ततः साधु । कृतं
यत्त्वमिहागता ॥ ९५ ॥ चंद्रपीडसुवेगौ तु । मनःपीडां करिष्यतः ॥ तवात्रागमनेनैत—न्मनाग-
नुचितं कृतं ॥ ९६ ॥ बहुनोक्तेन किं मात—स्तव पुत्रोऽस्मि नो यदि ॥ बले द्वे अपि जित्वाशु ।
न गृह्णामि जयश्रियं ॥ ९७ ॥ यथा न लभ्यसे केना—प्यंब त्वं जलधेस्तटे ॥ गत्वा देवीं तथा रक्ष ।

याव कुर्वे द्विषां जयं ॥ ९८ ॥ उवाच बंधुजीवाथ । स्त्रीमात्रं मैव विद्धि मां ॥ चक्रेश्वरीबलेनात्र । नासाध्यं भुवनेऽपि मे ॥ ९९ ॥ अस्तु त्वामहमेवैषां । बलानां व्योमचारिणां ॥ तृणानां वह्निकीलेव । न वत्स प्रभवामि किं ॥ ४०० ॥ त्वं शत्रून् जय निःशंकं । ततो वत्स बलेन मे ॥ विचित्रयशसः पुत्र्याः । कोऽपि सन्मुखमीक्षते ॥ १ ॥ कृत्वा कुमारमेवं सा । सावष्टंभवचःस्थिरं ॥ बंधुजीवा जगामाशु । चंद्रश्रीनिकटे ततः ॥ २ ॥ इतो वीरपुरे पूर्वं । यः कुमारेण बोधितः ॥ ज्ञात्वावसरमायात—स्तत्र शीघ्रं स राक्षसः ॥ ३ ॥ कुमारो जगदे तेन । बहुमानपुरस्सरं ॥ त्वमेव निःसहायानां । साहाय्यं कुरुषे भुवि ॥ ४ ॥ दासोऽस्म्यहं तव क्रीतः । करुणाद्रविणोत्करैः ॥ आदेशं देहि मे वीर । खेचरावस्करोघ्नने ॥ ५ ॥ श्रुत्वा तद्वचनं वीर—सेनः सप्रणयं जगौ ॥ गुरुत्वस्योचितं यत्त—ज्जल्पितं राक्षस त्वया ॥ ६ ॥ तवासामान्यसौजन्यं । रक्षोराज ब्रवीमि किं ॥ त्वदवष्टंभतो धूलि—मिव मन्ये द्विषद्गणं ॥ ७ ॥ परस्परं तयोरेवं । यावज्जल्पः प्रवर्तते ॥ पप्रच्छ शेखरस्ताव–देवं पवनकेतुना ॥ ८ ॥ क एष पुरुषः कस्य । बद्धः कार्येण केन वा ॥ वृत्तांतो बंधुदत्तस्य । शेखरेणोदितस्ततः ॥ ९ ॥ पवनः स्माह यद्यस्य । विद्यते गर्व ईदृशः ॥ इदानीमेव तत्किं न । भट-

त्वं दर्शयत्ययं ॥ १० ॥ श्रुत्वेति सुभटो बंधु—दत्तः स्वभुजबंधनं ॥ त्रोटयामास संग्राम—रसरोमां-
चितः क्षणात् ॥ ११ ॥ आस्फाल्याथ भुजादंडं । त्रासिताध्वनभश्चरः ॥ बभंज मुकुटं तस्य । पादे-
नोत्प्लुत्य रंहसा ॥ १२ ॥ वेष्टितं बहुभिस्तत्र । विद्याधरभटैस्ततः ॥ वेगेनानाययामास । वीरस्तं प्रे-
ष्य राक्षसं ॥ १३ ॥ बंधुदत्तोऽथ तं दृष्ट्वा । कुमारं स्फारलोचनं ॥ हर्षबाष्पजलक्लिन्नं । ननामास्य
पदद्वयं ॥ १४ ॥ वक्षःस्थलोपपीडं तं । कुमारः सुहृदं निजं ॥ प्रवेशयन्निवालिंग—दतिस्नेहेन वक्ष-
सि ॥ १५ ॥ चंद्रश्रीर्विक्षिता क्वापी—ति पृष्टे सुहृदा ततः ॥ चंद्रश्रीलाभवृत्तांतं । सर्वं संक्षेपतोऽवदत
॥ १६ ॥ कुमारो यावदेवं तु । भाषते तावदुत्सुकाः ॥ बंधुदत्तमपश्यंतो । जगदुः खेचरा भटाः
॥ १७ ॥ आहत्य स्वामिनं मूर्ध्नि । प्रणष्टः काकवत्कथं ॥ आवेष्टितोऽपि तन्नून—मयं विद्याबलोत्क-
टः ॥ १८ ॥ प्राप्नुमः सांप्रतं चेत्त—त्पापं दर्शितविक्रमं ॥ कुर्मस्तस्यैव योग्यं त—द्बहुना जल्पितेन
किं ॥ १९ ॥ जल्पत्सु खेचरेष्वेवं । बंधुदत्तोऽवदत्पुनः ॥ अत्रैव देव तिष्ठ त्वं । युध्ये यावदहं रणे
॥ २० ॥ कुमारेण ततोऽभाणि । रक्षोराज रणांगणे ॥ मित्रस्य कुरु साहाय्य—मायुधानि च पूरय
॥ २१ ॥ राक्षसः स्माह सेनानी—र्दीर्घजंघाभिधोऽस्ति मे ॥ अनेन सह यात्वेषो—ऽहं तिष्ठामि त्वदं-

तिके ॥ २२ ॥ रक्तःसंपादितानेक—मनश्चिंताधृतायुधः ॥ तर्जयन् बंधुदत्तोऽथ । प्राप संग्रामभूमिकां
॥ २३ ॥ रेरे विद्याधरा यूयं । समं प्रहरतेछया ॥ एकेन हक्किताः सर्वे । बंधुदत्तेन दोष्मता ॥ २४ ॥
समकालं विनिर्मुक्तै—र्नानाविद्याधरायुधैः ॥ बंधुदत्तस्तिरोधायि । घनवृंदैरिवाचलः ॥ २५ ॥ वेष्ट-
यित्वा चतुर्दिक्षु । स तैर्विनिहतस्तथा ॥ आपादं तं शिरो याव—द्यथाभूदायुधोत्करः ॥ २६ ॥ हर्ष-
कोलाहलं श्रुत्वा । ततो विद्याभृतां क्षणात ॥ धूनयित्वायुधव्रातं । बंधुदत्तो विनिर्ययौ ॥ २७ ॥ वि-
लोक्य बंधुदत्तं त—मदृष्टव्रणलोहितं ॥ खेचराणां बलं सर्वं । बभूवातंकसंकुलं ॥ २८ ॥ ततोऽसौ
धनुरादाय । कुर्वन्नाराचदुर्दिनं ॥ प्रवासं राजहंसानां । मेघकाल इवादिशत् ॥ २९ ॥ एकेन मुष्टि-
ना तेन । मुंचतासंख्यमार्गणान् ॥ एकेनापि सशल्यो यो । न कृतः सुभटो न सः ॥ ३० ॥ चतु-
र्थांशे बलस्यास्य । बंधुदत्तेन पातिते ॥ अपासरद्बलं सर्वं । नीरं वारिनिधेरिव ॥ ३१ ॥ दृष्ट्वा प-
लायमानं त—त्पवनस्य बलाधिपः ॥ वज्रबाहुः समुत्तस्थौ । वज्रकर्कशविग्रहः ॥ ३२ ॥ उवाच बंधु-
दत्तं स । रेरे तिष्ट पुरो मम ॥ निःशेषं येन दोर्दर्प—मधुनैव हरामि ते ॥ ३३ ॥ इत्युक्त्वा तेन
चत्वार—स्तीक्ष्णा मुमुचिरे शराः ॥ आकर्णाकृष्टकोदंडे । संधायासुहृदंप्रति ॥ ३४ ॥ हसित्वा बंधु-

दत्तेना—प्यष्टौ तंप्रति सायकान् ॥ विमुच्यार्धैः शरांश्छित्वा । हतोऽर्धैर्हृदये रिपुः ॥ ३५ ॥ ततः षो-
म्श वक्त्रेण । बाणा मुमुचिरे क्रुधा ॥ कोदंडं खंडयामास । बंधुदत्तस्ततो द्विषः ॥ ३६ ॥ छिन्ने ध-
नुषि सेनानी—र्गदामादाय सत्वरं ॥ मुमोच बंधुदत्तेऽस्मिन् । क्रोधाध्मातो महौजसि ॥ ३७ ॥ अ-
नुभूय गदाघाता—न्मूर्छामागतचेतनः ॥ रक्षःप्रभावतः प्राप । बंधुदत्तोऽथ मुद्गरं ॥ ३८ ॥ आहत्य मु-
द्गरेणोच्चै—र्बंधुदत्तेन पातितः ॥ सेनानीः खेचराणां च । हाहाकारः समुत्थितः ॥ ३९ ॥ वज्रबाहौ ह-
ते तस्मिन् । सेनानाथे महौजसि ॥ गुरुर्वैरीति चित्तेऽभू—च्चमत्कारः खचारिणां ॥ ४० ॥ इतश्च खे-
चराधीश—शेखरादेशनोदितः ॥ ज्वालामुखः समुत्तस्थौ । द्वितीयः सैन्यनायकः ॥ ४१ ॥ प्रज्ज्वल-
ज्ज्वलनज्ज्वाला—भास्वरं शस्त्रतेजसा ॥ दूरे योद्धुमपि द्रष्टुं । बंधुदत्तो न तं क्षमः ॥ ४२ ॥ बंधु-
दत्तस्ततोऽवोच—द्रक्षश्चित्रमिदं किमु ॥ एष सन्मुखमायाति । प्रलयानलवन्मम ॥ ४३ ॥ रक्षः स्मा-
ह स्थिरं तिष्ठ । त्वत्तेजसि पतिष्यति ॥ प्रभावेण ममैषोऽपि । पतंग इव पावके ॥ ४४ ॥ मुखेनो-
द्वमता तेन । ज्वालाजालमनारतं ॥ बाहुभ्यां विधृतो बंधु—दत्तः पीडनवांछया ॥ ४५ ॥ बंधुदत्ते धृ-
ते दत्त—तालं दुर्जनखेचरैः ॥ अन्योन्यं जहसे बद्धो । बद्ध इत्युक्तवादिभिः ॥ ४६ ॥ तस्यायोन-

रकल्पं द्रा—ग्दत्तदाहं मुमोच तं ॥ ज्वालामुखो धृतमपि । बंधुदत्तं महाभटं ॥ ४७ ॥ बंधुदत्ते वि-
मुक्तेऽपि । राक्षसस्यानुभावतः ॥ गृहीत इव कल्पांता—ग्निना ज्वालामुखोऽभवत् ॥ ४८ ॥ प्रज्ज्व-
लज्ज्वलनज्ज्वाला-शतज्ज्वालितविग्रहः ॥ स्वामिनो लज्जित इव । भस्मराशिश्च सोऽभवत् ॥ ४९ ॥
ज्वालामुखे भटे तस्मिन् । भस्मशेषे कृतेऽमुना ॥ आक्रंदशब्दमुत्तस्थौ । खेचराणां बलेऽखिले
॥ ५० ॥ विज्ञाय बलमालोक्य । यमदंष्ट्रो महाभटः ॥ अभ्रमयत्पदग्राहं । बंधुदत्तं नभोंतरा ॥ ५१ ॥
भ्रमयित्वा तमूर्ध्वं स । यावदाहंति भूतले ॥ सरोषं वीरसेनेन । तावद् भाक्तर्जितो यमः ॥ ५२ ॥
वीरसेनावलोकेन । विस्मयोद्भ्रांतलोचनैः ॥ विमुक्ता यमदंष्ट्रस्य । जीविताशा नभश्चरैः ॥ ५३ ॥
दूरादेव ततो मुक्त्वा । मित्रं वीरस्य सन्मुखं ॥ अभिधावन् स तेनोच्चै-र्भिन्नः कुंतेन वक्षसि ॥ ५४ ॥
कुंतं भंक्त्वा बलेनोच्चै—रपसृत्य ततो यमः ॥ उत्पपात नभोमार्गे । खड्गखेटकसंयुतः ॥ ५५ ॥ शी-
घ्रमुत्पततश्चापे । संधायार्धेंदुसायकं ॥ यमदंष्ट्रस्य चिच्छेद । वीरसेनोऽथ मस्तकं ॥ ५६ ॥ पातिते
वीरसेनेन । यमदंष्ट्रे महाभटे ॥ क्रुधा खेचरसैन्यानि । प्रधावंतिस्म तंप्रति ॥ ५७ ॥ स्वस्वकार्योत्सु-
कस्वांता—वुभौ पवनशेखरौ ॥ अंगे धत्तस्म सन्नाहं । वीरसेने विलोकिते ॥ ५८ ॥ लघुबांधववैर-

चेरेंद्रावमुंचतां ॥ प्रत्यस्त्रेण निराचक्रे । कुमारस्तत्तदंजसा ॥ ८३ ॥ दिव्यास्त्रेषु समस्तेषु । निष्फलेषु कृतेष्वथ ॥ खेटकासिकरो वीरः । पवनस्य पुरोऽवदत ॥ ८४ ॥ रेरे पवन निर्लज्ज । तव भ्राता मया हतः ॥ नेस्यामि त्वामपीदानीं । यच्छक्तोऽसि कुरुष्व तत् ॥ ८५ ॥ इति प्रोक्ते कुमारेण । क्रोधाग्नेर्धूमसन्निजः ॥ करवालः समाकृष्टः । कालः पवनकेतुना ॥ ८६ ॥ खड्गं कुमारशीर्षेऽथ । धावित्वा तेन वाहितं ॥ असिघातः कुमारेण । दक्षत्वेनानुवंचितः ॥ ८७ ॥ अपसृत्य सितेनाशु । कृपाणेन नृपात्मजः ॥ पवनस्य शिरश्छेदं । चकारांबुजनालवत् ॥ ८८ ॥ पतिते पवने रोषा—रुणाक्षः शेखरो नृपः ॥ फलकासिकरो वीर—सेनंप्रत्याशु धावितः ॥ ८९ ॥ कुमारेण ततोऽन्नाणि । हसित्वा शेखरो नृपः ॥ माधावीः स्थिरमेहि त्वं । कचिदास्फाल्य भंक्ष्यसे ॥ ९० ॥ या मुष्टिग्राह्यमध्या मे । श्यामांगी सुपयोधरा ॥ पतत्वसिलता सैषा । चंद्रश्रीर्न च ते हृदि ॥ ९१ ॥ तद्वाक्योद्दीपितक्रोध—वह्निर्दष्टाधरस्ततः ॥ कुमारस्याक्षिपत्खड्ग—प्रहारं शेखरो नृपः ॥ ९२ ॥ वंचयित्वा कुमारोऽथ । यावदाहति मूर्धनि ॥ उत्प्लुत्य तावदेषोऽरिः । कृपाणस्य पुरः स्थितः ॥ ९३ ॥ कृपाणाग्रे क्षणं तस्थौ । धारयोरुन्नयोः क्षणं ॥ रजोवत्पवनोध्धुतं । विचचार स शेखरः ॥ ९४ ॥ कृपाणविषयं याव—

न्नायात्येप कथंचन ॥ तावद्वीरेण मुक्तोऽसि—रकिंचित्करभृत्यवत ॥ ९५ ॥ मुक्त्वासिं खेचरोऽप्या-
शु । पादे जग्राह नृपजं ॥ उत्पपात च वेगेन । भ्रमयन् गगनाध्वनि ॥ ९६ ॥ शृण्वन् हाहारवं
व्योम्नि । सुराणां तद्भुजांतरे ॥ प्रविश्यैकेन हस्तेन । वीरो जग्राह तं पदे ॥ ९७ ॥ यावत्क्षुरिकया
हंति । द्वितीयेन च पाणिना ॥ नमो जिनेभ्य इत्युच्चैः । शेखरस्तावदूचिवान् ॥ ९८ ॥ नमस्कारस-
मुच्चारा—च्छेखरं तं नरेंद्रसूः ॥ ततः साधर्मिकं ज्ञात्वा । मिथ्यादुःकृतमब्रवीत् ॥ ९९ ॥ अवातरत्ततो
वीरः । शेखरेण समं भुवि ॥ आश्वासयन्निजं मित्रं । सदयं खेचरानपि ॥ ५०० ॥ मिलितै रणरंगे-
ण । गगनेऽमरकिंकरैः ॥ पुष्पवृष्टिरमोचि श्री—वीरसेनभटोपरि ॥ १ ॥ इतश्च विहिताशेष—ग-
गनाभोगमंबरे ॥ अशोकखेचरेंद्रस्य । सकलं बलमाययौ ॥ २ ॥ दृष्ट्वा विद्याधराणां त—त्सैन्यं
नभसि सूरसूः ॥ शत्रुसैन्यमिति ज्ञात्वा । करे कोदंडमग्रहीत ॥ ३ ॥ चापमारोप्य वेगेन । स्थलां-
भोधरवत्तदा ॥ ऊर्ध्वं नाराचधाराभि—र्ववर्ष क्षितिपांगजः ॥ ४ ॥ एकेन मुष्टिना मुक्तै—रनैके-
स्तीक्ष्णसायकैः ॥ जर्जरांगं बलं पश्चा—त्खेचराणामपासरत ॥ ५ ॥ अशोकः सभयं नश्यद् । दृ-
ष्ट्वा तद्बलमात्मनः ॥ पप्रच्छ भो भयं किं वो । यूयं येनेति नश्यथ ॥ ६ ॥ जगदे तैस्ततो देव । को-

स्य । विशुद्धिं विदधाम्यहं ॥ इति धावन् क्रुधा सैन्य—सुभटैः पवनो धृतः ॥ ५९ ॥ दध्यौ शेख· रराजोऽपि । चंद्रश्रीप्राप्तवांछया ॥ हत्वैनं सुभटं पश्चा—दुद्वहामि तदंगनां ॥ ६० ॥ स्वमनोरथमा· नेने—ति विकल्पयतोस्तयोः ॥ कुमारेण समाख्यायी—दं वचो राक्षसेश्वरः ॥ ६१ ॥ बहुभिर्मारि· तैरेभिः । किं रक्षराज खेचरैः ॥ वैरं ममास्ति पवन—शेखराभ्यां न चापरैः ॥ ६२ ॥ समाख्याहि द्वयोः कोऽत्र । पवनः शेखरश्च कः ॥ अधुनैव यथा कुर्वे । निर्वाहं किमु जल्पितैः ॥ ६३ ॥ रक्षो जगाद वामेन । पवनो हारभूषितः ॥ कोटीराभरणो मूर्ध्नि । दक्षिणेन तु शेखरः ॥ ६४ ॥ ततो विज्ञाय वी- रेण । राक्षसेंद्रसमर्पितः ॥ शरदूतस्तयोः प्रैषि । कनकाक्षरभूषितः ॥ ६५ ॥ किममीभिर्भटैर्वैरं । हं- हो पवनशेखरौ ॥ ममापि युवयोरस्ति । त्रयो युध्यामहे ततः ॥ ६६ ॥ श्लोकार्थमिति तं ज्ञात्वा । वीक्ष्यमाणौ परस्परं ॥ शेखरः पवनश्चापि । प्रोचतुस्तौ चमत्कृतौ ॥ ६७ ॥ शेखरः स्माह सत्यं भोः । पवनाख्याति शात्रवः ॥ खेचरैर्मारितैरेभिः । कार्यसिद्धिर्न दृश्यते ॥ ६८ ॥ उवाच पवनो नैवं । रा- जनीतौ निगद्यते ॥ आत्मा बध्ध्वा नरेंद्रेण । शत्रूणां यत्समर्प्यते ॥ ६९ ॥ रक्षार्थं स्वशरीरस्य । देशः कोशः परिग्रहः ॥ विनष्टे निजदेहे तु । सर्वं विघटते क्षणात् ॥ ७० ॥ तदेष बुद्धिमान् वैरी ।

युद्धो रणविक्रमी ॥ अधिको भाग्ययोगेन । कथं साध्यो भवेन्मम ॥ ७१ ॥ शेखरः स्माह भोः
सर्व—मयथार्थं वचस्तव ॥ यद्येवं हृदि बुद्धिस्त—त्पारंभः समरस्य किं ॥ ७२ ॥ मन्यसे बंधुवैरस्य ।
कर्तुं निर्यातनं यदि ॥ तद्युध्यस्वात्र मंत्रस्य । कः कालोऽभ्युदिते रवौ ॥ ७३ ॥ अन्योन्यजल्पितं
श्रुत्वा । तयोराहस्म सूरसूः ॥ आलोचेथे किमेवं द्वौ । ढौकेथां युगपन्मयि ॥ ७४ ॥ वर्धितामर्षसं-
घर्षौ । ततः पवनशेखरौ ॥ शरवर्षमिवांभोघौ । वीरसेने व्यवर्षतां ॥ ७५ ॥ अथैकेनापि बाणेन ।
शतसंख्यांस्तयोः शरान् ॥ संखंड्यापूपुरद्वीर—स्तत्खंडैर्वसुधातलं ॥ ७६ ॥ उच्चालितस्ततस्ताभ्यां । वि-
द्याबलविनिर्मितः ॥ शैलः शृंगशतै रम्यो । वीरसेनभटंप्रति ॥ ७७ ॥ प्रक्षिप्तः शिखरी ताभ्यां । वी-
रसेनेऽमुना ततः ॥ मुष्ट्याहतो बलिष्ठान्य—विघातः पुनरागतः ॥ ७८ ॥ ततो हठेन निर्मुक्त—श-
रसंदोहताडितः ॥ वीरेणाद्रिस्तथा चक्रे । धूलिपुंजो यथाभवत् ॥ ७९ ॥ खंडितेऽद्रौ विलक्षाभ्यां ।
द्राक्ताभ्यां पुनराददे ॥ तामसास्त्रं तमःस्तोम—लुप्तलोचनगोचरं ॥ ८० ॥ दत्तं राक्षसराजेन । भा-
स्करास्त्रं धगद्धगत् ॥ वीरसेनेन मुक्त्वाथ । तामसास्त्रं न्यहन्यत ॥ ८१ ॥ मुक्तं ताभ्यां भुजंगास्त्रं ।
वीरसेने ततो भटे ॥ गारुडास्त्रेण तच्चापि । निराचक्रे नरेंद्रसूः ॥ ८२ ॥ एवं यद्यच्च दिव्यास्त्रं । खे-

चेरंद्रावमुंचतां ॥ प्रत्यस्त्रेण निराचक्रे । कुमारस्तत्तदंजसा ॥ ८३ ॥ दिव्यास्त्रेषु समस्तेषु । निष्फलेषु कृतेष्वथ ॥ खेटकासिकरो वीरः । पवनस्य पुरोऽवदत ॥ ८४ ॥ रेरे पवन निर्लज्ज । तव भ्राता मया हतः ॥ छेत्स्यामि त्वामपीदानीं । यच्छक्तोऽसि कुरुष्व तत् ॥ ८५ ॥ इति प्रोक्ते कुमारेण । क्रोधाग्नेर्धूमसन्निभः ॥ करवालः समाकृष्टः । कालः पवनकेतुना ॥ ८६ ॥ खड्गं कुमारशीर्षेऽथ । धावित्वा तेन वाहितं ॥ असिघातः कुमारेण । दक्षत्वेनानुवंचितः ॥ ८७ ॥ अपसृत्य सितेनाशु । कृपाणेन नृपात्मजः ॥ पवनस्य शिरश्छेदं । चकारांबुजनालवत् ॥ ८८ ॥ पतिते पवने रोषा—रुणाक्षः शेखरो नृपः ॥ फलकासिकरो वीर—स्तेनंप्रत्याशु धावितः ॥ ८९ ॥ कुमारेण ततोऽभाणि । हसित्वा शेखरो नृपः ॥ माधावीः स्थिरमेहि त्वं । कचिदास्फाल्य भंक्ष्यसे ॥ ९० ॥ या मुष्टिग्राह्यमध्या मे । श्यामांगी सुपयोधरा ॥ पतत्वसिलता सैषा । चंद्रश्रीर्न च ते हृदि ॥ ९१ ॥ तद्वाक्योद्दीपितक्रोध—वह्निर्दष्टाधरस्ततः ॥ कुमारस्याक्षिपत्खड्ग—प्रहारं शेखरो नृपः ॥ ९२ ॥ वंचयित्वा कुमारोऽथ । यावदाहति मूर्धनि ॥ उत्प्लुत्य तावदेषोऽरिः । कृपाणस्य पुरः स्थितः ॥ ९३ ॥ कृपाणाग्रे क्षणं तस्थौ । धारयोरुन्नयोः क्षणं ॥ रजोवत्पवनोध्धुतं । विचचार स शेखरः ॥ ९४ ॥ कृपाणविषयं याव—

नायात्येष कथंचन ॥ तावद्वीरेण मुक्तोऽसि—रकिंचित्करभृत्यवत् ॥ ९५ ॥ मुक्त्वासिं खेचरोऽप्या-
शु । पादे जग्राह नृपजं ॥ उत्पपात च वेगेन । भ्रमयन् गगनाध्वनि ॥ ९६ ॥ शृण्वन् हाहारवं
व्योम्नि । सुराणां तद्भुजांतरे ॥ प्रविश्यैकेन हस्तेन । वीरो जग्राह तं पदे ॥ ९७ ॥ यावत्क्षुरिकया
हंति । द्वितीयेन च पाणिना ॥ नमो जिनेभ्य इत्युच्चैः । शेखरस्तावदूचिवान् ॥ ९८ ॥ नमस्कारस-
मुच्चारा—च्छेखरं तं नरेंद्रसूः ॥ ततः साधर्मिकं ज्ञात्वा । मिथ्यादुःकृतमब्रवीत् ॥ ९९ ॥ अवातरत्ततो
वीरः । शेखरेण समं भुवि ॥ आश्वासयन्निजं मित्रं । सदयं खेचरानपि ॥ ५०० ॥ मिलिते रणरंगे-
ण । गगनेऽमरकिंकरैः ॥ पुष्पवृष्टिरमोचि श्री—वीरसेनभटोपरि ॥ १ ॥ इतश्च पिहिताशेष—ग-
गनाभोगमंबरे ॥ अशोकखेचरेंद्रस्य । सकलं बलमाययौ ॥ २ ॥ दृष्ट्वा विद्याधराणां त—त्सैन्यं
नभसि सूरसूः ॥ शत्रुसैन्यमिति ज्ञात्वा । करे कोदंडमग्रहीत् ॥ ३ ॥ चापमारोप्य वेगेन । स्थलां-
भोधरवत्तदा ॥ ऊर्ध्वं नाराचधारामि—र्ववर्ष क्षितिपांगजः ॥ ४ ॥ एकेन मुष्टिना मुक्तै—रनैके-
स्तीक्ष्णसायकैः ॥ जर्जरांगं बलं पश्चा—त्खेचराणामपासरत् ॥ ५ ॥ अशोकः सभयं नश्यद् । दृ-
ष्ट्वा तद्बलमात्मनः ॥ पप्रच्छ भो भयं किं वो । यूयं येनेति नश्यथ ॥ ६ ॥ जगदे तैस्ततो देव । को-

ऽप्यग्रे न्मिगोचरः ॥ अविच्छिन्नशरैर्हंति । कर्णांताकृष्टचापभृत् ॥ ७ ॥ अशोकः स्माह नान्यस्य । पुं·सोऽस्ति शक्तिरीदृशी ॥ वीरसेनः स एवात्र । निश्चितं संभविष्यति ॥ ८ ॥ चंद्रापीडसुवेगौ त-द्वत्वा-ख्यातं युवामिति ॥ आययौ ननु पक्षे ते—ऽशोकोऽन्यः कोऽपि न त्वरिः ॥ ९ ॥ चंद्रापीडसुवेगौ तौ । प्रेषितौ खेचरेंदुना ॥ गत्वा कुमारपादांते । सस्नेहं प्राक् प्रणेमतुः ॥ १० ॥ प्रत्यभिज्ञाय तौ चिह्नैः । कुमारोऽवोचदंजसा ॥ एह्येहि चंद्रकोटीर । सुवेगाश्लेषयाशु मां ॥ ११ ॥ आनम्रशिरसौ द्वा·वे—वाश्लिष्य हृदयेन सः ॥ आविःकृतगुरुस्नेह । आसयामास संनिधौ ॥ १२ ॥ कृतांजलिरथो मूर्ध्नि । जगादेतींदुशेखरः ॥ देवाहं प्रहितः पार्श्वे । तवाशोकेन संप्रति ॥ १३ ॥ अशोको मन्मुखे·नाह । किमसाध्यं जगत्यहो ॥ प्राक्पुण्यानिलपुष्टस्य । त्वत्प्रतापहविर्भुजः ॥ १४ ॥ अन्यदेव स्वरूपं ते । प्रतापदहनस्य यत् ॥ रिपून् दंदह्यमानोऽपि । सोऽस्माकं तुहिनोपमः ॥ १५ ॥ सन्मुखं वीक्षितुं नाल—मनंता रिपवोऽपि ते ॥ कराग्रकरवालस्थ—यमराजभयादिव ॥ १६ ॥ तव तेजसि यत्रैव । पतंगंत्यसहिष्णवः ॥ तदेवास्यतिमात्सर्य—तिमिरं गुणरागिणां ॥ १७ ॥ त एवात्र प्रशस्यंते । गु·णानां स्थानमुत्तमाः ॥ भृत्यभावं गुणज्ञा ये । प्राप्यंते वैरिणोऽपि हि ॥ १८ ॥ शोभते मत्सरोऽप्य·

त्र । समे न तु गुणाधिके ॥ खद्योतो रविणा सार्धं । स्पर्धां कुर्वन्न विहस्यते ॥ १९ ॥ जानामि गु-
णवंतं त्व—मियतैवापि निर्गुणं ॥ चिकीर्षामि त्वया स्नेह—संबंधं यद्गुणोत्तर ॥ २० ॥ जाने देव
न मे दोषा—स्तिष्ठंति हृदयेऽपि ते ॥ तत्प्रसीद त्वया सार्धं । कुर्वेऽहं दर्शनं यथा ॥ २१ ॥ यस्त्वया
निर्जितः पूर्व—मब्धौ विद्याधरेश्वरः ॥ विज्ञापयत्यशोकः स । मयैवं रंजितो गुणैः ॥ २२ ॥ श्रुत्वेति
वचनं चंद्र—शेखरस्य स सूरसूः ॥ उवाच किमिदं सैन्य—मशोकस्य खगेशितुः ॥ २३ ॥ एवमि-
त्युदिते तेन । पुनर्वीरो वचोऽवदत ॥ अज्ञाननिहतो हाह—मिदं मेने रिपोर्बलं ॥ २४ ॥ निज-
राज्यपरीवार—जीवितादिनिरादरः ॥ यो मामुद्धर्तुकामोऽत्र । पतितं विषमापदि ॥ २५ ॥ मया
तस्यापि पापेना—शोकस्याग्रबले किल ॥ प्रहारं कुर्वता शस्त्रैः । खलेनोपकृतं कथं ॥ २६ ॥ दुर्ज-
नानां न विद्यंते । खनयः किंतु भूतले ॥ उपकारपरे पुंस्य—पकुर्वन्न दुर्जनो जनः ॥ २७ ॥ का-
लक्षेपो न कर्तव्य—श्चंद्रापीड ततस्त्वया ॥ यद्यथा मे स्वरूपं त—त्तथाख्याहि खगेशितुः ॥ २८ ॥
माकार्षीदन्यथा संभा—वनं सैष कथंचन ॥ यतः परिजनस्तस्य । धीविचित्तो भविष्यति ॥ २९ ॥ वी-
रस्येति वचः श्रुत्वा । बभाषे चंद्रशेखरः ॥ त्वमेवं देव मावादी—र्विषतां याति नामृतं ॥ ३० ॥ सु-

धासारमयोऽसि त्वं । कुविकल्पविषं न ते ॥ अशोकोऽप्यन्यथाचित्तो । न चास्ति त्वांप्रति प्रभो
॥ ३१ ॥ यद्यप्येवं तथाप्यत्र । प्रमाणं वचनं तव ॥ इत्युक्त्वाशोकराजांते । चंद्रापीडो द्रुतं ययौ
॥ ३२ ॥ गत्वा तेन कुमारस्य । वृत्तांतः कथितोऽखिलः ॥ अशोकः स्माह सौजन्य—महो वीरस्य
वर्तते ॥ ३३ ॥ किं वर्ण्यते कुमारस्या—स्य सज्जनशिरोमणेः ॥ एकैकोऽपि गुणो यस्या—नंतरूपेण
विस्तृतः ॥ ३४ ॥ तद्गुणोत्कीर्तनोद्भूत—हर्षरोमोद्गमस्ततः ॥ कुमारस्यांतिकं प्राप । खेचरेशः समं
बलैः ॥ ३५ ॥ आगछंतं विलोक्याशु । ह्रिया मुकुलितेक्षणं ॥ कुमारो मंक्षु धावित्वा—लिंगद्विद्या-
धरेश्वरं ॥ ३६ ॥ कुमारेण तथा तस्य । प्रेम्णा व्यवहृतं तदा ॥ अशोकखेचरेंद्रोऽनु—त्यथा सोद-
रबंधुवत् ॥ ३७ ॥ उवाच वीरसेनोऽथ । परमार्थविदां हृदि ॥ अविवेकोद्भवा भावा । न तिष्ठंति ख-
गेश्वर ॥ ३८ ॥ अत्राविवेक एवारिः । परिणामेऽतिदारुणः ॥ नराणामीदृशो नान्यो—ऽपकारी दृ-
श्यते पुनः ॥ ३९ ॥ अविवेकः पदार्थानां । यथार्थाविगमो न यत् ॥ हितेऽप्यहितबुद्धिर्या । हित-
धीरहितेऽपि च ॥ ४० ॥ ममासि त्वं महाशत्रु—रहं तेऽपीति चिंतनं ॥ अविवेकोऽप्ययं वस्तु—त-
त्वे वा कल्पनान्यथा ॥ ४१ ॥ अविवेकवशोत्पन्नान् । कुविकल्पाननेकशः ॥ यावद्दधाति तावन्न ।

शुन्ना जावा विवेकजाः ॥ ४२ ॥ पूर्वोपार्जितडुःकर्म—क्षये स्याद्भावना शुन्ना ॥ तत। ।वपफरातल।
—त्पर्त्तिर्नवति देहिनां ॥ ४३ ॥ तत्वार्थचिंतनेनात्र । नान्यः कोऽप्यात्मनो रिपुः ॥ श्रात्मैवात्मनि
शत्रुत्व—मात्मनायाति निश्चितं ॥ ४४ ॥ यथा जीवो विधत्ते य—दशुन्नं वा शुभं जवे ॥ तत्तथैव
स्वयं तस्य । कर्मणो लन्नते फलं ॥ ४५ ॥ खेचरेंड सुखं दुःखं । यदि स्यात्पूर्वनिर्मितं ॥ तत्कर्मैव
सखा शत्रुः । को दोषः पुरुषेऽपरे ॥ ४६ ॥ जावयित्वा निजे चित्ते । तदेतद्वचनं मम ॥ जचिता·
चरणेनोन्नौ । सफलं कुरुतां युवां ॥ ४७ ॥ इति वीरवचः श्रुत्वा । सोऽशोकः शेखरोऽप्युन्नौ ॥ वि·
ध्वस्तमोहपटलौ । जातौ तत्वार्थदर्शिनौ ॥ ४८ ॥ वर्धते तावदेवात्र । मोहः संसारसंन्नवः ॥ विवेक·
लोचनोन्मेषो । न यावद् हृदये भवेत् ॥ ४९ ॥ वीरवाक्यविवेकार्क—हतमोहतमोभरौ ॥ अन्योन्य·
मत्सरोद्भूत—कुविकल्पविवर्जितौ ॥ ५० ॥ वर्धमानविशुद्धाध्य—वसायौ तावुभावपि ॥ चिंतयामास·
तुर्ज्ञात—परमार्थौ खगेश्वरौ ॥ ५१ ॥ युग्मं ॥ अस्मादृशोऽपि मुह्यंति । यदि ज्ञातजिनोक्तयः ॥ इ·
तरेषां तु को दोषो । नृणां मिथ्यादृशामिह ॥ ५२ ॥ लब्धे जिनमतेऽप्येवं । रागद्वेषौ स्थितौ यदि ॥
अलब्धमेव तद् ज्ञेय—मंधस्येव प्रदीपकः ॥ ५३ ॥ जिनवाक्ये श्रुते स्यातां । रागद्वेषौ नृणां यदि ॥

तत्सूर्यात्तिमिरं नूनं । वह्निज्वाला सुधाकरात् ॥ ५४ ॥ ध्यायंतो हृदि तावेव-मशोकः शेखरस्तथा ॥ परस्परं प्रशांतौ द्राक् । सहाते पूर्वमप्रियं ॥ ५५ ॥ युगपज्जगदे विद्या-धरेंद्राभ्यामिदं वचः ॥ कुमारो गुरुभूरि—विनयादरपूर्वकं ॥ ५६ ॥ रागद्वेषवशात्पूर्वं । तव चक्रे यदप्रियं ॥ आवाभ्यां तत्कुमारेंद्र । क्षमस्वालं कृपां कुरु ॥ ५७ ॥ अद्यप्रभृति मुक्तो वै । संजोगः परयोषितां ॥ आवाभ्यां भवतः संगा-दासाद्यां सुविवेकतां ॥ ५८ ॥ वीरसेनः पुनः स्माह । युवाभ्यामुचितं कृतं ॥ इदमेव कुलीनानां । यस्मादाचरणं भवेत् ॥ ५९ ॥ पतितानां रणे याव-त्कुमारो व्रणरोहणं ॥ चिकीर्षति पुरस्ताव—देकमैक्षिष्ट खेचरं ॥ ६० ॥ नानायुधप्रहारौघै—र्जर्जरं भीषणाकृतिं ॥ रणलक्ष्मीसमाश्लेष—मीलिताक्षमिवालसं ॥ ६१ ॥ युग्मं ॥ कुमारस्तं समालोक्य । रोमांचकवचं वहन् ॥ क एष इति पप्रच्छ । शेखरं खेचरेश्वरं ॥ ६२ ॥ बभाषे शेखरेणाथ । कुमारैष महाभटः ॥ भ्राता पवनकेतोस्तु । कनिष्ठः कमलस्य च ॥ ६३ ॥ दोर्दंडखंडिताराति—र्नाम्नायं चंडकेतुकः ॥ त्वदायुप्रहारौघै—र्जर्जरः पतितो रणे ॥ ६४ ॥ निशम्येति कुमारेण । कारिते व्रणकर्मणि ॥ स प्रत्यागतचैतन्यो । दृष्ट्वाग्रे तं क्रुधावदत् ॥ ६५ ॥ खात्कुर्वंति तथा देहे । शस्त्रशल्यानि वीर न ॥ यथा भ्रातृद्वयाघा

त—वैरशल्यं त्वया कृतं ॥ ६६ ॥ इत्युक्त्वा निजसैन्येन । समं व्योम्नि स उद्ययौ ॥ कुमारस्तु कथां तस्य । यावदाह कृपान्वितः ॥ ६७ ॥ तावदप्रस्तुतालाप—माक्षिप्य शशिशेखरः ॥ कुमारं योजितकरः । सप्रणामं व्यजिज्ञपत् ॥ ६८ ॥ तव पुण्यप्रभावेण । जातं शुभतरं त्विह ॥ इदानीं प्रस्तुते कार्ये—ऽवधानं देहि देव हे ॥ ६९ ॥ एवमस्त्विति वीरोऽथ । संप्रेष्य सुहृदं निजं ॥ प्रद्युम्नबंधुजीवायुक्—चंद्रश्रियमजूहवत् ॥ ७० ॥ दृष्ट्वा विद्याधराधीश—सेवितं तं नृपांगजा ॥ अचिंतयदहो पुण्य—प्रकर्षः सूरजन्मनः ॥ ७१ ॥ यद्वैरिणोऽपि मित्राणि । वीरसेनस्य जज्ञिरे ॥ तन्नूनं नागधेयस्य । पारमेतस्य नाप्यते ॥ ७२ ॥ इत्येवं चिंतयंती सा । प्रियालोकनविस्मयात् ॥ चंद्रश्रीरागता तत्र । कृतकोलाहलं जनैः ॥ ७३ ॥ सहर्षं प्रणमन्मौलि—दाममालार्चितं ततः ॥ सेनाविद्याधरैर्नेमे । चंद्रश्रीपादपंकजं ॥ ७४ ॥ प्रवृत्तं वीरसेनस्या—लोकेन पुलकं तनौ ॥ छादयंत्युत्तरीयेण । सा तत्पृष्ठावुपाविशत् ॥ ७५ ॥ अशोकशेखराख्यौ तौ । निर्विकारौ प्रणेमतुः ॥ बंधुदत्तोक्तनामानौ । चंद्रश्रीपादपंकजं ॥ ७६ ॥ प्रद्युम्नोऽथ कुमारेण । सस्नेहाश्लेषपूर्वकं ॥ प्रणतः पादयोः प्रैषि । वाहनेन पुरंप्रति ॥ ७७ ॥ बंधुदत्तो जगादाथ । विचित्रो न तथा नृपः ॥ दुःखी पुत्र्या वियोगेन । दुः

तत्सूर्यात्तिमिरं नूनं । वह्निज्वाला सुधाकरात् ॥ ५४ ॥ ध्यायंतो हृदि तावेव—मशोकः शेखरस्तथा ॥
परस्परं प्रशांतौ द्राक् । सहाते पूर्वमप्रियं ॥ ५५ ॥ युगपज्जगदे विद्या—धरेंद्राभ्यामिदं वचः ॥ कु·
मारो गुरुभूरि—विनयादरपूर्वकं ॥ ५६ ॥ रागद्वेषवशात्पूर्वं । तव चक्रे यदप्रियं ॥ आवाभ्यां तत्कु·
मारेंद्र । क्षमस्वालं कृपां कुरु ॥ ५७ ॥ अद्यप्रभृति मुक्तो वै । संभोगः परयोषितां ॥ आवाभ्यां भव·
तः संगा—दासाभ्यां सुविवेकतां ॥ ५८ ॥ वीरसेनः पुनः स्माह । युवाभ्यामुचितं कृतं ॥ इदमेव कु·
लीनानां । यस्मादाचरणं भवेत् ॥ ५९ ॥ पतितानां रणे याव—त्कुमारो व्रणरोहणं ॥ चिकीर्षति पु·
रस्ताव—देकमैक्षिष्ट खेचरं ॥ ६० ॥ नानायुधप्रहारौघै—र्जर्जरं भीषणाकृतिं ॥ रणलक्ष्मीसमाश्ले·
ष—मीलिताक्षमिवालसं ॥ ६१ ॥ युग्मं ॥ कुमारस्तं समालोक्य । रोमांचकवचं वहन् ॥ क एष इ·
ति पप्रछ । शेखरं खेचरेश्वरं ॥ ६२ ॥ बभाषे शेखरेणाथ । कुमारैष महाभटः ॥ भ्राता पवनकेतो·
स्तु । कनिष्ठः कमलस्य च ॥ ६३ ॥ दोर्दंडखंडितराति—र्नाम्नायं चंडकेतुकः ॥ त्वदायुधप्रहारौघै—
र्जर्जरः पतितो रणे ॥ ६४ ॥ निशम्येति कुमारेण । कारिते व्रणकर्मणि ॥ स प्रत्यागतचैतन्यो ।
दृष्ट्वाग्रे तं क्रुधावदत् ॥ ६५ ॥ खात्कुर्वंति तथा देहे । शस्त्रशल्यानि वीर न ॥ यथा भ्रातृद्वयाघा

त—वैरशल्यं त्वया कृतं ॥ ६६ ॥ इत्युक्त्वा निजसैन्येन । समं व्योम्नि स जग्मिवान् ॥ कुमारस्तु कथां तस्य । यावदाह कृपान्वितः ॥ ६७ ॥ तावदप्रस्तुतालाप—माक्षिप्य शशिशेखरः ॥ कुमारं योजितकरः । सप्रणामं व्यजिज्ञपत् ॥ ६८ ॥ तव पुण्यप्रभावेण । जातं शुभतरं त्विह ॥ इदानीं प्रस्तुते कार्ये—ऽवधानं देहि देव हे ॥ ६९ ॥ एवमस्त्विति वीरोऽथ । संप्रेष्य सुहृदं निजं ॥ प्रद्युम्नबंधुजीवायुक्—चंद्रश्रियमजूहवत् ॥ ७० ॥ दृष्ट्वा विद्याधराधीश—सेवितं तं नृपांगजा ॥ अचिंतयदहो पुण्य—प्रकर्षः सुरजन्मनः ॥ ७१ ॥ यद्वैरिणोऽपि मित्राणि । वीरसेनस्य जज्ञिरे ॥ तन्नूनं भागधेयस्य । पारमेतस्य नाप्यते ॥ ७२ ॥ इत्येवं चिंतयंती सा । प्रियालोकनविस्मयात् ॥ चंद्रश्रीरागता तत्र । कृतकोलाहलं जनैः ॥ ७३ ॥ सहर्षं प्रणमन्मौलि—दाममालार्चितं ततः ॥ सेनाविद्याधरैर्नेमे । चंद्रश्रीपादपंकजं ॥ ७४ ॥ प्रवृत्त वीरसेनस्या—लोकेन पुलकं तनौ ॥ छादयंत्युत्तरीयेण । सा तत्पृष्ठावुपाविशत ॥ ७५ ॥ अशोकशेखराख्यौ तौ । निर्विकारौ प्रणेमतुः ॥ बंधुदत्तोक्तनामानौ । चंद्रश्रीपादपंकजं ॥ ७६ ॥ प्रद्युम्नोऽथ कुमारेण । सस्नेहाश्लेषपूर्वकं ॥ प्रणतः पादयोः प्रैषि । वाहनेन पुरंप्रति ॥ ७७ ॥ बंधुदत्तो जगादाथ । विचित्रो न तथा नृपः ॥ दुःखी पुत्र्या वियोगेन । दुः

खात्ते खिद्यते यथा ॥ ७८ ॥ दैवयोगात्ततस्तस्या–नर्थो माभूत्कथंचन ॥ इति प्रस्थीयते शीघ्रं । ना-शिक्यनगरंप्रति ॥ ७९ ॥ इत्याकर्ण्य कुमारेण । प्रोचे चित्रं किमत्र भोः ॥ ईदृगेव नृपस्यास्य । प्रतिबंधं ममोपरि ॥ ८० ॥ कुमारः सरलां श्वेतां । पक्ष्मलां कृष्णतारिकां ॥ दृष्टिं प्रस्थापयामास । खे-चरस्वामिनोर्द्वयोः ॥ ८१ ॥ सहर्षं मुकुलीकृत्य । पाणियुग्ममथोचतुः ॥ खेचरेंद्रावुभौ देव । गम्यते राजसंनिधौ ॥ ८२ ॥ क्षणांतरं हृदि ध्यात्वा । दीर्घं निःश्वासमुद्वहन् ॥ इत्युवाच वचोऽशोकः । कु-माराभिमुखं ततः ॥ ८३ ॥ यथा मे शेखरस्यापि । कृतैकत्वमतिस्त्वया ॥ विचित्रयशसा राज्ञा । सह-सा स्यात्तथा कुरु ॥ ८४ ॥ वीरसेनोऽवदन्न स्या–च्चित्तदोषो महात्मनां ॥ अपराधकृतां पश्चा–त्ता-पेन क्षालितागसि ॥ ८५ ॥ सुजनः पीडितोऽप्यंतः । कंचिन्मानं बिभर्ति न ॥ हृदि धत्ते च न ब्रूते । ब्रूते चेदाचरेन्न हि ॥ ८६ ॥ तत्तस्याखिलसल्लोक–चूडामणिनरेशितुः ॥ न स्फुरति क्षणं चित्ते । परापकृतिबुद्धयः ॥ ८७ ॥ इत्युक्त्वा विरते तस्मिन् । वीरसेने निजं बलं ॥ अशोकः प्रगुणीचक्रे । विद्याधरवधूयुतं ॥ ८८ ॥ शेखरेणापि विद्याया । बलेन विहितैर्घनैः ॥ आछादितं नभः सर्वं । वि-मानैस्तारकैरिव ॥ ८९ ॥ चंद्रश्रीर्येन जह्रे प्रा–ग्विमानेन महौजसा ॥ तदेवानूत्कुमारस्य । पुरोऽ-

ध्यारोहहेतवे ॥ ९० ॥ इंद्रनीलमणिस्तूपो । मध्ये यस्य विराजते ॥ चंद्रश्रीहरणे जातं । मूर्तं पापमिवांतरे ॥ ९१ ॥ बभौ मुक्तावचूलैर्य—ल्लंबमानैः समंततः ॥ पश्चात्तापादिव स्थूलै । रुदन्नेत्रांबुबिंदुभिः ॥ ९२ ॥ पर्यंतस्थापिताश्म—ज्वालाभिर्वेष्टितं बभौ । यद्दुर्वृत्तविशुद्ध्यर्थं । कृतस्नानमिवाग्निना ॥ ९३ ॥ विमानरत्नमारोह—त्तदुत्तंभिततोरणं ॥ वीरसेनस्तया सार्धं । विद्याधरपतीरितः ॥ ९४ ॥ चतुर्भिः कलापकं ॥ चंद्रापीडसुवेगाख्यां । सहिता बंधुजीविका ॥ बंधुदत्तोऽपि तत्रैव । विमाने सोऽधिरूढवान् ॥ ९५ ॥ कुमारस्य विमानस्य । वामदक्षिणपार्श्वयोः ॥ अशोकशेखरौ तौ तु । विमानस्थौ प्रचेलतुः ॥ ९६ ॥ यथायोग्यविमानस्था । अपरेऽपि हि खेचराः ॥ स्वस्वस्वामिनिदेशेन । समकालमथाचलन् ॥ ९७ ॥ विद्याधरबलं सर्वं । प्रस्थानाहतनिःस्वनं ॥ कृतकोलाहलं तस्मा—दुत्पपातोत्तरांप्रति ॥ ९८ ॥ विद्याधरबलं गच्छ—द्विमानभवनैर्बभौ ॥ व्योम्नि विद्याधराकीर्णं । गंधर्वाणां पुरं यथा ॥ ९९ ॥ अत्रांतरे विमानानां । संघट्टं व्योम्नि गच्छतां ॥ कुमारं च समालोक्य । बंधुदत्तेन सिस्मिये ॥ १०० ॥ स्मितं निष्कारणं वीक्ष्य । कुमारो मित्रमब्रवीत ॥ हसितं हेतुना केन । त्वयाख्याहि ममाधुना ॥ १ ॥ जगदे बंधुदत्तेना—नुचंद्रश्री गते त्वयि ॥ विचित्रयश-

सा देव । मामाकार्येति भाषितं ॥ २ ॥ अद्य चक्रेश्वरी देवी । बंधुदत्त मया निशि ॥ आराधिता
जगादेति । प्रत्यक्षीभूय सत्वरं ॥ ३ ॥ संतुष्टा तेऽस्म्यहं वत्स । चंडश्रीवीरसेनयोः ॥ मद्वचनेन सं-
योगो । दिनैः स्तोकैर्भविष्यति ॥ ४ ॥ य एव शत्रवस्तस्य । शेखराशोककादयः ॥ भृत्यभावं त ए-
वाशु । नूनं यास्यंति खेचराः ॥ ५ ॥ येनैवापहृता दिव्य—विमानेन तवांगजा ॥ विद्याधरपरीवार
—स्तत्रारूढः स एष्यति ॥ ६ ॥ इत्युक्त्वा मां तिरोधत्त । देवी चक्रेश्वरी निशि ॥ बंधुदत्त ततो मुं-
चा—निवृत्तिं सूरजन्मनः ॥ ७ ॥ वीरसेनवियोगेन । दुःखितं तत्परिच्छदं ॥ संबोध्यावर्जयस्व त्वं ।
कुमारागमनावधि ॥ ८ ॥ एकस्य तव नो दुःखं । विश्वस्यास्य दुःखं त्विदं ॥ सममापतितं भद्र । यद्-
घनैस्तद्विषह्यते ॥ ९ ॥ इत्यादि बहुधा स्नेह—गर्भं नृपतिना तदा ॥ अनुशिष्य प्रसादं च । दत्वा
प्रस्थापितो गृहं ॥ १० ॥ ततो देवविमानानां । संघट्टं वीक्ष्य सांप्रतं ॥ तवैश्वर्यमिदं चापि । तद्देवी-
वचनं स्मृतं ॥ ११ ॥ अनेन हेतुना स्वामिन् । हर्षेण हसितं मया ॥ पुनर्जगाद वीरोऽथ । कौतु
कं मिव मे महत् ॥ १२ ॥ समर्थेनापि नो मित्र । त्वयात्मा किमु बध्यते ॥ तत्किं कार्यं च न्य-
त्कारः । सर्वः सोढो यदर्थिना ॥ १३ ॥ बंधुदत्तस्ततोऽवोच—त्कौतुकं यदि ते प्रभो ॥ तदाकर्णय संक्षेपा

—त्कथयाम्येतदप्यहं ॥ १४ ॥ तदा संबोधितस्यापि । नृपेणैवं बहूक्तिभिः ॥ संतोषो न पुनर्जात-
स्त्वद्वियोगे ममाप्यणुः ॥ १५ ॥ प्रत्युद्यानं प्रतिस्थानं । प्रतिस्त्रीप्रतिपूरुषं ॥ ज्वलदिव पुरं सर्वं । त्व-
द्वियोगाग्निनाभवत् ॥ १६ ॥ विरहानलसंतप्त—जनानामतिमज्जनात् ॥ गोदावर्यपि संतप्त—जला
मन्येऽतिदुःखिता ॥ १७ ॥ तथारूपं पुरं दृष्टु—मक्षमोऽहं दिनेऽपरे ॥ अवज्ञातनृपादेशो । निर्ग-
तस्तव शुद्धये ॥ १८ ॥ अस्तंगते दिवानाथे । तमोदुःसंचरे पथि ॥ करवालकरः प्राप्तो । निशायां
नगराद्बहिः ॥ १९ ॥ दत्तद्वारं मठं चैकं । नैऋत्यां दिश्यहं ततः ॥ गतोऽश्रौषीच्च केषांचि—त्तत्र श-
ब्दं बहिः स्थितः ॥ २० ॥ निभृतो द्वारदेशेऽथ । स्थित्वा यावच्छृणोम्यहं ॥ तावदेकेन शैवेन । वृद्धे-
नाम्नाणि चेल्लकः ॥ २१ ॥ अरेरे चेल्लकोत्तिष्ठ । मुंच निद्रां वचः शृणु ॥ बोधितो गुरुणेत्युच्चै-रव-
दच्चेल्लकः पुनः ॥ २२ ॥ गुरो देहि ममादेश—मित्युक्ते गुरुरब्रवीत् ॥ कथयामि तवाश्चर्यं । ना को-
ऽप्यस्ति मठाद्बहिः ॥ २३ ॥ स्वमित्रेण वियुक्तोऽत्र । विश्रम्य प्रहरद्वयं ॥ याति यामे तृतीये चे-त्त-
दाप्नोत्यर्थमीप्सितं ॥ २४ ॥ कुमुहूर्ते यतो गेहा—न्निर्गतस्तत्फलेन तु ॥ बध्वायं खेचरैर्वेला—शैला-
न्नभसि नेष्यते ॥ २५ ॥ योत्स्यते यदि नो तत्र । ततो नेष्यंति मंक्षु ते ॥ नगे विशालशृंगाख्ये ।

सागरांतः स्थिते पृथौ ॥ २६ ॥ मित्रयोगोऽपि संग्रामो । महांस्तत्र भविष्यति ॥ जयश्रीयुक्तमित्रेण । समं चात्र समेष्यति ॥ २७ ॥ इत्युक्त्वा विरते शैवे । मयापि हृदि चिंतितं ॥ परोक्तवचनेष्वस्य । गुरोः कः प्रत्ययः किल ॥ २८ ॥ यावद्ध्यायाम्यहं चित्ते । तावच्छिष्योऽवदद्गुरुं ॥ क एष पुरुषः कश्च । मित्रमेतस्य वा गुरो ॥ २९ ॥ तदा देव मया ध्यातं । प्रत्ययोऽत्र भविष्यति ॥ कथयिष्यति नामायं । मम मित्रस्य वा यदि ॥ ३० ॥ इतो जगाद शैवः स । बंधुदत्तोऽयमाख्यया ॥ वीरसेनो जगत्ख्यातो । मित्रमस्य तु क्षत्रियः ॥ ३१ ॥ एतत् श्रुत्वा ततो देव । मठद्वारेऽतिहर्षितः ॥ आस्तीर्य संस्तरं तत्र । क्षणमात्रमहं स्थितः ॥ ३२ ॥ कृत्वा तावेवमालापं । प्रसुप्तौ निशि निर्भरं ॥ ततो द्वियाममात्रागा—द्यामिनी जगतीपते ॥ ३३ ॥ ततोऽहं निर्गतस्तस्मा—द्गुरुदेवकृताननतिः ॥ अत ऊर्ध्वं त्वया देव । श्रुतं विद्याधरास्यतः ॥ ३४ ॥ वीरसेनस्ततोऽवोच—त्साधु मित्र कृतं त्वया ॥ सर्वं मे साधितं कार्यं । समये दर्शितौजसा ॥ ३५ ॥ कुमारो बंधुदत्तेन । समं कुर्वन् कथामिति ॥ अतिक्रम्य नभोऽध्वानं । नाशिक्योपवनं ययौ ॥ ३६ ॥ प्रेषितेन पुरो राज्ञो । विचित्रयशसः क्षणात ॥ कुमारागमवृत्तांतः । कथितश्चंद्रमौलिना ॥ ३७ ॥ यावन्न राजनिर्देश—स्तावत्प्रागेव पूर्जनैः ॥ कुमा-

रस्यानुरागेण । नगरं तत्प्रसाधितं ॥ ३८ ॥ दुःखदावाग्निना दग्धं । तत्पुरं तोरणछलात् ॥ इव पल्ल-
वितं तस्या—गमेऽब्दस्येव काननं ॥ ३९ ॥ कुमारस्य वियोगार्तं । सर्वं परिजनं ततः ॥ समाहूय
स नृपालः । सर्वर्ध्या संमुखं ययौ ॥ ४० ॥ आगछंतमिमं दृष्ट्वा । कुमारः खेचरैः समं ॥ अशो-
कशेखरैर्मुख्यै—रुत्ततार विमानतः ॥ ४१ ॥ चंद्रश्रियं पुरस्कृत्य । बंधुजीवादिकास्ततः ॥ विद्याधर्यो-
ऽपि वेगेन । क्षितिपीठमवातरन् ॥ ४२ ॥ उत्थाप्याश्च नरेंद्रेण । परिरेभे स सूरसूः ॥ पुत्रस्नेहेन
चाघ्रायि । पौनःपुन्येन मूर्धनि ॥ ४४ ॥ कुमारवचसा तौ तु । विद्याधरपती मुदा ॥ प्रत्येकं परिरे-
भाते । निर्विकल्पेन नृभुजा ॥ ४५ ॥ प्रणमंती महाभक्त्या । चंद्रश्रीः शीलनिर्मला ॥ ललाटे पि-
तृपादाब्ज—रजश्चित्रमुवाह सा ॥ ४६ ॥ रुदंती पादयोर्लग्ना । वियोगेनातिदुर्बला ॥ जनन्या सा
समालिंग्य । निजोत्संगे निवेशिता ॥ ४७ ॥ अनुरूपाः समासीना—स्ततो राज्ञा क्रमेण ते ॥ सं-
भाषिता महास्नेहा—द्वीरसेनपुरः सदा ॥ ४८ ॥ कथितेऽथ कुमारेण । वृत्तांते निखिले नृपः ॥
गजमानाययामास । प्रवेशाय पुरस्य सः ॥ ४९ ॥ धृतछत्रो गजारूढः । कुमारोऽगात्पुरंप्रति ॥ अ-
शोकशेखराभ्यां च । चालितोज्ज्वलचामरः ॥ ५० ॥ जननीबंधुजीवादि—बहुनारीपरिवृता ॥ प्रवे-

शाय विमानं त—च्चंद्रश्रीरध्यशिश्रियत् ॥ ५१ ॥ अन्येऽपि स्वस्वयानस्थाः । पौरविद्याधरा जनाः ॥ कुमारस्यानुमार्गेण । चलिताश्चारुभूषणाः ॥ ५२ ॥ नानावादित्रनिःस्वानै–र्भेरीभांकारमिश्रितैः ॥ बंदिकोलाहलैश्चाप । कुमारः पृथुगोपुरं ॥ ५३ ॥ अनेनैष्यति मार्गेण । कुमार इति वीक्षितुं ॥ आरुरोहोच्चकैः स्वं स्वं । सौधं पुरवधूजनः ॥ ५४ ॥ यथा यथा समीपे स । समेति नृपतेः सुतः ॥ संकीर्णोऽभूद्भृशं लोकै । राजमार्गस्तथा तथा ॥ ५५ ॥ गुप्तिवद्भवनं भर्ता । शत्रुवत्सर्पवद्गुरुः ॥ त्यक्ता निकुलनारीभि—र्वीराशोकनवांछया ॥ ५६ ॥ अग्रस्थानां यथानंदं । ददौ स निकटागतः ॥ त्यक्तमार्गस्तथा पश्चा—त्स्थितानां दुःखमप्यलं ॥ ५७ ॥ अन्यः पश्यतु मा कोऽपि । तवैव सखि कौतुकं ॥ अंतर्धत्से स्वदेहेन । पथानं यदृहशोर्मम ॥ ५८ ॥ अरे पराभवस्थानं । मात्रास्तु कोऽपि दुर्बलः ॥ पश्चात्कृत्य यदेषा मां । कुमारं वीक्षतेऽग्रगा ॥ ५९ ॥ किं खिद्यसेऽद्य पश्यंती । कुमारमिति जल्पता ॥ तन्वंगी स्थापिता स्कंधे । केनापि प्रियकामिना ॥ ६० ॥ पतिष्यसि पुरः पापे । सौधाग्रात्कौतुकेक्षिणी ॥ हताशे त्वं न जानासि । बालकं पतितं करात् ॥ ६१ ॥ सखि पश्य महच्चित्रं । बलिष्ठा येऽपि शत्रवः ॥ दासत्वं ते कुमारेण । प्रापिताः स्वस्य सांप्रतं ॥ ६२ ॥ चंद्रश्री-

रेति सख्येषा । विद्याधरपरीवृता ॥ येनैषापहृता तेन । विमानेन गरीयसा ॥ ६३ ॥ सखि विचित्रं स एवाय—मशोकखेचरेश्वरः ॥ अपजह्रे तदोद्याना—चंडश्रीर्येन सत्वरं ॥ ६४ ॥ चंद्रश्रीरेव सर्वासु । श्लाघ्यते युवतीष्विह ॥ लप्स्यते गृहिणीशब्दं । वीरसेनस्य या सखि ॥ ६५ ॥ वीरलोकरसोद्रेक—विवशानामनेकधा ॥ प्रावर्ततेति संलापाः । पुरस्त्रीणां पदे पदे ॥ ६६ ॥ नवभिः कुलकं ॥ स्थाने स्थाने कुमारः स । पश्यन् संगीतकं मुदा ॥ निजसौधं विवेशोच्चै—र्मंगलाचारसुंदरं ॥ ६७ ॥ सिंहासने नराधीश । उपविश्य स्वयं ततः ॥ कुमारमासयामास । शेखराशोकसंयुतं ॥ ६८ ॥ नरेंद्रेण यथायोग्यं । विहितप्रतिपत्तिकः ॥ अन्योऽपि खेचरो लोको । दत्तासन उपाविशत् ॥ ६९ ॥ चंडश्रीबंधुजीवाभ्यां । सार्धं विजयवत्यपि ॥ हृष्टचित्ता निजावास—मंतःपुरवरा ययौ ॥ ७० ॥ इतश्च वीरसेनस्य । सामग्रीमवलोक्य सः ॥ मिलितां पुण्ययोगेन । प्रारेभे भणितुं नृपः ॥ ७१ ॥ या पूर्वं कल्पिता तुभ्यं । क्रीता प्राणैस्त्वया पुनः ॥ चंद्रश्रियमिमां कन्यां । वीरसेन गृहाण तां ॥ ७२ ॥ अप्रदत्ता मयेत्येषा । परिणीतानुरागिणा ॥ चंद्रश्रीर्नानुरक्तापि । वीरसेन स्वयं त्वया ॥ ७३ ॥ ईदृक्कस्य विवेकोऽत्रे—दृशी कस्य च धीरता ॥ शक्तिश्चात्र जये कस्य । यथाभूत्तव सत्तम ॥ ७४ ॥ इ-

शाय विमानं त—चंद्रश्रीरप्यशिश्रियत् ॥ ५१ ॥ अन्येऽपि स्वस्वयानस्थाः । पौरविद्याधरा जनाः
॥ कुमारस्यानुमार्गेण । चचलुस्ताश्वारुरूपणाः ॥ ५२ ॥ नानावादित्रनिःस्वानै—र्भेरीभांकारमिश्रितैः ॥
वंदिकोलाहलैश्चाप । कुमारः पृथुगोपुरं ॥ ५३ ॥ अनेनैष्यति मार्गेण । कुमार इति वीक्षितुं ॥ आ-
रुरोहोच्चकैः स्वं स्वं । सौधं पुरवधूजनः ॥ ५४ ॥ यथा यथा समीपे स । समेति नृपतेः सुतः ॥
संकीर्णोऽभूत्तरां लोकै । राजमार्गस्तथा तथा ॥ ५५ ॥ गुप्तिवत्तद्वनं तस्यौ । शत्रुवत्सर्पवत्कुरुः ॥ त्य-
क्ता निकुंजनारीभि—र्वीराघ्रोकनवांछया ॥ ५६ ॥ अग्रस्थानां यथानंदं । ददौ स निकटागतः ॥
त्यक्तमार्गस्तथा पश्चा—त्स्थितानां दुःखमप्यलं ॥ ५७ ॥ अन्यः पश्यतु मा कोऽपि । तवैव मम सखि
कौतुकं ॥ अंतर्धत्से स्वदेहेन । पश्यानं यद्दृशोर्मम ॥ ५८ ॥ अरे पराक्रमस्थानं । मात्रास्तु कोऽ-
पि दुर्बलः ॥ पश्चात्कृत्य यदेवा मां । कुमारं वीक्षतेऽग्रगा ॥ ५९ ॥ किं खिद्यसेऽद्य पश्यंती । कु-
मारमिति जल्पतां ॥ तन्वंगी स्थापिता स्कंधे । केनापि प्रियकामिना ॥ ६० ॥ पतिष्यसि पुरः पा-
पे । सौधाग्रात्कौतुकेक्षिणी ॥ हताशे त्वं न जानासि । बालकं पतितं करात् ॥ ६१ ॥ सखि पश्य
महच्चित्रं । वक्षिष्ठ येऽपि शत्रवः ॥ दासत्वं ते कुमारेण । प्रापिताः स्वस्य सांप्रतं ॥ ६२ ॥ चंद्रश्री-

रेति सख्येषा । विद्याधरपरीवृता ॥ येनैषापहृता तेन । विमानेन गरीयसा ॥ ६३ ॥ सखि विचित्र स एवाय—मशोकखेचरेश्वरः ॥ अपजह्रे तदोद्याना—चंडश्रीर्येन सत्वरं ॥ ६४ ॥ चंद्रश्रीरेव सर्वासु । श्लाघ्यते युवतीष्विह ॥ लप्स्यते गृहिणीशब्दं । वीरसेनस्य या सखि ॥ ६५ ॥ वीशलोकरसोद्रेक—विवशानामनेकधा ॥ प्रावर्ततेति संलापाः । पुरस्त्रीणां पदे पदे ॥ ६६ ॥ नवभिः कुलकं ॥ स्थाने स्थाने कुमारः स । पश्यन संगीतकं मुदा ॥ निजसौधं विवेशोच्चै–र्मंगलाचारसुंदरं ॥ ६७ ॥ सिंहासने नराधीश । उपविश्य स्वयं ततः ॥ कुमारमासयामास । शेखराशोकसंयुतं ॥ ६८ ॥ नरेंद्रेण यथायोग्यं । विहितप्रतिपत्तिकः ॥ अन्योऽपि खेचरो लोको । दत्तासन उपाविशत् ॥ ६९ ॥ चंडश्रीबंधुजीवाभ्यां । सार्धं विजयवत्यपि ॥ हृष्टचित्ता निजावास—मंतःपुरवरा ययौ ॥ ७० ॥ इतश्च वीरसेनस्य । सामग्रीमवलोक्य सः ॥ मिलितां पुण्ययोगेन । प्रारेभे भणितुं नृपः ॥ ७१ ॥ या पूर्वं कल्पिता तुभ्यं । क्रीता प्राणैस्त्वया पुनः ॥ चंद्रश्रियमिमां कन्यां । वीरसेन गृहाण तां ॥ ७२ ॥ अप्रदत्ता मयेत्येषा । परिणीतानुरागिणा ॥ चंद्रश्रीर्नानुरक्तापि । वीरसेन स्वयं त्वया ॥ ७३ ॥ ईदृकस्य विवेकोऽत्रे—दृशी कस्य च धीरता ॥ शक्तिश्चात्र जये कस्य । यथाभूत्तव सत्तम ॥ ७४ ॥ इ-

दात ॥ वरराजश्चचालाशु । विधृतातपवारणः ॥ ९९ ॥ बहुष्वन्येषु यानेषु । गजवाजिरथादिषु ॥
अध्यारूढः कुमारेंदं । राजलोकस्तमन्वगात् ॥ १०० ॥ मंदं मंदं चलच्चारु—विमानैर्व्योमचारिणः ॥
चेलुः सुखेन पश्यंतो । वरस्य मुखपंकजं ॥ १ ॥ जनयन् भुवनानंदं । विस्तरेण गरीयसा ॥ कुमा-
रो मंडपद्वार—माससाद नरेशितुः ॥ २ ॥ कुलवृद्धाकृताशेष—कुलाचारस्ततः क्रमात् ॥ संनिधाने
ययौ वध्वा । मातृगेहे वरोत्तमः ॥ ३ ॥ दंपत्योरचिराज्जात—स्तारामेलापकस्तदा ॥ अनुकूलस्तयोः
पूर्व—मेव निर्जितलज्जयोः ॥ ४ ॥ सुप्रशस्ते ततो लग्ने । पुण्याहध्वनिपूर्वकं ॥ कुमारः स्वेन चंद्र-
श्री—पाणिं जग्राह पाणिना ॥ ५ ॥ पूजिताशेषपूजार्हे । दत्तमानार्हमानके ॥ कृतकृत्यं तयोरासी
—त्पाणिग्रहणमंगलं ॥ ६ ॥ प्रारब्धपूज्यसत्कारः । पुरोधः पृष्ठमंजसा ॥ जनं संतर्पयामास । रा-
जा भोजनभूषणैः ॥ ७ ॥ गजाश्वरथरत्नानि । विचित्राभरणानि च ॥ पार्थिवेभ्यः प्रदत्तानि । यथा
योग्यं तदा तदा ॥ ८ ॥ न स कोऽपि तदा लोके—ऽज्ञवद्रूपेन संमदात ॥ धनधान्यसुवर्णाद्यैः ।
कृतार्थो विहितो न यः ॥ ९ ॥ गुरुविस्तरतस्तेन । तथाकारि महोत्सवः ॥ अपि विद्याधरेशानां ।
चमच्चक्रे यथा मनः ॥ १० ॥ निर्वर्तिते महाभूत्या । पुत्र्या उद्वाहमंगले ॥ उवाच गुरुरंगेण । कु-

मारं नृमिवासवः ॥ ११ ॥ विद्यासंपन्नसर्वार्थे । एष विद्याधरो जनः ॥ तदेतस्य कथंकार—मुपकारं
करोम्यहं ॥ १२ ॥ यन्नुपक्रियते नात्र । महतां गुणमानतः ॥ महत्त्वं पतति स्वस्य । परस्य च तदा
ननु ॥ १३ ॥ अनौचित्यकृतो नात्यु—पकारोऽप्यपकारवत् ॥ गुरुर्लघुषु लोकेषु । लघुश्चोरुत्वशालि-
षु ॥ १४ ॥ राजा यावज्जगादेति । कुमारस्तावदब्रवीत् ॥ उदारं ललितं वाक्यं । तस्यैव वचनानु-
गं ॥ १५ ॥ महेंद्रोऽप्युपकारार्थी । गौरवं लभते कथं ॥ रंकोऽपि सुतरां राजन् । गुरुर्भवति निःस्पृ-
हः ॥ १६ ॥ क्रियमाणं परैर्दानो—पकारं न हि साधवः ॥ किंतूज्ज्वलमनःस्नेह—मेवेछंति महा-
शयाः ॥ १७ ॥ येषां महोपकारोऽपि । निःस्नेहस्तृणवल्लघुः ॥ तेषां तृणमपि स्नेह—युक्तं स्यान्मे-
रुवद्गुरुः ॥ १८ ॥ नरेंद्रामीषु चेत्प्रेम—तत्परं हृदयं तव ॥ औदार्येणैव तत्सर्व—मपि संपत्स्यते ध्रुवं
॥ १९ ॥ इति नृपकुमारौ तौ । यावद्वार्तयतो मिथः ॥ तावद्विज्ञपयांचक्रे । कोशाध्यक्षेण नृपतिः
॥ २० ॥ दानार्थं याचसे यद्य—त्तत्सर्वं वर्धते तव ॥ अनंतगुणितं देव । न जाने केन हेतुना
॥ २१ ॥ इदानीं तु महाराज । युष्माभिः प्रेरितो गतः ॥ शेखराशोकसत्कार—हेतवे कोशमंदिरं
॥ २२ ॥ तावत्तत्र महामूल्ये । निर्मले नरनायक ॥ प्रवरे ददृशाते द्वे । रत्नमाले महौजसौ ॥ २३ ॥

त्युक्ते नरनाथेन । कुमारः स्माह मंजुवाक् ॥ नोत्तरस्यावकाशो मे । स्वयं कुरु यथोचितं ॥ ७५ ॥ अनाहूतः समायातः । फलपुष्पकरस्तदा ॥ दृष्टुं कुमारमालोकि । नृपेण गणकोत्तमः ॥ ७६ ॥ मानयित्वा ततोऽपृच्छि । गणको लग्नमुत्तमं ॥ पाणिग्रहणकार्याय । चंद्रश्रीवीरसेनयोः ॥ ७७ ॥ समर्पिते ततस्तेन । लग्ने पंचमवासरे ॥ कुमारः खेचरैः सार्धं । स्वस्थाने प्रैषि भूभुजा ॥ ७८ ॥ उपयुक्तो नरेंद्रोऽथ । यद्यत्पप्रच्छ मंत्रिणः ॥ वैवाहिकं समस्तं त—द्वस्तु जातं पुराभवत ॥ ७९ ॥ आदिदेश नरेंद्रोऽथा—ह्वयताशेषभूपतीन् ॥ आविःकुरुत पौराणां । कुमारोद्वाहसंमदं ॥ ८० ॥ सविशेषां गृहाट्टादि—शोभां कारयतादरात् ॥ चंद्रप्रभजिनेशस्य । कुरुताष्टाह्निकामहं ॥ ८१ ॥ राजप्रांगणमानं च । विस्तारयत मंडपं ॥ प्रवर्तयत वृद्धास्त्रीः । कुलाचारस्य कर्मणि ॥ ८२ ॥ खंडखाद्यादिकं सर्वं । कुरुध्वमनिवारितं ॥ दीनानाथांधलोकानां । कृपादानं च यच्छत ॥ ८३ ॥ यौतकार्यं गजानश्वान् । रथानपि सहस्रशः ॥ देशकांचनकोटीश्च । सज्जीकुरुत संप्रति ॥ ८४ ॥ बहु किं भण्यतेऽमात्या । यद्यदत्रोपयुज्यते ॥ सज्जीकुरुत तत्सर्वं । निजबुद्ध्यैव सत्वरं ॥ ८५ ॥ इत्युद्वाहोचितं सर्वं । सज्जीकारयति प्रभौ ॥ आजगाम प्रमोदेन । विवाहदिवसः शुभः ॥ ८६ ॥ वसानो दिव्यवासांसि । दि-

व्याभरणभूषितः ॥ संचचार पुरे लोको । विवाहोत्सवहर्षितः ॥ ८७ ॥ निबद्धपुष्पसंभारः । कृतकुं-
कुमलेपनः ॥ मनो जहार नो कस्य । विवाहे तरुणीजनः ॥ ८८ ॥ उच्छृंखलपरिभ्रांत—मुक्तमुच्छृं-
खलं तथा ॥ यूनां च युवतीनां च । हास्यं चाभूत्तदा मुदे ॥ ८९ ॥ विवाहवासरे स्वैर—विहारे
गृहनिर्गमः ॥ बभूव कुलबालानां । गुप्तवासविमोक्षवत् ॥ ९० ॥ सरसं गीतनाट्यं च । शृंगारश्च न-
वो नवः ॥ कथं स्यात्कुलनारीणां । न विवाहोत्सवो यदि ॥ ९१ ॥ वीरसेनोऽपि वैताढ्यो—भय-
श्रेणिसमागतैः ॥ विद्याधरवधूवृंदैः । प्रारब्धमज्जनोत्सवः ॥ ९२ ॥ तद्दर्शनानुरागेण । नारीभिः प-
रिवेष्टितः ॥ अलंकारैरलंचक्रे । विविधैर्विधिपूर्वकं ॥ ९३ ॥ युग्मं ॥ संपूर्णीकृतकर्तव्यः । कृतनिः-
शेषमंगलः ॥ वरो विज्ञपयांचक्रे । सस्नेहं शेखरादिभिः ॥ ९४ ॥ चंडश्रीसोदरो राज—पुत्रश्चंड-
यशा ननु ॥ त्वामाह्वातुं समायातो । द्वारे देव तवाधुना ॥ ९५ ॥ आसन्नं वर्तते लग्नं । प्रसरः क्रि-
यतां वरः ॥ सर्वस्तिष्ठति लोकोऽयं । बहिस्त्वद्दर्शनोत्सुकः ॥ ९६ ॥ ततः सिद्धार्थदुर्वाद्यै—र्दंतुरीकृ
तकुंतलः ॥ पट्टहस्तिनमारूढः । कुमारो वरवेषभृत् ॥ ९७ ॥ अशोकशेखरौ तौ तु । कुमारकरिपा-
र्श्वयोः ॥ चालयांचक्रतुश्चारु—चामरे कुंजरे स्थितौ ॥ ९८ ॥ तत्र पार्श्वोपविष्टेन । बंधुदत्तेन संम-

दात ॥ वरराजश्चचालाशु । विधृतातपवारणः ॥ ९९ ॥ बहुष्वन्येषु यानेषु । गजवाजिरथादिषु ॥
अध्यारूढः कुमारेंद्रं । राजलोकस्तमन्वगात् ॥ १०० ॥ मंदं मंदं चलच्चारु—विमानैर्व्योमचारिणः ॥
चेलुः सुखेन पश्यंतो । वरस्य मुखपंकजं ॥ १ ॥ जनयन् भुवनानंदं । विस्तरेण गरीयसा ॥ कुमा-
रो मंडपद्वार—माससाद नरेशितुः ॥ २ ॥ कुलवृद्धाकृताशेष—कुलाचारस्ततः क्रमात् ॥ संनिधाने
ययौ वध्वा । मातृगेहे वरोत्तमः ॥ ३ ॥ दंपत्योरचिराज्जात—स्तारामेलापकस्तदा ॥ अनुकूलस्तयोः
पूर्व—मेव निर्जितलज्जयोः ॥ ४ ॥ सुप्रशस्ते ततो लग्ने । पुण्याहध्वनिपूर्वकं ॥ कुमारः स्वेन चंद्र-
श्री—पाणिं जग्राह पाणिना ॥ ५ ॥ पूजिताशेषपूजार्हे । दत्तमानार्हमानकं ॥ कृतकृत्यं तयोरासी
—त्पाणिग्रहणमंगलं ॥ ६ ॥ प्रारब्धपूज्यसत्कारः । पुरोधः पृष्टमंजसा ॥ जनं संतर्पयामास । रा-
जा भोजनभूषणैः ॥ ७ ॥ गजाश्वरथरत्नानि । विचित्राभरणानि च ॥ पार्थिवेभ्यः प्रदत्तानि । यथा
योग्यं क्षणे तदा ॥ ८ ॥ न स कोऽपि तदा लोके—ऽनवद्रूपेन संमदात् ॥ धनधान्यसुवर्णाद्यैः ।
कृतार्थो विहितो न यः ॥ ९ ॥ गुरुविस्तरतस्तेन । तथाकारि महोत्सवः ॥ अपि विद्याधरेशानां ।
चमच्चक्रे यथा मनः ॥ १० ॥ निर्वर्तिते महानृत्या । पुत्र्या उद्वाहमंगले ॥ उवाच गुरुरंगेण । कु-

मारं नृमिवासवः ॥ ११ ॥ विद्यासंपन्नसर्वार्थे । एष विद्याधरो जनः ॥ तदेतस्य कथंकार—मुपकारं करोम्यहं ॥ १२ ॥ यद्युपक्रियते नात्र । महतां गुणमानतः ॥ महत्त्वं पतति स्वस्य । परस्य च तदा ननु ॥ १३ ॥ अनौचित्यकृतो ह्यत्यु—पकारोऽप्यपकारवत् ॥ गुरुर्लघुषु लोकेषु । लघुश्चोरुत्वशालि-षु ॥ १४ ॥ राजा यावज्जगादेति । कुमारस्तावदब्रवीत् ॥ उदारं ललितं वाक्यं । तस्यैव वचनानु-गं ॥ १५ ॥ महेंद्रोऽप्युपकारार्थी । गौरवं लभते कथं ॥ रंकोऽपि सुतरां राजन् । गुरुर्भवति निःस्पृ-हः ॥ १६ ॥ क्रियमाणं परैर्दानो—पकारं न हि साधवः ॥ किंतूज्ज्वलमनःस्नेह—मेवेच्छंति महा-शयाः ॥ १७ ॥ येषां महोपकारोऽपि । निःस्नेहस्तृणवल्लघुः ॥ तेषां तृणमपि स्नेह—युक्तं स्यान्मे-रुवद्गुरुः ॥ १८ ॥ नरेंद्रामीषु चेत्प्रेम—तत्परं हृदयं तव ॥ औदार्येणैव तत्सर्व—मपि संपत्स्यते ध्रुवं ॥ १९ ॥ इति नृपकुमारौ तौ । यावद्वार्तयतो मिथः ॥ तावद्विज्ञपयांचक्रे । कोशाध्यक्षेण नृपतिः ॥ २० ॥ दानार्थं याचसे यद्य—त्तत्सर्वं वर्धते तव ॥ अनंतगुणितं देव । न जाने केन हेतुना ॥ २१ ॥ इदानीं तु महाराज । युष्माभिः प्रेरितो गतः ॥ शेखराशोकसत्कार—हेतवे कोशमंदिरं ॥ २२ ॥ तावत्तत्र महामूल्ये । निर्मले नरनायक ॥ प्रवरे ददृशाते द्वे । रत्नमाले महौजसौ ॥ २३ ॥

राजोवाच महच्चित्रं । कुमाराशेषमप्यदः ॥ यथा यथाधिकं दानं । कोशे वृद्धिस्तथा तथा ॥ २४ ॥ कुमार विस्मयं रत्न—मालायुग्मं करोति मे ॥ एतावद्भागधेयानां । नाहमस्मि पदं यतः ॥ २५ ॥ वीरसेनोऽवदद्देव । मैवमादेशमुच्चिरः ॥ सर्वपुण्यपरिपाक—संभूतोऽसि त्वमेव यत ॥ २६ ॥ तद्देव र-त्नमालाभ्या—ममूभ्यां खेचरेश्वरौ ॥ सत्क्रियते तयोर्वस्त्र—दानेनापि परिग्रहः ॥ २७ ॥ इत्यालोच्य कुमारेण । राज्ञा च सत्कृतावुभौ ॥ अशोकशेखरौ तौ तु । परमस्नेहनिर्भरं ॥ २८ ॥ ऊचाच खे-चराधीशौ । कुमारोऽवसरे ततः ॥ निजस्थानं युवां यातं । स्मर्तव्योऽहं पुनः सदा ॥ २९ ॥ ततस्ता-वूचतुर्मित्र । प्रमाणं वचनं तव ॥ देहेनैव परं यावो । हृदयं तु त्वदंतिके ॥ ३० ॥ दत्वा विमान-रत्नं त—त्कुमारस्य महौजसः ॥ विमुच्य चांगरक्षार्थं । सहस्रं व्योमचारिणां ॥ ३१ ॥ वीरसेननरेंद्रा-भ्यां । विसृष्टौ खेचरेश्वरौ ॥ चंद्रश्रियं प्रणम्यापि । गतौ तौ सपरिच्छदौ ॥ ३२ ॥ युग्मं ॥ प्रीत्या त-योस्तत्र जगाम जाया—पत्योः कियानप्यवियोगभाजोः ॥ कालः कलावद्रतिकामकांत्यो—र्भुंजा-नयोर्वैषयिकं सुखं सत् ॥ ३३ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बां-धवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये श्रीहरिविक्रमराजप्रतिबोधावसरे प्रोक्तश्चं-

द्श्रीप्रत्यानयनवीरसेनपाणिग्रहणो नाम नवम· सर्गः समाप्तः. ॥ श्रीरस्तु ॥

—— ——

॥ अथ दशम· सर्गः प्रारभ्यते ॥

अन्येद्युर्विजयावासे । राजा प्रज्ञाकरान्वितः ॥ प्रकृष्टमानसो याव—दासीनोऽस्त्यल्पसंसदि
॥ १ ॥ चंडश्रियं सुतां ताव—द्विनयेन कृतानतिं ॥ तत्रैव जननीपार्श्वे । दृष्ट्वा पप्रच्छ संमदात्
॥ २ ॥ वत्से किं तव भर्ता न । दृश्यते सप्तमं दिनं ॥ शरीरे न पटुः किं वा । व्यग्रः कार्यांतरेण
किं ॥ ३ ॥ चंडश्रीरवदत्तात । प्रसादेन पटुस्तव ॥ न जाने किंतु कुत्रापि । प्रियोऽगात्सप्तमं दिनं
॥ ४ ॥ राजोवाच न जानासि । यत्त्वमेतत्कथं पुनः ॥ तयोक्तं सत्यमेवेदं । वेद्मि तच्चरितं न हि
॥ ५ ॥ राजोवाच न तस्येष्टा । त्वं तेनाख्याति न त्वयि ॥ यतोऽभीष्टकलत्राणां । जीवोऽपि परवान्
भवेत् ॥ ६ ॥ त्रपाभरेण चंडश्री—र्न्यंचद्वदनपंकजा ॥ विलिखंती भुवं तस्थौ । मौनेनैकं क्षणं त-
तः ॥ ७ ॥ मंत्रिणोचे न देवैवं । यतः सत्पुरुषा न हि ॥ भवंति युवतीवश्या । विशेषाच्च जिगीष
वः ॥ ८ ॥ भवेत्किमपि तत्कार्यं । गुरूणां कथ्यते न यत ॥ भोगैकफलवृत्तीना—मिहास्तां योषि·

तां पुनः ॥ ९ ॥ भणितं विजयादेव्या । देवैषानेन हेतुना ॥ भर्तुः स्वरूपमाख्यातुं । सखेदात्र समागता ॥ १० ॥ राजा जगाद वत्से त्वं । न जानासि किमित्यपि ॥ वेलायां स गतः कस्यां । गच्छता कथितं च किं ॥ ११ ॥ चंद्रश्रीरवदत्तात । सुप्ता मुक्तामुनाप्यहं ॥ यावज्जागर्मि तावन्न । पश्यामि प्राणवल्लभं ॥ १२ ॥ ततो रत्नप्रदीपेन । प्रद्योते परितः कृते ॥ ददृशे केतकीपत्रं । कस्तूरीलिखिताक्षरं ॥ १३ ॥ इत्युक्त्वा सार्पयांचक्रे । केतकीपत्रमादरात ॥ राजापि वाचयामास । सशंकः श्लोकमीदृशं ॥ १४ ॥ नृपाद्या मा विषीदंतु । कार्येणाशु गतोऽप्यतः ॥ कृतकार्यो दशाहेनां—विर्भविष्याम्यहं पुनः ॥ १५ ॥ श्लोकार्थमिति तं ज्ञात्वा । स्वस्थचित्तो नरेश्वरः ॥ सुतामाश्वासयामास । सावष्टंभैर्वचोभरैः ॥ १६ ॥ एवं यावन्नरेंद्रेण । स्थिरीचक्रे सुता तदा ॥ समागात्खेचरस्तत्र । तावदेकोंबराध्वना ॥ १७ ॥ तेन प्रणम्य नृपालं । स्वामिनीमपि तां निजां ॥ लब्धासनेन सस्नेहं । प्रारेभे गदितुं वचः ॥ १८ ॥ युष्माकं हृदये माभू—दनिवृत्तिरितीच्छया ॥ वीरसेननृपेणाहं । चंपायाः प्रहितोऽधुना ॥ १९ ॥ चंपायां गमने तस्य । राजराजस्य कारणं ॥ कथ्यमानं समासेन । मया शृणुत संप्रति ॥ २० ॥ ज्ञातुं समस्तभूतानां । चेष्टितानि स वीरराट् ॥ खेचरान् दिक्षु सर्वासु । स्थि-

तोऽत्र प्रेषयत्सदा ॥ २१ ॥ प्रत्यहं चात्र यत्किंचि—द्वर्तते राजवेश्मसु ॥ वीरसेनस्य तत्सर्वं । कथ-
यंतिस्म खेचराः ॥ २२ ॥ एवं सोऽनुदिनं राज्ञां । सर्वेषां चारलोचनैः ॥ अत्र स्थितोऽपि राजेंद्रो ।
व्यवहारं व्यलोकयत् ॥ २३ ॥ अन्यदाहं समादिष्टः । स्वामिना विजिगीषुणा ॥ गछ रे वज्रबाहोऽ-
त्र । देशं त्वं मगधाभिधं ॥ २४ ॥ नरसिंहो नृपश्चंपा—पुर्यामतुलविक्रमः ॥ मया सार्धं स शत्रुत्वं ।
चिकीर्षति किलाधुना ॥ २५ ॥ निजविक्रमगर्वेण । यः परं मन्यते तृणं ॥ ज्ञात्वा सम्यग्ममाख्या-
हि । स्वरूपं तस्य सत्वरं ॥ २६ ॥ इत्यादेशेन राजानं । नत्वाहं निर्गतस्ततः ॥ प्राप्तश्चंपापुरीं शी-
घ्रं । महाराज नभोऽध्वना ॥ २७ ॥ प्रणम्य प्रथमं तत्र । वासुपूज्यजिनेश्वरं ॥ प्रविष्टोऽहं ततश्चंपां ।
निर्धूतांतरकश्मलः ॥ २८ ॥ अदृश्यो दृष्टिमोहिन्या । विद्यादेव्याः प्रभावतः ॥ मनोहरं प्रविष्टोऽहं ।
नरसिंहनृपमंदिरं ॥ २ए ॥ नरसिंहः स संग्रामे । दुर्जयः सिंहवत्किल ॥ एकातपत्रपृथ्वीकः । परा-
क्रममदोध्धुरः ॥ ३० ॥ अपि देवा रणे तस्य । नालं किं मनुजाः पुनः ॥ युष्माकमपि स प्रायः ।
प्रत्यक्षः संभविष्यति ॥ ३१ ॥ राजा स्माह मैवेदं । नान्यथा श्रूयतां यतः ॥ तस्य दंभं प्रयच्छंत्य—
स्मदन्येऽत्र महीभुजः ॥ ३२ ॥ तत्पुरः खेचराख्याहि । नरसिंहं न वेत्ति कः ॥ द्विषां दर्पभरो यस्य ।

नाममात्रेण नश्यति ॥ ३३ ॥ खेचरः स्माह पश्यंस्तं । यावद्भय्यागृहं गतः ॥ भार्यामंत्रियुतं ताव— न्मंत्रयंतं तमैक्षि ॥ ३४ ॥ किमत्र मंत्रयत्येष । इत्याशंकाकुलो हृदि ॥ तत्समीपे गतो देव । स्वामिकार्यचिकीर्षया ॥ ३५ ॥ ऊचेऽथ नरसिंहेन । शृणुतं नीतिसंगतं ॥ हे प्रिये हे महामात्य । युवां द्वावपि मद्वचः ॥ ३६ ॥ इह देवि यदा त्वं प्राग् । हृता कमलकेतुना ॥ अनुभूतं तदा दुःखं । घोरं त्वद्विरहे मया ॥ ३७ ॥ तदाहं त्वद्वियोगार्तो । मनोऽन्याक्षेपहेतवे ॥ अनेन मंत्रिणानीतो । वासुपूज्यजिनालयं ॥ ३८ ॥ वासुपूज्यजिनं दृष्ट्वा । निःशेषासुखनाशनं ॥ परितोषो महान् देवि । बभूव हृदये मम ॥ ३९ ॥ अभिवंद्य ततो देवा—न्निर्गतो भवनाद्बहिः ॥ देवान् वंदितुमायात—मपश्यं चारणं मुनिं ॥ ४० ॥ वंदित्वा तं मुनिं प्राप्त—धर्मलाभस्तदंतिके ॥ उपविष्टः शृणोमि य—त्तन्मुखाद्धर्मदेशनां ॥ ४१ ॥ अत्रांतरे महादेवि । त्वं मे मनसि खटकृता ॥ त्वद्वृत्तांतं ततोऽपृच्छि । मयायं मुनिपुंगवः ॥ ४२ ॥ मुनिरूचे महाराज । नाम्ना कमलकेतुना ॥ विद्याधरेण सा जह्रे । स्त्रीलोलेन तव प्रिया ॥ ४३ ॥ मुक्त्वाद्रिगह्वरे तेन । जगदे सा तव प्रिया ॥ हृता मयानुरक्तेन । मामिच्छ त्वं कृशोदरि ॥ ४४ ॥ तयाथ तत्क्षणोत्पन्न—बुद्ध्याभाणीति खेचरः ॥ किं करोम्यहमद्यैव ।

जाता पुष्पवती किल ॥ ४५ ॥ हृदयान्यन्यनारीणां । त्वं हरस्यवदन्नपि ॥ याचमानं पुनर्मन्ये । या
त्वं नेच्छति नास्ति सा ॥ ४६ ॥ श्रुत्वा तद्वचनं जात—प्रत्याशो हृष्टमानसः ॥ प्रासादे तां स आनी·
य । प्रदोषेऽद्यैव मोक्ष्यति ॥ ४७ ॥ मयोक्तमिति चेत्साधो । पुनरप्येष्यतीह सः ॥ तन्नास्ति कुशलं
नूनं । प्रियायाः मे कथंचन ॥ ४८ ॥ मुनिराहस्म मास्त्वं । कामरूपी स खेचरः ॥ अर्थपतिप्रिया·
सक्तो । विद्यते भूमिवासव ॥ ४९ ॥ नाशिक्येऽस्ति तथा वीर–सेननामा शिरोमणिः ॥ समस्तानां
भटानां यो । विख्यातो जगतीतले ॥ ५० ॥ तेनाथानिष्यते दुर—मुड्डीय गगनांगणे ॥ नश्यन्नर्थ·
पतेः कांता—मपहृत्य स खेचरः ॥ ५१ ॥ प्रद्वेषेण मया तस्य । प्रशंसामसहिष्णुना ॥ ऊचे मु·
नींद्र मत्कर्णा—वेतन्न शृणुतो वचः ॥ ५२ ॥ अहमेवात्र निःशेष—सुभटानां शिरोमणिः ॥ दृष्टः
श्रुतोऽथवा नान्यो । रणे यः सन्मुखोऽस्ति मे ॥ ५३ ॥ विशेषविक्रमेणाथ । स संप्राप्तयशा यदि ॥
तत्किं तेन तदा नाहं । मारितः शाश्वतो गुरुः ॥ ५४ ॥ अथोवाच मुनिः शांतो । भव त्वं कतिभि·
र्दिनैः ॥ त्वां विजित्य महीनाथो । भविष्यति नरेंद्र सः ॥ ५५ ॥ श्रुत्वा साधुवचस्तस्या—श्रद्दधानः
पराक्रमं ॥ नत्वा मुनिवरं गेह—मागतोऽहं निजं ततः ॥ ५६ ॥ प्रदोषे दयितां ह्यत्र । दृष्ट्वा सौधे

मुनेर्वचः ॥ मत्वा सत्यं मया चैवं । हृदये परिभावितं ॥ ५७ ॥ प्रियाया दर्शनेनेदं । सत्यं जातं मुनेर्वचः ॥ तादृक् चेद्वीरसेनेऽपि । ततोऽहं नष्ट एव हि ॥ ५८ ॥ अथवा यद्यदाभावि । करिष्येऽहं तदैव तत् ॥ वृथा भविष्यत्कार्यार्थ—मात्मानं तु दुनोमि किं ॥ ५९ ॥ ततोऽहं मुनिवाक्येन । ज्ञात्वा त्वामकलंकितां ॥ अनुरागातिरेकेण । भुंजे भोगांस्त्वया सह ॥ ६० ॥ ततो मंत्रिन् रतासक्तः । संगीतध्वनिरंजितः ॥ विनोदैर्विविधैः कालं । न जाने गतमप्यहं ॥ ६१ ॥ अथान्यस्मिन् दिने रात्रौ । श्रांतः सुरतसेवया ॥ आरूढोऽहं समं देव्या । सौधस्योपरिभूमिकां ॥ ६२ ॥ मंदानिलसुखं तत्रा—नुभवन् स्वेदबुद्बुदान् ॥ देव्याः कपोलयोर्याव—न्मार्जयामि स्ववाससा ॥ ६३ ॥ सहसा नभसस्ताव—द्विद्याधर्यः पुरो मम ॥ चतस्रः शोकविवशाः । पेतुः श्रस्तविभूषणाः ॥ ६४ ॥ तासां परिजनोऽप्यागा—दनुमार्गेण दुःखितः ॥ शीतोपचारैर्बहुभिः । स्वस्थास्ता अब्रुवन् पुनः ॥ ६५ ॥ करैर्वक्षःस्थलाघात—त्रुट्यद्धारलतास्ततः ॥ शिरःकुट्टनसंभिन्न—स्निग्धश्यामकचोच्चयाः ॥ ६६ ॥ कज्जलाविलनेत्रांबु—श्यामीकृतमुखांबुजाः ॥ रुरुदास्ता विलापोक्ति—कृतनिःकृपहृत्कृपाः ॥ ६७ ॥ युग्मं ॥ हा नाथ प्राणदयित । हा हा गुरुपराक्रम ॥ हतः पवनकेतो त्वं । वीरसेनेन हा कथं ॥ ६८ ॥

हा नाथ पाथसां राशौ । प्रक्षिप्तोऽपि मृतो न यः ॥ एतावतैव जानासि । न किं विषमतां रिपोः
॥ ६९ ॥ वैताढ्यस्योभयो राज्यो—र्येन रुष्टेन न स्थितिः ॥ जित्वाशोक तमप्याशु । चंडश्रीर्येन वा-
लिता ॥ ७० ॥ एकांगेनापि येनाथ । यूयं दर्पोध्धुरा रणे ॥ तृणवत्तुलिताः सार्धं । सुभटैः शेखरेण
वा ॥ ७१ ॥ एकैकेनाप्यद्भुतेन । यच्चरित्रेण भूतले ॥ बुध्यते ज्ञोऽपि बुद्धोऽसि । कथं न त्वं विच-
क्षण ॥ ७२ ॥ अथवा तव को दोषो । दोषः सर्वोऽप्ययं हि नः ॥ शुभाशुभं फलं पुंसो । गृहिणी-
लक्षणेन यत् ॥ ७३ ॥ इत्यनेकविकल्पोक्ति—घर्घरीकृतनिःस्वनाः ॥ मया परिजनेनापि । ताः क-
थंचित्प्रबोधिताः ॥ ७४ ॥ ततस्तास्तत्क्षणेनैव । परिवारसमन्विताः ॥ रुदत्यो नभसोत्प्लुत्य । ययुः सं-
ग्रामभूमिकां ॥ ७५ ॥ एताः का भोः कथं चात्र । पतिता वा कुतः पुनः ॥ कश्चित्तन्मध्यवर्ती ना ।
मया पृष्टो जगाविति ॥ ७६ ॥ विद्याधरेंद्रपवन—केतोरेताः प्रियाः प्रियाः ॥ वैताढ्याद्दौ विमुच्यैता ।
गतोऽभूत्सोंबुधेस्तटं ॥ ७७ ॥ वीरसेनः स एकाकी । क्षिप्तस्तत्र पयोनिधौ ॥ उत्पाट्य भ्रातृवैरेण ।
क्षणात्पवनकेतुना ॥ ७८ ॥ चंडश्रीः सा यथा लब्धा । वीरसेनेन सागरे ॥ विद्याबलेन विज्ञातं ।
पवनेन तथैव तत ॥ ७९ ॥ पुनस्तं बंधुवैरेण । पवनः सोऽन्वेषयत् ॥ चंडश्रियोऽनुरागेण । शे-

खरः सोऽपि धावितः ॥ ८० ॥ एवं गतवतोर्दूरं । तयोः शुद्धिं न कोऽप्यवक् ॥ अनिवृत्तिवशादेता
—स्तत्रैव चलितास्ततः ॥ ८१ ॥ आगतानामिहैतासा-मुक्तं व्यावृत्तखेचरैः ॥ मारितो वीरसेनेन ।
यथा पवनकेतुराट् ॥ ८२ ॥ श्रुतेऽप्येवं ततो मूर्छा—द्वादितांतरचेतनाः ॥ अत्रैव पतिता एता ।
ख्यातं मयेति ते नृप ॥ ८३ ॥ इत्युक्त्वा खेचरः शीघ्रं । ययौ गगनवर्त्मना ॥ आवां द्वावपि शय्या-
याः । प्रविष्टौ तद्गृहं पुनः ॥ ८४ ॥ समुद्गते ततः सूर्ये । कृतप्राभातिकक्रियः ॥ संस्मरन् रात्रिवृ
त्तांत—मास्थानेऽहमुपाविशं ॥ ८५ ॥ तत्रास्थाने क्षणं स्थित्वा । प्रणतोऽनेकभूमिपैः ॥ गृहीत्वैनां
करे मंत्रिन् । प्रविष्टो वासमंदिरं ॥ ८६ ॥ तदेषा सा महादेवी । सैष त्वं मंत्रिकुंजरः ॥ अत्रकालो
युवां ब्रूतं । करणीयं ममास्ति यत् ॥ ८७ ॥ ममोपरि न तद्याव—त्सोऽप्येति दर्पदुर्धरः ॥ गत्वा ता-
वदहं तस्य । खड्गं न्यनज्मि मूर्धनि ॥ ८८ ॥ तथा च न स मे शत्रु—र्विचेत्रनृपतिर्यथा ॥ कृत्वा-
वज्ञां ममैवं यो । दुर्नयं कुरुते किल ॥ ८८ ॥ यः शत्रावपि मित्रत्वं । मित्रे शत्रुत्वमीहते ॥ स प्र-
च्छन्नरिपुर्ज्ञात्वा । हंतव्यो निश्चितं मया ॥ ८९ ॥ मंत्रस्तदेष मे मंत्रिं—स्त्वमप्याख्याहि हृद्गतं ॥ इ-
त्युक्ते तेन मंत्रीशः । प्रारेभे भणितुं ततः ॥ ९० ॥ संग्रामावसरे केषां । रिपूणामभिमानिनां ॥

त्वया न स्थापितो मूर्ध्नि । निजपादो नरेश्वर ॥ ९१ ॥ देव यद्यपि शत्रुर्न । पराक्रमसमस्तव ॥ वि-
श्वे तथापि सद्बुद्धि—युक्तैर्भाव्यं विचक्षणैः ॥ ९२ ॥ बुद्धिना वा तरंत्याशु । विपदावर्तसागरं ॥ न-
रा गोष्पदमात्रेऽपि । मोमुह्यंते तु तां विना ॥ ९३ ॥ संपन्नो बुद्धिदैवाभ्यां । वीरसेनः पराक्रमी ॥ वै-
ताढ्याद्युन्नयश्रेणी—खेचरेंद्रसहायवान् ॥ ९४ ॥ वश्येंद्रियः कृतज्ञश्च । साहसी सुजनप्रियः ॥ ए-
वंविधोऽस्ति शत्रुः स । न स्वामिन् विग्रहोचितः ॥ ९५ ॥ युग्मं ॥ विग्रहो युज्यते स्नेह—सद्दा-
यात्मबलैः समे ॥ कर्तव्यमधिके शत्रौ । संधानं तु नरेश्वर ॥ ९६ ॥ नरसिंहो निशम्येति । ललाा-
टन्यस्तलोचनः ॥ विमलाख्यं महामात्यं । साधिक्षेपमदोऽवदत् ॥ ९७ ॥ निजजात्यनुमानेन । पुंसां
प्रायेण बुद्धयः ॥ अधमोत्तमजातानां । तद्रूपहृदयाश्रयात् ॥ ९८ ॥ वीरसेने गुणास्तस्मिं—स्त्वया ये
परिकल्पिताः ॥ परीक्षां समरे कर्ता । तेषां मेऽसिकषोपलः ॥ ९९ ॥ तव बुद्ध्या वयं मंत्रिन् । स-
मास्तेनापि नो कृताः ॥ गुणाधिकस्त्वयाकारि । स विद्वेष्यस्मदप्यहो ॥ १०० ॥ तेनैव हेतुना तेन ।
सार्धं समधिकौजसा ॥ सर्वारंभेण कर्तव्यो । निश्चितं विग्रहो मया ॥ १ ॥ हीनेऽथ सदृशे शत्रौ ।
जयोऽपीह त्रपावहः ॥ बलेनाभ्यधिके तस्मिन् । शोभतेऽपि पराजयः ॥ २ ॥ इत्युक्त्वा सहसोत्तस्थौ ।

स्फुरदोष्ठः क्रुधा नृपः ॥ आदिदेश च सामंतान् । स्थित्वास्थानस्य मंडपे ॥ ३ ॥ सज्जीभूयाद्य सामंता—श्चंपापुर्यां बहिर्भुवि ॥ विस्तारयत वेगेन । स्वकीयान् पटमंडपान् ॥ ४ ॥ अरेरेऽमात्य सैन्यं मे । गजवाजिरथादिकं ॥ समर्थं समरे यत्त—स्सज्जय त्वं क्षणादपि ॥ ५ ॥ यो गतोऽपि गृहं भार्यां । सुतं वा संस्मरिष्यति ॥ तिष्ठत्वत्रैव सोऽन्यस्तु । पुरोऽस्तु सुभटो जनः ॥ ६ ॥ चलताप्राच्यदेशेषु । नाशिक्यनगरींप्रति ॥ हनिष्यामि रिपुं वीरं । विचित्रयशसा समं ॥ ७ ॥ अन्वादेशमनेकानां । जनानां क्षोभकारकः ॥ प्रससार प्रयाणस्य । भेर्या भैरवनिःस्वनः ॥ ८ ॥ आक्रांताखिलभूमार्गं । गजाश्वरथपत्तिभिः ॥ संनद्धायससंनाहं । निर्ययौ नगराद्बलं ॥ ९ ॥ मंम्लेशनृपामात्याः । सामंता अपि सत्वरं ॥ लब्धादेशाः पुरीमध्या—त्प्रस्थानक्षितिमाययुः ॥ १० ॥ अत्रांतरे नृसिंहस्य । ज्ञात्वा प्रस्थानकारणं ॥ संप्राप्तोऽहं क्षणार्धेन । नरनाथात्र पत्तने ॥ ११ ॥ यथा दृष्टं श्रुतं सर्व—मेकांते कथितं मया ॥ स्वामिनो वीरसेनस्य । विजिगीषुशिरोमणेः ॥ १२ ॥ विचिंत्य हृदये तेन । भणितोऽहमये शृणु ॥ प्रारब्धो विग्रहः सर्वः । कारणेन ममामुना ॥ १३ ॥ तस्मिन्ननागतेऽस्माकं । देशस्य स्यादुपद्रवः ॥ परचक्रभयोद्भ्रांतो—ऽपि लोको दुःखितो भवेत् ॥ १४ ॥ हृदयं च महाराज

—स्यापि स्याद् दुःखितं कथा ॥ मेलापकेऽत्र सेनाया । महांश्च द्रविणव्ययः ॥ १५ ॥ उभयोर्मि-
लिते सैन्ये । संहारो देहिनामपि ॥ कार्ये मदेकसाध्ये त—त्सयासेनेयता किमु ॥ १६ ॥ गत्वा त-
दहमेवैक—स्तस्य दुष्टस्य भूपतेः ॥ हरामि भुजकंडूनि । बहुना जल्पितेन किं ॥ १७ ॥ मंत्रयित्वे-
ति संजात—पौरुषोत्कर्ष आशु सः ॥ सुप्तां चंद्रश्रियं मुक्त्वा । वीरसेनो मया समं ॥ १८ ॥ खड्ग-
पाणिः समुत्पत्य । मम विद्याबलेन च ॥ ययौ तारागणाकीर्णं । वीक्षमाणो नभस्तलं ॥ १९ ॥ यु-
ग्मं ॥ प्राप्य चंपापुरीं वेगा—द्वासुपूज्यस्य मंदिरे ॥ आवां कृतनमस्कारौ । धर्मध्यानेन तस्थिवः
॥ २० ॥ उदियाय ततः सूरः । संध्यारागारुणद्युतिः ॥ पूर्वकाष्ठावधूभाले । तिलकः कौंकुमः खलु
॥ २१ ॥ प्रागालोकसुखं जातं । दुरालोकं मनाक्ततः ॥ भानुबिंबं तदेवाभू—त्क्षणेनैवातिदुःसहं
॥ २२ ॥ क्रमेण गगनं सूर । आरुरोह यथा यथा ॥ तथा तथा प्रतापस्य । वृद्धिं प्रापाधिकाधिकां
॥ २३ ॥ नृसिंहः समये तस्मिन् । कृतप्राभातिकक्रियः ॥ सेवकामात्यसंकीर्णे । आस्थाने समुपावि-
शत् ॥ २४ आकार्य वेत्रिणा तत्र । नृपेणोचे मुहूर्तवित् ॥ प्रस्थानलग्नमाख्याहि । शुभं मे गणको-
त्तम ॥ २५ ॥ ऊचे नैमित्तिकेनेति । प्रमाणं चेन्ममोदितं ॥ तन्नास्ति खलु चंपायाः । प्रश्रयानम-

हीपतेः ॥ २६ ॥ नृपेणोचेऽथ यद्येति । वसानो जीर्णकंबलं ॥ मत्सेवालंपटो वीरः । कुठारं कंठगं वहत् ॥ २७ ॥ गमनस्खलनं तस्या—द्विलंबो नान्यथा पुनः ॥ सम्यग्विचिंत्य तज्जल्प । नैमित्तिकशिरोमणे ॥ २८ ॥ नैमित्तिकः पुनः स्माह । सत्यं सोऽत्र समागमः ॥ सेवाकांक्षी न ते किंतु । देवानर्थचिकीर्षया ॥ २९ ॥ ततोऽवोचत्सकोपः स । नरसिंहो नरेश्वरः ॥ नैमित्तिकस्य तद्वाक्यं । श्रद्दधानो हि नोच्चकैः ॥ ३० ॥ अज्ञान रे निमित्तज्ञ । तेनानर्थः कथं मम ॥ बलवानपि खद्योतः । कथं हंति रवेर्महः ॥ ३१ ॥ संभवेन्नागमस्तस्य । भ्रांतस्त्वमसि सर्वथा ॥ कथमत्रागतो वैरी । ममासौ यन्न खेचरः ॥ ३२ ॥ पदे पदेऽपि मे भूमिः । संकीर्णप्रणधिव्रजैः ॥ दुर्लंघ्या सर्वकाष्टासु । स्थापितैः स्थानपूरुषैः ॥ ३३ ॥ गणकेनोदितं राजन् । स सत्यं भूमिगोचरः ॥ उपायेन परं केना—प्यागतो नगरीं तव ॥ ३४ ॥ राजोवाच विलोकस्व । विश्वस्तीभूय मुह्य मा ॥ तदेवं वचनं यस्माद् । घटमानं न संप्रति ॥ ३५ ॥ नैमित्तिकः पुनः स्माह । स भवेद्यदि नागतः ॥ शिरश्छेदेन मे दंडं । तत्त्वं कुर्यान्नरेश्वर ॥ ३६ ॥ राजोचे वसति क्वायं । प्रदेशे तन्निवेदय ॥ भणितं गणकेनास्ति । वासुपूज्यगृहेऽधुना ॥ ३७ ॥ ब्रुवेऽन्यदपि देवाह—मात्मना सद्वितीयकः ॥ प्राप्तोऽस्ति यदि ते शक्ति

—व्यापादय तदा द्रुतं ॥ ३८ ॥ राज्ञोचे यदि पश्यामि । तमत्र गणकागतं ॥ तदा ददामि ते रा-
ज्यं । विचित्रयशसोऽखिलं ॥ ३९ ॥ तत्सामंतास्त्वरध्वं भो—श्चलताशु रणोत्सुकाः ॥ निर्वाहं वोऽ-
द्य पश्यामि । पूर्वगर्जितकर्मणः ॥ ४० ॥ रे सादिनश्चलद्वाजि—खुरोत्खातरजोभरैः ॥ विश्वक् पि-
धाय तं शत्रुं । व्यापादयत सत्वरं ॥ ४१ ॥ कृत्वा गजघटाबंधं । रे हस्तिपकपुंगवाः ॥ रसंतं विरसं तं
तु । कदर्थयत मे पुरः ॥ ४२ ॥ संग्रामकुशलः शत्रु—र्वीरसेनो निजे रथे ॥ निवार्यो गुरुयत्नेना-
रोहन् रे रथपालकाः ॥ ४३ ॥ रे शस्त्रपाल तं शत्रुं । तीक्ष्णाभिर्निजहेतिभिः ॥ विधाय खंडशो दे-
हि । बलिं दिक्षु दशस्वपि ॥ ४४ ॥ अन्यो यः कोऽपि शांतिं मे । तस्याशांतिं च वांछति ॥ तस्य
सर्वप्रकारेण । वधायास्तु स उद्यमी ॥ ४५ ॥ दत्वेति परिवारस्या—देशं सिंहनरेश्वरः ॥ कनकश्रि-
यमाप्रष्टु—मावासांतस्ततो गतः ॥ ४६ ॥ वर्ध्यसे वीरसेनस्या—गमनेनाधुना प्रिये ॥ इति जल्पन् य-
यौ राजा । प्रफुल्लास्यः प्रियांतिके ॥ ४७ ॥ नैमित्तिकवचः सर्वं । कथितं कनकश्रियः ॥ तथापि भ-
णितं शत्रुः । कथं कथमिहागतः ॥ ४८ ॥ राज्ञाथ भणितं देवि । न जाने कथमागतः ॥ देव्या-
भाणि परिणामे । नैतत्कार्यं शुभावहं ॥ ४९ ॥ यो भूमिगोचरोऽप्येको । जिगाय खेचरोत्करं ॥ मा-

कोपीर्देव युष्माकं । गणना तस्य का पुनः ॥ ५० ॥ वीरसेनस्य सामर्थ्यं । तत्किं ते देव विस्मृतं ॥ गजारूढोऽपि येन त्व—मेकांगेनापि संयतः ॥ ५१ ॥ यावदेवं तयोस्तत्र । संलापाः स्युः परस्परं ॥ गगनात्खेचरीव्यूहो—ऽवतरंस्तावदैक्ष्यत ॥ ५२ ॥ नरेंद्रेण ततोऽभाणि । प्रिये सैष समागतः ॥ विद्याधरवधूवर्गो—ऽवरोधः पवनस्य यः ॥ ५३ ॥ प्रतिपत्तिं विधायाथ । तासां पप्रच्छ नृपतिः ॥ सर्वं पवनकेतोः किं । मृतकार्यं निवर्तितं ॥ ५४ ॥ ततो मुख्यतमा तासां । पवनस्यातिवल्लभा ॥ नाम्ना मदनसेनादः । सखेदमवदद्वचः ॥ ५५ ॥ मृतकार्यं रिपौ तत्र । जीवति क्रियते कथं ॥ तद्वक्रोरुधिरैर्यावदीयते न जलांजलिः ॥ ५६ ॥ नरेंद्रश्चिंतयामास । ममैषा प्रियवादिनी ॥ विद्याबलेन साहाय्यं । चेत्कुर्यात्सुंदरं ततः ॥ ५७ ॥ ताभिरूचे पुनर्दुःख—दग्धाः सप्रणयं वयं ॥ आश्वासितास्त्वया राजन् । बांधवेनेव मूर्छिताः ॥ ५८ ॥ उपकारं परं तं ते । धृत्वा हृद्यागता वयं ॥ लोके सारमिदं यत्नो—पकृतिं विस्मरेदिह ॥ ५९ ॥ राजा जगाद भो जामे । कथं तस्यासृगंजसा ॥ विषमं मृतकर्तव्यं । निजभर्तुः करिष्यसि ॥ ६० ॥ ऊचे मदनसेनाथ । यदि पश्यामि तं रिपुं ॥ अधुनैव स्वसामर्थ्यं । दर्शयामि ततो नृप ॥ ६१ ॥ युवतीत्यथ रंडेति । दुःखदग्धेति भूपते ॥ मावमंस्थाः

श्रुतं किं न । वहुरत्ना वसुंधरा ॥ ६२ ॥ भार्याः पवनकेतोस्ता । अष्टावेता वयं रणे ॥ यदि पार्श्वे
भविष्यामो । हारयिष्यत्तदा न सः ॥ ६३ ॥ ऊचे नृपेण यद्येवं । साहाय्यं कुरुताद्य नत् ॥ भ्रातुर्मे
निश्चितं शत्रुं । मारयामि यथा तव ॥ ६४ ॥ युष्माकं यो रिपुर्मेऽपि । विशेषेण स निश्चितं ॥ वा-
सुपूज्यगृहे पुण्यै—र्युष्माकं मेऽपि चागमत ॥ ६५ ॥ समाकृष्टो गलेनात्र । महामीन इव क्षणात् ॥
युष्माकं स प्रभावेण । महासत्यः समागतः ॥ ६६ ॥ स्फुरत्क्रोधारुणाक्षीभिः । समायात इति श्रुते ॥
दष्टाधराभिरेताभि—रस्त्वस्त्विति प्रजल्पितं ॥ ६७ ॥ ततो विद्याबलेनाष्टौ । कृतघोरतरांगकाः ॥ वी-
क्षितास्ता नरेंद्रेण । भयेनोद्भ्रांतचेतसा ॥ ६८ ॥ पाहि पाहि महाराज । किमिदं भयमद्भुतं ॥ जल्पं-
त्येति महादेव्या । परिरब्धो नरेश्वरः ॥ ६९ ॥ एताभिर्जगदे राजा । विलंबोऽद्यापि किं नृप ॥ ज
गत्कल्पांतकर्ता नः । क्रोधवह्निः सुदुस्सहः ॥ ७० ॥ तस्मिन्नेव पतंत्वाशु । ज्वालाः क्रोधानलस्य नः ॥
यतोऽस्मासु यमोऽथासु । विभक्तांगो वसत्यसौ ॥ ७१ ॥ देवी स्माह न जानेऽहं । कीदृशं परिणंस्य-
ति ॥ कुलालचक्रमारूढ—मिव भ्राम्यति हृन्मम ॥ ७२ ॥ मा भैषीर्दयिते कार्यं । सिद्धं संप्रति नि-
श्चितं ॥ यत्सोऽप्यत्र समायातो । मया ज्ञातश्च सत्वरं ॥ ७३ ॥ संधीर्येति महादेवीं । समं ताभिर्न-

रेश्वरः ॥ पश्यन्नातंकतरलान् । पौरानाशु विनिर्ययौ ॥ ७४ ॥ इतश्च वीरसेनोऽस्ति । यावद्देवालये-
तदा ॥ तावदेका समायाता । चारुरूपा विलासिनी ॥ ७५ ॥ चेटीभिरात्मतुल्याभि—स्तुल्यालंकृ-
तिभिर्युता ॥ सौभाग्याकृष्टसूर्येण । सायं सार्धमिवोषिता ॥ ७६ ॥ वामेन पाणिना वल्गां । कशाम-
न्येन बिभ्रती ॥ गुप्तिवत्कामराजस्य । बभौ या वधबंधयुक् ॥ ७७ ॥ सर्वांगभूषणमणि—संक्रांतजन-
लोचना ॥ रूपानुरक्तसुत्राम—न्यस्तनेत्रेव या बभौ ॥ ७८ ॥ सखीवस्त्रांचलोद्धूत—श्वासलुब्धालि-
पंक्तिभिः ॥ मषीन्यस्ताक्षरं वेश्या—शास्त्रं वक्तीव या बभौ ॥ ७९ ॥ मीलिताक्षी समीपस्थ—गंध-
र्वध्वनिना बभौ ॥ अभ्यस्यंतीव मुग्धानां । मोहनं वंचनाय या ॥ ८० ॥ नाम्ना जयपताका सा ।
कामसेनापताकिका ॥ संप्राप्ता जिनगेहस्य । द्वारदेशे नितंबिनी ॥ ८१ ॥ सप्तभिः कुलकं ॥ परी-
ता दासदासीभि—र्वैसर्या अवतीर्य सा ॥ पादशौचं विधायाशु । प्रविवेश जिनालयं ॥ ८२ ॥ पू-
जयित्वा ततो देवा—न्नमस्कृत्य यथाविधि ॥ भ्रमत्या भ्रमतीं वीरं । गवाक्षे वीक्षते स्म सा ॥ ८३ ॥
भुवनाद्भुतपूरूप—दर्शनेनाथ वीस्मिता ॥ न शशाक पुरो गंतुं । सा स्थातुमपि लज्जया ॥ ८४ ॥
दुर्लभे स्नेहमूढस्य । दक्षस्यापि किमप्यहो ॥ तत्स्याद्यत्र न बुद्धीनां । प्रसरो धीरिमा कुतः ॥ ८५ ॥

तस्याः स्वरूपमालोक्य । कृत्रिमस्नेहनिर्भरं ॥ दयार्द्रेण मयाभाणि । स स्वामी कामिनीप्रियः ॥ ८६ ॥
मातृजन्मात्र वेश्यानां । प्रकृत्या कुटिलात्मनां ॥ यासां देव स्वभावोऽपि । भाति मायाप्रपंचवत्
॥ ८७ ॥ इतश्च सकलं देव-वंदनप्रमुखं तथा ॥ विधायानंतपुण्यार्थं । प्रारेभे प्रेक्षणक्षणः ॥ ८८ ॥
आकारिते ततस्तत्र । वीरसेने सभापतौ ॥ नृत्यत्यनुपरीपाट्या । चैकस्मिन्नर्तकीजने ॥ ८९ ॥ को-
ऽिनाट्यरसे प्राप्ते । लब्धावसरया ततः ॥ प्रारेभे बहुभंगीभि-र्नृत्यं जयपताकया ॥ ९० ॥ युग्मं ॥
कुमारो हारमुख्यानि । ददावाभरणानि सः ॥ तुष्टो जयपताकायै । संगीतक्रमकोविदः ॥ ९१ ॥ वि-
सृष्टे प्रेक्षणे तत्र । सानुरागा पणांगना ॥ स्वामिनं मन्मुखेनाह्व—द्वीरसेनं निजे गृहे ॥ ९२ ॥ मा-
मुवाच ततः स्वामी । वीरसेनो महामनाः ॥ प्रसंगः पणनारीणां । महतां नोचितो भुवि ॥ ९३ ॥
अनुरक्तापि पण्यस्त्री । गुणगंधविवर्जिता ॥ जपाकुसुममालेव । परिभोक्तुं न युज्यते ॥ ९४ ॥ सु-
दर्शा गुणाढ्यापि । वेश्या भुजंगवेष्टिता ॥ दूरं चंदनशाखेव । वर्जनीया महाजनैः ॥ ९५ ॥ कः
स्नेहो भीष्मरूपायां । व्याध्यामिव पणस्त्रियां ॥ यस्या निहंति विश्वासं । क्रूरत्वेनापि दर्शनं ॥ ९६ ॥
प्रकृत्या कुटिला वेश्या । देहेन सरलाः पुनः ॥ भुजंग्य इव वीक्ष्यंते । परमक्षणदक्षिणाः ॥ ९७ ॥

प्रसंगः सह वेश्याभिः । कुलीनानां नृणामिव ॥ लज्जाकारी गुणौघं च । करोति मलिनं ननु
॥ ९८ ॥ गुरुत्वं तावदेवात्र । कीर्तिस्तावच्च निर्मला ॥ गुणित्वं तावदेवास्ति । यावत्संगो न वेश्य-
या ॥ ९९ ॥ ततो मया पुनः प्रोचे । सत्यमेतन्न चान्यथा ॥ पूर्वोदितस्वरूपा हि । वेश्या देव भ-
वंत्यमूः ॥ २०० ॥ विचार्य किंतु कार्यार्थी । देशकालोचितं हृदि ॥ लोकानामविरोधेना—चरत्य-
नुचितान्यपि ॥ १ ॥ कार्यं तेऽरिजयः कार्यः । सोऽप्युपायांतरेण तु ॥ को वेत्ति कतिभिर्वर्षै—रुपा-
यो लप्स्यते पुनः ॥ २ ॥ अत्रास्माकं ततो देव । लोकः सर्वोऽप्यनर्थकृत् ॥ मुक्त्वा निःकृत्रिमप्रेम—
परतंत्रामिमां वशां ॥ ३ ॥ स्थित्वा जयपताकाया । गृहे विश्वस्तचेतसा ॥ नरसिंहनरेंद्रस्य । निग्र-
होपाय ईक्ष्यतां ॥ ४ ॥ क्रमेणानेन वेश्यापि । देवैषा मानिता भवेत् ॥ तद्वांछितविधानेन । दा-
क्षिण्यमपि पालितं ॥ ५ ॥ मयि प्रसादमाधाय । कृपां चास्यां परां प्रभो ॥ आचरानुचितमपी—त्यु-
क्त्वाहं पतितोंह्रिषु ॥ ६ ॥ ततो मदुपरोधेन । कार्यसिद्धौ कृतादरः ॥ प्रतिपेदे वचः सर्व—मपि वी-
रो महामनाः ॥ ७ ॥ कर्णजापं ततस्तस्या । मयाख्यातं शनैरिति ॥ त्वं याहि क्षणमात्रेण । कुमा-
रोऽप्यागमिष्यति ॥ ८ ॥ तस्यां स्वौकसि यातायां । कुमारोऽपि मया सह ॥ प्रणिपत्य जिनाधीश—

मुत्पपातांबराध्वनि ॥ ९ ॥ मम दृग्मोहिनीविद्या—प्रभावेण तिरोहितः ॥ तस्या गेहमनुप्राप्तः । कुमारोऽनीक्षितो जनैः ॥ १० ॥ कृतस्नानादिकर्तव्यो । वाससौधं प्रविश्य सः ॥ तस्थौ देव इव स्वर्गे । सार्धं जयपताकया ॥ ११ ॥ इतश्च निजसैन्येन । नरसिंहो नरेश्वरः ॥ निर्ययौ नगराद्योम्नि । पश्यंस्ता रजनीचरीः ॥ १२ ॥ नैमित्तिकं पुरस्कृत्य । नरसिंहः क्रुधारुणः ॥ सप्तधा वेष्टयामास । वासुपूज्यजिनालयं ॥ १३ ॥ निपुणं वीक्ष्य तस्यांत—र्बहिश्चाप्यात्मवैरिणं ॥ अपश्यन् गणकं स्माह । कथं रे वंचितास्त्वया ॥ १४ ॥ ज्ञानिना गदितं देव । पृष्टं यत्र क्षणे त्वया ॥ इहैवाभूत्तदा स्वामिन् । वीरसेनो न संशयः ॥ १५ ॥ राजोवाच निमित्तज्ञ । कथयाद्यापि किंचन ॥ तलारक्षैः शिरश्छेदं । न यावत्कारयामि ते ॥ १६ ॥ अथाष्टावपि भूपेना—वतरंत्यो नभोंतरात् ॥ राक्षस्यो वीक्षिता भीति—त्रस्यद्दीनबलेन ताः ॥ १७ ॥ अवतीर्यांबराद्याप्त—मुख्यास्ताः कर्तिकाकराः ॥ परिवेष्ट्य नृपं तस्थू । राक्षस्यो रौद्रमूर्तयः ॥ १८ ॥ ऊचे मदनसेनाथ । विद्यानां रक्षसामिह ॥ हिताहितपरस्वीय—भक्ष्याभक्ष्यक्रमो न हि ॥ १९ ॥ तदाशु भूप तं शत्रुं । सर्वथास्माकमर्पय ॥ मावादीर्यन्न मेऽभाणि । राक्षसा येन निःकृपाः ॥ २० ॥ न प्राप्स्यामो वयं ते चे—ज्ज्वलज्जठरवह्नयः ॥ बुभुक्षोप-

शमं कर्ता । योऽस्माकं तं च दर्शय ॥ २१ ॥ नृपः प्राह निमित्तज्ञ । किमप्यद्यापि भो वद ॥ कार्यं नश्यति नो याव—त्तवागादन्यथा मृतिः ॥ २२ ॥ गणकः स्माह जानासि । यद्राजन् मे कुरुष्व तत् ॥ जानन्नपि न हि स्थानं । कथयिष्यामि तेऽधुना ॥ २३ ॥ समर्प्य गणकं नृप—स्ततो दंडाधिकारिणां ॥ जिनेंद्रभवनस्यांत—र्विवेश त्वरितं स्वयं ॥ २४ ॥ देववीक्षार्थमायातः । पृष्टतः श्रावको जनः ॥ भूपेन नावदत्कोऽपि । परपीडापराङ्मुखः ॥ २५ ॥ देशांतरागतेनैके—नाख्यातं बुद्धिजन्मना ॥ वृत्तं यच्च यथा तत्र । नर्तकीवीरसेनयोः ॥ २६ ॥ दष्टौष्ठो भृकुटीभीष्म—भालपट्टो नरेश्वरः ॥ सरोषं खरशब्देन । प्रारेभे भणितुं ततः ॥ २७ ॥ पश्य तावत्प्रसादस्य । तस्य मे प्रणयस्य च ॥ लज्जितं न तया यन्मे । शत्रुः क्षिप्तो निजे गृहे ॥ २८ ॥ अथवात्र किमाश्चर्यं । नीचः स्यादीदृशो जनः ॥ तद्व्रजत गृहं तस्या—स्तं दुष्टं तत्र खादत ॥ २९ ॥ ऊचुस्ता रजनीचर्यो । यामः क्व क्व वयं नृप ॥ नृपः स्माह तदप्राप्तौ । वेश्यां तामेव खादत ॥ ३० ॥ ततो जयपताकायाः । प्रापुस्ता वेश्म तत्क्षणात् ॥ मुंचंत्यो वदनेनोच्चै—र्ज्वाला क्रोधहविर्भुजः ॥ ३१ ॥ घूर्मयन्नेत्रपत्राणि । निशाजागरणार्दितः ॥ कुमारोऽपि सुखेनाप । निद्रामेकांतवेश्मनि ॥ ३२ ॥ ततो जयपताकां ता—

मह्यमित्यवदं तदा ॥ यूयं निर्गच्छताशेषाः । कुमारः स्वपितु क्षणं ॥ ३३ ॥ बहिर्द्वारेऽस्य सौधस्य । स्थित्वाहमपि निश्चलः ॥ यत्नं करोमि सा पापा । येन स्यात्परान्मुखिका ॥ ३४ ॥ एवमस्त्विति वेश्या सा । गदित्वा निर्गता बहिः ॥ पिधायाहमपि द्वारं । खड्गपाणिरुपाविशत ॥ ३५ ॥ राक्षसीभिस्ततो गेहं । प्रविविक्षुभिरग्रतः ॥ दृष्टः खड्गकरो देहा—भिज्ञानैश्चोपलक्षितः ॥ ३६ ॥ अथ रौद्रं वपुः कृत्वा । सहसा विद्यया मया ॥ साशंकचेतसाकृष्टः । खड्गो वेगेन तांप्रति ॥ ३७ ॥ अपसृत्य च सातंकाः । पश्चाद्वातायने गताः ॥ विविशुश्च पुरो वीरं । ददृशुः सुखशायिनं ॥ ३८ ॥ त्रैलोक्याद्भुतलावण्य—जलेन क्रोधपावकः ॥ पश्यंतीनामथो वीरं । तासां वेगेन निर्ववौ ॥ ३९ ॥ विमुच्य राक्षसीभावं । सर्वाभिर्युगपत्ततः ॥ रूपं मनोहरं ताभि—र्विदधे सहजाश्रयं ॥ ४० ॥ निद्रया निर्भरं तस्य । प्रसुप्तस्य यथा यथा ॥ रूपमैक्षंत कामाग्नि—स्तासामिद्धस्तथा तथा ॥ ४१ ॥ जगौ मदनसेनाथ । सामान्याकार एष न ॥ आकारोचित एतस्य । भवितापि पराक्रमः ॥ ४२ ॥ कः संदेहोऽथवा नायं । जगत्प्रकटविक्रमः ॥ निहत्य पवनं येना—नीतं रंभात्वमात्मनां ॥ ४३ ॥ पूत्कृत्याभाणि शृंगार—वत्याथ सखि जीवति ॥ अस्मिन् रंभात्वमस्माकं । दीर्घायुषि नरे कथं ॥ ४४ ॥ चंद्रलेखा·

कुविकल्पं किमप्यंतः । कृत्वा कातरवत्किमु ॥ अवतीर्णोऽसि शय्याया । नाथाख्याहि कृपां कुरु ॥ ६९ ॥
विभाव्य स्वप्नसत्यार्थं । वीरसेनोऽवदत्पुनः ॥ भगिन्याकर्णयान्यस्त्री—संगभीत्यास्मि कातरः ॥ ७० ॥
भगिनीति वचः श्रुत्वा । खेचरी तस्य निष्ठुरं ॥ अदृष्टवज्रनिर्घाता—तिदूनहृदयावदत् ॥ ७१ ॥ किं
नाथ प्रलपस्येवं । त्वं निद्रापरतंत्रवत् ॥ अहं जयपताका ते । दासी सैव परस्य न ॥ ७२ ॥ वेश्याः
क चात्र भण्यंते । देशसामान्ययौवनाः ॥ परनार्यो नराधीश । विचार्याख्याहि मेऽधुना ॥ ७३ ॥
वीरो जगाद नैवाहं । प्रलपामि निरर्थकं ॥ भार्याः पवनकेतोर्हि । यूयमष्टावपि स्त्रियः ॥ ७४ ॥ तु
च्छसौख्यकृते यूयं । माकार्ष्ट मलिनं कुलं ॥ पितृश्वशुरयोः सर्वा । अपि निर्मलवंशजाः ॥ ७५ ॥ वी-
रसेनवचः श्रुत्वा । निर्दाक्षिण्यं क्षणात्ततः ॥ खेचर्योऽन्याः समाजग्मु—र्विभ्रमोद्भ्रांतलोचनाः ॥ ७६ ॥
त्यक्तत्रपाः कुमारानु—रागिण्यो विविधार्थनां ॥ तत्कालमेव ताश्चक्रु—र्विलक्षवदनाः स्त्रियः ॥ ७७ ॥
हा सौभाग्यनिधे नाथ । करुणारससागर ॥ मानुकूला अवज्ञासी—रेतास्त्वदनुरागिणीः ॥ ७८ ॥
अतिवक्रा गुणैर्हीनाः । क्षणमात्रानुरागिणः ॥ विघटंते नरा इंद्र—चापाभास्त्वादृशा ननु ॥ ७९ ॥
वीरो जगाद वक्रत्वं । निर्गुणत्वं च मे मतं ॥ क्षणरागित्वमप्येत—त्त्यजतः परयोषितः ॥ ८० ॥

ततो मदनसेनाख्य—दुर्नृपे भूचर किं बहु ॥ अस्मान्निबसि चेत्तर्हि । जीवसि त्वं न चान्यथा ॥ ८१ ॥ दिशोऽष्टाविव दुर्बुद्धे । वयमेताः करस्थिताः ॥ त्वं भुंदवासां प्रसादेन । राज्यं निःकंटकं भुवि ॥ ८२ ॥ वीरः स्माहास्तशीलानां । जीवितं मरणं ननु ॥ स्वशीलं रक्षतां पुंसां । श्लाघ्यते मृत्युरप्यहो ॥ ८३ ॥ दुर्बुद्धिः सैव यान्यस्त्री—प्रसक्तस्य भवेदिह ॥ पुनरेवं वदंत्योऽपि । यूयमष्टौ ममापदः ॥ ८४ ॥ इदं सत्यं वयं सर्वा । आपदो भवतः किल ॥ इत्युक्त्वा ताः स्थिताः सर्वा । राक्षसीत्वेन तत्क्षणात् ॥ ८५ ॥ वीरः स्माह किमेतेन । बालभापनकर्मणा ॥ धृष्टोऽस्मि सुप्रसिद्धोऽहं । राक्षसामपि भेषकः ॥ ८६ ॥ ततो गबत मा भूत । निंद्या रूपैरमूदृशैः ॥ भवंति निष्फलारंभाः । पराभवपदं ननु ॥ ८७ ॥ जगदुर्वीरसेनं ता । राक्षस्यः कर्तिकाकराः ॥ शत्रो पवनकेतो रे । गृहाणासिं क्षमोऽसि चेत् ॥ ८८ ॥ नैव जीवसि रे पाप—कर्म निर्लज्ज संप्रति ॥ अभीष्टं देवतं चित्ते । स्मरेत्युक्त्वा परिस्थिताः ॥ ८९ ॥ वीरसेनोऽवदच्चैवं । किमात्मा क्लिश्यते निजः ॥ स्त्रीवधार्थं न गृह्णामि । शस्त्रं सुंदरि कर्हिचित् ॥ ९० ॥ जल्पन्त्येवेति सर्वाभिः । कुमारस्ताभिरेकधा ॥ कर्तिकाहेतिभिर्हंतुं । समारेभे दुरात्मभिः ॥ ९१ ॥ उत्पतद्वपुषा तेना—प्यपूर्वकरणक्रमात ॥ गृहीत्वा युगपत्ता-

वदत्सख्यो । युष्माकं जीवितेन किं ॥ रूपनिर्जितकंदर्पो । नायं चेत्क्रियते पतिः ॥ ४५ ॥ काम-
श्रीर्निजगादाथ । प्रसिद्धिर्नैयमन्यथा ॥ यत्सख्यो भगवत्येषा । बहुरत्ना वसुंधरा ॥ ४६ ॥ पुष्पवंती
जगादाथ । यावत्पीनस्तनोपरि ॥ कृत्वा नालिंग्यते ताव—न्निर्वात्यंगं कथं मम ॥ ४७ ॥ वसंतश्री-
रुवाचाथ । सख्योऽपसरताधुना ॥ चक्षुर्दोषभयादस्यो—त्तारये लवणं त्वहं ॥ ४८ ॥ भानुमत्यभण-
त्सत्यं । सखीदं भणितं त्वया ॥ एवंविधे लगंत्येव । चक्षूंषि पुरुषोत्तमे ॥ ४९ ॥ जगदेऽथ प्रभाव
त्या । किं ब्रूथ कुरुत क्रियां । क्रियासाराः समारंभाः । सुनिश्चितधियां यतः ॥ ५० ॥ अथो मदन-
सेनाख्य—दात्मनः शैशवादपि ॥ निर्व्यूढः प्रेमसंभारः । समदुःखसुखात्मकः ॥ ५१ ॥ ततोऽधुनापि
यद्येव—मेकाग्रा जल्पतात्र तत ॥ यावज्जागर्ति ना नैष । हरामस्तावदाश्रितः ॥ ५२ ॥ ऊचे त-
तोऽपि सर्वाभिः । पृष्ठार्हा न वयं हले ॥ त्वमेवात्र प्रमाणं क—स्तर्जनावसरः किल ॥ ५३ ॥ ओ-
मित्युक्त्वाथ सर्वाभिः । प्रयत्नेन गरीयसा ॥ अपजह्रेऽवस्वापिन्या । विद्यया स प्रयोगतः ॥ ५४ ॥ चं-
पापुर्यास्ततो निन्ये । वीरसेनो महाटवीं ॥ शतयोजनविस्तीर्णां । ताभिर्मानुषवर्जितां ॥ ५५ ॥ यथा
जयपताकाया—स्ताभिर्दृष्टस्तथैव सः ॥ प्रासादः सुंदरस्तत्र । विद्याशक्त्या विनिर्ममे ॥ ५६ ॥ वास-

वेश्मनि तादृक्षे । मृदुतूलीतले तथा ॥ मुमुचे न यथाचाली—द्वीरसेनो मनागपि ॥ ५७ ॥ परस्परैकचित्ताभि—स्ततस्ताभिरमंत्र्यत ॥ कृत्वा जयपताकायाः । रूपं व्रजत भो इमं ॥ ५८ ॥ चंद्रलेखावदद्दैव—योगादेष कथंचन ॥ युष्मान्नेच्छति कर्तव्य—मस्य पुंसस्तदा किमु ॥ ५९ ॥ सर्वाभिर्जगदे नैप । मानयिष्यति चेद्भतं ॥ दुष्टात्मायं निहंतव्य—स्तदा संभूय सर्वथा ॥ ६० ॥ पूर्वं सर्वानुमत्याथ । प्रधाना सर्वयोषितां ॥ नाम्ना मदनसेना सा—ऽभजत्तं मदनातुरा ॥ ६१ ॥ अत्रांतरे कुमारोऽपि । निद्रया निर्भरं स्थितः ॥ वीक्षांचक्रे निशाशेषे । स्वप्ने शासनदेवतां ॥ ६२ ॥ करस्थितमहाचक्र—निर्यज्ज्वालाशतोज्ज्वलां ॥ नाम्ना चक्रेश्वरीदेवीं । आत्मनो वाहनस्थितां ॥ ६३ ॥ युग्मं ॥ प्रणामतुष्टया चक्रे—श्वर्या दत्ताम्रषाशिषा ॥ वीरसेनो वचोऽवाचि । प्रत्यक्षमिव बोधितः ॥ ६४ ॥ एताः पवनकेतोस्ते । वैरिणोऽष्टौ प्रिया ननु ॥ इत्याद्यशेषवृत्तांतं । यथाक्रममचीकथत् ॥ ६५ ॥ कार्य एवंविधे यत्स्या—दुचितं तत्समाचार ॥ इत्युक्त्वा सा तिरोधत्त । देवी चक्रेश्वरी क्षणात् ॥ ६६ ॥ निद्राभंगेन विद्यायाः । संहारे विहिते तया ॥ अपश्यद्रूपिकारूपां । वीरस्तां मदनाभिधां ॥ ६७ ॥ आसामास महीपीठे । त्यक्त्वा शय्यां स वेगतः ॥ सस्नेहं मृदुभिर्वाक्यै—रुक्तो मदनसेनया ॥ ६८ ॥

कुविकल्पं किमप्यंतः । कृत्वा कातरवत्किमु ॥ अवतीर्णोऽसि शय्याया । नाथाख्याहि कृपां कुरु ॥ ६९ ॥
विभाव्य स्वप्नसत्यार्थं । वीरसेनोऽवदत्पुनः ॥ भगिन्याकर्णयान्यस्त्री—संगभीत्यास्मि कातरः ॥ ७० ॥
भगिनीति वचः श्रुत्वा । खेचरी तस्य निष्ठुरं ॥ अदृष्टवज्रनिर्घाता—तिदूनहृदयावदत् ॥ ७१ ॥ किं
नाथ प्रलपस्येवं । त्वं निद्रापरतंत्रवत् ॥ अहं जयपताका ते । दासी सैव परस्य न ॥ ७२ ॥ वेश्याः
क चात्र भण्यंते । देशसामान्ययौवनाः ॥ परनार्यो नराधीश । विचार्याख्याहि मेऽधुना ॥ ७३ ॥
वीरो जगाद नैवाहं । प्रलपामि निरर्थकं ॥ भार्याः पवनकेतोर्हि । यूयमष्टावपि स्त्रियः ॥ ७४ ॥ तु
च्छसौख्यकृते यूयं । माकार्ष्ट मलिनं कुलं ॥ पितृश्वशुरयोः सर्वा । अपि निर्मलवंशजाः ॥ ७५ ॥ वी-
रसेनवचः श्रुत्वा । निर्दाक्षिण्यं क्षणात्ततः ॥ खेचर्योऽन्याः समाजग्मु—र्विभ्रमोद्भ्रांतलोचनाः ॥ ७६ ॥
त्यक्तत्रपाः कुमारानु—रागिण्यो विविधार्थनां ॥ तत्कालमेव ताश्चक्रु—र्विलक्षवदनाः स्त्रियः ॥ ७७ ॥
हा सौभाग्यनिधे नाथ । करुणारससागर ॥ मानुकूला अरज्ञासी—रेतास्त्वदनुरागिणीः ॥ ७८ ॥
अतिवक्रा गुणैर्हीनाः । क्षणमात्रानुरागिणः ॥ विघटंते नरा इंद्र—चापाभास्त्वादृशा ननु ॥ ७९ ॥
वीरो जगाद वक्रत्वं । निर्गुणत्वं च मे मतं ॥ क्षणरागित्वमप्येत—त्त्यजतः परयोषितः ॥ ८० ॥

ततो मदनसेनाख्य—दुद्रूपे भूचर किं बहु ॥ अस्मानिच्छसि चेत्तर्हि । जीवसि त्वं न चान्यथा
॥ ८१ ॥ दिशोऽष्टाविव दुर्बुद्धे । वयमेताः करस्थिताः ॥ त्वं भुंदवासां प्रसादेन । राज्यं निःकंटकं भु-
वि ॥ ८२ ॥ वीरः स्माहास्तशीलानां । जीवितं मरणं ननु ॥ स्वशीलं रक्षतां पुंसां । श्लाघ्यते मृत्यु-
रप्यहो ॥ ८३ ॥ दुर्बुद्धिः सैव यान्यस्त्री—प्रसक्तस्य भवेदिह ॥ पुनरेवं वदंत्योऽपि । यूयमष्टौ ममा-
पदः ॥ ८४ ॥ इदं सत्यं वयं सर्वा । आपदो भवतः किल ॥ इत्युक्त्वा ताः स्थिताः सर्वा । राक्षसी-
त्वेन तत्क्षणात् ॥ ८५ ॥ वीरः स्माह किमेतेन । बालभापनकर्मणा ॥ धृष्टोऽस्मि सुप्रसिद्धोऽहं । रा-
क्षसामपि भेषकः ॥ ८६ ॥ ततो गछत मा भूत । निंद्या रूपैरमूदृशैः ॥ भवंति निष्फलारंभाः । प-
राभवपदं ननु ॥ ८७ ॥ जगदुर्वीरसेनं ता । राक्षस्यः कर्तिकाकराः ॥ शत्रो पवनकेतो रे । गृहाणा-
सिं क्षमोऽसि चेत् ॥ ८८ ॥ नैव जीवसि रे पाप—कर्म निर्लज्ज संप्रति ॥ अभीष्टं देवतं चित्ते ।
स्मरेत्युक्त्वा परिस्थिताः ॥ ८९ ॥ वीरसेनोऽवदच्चैवं । किमात्मा क्लिश्यते निजः ॥ स्त्रीवधार्थं न गृ-
ह्णामि । शस्त्रं सुंदरि कर्हिचित् ॥ ९० ॥ जल्पन्नेवेति सर्वाभिः । कुमारस्ताभिरेकधा ॥ कर्तिकाहेति-
भिर्हंतुं । समारेभे दुरात्मभिः ॥ ९१ ॥ उत्पतद्वपुषा तेना—प्यपूर्वकरणक्रमात ॥ गृहीत्वा युगपत्ता-

सां । कर्तिकाः करपंजरात् ॥ ९२ ॥ खड्गखेटकहस्ताभि—स्ताभिर्निर्मथितुं ततः ॥ युगपद् घटमा·
नाभिः । प्रारेभे राजसूः पुनः ॥ ९३ ॥ आछिनत्तिस्म खड्गान् स । तथैव फलकान्यपि ॥ करेषु च·
क्रिरे ताभि—स्ततस्तीक्ष्णाः परश्वधाः ॥ ९४ ॥ गृहीतास्तेऽपि वीरेण । तथैवोत्पत्य वर्ष्मणा ॥ एवं
निरायुधास्तेन । चक्रिरे ता अनेकधा ॥ ९५ ॥ कृत्वा दृढशरीराणि । ताभिः सर्वाभिरादरात ॥ अ·
तिगुर्व्यः कराग्रेषु । कलयांचक्रिरे शिलाः ॥ ९६ ॥ उत्प्लुत्योत्प्लुत्य वेगेन । कुमारो दृढमुष्टिना ॥
भूपीठे पातयामास । धूलिशेषा विधाय ताः ॥ ९७ ॥ ततो रोषवशात्ताभिः । सर्वाभिः पर्वताः करैः ॥
विद्याधरीभिरुत्क्षिप्ता । विद्याशक्त्या विनिर्मिताः ॥ ९८ ॥ वीरोऽथावददस्माकं । युद्धं परिचितं गि·
रेः ॥ केनाप्यन्येन युध्यध्वं—मपूर्वरणकर्मणा ॥ ९९ ॥ अन्योन्यं सन्मुखं वीक्ष्य । जजल्पुस्ताः पर·
स्परं ॥ सर्वादरोऽत्र योऽस्माकं । स एवास्योपहासकः ॥ ३०० ॥ तोलयित्वा ततस्ताभिः । सरोषं ते
शिलोच्चयाः ॥ करयंत्रैरमुच्यंत । वीरसेने महाभटे ॥ १ ॥ दक्षत्वेन ततस्तेषां । शृंगिणामुपपातिनां ॥
आरुरोह शिरः शीघ्रं । कुमारो वानरेंद्रवत ॥ २ ॥ अक्षतांगमथो दैवाद् । दृष्ट्वा वीरं शिरःस्थि-
तं ॥ प्रक्षुब्धा हृदये भीत्या । जगदुस्ताः परस्परं ॥ ३ ॥ एषैव जीवितव्याशा—स्माकं यद्वनिता इति ॥

सद्योऽयं महावीर—श्चकारास्मान्न खंडशः ॥ ४ ॥ अनलंभूष्णवस्तस्य । तडिद्दंडमहारवैः ॥ जीव-
यित्वा तमादाय । दुःखं दूरेण ता ययुः ॥ ५ ॥ एकाकी चिंतयामास । वीरश्चित्रमिदं महत् ॥ राक्ष-
स्यः कुटिलाः क्वैताः । स्वप्ने चक्रेश्वरी क्व च ॥ ६ ॥ संपदो विपदश्चापि । समं पुंसा चरंत्यमूः ॥ दे-
शं कालं च संप्राप्य । भवंति प्रकटाः पुनः ॥ ७ ॥ पश्य संसारसद्भावं । न ता नार्यो न वेश्म तत् ॥
गिरयोऽपि न ते सर्वं । नष्टं मायेंद्रजालवत् ॥ ८ ॥ याभिरेवानुरागेण । प्रसन्नं भवनाद् वृतः ॥ स
रोपं प्रहरंत्युच्चै—स्ता एव मयि निःकृपाः ॥ ९ ॥ सुचिरप्रेमसंबंधं । विस्मार्यापि निजंपतिं ॥ तद्घा-
तके कथं हाहा—नुरक्ता निस्त्रपा इमाः ॥ १० ॥ अथवालं ममानिष्ट—चिंतया कृतयानया ॥ प्र-
कृत्या कुटिलस्वांता । भवंति वनिताजनाः ॥ ११ ॥ तत्कथं सांप्रतं चंपां । गतिः स्यान्निगमश्च कः ॥
इति ध्यात्वा कुमारोऽथ । प्राचालीदुत्तरांप्रति ॥ १२ ॥ महाटव्यामटन्नेकं । प्राप जीर्णं सुरालयं ॥ ना-
नाद्रुमलताखंड—मंडितं सुभटाग्रणीः ॥ १३ ॥ तत्र देवगृहे दूरा—दधिभूतेन दीव्यतां ॥ शुश्रुवे
द्यूतकाराणां । कोलाहलरवं स तु ॥ १४ ॥ कौतुकाक्षिप्तचित्तोऽथ । गतस्तत्र स वीरराट् ॥ युगपद्
द्यूतकारैश्च । ददृशे चलितानतैः ॥ १५ ॥ एह्येहि क्षणमास्स्वे—त्युक्त्वा तैर्द्यूतकारकैः ॥ अवका-

शो ददे सर्वैं—र्वीरसेनस्य तत्क्षणात् ॥ १६ ॥ उपविष्टे कुमारेऽस्मिन् । प्रसरद्घंटिकारवं ॥ ददृशेऽवतरत्तत्र । विमानं दिव्यमंबरात् ॥ १७ ॥ विद्याधरकुमारोऽथ । दिव्याभरणभूषितः ॥ विमानान्निर्ययौ तस्मा—दुवाचेति च तत्र तान् ॥ १८ ॥ विमानरत्नमात्मीयं । पणीकृतमिदं मया ॥ वीरो यः कोऽपि युष्मासु । संग्रामंमे स यच्छतु ॥ १९ ॥ द्यूतकारास्ततः सर्वे । तस्थुर्मौनेन तद्गिरा ॥ एकं मुक्त्वा महासत्वं । वीरसेनं जगद्भटं ॥ २० ॥ ईषद्विहस्य वीरोऽवक् । संग्रामे किं तवादरः ॥ यतः क्रीडासि संग्रामं । विमानेन महाशय ॥ २१ ॥ उक्तं विद्याधरेणाथ । शक्तिश्चेदस्ति वीर तत् ॥ पूर्वोक्ताया व्यवस्थाया—श्चलितव्यं न सुंदर ॥ २२ ॥ वीरसेनोऽवदद्भद्र । निर्णीताच्चलतीह यः ॥ अन्योन्यं निगृहीतव्यो । निश्चितं स्वयमेव सः ॥ २३ ॥ जातामर्षस्ततो विद्या—धरो रंतुं प्रचक्रमे ॥ हारयित्वा विमानं तद् । गृहीतं राजसूनुना ॥ २४ ॥ इतश्च डमरुध्वान—पूरितांबरगह्वरः ॥ बिभ्रद्वामकरेणासिं । योगींद्रोऽवातरद्दिवः ॥ २५ ॥ अवतीर्यांबरात्सोऽपि । तेषामंते निविष्टवान् ॥ वीरसेनं विलोक्य स्वं । धूनयद्विस्मयाच्छिरः ॥ २६ ॥ कुमारं प्रत्युवाचैष । खड्गो मे सर्वकामिकः ॥ चित्ते यच्चिंत्यते कार्य—मस्माद्भवति तद् ध्रुवं ॥ २७ ॥ अस्मिन् दृष्टे प्रणश्यंति । परसैन्यानि संगरे ॥ इतश्चिंतित·

मात्राणि । निस्सरंति बलानि च ॥ २८ ॥ विजित्य शत्रुसैन्यानि । लीयंतेऽत्रैव तानि तु ॥ इत्या- दयः कृपाणस्या—संख्याता अस्य शक्तयः ॥ २९ ॥ स्तंभयत्यग्निमंभश्च । करोत्याकाशगामितां ॥ विद्वेषणं च वश्यं च । स्तंभनं मोहनं तथा ॥ ३० ॥ वीरश्चेत्सत्यमेवासि । कृपाणं तदिमं मम ॥ नि- जमांसपणेन त्वं । परिक्रीणीष्व सत्वरं ॥ ३१ ॥ मम खड्गो ह्ययं सिद्धो । दक्षिणोदधिरोधसि ॥ श्री- वीरसेनमित्रस्य । बंधुदत्तस्य संगतात् ॥ ३२ ॥ किलेह शासने कौले । क्षुद्रविद्या अनेकशः ॥ सि- ध्यंति तास्तु भो भद्र । विविधैः क्षुद्रकर्मभिः ॥ ३३ ॥ मद्यमांसवशारक्त—प्रमुखैर्भक्तपानकैः ॥ तासां क्षुद्रस्वभावानां । तृप्तिः स्यादेवमेव हि ॥ ३४ ॥ अतोऽस्ति मे महाविद्या । त्रिजगद्वशकारि- णी ॥ करिष्यामि नृमांसेन । होमं तत्सिद्धिहेतवे ॥ ३५ ॥ यच्च तच्चापि मांसं न । गृहीतव्यं यथा तथा ॥ जगत्येकोऽस्ति यो वीर—स्तस्य मांसेन तुष्यति ॥ ३६ ॥ तच्च द्यूतेन तं जित्वा । विक्रमे- णाथवात्मनः ॥ द्वाभ्यामाभ्यामुपायाभ्यां । गृहीतव्यं न चान्यथा ॥ ३७ ॥ वीरसेनस्ततः स्माह । वि- चारेणामुना किमु ॥ तदेव सफलं मांसं । नव कार्याय यद्भवेत ॥ ३८ ॥ तत्किं द्यूतेन संदेह—प- देनाथ रणेन किं ॥ एवमेव ददे मांस—मित्युक्त्वा क्षुरिकामधात् ॥ ३९ ॥ योगींद्रः स्माह भो वी-

र । प्रागेव कथितं मया ॥ यद् द्यूतेन रणेनाथ । ग्राह्यं मांसं मया किल ॥ ४० ॥ वीरो जगाद
वाक्यं ते । प्रमाणं सर्वथा मम ॥ द्यूतेनापि रणेनापि । द्वाभ्यां ते दायकोऽस्म्यहं ॥ ४१ ॥ योगींद्रः
स्माह युद्धेन । किं द्यूतं प्रस्तुतं त्विह ॥ उक्तव्यवस्थया वीर । मया सह तदाचर ॥ ४२ ॥ ओमि
त्युक्त्वाथ वीरेण । लग्नौ द्वावपि क्रीडितुं ॥ व्यतीयाय दिनं सर्वं । क्रीडतोरेतयोर्द्वयोः ॥ ४३ ॥ द-
ध्याविति कुमारोऽथ । योगींद्रो मंत्रसिद्धिवित् ॥ जेतुं नालं स्मराम्यहं—न्नमस्कारमहं ततः ॥ ४४ ॥
अयं पंचनमस्कारः । परविद्याबलं खलु ॥ हृदये ध्यातमात्रोऽपि । निहंतीह न संशयः ॥ ४५ ॥ सा-
वधानस्ततश्चित्ते । दध्यौ वीरो नमस्क्रियां ॥ जिगाय योगिनाथं च । हतमंत्रबलं क्षणात ॥ ४६ ॥
ज्ञात्वात्मानं जितं तेन । कुमारेण स योगिराट् ॥ उत्पपात नभोमार्गे । खड्गमादाय वेगतः ॥ ४७ ॥
ततो द्यूतजितं वेगा—द्विमानं खेचरस्य तत् ॥ आरुह्य योगिनाथस्य । कुमारोऽनुययौ पथा ॥ ४८ ॥
पुरः स्थित्वातिवेगेन । कुमारः स्माह योगिनं ॥ बलाद्बलयितुं वीरा । न शक्या योगिपुंगव ॥ ४९ ॥
इमं खड्गं जितमपि । तदा दास्याम्यहं तव ॥ त्वं प्रार्थयिष्यथा मां चे—त्प्रार्थना भूषणं हि ते
॥ ५० ॥ द्वयमेवाधुना मूर्ख । त्वया निर्नाशितं पुनः ॥ चिरोपार्जितसौजन्यं । भिक्षुत्वं च क्रमागतं

॥ ५१ ॥ सुरो वा खेचरो वेत्य—वंचयिष्यत मां यदि ॥ ततोऽज्ञास्यदवध्यस्त्वं । पुनः पार्श्वंम्विवेष-
तः ॥ ५२ ॥ इत्युक्त्वा खड्गमादाय । मुक्तस्तेन महात्मना ॥ सुदुर्मना ययौ क्वापि । स योगी मत्स-
रं वहन् ॥ ५३ ॥ कुमारस्तेन खड्गेन । विमानेन च तत्क्षणात् ॥ बभूवासमसामर्थ्यो । विद्याभृच्च-
क्रवर्तिवत् ॥ ५४ ॥ सविघ्नसाहसैर्विद्या । सिद्धा विद्याभृतां भवेत ॥ खेचरत्वं महादुःखै—र्धन्यानां
तु सुखेन तत् ॥ ५५ ॥ सिद्धत्वमपि गुटिका—सिद्धादीनामशर्मभिः ॥ अक्लेशेन पुनर्जाता । वी-
रस्यासिसिद्धता ॥ ५६ ॥ ततो दध्यौ कुमारोऽसौ । गत्वा चंपापुरीमहं ॥ करोमि प्रस्तुतं कार्यं । न-
रसिंहजयादिकं ॥ ५७ ॥ ततो विमानमारुह्य । मनश्चिंताधिकत्वरं ॥ चंपायां कृतसंकल्पः । स चचा-
लोत्तरांप्रति ॥ ५८ ॥ विस्मितस्तस्य वेगेन । विमानस्य क्षणेन सः ॥ उद्धृततोरणां चंपां । नगरीं
प्राप सोत्सवां ॥ ५९ ॥ परितुष्टजनैर्व्याप्तं । नानानेपथ्यशालिभिः ॥ गगनाग्रस्थितो वीरो—ऽपश्य-
द्राजगृहाजिरं ॥ ६० ॥ दृष्ट्वा चंपापुरीं सर्वां । महोत्सवमयीं ततः ॥ कुमारश्चिंतयामास । कौतु-
काक्षिप्तमानसः ॥ ६१ ॥ किं कोऽप्यत्रोत्सवः किं वा—नंदः कोऽपि नृपौकसि ॥ यात्रा देवविशेष-
स्या—थवा कापि प्रवर्तते ॥ ६२ ॥ ध्यात्वेति निकटीचक्रे । विमानं तेन तत्र तत् ॥ तस्योत्सवस्य

विज्ञातुं । परमार्थं महौजसा ॥ ६३ ॥ मंदं मंदं समस्तां तां । पश्यंश्चंपापुरीमसौ ॥ दृष्टिं पण्यांगना-
गेहे । कृतज्ञः क्रमशो ददौ ॥ ६४ ॥ स्वछंदं नृपतेर्लोकै-र्गृह्यमानधनोत्करं ॥ चंडचंडधरोद्दंम—ह-
कानासितदासिकं ॥ ६४ ॥ नरसिंहनैरगाढं । वेष्टितं शस्त्रपाणिभिः ॥ वेश्यावासंददर्शैष । श्यामा-
ननपरिछदं ॥ ६५ ॥ युग्मं ॥ क्वचिद्राजपुमांश्चेटीं । सर्वालंकारभूषितां ॥ रहो निक्षिप्य जग्राह ।
सर्वमप्यंगभूषणं ॥ ६६ ॥ अन्यैराखेदिता दासी—मुखक्षिप्तदशांगुली ॥ भांडागारनियुक्तेति । कृत्वा
भूपालपूरुषैः ॥ ६७ ॥ केचिद् दुष्टा भुजंगा ये—ऽर्थग्राहं वंचिता तया ॥ मत्वावसरमस्यांते—ऽपच-
क्रुर्निजशक्तितः ॥ ६८ ॥ केचिन्मित्रजना दत्त—दुष्टादेशा नृपेण च ॥ चिरप्रेमह्रिया चक्रु—रेव
मेव मुखारवं ॥ ६९ ॥ गाढानुरागरक्तोऽपि । तस्याः कोऽप्यमनोहरः ॥ आविःकुर्वन्निजं दुःखं । तच्चि
त्ताराधनां व्यधात् ॥ ७० ॥ शुशोचेति पुरीलोको—ऽकार्यं हा भूभुजा कृतं ॥ यद्दोषाद्वीरसेनस्या-
पचक्रे पण्ययोषितः ॥ ७१ ॥ विशिष्टस्यापि चौरस्य । रिपोर्वैदेशिकस्य च ॥ वेश्या एव निवासोऽत्र ।
लोकस्य सकलस्य यत् ॥ ७२ ॥ इति ब्रुवत्सु लोकेषु । गृहीताशेषवस्तुकं ॥ जातं जयपताकायाः ।
गृहं रोरगृहं यथा ॥ ७३ ॥ अथाकृष्य कचाग्रेषु । रुदती करुणस्वरं ॥ गृहाज्जयपताका सा । भटैर्नि-

ष्कासिता तदा ॥ ७४ ॥ परीता परिवारेण । वीक्ष्यमाणा पुरीजनैः ॥ मार्गे निर्भर्त्स्यमानागा—त्पुं-
निर्दुर्वचनैरिति ॥ ७५ ॥ हा निर्लज्जे त्वमेवासि । कृतघ्नानां शिरोमणिः ॥ ईदृग्राजप्रसादेना—
नुचितं यत्कृतं यया ॥ ७६ ॥ अदृष्टपूर्व इष्टः स । दुष्टात्मा विहितस्त्वया ॥ न पुनर्नरसिंहः स । गु-
णे येनाधिरोपिता ॥ ७७ ॥ यदि सत्यं स वीरोऽस्ति । तदागत्य स्वयं न किं ॥ मार्यमाणां नरेंद्रेण ।
रक्षति त्वामतिप्रियां ॥ ७८ ॥ एवमादीनि केषांचि—द्दुर्मुखखलवचांसि सः ॥ निशम्याभिनिवेशेन ।
स्फुरदोष्ठो व्यचिंतयत ॥ ७९ ॥ मया प्रागनुमानेन । निश्चितं यदयं किल ॥ सर्वो जयपताकाया ।
अनर्थो मन्निमित्तजः ॥ ८० ॥ किमत्र प्रतिकर्तव्य—मेष एव भटव्रजः ॥ ममासिवासिनो यांतु ।
यमस्यातिथिरूपतां ॥ ८१ ॥ अथवा युज्यते नैव—मेते निर्देशकारिणः ॥ स्त्रीषु विक्रमिणश्चापि । मम
वध्या भवंति न ॥ ८२ ॥ अथवामुं नृपं किंतु । ससैन्यं सपरिच्छदं ॥ उत्क्षिप्योर्ध्वं क्षिपाम्याशु ।
सर्वं पातालकुक्षिषु ॥ ८३ ॥ अयुक्तमिदमप्यत्र । निग्राह्यो नृप एव हि ॥ सेनापरिच्छदादीना—म-
परोधो न विद्यते ॥ ८४ ॥ अस्तु तावत्किमेतेऽस्याः । कुर्वंत्यालोकयाम्यहं ॥ इति ध्यायति वीरे सा ।
निन्ये राजांतिके भटैः ॥ ८५ ॥ स्थापयित्वा पुरस्तां ते—र्विज्ञप्तं देव वेश्मनि ॥ अस्या यत्तत्त्वानी-

त—मशेषं कोशवेश्मनि ॥ ८६ ॥ देवैषापि समानीता । समीपे सांप्रतं तव ॥ यद्युक्तं तत्स्वयं स्वा-
मिन् । वेश्यायां विदधात्विह ॥ ८७ ॥ क्रुधा दष्टाधरेणाथ । संदिष्टं जगतीभुजा ॥ अत्रानयत रे
शीघ्र—मपि तं गणकाधमं ॥ ८८ ॥ अन्वादेशं समानीतः । सोऽपि नृपालपूरुषैः ॥ पश्चाद्वाहुनि-
बद्धोऽभि—हन्यमानः कशादिभिः ॥ ८९ ॥ पार्श्वे जयपताकाया—स्तथैव स्थापितोऽपि सः ॥ नर-
सिंहनरेंद्रेण । वीक्षितः क्रूरचक्षुषा ॥ ९० ॥ अदृश्योऽसिप्रभावेण । कुमारोऽपि नभःस्थितः ॥ वी
क्षांचक्रे नरेंद्रस्य । चेष्टां दष्टरदच्छदः ॥ ९१ ॥ नरसिंहो जगादाथ । ब्रूहि रे गणकाधुना ॥ समुत्प-
न्नः स ते वीरो । मृत्वा कुत्र डुराशयः ॥ ९२ ॥ भणितं गणकेनेति । वक्तुं युक्तं न ते नृप ॥ म-
नोरथैर्वचोभिश्च । स वीरो म्रियते कथं ॥ ९३ ॥ जातमात्रः समादिष्टः । स नूनं गणकोत्तमैः ॥ ए-
कवर्षसहस्रांत—निरुपक्रमजीवितः ॥ ९४ ॥ पुनरूचे नृपेणासि । हतस्त्वं कूटविद्यया ॥ कल्ये पव-
नकेतोः स । भार्याभिर्मारितो ननु ॥ ९५ ॥ गणकः पुनराहस्म । थूत्कृतं वचनं तव ॥ विमानस्थं
महावीरं । किमूर्ध्वं देव नेक्षसे ॥ ९६ ॥ दुर्वागुत्तजितेनोचे । पुनर्नृपेन हे जनाः ॥ अलीकत्वं
निरीक्षध्वं । प्रत्यक्षं दुर्धियोऽस्य हि ॥ ९७ ॥ श्रुतं सर्वैर्गते घस्रे । भार्याभिः पवनस्य तं ॥ हत्वाटव्यां

व्रजंतीन्नि—रव नः कथितं किल ॥ ९८ ॥ सरोषं तान्निरस्थान्निः । कर्तिकान्निर्विकृत्य सः ॥ तथा ज-
रधो यथा तासां । क्रुधा शांता क्रुधो न तु ॥ ९९ ॥ तान्निर्व्यावर्तमानान्नि—नैकस्य कथितं मम ॥
किंतु सर्वस्य लोकस्य । मिलितस्यात्र वासिनः ॥ ४०० ॥ अनेनैव निमित्तेन । कारितोऽत्र मयोत्स-
वः ॥ प्रस्फोरितं च हृष्टेन । विलंबिनेन धीमता ॥ १ ॥ असमंजसजल्पाक । तिष्ठत्वेतन्निमित्तवित ॥
इदमेव ममाख्याहि । कस्य हस्ते तव मृतिः ॥ २ ॥ तवाप्यस्या अपि त्राणं । वीरसेनः करिष्यति ॥
मयात्त मार्यमाणायां । गाढं तडक्तचेतसि ॥ ३ ॥ इत्युक्त्वा रोषताम्रास्यो । नरसिंहो नरेश्वरः ॥ कृ-
पाणं सप्रतीकारं । दधौ वामकरे ततः ॥ ४ ॥ दक्षिणेन करेणासिं । चकर्ष दृढमुष्टिना ॥ दृष्टेनापि
जनो येन । बद्धवातंकसंकुलः ॥ ५ ॥ पुनः पृष्टेन तेनाथ । जगदे ज्ञानिना नृपः ॥ द्विवर्षशततो मृ-
त्यु—र्ममास्या अपि योषितः ॥ ६ ॥ वयःपरिणतौ दीक्षां । गृहीत्वा शुद्धमानसः ॥ कृत्वानशनकर्मा
च । मरिष्यामि समाधिना ॥ ७ ॥ एषा जयपताकापि । भुक्त्वा सौख्यानि भूपते ॥ वीरसेनप्रदत्ता-
नि । कृत्वा धर्मं जिनोदितं ॥ ८ ॥ ध्यायंत्यर्हन्नमस्कारं । वासुपूज्यजिनाग्रतः ॥ स्वर्गे सनत्कुमारा-
ख्ये । विपद्योत्पद्यते सुरः ॥ ९ ॥ युग्मं ॥ जल्पंतं गणकं चैव । गणिकां चापि तां नृपः ॥ प्रारेभे

भणितुं नृपो । ज्ञापय[redacted]यहेतुभिः ॥ १० ॥ उभावपि युवां दुष्टौ । वैरिपक्षसमाश्रितौ ॥ युगपन्मारयिष्यामि । यस्त्राता भजतं च तं ॥ ११ ॥ नैमित्तिकस्ततोऽवोच—त्सार्धं जयपताकया ॥ आवयोः शरणं वीरः । प्रांते च द्वादशो जिनः ॥ १२ ॥ कुमारस्य ततो नाम—ग्रहणाधिकमत्सरः ॥ खड्गमुत्पाटयामास । नरसिंहो जिघांसया ॥ १३ ॥ अथोचे परिवारेण । मंत्रिभिः प्रिययापि च ॥ अकर्तव्यमिदं देव । विरुद्धं जन्मनोर्द्वयोः ॥ १४ ॥ अवमन्य वचस्तेषां । सर्वेषां नरनायकः ॥ सिंहासनात्समुत्तस्थौ । प्रज्ज्वलन् क्रोधवह्निना ॥ १५ ॥ अभ्यधावन्नृपो याव—त्तयोर्मारणहेतवे ॥ आविर्बभूव सहसा । तावद्वीरो विमानगः ॥ १६ ॥ विमूढैर्विवशैर्मूकैः । स्तंभितैर्मूर्छितैरिव ॥ सर्वैस्तैर्नरसिंहाद्यैः । श्रीवीरस्तत्र वीक्षितः ॥ १७ ॥ त एव विक्रमोत्कर्षाः । सुभटानां हृदि स्थिताः ॥ सर्वेऽपि निष्फला जाता । वीरसेने विलोकिते ॥ १८ ॥ सुभटानां प्रविष्टं य—न्मनःस्वपि कदापि न ॥ तद्वीरदर्शनेनोच्चैः । सर्वांगं प्रसृतं भयं ॥ १९ ॥ तस्याश्चर्यकरं रूपं । विश्वस्यापि विलोक्य तत् ॥ एवं व्यचिंतयामास । पौरलोकश्चमत्कृतः ॥ २० ॥ परात्मा कोऽप्यपूर्वोऽयं । परमं दैवतं किमु ॥ विद्याधरसुरामर्त्य—मध्ये नास्तीदृशो ननु ॥ २१ ॥ ज्ञानी जगाद रे मूढा । विकल्पयथ किं मुधा ॥ वीरसेनः स एवैष ।

यो मया कथितः पुरा ॥ २२ ॥ वीरसेनः स एवैष । इत्युक्ते जातमत्सरः ॥ नरसिंहनरेंद्रोऽथ । व-
क्तुमेवं प्रचक्रमे ॥ २३ ॥ वीरसेनः स यद्येष । हंतव्योऽयं मयैव तत ॥ आयुधान्येव तिष्टंतु । करमु-
ष्टिस्थितानि मे ॥ २४ ॥ वीरसेन दृढं कुर्याः । करवालं निजे करे ॥ यस्मान्नर्जंति शस्त्राणि । वैरि-
णां दर्शनेन मे ॥ २५ ॥ यद्याकाशे विचरसि । तत्त्वं विचर मद्भयात् ॥ न जीवसि नभःस्थोऽपि । परं
मत्तो यमादिव ॥ २६ ॥ सत्यैव यदि ते शक्ति-र्मया या लोकतः श्रुता ॥ मनाग्रणविनोदाय । न-
विष्यसि तदा मम ॥ २७ ॥ तादृशः कोऽपि सूतो न । जनन्या तनयो भुवि ॥ अक्षुब्धः सहते यो
मे । दुस्सहं रणमंवरं ॥ २८ ॥ तत श्लाघावचनं श्रुत्वा । संजातश्लथचेतसा ॥ लीलोपहासगर्भं स ।
वीरसेनेन जल्पितः ॥ २९ ॥ नरसिंहाप्यसंजाव्यं । सर्वं संभवति त्वयि ॥ शस्यंते न जने किंतु ।
मुखोल्लापाः क्रियां विना ॥ ३० ॥ शस्यंते नेति वाक्येन । श्रुतमात्रेण तत्क्षणात् ॥ उत्तेजितो नरेंद्रः स ।
उत्पपात भृशं दिवि ॥ ३१ ॥ रंजितो नरसिंहस्य । विक्रमेण स सूरसूः ॥ विकल्पयन्निजे चित्ते । रो-
मांचे त्वमुं शं ॥ ३२ ॥ प्रकृत्यात त्रिविधाः स्यु—र्भुवने वीरपूरुषाः ॥ वाक्शूरः कार्यकर्तारो । वा-
क्शूरविधिकर्तृकाः ॥ ३३ ॥ तदेष नरसिंहोऽपि । वाक्शूरश्चापि कार्यकृत् ॥ क्षात्राचारेण योत्स्येऽत्रा

—नेनाहं सह दोष्मता ॥ ३४ ॥ ध्यात्वेति हृदये धीमान् । स विमानादवातरत् ॥ खड्गरत्नं विमानस्य । तस्य कोणे विमुच्य तत ॥ ३५ ॥ ततोऽधः पतता तेन । वीरेण निजवक्षसा ॥ उत्पतन्नरसिंहस्य । बाढं वक्षसि ताडितः ॥ ३६ ॥ मिथो वक्षःस्थलास्फोट—प्रसरत्प्रतिनिःस्वनैः ॥ ब्रह्मांडमिव पुस्फोट । वित्रस्तजनसंकुलं ॥ ३७ ॥ वीरवक्षःस्थलाघात—वेदनाविधुरस्ततः ॥ नृपो निमीलिताक्षो द्राक् । पपात पृथिवीतले ॥ ३८ ॥ निर्भयः स कुमारोऽपि । क्षुरीमात्रपरिग्रहः ॥ अवतीर्याबरात्तस्य । समीपे परितः स्थितः ॥ ३९ ॥ वीरार्कदर्शनेनाथ । सहमानं न तन्महः ॥ निःशेषं नरसिंहस्य । सैन्यं नष्टं तमो यथा ॥ ४० ॥ वीरोऽथ परिवारं तं । स्थिरीचक्रे मृदूक्तिभिः ॥ मा भैष्ट निर्भयं वोऽस्ति । यतो भीतान्न हन्म्यहं ॥ ४१ ॥ वीरसेनकृतैः शीतै—रुपचारैरनेकधा ॥ स्फुरदोष्टः क्रुधोदस्था—न्नरसिंहो नरेश्वरः ॥ ४२ ॥ स्थिरो भूत्वा मया सार्धं । युद्धं कुरु नरेश्वर ॥ इत्युक्तो वीरसेनेन । दुढौके नरसिंहराट् ॥ ४३ ॥ इतश्च सहसाकाशे । योगींद्रः स समाययौ ॥ करे डमरुकं बिभ्र—द्घोरगणसंज्ञकः ॥ ४४ ॥ दत्वाशिषं जगादैष । नरसिंहनृपंप्रति ॥ तव पुण्यगुणैर्भद्र । इवाकृष्टोऽहमागतः ॥ ४५ ॥ तदाख्याहि तवासाध्यं । त्रैलोक्येऽपि नरेंद्र यत् ॥ एष एव विजानाति । वीरसे-

नो बलं मम ॥ ४६ ॥ करोमि दिवसं रात्री । रात्रीं च दिवसोऽप्यहं ॥ ममाज्ञावर्तिनौ नूनं । चंद्रा-
दित्याविमावपि ॥ ४७ ॥ अलमुक्त्वाथवा राजं—स्तन्नास्ति विष्टपत्रये ॥ यन्मंत्रस्य ममासाध्यं । क-
र्तव्यं तद्वदाधुना ॥ ४८ ॥ आस्तामन्यदथैवैनं । वीरं विश्वैकदुर्जयं ॥ निजमंत्रप्रभावेण । भस्मराशिं
करोम्यहं ॥ ४९ ॥ अनेनाहं महारण्ये । कूटभूतेन वंचितः ॥ गृहीतं खड्गरत्नं च । तेनैष मम शा-
त्रवः ॥ ५० ॥ सिद्धिर्नैवासहायानां । नृणां बलवतामपि ॥ तत आवां भवावोऽत्र । सुसहायौ परस्प-
रं ॥ ५१ ॥ नरसिंहो जगादाथ । मा योगिन्नेवमुच्चर ॥ भार्गाभिः पवनस्याहं । खेचरीभिः प्रतारितः
॥ ५२ ॥ ततोऽहं तत्करिष्यामि । निजदोर्विक्रमेण यत् ॥ अहं पंगुः कुणिर्वास्मि । किंवा युद्धे न
कोविद ॥ ५३ ॥ वीरो जगाद मैवं भो । नरसिंह वचो वद ॥ इच्छंति भोजनेऽपीह । सुसहायं न किं
रणे ॥ ५४ ॥ रणकाले समायातं । मा सहायममुं त्यज ॥ स्नेहभंगं न कुर्वंति । संतः प्रणयिना-
मिह ॥ ५५ ॥ संबोध्येति नृसिंहं तं । वीरसेनेन दोष्मता ॥ आजुहुवे रणायोच्चै—र्योगींद्र । मधु-
रस्वरं ॥ ५६ ॥ संग्रामे सज्जनैर्होहि । विलंबं मा विधेहि भोः ॥ न ते दोषोऽस्ति योगींद्र । मंत्रश-
क्तिं प्रदर्शय ॥ ५७ ॥ कुमारेण ततो ध्यात्वा । हृदि पंचनमस्कृतिं ॥ ऊर्ध्वमुत्पत्य रोषेणा—चकृषे

योगिनायकः ॥ ५८ ॥ उभावपि समं धृत्वा । तेनोक्तौ राजयोगिनौ ॥ गुरुः शत्रुरहं शक्त्या । युध्येथां तद्युवामिह ॥ ५९ ॥ नो वाच्यमिति यन्नोक्तं । न राज्यं नृपते तव ॥ सविद्या मंत्रसिद्धिश्च । योगींद्र मयि ते सति ॥ ६० ॥ इत्युक्त्वा वामदोर्दंडं । द्विगुणीकृत्य नृपजः ॥ भीमं चक्रे करास्फोटं । त्रस्तसौधशिरोगृहं ॥ ६१ ॥ उभावपि सरोषौ ता—वसहायमवाप्य तं ॥ नानाबंधनकरणै—र्युयुधाते रणांगणे ॥ ६२ ॥ तयोऽपि गुरुसामर्थ्याः । स्वकार्यकरणोद्यताः ॥ प्रहारदानदक्षाश्च । परघातानटालयन् ॥ ६३ ॥ वीरसेनप्रहारेण । क्षणमेकमभिद्रुतौ ॥ निश्चेष्टौ पेततुर्मूर्छा—विधुरौ तौ महीतले ॥ ६४ ॥ सचेतनौ पुनस्तौ द्वौ । कुमारं जघ्नतुः समं ॥ कुमारः पातयामास । तावुभावपि तत्क्षणात् ॥ ६५ ॥ कुमारस्य प्रहारेण । तयोर्जर्जरदेहयोः ॥ सुसंदेहतुलारूढं । जीवितं विजयोऽपि च ॥ ६६ ॥ अत्रांतरे क्षणं योगी । तस्थौ ध्यानेन निश्चलः ॥ ध्यातमाला ततस्तेन । चामुंडा तत्र चाययौ ॥ ६७ ॥ करेषु बिभ्रती खड्ग—खेटकाद्यायुधव्रजं ॥ विकरालातिबीभत्सा । द्विगुणाष्टभुजान्विता ॥ ६८ ॥ युग्मं ॥ तामालोक्य तथारूपां । योगींद्रो हृष्टमानसः ॥ पपात पादयोस्तस्याः । सर्वांगाश्लिष्टभूतलः ॥ ६९ ॥ जगाद योगिनं चंड्या—हूताहं किमरे त्वया ॥ स स्माह देवी दासोऽ-

हं । तवैव भुवि सर्वदा ॥ ७० ॥ धृता हृदि मया नैव । विना त्वां देवतापरा ॥ अलमुक्त्या त्वमेवा-
सि । प्रमाणं भगवत्यथ ॥ ७१ ॥ दुःस्थितेन ततो देवि । पराभूतेन वैरिणा ॥ शरणार्थमिहाहूता ।
जगच्छरणदायिनि ॥ ७२ ॥ योगिवाक्यावसाने सा—वदत्तव भयं कुतः ॥ येनाहं ज्ञातकार्यार्थी ।
यतिष्ये योगिनाथ ते ॥ ७३ ॥ योगी जगाद देव्येव । शत्रुः प्रत्यक्ष एव ते ॥ वीरसेनोऽभिधाने-
ना—पकारी मम सर्वथा ॥ ७४ ॥ यत्त्वया मे तदा दत्तं । खड्गरत्नं प्रसन्नया ॥ हठेनानेन पापेन ।
हृतं तदपि देवि मे ॥ ७५ ॥ प्रसादं कुरु देवीमं । मम मारय वैरिणं ॥ खड्गरत्नं पुनर्देहि । राज्यं
वास्य महीभुजः ॥ ७६ ॥ चंडी स्माह स्थिरो भूत्वा । सहानेन रणं कुरु ॥ छिद्रं प्राप्याहमप्यस्य ।
करिष्याम्युचितं ततः ॥ ७७ ॥ ततो योगीश्वरो हृष्ट—श्चामुंडावचनेन सः ॥ नृसिंहकृतसाहाय्यो ।
युयुधे सह वैरिणा ॥ ७८ ॥ तया तस्यार्पितः खड्गः । फलकं च करस्थितं ॥ स ताभ्यां दुर्जयो जा-
तः । संग्रामे योगिपुंगवः ॥ ७९ ॥ दूरमुत्पत्य योगींद्रः । खेटकासिकरस्थितः ॥ यावन्निहंति वीरं तं ।
तावद्व्योमोत्पपात सः ॥ ८० ॥ हनिष्यावः पतंतं त—मिति संकल्पमानसौ ॥ यावत्तौ राजयोगींद्रा
—वभिघाताय तस्थतुः ॥ ८१ ॥ कुमारेण हतौ ताव—द्युगपद्राजयोगिनौ ॥ दृढपादप्रहारेण । पृ-

ष्टदेश उभावपि ॥ ८२ ॥ तेन पादप्रहारेणो—द्वमंतौ रुधिरं मुखि ॥ अधोमुखौ पतत्पाणि—धृ-
तास्त्रौ तौ निपेततुः ॥ ८३ ॥ मूर्छया मीलिताक्षौ तौ । ददृशाते मृताविव ॥ नरेंद्रपरिवारेण । हा-
हेत्युच्चैः प्रलापिना ॥ ८४ ॥ अत्रांतरे सरोषा सा । चंडी षोडशपाणिषु ॥ सज्जयंत्यायुधान्यूचे । नि-
घर्षंती रदै रदान् ॥ ८५ ॥ सहेते वीरसेनैतौ । प्रहारान् संगरे हढान् ॥ तदेहि सन्मुखं मेऽहं । प-
रीक्षे येन ते बलं ॥ ८६ ॥ वीरः स्माह भगवति । विरोधो न त्वया सह ॥ न विरोधं विना कापि ।
संग्रामः स्यात्कथंचन ॥ ८७ ॥ त्वया सार्धं न मबंधु—धनवैरं मनागपि ॥ भगवत्यस्ति येनाहं । भ-
वामि तव सन्मुखः ॥ ८८ ॥ आर्हितु बलिपूजादि—हस्तैस्त्वामभियुज्यते ॥ न पुनः समरे योद्धुं ।
विविधायुधपाणिभिः ॥ ८९ ॥ देव्युवाच कथं मेऽस्ति । न विरोधस्त्वया समं ॥ पुरः परमभक्तं यो ।
हंसि योगीश्वरं मम ॥ ९० ॥ पुत्रवत्परिपातव्यो । ममैष शरणागतः ॥ तद्बंधुवधसंभूतं । बंधुवैरं
त्वया सह ॥ ९१ ॥ वीरेणोक्तं तवैषोऽत्र । बांधवोऽहं पुना रिपुः ॥ प्रायस्त्वं नैव जानासि । स्वरूपं
बंधुवैरिणोः ॥ ९२ ॥ उपकारापकाराभ्यां । बांधवा वैरिणोऽपि च ॥ उपकारी कथं ह्येषो—ऽपकारी
ते कथं त्वहं ॥ ९३ ॥ त्वयैवोपकृतं नून—मस्य खड्गादिदानतः ॥ न पुनः शक्तिरेतस्यो—पकर्तुं

महती तव ॥ ९४ ॥ चंड्याभाणि न तुष्याम्यु—पकारैरधिकैरहं ॥ किंतु निःकृत्रिमस्वांत—भक्त्या
तुष्यामि निश्चितं॥ ९५ ॥ वीरः स्माह त्वया क्वापि । ममाज्ञक्तिर्विलोकिता ॥ येनात्था भक्तिमंतं मां ।
न पुनर्योगिनायकं ॥ ९६ ॥ ऊचे चामुंडया दातुं । न शक्नोम्युत्तरं तव ॥ मद्भीतो यदि तद्याहि ।
मया मुक्तो निजं गृहं ॥ ९७ ॥ वीरः स्माहोत्तरं दातु–मसमर्था न केवलं ॥ मद्यमांसाशने मन्ये ।
न समर्था रणेऽपि हि ॥ ९८ ॥ असमर्थेति वाक्यं सा । श्रुत्वा वीरस्य भैरवी ॥ त्रिशूलं तोलया
मास । करे भीमं करालदृक् ॥ ९९ ॥ वीरोऽथ चिंतयामास । स्युरेताः क्षुद्रदेवताः ॥ मायाधिका-
स्तदेतासु । न भाव्यं सरलाशयैः ॥ ५०० ॥ प्राप्नुवंति परेभ्यस्ते । पराभूतिं कुबुद्धयः ॥ अकाल-
ज्ञा नरा माया—विषु मायाविनो न ये ॥ १ ॥ सावधानो गुरूक्तेन । ध्यायामि विधिना ततः ॥
परमेष्ठिनमस्कारं । परमंत्रहरं परं ॥ २ ॥ त्रिविष्टपेऽपि तन्नास्ति । मंत्रादस्माद्भवेन्न यत ॥ समं स्याद्वि-
षमं चापि । विषमं सममप्यहो ॥ ३ ॥ ध्यातमात्रेण तेनाथ । मंत्रेण नृपनंदनः ॥ अत्यंतं दुस्सह-
स्तस्या—श्चामुंडाया बभूव सः ॥ ४ ॥ सशंकया नमस्कृत्या । तया ध्वस्तप्रभावया ॥ करयुग्मधृतेनै-
व । त्रिशूलेन हतः क्रुधा ॥ ५ ॥ स्त्री त्वं परकलत्रं च । कृशांगी देवताप्यसि ॥ प्रहरामि कथंकारं ।

नो महामल्लो । जातोद्वेगोऽवदत्तदा ॥ १८ ॥ सज्जो भवसि किं नृप । मल्लयुद्धाय संप्रति ॥ मम व-
क्षःस्थलाघातो । विस्मृतस्तेऽधुनापि किं ॥ १९ ॥ लीलासंघट्टमात्रेण । मूर्छां गछसि नृपते ॥ ममे-
दानीं तु दोर्दंड—संमर्दं सहसे कथं ॥ २० ॥ नरसिंहोऽवदत्सत्यं । तव घातासहोऽस्म्यहं ॥ तथा-
प्येकं क्षणं वीर । युध्यस्व हि मया सह ॥ २१ ॥ वीरो जगाद राजंस्ते । पूर्णं भवतु कौतुकं ॥ त-
दाविःकुरु विज्ञानं । त्वं येन वहसे मदं ॥ २२ ॥ वीरसेननृसिंहौ तौ । दुढौकाते मिथस्ततः ॥ पद-
कंपितनृपीठौ । बहुरोषारुणेक्षणौ ॥ २३ ॥ नानाबंधनकरणै—स्तलहस्तादिताडनैः ॥ युयुधाते त-
था तौ तु । यथा नेशुर्नभश्चराः ॥ २४ ॥ तयोरेवं रसोद्रेका—दन्योन्यं युध्यमानयोः ॥ वीरेण ज-
गृहे शीर्षे । नरसिंहः क्षणेन सः ॥ २५ ॥ धृत्वा कंठे नृसिंहं तं । करेणैकेन राजसूः ॥ द्वितीयेन
तु जग्राह । योगिनं भयनश्वरं ॥ २६ ॥ एकत्र मेलयित्वा तौ । करयुग्मेन लीलया ॥ भ्रामितौ ग-
गने गाढं । चर्क्री तर्जयतामुना ॥ २७ ॥ मार्यमाणाविमौ भक्तौ । चामुंडे त्रायसे न किं ॥ तर्जयि-
त्वेति योगींद्र—नरेंद्रौ स प्रचिक्षिपे ॥ २८ ॥ आक्रंदति परीवारे । भयभ्रांते च पूर्जने ॥ प्रक्षिप्तौ
तौ तथा क्वापि । न ज्ञातौ केनचिद्यथा ॥ २९ ॥ कृत्वेति वीरसेनः स । चामुंडां यावदभ्यगात् ॥

भीत्या किलकिलारावं । मुंचंती सा प्रनश्यति ॥ ३० ॥ चामुंडायां प्रणष्टायां । व्यावृत्य नृपनंदनः ॥
सर्वमाश्वासयामास । नरसिंहपरिच्छदं ॥ ३१ ॥ ईषत्प्रफुल्लवक्त्राब्जो । ज्योतिर्जयपताकयोः ॥ ससत्कारं
विधायोच्चै—र्वक्तुमेवं प्रचक्रमे ॥ ३२ ॥ सागरास्तेऽपि क्षुभ्यंति । गंभीरा गुरवोऽपि ये ॥ क्षयकाले
भवादृक्षा । न पुनः सज्जना इह ॥ ३३ ॥ किं जल्पितेन बहुना । गणना कार्यदेशयोः ॥ इदमे-
व पुराप्युच्चै—रायत्तं युवयोर्द्वयोः ॥ ३४ ॥ अथोवाच निमित्तज्ञः । स्वप्रभुत्वोचितं त्वया ॥ वीरसेन
समाख्यात—मंगीचक्रे च चेतसा ॥ ३५ ॥ तव देव जगद्धारो । यत्र देहे वसत्यसौ ॥ विश्वायत्तं
तदा सत्व—मायत्तं कथमावयोः ॥ ३६ ॥ यावदेवं जगादाभ्यां । वीरसेनः समं मुदा ॥ यत्तावत्तत्र
संजातं । सहसा तन्निशम्यतां ॥ ३७ ॥ तस्तरे गगनं सर्वं । विमानैर्व्योमचारिणां ॥ अकालमेघसं-
घातै—रिव पीतातपै रवेः ॥ ३८ ॥ इतश्चागत्य वेगेन । संयोज्य च कराविति ॥ वीरसेनो मया दे-
व । विज्ञप्तो वज्रबाहुना ॥ ३९ ॥ तदानीं वीरसेनाहं । खेचरीभिर्हृते त्वयि ॥ अनाथोऽशरणो दी-
नः । कांदिशीक इवाभवं ॥ ४० ॥ वासुपूज्यगृहे स्वामिन् । मठेष्वारामभूमिषु ॥ वीक्षितोऽपि न दृ-
ष्टस्त्वं । त्रिकेषु चत्वरेषु च ॥ ४१ ॥ तिलमात्रोऽपि चंपायां । स प्रदेशो न विद्यते ॥ न वीक्षितो

मया यत्र । त्वं त्वयोत्क्रांतचक्षुषा ॥ ४२ ॥ ग्रामं ग्रामं पुनर्देव । गतोऽहं गणिकागृहं ॥ रुदंती निभृ-
तं दृष्टा । तत्र सा विरहात्तव ॥ ४३ ॥ अनयाहं ततः प्रोचे । वज्रबाहो विलोकय ॥ विद्याशक्त्या
समस्तेऽत्र । वीरसेनं महीतले ॥ ४४ ॥ किंकर्तव्यतया मूढ—स्ततः शुद्धिमनाप्नुवन् ॥ निरुपायो य-
यौ वेगा—द्वैताढ्येश्वरसंनिधौ ॥ ४५ ॥ एकासनस्थयोस्तत्र । चरित्रं शृण्वतोस्तव ॥ शेखराशोकयोः
सर्वं । त्वद्वृत्तं कथितं मया ॥ ४६ ॥ श्रुत्वा तौ तव वृत्तांत—मत्रियानादिकं रिपोः ॥ स्मरतःस्म शु-
चीत्रय । स्वस्वविद्याधिदेवताः ॥ ४७ ॥ विद्यादेवीमुखात्ताभ्यां । ज्ञात्वापहरणादि ते ॥ चामुंमीजय-
पर्यंत—मवाचि चरितं मम ॥ ४८ ॥ ताभ्यां युष्मत्समुत्कंठा—तरलाभ्यामभाण्यदः ॥ गम्यते तत्र
यत्रास्ति । विजयी वीरसेनराट् ॥ ४९ ॥ तद्वचोऽनंतरं जात—संक्षोभः खेचरव्रजः ॥ संचचाल वि-
मानौघै—श्छादयान् निखिला दिशः ॥ ५० ॥ परीतौ परिवारेण । कृतप्रस्थानमंगलौ ॥ शेखराशो-
कराजौ ता—विहायातौ विहायसा ॥ ५१ ॥ समुदायो विमानानां । स एष दृश्यते प्रभो ॥ स ए-
तयोरशेषोऽपि । गगने खेचरेंद्रयोः ॥ ५२ ॥ वीरः स्माह वयं तर्हि । यामः सन्मुखमेतयोः ॥ इत्यु-
दित्वा समारूढः । स विमाने निजे ततः ॥ ५३ ॥ विशेषकल्पशालिन्या । सार्धं जयपताकया ॥ म-

या नैमित्तिकेनापि । प्रसादादरभास्वता ॥ ५४ ॥ युग्मं ॥ उत्पपात नभोमार्गे । भानुवत्सूरनंदनः ॥
विद्याधराब्जखंमानि । बोधयन्निजचेतसा ॥ ५५ ॥ वंद्यमानो बलप्रष्टैः । सुभटैः स ससंभ्रमं ॥ ददृशे
शेखराशोक—राजभ्यां परमात्मवत् ॥ ५६ ॥ उच्चरंतौ जयारावं । सगौरवमुभावपि ॥ त्यक्तासनौ त-
तो वीर—सेनं भक्त्या प्रणेमतुः ॥ ५७ ॥ प्रसारितभुजादंडः । कुमारोऽपि यथाक्रमं ॥ सस्नेहं तौ
समाश्लिष्य । पप्रछ कुशलं क्रमात् ॥ ५८ ॥ कोशीकृत्य करद्वंद्वं । ताभ्यामभिदधे ततः ॥ आवयोः
कुशलं देव । प्रसादेन तवान्वहं ॥ ५९ ॥ इयन्मात्रेऽपि कार्ये कि—मायासि त्वं स्वयं प्रभो ॥ प्रद-
त्तो नावयोरेष । किमादेशो नरेश्वर ॥ ६० ॥ भृत्यानां भाति भृत्यत्वं । न विक्रमवतामपि ॥ क्लि-
श्यंति स्वामिनः कार्ये । येषु सत्सु स्वयं किल ॥ ६१ ॥ स्वामिनो नोपकुर्वंति । प्रस्तावेऽप्यागते य-
दि ॥ अन्योन्यं निष्फलं भृत्य—स्वामित्वं तत्तयोर्ननु ॥ ६२ ॥ विनियोगं विना स्वामी । यद्भृत्यस्य
प्रसीदति ॥ तद्दुरीकरणं नूनं । तस्य दुर्वचनं विना ॥ ६३ ॥ पिधाय सहसा कर्णौ । वीरेण जगदे
ततः ॥ न विकल्पयितुं युक्तं । युवयोर्हृदयेऽप्यदः ॥ ६४ ॥ कस्य को विद्यते स्वामी । भृत्यः कस्या-
थवात्र कः ॥ अभिमानं वृथैवेद—मेष भृत्योऽहमीश्वरः ॥ ६५ ॥ स्वस्वामित्वमदादन्यान् । बलाख्या-

पारयंति ये ॥ कर्मातिविरसं नूनं । ते वहंत्याभियोगिकं ॥ ६६ ॥ भृत्यत्वेन यथात्मानं । मन्येथे स्वामिनो युवां ॥ तथाहमपि वां मार्गो । महतामेक एव हि ॥ ६७ ॥ इत्यादिसुजनालापै—र्यावत्तिष्टंति ते मिथः ॥ वासुपूज्यगृहे ताव—त्सर्वेषां पतिता दृशः ॥ ६८ ॥ जनानां गुरुसंमर्दे । तत्रापश्यन्नभःस्थिताः ॥ अपृछंश्चापि ते सर्वे । किमेष मिलितो जनः ॥ ६९ ॥ ततो राजन् मयाज्ञाणि । न जाने सम्यगप्यहं ॥ प्रतिक्षिप्तस्त्वया किंतु । नृसिंहः पतितोऽत्र हि ॥ ७० ॥ उवाच वीरसेनोऽथ । यामो वयमपीह जोः ॥ जिनेंऽदर्शनात्कर्म—क्षयोऽस्तु जवतामपि ॥ ७१ ॥ नरसिंहममुं स्वस्थं । कृत्वा राज्ये निजे पुनः ॥ स्थापयामो वयमिति । गदित्वा तत्र ते ययुः ॥ ७२ ॥ वासुपूज्यजिनं नत्वा । गताः स्थाने जनाकुले ॥ पप्रनुः सर्वलोकांस्ते । संमर्दः किमितीह भोः ॥ ७४ ॥ उक्तमेकेन देवात्र । श्रीवीरेण महौजसा ॥ लीलयोल्लाव्य तावेतौ । प्रक्षिप्तौ राजयोगिनौ ॥ ७५ ॥ मूर्छापरवशौ तौ तु । प्राप्नुतो नैव चेतनां ॥ परिवारस्तयोरेष । कुरुते शीतलक्रियां ॥ ७६ ॥ वीरो जगाद हा कष्टं । चैतन्यं लभते न सः ॥ अद्यापि नरसिंहस्त—द्यामस्तत्रैव सत्वरं ॥ ७७ ॥ अपगछत्परीवार—दत्तमार्गः स वीरराट् ॥ नरसिंहसमीपेऽगा—त्समं विद्याधरेश्वरैः ॥ ७८ ॥ ददर्श पुरतस्तत्र । ब्रह्मगु-

या नैमित्तिकेनापि । प्रसादादरभास्वता ॥ ५४ ॥ युग्मं ॥ उत्पपात नभोमार्गे । भानुवत्सूरनंदनः ॥ विद्याधराब्जखंडानि । बोधयन्निजचेतसा ॥ ५५ ॥ वंद्यमानो बलश्रेष्ठैः । सुभटैः स ससंभ्रमं ॥ ददृशे शेखराशोक—राजव्यां परमात्मवत् ॥ ५६ ॥ उच्चरंतौ जयारावं । सगौरवमुभावपि ॥ त्यक्तासनौ ततो वीर—सेनं भक्त्या प्रणेमतुः ॥ ५७ ॥ प्रसारितभुजादंडः । कुमारोऽपि यथाक्रमं ॥ सस्नेहं तौ समाश्लिष्य । पप्रच्छ कुशलं क्रमात् ॥ ५८ ॥ कोशीकृत्य करद्वंद्वं । ताभ्यामभिदधे ततः ॥ आवयोः कुशलं देव । प्रसादेन तवान्वहं ॥ ५९ ॥ इयन्मात्रेऽपि कार्ये किं—मायासि त्वं स्वयं प्रभो ॥ प्रदत्तो नावयोरेष । किमादेशो नरेश्वर ॥ ६० ॥ भृत्यानां भाति भृत्यत्वं । न विक्रमवतामपि ॥ क्लिश्यंति स्वामिनः कार्ये । येषु सत्सु स्वयं किल ॥ ६१ ॥ स्वामिनो नोपकुर्वंति । प्रस्तावेऽप्यागते यदि ॥ अन्योन्यं निष्फलं भृत्य—स्वामित्वं तत्तयोर्ननु ॥ ६२ ॥ विनियोगं विना स्वामी । यद्भृत्यस्य प्रसीदति ॥ तद्दुरीकरणं नूनं । तस्य दुर्वचनं विना ॥ ६३ ॥ पिधाय सहसा कर्णौ । वीरेण जगदे ततः ॥ न विकल्पयितुं युक्तं । युवयोर्हृदयेऽप्यदः ॥ ६४ ॥ कस्य को विद्यते स्वामी । भृत्यः कस्याथवात्र कः ॥ अभिमानं वृथैवेद—मेष भृत्योऽहमीश्वरः ॥ ६५ ॥ स्वस्वामित्वमदादन्यान् । बलाढ्या-

पारयंति ये ॥ कर्मातिविरसं नूनं । ते वक्षंत्यान्नियोगिकं ॥ ६६ ॥ भृत्यत्वेन यथात्मानं । मन्येथे स्वामिनो युवां ॥ तथाहमपि वां मार्गो । महतामेक एव हि ॥ ६७ ॥ इत्यादिसुजनालापे—र्यावत्तिष्टंति ते मिथः ॥ वासुपूज्यगृहे ताव—त्सर्वेषां पतिता दृशः ॥ ६८ ॥ जनानां गुरुसंमर्दे । तत्रापश्यन्नभःस्थिताः ॥ अपृछंश्चापि ते सर्वे । किमेष मिलितो जनः ॥ ६९ ॥ ततो राजन् मयान्नापि । न जाने सम्यगप्यहं ॥ प्रतिक्षिप्तस्त्वया किंतु । नृसिंहः पतितोऽत्र हि ॥ ७० ॥ उवाच वीरसेनोऽथ । यामो वयमपीह भोः ॥ जिनेंद्रदर्शनात्कर्म—क्षयोऽस्तु भवतामपि ॥ ७१ ॥ नरसिंहममुं स्वस्थं । कृत्वा राज्ये निजे पुनः ॥ स्थापयामो वयमिति । गदित्वा तत्र ते ययुः ॥ ७२ ॥ वासुपूज्यजिनं नत्वा । गताः स्थाने जनाकुले ॥ पप्रछुः सर्वलोकांस्ते । संमर्दः किमितीह भोः ॥ ७४ ॥ उक्तमेकेन देवात्र । श्रीवीरेण महौजसा ॥ लीलयोल्लाल्य तावेतौ । प्रक्षिप्तौ राजयोगिनौ ॥ ७५ ॥ मूर्छापरवशौ तौ तु । प्राप्नुतो नैव चेतनां ॥ परिवारस्तयोरेष । कुरुते शीतलक्रियां ॥ ७६ ॥ वीरो जगाद हा कष्टं । चैतन्यं लभते न सः ॥ अद्यापि नरसिंहस्त—द्यामस्तत्रैव सत्वरं ॥ ७७ ॥ अपगछत्परीवार—दत्तमार्गः स वीरराट् ॥ नरसिंहसमीपेऽगा—त्समं विद्याधरेश्वरैः ॥ ७८ ॥ ददर्श पुरतस्तत्र । व्रहगु-

सान्निधं गुरुं ॥ बहुशिष्यपरीवारं । करुणारससागरं ॥ ७९ ॥ आनंदपूरितो वीरः । समं भूचरखेचरैः ॥ ववंदे सूरिराजस्य । पादपंकजमुत्तमं ॥ ८० ॥ गुरुणापि भवांभोधि—निस्तारणतरीसमः ॥ धर्मलाभो ददे तेषां । वीरखेचरभूभुजां ॥ ८१ ॥ हरिचंदनसिक्तांगौ । ततस्तौ राजयोगिनौ ॥ स्वस्थीकृतौ कुमारेण—पश्यतां सर्वतो दिशः ॥ ८२ ॥ ततः स्थानांतरालोक—संजाताधिकमत्सरौ ॥ मुनींद्रं वीरसेनं चा—पश्यतां तौ सखेचरं ॥ ८३ ॥ नरसिंहस्ततः प्रोचे । वीरसेनेन दुर्मनाः ॥ किं ध्यायसि नृसिंह त्वं । वंदस्व मुनिनायकं ॥ ८४ ॥ असद्ग्राहं त्वमप्याशु । त्यक्त्वा योगीश्वरानम ॥ इत्युक्ते वीरसेनेन । नरसिंहो ननाम तं ॥ ८५ ॥ गुरुणा सादरेणोच्चैः । करमुत्क्षिप्य दारुणं ॥ धर्मलाभो नरेंद्रस्य । दत्तो दुःखविनाशनः ॥ ८६ ॥ नरसिंहं सुखासीनं । ब्रह्मगुप्तोऽवदत्पुनः ॥ माकार्षीस्त्वं मनःखेदं । मनागपि नरेश्वर ॥ ८७ ॥ मनःखेदे कृतेऽप्यस्ति । परित्राणं न किंचन ॥ चंचलत्वं श्रियः को न । जानाति जगतः स्फुटं ॥ ८८ ॥ त्यक्त्वा कुलक्रमायात—मन्यं याति नरं क्षणात ॥ पांशुला स्त्रीव या दृष्टा । व्यलीकांतां श्रियं त्यज ॥ ८९ ॥ श्रियः संकोचविस्तारौ । दृश्येते क्षणिकाविह ॥ शंके संवासदोषेण । संक्रांतौ कमलस्य तौ ॥ ९० ॥ विषस्य भगिनी ज्येष्टा । लक्ष्मीरेषा

नरेश्वर ॥ यतो दुःखशतं दत्वा । हंति श्रीर्न विषं तथा ॥ ९१ ॥ समुद्रमथने त्यक्त्वा । सुरौघं यः स्वयं वृतः ॥ हरिः सोऽपि यया त्यक्तः । सा श्रीस्त्वां किं न मुंचति ॥ ९२ ॥ द्वारिका सा पुरी सा च । श्रीरिंद्रस्यापि दुर्लभा ॥ कृष्णस्य पश्यतो नष्टं । हरिश्चंद्रपुरी यथा ॥ ९३ ॥ विनंक्ष्यति दशास्यस्य । श्रीः स्वप्नेऽपीति वेत्ति कः ॥ त्रैलोक्यकंटकस्यापि । लक्ष्मीस्तस्यापि सा गता ॥ ९४ ॥ आत्मार्थमश्वग्रीवेण । सुदूरं परिवर्धिता ॥ तं विहायापि वेश्येव । लक्ष्मीस्त्रिपृष्टमाश्रिता ॥ ९५ ॥ रघुरामहरिश्चंद्र—दिल्हीपादिमहीभुजां ॥ न जाता या स्थिरा सा श्री—र्भविष्यति कथं तव ॥ ९६ ॥ यथा राजसहस्राणि । लंघयत्यध्वगेव सा ॥ मामायाता न किं वेत्सि । मामप्येवं विमोक्ष्यति ॥ ९७ ॥ प्रकृत्या चंचला लक्ष्मी—र्यत्नेनापि स्थिरा भवेत् ॥ भरताद्या नृपास्तत्किं । मुंचंत्येतां नरेश्वर ॥ ९८ ॥ माकार्षीः प्रतिबंधं त—ल्लक्ष्म्यां भार्यासु बंधुषु ॥ असारं सर्वमप्येत—त्सारं धर्मो जिनोदितः ॥ ९९ ॥ नरसिंहो गुरुवाक्या—ज्ज्ञातसंवेगवासनः ॥ गुरुं विज्ञपयामास । सत्यमेतत्त्वयोदितं ॥ ६०० ॥ अविवेकसमुद्भूता—स्तावन्नृणां कुबुद्धयः ॥ न शृण्वंति गुरोर्याव—त्तव तत्वमयं वचः ॥ १ ॥ यथैव कथितं लक्ष्म्या—श्चपलत्वं त्वया विभो ॥ असारत्वं तथैवास्याः । संक्रांतं हृदये मम ॥ २ ॥ सारनु-

तस्त्वया किंतु । यदि धर्मो यदोच्यत ॥ कृत्वा प्रसादमाख्याहि । तं ममास्यापि योगिनः ॥ ३ ॥ गु-
रुरूचे ततो धर्मं । गंजीरं मधुरस्वरं ॥ उपदिष्टं जिनेंद्रेण । समर्थं कर्मणां क्षये ॥ ४ ॥ सर्वदर्शन-
मार्गेषु । श्रूयते धर्म इत्ययं ॥ परीक्ष्यते स एव स्व-विवेकेन विवेकिना ॥ ५ ॥ चतुःपरीक्षितं कृ-
त्वा । येऽत्र गृह्णंति कांचनं ॥ तेषां विघटते नैव । कालदेशांतरेऽपि तत् ॥ ६ ॥ सुपरीक्ष्य तथा ध-
र्मं । येऽत्र गृह्णंति धार्मिकाः ॥ तेषां जवांतरेऽपीष्ट—फले विघटते न सः ॥ ७ ॥ प्रवाहपतिता ये
त्व—परीक्ष्य वृषकारकाः ॥ ते पापानि प्रकुर्वंति । धर्मवासनया भृशं ॥ ८ ॥ यथा परीक्षितव्योऽत्र ।
स धर्मो धर्मकांक्षिणा ॥ शृणुतं राजयोगींद्रा—वेकाग्रमानसौ तथा ॥ ९ ॥ एवं विभावनीयं स्व-
हृदये ज्ञणितोऽत्र कः ॥ सर्वदर्शनशास्त्रेषु । परमार्थोऽधिकारिभिः ॥ १० ॥ पंचैतानि पवित्राणि ।
सर्वेषां धर्मचारिणां ॥ अहिंसा सत्यमस्तेयं । त्यागो मैथुनवर्जनं ॥ ११ ॥ एतानि यत्र पंचापि । नि-
र्वाहं यांत्यबाधया ॥ आदिमध्यावसानेन । फलेद्धर्मो जवांतरे ॥ १२ ॥ यत्रैतान्यपि धर्मस्य । मूलं
व्यभिचरंति च ॥ आदिमध्यावसानेषु । तं धर्मं त्यजतादरात ॥ १३ ॥ पूर्वं पाखंडिधर्मेषु । प्ररूप्यैता-
नि सर्वथा ॥ अनुज्ञातास्ततः सर्वे । पश्चाज्जीववधादयः ॥ १४ ॥ जिनधर्मे पुनर्मूल-गुणा एते हि

धार्मिकाः ॥ अथवा जल्पितेनालं । सूक्ष्मबुद्ध्या विचार्यतां ॥ १५ ॥ ततो योगी नृपश्चापि । गुरुं द्वा·
वप्यवोचतां ॥ भगवन् कोऽत्र संदेह—स्त्वयोक्तं यत्तथैव तत् ॥ १६ ॥ गुरुः स्माह स धर्मः स्या—
च्चतुर्धा जिनशासने ॥ दानशीलतपोभाव—भेदैर्भिन्नो यथाक्रमं ॥ १७ ॥ पूर्वं दानमयं धर्मं । समा·
सेन भणाम्यहं ॥ दानं च त्रिविधं ज्ञाना—भयधर्मोपकारतः ॥ १८ ॥ तद् ज्ञानं द्विविधं मिथ्या—
सम्यग्भेदद्वयेन च ॥ रागद्वेषकरं यच्च । मिथ्याज्ञानं तदुच्यते ॥ १९ ॥ आयुर्वेदो धनुर्वेदो । नीत·
यो गणितानि च ॥ ज्योतिर्विवादशास्त्रं च । गजाश्वनरलक्षणं ॥ २० ॥ विभंगज्ञानिनो येऽत्र । ब·
ब्रुवुः परमर्पयः ॥ एवमादीनि शास्त्राणि । तत्प्रणीतानि तानि च ॥ २१ ॥ मिथ्याज्ञानं समस्तं त—
दिहलोकोपयोगि यत् ॥ रागद्वेषादयो यस्मा—त्प्रवर्धंते शरीरिणां ॥ २२ ॥ सर्वज्ञेन जिनेनाप्ते—
नागमो भणितोऽत्र यः ॥ सम्यग्ज्ञानं भवेत्तच्च । परलोकैकसाधनं ॥ २३ ॥ जीवाजीवौ तथा पुण्यं ।
पापं चाश्रवसंवरौ ॥ निर्जरा बंधमोक्षौ च । सम्यग्ज्ञानेन बुध्यते ॥ २४ ॥ सम्यग्ज्ञानस्य विषया ।
अनंताः परिकीर्तिताः ॥ समस्तैस्तैः परिज्ञातै—र्यांति रागादयः क्षयं ॥ २५ ॥ तद् ज्ञानमपि नैव स्या
—द्येन रागादिपोषणं ॥ तिमिरौघं न यो हंति । स सूरः कथमुच्यते ॥ २६ ॥ सम्यग्ज्ञानं नरेणै·

त—द्दातव्यं निजशक्तितः ॥ ज्ञानवान् ज्ञानदानेन । देही भवति निश्चितं ॥ २७ ॥ अज्ञानी नैव जानाति । जीवाजीवौ कथंचन ॥ तदज्ञाता च जीवानां । कथं रक्षां करिष्यति ॥ २८ ॥ जीवा ज्ञानेन जानंति । पुण्यं पापं तथैव च ॥ तत्कारणानि सर्वाणि । मोक्षोपायमपि स्फुटं ॥ २९ ॥ सम्यग्ज्ञानी च जीवाना—मभयं विदधाति हि ॥ त्रसस्थावरभेदेन । ते जीवा द्विविधा मताः ॥ ३० ॥ सर्वेषामभयं दत्ते । जीवानां यः कृपापरः ॥ स सुखं स्वर्गमोक्षेषु । वसत्यानंदसुंदरः ॥ ३१ ॥ आरोग्यं धनसंपत्तिः । सौभाग्यं दीर्घजीवितं ॥ भवंत्यभयदानेन । गुणा इत्येवमादयः ॥ ३२ ॥ ज्ञानं च सफलं तस्य । नीतयः सफलास्तथा ॥ सफलं मानुषत्वं चा—भयदानेऽस्ति यस्य धीः ॥ ३३ ॥ दया यस्य तपस्तस्य । शीलं सर्वगुणा अपि ॥ दयाहीनस्य नो शीलं । न तपो न गुणा अपि ॥ ३४ ॥ यः करोत्यर्थदानेना—दारिद्र्यमखिलं जगत् ॥ एकं हिनस्ति जीवं च । तस्य सर्वं निरर्थकं ॥ ३५ ॥ सर्वधर्मक्रियामूलं । सर्वसौख्यैककारणं ॥ सर्वजीवाभयं दानं । सर्वदर्शनसंमतं ॥ ३६ ॥ धर्मोपकारकं दानं । समासेन भणाम्यथ ॥ सर्वगुणसमृद्धेभ्यो । मुनिभ्यो दीयतेऽत्र यत् ॥ ३७ ॥ अवष्टंभेन येनात्र । शय्यान्नपात्रवाससां ॥ सावष्टंभशरीरास्ते । धर्मं कुर्वंति साधवः ॥ ३८ ॥ धर्मोपकारकं दानं ।

तदपि स्याच्चतुर्विधं ॥ दायकग्राहककाल—भावैः शुद्धं नरेश्वर ॥ ४० ॥ दानं दायकशुद्धं त—द्य-
द्दत्ते हर्षसंयुतः ॥ अमायी ज्ञानसंपन्नो । दाता वांछाविवर्जितः ॥ ४१ ॥ पात्रशुद्धिं विना दानं । दी-
यते बहुधापि यत् ॥ परलोके न तद्दत्त—मपि स्याद्बहुलाभकृत ॥ ४२ ॥ काले यद्दीयते दानं । काल
शुद्धं तदुच्यते ॥ स एव कथितो कालो । यत्र साधुसमागमः ॥ ४३ ॥ विहीनोऽष्टमदस्थानैः । श्र-
द्धया शुद्धमानसः ॥ कृतार्थं मन्यमानः स्वं । भावयन् दानभावनां ॥ ४४ ॥ प्रवर्धमानसद्भावो । दा-
नं दत्ते गृहीह यत ॥ भावशुद्धं भवेद्दानं । तत्कर्मक्षयहेतवे ॥ ४५ ॥ युग्मं ॥ शृणु शीलमयं धर्म—
मेकचित्तो नरेश्वर ॥ यः सप्तदशभेदैः स्या—त्संयमः शीलमेव सः ॥ ४६ ॥ पंचेंद्रियजयः पंचा—
श्रवेभ्यो विरतिस्तथा ॥ कषायाणां च दंडानां । निग्रहश्चेति संयमः ॥ ४७ ॥ वितीर्य त्रिविधं दानं ।
शीलं धृत्वापि भेदभृत् ॥ चरंति सुतपोधीरा । भेदभिन्नं तदुच्यते ॥ ४८ ॥ तत्तपो द्विविधं ज्ञेयं ।
बाह्यमाभ्यंतरं तथा ॥ एकैकं च नराधीश । षड्भेदं कथितं जिनैः ॥ ४९ ॥ अनशनमौनोदर्यं ।
वृत्तेः संक्षेपणं तथा ॥ रसत्यागस्तनुक्लेशो । लीनतेति बहिस्तपः ॥ ५० ॥ प्रायश्चित्तं वैयावृत्त्यं । स्वा-
ध्यायो विनयोऽपि च ॥ व्युत्सर्गोऽथ शुभध्यानं । षोढेत्याभ्यंतरं तपः ॥ ५१ ॥ दीप्यमाने तपोवह्नौ ।

बाह्ये चाभ्यंतरेऽपि च ॥ यमी जरति कर्माणि । दुर्जराण्यपि तत्क्षणात् ॥ ५१ ॥ तृणराशिं यथा व-
ह्निः । संचितं बहुभिर्दिनैः ॥ तथानेकभवैर्बद्धं । तपो दहति कर्म वै ॥ ५२ ॥ यथा दुर्गस्थितो यो-
धः । सन्नद्धः कवचायुधैः ॥ क्षणोति रिपुसंघातं । तथा दुःकर्म सत्तपः ॥ ५३ ॥ कठोरमपि दीप्तेन ।
वह्निना मदनं यथा ॥ विलीयते तथा तीव्र—तपसा कर्मसंचयः ॥ ५४ ॥ सदोषमपि दीप्तेन । सु-
वर्णं वह्निना यथा ॥ तप्यमानस्तपोऽग्निना । तथा जीवोऽपि शुध्यति ॥ ५५ ॥ तन्नास्ति भुवने किंचि
—त्तपसा यन्न सिध्यति ॥ अनेनैव शुभा जीवा । अनंताः परिनिर्वृताः ॥ ५६ ॥ अस्मादेव तपो-
धर्मा—दणिमाद्याः समृद्धयः ॥ आमर्षौषधिमुख्याः स्यु—र्लब्धयोऽपि महात्मनां ॥ ५७ ॥ भावध-
र्मं महाराज । शृणु द्वादश भावनाः ॥ अनित्यताम‌शरणं । भवमेकत्वमान्यतां ॥ ५८ ॥ अशौचमा-
श्रवविधिं । संवरं कर्मनिर्जरां ॥ धर्मस्वाख्याततां लोकं । द्वादशीं बोधिभावनां ॥ ५९ ॥ युग्मं ॥ भा-
वयन् भावना एता । द्वादशप्रतिवासरं ॥ वेत्ति वस्तुस्वरूपं द्राक् । स्वयं चित्ते शुभाशुभं ॥ ६० ॥
सुविशुद्धपरिणामो । हंति कर्माणि संयमी ॥ कर्मक्षयार्थमाख्यात । एष धर्मश्चतुर्विधः ॥ ६१ ॥ जि-
नाख्यातमिमं धर्म—मनुतिष्ठंत आदरात् ॥ जीवाः प्रापुरनंतास्ते । मोक्षं शाश्वतसौख्यकं ॥ ६२ ॥

लब्ध्वा धर्मं भवांभोधि—यानपात्रमिवाधुना ॥ स्वीकारेण मनुष्यत्वं । सफलीकुरुतात्मनः ॥ ६३ ॥ इति श्रुत्वा नराधीशो । योगींऽश्चापि सत्वरं ॥ विछिन्नाशेषकुग्राहौ । तौ व्यजिज्ञपतां गुरुं ॥ ६४ ॥ योग्यता यदि चारित्रे । भगवन्नावयोर्द्वयोः ॥ ततः प्रसादमाधाय । प्रव्रज्यां देहि सत्वरं ॥ ६५ ॥ जवाच ब्रह्मगुप्तोऽथ । धर्मस्यास्यार्हतो युवां ॥ योग्यावेव ययोरेवं । विवेकप्रसरो हृदि ॥ ६६ ॥ मा-कार्ष्ट प्रतिबंधं त—दत्रकार्ये विवेकिनौ ॥ कुर्वीथामुद्यमं शीघ्रं । बहुविघ्नं व्रतं यतः ॥ ६७ ॥ नरसिं-हमुवाचाथ । वीरसेनो नरेश्वरः ॥ उत्तमं तु त्वयारब्ध—मिदं कार्यं महाशय ॥ ६८ ॥ किंतु राज-न्मनाक् चित्त—खेदो मे नापगच्छति ॥ यत्त्वया विहितोऽद्याह—मसमाप्तमनोरथः ॥ ६९ ॥ मनो-रथो ममेत्यासी—द्यत्त्वां संस्थाप्य भूपते ॥ निजराज्ये भविष्यामि । कृतकृत्यो महीतले ॥ ७० ॥ न-रसिंहस्ततः स्माह । सर्वं संभाव्यते त्वयि ॥ गुरुत्वेन समुद्रस्य । सदृशा ऊर्मयोऽपि हि ॥ ७१ ॥ म-च्चित्तं सर्वथा वीर । विरक्तं राज्यमोहतः ॥ भृशं संयमसाम्राज्ये । साभिलाषं बभूव च ॥ ७२ ॥ वी-रसेनः पुनः स्माह । तर्हि पुत्रं ममार्पय ॥ लघुं वा बांधवं येन । तस्मै राज्यं समर्पये ॥ ७३ ॥ नर-सिंहस्ततोऽवोच—दुपरोधेन ते कृतं ॥ मम कोऽपि न योग्योऽस्ति । तनयो बांधवोऽपि च ॥ ७४ ॥

त्वया युद्धकर्मतेऽत्र । पणीकृत्य स्वजीवितं ॥ जिनमेतत्कथं राज्ये । तव स्यामधिकार्यहं ॥ ७५ ॥ प
दाग्रलग्नतृणव—न्मन्ये राज्यमिदं ननु ॥ श्रीवीर नास्ति मे पीडा । त्यागे तस्य मनागपि ॥ ७६ ॥
त्वमेव बांधवो मेऽत्र । विक्रमेण त्वया जितं ॥ दत्तं मयापि भुंक्ष्व त्वं । निजराज्यं नरेश्वर ॥ ७७ ॥
ततः कृतांजलेर्बंधं । प्रति वीरं पुनर्जगौ ॥ माकार्षीरंतरायं त्वं । वीर दीक्षाविधौ मम ॥ ७८ ॥ वीरो
जगाद धन्योऽसि । कृतार्थोऽसि त्वमेव भोः ॥ कार्यं सेधतु निर्विघ्नं । नरसिंह तवेप्सितं ॥ ७९ ॥
नरसिंहस्ततो दीक्षां । जग्राहांतपुरैः समं ॥ ब्रह्मगुप्तगरोः पार्श्वे । मंत्री योगीश्वरोऽपि सः ॥ ८० ॥ त-
स्मिन् प्रव्रजिते राज्ञि । शेखराशोकसंयुतः ॥ सुरेंद्रलीलया वीरः । प्राविशन्नगरीं निजां ॥ ८१ ॥ प्रा-
सादे तुंगशृंगेऽसौ । रम्यतानिलये ततः ॥ सिंहासनमधिष्ठाय । शशास पुरवासिनः ॥ ८२ ॥ सन्मा
न्य सकलाध्यक्षान् । प्रसादेनोरुणा ततः ॥ सर्वानारोपयामास । यथास्थानं नरेश्वरः ॥ ८३ ॥ को-
शमुख्येषु सर्वेषु । स्थानेषु स्वनियोगिनः ॥ आरोप्य स्वस्थतां प्राप । श्रीमद्वीरनरेश्वरः ॥ ८४ ॥ ग्रा-
माकरपुरद्रोण—दुर्गाधिष्ठानवासिनः ॥ जनवृंदान् समाहूय । प्रसादं प्रचुरं ददौ ॥ ८५ ॥ इत्युवाच
वचस्तेषां । न्यायेन चरतानिशं ॥ धर्मं कुरुत भो लोकाः । पापं त्यजत सर्वथा ॥ ८६ ॥ स्वस्ववर्ण-

व्यवस्थायां । वर्तध्वं शुभकर्मणा ॥ जीवरक्षां कुरुध्वं च । मुंचतासत्यभाषणं ॥ ८७ ॥ परित्यजत चौ-
र्यं च । परस्त्रीं माभिगच्छत ॥ मद्यं मांसं च मुंचध्व—मित्युक्त्वा तान् विसृष्टवान् ॥ ८८ ॥ अथ भू-
लप्रतीहार—निर्दिष्टास्तत्र संसदि ॥ अष्टावष्टदिशां नृपा । दिक्पाला इव चागताः ॥ ८९ ॥ प्रत्ये-
कं ते सहस्रैश्च । नृपालैः परिवेष्टिताः ॥ प्रणम्य राजराजं तं । वीरसेनं व्यजिज्ञपन् ॥ ९० ॥ भर-
तार्धमहीपाला । वयमष्टौ त्वदाज्ञया ॥ चिकीर्षामो महाराजा—भिषेकं तव संप्रति ॥ ९१ ॥ दत्तप्र-
साददानेन । गणकेन ततोऽर्पिते ॥ शुभे लग्ने समारेभे । तस्य राज्याभिषेचनं ॥ ९२ ॥ इतश्चाहं
समाहूतो । वीरसेनेन संसदि ॥ समाख्यातश्च सस्नेह—मशोकशेखरादिभिः ॥ ९३ ॥ वज्रबाहो
द्रुतं गच्छ । नाशिक्यनगरीं प्रति ॥ विचित्रयशसो राज्या—भिषेकं हि निवेदय ॥ ९४ ॥ चंद्रश्रियं
महादेवीं । बंधुदत्तसमन्वितां ॥ विचित्रयशसा सार्ध—मत्र सत्वरमानय ॥ ९५ ॥ स्वामिना वीर-
सेनेन । युष्माकं सन्निधाविति ॥ प्रेषितोऽहं महाराज । यद्युक्तं तत्समाचर ॥ ९६ ॥ इत्युक्त्वा वि-
रते तस्मिन् । वज्रबाहौ नरेश्वरे ॥ आनंदोद्भूतरोमांचो । विचित्रनृपतिर्जगौ ॥ ९७ ॥ प्रागेवेति म-
या ज्ञातं । वज्रबाहो हृदंतरा ॥ तन्नास्ति भूतले यन्न । साध्यं स्यात्सूरजन्मनः ॥ ९८ ॥ चंद्रश्रीरपि

हर्षेण । विकस्वरमुखांबुजा ॥ हृदि प्रशंसयामास । वीरसेनगुणावलीः ॥ ९९ ॥ उक्तं प्रज्ञाकरेणा-
थ । देव पश्यास्य कौतुकं ॥ आसमुद्रं महीपीठं । साधितं सप्तभिर्दिनैः ॥ १०० ॥ तत्त्वया देव गं-
तव्यं । तत्र राज्याभिषेचने ॥ दीयतां त्वरितादेशो । गंतुं चंद्रश्रियोऽपि हि ॥ १ ॥ ततो राज्ञा प्र-
मोदाश्रु—जलाविलदृशा चिरं ॥ विलोक्याभिदधे पुत्री । चंद्रश्रीर्वीरवल्लभा ॥ २ ॥ तवैव शोभते
वत्से । प्रभुत्वं जगतः परं ॥ त्रिखंडभरताधीशो । यस्याः श्रीवीरवल्लभः ॥ ३ ॥ तद्वत्से गच्छ गेहं स्वं ।
बंधुदत्त त्वमप्यहो ॥ सह खेचरमित्रेण । स्वामिपत्न्या समं व्रज ॥ ४ ॥ इतश्च वादिता भेरी । हर्ष-
प्रस्थानसंभवा ॥ बधिरीकृतनिःशेष—दिगाभोगनभोंतरा ॥ ५ ॥ श्रुतं गंभीरहर्षाढ्य—भेरीभांकार-
निःस्वनैः ॥ कृतकोलाहलैश्चेले । बलौघैर्निखिलैः क्षणात् ॥ ६ ॥ ततो राजा शुभे लग्ने । कृतप्रस्था-
नमंगलः ॥ जयवारणमारोह—त्प्रहृष्टः शकुनैः शुभैः ॥ ७ ॥ दिव्यं विमानमारूढा । चंद्रश्रीः सपरि-
वृता ॥ चचालांबरमार्गेण । स्तूयमाना नभश्चरैः ॥ ८ ॥ वीक्षमाणो नृपो मार्गे । सुताया ऋद्धिविस्त-
रं ॥ उद्दहर्षरोमांचः । प्रयाणैरगमद् द्रुतं ॥ ९ ॥ पुरो गत्वा ततो वज्र—बाहुना वीरभूपतेः ॥ उ-
दपादि महानंदः । श्वशुरागमवार्तया ॥ १० ॥ प्रवेशं कारयामास । विचित्रयशसः पुरे ॥ सर्वाणि

प्रेष्य सैन्यानि । सन्मुखं वीरभूपतिः ॥ ११ ॥ विचित्रनृपतिः सिंह—द्वारदेशे समागतः ॥ उत्ततार करिस्कंधा—द्वार्यमाणोऽपि वेत्रिणा ॥ १२ ॥ पुनः पुनः समायात—प्रतीहारपुरस्सरः ॥ विचित्रो भूपतिर्मध्ये । राजसौधं विवेश सः ॥ १३ ॥ क्वचिद्गजघटाकीर्णं । क्वचिद्वाजिविराजितं ॥ क्वचित्सुभटैर्दुर्धर्षं । पश्यन् राजकुलाजिरं ॥ १४ ॥ क्वचित्कस्तूरिकाकूटैः । क्वचिद्रत्नमहोत्करैः ॥ शोभमानमनेकैश्च । क्वचित्कनकराशिभिः ॥ १५ ॥ त्रिभिर्विशेषकं ॥ तुंगभद्राभिधानस्य । प्रासादस्य महीभुजा ॥ ददृशे प्रथमा भूमि—र्योधवृंदैः समाकुला ॥ १६ ॥ सेवायामागतै राज—सहस्रैः समलंकृतां ॥ आरुरोह महीपालो । द्वितीयां भूमिकां ततः ॥ १७ ॥ पंडितैस्तार्किकैर्लोकै—र्नानादर्शनधारिभिः ॥ ब्राह्मणैश्च स संकीर्णां । तृतीयां भूमिमध्यगात ॥ १८ ॥ महास्थानस्थितं प्रौढ—राजविद्याधरावृतं ॥ सोऽपश्यद्वीरराजेंद्र—मारूढस्तुर्यभूमिकां ॥ १९ ॥ उत्खातान् स्थापयन् स्थाने । स्थितानुत्थापयंस्तथा ॥ कर्मानुरूपफलदो । यः स्रष्टेव व्यराजत ॥ २० ॥ पुरःपृष्ठद्विपार्श्वेषु । यश्च विज्ञापनाकृतां ॥ आदेशं दिग्महीपानां । दत्तेस्म दृष्टिसंज्ञया ॥ २१ ॥ नम्राणां भयकंप्राणां । राज्ञां जातानुकंपया ॥ माभैरिति ब्रुवन् पृष्ठौ । निजपाणिं चकार यः ॥ २२ ॥ यः सेवागतभूपाल—द्वारनायकभूमिषु ॥ संक्रांतः

शुशुभे तेषां । हृदये निवसन्निव ॥ २३ ॥ सोमसूर्यान्वये कोऽपि । नास्ति त्वत्सदृशो नृप ॥ इत्या-
ख्याताविवार्केंदू । यतश्श्रुत्योः कुंडलच्छलात् ॥ २४ ॥ स श्रीवीरमहाराजो । विचित्रयशसा तदा ॥ प-
रमात्मधिया वीक्षां—चक्रे सर्वमहस्पदं ॥ २५ ॥ सप्तभिः कुलकं ॥ विचित्रयशसं दृष्ट्वा । संक्षुब्धा-
स्थानविस्तरः ॥ सहसा वीरसेनः स । उत्तस्थौ सिंहविष्टरात् ॥ २६ ॥ चाटुकारपरैः सार्धं । चलद्भिः
सर्वराजभिः ॥ ननाम श्वशुरं भक्त्या । पितृवद्वीरसेनराट् ॥ २७ ॥ श्वशुरस्तु भुजाभ्यां तं । समालिं-
ग्य हृदा समं ॥ पुनः पुनश्चुचुंबोच्चै—रुत्तमांगे किरीटिनि ॥ २८ ॥ बंधुदत्तोऽपि तत्रैव । कृताश्लेषो
महीभुजा ॥ ननाम विनयेनोच्चै—र्वीरसेनपदांबुजं ॥ २९ ॥ प्राक् सिंहासन आसीने । महाराजे
महत्तमे ॥ सिंहासने निजे पश्चा—दासांचक्रे स सूरसूः ॥ ३० ॥ अन्योन्यं कुशलोदंत—प्रश्नेन प्र-
णयो निजः ॥ ताभ्यामाविःकृतो याव—त्तावद्वृद्धेन जल्पितं ॥ ३१ ॥ ये वहंति गुणान् वीर । हृदि
निर्मत्सरास्तव ॥ चिंतामणिरिवात्रासि । तेषां त्वं चिंतितप्रदः ॥ ३२ ॥ पंचांगुलिमहाशाखं । नखपु-
ष्पालिमालितं ॥ तवांह्रिकल्पवृक्षं ये । श्रिताः सीदंति ते न हि ॥ ३३ ॥ साधयंति महीमन्ये । च-
तुरंगचमूबलात् ॥ त्वया त्वेकाकिना चक्रे । तथा केनापि नो यथा ॥ ३४ ॥ इत्यादि विविधं जल्प-

ज्ञानंदरसपूरितः ॥ तदा श्रीवीरसेनेन । प्रत्यवाचि विचित्रराट् ॥ ३५ ॥ सिद्धिं याति न वा देव ।
पुण्यायत्तमिदं ननु ॥ निजयोग्यानुमानेनो—द्यमनीयं नरेण तु ॥ ३६ ॥ संतुष्टाविति गोष्टीनि—र्या-
वत्तौ तिष्टतो मिथः ॥ अशोकखेचरेंद्रेण । तावदूचे मितं वचः ॥ ३७ ॥ राजन् राज्याभिषेकाय । यू-
यमत्र समागताः ॥ क्रियतां वीरसेनस्य । स प्रशस्ते दिने ततः ॥ ३८ ॥ अनेनैव तु कार्येण । यूय-
माकारिता इह ॥ चंडश्रीबंधुदत्ताभ्यां । सहिताः सत्वरं पुरि ॥ ३९ ॥ ओमस्त्विति प्रतिज्ञाते । खे-
चरैर्भूचरैरपि ॥ सिद्धसेनो निमित्तज्ञः । पप्रच्छ लग्नमंजसा ॥ ४० ॥ सम्यग्विलोक्य तेनापि । कथि-
तं ज्ञानचक्षुषा ॥ वीरसेननरेंद्रस्य । कल्य एव दिनं शुभं ॥ ४१ ॥ लग्ने विनिश्चिते तत्र । मंगला
तोद्यपूर्वकं ॥ शकुनग्रंथयो बद्धाः । सर्वैरपि नरेश्वरैः ॥ ४२ ॥ चंपायां घोषयांचक्रे । सर्वत्र पटहैरि-
ति ॥ वीरराज्याभिषेकस्यो—त्सवः कल्ये भविष्यति ॥ ४३ ॥ इतश्च वादिता भेरी । दिनांतपरिसू-
चका ॥ शुश्रुवे निःस्वनस्तस्याः । सर्वैरास्थानसंस्थितैः ॥ ४४ ॥ समं संध्यासुवासिन्या । मध्ये पश्चि-
मसागरं ॥ राज्याभिषेकनीरार्थ— मिवोष्णकिरणो ययौ ॥ ४५ ॥ प्रससार तदा विष्वक् । संध्यारागो
नभस्तले ॥ सौराज्यरंजिते विश्वे । वीरसेनानुरागवत् ॥ ४६ ॥ काष्टाभित्तिषु कस्तूरी—कर्दमस्य प्र-

लेपवत् ॥ लिंपन्निव जगत्सौधं । प्रससार तमोव्रजः ॥ ४७ ॥ तदा मध्ये स्फुरत्तारं । नीलोत्पलदल
छवि ॥ नभः पश्यद्वरां लोक—पुंसो नेत्रमिवाशुभत् ॥ ४८ ॥ न्नमौ कृतप्रदीपौघा—दुष्कृतैरिव कः
जालैः ॥ तिमिरैर्मलिनीचक्रे । गगनाभोग उच्चकैः ॥ ४९ ॥ तस्मिन्नवसरे वीरो । विहिताशेषमंग-
लः ॥ स्थित्वास्थाने कियद्वेलां । विससर्ज नरेश्वरान् ॥ ५० ॥ विचित्रयशसं प्रेष्य । प्रौढावासे म-
हादरात ॥ अथोत्तस्थौ स्वयं वीरो । विसृष्टाशेषखेचरः ॥ ५१ ॥ ततोऽगाद्भवनं वीरो । देव्या चंद्र-
श्रियाश्रितं ॥ संजाताधिकहल्लेखो । बहुवासरदर्शनात् ॥ ५२ ॥ अन्योन्यदर्शनसुधा—पानेन मुदि-
तात्मनोः ॥ क्षुधितानीव नेत्राणि । तत्पुर्न तयोर्द्वयोः ॥ ५३ ॥ सिंहासने महार्घेऽथ । निविश्य द-
यितामिमां ॥ स बभाषे महाराजो—ऽनुरागेण गरीयसा ॥ ५४ ॥ क्षेमवार्ताविनोदेन । यावत्तत्र क्ष-
णं स्थितः ॥ समीपस्थेन मित्रेण । तावदाभाषि नृपतिः ॥ ५५ ॥ उत्थीयतां महाराजो—प्रवासे
नासि पीडितः ॥ नियमाचारकार्याणि । तिष्ठंत्यद्यापि नृशिशः ॥ ५६ ॥ अनुतद्वचनं योध—लक्षै-
र्विहितरक्षणः ॥ समुत्थाय ततस्तुंग—शृंगं प्रासादमाययौ ॥ ५७ ॥ जिनपूजां विधायाथ । संपूर्ण-
नियमक्रमः ॥ ब्रह्मचारी स भूपाल—श्चक्रे कुशयनं ततः ॥ ५८ ॥ रजन्यसहमाने च । प्रतापं सूर

जन्मनः ॥ बंदीकृतारिनारी च । क्षीणत्वं समुपागता ॥ ५९ ॥ बहुचाटुपटुप्राज्ञैः । प्रारेभे मागधव्र-
जैः ॥ प्रभातोचितनानार्थ—मंगलस्तुतिभाषणं ॥ ६० ॥ संमीलितसताराक्षि—नीलोत्पलविलोच-
ना ॥ वियोगेनेव चंद्रस्य । प्राप मूर्छां निशा प्रगे ॥ ६१ ॥ विकचांभोजपत्राक्षी । मिलच्चक्रकुचा
मिथः ॥ संध्यारागवती प्राप्ता । दिनलक्ष्मीस्तवोत्सवे ॥ ६२ ॥ श्रुत्वेति पठितं तेषां । नमोऽर्हद्भ्य इ-
ति ब्रुवन् ॥ उत्तस्थौ शयनाद्धीरः । पुलिनाद्राजहंसवत् ॥ ६३ ॥ कृतप्राभातिकाचारः । पूजयित्वा
जिनं ततः ॥ पूर्वाब्धेरिव मार्तंडो । निर्ययौ भवनादसौ ॥ ६४ ॥ दिव्यवस्त्रकृतोल्लोचं । मणिरत्नवि-
निर्मितं ॥ प्रविवेश महास्थान—मंडपं स नरेश्वरः ॥ ६५ ॥ कृतपुष्पगृहं पुष्प—दामभिर्गंधबंधुरैः ॥
परितः स्थापितानेक—शस्त्रपाणिमहाभटं ॥ ६६ ॥ योग्यस्थानासितानेक-सेवागतनरेश्वरं ॥ मणि-
रत्नमयस्तूप—न्यस्तसिंहासनोज्ज्वलं ॥ ६७ ॥ विद्याधरोपनीतैश्च । तीर्थोदकपुरस्सरैः ॥ निरुद्धविस्तारं
मध्ये । राज्यासेचनवस्तुभिः ॥ ६८ ॥ विद्याधरवधूवृंद—प्रारब्धमंगलध्वनिं ॥ तत्तत्कार्यनियोगेन ।
भ्रमद्विद्याधरोत्करं ॥ ६९ ॥ पंचभिः कुलकं ॥ किंकरीभूतभूपाल—लोकमालोकयन्नयं ॥ सिंहासन-
मलंचक्रे । पूर्वाचलमिवार्यमा ॥ ७० ॥ पुरोधसा कृते तत्र । निःशेषे शांतिकर्मणि ॥ गणकस्थापि-

ते शंकु—च्छायालग्ने सुनिश्चले ॥ ७१ ॥ विचित्रयशसा राज्ञा—तपत्रे विधृते स्वयं ॥ शेखराशोक-
पृष्ठेषु । कुंभपाणिषु राजसु ॥ ७२ ॥ यथायोग्यनयान्येषु । राजचिह्नकरेषु च ॥ सावधानेषु सर्वेषु ।
वीरे निक्षिप्तदृष्टिषु ॥ ७३ ॥ प्रतीहारस्वराशंका—निश्चले सकले जने ॥ चित्रं न्यस्त इवाभाति ।
मंडपांतरवर्तिनि ॥ ७४ ॥ इष्टांशेऽभ्युदिते लग्ने । पुण्याहस्वरपूर्वकं ॥ समकालं नृपैश्चक्रे । तस्य रा-
ज्याभिषेचनं ॥ ७५ ॥ पंचभिः कुलकं ॥ इत्यादिविधिना तस्य । प्राप्तस्य राजराजतां ॥ सुखेन दि-
वसा जग्मु—र्भरतार्धमहीभुजः ॥ ७६ ॥ पूर्वदेशमहीपाल—महेंद्रप्रमुखैस्ततः ॥ स्वस्वराज्यातिसा-
राणि । प्राभृतानि वितेनिरे ॥ ७७ ॥ नानाप्रसाददानेन । सन्मान्याशेषभूभुजः ॥ प्रहिताः स्वस्व-
देशेषु । राजराजेन तेन ते ॥ ७८ ॥ अशोकशेखरौ तौ च । विद्याधरनरेश्वरौ ॥ सत्कृत्य मित्रमा-
र्गेण । प्रेषितौ स्वस्वमंदिरे ॥ ७९ ॥ भरतार्धस्य साम्राज्यं । निष्कंटकमपालयत् ॥ वीरसेनो महारा-
जः । सुखेन जगतीतले ॥ ८० ॥ चंद्रश्रिया समं सौख्यं । बुभुजे विषयोत्तरं ॥ वीरसेनो महाराजः ।
शच्येव त्रिदशेश्वरः ॥ ८१ ॥ गतेषु बहुवर्षेषु । तस्य साम्राज्यशालिनः ॥ चंद्रश्रीकुक्षिसंभूतो । बभूव
तनयः शुभः ॥ ८२ ॥ आख्ययामरसेनः स । सर्वलक्षणसंश्रितः ॥ युवराजस्ततश्चक्रे । राज्ञा संप्रा-

सयौवनः ॥ ७३ ॥ पुरीमिव स्वां भरतार्धराज्य—मखंडितं पालयतः प्रमोदात् ॥ राजाधिराजस्य चन्द्र-वुरस्य । श्रीवीरसेनस्य समाः शतानि ॥ ७४ ॥ इत्यागमिकश्रीचारित्रप्रभसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये श्रीहरिविक्रमराजप्रतिबोधावसरप्रोक्तश्रीवीरसेनारिविजयराज्याभिषेकवर्णनो नाम दशमः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

---

॥ अथैकादशः सर्गः आरभ्यते ॥

अथान्यदा समायातौ । तावेवातिशयान्वितौ ॥ अकलंकामलौ साधू । चंपोद्याने महीयसि ॥ १ ॥ तयोरागमनं ज्ञात्वा । धर्मगुर्वोर्नरेश्वरः ॥ इत्यानंदपरोऽवादी—चंद्रश्रीबंधुदत्तयोः ॥ २ ॥ यौ मया कथितौ पूर्वं । गुरू मे धर्मदायकौ ॥ अकलंकामलौ तौ तु । मम पुण्यैरिहागतौ ॥ ३ ॥ शुचीभूतस्ततो राजा । सर्वाभरणभासुरः ॥ जयवारणमारूढो । विधृतातपवारणः ॥ ४ ॥ परीतोऽसंख्यभूपाल—सेनया कृतविस्तरः ॥ चंद्रश्रीसहितोऽशेष—पुरीलोकपरीवृतः ॥ ५ ॥ विचित्रयशसा राज्ञा । बंधुदत्तेन चान्वितः ॥ चंपाया निर्ययौ पुर्याः । प्रमोदेन गरीयसा ॥ ६ ॥ त्रिभिर्विशेषकं ॥ प्राप्तो-

द्यानः करिस्कंधा—डुत्तीर्थ सपरिछदः ॥ पद्मासनसमासीनौ । ववंदे ज्ञानिनौ नृपः ॥ ७ ॥ उपविष्टे पुरो राज्ञि । परिवारेण संयुते ॥ अकलंकमुनींद्रेण । प्रारेभे गदितुं ततः ॥ ८ ॥ विवेकिनोऽपि वाह्यंते । यदि राजन् भवादृशाः ॥ दुराशयात्तदान्येषां । को दोषोऽल्पधियां भवेत ॥ ९ ॥ कथंचित्पुण्ययोगेन । प्राप्ता राज्यरमा यदि ॥ रंकेणेवात्र संसारे । गुडाज्यालिप्तपोलिका ॥ १० ॥ तत्किं कथय तत्रैव । लांपट्येन स्थिराशया ॥ कियंतं कालमद्यापि । स्वमात्मानमुपेक्षसे ॥ ११ ॥ देवलोके महाराज । सागरोपमसंमितैः ॥ न तृप्तः सुरसौख्यैस्त—त्कथं तृप्यसि संप्रति ॥ १२ ॥ दृष्ट्वा दारिद्र्यजं दुःखं । त्वया पूर्वभवे नृप ॥ जिनधर्मानुभावेन । लब्धा नरसुरर्द्धयः ॥ १३ ॥ तमेव कुरुषे पूर्णं । धर्मं दृष्टफलं यदि ॥ निःश्रेयसमपीदानीं । लभसेऽनंतसौख्यदं ॥ १४ ॥ वीरसेनस्ततोऽवोच—त्कथं दारिद्र्यसंभवं ॥ संजातं भगवन् दुःखं । धर्मस्याधिगमः कथं ॥ १५ ॥ जिनेंद्रभणितः को वा । मया धर्मोऽत्र पालितः ॥ संप्राप्ताश्च कथं देव—मानवानां समृद्धयः ॥ १६ ॥ कृत्वा प्रसादमाख्याहि । सर्वमेतन्मुनीश्वर ॥ ममापि पर्षदोऽप्यस्या । विरक्तिः स्याद्यथा भवे ॥ १७ ॥ ततो गुरुरुवाचेति । धीरं गंभीरया गिरा ॥ चरितं वीरसेनस्य । बहुपूर्वभवाश्रितं ॥ १८ ॥ इहास्ति भरतक्षे-

त्रे । विषये मगधाभिधे ॥ मल्लग्रामाभिधो ग्रामो । धनधान्यसमाकुलः ॥ १९ ॥ समृद्धो नागदत्ता-
ख्य—स्तत्र कौटुंबिकोऽभवत् ॥ नागसेनाभिधानेन । भार्या तस्यातिवल्लभा ॥ २० ॥ तयोस्तत्रसेक-
पुत्रोऽभू—द्गुणराजो विशेषतः ॥ प्रकृत्या गतलावण्यः । कुरूपाणां निदर्शनं ॥ २१ ॥ अविवेकी म-
हामूर्खः । कलाविज्ञानवर्जितः ॥ सर्वेषां निंदनीयश्च । दौर्भाग्यस्यैकसेवधिः ॥ २२ ॥ युग्मं ॥ प्राप्त-
स्य यौवनं सर्व—योषितामममनोहरं ॥ श्रुत्वा नामापि ग्रामिन्य—स्तस्य निंदां वितेनिरे ॥ २३ ॥
ततश्च पितरौ तस्य । पाणिग्रहणहेतवे ॥ याचमानौ क्वचित्कन्यां । नापतुर्द्रविणैरपि ॥ २४ ॥ भूरि-
हेमादिलोभेना—भ्यर्थनानां शतैरपि ॥ कष्टेन महता वव्रे । वंगुलानामकन्यका ॥ २५ ॥ प्रशस्ते
दिवसे पित्रा । प्रारब्धे दारकर्मणि ॥ तारामेलकृणे कन्या । दृष्ट्वा तं भियमागता ॥ २६ ॥ लुलो-
ठ धरणीपीठे । रुरोद च पुनः पुनः ॥ हा मातर्मम कार्यं न । विवाहेनेति साब्रवीत् ॥ २७ ॥ वरं
यच्छत तेषां मां । भूतवेतालरक्षसां ॥ सत्वरं ये प्रखादंति । पापस्यैतस्य नो पुनः ॥ २८ ॥ अनि-
च्छंत्यपि सा बाला । बलेन परिणायिता ॥ उपहास्यपरे लोके । रुदती स्वजनादिभिः ॥ २९ ॥ वि-
वाहानंतरं तस्य । वल्लभा सा स्वजीववत् ॥ गुणराजस्य नामापि । परं तस्या न सौख्यकृत् ॥ ३० ॥

विडंबनां ततः कृत्वा । गृहीत्वा शंबलादिकं ॥ सा वंगुलापि पांथेन । सार्धं निर्वासिता ततः ॥ ५५ ॥
गुणराजोऽथ तद्रूप—गृहभंगेन दुःखितः ॥ अजल्पन् लज्जया किंचि—त्स्वजनानां विनिर्गतः
॥ ५६ ॥ मार्गेऽथ गछता तेन । मुनियुग्मं विलोकितं ॥ विरक्तं भवतो मुक्ति—वधूबद्धानुरागहृत्
॥ ५७ ॥ तपःशोषितसर्वांगं । साधुयुग्मं विलोक्य तत ॥ ववंदे दुःखसंतप्तो । महाभक्त्या स धर्मधीः
॥ ५८ ॥ कुठारो दुःखवृक्षाणां । पोतः संसारसागरे ॥ धर्मलाभो ददे ताभ्यां । मुनिभ्यां नतिकारि-
णे ॥ ५९ ॥ ततस्तेन मुनी पृष्टौ । युवां भोः प्रस्थितौ कुतः ॥ अहं तु भवतोः पार्श्वे । तिष्ठामि भ-
वदाज्ञया ॥ ६० ॥ बहुदुःखैः पराभूतः । प्रव्रज्यां भवदंतिके ॥ इदानीमहमिछामि । गृहीतुं दुःखशां-
तये ॥ ६१ ॥ सावधानौ मुनी याव—त्पश्यतो ज्ञानचक्षुषा ॥ तावद्भोगफलं कर्म । दृष्टं तस्योदया-
गतं ॥ ६२ ॥ मुनिभ्यां भणितं भद्र । तव कर्मास्ति भोगदं ॥ इदानीं श्रद्धया धर्मं । गृहाण गृह-
मेधिनः ॥ ६३ ॥ ततस्तेन मुनी प्रोक्तौ । भोगप्राप्तिः कथं मम ॥ ईदृगाकारतो यस्मा—द्भोगा न-
श्यंति दूरतः ॥ ६४ ॥ उक्तं पुनर्मुनिभ्यां भो । मान्यथा त्वं विचारय ॥ जन्मन्यत्रैव ते नूनं । श्रा-
द्धधर्मः फलिष्यति ॥ ६५ ॥ एवमस्त्विति तेनोक्ते । मुनिना द्वादशव्रतः ॥ गृहिधर्मः समाख्यात—

स्तस्य सम्यक्त्वसंयुतः ॥ ६६ ॥ गुणराजोऽपि तं धर्मं । श्रुत्वा सम्यक्त्वपूर्वकं ॥ अंगीचकार निःशेष—कर्मणां क्षयहेतवे ॥ ६७ ॥ श्राद्धधर्मं ततः सम्यक् । पालयन्मुनिसंनिधौ ॥ स श्रद्धालुः सदा तस्थौ । विरक्तो भववासतः ॥ ६८ ॥ अथान्यदा जिनस्तूप-वंदनाय मुनीश्वरौ ॥ जग्मतुर्मथुरापुर्यां । गुणराजेन संयुतौ ॥ ६९ ॥ अभिवंद्य जिनस्तूपं । मुमुक्षू तेन संयुतौ ॥ निरवद्ये वनोद्देशे । धर्मध्यानेन तस्थतुः ॥ ७० ॥ इतश्च तत्र राजाभू—द्यशोवर्धन आख्यया ॥ निःशेषगुणयुक्तत्वा—त्प्रसिद्धो जगतीतले ॥ ७१ ॥ तस्यैक एव दोषोऽभू—त्सगुणस्यापि भूपतेः ॥ ईर्ष्यालुत्वेन यद् दुष्टं । मन्यतेंतःपुरं निजं ॥ ७२ ॥ पृथग्गावासवासिन्यो—ऽप्यंतःपुर्यस्तदाज्ञया ॥ एकस्मिन्नेव लीयंते । मंगलाख्यालये निशि ॥ ७३ ॥ गुणश्रीरिति तस्येष्टा । भार्याभूद्गुणशालिनी ॥ तस्या एकाभवत्पुत्री । नाम्ना सा जयसुंदरी ॥ ७४ ॥ अन्येद्युर्निर्ययौ राजा । वाजिवाहनहेतवे ॥ वाहयामास बाल्हीकान् । सैंधवानपि वाजिनः ॥ ७५ ॥ उत्पन्नदेहसंतापो—ऽश्ववाहनपरिश्रमात् ॥ जगाम शिशिरोद्यानं । नृपो विश्रामहेतवे ॥ ७६ ॥ यावत्तत्र पुरो याति । तावद् दृष्ट्वा मुनिद्वयं ॥ ववंदे परया भक्त्या । राजा राजीवलोचनः ॥ ७७ ॥ धर्मोपदेशमाकर्ण्य । पप्रच्छ मुनिपुंगवं ॥ क एष भवतां पार्श्वे ।

सा तथा वर्धयांचक्रे । श्वश्रूा स्नानाशनादिभिः ॥ अचिरेण यथा प्राप्ता । तारुण्यं नृमनोहरं ॥ ३१ ॥
विडंबनाकृतो भोगान् । बुभुजे स तया सह ॥ यतः सौख्यं कुतोऽन्योन्य–मनुरक्तविरक्तयोः ॥ ३२ ॥
तत्पित्रोर्मृतयोर्दैवा–त्सैवाभूद् गृहनायिका ॥ दुःशीला वंगुला जाता । ततः स्वछंदचारिणी ॥ ३३ ॥
अनिष्टो दयितः कामं । तारुण्यं स्वैरगामिता ॥ अनुरक्ता युवानश्च । कथमस्तु सती वधूः ॥ ३४ ॥
संचितं च पुरा पित्रा । गुणराजस्य यद्धनं ॥ क्षीणं तदपि निःशेष–पुण्यक्षयवशादथ ॥ ३५ ॥ शेषं
यदपि तत्सर्वं । प्रियायाः कथितं धनं ॥ तेन स्त्रीपरतंत्रेण । परत्रासक्तचेतसः ॥ ३६ ॥ निर्धनत्वे त-
तो जाते । गते कर्मकरे जने ॥ वंगुलागुणराजौ तौ । केवलं वेश्मनि स्थितौ ॥ ३७ ॥ गुणराज-
स्ततः क्षेत्रं । तदैकाक्येव कर्षति ॥ वंगुलापि सदा योग्यं । भक्तमादाय गछति ॥ ३८ ॥ अंतराल-
स्थिते देव—कुले सा कुलटा सदा ॥ संकेतितनरैः सार्धं । भुंक्ते भोगान्निजेछया ॥ ३९ ॥ अन्ये-
द्युर्भक्तमादाय । क्षेत्रे सा स्वैरिणी गता ॥ भोजयित्वा धवं तत्रा—गता देवगृहे पुनः ॥ ४० ॥ सं-
केतितः पुमांस्तत्र । नागतो दैवयोगतः ॥ तस्यागमनमिछंती । तस्थौ यावदसौ क्षणं ॥ ४१ ॥ ता-
वत्तत्र पथि श्रांतः । सुरूपः पथिको युवा ॥ देशांतरात्समायातः । क्षुधार्तः सुरमंदिरे ॥ ४२ ॥ क-

टाक्षसायकैर्भिन्नः । स तथा विद्धितस्तया ॥ तस्या वशे यथा जातः । पथिकः क्षणमात्रतः ॥ ४३ ॥ तत्तयोस्तत्र संजात—मुत्पन्नदृढरागयोः ॥ यदशेषं भवत्यत्र । विशिष्टजननंदितं ॥ ४४ ॥ तथासारं जिता तेन । विदग्धेन रतप्रिया ॥ यथा विस्मारितास्तस्या । युवानः पामराः परे ॥ ४५ ॥ तयानीतस्ततो गेहं । स्नपितो भोजितश्च सः ॥ आगतो मे पितुर्गेहा—दिति कृत्वा मृषोत्तरं ॥ ४६ ॥ आगतो गुणराजोऽपि । प्रदोषसमये ततः ॥ कृताशेषगृहारंभो । भुक्त्वा सुष्वाप निर्भरं ॥ ४७ ॥ निशायाः पश्चिमे यामे । गृहीत्वा गोहलादिकं ॥ निर्गतो गुणराजोऽथ । द्वारं दत्तं तया पुनः ॥ ४८ ॥ विविक्ते सा ततो गेहे । तेन सार्धं यदृच्छया ॥ भुक्त्वा भोगान् रतक्लांता । सुप्ता तत्रैव निर्भरं ॥ ४९ ॥ अन्योन्याश्लिष्टयोस्तत्र । तयोरेकत्र सुप्तयोः ॥ रविरप्युद्गतो दूरं । न तच्चैतन्यमाययौ ॥ ५० ॥ तलारक्षेण तद्युग्मं । तद्गृहांतिकवासिना ॥ कपाटविवरैर्दृष्टं । सुप्तं युग्मं तथैव हि ॥ ५१ ॥ निवेद्य स्वामिनस्तेन । बद्धं तन्मिथुनं तदा ॥ गृहे किमपि यद् दृष्टं । तत्सर्वं राजसात्कृतं ॥ ५२ ॥ गुणराजः स्थितः क्षेत्रे । गोमहिष्यादिसंयुतः ॥ भार्यादोषेण बध्वाशु । समानीतो नृपांतिके ॥ ५३ ॥ गृहीत्वा धनधान्यादि । दत्वा कोपीनमात्रकं ॥ गुणराजोऽतिकष्टेन । जीवन्मुक्तोऽधिपेन सः ॥ ५४ ॥

विडंबनां ततः कृत्वा । गृहीत्वा शंबलादिकं ॥ सा बंधुलापि पांथेन । सार्धं निर्वासिता ततः ॥ ५५ ॥
गुणराजोऽथ तद्रूप—गृहभंगेन दुःखितः ॥ अजल्पन् लज्जया किंचि—त्स्वजनानां विनिर्गतः
॥ ५६ ॥ मार्गेऽथ गछता तेन । मुनियुग्मं विलोकितं ॥ विरक्तं भवतो मुक्ति—वधूबद्धानुरागहृत्
॥ ५७ ॥ तपःशोषितसर्वांगं । साधुयुग्मं विलोक्य तत ॥ ववंदे दुःखसंतप्तो । महाभक्त्या स धर्मधीः
॥ ५८ ॥ कुठारो दुःखवृक्षाणां । पोतः संसारसागरे ॥ धर्मलाभो ददे ताभ्यां । मुनिभ्यां नतिकारि-
णे ॥ ५९ ॥ ततस्तेन मुनी पृष्टौ । युवां भोः प्रस्थितौ कुतः ॥ अहं तु भवतोः पार्श्वे । तिष्ठामि भ-
वदाज्ञया ॥ ६० ॥ बहुदुःखैः पराभूतः । प्रव्रज्यां भवदंतिके ॥ इदानीमहमिछामि । गृहीतुं दुःखशां-
तये ॥ ६१ ॥ सावधानौ मुनी याव—त्पश्यतो ज्ञानचक्षुषा ॥ तावद्भोगफलं कर्म । दृष्टं तस्योदया-
गतं ॥ ६२ ॥ मुनिभ्यां भणितं भद्र । तव कर्मास्ति भोगदं ॥ इदानीं श्रद्धया धर्मं । गृहाण गृह
मेधिनः ॥ ६३ ॥ ततस्तेन मुनी प्रोक्तौ । भोगप्राप्तिः कथं मम ॥ ईदृगाकारतो यस्मा—द्भोगा न-
श्यंति दूरतः ॥ ६४ ॥ उक्तं पुनर्मुनिभ्यां भो । मान्यथा त्वं विचारय ॥ जन्मन्यत्रैव ते नूनं । श्रा-
द्धधर्मः फलिष्यति ॥ ६५ ॥ एवमस्त्विति तेनोक्ते । मुनिना द्वादशव्रतः ॥ गृहिधर्मः समाख्यात—

स्तस्य सम्यक्त्वसंयुतः ॥ ६६ ॥ गुणराजोऽपि तं धर्मं । श्रुत्वा सम्यक्त्वपूर्वकं ॥ अंगीचकार निःशेष
—कर्मणां क्षयहेतवे ॥ ६७ ॥ श्राद्धधर्मं ततः सम्यक् । पालयन्मुनिसंनिधौ ॥ स श्रद्धालुः सदा त·
स्थौ । विरक्तो भववासतः ॥ ६८ ॥ अथान्यदा जिनस्तूप–वंदनाय मुनीश्वरौ ॥ जग्मतुर्मथुरापुर्यां ।
गुणराजेन संयुतौ ॥ ६९ ॥ अभिवंद्य जिनस्तूपं । मुमुक्षू तेन संयुतौ ॥ निरवद्ये वनोद्देशे । धर्म·
ध्यानेन तस्थतुः ॥ ७० ॥ इतश्च तत्र राजाभू—द्यशोवर्धन आख्यया ॥ निःशेषगुणयुक्तत्वा—त्प्र·
सिद्धो जगतीतले ॥ ७१ ॥ तस्यैक एव दोषोऽभू—त्सगुणस्यापि भूपतेः ॥ ईर्ष्यालुत्वेन यद् दुष्टं ।
मन्यतेंतःपुरं निजं ॥ ७२ ॥ पृथगावासवासिन्यो—ऽप्यंतःपुर्यस्तदाज्ञया ॥ एकस्मिन्नेव लीयंते । मं·
गलाख्यालये निशि ॥ ७३ ॥ गुणश्रीरिति तस्येष्टा । भार्याभूद्गुणशालिनी ॥ तस्या एकाभवत्पुत्री ।
नाम्ना सा जयसुंदरी ॥ ७४ ॥ अन्येद्युर्निर्ययौ राजा । वाजिवाहनहेतवे ॥ वाहयामास बाल्हीका·
न् । सैंधवानपि वाजिनः ॥ ७५ ॥ उत्पन्नदेहसंतापो—ऽश्ववाहनपरिश्रमात् ॥ जगाम शिशिरोद्या·
नं । नृपो विश्रामहेतवे ॥ ७६ ॥ यावत्तत्र पुरो याति । तावद् दृष्ट्वा मुनिद्वयं ॥ ववंदे परया भ·
क्त्या । राजा राजीवलोचनः ॥ ७७ ॥ धर्मोपदेशमाकर्ण्य । पप्रछ मुनिपुंगवं ॥ क एष भवतां पार्श्वे ।

कुरूपो भगवन् पुमान् ॥ ७८ ॥ जगदे साधुना राजन् । गृहिधर्मं समाचरन् ॥ वर्तते भवनिर्वि
ण्णो । दुःखार्तोऽयं नरः सदा ॥ ७९ ॥ अचिंतयत्ततो राजा । कुरूपाणां शिरोमणिः ॥ पुमानेषोऽ-
वरोधे मे । रक्षार्थं सुंदरो भवेत ॥ ८० ॥ कुरूपः श्रावको धर्म-श्रद्धालुः पापभीरुकः ॥ कुकर्मवि-
रतश्चायं । साशंको वर्तते यतः ॥ ८१ ॥ योग्योऽयमिति संचिंत्य । नत्वा च मुनिमादरात् ॥ बभाषे
बहुमानेन । गुणराजो महादरात् ॥ ८२ ॥ साधर्मिकोऽसि यावत्त्वं । न सर्वविरतौ मतिः ॥ तावत्ति-
ष्ठावरोधे मे । श्राद्ध स्थापत्यकर्मणा ॥ ८३ ॥ अंगीकृत्योपरोधेन । महता नृपतेर्वचः ॥ अंतःपुरे कु-
लस्त्रीणां । रक्षार्थं तत्र स स्थितः ॥ ८४ ॥ परमश्रावकत्वादि—गुणेन हृदि रंजिताः ॥ बभूवुर्गुण-
राजेऽस्मिन् । सपत्न्यो नृपतेः प्रियाः ॥ ८५ ॥ प्रविशंतं नृणां वर्ग—मज्ञातं युवतीजनं ॥ पाखंडि-
नीजनं चापि । रुरोधांतःपुरे सदा ॥ ८६ ॥ विविक्तं राजदाराणां । मिथः स्नेहं ररक्ष च ॥ द्वाररं-
क्षां च चित्तेन । विधत्तेस्म पुनः पुनः ॥ ८७ ॥ निषिध्य विकथालापं । सच्चरित्राणि चावदत ॥ स्था-
तुं वातायने तासां । न ददौ राजयोषितां ॥ ८८ ॥ कुर्वन्नित्यादिकर्माणि । प्रयत्नेन गरीयसा ॥ शु-
द्धांतमध्युवासैष । राजपत्नीप्रियंकरः ॥ ८९ ॥ दास्यः शुश्रूषयामासू । राजादेशेन तं सदा ॥ स्ना

नभोजननेपथ्य—वस्त्रपुष्पविलेपनैः ॥ ९० ॥ अंतःपुरीष्वनेकासु । बभूवुस्तस्य भूपतेः ॥ अत्यंतं व·
ल्लभाः काश्चि—त्काश्चिदत्यंतमप्रियाः ॥ ९१ ॥ यास्त्वनिष्टा महीपस्य । ताः कामज्वरपीडिताः ॥ ल·
भंतेस्म न संयोगं । संवत्सरशतैरपि ॥ ९२ ॥ सुरूपो वा कुरूपो वा । पुमानिति विवेचनं ॥ पुरुष·
प्राप्तिदुःस्थानां । तासां हृदि बभूव न ॥ ९३ ॥ तदनिष्टा प्रिया काचि—द्भूपतेर्विजयाभिधा ॥ कुरू·
पे गुणराजेऽपि । भृशं जातानुरागिणी ॥ ९४ ॥ विशेषभोजनस्नाना—द्युपचारं चकार सा ॥ निः·
शंको गुणराजोऽपि । सत्यहेतुं विवेद न ॥ ९५ ॥ तया गदितमन्येद्युः । शरीरापटुतामिषात् ॥ गु·
णराज करिष्यामि । निद्रामद्य निजे गृहे ॥ ९६ ॥ प्रतिपन्नं वचस्तस्याः । क्षिप्त्वान्यवासवेश्मनि ॥
द्वारं पिधाय रात्रौ स । सावधानः स्वयं स्थितः ॥ ९७ ॥ विसृष्टास्थानलोकोऽथ । राजा प्रच्छन्नवेष·
भृत् ॥ विजहार विशेषेण । शुद्धांतस्यांतरा निशि ॥ ९८ ॥ युक्तायुक्तं परिज्ञातुं । स्वनारीणां वि·
चेष्टितं ॥ परीक्षां गुणराजस्य । कर्तुं च गुणदोषयोः ॥ ९९ ॥ युग्मं ॥ क्रमेण विचरन् राजा । स·
मागाद्विजयौकसि ॥ कामातुरामपश्यच्च । विजयां तत्र तल्पगां ॥ १०० ॥ अलक्ष्यांगस्ततो दध्यौ ।
स्थितस्तत्रैव निश्चलः ॥ किमेषाद्य प्रसुप्तात्र । संवासौकसि नो गता ॥ १ ॥ इतस्तया निजां दासीं ।

संप्रेष्य स्मरमूढया ॥ गुणराजः समाहूतः । स्वगेहे भोक्तुकामया ॥ २ ॥ अपद्वीं मन्यमानस्तां । निःशंकः सोऽपि कंचुकी ॥ द्वाररक्षां विधायाशु । समागाद्विजयागृहे ॥ ३ ॥ न्यग्भूत्वा दूरमासीनः । सप्रश्रयमुवाच सः ॥ आदेशं देहि मे स्वामि—न्याहूतः केन हेतुना ॥ ४ ॥ अंगभंगं वितन्वंत्या । सुदीर्घोच्छ्वासपूर्वकं ॥ तयोचे तीव्रकंदर्प—विकारविवशात्मना ॥ ५ ॥ ध्यातं मनसि नो तेन । यत्स्वप्नेऽपि न धारितं ॥ सतां यच्च त्रपाकारि । तत्तया जगदे तदा ॥ ६ ॥ अकांडे वज्रपाताभं । तस्यास्तद्वचनं तदा ॥ गुणराजो विशुद्धात्मा । श्रुत्वा वक्तुं प्रचक्रमे ॥ ७ ॥ शरीरकरणं देवि । किमप्यस्ति तवाधिकं ॥ पराधीनमना येन । जल्पस्येवंविधान्यपि ॥ ८ ॥ अंतःप्रसरदुद्दाम—ज्वरावेशवशात्तव ॥ दुःखरूपं किमप्येत—दुपस्थितमचिंतितं ॥ ९ ॥ तयाभ्राणि पुनर्नाहं । प्रलपामि रुजातुरा ॥ प्रकृतिस्था तवेच्छामि । संभोगं किंतु संप्रति ॥ १० ॥ उवाच गुणराजोऽथ । देवि त्वद्वचनेन मे ॥ श्रुतेनापि महद् दुःखं । दूरेऽस्तु करणं पुनः ॥ ११ ॥ द्वे अकार्ये कुलीनोऽत्र । प्राणांतेऽपि करोति न ॥ परद्रव्यापहारं च । परस्त्रीपरिरंभणं ॥ १२ ॥ विज्ञातपुण्यपापोऽहं । विवेकोज्ज्वललोचनः ॥ पतामि नरके घोरे । कथं स्वल्पसुखाशया ॥ १३ ॥ मयि देवि यथा निंद्या—भवत्ते गो·

गवासना ॥ इदं कर्मापि साधूनां । निंदनीयं तथा भृशं ॥ १४ ॥ अणुव्रतेषु यो दत्तो । गुरुभिर्मेऽ-
स्त्यभिग्रहः ॥ तस्य भंगं कथं कुर्वे । देवि सम्यग्विदन्नपि ॥ १५ ॥ विश्वस्तं वंचये नृपं । कथं सा-
धर्मिकप्रियं ॥ भणित्वा जननीर्युष्मान् । पश्चाद्भुंजे कथं पुनः ॥ १६ ॥ कुलीननृपभार्यायाः । कुली-
नायाः कथं तव ॥ एवं देवि हि जल्पंत्या । जिह्वापि स्खलिता न हि ॥ १७ ॥ श्रुत्वा सा विजयादे-
वी । तस्यैवं निष्ठुरं वचः ॥ श्यामीभूतमुखच्छाया । जगाद विरसाक्षरं ॥ १८ ॥ रे दुष्ट निष्ठुरस्वांत ।
प्रार्थयेऽहं यथा यथा ॥ तथा ब्रूषे ममानिष्टं । संतुष्टो जीवितेन किं ॥ १९ ॥ चेन्निषेधसि वाक्यं
मे । कृत्वा कलकलं ततः ॥ भवंतं मारयिष्यामि । विधायाकार्यकारिणं ॥ २० ॥ गुणराजः पुनः
स्माह । किं मृतो मार्यते पुनः ॥ प्राणत्यागेऽपि रक्षामि । स्वशीलं देवि निश्चितं ॥ २१ ॥ पुनरू-
चे तया देव्या । द्वे दत्ते स्तो दिने तव ॥ उचितं यत्तदालोच्य । कथनीयं पुनर्मम ॥ २२ ॥ गुण-
राजस्ततः शीघ्रं । निर्गत्य विजयागृहात् ॥ संप्राप्तोंतःपुरावासे । तस्थौ तद्गतचिंतया ॥ २३ ॥ तथा-
विधं निरीक्ष्याथ । वृत्तांतं राजकुंजरः ॥ चुकोप विजयादेव्यां । गुणराजे तुतोष च ॥ २४ ॥ निः-
सृत्य विजयागेहा—द्राजा त्वरितमाययौ ॥ चिंतासंतप्तसर्वांग—गुणराजस्य सन्निधौ ॥ २५ ॥ प्रारे-

मे नृपतिः प्रष्टु—मुपविश्य तदंतिके ॥ किंनिमित्तमिहोद्विग्नो । दृश्यसे गुणराज भोः ॥ २६ ॥ कृ-
त्वा प्रणाममाचख्यौ । गुणराजो न देव मे ॥ उद्वेगः संप्रवेदात्म-विषये शुद्धचेतसः ॥ २७ ॥ उ-
द्वेगकारणं राजं—स्त्वदीयविषये मम ॥ एकासक्तो यदन्यास्त्वं । महादेवीर्न मन्यसे ॥ २८ ॥ राज-
न् भोक्तृवशेन स्युः । सत्योऽसत्यश्च योषितः ॥ एतासां तु न कुत्रापि । प्रकृत्या दोषसंभवः ॥ २९ ॥
निजप्रियसुखाप्राप्त्या । परं वांछति पूरुषं ॥ तदेव परिहर्तव्यो । देवानर्थः स्वयं कृतः ॥ ३० ॥ निघ्नं-
त्युभयलोकं स्वं । दूषयंति कुलद्वयं ॥ चित्तं कलुषयंत्येता । रमणेनावमानिताः ॥ ३१ ॥ अन्यार्थि-
तोऽसि नृपाल । योजितांजलिना मया ॥ अद्यप्रभृति सर्वासां । देवीनां देहि वारकं ॥ ३२ ॥ उ-
वाच भूपतिः किं नो । कदाचिच्छिक्षितः पुरा ॥ उद्विग्नोऽपि किमु त्वं मां । शिक्षयस्यधुना पुनः
॥ ३३ ॥ तत्किं दृष्टं त्वया क्वापि । वैगुण्यं राजयोषितां ॥ परमार्थं ममाख्याहि । गुणराज गुणोत्तर
॥ ३४ ॥ अलं पृष्ट्वाथवा मेऽद्य । प्रत्यक्षमभवत्पुनः ॥ सामदंभैः प्रति त्वां य-त्प्रोक्तं विजयया कि-
ल ॥ ३५ ॥ गुणराज त्वया तुल्यो । नास्त्यत्र भुवने पुमान् ॥ कुलीनो धार्मिको कार्य-भीरुश्च स्वा-
मिभक्तिमान् ॥ ३६ ॥ उवाच कंचुकी देव । तव पादप्रसादतः ॥ सर्वोऽपि गुणसंयोगो—ऽभूत्पूर्वं न

ममैव यत ॥ ३७ ॥ अद्य देव त्वया ज्ञातो । देव्या व्यतिकरो यदि ॥ किं कर्तव्यं ततस्तस्या । म-
माख्याहि विचक्षण ॥ ३८ ॥ राजोवाचातिगंभीर—गर्तायां विवरेण तां ॥ श्वभ्रस्यार्धपथे नूनं ।
प्रेषयिष्यामि सत्वरं ॥ ३९ ॥ जजल्प गुणराजोऽथ । पाणिभ्यां पिहितश्रुतिः ॥ न वक्तुमपि ते युक्त
—मिदं हाहा नरेश्वर ॥ ४० ॥ देवात्मन्येव निग्राह्ये । कथं तस्या विनिग्रहः ॥ त्यक्ता या यत्त्वया
तस्या । एष दोषोऽभवत्किल ॥ ४१ ॥ परमार्थेन दोषोऽयं । तव देव्यास्तु नो नृप ॥ नश्यंति बुद्ध-
यो यस्मा—द्गुरूणामपि कामतः ॥ ४२ ॥ पुराणे न श्रुतं देव । त्वया किं ब्रह्मणापि यत् ॥ उपभु-
क्ता निजा पुत्री । कामसंतप्तचेतसा ॥ ४३ ॥ अरण्ये गौतमावासे । गौतमर्षिवधूजने ॥ यत्कृतं दे-
वराजेन । तदुक्त्यालं नरेश्वर ॥ ४४ ॥ यत्रेदृशा महांतोऽपि । कामेन विवशा भृशं ॥ भवंति भव-
ने तत्र । कोऽपराधोऽबलाजने ॥ ४५ ॥ मिष्टभोजी यथा कोऽप्य—प्राप्नुवन्मिष्टभोजनं ॥ क्षुधार्तः
कुरुते काम—मभिलाषं कुभोजने ॥ ४६ ॥ तथैवालभमानास्त्वां । देवं सौभाग्यसुंदरं ॥ अस्मादृ-
शमपीच्छंति । कामार्तास्ता नराधमं ॥ ४७ ॥ कृत्वा प्रसादमालंब्य । प्रभुत्वं च ततो हृदि ॥ एकोऽयं
विजयादोषः । क्षंतव्यो वचसा मम ॥ ४८ ॥ इत्युक्त्वा गुणराजः स । पपात नृपपादयोः ॥ अमृत-

वन्नृपेणापि । चिंतितं तस्य तद्वचः ॥ ४९ ॥ गुणराज मया सर्वं । प्रतिपन्नं वचस्तव ॥ तत्वार्थं पंडितेनेवा—वितथं भाषितं त्वया ॥ ५० ॥ इत्युक्त्वा विजयादेव्यां । त्यक्तामर्षो नरेश्वरः ॥ प्रियायां कृतकारुण्यः । परमार्थपरिज्ञया ॥ ५१ ॥ प्रेरितो गुणराजेन । जगाम विजयागृहं ॥ तया च बुभुजे भोगा—नज्ञातप्राक्स्वरूपवत् ॥ ५२ ॥ त्रिभिर्विशेषकं ॥ अन्या अपि ततोऽनिष्ट—पत्न्यो याः प्रतिवासरं ॥ क्रमेण वारकं तासां । ददेऽसौ नृमिवल्लभः ॥ ५३ ॥ एवं स गुणराजोऽपि । जिनधर्मप्रभावतः ॥ राजामात्यपरीवार—पौराणां वल्लभोऽभवत ॥ ५४ ॥ अथान्यदा महाराजः । सभायां यावदास्थितः ॥ नानानाटकसंगीत—रसेन मुदिताशयः ॥ ५५ ॥ गुणश्रीसंभवा ताव—दाख्यया जयसुंदरी ॥ सुरूपा सुरनारीव । समागाद्राजनंदिनी ॥ ५६ ॥ युग्मं ॥ दातव्येयं कनी कस्मा—यिति चिंतापरे नृपे ॥ पदप्रणाममाधाया—सीना सा पितुरंतिके ॥ ५७ ॥ सभायां क्षणमास्थाय । भूपतिः सुतया सह ॥ यथावुत्थाय तन्मातृ—मंदिरं वरचिंतया ॥ ५८ ॥ आसीनः सुखशय्यायां । राजा पप्रछ नंदिनीं ॥ कस्मै वत्से प्रयच्छामि । वराय त्वां निवेदय ॥ ५९ ॥ सा पितुर्वचसा तेन । लज्जया नम्रमस्तका ॥ स्वयं कररुहैश्चक्रे । धरित्र्यां प्रतिलेखनं ॥ ६० ॥ अथो एतां तथारूपां । दृष्ट्वा

ह्रीभरमंथरां ॥ प्रत्यभाणि सुताकार्ये । नरनाथो गुणश्रिया ॥ ६१ ॥ अंतःस्फुरितवक्तव्य—विवेका-
देव यद्यपि ॥ वक्तुं तथापि लज्ज्यंते । कुलवध्वो गुरोः पुरः ॥ ६२ ॥ तत्प्रसादं विधायास्याः । सुं-
दर्या जगतामिह ॥ स्वयंवरेण राजेंद्र । प्रसादः क्रियतां त्वया ॥ ६३ ॥ स्ववासनानुसारेण । ततस्त-
न्न स्वयंवरे ॥ आत्मानुरूपमेषानु—वृणोतु गुणिनं वरं ॥ ६४ ॥ गुणश्रीवचनं सर्वं । तथेति प्रतिप-
न्नवान् ॥ राजा नृरिनृपाह्वानं । स्वयंवरमचीकरत् ॥ ६५ ॥ रूपयौवनलावण्य—कलावासेषु राजसु ॥
मिलितेषु न कोऽप्यस्या । जहार हृदयं पुनः ॥ ६६ ॥ प्रवेशाभावतस्तस्या । हृदि ते राजनंदनाः ॥
स्वस्वस्थानेषु संप्राप्ता । यशोवर्धननंदिनः ॥ ६७ ॥ ततो नृपतिना प्रोचे । गुणश्रीर्दयिता निजा ॥
पश्याहं जयसुंदर्या । मध्ये राज्ञां विगोपितः ॥ ६८ ॥ एतेषु राजलोकेषु । रूपविज्ञानशालिषु । न
स कोऽपि बभूवैषा । यं वरं वृणुते सुता ॥ ६९ ॥ पुनः पुनरनेकैश्च । कुमारैरपरैरपि ॥ संयोजिता-
पि सा पुत्री । वव्रे कमपि नो वरं ॥ ७० ॥ ततः शिथिलितस्नेहः । सुतायां स नरेश्वरः ॥ स्वचि-
त्ते चिंतयामास । रोषावेशवशादिति ॥ ७१ ॥ ये केचिद् भूतले संति । महांतो नरनायकाः ॥ आ-
नीताः पापपुत्र्यर्थं । ते सर्वेऽपि स्वयंवरे ॥ ७२ ॥ अद्यापि दीयते यस्मै । स कोऽप्यस्तीह किं पुमा-

न्न ॥ हुं ज्ञातं संति गोपालाः । स्थापत्याः किंकरा अपि ॥ ७३ ॥ तन्नूनमनया मन्ये । क्षेप्तव्यो म-
म मूर्धनि ॥ दुर्बुद्ध्या सुतया ह्यारो । दुश्चरित्रविधानतः ॥ ७४ ॥ कर्तव्यमथवा यन्मे । स्वपौरुषधना-
दिभिः ॥ विहितं तन्मया सर्वं । पुत्रीचित्तानुसारतः ॥ ७५ ॥ तदेषा यावदद्यापि । स्त्रीविकारमुपैति
न ॥ पतियुक्तामिमां ताव—त्करिष्याम्यविलंबितं ॥ ७६ ॥ आज्ञाज्ञंगादिभिर्दुःखं । यथा मे कृतमेत-
या ॥ करिष्यामि तथैवाह—मेतस्या अपि निश्चितं ॥ ७७ ॥ पुत्रीमिषेण काप्येषा—कृत्या मे स-
मुपस्थिता ॥ प्रतिकूलैर्निहंतव्या । नानुकूलैरियं ततः ॥ ७८ ॥ अन्यदैकांतसंस्थेन । नृभुजा वासवे-
श्मनि ॥ जनन्या सह सा पुत्री । व्याहृता पुनरेव सा ॥ ७९ ॥ आविःकुरु निजं चित्तं । वत्सेऽस्मा-
कं रहःस्थिता ॥ नाभूत्ते वल्लभः कोऽपि । कथमेतेषु राजसु ॥ ८० ॥ ततोऽतिप्रार्थनावाक्यैः । पि-
त्रोरार्दितमानसा ॥ स्वभावं कथयांचक्रे । जनन्यास्येन नंदिनी ॥ ८१ ॥ भर्ता स एव मे तात ।
राजा रंकोऽथवा भुवि ॥ नारीं नाभिलषत्यन्यां । यश्चित्रलिखितामपि ॥ ८२ ॥ स्वयंवरेऽत्र राजानो ।
ये सर्वे समुपाययुः ॥ नानानारीरसक्तास्ते । नैकदारव्रते स्थिताः ॥ ८३ ॥ राजा जगाद यद्येवं । तन्न
कोऽपीह भूतले ॥ सोऽस्त्यात्मीयकलत्रे य । एकाग्रहृदयो भवेत ॥ ८४ ॥ स एव गुणराजोऽत्र । भ-

वेदेवंगुणो यदि ॥ तस्मै त्वं पुत्रि दातव्या । नूनमेकाग्रचेतसे ॥ ८५ ॥ ततो रोषस्खलद्वाचा । रा- ज्ञा सा जयसुंदरी ॥ याहि याहीति वेगेन । तस्माद्विससृजे गृहात् ॥ ८६ ॥ नरेंद्रेण समाहूय । गु- णराजोऽथ जल्पितः ॥ मन्यस्व गुणराज त्वं । परिणेतुं सुतां मम ॥ ८७ ॥ अन्यत्किमपि चेद् ब्रू- पे । तत्रसः शपथैर्मम ॥ त्वत्पुण्यपरिणत्यैव । प्रेरितैषा तवागता ॥ ८८ ॥ अलंघयन्नृपादेशं । शपथं तं च कंचुकी ॥ उत्तस्थौ चिंतया युक्तो । नरनाथस्य पार्श्वतः ॥ ८९ ॥ प्रगुणीकारिते राज्ञा । वि- वाहोपस्करे ततः ॥ स्नपनाय शुभे लग्ने । यावत्पश्यंति तं जनाः ॥ ९० ॥ अजल्पन्नेव तावत्स । गु- णराजो महामनाः ॥ निर्भृतांगो गृहोद्विग्नः । प्रणष्टः पूर्वसन्मुखः ॥ ९१ ॥ सादिनः प्रेषयित्वाशु । समानाय्य महीपतिः ॥ तं परिणाययांचक्रे । तां कन्यां जयसुंदरीं ॥ ९२ ॥ भणितं जयसुंदर्या । किं नष्टः खिद्यसे च किं ॥ संगमं ते ममाप्येनं । करोति भवितव्यता ॥ ९३ ॥ अन्यद्ध्यायाम्यहं त्वं चा—न्यच्चिंतयसि चेतसि ॥ तदेव स्यात्पुनः कार्यं । चिंतितं विधिनात्र यत् ॥ ९४ ॥ निश्चिंताव- धुना किंतु । पूर्वोपार्जितकर्मणः ॥ भुंक्वहे फलमावां द्वौ । यथास्थितमुपागतं ॥ ९५ ॥ गुणराजस्त- येत्यादि—वचनैः शिक्षितस्तथा ॥ तदादेशपरो जातो । यथैकाग्रमनाः सदा ॥ ९६ ॥ परमार्थपरं

तस्याः । श्रुत्वालापं महीपतिः ॥ बभूव सहसा तत्र । गतमत्सरमानसः ॥ ९७ ॥ परमार्थं नृपो दध्यौ । तनयापूर्वकर्मणा ॥ गुणराजप्रदानाय । बुद्धिर्मे प्रेरिता ननु ॥ ९८ ॥ पुनरागतचैतन्यः । सुतास्नेहेन दत्तवान् ॥ गुणराजाय राज्यार्धं । जामात्रे नृपतिर्निजं ॥ ९९ ॥ गुणराजो महाभोगान् । बुभुजेऽथ तया समं ॥ प्रसिद्धश्च बभूवोच्चैः । पृथिव्यां मंडलेश्वरः ॥ २०० ॥ तयैवं जयसुंदर्या । भवे तत्रानुरागिणा ॥ वीर वर्षाणि पंचाश—द्गमयामासिरे सुखं ॥ १ ॥ अथान्यदा द्वयोः सौध—वातायननिविष्टयोः ॥ भवितव्यतया मूर्ध्नि । पपात युगपत्तडित् ॥ २ ॥ ततो द्वावपि मृत्वा तौ । सीताया उत्तरे तटे ॥ जंबूवृक्षस्य पूर्वेण । जज्ञाते युग्मधर्मिणौ ॥ ३ ॥ संप्राप्तयौवनौ तत्र । दंपती तौ सुरोपमौ ॥ बुभुजाते महासौख्यं । कल्पवृक्षसमुद्भवं ॥ ४ ॥ त्रिकोशोच्चवपुर्यष्ट्यो–स्त्रिदिनाहारयोस्तयोः ॥ त्रीणि पल्योपमान्यायुः । समभूत्तत्र जन्मनि ॥ ५ ॥ निजायुषः क्षये मृत्वा । सौधर्मे युगपत्ततः ॥ चंद्राननें विमाने ता—वभूतां देवदंपती ॥ ६ ॥ परस्परं परप्रीत्या । तत्र पल्योपमद्वयं ॥ निमेषार्धमिवापाल्य । चच्युवाते दिवोऽथ तौ ॥ ७ ॥ जीवः स गुणराजस्य । जंबूद्वीपस्य भारते ॥ दक्षिणार्धे विशालायां । विशालायां धनैः पुरि ॥ ८ ॥ श्रेष्ठिनो धनदेवस्य । समृद्धस्य धनोत्करैः ॥

सधर्मिण्या यशोदेव्या । उदरे समवातरत ॥ ९ ॥ युग्मं ॥ चंद्रस्वप्नानुसंपूर्ण–जयदानमनोरथा ॥
समये सुषुवे पुत्रं । श्रेष्ठिनी सा सुलक्षणं ॥ १० ॥ प्रवितीर्णमहादानं । नृत्यन्नूत्नविधुजनं ॥ वर्धाप·
नं प्रमोदेन । श्रेष्ठिना कारितं ततः ॥ ११ ॥ दोहदस्यानुमानेन । तथा स्वप्नानुसारतः ॥ चकाराभ·
यचंद्रं तं । नाम्ना श्रेष्ठिवरः सुतं ॥ १२ ॥ प्रवर्धमानलावण्यः । पूर्वपुण्यप्रभावतः ॥ स कुमारस्ततः
प्राप । कलाभ्यासक्षमं वयः ॥ १३ ॥ प्रसरत्कांतिविस्तारो । गृह्णन् नवनवां कलां ॥ श्वेतपक्षशशीवै·
ष । कलाभिः परितो भृतः ॥ १४ ॥ प्रशंसारहितस्त्यागः । क्षांतियुक्तः पराक्रमः ॥ परस्त्रीविफलं य·
स्य । सौभाग्यं चात्र यौवने ॥ १५ ॥ संसारसागरोऽसारः । सारत्व तेन लंभितः ॥ गुणिनाभयचं·
द्रेण । भाग्यसौभाग्यशालिना ॥ १६ ॥ त्रैलोक्याश्चर्यभूतैक—रूपसौभाग्यसंपदः ॥ तस्यैवं दिवसा
जग्मुः । सर्वलोकस्पृहाकृतः ॥ १७ ॥ अन्येद्युर्बहिरुद्याने । सवयोभिः समं ययौ ॥ क्रीडाभिर्विविधा·
भिश्च । चिक्रीड श्रेष्ठिनंदनः ॥ १८ ॥ इतश्च जयसुंदर्यां । जीवश्च्युत्वा सुताभवत् ॥ जयश्रीगुणचंद्र·
स्य । राज्ञस्तत्रैव सागता ॥ १९ ॥ क्रीडंत्या स तया दृष्टः । क्रीडंस्तत्र सुखेन सः ॥ अभयः श्रेष्ठि·
नः पुत्रः । सुरूपः सानुरागया ॥ २० ॥ तस्यांगचंगिमानं सा । शृंगारं च मनोहरं ॥ विदग्धं क्रीडि·

तं चापि । समैक्षत यथा यथा ॥ २१ ॥ वर्धमानानुरागेण । जयश्रीः सा तथा तथा ॥ मूढेव स्तं-
भितेवाभू—त्कीलितांगीव सर्वथा ॥ २२ ॥ सखीभिर्जगदे साथ । शापभ्रष्टः सुरः सखि ॥ विद्याभ्र-
ष्टोऽथ किं विद्या—धरोऽयं पतितो भुवि ॥ २३ ॥ एतस्मिन्ननुरक्तां मां । मा जानंतु बुधा इमाः ॥
राजकन्येति तत श्रुत्वा । चकाराकारगोपनं ॥ २४ ॥ सखि रोमोद्गमोंगे मे । जातः शिशिरवायुना ॥
पश्य पुष्परजोद्धूने । चक्षुषी गलतो भृशं ॥ २५ ॥ सखीनां सा पुरो याव—ज्जल्पतीति नृपात्मजा ॥
तावच्चाभयचंद्रेण । सस्नेहं ददृशे दृशा ॥ २६ ॥ तथैव सानुरागः स । तस्यां दृष्ट्वा सुहृज्जनैः ॥
कथंचित्सभ्ययैः काम—मानिन्ये ब्रह्मना गृहं ॥ २७ ॥ एतेषां सुहृदां मध्ये । केनापि सुहृदा ततः ॥
जयश्रीश्रेष्ठिसून्वोस्त—त्स्वरूपं कथितं पितुः ॥ २८ ॥ पिताप्यभयचंद्रः स । शिक्षितो रहसि क्षणं ॥
सस्नेहं सानुरागं च । बहुमानपुरस्सरं ॥ २९ ॥ स्वजातिसमचेष्टेन । भाव्यं पुंसा सदा सुत ॥ इहा-
मुत्र च दुःखी स्या—त्त्यजन्निजकुलस्थितिं ॥ ३० ॥ वणिजां तु विशेषेण । समाचारः सुतेदृशः ॥
वृद्धानामिव तारुण्ये—ऽप्येषामाचरणं भवेत ॥ ३१ ॥ दारिद्र्यं विभवेऽप्युच्चैः । स्वामित्वेऽपि च दास-
ता ॥ सुरूपेऽपि कुरूपत्व—बुद्धिस्तेषामिहात्मनि ॥ ३२ ॥ संयोगः स्वकलत्रेणा—प्युषायां स्यादका-

र्यवत ॥ येषां वेपोऽपि शांतत्वं । सर्वभागेषु जल्पति ॥ ३३ ॥ अन्यच्च वत्स सर्वस्य । गम्यः स्यात्कु-
वने व णिक् ॥ जनस्य जनयेद्वरूं । दृष्टोऽत्र गुरुपिंडवत् ॥ ३४ ॥ कुर्याद्राजविरुद्धं चे—द्वत्स के-
नापि हेतुना ॥ दुर्जनस्य प्रवेशोऽत्र । तेन छिद्रेण संभवेत ॥ ३५ ॥ निर्दोषेऽपि सदा दोषं । स्था-
पयंतीह दुर्जनाः ॥ दोषे लब्धे पुनस्तेषां । गृहे स्यादुत्सवो महान् ॥ ३६ ॥ स्वजातिधर्मभूपाल—
विरुद्धाख्या विचक्षण ॥ राजकन्याभिलाषेऽपि । त्रयो दोषाः स्फुटा अमी ॥ ३७ ॥ अर्थनाशः ख-
लानंदो—ऽप्ययशश्च पराभवः ॥ सतां स्वस्य बहुदुःख—मधर्मश्च कुकर्मणा ॥ ३८ ॥ उवाचाभयचं-
द्रोऽथ । किमात्मेति प्रयास्यते ॥ भवामि तात कर्ताहं । न तथाविधकर्मणां ॥ ३९ ॥ लज्ज्यते तु
जनो येन । युष्माकं वाऽयशो भवेत् ॥ प्राणांतेऽपि करिष्यामि । नाकार्यं तदहं ननु ॥ ४० ॥ सा-
धु साधु सुपुत्रैव—मुक्त्वा जघ्रौ स मूर्धनि ॥ इत्युवाच च किं सौम्य—प्रकृतेस्तव न्यूयते ॥ ४१ ॥
ततः शय्यागृहं गत्वा । काममुद्विग्नमानसः ॥ श्रेष्टिपुत्रस्त्रपाक्रांत—श्चिंतयामास चेतसि ॥ ४२ ॥ गु-
रूणां मेऽपराधस्या—वगमोऽभूत्कथं पुनः ॥ अद्यापि स्थीयतेऽत्राहो । निजेऽप्ययशसि श्रुते ॥ ४३ ॥
संभावितगुणस्य स्या—त्पुरुषस्यातुलं सुखं ॥ मृतिर्विदेशयानं वा । पुनः संभावितागसः ॥ ४४ ॥

स्थातव्यं सर्वथा नात्र । श्रोतुं नालंभविष्णुना ॥ मया संतमसंतं वा । स्वकीयमयशोभरं ॥ ४५ ॥
ध्यात्वेति रजनीशेषे। मित्राणामपि न ब्रुवन् ॥ निर्ययौ श्रेष्टिनः पुत्रो। वसानो वाससो युगं ॥ ४६॥
तत्राब्धेरुत्तरे कूले । श्रीवर्धनपुरे ययौ ॥ सांयात्रिकजनैर्नामा । वृथार्थं स्वं करोति यत् ॥ ४७ ॥ द-
र्शनेन स्वरूपस्य । पौराणां जनयन्नयं ॥ प्राविशद्धट्टमार्गेषु । सर्वेषु नयनोत्सवं ॥ ४८ ॥ भृशं बुभु-
क्षयाक्रांत—स्तत्र कांदविकापणे ॥ गत्वासौ कारयामास । विविधं भोजनं ततः ॥ ४९ ॥ यावद्भो-
क्तुं स आसीनो । गुरुदेवकृतानतिः ॥ तावत्तत्र समायातो । विहरन्मुनिपुंगवः ॥ ५० ॥ गृह्णन्निर्दो-
षमाहार—मुच्चनीचेषु वेश्मसु ॥ नाम्नारिदमनो मासो—पवासव्रतपारणे ॥ ५१ ॥ युग्मं ॥ ततस्तं
मुनिराजं स । विलोक्य दीनमानसं ॥ रोमांचितवपुर्दध्यौ । सहसा श्रेष्टिनंदनः ॥ ५२ ॥ प्रभूतदुः-
खविस्तारे । संसारेऽस्मिंश्चलाचले ॥ मन्ये कृतार्थमात्मान—महं सत्पात्रलाभतः ॥ ५३ ॥ नवको-
टिविशुद्धं य—द्देयं भोज्यं ममास्ति यत् ॥ प्रवर्धमानश्रद्धाम—चित्तं दानाभिसन्मुखं ॥ ५४ ॥ इ-
त्यादिभावनाशुद्ध-परिणामसमन्वितः ॥ स्थालमुत्पाट्य सर्वं स । भोजनं मुनये ददौ ॥ ५५ ॥ दा-
यकस्यास्तु मा पुण्यां—तराय इति संयमी ॥ शुध्यमानं विचिंत्यैत—दाददे निःस्पृहाशयः ॥ ५६॥

ननामाभयचंद्रोऽपि । दत्वा दानं मुनीश्वरं ॥ धूसरीकृतभालांत—स्तत्पादांबुजरेणुभिः ॥ ५७ ॥ त-
पस्विनि गते तत्र । दध्वान सुरदुंदुभिः ॥ पपात पुष्पवृष्टिश्च । सुगंधोदकमिश्रिता ॥ ५८ ॥ मणिर-
त्नसुवर्णानां । वृष्टिस्तदनु हर्षतः ॥ पात्रदानप्रभावेण । मुमुचे दानवारिभिः ॥ ५९ ॥ मणिरत्नसुव-
र्णादि—सर्वं संवृत्य तत्तदा ॥ साधारणं चकारैष । जनानां दुःस्थितात्मनां ॥ ६० ॥ ततोऽसौ निज-
पुण्येन । परीतो विविधैर्जनैः ॥ समं सांयात्रिकैश्चक्रे । व्यवहारमनेकधा ॥ ६१ ॥ इतश्चासौ यत्र रा-
त्रौ । निर्गतो निजवेश्मतः ॥ अपश्यंतौ सुतं प्रातः । पितरौ तौ विलेपतुः ॥ ६२ ॥ हा वत्साभयचंद्र
त्वं । क्व गतोऽसि शशांकवत् ॥ संमील्य शोकनिर्मग्ना—नस्मान् कुमुदखंडवत् ॥ ६३ ॥ शिरीषसु-
कुमारस्त्वं । वपुषैव प्रवर्तसे ॥ हृदयेन परं वज्र—कठिनोऽसि कठोरधीः ॥ ६४ ॥ इत्यादि प्रलपंतौ
तौ । मूर्छितौ च पुनः पुनः ॥ दुःखितां निजदुःखौघै—श्चक्रतुर्नगरीमपि ॥ ६५ ॥ राज्ञाथ गुणचंद्रे-
ण । तत श्रुतं जनतामुखात ॥ तद्दुःखदुःखितो जातो । राजाप्यंतःपुरेण च ॥ ६६ ॥ निशम्य ग-
मनं तस्य । जयश्रीरपि मूर्छया ॥ पपात सहसा भूमौ । कन्यांतःपुरवासिनी ॥ ६७ ॥ कथंचिद्वीतलै-
र्वातैः । श्रीखंडैश्च सखीजनैः ॥ आश्वासितापि सा प्राप । पुनर्मूर्छां क्षणे क्षणे ॥ ६८ ॥ सखीभिः

सा ततोऽनेक—हेतुयुक्तिस्थिरीकृता ॥ इत्यूचे कारयिष्यामः । शुद्धिं तस्याशु ते वयं ॥ ६९ ॥ ता-
भिरित्यादि जल्पित्वा । यत्किंचन वचस्ततः ॥ जयश्रीः स्थिरतापन्ना । शिक्षिता बहुधा पुनः ॥ ७० ॥
उवाचाथ जयश्रीः सा । मां शिक्षयथ किं वृथा ॥ स एव दयितो मेंग—मग्निर्वाभिलषेदिह ॥ ७१ ॥
गुणचंद्रेण राज्ञेति । श्रुत्वा तस्या विनिश्चयं ॥ सर्वत्र वीक्षयांचक्रे । पुत्रीदुःखेन सोऽनिशं ॥ ७२ ॥
बहुभिर्दिवसैस्तस्य । गुणचंद्रो नरेश्वरः ॥ ज्ञात्वा शुद्धिं विवाहार्थं । प्रजिघाय निजं नरं ॥ ७३ ॥
बहुधा भणितस्तेन । श्रेष्ठिनः पुरुषेण च ॥ तथाप्यजयचंद्रः स । इयेषागमनं न हि ॥ ७४ ॥ दत्वो-
त्तरं किमप्येष । प्रेषयामास तौ नरौ ॥ स्वयं तु यानपात्राणि । कारयामास भूरिशः ॥ ७५ ॥ या-
त्रोपकरणैः सार्धं । संगृहीतक्रयाणकः ॥ पूज्यपूजां विधायोच्चै—र्बहुभिः स्वजनैर्वृतः ॥ ७६ ॥ आरु-
ह्य यानपात्रं स । श्रेष्ठिसूनुः शुभे दिने ॥ कटाहद्वीपमुद्दिश्य । चचाल जलवर्त्मना ॥ ७७ ॥ युग्मं ॥
उल्लंघ्य शीघ्रमंभोधि—मनुकूलेन वायुना ॥ कटाहद्वीपतीरे स । उत्ततार जनैः समं ॥ ७८ ॥ उ-
त्तार्य वस्तुजातं च । राजदर्शनपूर्वकं ॥ व्यवहारं [illegible]क्रे । वणिजामग्रणीरसौ ॥ ७९ ॥ तत्राप्रास-
मनोवांछा—धृताथोद्विग्नमानसः ॥ चिंताजलधिनिर्मग्न—स्तस्थौ पोतपतिश्चिरं ॥ ८० ॥ तं निरीक्ष्य

तथावस्थ—मभयं श्रेष्ठिनंदनं ॥ गृहकार्यनियुक्तेन । सोमदेवेन जल्पितं ॥ ८१ ॥ नाथ किं चिंत-
यस्येवं । कातरोचितमंतरा ॥ धीराणामेक एवायं । व्यवसायः समृद्धिदः ॥ ८२ ॥ दारिद्र्यजलधेः पा-
रं । प्राप्नुवंतीह पूरुषाः ॥ व्यवसायवहित्रेण । सुदैवानिलयोगतः ॥ ८३ ॥ व्यवसायं तथा ब्रूमो । व-
यं साहससंयुतं ॥ दासीव त्वरितं लक्ष्मी—र्यथा स्याद्वशवर्तिनी ॥ ८४ ॥ अद्यैवात्रागतं स्वामिन् ।
वाहनं रत्नसंभृतं ॥ अनंतरत्नसंपूर्णाद् । द्वीपाद्रत्नशिखाभिधात् ॥ ८५ ॥ उवाचाभयचंद्रोऽथ । यद्येवं
तर्हि गम्यते ॥ अशेषं तस्य संबंधं । पृछामस्तत आगतान् ॥ ८६ ॥ दृष्टं च वहनं तत्र । गतैस्तै रत्न-
संभृतं ॥ निर्मितेंद्रधनुर्लक्ष—माकाशे रत्नकांतिभिः ॥ ८७ ॥ वणिजस्तेन ते पृष्टा । द्वीपव्यतिकरं
जगुः ॥ लभ्यंते भूरिरत्नानि । पतितानि महीतले ॥ ८८ ॥ तद् द्वीपमुद्वसं सर्वं । क्रूरसत्वसमाकुलं ॥
गृह्यंते तत्र रत्नानि । रजन्याः पश्चिमे दले ॥ ८९ ॥ दक्षिणस्या दिशो गत्वा । मासैर्द्वादशभिः पु
नः ॥ तद् द्वीपं प्राप्यते पूर्व—समुद्रस्यांतरा स्थितं ॥ ९० ॥ अथोवाचाभयः शीघ्रं । पोतान् पूरय-
ताधुना ॥ द्वीपं रत्नशिखं नाम । गंतव्यं निश्चितं मया ॥ ९१ ॥ प्रगुणीकृतनिःशेष—जलपाथेयसं-
भृताः ॥ आरूढस्वजना नावः । पूरयामास स द्रुतं ॥ ९२ ॥ संवत्सरेण तद्द्वार—मासाद्य श्रेष्ठिनं-

दनः ॥ पोतेभ्यः परिवारं प्रा—ग्निःशेषमुदतारयत ॥ ९३ ॥ उत्तीर्योपि स्वयं पश्चा—द्यावदेषोऽ-
नुधावति ॥ तावत्सन्मुखमायात—मपश्यत्स्वजनव्रजं ॥ ९४ ॥ युष्माकं किं भयं कस्मा—त्किमेवं रे
प्रधावथ ॥ इति पृष्टे जनाः सर्वे । जगदुः श्रेष्ठिनंदनं ॥ ९५ ॥ भयं नास्ति कुतोऽप्यत्र । किंतु सू-
र्यकरोत्करैः ॥ प्रज्ज्वालितमहारत्न—प्रतापं सोढुमक्षमाः ॥ ९६ ॥ तिष्ठात्रैव पुरो मागा । नाथ त्वं
दुःसहं भृशं ॥ उदितानामिवार्काणां । रत्नानां भूयसां महः ॥ ९७ ॥ अजयः स्माह सत्यं भोः । प्रा-
गेव कथितं मम ॥ उच्चेतव्यानि रत्नानि । यन्निशः पश्चिमे दले ॥ ९८ ॥ पुनर्जगाद सोत्कर्ष—मनु-
कूलो विधिर्यदि ॥ मम गोत्रेऽपि तन्नूनं । दारिद्र्यं न भविष्यति ॥ ९९ ॥ ते सर्वेऽपि नरा रत्न—
तेजोज्वालाकरालिताः ॥ निमज्ज्य जलधेस्तीरे । नावमारुह्य संस्थिताः ॥ ३०० ॥ अतिक्रांते दिने
तस्मिन् । निशापूर्वदलेऽपि च ॥ सपरिवार उत्तीर्य । द्वीपे बभ्राम पोतपः ॥ १ ॥ रत्नपरीक्षकैः पुंभिः ।
प्रत्यहं विविधानि सः ॥ रत्नान्युच्चाययामास । तत्रैवमजयो वणिक् ॥ २ ॥ भृतेषु यानपात्रेषु । रत्नौ-
घैर्विविधैस्ततः ॥ कारयामास सामग्रीं । स्वदेशगमनाय सः ॥ ३ ॥ यस्यां पूरयितव्यानि । वहित्राणि
ततो निशि ॥ क्षेत्राधिपतिपूजार्थं । तत्र स्वयमवातरत् ॥ ४ ॥ तत्रैष किल कल्पोऽस्ति । यदेकाक्ये-

व नौपतिः ॥ कृतोपवास उत्तीर्य । पूजयेत्क्षेत्रदेवतां ॥ ५ ॥ नान्यः सांयात्रिकः कोऽपि । तावद्दत्ते
तटे पदं ॥ संपूज्य देवतां याव—न्नायाति वहनेश्वरः ॥ ६ ॥ इत्येषोऽभयचंडोऽपि । यावत्स्तोकं पु-
रो गतः ॥ कृतार्चः क्षेत्रदेवीनां । शुश्राव करुणस्वरं ॥ ७ ॥ हा गुणाकर हा नाथ । हा रसज्ञशि
रोमणे ॥ दत्वा स्वप्नमिवाकस्मा—न्न ज्ञातोऽसि गतः क्वचित ॥ ८ ॥ अवज्ञाता त्वया नाथा—नी-
ताहं चात्र दुर्जनैः ॥ प्रसादं कुरु तन्नाथ । दीनाया दर्शनात्मकं ॥ ९ ॥ प्रोषिते भवति स्वामिन् ।
दीनाहमभवं क्षणात् ॥ दूरमतरिते सूर्ये । नूनं म्लायति पद्मिनी ॥ १० ॥ इत्यादि विविधं श्रुत्वा ।
कस्याश्चिद्रुदितं स्त्रियः ॥ तेनाकृष्टः पुरोऽगात्स । परदुःखेन दुःखितः ॥ ११ ॥ सप्तभौमं समालो
क्य । दिव्यसौधं पुरः स्थितं ॥ विलापैः पीडितस्तस्या । आरुरोह पुरः पुरः ॥ १२ ॥ ततः सप्तमभू-
मौ स । पल्यंकस्योपरि स्थितां ॥ तामैक्षत वशां वस्त्रा—च्छादितास्यसरोरुहां ॥ १३ ॥ उवाचाभयचं-
डोऽथ । कासि त्वं कस्य वा प्रिया ॥ रोदिष्येकाकिनी किंवा । सर्वं मे कथयात्मनः ॥ १४ ॥ दध्यौ
मनसि साप्येवं । नास्तीह मनुजागमः ॥ तदेष राक्षसः कोऽपि । भूतो वाथ पिशाचकः ॥ १५ ॥
भव्यं भवति यद्येष । पापां मां खादति द्रुतं ॥ सा ध्यात्वेति जगादोच्चैः । रे रक्षो भक्षयाशु मां

॥ १६ ॥ श्रेष्ठिसूनुरुवाचाथ । नाहं भूतो न राक्षसः ॥ मनुष्यः किंतु वास्तव्यः । उज्जयिन्यां वणि-
क्सुतः ॥ १७ ॥ श्रीवर्धनपुरात्पूर्वं । कटाहं गतवांस्ततः ॥ इह रत्नशिखे द्वीपे । आगतो बहुवाहनैः
॥ १८ ॥ अहमुज्जयिनीवास । इति वाक्यं निशम्य सा ॥ सहसोत्तारयामास । वदनाद्वसनांचलं
॥ १९ ॥ ददर्शाभयचंद्रं तं । रूपलावण्यसुंदरं ॥ विकस्वरमुखी तत्र । बाला कुमुदिनीव सा ॥ २० ॥
तेनापि ददृशे साथ । निर्जितामरसुंदरी ॥ हर्षबाष्पजलापूर्ण—लोचनेन विपश्चिता ॥ २१ ॥ सैवै-
षा गुणचंद्रस्य । जयश्रीस्तनया किमु ॥ कथंचिद्दैवयोगेन । समेतात्र भविष्यति ॥ २२ ॥ जीविता-
दपि या राज्ञो । वल्लभासाथवा कथं ॥ तस्या आगमनं द्वीपे । संभवेदंभसां निधौ ॥ २३ ॥ विक-
ल्पैर्बहुभिः किंवा । निश्चयेन विवर्जितैः ॥ अपनेष्यति संदेहं । पृच्छ्यमानेयमेव मे ॥ २४ ॥ यथा-
र्थं ब्रूहि मा भैस्त्व—मित्युक्तेऽथाभयेन सा ॥ उवाचाहमपि प्राज्ञ । वास्तव्योज्जयिनीपुरि ॥ २५ ॥
स एवैषोऽथवा कोऽपि । सदृक्तस्य परो नरः ॥ इति हर्षविषादाढ्या । सा पुनर्मौनमाश्रयत् ॥ २६ ॥
लज्जते पुरतस्तस्य । धार्ष्ट्येनापि प्रजल्पिते ॥ नरांतरेण सार्धं तु । जल्पंति न कुलस्त्रियः ॥ २७ ॥
एवमादिविचारेण । व्यग्रमानसया तया ॥ तदा वदनविन्यासः । संवव्रे वाग्द्वयापि हि ॥ २८ ॥ ज-

गदेऽभयचंडेण । रात्रावद्य कृशोदरि ॥ यास्यंति वाहनान्येहि । नयाम्युज्जयिनीं पुरीं ॥ २९ ॥ गु-
णचंद्रनरेंद्रस्य । जयश्रीर्न सुतासि किं ॥ तया सैवाहमित्युक्ते । पुनराह वणिग्वरः ॥ ३० ॥ श्रेष्टिनो
धनदेवस्य । न मां वेत्सि सुतं कथं ॥ आख्ययाजयचंद्रं तं । वाणिज्यार्थमिहागतं ॥ ३१ ॥ संजाते
निश्चये सम्य—गन्योन्यस्योपलक्षणात् ॥ विकारा बहवो जाता । विस्मयानंदतस्तयोः ॥ ३२ ॥ पप्र-
च्छाजयचंद्रोऽथ । तवात्रागमनं कथं ॥ स जगाद प्रसुप्ताहं । हृता विद्याभृता गृहात् ॥ ३३ ॥ आनी·
यात्र विमुक्ता च । भवने विद्यया कृते ॥ स स्वयं तु ययौ खेटः । कर्तुमुद्वहसज्जतां ॥ ३४ ॥ आ·
नेष्यति कथंचित्स । पापो विद्याधरो यदि ॥ तन्मे तवापि दुष्टात्मा—पकरिष्यति निश्चितं ॥ ३५ ॥
प्रजापूरणमात्राया । ममास्तु यदुपस्थितं ॥ मास्तु ते विघ्नलेशोऽपि । दुर्लभस्य पुनः प्रिय ॥ ३६ ॥
जवाचाजयचंद्रोऽथ । भद्रे वेगेन संचल ॥ अधुनैव करिष्यामः । प्रयाणं जलवर्त्मना ॥ ३७ ॥ प्रत्य-
क्षामिव लक्ष्मीं तां । गृहीत्वा स जयश्रियं ॥ आरुरोह महापोतं । तल्लाभोल्लासिताशयः ॥ ३८ ॥
अथैकं नाविकं तत्र । मृतमात्मायुषः क्षये ॥ चितायां ज्वालयामास । नीत्वोपवनं सुधीः ॥ ३९ ॥
मा करोतु पुनर्विघ्न—मिति खेचरभीतितः ॥ प्रपंचोऽभयचंद्रेण । चक्रे तत्र मतेरयं ॥ ४० ॥ पूर्यां-

चक्रिरे तेन । निःशेषवहनान्यथ ॥ पवनेनानुकूलेन । स कटाहे गतः पुनः ॥ ४१ ॥ श्रीवर्धनपुरं प्रा-
स—स्ततोऽपि पुनरेव सः ॥ ददर्श जनकं तत्र । स्वजनैः सममागतं ॥ ४२ ॥ अन्योन्यं कुशलोदं-
त—प्रश्नेनानंदितात्मनोः ॥ वचनागोचरा प्रीति—स्तदाभूत्पितृपुत्रयोः ॥ ४३ ॥ उवाच तनयस्ताव—
त्कुशलं निजभूपतेः ॥ श्रेष्ठ्युवाच महाराजः । पुत्र्या दुःखेन दुःखितः ॥ ४४ ॥ ततश्चाकथयत्सर्वं ।
वृत्तांतं स जयश्रियः ॥ तेनोत्पन्नमहानंदः । श्रेष्ठी स्वहृदयेऽभवत् ॥ ४५ ॥ उत्तार्याथ सुतो नौभ्यो ।
रत्नानां पर्वतोपमान् ॥ स राशीन् कारयामास । पितुर्विस्मयकारकान् ॥ ४६ ॥ तदादायाखिलं वित्त—
मन्नयं च जयश्रियं ॥ चचाल धनदेवः स । श्रेष्ठी निजपुरीं प्रति ॥ ४७ ॥ उल्लंघिताशुभूपीठाः । प्र-
याणैस्ते निरंतरैः ॥ पुरीमुज्जयिनीं प्रापुः । सर्वे निर्विघ्नमध्वनि ॥ ४८ ॥ ततो विज्ञातवृत्तांतो । गु-
णचंद्रो नरेश्वरः ॥ समं पौरपरीवारै—रभ्यागात् श्रेष्ठिनंदनं ॥ ४९ ॥ परमर्द्ध्या पुरीमध्ये । संमर्देन
गरीयसा ॥ राजा प्रावेशयत्तं च । श्लाघ्यमानं पुरीजनैः ॥ ५० ॥ श्रेष्ठिनं श्रेष्ठिपुत्रं च । नृपो नी-
त्वा निजे गृहे ॥ जयश्रियमिमां पुत्रीं । समर्प्य च जगाद सः ॥ ५१ ॥ कुमाराभयचंद्र त्वं । मा
न्यथेदं विकल्पय ॥ त्वत्पुण्यपरिणत्यैव । योजितैषा न चापरैः ॥ ५२ ॥ शिक्षितो निजपिता त्वं ।

त्यक्त्वेमां दूरतो गतः ॥ प्राप्ता तत्रापि पुत्रीयं । नियतेर्वशवर्तिनी ॥ ५३ ॥ इत्युक्त्वा कारयामास । जयश्रीश्रेष्टिपुत्रयोः ॥ शुभे लग्ने महाभूत्या । राजोपयममंगलं ॥ ५४ ॥ ततो जयश्रिया पत्न्या । सुसमं वैषयिकं सुखं ॥ बुभुजेऽभयचंद्रः स । तत्र स्वर्ग इवामरः ॥ ५५ ॥ अतिक्रांते घने काले । सुखं भुंजानयोस्तयोः ॥ तया जयश्रिया सूतः । स पुत्रः कृतपुण्यकः ॥ ५६ ॥ अन्यदाऽभयचंद्रेण । गच्छता बाह्यकाननं ॥ अंतरा पतितं दृष्टं । मृतनारीकलेवरं ॥ ५७ ॥ तदुद्वेगकरं दृष्ट्वा । बीभत्सं युवतीवपुः ॥ संविग्नश्चिंतयामास । स स्त्रीरूपस्वरूपतां ॥ ५८ ॥ अस्या अवयवाः पूर्वं । ये रागानलदीपकाः ॥ मूढानामपि वैराग्यं । त एव जनयत्यमी ॥ ५९ ॥ यौवनोपचिता या भू—द्रागिणां रागकारणं ॥ भस्मनावयवा सैषा । तेषां वैराग्यहेतवे ॥ ६० ॥ स्पृशंतः सभयं श्वानो । वरमेतां नितंबिनीं ॥ निःशंकाः कामिनो नैवा—वज्ञातनरकाः पुनः ॥ ६१ ॥ अनयापि कृतं पापं । यस्य देहस्य हेतवे ॥ सांप्रतं स रुलत्यत्र । सा त्वन्यत्र गता क्वचित ॥ ६२ ॥ नाना करोति पापानि । जीवो देहस्य हेतवे ॥ असारस्तु प्रकृत्या स । परिणामे कुमित्रवत् ॥ ६३ ॥ न कुर्वंति सुता भार्या । बांधवाः सुहृदोऽपि च ॥ क्षणाद्विघटमानस्य । हतदेहस्य रक्षणं ॥ ६४ ॥ शरीरविभवेनाह—मनेन

क्षणिकात्मना ॥ कुर्यां धर्मनियुक्तेन । द्वौ भवौ सफलौ निजौ ॥ ६५ ॥ इत्यादि भावयन् बाह्यो- द्यानेऽगादन्यस्ततः ॥ अपश्यच्च मुनिं तत्रा—सीनं प्रासुकभूतले ॥ ६६ ॥ श्रुत्वा धर्मं तदभ्यर्णे । प्राव्राजीत्स महादरात् ॥ त्यक्त्वा पुत्रकलत्रादि—स्नेहं चापि परिग्रहं ॥ ६७ ॥ ततस्तप्त्वा तपस्तीव्रं । क्षीणदेहो विरागवान् ॥ मृत्वासौ प्राणते कल्पे । समुत्पेदे महासुरः ॥ ६८ ॥ जयश्रीरपि सा भर्तु —र्वियोगविरता ततः ॥ प्रशांता गणिनीपार्श्वे । प्रव्रज्यां विदधे ततः ॥ ६९ ॥ समाधिनापि सा मृ- त्वा । तत्रैव प्राणते दिवि ॥ पूर्वस्नेहानुबंधेन । तस्य मित्रमभूत्सुरः ॥ ७० ॥ तौ तत्र प्राणते कल्पे । सुहृदौ त्रिदशोत्तमौ ॥ विंशतिं सागराण्यायुः । पालयामासतुर्मुदा ॥ ७१ ॥ जीवोऽथाजयचंद्रस्य । च्युत्वा त्रिदिवतस्ततः ॥ अत्रैव भरतक्षेत्रे—ऽयोध्यायां श्रीपदे पुरि ॥ ७२ ॥ राज्ञः सिंहरथाख्यस्य । प्रियाया भुवनश्रियः ॥ इंद्रस्वप्नसमाख्यात । उदरे समवातरत ॥ ७३ ॥ युग्मं ॥ प्रशस्ते दिवसे सा- थ । प्रशस्तैर्लक्षणैर्युतं ॥ राकानिशेव संपूर्णं । शशांकं सुषुवे सुतं ॥ ७४ ॥ दासदासीपुरीलोका- दीनामानंदवर्धकं ॥ नृपः सिंहरथः पुत्र—जन्मोत्सवमकारयत् ॥ ७५ ॥ अतिक्रांते ततो मासे । पू- ज्यपूजापुरस्सरं ॥ इंद्रदत्त इति स्पष्टं । नाम चक्रे सुतस्य सः ॥ ७६ ॥ संवर्धितस्तथा सैष । पयःपा-

नैर्दिवानिशं ॥ जनानां कल्पशाखीव । यथेष्टफलदो भवेत ॥ ७७ ॥ द्वासप्ततिकलादक्षो । विज्ञातप-
रमार्थकः ॥ संप्राप्तयौवनारंभ । निधानं रूपसंपदां ॥ ७८ ॥ स्वदेशपरदेशेषु । विख्यातः सोऽभवद्गु-
णैः ॥ हृदये वैरिभूपानां । तिर्यक्शल्यमिवाचरन् ॥ ७९ ॥ इतश्चात्रैव भरते । पुरे राजगृहाभिधे ॥
गौडदेशमहीपस्य । महेंद्राख्यस्य वेश्मनि ॥ ८० ॥ देव्या विनयवत्याः स । गर्भे जीवो जयश्रियः ॥
पुत्रीत्वेन समुत्पन्नो । देवलोकात्ततश्च्युतः ॥ ८१ ॥ युग्म ॥ नाम्ना महेंद्रलक्ष्मीः सा । कन्या यौव
नमागता ॥ तत्पित्रा प्रेषितो दूतो—ऽयोध्यां तामगमत्पुरीं ॥ ८२ ॥ प्रतीहारसमादिष्टः । प्रविष्टो रा-
जसंसदि ॥ नत्वा सिंहरथं नृपं । दूतो वाचमुपाददे ॥ ८३ ॥ जातानेकप्रजस्यापि । मन्ये नैकप्र-
जापतेः ॥ कुमारान्न प्रजारत्नं । न भूतं ते न भाव्यपि ॥ ८४ ॥ तेजस्विनां त्वमावासो । नरेंद्रासि
नभो यथा ॥ किंतु सूरः स एवैकः । प्रतापी तव नंदनः ॥ ८५ ॥ रत्नाकरस्य किं ब्रूमः । किंतु त-
स्यापि नाभवत् ॥ परं रत्नं हरेर्वक्षः—स्थलालंकारकौस्तुभात् ॥ ८६ ॥ तत्किं देव बहूक्तेन । त्वमने-
नैव सूनुना ॥ कृतार्थोऽसींद्रदत्तेना—साध्यश्च द्विषतां गणैः ॥ ८७ ॥ त्वत्पार्श्वे प्रेषितो येन । कार्ये-
णाहं महीपते ॥ राज्ञा महेंद्रपालेन । तदाकर्णय सांप्रतं ॥ ८८ ॥ जाता विनयवत्यास्ति । तस्य गौ-

ऽमहीपतेः ॥ कन्या महेंद्रलक्ष्म्याख्या । रूपेण त्रिदशीसमा ॥ ८९ ॥ तया कदाचिदश्रावि । निर्मलो गुणसंचयः ॥ इंद्रदत्तकुमारस्य । मुखेन किल बंदिनां ॥ ९० ॥ तद्गुणश्रवणैकाग्र—चित्तायास्तद्दिनादपि ॥ इंद्रदत्तं विना तस्या । नान्यो ना हृदि तिष्ठति ॥ ९१ ॥ काव्यबंधे सदालापे । चित्ते वा चित्रकर्मणि ॥ तस्यास्तवैव पुत्रोऽयं । नायको नापरः पुमान् ॥ ९२ ॥ मनोभावमवेत्यांबा । तनूजायाः सखीमुखात् ॥ इंद्रदत्तप्रदानाय । महाराजं व्यजिज्ञपत ॥ ९३ ॥ राज्ञापि भणितं देवि । स्थानेऽस्या अनुरागिता ॥ समारोहतु कल्पद्रुं । कल्पवल्लीयमंगजा ॥ ९४ ॥ समालोच्य महामात्यै—रत्राहं प्रेषितस्ततः ॥ स्वामिना गौडदेशस्य । पुत्रीदानस्य हेतवे ॥ ९५ ॥ प्रमाणं सांप्रतं यूय—मिति दूतेन जल्पिते ॥ राजा सिंहरथो वक्तु—मारेभे युक्तिपूर्वकं ॥ ९६ ॥ संघटंते स्वयं दूत । पूर्वैणैतानि कर्मणा ॥ भार्या विद्या सुखं दुःखं । स्नेहो लक्ष्मीश्च देहिनां ॥ ९७ ॥ तदिदं मन्यते को न । संबंधं गौडभूभुजा ॥ किंतु न प्रेषये पुत्रं । सैवाेतु स्वयंवरा ॥ ९८ ॥ दूतः पुनरुवाचाथ । पूर्ववैराणि मा स्मर ॥ तव पुत्रभयोद्भ्रांतं । शेते न भुवनं सुखं ॥ ९९ ॥ यावन्नोदेति सूरोऽत्र । तमस्तावद्विवर्धते ॥ न तमो न च तेजस्वी । तस्मिन्नभ्युदिते सति ॥ ४०० ॥ इत्यादिबहुदृष्टांतैः । प्र-

तिशोभ्य नरेश्वरं ॥ दूतः स्वीकारयांचक्रे । कार्याणि निखिलान्यपि ॥ १ ॥ ततस्तं शोभने घस्ने । व-
हुमित्रसमन्वितं ॥ इंद्रदत्तं विवाहार्थं । प्रेषयामास नृपतिः ॥ २ ॥ सीमासंधौ स्वदेशस्य । विमुच्य
प्रचुरं बलं ॥ कतिचित्सैन्यसंयुक्तः । सोऽगाद्राजगृहं पुरं ॥ ३ ॥ श्रुत्वा तदागमं राजा । गौम्रो गौरव-
पूर्वकं ॥ वरं प्रवेशयामास । शोभया परया पुर ॥ ४ ॥ अथो सिंहरथो राजा । कृशः सुतवियोग-
तः ॥ तमेव मानसे ध्यायं—स्तस्थौ कष्टेन सर्वथा ॥ ५ ॥ नैति कोऽपि ततो योऽत्र । ब्रूते पुत्रस्य
मंगलं ॥ इति शंकाकुलो राजा । पूर्ववैरवशादभूत ॥ ६ ॥ एवं सिंहरथो याव—दनिवृत्तिपरायणः ॥
आस्थाने तावदायातः । सहसा लेखवाहकः ॥ ७ ॥ धूलीधूसरसर्वांगो । वायुमित्रोऽभिधानतः ॥ न-
मस्कृत्योपविष्टश्च । पप्रच्छे वसुधेंदुना ॥ ८ ॥ रे वायुमित्र भाषस्व । कुशलं तनयस्य मे ॥ त्वमुत्सुक
श्चात्यंतं । किमर्थं दृश्यसेऽधुना ॥ ९ ॥ वायुमित्र उवाचाथ । कुमारस्यास्ति मंगलं ॥ किंतु गौड-
महीपेन । न शव्यमनुचेष्टितं ॥ १० ॥ सैन्यं स्वदेशसीमायां । मुक्त्वा स्तोकपरिग्रहः ॥ कुमारो देव
संप्राप्तः । पुरं राजगृहं ततः ॥ ११ ॥ गौडराजेन निःशेषं । कर्तव्यमुचितं तदा ॥ इंद्रदत्तकुमारस्य ।
विदधे विधिपूर्वकं ॥ १२ ॥ शुभे लग्ने ततो देव । महेंद्रश्रींद्रदत्तयोः ॥ विवाहोऽपि महानभूत्। । गौ-

डराजेन कारितः ॥ १३ ॥ कृते विवाहकर्तव्ये । विज्ञप्तो मंत्रिभी रहः ॥ स गौडनृपतिः स्वामि–न्नि-
द्रदत्तो महारिपुः ॥ १४ ॥ बभूव बाहुवीर्योऽय–मनियोगी प्रतापवान् ॥ एकसीमस्थितो देव । नो-
पेक्ष्यः सर्वथा रिपुः ॥ १५ ॥ युष्माकं च सुसाध्योऽय–मत्र नान्यत्र कुत्रचित् ॥ इति ज्ञात्वा महा-
राज । यद्योग्यं तत्समाचर ॥ १६ ॥ अनेन पुनरुन्मूल्य । युष्मानाश्वेकदोष्मता ॥ एकच्छत्रैव भो-
क्तव्या–वश्यमेव वसुंधरा ॥ १७ ॥ राजोवाच कुलीनाना–मुचितं नेदृशं किल ॥ अन्योऽपि स्या-
दवध्यो हि । शात्रवो गृहमागतः ॥ १८ ॥ एषस्त्वाकारितो दूतं । संप्रेष्य दुहितुः पतिः ॥ विश्वस्तः
स्वजनो नैव । दृष्टदोषो गुणैर्गुरुः ॥ १९ ॥ तदहो मंत्रिणोऽमुष्मि–न्नज्ञातद्विष्टचेतसि ॥ सहसो-
पक्रियास्थाने–ऽपकारः क्रियते कथं ॥ २० ॥ उवाच कुमतिर्मंत्री । देवाकर्णय मे वचः ॥ राज्यं
नाम कुबुद्धीनां । दुःपाल्यं सर्वथा भवेत् ॥ २१ ॥ राज्यं सर्वाभिलाष्यं स्या–द्वेश्यानामिव यौवनं ॥
सर्वदा सभयं चैत–त्ससर्पमिव मंदिरं ॥ २२ ॥ रक्षणीयं प्रयत्नेन । स्वकलत्रमिवानिशं ॥ अविश्वा-
सकरं चैत–द्वैरिणामिव संगतं ॥ २३ ॥ आत्मीयेऽपि विधातव्यं । दौर्जन्यं किं न वैरिणि ॥ छिंद-
न्नपि चिरायुः स्या–त्सर्पदष्टं निजांगकं ॥ २४ ॥ मुखैकमधुरं देव । परिणामेऽतिदारुणं ॥ त्याज्यं

रिपुकुलं दूरे । किंपाकस्य फलोपमं ॥ २६ ॥ इत्यादिवचनैस्तेन । नृपतिः प्रतिबोधितः ॥ कुमारस्य
विघाताय । नानोपायान् व्यचिंतयत् ॥ २७ ॥ महेंद्रश्रीसखी तत्र । दास्यस्ति मदनाभिधा ॥ तस्यां
कुमतिरासक्तः । सर्वं मंत्रं रहोऽब्रवीत ॥ २८ ॥ यद्यथालोचितं कार्यं । कर्तव्यं यत्र वा दिने ॥ त-
त्तथा कुमतिः सर्वं । मदनायै न्यवेदयत् ॥ २९ ॥ सापि महेंद्रलक्ष्मीं च । कथयामास सौहृदात ॥
इंद्रदत्तकुमारस्य । साप्याख्यत्पतिभक्तितः ॥ ३० ॥ कुमारोऽपि परिज्ञात-दुष्टाचारः स शात्रवैः ॥
कथंचिच्छल्यते नैव । प्रकृत्यातिविचक्षणः ॥ ३१ ॥ महेंद्रश्रीरुवाचाथ । देव त्वद्योग्यमासनं ॥ स्थापितं
बहिरुद्याने । वामांगेऽस्ति नृपासनात् ॥ ३२ ॥ तस्याधोऽस्ति महागर्ता । खदिरांगारसंभृता ॥ नासि-
तव्यं त्वया तत्र । यमस्येव मुखे प्रिय ॥ ३३ ॥ इत्याकर्ण्य कुमारः स । ययावुद्यानसंसदि ॥ पूर्वो-
पविष्टभूपेन । समाहूतोऽपि चासितुं ॥ ३४ ॥ क्षुतं श्रुत्वा कुमारेण । परिजह्रे तदासनं ॥ निरस्ता-
स्तेन चान्येद्यु—र्नियुक्ता देव घातकाः ॥ ३५ ॥ कुमारदयितान्येद्युः । कुमारं प्रत्यभाषत ॥ त्वां हं-
तुमप्रतीकार । उपायोऽस्ति कृतः पुनः ॥ ३६ ॥ पंचमे दिवसे स्वामिं—स्तातोऽश्ववाहिकां गतः ॥
दास्यत्यश्वं तवारोढुं । विपरीतानुशिक्षितं ॥ ३७ ॥ त्वं तेनापहृतोऽरण्ये । गमिष्यस्येक एव हि ॥

राज्ञा तत्र निजं सैन्यं । स्थापितं तु भविष्यति ॥ ३८ ॥ तन्मध्ये पतितेनाशु । त्वया कार्यं तथा
प्रिय ॥ तेषामेव यथा कूटं । तन्मूर्ध्नि पतति क्षणात् ॥ ३९ ॥ श्रुत्वा तदिंद्रदत्तेन । प्रच्छन्नैर्निजपूरु-
षैः ॥ निजदेशे विमुक्ता या । सेना साकारिता तदा ॥ ४० ॥ कुमारोऽथ दिने तस्मि—न्नाहूतो वा-
हहेतवे ॥ हृदयस्थितमंत्रोऽगा—दित्यादिश्य निजान् जनान् ॥ ४१ ॥ देवीमादाय रे यूयं । सत्वरं
तत्र गच्छत ॥ यत्रास्ति रिपुसैन्यं त—दस्मत्सैन्यसमन्वितं ॥ ४२ ॥ इत्युक्त्वा तत्र यातस्य । तस्य ते-
न महीभुजा ॥ कुमारस्यार्पितो वाजी । विपरीतानुशिक्षितः ॥ ४३ ॥ तमारुह्य कुमारोऽथ । यावद्वे-
गेन मुक्तवान् ॥ तावत्तेन महारण्यं । कुमारः प्रापितः क्षणात् ॥ ४४ ॥ तावत्तत्र कुमारस्य । सैन्येन
प्रबलौजसा ॥ तत्क्रोडभूपतेः सैन्यं । सर्वं पंचत्वमापितं ॥ ४५ ॥ ततः शत्रुबलं पश्यं—स्तथावस्थं कु-
मारराट् ॥ समेत्य निजसैन्येन । परीतः परिवारितः ॥ ४६ ॥ इतरोऽपि परिवारो । महेंद्रश्रीसमन्वि-
तः ॥ निर्विघ्नमिंद्रदत्तस्य । समीपे समुपागतः ॥ ४७ ॥ वेष्टयित्वा पुरं राज—गृहं विग्रहकर्मणा ॥
श्वशुरं चात्मसात्कृत्वा । प्रजिघाय स मामिह ॥ ४८ ॥ तद्वचःश्रवणाद् दूरं । समुल्लसितमानसः ॥
अभिनंद्य निजं पुत्र—मुवाचेति नरेश्वरः ॥ ४९ ॥ वायुमित्र पुनर्याहि । सत्वरं सुतमानय ॥ पर्या-

कुलोऽस्म्यहं पुत्र—दर्शनामृतवांछया ॥ ५० ॥ वायुमित्रे गते तत्र । कुमारो पितुराज्ञया ॥ गौडदेशे निजं मुक्त्वा । सेनान्यं भीमनायकं ॥ ५१ ॥ अनुशास्य जनं सर्वं । रिपुकुलान्निहत्य च ॥ कुमारः सकलत्रोऽपि । समागात्पितुरंतिके ॥ ५२ ॥ युग्मं ॥ अभिनम्य पितुः पादौ । महेंद्रश्रीसमन्वितः ॥ कुमारः कृतकर्तव्यो । बुभुजे सुखमैहिकं ॥ ५३ ॥ अनुरागमयाः सौख्य–मया वा दिवसास्ततः ॥ अभिजग्मुस्तयोस्तत्र । महेंद्रश्रींद्रदत्तयोः ॥ ५४ ॥ अथान्येद्युः कुमारः स । सौधवातायने स्थितः ॥ निर्यातं नगरीमध्या—त्प्रभूतं लोकमैक्षत ॥ ५५ ॥ विशेषालंकृतं लोक—मिंद्रदत्तो विलोक्य तं ॥ पप्रच्छ स्वं प्रतीहारं । क यात्येष जनो बहिः ॥ ५६ ॥ उवाचाथ प्रतीहारो । देवैष प्रस्थितो जनः ॥ रविचंद्रगुरोः पार्श्वे । वंदनार्थं पुराद्बहिः ॥ ५७ ॥ इंद्रदत्तस्ततोऽवोच—द्यद्येवं त्वर्यतां ततः ॥ गच्छामोऽपि वयं तत्र । कर्तुं मुनींद्रदर्शनं ॥ ५८ ॥ सकलत्रस्ततोऽसौ च । पितृमातृसमन्वितः ॥ सुविशुद्धपरीणामो । नमस्कर्तुं गुरुं ययौ ॥ ५९ ॥ प्रविश्य विधिना तत्र । गुरुपादकृतानतिः ॥ दत्ताशिषो गुरोस्तस्मा—त्सोऽश्रौषीद्धर्मदेशनां ॥ ६० ॥ जीवानां संसृतावत्र । कर्मणां वशवर्तिनां ॥ निःशेषं दुःखमेवास्ति । सुखं तु मनसा कृतं ॥ ६१ ॥ यथाश्माद्यपि मन्यंते । कांचनं क-

नकातुराः ॥ मोहमूढास्तथा दुःख—मप्यत्र ब्रुवते सुखं ॥ ६२ ॥ जानंतोऽपीह संसार—स्वरूपं के-
चिदीदृशं ॥ रज्यंति विषयेष्वेव । कृत्वा गजनिमीलिकां ॥ ६३ ॥ हरिणा इव ते दीना । मृत्यु-
व्याधमुपस्थितं ॥ अपश्यंतो भवारण्ये । विनश्यंति निरुद्यमाः ॥ ६४ ॥ धर्मकार्यक्षमं लब्ध्वा । मर्त्य-
त्वं दुर्लभं ततः ॥ भवोच्छेदकरे जैन—धर्मे भोः कुरुतादरं ॥ ६५ ॥ इति तद्देशनां श्रुत्वा । कुमारः
शुद्धमानसः ॥ जगाद भगवन् वाक्यं । सर्वं सत्यं तवोदितं ॥ ६६ ॥ भगवंस्ते वचः श्रुत्वा । परमा-
र्थप्रकाशकं ॥ ममापि भवनिर्वेदः । संजातः सांप्रतं हृदि ॥ ६७ ॥ तावन्नेष्टार्थसंसिद्धिः । स्याद्वैराग्य-
वतामपि ॥ लभ्यंते न शुभा याव—द्गुरवोऽत्र भवादृशाः ॥ ६८ ॥ योग्यता चेदिभो मेऽस्ति । प्रसा-
दश्च तवातुलः ॥ दुःखस्यांतकरीं देहि । प्रव्रज्यां मुनिनायक ॥ ६९ ॥ गुरुरूचे यथासौख्यं । प्रति-
बंधं विधेहि मा ॥ व्यापारोऽस्माकमेवात्र । विश्वोपकृतिहेतवे ॥ ७० ॥ इंद्रदत्तः कुमारोऽथ । महेंद्र-
श्रीसमन्वितः ॥ आपृच्छ्य पितरौ वेगा—त्तत्पार्श्वे व्रतमग्रहीत् ॥ ७१ ॥ तपोऽतिदुःकरं तप्त्वा । संले-
ख्यांते निजां तनुं ॥ इंद्रदत्तोऽच्युते कल्पे । मृत्वाभूत् त्रिदशो महान् ॥ ७२ ॥ साध्वी महेंद्रलक्ष्मीः
सा । मृत्वांते पालितव्रता ॥ तत्रैव देवलोकेऽभू—त्तस्य मित्रं महासुरः ॥ ७३ ॥ आयुर्द्वाविंशतिं त-

त्र । प्रतिपाल्यातराणि तौ ॥ उत्पेदाते ततश्च्युत्वा । भरतेऽत्रैव नाकिनौ ॥ ७४ ॥ इंद्रदत्तस्य जीवो-
ऽथ । चंपायां सूरभूपतेः ॥ कुक्षौ शृंगारवत्यास्त्वं । वीरसेन सुतोऽभवः ॥ ७५ ॥ जीवो महेंद्रलक्ष्म्या-
स्तु । नाशिक्यनगरेशितुः ॥ विचित्रयशसो नाम्ना । चंद्रश्रीरभवत्सुता ॥ ७६ ॥ वीरसेनमहाराज ।
तवाप्यद्यमतःपरं ॥ यथाभूद्युवयोः प्रेम । परस्परमनारतं ॥ ७७ ॥ अतो ब्रूमो वयं वीर । त्वया पूर्व-
भवे किल ॥ दिव्यमानुष्यसौख्यानि । भुक्तानीह निरंतरं ॥ ७८ ॥ गुणराजभवादेषा । चंद्रश्रीस्तव
वल्लभा ॥ स्नेहभक्ता सहोत्पन्ना । वीरसेनाष्टजन्मसु ॥ ७९ ॥ अधिकाधिकवर्धिष्णु—स्नेहसौख्याति-
रेकयोः ॥ भृशायतेऽत्र कामोऽयं । भवतोः स्पर्धयेव भोः ॥ ८० ॥ वीरसेन यथा वह्नि—रेधोभ्यो
दीप्यतेऽधिकं ॥ विध्यायति निरेधस्तु । तथा स्नेहान्मनोभवः ॥ ८१ ॥ गगनान्मेघनिर्मुक्त—मने-
कसरितां मुखैः ॥ जलं विशति पाथोधौ । न तृप्यति तथाप्यसौ ॥ ८२ ॥ तथा राजन्नयं कामः । से-
व्यमानो नरैः सदा ॥ अविवेककृतोत्साहो—ऽधिकमेव प्रवर्धते ॥ ८३ ॥ विवेकं हृदि चेद्राज—न्नद्य
श्वो वा करिष्यसि ॥ तत्ते विषयवैराग्यं । भविष्यति न चान्यथा ॥ ८४ ॥ धर्मानुष्ठानमेवात्र । विवे-
कस्य फलं भवेत ॥ जैनधर्मप्रभावेण । सर्वं संपत्स्यते तव ॥ ८५ ॥ आस्तामन्यभवेष्वत्र । गुणराज-

स्य जन्मनि ॥ फलितः सौख्यलाभेन । जिनधर्मस्तवानघः ॥ ८६ ॥ तिर्यंचो नरकस्थेभ्य—स्तिर्य-
ग्भ्यो मनुजा अपि ॥ मनुष्येभ्यः सुराः सर्वे । सुखिनोऽत्र यथोत्तरं ॥ ८७ ॥ एतेभ्यः सर्वलोकेभ्यः ।
सुखिनः सिद्धजंतवः ॥ सौख्यस्योपमितिर्येषां । त्रैलोक्येऽपि न विद्यते ॥ ८८ ॥ सिद्धिसौख्ये ततः
सर्वो—त्तमे वीरनरेश्वर ॥ प्रज्ञावता प्रकर्षेण । कर्तव्योऽत्र महादरः ॥ ८९ ॥ वीरसेनस्ततोऽवोच—
देवमेवेति नान्यथा ॥ सर्वसौख्योत्तमं मोक्ष—सुखं स्यादक्षयं पुनः ॥ ९० ॥ भगवन्निदमेवास्ति ।
सदैव हृदये मम ॥ गृहीतं युष्मदादेशा—द्विधातव्यधिया पुनः ॥ ९१ ॥ विज्ञप्यं मेऽस्ति किंत्वत्र ।
मुनीश पुरतस्तव ॥ उचितानुचितं तत्र । पूज्या एव विदंति वै ॥ ९२ ॥ श्रूयते किल सिद्धांते ।
पितरौ दुःप्रतिक्रियौ ॥ ताभ्यामपि विशेषेण । धर्माचार्यो मुनीश्वरः ॥ ९३ ॥ मादृग्मम समः को-
ऽपि । संसारे भगवन् सुतः ॥ दुःखायैव समुत्पन्नो । यः पित्रोर्जन्मतोऽपि हि ॥ ९४ ॥ मंदः पीडा-
करोऽन्येषां । स्वल्पतेजाः कथंचन ॥ प्रत्याययामि शपथै—रात्मानं सूरसूरिति ॥ ९५ ॥ जातेषु येषु
वंशस्य । वृद्धिः कीर्तिश्च जायते ॥ पित्रोस्तोषश्च ते पुत्रा । न पुनर्मादृशा भुवि ॥ ९६ ॥ कथंचि-
त्पितरावत्र । तावायातौ भवेत्ततः ॥ तयोर्ममापि चानंद । आलंबनमिदं मुने ॥ ९७ ॥ युष्मत्प्रसा-

दतः प्राप्त—सुविवेकस्य मे पुनः ॥ राज्यश्रीविषयासंग—संभवे मोह एव न ॥ ९८ ॥ भगवान-प्युवाचैवं । धर्मोऽयमपि भूपते ॥ जनन्या जनकस्यापि । यदत्र क्रियते हितं ॥ ९९ ॥ विधीयमान-मेवं तु । तयोर्भवति सुंदरं ॥ धर्मकार्येषु निर्विघ्नं । सर्वत्र भवतात्तव ॥ ५०० ॥ ब्रुवन्निति मुनिर्ज्ञा-नी । जगदे वीरभूभुजा ॥ स्वदर्शनेन कर्तव्यः । प्रसादो भगवत्पुनः ॥ १ ॥ तथेति वाचं प्रतिपद्य तस्य । विजह्रतुस्तौ मुनिनायकौ द्राक् ॥ स्वं स्वं ययुर्धाम महाप्रमोदाः । सभासदस्तेऽपि नरेंद्रमु-ख्याः ॥ २ ॥ इत्यागमिकश्रीचारित्रप्रभसूरि शिष्यश्रीजयतिलकसूरिविरचिते तद्बांधवामरकीर्तिगणिवि-लिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये श्रीहरिविक्रमराजप्रतिबोधावसरप्रोक्तश्रीवीरसेनपूर्वभववर्ण-नो नामैकादशः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

---

॥ अथ द्वादशः सर्गः प्रारभ्यते ॥

अथ मित्रप्रदत्तां स । वीरसेनो नरेश्वरः ॥ साधयित्वा महाविद्यां । विद्याधर इवाभवत ॥ १ ॥ आरूढः पुष्पकं नाम । विमानं शुभवासरे ॥ सामंतवर्गमापृच्छ्य । बंधुदत्तसमन्वितः ॥ २ ॥ खड्गपा-

णिर्महाराज । आनेतुं पितरौ निजौ ॥ धातकीखंडमुद्दिश्य । प्रतस्थे गगनाध्वना ॥ ३ ॥ युग्मं ॥
गृहांगणमिव क्षोणी । सागरः सारणीसमः ॥ गिरयो गंडशैलाभा । दृश्यंते यत्र संस्थितैः ॥ ४ ॥
विमाने पुष्पके तस्मि—न्मनोवेगेन गच्छति ॥ समुद्रसलिलं दृष्ट्वा । बंधुदत्तोऽब्रवीदिति ॥ ५ ॥ स
एष सागरो देव । हृष्टस्त्वद्दर्शनादिव ॥ दूरोल्लासितकल्लोल—हस्तैरिव विनृत्यति ॥ ६ ॥ इदं तज्ज-
लधेर्मध्यं । देवागाधस्य दृश्यते ॥ हरिणेव त्वया देवी । यस्माल्लक्ष्मीरिवोद्धृता ॥ ७ ॥ दृश्यते जग-
ती देव । प्राकाराकारसंस्थिता ॥ वैजयंताभिधं द्वार—मिदं दक्षिणसंस्थितं ॥ ८ ॥ ज्ञवो जिनमते-
नेव । विमानेनाशु सागरः ॥ उदलंघि पुरस्तीर—वनराजीयदीक्ष्यते ॥ ९ ॥ इत्यन्योन्यप्रदेशानां ।
कथनाव्यग्रचेतसोः ॥ तयोर्द्वयोर्विमानं त—द्धातकीखंडमासदत् ॥ १० ॥ इतश्च सहसा ताभ्यां । प-
तन्नभसि वीक्षितः ॥ छिन्नः सासिर्भुजादंडः । स्थिताभ्यां स्वविमानके ॥ ११ ॥ समीपे पततस्तस्मा-
दग्रहस्तान्नरेश्वरः ॥ जग्राह वामहस्तेन । स्फुरत्तं सविस्मयः ॥ १२ ॥ वामेन मस्तकं बिभ्र—द्दक्षि
णेनासिधेनुकां ॥ दष्टाधरः करेणोच्चै—र्भुकुटीभंगभीषणैः ॥ १३ ॥ निरवष्टंभपातेन । लक्षितो भूमि-
गोचरः ॥ वल्लभ्यां तद्विमानस्य । पपात सहसा पुमान् ॥ १४ ॥ युग्मं ॥ ताभ्यामाश्वासितः शीघ्र—

मुन्मीलितविलोचनः ॥ वीरं विलोकयामास । स नरो रोषदारुणः ॥ १५ ॥ चंपापतिरुवाचाथ ।
कस्त्वं खात्पतितः कथं ॥ सकोपहृदयोऽस्मासु । लक्ष्यसे किमु संप्रति ॥ १६ ॥ उत्थाय सहसा शी-
र्षं । परित्यज्य च सोऽवदत् ॥ खड्गमर्पय युद्धायो—त्तिष्ठस्वाथ मया सह ॥ १७ ॥ वीरोऽवोचन्न यु
ध्येऽहं । महात्मन् कारणं विना ॥ नरोऽप्युवाच तद्धेतुं । प्रत्यक्षमपि निह्नुषे ॥ १८ ॥ वीरो जगा-
द त्वं भद्र । किं प्रत्यक्षमपह्नुतं ॥ स पुनः स्माह मे खड्ग—मिदं संप्रति निह्नुषे ॥ १९ ॥ अथ-
मुत्त्वार्पयासिं मे । नो चेत्संगरमाचर ॥ असद्भि युध्यते नैव । वचश्चातुर्यकर्मणा ॥ २० ॥ राजा स्माह
सतां मध्ये । कुर्वे न्यायं त्वया सह ॥ तयोर्विवदतोरेवं । तत्रागात्खेचरव्रजः ॥ २१ ॥ वीरेणाज्ञापि
गच्छंति । पुरोऽमी व्योमचारिणः ॥ अमीभिः कारयावस्तु । न्यायमावां विचक्षणैः ॥ २२ ॥ उवाचा-
सिनरस्तुभ्यं । रोचते यद्विधेहि तत् ॥ अस्माभिः सर्वथा खड्गं । गृहीतव्यमिदं पुनः ॥ २३ ॥ खे-
चराणां ततः पार्श्वे । जग्मतुस्तौ विवादिनौ ॥ स्वकीयाभिनिवेशेन । समधिष्ठितचेतसौ ॥ २४ ॥
उवाच वीरसेनस्ता—नाकर्णयत मे वचः ॥ एतस्मान्न मया खड्गं । गृहीतं किंतु पुंस्करात् ॥ २५ ॥
खड्गपुंसा ततोऽवाचि । श्रूयतां भोः सभासदः ॥ कोऽपि सुप्तस्य मे खड्ग—मादायोदपतद्दिवि ॥ २६ ॥

उत्पतन्नेव कट्यां तु । मया दध्रे स तस्करः ॥ समं तेनाहमप्यागा—मियतीं भुवमंबरे ॥ २७ ॥ अ-
त्रागतेन तस्याशु । भुजोछेदि मया पुनः ॥ शीर्षं चापि निशीतासि–धेन्वा मायाविनस्ततः ॥ २८ ॥
पतितो भूचरोऽहं तु । सैष विद्याधरो ननु ॥ विद्याबलकृते दृष्टो । विमानेऽत्र पुनर्मया ॥ २९ ॥ ख-
ड्गरत्नं च दृष्ट्वा स्वं । प्रत्यभिज्ञाननिश्चितं ॥ मार्गयाम्यहमेतस्मा—द्विवादोऽयं सभासदः ॥ ३० ॥
सम्यग्निर्णीय खेटैस्तै—र्जगदे वीरभूपतिः ॥ एतस्येदं महाखड्गं । न पुनस्तव भूपते ॥ ३१ ॥ यदे-
षोऽपि नरो ब्रूते । तस्यापाति भुजो मया ॥ वदस्येवं त्वमप्यत्र । गृहीतं पुंस्करान्मया ॥ ३२ ॥ निः-
संदेहं तदेतस्य । खड्गरत्नमिदं महत् ॥ चिंतनीयमिदं किंतु । विद्यते तस्करोऽस्य कः ॥ ३३ ॥ ज्ञात्वा
विद्याबलेनेति । निश्चिक्ये सर्वखेचरैः ॥ नायं मलिम्लुचः कोऽपि । महात्मा किंतु वीर्यवान् ॥ ३४ ॥
हुं ज्ञातोऽसि महाराज । जंबूद्वीपस्य भारते ॥ वीरश्चंपापुरीनाथः । कुशलं वर्तते तव ॥ ३५ ॥ उ-
वाचाथ पुनर्वीरो । नाहं चंपापुरीपतिः ॥ किंतु रंकोऽस्मि मध्यस्था । भूत्वा जल्पत सर्वथा ॥ ३६ ॥
खेचरा यदि मे पक्ष—पातं कुरुत किंचन ॥ तन्मया भवतां दत्तः । शपथो गुरुदेवयोः ॥ ३७ ॥
विद्याधैररथाभाणि । न त्वं चौरो मनागपि ॥ न चास्ति तव दोषोऽपि । गृहीतं पुंस्कराद्यतः ॥ ३८ ॥

असिचौरो हृतो नूनं । स्वयमेतेन खेचरः ॥ खेटभ्रांत्या च ते लग्नो । दृष्ट्वासावसिमात्मनः ॥ ३९ ॥
गृही गृह्णाति सर्वोऽपि । पतितं खेऽपि भूतले ॥ तस्मिन्नपि निरीहा ये । मुनयस्ते महाशयाः ॥ ४० ॥
अन्यच्च नीतयो देश—कालपात्रबलानुगाः ॥ दृष्टव्या न पुना राज—न्नेकपक्षसमाश्रिताः ॥ ४१ ॥
त्वं राजासि प्रजासत्कं । सर्वं गृह्णासि सद्धनं ॥ व्यवस्थालंघनेऽनीतिः । प्रजानां कथिता पुनः ॥ ४२ ॥
करी धत्तेऽपराधं कं । मृगेंद्राय निहत्य तं ॥ य आकर्षति मुक्तौघं । स्वहस्तेन शिरःस्थितं ॥ ४३ ॥
तदेता नीतयः सर्वा । अन्यलोकविधौ कृताः ॥ चंपाधिराज नैवं तु । युष्मादृक्षेषु राजसु ॥ ४४ ॥
असिपौरुष याचस्व । विनयान्न तु विक्रमात् ॥ इत्युक्त्वा खेचराः सर्वे । स्वस्थानं ते समैयरुः ॥ ४५ ॥
खड्गपुंसा ततोऽभाणि । विवशेन क्रुधा नृपः ॥ रेरे दुष्ट दुराचार । धृष्ट निर्लज्जमानस ॥ ४६ ॥ चौ·
रापराध दुष्टोऽसि । चंपैश्वर्याच्च दूषिता ॥ अद्य सर्वप्रकारेण । हंतव्यस्त्वं पुनर्मया ॥ ४७ ॥ तत्किं
ध्यायसि चित्ते त्वं । करवालं करे कुरु ॥ मोक्षस्ते विद्यते नाद्य । निरुद्धस्य मया स्वयं ॥ ४८ ॥
ऊचे चंपाधिपेनाथ । त्वया योध्धुं न मे मतिः ॥ अनेन हेतुना नीति—विलंबो विदधे मया
॥ ४९ ॥ न चेन्नीतिनिषिद्धोऽपि । बुध्यसे त्वं महाशय ॥ योत्स्ये तदधुना नून—मुपायमपरं विना

॥ ५० ॥ महीभुत्तर युद्धार्थं । खड्गपुंसेति भाषिते ॥ रणरोमांचितो वीरो—ऽवातरद्वसुधातलं ॥ ५१ ॥
बध्ध्वा परिकरिं गाढं । समकोमलभूतले ॥ प्रारेभाते नियुद्धेन । संयोध्धुं तावुभावपि ॥ ५२ ॥ भु-
जास्फोटप्रतिध्वान—त्रस्ताशेषवनेचरौ ॥ भृकुटीभीमभालौ तौ । युयुधाते महाभुजौ ॥ ५३ ॥ नियु-
द्धेन तयोरेवं । दक्षयोर्युध्यमानयोः ॥ व्यतीयुर्वासराः पंच—दश तत्र क्रमात् किल ॥ ५४ ॥ वि-
ज्ञप्तो बंधुदत्तेन । श्रीवीरः षोडशे दिने ॥ स्वामिन् युद्धरसेनेह । स्थातव्यं कतिवासरान् ॥ ५५ ॥
सीदंति देव कार्याणि । पुरः कालविलंबतः ॥ तदुपायांतरेणाशु । रणं केनापि संवृणु ॥ ५६ ॥ वी-
रसेनोऽवदन्मित्र । सुभटोऽयं महान् मम ॥ आश्चर्यं जनयेन्नित्यं । युध्यमानः कलांतरैः ॥ ५७ ॥
तेनैवं वदता शीघ्रं । बध्ध्वा गारुडबंधनैः ॥ चंपेशेन विमाने स्वे । प्रक्षिप्तः सोऽसिपूरुषः ॥ ५८ ॥
आरूढश्च स्वयं तत्र । समित्रो वीरभूपतिः ॥ संकल्पितामयोध्यां तां । ददर्श क्षणमात्रतः ॥ ५९ ॥
त्रैलोक्याक्षेपभूतां तां । पुरीमालोकयन्नृपः ॥ व्रजंतं बहिरुद्याने । प्रभूतं लोकमैक्षत ॥ ६० ॥ बंधु-
दत्तस्ततोऽवादी—ल्लोकोऽयं कुत्र गच्छति ॥ राजपत्नी च काप्येषा । परीता परितो जनैः ॥ ६१ ॥ उ-
द्वेगाधिष्ठितेवेयं । दृश्यते राजगेहिनी ॥ गुरुदुःखभरः प्रायो । हृदयेऽस्या भविष्यति ॥ ६२ ॥ पश्य

तेनातिदुःखेन । क्षीणसर्वांगदुर्बला ॥ अवदंत्यपि देहेन । वल्लीवोपोषितव्रतं ॥ ६३ ॥ आभूषणा
न दृश्यंते । धृतमंगलकंकणा ॥ अब्रुवाणाप्यवैधव्यं । ब्रूते कुंकुमकज्जलैः ॥ ६४ ॥ गछामोऽपि वयं
तत्र । यत्रैषा देव गछति ॥ इत्युक्त्वा ते ततः प्रापु—रुपर्युद्यानभूरुहं ॥ ६६ ॥ वीरसेनः समित्रोऽ-
पि । विमानात्समवातरत ॥ सार्धं वकुनरेणापि । विमानं तत्र खे स्थितं ॥ ६७ ॥ ततो यावत्पुरो या-
ति । राजा मित्रेण संयुतः ॥ तावत्केवलिनं सूरिं । ददर्श दमनाभिधं ॥ ६८ ॥ ततस्तं ज्ञानिनं न-
त्वा । भालस्पृष्टमहीतलौ ॥ तावुपाविशतां तत्र । विशुद्धे वसुधातले ॥ ६९ ॥ इतश्च राजपत्नी सा-
प्यागता तत्र संसदि ॥ प्रणम्य विधिना सूरिं । न्यषीदत्सपरिछदा ॥ ७० ॥ कथयामास धर्मं स ।
सूरिः सर्वज्ञभाषितं ॥ विरसं भवसद्भाव—माविःकुर्वन् सभासदां ॥ ७१ ॥ व्यजिज्ञपद्गुरुं देवी । प्र-
स्तावे दीनमानसा ॥ भगवन् षोडशाहानि । जग्मू राजप्रवासतः ॥ ७२ ॥ आर्यपुत्रस्ततः क्वापि ।
जीवन्नस्ति न वा प्रभो ॥ दूनाया बहुभिर्दुःखै—स्तद्वाक्ये जीवितं मम ॥ ७३ ॥ वियोगो निजबंधूनां ।
तद्भूपतनयस्य च ॥ अग्रेऽप्यभूदिदानीं तु । प्राणेशस्यापि चेन्मम ॥ ७४ ॥ तन्नूनं दुःखभारेण । भा-
रितं निजजीवितं ॥ नालं धर्तुमहं मर्तु—मिछामि करुणापर ॥ ७५ ॥ इतश्च तत्र केनापि । कुतं

मध्येसन्नं तदा ॥ ततोऽवोचद्गुरुर्वत्से । खेदं मा कुरु चेतसि ॥ ७६ ॥ नास्त्यत्र सुखलेशोऽपि । भवो-
ऽयं दुःखरूपस्ताक ॥ जीवस्यात्र सुखं क्ष्वेड—कीटस्येवास्ति कल्पितं ॥ ७७ ॥ बिंबोष्टी कुंददशना ।
शशांकवदना वशा ॥ यथैषा कल्पना लोके । सौख्यस्याप्यसती तथा ॥ ७८ ॥ आस्तामिदमये पश्य ।
प्रत्यक्षमपरं पुनः ॥ हा कष्टं जनको बद्धः । पुत्रेण श्रद्धया रिपोः ॥ ७९ ॥ उवाचाथ गुरुर्वीरं । रा-
जन्नानय तं द्रुतं ॥ बद्धं वैरिविकल्पेन । महाराजं स्वयानतः ॥ ८० ॥ संभ्रांतो गुरुवाक्येन । तदु-
त्थाय स सूरसूः ॥ साशंकः स्वविमानात्त—मानिनाय नरेश्वरं ॥ ८१ ॥ प्रविशंतं ततः सूरं । नरेंद्र-
सूरिसंसदि ॥ दृष्ट्वा देव्यादिको लोकः । सर्वोऽपि परितुष्टवान् ॥ ८२ ॥ नमस्कृत्योपविष्टोऽथ । गु-
रुणा सूरभूपतिः ॥ परमार्थपरं वाक्यं । जगदे जनताप्रियः ॥ ८३ ॥ इदं तवोचितं सूर । किं सूरकु-
लजन्मनः ॥ दिनानि युध्यसे सार्धं । षोडशात्मसुतेन यत् ॥ ८४ ॥ युष्मादृशोऽपि मुह्यंति । महां-
तश्चेद्विवेकिनः ॥ तस्य बालस्य को दोषो । मन्ये राजन् सुतस्य ते ॥ ८५ ॥ धिगज्ञानं यदत्रापि ।
पित्रापह्रियते भवे ॥ प्राणप्रियः सुतो दूरे । पुनरस्तु परो भवः ॥ ८६ ॥ रक्षार्थं त्वयका यस्य । चं-
पायां समरो महान् ॥ तदा चक्रे महाराज । स स्वयं हन्यते कथं ॥ ८७ ॥ उदरेण यथा व्यूढो ।

नवमासान् हितेच्छया ॥ तं पुत्रं मन्यते माता । परपुत्रधियाऽपि सा ॥ ८८ ॥ अज्ञानमोहितः पुत्रो
—ऽप्येषो यः खड्गहेतवे ॥ पितरं प्रहरत्यत्र । दुःप्रतीकारशासनं ॥ ८९ ॥ प्रत्यक्षं युवयोरेवं । यथा
जातात्र नृपते ॥ अव्यवस्था तथा सर्वा—गिनां परभवेष्वपि ॥ ९१ ॥ अनवस्थितसंबंधे । संसारे
तन्नरेश्वर ॥ प्रतिबंधं विमुच्यात्र । जिनधर्मे कुरूद्यमं ॥ ९२ ॥ सूरसेनस्ततोऽवोच—द्भगवन् सैष मे
सुतः ॥ यः शृंगारवतीगर्भ—संभवो वीरसेनकः ॥ ९३ ॥ ओमित्युक्ते मुनीशेन । पितृपुत्रावुभाव-
पि ॥ उत्थाय सस्वजाते ता—वन्योन्यं स्नेहनिर्भरौ ॥ ९४ ॥ जनन्याः पादयोर्वीरः । पपात पितु-
राज्ञया ॥ परिरभ्य चुचुंबोच्चैः । सापि मूर्ध्नि तमंजसा ॥ ९५ ॥ राज्ञोऽथ राजपत्न्याश्च । नेत्राणि च
सभासदां ॥ वीरसेने निमग्नानि । निवृत्तानि न कर्हिचित ॥ ९६ ॥ सूरसेनस्ततोऽपृच्छ—द्भगव-
न् जननीकरात ॥ पतितस्यास्य यज्जातं । दिव्यज्ञानेन तद्वद ॥ ९७ ॥ ततो भगवता तेन । वीर-
सेनमहीपतेः ॥ निःशेषः कथयांचक्रे । वृत्तांतः पतनादिकः ॥ ९८ ॥ सूरसेनस्ततो राजा । श्रुत्वा
तच्चरितं महत ॥ मन्यमानः कृतार्थं स्वं । प्रारेभे गदितुं पुनः ॥ ९९ ॥ पुत्रा जगति जायंते । पि-
तुर्हीनाः समा अपि ॥ परमेकः स एवायं । जनको येन जीयते ॥ १०० ॥ पुत्रेण निर्जितस्यात्र ।

प्रधानगुणविक्रमैः ॥ भृशायते पितुः कीर्ति—र्नवरं त्रुवनत्रये ॥ १ ॥ भगवंतं ततो नत्वा । राजा
पुत्रसमन्वितः ॥ गजेंद्रयानमारूढः । प्रविवेश निजां पुरीं ॥ २ ॥ मध्ये सौधमधिष्ठाय । सपुत्रः
सिंहविष्टरं ॥ शतानि कारयामास । मंगलानां महीपतिः ॥ ३ ॥ प्रवर्धमानहर्षाणां । तेषां संगमशा·
लिनां ॥ अतित्रिदशसौख्याना—मैयरुर्नूरिवासराः ॥ ४ ॥ अथ विज्ञपयामास । वीरसेनो नरेश्वरः ॥
जंबूद्वीपस्य चंपायां । गम्यते तात संप्रति ॥ ५ ॥ सूरसेनस्ततस्तत्र । पुत्रं राज्ये न्यवीविशत् ॥ अ·
न्यराजसुताजातं । राजसेनाभिधं मुदा ॥ ६ ॥ समर्प्य सकलं तस्य । परिवारं शुभे दिने ॥ सार्धं
शृंगारवत्याथ । यावद्गंतु स वांछति ॥ ७ ॥ अशोकशेखरौ ताव—त्समायातौ खगेश्वरौ ॥ छाद·
यंतौ विमानौघै—र्गगनांगणमखिलं ॥ ८ ॥ दृष्ट्वा खेचरसैन्यं त—त्किमेतदिति पृच्छति ॥ सू·
रसेने निजं पुत्रं । वज्रबाहुः समाययौ ॥ ९ ॥ अनुसूरं प्रणम्योच्चै—र्वीरसेनं महानृपं ॥ न्यग्नूत्वा
वज्रबाहुः स । विनयेन व्यजिज्ञपत् ॥ १० ॥ अनुयांतौ तथाध्वान—मशोकशेखराविमौ ॥ इयतुः
स्वामिनः पार्श्वं । देव विद्याधरेश्वरौ ॥ ११ ॥ गम्यते भरते देव । त्वद्वियोगतमोंधिते ॥ युवाभ्यां
भवतात्तत्र । प्रकाशः सूरचंद्रवत् ॥ १२ ॥ भोजनैर्विविधैर्दिव्य—वस्त्रालंकरणैरपि ॥ अथातिथ्यं व्य·

धात्सूरः । खेचराणां समंततः ॥ १३ ॥ सपुत्रदयितावंधु—दत्तः सूरमहीपतिः ॥ विमानं रंहसारुह्य ।
प्रतिचंपामथाचलत् ॥ १४ ॥ द्विलक्षयोजनायाम—मुल्लंघ्य लवणोदधिं ॥ सैन्यं प्राप पुरीं चंपां ।
तदुत्तंभिततोरणां ॥ १५ ॥ वासुपूज्यजिनं नत्वा । प्रथमं खेचरैर्वृतः ॥ पौराणां वर्धितानंदः । सूर·
सेनोऽविशत्पुरीं ॥ १६ ॥ वीरसेनस्ततो राजा । पितृभक्तिप्रणोदितः ॥ स्वशक्तिभक्तिमानेन । वर्धा·
पनमकारयत् ॥ १७ ॥ वैताढ्योभयराजीनां । सवधूका नभश्चराः ॥ भरतार्धमहीपालाः । सर्वे सां·
तःपुरास्तथा ॥ १८ ॥ सूरागमनमाकर्ण्य । जातहर्षाः समागमन् ॥ चंपां संपातनिःकंपां । सारोपाय-
नपाणयः ॥ १९ ॥ युग्मं ॥ सर्वत्र शुशुभे सूरा—गमे शांततमोभरः ॥ सुंदरो जीवलोकोऽयं । वि·
कसद्वदनांबुजः ॥ २० ॥ सपुत्रा सापि चंद्रश्रीः । स्नुषा श्वशुरपादके ॥ प्रणनाम महाभक्त्या । श्व
श्रूशुश्रूषणोद्यता ॥ २१ ॥ त्वमेव स्वजनो विश्वे । प्रतिपन्नैकनिश्चलः ॥ विचित्रयशसं भूपं । महारा-
जोऽस्तवीदिति ॥ २२ ॥ यथा यथा सुतस्यैक्षां—चक्रे लक्ष्मीर्जितेंद्रता ॥ मातापित्रोर्ममौ हर्षो । हृ
दये न तथा तथा ॥ २३ ॥ अन्योन्यसंगमोद्भूत—सुखास्वादजुषां ययुः ॥ सुखेन दिवसास्तेषा—
मानंदेनेव निर्मिताः ॥ २४ ॥ अन्यदा जगदानंदो । वसंतसमयो भुवि ॥ आगमत्परमो बंधु—रिव

सर्ववनस्पतेः ॥ २५ ॥ सर्वत्र चूतलं वृक्ष—पल्लवारुणमाबभौ ॥ वसंतागमहर्षेणो—ल्लसद्रागमिवांत-
रा ॥ २६ ॥ दूरेऽस्तु मानुषो लोकः । सविकारा खगा अपि ॥ बहुपुष्पा विलोक्यंते । गायंतोऽलि-
रुतैरिह ॥ २७ ॥ किंशुकैर्नखराकारैः । शिशिरेभं विदारयन् ॥ माकंदमंजरीजालैः । कटौरैः केसरैरि
व ॥ २८ ॥ कोकिलाकलनिह्लादै—र्विरहिणान् विभापयन् ॥ विचचार वने विष्व—ग्मधुसिंहकिशो-
रकः ॥ २९ ॥ युग्मं ॥ चंदनद्रुमसंभूता । एलापल्लववासिनः ॥ कृतपंपाजलाश्लेषा । ववुर्मलयवाय-
वः ॥ ३० ॥ पुष्पलक्ष्यालिमालाभिः । शोभंते यत्र पादपाः ॥ स्थूलेंद्रनीलहारालीं—र्बिभ्रतीव मधु
श्रियः ॥ ३१ ॥ हेलानिर्जितदेवमानवगणो यत्रार्च्यते मन्मथो । मंद्रोच्चारितपंचमं च मधुरं गीतं ज-
नैर्गीयते ॥ गाढालिंगननिर्भरं च सुरतं संसेव्यते कामिभि—र्लोकानां स न वल्लभः किल कथं म-
न्ये वसंतोत्सवः ॥ ३२ ॥ वसंतसमये तत्र । सूरसेनो नरेश्वरः ॥ विज्ञप्तो वीरसेनेन । योजितांज-
लिना मुदा ॥ ३३ ॥ तुष्टं त्वदागमेनेव । वसंतेन महीतलं ॥ हे देवोत्सहते रंतुं । मुक्तशीतज्वरादि-
व ॥ ३४ ॥ महद्भिरपि कर्तव्यं । जनचित्तानुवर्तनं ॥ देवान्यथा विरागः स्या—त्प्रकृतीनां नरेश्वरे
॥ ३५ ॥ तद्देवोज्ज्वलवेषोऽयं । लोकः क्रीडासमुत्सुकः ॥ वांछति द्वारदेशस्थ—स्तवाग्रे गमनं वने

॥ ३६ ॥ ओमित्युक्त्वा गते राज्ञि । सूरसेने गजस्थिते ॥ वीरसेनः ससामंतो । ययावुद्यानभूमिषु
॥ ३७ ॥ उवाच सूरभूपालो । वीरसेनादिकान् जनान् ॥ यूयं सर्वे रमध्वं भो । द्रक्ष्याम्युद्यानमेव तु
॥ ३८ ॥ इत्युक्ते वीरसेनः स । निःशेषैर्मंडलाधिपैः ॥ विलासिनीजनैश्चापि । सार्धं चिक्रीड कानने
॥ ३९ ॥ समं शृंगारवत्या च । स्वसमाननृपैर्वृतः ॥ उद्याने घनपुष्पाख्ये । चंक्रमीतिस्म सूरराट्
॥ ४० ॥ वनपालः पुरोभूय । पल्लवो नाम भूपतेः ॥ वृक्षौघं कथयामास । नानादोहदनामभिः
॥ ४१ ॥ ह्रियंते विषयैर्देव । मानवाश्चित्तकृत्न तत् ॥ चित्रं तदेव यद् वृक्षा । एकाक्षा अपि तैर्जिताः
॥ ४२ ॥ केचित्स्पर्शेन पुष्यंति । रसनेन च केचन ॥ केचिद् घ्राणेन रूपेण । शब्देनापि महीरु-
हः ॥ ४३ ॥ पीनोन्नतकुचस्पर्शा—त्तन्वंग्याः पुष्पितं क्षणात् ॥ एनं कुरबकं वृक्षं । पश्य देव पुरः
स्थितं ॥ ४४ ॥ तरुणीपादघातेन । संतुष्टोऽशोकपादपः ॥ प्रसरत्पल्लवो देव । रमणीयस्तरुर्ह्ययं ॥ ४५ ॥
आश्चर्यं पश्य राजेंद्र । सपर्णाः केसरद्रुमाः ॥ आहता मदगंडूषैः । स्त्रीभिः पुष्यंति नान्यथा ॥ ४६ ॥
गंधाढ्या विकसंत्येते । राजंश्चंपकभूरुहः ॥ सुगंधोदकसेकेन । संपूर्णनिजदोहदाः ॥ ४७ ॥ तिल-
कः सैष यः स्त्रीणां । कटाक्षैर्विकसत्यलं ॥ पादपेष्वप्यमोघा हि । विषमा नयनेषवः ॥ ४८ ॥ राजन्

गीतरागासक्ता । एते विरहिपादपाः ॥ पंचमोङ्गारगीतेन । रागांधा विकसंति ये ॥ ४९ ॥ उत्तमाः
पादपा एते । प्रागुक्ता मध्यमास्तु ते ॥ ये मध्यमगुणोपेताः । श्रद्धां वांछंति मध्यमां ॥ ५० ॥ एषा
प्रियंगुवल्ली सा । प्रकृत्या लज्जयान्विता ॥ यावन्नालिंग्यते रक्त—वस्त्रैस्तावन्न पुष्पति ॥ ५१ ॥ अथ-
मास्त्वपरे राज—न्नेतेऽधममनोरथाः ॥ विज्ञेयाः केतकीमुख्या । अमेध्यकृतदोहदाः ॥ ५२ ॥ इत्ये-
ते तरवो देव । स्वस्वदोहदपूरणात् ॥ उद्गमत्कुसुमौघेन । दृश्यंते सुंदरा भृशं ॥ ५३ ॥ सुरभेरिव
ताकाम्यं । कामस्येव यशोभरः ॥ दृश्यते पुष्पसंभारो । मधुश्रीहसितोपमः ॥ ५४ ॥ माकंदकाननं चै-
त—न्मंजरीरेणुदंभतः ॥ रंगावलीर्महाराज । किरत्यागमने तव ॥ ५५ ॥ दरारुणदलं जाति । कां-
चनारसुमं नवं ॥ वसंतेन निपीतः किं । वनलक्ष्म्या इवाधरः ॥ ५६ ॥ वर्णाढ्यमपि निर्गंधं । क-
र्णिकारं न याचले ॥ किं रूपेण गुणोऽर्च्यको । गृह्यते भुवने यतः ॥ ५७ ॥ विकसद्वनकिंजल्कैः ।
पिशंगदलसंपुटं ॥ अलीनां जनयत्येव । शरपर्णीसुमं मदं ॥ ५८ ॥ एलालवंगकक्कोल—कदलीदा-
डिमीमुखाः ॥ दृश्यंते फलवृक्षास्तु । बहुभेदा अमी पुरः ॥ ५९ ॥ पल्लवैर्नमनो देव—दमनो मदनप्रि-
यः ॥ फलपुष्पविहीनोऽपि । मनो दाम्यति कामिनां ॥ ६० ॥ इतः पश्य पुरो नाथ । क्रीडारसवशं-

वदः ॥ रमते पौरलोकोऽयं । रागेणेव विनिर्मितः ॥ ६१ ॥ लिखित्वा केतकीपत्रे । चाटूक्तिं कुंकु-
मद्रवैः ॥ युवा कोऽप्यर्पयत्येष । दयितायै स्मरातुरः ॥ ६२ ॥ तद्गुणोद्भावनोत्पन्न—पुलकानि नरे-
श्वर ॥ मिथुनानीह गायंति । चरित्रं तनयस्य ते ॥ ६३ ॥ चंद्रश्रीः सहिता देवी—खेचरीभिः स्नु-
षा तव ॥ लीलादोलनसौख्यानी-तश्चानुभवति प्रभो ॥ ६४ ॥ अवतीर्याथ दोलाया-श्चंडश्रीर्जल-
केलये ॥ पार्श्वे श्रीवीरसेनस्य । गच्छत्येषा नरेश्वर ॥ ६५ ॥ क्रीडाशैले ततोऽमुष्मि-न्नुच्चोच्चशिखर-
स्थिताः ॥ पश्यामो वीरसेनस्य । जलकेलिं वयं प्रभो ॥ ६६ ॥ क्रीडापर्वनमारूढैः । सूरसेनादिभि-
स्ततः ॥ लीलातटागमालोकि । वनश्रीमुखदर्पणः ॥ ६७ ॥ मरंदैररविंदानां । पिंजरीकृतपुष्करं ॥ अ-
ग्निं विना ऽवीभूतै—र्भृतं हेमरसैरिव ॥ ६८ ॥ युग्मं ॥ तटस्थशाखिशाखाभ्यो । दत्तजंपैरनेकधा ॥
वीरसेनादिभिर्भूपैः । पूर्यते सत्वरं सरः ॥ ६९ ॥ उच्छलन्नीरधाराभि—र्लग्नाभिर्गगनांगणे ॥ सिंच-
तीव विमानस्थान् । खेचरानपि भूपतिः ॥ ७० ॥ गंभीरमपि संक्षुब्धं । पश्य देव सरोवरं ॥ अथवा
संगमे स्त्रीणां । क्षोभः कस्य न जायते ॥ ७१ ॥ घुसृणप्रविलिप्तश्री—स्नानशोणितपाथसि ॥ लोकः
सरसि पाथोधौ । निमग्न इव दृश्यते ॥ ७२ ॥ नितंबस्तनगुर्व्योऽपि । लाघवं यांति योषितः ॥ जड-

मध्येऽथवा न स्या—त्कस्य गौरवहीनता ॥ ७३ ॥ करैः सपल्लवमिव । सपुष्पमिव लोचनैः ॥ सच-
क्रमिव नारीणां । स्तनैर्जाति सरोजलं ॥ ७४ ॥ तरंगभंगुरं दृष्ट्वा । वेणीदंमं निजे जले ॥ जल·
सर्पधिया कापि । सहसालिंगति प्रियं ॥ ७५ ॥ अन्योन्यास्यगृहीतेन । मृणालेन प्रणालवत ॥ मि-
थो गंडूषितं नीरं । मिथुनानि पिबंत्यहो ॥ ७६ ॥ भृंगाणां लीयते वृंदं । मुखेऽस्याः पद्मशंकया ॥
अन्यस्या अधरो दष्टो । वारयंत्याः षमंह्रिणा ॥ ७७ ॥ आपीनस्तनयोरूर्ध्वं । प्रक्षिप्तांगमहाभरा ॥ म-
ध्ये सरस्तरत्येषा । कुंभाभ्यामिव पश्य भोः ॥ ७८ ॥ पश्य केनापि यूनात । गृहीत्वा कमलं करे ॥
स्वप्रियामुखपद्मस्य । विधीये तावता रणं ॥ ७९ ॥ एषा मृणालदंडेन । हन्यते दयिते ननु ॥ नि-
मज्ज्यांतः प्रहारं तं । टालयंती पुनः पुनः ॥ ८० ॥ गंडूषितमिवानेक—नारीणां नाभिकूपकैः ॥ सर·
सोपसरत्यंबु । निर्गते तरुणीव्रजे ॥ ८१ ॥ पल्लवं प्रत्युवाचाथ । राजा रे सत्वरं व्रज ॥ नानाक्रीडा-
परिश्रांत—माकारय सुतं मम ॥ ८२ ॥ तथेत्युक्त्वा नृपादेशं । चकौरष तथैव तु ॥ त्वरितं वीरसेनो-
ऽपि । निर्ययौ सरसो बहिः ॥ ८३ ॥ मनोहरकृतानेक—शृंगारो वीरभूपतिः ॥ पपात पादयोः पि-
त्रोः । सार्धं खेचरभूचरैः ॥ ८४ ॥ सूरसेनोऽवदद्वत्स । जनितं शीतलांभसा ॥ माभूज्जाड्यं शरीरे

त । तन्नाहूतोऽसि हेतुना ॥ ८५ ॥ राजाथ गजमारुह्य । वारसेनसमन्वितः ॥ प्रविवेश पुरीं चंपां । सर्वलोकयुतः पुनः ॥ ८६ ॥ सुतेन वर्धितानंद । इति सूरनरेश्वरः ॥ मेने निजसुखेनात्र । देवेंद्रमपि दुर्लभं ॥ ८७ ॥ अन्येद्युः पश्चिमे यामे । निशायाः सूरभूपतिः ॥ प्रसुप्तः सुखशय्यायां । सहसा स्वप्नमैक्षत ॥ ८८ ॥ वातोल्लालितकल्लोल—मालालक्षसमाकुले ॥ अमुं तं जलधौ नीत—मात्मानं स व्यलोकयत ॥ ८९ ॥ आरुरोह क्षणं राजा । स्वस्थः कल्लोलकोटिषु ॥ पुनः पपात पाताल—मूले मकरसंकुले ॥ ९० ॥ मकरोपहतस्तत्र । चक्रावर्तेषु सोऽभ्रमत ॥ दुःखार्त्तो विललापोपालभमानः सुतादिकान् ॥ ९१ ॥ ततः प्रवहणं दृष्ट्वा । मध्येंऽभोधि कथंचन ॥ पर्याकुलमनास्तत्र । विलग्नो वसुधापतिः ॥ ९२ ॥ निर्यामकस्य वाक्येन । त्यक्ताशंकः प्रमोदभाक् ॥ तदारूढः क्षणेनैव । प्राप हर्षपुरं क्षणात् ॥ ९३ ॥ तत्र प्राप्तमहानंद—सुखसंतुष्टमानसः ॥ दृष्ट्वा स्वप्नममुं राजा । जजागार ततः क्षणात् ॥ ९४ ॥ प्रबुद्धो वीक्षते याव—त्तावन्न जलधेर्जलं ॥ न कलत्रं न पुत्रं च । न च तान् जलदेहिनः ॥ ९५ ॥ न तं पोतं न निर्यामं । न तद्धर्षपुरं पुरः ॥ आत्मानमेकमेवैषो—ऽपश्यच्छय्यास्थितं तदा ॥ ९६ ॥ युग्मं ॥ दध्यावथ महीपालः । साक्षात्किं वा मतिभ्रमः ॥ इंद्रजा-

लब्धुतस्वप्न—स्तत्व ॥ ९७ ॥ स्वप्नोऽयं नापरं किंचि—दिति निश्चित्य चेतसि ॥ प्रभाते कथयामास । स सर्वं स्य तत् ॥ ९८ ॥ समस्तग्रंथनत्वज्ञो । वीरसेनस्ततोऽवदत् ॥ स्वप्नो देव प्रशस्तोऽयं । परिणामे शुभावहः ॥ ९९ ॥ आविःकुर्वन्नयं स्वप्नः । संसारासारतामिह ॥ प्रतिबोधं विधत्ते न । कस्य भव्यस्य मानसे ॥ २०० ॥ संसार एष एवात्र । पारावारो व्यवस्थितः ॥ लक्षाश्चतुरशीतिश्च । कल्लोला जीवयोनयः ॥ १ ॥ योनिलक्षेषु सर्वेषु । स्वकर्मपवनेरितः ॥ कल्लोलेष्विव जीवोऽय—मध ऊर्ध्वं च गच्छति ॥ २ ॥ राज्योदयं मनुष्यत्वे । लहरीशिखरोपमं ॥ लब्ध्वा क्षणसुखं वेत्ति । न पुनः पतनं ततः ॥ ३ ॥ करोति तानि पापानि । तत्रात्पसुखहेतवे ॥ यैर्जीवैः क्षिप्यते शीघ्र—मधो नरकभूमिषु ॥ ४ ॥ परमाधार्मिकास्तत्र । नक्रान्नाः संति भूपते ॥ जीवः कदर्थितांगस्तैः । सहते गुरुवेदनां ॥ ५ ॥ क्रकचोत्कर्तनं कुंभी—पचनं यंत्रपीडनं ॥ इत्यादिवेदनाः सर्वा । आवर्तास्तत्र भूरिशः ॥ ६ ॥ यातनाशतसंजात—दुःखसंभारभंगुरः ॥ सुभटोऽप्यतिधीरोऽपि । जीवः क्रंदति तत्र वै ॥ ७ ॥ यन्निमित्तं चकारैष । प्राक् पापानि पुनर्भवी ॥ ज्ञात्वा पूर्वभवं ज्ञाना—त्तानुपालभते पुनः ॥ ८ ॥ ततस्तिर्यग्भवे भ्रांत्वा । कथंचित्कर्मलाघवात् ॥ जीवः प्राप्नोति मानु

ध्यं । पुनरुच्चोर्मिसंनिभं ॥ ९ ॥ जिनधर्मो महापोतः । प्राप्यते नरजन्मनि ॥ गुरुर्निर्यामकस्तत्र । ज्ञातव्यो धर्मशासकः ॥ १० ॥ गुरुनिर्यामकोद्दिष्ट—धर्मप्रवहणास्थिताः ॥ भवांभोधेः परं पारं । जीवा गच्छंति वेगतः ॥ ११ ॥ प्राप्तं हर्षपुरं यच्च । तन्निर्वाणं न संशयः ॥ यतस्तत्र गतैर्हर्षः । प्राप्यतेऽनुपमो नृप ॥ १२ ॥ न जरा तत्र नो मृत्यु—र्व्याधयो नो न चासुखं ॥ अनेन हेतुना तात । संतोषस्तेऽभवद्दृशं ॥ १३ ॥ युष्मत्स्वप्नानुमानेन । तर्कितो देव तन्मया ॥ गुरुनिर्यामकादेशा—द्धर्मयोगो भविष्यति ॥ १४ ॥ समालिंग्य ततः पुत्रं । सहर्षः सूरसेनराट् ॥ उवाचैष त्वया सत्यः । स्वप्नार्थः कथितः सुत ॥ १५ ॥ एष एवाभिधेयोऽत्र । सत्यो भवतु नान्यथा ॥ अर्थांतरभयभ्रांतं । चेतः स्वस्थं बभूव मे ॥ १६ ॥ विषमोऽयं भवांभोधि—रिहैव मम जन्मनि ॥ प्रकटस्त्वद्वियोगेन । दुःखाकर इवाभवत् ॥ १७ ॥ संसारे न सुखं किंचि—त्तत्वबुद्ध्या निरीक्ष्यते ॥ निःशेषं दुःखमेवास्ति । स्वकर्मजनितं पुनः ॥ १८ ॥ धर्मार्थकाममोक्षाणां । मध्ये सर्वोत्तमः पुनः ॥ मोक्ष एव पुमर्थोऽत्र । सर्वसौख्यनिकेतनं ॥ १९ ॥ उद्यतास्त्रिषु मुख्येषु । संति सर्वत्र पूरुषाः ॥ मोक्षार्थमुद्यताः किंतु । दुर्लभा भुवने भृशं ॥ २० ॥ स्वयंभूरमणोऽब्धीनां । यथा मेरुर्महीभृतां ॥ अपवर्गसुखं सर्व—सुखाना-

मधिकं तथा ॥ २१ ॥ कृतगेहोचिताचार—स्ततोऽहमधुना सुत ॥ युष्माभिः समनुज्ञातो । मोक्षहे- तुं व्रतं श्रये ॥ २२ ॥ वीरसेनः पुनः स्माह । यथा देव त्वयोदितं ॥ एवमेवाकलंकेन । कथितं शि- वशर्म मे ॥ २३ ॥ सर्वेषां युक्तमेतद्धि । विशेषाच्च भवादृशां ॥ मा विधेहि विलंबं त—त्सिध्यतात्त- व वांछितं ॥ २४ ॥ यो दैवात्प्राप्तबोहित्थं । मज्जंतं जलधौ नरं ॥ पुनरुत्पाट्य तत्रैव । प्रक्षिपेत्स रि- पुर्पुनः ॥ २५ ॥ पतितं भवपाथोधौ । प्रव्रज्यावहनोद्यतं ॥ निषेधति नरं यः स । परमार्थरिपुस्ततः ॥ २६ ॥ अनुकूलं वचः श्रुत्वा । तनयस्य नरेश्वरः ॥ आनंदभरसंपूर्णो । वक्तुमेवं प्रचक्रमे ॥ २७ ॥ सत्यं तत्वमयं चैत—द्वीरसेन वचस्तव ॥ ईदृशाः प्राय आलापा । भाविता नां जिनोक्तिभिः ॥ २८ ॥ वीरः स्माह महीस्वामि—न्नालापा नैव केवलं ॥ तवादेशाद्ग्रहीष्येऽह—मपि दीक्षाविधिंप्रति ॥ २९ ॥ गुरुणोत्साहितेनापि । मयेयद्यद्विलंबितं ॥ तद्धि द्वीपांतरात्तात । तवानयनहेतवे ॥ ३० ॥ प्रतिपुत्र- मुवाचाथ । पिता गद्गदया गिरा ॥ पूरयन्नात्मनो नेत्रे । स्नेहबाष्पजलोर्मिभिः ॥ ३१ ॥ मैवं ब्रूहि सुपुत्र त्वं । कालोऽयं ते न दीक्षितुं ॥ क्रियमाणं भवेत्कार्यं । सफलं समये किल ॥ ३२ ॥ निर्जि- तामरसौभाग्य—स्त्वमद्याप्यर्थ्यसे ननु ॥ कृतकामविकाराभिः । सुरीभिरपि संमदात् ॥ ३३ ॥ अम्ला-

णं तव तारुण्य-मिव शारदपंकजं ॥ न मनाक् स्पृश्यतेऽद्यापि । जरया शिशिरश्रिया ॥ ३४ ॥ अ-
न्यच्चायं मनःसिंहो । स्खलितो यौवने वने ॥ माहात्म्यं सुभटत्वस्य । भनक्ति महतामपि ॥ ३५ ॥
इंद्रियग्राम एषोऽति—चपलो वायुवद्बली ॥ निरोद्धुं शक्यते वीर । न प्रयत्नशतैरपि ॥ ३६ ॥ कु-
लीनं सुभटं धीरं । सगुणं चापि पूरुषं ॥ विडंबयति कामोऽयं । त्रिजगज्जयगर्वितः ॥ ३७ ॥ तव प्र-
णयिनी चेय—मनुरक्ता मही त्वयि ॥ मुच्यमाना त्वया किं न । स्फुटित्वा हि मरिष्यति ॥ ३८ ॥
निर्नाशिताखिलद्वेषि—तिमिरे विश्वदीपके ॥ त्वयि प्रव्रजति स्वामि—न्यंधकारो भविष्यति ॥ ३९ ॥
त्वयैका लालिता एताः । पालिताः पितृवत्प्रजाः ॥ निर्वास्यंति यमालोक्य । न तं पश्यामि पूरुषं
॥ ४० ॥ इत्यादि बहुधा जल्पन् । बभाषे सूरनृपतिः ॥ पूर्वोदितपरीहार—सुंदरं वीरनृभुजा ॥ ४१ ॥
यत्त्वया गदितं देव । न दीक्षासमयादिकं ॥ मम विज्ञापनां तत्रो—चितां शृणु यथाक्रमं ॥ ४२ ॥
दीक्षाकालो न चेदेष । तत्किं मे स भविष्यति ॥ जराजीर्णो भविष्यामि । यताहं विकलेंद्रियः
॥ ४३ ॥ निश्चयो यदि मृत्योः स्या—त्कालोऽपि प्रतिपाद्यते ॥ तस्मिन्ननिश्चिते कुर्या—त्को वि-
लंबं यतिव्रते ॥ ४४ ॥ कोऽनुबंधोऽपि रूपेऽपि । तुर्यचक्रिनिदर्शनात् ॥ क्षणिको रूपसंयोगो । वेषो

वेषकृतो यथा ॥ ४५ ॥ तारुण्यं गणितं यच्च । तद्दीक्षामुख्यकारणं ॥ स्थविरत्वे कथं शक्यो । यत्तपःसंयमोद्यम. ॥ ४६ ॥ मनःसिंहं स्खलिष्यामि । ततोऽसंयमसेविनं ॥ तद्विपक्षमहावीर्य—सिद्धांतसरआश्रयात् ॥ ४७ ॥ आक्रांतमविवेकेना—त्रोत्पथं नयते नरं ॥ स विवेकं तदेव स्या—च्छांतताकारणं मनः ॥ ४८ ॥ अविवेकानिलेनोच्चैः । क्षोभिते चित्तवारिधौ ॥ तरंगा इव जायंते । विकारास्तु न तं विना ॥ ४९ ॥ इंद्रियाणि तु सर्वाणि । चित्तायत्तानि भूपते ॥ वश्यानि न कथं तानि । स्युश्चित्तेऽत्र वशीकृते ॥ ५० ॥ विरुद्धमपि वस्तु स्या—दविरुद्धं प्रयोगतः ॥ हिंसात्मकं विषं मंत्र—हतं स्यादमृतोपमं ॥ ५१ ॥ ज्वलत्तपोऽनलज्ज्वाला—दुःप्रेक्ष्ये मम वर्ष्मणि ॥ विलेख्यते तु वेगेन । मदनोऽमदनं यथा ॥ ५२ ॥ न चेन्मत्तमनोजन्म-गजं भनज्मि लीलया ॥ निरर्थका ततो नूनं । वीर इत्यभिधा मम ॥ ५३ ॥ कुमारेऽमरसेनेऽत्र । विद्यमाने नरेश्वर ॥ भविष्यति महाबाहौ । निर्नाथा पृथिवी कथं ॥ ५४ ॥ प्रवसत्यपि मय्यंध—कारं नात्र भविष्यति ॥ प्रदीपादिव दीपेऽतो—ऽमरसेने प्रवर्तिते ॥ ५५ ॥ अभिषिक्ते नृपे तस्मिन् । प्रतापेनातिदुःसहे ॥ निर्वास्यंति प्रजाः सर्वा—स्तात लब्ध्वा पतिं वरं ॥ ५६ ॥ तत्वबुद्ध्या परिज्ञात—सर्वभावस्य ते कथं ॥ विन्यासा

वचसां देव । निर्ययुस्तत्ववर्जिताः ॥ ५७ ॥ कथंचिद्दैवयोगेन । जातो योगस्त्वया समं ॥ वियोज-
यसि त्वं देव । तत्कथं मां निजांह्रितः ॥ ५८ ॥ करिष्यामि तथा तात । यथावां शिवसद्मनि ॥ नो-
द्वयावहे सदैव द्वा—ववियुक्तौ महासुखं ॥ ५९ ॥ एवं तौ जल्पतो याव—त्पितृपुत्रौ परस्परं ॥ ता-
वेव तावदायाता—वकलंकामलौ मुनी ॥ ६० ॥ उच्चरद्भिर्जयध्वानं । परितो नृरनिर्जरैः ॥ वेष्टितौ
केवलज्ञान—भासाभासितविष्टपौ ॥ ६१ ॥ युग्मं ॥ श्रुत्वागतौ वने नाकि—भक्तिसंभारबंधुरौ ॥ तौ
मुनी अवदद्वीरो । नेरंडैतौ गुरू मम ॥ ६२ ॥ रभसोत्थाय सप्ताष्ट—पदान्यभ्येत्य सन्मुखं ॥ ज्ञानिनौ
सूरवीरान्यां ॥ ववंदाते तदैव तौ ॥ ६३ ॥ ततस्तौ जिनचैत्येषु । कारिताष्टाह्निकामहौ ॥ स्वराज्येऽ-
मरसेनं तं । परिसंस्थाप्य निर्वृतौ ॥ ६४ ॥ आपृष्टपौरसामंत—मंत्रिमुख्य परिच्छदौ ॥ वांगाधिकमहा-
दान—प्रीणितानेकमार्गणौ ॥ ६५ ॥ खेटेंद्रशेखराशोक—बंधुदत्तसमन्वितौ ॥ विचित्रयशसा राज्ञा ।
सहादृतां व्रतोद्यतौ ॥ ६६ ॥ त्रिभिर्विशेषकं ॥ कृतमज्जननेपथ्याः । सर्वेऽपि शिबिकास्थिताः ॥ न-
रविद्याधरानेक—लोकसंमर्दशालिनः ॥ ६७ ॥ स्वस्वांतःपुरनारीभि—रनुयाताश्चतुःपथे ॥ शृण्वंतो वि-
विधालापा—न्नागराणां विनिर्ययुः ॥ ६८ ॥ युग्मं ॥ काचिज्जगाद सख्यान्यां । विना विश्वं भविष्य-

ति ॥ निःश्रीकं चंद्रसूराभ्या—मिव व्योमतलं क्षणात् ॥ ६९ ॥ अन्यानि व्रतकष्टानि । दूरे संतु पुनः सखि ॥ करिष्यति कथंकार—मधुनैष युवा तपः ॥ ७० ॥ चंडश्रियो मृदुः केश—कलापो वासितः सुमैः ॥ भविष्यति कथं लोच—दुःखसंभारभाजनं ॥ ७१ ॥ तांबूलारुणिता दंता । मल्लिकाकलिका समाः ॥ धरिष्यंति कथं सख्यः । सांप्रतं मलमंडलीः ॥ ७२ ॥ हरिचंदनकस्तूरी—वास वासितदिङ्मुखे ॥ द्रष्टव्यास्तु कथं देहे । वीरस्य मलसंचयाः ॥ ७३ ॥ विश्वदुर्लभवस्त्राणि । यश्च दिव्यानि पर्यधात् ॥ स्थूलचीवरखंडानि । स कथं परिधास्यति ॥ ७४ ॥ कृत्वा हतबुभुक्षानि । यो जगत्यपि भुक्तवान् ॥ क्षुधाक्षीणः कथं सोऽयं । भ्रमिष्यति गृहे गृहे ॥ ७५ ॥ हाहा हता वयं सख्यो । जीविताः किमियच्चिरं ॥ द्रक्ष्यामो नरनाथं य—त्प्राप्तमीदृक्स्वरूपतां ॥ ७६ ॥ सखि पश्य महासत्व । उदारो वीरभूपतिः ॥ योऽत्याक्षीध्धूलिवल्लक्ष्मीं । मलसंगभयादिव ॥ ७७ ॥ अस्मादृक्षास्तु हे सख्यो । जातलोभास्तृणेऽपि हि ॥ पिधानिकामपि त्यक्तुं । विद्यमानामिहाक्षमाः ॥ ७८ ॥ वीरेण नररत्नेन । सहसा त्यज्यतेऽत्र यः ॥ संपद्यमानसर्वेछा—सुखेन स्वामिनामुना ॥ ७९ ॥ सोऽवश्यं विरसः सख्यः । संसारो विरसाश्रितः ॥ उत्पादयति निर्वेद—मस्माकमपि चेतसि ॥ ८० ॥ युग्मं ॥ श्लाघ्यमानः पु-

रीलोकैः । परमार्थविचक्षणैः ॥ पितृमातृजनैः सार्धं । प्रापोद्यानं स सूरसूः ॥ ८१ ॥ अवतीर्यापि ते
सर्वे । याप्य यानान्निजान्निजान् ॥ प्रवर्धमानसद्भावा । गुरुपार्श्वे ततो ययुः ॥ ८२ ॥ गुरुं प्रदक्षिणी-
कृत्य । ब्रुलद्भूतलकुंतलाः ॥ स्तुतिपूर्वं महाभक्त्या । प्रणेमुस्ते व्रतार्थिनः ॥ ८३ ॥ कोशीकृतकराः
सर्वे । गुरुमेवं व्यजिज्ञपन् ॥ यद्यस्ति योग्यता स्वामिं—स्तदास्मानाशु दीक्षय ॥ ८४ ॥ अथाह के-
वली कोऽन्यो । दीक्षायोग्यो विनास्ति वः ॥ स्वयमेवैष संसारो । यैर्ज्ञातो दुःखनिर्मितः ॥ ८५ ॥
उपदेशशतैः केऽपि । न बुध्यंते घनांहसः ॥ अन्ये निमित्तमात्रेण । बुध्यंतेऽत्र भवादृशाः ॥ ८६ ॥
सूरो वीर इति द्वे वां । नाम्नी सत्ये बभूवतुः ॥ भावारिनिग्रहे काम—मुद्यमं कुर्वतोरिह ॥ ८७ ॥ त्रै-
लोक्ये सकलेऽप्येवं । यूयं धन्या नरेश्वराः ॥ युष्माभिरेव लब्धं च । मर्त्यजन्ममहाफलं ॥ ८८ ॥
माकार्ष्ट भो विलंबं त—त्कार्यं सिध्यतु वांछितं ॥ इत्युक्ते गुरुणा सर्वे-ऽप्युत्तस्थुर्व्रतवांछया ॥ ८९ ॥
सर्वमुत्तारयामासु—र्हाराद्याभरणव्रजं ॥ पाशबंधं भवस्येव । प्रफुल्लमुखपंकजाः ॥ ९० ॥ पंचमुष्ट्या
कृते लोचे । विधिनागमिकेन ते ॥ दीक्षिता अकलंकेन । गुरुणा ज्ञानिना क्रमात् ॥ ९१ ॥ खे-
टंडशेखराशोक—विचित्रयशसस्तथा ॥ बंधुदत्तोऽपि चान्येऽपि । दीक्षितास्तत्र भूरिशः ॥ ९२ ॥ अं-

तःपुर्योऽपि सर्वेषां । देवीं चंद्रश्रियं विना ॥ गुरुणा दीक्षिताः सर्वा–स्तत्र साध्वीविधिक्रमात् ॥ ९३ ॥
चंद्रश्रीस्तु महादेवी । वीरसेनप्रिया तदा ॥ मातृश्वश्रूजनैः सार्धं । प्रव्रजंती निवारिता ॥ ९४ ॥ न
योग्यास्यधुना वत्से । दीक्षाया गर्भसंभवात् ॥ कालांतरेण योग्यत्वं । भविष्यति पुनस्तव ॥ ९५ ॥
निषिद्धायास्तदा तस्या—श्चरितं यदभूत्पुरः ॥ हरिविक्रम तत्सर्वं । त्वया यद्गमुखात श्रुतं ॥ ९६ ॥
ततो मात्रा समं राजा—मरसेने गते गृहं ॥ सूरवीरमुनी सार्धं । गुरुणा तौ विजह्रतुः ॥ ९७ ॥ प्र-
वर्धमानसंवेगा—स्ततस्ते मुनयो नवाः ॥ आगमोक्तक्रमेणोग्रं । तपश्चेरुर्निरंतरं ॥ ९८ ॥ षष्ठाष्टमा-
दिमासार्ध—मासक्षपणनामभिः ॥ अस्थिचर्मविशेषं ते । तपोभिर्विदधुर्वपुः ॥ ९९ ॥ एकस्मिन्
संयमे सक्ता । मुक्ता द्विविधबंधनैः ॥ न दंभितास्त्रिभिर्दंभै—र्निःकषायचतुष्टयाः ॥ ३०० ॥ समितीः
पंच रक्षंतः । षड्जीवावनतत्पराः ॥ सप्तभीतिषु निर्भीका । मदाष्टकविवर्जिताः ॥ १ ॥ सुनवब्रह्मगु-
साढ्या । दशधा धर्मसाधकाः ॥ एकादशांगसूत्रज्ञा । द्वादशप्रतिमोद्यमाः ॥ २ ॥ चतुर्भिः कलापकं ॥
ग्रीष्मकालेऽथ मध्याह्ने । प्रलंबितभुजद्वयाः ॥ चक्रुरातापनामूर्ध्व–दमा एते मुनीश्वराः ॥ ३ ॥ दुस्स-
हेनार्कतापेन । निर्यत्स्वेदजला बभुः ॥ ध्यानाग्निना विलीनांत—र्निर्यत्पापमला इव ॥ ४ ॥ आसा-

रस्थूलधाराभिः । प्लाविते वसुधातले ॥ संलीनास्ते स्मतिष्ठंति । वर्षाकाले दरीष्वथ ॥ ५ ॥ प्रत्या-
ख्याय चतुर्मास्या—माहारं च चतुर्विधं ॥ व्रतभंगभयात्स्थाना—न्न चेलुः पदमप्यमी ॥ ६ ॥ शिशि-
रे सहिरे शीत । ते निःप्रावरणा निशि ॥ हिमनिपातनिर्भीका । हिमपांडुरविग्रहाः ॥ ७ ॥ बभु-
स्ते हिमवातेन । कंपितौष्ठदलास्तदा ॥ दुष्टकर्माष्टकोच्छेद—रोषेणेव प्रकंपिनः ॥ ८ ॥ रक्षोऽट्टहास-
भीमासु । श्मशानोर्वीषु ते क्वचित् ॥ अक्षुब्धहृदयाश्चक्रुः । कायोत्सर्गं मुमुक्षवः ॥ ९ ॥ तेषां राज-
पथे क्वापि । निश्चलप्रतिमाजुषां ॥ घर्षतिस्म वृषाः स्तंभ—भ्रमेणांगे वपुर्निजं ॥ १० ॥ सूरवीरादि-
साधूना—मेवं दुःकरकारिणां ॥ बहवो वासराः सत्व—शालिनामतिचक्रमुः ॥ ११ ॥ अकलंकस्त-
तो ज्ञात्वा । योग्यं वीरं महामुनिं ॥ आचार्यं स्थापयामास । मुनिपंचशतीपतिं ॥ १२ ॥ आचार्य-
स्थापनाकाल । एवोत्पन्नमहावधिः ॥ बभूव व्योमगामी च । तपसा दुःकरेण सः ॥ १३ ॥ श्रीवीर-
सेनसूरिः स । सूरवद्वसुधातले ॥ विहरत्यधुनाप्युच्चैः । क्रमेणोत्पन्नकेवलः ॥ १४ ॥ हरिविक्रमराजेंद्र ।
प्रत्यक्षः स तवाप्यभूत ॥ देव्या भुवनसुंदर्याः । पाणिग्रहणपर्वणि ॥ १५ ॥ श्रीवीरसेनसूरिः स । प्र-
भातेऽत्र समेष्यति ॥ उत्पन्नकेवलज्ञानैः । सूरसेनादिभिः समं ॥ १६ ॥ अतोऽहं वच्मि राजेंद्र ।

राज्यश्रीः क्षणभंगुरा ॥ गृहीता नरसिंहेन । सूरसेननरेश्वरात् ॥ १७ ॥ ततोऽपि वीरसेनेन । जगृहे क्षणमात्रतः ॥ पुण्यक्षये न कस्यापि । लक्ष्मीर्भवति निश्चला ॥ १८ ॥ सूरसेनसमो भूमा—विह नाभूत्पराक्रमी ॥ तेनाप्याजौ निजं राज्यं । विनश्यन्नैव रक्षितं ॥ १९ ॥ बृहस्पतिसमो मंत्री । नाभूदिह महीतले ॥ राज्यभ्रंशे न तस्यापि । व्यस्फुरद्बुद्धिवैभवः ॥ २० ॥ सर्वोऽपद्रवतो देशो । रक्षितोऽप्यतिपोषितः ॥ पुण्यक्षये स्वकीयोऽपि । परकीयः क्षणाद्भवेत् ॥ २१ ॥ दुर्गाण्यपि सुगम्यानि । भवंति खलु वैरिणां ॥ चित्रन्यस्तेव सेनापि । जायते चतुरंगिणी ॥ २२ ॥ प्रतिबंधं महाराज । ममत्वेति कुरु मा क्वचित ॥ राज्ये पुत्रे कलत्रे च । कोशे वैषयिके सुखे ॥ २३ ॥ सांतःपुरपरीवारः । श्रुत्वा तां देशनां नृपः ॥ संसारसुखनिर्विण्णः । पुरीमध्ये पुनर्ययौ ॥ २४ ॥ अभिषिच्य निजे राज्ये । कुमारं सुरविक्रमं ॥ वीरसेनगुरोर्वांगं । चकार हरिविक्रमः ॥ २५ ॥ वीरसेने गुरौ तत्र । केवलज्ञानभास्करे ॥ आगते कारयामास । निजं निःक्रमणोत्सवं ॥ २६ ॥ शक्रावतारमुख्येषु । चैत्येषु नृपकुंजरः ॥ सर्वर्द्ध्या कारयामास । प्रौढमष्टाह्निकामहः ॥ २७ ॥ तेनार्थं ददता चक्रे । तथा विश्वमयाचकं ॥ यथा न ग्राहकः कोऽपि । दाता सर्वोऽप्यदृश्यत ॥ २८ ॥ प्रशस्ते दिवसे राजा । स्नातः कु-

तद्विलेपनः ॥ सार्धं भुवनसुंदर्या । नानाभरणभूषितः ॥ २९ ॥ जयवारणमारूढो । वसानो दिव्यवाससी ॥ चामराभ्यां च छत्रेण । राजमानो ययौ पथि ॥ ३० ॥ युग्मं ॥ वंदित्वा प्रथमं शक्रा—वतारस्थं जिनेश्वरं ॥ गुरुं प्रदक्षिणीकृत्य । नेमतू राजदंपती ॥ ३१ ॥ उत्तार्याभरणान्याशु । दंपती तौ शरीरतः ॥ पंचभिर्मुष्टिभिर्लोचं । सहर्षं चक्रतुः स्वयं ॥ ३२ ॥ गुरुणा दीक्षितौ सम्यक् । सिद्धांतविधिना ततः ॥ मुनिलिंगप्रदानेन । राजा राज्ञी च तौ क्रमात् ॥ ३३ ॥ अन्येऽपि सहितास्ताभ्यां । सामंता मंत्रिणो जनाः ॥ पौरा जानपदाश्चापि । घनाः प्रव्रजितास्तदा ॥ ३४ ॥ चंद्रश्रियः प्रवर्तिन्याः । साध्वी भुवनसुंदरी ॥ अर्पिता गुरुणा त्वन्ये । मुनयः स्वांतिके धृताः ॥ ३५ ॥ अभ्यस्तसंयताचारो । गीतार्थो हरिविक्रमः ॥ गुरुणा स्थापितो योग्य । इत्याचार्यपदे ततः ॥ ३६ ॥ एकादशांगसूत्रार्थ—धारिणी यतिनीव्रजे ॥ प्रवर्तिनी बभूवापि । साध्वी भुवनसुंदरी ॥ ३७ ॥ वीरसेनोऽथ सूरिः स । बोधयन् जगतीतलं ॥ शत्रुंजयगिरिं प्राप । सिद्धालयविभूषितं ॥ ३८ ॥ भवोपग्राहिकर्माणि । क्षिप्त्वा तत्र स सूरिराट् ॥ सूरसेनादिभिः सार्धं । मुनिभिः प्राप निर्वृतिं ॥ ३९ ॥ हरिविक्रमसूरिस्तु । विहरन्नवनीतलं ॥ जगाम सपरीवारो । मलयाचलभूमिकां ॥ ४० ॥ चंद्रश्रीविजय-

वती—युक्ता भुवनसुंदरी ॥ अन्या अपि महासत्य—स्तत्र निर्वाणमासदन् ॥ ४१ ॥ यक्षो मलय-
मेघोऽथ । तत्रैत्य सपरिच्छदः ॥ महिमानं महाभक्त्या । चक्रे तासामकर्मणां ॥ ४२ ॥ सुखासनसमा-
सीनो । विजने गिरिगह्वरे ॥ हरिविक्रमसूरिः स । शुक्लध्यानं ततोऽकरोत् ॥ ४३ ॥ नानाश्रुतविचा-
रेण । परिश्रांतं मनश्चिरं ॥ एकस्मिन्निश्चलीचक्रे । पदार्थे तेन योगिना ॥ ४४ ॥ शुक्लध्यानांतरे
तस्य । वर्तमानस्य तत्क्षणात् ॥ घातिकर्मक्षयाद् ज्ञान—मुत्पेदे केवलाभिधं ॥ ४५ ॥ दिवि दुंदु-
भयो नेदु—र्मिलिताश्च सुरासुराः ॥ महं केवलिनः कर्तुं । हरिविक्रमसंज्ञिनः ॥ ४६ ॥ हेमांभोरुह-
मास्थाय । सर्वज्ञः सर्वदर्श्यसौ ॥ श्रोतृकर्णपुटैः पेयां । विदधे धर्मदेशनां ॥ ४७ ॥ ततो विहृत्य व-
सुधां । बोधयित्वाखिलं जनं ॥ निर्वाणसमयं ज्ञात्वा । जगाम विमलाचलं ॥ ४८ ॥ ज्ञात्वाधिकानि
सर्वाणि । निजायुःकर्मणः किल ॥ शैलेशीकरणं चक्रे । समीकर्तुं स केवली ॥ ४९ ॥ कर्माणि स-
र्वाणि ततो विधूय । शुद्धश्चिदानंदमयो महात्मा ॥ मुनीश्वरः श्रीहरिविक्रमः स । महोदयं प्राप प-
दं रयेण ॥ ५० ॥ हरिविक्रमवीरसेनयोः । प्रथमे जन्मनि पालितं यथा ॥ अनवद्यचरणं फलोत्तरं ।
सकलस्यापि जनस्य तथा तथा ॥ ५१ ॥ श्रुत्वा चारित्ररतस्यो—पाख्यानं कथितं मया ॥ संतः कु-

र्वंतु सर्वेऽपि । चारित्रे द्विविधे मतिं ॥ ५२ ॥ चारित्ररत्नफलवाचकमेतदेवं । चित्रं चरित्रमिह नंदतु नंददायि ॥ श्रद्धालुकर्णपुटकेष्वमृतायमानं । वाक्च्यमानमनिशं मुनिराजवृंदैः ॥ ५३ ॥ इदं चरित्रं मलपत्रमात्रं । सुवर्णगात्रं प्रविधाय येन ॥ स्वं नाम सत्यार्थमकारि जीया—द्गणीश्वरः सोऽमरकीर्तिनामा ॥ ५४ ॥ नंदंतु ते लक्षणशास्त्रविज्ञा । धन्या जिनेंद्रप्रमुखा विनेयाः ॥ सलक्षणं यैर्विदधे विशेषा—दिदं चरित्रं प्रविशोध्य सर्वं ॥ ५५ ॥ इत्यागमिकश्रीचारित्रप्रज्ञसूरिशिष्यश्रीजयतिलकसूरिविरचिते तद्गांधवामरकीर्तिगणिविलिखिते श्रीहरिविक्रमचरित्रे महाकाव्ये श्रीहरिविक्रममहोदयप्रापणो नाम द्वादशः सर्गः समाप्तः. ॥ श्रीरस्तु ॥

॥ इति श्रीहरिविक्रमचरित्रं समाप्तं ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंम्डित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीहरिविक्रमचरित्रं समाप्तं ॥

॥ इति श्रीसांबप्रद्युम्नचरित्रं समाप्तं ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादब्धाधरितदिव्यसुधासमूहं ॥
संसारकाननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥



आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

स्तेषां च येन पदवी प्रददे स्वकीया ॥ आविश्यतोऽधियत तेन गुरोरपीह । पूज्यो जनैः सहजसागरको विदग्धः ॥ ४९ ॥ स्वब्दशास्त्रघनतर्कजिनागमाना—मध्यापको विशदसंयमशोभमानः ॥ साधुक्रियाविनयसागर ईहितार्था—श्चक्रे नृणां विनयसागरलब्धवर्णः ॥ ५० ॥ इति श्रीमद्गुरुपरंपराप्रशस्तिपंचाशिका ॥

एतेषामनुभावतो भगवतो ध्यानान्महानंदतो । भासंपत्तिकृतेर्विपत्त्यपहतेर्दुर्योनिदुःखापहात ॥ सोल्लासं रविसागरो रचितवान् प्रज्ञानुसारादिदं । श्रीप्रद्युम्नचरित्रमत्र सकलश्रोतृश्रुतौ शर्मदं ॥५१॥ यत्राभूद्रचनार्हतां समवसृत्याः सर्वकृत्याधिका । पापर्धेर्नियमं चकार च चतुर्दश्या दिने भूपतिः ॥ ॥ भूवाःखेचरपारणाजननमात्वर्षं सहर्षं जिन—प्रासादोध्धृति निर्मितिः समभवद् द्रव्यव्ययैर्भूरिशः ॥ ५२ ॥ तस्मिन्मांडलिनाम्नि चारुनगरे खेंगारराजोत्तमे । संपूर्णं समजायतोरुचरितं प्रद्युम्ननामानघं ॥ संख्यातश्च सहस्रसप्तकमिदं द्वाभ्यां शताभ्यां शुभं । पंचांभोनिधिषड्निशापतिमिते वर्षे चिरं नंदतात् ॥ ५३ ॥ इति श्रीसांबप्रद्युम्नचरित्रं समाप्तं. ॥ श्रीरस्तु ॥

---

पैति न सोऽपरोऽर्कः । प्राप्नोति तं निखिलविष्टपदुःखहेतुं ॥ ४१ ॥ यद्भाग्यभानुरधिको वरिवर्ति लोके । राज्ञोऽपि दीधितिविनिर्मिततः स चैवं ॥ अन्यः कथं दिनकरः प्रकरोति राज्ञ—स्तन्निर्मितेः स्वयमपीह लभेत तं सः ॥ ४२ ॥ तद्यौवराज्यदवीं च दधन्मुनीनां । कुर्वन् सुखानि भुवनं च विमोहयन् सः ॥ भट्टारको विजयसेनगुरुः प्रसन्नो । भूयाद्भवाब्धिभवभारभरप्रभेदी ॥ ४३ ॥ शुक्लियोऽभ्धृतिलसत्समयस्य साधो—रादावशोभयदलंकृतिवद्दपुर्वा ॥ विभ्राजिवाचकपदं श्रमणेषु मुख्य—माचार्ययोग्यपदवीभवनास्पदं यः ॥ ४४ ॥ भूयस्तपोजपविशुद्धतमक्रियाभि—राराधितो भगवतो ननु येन धर्मः ॥ श्रीहर्षसागरसमुल्लसने शशी स । श्रीहर्षसागरमनोरमवाचकोऽभूत् ॥ ४५ ॥ प्रद्योतनेन पृथिवीवलयं स्वगोभि—र्निष्पाद्यते घनतमोरहितं यथैतत् ॥ अज्ञानतामसततिं च तथा विनाश्य । मिथ्यादृशामकृत यो जिनधर्मतेजः ॥ ४६ ॥ संक्रंदनस्य कठिनाचलभेदनाय । वज्रं यथा भवति सर्वजनप्रसिद्धं ॥ आबाल्यतोऽपि समजायत यस्य भाग्यं । पुण्यात्तथा निखिलविघ्नविनाशनाय ॥ ४७ ॥ श्रीराजसागरसमप्रमदप्रदं तं । श्रीराजसागरसुता जनकं प्रकामं ॥ श्रीराजसागरतमोरणनिम्नगाभं । श्रीराजसागरगुरुं विबुधं च वंदे ॥ ४८ ॥ अध्यापिताः प्रथमतस्त्वपरे विनेया—

पृथिवीतलपालकोऽसौ ॥ ३४ ॥ केचिद् द्विजान् शुचिकुलान् प्रतिबोधयंति । सूक्ष्मक्रियान् स्वकृतसंगरनिर्वहोत्कान् ॥ केचित्स्वकीयकलया वणिजः कुलीना–नन्यानपि प्रवरधर्मधियश्च केचित् ॥३५॥ लोकातिभीतिकरमुद्गलजातिजोऽपि । भूयिष्टपापकृदकब्बरपातसाहिः ॥ येनोग्रधर्ममतिना प्रतिबोधितोऽलं । सूरीशहीरविजयोऽत्र गुरुः स पूज्यः ॥ ३६ ॥ आचार्यनामधरणप्रवणाः प्रभूताः । संति स्वचित्तपरिकल्पितसूरिगर्वाः ॥ केनापि किंतु बिरुदं न दधे नरेंद्रा—न्मान्यः स योऽखिलजगद्गुरुरित्यधात्त ॥ ३७ ॥ श्रीस्थूलभद्रवदहो भुवने स्वनाम । श्रीहेमसूरिरिव यः प्रथितं चकार ॥ सूरीशहीरविजयो विजयोन्नतः स । जीयाच्चिरं मुनिषु सन्मुकुटायमानः ॥ ३८ ॥ इति भट्टारकपुरंदरश्री ५ श्रीहीरविजयसूरीश्वरकीर्तिसंयमरमणीसंवादोद्भूतपातिसाहिश्रीअकब्बरबहुमानदानवर्णनद्वात्रिंशिका.

द्राग् द्वादशारुणमरीच्यधिकप्रतापं । भाग्योदयद्युमणिमादधतः स्फुरंतं ॥ आचार्यवर्यपदवीभवनेन यस्य । खंभं जवात्समभवत्कुमतांधकारे ॥ ३९ ॥ ध्वांतस्य तस्य परिखंडनके प्रजाते । यद्भाग्यभासुरदिवाकर उद्गते च ॥ भूपालभक्तिबहुमानविधानयोगा—दुद्योत आशु समजायत सर्वलोके ॥ ॥ ४० ॥ यद्भाग्यकांतसविता परससससते—रधिक्यमाचरति तीक्ष्णमयूखवृंदैः ॥ रात्रावपि क्षयमु-

यावन्मुमुक्षुपतिना स जगाद तावत् ॥ सर्वव्रतीश वद किं प्रददामि तर्हि । तुभ्यं प्रसिद्धिजनकं शिव
दायि दानं ॥ २७ ॥ सूरिर्जगाद यदि दास्यसि मार्गितं मे । तद् द्वादशार्पयतमां दिवसानि यावत
॥ जंतोर्घनाश्रयजलस्थलचारिणोऽपि । निःस्वामिनोऽप्यभयदानममानपुण्यं ॥ २८ ॥ श्रुत्वा गुरोर-
मृततुल्यमशेषजंतु—प्रीत्यावहं वचनमुन्नतिकारकं च ॥ नृपो बभाण भगवंस्त्वयका यदुक्तं । नित्यं
भविष्यति हिताय ममापि तत्तु ॥ २९ ॥ तस्मात्त्वदुक्तमनघं वचनं करिष्या—म्युक्त्वेति भानुभवना-
न्वधिकप्रभाय ॥ आज्ञास्ति यत्र सदकब्बरपातसाहिः । प्रैषीच्च तत्र निजनामपवित्रलेखान् ॥ ३० ॥
केचिद्भयेन सुकृतेन च केचिदेतान् । सल्लज्जया मनसि केचिदमानयंस्तान् ॥ केनापि किंतु बलि
ना विफलीकृता न । लेखाः कृपाकरणतः स्फुरतीशगीर्हि ॥ ३१ ॥ ब्रह्मस्तनंधयवधूसुरभिप्रहारी । सा-
रंगशूकरमतंगजसिंहमारी ॥ येनेदृशोऽपि नृपतिः प्रतिबोधितो द्रा—ग्जीयाद्गुरुः स इति केचिदव-
र्णयंश्च ॥ ३२ ॥ विघ्नौपधप्रवरमंत्रगतं परीक्षा—कृत्यं विनैव हृदि निःस्पृहतां निरीक्ष्य ॥ योऽमान-
यद्गुरुमकब्बरपातसाहिः । सूरीशहीरविजयं स नृपोऽपि धन्यः ॥ ३३ ॥ जीवा जलस्थलखगा निज
जीवितव्य—दानेन चारुकरुणाकरणेन लोकाः ॥ आशीर्वचो ददुरकब्बरपातसाहे । जीयात्पितेव

ब्बरमहीपतिना प्रमोदा—दाकारितो द्रुततरं खलु हीरसूरिः ॥ १९ ॥ यस्य प्रतापतपने तपति क्ष्मायां । स्मेरत्वमृत्कुवलयं भवतीति चित्रं ॥ संकोचसंयुतमतीवमदेन माद्य—द्विद्वेष्यसंख्यवनितावदनारविंदं ॥ २० ॥ लोकत्रये मदयुता द्विरदा इवासं—स्ते चक्रिरे गतमदाः स्थविरा इवाशु ॥ सामान्यवृत्तिसहिता अथ सज्जना ये । ते स्वामितोरुगजवाजिधनाश्च येन ॥ २१ ॥ यस्य प्रतापगगनध्वजतः शुशोष । स्वीयेषु सुंदरगृहेष्वपि संस्थितानां ॥ रामपयोधरपयस्तिलकं ललाटे । निष्ठीवनं च वदने रिपुनृपतीनां ॥ २२ ॥ तेनाप्यकब्बरमहीरमणेन तत्व—श्रद्धालुनेव रचितांजलिनोत्तमांगे ॥ सूरीशहीरविजयस्य पुरो बहूनि । वस्तूनि चामुमुचिरे द्रविणादिकानि ॥ २३ ॥ सद्योगिनामपि मनांसि विभेदयंत्य—स्तीव्रैः कटाक्षविशिखैर्नयनद्वयोत्थैः ॥ संदर्शिता मृगदृशोऽपि मनोज्ञरूपा—श्चित्तं तथापि चलितं न मुनीश्वरस्य ॥ २४ ॥ नो तानि संजगृहिरे गुरुणा वसूनि । सत्स्वामिनेव च दृशापि न वीक्षितास्ताः ॥ एवं स्वरूपमवलोक्य जिनेंद्रधर्मे । श्रद्धा बभूव महती जगतीपतेर्द्राक् ॥ २५ ॥ धर्मेषु भाति सकलेष्वपि जैनधर्मः । सूरीशहीरविजयश्च गुरुष्वपीह ॥ तस्मादयं मम कृपाकलितोऽस्तु धर्मः । श्रीमद्गुरुर्भुवि जगद्गुरुनामधारी ॥ २६ ॥ नोपाददे किमपि ते न पुरो विमुक्तं ।

दु:खदायि । देशांतरेषु यदिवा भ्रमणं विधेयं ॥ ते द्वे ततो न विदुषात्र कदापि कार्ये । स्वस्मिन्न·
दभ्रसुखमंगलकामुकेन ॥ १२ ॥ सस्फुर्तिकीर्तिवनिता प्रथमा द्वितीया । दीक्षाविलासिरमणी रम·
णीयरूपा ॥ सूरीशहीरविजयस्य यतस्त्विमे द्वे । स्तो योषितौ स्फुरदलंकृतिपूरितांग्यौ ॥ १३ ॥ प्रा·
यो भवेत्तनुमतः प्रथमांगनायां । रागस्तनुः स गुरुताकलितोऽपरस्यां ॥ दृष्ट्वा गुरोरपि तथा प्रथमा
स्वरूपं ! जाता विषादसहिता समधारणेन ॥ १४ ॥ ते चक्रतुः प्रतिदिनं बहु काचपिच्य—मीर्ष्या·
वशात्तदसहिष्णुरसौ च दध्यौ ॥ नैतत्सहाम्यहमितीव विचिंत्य माना—त्तीर्थानि कर्तुमगमत त्रिज·
गद्ग्रथेह ॥ १५ ॥ सम्मेतशैलशिखरेऽत्र पवित्रयात्रां । कर्तुं गता स्थितवती निशि चांतराले ॥ र·
म्यागराख्यनगरे वरकीर्तिकांता । शुश्राव तत्र नरनाथ उपागतां तां ॥ १६ ॥ संसत्स्थितैस्तु सकलै·
रपि तत्प्रशंसां । निष्पादितामतिशयान्नृपतिर्निशम्य ॥ चित्ते चमत्कृतिधरः समजायतोच्चै—स्तद्दर्श·
नोत्सुकमनाः स बभूव तस्मात् ॥ १७ ॥ आकारिता नृपतिना प्रविलोकितुं सा । तावत्ततः प्रचलि·
ता त्रिदशांगनेव ॥ दध्यौ तदा क्षितिपतिर्निजमानसांतः । पश्यामि किं स्त्रियमहं मम संति बह्व्यः
॥ १८ ॥ पश्यामि तर्हि रमणं कमनीयमस्या । यस्येयमस्ति भुवनत्रयमोहिनी स्त्री ॥ ध्यात्वेत्यक·

नां हृत्प्रमोदं दधानं । प्रमुदितविबुधानां शर्मकृत्सन्निधानं ॥ ४ ॥ अजयदखिलमानं मान्मथं वर्धमा
नं । क्षितिपतिबहुमानं राजवद्राजमानं ॥ शुचिमुखमसमानं यो दधानोपमानं । धुतजगडुपमानं
निर्जरैर्गीयमानं ॥ ५ ॥ शशधरविशदानंतप्रज्ञामाददानं । गुणततिमतिदानं दीनजंतौ ददानं ॥
भजत विजयदानं सूरिमुख्यं ददानं । वरमतिततिदानं तं जनामोददानं ॥ ६ ॥ अर्हन्निकेतनजि-
नार्चनमंडलश्री—युक्तेऽप्यपाल्हणपुरे नगरे प्रसिद्धे ॥ ऊकेशशुद्धतमवंशभवो बभासे । कूराभि-
धोऽतुलगुणो व्यवहारिमुख्यः ॥ ७ ॥ औदार्यधैर्यसुविशालगुणप्रयुक्ता । नाथीति तस्य वनिता नि-
तरां विनीता ॥ तत्कुक्षिजः समभवत्तनयो विराजन् । हीराभिधः सकललक्षणलक्षितांगः ॥ ८ ॥
आबाल्यतोऽपि ववृधे भुवि तस्य कीर्ति—कांता ततो बहुगुणां चरणाभिधानां ॥ योषां जिघृक्षुरभव-
द्गुरुसेवनातो । वांछेद्दशामभिनवां तरुणो नरो हि ॥ ९ ॥ सत्यामपि प्रसृमरद्युतिकीर्तियोषि—त्या-
दत्तवांश्चरणयोषितमादरेण ॥ सार्धं तयास्य समजायत भूरिरागः । स्पर्धां चकार बहुलां किल की-
र्तिकांता ॥ १० ॥ यस्य स्त्रियौ रुचिररूपयुते भवेतां । भूयिष्ठगेहधनधान्यसमन्विते च ॥ नाथस्य
तस्य न सुखं भवतीह ताभ्यां । स्पर्धावशादतुलमत्सरकारिकाभ्यां ॥ ११ ॥ कारागृहे निवसनं बहु

विदधे चरित्रं ॥ २४ ॥ पठिष्यति श्रोष्यति वाचयिष्य—त्यदश्चरित्रं शुभभावतो यः ॥ तस्यैहिकामुष्मिकमंगलानि । प्रादुर्भविष्यंत्यतुलानि नित्यं ॥ २५ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे श्रीप्रद्युम्नसांबतपःकरणकेवलज्ञानोत्पत्तिनिर्वाणगमनो नाम षोडशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

अथ प्रशस्तिः—प्रादुश्चक्रे जगति गुरुणा येन सौधर्ममार्गो । गच्छन् दुष्टप्रकृतिततिभिः खंडितः कालयोगात् ॥ भास्वंतीभिर्नृपतिनुतिभिः शुद्धसाधुक्रियाभिः । कैवल्यैकप्रमदपदवीसाधिकाभिः प्रकामं ॥ १ ॥ जैनाद्धर्माद्भवति नियमाज्जन्मनीष्टे तृतीये । मुक्तिप्राप्तिर्विहितशरणान्मेऽप्यतो भाविनी सा ॥ तत्पश्यामि प्रथममधिकं स्वर्गसौख्यं मनुष्या—न्मन्ये ध्यात्वागमदिति दिवं यस्य जीवो विपद्य ॥ २ ॥ यातस्यापि त्रिदशनिलयं सम्यगाराध्य धर्मं । यस्याद्यापि स्फुरति महिमोद्यद्यशो नाम लोके ॥ श्रीमानानंदविमलगुरुः स क्रियात्सत्क्रियाणा—मुद्धारस्य प्रकटनपटुत्वं दधानः शिवानि ॥ ३ ॥ सुकृतगुणनिधानं यो दधारावधानं । परममतिविधानं मोक्षदर्शिप्रधानं ॥ त्रिजगति विबुधा·

मातृतातौ । धन्यौ सुरास्तुष्टुवुरेवमेके ॥ १५ ॥ गंधोदकानां प्रथमं सुवृष्टिं । ततः प्रसूनप्रकरस्य साधोः ॥ पंचोल्लसद्वर्णयुतस्य वृष्टिं । चक्रुः सुरास्तस्य तनूपरि द्राग् ॥ १६ ॥ न जीवतामप्यसुधारकाणां । केषांचिदंगं लभते कदाचित ॥ प्रद्युम्नसाधोश्च शिवं गतस्या—प्यहो वपुः प्रापदनल्पपूजाः ॥ १७ ॥ गोशीर्षसंज्ञेन सुचंदनेन । संस्कारमंगस्य विधाय देवाः ॥ प्रापुर्निजं स्थानमदभ्रभक्त्या । प्रद्युम्ननिर्ग्रंथगुणान् स्तुवंतः ॥ १८ ॥ येन प्रबोधादुपदेशदानैः । प्रद्युम्ननामापि कृतो विनेयः ॥ तस्यापि चित्रं प्रददे विमुक्तिं । स्वकीयराज्ये जयतात्स नेमिः ॥ १९ ॥ समस्ति न व्याकरणे तथाविधः । परिश्रमश्छंदसि चार्वलंकृतौ ॥ तथाप्यदोऽकारि मया चरित्रकं । प्रद्युम्नसाधोर्निबिडाघनाशनं ॥ २० ॥ अज्ञानतस्तुच्छमतेः प्रमादा—द्वैयग्र्यतो यच्च किमप्यशुद्धं ॥ अकारि वा यल्लिखितं मयात्र । क्षंतव्यमेतद्वरलब्धवर्णैः ॥ २१ ॥ अथात्र ये स्युर्बहुमत्सरेण । समन्विताः शास्त्रविदोऽपि मर्त्याः ॥ वचः प्रमाणं न तदीयमस्त्य—भिमानदुर्मत्सरधारणेन ॥ २२ ॥ अन्योपकारप्रतिज्ञायुता ये । प्रध्वस्तमात्सर्यकलंकदोषाः ॥ तैरेव सूक्ष्मेक्षिकया विशोध्य—मेतच्चरित्रं विबुधप्रवृत्त्यै ॥ २३ ॥ वराष्टमांगे चरितं च नेमे—र्माहात्म्यमुच्चद्विमलाचलस्य ॥ दिगंबराणां चरितं विलोक्य । प्रद्युम्नसंज्ञं

कं शृंगमारूढः । क्षपकश्रेणिमाश्रयन् ॥ ४ ॥ तामारूढः शुभध्यानात् । प्रद्युम्नः श्रमणाग्रणीः ॥ चतुरः क्षपयामासा—दावनंतानुबंधिनः ॥ ५ ॥ मिथ्यात्वमोहिनी मिश्र—सम्यक्त्वमोहिनी पुनः ॥ नृतिर्यक्सुरायूंष्येक—विगलेंद्रियजातयः ॥ ६ ॥ स्त्यानर्धित्रिकमुद्योत—नामकर्मापि सुंदरं ॥ तिर्यग्नरकस्थावर—द्विकं साधारणातपौ ॥ ७ ॥ प्रत्याख्यानाप्रत्याख्याना—दिभेदेनाष्टकं तथा ॥ नपुंसकस्त्रियोर्वेदौ । हास्यादिषट्कमुत्कटं ॥ ८ ॥ पुंवेदं संज्वलनादि—चतुष्कं द्वे प्रमीलिके ॥ ज्ञानदर्शनावरण—नवकं विघ्नपंचकं ॥ ९ ॥ इत्येताः प्रकृतीः क्षिप्त्वा । प्रद्युम्नर्षिरनुक्रमात ॥ अंतकृत्केवली भूत्वा । सिद्धिसौधमवासवान् ॥ १० ॥ सांबोऽपि मुनिराख्य । गिरींद्रशिखरं वरं ॥ प्रक्षिप्याखिलकर्माण्यं—तकृत्केवल्यजायत ॥ ११ ॥ ययोः शिखरयोः सिद्धौ । प्रद्युम्नसांबसंयतौ ॥ अद्यापि ते तयोर्नाम्ना । विद्येते ख्यातिधारिणी ॥ १२ ॥ वीवाहकृत्ये जनयंति लोका । महोत्सवान यहिं बहुप्रकारान् ॥ प्रभूतवादित्रसुवादनेन । नृत्येन च भ्राजितगीतगानैः ॥ १३ ॥ प्रद्युम्ननामापि शिवांगनां महा—दीक्षां गृहीत्वावृणुनातिदुर्लभां ॥ प्रकुर्महे तद्वयमप्यनेकधा । ध्यात्वेति तान्निर्जरकोटयो व्यधुः ॥ १४ ॥ गीतान्यगायन् प्रमदेन केचि—न्नृत्यानि तत्र व्यदधुश्च केचित ॥ धन्यस्त्वमुर्व्यां तव

न्नवनेदिनीः ॥ स साधुः सर्वसत्वेषु । साम्यं विशेषतो दधौ ॥ ९३ ॥ दीक्षां षोडशवर्षाण्य—ति-चारपरिवर्जितां ॥ प्रद्युम्नः सह सांबेना—पालयज्जनयंस्तपः ॥ ९४ ॥

अथ घोराणि पापानि । विधातारोऽपि पूरुषाः ॥ अत्र सिद्धिं यतः प्रापुः । सिद्धाद्रिस्तेन कथ्यते ॥ ९५ ॥ बाह्यारीनंतरंगारी—न्समाजयंति देहिनः ॥ तस्माछत्रुंजयं तीर्थं । निरूप्यते मनीषिभिः ॥ ९६ ॥ तीर्थानामुत्तमं तीर्थं । गिरीणामुत्तमो गिरिः ॥ कलिकालेऽपि सिद्धाद्रे—र्महिमा हि विजृंभते ॥ ९७ ॥ येषां च शिथिलानि स्युः । क्रूरकर्माणि देहिनां ॥ सिद्धक्षेत्रं समासाद्य । तैर्विमुक्तिरवाप्यते ॥ ९८ ॥ भवेयुर्निबिडान्यत्र । येषां कर्माणि भूरिशः ॥ न ते शत्रुंजयं तीर्थं । विना शुध्यंति सर्वथा ॥ ९९ ॥ ध्यानेनैतस्य तीर्थस्य । यात्रयापि च पूजया ॥ नामसंस्मरणादप्य—नंतं प्रयाति पातकं ॥ १०० ॥ शृंगाणि संति तीर्थस्या—स्याष्टोत्तरशतानि च ॥ तेष्वेकविंशति मुख्या—न्याहुस्तीर्थकरादयः ॥ १ ॥ तानि सर्वाणि संस्पृश्य । शत्रुंजयशिलोच्चये ॥ आदिदेवं नमस्कृत्या—न्यानपि जिननायकान् ॥ २ ॥ उज्जयंताख्यमुत्तुंगं । नेमिकल्याणकत्रयं ॥ सिद्धाद्रेः पंचमं शृंगं । प्रद्युम्नश्रमणो ययौ ॥ ३ ॥ युग्मं ॥ सहस्राम्रवने तत्र । नेमिकल्याणकास्पदं ॥ नत्वै

त्यां प्रकुरुतेऽभिधां ॥ ८१ ॥ अतीतेऽपि च ये मर्त्या—श्चतुर्हत्याविधायिनः ॥ आसन् दृढप्रहार्या-
द्या—स्तेऽपि धर्माद्दिवं गताः ॥ ८२ ॥ पुमांसोऽनागते काले । सेत्स्यंत्यपि च धर्मतः ॥ द्वैपायना-
दयो दुष्ट । नृपःसंहारकारिणः ॥ ८३ ॥ कैवल्यगमनौचित्यं । क्षेत्रे बिभ्रति सर्वदा ॥ वर्तमानेऽपि
काले च । सिध्यंति धर्मतो जनाः ॥ ८४ ॥ ज्ञातव्योऽयमुपास्योऽयं । ध्यातव्योऽयं मनीषिभिः ॥
कर्तव्योऽयं विशेषेण । धर्मः सर्वार्थसाधकः ॥ ८५ ॥ धर्मेण वांछितं सौख्यं । धर्मेण रोगहानयः ॥
धर्मेण कुलवृद्धिश्च । धर्मेण शिवसंपदः ॥ ८६ ॥ वैशाखस्थानकस्थस्य । कटिस्थितकरस्य च ॥ न-
रस्य तुल्ययाकृत्या । लोक एष प्रवर्तते ॥ ८७ ॥ धर्मास्तिकायाधर्मास्ति—कायाकाशास्तिकायकाः ॥
पुद्गलजीवास्तिकायौ । कालोऽस्तिकायवर्जितः ॥ ८८ ॥ एभिः षड्भिर्भृतो द्रव्यैः । स्थित्युत्पत्तिव्यया-
न्वितः ॥ ब्रह्मादिभिः कृतो लोको । नायमाधारवर्जितः ॥ ८९ ॥ अनाद्यनंतसंसारे । जीवेन भ्र-
मता सता ॥ स्थावरत्वं त्रसत्वं वा । लभ्यते कर्मलाघवात ॥ ९० ॥ ततः पंचेंद्रियत्वं च । मानुष्य-
मार्यदेशकः ॥ सर्वाक्षपटुता जाति—प्रभुता प्राप्यतेतमां ॥ ९१ ॥ प्राप्तेष्वपि पदार्थेष्व—मीषु स-
र्वेषु चारुषु ॥ बोधिबीजं मनुष्याणां । माणिक्यमिव दुर्लभं ॥ ९२ ॥ भास्वतीर्भावयन्नेता । भावना

वेत्पंचभिराश्रवैः ॥ ७० ॥ चतुर्भिः कलापकं ॥

यद्भुक्तं घृतपूरादि । पक्वान्नं चारुपायसं ॥ जठरांतःप्रविष्टं त—द्भवेद्दौर्गंध्यसंयुतं ॥ ७१ ॥
यासां मृगीदृशां रूपं । वक्रकटाक्षविभ्रमात् ॥ अवलोक्य प्रजायेत । शरीरी विकलः स्त्रियां ॥ ७२ ॥
तदंगे द्वादशश्रोत्र—श्रवद्दौर्गंध्यमुच्चकैः ॥ मूढात्मानो न जानंति । किं मोहाच्छादिताशयाः ॥ ७३ ॥
आश्रवाणां च पंचानां । संवरः स्यान्निरोधकः ॥ जिनैर्द्वेधा स तु द्रव्य—भावभेदेन भाषितः ॥
॥ ७४ ॥ शिरोनयनहस्तानां । चरणानां तथैव च ॥ यतः संवरणं भूयात् । स द्रव्यसंवरः स्मृतः
॥ ७५ ॥ क्रोधतो मानतो दुष्ट—मायातो लोभतस्तथा ॥ मनसः संवृतिर्या स्यात । स भवेद्भावसं-
वरः ॥ ७६ ॥ यत्क्षुधातृषया शीता—तपाद्यां दुःखवेदनं ॥ निर्जरा सोदिता सार्वैः । सकामाकाम-
भेदतः ॥ ७७ ॥ विपत्तावामये दुःखे । संकटे च समागते ॥ स्वकर्माण्येव यः शोचेत । सकामा
तस्य निर्जरा ॥ ७८ ॥ यस्तदा परकीयानि । दूषणानि विचिंतयेत् ॥ अकामा निर्जरा तस्य । सं-
जायते शरीरिणः ॥ ७९ ॥ नरके नरनारीर्यो । निपतंतीः समुद्धरेत् ॥ धर्मोऽभिधीयते तेना—
नादिकालं जिनेश्वरैः ॥ ८० ॥ पापिनामपि मर्त्यानां । कालत्रयप्रवर्तिनां ॥ उद्धारकरणाद्धर्मः । स-

स्वार्थ—कृतये बांधवा इव ॥ तदप्राप्तौ त एव स्यु—र्वैरिभ्योऽप्यधिका इह ॥ ५९ ॥ अनादिका-
लमेतेन । संसारे भ्रमतात्मना ॥ न स्पृष्टं जन्ममृत्युभ्यां । यत्तत्स्थानकमस्ति न ॥ ६० ॥ एकाकी
लभते जन्मै—काक्येव म्रियते पुमान् ॥ एकाकी दुःखमाप्नोत्ये—काक्येव याति दुर्गतिं ॥ ६१ ॥
एकेनोपार्जितं वित्तं । प्राज्या भोक्तुं मिलंति च ॥ तस्य दुःखे समायाते । विभज्य कोऽपि लाति
न ॥ ६२ ॥ एक एव भवत्यंध । एक एव जडत्वभृत् ॥ एक एव धरेन्मौढ्य—मेक एव वरांगितां
॥ ६३ ॥ भिन्ना माता पिता भिन्नो । भिन्नाः स्वजनबांधवाः ॥ भिन्नानि धनधान्यानि । भिन्नाः क-
लत्रपुत्रकाः ॥ ६४ ॥ एतेभ्यो निखिलेभ्योऽपि । भिन्नोऽहं निजकर्मभिः ॥ यास्यामि देवतामर्त्य—
तिर्यग्नारकिकां गतिं ॥ ६५ ॥ य एवं चिंतयेच्चित्ते । स एव धर्मकर्मठः ॥ विजानन्नन्यमात्मानं । मो-
क्षसौख्यानि साधयेत् ॥ ६६ ॥ श्रवंति पापकर्माणि । पंचेंद्रियेषु देहिनां ॥ कथिता आश्रवास्तेन
। स्वर्गादिसौख्यवारिणः ॥ ६७ ॥ श्रवणेनान्यपैशुन्य—श्रवणैनैश्वर्यधारणात् ॥ नेत्रेण परदाराणां
। रूपावलोकनेन च ॥ ६८ ॥ गंधादानेन पुष्पाणां । भोगार्थं नासया पुनः ॥ परेषामतिनिंदैक—
प्रविधानेन जिह्वया ॥ ६९ ॥ स्पर्शनेंद्रियकेणोच्चैः । परेषां दारसेवया ॥ पापकर्मागमः पुंसां । भ-

स्वाध्यायकरणं ध्यानं । कायोत्सर्गाख्यमांतरं ॥ २४ ॥ षट्प्रकारं तपो बाह्यं । तथा षड्विधमांतरं ॥ अनेकधेति मोक्षाय । तपोऽतपत्तपस्व्यसौ ॥ २५ ॥ पंचाश्रवाद्विरमणं । पंचेंद्रियातिनिग्रहः ॥ कषायविजयो दंड—त्रयस्य विरतिस्त्रिधा ॥ २६ ॥

इति वाचंयमानां च । मार्गे कैवल्यसाधकं ॥ संयतः संयमं सप्त—दशभेदैरपालयत ॥ २७ ॥ ग्रीष्मर्त्तौ ग्रीष्मकालीनां । शीतर्त्तौ शीतकालिकीं ॥ जग्राहातापनां वर्षा—काले संलीनतां दधौ ॥ ॥ २८ ॥ क्षुधातृषातिशीतोष्ण—दंशावेलारतिस्त्रियः ॥ चर्यानिषद्याशय्या—क्रोशताडनयाचनाः ॥ २९ ॥ तृणादिभिर्वपुःस्पर्श—मलसत्कारसंज्ञकाः ॥ प्रज्ञा त्वज्ञानसम्यक्त्वे ! द्वाविंशतिः परीषहाः ॥ ३० ॥ असुरामर्त्यमर्त्योग्र—तिर्यग्भिर्निर्मितानपि ॥ असहत्तान् मुनिर्मार्गे । ग्रामपत्तनसंस्थितः ॥ ३१ ॥ आचार्याख्य उपाध्यायो । ग्लानः साधर्मिकस्तथा ॥ तपस्वी स्थविरश्चैक्ष—कुलः संघो महान् गुणी ॥ ३२ ॥ एवं दशप्रकारस्य । वैयावृत्त्यस्य वांछया ॥ द्विचत्वारिंशतादोषै—रदुष्टं सोऽन्नमग्रहीत ॥ ३३ ॥ सोऽथवा प्राणरक्षायै ! क्षुद्वेदनोपशांतये ॥ ईर्यार्थं संयमार्थं च । धर्मचिंतार्थमाददे ॥ ३४ ॥ न तु स्वकीयसौभाग्य—रूपसंपत्तिवृद्धये ॥ केवलं निर्जरायैत—त्प्रवृत्तिः समजायत

दशमष्टमं त्रयो । दशमं षष्टमष्टमं ॥ १२ ॥ चतुर्थषष्टमित्यादि—तपः कृत्वा मुनीश्वरः ॥ मनःकामि-
तमाहारं । पारयेत्पारणादिने ॥ १३ ॥ षड्भिर्मासैरहोरात्रैः । ससाधिकैर्जिनोदिता ॥ सिंहनिक्रीडित-
स्याद्या । परिपाटी लघोरियं ॥ १४ ॥ परिपाट्यां द्वितीयस्या—मेतावान् स्याद्विशेषकः ॥ चतुर्थादि-
तपःप्रांते । पारयेद्विकृतिं विना ॥ १५ ॥ परिपाट्यां तृतीयस्यां । पारयेल्लेपवर्जितः ॥ चतुर्थ्यां परि-
पाट्यां च—चाम्लेन पारयेन्मुनिः ॥ १६ ॥ चतस्रः परिपाटीश्च । हायनद्वितये ननु ॥ अष्टाविंश-
त्यहोरात्रै—राराधयेदिति व्रती ॥ १७ ॥ विशेषेणेयता सिंह—निक्रीडितं तपो महत ॥ चतुर्थादि-
तपस्त्रिंश—त्पर्यंतं जनयेन्मुनिः ॥ १८ ॥ प्रथमा परिपाटी स्या—देकेन हायनेन च ॥ षड्भिर्मासै-
रहोरात्रै—रष्टादशाधिकैस्तथा ॥ १९ ॥ परिपाट्यश्चतस्रोऽपि । षड्भिः संवत्सरैस्तथा ॥ माभ्यां द्वा-
भ्यामहोरात्रैः । पूर्णाः स्युर्द्वादशाधिकैः ॥ २० ॥ पूर्णीकृत्य लघुं ज्येष्टं । सिंहनिक्रीडितं तपः ॥ प-
द्मोत्तरं महाभद्रं । सर्वतोभद्रमप्यधात् ॥ २१ ॥ एकावलीं मुक्तावलीं । रत्नावलीं कषायजित ॥ स-
र्वांगसुंदरं भद्रं । सुधर्मचक्रवालकं ॥ २२ ॥ युग्मं ॥ अनशनमौनोदर्यं । वृत्तिसंक्षेपणं पुनः ॥ रस-
त्यागो वपुःक्लेशः । संलीनता बहिस्तपः ॥ २३ ॥ प्रायश्चित्तं विनयोऽपि । वैयावृत्यं तपस्विनां ॥

॥ दीपेन भक्षिते ध्वांते । धूममेवोद्गिरेदसौ ॥ ४७ ॥ प्रद्युम्नोऽपि ततः साधु—र्द्विचत्वारिंशतानि
शं ॥ दोषैर्वर्जितमाहारं । कायरक्षार्थमग्रहीत् ॥ ४८ ॥ असावद्यां जिनप्रोक्तां । भिक्षां गृह्णन् स पा-
रणे ॥ चारित्रं पालयामास । द्वादशभावनान्वितं ॥ ४९ ॥ अनित्यत्वमशरणं । भवस्वरूपमेकता
॥ अन्यत्वमाश्रवविधि—रशौचं संवरः पुनः ॥ ५० ॥ कर्मैकनिर्जरा रम्य—धर्ममाहात्म्यवर्णनं ॥ च-
तुर्दशरज्जुमानो । लोकश्च बोधिभावना ॥५१॥ मनोज्ञैरशनैः खाद्यैः । स्वाद्यैः पेयैश्च पोषितं ॥ श-
रीरं तदपि स्वीयं । विनश्यति क्षणादपि ॥ ५२ ॥ गजारूढा हयारूढा । रथारूढाश्च ये नराः ॥ अ-
भ्रमन् पार्थिवमन्या—स्तेषामपि दरिद्रता ॥ ५३ ॥ यत्स्वरूपं प्रभाते स्या—न्मध्याह्ने तन्न दृश्यते ॥
त्रियामायां विरूपं त—द्वस्तूनामित्यनित्यता ॥ ५४ ॥ ऊढो गर्भो यया मात्रा । नवमासान् सुता-
शया ॥ आत्मना विहिते मंतौ । भूपालात्सा न रक्षिका ॥ ५५ ॥ बाल्येऽपि वर्धितो येन । पूरयि-
त्वा मनोरथान् ॥ जनकेन न तेनापि । रक्ष्यते यमतः सुतः ॥ ५६ ॥ यया पंचेंद्रियाह्लादा । भुक्ता
भोगा अहर्निशं ॥ मृगेक्षणा न साप्याधि—व्याधिभ्यः शरणं भवेत् ॥ ५७ ॥ सिद्धांतपारदृश्वानो
। ये भवंति तपोधनाः ॥ तेषामप्येष संसारो—ऽसारो नरककारणं ॥ ५८ ॥ खिद्यंति ये जनाः

॥ ३५ ॥ आहारं गृह्णता वाचं—यमेन पात्रधारिणा ॥ वर्जनीया इमे दोषाः । पाकक्रियाविधायिनः
॥ ३६ ॥ षोडशोद्गमिका दोषाः । षोडशोत्पादसंभवाः ॥ दशैषणोद्भिताः प्रोक्ता । द्विचत्वारिंशदित्यमी
॥ ३७ ॥ आधाकर्मौद्देशिकश्च । मिश्रजः पूतिकर्मकः ॥ स्थापनोऽप्राभृतिक । उद्भिन्नः परिवर्तनः ॥
॥ ३८ ॥ प्रादुःकरणपामित्ये । मालापहृतकस्तथा ॥ आछेद्यमन्याहृतानिः—सृष्टे अध्यवपूरकः ॥
॥ ३९ ॥ अमी औद्गमिका दोषा । गृहस्थेन विनिर्मिताः ॥ भवंति षोडशाहारे । वर्जनीया मुमु
क्षुभिः ॥ ४० ॥ धात्री दूती निमित्तं चा—जीवो वनीपकाभिधः ॥ चिकित्सा प्रतिघो मानो । मा-
या लोभ इमे दश ॥ ४१ ॥ संस्तवः पूर्वपाश्चात्यौ । विद्या मंत्रश्च चूर्णकः ॥ योगश्च मूलकर्माख्यः
। षोडशोत्पादिका इमे ॥ ४२ ॥ वाचंयमकृता एते । दोषा वर्ज्याः प्रयत्नतः ॥ शंकितोत्क्षिप्तनिःक्षि-
प्तो । निःक्षिप्तपिहितः पुनः ॥ ४३ ॥ संहृतोदयिको मिश्रो । लिप्तो परिणतस्तथा ॥ छर्दितश्चैषणा-
दोषा । वर्ज्या अमी दशर्षिभिः ॥ ४४ ॥ द्विचत्वारिंशतामीभि—र्महादोषैरदूषितं ॥ आहारं यः स-
मादत्ते । सिद्धिः स्यात्तस्य हस्तगा ॥ ४५ ॥ आहारस्य भवेच्छुद्धि—र्दुर्लभा श्रमणाध्वनि ॥ व्य-
वहारस्य संशुद्धि—र्दुष्करा गृहमेधिनां ॥ ४६ ॥ आहारो यादृशः प्राय । उद्गारोऽपि च तादृशः

स्वाध्यायकरणं ध्यानं । कायोत्सर्गाख्यमांतरं ॥ २४ ॥ षट्प्रकारं तपो बाह्यं । तथा षड्विधमांतरं ॥ अनेकधेति मोक्षाय । तपोऽतपत्तपस्व्यसौ ॥ २५ ॥ पंचाश्रवाद्विरमणं । पंचेंद्रियातिनिग्रहः ॥ कषायविजयो दंड—त्रयस्य विरतिस्त्रिधा ॥ २६ ॥

इति वाचंयमानां च । मार्गं कैवल्यसाधकं ॥ संयतः संयमं सप्त—दशभेदैरपालयत ॥ २७ ॥ ग्रीष्मर्त्तौ ग्रीष्मकालीनां । शीतर्त्तौ शीतकालिकीं ॥ जग्राहातापनां वर्षा—काले संलीनतां दधौ ॥ ॥ २८ ॥ क्षुधातृषातिशीतोष्ण—दंशावेलारतिस्त्रियः ॥ चर्याविनिखट्वाशय्या—क्रोशताडनयाचनाः ॥ २९ ॥ तृणादिभिर्वपुःस्पर्श—मलसत्कारसंज्ञकाः ॥ प्रज्ञा त्वज्ञानसम्यक्त्वे ! द्वाविंशतिः परीषहाः ॥ ३० ॥ असुरामर्त्यमर्त्योग्र—तिर्यग्भिर्निर्मितानपि ॥ असहत्तान् मुनिर्मार्गे । ग्रामपत्तनसंस्थितः ॥३१॥ आचार्याख्य उपाध्यायो । ग्लानः साधर्मिकस्तथा ॥ तपस्वी स्थविरश्चैक्ष—कुलः संघो महान् गुणी ॥ ३२ ॥ एवं दशप्रकारस्य । वैयावृत्त्यस्य वांछया ॥ द्विचत्वारिंशतादोषै—रदुष्टं सोऽन्नमग्रहीत ॥ ३३ ॥ सोऽथवा प्राणरक्षायै । क्षुद्वेदनोपशांतये ॥ ईर्यार्थं संयमार्थं च । धर्मचिंतार्थमाददे ॥ ३४ ॥ न तु स्वकीयसौभाग्य—रूपसंपत्तिवृद्धये ॥ केवलं निर्जरायैत—त्प्रवृत्तिः समजायत

दशमष्टमं त्रयो । दशमं षष्टमष्टमं ॥ १२ ॥ चतुर्थषष्टमित्यादि—तपः कृत्वा मुनीश्वरः ॥ मनःकामितमाहारं । पारयेत्पारणादिने ॥ १३ ॥ षड्भिर्मासैरहोरात्रैः । सप्ताधिकैर्जिनोदिता ॥ सिंहनिक्रीडितस्याद्या । परिपाटी लघोरियं ॥ १४ ॥ परिपाट्यां द्वितीयस्या—मेतावान् स्याद्विशेषकः ॥ चतुर्थादितपःप्रांते । पारयेद्विकृतिं विना ॥ १५ ॥ परिपाट्यां तृतीयस्यां । पारयेल्लेपवर्जितः ॥ चतुर्थ्यां परिपाट्यां चा—चाम्लेन पारयेन्मुनिः ॥ १६ ॥ चतस्रः परिपाटीश्च । हायनद्वितये ननु ॥ अष्टाविंशत्यहोरात्रै—राराधयेदिति व्रती ॥ १७ ॥ विशेषेणेयता सिंह—निक्रीडितं तपो महत ॥ चतुर्थादितपस्त्रिंश—त्पर्यंतं जनयेन्मुनिः ॥ १८ ॥ प्रथमा परिपाटी स्या—देकेन हायनेन च ॥ षड्भिर्मासैरहोरात्रै—रष्टादशाधिकैस्तथा ॥ १९ ॥ परिपाट्यश्चतस्रोऽपि । षड्भिः संवत्सरैस्तथा ॥ माभ्यां द्वाभ्यामहोरात्रैः । पूर्णाः स्युर्द्वादशाधिकैः ॥ २० ॥ पूर्णीकृत्य लघुं ज्येष्टं । सिंहनिक्रीडितं तपः ॥ पञ्चोत्तरं महाभद्रं । सर्वतोभद्रमप्यधात् ॥ २१ ॥ एकावलीं मुक्तावलीं । रत्नावलीं कषायजित ॥ सर्वांगसुंदरं भद्रं । सुधर्मचक्रवालकं ॥ २२ ॥ युग्मं ॥ अनशनमौनोदर्यं । वृत्तिसंक्षेपणं पुनः ॥ रसत्यागो वपुःक्लेशः । संलीनता बहिस्तपः ॥ २३ ॥ प्रायश्चित्तं विनयोऽपि । वैयावृत्त्यं तपस्विनां ॥

॥ अथ षोडशः सर्गः प्रारभ्यते ॥

अथ श्रीनेमिहस्तेन । गृहीतशुचिसंयमः ॥ प्रद्युम्नस्तु निरध्यैष्ट । द्वादशांगीं जिनोदितां ॥१॥ अधीत्येति गुरोः पार्श्वे । पालयन् संयमं वरं ॥ ध्यानमुग्रं तपश्चोग्रं । चकार मुनिपुंगवः ॥ २ ॥ इ तश्च द्वारिकादाहं । मरणं नरकद्विषः ॥ प्रद्युम्नमुनिराकर्ण्या—तपद्घोरतरं तपः ॥ ३ ॥ पारणं षष्ठ· षष्ठान्या—मष्टमैरष्टमैर्व्यधात् ॥ दशमैर्द्वादशैर्भूयः । पक्षमासोपवासकैः ॥ ४ ॥ अर्हत्सिद्धप्रवचना—नूचानस्थविरास्तथा ॥ उपाध्यायानगाराश्च । विनयो ज्ञानदर्शने ॥ ५ ॥ चारित्रं ब्रह्मचर्यं च । क्रि· यातपस्विगौतमाः ॥ जिनाश्चारित्रसद्ज्ञान—श्रुततीर्थानि सिद्धये ॥ ६ ॥ विंशतिस्थानकान्येवं । क्रियंतेऽर्हत्पदैषिभिः ॥ प्रद्युम्नमुनिरेकैकं । षष्ठभक्तेन निर्ममे ॥ ७ ॥ दुःकरतमं ततोऽकार्षीत । सिंह-निक्रीडितं लघु ॥ चतुर्थतपसा पूर्व—मिष्टं करोति पारणं ॥ ८ ॥ षष्ठं तपश्चतुर्थं चा—ष्टमषष्ठं प्र· कृष्टकं ॥ उग्रं नानाविधं चैव । षष्ठमष्टममुत्तमं ॥ ए ॥ चतुर्दशं द्वादशं च । षोमशं च चतुर्दशं ॥ अष्टादशं षोडशं च । जनयन्मुनिनायकः ॥ १० ॥ विंशतितमाष्टादशे । द्वाविंशतितमं पुनः ॥ षोमशं चतुर्दशं च । षोडशं व्यदधात्तपः ॥ ११ ॥ द्वादशं चतुर्दशं च । मनोज्ञं दशमं तपः ॥ द्वा·

विमानस्थितयो राम—मधुसूदनयोः शुभे ॥ रूपे द्वे त्रिदशः कृत्वा । समस्तानामदर्शयत् ॥ ५५ ॥
राममाधवयोर्मूर्ती । पूजयिष्यति यो जनः ॥ तस्य पुत्रकलत्रादि । सर्वमिष्टं भविष्यति ॥ ५६ ॥
उत्कृष्टदेवताबुद्धिं । नैनयोर्यः करिष्यति ॥ धनधान्यकुटुंबानां । हानिरेव तदालये ॥ ५७ ॥ एता-
वेव जगत्सृष्टि—संहारप्रविधायिनौ ॥ रामकृष्णौ प्रवर्तेते । न परः कोऽपि निर्जरः ॥ ५८ ॥ ततो
द्वारवतीपुर्या । अस्माभिरेव निर्मितौ ॥ उत्पत्तिप्रलयौ केना—प्यपरेण न नाकिना ॥ ५९ ॥ क-
थयामास निःशेष—लोकानामिति निर्जरः ॥ सकलोऽपि ततो लोको—ऽपूजयत्प्रतिमे तयोः ॥
॥ ६० ॥ कारयित्वा स्वगोविंद—प्रतिमापूजनं बलात ॥ बलदेवः सुरोऽगच्छ—त्पंचमे त्रिदशालये
॥ ६१ ॥ पुण्याज्जयः स्याद्बहुसौख्यकर्ता । पापात्क्षयश्चातुलदुःखकर्ता ॥ प्रत्यक्षमेतद्बलदेवविष्णो-
र्विलोकनीयं विबुधेन जातं ॥ ६२ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्री-
रविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे प्रद्युम्नसांबदीक्षाग्रहणद्वारिकादाहकृष्णमरणबलदेवदीक्षा-
स्वर्गगमनवर्णनो नाम पंचदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

———

स्त्वं स्वर्गगामुकः ॥ अहं तु विषयासक्तः । कथितो नरकातिथिः ॥ ४३ ॥ तत्सर्वमेव संजातं । सू-
नृतं नेमिभाषितं ॥ भुंक्ष्व तेन दिवःसौख्य—महं नरकदुःखितां ॥ ४४ ॥ अथ चेत्तव सामर्थ्यं ।
तदेतो मां समुद्धर ॥ सुरः प्राह त्वदुद्धार । इतः कर्तुं न शक्यते ॥ ४५ ॥ अन्यत्किमपि यत्ते स्या
—द्वांछितं विदधामि तत ॥ अथवा सन्निधानेऽहं । तिष्ठामि प्रीतये तव ॥ ४६ ॥ कृष्णः प्राह यदि
भ्रातः । स्थितस्त्वं मम सन्निधौ ॥ तथापि निजकर्मोत्थं । दुःखं न याति नारकं ॥ ४७ ॥ कर्मणोपा-
र्जिते दुःख—सौख्ये शरीरधारिणां ॥ स्वयमेवोपभुज्येते । अपरेण न केनचित् ॥ ४८ ॥ अवस्थ-
यैतया मित्र । भोक्ष्ये दुःखं स्वकर्मजं ॥ अत्र स्थितोऽहमेकाकी । सर्वथा सुखवर्जितं ॥ ४९ ॥ अ-
थ त्वं भरते गत्वा । शंखचक्रगदाधरं ॥ पीतांबरं सुपर्णांकं । मां विमाने प्रदर्शय ॥ ५० ॥ आत्मा-
नं नीलवस्त्रं च । तालांकं लांगलायुधं ॥ मर्त्यलोके मनुष्याणां । प्रदर्शय समंततः ॥ ५१ ॥ वि-
मानसंस्थितौ राम—गोविंदौ व्योमचारिणौ ॥ क्रीडां प्रकुरुतः स्वैरं । पूरयंतौ जनेप्सितं ॥ ५२ ॥
प्रतीतिर्भरतक्षेत्र—वासिनां प्राणिनामिति ॥ यथा भवति वार्तापि । न मे नरकगामिनी ॥ ५३ ॥
रामोऽपि वचनं विष्णोः । प्रमाणीकृत्य भारते ॥ गत्वा तथैव चक्राते । भ्रातृमोहेन मोहितः ॥५४॥

धानेऽहं । भविष्यामि निबंधनं ॥ ३१ ॥ मत्वेति मुनिना पात्रं । पुरतस्तस्य मंडितं ॥ तदा तुल्यग-
तिग्राही । पार्श्वस्थोऽचिंतयन्मृगः ॥ ३२ ॥ धन्यो मुनिरयं येन । निर्दोषाशनमाप्यत ॥ धन्योऽयं
रथकारोऽपि । येनाहारः समर्पितः ॥ ३३ ॥ तिर्यग्भवधरं मां धि—ग्दानपुण्यविवर्जितं ॥ निंदन्नि-
ति निजं कर्म । स भावनामभावयत ॥ ३४ ॥ निरवद्याशनावाप्त्या । पात्रप्राप्त्या च वर्धकिः ॥ मृ-
गो भावनया शुद्धा—स्त्रयोऽपीमेऽभवंस्तमां ॥ ३५ ॥ अर्द्धो रथकारेण । मुक्तोऽर्धछिन्नपादपः ॥
स वातेन प्रचंडेन । पपात तत्त्रयोपरि ॥ ३६ ॥ निहतास्तरुपातेन । त्रयोऽपि प्रापमृत्यवः ॥ उ-
त्पेदिरे ब्रह्मलोक—पद्मोत्तरविमानके ॥ ३७ ॥ अवलोक्यावधिज्ञाना—द्भ्रातरं नरकस्थितं ॥ राम-
जीवसुरस्तत्र । गतवान् बंधुमोहतः ॥ ३८ ॥ गत्वा चालिंगनं दत्वा । जगाद केशवं सुरः ॥ भ्रात-
स्त्वत्स्नेहतः स्वर्ग—लोकान्मिलितुमागमं ॥ ३९ ॥ ततो ब्रूहि तवाभीष्टं । किं समस्ति करोमि त-
त ॥ कथयित्वेति तेन स्व—पाणिभ्यां स समुध्धृतः ॥ ४० ॥ बलदेवकरस्पर्शा—द्वपुस्तस्य पृथ-
क्पृथक् ॥ भूत्वा च न्यपतत्सूत । इवामिलत्पुनर्द्रुतं ॥ ४१ ॥ शरीरं मिलितं याव—त्समस्तमपि
तावता ॥ उपलक्ष्य बलं बंधुं । नत्वा च प्राह माधवः ॥ ४२ ॥ भ्रातः श्रीनेमिना पुण्या—त्प्रोक्त-

क्षितः ॥ १९ ॥ निष्पन्नं भोजनं तस्य । समालोक्य मृगः सुधीः ॥ ज्ञापयेद्व्रतिनः सोऽपि । ते
नैव सह जग्मिवान् ॥ २० ॥ कदाचिच्चेत्समागच्छेत् । कश्चिदभ्यागतोऽधुना ॥ तदाहं भाग्ययोगेन ।
दत्वा करोमि भोजनं ॥ २१ ॥ एवं व्यचिंतयद्याव—द्रथकृद्दानबुद्धितः ॥ तावत्तत्रागतो राम—मु-
निर्भिक्षाजिघृक्षया ॥ २२ ॥ जंगमं स्वर्गिणां वृक्ष—मिवागच्छंतमद्भुतं ॥ निरीक्ष्य रथकारोऽपि ।
अभूच्छद्विस्मयाकुलः ॥ २३ ॥ अहो न रूपमीदृक्षं । स्वर्गलोके सुपर्वणां ॥ मर्त्यलोके मनुष्याणा-
मपरस्यापि कस्यचित् ॥ २४ ॥ अद्य धन्योऽवतारो मे । धन्ये अद्य विलोचने ॥ येनाहाराय पश्या-
म्या—गच्छंतममुमंतिके ॥ २५ ॥ समागतं तमालोक्य । बलभद्रं महामुनिं ॥ पंचांगप्रणिपातेन ।
प्रणत्य रथकृज्जगौ ॥ २६ ॥ प्रसारय प्रभो पात्रं । पात्रं त्वत्तोऽपरो न हि ॥ गृहाण त्वमिमां भिक्षां
। मां निस्तारय संसृतेः ॥ २७ ॥ आदरं रथकारस्य । निरीक्ष्य मुनिपुंगवः ॥ संतुष्टोऽभूत् प्रदत्ता
हि । भिक्षादरेण सत्फला ॥ २८ ॥ अज्ञासीन्मुनिरप्युच्चै—रहो भाग्योदयो मम ॥ काननेऽपि हि
निर्दोष—माहारासिरजायत ॥ २९ ॥ आहारं न ग्रहिष्यामि । यद्येनं दोषवर्जितं ॥ मम तर्हि श-
रीरस्य । धारणं न भविष्यति ॥ ३० ॥ अस्यापि मिलितस्वर्गा—चितकर्मदलस्य च ॥ अंतरायवि

राममाहात्म्यतोऽन्योन्यं । मुक्तद्वेषेषु तेष्वलं ॥ समेतेषु मुनिर्दत्ते । देशनां दुःखनाशिनीं ॥ ए ॥ तां श्रुत्वा श्रावकाः केऽपि । सम्यक्त्वधारिणोऽभवन् ॥ केऽप्यमी चक्रिरे देश—विरतिं रतिदायिनीं ॥ १० ॥ केऽपि कंदफलाहारं । केऽपि मांसस्य भक्षणं ॥ केऽपि कादंबरीपानं । प्रत्याख्यांति तदंतिके ॥ ११ ॥ तिर्यग्भवविनाशाय । कायोत्सर्गं वितेनिरे ॥ केऽपि चानशनं प्रांते । विदधुः स्वार्थियासया ॥ १२ ॥ केचिन्मनुष्यतो भीति—मजानंतो मृगादयः ॥ बिभ्रतो भद्रकत्वं च । संजाताः सेवका इव ॥ १३ ॥ जातिस्मरणतः कश्चि—त्संवेगी शिष्यवन्मुनेः ॥ पूर्वजन्माभिसंबंधी । संजातो हरिणाग्रणीः ॥ १४ ॥ स पारणदिने साधो—रुत्तीर्णं सार्थमीक्षते ॥ तं दृष्ट्वा ज्ञापयेत्पुब—शिरोनेत्रादिसंज्ञया ॥ १५ ॥ वाचंयमोऽपि तां जानन् । ध्यानं मुक्त्वोपरोधतः ॥ भिक्षायै कानने गच्छे—त्तेनैव मार्गदर्शिना ॥ १६ ॥ एवं तपस्विनस्तस्य । यदागच्छति पारणा ॥ स एव हरिणः पूर्वं । समीक्ष्य ज्ञापयेत्तदा ॥ १७ ॥

अन्यदा पारणे साधो—स्तेन सार्थः समीक्षितः ॥ न तथापि स कुत्रापि । लेभे भक्तिभृतायतौ ॥ १८ ॥ भूयोऽपि भ्रमता तेन । तत्रैव काननेऽभितः ॥ वृक्षादिच्छेदनायेतो । रथकारो निरी

॥ ९६ ॥ पारणाय यदा याति । नगरे स मुनिस्तदा ॥ स्थानात्स्थानाद्दशावृंदं । निर्गछेद्रूपमीक्षितुं
॥ ९७ ॥ सात्वतो नगरेऽन्येद्यु—र्मासक्षपणपारणे ॥ समायातो नरस्त्रीणां । मंम्लान्यमिलंस्तदा
॥९८॥ बालकेन युता काचि—त्कामिनी कूपतो जलं ॥ समानेतुं समायाता । यावत्कूपतटे मुदा
॥ ९९ ॥ तावदाहारमादातुं । बलभद्रमुनिर्गिरेः ॥ पारणस्याभिलाषेण । पुरीमध्यं समागतः
॥ ३०० ॥ तद्रूपदर्शनौत्सुक्यं । दधाना जलकर्षिणी ॥ घटस्थाने सुतस्यैव । कंठे च रज्जूमक्षिपत
॥ १ ॥ रूपदर्शनलुब्धाया—स्तस्याः स्वरूपमात्मना ॥ विलोक्य बलभद्राख्यो । मुनिरेवं व्यचिंतय-
त् ॥ २ ॥ धिगस्तु मम रूपं च । यस्य प्रदर्शनोत्सुका ॥ अप्रेक्षणीयमीदृक्षं । करोति कर्म कामि-
नी ॥ ३ ॥ मद्रूपमोहिता स्त्री चे—द्विधत्ते कार्यमीदृशं ॥ कदाप्याहारमादातुं । नागंतव्यं पुरे म-
या ॥ ४ ॥ इत्यभिग्रहधारी स । भूत्वा कानन एव च ॥ तिष्ठन्नाहारमादत्ते । न चासौ कुरुते तपः
॥ ५ ॥ षष्ठिमासक्षपणानि । पक्षकक्षपणानि च ॥ चतुर्मासीश्चतस्रश्च । मुनिरेवं तपो व्यधात ॥
॥ ६ ॥ तुंगिकासानुमत्शृंगे । क्रियमाणे तपस्यलं ॥ संस्थिताः काननेऽभूवन् । श्वापदा वशवर्तिनः
॥ ७ ॥ तिष्ठतस्तस्य तत्रैव । मिलिता महती सभा ॥ पंचाननमृगव्याघ्र—शशादिजंतूपूरिता ॥८॥

मुत्तीर्य । यावत्समे समागतः ॥ तावत्स स्यंदनस्तस्य ! खंर्म्खंडमजायत ॥ ८५ ॥ देवः कुटुंबिरूपे-
ण । सज्जीचक्रार तं यदा ॥ आसमंजस्यमालोक्य । तदा रामस्तमब्रवीत ॥ ८६ ॥ भो मूर्खः यः
समे स्थाने । भग्नोऽस्ति स्यंदनस्तव ॥ संप्रत्येव विनोपायं । कथं सज्जीभविष्यति ॥ ८७ ॥ कुटुंबी
प्राह भो मर्त्य । जीविष्यति यदा शवं ॥ तदायमपि मे क्षिप्रं । रथः संधिं गमिष्यति ॥ ८८ ॥ पा-
षाणे पद्मिनीमध्ये । गत्वा सोऽवापयत्सुरः ॥ हली प्राह कदाप्येषा—स्त्युद्गता दृषदि स्वयं ॥ ८९ ॥
स प्राहोत्पाटितं स्कंधो—पर्यंतत्कुणपं यदा ॥ जीविष्यति तदा पद्मि—न्युद्गमिष्यति चोपले ॥९०॥
अहो राम मृतो मर्त्यो । न करोत्यदनादिकं ॥ न पिबेत्सलिलं जल्पे—न्न वेत्ति जनसेवनं ॥९१॥
अतस्त्वमपि किं मोह—मौढ्येन नरकद्विषः ॥ शरीरं वहसे सेवां । करोषि प्रतिवासरं ॥ ९२ ॥
कलेवरमिदं विष्णो—र्जीवेनास्ति विवर्जितं ॥ ततस्त्वया कृतौ भक्ति—मोहौ वेत्ति न सर्वथा ॥
॥९३॥ एवं तदीयवाक्येन । प्रतिबोधमवाप्य च ॥ देहसंस्कारमासूत्र्य । वैराग्याद्व्रतमाददे ॥९४॥

दीक्षोद्यतं बलं ज्ञात्वा । श्रीनेमिप्रेषितस्य च ॥ विद्याधरमुनेः पार्श्वे । रामो दीक्षां गृहीतवान्
॥ ९५ ॥ वैराग्येण शरीरादि—सुखे जानन्ननित्यतां ॥ बभूव प्रतिमाधारी । मार्गयित्वा गुरोर्वचः

भिन्नेम्यत्र वने घने ॥ ७३ ॥ दग्धा द्वारवती पूर्वं । पितृभ्यां मुमुचे पुनः ॥ स्वजनैश्च वियोगोऽभू—त्तथाप्यस्थाथि हृत्त्वयि ॥ ७४ ॥ न प्रजल्पसि यर्हि त्व—मपि तर्हि गतिर्मम ॥ का भविष्यति बंधो त—द्वद त्वं वदनान्मया ॥ ७५ ॥ तृषया पीडितस्यास्य । मूर्छागता भविष्यति ॥ सम्यक् त·स्यां निवृत्तायां । वदिष्यति ममानुजः ॥ ७६ ॥ चिंतयित्वेति रामेण । शबमुत्पाटितं हरेः ॥ निज·स्कंधोपरि स्नेहात । षण्मासीं यावदाशया ॥ ७७ ॥ यदा भुंक्ते स आहारं । तदा प्रथममेव तु ॥ कृष्णास्ये कवलान् मुंचन् । ब्रूते गृहाण भोजनं ॥ ७८ ॥ यदा शबं न गृह्णाति । बलदेवस्तदावद·त ॥ कदापि क्षुधया स्थातुं । न क्षमस्त्वमभूर्हरे ॥ ७९ ॥ भ्रातः कथमिदानीं त्व—मागृहीतोऽपि लासि न ॥ त्वत्स्वरूपं न जानामि । रुष्टोऽसि केन हेतुना ॥ ८० ॥ यदा पिबति पानीयं । तदा तेन निमंत्रयेत ॥ रजन्यामाश्रशेत्पाद—तले बलोऽतिमोहतः ॥ ८१ ॥ कदाप्येतस्य कृष्णस्य । मा·भूद्दुःखं मनागपि ॥ तिष्ठत्सेवनयैवेति । दिवारात्रौ स सात्वतः ॥ ८२ ॥ षण्मास्यामिति जातायां । जीवः सिद्धार्थसारथेः ॥ यः स्वर्गं जग्मिवान्नेमि—पार्श्वे आदाय संयमं ॥ ८३ ॥ स्ववाचः प्रति·बंधेन । स्वर्गादेत्य स निर्जरः ॥ रामस्य प्रतिबोधार्थं । रथमश्ममयं व्यधात ॥ ८४ ॥ विषमं गिरि·

मस्ति तृष्णाच्छिदे पिब ॥ ६२ ॥ नोत्तिष्ठेन्नवदेद्याव—न्मोहेन विह्वलस्तदा ॥ विलापैरिति वाक्या-
नि । रामो रुदन्नभाषत ॥ ६३ ॥ सत्यं भ्रातर्वदेस्त्वं मे । सलिलार्थं गते मयि ॥ बभूव महती वेला
। तेन रुष्टोऽसि सांप्रतं ॥ ६४ ॥

इयंतं समयं यद्य—प्यपराधा अनेकधा ॥ मया कृतास्तथापि त्व—मस्था मौनी कदापि न ॥
॥ ६५ ॥ दीर्घरोष्यपि नाभूस्त्वं । दीर्घनिद्रोऽपि केशव ॥ वराके मयि किं दीर्घः । कोपः प्रारभ्यत
॥ ६६ ॥ भो वनदेवता यूयं । मयि रुष्टं सहोदरं ॥ मानयतांतरे भूत्वा । यथा जल्पेदयं म-
त्वया ॥ ६७ ॥ स मुंचन् दीर्घनिःश्वासा—नूचे भो कुलदेवताः ॥ यूयं कुत्र गता दुःखं । निराकुरुध्व
या ॥ ६७ ॥ स मुचन् दीर्घनिःश्वासा—नूचे भो कुलदेवताः ॥ यूयं कुत्र गता दुःखं । निराकुरुध्व
नो कथं ॥ ६८ ॥ पंचास्य त्वयि शौर्यं चे—द्भवेत्क्ष्वेडां तदा कुरु ॥ यथा चासहमानोऽय—मुत्ति
ष्ठत्त्वज्जिघृक्षया ॥ ६९ ॥ अहो मृगाः समायांतु । भवंतोऽपि भयोज्झिताः ॥ यथायं खेलयेद्युष्मान
। मृदुस्वभावधारिणः ॥ ७० ॥ मयूरास्तांडवं यूयं । समेत्य कुरुतादरात ॥ यथायं भवतां नृत्यं । स-
मीक्षेत सहोदरः ॥ ७१ ॥ कोकिलाः पंचमं रागं । प्रकुरुध्वं निजेच्छया ॥ यथा मद्बांधवो युष्म—
द्गीतगानं शृणोत्ययं ॥ ७२ ॥ स नैवं वचनैः प्रोचे । बलभद्रस्तदावदत ॥ ब्रूहि बंधोऽहमेकाकी ।

॥ ५० ॥ वरदत्तादयो नृपा । रुक्मिण्याद्या ममांगनाः ॥ पुत्राः प्रद्युम्नसांबाद्या–स्ते धन्या यैर्व्रतं दधे
॥ ५१ ॥ पूर्वजन्मनि जनित—निदानघनकर्मणा ॥ अहं तु वासुदेवोऽपि । सहामीति विडंबनां ॥
॥ ५२ ॥ शयितो भावयन्नेवं । पादघातातिपीडितः ॥ क्रूरध्यानधरः कृष्णः । कृष्णवर्त्मवदज्वलत्
॥ ५३ ॥ पिपासाशोकवातेन । त्रिधाप्यंगे निपीडितः ॥ केशवत्वादधोगामी । नारायणो व्यचिंत·
यत् ॥ ५४ ॥ पूर्वं तापसमात्रेण । ज्वालिता नगरी मम ॥ कृतः सर्ववियोगश्च । रामोऽपि सांप्रतं
गतः ॥ ५५ ॥ अहं देवेन केनाप्य—परेण नृचरेण वा ॥ समुदायवना पूर्वं । न हतोऽस्मि क·
दाचन ॥ ५६ ॥ वनेचरानुकारेणै—काकिनापि दुरात्मना ॥ हतो जराकुमारेणो—ब्राय गृह्णामि
तं शठं ॥ ५७ ॥ खंडखंडं विधायाहं । तस्यांगस्यापराधिनः ॥ ददामि वनजीवानां । भक्षणं मांस·
कांक्षिणां ॥ ५८ ॥ ध्यानेनेत्यरिरौद्रेण । तृतीये नरके हरिः ॥ आयुः सहस्रवर्षाणां । संपूर्णीकृत्य
जग्मिवान् ॥ ५९ ॥ अथ पानीयमानीय । समागछन् विदूरतः ॥ निश्चेष्टं काष्ठवद् दृष्ट्वा । बंधुं ब·
लो व्यचिंतयत् ॥ ६० ॥ मान्नृकेनापि जीवेन । हतोऽयं वैरिणाथवा ॥ पश्यामि त्वरितं गत्वो—
त्सुक्यादागात्तदंतिके ॥ ६१ ॥ आगत्य तस्य तेनोक्त—मुत्तिष्ठोत्तिष्ठ बांधव ॥ त्वदर्थं तोयमानीत–

॥ न कथं धनुषा साक—मंगुल्यस्त्रुटितास्तदा ॥ ३९ ॥ विलापान् जनयन् बाढ—स्वरेणेति रुरोद
मः ॥ यथा काननगान् सर्वान् । श्वापदानप्यरोदयत् ॥ ४० ॥ तदोचे विष्णुना भ्रातः । कथं रोदि-
षि दुःखतः ॥ भाविनी कर्मरेखा न । चलेन्नानाप्रयत्नतः ॥ ४१ ॥ अथ त्वमपसव्येन । गच्छ दूरं प-
देन च ॥ यथा त्वदनुसृत्या त्वां । न हन्यादागतो हली ॥ ४२ ॥ अपरे यदवोऽभ्रुवन् । नस्मसाद्
द्वारिकापुरि ॥ चेत्तेषामन्वये यर्हि । जीवेस्तदपि सुंदरं ॥ ४३ ॥ इदं कौस्तुभमाणिक्यं । गृहीत्वा
गच्छ पांडवान् ॥ द्वारिकादिस्वरूपं च । कथनीयं त्वयाखिलं ॥ ४४ ॥ क्षामणीयोऽपराधोऽपि । मदी-
यो धर्मवृद्धये ॥ पूर्वं ते क्लेशिताः संति । मया राज्योपभोगिना ॥ ४५ ॥ प्रोक्ते नारायणेनेति ।
कृष्ट्वा चरणतः शरं ॥ आदाय कौस्तुभं रत्नं । प्रचचाल तदग्रजः ॥ ४६ ॥ गते कुमारे तस्यात्र—
द्वेदना चातिवेदना ॥ जावितीर्थकरत्वेन । तद्ध्यानमप्यभुञ्जुन्न ॥ ४७ ॥ ततः प्राह नमोऽर्हद्भ्यः ।
सिद्धेभ्योऽपि नमो मम ॥ आचार्येभ्य उपाध्याय—साधुभ्यो भवतान्नमः ॥ ४८ ॥ आबाल्याद्ब्रह्म-
चर्यस्य । पालकाय स्वयंभुवे ॥ नमः श्रीनेमिनाथाय । यदुवंशप्रदीपिने ॥ ४९ ॥
नमस्कृत्येति सुप्तः स । स्रस्तरे तृणनिर्मिते ॥ जानूपरि क्रमं न्यस्या—च्छाद्य पीतांबरं तनौ ॥

न ॥ २७ ॥ ब्रूहि तद्वर्तसे कस्त्वं । स प्राह हरिरस्म्यहं ॥ त्वमत्रागच्छ मा भैषी—र्नान्यथा भवित-
व्यता ॥ २८ ॥ यद्भयाद्वनवासस्तु । त्वया बंधो विनिर्मितः ॥ देहच्छायेव संजातः । सोऽग्रतः सह-
चारिवत् ॥ २९ ॥ अहं त्वेतेन घातेन । जीविष्यामि न सर्वथा ॥ तथाप्येहि क्षणं वार्तां । प्रकु-
र्वः सुखदुःखयोः ॥ ३० ॥ इत्युक्ते स समागत्यो—पलक्ष्य च नरायणं ॥ पादविद्धं समालोक्य ।
मूर्छां जारेय ईयिवान् ॥ ३१ ॥ कथमप्याप्तचैतन्यो । विलापान् विविधानसौ ॥ प्रचकार विकारेण
। वर्जितोऽर्जितपातकः ॥ ३२ ॥ हाहा भ्रातः क्व यास्यामि । प्रकरिष्याम्यहं च किं ॥ मदीयमथ
विश्वासं । जनयिष्यति को जनः ॥ ३३ ॥ नीचस्यापि न मर्त्यस्य । मारणं महतां शुभं ॥ किं पु-
नर्वासुदेवस्य । सहोदरस्य घातनं ॥ ३४ ॥ निर्मंतूनां मनुष्याणां । मारकस्य नरस्य तु ॥ कुत्रापि
स्थानकं भावि । बंधो न नरके मम ॥ ३५ ॥ भ्रातः किं द्वारिका दग्धा । देवकीवसुदेवयोः ॥ अ-
भूत्किं मरणं सर्व—यदूनामपि च क्षयः ॥ ३६ ॥ तेनात्र त्वं भ्रमन्नागा । दुर्भवितव्यताबलात् ॥
मयि घोरमघं दातुं । त्वज्जीवितव्यनाशके ॥ ३७ ॥ सहचारी तव भ्रात—र्बलदेवः क्व वर्तते ॥ ज-
गाद पद्मनाभोऽपि । गतोऽस्ति पयसे मम ॥ ३८ ॥ यदा बाणो मया क्षिप्तो । मूर्खेणाज्ञानयोगतः

समागतः ॥ १६ ॥ तनौ परिहितव्याघ्र—त्वग्वस्त्रो लंबकूर्चकः ॥ मृगयाया मृगान्निघ्नन् । व्याधवद्व्यधारकः ॥ १७ ॥ स्थितेन दूरतस्तेन । प्रच्छाद्य पीतवाससा ॥ सुप्तं मृगोपमं कृष्णं । समीक्ष्यामोचि मार्गणः ॥ १८ ॥ मृगमत्या विमुक्तः स । यदा तेनाविवेकिना ॥ भवितव्यतया लग्नः । स तदांह्रितले हरेः ॥ १९ ॥ कृष्णोऽपि तेन बाणेन । सहसोत्थाय दृष्टवान् ॥ पश्यतेनस्ततस्तेन । समीक्षितः स पूरुषः ॥ २० ॥ दृष्ट्वा तमब्रवीद्विष्णुः । को रे पुरुष वर्तसे ॥ आद्यप्रभृति केनाप्य—ज्ञातनाम्ना हतोऽस्मि न ॥ २१ ॥

ततो रे पुरुष ब्रूहि । निजजात्यभिधादिकं ॥ द्रुमांतरस्थितः सोऽपि । प्रोचे किमर्थं पृच्छसि ॥ २२ ॥ हरिवंशमहाकाश—चंद्रमार्तंडदीधितेः ॥ वसुदेवस्य पुत्रोऽहं । नाम्ना जराकुमारकः ॥ २३ ॥ बांधवौ रामगोविंदौ । प्रवर्तेते ममानुजौ ॥ पराक्रमेण संग्रामे । विजेतारौ सहस्रशः ॥ २४ ॥ भविष्यति जरापुत्र—पाणिना मरणं हरेः ॥ इति श्रीनेमिनो वाक्यं । श्रुत्वाहं निर्गतो बहिः ॥ २५ ॥ माभून्मदीयहस्तेन । हननं नरकद्विषः ॥ भीत्येति भ्रातृरक्षार्थं । करोमि वनसेवनं ॥ २६ ॥ काननं सेवमानस्य । बंधुस्नेहवतो मम ॥ जातानि द्वादशाब्दानि । दृष्टः कोऽपि नरोऽत्र

प्रचलितौ राम—गोविंदौ प्रत्यपाग्दिशि ॥ गच्छंतौ पथि कौशांबी—काननं समुपेयतुः ॥ ५ ॥ मदिरापानतः क्षार—भोज्यतो ग्रीष्मतस्तथा ॥ पुण्यहानेर्बभूवोच्चैः । कृष्णस्तृष्णासमाकुलः ॥ ६ ॥ बभाण बलभद्रं स । भ्रात मे महती तृषा ॥ अहमस्मादथो गंतुं । न पदमात्रमपि क्षमः ॥ ७ ॥ सोऽभणद्भ्रातरत्रैवा—प्रमत्तस्तिष्ठ सांप्रतं ॥ अहं सलिलमानेतुं । यामि क्वापि जलाशये ॥ ८ ॥ कथयित्वेति रामोऽपि । यावत्प्रचलितोंभसे ॥ जानूपरि मुकुंदेन । तावत्संस्थापितौ पदौ ॥ आच्छाद्य पीतवस्त्रेण । शरीरं सकलं निजं ॥ सुप्तो निद्रामवापासौ । दीर्घनिद्रोपसूचिनीं ॥ १० ॥ अस्माकं पुण्यहीनानां । शुभा दशाधुनास्ति न ॥ ततो निद्रायितं बंधुं । ममैनं कोऽपि मावधीत ॥ ११ ॥ विमृश्येति बलः पश्चा—दागत्य पुनरप्यवक् ॥ निद्रादिकं प्रमादं मा—कार्षीर्बांधव वल्लभ ॥ १२ ॥ अस्माकं बहवः संति । शत्रवोऽपदशावतां ॥ त्वया तदप्रमादेन । स्थातव्यमत्र शाखिनि ॥ १३ ॥ निद्राघूर्णितचक्षुः स । उन्मुखीभूय चाभ्यधात ॥ श्रितस्य शरणं ताव—कीनं मे भीः कुतोऽपि न ॥ १४ ॥ व्रज व्रज द्रुतं भ्रातः । शीतं तोयं समानय ॥ तृषा संहरति प्राणां—स्तालवोष्ठौ मम शुष्यतः ॥ १५ ॥ बंधुनेत्युदिते रामो । जलाय जग्मिवान् जवात ॥ भ्रमन् जराकुमारश्च । तावत्तत्र

रिसेवकैः पांडु—पुत्रैर्मुक्तो मृतोपमः ॥ ९३ ॥ तं गत्वारक्षकाः प्रोचुः । प्रजोऽत्र नगरे नवः ॥ पु
मान्न कोऽपि समेतोऽस्ति । तं ब्रुवंति बलं जनाः ॥ ९४ ॥ तेन तस्करवत्स्वीये । दत्वा कटकमुद्रि
के ॥ भोज्यपाने उपादत्ते । स बहिर्यांति संप्रति ॥ ९५ ॥ इति श्रुत्वा स्मरन् वैर—मब्दंदनो ज
गाद तान् ॥ आरक्षका न मोच्योऽयं । रामोऽस्तु तस्करोऽथवा ॥ ९६ ॥ आरूढः कथयन्नेव—म
श्वं सैन्येन वयसा ॥ नृपस्तत्र समायातो । यत्र प्रवर्तते हली ॥ ९७ ॥ अब्दंदनं नृपं वीक्ष्या—
गच्छंतं हंतुमुद्यतं ॥ प्रतोल्याः प्रददाते द्रा—क्पाटौ सीरपाणिना ॥ ९८ ॥ यावत्तैः समुदायेनो—
द्घाटितौ तौ पराक्रमात ॥ तावदालानमुन्मूल्या—धावद्दंतु मुशल्यपि ॥ ९९ ॥ बांधवज्ञापनार्थं च
। क्ष्वेडा तेन विनिर्मिता ॥ तामाकर्ण्य मुकुंदोऽपि । सहसा समुपागतः ॥ २०० ॥ सोऽपि कपाट
शस्त्रेण । भंजयामास तद्बलं ॥ प्राह रे क्षुद्र राज्यं त्व—मस्माकमपराध्यपि ॥ १ ॥ गब्दांदंद न
जीवंस्त्वं । मुक्तः करुणया मया ॥ कृपैव सांप्रतं जाता । त्वदीयप्राणरक्षिका ॥ २ ॥ इत्युक्त्वा गो-
ज्यपाने ते । विमुक्ते स्थानके पुरा ॥ आदाय ययतुर्बंधू । द्वावपि क्वापि कानने ॥ ३ ॥ तत्रोत्साव-
पि गत्वा तौ । क्षुत्तृपाभ्यां निपीडितौ ॥ आकंठं बुभुजाते च । दुष्कालप्रासधान्यवत् ॥ ४ ॥ भुक्त्वा

पन्नाः स्वर्गमासदत ॥ ८१ ॥ ज्वलंत्यां पुरि षण्मासीं । यावच्चंडकृशानुना ॥ षष्टिर्द्वासप्ततिर्दग्धा । य-
दूनां कुलकोटयः ॥ ८२ ॥ मृतकस्योपरि प्रीत्या । जलं प्रक्षिप्यते जनैः ॥ इत्तीव द्वारिका शीति—
कर्तुमाप्लाविताब्धिना ॥८३॥ हस्तकल्पपुरं गच्छ—न्नाथ नारायणोऽध्वनि ॥ बभूव क्षुत्तृषाक्रांत—स्त·
त्पीमा ह्यतुला पथि ॥ ८४ ॥ तदा जिष्णुर्जगौ बंधो । बाधेते क्षुत्तृषे मम ॥ निजगाद स निष्ठ त्व
—मत्र प्रमादवर्जितः ॥ ८५ ॥ गत्वैतन्नगरं भोज्यं । त्वदर्थमानये यथा ॥ गतस्य मम चेत्पीमा
। प्रजायते कदाचन ॥ ८६ ॥ सिंहनादं करिष्यामि । तदाहं शत्रुपीडितः ॥ तमाकर्ण्य त्वया तूर्णं
समेतव्यं सहोदर ॥ ८७ ॥ गदित्वेति मुकुंदस्य । यावत्तत्र गतो हली ॥ तावद्दिव्याकृतिः कोऽयं ।
तत्रत्यैरिति वीक्षितः ॥ ८८ ॥ द्वैपायनेन कोपेन । ज्वालिता द्वारिकापुरी ॥ ततो निर्गत्य रामोऽयं
। समायातोऽस्त्यवस्थया ॥ ८९ ॥ लोकेनेत्यनुमानेन । किंवदंती मिथः कृता ॥ ज्वहंकेनैव लोकः
स्यात । प्रायशो जाषको यतः ॥ ९० ॥ जग्राह बलदेवोऽपि । भोज्यं कांदविकापणात ॥ स्वहस्त-
मुद्रिकां दत्वा । कटकेन च वारुणीं ॥ ९१ ॥ भोज्यपाने समादाय । बलजद्रोऽपि गोपुरं ॥ याव
त्समागतस्ताव—दारक्षा नृपतिं गताः ॥ ९२ ॥ तत्रास्ति धृतराष्ट्रस्य । सुनोऽच्छंदनवृत्तिः ॥ मुरा-

तेषां । गेहे न गमनं वरं ॥ ७० ॥ तदा जगाद रामोऽपि । भ्रातरेषा विचारणा ॥ सांप्रतं तव यो ग्या न । योग्यं च प्राणरक्षणं ॥ ७१ ॥ तेषां त्वयोपकारास्तु । संति प्राज्याः पुरा कृताः ॥ संति तेऽप्युपकारज्ञाः । करिष्यंत्यर्चनं तव ॥ ७२ ॥ बहुशः प्रेरितो ज्येष्ठ—बांधवेनेति माधवः ॥ पूर्वद क्षिणदिग्नागे । स पांडुमथुरामगात ॥ ७३ ॥

इतश्च नेमिनाथस्य । शिष्यो रामस्य चात्मजः ॥ तापाक्रांतो गृहोपर्या—रूढोऽवक् कुब्जवारकः ॥ ७४ ॥ अहं श्रीनेमिनाथेन । कथितोऽस्मि शिवंगमी ॥ अहमत्रैव भस्मस्यां । तत्सत्यं भविता कथं ॥ ७५ ॥ कदाचिद्यदि तत्सत्यं । भगवद्वचनं भवेत् ॥ समुत्पाट्य तदा कोऽपि । नेमिपार्श्वे विमुंचतु ॥ ७६ ॥ यथाहमपराधं स्वं । क्षामयित्वा तदंतिके ॥ गृह्णामि भवभेदैक—करणं चरणं वरं ॥ ७७ ॥ तेनेत्युक्ते सुरास्तिर्यग्—जृंभगा निजशक्तितः ॥ उत्पाट्य भगवत्पादां—तिकेऽमुंचन् क्ष णादपि ॥ ७८ ॥ पल्लवाख्ये तदा देशे । गतोऽभूद्विहरन् जिनः ॥ स तत्पार्श्वे व्रतं लात्वा । शिव सौख्यमसाधयत ॥ ७९ ॥ बलदेवमुकुंदादि—यदूनामथ योषितः ॥ पूर्वं श्रीनेमिनः पार्श्वे । संयमं जगृहुर्नः याः ॥ ८० ॥ ताः श्रीनेमिजिनेशस्य । ध्यायंत्यो नाम मानसे ॥ चतुःशरणमापन्ना । वि

॥ ५८ ॥ गत्वा तत्र स्थितौ याव—त्तौ दुःखैः स्फुटदुर्बलौ ॥ ज्वालामालाकुलां दह्य—मानां पुरीमप-
श्यतां ॥ ५९ ॥ निर्गछतो महाज्वाला—हस्तेनैव पराक्रमात् ॥ आकृष्याकृष्य मध्येऽग्नि-रक्षिपन्ना-
गरानिह ॥ ६० ॥ रत्नानां भित्तयस्तत्र । बभूवुरङ्गगणोपमाः ॥ गोशीर्षचंदनस्तंभा । शुष्केंधनानु
कारिणः ॥ ६१ ॥ यथा पर्वतशृंगाणि । कल्पांतकालमारुतैः ॥ पतंत्यत्र तथा सद्म—कपिशीर्षाण्य-
पीपतन् ॥ ६२ ॥ न तौ शुश्रुवतुर्बंधू । हाहाकाररवं विना ॥ ज्वालाधूमान् विना नान्यत् । समैक्षे-
तां निजेक्षणैः ॥ ६३ ॥ दुःखपूर्णस्तदावादी—द्बलदेवं नरायणः ॥ इदं सहोदर श्रोतुं । वर्ते वी
क्षितुमक्षमः ॥ ६४ ॥ यावस्तत इतः क्वापि । नाश्राव्यं श्रूयते यथा ॥ एतदप्रेक्षणीयं न । यत्रावा-
भ्यां निरीक्ष्यते ॥ ६५ ॥ अभाग्यवशतस्ताव—द्दावां च किमास्पदं ॥ गछावस्तत्र संपूर्णा—कुर्व
आयुर्हि दुर्मरौ ॥ ६६ ॥ इति प्रोक्ते हली प्राह । भ्रातश्चिंतां करोषि किं ॥ त्वदीयभाग्ययोगेन ।
संति स्थानानि भूरिशः ॥ ६७ ॥ सांप्रतं पांडुपुत्राणा—मावां यावो निकेतनं ॥ तेऽपि संबंधिनोऽ-
स्माकं । वर्तंते बांधवत्वतः ॥ ६८ ॥ बभाषे बांधवं विष्णु—स्तत्रास्मि गम्यते कथं ॥ मयैव ते पुरा
कोपात् । कर्षिताः संति देशतः ॥ ६९ ॥ वरं मृत्युर्वरं सिंह—संयुक्तवनसेवनं ॥ आवयोर्लज्जया

जजल्प सः ॥ बलकृष्णावयं मोहः । क्रियते किं विमंचकः ॥ ४७ ॥ पूर्वमेव मया प्रोक्तं । समस्ति
युवयोः पुरः ॥ अस्यां पुर्यां विमोक्षामि । युवांविना न कंचन ॥ ४८ ॥ एतदर्थमेव मया । विक्री-
तं सकलं तपः ॥ निष्फलं तन्निदानं किं । भविष्यति भवद्बलात् ॥ ४९ ॥ इत्युक्ते तेन पापेन ।
पितरौ प्रजजल्पतुः ॥ युवाभ्यां तद्भवद्भ्यां तु । जीवंतु यदुवंशजाः ॥ ५० ॥ अस्मदर्थं युवाभ्यां तु
। प्रयत्नो जनितो महान् ॥ तथापि मुच्यते नेयं । दुःसाध्या भवितव्यता ॥ ५१ ॥ यदि प्रथमम-
स्माभिः । श्रीनेमिक्रमसन्निधौ ॥ नाददे संयमः कर्म—फलं भोक्ष्यामहे तदा ॥ ५२ ॥ इत्युक्तेऽपि
न गच्छतां । यावत्तौ सीरिशार्ङ्गिणौ ॥ अश्रुपातं प्रकुर्वाणौ । संस्थितौ तत्र मोहतः ॥ ५३ ॥ देव-
कीरोहिणीतात—वसुदेवैर्महार्हतैः ॥ तावच्चतुर्विधाहार—प्रत्याख्यानं विनिर्ममे ॥ ५४ ॥ अथ श्री-
नेमिनाथस्य । संसारदुःखनाशिनः ॥ अस्माकं शरणं भूया—द्भवेऽत्रापि भवांतरे ॥ ५५ ॥ शरणं
भवतादर्ह—त्सिद्धसाधुवृषस्य नः ॥ स्वयमाराधनां कृत्वा । नमस्कारान् मुखेऽस्मरन् ॥ ५६ ॥ विमु-
क्तजीविताकांक्षा—स्त्रयोऽपि तेऽभवन् यदा ॥ तदा वह्निमयं मेघं । सोऽसुरस्तेष्ववर्षयत् ॥ ५७ ॥
त्रयोऽप्यासन् शुक्लध्याना—न्मृतास्ते स्वर्गभाजिनः ॥ ततः सात्वतगोविंदौ । जीर्णोद्यानं प्रचेलतुः

लयितुं जगत् ॥ ३६ ॥ कल्पांतकालसंकशा । ज्वाला मुंचन् धनंजयः ॥ कोऽपि मा नश्यतादेव । धूमध्वांतमिव व्यधात् ॥ ३७ ॥ देवकी वसुदेवाख्यो । रोहिण्यपि निजांगजौ ॥ ज्वलज्ज्वलनतापेन । निपीडिता अवीवदन् ॥ ३७ ॥ द्वाभ्यामेव युवाभ्यां चा—द्रोहिण्यो बहवो जिताः ॥ सांप्रतं गोप्यते सौवं । बलं कथं बलाच्युतौ ॥ ३७ ॥ दुःखमस्माकमैक्षेया । युवां पूर्वं मनागपि ॥ कथनेन विनैवैत—द्युवाभ्यां तु निराकृतं ॥ ३ए ॥ संप्रत्यसहमानोऽस्मां—स्तापो निपीडयत्ययं ॥ तथापि न युवां सारां । कुरुतः क्व गतौ सुतौ ॥ ४० ॥ पित्रोरिति वचः श्रुत्वा । दुःश्रव्यं दुःखगर्भितं ॥ समारोपयतां राम—माधवौ तौ निजं रथं ॥ ४१ ॥ तावद्वाहयतां याव—त्तावत्तस्यैव वाजिनः ॥ यंत्रिता असुरेणाशु । मंत्रेण मनुजा इव ॥ ४२ ॥ द्वाभ्यामपि सगर्वाभ्यां । स्वयमुत्पाटितो रथः ॥ तदा तस्य युगं भग्नं । धनुर्भंग इवाहवे ॥ ४३ ॥ पित्रो रक्षार्थमात्मीय—बलेनैवाथ सोद्यमौ ॥ आनयामासतू राम—माधवौ तं प्रतोलिकां ॥ ४४ ॥ हा रक्ष बलदेव त्वं । हा रक्ष त्वं जनार्दन ॥ दहामो वयमित्यासी—द्रूदनं परितो नृणां ॥ ४५ ॥ कपाटौ तस्य रामेण । हत्वा दक्षिणपार्ष्णिना ॥ भुजाभ्यां वेष्टितः पुर्याः । स्यंदनः कर्षितो बहिः ॥ ४६ ॥ तदा साक्षात्प्रकारेण । दुष्टोऽसुरो

ततः पातकिना तेना—प्यवाप्यावसरं निजं ॥ उत्पाता विविधा व्यक्ती— चक्रिरे तत्र दुस्सहाः ॥२५॥
उल्कापातस्त्रियामायां । म्लाना नक्षत्रराशयः ॥ विद्युत्पात इवांगार—वृष्टिस्तेभ्योऽप्यजायत ॥ २६ ॥
दृश्यां नैश्यंत ताराश्च । क्षीणं तेजोऽर्कचंद्रयोः ॥ स्वयमेवापतन् शृंगा—ण्यात्मप्रासादगानि च ॥२७॥
भयंकराट्टहासोऽपि । काष्ठाचतुष्टयोद्भितः ॥ अश्रूयत जनै रात्रौ । निद्राभंगविधायकः ॥ २८ ॥ फे-
त्कारघूत्कशब्दानां । श्रवणं पूर्वमश्रुतं ॥ दिग्दाहो भूमिकंपश्च । मानसोद्वेगधारकः ॥ २९ ॥ पाषा-
णोल्लिखितानां च । पुत्रकाणां प्रदर्शनं ॥ वेतालशाकिनीभूता—दिभिर्युक्तोऽसुरोऽभ्रमत् ॥ ३० ॥
उत्पेदिरे यथा पुण्या—द्धीरचक्रादिकानि च ॥ रत्नानि हलिनो विष्णो—र्नेशुस्तान्यघतस्तथा ॥
॥ ३१ ॥ विचकाराथ वातश्च । संवर्तः स्पर्शतः खरः ॥ एकत्र सर्वतस्तेन । तृणकाष्ठान्यमेलयत् ॥
॥ ३२ ॥ पुरीबाह्येऽपि येऽभूवं—स्तृणकाष्ठमहीरुहः ॥ तानप्यानीय तत्रैव । प्रचिक्षेपासुरोऽधमः ॥
॥ ३३ ॥ यादवानां ततः षष्टि—कुलकोटीर्बहिः स्थिताः ॥ मध्ये द्वासप्ततिं पिंडी—कृत्य सोऽग्निमदी-
पयत ॥ ३४ ॥ यत्र तत्र गतं मर्त्यं । यथा यमो न मुंचति ॥ पावकोऽपि प्रणश्यंत—मपि पौरं त-
थाग्रहीत ॥ ३५ ॥ धगधगिति शब्देन । त्रटत्कारेण भीषणः ॥ ज्वालाभिरुद्यतो वह्नि—रिव ज्वा-

तीर्थपः ॥ १३ ॥ ब्रह्मलोके सुरो भावी । बलदेव इतो मृतः ॥ ततश्च्युत्वा पुमानेव । ततोऽपि त्रिदशः पुनः ॥ १४ ॥ ततोऽपि च मनुष्यत्व—माप्य तीर्थे तवाच्युत ॥ कर्माणि तपसा क्षिप्त्वा । महानंदमवाप्स्यति ॥ १५ ॥ उक्त्वेति पद्मनाभस्य । विजहेऽन्यत्र पारगः ॥ कृष्णोऽपि तन्नतिं कृत्वा । द्वारवत्यां समाययौ ॥ १६ ॥ जानन्नैश्वयिकीं वार्ता—मविषादोऽपि माधवः ॥ द्वारवत्यां पुनर्भूत्यै—रुद्घोषणामकारयत ॥ १७ ॥ नैयत्यान्नगरीदाहो । द्वादशाब्दे भविष्यति ॥ अतो धर्मैककर्तव्ये । प्रवर्तव्यं सुखार्थिभिः ॥ १८ ॥ तदुद्घोषणमाकर्ण्य । लोकाः सुखाभिलाषिणः ॥ आचाम्लादितपोधर्मे । प्रावर्तत भयातुराः ॥ १९ ॥

ततो द्वैपायनो मृत्वा । बभूवाग्निकुमारकः ॥ विभंगज्ञानतस्तत्र । स्मरन् प्राग्वैरमाययौ ॥ २० ॥ देवपूजातपोदान—व्रतयात्राक्रियादिषु ॥ धर्मकर्मसु तत्रासौ । निरतं जनमैक्षत ॥ २१ ॥ धर्मकर्तव्यमाहात्म्या—द्बलं विलोकयन्नपि ॥ स दुष्टात्मावकाशं न । कथमप्युपलब्धवान् ॥ २२ ॥ द्वादशे हायने पूर्णे । जाते तत्र निवासिनः ॥ अजानन् मनुजाः क्वापि । क्वयं गतः स तापसः ॥ २३ ॥ अथ क्रीमां वयं कुर्मो । यथेष्टमिति नागराः ॥ चिंतयंतोऽभवन्मद्य—पानादिरसिका भृशं ॥ २४ ॥

ततः श्रीनेमिनाथेन । तेषां दीक्षा समर्पिता ॥ स्वजन्मनाममन्यंत । सर्वेऽपि ते कृतार्थतां ॥ २ ॥
रुक्मिण्या जांबवत्या च । गृहीतः संयमो यदा ॥ तदोपाददिरे प्राज्या । अपि तद्यादवांगनाः ॥३॥
पप्रच्छ पद्मनाभोऽथ । त्रिकालविज्जिनेश्वरं ॥ कदा द्वारवतीदाहं । द्वैपायनः करिष्यति ॥ ४ ॥ प्रभा-
ण भगवान्नेमि—र्द्वादशे हायने हरे ॥ द्वारिकां ज्वालयिष्यत्य—सौ प्रकोपप्रपूरितः ॥ ५ ॥ प्रभो-
र्वचियं निशम्येति । चिंतयामास केशवः ॥ अधन्योऽहमपुण्योऽहं । गृहवासे स्थितोऽस्मि यत ॥६॥
धन्याः समुद्रविजया—दिका वृद्धाश्च बांधवाः ॥ सुताः कांता ममान्येऽपि । भूपाला यादवांगनाः ॥
॥ ७ ॥ दुरात्मा बहुसंसारो । लुब्धो वैषयिके सुखे ॥ वर्तेऽहं येन चारित्र—ग्रहणेऽपि न मे मनः
॥ ८ ॥ इति खेदं प्रकुर्वाणं ! विज्ञाय मधुसूदनं ॥ प्रजजल्प जिनो नेमि—र्माकार्षीः खेदमच्युत
॥ ९ ॥ भवेयुर्वासुदेवा ये । न तेषां तत्र जन्मनि ॥ दीक्षा भवेद्यतस्ते स्यु—र्निदानेन समन्वि-
ताः ॥ १० ॥ अवश्यं ते मृता यांति । निदानान्नरकावनौ ॥ तद्वालुकाप्रभां विष्णो । मृत्वा त्वमपि
यास्यसि ॥ ११ ॥ दधानमपि माधुर्य—माकर्ण्य नेमिभाषितं ॥ प्राज्यं प्रथमतो दुःख—मवाप म-
धुसूदनः ॥ १२ ॥ तदार्हन् पुनरप्यूचे । मा विषीद जनार्दन ॥ भविष्यस्यत्र भरते । द्वादशस्त्वं तु

त्वया तनय संसार—स्वरूपं यादृगीरितं ॥ तादृगेवाहमप्येत—ज्जाने जिनवचःश्रुतेः ॥ ६७ ॥ किंतु पुत्रोपरि स्नेहः । कामिनीनां भवेन्महान् ॥ अतो वच्म्यधुना दीक्षां । माग्रहीस्त्वं सयौवनः ॥ ६८ ॥ सर्वथैव कदाचिच्चे—त्प्रव्रजिष्यसि वल्लभ ॥ तदाहमपि चारित्रं । ग्रहीष्यामि त्वया सह ॥ ६९ ॥ तवाधारेण संसारे । तिष्ठंत्यासमहं खलु ॥ त्वमेव प्रव्रजेर्यर्हि । तदाधारो ममात्र कः ॥ ७० ॥ इति श्रुत्वा जनन्युक्तं । प्रद्युम्नो हृष्टमानसः ॥ गत्वांतः पुरमात्मीयं । मृगेक्षणा भ्यवीवदत् ॥ ७१ ॥ भवं तीभिः समं भोगा । मया भुक्तास्त्वनेकधा ॥ अथाहं भवभोगेभ्यः । संजातोऽस्मि पराङ्मुखः ॥७२॥ स्वर्लोकेऽनेन जीवेन । भोगा हृदयवांछिताः ॥ भुक्ताः सत्रा सुरस्त्रीभि—स्तृप्तिस्तथापि नाभवत् ॥ ॥ ७३ ॥ मनुष्येष्वपि तिर्यक्षु । नरकेष्वपि दुःखिषु ॥ न भोगा दुर्लभा एते । जीवस्य भववर्तिनः ॥ ७४ ॥ चतसृष्वपि गतिषु । जीवस्य भ्रमतः सतः ॥ ऐश्वर्यभोगसामग्री । दुर्लभा न प्रवर्तते ॥ ॥ ७५ ॥ मानुष्ये प्रभुवाक्यानां । योगेऽपि यच्च दुर्लभं ॥ तद्दीक्षारत्नमादातु—मुत्साहो मम वर्तते ॥ ७६ ॥ युष्माकमाज्ञया पूर्ण । उत्पन्नः स भवेन्मम ॥ ततो यूयं प्रदत्ताज्ञां । पूर्णीकरोमि तं य- था ॥ ७७ ॥ पत्युर्वचनमाकर्ण्य । काचिद्वैराग्यसंमदं ॥ काचिच्च दुःखमाधत्तां—दासिन्यं काचिदप्य-

त्तं । भयानकं प्रजायते ॥ ५६ ॥ इति भयानकरसः ॥ परस्त्रीभिः समं लुब्धा । भवेयुर्ये नराधमाः ॥ अतृप्ताः कामभोगेषु । यांति ते नरकं मृताः ॥ ५७ ॥ परमाधार्मिका दौरे—र्भोमास्यैर्वह्निविग्रहैः ॥ बीभत्सानि स्वरूपाणि । विधायालिंगयंति तान् ॥ ५८ ॥ इति बीभत्सरसः ॥ अभव्यैरप्यवाप्यंत । ऐहिकानि सुखानि च ॥ ततश्चित्रं न संसार—सुखभोगे शरीरिणां ॥ ५९ ॥ पुरीषमलमूत्राणां । भांडागारमिदं वपुः ॥ अस्माच्चेत्साध्यते मोक्ष—सुखं तर्ह्यद्भुतं महत् ॥ ६० ॥ इत्यद्भुतरसः ॥ सांसारिकाणि सौख्यान्यु—पायेन येन केनचित् ॥ लभ्यंते मोक्षशर्माणि । न हि शांतरसं विना ॥ ॥ ६१ ॥ ततः स्तुवंतु मां केचि—न्निंदंतु कुट्टयंतु वा ॥ निघ्नंतु लेष्टुभिश्चारु—चंदनेनार्चयंतु च ॥ ६२ ॥ तेषु हारेष्वहौ पुष्प—शय्यायामुपले पुनः ॥ तृणे स्त्रैणे रिपौ मित्रे । भवतात्समता मम ॥ ६३ ॥ युग्मं ॥ सिद्धिसंसिद्धये कायो—त्सर्गमाधाय कानने ॥ स्थितस्य मे कदा वक्र—माघ्रास्यंति वने मृगाः ॥ ६४ ॥ इति शांतरसः ॥ इति शांतरसं मात—र्नवमं त्वत्प्रसादतः ॥ प्रसाधयितुमिच्छामि । त्वमादेशं समर्पय ॥ ६५ ॥

इत्थं वैरंगिकं वाक्यं । समाकर्ण्य मनोभुवः ॥ जनन्यप्यवदन्मोह—समन्विता स्वनंदनं ॥६६॥

क्रीडा कृता त्वया समं ॥ ९० ॥ अथ किं त्वयाविना गेहे । तिष्ठामो निरधीश्वराः ॥ बांधव प्रव्रजि-
ष्याम—स्ततो वयमपि त्वया ॥ ९१ ॥ सहोदरसुहृद्वाक्य—मिष्टमाकर्ण्य मन्मथः ॥ तैर्जनन्या च
कांताभिः । समारुरोह हस्तिनं ॥ ९२ ॥ रुक्मिणीमस्तुवन् केचित । केचित्तदा नरायणं ॥ प्रद्युम्नसां-
बमित्राणि । स्त्रियः केचिच्च नेमिनं ॥ ९३ ॥ सा धन्या जननी यस्याः । कुक्षिजः सुत ईदृशः ॥
धन्यः स पद्मनाभोऽपि । यस्य वंशः प्रदीपकः ॥ ९४ ॥ धन्यः सांबकुमारोऽपि । यस्तस्य सहचार्य-
न्नत ॥ धन्यानि तानि मित्राणि । यैर्मैत्री प्रतिपालिता ॥ ९५ ॥ एता धन्याः स्त्रियो रूप—लाव
ण्यर्द्धिसमन्विताः ॥ सम्यक् पतिव्रताधर्म—पालका अभवंश्च याः ॥ ९६ ॥ धन्यो नेमिजिनो येन
। त्रैलोक्योत्तापकारकः ॥ सुधामधुरया वाण्या । प्रद्युम्नोऽपि प्रबोधितः ॥ ९७ ॥ अयं धन्यः कुमा-
रोऽपि । विनोदान परिहृत्य यः ॥ कैवल्यसाधनायात्र—तारुण्येऽपि समुद्यतः ॥ ९८ ॥ द्वारिकानर-
नारीभिः । स्तुत्येति क्रियमाणया ॥ ददहानं महाहर्षः । प्रद्युम्नः प्राप नेमिनं ॥ ९९ ॥ नत्वा प्र-
दक्षिणाभिः स । श्रीनेमिनं व्यजिज्ञपत ॥ भवोद्विग्नस्य मे देहि । चारित्रं निजपाणिना ॥१००॥
दुःखितानामनाथानां । धर्मिणां पापिनां नृणां ॥ त्वमेव वर्तसे नाथ । संसारात्तारणक्षमः ॥ १ ॥

त्वं ॥ ७८ ॥ विलपंत्यो विमुंचंत्यो । निःश्वासान् विततान् मुखात ॥ जगुर्गद्गदया वाण्या । ततो र त्यादिकाः स्त्रियः ॥ ७९ ॥ प्राणनाथ भवेयुर्या । योषितः सुकुलोद्भवाः ॥ तासां रमण एव स्या—द्दैवतं परमं खलु ॥ ८० ॥ भोदयसे त्वं महाभोगान् । संसारे संस्थितो यदि ॥ तदा वयमपि स्वामि—न्नेता भोक्ष्यामहे त्वया ॥ ८१ ॥ पतिव्रतप्रयुक्ताना—मस्माकं गुणचेतसां ॥ तव सौख्ये महासौख्यं । दुःखे दुःखं भवत्वथ ॥ ८३ ॥ चेद्ग्रहीष्यसि चारित्रं । तदा वयमपि प्रभो ॥ त्वया सार्धं ग्रहीष्याम—स्तत्कर्मप्रविनाशनं ॥ ८४ ॥

इति स्त्रीणां निशम्योक्तिं । प्रद्युम्नो ह्लादमेदुरः ॥ बाल्येऽपि सहचारीणि । सांबं मित्राणि चावदत् ॥ ८५ ॥ अहो भ्रातर्वयस्या भो । बालत्वकृतकेलयः ॥ युष्माभिः सह बाल्येऽपि । विनोदा विहिता मया ॥ ८६ ॥ तेष्वपि क्रियमाणेष्व—पराधो यो मया कृतः ॥ क्षंतव्यः स भवद्भिर्मे । चारित्रादानचेतसः ॥ ८७ ॥ संसारे भ्रमतोऽभूवन् । जीवस्यास्य सहोदराः ॥ बहवः सुहृदो दारा । मोक्षोऽभून्न कदाचन ॥ ८८ ॥ युष्माभिरपि तत्क्षिप्र—मादेशो दीयतां मम ॥ बंधुमित्रेषु युष्मासु । साधयामि यथा शिवं ॥ ८९ ॥ इत्युक्ते बंधुमित्राणि । प्रजजल्पुः सहोदर ॥ इयंतं समयं यावत् ।

त्वया तनय संसार—स्वरूपं यादृगीरितं ॥ तादृगेवाहमप्येत—ज्ज्ञाने जिनवचःश्रुतेः ॥ ६७ ॥ किंतु
पुत्रोपरि स्नेहः । कामिनीनां भवेन्महान् ॥ अतो वच्म्यधुना दीक्षां । माग्रहीस्त्वं सयौवनः ॥ ६८ ॥
सर्वथैव कदाचिच्चे—त्प्रव्रजिष्यसि वल्लभ ॥ तदाहमपि चारित्रं । ग्रहीष्यामि त्वया सह ॥ ६९ ॥
तवाधारेण संसारे । तिष्ठंत्यासमहं खलु ॥ त्वमेव प्रव्रजेर्यर्हि । तदाधारो ममात्र कः ॥ ७० ॥ इति
श्रुत्वा जनन्युक्तं । प्रद्युम्नो हृष्टमानसः ॥ गत्वांतः पुरमात्मीयं । मृगेक्षणा अभ्यवीवदत् ॥ ७१ ॥ भवं
तीभिः समं भोगा । मया भुक्तास्त्वनेकधा ॥ अथाहं भवभोगेभ्यः । संजातोऽस्मि पराङ्मुखः ॥७२॥
स्वर्लोकेऽनेन जीवेन । भोगा हृदयवांछिताः ॥ भुक्ताः सत्रा सुरस्त्रीभि—स्तृप्तिस्तथापि नाभवत् ॥
॥ ७३ ॥ मनुष्येष्वपि तिर्यक्षु । नरकेष्वपि दुःखिषु ॥ न भोगा दुर्लभा एते । जीवस्य भववर्तिनः
॥ ७४ ॥ चतसृष्वपि गतिषु । जीवस्य भ्रमतः सतः ॥ ऐश्वर्यभोगसामग्री । दुर्लभा न प्रवर्तते ॥
॥ ७५ ॥ मानुष्ये प्रभुवाक्यानां । योगेऽपि यच्च दुर्लभं ॥ तद्दीक्षारत्नमादातु—मुत्साहो मम वर्तते
॥ ७६ ॥ युष्माकमाज्ञया पूर्ण । उत्पन्नः स भवेन्मम ॥ ततो यूयं प्रदत्ताज्ञां । पूर्णीकरोमि तं य·
था ॥ ७७ ॥ पत्युर्वचनमाकर्ण्य । काचिद्वैराग्यसंमदं ॥ काचिच्च दुःखमाधत्तां—दासिन्यं काचिदप्य·

तं । भयानकं प्रजायते ॥ ५६ ॥ इति भयानकरसः ॥ परस्त्रीभिः समं भुक्त्वा । भवेयुर्ये नराधमाः ॥ अतृप्ताः कामभोगेषु । यांति ते नरकं मृताः ॥ ५७ ॥ परमाधार्मिका दौरै—र्भीमास्यैर्वह्निविग्रहैः ॥ बीभत्सानि स्वरूपाणि । विधायालिंगयंति तान् ॥ ५८ ॥ इति बीभत्सरसः ॥ अभव्यैरप्यवाप्यंत । ऐहिकानि सुखानि च ॥ ततश्चित्रं न संसार—सुखभोगे शरीरिणां ॥ ५९ ॥ पुरीषमलमूत्राणां । भांमागारमिदं वपुः ॥ असाभ्रेत्साध्यते मोक्ष—सुखं तर्ह्यद्भुतं महत् ॥ ६० ॥ इत्यद्भुतरसः ॥ सांसारिकाणि सौख्यान्यु—पायेन येन केनचित् ॥ लभ्यंते मोक्षशर्माणि । न हि शांतरसं विना ॥ ॥ ६१ ॥ ततः स्तुवंतु मां केचि—न्निंदंतु कुट्टयंतु वा ॥ निघ्नंतु लेष्टुभिश्चारु—चंदनेनार्चयंतु च ॥ ६२ ॥ तेषु हारेष्वहौ पुष्प—शय्यायामुपले पुनः ॥ तृणे स्त्रीणे रिपौ मित्रे । भवतात्समता मम ॥ ६३ ॥ युग्मं ॥ सिद्धिसंसिद्धये कायो—त्सर्गमाधाय कानने ॥ स्थितस्य मे कदा वक्र—माघ्रास्यंति वने मृगाः ॥ ६४ ॥ इति शांतरसः ॥ इति शांतरसं मात—र्नवमं त्वत्प्रसादतः ॥ प्रसाधयितुमिच्छामि । त्वमादेशं समर्पय ॥ ६५ ॥

इत्थं वैरंगिकं वाक्यं । समाकर्ण्य मनोभुवः ॥ जनन्यप्यवदन्मोह—समन्विता स्वनंदनं ॥६६॥

रासुराः ॥ ४५ ॥ वदने च वपुःस्नेहे । पद्मसौरभ्यधारणात् ॥ पद्मिनी यांगना मापि । त्युक्ता शृं-
गारिता मया ॥ ४६ ॥ इति शृंगाररसः ॥ लंबोदरं वक्रग्रीवं । दीर्घहस्तक्रमान्वितं ॥ दंतुरं भग्नक-
टिकं । निंद्यरूपं मया कृतं ॥ ४७ ॥ तेन रूपविधानेन । हास्याय भानुकन्यका ॥ अपहृत्य समानी-
ता । मयका तव सन्निधौ ॥ ४८ ॥ इति हास्यरसः ॥ ये शेरंते प्रसूनानां । शय्यायां भोगिनो न-
राः ॥ कांतालिंगनसंयुक्ता—स्तांबूलभृतदाननाः ॥ ४९ ॥ रंकाः साधारणास्तेऽपि । पृथिव्यां प्र
स्तरे क्वचित ॥ करुणार्हा लभंते न । रात्रौ शयनमप्यहो ॥ ५० ॥ प्रत्यक्षं देवलोकेन । समाना
यां समृद्धिभिः ॥ अप्यस्या द्वारिकायाश्च । यदूनां च कुलक्षयः ॥ ५१ ॥ इति करुणारसः ॥ भवि-
ष्यति तदा कीदृग् । रौद्रं जननि दुस्सहं ॥ कोलाहलैर्मनुष्याणां । रक्षरक्षेति जल्पतां ॥ ५२ ॥
इति रौद्ररसः ॥ सहस्रयोधिनो मर्त्या । भवंति लक्षयोधिनः ॥ दधाना ह्यहंकारं । संग्रामे नाप्य-
पासरन् ॥ ५३ ॥ तदीयमभिमानित्वं । विज्ञेयं सकलं मुधा ॥ दुःकर्मशत्रवा वीर—रसेन विजिता
न यैः ॥ ५४ ॥ इति वीररसः ॥ संसारे वसतां पुंसां । देहे रोगजरोद्भितं ॥ धने च पृथिवीनाथ
—तस्कराणां भवेद्भयं ॥ ५५ ॥ एतेभ्योऽपि भवेद्रक्षा । कदाचित्पूर्वपुण्यतः ॥ तथापि मृत्युतश्चि-

द ब्रवीपि य—त्तच्च नूनं न सुंदरं ॥ कस्य कस्य भवस्यांबा । पिता च संस्मरिष्यते ॥ ३५ ॥ प्रोक्तं
समस्तशास्त्रेऽपि । नीरागैरपि पारगैः ॥ यावंति संति तोयानि । नदीषु च पयोधिषु ॥ ३६ ॥ स्तन्य·
पानानि तेभ्योऽप्य—धिकानि भ्रमता मम ॥ मातुर्जीवेन पीतानि । कानि कानि स्मराम्यहं ॥३७॥
एकोदरसमुद्भूताः । स्नेहयुक्ताः सहोदराः ॥ स्वार्थसंप्राप्त्यभावेन । तेऽपि विघटयंति च ॥ ३७ ॥
आत्मन्यैश्वर्यसंयुक्ते । मिलंति स्वजना अपि ॥ तदभावे न कोऽपि स्या—द्भुवने स्वजनो निजः
॥ ३८ ॥ तावदेव स्फुरद्विद्या ! तावद्रूपं मनोहरं ॥ तावदेव च लावण्यं । यावत्पुण्यं पुरातनं ॥३९॥
पावनं तावदेवात्र । दृश्यते नयनद्वयं ॥ यावद्रोगजराग्रस्तं । शरीरं च नृणां भवेत ॥ ४० ॥ का
मिन्यो नीचगामिन्यो । निम्नगावन्निरंतरं ॥ मनोवचोवपुर्भिन्ना । तासु का प्रीतिनिर्मितिः ॥ ४१ ॥
येन प्राज्योद्यमेनापि । द्रविणं समुपार्जितं ॥ स्थिरं चेत्स्यान्न तस्यापि । क्रियते किं धनेन तत ॥
॥ ४२ ॥ यत्त्वयोक्तं समस्तापि । संपूर्णा संपदस्ति ते ॥ तत्सत्यं तव माहात्म्या—त्तथैव मम वर्तते
॥ ४३ ॥ किंच त्वदनुभावेन । रसा अष्टौ विलोकिताः ॥ पुरतस्तव तान् वच्मि । त्वमनुक्रमतः शृ·
णु ॥ ४४ ॥ विमुंचंत्याः कटाक्षेषुं । जयंत्या हरिणीं दृशा ॥ यस्या रूपेण तुष्यंति । योगिनश्च सु·

दायुःपानीयमंतरा ॥ २३ ॥ भवंतोऽपि च शृएवंतु । जो नृपा वचनं मम ॥ स्याद्वादोऽपि न युष्मा-
भि—र्विज्ञेयो जिनभाषिते ॥ २४ ॥ प्राचीतः पश्चिमायां चे—दुदेति गगनध्वजः ॥ तथापि नो
विज्ञोर्नेमेः । कथितं विफलं भवेत ॥ २५ ॥ अस्मादसारतो देहात । कैवल्यं यदि साध्यते ॥ तदै-
वायं प्रमाणं स्या—दन्यथा किं प्रयोजनं ॥ २६ ॥ शुद्धं प्रद्युम्नवैराग्य—मिति ज्ञात्वा सभासदः ॥
चमत्कृता दधुस्तेषु । केऽपि वैराग्यमुत्कटं ॥ २७ ॥ पुत्रं विज्ञाय बिभ्राणं । भवसौख्यविरक्ततां ॥
पितापि मौनमाधाय । संस्थितो दुःखपूरितः ॥ २८ ॥ दुःखितं जनकं ज्ञात्वा । मुक्त्वा सांबं निजा-
स्पदे ॥ स जगाम गृहं मातु—र्नत्वा तां विनयात् स्थितः ॥ २९ ॥ तत्र स्थित्वा क्षणं प्रोचे । प्र-
द्युम्नो मातरं निजां ॥ वैराग्यं प्रकटीभूत—मस्ति मे नेमिवाक्यतः ॥ ३० ॥ ततो देहि प्रसद्य त्व-
माज्ञां मातर्विचक्षणे ॥ विदधामीप्सितं कृत्यं । यथाहमविलंबितं ॥ ३१ ॥ इति तस्य वचः श्रुत्वा ।
रुक्मिणी मूर्छिताभवत ॥ जगौ सा लब्धचैतन्या । तनय त्वं ब्रवीषि किं ॥ ३२ ॥ तव माता पिता
बंधुः । स्नेहिलः स्वजनः पुनः ॥ विद्या रूपं च लावण्यं । यौवनं योषितो धनं ॥ ३३ ॥ न्यूना न
कापि संपत्ति—र्वर्तते तव नंदन ॥ ततः कथं परिव्रज्या—वार्ता करोषि सांप्रतं ॥ ३४ ॥ स जगा-

॥ ११ ॥ अतो देहि ममादेश—मुपदेशं यथार्हतः ॥ चारित्ररत्नमादाय । शृणोम्यहं निरंतरं ॥१२॥
इति तद्वचनं श्रुत्वा । कृष्णोऽभूद्भूरिदुःखभाक् ॥ बलदेवादयो भूपा । जाताः सदुःखविस्मयाः ॥१३॥
मुकुंदोऽपि ततोऽवादी—दरे पुत्र पवित्रधीः ॥ संप्रत्यवसरो दीक्षा—ग्रहणस्य तवास्ति कः ॥ १४ ॥
धीरेषु धीरताधारी । वीरेषु वीरतान्वितः ॥ भूरिभोगिषु भोगी त्वं । सर्वकामिषु काम्यसि ॥ १५ ॥
विद्यावत्सु च विद्यावान् । कलावत्सु कलाधरः ॥ सर्वरूपिषु रूपी त्वं । कांतिमत्सु च कांतिमान् ॥
॥ १६ ॥ राज्यभोगविलासानां । दिनानि तव यौवने ॥ वर्तते सांप्रतं पुत्र । न चारित्रोचितानि च
॥ १७ ॥ ततो गृहाण साम्राज्यं । भुंक्ष्व भोगाननेकधा ॥ गृहीतव्यस्त्वया पश्चात् । संयमो वार्धके
सुत ॥ १८ ॥ अपरेऽपि नृपाः प्राहुः । प्रद्युम्नं धैर्यसंयुताः ॥ बिभेषि प्रथमं किं त्व—मेव द्वारवती-
दयात् ॥ १९ ॥ न ज्ञायते भवेद्वृष्टि—रथवा नाब्दमुन्नतं ॥ वीक्ष्य प्रस्फोटयेः कुंभं । कथं त्वं ज-
लपूरितं ॥ २० ॥ एवं पितुः परेषां च । निशम्य स्नेहिलं वचः ॥ प्रद्युम्नोऽप्यदधत्स्नेह—वर्जितं
स्फूर्जितद्युतिः ॥ २१ ॥ त्वयापि ज्ञायते ताता—स्ति राज्यं नरकप्रदं ॥ भोगा रोगविधातारो । वि-
लासाः स्वप्नसन्निभाः ॥ २२ ॥ कमला चपला विद्यु—त्प्रात्कार इव वर्तते ॥ यौवनं वनवच्छुष्ये—

॥ अथ पंचदशः सर्गः प्रारभ्यते ॥

अथ तत्र जिनो नेमि—र्विहृत्य बहुभूतले ॥ भाग्येन समवासार्षी—ल्लोकानां धर्मचेतसां ॥
॥ १ ॥ समागमनमाकर्ण्य । श्रीमतो नेमिनो विभोः ॥ तुतुषुर्द्वारिकालोका । निदानशंकयाकुलाः
॥ २ केचिज्जानंति चारित्रं । ग्रहीष्यामो जिनांतिके ॥ कश्चिद्विशेषतो धर्मा—नुष्टानं च करिष्यते
॥ ३ ॥ इति धर्मरतैर्लोकैः । समन्वितो नरायणः ॥ ययौ नेम्यंतिके नत्वा—श्रौषीद्धर्मोपदेशनां ॥
॥ ४ ॥ तां निशम्य महामोह—निद्राविद्रावकारिणीं ॥ केचिदाददिरे दीक्षां । केचिद्वैराग्यमादधुः
॥ ५ ॥ कृष्णोऽपि वासुदेवत्वा—द्दीक्षां ग्रहीतुमक्षमः ॥ वैराग्येण युतो गेह—मागत्य बुभुजे सुखं
॥ ६ ॥ बलभद्रेण भूपालै—र्विद्याधरैश्च यादवैः ॥ पूरितायां सभायां च । सिंहासने स्थितो हरिः
॥ ७ ॥ बिरुदैर्बहुवंदीनां । स्तूयमानः समंततः ॥ चामरैर्वीज्यमानः स । पर्षदींद्र इवाबभौ ॥ ८ ॥
तदा राजांगजैर्युक्त—स्तत्र प्रद्युम्न ईयिवान् ॥ प्रणम्य पितरं प्राप्य । समयं स व्यजिज्ञपत ॥ ९ ॥
संसारानित्यतावक्त्रीं । निशम्य नेमिदेशनां ॥ संजातं मम वैराग्यं । संयमग्रहणात्मकं ॥ १० ॥ पि-
तस्तव प्रसादेन । भोगा भुक्ता मयाखिलाः ॥ तानप्यशाश्वतान् जानन् । जातो वैरंगिकोऽस्म्यहं ॥

द्वारिकापुरि ॥ ४५ ॥ तदा न्यवारयद्रामो । वासुदेवं सहोदरं ॥ तापसेनामुना नैव । प्रजल्पनमथो·
चितं ॥ ४६ ॥ वामनः कणपः पंगु—र्हीनांगो बधिरस्तथा ॥ प्रशामितोऽपि सद्वाक्यै—रुपशांतिं प्र·
याति न ॥ ४७ ॥ त्रिदंडिनि वराकेऽस्मिन् । कथनैः किं प्रयोजनं ॥ श्रीनेमिभाषितं सर्वं । कदापि
न वृथा भवेत् ॥ ४८ ॥ ततः शोकेन संयुक्तो । बहुदुःखं धरन् हृदि ॥ द्वारिकानगरीं प्राप्तः । सरा·
मो मधुसूदनः ॥ ४९ ॥ निदानं प्रकटीभूतं । कृतं तेन त्रिदंडिना ॥ द्वितीयस्मिन् दिने पुर्यां । मु·
कुंदोऽप्युदघोषयत ॥ ५० ॥ द्वारिकानगरीदाह—कृते द्वैपायनर्षिणा ॥ निदानं कृतमस्त्यस्माद् । ध·
र्मे भवतास्तु सादराः ॥ ५१ ॥ उद्घोषणां केशवकारितां ता—मेवं समाकर्ण्य पुरीमनुष्याः ॥ विशे·
षतो धर्मरता बभूवु—र्धर्मेण विघ्ना विलयं प्रयांति ॥ ५२ ॥ इति पंडितचक्रचक्रवर्तिपंन्यितश्रीराज·
सागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे गजसुकुमालदीक्षाग्रहणमुक्तिग·
मनकृष्णप्रश्नवर्णनो नाम चतुर्दशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

वृत्तांतं तं चरैर्ज्ञात्वा । व्यषीदन्मधुसूदनः ॥ अथायं कुपितो हाहा । यदुक्षयं करिष्यति ॥ ३४ ॥
चिंतयित्वेति गोविंदः । सात्वतेन समं ययौ ॥ जपद्वैपायनं बिन्यद् । द्वारिकाक्षयहेतुतः ॥३५॥
खंडीकृतं खलमिव । रक्ताक्षं क्रोधदुर्धरं ॥ समीक्ष्य तमुन्नौ बंधू । मृदुवाक्यैर्जजल्पतुः ॥ ३६ ॥ अ-
हो तापसमुख्य त्व—महो क्रियापरायण ॥ तव क्रोधविधानं न । योग्यतामेति सर्वथा ॥ ३७ ॥
क्रोधेन दुर्गतिप्राप्तिः । क्रोधेन वैरवर्धनं ॥ क्रोधेन क्षीणसंसार—वतामपि जवापदः ॥ ३८ ॥ मदां-
धैः पुनरज्ञानै—र्बालकैर्मम यद्यपि ॥ भृशं संतापितो मंतु । क्षमस्व त्वं तथापि तं ॥ ३ए ॥ बा-
लकैः कृतमन्यायं । क्षमंते त्रिदशा अपि ॥ तव तापस सदीक्षस्य । क्षमैवाक्षीणजूषणं ॥ ४० ॥ व-
चनैः कोमलैरेवं । प्रशामितोऽपि तापसः ॥ न प्राशाम्यमृतक्षेपै—र्धूमध्वज इवेधितः ॥ ४१ ॥ क्रु-
ध्दोऽभ्यधात् त्रिदंडी स । मावादीः कृष्ण जूरिशः ॥ यदहं तावकैः पुत्रै—र्निष्कारणैर्निपीडितः ॥
॥ ४२ ॥ कृतस्य तपसो मे स्यात् । फलं यदि मनागपि ॥ द्वारिकायाः सलोकाया । जूयासं ज्वा-
लकस्तदा ॥ ४३ ॥ तदैव मयकाकारि । निदानमिति दुस्सहं ॥ ततस्तव वचो मोघं । जविष्यति पु-
रो मम ॥ ४४ ॥ वारंवारं मुकुंद त्वं । विज्ञापयसि मां यदि ॥ युवां द्वौ बांधवौ तर्हि । मोक्ष्यामि

कोऽपि पूरुषः ॥ पर्यटन्प्रययौ तत्र । स शिलाकुंडमैक्षत ॥ २२ ॥ यथेष्टं तत्र पीत्वा तां । सुरां स्वादुकरीं मुखे ॥ स प्रासन्नरिसौहित्य—स्तां लात्वा द्वारिकां ययौ ॥ २३ ॥ तेन सांबकुमारस्य । तस्याश्चक्रारि ढौकनं ॥ तां निपीय कुमारोऽपि । मोदमानोऽवदन्नरं ॥ २४ ॥ इयं त्वया कुतः प्राप्ता । सुराणामपि दुर्लभा ॥ सोऽवग्यदि दिदृक्षा ते । दर्शयामि तदा विभो ॥ २५ ॥ स्थानप्रदर्शिना तेन । कुमारैरुत्कटैः सह ॥ द्वितीयदिवसे सांबः । शिलाकुंडेषु जग्मिवान् ॥ २६ ॥ निरीक्ष्य चिरकालेन । तेषु तां मदिरां वरां ॥ गृध्नत्वेन पपौ सांबो । भ्रातृभ्रातृव्यमित्रकैः ॥ २७ ॥ तारुण्येन सुरापान—विधानेन यदृच्छया ॥ सर्वेऽपि ते मदोन्मत्ता । बभूवुर्द्विरदा इव ॥ २८ ॥ गायंतो निपतंतस्ते । ददतो हस्ततालकान् ॥ ध्यानं प्रकुर्वतो द्वैपा—यनस्य पार्श्वमागताः ॥ २९ ॥ तापसं वीक्ष्य तं जाग्र—त्कोपः सांबोऽब्रवीदिदं ॥ मार्यतां मार्यतामेषो—ऽस्मद्द्वेषोत्पादधारकः ॥ ३० ॥ वराको मारितोऽस्माकं । द्वारिकायाः कुलस्य च ॥ ज्वालनेन परिध्वंसं । प्रविधास्यत्ययं कथं ॥ ३१ ॥ मुष्टिभिश्च चपेटाभि—र्लेष्टुभिश्चरणैस्तथा ॥ निहतः पातयित्वोर्व्यां । मुक्तो मृतकवत्कृतः ॥ ३२ ॥ मदाद् द्वैपायनर्षिं तं । जानंतो मानसे मृतं ॥ पुरीं द्वारवतीं गत्वा । ते स्वगेहमशिश्रयन् ॥ ३३ ॥

त्या। वर्तते मे प्रयोजनं ॥ १० ॥ विमृशन्निति चित्ते स। नमस्कृत्य जिनाधिपं ॥ निकेतनं निजं गत्वा। तूणीरद्वयमग्रहीत् ॥ ११ ॥ उभयोः पक्षयोरात्म—रक्षायै तूणयुग्मभृत् ॥ हस्ते धनुर्दधत्कृष्ण—रक्षार्थं वनवास्यभूत् ॥ १२ ॥ अदग्धो द्वारिकालोको। द्वैपायनोऽपि तापसः ॥ द्वारिकायदुरक्षार्थं। वनवासमसेवत ॥ १३ ॥ कृष्णोऽप्यनर्थमूलां च। मदिरापाननिर्मितिं ॥ विजानन्नगरीमध्या—त्सर्वत्रापि न्यषेधयत् ॥ १४ ॥ कदंबपादपात्पार्श्व—प्रवर्तिनि शिलोच्चये ॥ शिलाकुंडेषु मद्यानि। जीर्णान्यपि जहुर्जनाः ॥ १५ ॥ सिद्धार्थसारथिः कृष्ण—ज्येष्ठबंधुं व्यजिज्ञपत ॥ स्वामिन् मे देहि दीक्षाज्ञां। यथा न वीक्ष्यते क्षयः ॥ १६ ॥ द्वारवत्या यदूनां च। प्रलयं वीक्ष्य दुःखिता ॥ भविष्यति मम प्राज्या। तस्माद् गृह्णामि संयमं ॥ १७ ॥ बलभद्रोऽभणद्भद्र। प्रदाय वचनं मम ॥ परिव्रजेर्यदि त्वं त—द्दीक्षादेशं ददाम्यहं ॥ १८ ॥ परिव्रज्य तपस्तीव्रं। तप्त्वा च त्रिदशालये ॥ वृंदारको भवेस्त्वं चे—त्ततो मां प्रतिबोधयेः ॥ १९ ॥ अंगीकृत्य वचः सोऽपि। प्राव्राजन्नेमिसंनिधौ ॥ तपो विधाय षण्मासीं। बभूव स्वर्गसौख्यभाक् ॥ २० ॥ इतः क्षिप्तं पुरा मद्यं। शिलाकुंडेषु यज्जनैः ॥ वृक्षाणां पुष्पपातेन। तत्तीव्रं प्रत्युताभवत ॥ २१ ॥ ग्रीष्मकाले तृषाक्रांतः। सांबस्य

त्रिंशनो वने ॥ ९८ ॥ तेनानशनयोगेन । शुक्लध्यानवती मृता ॥ ममादद्रे महानंद—पदं कन·
कवत्यपि ॥ ९९ ॥ अथ श्रीनेमिनाथस्य । विधाय विनयं स्वनुः ॥ पप्रच्छ देशनाप्रांते । द्वारिका·
याः स्वरूपकं ॥ १०० ॥ उत्पत्तिस्थितिनाशाढ्यं । स्वरूपं वस्तुनस्त्रिधा ॥ ततः कथं द्वारिकाया । या·
दवानां च मे क्षयः ॥ १ ॥ स किं भावी स्वभावेन । परेण जनितोऽथवा ॥ परस्मिन्नपि देवेन ।
मनुष्येण कृतोऽथवा ॥ २ ॥ तदोवाच जिनो विष्णुं । द्वारवत्याश्च तापसः ॥ बहिः शौर्यपुराख्यस्या
—श्रमे तिष्ठति शर्मणा ॥ ३ ॥ स चान्यदा नीचकुलां । कांचिदादाय कन्यकां ॥ जगाम यमुना·
द्वीपं । बुभुजे तत्र तेन सा ॥ ४ ॥ तया सूतः सुतस्तस्य । कृता द्वैपायनाभिधा ॥ ब्रह्मचारी परं त·
त्र । स तिष्ठेद्यदुसौहृदात् ॥ ५ ॥ सांबाद्यास्ताडयिष्यंति । मद्यपानात्तमेकदा ॥ क्रुद्धः सोऽपि पुरी·
मेनां । सयदून् ज्वालयिष्यति ॥ ६ ॥ जराकुमारतो भ्रातु—र्भविष्यति मृतिस्तव ॥ श्रुतं तन्नेमिना
प्रोक्तं । समग्रैरपि यादवैः ॥ ७ ॥ अहो यदुकुलांगारो । वर्ततेऽयं दुराशयः ॥ अन्योन्यं कथयामा
सु—रिति व्यग्राशयाः समे ॥ ८ ॥ द्वारवत्या मनुष्याणां । वदनान्निर्गतं वचः ॥ निशम्य नेमिना·
थेन । भाषितं खेदवानभूत् ॥ ९ ॥ वसुदेवसुतो भूत्वा—प्यहं चेद्बंधुघातकः ॥ तर्ह्यत्र किमवस्थि·

नाथेन । प्रोक्तमाकर्ण्य माधव ॥ दुःखं धरन् रुदंस्तस्य । देहसंस्कारमाचरत ॥ ८७ ॥ तं विधाय म-
हादुःखा—द्विशता द्वारिकां पुरीं ॥ यथोक्तो नेमिना विप्रो । दृष्टस्तथैव विष्णुना ॥ ८८ ॥ तं दृष्ट्वा
बंधयित्वा च । भ्रामयित्वा नरैः पुरि ॥ गृध्रादिपक्षिणां मन्ये । बलयेऽक्षेपयद्बहिः ॥ ८९ ॥ ते नैव
दुःखगर्भेण । वैराग्येण जिनांतिके ॥ बहवो जगृहुर्दीक्षां । गेहं विमुच्य यादवाः ॥ ९० ॥ दशा-
र्हा अपि योद्धारः । समुद्रविजयादयः ॥ विनैव वसुदेवेना—गृह्णन् संयमसंपदं ॥ ९१ ॥ शिवा-
देवी जिनस्यांबा । तथा सप्तापि सोदराः ॥ मुकुंदस्य कुमाराश्चा—परेऽप्याददिरे व्रतं ॥ ९२ ॥ न्नू
यान्नेमिजिनस्यैव । हस्तो मदीयमस्तके ॥ राजीमत्यपि प्राव्राजी—न्मत्वेति नेमिसन्निधौ ॥ ९३ ॥
देवीं च कनकवतीं । देवकीं रोहिणीं विना ॥ प्राव्रजन् वसुदेवस्य । महिलाः प्रबला अपि ॥९४॥
अन्यदा गृहवासेऽपि । स्थिता कनकवत्यलं ॥ आरूढा क्षपकश्रेणिं । केवलज्ञानमासदत् ॥ ९५ ॥
तस्या ज्ञानसमुत्पाद—वृत्तांतं नेमिरब्रवीत ॥ सभायां नाकिनः श्रुत्वा । तत्राम्न्येवोत्सवं व्यधुः ॥
॥ ९६ ॥ अहो मे केवलज्ञानं । प्रसिद्धं समजायत ॥ गृहवासोऽथ योग्यो न । ततः सा प्राव्रज-
त्स्वयं ॥ ९७ ॥ ततो नेमिविभोः पार्श्वे । गत्वा पृष्ट्वा च तं जिनं ॥ चकारानशनं शुभ्रं । दिनानां

॥ ७४ ॥ ब्राह्मणं तं सुखीकृत्य । नेमिपार्श्वे गतो हरिः ॥ नत्वा स्थितो गजं द्रष्टुं । न तमैक्षत कु-
त्रचित् ॥ ७५ ॥ अहो वाचंयमेष्वेषु । न दृश्यते गजः क्वचित ॥ नेमिं पृच्छाम्यहं तर्हि—पृच्छ्या-
त्वेति तं हरिः ॥ ७६ ॥ स्वामिन्नमी विनेयास्ते । दृश्यंते शोभनाननाः ॥ एकस्तु नूतनः शिष्यो
। नेक्ष्यते कुत्रचिन्मया ॥ ७७ ॥ युष्माभिः प्रेषितः क्वापि । ध्यानलीनोऽस्ति वा कचित् ॥ पठत्य-
न्यत्र साधूना—माचारं च स्थितः कचित ॥ ७८ ॥ इति श्रुत्वा हरेर्वाक्य—मब्रवीन्नेमिर्बोधिदः ॥
सोमद्विजस्य साहाय्या—त्तेनासाधि शिवास्पदं ॥ ७९ ॥ इति श्रीनेमितः श्रुत्वा । दुःखान्मूर्छां ध-
रन् हरिः ॥ पपात पृथिवीपीठे—ऽरुदन्न सर्वेऽपि यादवाः ॥ ८० ॥ उपचारविधानेन । विमूर्छो मा-
धवोऽवदत् ॥ मज्भ्रातृघातको नाथ । विज्ञायते कथं मया ॥ ८१ ॥ इति द्वेषजुषं वाचं । निशम्य
नरकद्विपः ॥ श्रीनेमिर्न्यगदद्विष्णो । तस्मिंस्त्वं मा कुरु क्रुधं ॥ ८३ ॥ यथा द्विजस्य वृद्धस्ये—ष्टि-
काप्रापणतस्त्वया ॥ उपकारः कृतस्तस्य । तथा तेन द्विजन्मना ॥ ८४ ॥ उपकारः कृतो यद्य—
भविष्यत्तस्य तेन न ॥ तूर्णमेवाभविष्यत्त—न्मुक्तिस्तस्य मुनेः कथं ॥ ८५ ॥ विशंतं पुरि दृष्ट्वा
त्वां । भिन्नमौलिर्म्रियेत यः ॥ जानीहि सोमशर्माणं । तं त्वद्भ्रातृवधघातकं ॥ ८६ ॥ इति श्रीनेमि-

र. ॥ ६३ ॥ तथैव नेमिनाथेन । मुक्तिं तस्य विचिंत्य च ॥ यथासुखं प्रवर्तस्वे—त्युक्त्वादेशो निवेदितः ॥ ६४ ॥ शिरस्यादेशमारोप्य । नत्वा च नेमिनं जिनं ॥ गत्वा श्मशानमेदिन्यां । तस्थौ प्रतिमया मुनिः ॥ ६५ ॥ बहिर्गतेन विप्रेण—न्निधया सोमशर्मणा ॥ संस्थितः स प्रतिमया । दृष्टो निर्ग्रंथवेषभाक् ॥ ६६ ॥ स चुकोप तमालोक्य । चेत्पाखंमकृतौ मतिः ॥ अस्यास्त्रवत्कथं तर्हि । मम पुत्री विडंबिता ॥ ६७ ॥ इति ज्वलच्चितांगारै—र्घटीकंठो भृतो रुषा ॥ मूर्ध्नि संस्थापितः साधो—स्तेन घातकबुद्धिना ॥ ६८ ॥ ध्यानलीनस्तदुद्भूतां । वेदनामसहन्मुनिः ॥ ज्वालयन् कर्ममैधः । प्राप्तज्ञानो गतः शिवं ॥ ६९ ॥

अथ प्रातर्मुकुंदोऽपि । परिवारेण पूरितः ॥ चचाल नेमिनं नंतुं । दृष्टुं गजसमुत्सुकः ॥७०॥ द्वारवत्या बहिर्याव—न्निर्गतः पुरुषोत्तमः ॥ ब्राह्मणं तावदिक्षिष्ट । मूर्ध्ना वहंतमिष्टिकां ॥ ७१ ॥ तं वीक्ष्याचिंतयत्कृष्ण । एकामेकामपीष्टिकां ॥ वहन् वृद्धो द्विजन्मायं ; कदा नेष्यति पूर्णतां ॥७२॥ तस्य वृद्धस्य विप्रस्य । विष्णुनेत्यनुकंपया ॥ लात्वेष्टिका करेणैका । मुक्ता देवनिकेतने ॥ ७३ ॥ ततो द्विजन्मनस्तस्य । सर्वा अपीष्टिका जनैः ॥ आदाय निजपाणिभ्यां । तत्रामुच्यंत तत्क्षणात ॥

तां श्रुत्वा नृविवैराग्यं । संप्राप्तो यौवनेऽपि च ॥ ५२ ॥ तत्प्राप्य गृहमागत्य । चरणग्रहणोत्सुकः ॥
दीक्षामाश्रित्य सोऽप्राक्षीत् । पितरौ स्नेहधारिणौ ॥ ५३ ॥ तत श्रुत्वा देवकी मूर्छा—मवाप्य न्य
पतत्क्षितौ ॥ गतमूर्छोपचारैः सा । रुदंतीति जगाद तं ॥ ५४ ॥ अहो पुत्र गृहाण त्वं । राज्यं त्व
द्रांधवार्पितं ॥ अथवा कुरु वीवाहं । रूपिण्या अन्ययोषितः ॥५५॥ सूनो सप्तसु पुत्रेषु । त्वमेव ला·
लितोऽष्टमः ॥ सोऽपि त्वं संयमं यर्हि । लास्यसि का गतिर्मम ॥ ५६ ॥ तव दीक्षाजिघृक्षा चे—
द्भवेच्चेतसि भूयसी ॥ तर्ह्यवश्यं त्वया ग्राह्या । भोगान् भुंक्त्वा च वार्धके ॥ ५७ ॥ पुत्रोऽवक् वृद्ध·
तामेवं । मानर्जानाम्यहं न हि ॥ सद्यः प्रसद्य तद्देहि । दीक्षाशिक्षां ममोत्सवात् ॥ ५८ ॥ तारुण्य
एव वैराग्या—द्दीक्षामेष गृहीष्यति ॥ प्रोक्तमस्ति सुरेणापि । पुरैव मम साग्रहं ॥ ५९ ॥ ध्यायं·
तीति वचस्तस्य । दुःखयुक्तापि देवकी ॥ बहुशः कथनेनाप्य—भवन्मौनावलंबिनी ॥ ६० ॥ ततस्त·
स्योत्सवं कृत्वा । दीक्षा कृष्णेन दापिता ॥ रुदंतो मोहतो गेहं । जग्मुः कृष्णादियादवाः ॥ ६१ ॥
द्वाभ्यां सख्यां युतो दीक्षा—मादाय स विनेयतां ॥ विभ्रत्तस्यैव घस्रस्य । सायं नेमिं व्यजिज्ञपत
॥ ६२ ॥ भगवन् यदि युष्माक—माज्ञा भवति तर्ह्यहं ॥ अद्यैव निशि तिष्ठामि । श्मशाने प्रतिमाध·

॥ ४० ॥ इत्युक्त्वा देवकीं देवीं । गत्वा च मंदिरे हरिः ॥ स्थितः पौषधशालायां । ध्यानं कर्तुमहर्निशं ॥ ४१ ॥ कृत्वाष्टमं तपो देवो । विधिनाराधितो भृशं ॥ शक्रसेनापती रात्रौ । प्रासीदन्नैगमेष्यपि ॥ ४२ ॥ प्रसन्नीभूय सोऽप्यूचे । कथमाराधितस्त्वया ॥ जिष्णुर्जगौ जनन्या मे । देवक्या देहि नंदनं ॥ ४३ ॥ देवोऽवददहो सूनुं । दास्यामि किंतु यौवने ॥ स समादास्यते दीक्षां । भवभोगपराङ्मुखः ॥ ४४ ॥ त्रिदशः कथयित्वेति । जगाम निजमास्पदं ॥ स्वर्गाच्च्युत्वा ततो देवो । देवकीकुक्षिमाश्रयत ॥ ४६ ॥ प्रासूत समये सापि । तं गजस्वप्नसूचितं ॥ नाम्ना गजसुकुमालो । देवक्याकारि तेन सः ॥ ४७ ॥ क्षणं पाणौ क्षणं क्रोडे । क्षणं गीतैश्च चुंबनैः ॥ देवकी लालयंती तं । कृतार्थं स्वममन्यत ॥ ४८ ॥ दुर्लभो वल्लभो मातु—र्भ्रातुः कल्पतरूपमः ॥ आबाल्यादपि पुण्येना—भवत्सोऽप्याप यौवनं ॥ ४९ ॥ तदा प्रभावती कन्या । स्वर्द्रुमस्य द्रुमेशितुः ॥ पितृभ्यां मुत्सवैस्तस्य । भ्रातापि च विवाहिता ॥ ५० ॥ सोमशर्मद्विजन्मस्त्री—क्षत्रियाकुक्षिसंभवा ॥ पुनः सोमाभिधा कन्या—मुपयेमे स आग्रहात ॥ ५१ ॥ इतस्तत्र जिनो नेमि—स्तदैव समवासरत ॥ नंतुं गजसुकुमालो । गतः पत्नीसमन्वितः ॥ ५२ ॥ नत्वा यथोचितं स्थित्वा । शुश्राव धर्मदेशनां ॥

वकीं विह्वलां मोहाद् । दृष्ट्वा नेमिजिनोऽवदत् ॥ खेदं देवकि माकार्षी—र्विद्धि प्राग्जन्मनः फलं
॥ ३० ॥ जीवेन क्रियते यादृ—ग्प्राग्जन्मनि शुभाशुभं ॥ प्राप्यते सहजेनैव । तादृक्कमत्र जन्म-
नि ॥ ३१ ॥ पुरा जन्मन्यहार्षीस्त्वं । सपत्न्या रत्नसप्तकं ॥ रुदत्या रत्नमेकं तु । तस्यास्त्वया सम-
र्पितं ॥ ३२ ॥ पुत्रास्त्वया न संप्राप्ताः । कर्मणा तेन तेऽपि षट् ॥ यद्दत्तं रत्नमेकं त—त्पुत्रमेकम-
वापि च ॥ ३३ ॥ नेमिनोक्तं समाकर्ण्य । शोचंती निजकर्म सा ॥ विमना निलयं गत्वा । स्थिता
सुताभिलाषिणी ॥ ३४ ॥ कृष्णस्तां तादृशीं वीक्ष्य । जगाद जननीदृशी ॥ कथं त्वं वर्तसे पुत्र ।
मयि सत्यपि दुःखिनी ॥ ३५ ॥ सोचे सूनो ममाभाग्य—वार्तां कां वच्मि ते पुरः ॥ प्रसूतास्तन-
याः सप्त—कोऽपि नो खेलितो मया ॥ ३६ ॥ त्वं तु नंदयशोदाभ्यां । पालयित्वा प्रवर्धितः ॥ ष-
डन्येऽपि च नागेन । वर्धिता मम नंदनाः ॥ ३७ ॥ यस्माद्धिरण्यति सर्वेऽपि । तेनैव ते प्रपालिताः
॥ नागात्ततोऽप्यपुण्याहं । यदेकोऽपि न लालितः ॥ ३८ ॥

इति पुत्राभिलाषेण । वचनं दुःखगर्भितं ॥ स्वजनन्याः समाकर्ण्य । प्रजजल्प जनार्दनः ॥
॥ ३९ ॥ मातस्त्वं दुःखिनी माभूः । सर्वथा पुत्रकाम्यया ॥ त्वदीयामविलंबेन । पूरयिष्यामि तामहं

संप्राप्ता सुवनं तव ॥ १८ ॥ तयोरिति वचः श्रुत्वा । देवकी हृद्यचिंतयत् ॥ केऽमी षडपि वर्तंते । कृष्णवन्मोहकारिणः ॥ १९ ॥ ततः समवसरणे । श्रीनेमिजगदीशितुः ॥ गत्वा वृत्तांतमेतेषां । पृच्छामि सर्वमादितः ॥ २० ॥ अथवा मम जीवंतो—ऽतिमुक्तकमहर्षिणा ॥ अष्टोक्ताः प्राक्सुताः सं-त्य—मीत्येष्वेव प्रवर्तिनः ॥ २१ ॥ विमृश्येति द्वितीयस्मिन् । दिवसे तत्र सा गता ॥ षण्णामपि मुमुक्षूणां । पप्रच्छ च स्वरूपकं ॥ २२ ॥ श्रीनेमिरब्रवीद्देवि । सुलसायाः सुरेण ये ॥ पालनार्थं सुता दत्ताः । षट् तेऽमी कुक्षिजास्तव ॥२३॥ इति श्रीनेमिनो वाक्यं । श्रुत्वात्मानं शुशोच सा ॥ अहो भाग्यविहीनाहं । वर्ते स्त्रीष्वखिलास्वपि ॥ २४ ॥ उदरे नवमासांश्च । मया गर्भा धृता इमे ॥ एतेषां सकलं कष्टं । मयैव क्रांतमुच्चकैः ॥ २५ ॥ एकोऽपि लालितो नैव । पालितश्च सुतो मया ॥ धन्या सा सुलसान्यस्या । अप्येते लालिता यया ॥ २६ ॥ मत्तोऽन्या महिला धन्या । सिंही मृग्यपि शुन्यपि ॥ या बाल्यादपि बालान् स्वान् । लालयेत्पालयेत्पुनः ॥ २७ ॥ दुःखतो देवकी याव—दात्मानमिति शोचति ॥ समेताः साधवस्तत्र । तावत् षडपि सन्निभाः ॥ २८ ॥ तांश्च वाचंयमान् वीक्ष्य । प्रणम्य देवकी जगौ ॥ पुत्रा मे कुक्षिजानां वो । राज्यं वा चरणं वरं ॥ २९ ॥ दे-

वत्तया महाभक्तया । तावपि प्रतिलाभितौ ॥ तावद्देवयशः शत्रु—सेनाख्यौ समुपेयतुः ॥ ७ ॥ ता·
वपि प्रतिलाभ्योच्चै—स्तैरेव मोदकैः शुभैः ॥ देवकी समवृत्तचित्ते । चमत्कारसमन्विता ॥ ८ ॥ अ·
न्यत्रालब्धभिक्षाकौ । तावेव मुनिपुंगवौ ॥ वारंवारं समायातौ । भिक्षार्थं मम मंदिरे ॥ ९ ॥ रू·
पेण भाषणेनापि । भेदं संघाटकत्रये ॥ अजानंती जगौ साधू । देवकी जनितांजलिः ॥ १० ॥
किं दिग्मूढतया यूयं । भो मुनींद्रौ पुनः पुनः ॥ अत्रागतस्थ वा माम—कीना दृग्भ्रांतिरीदृशी ॥
॥ ११ ॥ युवां पृथक्पृथक् किंवा । समेतौ विजिहीर्षया ॥ अहं तावेव जानामि । विलोचनमतिभ्र·
मात् ॥ १२ ॥ अथवा धनधान्येभ्यः । पूर्णायां ताविषश्रियि ॥ अस्यां पुर्यां महर्षीणा—माहारासि·
र्भवेन्न किं ॥ १३ ॥ तौ प्रोचतुरहो भद्रे—ऽस्माकं दिग्मूढतास्ति न ॥ तावकस्यापि चित्तस्य । न
भ्रांतिरपि वर्तते ॥ १४ ॥ द्वारिकानगरीमध्ये । भिक्षाप्तिर्नास्ति दुर्लभा ॥ यल्लोकास्तत्पराः संति ।
धर्मार्थकामसाधने ॥ १५ ॥ वयं सहोदराः षट् स्मो । भद्दिलपुरवासिनः ॥ सुलसानागयोः पुत्राः ।
पवित्राशयधारिणः ॥ १६ ॥ देशनां नेमिनाथस्य । निशम्य नरकच्छिदां ॥ समं संयममादाय । शि
ष्यास्तस्य वयंविभ ॥ १७ ॥ ते वयं त्रीणि युग्मानि । कृत्वा विहरणाय च ॥ पर्यटंतोऽत्र गोचर्या ।

मये । वैराग्याय बभूव सोऽपि शिवकृद्यस्यार्हतो नेमिनः ॥ तस्येदं चरितं निशम्य हृदये तुष्यंति ये
मानवा—स्तेषां सद्मनि मंगलानि विपुलान्याविर्भवंत्युच्चकैः ॥ ४१ ॥ इति पंडितचक्रचक्रवर्तिपंडि-
तश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे श्रीनेमिनाथविवाहवै-
राग्यदीक्षाज्ञानसमवसरणदेशनाविहारादिवर्णनो नाम त्रयोदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ चतुर्दशः सर्गः प्रारभ्यते ॥

इतश्च विचरन्नेमि—स्वामी द्वारवतीमगात ॥ कानने समवासार्षीत । सहस्राम्रवनांतिके ॥ १ ॥
अभीष्टागमनं तस्य । श्रुत्वा निनंसया नराः ॥ हृष्टाश्च वंदितुं जग्मु—र्न कस्य मुदिनागमे ॥ २ ॥
देवकीसूनवः षट् ते । षष्ठस्य पारणेच्छया ॥ संघाटकत्रयं कृत्वा । गोचर्यै द्वारिकां ययुः ॥ ३ ॥ ते-
ष्वेकत्रानीकयशो—ऽनंतसेनौ बभूवतुः ॥ विहरंतौ गतावेतौ । देवकीमातृमंदिरं ॥ ४ ॥ वीक्ष्य वा-
चंयमावेतौ । कृष्णाम्नाविव देवकी ॥ वंदित्वा मोदकैः सिंह—केसरैः प्रत्यलाभयत् ॥ ५ ॥ तौ प्र-
तिलाभितौ याव—द्गतौ तावत् परौ मुनी ॥ आगतावजितसेन-जितारिनामकौ द्रुतं ॥ ६ ॥ या-

चारुत्वमथान्वितः ॥ २९ ॥ वर्णवाक्यपदवैचित्र्य—मत्त्वप्रकृष्टताः कथा ॥ अखेदितं समस्तानां—म
व्युच्छित्तिः कथांतरे ॥ ३० ॥ दानभोगोपभोगाति—लाभवीर्यांतरायकाः ॥ जुगुप्सा साध्वसं हास्यं
। शोको रत्यरती पुनः ॥ ३१ ॥ अज्ञानाविरती कामो । निद्रा मिथ्यात्वसेवनं ॥ रागद्वेषावमी दो-
षा । नाष्टादश स्युरर्हतः ॥ ३२ ॥ चतुस्त्रिंशदतिशयैः । पंचत्रिंशद्वचोगुणैः ॥ युक्तः पूर्वोदितैरष्टा—
दशदोषैश्च वर्जितः ॥ ३३ ॥ विहरन्न्बहुदेशेषु । भव्यजीवांश्च बोधयन् ॥ श्रीमन्नेमिजिनः प्राप ।
पुरं च भद्दिलाभिधं ॥ ३४ ॥ देवकीजठरोद्भूताः । सुलसानागनंदनाः ॥ ये नैगमेषिणा दत्ता—
स्ते षट् तत्र पुरेऽभवन् ॥ ३५ ॥ पितृभ्यां यौवने तेषां । कन्या द्वात्रिंशदद्भुताः ॥ ऽाग परिणा-
यितास्ताभि—स्तेऽपि भुंजंति निर्वृतिं ॥ ३६ ॥ तावत्तत्र समायातं । नेमिनं जगतां पतिं ॥ आग-
च्छन् वंदितुं पौरा—स्तथा षमपि बांधवाः ॥ ३७ ॥ प्रदक्षिणात्रयेणैव । नत्वा च जिनदेशनां ॥ नि-
शम्य प्राप्य वैराग्यं । षडप्याददिरे व्रतं ॥ ३८ ॥ दीक्षामादाय तत्रैव । भवे मोक्षाभिलाषिणः ॥
द्वादशांगधरा उग्र—तपस्तेऽप्यतपंस्तमां ॥ ३९ ॥ तैः षड्भिरपि नेमीश—सेवा तथा विनिर्मिता ॥
तस्मिन्नेव भवे मोक्ष—सौख्यं तेऽसाधयन् यथा ॥ ४० ॥ वीवाहो भवतीनराश्रवकरो यो दुर्गतिप्रा-

कुर्यू—रूप्यस्वर्णमणीमयं ॥१७॥ स्थिततिर्यग्नृदेवानां । चतसृष्वपि दिक्षु च ॥ वक्तुं धर्मं चतुर्धार्हन्
। कामं भाति चतुर्मुखैः ॥ १८ ॥ चैत्यवृक्षमधोवक्त्रान् । विधाय कंटकान् सुराः ॥ दुंदुभिं वादयंतश्च
। नामयंति महीरुहान् ॥ १९ ॥ तत्र वायुरदृश्योऽप्य—नुकूल इव जायते ॥ प्रदक्षिणां स्वभावेन
। ददते विहगा अपि ॥ २० ॥ गंधोदकं लसत्पंच—वर्णानि कुसुमानि च ॥ देवा वर्षंति नैधंते ।
शिरःश्मश्रुकचा नखाः ॥ २१ ॥ जघन्यात्कोटिसंख्याका । निषेवंते जिनं सुराः ॥ ऋतूनामपि षण्णां
च । भवेद्भोगानुकूलता ॥ २२ ॥ एतैरेकोनविंशत्या—तिशयैर्नाकिनिर्मितैः ॥ युक्तोऽर्हन् राजते
पंच—त्रिंशद्वाणीगुणान्वितः ॥ २३ ॥ संस्कृतशब्दधारित्व—मुदात्तं चोपकारकृत् ॥ मेघवच्छब्दनिम्न-
त्वं । गम्भीरत्वं समंततः ॥ २४ ॥ रम्योपनीतरागत्वं । दक्षिणत्वं महार्थता ॥ शिष्टत्वमव्याहतत्वं ।
स्वभावासंशयक्षयि ॥ २५ ॥ परिध्वस्तान्योत्तरत्व—मन्यागममतं पुनः ॥ समयौचित्यतत्वैक—नि
ष्माकांक्षितं समैः ॥ २६ ॥ अस्वश्लाघान्यनिंदित्व—मप्रकीर्णप्रसारितं ॥ आभिजात्यं समाधुर्यं ।
प्रशस्यतासमन्वितं ॥ २७ ॥ मर्मभाषितया हीनं । धर्मार्थकामभाषि च ॥ कारकादिकयुक्तं च । वि-
भ्रमादिकशून्यकं ॥ २८ ॥ अद्भुतत्वं चित्रकृत्त्व—मविलंबित्वमुच्चकैः ॥ अनेकजातिवैदग्ध्य—धृत-

॥ ४ ॥ पद्मोजकर्णिकागंधो । मुखश्वासो जगत्पतेः ॥ अविस्रं चारुगोक्षीर—धाराभं रुधिरामिषं ॥
॥ ५ ॥ विद्योराहारनीहार—विधानं चर्मचक्षुषां ॥ न गोचरे समायाति । वायुरूपमिवानिशं ॥
॥ ६ ॥ आद्याद्यादप्यमी जाता—श्चत्वारोऽपि सहोद्भिताः ॥ जिनस्यातिशयाः पूर्व—जन्मपुण्यानु-
भावतः ॥ ७ ॥ क्षेत्रे योजनमात्रेऽपि । धर्मोपदेशके सुराः ॥ तिर्यङ्नराश्च संमांति । कोटिशः सप-
रिछदाः ॥ ८ ॥ तेषामपि समस्तानां । स्वस्वभाषातिभाषकं ॥ वाक्यमेकमपीशस्य । भवेद्योजनगा-
मि च ॥ ९ ॥ द्वादशानां गभस्तीनां । तेजोऽन्योऽप्यधिकं महः ॥ बिभ्रद्भामंडलं मौलि—पृष्टे वि-
राजते विभोः ॥ ११ ॥ यत्र यत्र जिनाधीशो । विचरेत्तत्र तत्र तु ॥ न स्युः साग्रेऽपि गव्यूति—
शतद्वये गदापदः ॥ १२ ॥ ईतयो मूषकादीनां । निजान्यचक्रभीतयः ॥ दुर्भिक्षं मारिवैराण्य—
तिवृष्ट्यस्त्ववृष्टयः ॥ १३ ॥ युग्मं ॥ भवेयुः कर्मघाते नै—कादशातिशया इमे ॥ सुसेवक इव व्यो-
म्नि । धर्मचक्रं पुरो व्रजेत् ॥ १४ ॥ पादपीठयुते सिंहा—सने स्थितो जिनोऽमरैः ॥ वीजितश्चामरैः
श्वेतै—श्चंद्राह्वकिरणोज्ज्वलैः ॥ १५ ॥ सहस्रयोजनोच्चश्च । ध्वजो जिनपदे पदे ॥ स्थापयंति सु
राः स्वर्ण—नवपंकेरुहाणि च ॥ १६ ॥ ज्ञानदर्शनचारित्र—रक्षार्थमिव बिभ्रतः ॥ सालत्रयं सुराः

त्रिपदीं दत्वार्हन्नाथो । दशाकार्षीद्गणेश्वरान् ॥ ए३ ॥ यक्षिणी नामतो राज—पुत्री बुद्धिपवित्रिता ॥ प्रभूतराजकन्याभिः । प्राव्राजीन्नेमिनोंतिके ॥ ए४ ॥ तत्रादिमं गणधरं । वरदत्तमचीकरत ॥ भगवान्नेमिनाथोऽपि । यक्षिणीं च प्रवर्तिनीं ॥ ए५ ॥ नंदप्रभृतयश्चोग्र—सेननारायणादयः ॥ कुमाराः प्रद्युम्नमुख्याः । श्राद्धधर्ममशिश्रयन् ॥ ए६ ॥ श्रीमहासुव्रताद्याश्च । देवकीरोहिणीशिवाः ॥ इत्याद्याः श्राविका जाताः । श्राद्धधर्मोररीकृतेः ॥ ए७ ॥ तस्मिन् समवसरणे । संघमेवं चतुर्विधं ॥ श्रीनेमिः स्थापयामास । धर्मसाधनहेतवे ॥ ए८ ॥

एवं प्रथमपौरुष्यां । देशनां भगवानदात ॥ द्वितीयस्यां च पौरुष्यां । वरदत्तो गणाग्रणीः ॥ ॥ एए ॥ ततो नेमिजिनं नत्वा । देवाः संक्रंदनादयः ॥ वासुदेवादयो भूपाः । स्वस्थानमपरेऽप्ययुः ॥ ६०० ॥ जिनेंद्रोऽपि व्यवस्थाप्य । चतुर्धा संघमद्भुतं ॥ विजिहीर्षुः क्षमापीठे—ऽगब्रैवतकाचलात ॥ १ ॥ नीलोत्पलदलश्याम—मपि श्रीनेमिनो वपुः ॥ चित्रमेतत्समस्तानां । जायते प्रीतये भृशं ॥ २ ॥ मंदारोदारमालातो । जिनदेहे सुगंधिनि ॥ दृशो भृंगायमाणाश्च । पतंति देवयोषितां ॥ ३ ॥ आजन्मतः सुधासाद—करणेनैव विग्रहः ॥ प्रजायतेऽर्हतः स्वेद—मलाभ्यां परिवर्जितः

॥ ८१ ॥ येषां प्रदीपसामग्री । नास्ति दारिद्र्यतो हहा ॥ किंविपाककरं तेषां । भविष्यति निशाशनं
॥ ८२ ॥ इति श्रीनेमिना प्रोक्तां । निशम्य धर्मदेशनां ॥ वरदत्तनृपः पापा—द्भिन्यदन्यदधद्विभुं
॥ ८३ ॥ भवद्वाक्यश्रुतेः स्वामिन् । भीतोऽस्मि भवभीतितः ॥ रक्ष रक्ष क्षमायुक्त । स्वांह्रौ दीक्षा
प्रदानतः ॥ ८४ ॥ अत्रांतरेऽच्युतोऽप्राक्षी—न्नाथ त्वदनुरागिणः ॥ समस्ता अपि वर्तंते । लोका
भक्तिसमन्विताः ॥ ८५ ॥ राजीमती विशेषेण । कथं त्वय्यनुरागिणी ॥ वर्तते सर्वनारीभ्यो । वि
मुक्तापि त्वया विभो ॥ ८६ ॥ तदा धनधनवती—भवादारभ्य नेमिना ॥ जगदेऽष्टभवस्नेहः । स्प
ष्टं प्रपंचमकृति ॥ ८७ ॥ विष्णोः प्रत्युत्तरं दत्वा । वरदत्तं महीभुजं ॥ विरक्तं भवभोगेभ्यो । ज्ञा
त्वा दीक्षितवान् जिनः ॥ ८८ ॥ स्वरूपं पृथिवीभर्तु—र्दृष्ट्वा वैराग्यवर्तिनां ॥ क्षत्राणां द्विसहस्राणि
। पश्चात्प्रव्रजितानि च ॥ ८९ ॥ अनुजौ धनदेवाख्य—धनपालौ धनोद्भवौ ॥ मंत्री विमलबोधा
ख्यो—ऽपराजितभवनेऽनुजः ॥ ९० ॥ भोजने शयने शैले । वने केलौ गृहाश्रमे ॥ भवेऽत्रापि
जिनेंद्रस्या—भवंस्थे सहचारिणः ॥ ९१ ॥ त्रयोऽप्युपागतास्तत्र । श्रुत्वा राजीमतीभवान् ॥ ते जा
त जातिस्मृतयो । वैराग्यात्प्राव्रजंस्तदा ॥ ९२ ॥ तेषां दीक्षां प्रदायेत्यु—त्पादध्रौव्यव्ययात्मिकां ॥

त्वभक्ष्याणि । यत्नतः परिवर्जयेत् ॥ द्वात्रिंशदनंतकाया—नपि चावद्यवर्धकान् ॥ ७० ॥ मधु मद्यं नवनीतं । मांसं पंचाप्युदुंबरान् ॥ रजनीभोजनं श्राद्ध—धर्मस्थितो विवर्जयेत ॥ ७१ ॥ बिंदुमात्र मपि स्वादा—न्मधु यो भक्षयेत पुमान् ॥ तस्यासंख्यातजीवानां । समायाति विराधना ॥ ७२ ॥ लोकशास्त्रेऽपि सप्तानां । ग्रामाणां ज्वालनोद्भितं ॥ पातकं प्राप्यते पुंसां । तेन दुर्गतिकारणं ॥७३॥ सुरापानविधानेन । दक्षोऽपि विकलो भवेत् ॥ जानाति जननीं योषां । योषां च जननीं निजां ॥ ॥ ७४ ॥ जीवतोऽपि सुरापाना—न्मृतकस्येव देहिनः ॥ मूत्रयंत्यानने श्वानो । मक्षिकाशब्दसंकुले ॥ ७५ ॥ नवनीताशने दोषा—ननल्पान् ज्ञानिनोऽवदन् ॥ जीवाः पंचेंद्रिया यत्र । संमूर्छंति यतोऽतुलाः ॥ ७६ ॥ मांसाशनविलुब्धानां । न भवेत्प्राणिनां दया ॥ क्रूरताध्यवसायश्च । प्रयाति न कदाचन ॥ ७७ ॥ तेनैवाध्यवसायेन । मृत्वा ते मांसलोलुपाः ॥ पतंति नरके घोरे । परमाधार्मिकार्दने ॥ ७८ ॥ उदुंबरवटप्लक्ष—काकोदुंबरभूरुहां ॥ पिप्पलीनां फलान्युच्चै—र्ये भुंजंत्यविवेकतः ॥ ॥ ७९ ॥ तेषामज्ञानिनां नृणां । त्रसजीवकभक्षणात् ॥ जायते पापसंपर्को । नरकायुर्विधायकः ॥ ॥ ८० ॥ बादरस्यापि जीवस्य । संघातस्य कलेवरं ॥ रात्रौ निरीक्ष्यते नैव । प्रदीपेषु बहुष्वपि ॥

नरेण ध्यायसे चेत्त्वं । तद्बंधं न पराप्नुवेत् ॥ ५८ ॥ इति स्तुत्वा यथास्थानं । यावदिंद्राच्युतौ स्थितौ ॥ तावद्भगवतारेभे । देशना क्लेशनाशिनी ॥ ५९ ॥ क्षणिका एव संपत्ति—र्वासयः कथिता नृणां ॥ संध्यारागसमं ज्ञेयं । यौवनं चापि पावनं ॥ ६० ॥ पारावारैककल्लोल—लोलं जीवितमंगिनां ॥ मृगतृष्णासमा तृष्णा । भोगा रोगातिहेतवः ॥ ६१ ॥ संयोगाः स्वप्नसंकाशा । वियोगदुःखदायकाः ॥ योगाभ्यासाः सुखाय स्यु—राभोगा व्यग्रताकृतः ॥ ६२ ॥ आर्यदेशे कुले कांते । समुत्पत्तिर्नृजन्मनि ॥ पंचेंद्रियपटुत्वं च । दुर्लभं कामकुंभवत् ॥ ६३ ॥ श्रुतिस्तत्रापि धर्मस्य । दुःप्रापा वासना पुनः ॥ विशुद्धे संयमे वर्ये । प्रणिधानं च दुःकरं ॥ ६४ ॥ सामग्र्यामिति जाताया—मतिज्ञानवताऽर्हता ॥ धर्मो वाचंयमश्राद्ध—भेदेन गदितो द्विधा ॥ ६५ ॥ महाव्रतानि पंचापि । यतिधर्मे बभाषिरे ॥ व्रतानि द्वादश श्राद्ध—धर्मे प्रोक्तानि मुक्तये ॥ ६६ ॥ दुःकरो मुक्तिदः शीघ्रं । साधुधर्मोऽस्ति धर्मिणां ॥ तत्समाराधने यः स्या—दशक्तः स गृहिव्रतः ॥ ६७ ॥ शुद्धे देवे गुरौ धर्मे । विधाय दृढतां बहु ॥ प्रथमं तत्र सम्यक्त्व—माराधनीयमुत्तमैः ॥ ६८ ॥ पंचसम्यक्त्वमूलान्य—णुव्रतानि गुणत्रयं ॥ शिक्षाव्रतानि चत्वारि । गृहमध्येऽपि पालयेत् ॥ ६९ ॥ द्वाविंशति

धनिकायानां । भेदेन नेमिदर्शने ॥ ४६ ॥ नेमिं समवसरणे । स्थितं देवैर्निषेवितं ॥ अवलोक्य मुकुंदाय । जजल्पुः शैलपालकाः ॥ ४७ ॥ प्रदत्तास्तस्य रूप्याणां । सार्धद्वादशकोटयः ॥ कृष्णेन सोऽपि मत्तेभ—मारुह्य वंदितुं ययौ ॥ ४८ ॥ सार्धं दशदशार्हैश्च । बांधवैः स्वजनैः समैः ॥ कुमारैः कोटिसंख्याकैः । सर्वैरंतःपुरैः पुनः ॥ ४९ ॥ षोडशभिः सहस्रैश्च । राज्ञां मुकुटधारिणां ॥ समृद्ध्यादभ्रया विष्णुः । प्राप रैवतकाचलं ॥ ५० ॥ यावत्समवसरण—समीपं समुपागतः ॥ हस्तितस्तावदुत्तीर्य । राजचिह्नानि सोऽमुचत् ॥ ५१ ॥ प्रविश्य समवसृत्या । उत्तरद्वारि केशवः ॥ नेमिं प्रदक्षिणीकृत्य । ववंदे भूरिभक्तितः ॥ ५२ ॥ अनुशक्रं स्थितो विष्णु—र्यथोचितं परेऽपि च ॥ पुनर्नत्वेंद्रगोविंदौ । नेमिस्तुतिं प्रचक्रतुः ॥ ५३ ॥ नमो देवाधिदेवाय । नमो दुःखविनाशिने ॥ नमो दारिद्र्यघाताय । नमस्तथास्तकर्मणे ॥ ५४ ॥ योग्यं तवैव वैराग्यं । ज्ञानं ध्यानं जपस्तपः ॥ येना बाल्यादपि स्वामिं—स्त्वया ब्रह्मव्रतं वृतं ॥ ५५ ॥ दर्शनात्तव पापानि । दर्शनात्ते विपत्तयः ॥ भव्यानां विलयं यांति । फलंति च मनोरथाः ॥ ५६ ॥ ध्यानं विधीयते येन । तावकीनं जिनेश्वर ॥ स घोराघविघातापि । भवेत्कर्मविनाकृतः ॥ ५७ ॥ यत्र तत्र स्थितेनापि । यत्तत्कृत्यं प्रकुर्वता ॥

॥ ३४ ॥ इति निर्भर्त्सितो राजी—मत्या मत्या विशालया ॥ सोऽपि श्याममुखो भूत्वा । विकल्पा-
नकरोदिमान् ॥ ३५ ॥ हाहा मम बहुन्यूज्य—हानिः पुरा बभूव च ॥ अनयापि वचः पश्चात् । स्वी-
कृतं मे न सर्वथा ॥ ३६ ॥ ततो द्वावपि मे हस्तौ । पतितौ पृथिवीतले ॥ विलक्षश्चिंतयन्नेवं । सो-
ऽगमन्मंदिरं निजं ॥ ३७ ॥ त्यक्तापि नेमिना राजी—मती वैराग्ययोगतः ॥ तस्मिन्नेवानुरक्ताभू—
द्दृढो कांतापि निश्चला ॥ ३८ ॥ चारित्राच्चतुःपंचाश—द्दिनान् विहृत्य भूतले ॥ उज्जयंतसहस्राम्र
—वनेऽथ नेमिरागमत् ॥ ३९ ॥ तत्र वेतसवृक्षस्य । तले ध्यानविधायिनः ॥ नेमेरष्टमतो घाति—
कर्माणि तुत्रुटुस्तमां ॥ ४० ॥ तदाश्विनामावास्यायां । चित्रायां संस्थिते विधौ ॥ श्रीनेमिः केवल-
ज्ञान—मज्ञानध्वंसमाप्तवान् ॥ ४१ ॥ समेत्य तत्र देवेंद्रै—स्तत्कालं चलितासनैः ॥ जनिता स-
मवसृति—र्दीप्रवप्रत्रयान्विता ॥ ४२ ॥ विंशतिधन्वशतोच्च—चैत्यद्रुमं समंततः ॥ पूर्वद्वारा प्रविश्या-
र्हन् । ददौ प्रदक्षिणात्रयीं ॥ ४३ ॥ तीर्थाय प्रणतिं कृत्वा । द्वाविंशतितमो जिनः ॥ सिंहासने
स्थितः पूर्व—सन्मुखं जगतां गुरुः ॥ ४४ ॥ तिसृष्वप्यर्हतो दिक्षु । प्रतिबिंबानि चक्रिरे ॥ व्यंतरै-
रमरै रत्न—सिंहासनस्थितानि च ॥ ४५ ॥ उपविष्टा यथायोग्य—स्थाने देवास्तदंगनाः ॥ चतुर्वि-

मां । प्रतिज्ञातपतिव्रतां ॥ भोगाय याचमानस्त्वं । निर्बुद्धे किं न लज्जसे ॥ २३ ॥ अन्यकांताभि-
लाषेण । लोकलज्जा गता तव ॥ महानरकदुःखानां । प्राप्तेरपि बिभेषि न ॥ २४ ॥ वचनैरिति नि-
र्भर्त्स्य । कठिनैः कोमलैरपि ॥ बोधितो रथनेमिस्तु । राजीमत्या विदग्धया ॥ २५ ॥ तथापि वि-
षयध्याना—न्न तस्य व्यरमन्मतिः ॥ उपदेशो हि सत्या न । रागग्रस्तं नरं लगेत् ॥ २६ ॥ श्री
नेमिनाथमेवोच्चै—र्ध्यायंती केवलं हृदि ॥ दुःखतो गृहवासेऽपि । तस्थौ राजीमती सती ॥ २७ ॥
दुग्धमन्येद्युराकंठ—मुष्णं राजीमती पपौ ॥ तत्र कामाभिलाषेण । रथनेमिः समागतः ॥ २८ ॥
तदा विषयवांछात—स्तं कर्तुं विपराङ्मुखं ॥ जघ्रौ सा मदनफलं । निपीतदुग्धवांतये ॥ २९ ॥
रथनेमिस्तया प्रोचे । स्वर्णस्थालं समानय ॥ तत्तेनापि समानीतं । तत्र सापि पयोऽवमत् ॥ ३० ॥
वांत्वा सोवाच रे मूढ । वद वांतमिदं पयः ॥ निःस्वस्य क्षुधितस्यापि । पानाय किं प्रजायते ॥३१॥
तथाहमपि संसार—भोगाभिलाषवर्जिता ॥ वांता श्रीनेमिनाथेन । भोगाय स्यां कथं तव ॥३२॥
सोऽपि प्रवर्तते ताव—कीनो भ्राताग्रजो जिनः ॥ तस्य पत्नीं कथं त्वं मां । समीहसेऽधमाधम ॥
॥ ३३ ॥ नातःपरं त्वया कामिन् । कथनीयमिदं वचः ॥ यदि वक्तास्यहं तत्त्वां । करिष्ये मानवर्जितं

न्यत्र । विजहार शुभाशयः ॥ १२ ॥
इतश्च नेमिनाथस्या—नुजेन रथनेमिना ॥ कामबाणानुविद्धेन । राजीमत्यभिलाषिणा ॥१३॥ संप्रेषितान्यपूर्वाणि । वस्त्राणि भूषणानि च ॥ रम्याणि नागवल्लीनां । दलानि कोमलानि च ॥ १४ ॥ ऋजुस्वभावतस्तस्य । भावानभिज्ञचित्तया ॥ तयापि तानि वस्तूनि । सर्वाणि रक्षितानि च ॥ १५ ॥ त्रिभिर्विशेषकं ॥ रथनेमिस्तदाज्ञासीद् । धृतो रागोऽनया मयि ॥ अन्यथा प्रेषितं स-र्वं । वस्तु रक्षेदसौ कथं ॥ १६ ॥ मनोभववशस्तुष्ट—मती राजीमतीगृहं ॥ स गत्वा भ्रातृजाया-त्वा—त्तस्या हास्यादिकं व्यधात् ॥ १७ ॥ रहःस्थितां बभाषे ता—मन्यदा स त्रपोज्झितः ॥ दुःप्रा-पं यौवनं मुग्धे । कथं करोषि निष्फलं ॥ १८ ॥ तव भोगानभिज्ञेन । मुक्ता त्वं नेमिना तदा ॥ निःस्नेहेन गृहीता च । तेन दीक्षा महोत्सवैः ॥ १९ ॥ त्वयका प्रार्थ्यमानोऽपि । परित्यज्यैव सो-ऽगमत् ॥ यावज्जीवं न मोक्षामि । त्वां मयेति प्रतिश्रुतं ॥ २० ॥ राजीमती तदावादी—दरे मूर्ख-शिरोमणे ॥ अविमृश्य कथं निंदां । करोषि त्वं महात्मनः ॥ २१ ॥ सोऽपि संसारभोगेभ्यो । वि-रक्तोऽस्ति जगत्प्रभुः ॥ भवपंके निमग्नस्त्वं । भोगान् वांछसि मानुषान् ॥ २२ ॥ बांधवाय प्रदत्तां

संख्यैरसुरामर्त्य—मर्त्यैर्योषित्समन्वितैः ॥ जयजयेत्युच्यमानैः । प्रचचाल जगत्प्रभुः ॥ १ ॥ मार्गेऽर्थिनां ददद्दान—ततिं दक्षिणपाणिना ॥ जिनो वरोज्जयंताद्रि—सहस्राम्रवनं ययौ ॥ २ ॥ शतानि त्रीणि वर्षाण्य—तिक्रम्य गृहवासके ॥ पूर्वाह्ने द्वारिकामध्या—च्चित्रायां शशिनि स्थिते ॥ ३ ॥ कृत्वा षष्ठतपस्तत्र । सहस्रपार्थिवैर्जिनः ॥ उत्तार्य भूषणान् केशान् । लुलोच पंचमुष्टिभिः ॥ ४ ॥ द्वादशभिः कुन्तकं ॥ इंद्रोऽथापि जिनेशस्य । कचान् क्षीरपयोनिधौ ॥ क्षिप्त्वा पुनः समागत्य । स्कंधे दूष्यं मुमोच च ॥ ५ ॥ ततो गृहीतचारित्रः । सिद्धेभ्यः प्राणमद्विभुः ॥ सिद्धनत्येव तस्यासी—च्चतुर्थं ज्ञानमंजसा ॥६॥ कल्याणकतृतीयं तु । कृत्वा संक्रंदनाह्वयः ॥ देवा जग्मुर्निजं स्थानं । लोका अपि विषादिनः ॥ ७ ॥ स तृतीयदिने गोष्ठे । वरदत्तद्विजालये ॥ गतस्तत्राभवत्तस्य । परमान्नेन पारणं ॥ ८ ॥ अहो दानमहो दानं । कृतेत्युद्घोषणा सुरैः ॥ वादितानि विचित्राणि । वादित्राणि नभोंगणे ॥ ९ ॥ जिनानां निष्फलं दानं । न जायते कदाचन ॥ इति तस्य गृहे देवा—श्चक्रुर्वृष्टीरनेकधा ॥ १० ॥ पत्राणां च प्रसूनानां । फलानां वाससां पुनः ॥ सार्धद्वादशकोटीनां । स्वर्णानां वर्षणं दधुः ॥ ११ ॥ वरीतुमिव निर्वाण—हरिणीदृशमक्षयां ॥ पारगोऽपि ततोऽ

प्रद्युम्न- पितामहस्य तातस्य । कृष्णस्य चाग्रहादपि । प्रदातुं दानमावर्षं । गृहवासे स्थितो विभुः ॥ ८८ ॥
चरित्रं दीनानां याचकानां च । दत्वा दानं यथेप्सितं ॥ प्रक्षिप्य च दरिद्रत्वं । योऽभवत्संयमोद्यतः ॥८९॥
तिर्यग्लोकादशायुक्ता । नरेंद्राश्च नरा अपि ॥ तदाजग्मुश्चतुःषष्टि—सुरेंद्रा भूरिभक्तयः ॥ ९० ॥
५५१ मनुष्यजनितैर्देव—जनितैश्च महोत्सवैः ॥ पुर्यभूद्यादृगानंद—स्तादृग्वक्तुं न पार्यते ॥ ९२ ॥ दी
क्षादानदिने नेमिः । स्थापयित्वा शुभासने ॥ मर्दितः शोभनैस्तैलैः । स्नपितश्च वरोदकैः ॥ ९३ ॥
लिप्तः सुगंधिभिर्द्रव्यैः । सद्वस्त्रैः परिधापितः ॥ मंदारपारिजातादि—पुष्पैः स्मेरैः प्रपूजितः ॥९४॥
मस्तकक्रमणौ याव—दलंकारैर्विभासुरैः ॥ अलंकृतस्तथा रेजे । प्रापद्यथा श्रियं च तां ॥ ९५ ॥
उभयोः पार्श्वयोर्मुक्ता—रत्नजनितदंडकैः ॥ सौधर्मेशाननाथाभ्यां । वीज्यमानोऽग्रचामरैः ॥ ९६ ॥
आदातुमिव कैवल्य—तरुचारुफलानि वा ॥ आरूढः शिबिकां नेमि—नाथो दीक्षाजिघृक्षया ॥९७॥
अर्हन्नुत्पद्यते यत्र । तस्यैव पूज्यता भवेत ॥ उत्पन्नत्वान्मनुष्येषु । मनुष्यस्यैव मान्यता ॥ ९८ ॥
उत्पाटितेति सा पूर्वं । मनुष्यैरेव हर्षतः ॥ पश्चात्सर्वसुराधीश—ज्योतिष्कासुरनायकैः ॥ ९९ ॥
देवदुंदुभिनिर्घोषै—र्मनुष्यवाद्यवादनैः ॥ सुरासुरमनुष्योद्य—त्कांतानां गायनैर्घनैः ॥ १०० ॥ अ

वितासात्मनो यादृग् । परस्यापि च तादृशी ॥ ७६ ॥ कंटकेऽपि पदे लग्ने । कष्टायतेऽखिलं वपुः ॥
शस्त्रेण मार्यमाणानां । कीदृग्दुःखं प्रजायते ॥ ७७ ॥ पशूनां देहघातेन । चेत्क्रिये तापमंगलं ॥
तदात्मनः कथं हा हा । भविता मंगलं महत ॥ ७८ ॥ एतेषां घातनं यर्हि । ज्ञानयोगेन वा म-
या ॥ निवारयिष्यते नैवा—हमप्येतादृशस्तदा ॥ ७९ ॥ चिंतयित्वेति सूतस्य । कथयित्वा रथं पु-
नः ॥ वालयित्वा जिनो नेमिः । सर्वान् जीवानमोचयत् ॥ ८० ॥ जिनेन मोचयित्वा तान् । स-
र्वान् वाटकसंस्थितान् ॥ तोरणाच्चालिते तूर्णं । रथेऽभूत्तुमुलस्तदा ॥ ८१ ॥ पादयोर्नम्यमानेऽपि ।
वार्यमाणेऽपि यादवैः ॥ स्त्रीभिराक्रंद्यमानेऽपि । प्रोच्चै रोदननिर्मितेः ॥ ८२ ॥ संसारसौख्यानित्यत्वं
। भावयन् भगवानथ ॥ धरंश्च चरणं चित्ते । प्रासवान् स्वं निकेतनं ॥ ८३ ॥ अपि लोकांतिकैर्दे-
वै—श्चारित्रकालबोधकैः ॥ समयो ज्ञापितो नेमेः । प्रस्तावज्ञा हि देवताः ॥ ८४ ॥ नेमिं दीक्षो-
न्मुखं ज्ञात्वा । निजगाद जनार्दनः ॥ सहोदरैकशः पाणि—ग्रहणं त्वं कुरु प्रभो ॥ ८५ ॥ यथा
तव वधूवक्त्रं । दृष्ट्वा भवामि हर्षवान् ॥ मम मूर्ध्नि कलंकोऽपि । न समायाति जातुचित् ॥ ८६ ॥
वसुदेवोऽखिलज्येष्टः । समुद्रविजयः प्रभुः ॥ नृपा विज्ञापयामासु—रन्येऽपि स्नेहलालसाः ॥ ८७ ॥

सुतोरणं ॥ ६४ ॥ भर्तुर्विलोकनाकांक्षा । प्रायशो हरिणीदृशः ॥ प्रथमं महती स्यात्तं । पश्यति च यथा तथा ॥ ६५ ॥ राजीमती गवाक्षस्था । सखीपरिवृता ततः ॥ नेत्राभ्यामनिमेषाभ्या—मपश्यन्नेमिनं वरं ॥ ६६ ॥ प्रक्षिप्ता वाटकेऽभूवन् । जीवाश्छागमृगादयः ॥ तेषां भयभृतां नेमिः । शुश्राव करुणस्वरं ॥ ६७ ॥ उग्रसेननृपागारे । सुवासिन्यो मृगीदृशः ॥ मांगल्यान् कलशान् लात्वा । तावद्द्वारेस्य आगताः ॥ ६८ ॥ इतो मृगशशादीनां । वामदक्षिणवर्तिनां ॥ पशूनां दीनवाक्यानि । श्रुत्वार्हन् दययावदत् ॥ ६९ ॥ भोः सारथे कुतो दीनः । खलु शब्दोऽयमागतः ॥ स प्राह त्वद्विवाहार्थ—मानीतपशुवागियं ॥ ७० ॥ त्वत्पाणिग्रहणे जात । एतेषां प्राणिनां हतेः ॥ भोजने स्वजनानां हि ! गौरवं प्रकरिष्यते ॥ ७१ ॥ निशम्य वचनं तस्य । कृपाकंपितमानसः ॥ व्यचिंतयज्जिनः पाणि—पीडनं पापकारणं ॥ ७२ ॥ अहो लोका दुराचाराः । पापेभ्यो यन्न बिभ्यति ॥ स्वकीयसुखसिद्ध्यर्थं । घ्नंति जीवाननेकशः ॥ ७३ ॥ अज्ञानान्न विजानंति । सुकृतं करुणामयं ॥ न च जीवविनाशेन । नारकवेदनामपि ॥ ७४ ॥ पुनर्नैत्यपि जानंति । वराकाः पशवस्त्वमी ॥ तृणाशनपयःपात—पुष्टा जीवंति कानने ॥ ७५ ॥ मारणं कथमेतेषा—मस्माभिः क्रियते रसात ॥ जी-

उग्रसेननृपेणापि । विवाहस्योत्सवो गृहे ॥ प्रारब्धः स्वजनान् सर्वा—नाकार्य च समंततः ॥
॥ ५३ ॥ वरो नेमिजिनो यत्र । यत्र राजीमती कनी ॥ तयोर्विवाहसामग्र्या—मुत्सवानां कथास्ति
का ॥ ५४ ॥ उग्रसेन महीशेन । स्वकीयाः सेवकाः शुभाः ॥ प्रेषिता वरमानेतुं । दूषणैरपदूषणैः
॥ ५५ ॥ समुद्रविजयेशस्य । तेऽपि गेहं गता मुदा ॥ तत्रापि मानितास्ते तु । यादवैरपरैरपि ॥
॥ ५६ ॥ पक्वान्नैर्विविधैः शुद्धै—र्भोजितास्ते प्रमोदिताः ॥ गमनावसरे तेषां । यानानि यादवा द-
दुः ॥ ५७ ॥ शिवादेवी देवकी च । सत्यभामा च रुक्मिणी ॥ रोहिणीप्रमुखा देव्य—श्चक्रुर्विवा-
हमंगलं ॥ ५८ ॥ मांगल्यकृतिकाले त—ज्जनन्यामस्तकांशुके ॥ लगित्वा दीपशिखया । मंगलं
चाप्यसूत्र्यत ॥ ५९ ॥ रथारोहणकाले च । बिडाल्या वर्त्म खंडितं ॥ तथाप्यर्हस्तमारुह्य । प्रचचा-
लाविलंबितः ॥६०॥ अवार्यतूर्यनिःस्वानै—र्बंदीनां जयघोषणैः ॥ सुवासिन्यंगनागानैः । श्रूयतेऽन्य-
न्न कर्णयोः ॥ ६१ ॥ समुद्रविजयक्षोणी—नाथ आनकदुंदुभिः ॥ बलदेवो वासुदेवः । प्रद्युम्नसांब-
भानवः ॥ ६२ ॥ गजारूढा रथारूढा । हयारूढाश्च केचन ॥ प्रचेलुर्नेमिना सार्ध—मपरेऽपि महीभु-
जः ॥ ६३ ॥ जिनोऽप्यध्वनि दानानि । प्रददानोऽर्थिनां नृणां ॥ न्यस्तछत्रः शिरस्याप । श्रृंगारितं

। निन्ये नेमिजिनो गृहं ॥ ४१ ॥ सादरं भोजयित्वा तं । कृत्वा व्याकुलतोज्झितं ॥ शिवादेवीगृहे गत्वा । नत्वा स प्रजजल्प तां ॥ ४२ ॥ हे मातर्नेमिनाथस्य । संजातं यौवनं स्फुटं ॥ अद्याप्यस्य न वीवाहं । कुर्यास्त्वं किं निबंधनं ॥ ४३ ॥ साजल्पदन्वयेऽस्माकं । वृद्धस्त्वमेव वर्तसे ॥ ततः किं पृच्छसि त्वं मां । त्वमेव तत्कुरुष्व भोः ॥ ४४ ॥ इति श्रुत्वा वचस्तस्या । आलोच्य हलिना समं ॥ कृष्णो गत्वोग्रसेनाग्रे । राजीमतीमयाचत ॥ ४५ ॥ तेन तस्यां याचितायां—मिदमेवास्त्वत्र्वजल्पता ॥ नारायणस्तदात्मीय—मायया मंदिरं मुदा ॥ ४६ ॥ विधाय तत्र वीवाह—संकेतं पुरुषोत्तमः ॥ समेत्य स्वगृहे नेमे—र्विवाहोत्सवमाचरत् ॥ ४७ ॥ आहूताः स्वजनाः सर्वे । यादवा अपरेऽपि च ॥ पुत्रपुत्रीकलत्राद्या—स्तथैव तेऽप्युपागताः ॥ ४८ ॥ पात्राणि ननृतुः प्रीत्या । चतुःपथे च चत्वरे ॥ वादित्राणां विचित्राणां । वादनं समजायत ॥ ४९ ॥ पताकारोपणं हट्टे । गृहे वंदनमालिका ॥ द्वारवत्यामभूत्स्थानं । तन्न यत्रोत्सवो न च ॥ ५० ॥ सहस्रलक्षपाकेन । तैलेन मर्दनं भृशं ॥ कारयित्वा स्नपितोऽर्हन् । गायंतीषु वधूष्वपि ॥ ५१ ॥ विविधैर्भूषणैर्वस्त्रै—र्भूरिभूषा ततः कृता ॥ विभूषितो विशेषेण । दधौ शोभां जिनेश्वरः ॥ ५२ ॥

ष्यति ॥ ३० ॥ मम यो वर्तते नाथ—स्त्रैलोक्योद्धरणक्षमः ॥ प्रौढं सुदर्शनं चक्रं । तर्जन्या भ्रामय
त्यलं ॥ ३१ ॥ मृणालमिव शार्ङ्गाख्यं । धनुर्वालयति क्षणात् ॥ शय्यामारुह्य नागस्य । पांचजन्यं प्र-
पूरयेत् ॥ ३२ ॥ स ममापीदृशं कृत्यं । कदापि न समर्पयेत् ॥ तस्या वचनतोऽमर्षो । नेमिनः सम
जायत ॥ ३३ ॥ तदा रुक्मिण्यवोचत्तां । मावादीरीदृशं वचः ॥ नेमेर्बलस्वरूपं त्वं । न विजानासि
मूढधीः ॥ ३३ ॥ इत्युदित्वा तया तस्या । वसनं तत्समर्पितं ॥ तथापि तत्प्रदानेना—द्रायांबुवर्जितं
कृतं ॥ ३४ ॥ अनया गर्वतो वाक्यं । मदीयं नोररीकृतं ॥ दर्शयामि बलं तर्हि । क्षोभनाजनकं
भुवि ॥ ३५ ॥ बलं दर्शयितुं कृष्णा—युद्धशालां गतो जिनः ॥ प्रविष्टो द्वारमेवाथा—ददे चक्रं च
कार्मुकं ॥ ३६ ॥ आदाय नागशय्यायां । सुष्वाप वालयन् धनुः ॥ भ्रामयन् मर्दयंश्चक्रं । पांचजन्य-
मपूरयत ॥ ३७ ॥ नेमिना पूर्यमाणे हि । शंखे नेशुस्तुरंगमाः ॥ त्रेसुर्गजाः समस्तं च । बभूव ब-
धिरं जगत ॥ ३८ ॥ तच्छब्दक्षुभितो विष्णु—रप्यागत्य चमत्कृतः ॥ जगौ नेमिमहो बंधो । क्षोभनं
किं करोष्यदः ॥ ३९ ॥ उत्तिष्ठोत्तिष्ठ हे भ्रातः । कोपं विमुंच दुस्सहं ॥ आवाभ्यां निलये गत्वा
। भोजनं क्रियते वर ॥ ४० ॥ इति संतोष्य कृष्णेन । मृदुवाक्येन सांजसं ॥ निर्जयोर्हस्तयोर्धृत्वा

स । आनीतः कानने तदा ॥ १९ ॥ तत्रानीय समं तेन । क्रीडास्ताभिरनेकधा ॥ चक्रिरे कुंकुमैः पुष्पै—र्घृष्टोद्यच्चंदनोदकैः ॥ २० ॥ अपरा अपि कामिन्यः । क्रीडां कृत्वा मुरारिणा ॥ समीपे नेमिनाथस्य । समेताः केलिकाम्यया ॥ २१ ॥ क्रीडारसोन्मुखीर्दृष्ट्वा । स्वकीया हरिणीदृशः ॥ शिक्षां दत्वा मुकुंदोऽपि । प्रययौ काननांतरे ॥ २२ ॥ कुसुमादानदंभेन । पादपेभ्योऽपि योषितः ॥ कुचाभ्यां मर्दयामासु—र्नीरागमपि नेमिनं ॥ २३ ॥ किं ह्रिया रहितैर्हास्यै—र्हास्यं भवति देवर ॥ इति ताभिः स्मितैर्हाव—भावाद्यैर्हसितो जिनः ॥ २४ ॥ जलार्द्रवसनं ताव—न्मुक्त्वा जांबवतीपुरः ॥ निर्गत्य दीर्घिकानीरा—ज्जगाद जिननायकः ॥ २५ ॥ ममेदमंशुकं देवि । पानीयपरिवर्जितं ॥ कुरुष्व त्वं गदित्वेति । नेमिना तत्समर्पितं ॥ २६ ॥ भाले भृकुटिमारोप्य । जगौ जांबवती तदा ॥ अरे मूढेदृशं वस्त्रं । कथं त्वं प्रददासि मे ॥ २७ ॥

ईदृशांशुकदानेछा । यदि स्यात्तव चेतसि ॥ कस्याश्चिद्योषितस्तर्हि । त्वं पाणिग्रहणं कुरु ॥ २८ ॥ मिलंती न भवेद्यर्हि । कदा त्वेकाकिनस्तव ॥ तर्हि याचस्व मे भर्तुः । समीपे तां मनोरमां ॥ २९ ॥ अन्येषामपि निर्वाहं । करोति यदि बांधवः ॥ तदा तव विशेषेण । निर्वाहं स करि·

प्त्वा मोक्षं गमिष्यति ॥ ८ ॥ इति श्रुत्वा वचस्तस्य । नैमित्तिकस्य सुंदरं ॥ मुकुंदोऽपालयद्राज्यं । भयेन परिवर्जितः ॥ ९ ॥

अन्यदा समभूत्ताव—द्वसंतसमयोदयः ॥ कामिनां कामिनीनां च । क्रीडाविनोदकारकः ॥ ॥ १० ॥ प्रवालसुमनःपत्र—फलैः क्रीडितुमुत्सुकाः ॥ पादपा अपि मन्येऽहं । जाताः पल्लविता भृशं ॥ ११ ॥ तत्र रंतुमना विष्णु—रपि काननवर्त्मनि ॥ निर्जगाम तदानेका—नेकपाश्ववशावृतः ॥ १२ ॥ विवाहो मानयितव्यो । युष्माभिर्नेमिनः प्रभोः ॥ सत्यभामादिकांतानां । शिक्षां दत्वेत्यसौ गतः ॥ १३ ॥ एकस्तु मर्कटः सोऽपि । संदष्टो वृश्चिकेन च ॥ चेष्टितं तस्य किं ब्रूमो । जनानां हास्यकारकं ॥ १४ ॥ तथैका तु वशान्यच्च । धवेनाज्ञा समर्पिता ॥ देवरस्य कथं न्यूना । द्वावेद्विनोदनिर्मितौ ॥ १५ ॥ इति ताभिः प्रभूताभिः । संभूय नेमिनोंतिके ॥ गत्वा हास्यविनोदानां । वचनान्यूचिरेतरां ॥ १६ ॥ हे देवर त्वमुत्तिष्ठो—त्तिष्ठ क्रीडा विधीयते ॥ वसंते सा कृता नो चे—दन्यत्र करणेन किं ॥ १७ ॥ पूर्वमेव तव भ्राता । प्रयातोऽस्ति रिरंसया ॥ कामिनीभिरदभ्राभि—र्वेष्टितोऽभीष्टपार्थिवैः ॥ १८ ॥ इति प्रोक्तेऽब्रवीन्नेमि—र्मम तत्र न योग्यता ॥ बलेनोत्पाट्य ताभिः

इति श्रीनेमिना प्रोक्ते । वीरंमन्यो नरायणः ॥ अलगच्चरणे मेरु—मिव नो तमचालयत् ॥ ॥ ९७ ॥ प्रत्युत श्वासनृपिष्टा—स्वेदबिंदुसमाकुलः ॥ अनल्पश्रमसंयुक्त—शरीरः समजायत ॥ ॥ ९८ ॥ पुनर्नेमिस्तदा प्रोचे । वालय त्वं करं मम ॥ तेन प्रसारितः पाणिः । कथयित्वेति सत्वरं ॥ ९९ ॥ कृष्णोऽपि निजवीर्यस्य । गर्वं टिट्टिभवद्दधत ॥ विलग्नः पुनरप्यासी—द्दोलाखेलकमर्त्यवत ॥ ५०० ॥ तदा वितर्कतः प्रोचे । पार्षद्यान् पुरुषोत्तमः ॥ वचोऽतिगं मम भ्रातु—र्यूयं पश्यत विक्रमं ॥ १ ॥ उक्त्वेति मायया स्मित्वा । जनार्दनोऽगमद्गृहं ॥ स्वस्थानं जिननाथोऽपि । स्वजनैः सह जग्मिवान् ॥ २ ॥ निरीक्ष्य नेमिनाथस्या—तीवविक्रममुत्कटं ॥ गत्वा तेन समं चित्र्य—न्नचिंतय-न्नरायणः ॥ ३ ॥ सर्वेभ्योऽपि बलाधिक्यं । धीयतेऽनेन नेमिना ॥ ततो मे माग्रहीदेष । साम्राज्यं भुवनेप्सितं ॥ ४ ॥ इति व्याकुलचित्तोऽसौ । कंचिन्नैमित्तिकं हरिः ॥ पप्रछ नेमिवृत्तांतं । निःशेषम-पि चादितः ॥ ५ ॥ निजगाद स मा भैषीः । सर्वथैव त्वमच्युत ॥ नैष राज्यगृहीता ते । वैरांगि-कोऽस्त्यसौ पुनः ॥ ६ ॥ विविधानां मृगादीनां । पशूनां वीक्ष्य बंधनं ॥ न करिष्यति वीवाह—म-पि कारुण्ययोगतः ॥ ७ ॥ स्वयमेव समादाय । दीक्षां रैवतकाचले ॥ सकलान्यपि कर्माणि । क्षि-

नितो नेमि— रुपविष्टः प्रकृष्टधीः ॥ ८५ ॥ सभायां तत्र भूपेषु । निविष्टेषु यथोचितं ॥ वीराणां नि-
र्गता वार्ता । बलाबलविचारिणी ॥ ८६ ॥ जगदुर्वासुदेवस्य । शक्तिं केचिद्गरीयसीं ॥ पांडवानां पु-
नः केचि—त्केचिन्मुशलिनो बलं ॥ ८७ ॥ केचना वर्णयन्नुच्चैः । प्रद्युम्नस्य पराक्रमं ॥ केचिच्छांब-
स्य भानोश्च । सामर्थ्यं केचनाब्रुवन् ॥ ८८ ॥ तत्रैवं केचिदाचख्यु—र्बलिष्टः पुरुषोत्तमः ॥ प्रभूता-
क्षौहिणीजेता । नेतार्धभरतस्य च ॥ ८९ ॥ सहैतेन द्वितीयोऽपि । तुल्यो नास्ति महीतले ॥ योऽ-
भ्युद्यस्याशयः शूरः । स एव तेन भाषितः ॥ ९० ॥ बलभद्र इति श्रुत्वा । जगाद धूनयन् शिरः ॥
नेमिनाथेऽपरेषां किं । प्रशंसा क्रियते मुधा ॥ ९१ ॥ कृष्णो वा बलदेवो वा । परे वीराः सहस्र-
शः ॥ भवंतु नेमिनाथस्य । पुरः कस्यापि नो बलं ॥ ९२ ॥ इत्युक्ते बलदेवेन । नेमिनाथेन ल-
ज्जया ॥ अधस्ताज्जनितं वक्त्र—मुत्तमा हि स्युरीदृशाः ॥ ९३ ॥ तदा जनार्दनोऽवादी—द्बलिनं
नेमिनं जिनं ॥ आवाभ्यां सांप्रतं मल्ल—युद्धमत्र विधीयते ॥ ९४ ॥ कथयित्वेति कृष्णोऽपि । स-
ज्जीभूय समुत्थितः ॥ तावन्नेमिजिनोऽजल्प—न्नैतद्योग्यं महात्मनां ॥ ९५ ॥ पादपीठात्पदं यर्हि ।
त्वं मे चालयितुं क्षमः ॥ बलिष्टस्तर्हि सर्वेषु । यदहं विजितो हरे ॥ ९६ ॥

॥ ७३ ॥ श्रीशंखेश्वरपार्श्वस्या—र्चित्वा तां प्रतिमां शुभां ॥ स्मरंतस्तद्गुणांश्चित्ते । सर्वेऽपि यदवोऽ-
स्तुवन् ॥ ७४ ॥ वीक्षितौजश्चमत्कारं । जिनेशमपि नेमिनं ॥ कुसुमैः पूजयामासु—र्यादवाह्लादमे-
दुराः ॥ ७५ ॥ लब्ध्वा भगवदाज्ञां च । नत्वा मातलिरप्यगात् ॥ इंद्रं तत्र गतः सोऽप्य—तोषय-
न्नेमिकीर्तनैः ॥ ७६ ॥ पांडवानां ददाविंद्र—प्रस्थं च कौशलां पुरीं ॥ रुक्मनाभेश्च गोविंदो । म-
हानेमेश्च शौर्यकं ॥ ७७ ॥ अन्येभ्योऽपि महीशेभ्यो । विभज्य च यथोचितं ॥ देशपत्तनपूर्ग्रामा-
न् । समार्पयज्जनार्दनः ॥ ७८ ॥ अथो साधयितुं चक्रा—नुगोऽर्धभरतं हरिः ॥ मार्गे मिलन्महा-
नृपै—श्चचाल यदुभिर्वृतः ॥ ७९ ॥ कोटिशिलां वृतां देवै—र्भरतार्धनिवासिभिः ॥ चतुरंगुलमू-
र्ध्वं त । उद्दधाराच्युतो द्रुतं ॥ ८० ॥ षण्मास्या साधयित्वा स । वसुधां षोडशांकितैः ॥ सहस्रैर्नृभु-
जां युक्तः । प्रापोत्सवैर्निजां पुरीं ॥ ८१ ॥ सुरैर्विद्याधरैर्नृपैः । सेवितांह्रिसरोरुहः ॥ राज्यमेकातपत्रं
चा—पालयन्नवमो हरिः ॥ ८२ ॥ अथान्यदा प्रपूर्णायां । समुद्रविजयादिभिः ॥ सभायां संस्थिते
विष्णौ । नेमिनाथः समागतः ॥ ८३ ॥ वयस्यैर्विविधैर्भृत्यैः । कृत्यैकप्रविधायिभिः ॥ युक्तं तमागतं
वीक्ष्यो—त्थिताः सर्वेऽपि पार्थिवाः ॥ ८४ ॥ समीपे वासुदेवस्य । सिंहासने समर्पिते ॥ सर्वैः सन्मा-

—त्कृष्णवाक्याज्जगर्जनं ॥ मुमोचासहमानोऽपि । चक्रं मगधभूधवः ॥ ६२ ॥ दशायां कमनीयायां
। विषमप्यमृतं भवेत् ॥ शत्रवोऽपि परां मैत्रीं । भजंते शुभकर्मणा ॥ ६३ ॥ ततस्तस्यापि तच्चक्रं ।
ततो गगनमंडले ॥ भ्रांत्वा प्रदक्षिणावर्तं । समागतं करे हरेः ॥ ६४ ॥ सोऽपि प्रादुर्भवत्पुण्यो ।
जानन् स्वमर्धचक्रिणं ॥ तदेव भ्रामयित्वा च । मुमोच मगधेश्वरे ॥ ६५ ॥ पुंसामपदशायोगे ।
विश्वस्तमपि यद्भवेत ॥ पराभवेत्तदाप्युच्चै—र्लालितात्मीयदेहवत् ॥ ६६ ॥ इति तेनैव तस्यापि ।
छिन्नं मस्तकमस्तकं ॥ स मृत्वा च महापापै—श्चतुर्थं नरकं ययौ ॥ ६७ ॥ नवमो वासुदेवोऽसौ ।
जातो गुणमहोदधिः ॥ ब्रुवाणा इति गीर्वाणाः । पुष्पवृष्टिं प्रचक्रिरे ॥ ६८ ॥ यो मृतोऽथ स एवा-
त्र । मृतः स्वकीयकर्मणा ॥ म्रियंते न सम तेन । पुत्रमित्रसहोदराः ॥ ६९ ॥ जरासंधनृपस्येति ।
सहदेवादयः सुताः ॥ समेत्य स्वार्थवांछायै । प्रणेमुः पुरुषोत्तमं ॥ ७० ॥ मुकुंदोऽपि पितुः शोक-
दुःखविस्मृतिहेतवे ॥ सन्मान्य प्रददौ तेषां । राज्यं राजगृहस्य च ॥ ७१ ॥

वासुदेवोऽथ वामेय—जिनस्य मूर्तिमद्भुतां ॥ प्रणतां यदुभिः सर्वै—स्तत्रैवास्थापयन्मुदा ॥
॥ ७२ ॥ सेवायै तत्पुरो मूर्तिं । स्थापयित्वा निजां हरिः ॥ तत्र तन्नामतश्चक्रे । पुरं शंखेश्वराभिधं

दिवापि रजनीं शौरेः ॥ ५० ॥ कृष्णोऽप्यकृष्णया कीर्त्या । जनयन्नुज्ज्वलां महीं ॥ जरासंधोपरि वा·
ण—वर्षणं कृतवान् भृशं ॥ ५१ ॥ उभयो रथचक्राभ्यां । स्पृष्टा नूः पिष्टसन्निभा ॥ बभूव भुवनक्षो·
भो । लोभोऽन्येषां जयश्रियः ॥ ५२ ॥ अस्त्रैर्लोहमयैर्लोह—मयानि निशितान्यपि ॥ दिव्यैर्दि·
व्यानि तौ वीरौ । चिच्छेदतुः परस्परं ॥ ५३ ॥ दुर्दशायाः प्रसंगेन । क्षीणास्त्रो मगधाधिपः ॥ स्मृ·
तिं चकार चक्रस्या—गतं तदपि तत्करे ॥ ५४ ॥ जरासंधस्तदावादी—दरे गोपालबालक ॥ अ·
द्यापि मम मन्यस्व । निदेशं कुशलागमं ॥ ५५ ॥ स्वकीयायुष्यपूर्णेऽपि । कथं च म्रियसे मुधा ॥
चेज्जीविष्यसि तद्राज्यं । गोपालत्वं च लप्स्यसे ॥ ५६ ॥ हितबुद्ध्या मयोक्तेऽपि । यद्याज्ञां न क·
रिष्यसि ॥ वर्षद्वह्निकणानेत—च्चक्रं त्वां ज्वालयिष्यति ॥ ५७ ॥ अभिमानेन संयुक्तं । वचनं म·
गधेशितुः ॥ निशम्य माधवोऽवोच—न्माकार्षीर्मूढ रे स्मयं ॥ ५८ ॥ दुष्टं व्याघ्रमहं हत्वा । गवां
च प्रविनाशकं ॥ सुखेन पालयिष्यामि । समस्तामपि गामहं ॥ ५९ ॥ यथा तव शरीरस्य । सुकृ·
तस्य बलस्य च ॥ सांप्रतं क्षीणता जाता । चक्रस्यापि तथैव सा ॥ ६० ॥ एवं न चेत्तदा चक्र—
मोचने किं विचारणां ॥ करोषि त्वं च मुंचाशु । रणे हि वार्तया सृतं ॥ ६१ ॥ अष्टापद इवोत्कर्षा

त्वयोदितं ॥ परमेवं कृतेऽस्माकं । माहात्म्यं न प्रवर्तते ॥ ३९ ॥ रिपोरपि चमत्कारो । न भीतिश्च प्रजायते ॥ तामेव त्वं ततो देहि । देहिसौख्यविधायिनीं ॥ ४० ॥ यथा तस्याः क्रमांभोज—क्षालनोदकसेचनैः ॥ अहमेव समुत्थाप्य । सैन्यं करोमि विग्रहं ॥ ४१ ॥

तव देवि प्रसादेन । सकलैः सैनिकैः सह ॥ घोरं विधाय संग्रामं । जयामि दुर्जयं रिपुं ॥ ॥ ४२ ॥ विष्णोरित्याग्रहेणैव । पद्मावत्यपि हृष्टहृत ॥ मूर्तिमानीयं तामेव । शक्त्या दत्वा तिरोदधे ॥ ४३ ॥ कृष्णोऽपि पूजयित्वा तां । तस्याश्च चरणोदकैः ॥ सिक्त्वोदस्थापयत्सैन्यं । निद्रोत्थितमनुष्यवत् ॥ ४४ ॥ तेनैव सेचनेनाशु । समुत्थितेऽखिले बले ॥ कृष्णः प्रामुमुदत्तस्मा—त्पांचजन्यमवादयत् ॥ ४५ ॥ गोविंदाखिलसैन्यस्य । सज्जीभवनवार्तया ॥ पांचजन्यस्य शब्देन । चुकोप मगधाधिपः ॥ ४६ ॥ प्रतिविष्णुर्भवेद्वध्यो । विष्णुनैवेति नेमिना ॥ जरासंधं नृपं मुक्त्वा । जिग्ये चक्रमहीभृतः ॥ ४७ ॥ संग्रामकृतये सज्जी—भूते सैन्येऽखिलेऽपि च ॥ श्रीनेमिर्व्यरमद्युद्धा—दकृत्यात्करुणया यदा ॥ ४८ ॥ तदा क्षिप्त्वा जरासंध—प्रहारोद्भूतवेदनां ॥ मुशली मुशलेनैवा—चूर्णयद्बहुशो बलं ॥ ४९ ॥ अथ राजा जरासंधः । क्रोधांधो माधवंप्रति ॥ अचालयद्रथं कुर्वन् ।

कृतो रात्रौ तृतीयस्यां । ध्यानलीनस्य शार्ङ्गिणः ॥ प्रत्यक्षमागता पद्मा—वती द्युतिमती द्रुतं ॥ २८ ॥ पुरः स्थितां विज्ञान्वीतां । तां निरीक्ष्य नरायणः ॥ नत्वा च भक्तिसंयुक्तो । जगादेति प्रियं वचः ॥ २९ ॥ धन्योऽहं सर्वमान्योऽहं । सुपुण्योऽहमथोऽभवं ॥ जाता मे फलिताः कामा । वीक्षिता त्वं मयाद्य यत ॥ ३० ॥ अचिंत्यं तव माहात्म्यं । देवि वर्णयितुं क्षमा ॥ न देवा अपि जायंते । प्रभूतबलसंयुताः ॥ ३१ ॥ तस्येति योग्यया स्तुत्या । संप्रीता देव्यभाषत ॥ किमर्थं त्वय- का ध्यान—योगेन संस्मृतास्म्यहं ॥ ३२ ॥ सोऽवोचद्यदि तुष्टासि । परमेश्वरि शक्तिभाक् ॥ तर्हि श्रीपार्श्वनाथस्य । प्रतिमां मे समर्पय ॥ ३३ ॥ तस्याः स्नात्रस्य पानीयैः । सिक्त्वा सैन्यं जरार्दितं ॥ सज्जीकरोमि शत्रुं च । जित्वा तां पूजयामि च ॥ ३४ ॥ प्राज्यपद्मवती पद्मा—वती प्रीतिमती ज- गौ ॥ सा मूर्तिः सूक्तिसंयुक्ता । नात्रागच्छेदतुच्छधीः ॥ ३५ ॥ तां मूर्तिमंतरेणैव । सज्जीकरोम्यहं य- दि ॥ समस्तमपि सैन्यं ते । चिंता का तर्हि केशव ॥ ३६ ॥ दुर्जेयमपि ते शत्रुं । जरासंधं निह न्म्यहं ॥ अथवा नागपाशेन । बध्वानयामि ते पुरः ॥ ३७ ॥ यत्तुभ्यं रोचतेऽहं त—द्विदधामि क्षणादपि ॥ तत्त्वं वद यथाभीष्टं । मूर्तिमाश्रित्य मा वद ॥ ३८ ॥ गोविंदोऽप्यवदद्देवि । तत्सत्यं य-

तदा जनार्दनोऽजल्पत् । त्रीन् वासरान् सहोदर ॥ रक्षिष्यति चमूमेनां । को जरापरिपीमितां ॥१७॥
जिनः प्रोवाच यावत्ते । ध्यान पूर्णं भविष्यति ॥ तावत्संरक्षयिष्यामि । तावकीं वाहिनीमिमां ॥१८॥

इति प्रोक्तो जिनेशेन । कृष्णः संतुष्टमानसः ॥ पवित्रे स्थानके ध्यान—चिकीर्षयैव संस्थितः ॥ १९ ॥ जरासंध इतो ज्ञात्वा । जराग्रस्तं हरेर्बलं ॥ चतुरंगबलान्वीत । आगाद्युद्धविधित्सया ॥ ॥ २० ॥ तस्मिन् वर्षति बाणौघे—ऽनवच्छिन्नप्रधारया ॥ अंगारान् वर्षति चाभ्रं । किमित्याशंकितं नरैः ॥ २१ ॥ अथ नेम्याज्ञया दिव्यं । रथं सैन्यस्य सर्वतः ॥ मातलिर्भ्रामयामास । जलावर्तमिवानिलः ॥ २२ ॥ त्रिजगद्व्यापिना शंख—शब्देनाखिलवैरिणां ॥ त्रासं विधाय शक्रस्या—स्फालयद्भगवान् धनुः ॥ २३ ॥ टणत्कारः कृतस्तस्य । यदा श्रीनेमिनार्हता ॥ तदादधत बाधिर्यं । जरासंधस्य सैनिकाः ॥ २४ ॥ प्रक्षिप्ता धनुषा तेन । यदा जिनेन मार्गणाः ॥ अशृण्वानास्तदा तेऽस्थु—र्बधिरा इव दूरतः ॥ २५ ॥ बिभ्यंतस्ते जरासंध—सैनिका मार्गणौघतः ॥ दूरमेव स्थिताः सर्वे । प्राणरक्षाविधित्सया ॥ २६ ॥ ततस्तेषां जिनेंद्रोऽपि । प्रभूतकरुणावशात ॥ चिच्छेद वर्मकोदंड—बाणान् पुनर्न जीवितं ॥ २७ ॥

रेषां सैन्यवर्तिनां ॥ उज्ज्वले नयने श्वासो । मनाक् चेष्टेति जीविते ॥ ५ ॥ वर्तते प्रतिपक्षोऽपि । दुःसाध्योऽस्माभिरंजसा ॥ ज्ञात्वेत्यनंतशक्तिस्त्वं । रक्ष सैन्यं निजं रिपोः ॥ ६ ॥ एकाक्यपि यथा युद्धं । विधाय वैरिणा समं ॥ वृणोमि विजयं शीघ्रं । यदेष दंभवान् रिपुः ॥ ७ ॥ नारायणवचः श्रुत्वा—वधिज्ञानानुभावतः ॥ विचेष्टितं जरादेव्या । विज्ञायावादि नेमिना ॥ ८ ॥ जरासंधेन मुक्तास्ति । तावके कटके जरा ॥ तयेदं सकलं सैन्यं । विधुरं जातमस्ति हि ॥ ९ ॥ जयामि शत्रुमित्युक्तं । यत्त्वया तत्तु सूनृतं ॥ जीवंतोऽपि मरिष्यंति । परमेते जरावशात् ॥ १० ॥ ततः प्रथममेतेषां । परिचर्यां द्रुतं कुरु ॥ जगाद माधवो बंधो । सा कथं प्रविधीयते ॥ ११ ॥ नेमिः प्रोवाच पाताले । धरणेंद्रजिनालये ॥ आस्ते भविष्यतः पार्श्व—नाथस्य प्रतिमा शुभा ॥ १२ ॥ उपवासैस्त्रिभिः कृत्वा । तमाराध्य त्रिभिर्दिनैः ॥ तां मूर्तिं महिमान्वीतां । याचस्व सुखहेतवे ॥ १३ ॥ तां ते दास्यति नागेंद्रः । सम्यगाराधितस्त्वया ॥ देवा आराधिता एव । भवंतीह सुखावहाः ॥ १४ ॥ तस्याः स्नपननीरेण । कासश्वासजरादयः ॥ नेत्रोदरांह्रिरोगाश्च । प्रयांति क्षणमात्रतः ॥ १५ ॥ तेनामीषामपि क्षिप्रं । दूरे जरा प्रयास्यति ॥ सुखंगाश्च भविष्यंति । सर्वेऽपि तव सैनिकाः ॥ १६ ॥

त्रानेकोनसप्ततिं ॥ ९३ ॥ सुतान् सप्ततिमेकोनां । मृतान्निपतितान् भुवि ॥ दृष्ट्वा प्रद्योतनो भीत । इवास्ताचलमासवान् ॥ ९४ ॥ निदेशं स्वामिनोः प्राप्य । स्वस्थानं सैनिका अपि ॥ प्रयाता विरता युद्धा—द्रात्रौ स्यात्समरो न हि ॥ ९५ ॥ अजेयानायुधैः शत्रून् । विज्ञाय मगधेश्वरः ॥ दुःकर्मा रिजये रात्रौ । दध्यौ निद्रोज्झितर्षिवत ॥ ९६ ॥ उत्पन्नो ध्यायतस्तस्यो—पायो मुंचाम्यहं जरां ॥ बलस्य सकलस्यापि । काष्टस्येव विधायिनीं ॥ ९७ ॥ रजन्यां चिंतयित्वेति । मगधस्वामिना पुरा ॥ आराधिता जरादेवी । मुक्ता सैन्ये वृषाकपेः ॥ ९८ ॥ श्रीमन्नेमिजिनं मुक्त्वा । बलनाडं च माधवं ॥ सान्येषामपि सर्वेषां । देहे शल्यमिवाविशत ॥ ९९ ॥ जरांविनापि वृद्धत्वं । मृतिंविनापि वा मृतिः ॥ रोगंविनापि रोगित्वं । तेषामंगेऽभवत्तया ॥ ३०० ॥ विस्त्रेण रहिताः केचित । स्रस्तरे बालका इव ॥ धूल्याछादितदेहाश्च । केचिद्भिक्षाचरा इव ॥ १ ॥ वमंति रुधिरं केचि—ल्लालां केचित्कफं पुनः ॥ पृथिव्यां पतिता एव । मूत्रयंति च केचन ॥ २ ॥ प्रातर्निरीक्ष्य सैन्यानां । स्वरूपं च विरूपकं ॥ कृष्णो म्लानमुखः प्राह । नेमिनं जगदीश्वरं ॥ ३ ॥ भ्रातरत्र बलेऽब्रुवन् । ये सहस्रनियोधिनः ॥ लक्षनियोधिनो ये च । तेषामपीदृशी गतिः ॥ ४ ॥ पीडया विधुरो रामो—ऽप·

पंचास्य इव कुंजरान् ॥ ८२ ॥ वृष्ठत्वात्तं बलक्षीणं । ज्ञात्वा तेऽप्यागमन् द्रुतं ॥ जरासंधस्तदाप्रा-
क्षी—द्दंसकं वृद्धधीसखं ॥ ८३ ॥ मंत्रिन्नत्र प्रवर्तते । कौ बलदेवकेशवौ ॥ तेन तौ दर्शितौ तस्या
—प्रेरयत्सन्मुखं रथं ॥ ८४ ॥ तमागच्छंतमालोक्य । दशापि सात्वतांगजाः ॥ द्रुतं च द्वादशांभो-
दा । इवावर्षन् सरोदकं ॥ ८५ ॥

शिशुपालोऽथ कृष्णस्या—भिमुखं स्यंदनं स्वकं ॥ नीत्वा मुमोच कोपेन । शिलीमुखाननेकशः ॥ ८६ ॥ कृष्णेन शिशुपालस्य । बाणोऽमुच्यत लीलया ॥ छिन्नास्तेनैव कोदंड—रथसारथिमौलयः ॥ ८७ ॥ जरासंधसुता अथ—विंशतिर्बलडुस्सहाः ॥ रामेण सह युद्धायो—द्यताः समनवन् द्रुतं ॥ ८८ ॥ युध्यमानेन तेनापि । मार्गणैरतिदारुणैः ॥ निहत्य प्रापिता धर्म—राजमंदिरमीक्षितुं ॥ ८९ ॥ स्कंधोध्धुरान्मृतान् पुत्रान् । समीक्ष्य मगधाधिपः ॥ पुत्रान् संकर्षणस्यापि । प्रहृतान्निजघान च ॥ ९० ॥ मस्तके बलदेवस्य । गदाप्रहारमुत्कटं ॥ स मुमोच पुनस्तेन । सोऽपि मूर्छामवाप्तवान् ॥ ९१ ॥ रामजिघांसुना राज्ञा । जरासंधेन विग्रहं ॥ कपिध्वजोंतराकार्षी—त्सुभटः कटके हरेः ॥ ९२ ॥ पतंतं मूर्छया ज्येष्ठं । भ्रातरं वीक्ष्य केशवः ॥ निजघान जरासंध—पु

द्रुतं ॥ ७० ॥ दृढमप्यानयेच्छन्व । कर्णांतं सबलो यथा ॥ पृष्टे कंठं समानीय । सत्यकिर्निजघान
तं ॥ ७१ ॥ इतो हिरण्यनाभस्य । जीवमादातुमुत्सुकः ॥ अनाधृष्णिः स्वबाणेना—दिनस्तच्छनुर-
च्छिदत ॥ ७२ ॥ क्रुद्धेन मुमुचे तेन । शरो घातविधायकः ॥ अंतरा छेदितः सोऽपि । तेन वैर्यनि-
कृतिना ॥ ७३ ॥ विकरालां ततो जृंभां । विनिर्गतां समंततः ॥ समीक्ष्य तामनाधृष्णिः । पादा-
भ्यामेव धावितः ॥ ७४ ॥ विचाले केशवज्येष्ट—सहोदरोऽपि नृशिशः ॥ दर्शनार्थं स्वकीयस्य । ब-
लस्य तमखेदयत् ॥ ७५ ॥ अनाधृष्णिरपि ज्ञात्वा । समयं शत्रुघातनं ॥ तदा हिरण्यनाभस्य । च-
क्रेंगं जीववर्जितं ॥ ७६ ॥ हते हिरण्यनाभेशे । तत्सैन्यवर्तिनो नृपाः ॥ जरासंधस्य शरण—मुररी-
चक्रिरेतरां ॥ ७७ ॥ जाने ते नैव दुःखेन । मार्तंडोऽप्यस्तमाप्य च ॥ मृतस्नानमिवाधातुं । ममज्ज
पश्चिमांबुधौ ॥ ७८ ॥ लब्ध्वा जयमनाधृष्णिः । पांडवैः पूजितक्रमः ॥ जगाम केशवोपांते । तेना-
पि स प्रपूजितः ॥ ७९ ॥ सर्वेऽपि मानिता अन्ये । प्रौढप्रोल्लाससंयुताः ॥ बलं निजं निजं जग्मु
—र्नारायणनिदेशतः ॥ ८० ॥ जरासंधमहीशोऽथ । महतामपि भूभुजां ॥ क्षयं ज्ञात्वा शिशुपालं
। सेनापतितया व्यधात् ॥ ८१ ॥ जरासंधो जगद्भर्ता । कृत्वाग्रे शिशुपालकं ॥ यदूनाकारयज्जीर्ण—

हिरण्यनाभतनूजः ॥ कोदंडं च रथं चैव । सारथिमप्यघातयत् ॥ ५९ ॥ हिरण्यनाभको मुक्त्वा ।
दारुणान् दश मार्गणान् ॥ मस्तकं जयसेनस्य । चिच्छेद खेदखेदितः ॥ ६० ॥ महीजयस्तदा क्रु-
द्धः । सहोदरविघातनात् ॥ पाणौ कृपाणमुद्यम्या—धावतारिवधाय च ॥ ६१ ॥ तस्यैव धावतो व-
क्षः—स्थले क्षिप्त्वा शिलीमुखं ॥ चकर्ष नृपतिर्वैरि—जीवं शल्यमिवात्मनः ॥ ६२ ॥ मारणाद् ह-
यपुत्रस्या—नाधृष्णिः प्रतिघारुणः ॥ हिरण्यनाभपाताया—धावत्खड्गादिपूरितः ॥ ६३ ॥ जरासंधम-
हीशस्या—न्येऽपि नृपाः पृथक्पृथक् ॥ पार्थादिपांडवैश्चापि । यदुभिर्युद्धमाचरन् ॥ ६४ ॥ कामरू-
पाभिधे देशे । नायकत्वेन विश्रुतं ॥ भगदत्तं गजारूढं । महानेमिरधावत ॥ ६५ ॥ तदोचे स त-
व भ्रातु—र्नाहं श्यालोऽस्मि रुक्मिराट् ॥ किंतु नारकवत्तेऽहं । खंडंखंडं करोऽस्म्यहं ॥ ६६ ॥ उ-
क्त्वेति प्रेरयंस्तस्य । सन्मुखं हस्तिनं निजं ॥ मंडलेन महानेमि—स्ततस्तवभ्रामयद्रथं ॥ ६७ ॥ द्वि-
पः पादतले बाणै—र्निहतो न्यपतत्तदा ॥ तेनाथ भगदत्तोऽपि । पपात पृथिवीतले ॥ ६८ ॥ रु-
क्मी नासीति तं स्मित्वा । कोट्या च धनुषः स्पृशन् ॥ महानेमिर्व्यमुंचत्तं । नोत्तमोऽभिभवाप्तिकृत
॥ ६९ ॥ भूरिश्रवः सत्यकिभ्यां । कुर्वद्भ्यां दारुणं रणं ॥ तत्र सत्यकिना भूरि—श्रवा अवध्यत

यतो जयं भीम— स्तं निहत्योपलब्धवान् ॥ ४७ ॥ हते दुर्योधने तस्य । सैनिकाः स्वामिवर्जिताः
॥ भेजुर्हिरण्यनाभाख्यं । सेनानीत्वेन विश्रुतं ॥ ४८ ॥ वामदक्षिणपक्षस्थाः । पांडवा यादवा अपि
॥ सेनानीशमनाधृष्णं । शिश्रियुः सेवका इव ॥ ४९ ॥ राजा हिरण्यनाभोऽथ । दुढौके प्रेरितो
रुषा ॥ सेनानीस्वामितामानं । दधानो भापयन् यदून् ॥ ५० ॥ अभ्यधादभिचद्रस्तं । तदा रे मूढ
दुर्मते ॥ यदून् भापयसि त्वं किं । स्वबाहुबलगर्वितः ॥ ५१ ॥ इत्युक्ते सह तेनैव । लग्नः समरक-
र्मणे ॥ हिरण्यनाभभूपालो ? व्यकिरच्छरसंहतिं ॥ ५२ ॥ विचालादपि चिच्छेद । तां फाल्गुनः शरै-
र्निजैः ॥ पुंसां ह्यापदशायोगे । क्षीयते सकलं बलं ॥ ५३ ॥ पार्थस्यापि विघाताय । स मुमोच
शिलीमुखात् ॥ भीमस्तु गदया शीघ्रं । चूर्णयामास तानपि ॥ ५४ ॥ अत्यद्भुतबलोऽप्युच्चै—र्हिर
ण्यनाभनृपतिः ॥ बाणानुग्रान् प्रचिक्षेप । भीमस्यापि शिरश्छिदे ॥ ५५ ॥ तैर्नातिष्ठन् रथी सादी ।
निषादी वाजिपत्तयः ॥ महत्यामपि सेनायां । यदूनां बलगर्विणां ॥ ५६ ॥ द्वेधापि जयसेनाख्यो ।
हिरण्यग्रहणेच्छया ॥ दधावे धनुराकृष्य । तदर्थं को न धावति ॥ ५७ ॥ किं बालमिव मे वक्रं ।
निरीक्षसे ब्रुवन्निति ॥ सारथिं जयसेनस्य । हिरण्यनाभकोऽवधीत् ॥ ५८ ॥ जयसेनाभिधानोऽपि ।

रेऽपि पद ॥ ३५ ॥ नंष्ट्वा दुर्योधनं नृपं । तं ते षमपि शिश्रियुः ॥ मिलित्वा तैर्महीशैश्च । पार्थेन सोऽप्ययुध्यत ॥ ३६ ॥ बलदेवसुतः प्राज्यो । ज्येष्टः पार्थेन संयुतः ॥ वाहिनीं भंजयामास । कुरुदेशेशितुः शरैः ॥ ३७ ॥ दुर्योधनावनीभर्तु—र्गजानंधान् प्रकुर्वता ॥ धनंजयेन बाणेन । व्यापादितो जयद्रथः ॥ ३८ ॥ बलादाकर्णमाकृष्ट—कोदंडः कर्णराट् तदा ॥ दधावे वेगतः पार्थ—जिघांसया दर्योद्धतः ॥ ३९ ॥ शरीरकंदुकेनोच्चै—र्विशालखड्गयष्टिना ॥ रममाणावपश्यंस्तौ । कर्णपार्थौ सुरा अपि ॥ ४० ॥ भंक्त्वानेकरथान् वीरान् । शस्त्रमात्रसमन्वितः ॥ कर्णो विलोडयामास । यादवानां च वाहिनीं ॥ ४१ ॥ सिंहनादेन भीमश्च । शंखनादेन फाल्गुनः ॥ चक्रतुः शत्रुसेनायां । क्षोभनं महतीं तदा ॥ ४२ ॥ दुर्योधननृपोऽधाव—दादाय हस्तिनां घटां ॥ वधाय भीमसेनस्य । समुद्यतः क्रुधाकुलः ॥ ४३ ॥ रथ्यान् रथ्यैर्हयैरश्वान् । मतंगजैर्मतंगजान् ॥ भीमो दौर्योधनं सैन्य—मिति सर्वमयोधयत् ॥ ४४ ॥ युध्यमानोऽपि तैः सार्ध—मेव भीमः पराक्रमात् ॥ न संग्रामरसंपूर्णो—चकार द्यूतकेलिवत् ॥ ४५ ॥ तदा दुर्योधनो मानी । स्वयमाश्वास्य सैनिकान् ॥ चचालगंधहस्तीव । भेत्तुं भीमबलद्विपान् ॥ ४६ ॥ तौ पारावारकल्लोला—विव ह्यास्फालनं मिथः ॥ जन

॥ २२ ॥ आरोपितगदः स्कंधे । भीमो दुर्योधनेशितुः ॥ बंधुं दुरोदरव्याज—जयं संस्मारयन्नहन् ॥
॥ २३ ॥ मायायुद्धविधानेन । गांधारेण न योधितं ॥ मुमोच सहदेवाख्यो । मार्गणं जीवनाशनं
॥ २४ ॥ प्राप्तमेव शरं पृष्टात् । स्यंदने शकुनेरपि ॥ दुर्योधननृपोऽच्छेत्सी—च्छलेन तीक्ष्णपत्रिणा ॥
॥ २५ ॥ भव्यं जातं युवां प्राप्तौ । भूयःकपटकंटकौ ॥ युगपद् घातयिष्यामि । वियोगं कर्तुमक्षमौ
॥ २६ ॥ उक्त्वेति सहदेवेन । देवेनेव बलीयसा ॥ बाणा मुमुचिरे तैस्तु । दुर्योधनस्तिरोदधे ॥
॥ २८ ॥ तेनापि तीक्ष्णबाणानां । प्रक्षेपेण धनुश्छिदा ॥ विद्रावितोऽपि माद्रेयो । न मनागप्युप-
द्रुतः ॥ २९ ॥ पुनः सोऽप्यमुचद्बाणं । मंत्रमंत्रितमर्चितं ॥ प्राणिनां प्राणनाशाय । धर्मराजशरो
पमं ॥ ३० ॥ अंतरालादपि छित्वा । तीक्ष्णेन गरुडेषुणा ॥ दूरीचक्रे तन्माहात्म्यं । धनंजयेन ध
न्विना ॥ ३१ ॥ दुर्योधनमहीशस्य । पक्षपातविधित्सया ॥ शकुनिर्धनुरारोप्य । ववर्ष शरमंडलीं ॥
॥ ३२ ॥ शकुनेरपि तां छित्वा । मार्गणात्सहदेवकः ॥ सूतं शकुनिवरूथ्या—नुड्डाप्य तच्छिरोऽच्छि-
दत् ॥ ३३ ॥ दिवाकरकरैस्तीक्ष्णै—रिवातिनिशितायुधैः ॥ निशाबल उलूकोऽपि । नकुलेनोपद्रु
ते ॥ ३४ ॥ उलूकोऽपि दिवा पश्यन् । नष्ट्वा दुर्मर्षणेशितु ॥ स्यंदने गतवांश्चित्रं । विद्रुता अप

संभूय तेऽप्ययुध्यंत । पार्थेन शरवर्षिणा ॥ शकुनिः सहदेवेन । भीमे दुःशासनोऽपि च ॥ ६ ॥
नकुलेन सहोल्लुको । युधिष्ठिरेण शल्यकः ॥ द्रुपदेशेन सत्यांको । राहुलो भौपलेन च ॥ ७ ॥
नृपाला अपरे शेषा । विद्वेषांचितचेतसः ॥ चक्रिरे समरं घोरं । संकर्षणसुतैः समं ॥ ८ ॥ दुर्यो-
धननृपादीनां । वर्षतां बाणधोरणीः ॥ ऽतं संधितबाणैस्ता । उच्चिछेद धनंजयः ॥ ९ ॥ अहन् दु-
र्योधनेशस्य । सारथिं रथिकानपि ॥ पार्थोऽभांक्षीद्रथान् बाणैः । सन्नाहमप्यपातयत ॥ १० ॥ तदा
क्रोधोद्धताः सर्वे । नृपालाः पूर्ववर्णिताः ॥ युगपत्समापतन् पार्थे । वर्षतो बाणधोरणीं ॥ ११ ॥ द
शानामपि शत्रूणां । नृपानां शरवर्षणैः ॥ धनंजय श्चाकार्षी—दुपद्रवं धनंजयः ॥ १२ ॥ युधिष्ठि-
रमहेशस्य । स्यंदने संस्थितं ध्वजं ॥ शल्यः शल्यमिवादूरं । पातयामास मार्गणैः ॥ १३ ॥ तदौष-
धविधानाय । युधिष्ठिरोऽपि नृपतिः ॥ शल्यस्यापि चकर्ताशु । कोदंडकलितान् शरान् ॥ १४ ॥ अ-
परं कार्मुकं क्रोधा—दादाय शल्यपार्थिवः ॥ वेगादाछादयामास । धर्मपुत्रं शिलीमुखैः ॥ १५ ॥
विद्युत्प्रात्कारसंकाश— मितः पार्थः शिलीमुखं ॥ शल्यंप्रति मुमोचाशु । तेन सोऽपि गतो मृतिं ॥
॥ १६ ॥ जीवरक्षाकृतेऽनश्यन् । नृपालाः पार्श्ववर्तिनः ॥ सेव्यसेवकता ताव—द्यावज्जीवस्य रक्षणं

ससेनं च वसुसेन—मक्षोभोऽक्षोभधैर्यकाक् ॥ पुरीमित्रेश्वरं मित्रे—श्वरं च सागराभिधः ॥ ९४ ॥
धृष्टं प्रतिज्ञया धृष्टं । लक्ष्मीवान् लक्ष्मलक्षितः ॥ अर्थिनां द्युम्नदातारं । द्युम्नं च हिमवान् पुनः ॥
॥ ९५ ॥ धरणेंद्र इवौजस्वी । धरणश्चांबराष्टकं ॥ अजैषीव्रतधन्वान—मभिचंद्रो महेंद्रवत ॥ ९६ ॥
कल्याणापूरणो लोके । पूरणो द्रौपदं नृपं ॥ सत्यनेमिर्महापद्मं । सुनेमिः कुंभिभोजकं ॥ ९७ ॥
श्रीदेवं दृढनेमिश्च । विभिन्ना यादवैरिति ॥ नृपा हि रणतोऽन्येऽपि । भग्नाः शरणमाश्रिताः ॥९८॥
इतो भीमो रणे भीमो—ऽर्जुनोऽर्जुनोपमप्रभः ॥ रामो रामसुताः श्वेत—वदना रदनांशुभिः ॥
॥ ९९ ॥ धृतराष्ट्रसुतानां ते । सैन्यं व्यद्रावयन् द्रुतं ॥ विद्रुतास्तेऽपि संजाता । वातकंपितपत्र-
वत् ॥ २०० ॥ बाणैः खगैरिवाकाश—माछादितं समंततः ॥ बभूव दुर्दिनं मेघ—बिंदूनां पतनैरिव
॥१॥ पार्थ आकृष्य गांडीवं । यदा मुंचति मार्गणान् ॥ करस्थाने करोऽन्येषां । धनुःस्थाने धनुस्तदा
॥२॥ अथ दुर्योधनो योधः । कृत्वा हुंकारमुत्थितः ॥ जितकासिनमात्मानं । जानन् स्वीयबलोद्धतः
॥ ३ ॥ युद्धे रिपुकबंधौघे । नृत्तत्युव्यस्त्रिगर्तकः ॥ चित्रसेनश्चित्रसेनो । रामराजो जयद्रथः ॥ ४ ॥
सौवीरनृपतिः शूर—सेनेशो जयसेनकः ॥ सोमकः सोमवक्रश्च । नृपाला मिलिता इति ॥ ५ ॥

पोन । पातयित्वा महीतले ॥ सकेतुं रथमछैत्सी—द्धस्त्राणि च नृपस्य सः ॥ ८२ ॥ पणामवनिपा-
लाना—मेतेषां सार्थवर्तिनां ॥ अखंडानपि कोदंडा—नसौ चिछेद लीलया ॥ ८३ ॥ आरोप्य भृ-
कुटिं भाले । तदा धन्वनि शिंजिनीं ॥ संग्रामायागतो रुक्मी । समारुह्य रथांतरं ॥ ८४ ॥ शत्रुंज-
यादयोऽन्येऽपि । नृपा अष्टौ समागताः ॥ रुक्मिणा तैश्च संग्रामो । द्वयोपि नवतां ययौ ॥ ८५ ॥
जग्राह कार्मुकं यद्य—द्रुक्मिराट् बाणसंयुतं ॥ समुद्रविजयक्ष्माप–तनयस्तत्तदछिदत् ॥ ८६ ॥ छि-
दतस्तस्य संजाता । छेदपंक्तिश्च धन्वनां ॥ संख्यया विंशती रुक्मी । जातः क्षीणपराक्रमः ॥ ८७ ॥
कौवेरीनामधेयं च । शस्त्रं मुमोच रुक्मिराट् ॥ आग्नेयेन शरेणार्ह—श्चकार भस्मसाद्बली ॥ ८८ ॥
वर्षंतं बाणलक्षाणि । रुक्मी वैरोचनाभिधं ॥ बाणं मुमोच शैवेय—प्रजिघांसाकृते द्रुतं ॥ ८९ ॥
महेंद्राख्येन बाणेन । महानेमिर्बलाधिकः ॥ आनलामपि तद्भक्तिं । क्षिप्त्वा जघान रुक्मिणं ॥ ९० ॥
निपीडितं प्रहारेण । क्षणांतं पतितं भुवि ॥ रुक्मिभूपं समादाय । वेणुदार्यास्पदं गतः ॥ ९१ ॥
महानेमेर्महीपालाः । क्षोभनं प्रापुरुच्चकैः ॥ विजयेऽपि महासैन्या—च्छंका चित्ते हि जायते ॥ ९२ ॥
समुद्रविजयस्वामी । वैरिसेनापतिं क्षणात ॥ भद्रकं स्तिमितश्चापि । मालवेशं जयावहं ॥ ९३ ॥

स्थापयंतस्ते । संग्रामाय समुत्थिताः ॥ ७० ॥ दुर्योधनोऽथ मात्सर्या—न्निरुरोध धनंजयं ॥ रोधिरी॰
शस्त्वनाधृष्णिं । महानेमिं च रुक्मिराट् ॥ ७१ ॥ तेषां षणामपि द्वंद्व—युद्धं बभूव भैरवं ॥ रथि
कानां परेषां च । भटानामभिमानिनां ॥ ७२ ॥ बिभ्राणमपि वीरेषु । मानित्वं रुक्मिणं हठात् ॥
वियुक्तं स्यंदनास्त्राभ्यां । महानेमिरचीकरत् ॥ ७३ ॥ वध्यस्थानसमेतस्य । रक्षामाश्रित्य रुक्मिणः॥
शत्रुतपनाद्याः सप्त । राजानो योध्धुमुत्थिताः ॥ ७४ ॥ तैः सर्वैर्युगपन्मुक्ता । या च या बाणधोरणी
॥ उच्चिच्छेद महानेमि—स्तां तां कोदंडसंयुतां ॥ ७५ ॥ क्रियमाणे चिरं युद्धे । न वैरी क्षयमास
वान् ॥ तावता मुमुचे शक्ति—र्नृपेण व्यक्तशक्तिभाक् ॥ ७६ ॥ आगच्छंतीं ज्वलज्ज्वालां । शक्ति
मालोक्य यादवाः ॥ चित्ते चुक्षुभिरे वैर्या—गमेन क्षोभते न कः ॥ ७७ ॥ तस्याश्च किंकरीभूताः
। शक्तिबाणाः सहस्रशः ॥ सहसा युगपत्पेतु—र्हुताशनकणा इव ॥ ७८ ॥ व्याचष्टाथारिष्टनेमिं ।
मातलिर्युद्धकोविदः ॥ देहि प्रभो महानेमे—र्वज्रं वैरिपराजयि ॥ ७९ ॥ इयं शक्तिर्विभेद्यास्ति ।
वज्रेणैव महीयसा ॥ न किमपि तया साक—मन्यदस्त्रं जयप्रदं ॥ ८० ॥ तदा नेमिर्जगौ बाणे ।
संक्रामय त्वमेव तत् ॥ तेनापि नेमिनिर्देशा—द्वज्रं संक्रामितं क्षणात् ॥ ८१ ॥ शक्तिं तेनैव बा-

रुभयोरप्य—सुभटाश्चक्रिरे रणं ॥ कुर्वंतस्तांडवं नृत्य—कारका इव रंगतः ॥ ५७ ॥ चतुर्विधानि श·
स्त्राणि । समादाय द्वयोरपि ॥ सुभटा वर्षयामासुः । कल्पांतजलदा इव ॥ ५८ ॥ उभयोरपि वा·
हिन्यो—र्व्यूहौ द्वावपि भेदतां ॥ न चापतुर्मदोत्कट्यं । दधानौ तार्किकाविव ॥ ५९ ॥ जरासंधस्य
सैन्याधि—पतिहक्कारिता भटाः ॥ अग्रगान् भंजयामासु—र्मुकुंदसैन्यसंस्थितान् ॥ ६० ॥ सुभटान्
गरुडव्यूह—संस्थितान् गरुडध्वजः ॥ पताकोत्तालनाचक्रे । सर्वान् धैर्यसमन्वितान् ॥ ६१ ॥
तदा शौर्यान्महानेमि—पार्थौ पक्षस्थितावपि ॥ मध्यस्थितोऽप्यनाधृष्णि—र्योद्धुं त्रयोऽपि नि
र्गताः ॥ ६२ ॥ त्रयाणामपि शंखानां । वादित्राणां च निःस्वनैः ॥ अजायत जरासंध—सेनायां
क्षोभता भृशं ॥ ६३ ॥ महानेमिरनाधृष्णि—र्धनंजयश्च दुर्जयः ॥ त्रयोऽपि वव्रुषुर्बाणान् । हुताश
ना इवोल्ककान् ॥ ६४ ॥ महानेमेरथो व्यूह—संधिस्थिता महीभृतः ॥ प्रकोपिता जरासंध—नृ·
पसैन्याधिनायकैः ॥ ६५ ॥ तदा नामांकित चिह्न—मिव कर्तुं त्रयोऽपि ते ॥ विभेदं चक्रिरे चक्र
—व्यूहस्य स्थानकत्रये ॥ ६६ ॥ तत्र मार्गे कृते तेऽपि । चक्रव्यूहेऽविशन् जवात् ॥ विषमे स्थान
के मार्गे । संजाते प्रविशेन्न कः ॥ ६७ ॥ दुर्योधननृपो रुक्मी । रोधिरीश इति त्रयः ॥ स्वसैन्यान्

सिंहलबब्बराख्याकौ । कांबोजः कैरलाह्वयः ॥ द्रविडो नृपतिर्वीरो । गांधारश्च दरिद्रजित ॥ ४५ ॥
स्यंदनानां सहस्रैश्च । षष्ट्या तेषामपि स्फुटं ॥ पृष्ठस्य रक्षको जातो । महसेनपिनाज्ञितः ॥ ४६ ॥
पक्षरक्षाकृते दक्षा । भानुः सुभानुनामकौ ॥ संजयोऽमितभानुश्च । कंपितो द्रुमगौतमौ ॥ ४७ ॥
शत्रुंजयः शत्रुंजयो । महसेनो गम्भीरकः ॥ बृहध्ध्वजो वसुधर्मो—दयश्च कृतवर्मकः ॥ ४८ ॥ प्र-
सेनजिद् दृढधर्मो । विक्रांतश्चित्रवर्मकः ॥ एते स्युर्गरुडव्यूहे । गरुडध्वजविग्रहे ॥ ४९ ॥ यद्यप्य-
स्ति विरागो हि । नेमिनाथो जिनेश्वरः ॥ तथापि दुस्त्यजस्तस्य । दृष्टिरागो महात्मनः ॥ ५० ॥
तेन रागेण युद्धाय । ज्ञात्वेंद्रो नेमिमागतं ॥ रथं मातलिना प्रैषी—दजेयं शस्त्रसंयुतं ॥ ५१ ॥
मानूज्जात्यौजसामीषां । नीतिर्व्यूहविनिर्मितौ ॥ प्राप्येतीवास्तमादित्यः । प्राप्तवानुदयं पुनः ॥ ५२ ॥
मम यानात्पुरो भानु—र्माकार्षीत्क्रमनं द्रुतं ॥ इति मातलिना पूर्व—मादाय रथमागतं ॥ ५३ ॥
प्राभृतीकृतमारुह्य । रथं सुरसमर्पितं ॥ नेमिनाथोऽप्यनूद्युद्ध—विधानाय समुद्यतः ॥ ५४ ॥ बंधुं
नारायणाज्ज्येष्ठ—मनाधृष्णिं महाबलं ॥ समुद्रविजयाधीशः । प्रचकार चमूपतिं ॥ ५५ ॥ समस्ते-
ऽपि हरेः सैन्ये । बभूवाथ जयारवः ॥ कटके मगधेशस्य । बभूव क्षोभनं तथा ॥ ५६ ॥ व्यूहयो

विश्वरथस्त्वनाधृष्णि—र्वसुदेवसुता इति ॥ रथैकलक्षसंयुक्ता । गोविंदपृष्ठरक्षकाः ॥ ३३ ॥ उग्रसे-
ननृपस्तेषां । पृष्ठे कोटिरथोऽभवत् ॥ तस्यापि पृष्ठरक्षायै । स्थितं पुत्रचतुष्टयं ॥ ३४ ॥ भोजे स्वांग
जसंयुक्ते । पृष्ठस्थे रक्षिता नृपः ॥ धरणः सारणश्चंडो । दुर्धरः सत्यकाभिधः ॥ ३५ ॥ समुद्रविज-
यो राजा । पार्श्वमाश्रित्य दक्षिणं ॥ बांधवैस्तत्सुतैः सार्धं । तस्थौ स्वस्थतयान्वितः ॥ ३६ ॥ महा-
नेम्यभिधः सत्य—नेमिसुदृढनेमिनौ ॥ सुनेमिर्नेमिनाथोऽर्हन् । मेघो महीजयो जयः ॥ ३७ ॥
जयसेनस्तथा तेजः—सेनो जयपराक्रमी ॥ कुमारा अभवन्नेते । समुद्रविजयांतिके ॥ ३८ ॥ पंच-
विंशतिलक्षैश्च । रथैरन्येऽपि पार्थिवाः ॥ समुद्रविजयस्यासन् । भृत्यवत्पार्श्वरक्षकाः ॥ ३९ ॥ वाम-
पार्श्वं समाश्रित्य । बलभद्रस्य नंदनाः ॥ युधिष्ठिरादयः सर्वे । पांडवा अपि चोत्कटाः ॥ ४० ॥ नि
षधोल्मुकशंखाख्या । धरणः सत्यकिः पुनः ॥ श्रीध्वजश्चैव जंगालो । देवानंदश्च शांतनुः ॥ ४१ ॥
आनंदः शतधन्वा च । दशरथस्तु विप्रथः ॥ अश्वपृथुर्महाधनु—र्दृढधन्वातिवीर्यकौ ॥ ४२ ॥ देवा
नंदननामा च । देवानंदविधायकः ॥ लक्षैश्च पंचविंशत्या । स्यंदनैः संयुता अमी ॥ ४३ ॥ पृष्ठ-
स्थाः पांडवानां च । जाता रक्षाविधायकाः ॥ तेषामपि तथा जाता । एते चंद्रयशाः पुनः ॥ ४४ ॥

क—म्मिनकौ च बलाधिपाः ॥ चक्रव्यूहं प्रचक्रुस्ते—ऽर्धचक्रिवाक्ययोगतः ॥ २१ ॥ चक्रव्यूहे सहस्रारे । तत्रैकैको नृपः स्थितः ॥ प्रत्येकन्भृतां तेषा—मेकं शतं सुहस्तिनां ॥ २२ ॥ द्वे सहस्रे रथानां च । वाजिपंचसहस्रकं ॥ पत्तीनां प्राज्यशक्तीनां । सहस्राणि च षोमश ॥ २३ ॥ परिधौ च प्रतिराज्ञां । षट्सहस्री सपादिका ॥ साग्रा पंचसहस्री च । स्थितो मध्येऽर्धचक्रिराट् ॥ २४ ॥ गांधारसैंधवानीकं । जरासंधस्य पृष्टतः ॥ धृतराष्ट्रतनूजानां । शतं तद्दक्षणेऽनवत् ॥ २५ ॥ मध्ये क्ष्मापास्तथा वामे । पुरश्च गणनायकाः ॥ शकटाश्वाः पंचपंचाश—त्संधौ संधौ नृपांतिके ॥ २६ ॥ अंतरे चांतरे गुल्मं । गुल्मानामंतरे गणाः ॥ तस्थुर्व्यूहाद्बहिर्नृपा । विविधव्यूहसंश्रिताः ॥ २७ ॥

अथो मगधदेशेश—सत्यप्रतिज्ञयान्वितं ॥ नृयःसंग्रामकौशल्यं । दधंतं कोशलाधिपं ॥२८॥ हिरण्यनाभनृपं तं । चक्रव्यूहेऽत्र दुर्जये ॥ अस्थापयच्च सेनानी—तया चास्तमितो रविः ॥ २९ ॥ युग्मं ॥ चक्रव्यूहरिपून्नतं । रजन्यां यादवा अपि ॥ चक्रिरे गरुडव्यूहं । दुर्जेयमरिपार्थिवैः ॥३०॥ तस्य व्यूहस्य वक्रेऽस्थुः । कुमारा अर्धकोटयः ॥ तन्मस्तके च गोविंद—बलदेवौ सविक्रमौ ॥३१॥ अक्रूरः सारणः पयः । कुमुदः कुमुदाननः ॥ जयो जरत्कुमारोऽपि । सुमुखो दृढमुष्टिकः ॥ ३२ ॥

गु— द्वारिकायां समेऽपि ते ॥ ९ ॥ यस्माद्बिभ्यंति सर्वेऽपि । घातितो येन सोऽप्यहिः ॥ तवाभि-
मुखमायातः । स एव केशवो बली ॥ १० ॥ जातेष्वेतेषु चिह्नेषु । रणारंभो न युज्यते ॥ व्यावृत्ते
त्वयि तत्कृत्याव । स्वयं सोऽपि गमिष्यति ॥ ११ ॥ इति श्रुत्वा वचस्तस्य । धीसखस्य भयंकरं ॥
भृकुटीभैरवो भूत्वा । जरासंधो जगाद तं ॥ १२ ॥ रे दुष्टास्ति त्वया जग्धा । लंचा चापल्यताकरी
॥ तत एव त्वमस्माकं । भेदखेदकरोऽभवः ॥ १३ ॥ वराका हरिणाः प्राज्या । मिलंतु पुरतो हरेः
॥ तेषां स्यात्समुदायेन । तेजः क्षणिकमेव च ॥ १४ ॥ पश्यतस्तव गोपाना—मेतेषां सकलं बलं
॥ भस्मसाद्यदि कुर्वेऽहं । तर्ह्येव मे पराक्रमः ॥ १५ ॥ तदा तं कुलमंत्र्यूचे । डिंभगयो डिंभकोपमः
॥ स्वामिन्नत्र समागत्य । त्यज्यतेऽथ रणः कथं ॥ १६ ॥ जये श्रीश्च मृतौ स्वर्गो । द्वयापि रणक-
र्मणि ॥ वीराणां शुभमेव स्या—त्तत्र भीश्रियते कथं ॥ १७ ॥ घनोदधिमिवाभेद्यं । चक्रव्यूहं
विधाय च ॥ जेष्यामः सकलं सैन्यं । गोपालपक्षकारिणां ॥ १८ ॥ डिंभगयवचनं श्रुत्वा । जरासं-
धस्तुतोष च ॥ प्रायशो हि जराजीर्णो । डिंभवाक्येन तुष्यते ॥ १९ ॥ आदिदेश तदा राजा ।
। तत्र सैन्याधिनायकान् ॥ चक्रव्यूहविधानाय । समाधानाय चेतसः ॥ २० ॥ मंत्रिणो हंसकाख्या

तैने तत्सुतावेतौ । पुरुषोत्तमसात्वतौ ॥ दत्ता द्वारवती वस्तुं । ययो वैश्रमणेन च ॥ ९८ ॥ तस्य कृष्णस्य पुत्रौ द्वौ । प्रद्युम्नसांबकाभिधौ ॥ विद्यापराक्रमैस्तौ तु । मुकुंदादधिकाविव ॥ ९९ ॥ योद्धारः पांडवाः पंच । गणयंति न कोटिशः ॥ बलिनोऽपि महाशत्रून् । युद्धे पंचानना इव ॥१००॥ एकोऽप्यनेकतां बिभ्र—न्नेमिनाथोऽस्ति तत्र यः ॥ एकछत्रां महीं कर्तुं । स समर्थः स्वलीलया ॥ ॥ १ ॥ तव सैन्ये धुरीणौ यौ । शिशुपालाख्यरुक्मिणौ ॥ रुक्मिण्या अपहारे त—द्बलं ज्ञातं समैरपि ॥ २ ॥ कुरुदेशसमुद्भूतो । दुर्योधनो महीपतिः ॥ गांधारः शकुनिक्ष्मापो । गण्येते न भटेषु तौ ॥ ३ ॥ अंगदेशाधिपः कर्णः । प्राज्ये तस्य बले स तु ॥ घरट्टस्येव गोधूम—धोरणीव भविष्यति ॥ ४ ॥ तत्रास्ति नेमिनाथो यः । स त्वजेयः सुरैरपि ॥ कृष्णोऽपि बलभद्रोऽपि । वर्तेते दुर्धराविमौ ॥ ५ ॥ अथात्र संगरे नाथ । तवैव केवलं बलं ॥ अपरेषां न विश्वास—स्त्वया ज्ञेयो महत्तमः ॥ ६ ॥ चतुःषष्टिसुपर्वेंद्रा । नमंति यत्क्रमांबुजं ॥ नेमिनाथः स केनापि । जेयो न जायते मनाक् ॥ ७ ॥ दैवं पराङ्मुखं ताव—कीनमस्ति विभोऽधुना ॥ नो चेत्तदा कथं कालो । देव्यापि निहतश्छलात ॥ ८ ॥ त्वां प्रमाणमकुर्वाणा । बलिष्ठा अपि यादवाः ॥ मथुरायाः प्रणश्या·

संति । नृरिविद्याधरा नगे ॥ ८६ ॥ जरासंधो जरत्संधि—रिवोद्वेद्योऽस्ति शार्ङ्गिणा ॥ वैताढ्यपर्व तात्तेना—कारय त्वं द्रुतं च तान् ॥ ८७ ॥ श्रुत्वा तदुक्तमाहेशः । कस्तत्र प्रेषयिष्यते ॥ ते प्राहु र्वर्ततेऽस्मासु । सेनानीर्वसुदेवकः ॥ ८८ ॥ प्रद्युम्नसांबसंयुक्ता । एते केनापि नो जिताः ॥ प्रेषणे योग्यता तस्मा—देतेषामेव वर्तते ॥ ८९ ॥ समुद्रविजयो लात्वा—ज्ञां विष्णुवसुदेवयोः ॥ प्रद्युम्नं च तदा प्रैषीत । ससांबं खेचरैः सह ॥ ९० ॥ तदास्त्रवारिणी दत्तौ—षधी सुधीरताकरी ॥ देवैर्व ठा जनुर्मात्रे । नेमिनानकदुंदुभेः ॥ ९१ ॥

इतो नृपं जरासंधं । धीसखैरपरैः सह ॥ मंत्री विज्ञापयामास । हंसकः परिपक्वधीः ॥ ९२ ॥ कंसेन जनितं कार्य—मविचार्य प्रज्ञो यदि ॥ द्रुतमेव फलं तर्हि । प्राप्तं जीवितनाशनात ॥ ९३ ॥ ततस्त्वमप्यनालोच्य । माकार्षीः कृत्यमंजसा ॥ माज्ञासीश्च चमूत्कर्षा—त्सामान्यममुमच्युतं ॥ ९४ ॥ सामान्यमपि दक्षेण । ज्ञात्वा शत्रुं बलाधिकं ॥ संग्रामः क्रियते यर्हि । शंकितो विजयस्तदा ॥ ९५ ॥ एतौ तु देवकीसूनु—रामौ प्रादुर्भवन्नुज्ञौ ॥ स्तः समस्तप्रकारेण । सुकृतादधुनाधिकौ ॥ ९६ ॥ सामर्थ्यं वसुदेवस्य । रोहिण्याश्च स्वयंवरे ॥ त्वयका ददृशे नाथा—न्यराजम्लानिताप्रदं ॥ ९७ ॥ व

सारथिनेरितः ॥ तार्क्ष्यचिह्नं रथं सार—मारुह्य यादवैर्युतः ॥ ७५ ॥ निमित्तैः शकुनैर्नंद्यै—रागद्भजयमंगलैः ॥ आशां पूर्वोत्तरां कृष्ण—श्चचाल विजिगीषया ॥ ७६ ॥ युग्मं ॥

योजनैः पंचचत्वारिं—शताच्च नगरान्निजात् ॥ अतिक्रम्य भुवं सीत—पल्लीग्रामेऽच्युतः स्थितः ॥ ७७ ॥ जरासंधबलादर्वाक् । चतुर्भिर्योजनैर्हरिः ॥ तस्थिवान् स्थापयित्वा च । निःशेषामपि वाहिनीं ॥ ७८ ॥ तदा तत्र समायाता । विद्याधरा महौजसः ॥ समुद्रविजयं क्षोणी—नाथं ते तु बभाषिरे ॥ ७९ ॥ महीपाल तव भ्रातु—र्वसुदेवस्य सश्रियः ॥ गुणाकृष्टाः समायाता । वयमत्र दिदृक्षया ॥ ८० ॥ नेमिनाथः कुले यस्य । नाथनाथः समर्थतां । दधानो जगतां रक्षा—विधौ त्वं च पितास्य तु ॥ ८१ ॥ वर्तेते रामगोविंदौ । क्रमाक्रांतभुवस्तलौ ॥ तव सैन्ये महायोधौ । लीलया कोटियोधिनौ ॥ ८२ ॥ न तत्र क्षोभना चिंता । जरासंधेशितुर्बलात ॥ सिंहपुत्रैः करेणूनां । मत्तानां संगमादिव ॥८३॥ तथापि सन्निधाने ते । प्रसंगतः समागतान् ॥ अस्मान् स्वकीयसामंत—स्थानके त्वं विचिंतय ॥ ८४ ॥ समुद्रविजयेशेन । भूयादिद्धमितीरितं ॥ तदा विद्याधराः प्रोचु—र्जाताः स्मः सेवकास्तव ॥ ८५ ॥ तेषां मुख्यो जगादाथ । समुद्रविजयंप्रति ॥ अस्माकं स्वामिनः

॥ देवानंदश्च नंदाख्य—स्तथा मदनपीठकौ ॥ ६३ ॥ श्रीध्वजनंदनौ ख्यातौ । विप्रथः शांतनुस्तथा
॥ पृथुः शतधनुः ख्यातो । नरदेवो महाधनः ॥ ६४ ॥ कृष्णस्यापि सुताः सर्वे । तत्रागता जयार्थि-
नः ॥ तेषु मुख्या इमे ज्ञेया । नामतो भविकैर्जनैः ॥ ६५ ॥ भानुः सुभानुकश्चापि । महाभानुस्त-
था खलु ॥ बृहध्ध्वजोऽग्निशिखाख्यो । धृष्णश्च संजयो जयी ॥ ६६ ॥ अकंपनाभिधो धीरो । म
हासेनो गभीरकः ॥ उदधिर्गौतमश्चापि । धनुर्भानुः प्रसेनजित् ॥ ६७ ॥ सूर्याख्यश्चंद्रवर्माख्य—
स्तथैव देवदत्तकः ॥ देवसुंदरदत्ताख्यौ । भरतः शंखसंज्ञकः ॥ ६८ ॥ प्रद्युम्नसांबमुख्याश्चा—परेऽ-
पि प्रौढविक्रमाः ॥ विष्णोः सहस्रशः पुत्राः । समेतास्तत्र संगरे ॥ ६९ ॥ उग्रसेननृपस्तस्य । पु-
त्रा गणधरो धरः ॥ शाक्तिको दुर्धराख्याक । आगतश्चंद्रसागरः ॥ ७० ॥ समुद्रविजयाधीश—पितृ-
व्यस्य तथांगजाः ॥ विष्णुमित्रो महासेनः । सुमित्रो दानमित्रकः ॥ ७१ ॥ महसेननृपस्यापि । सु-
षेणस्तनयस्तथा ॥ हृदिको विप्रमित्रश्च । चंडभानुः सुमित्रकः ॥ ७२ ॥ कृतवर्मदृढवर्म—सुवर्मनंद-
ना इमे ॥ सत्यकेतुः सुनंदोऽथ—गंधस्तत्तनयोऽपि च ॥ ७३ ॥ दशानां च दशार्हाणां । रामगो
विंदयोस्तथा ॥ मातृस्वसृपितृस्वसृ—पुत्रा आगुरनेकशः ॥ ७४ ॥ दिने क्रोष्टकिना प्रोक्ते । दारु-

या ते बलगर्विताः ॥ ५० ॥ विजयसेनया जाताः । क्रूरोऽक्रूरोऽपरोऽपि च ॥ ज्वलनाख्यो महाशौर्यः । श्यामः स्तनंधयावुभौ ॥ ५२ ॥ गंधर्वसेनया पत्न्या । प्रसूतास्तनयास्त्विमे ॥ वेगाख्यश्च महावेगो । महेंद्रोऽमितशक्तिकः ॥ ५३ ॥ सुनीलयशसा सूतौ । सुतौ द्वौ च समागतौ ॥ नामतो नारदश्चैको—ऽपरोऽपि मरुदेवकः ॥ ५४ ॥ मित्रश्रियाः सुमित्रश्च । कांपिल्लः कपिलः पुनः ॥ पयोवत्यास्तनूजौ द्वौ । पयश्च कुमुदाह्वयः ॥ ५५ ॥ अश्वसेनोऽश्वसेनोह्वः । पुंड्रांगजश्च पुंड्रकः ॥ रत्नगर्भो ज्वलद्बाहू । रत्नवत्याश्च बाहुभृत् ॥ ५६ ॥ सोमश्रियः सुतौ चंद्र—कांतशशिप्रभावुभौ ॥ वेगवत्या इमौ पुत्रौ । वेगवान् वायुवेगकः ॥ ५७ ॥ सुता मदनवेगाया । अनाधृष्णिमुखास्त्रयः ॥ दृढमुष्टिर्दृढमुष्टि—र्हिममुष्टिररिष्टजित् ॥ ५८ ॥ बंधुमत्याः सुतौ बंधु—क्षेपाख्यसिंहसेनकौ ॥ अनंगसुंदरीसुतः । शिलायुधाभिधः सुतः ॥ ५९ ॥ प्रभावत्याः सुतावेतौ । गांधारपिंगलाह्वयौ ॥ जरादेव्याश्च वार्धक्य—जराकुमारनंदनौ ॥ ६० ॥ सुमुखः सुमुखो विष्णु—देव्याश्च दुर्मुखाभिधः ॥ रोहिण्या रौहिणेयाख्यो । रामो विप्ररथः पुनः ॥ ६१ ॥ बालचंद्रासुतौ वज्र—दंष्ट्रामितप्रभौ तथा ॥ रामस्य बहवः पुत्राः । कथ्यंते तेषु मुख्यकाः ॥ ६२ ॥ उल्काकांतो महाकांतः । श्रीमद्दशरथाह्वयः

च शिवनंदकः ॥ ३ए ॥
विष्वकसेनो महावीर्य । इत्याद्या वरसूनवः ॥ समुद्रविजयेशस्या—ययुः शौर्यसमन्विताः ॥
॥ ४० ॥ अद्योन्योऽप्यनुजस्तस्या—ययौ युद्धचिकीर्षया ॥ वर्तते तनयास्तस्य । मेऽष्टौ सुष्टुपराक्र·
माः ॥ ४१ ॥ अंजोधिरुदधिरेव—मंभोनिधिर्महोदधिः ॥ जलनिधिर्वामदेवो । दृढवातो दृढव्रतः ॥
॥ ४२ ॥ हैमवानागतस्तत्र । तस्य पुत्रा अमी त्रयः ॥ विद्युत्प्रभो विद्युत्प्रभो । माल्यवान् गंधमाद
नः ॥ ४३ ॥ ऊर्मिमद्वसुमद्वीर—पातालपवनैः सुतैः ॥ तत्पुत्रैरपि शौर्याढ्यैः । समेतः स्तिमिताभि·
धः ॥ ४४ ॥ सागरः खेटकाख्याको । निष्कंपोऽकंपनाभिधः ॥ इत्यादिसूनुभिः साकं । समागात्स·
मरेच्छया ॥ ४५ ॥ अचलस्तत्सुता श्वेते । मनोज्ञमलयाभिधौ ॥ सह्यो गिरिश्च शैलाख्यो । नगो
बलो बलान्वितः ॥ ४६ ॥ धरणः पंचभिः पुत्रै—रागात्काकटिकः सुतः ॥ धनंजयो विश्वरूपो । वि·
श्वाधारश्च कार्मुकी ॥ ४७ ॥ पूरणेन चतुर्भिः स्वां—गजन्मभिः समागतं ॥ दुःपूरो दुर्मुखाख्याको।
दर्दुरदुर्दशाविति ॥ ४८ ॥ अभिचंडः सुतैः षड्भि—रागाचंद्रशशांककौ ॥ चंद्राभशशिनौ सोमा—
मृतप्रभामृतप्रभौ ॥ ४ए ॥ आययौ वसुदेवोऽपि । बहवस्तत्सुता अपि ॥ उच्यंते नामधेयेन । म·

॥ २७ ॥ मौलेस्तदापतन्मौलि—र्हारश्च कंठपीठतः ॥ कुंभले पतिते तूर्णं । स्खलितास्य गतिस्तथा
॥ २८ ॥ क्षुतमग्रेऽभवत्तस्य । विण्मूत्रमकरोत्करी ॥ पवनः प्रतिकूलोऽभूत । पस्पंदे वामलोचनं ॥
॥ २९ ॥ ब्भ्रमन् गगने गृध्रा । मांसभक्षणलोलुपाः ॥ इत्यादयोऽपशकुना । बभूवुस्तत्प्रयाणके
॥ ३० ॥ तथापि न जरासंधो । युद्धकृत्यान्न्यवर्तत ॥ पूरणार्थं प्रतिज्ञायाः । सुनिबद्धैकमान सः ॥
॥ ३१ ॥ मिलित्वा कटकेऽशेषे । चलिते पुरतः पथि ॥ तुमुलस्तादृशो जातो। येन न श्रूयते श्रुतौ
॥ ३२ ॥ कंपयन् वसुधापीठ—मारुह्य गंधहस्तिनं ॥ चचाल पश्चिमामाशां । जरासंधः क्रुधारुणः
॥ ३३ ॥ नारदश्चलितं ज्ञात्वा । तं प्रतिवासुदेवकं ॥ चरैर्निरूपयामास । वासुदेवाय धीमते ॥
॥ ३४ ॥ मार्तंडेनेव कृष्णेन । तदाखंडप्रतापिना ॥ तेनापि ताडिता भंभा । रणारंभविधायिनि ॥
॥ ३५ ॥ मिमिलुस्तन्निनादेन । यादवोऽन्येऽपि पार्थिवाः ॥ उदये हि वचो लोप्यं । न भवेत्कठि-
नैरपि ॥ ३६ ॥ समुद्रविजयो राजा । वृद्धोऽपि च पराक्रमी ॥ अमीभिस्तनयैः साकं । तत्रादितः
समागतः ॥ ३७ ॥ ज्येष्ठपुत्रो महानेमिः । सत्यनेमिर्द्वितीयकः ॥ तृतीयो रथनेमिश्चा-रिष्टनेमिर्जि-
नाधिपः ॥ ३८ ॥ जयसेनो महासेन—स्तेजः सेनो जयः पुनः ॥ चित्रको गौतमो मेघ—स्तथा

दंशचटत्कार । उच्चितस्तच्छिरस्थलं ॥ १४ ॥ मद्भर्तृमारकौ गोपौ । वैधव्यप्रविधायिनौ ॥ जीवतोऽद्या-
प्यहो राम—केशवौ यादवाधिपौ ॥ १५ ॥ अथाहं तर्हि जीवामि । यद्येतौ निजपाणिना ॥ निः-
शेषयदुभिः सार्धं । प्रक्षेपामि हुताशने ॥ १६ ॥ रुदंतीति प्रतिज्ञाय । विकीर्णमौलिकुंतला ॥ पुर-
तो जनकस्यासौ । वर्णिभिर्गदितं जगौ ॥ १७ ॥ अद्यापि जीवतस्तात । पतिघातकरावुभौ ॥ तौ
च गोपांगजन्मानौ । द्वारवत्याः पुरो नृपौ ॥ १८ ॥ निशम्येति सुतावाक्यं । जरासंधः क्रुधारुणः ॥
तामाश्वास्य जगादोच्चै—र्मारोदीः पुत्रि सर्वथा ॥ १९ ॥ तव भर्तुः प्रवर्तंते । बहवोऽद्यापि पुण्य-
तः ॥ प्रकृष्टतद्गुणाकृष्टाः । स्मारका रोदनार्थिनः ॥ २० ॥ तथा यदि प्रकुर्वेऽह—मविलंबेन पुत्रिके
॥ सत्यसंधो जरासंध—स्तदा ज्ञेयोऽन्यथा न तु ॥ २१ ॥ उदित्वेति प्रयाणाय । सोऽपि भेरीमवा-
दयत् ॥ सर्वतस्तन्निनादेन । मिमेल प्रबलं बलं ॥ २२ ॥ वीरा अपि महाशौर्याः । सहदेवादयोंग-
जाः ॥ षण्मासायुर्धरा देवा । इव चुक्षुभिरे हृदि ॥ २३ ॥ चेदिराजः शिशुपालो । योद्धा हिरण्य-
नामकः ॥ दुर्योधनोऽपरेऽपीशाः । सर्वे मूका इवाभवन् ॥ २४ ॥

इत्याद्य मिलिते सैन्ये । वार्यमाणोऽपि मंत्रिभिः ॥ युयुत्सुः स्वयमेवाशु । जरासंधोऽभवद्यदा

ला: ॥ २ ॥ प्रसिद्धे मगधे देशे । वरं राजगृहं पुरं ॥ जरासंधो नृपस्तत्र । त्रिखंडाधिपतिर्जयी ॥
॥ ३ ॥ तज्जीर्णं नगरं चास्ति । राजधान्यपि भूयसी ॥ तत्र मूल्याधिकप्राप्त्या । विक्रेया रत्नकंबलाः
॥ ४ ॥ विचार्येति ततश्चेलु—र्वणिजस्ते समुत्सुकाः ॥ तत्रागत्य गता भूप—पुत्रीजीवयशागृहे ॥
॥ ५ ॥ इंगितान्मार्गतो म्लान—कांतीन् समवलोक्य तान् ॥ अयाचिष्टार्धमूल्येन । तदा जीवय
शापि तान् ॥ ६ ॥ हाहाकारं तदा कृत्वा । ते सर्वेऽपि समुत्थिताः ॥ मुखतो जगुरस्माक—मभाग्य-
मस्ति सांप्रतं ॥ ७ ॥ पुरीं द्वारवतीं मुक्त्वा । प्रभूतलाभलिप्सया ॥ अत्रागता न सोऽत्रापि । संजा
तः स्वसमीहितः ॥ ८ ॥ चित्तोद्वेगकरं वाक्यं । श्रुत्वा जीवयशाब्रवीत् ॥ पुरी द्वारवती क्वास्ति । क
स्तत्रास्ति महीपतिः ॥ ९ ॥ ते प्रोचुस्त्वं न जानासि । संस्थितात्रातिसौख्यभाक् ॥ भ्रमंति परदे-
शे ये । तत्स्वरूपं विदंति ते ॥ १० ॥ दत्तं जलधिना स्थानं । श्रीदेन सा निवासिता ॥ सुवर्णशा-
लसद्रत्न—कपिशीर्षविराजिता ॥ ११ ॥ सुराष्ट्राभिधदेशेऽस्ति । विख्याता द्वारिका पुरी ॥ तत्रास्ति
वासुदेवाख्यो । देवक्यास्तनयो नृपः ॥ १२ ॥ तस्य कृष्णेतिनामापि । प्रसिद्धं महिमंडले ॥ राम
प्रद्युम्नसांबाद्यैः । पाति तां यादवैर्वृतः ॥ १३ ॥ तेषां वदनतः श्रुत्वा । कृष्णादियादवाभिधं ॥ अहि-

सेवंते । तद् ज्ञेयं पुण्यजं फलं ॥ २१ ॥ पित्रोः प्राज्यतमं सौख्यं । येन पुत्रेण जायते ॥ पुत्रः स एव मातुश्चो—दरे ज्ञारकरोऽपरः ॥ २२ ॥ चिंतितानां पदार्थानां । संप्राप्तिर्जायते जवात् ॥ यतः पुत्रः स पुण्यात्मो—दरे भारकरः परः ॥ २३ ॥ पितृभ्यां भ्रातृभिः पुत्रैः । स्त्रीभिर्मित्रैः समृद्धिभिः ॥ स्वजनैः सेवकाद्यैश्च । प्रद्युम्नः सुखमासवान् ॥ २४ ॥ देवादप्यधिकं तेन । यदाप्तं सुखमद्भुतं ॥ तत्सर्वमपि विज्ञेयं । फलं पुण्यप्रभावजं ॥ २५ ॥ पुण्यान्निरंतरायं । सौख्यं सर्वं विजयसंप्राप्तिः ॥ ज्ञात्वेति धर्मकर्म—श्रद्धा भक्त्या जनाः सदा भवत ॥ २६ ॥ इति पंमितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंमितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे श्रीप्रद्युम्नसांबजन्मविवाहपुण्यफलवर्णनो नाम द्वादशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ त्रयोदशः सर्गः प्रारभ्यते ॥

यवनद्वीपतोऽन्येद्यु—स्तत्राययुर्जलार्थिनः ॥ आदाय भूरिभांमानि । नरा व्यापारकारिणः ॥ ॥ १ ॥ वस्तून्यन्यानि विक्रीय । लाभस्तैः समुपार्जितः ॥ नोच्चैर्लाभेछया तत्र । विक्रीता रत्नकंब-

मया त्वत्र स्थिते नैव । ता एकोनशतं हृतं ॥ तद्वाहिता इति श्रुत्वा । सोऽवग्मा दर्शयाननं ॥१०॥
पित्रा निर्वासितः कोपा—दनाहूतोऽपि कैतवात ॥ प्रविश्य द्वारिकामध्ये । कन्यास्त्वयोपयेमिरे ॥
॥ ११ ॥ कूपदर्दुरतुल्यस्त्वं । वर्तसेऽद्यापि बालकः ॥ पुर्यामितस्ततो भ्रांत्वा । पश्य मातृमुखं पुनः ॥
॥ १२ ॥ अहं देशांतरे गत्वा । निजभाग्यपरीक्षया ॥ संग्राममुत्कटं कृत्वा । प्राज्याः पर्यणयं कनीः
॥ १३ ॥ भ्रात्रापमानितः किंचि—न्निःसृत्य रहसि स्वयं ॥ वांछितः स्वजनैरागा—त्कांतासमृद्धिपूरि
तः ॥ १४ ॥ न पुनः स्वाम्यनादेशात् । प्रविष्टश्चौरवत्पुरि ॥ तिरस्कारिवचः श्रुत्वा । जगौ सांबः कृ
तांजलिः ॥ १५ ॥ अज्ञानवशतः प्रोक्तं । यन्मया बाल्यतोऽपि च ॥ पितामहैः समस्तं त—त्क्षंतव्यं
वत्सवत्सलैः ॥ १६ ॥ प्रद्युम्नस्य महाभोगान् । भुंजानस्याथ शर्मणा ॥ रत्या साकं स्मरस्येवा—ऽ
निरुद्धोऽजनि नंदनः ॥ १७ ॥ सांबस्य शतशः पुत्राः । पवित्राशयधारकाः ॥ बभूवू रूपसंपत्त्यौ—
दार्यशौर्यगुणान्विताः ॥ १८ ॥ निजपुत्रेण सांबस्य । पुत्रैः सांबेन संयुतः ॥ वनवापीतडागेषु । प्र
द्युम्नः केलिमाचरत् ॥ १९ ॥ गृहे तिष्ठन्नपि स्वर्गि—तुल्यान् भोगान् भुनक्ति सः ॥ वसंतग्रीष्मव
र्षादि—षडर्तुभिः समुद्भवान् ॥ २० ॥ अखर्ववीर्यवर्या ये । ये च विद्याविशारदाः ॥ ते सर्वे तं च

सगृहे सांबः । समागतोऽस्ति पातकी ॥ सवेगादन्यथाज्ञामां । वीरोहिं जननीवलं ॥ ९८ ॥ तद
श्रद्दधती सापि । तत्र तं वीक्ष्य दुःखदं ॥ क्रुधा जगाद रे केन । समानीतोऽसि दुष्टधीः ॥ ९९ ॥
सत्यभामे त्वयैवाह—मानीतोऽस्मीति सोऽवदत् ॥ प्रत्यक्षं सर्वलोकानां । पुर्यामत्र निवासिनां ॥
॥ ३०० ॥ महोत्सवेन वीवाह—स्त्वयैव कारितो मम ॥ मद्वाक्ये प्रत्ययश्चेन्न । पृच्छ्या नागरास्तदा
॥ १ ॥ नारायणसमक्षं सा । पप्रच्छाकार्य नागरान् ॥ प्रावेशितो मया सांब । उद्वाहितश्च किं ननु
॥ २ ॥ जगुः पौरास्तदास्मासु । पश्यत्स्वादाय हस्तयोः ॥ समानीतस्त्वयैवाय—मुद्वाहितश्च कन्यकाः
॥ ३ ॥ नागरैः कथितं श्रुत्वा । समस्तजनसाक्षिकं ॥ सांबाय प्रददौ विष्णु—रप्येकोनकनीशतं ॥
॥ ४ ॥ कपटी कपटेनाशु । कपटिन्याश्च नंदनः ॥ कन्या उदवहन्न्या । भामा जगाद गरुदं ॥
॥ ५ ॥ संपूर्णीभवनत्वेन । प्रतिज्ञाया मनोभवः ॥ स्वगेहं प्राप्तवांश्चात्र—त्सांबस्य करपीडनात ॥
॥ ६ ॥ रुक्मिणीजांबवत्योश्च । बभूव प्रमदो महान् ॥ मानसे सत्यभामायाः । प्राज्यं दुःखमजायत
॥ ७ ॥ पाणिग्रहणहर्षेण । वसुदेवं पितामहं ॥ नमस्कर्तुं गतः सांबो । ह्युत्तमो विनयी भवेत् ॥८॥
नत्वा पितामहं प्रोचे । युष्माभिर्गुणशालिभिः ॥ चक्रे देशांतरे भ्रामं । भ्रामं कांताविवाहनं ॥९॥

षितो नरः ॥ गत्वा तेन नृपस्योक्तं । कन्या देया सुभानवे ॥ ८३ ॥ नृपेण कथितं यर्हि । सत्य
भामा कनीं मम ॥ गृहीत्वा पंचशाखेन । नयति प्रददाम्यहं ॥ ८४ ॥ जितशत्रुमहीशेन । समा
चारो निरूपितः ॥ आगत्य सत्यभामायै । दूतेन तेन भाषितः ॥ ८५ ॥ तदंगीकृतमर्थिन्या । त
याप्युत्सुकचेतसा ॥ नार्थी हि जनयन् कृत्यं । शुभाशुभं विचारयेत् ॥ ८७ ॥ प्रज्ञप्तिमुक्तवान् सांबो
—ऽहं रूपद्वयधारकः ॥ करणीयस्त्वयावश्यं । तस्या वाक्यविनिर्मित्तये ॥ ८८ ॥ सत्या तत्परिवारश्च ।
कुमारीं मां प्रपश्यतु ॥ लोकश्च द्वारिकावासी । सांबरूपतयैव च ॥ ८९ ॥ प्रज्ञप्तिविद्यया सांब—
वचने विहिते सति ॥ पंचशाखे गृहीत्वा तां । भामा पुर्यां समाययौ ॥ ९१ ॥ सांबमेव प्रपश्यंतो
। हसंतो नागरा जगुः ॥ अहो सुभानुवीवाहे । सांबोऽनया हि नीयते ॥ ९२ ॥ सांबो वामेन ह
स्तेन । सुभानोर्दक्षिणं करं ॥ अधः कृत्वा ययौ सत्य—भामाभुवनमंजसा ॥ ९३ ॥ कन्यानां श
तमेकोनं । सांबोऽपसव्यपाणिना ॥ गृहीत्वा युगपद्वेश्या—नरस्यादात्प्रदक्षिणां ॥ ९४ ॥ एकोनश-
तकन्यानां । कृत्वैवं करपीडनं ॥ गतः सांबो मुदावासे । स्वयं ताभिः समं तदा ॥ ९६ ॥ सुभानु-
रपि तत्राथा—गतो यावद्विभूषितः ॥ सांबेन ताडितस्ताव—ज्जननीपार्श्वमाययौ ॥ ९७॥ मातर्वा-

सः ॥ ७० ॥ ह्यस्तनस्य दिनस्याथ । वार्तां यः संस्मरिष्यति ॥ प्रक्षेपार्थं मुखे तस्य । कीलिका घ-
ट्यते मया ॥ ७१ ॥ इत्युक्ते कुपितो विष्णु—र्जगाद तं प्रयाहि रे ॥ वदनं दर्शनीयं मे । त्वया
नान्यायकारिणा ॥ ७२ ॥ पित्रापमानितः सोऽपि । तत एव विनिर्गतः ॥ उत्तमा मानमीहंते । ते-
षां मानं हि सद्धनं ॥ ७३ ॥ अथ प्रज्ञप्तिविद्यावान् । प्रद्युम्नोऽपि सुभानुकं ॥ प्रोच्चैरपीडयत्सोऽपि ।
भामायै तदभाषत ॥ ७४ ॥ सा जजल्प प्रकोपेन । पापिंस्त्वमपि सांबवत् ॥ न गच्छसि कथं पुर्याः
। सुभानुकं निपीडयन् ॥ ७५ ॥ स प्रोचे कुत्र गच्छामि । साख्यत्कोपात् श्मशानके ॥ श्रुत्वेति स
पुनः प्राह । समागम्यं मया कदा ॥ ७६ ॥ आनयामि यदा सांबं । तदैवेति स निर्ययौ ॥ गतः
श्मशानमेदिन्यां । तत्र सांबोऽप्युपागतः ॥ ७७ ॥ श्मशानपालकौ भूत्वा । तत्र स्थितावुभावपि ॥
दाहशुल्कमगृह्णीतां । मृतकानां पुरीभुवां ॥ ७८ ॥ इतः सुभानवे कन्या—शतमेकोनमग्रहीत ॥
भामाथात्रैककन्यार्थं । प्रेषयामास सेवकं ॥ ८० ॥ प्रज्ञप्तिविद्यया वार्तां । तां ज्ञात्वा मन्मथः सुधीः
॥ विकुर्व्य विपुलं सैन्यं । जितशत्रुनृपोऽभवत् ॥ ८१ ॥ चारुरूपधरां कन्यां । सांबं पुनश्चकार सः
॥ सखीभिः कुर्वती क्रीडां । वीक्षिता सा सुभानुना ॥ ८२ ॥ तेनोक्तं सत्यभामाया—स्तथापि प्रे-

न रूपेण । विक्रीणानावुभौ दधि ॥ विशंतौ द्वारवत्यां तौ । सांबेन प्रविलोकितौ ॥ ५९ ॥ अग्र-
तो यावदाभीरी । दधि विक्रेतुमागता ॥ तावत्सांबोऽवदद्देहि । ममाप्याभीरि गोरसं ॥ ६० ॥ मम
दास्यसि यर्हि त्वं । तत्सर्वमपि गोरसं ॥ ग्रहीष्यामि तव द्रव्यं । दत्वा प्रचुरमंजसा ॥ ६१ ॥ कथ-
यित्वेति सार्थं स । तामादाय ततोऽचलत ॥ गछन्न देवकुलं दृष्ट्वा । प्रविष्टोऽर्चकमर्त्यवत् ॥ ६२ ॥
प्रविश्याभीरिकां तत्रा—हूतवान्न स रिरंसया ॥ सा प्राह देहि मन्मूल्यं । न प्रवेक्ष्यामि सर्वथा ॥६३॥
तयेत्युक्ते स्वहस्तेन । धृत्वा तामाचकर्ष सः ॥ तावत्तत्र समायात । आभीर पृष्ठतो द्रुतं ॥ ६४ ॥
रे पातकिन् दुराचार । परस्त्रीलंपटः शठः ॥ किमाकर्षसि मत्पत्नी—मित्याक्रोशेन ताडितः ॥ ६५ ॥
तावयित्वा निजं रूप—मुभाभ्यां प्रकटीकृतं ॥ पितरं मातरं दृष्ट्वा । मुखमाछाद्य नष्टवान्न ॥ ६६ ॥
दर्शयित्वेति सौम्यत्वं । जांबवत्याः सुतस्य च ॥ तया सहागमद्गेहे । गोविंदो गुप्ततांचितः ॥ ६७ ॥
सभास्थितस्य तातस्य । प्रणामार्थं त्रपावशात् ॥ द्वितीये दिवसेनागा—द्विष्णुराकारयत्तदा ॥ ६८ ॥
अनागछन्नपि ह्रीणा । आनीतः सचिवैर्बलात ॥ आगात्कृपाणिकापाणि—र्घटयन्न कीलिकां तदा ॥
॥ ६९ ॥ नारायणेन दृष्ट्वोक्तं । करोषि किमु कीलिकां ॥ वाचालचपलत्वेन । तातस्यापि जगाद

नारायणनंदनो ॥ ४६ ॥ तदा व्यचिंतयद्रुक्मी । पुत्र्या भाग्यमहो महत ॥ विरुद्धेऽपि शुभं जातं
। यस्याः सौभाग्यभावतः ॥ ४७ ॥ एकं तु तनयो जाम्या । जामातान्यच्च कीर्तिमान् ॥ तुष्यन्निति
गतस्तत्र । दिव्यं नृत्यमिवेक्षितुं ॥ ४८ ॥ आनीय निजगेहे ता—वानर्च महतोऽधिकं ॥ प्रद्युम्नो-
ऽपि तमापृच्छ्या—ययौ द्वारवतीं पुरीं ॥ ४९ ॥ नामयित्वा स्नुषां मातृ—पादयोर्गेहसंस्थितः ॥ भो-
गांस्तया सहाभुंक्त । रूपनिर्जितरंभया ॥ ५० ॥ हैमांगदमहे सांबो । निजघान सुभानुकं ॥ सत्य-
भामासमीपेऽगात् । स रुदन् गद्गदस्वरं ॥ ५१ ॥ पूरिता पुत्रदुःखेन । सापि गत्वाच्युतांतिके ॥ उ-
पालंभान् ददौ प्राज्यान् । जांबवत्यंगजन्मनः ॥ ५२ ॥ कृष्णो जांबवतीं प्रोचे । क्लेशकारी सुतस्त-
व ॥ तं निवारय देव्येव—मन्यथा नास्य मंगलं ॥ ५३ ॥ सा जगादेदृशः सांबो । विदितोऽस्ति
न दुर्नयी ॥ जिष्णुर्जजल्प सिंही स्वं । पुत्रं सौम्यं विचारयेत् ॥ ५५ ॥ किंतु जानंति मातंगा ।
एव तस्य बलाबलं ॥ तथा त्वमपि पुत्रस्य । स्वरूपं वेत्सि नो मनाक् ॥ ५६ ॥ प्रतीतिर्मम वाक्य-
स्य । न भवेद्यदि ते खलु ॥ प्रत्यक्षेण प्रमाणेन । स्वरूपं दर्शयामि तत् ॥ ५७ ॥ कथयित्वेति
कृष्णेना—भीररूपं विनिर्मितं ॥ आभीरी जनिता जांब—वती रतिविधायिनी ॥ ५८ ॥ कृतेन ते-

लपौढकोपतः ॥ लात्वैतां तत्र गंतव्यं । यत्र पश्यामि नो युवां ॥ ३५ ॥ प्रमाणमिति चोक्त्वा तौ । निर्गतौ नगराद्बहिः ॥ वैदर्भीं तावथाख्यातां । राजानं भज कंचन ॥ ३६ ॥ चांडालस्य कुले प्राय—श्चर्मरज्ज्वादिविक्रयः ॥ तत्कुले राजकन्यायाः । न ते रतिर्भविष्यति ॥ ३७ ॥ सा प्राह कर्मणा योऽभूत । स एवास्तु पतिर्मम ॥ भवंतावपि जानीतो । दुर्लंघ्या कर्मपद्धतिः ॥ ३८ ॥ वदंत्या इति चित्तस्थौ—दार्यं तस्या विलोक्य तौ ॥ प्रासादरचनां कृत्वा । भूपालाविव तस्थतुः ॥ ३९ ॥

समादायाथ वैदर्भीं । ततस्तयोः प्रयातयोः ॥ पश्चात्तापं चकाराशु । दृढचित्तोऽपि रुक्मिराट् ॥ ४० ॥ पापिष्टेन मया हाहा । कृतं कर्माविचारितं ॥ सा दातव्योचितस्थाने । हीनकुले समर्पिता ॥४१॥ रुक्मिण्या प्रार्थ्यमानापि । तत्तनूजाय नार्पिता ॥ मनाक्कालविलंबोऽपि । मयाधमेन नो कृतः ॥ ४२ ॥ अथवा दूषणं मे ना—नुतापप्रविधायिनः ॥ चांडालादपि चांडालः । कोपस्तस्यैव दूषणं ॥ ४३ ॥ अथाहं कुत्र गछामि । लप्स्ये ख्यातिं जने कथं ॥ विलपन्निति शुश्राव । रुक्मी वादित्रनिःस्वनं ॥ ४४ ॥ तं श्रुत्वा मंत्रिणः प्रोचे । कुतोऽयमागतो ध्वनिः ॥ चरैर्ज्ञातसमाचारा—स्ते प्राहुर्मुदिता इति ॥ ४५ ॥ चांमालाविति कृत्वेश । त्वया समर्पिता ययोः ॥ अभूतां सांबप्रद्युम्नौ । तौ

क् वदामि किं चाहं । सोऽवक्कद्राक्परिणीयतां ॥ इत्युक्ते साक्षिणि साग्नौ । द्रागुररीचकार तं ॥२४॥
रंत्वा ततस्तया साकं । निशाशेषे जगाद सः ॥ यामि सांबसमीपेऽहं । माजैषीस्त्वं कुतश्चन ॥२५॥
मया कृतास्ति ते देहे । रक्षा रक्षःसहस्रजित् ॥ मावादीस्त्वं पितृभ्यां च । पृच्छ्यमानापि सर्वथा ॥
॥ २६ ॥ इत्युक्त्वा स ततः स्थाना—द्गतः स्वीकृत्य सापि तत् ॥ श्रांता भोगेन सुष्वाप । प्रातरप्यु-
त्थिता न च ॥ २७ ॥ तावत्तत्र समायाता । धात्री तत्परिचारिका ॥ कंकणाद्यैर्विवाहस्य । चिह्नानि
वीक्ष्य विस्मिता ॥ २८ ॥ जल्पितापि न साजल्प—त्ततो गता त्वरयद्रुता ॥ सा रुक्मिराजमातृभ्यां
। तस्या लक्षणमब्रवीत् ॥ २९ ॥ श्रुत्वेति पितरौ तत्र । समागतौ विलोक्य च ॥ अपृच्छतां च तौ
प्रीत्या । न तु सोत्तरमार्पयत ॥ ३० ॥ रुक्मी च चिंतयामासा—हो मत्कुलकलंकिनी ॥ एषा मया
न दत्तापि । रेमे केनापि पापिनी ॥ ३१ ॥ ममैव मूढता जाता । पूर्वं चांडालपुत्रयोः ॥ यदेषा न
मया दत्ता । रक्षिता दुःखहेतवे ॥ ३२ ॥ अद्यापि न गतं किंचि—द्यावद्वार्ता न केनचित् ॥ ज्ञा-
तास्ति तावदेताभ्यां । चांमालाभ्यां ददामि तां ॥ ३३ ॥ इति चिंतयता तेन । तौ समाहूय वेत्रि-
णा ॥ ददाम्येनां स्ववाचाद्य । प्रदत्तोक्त्वेति सा तयोः ॥ ३४ ॥ तां दत्वा प्राह तौ रुक्मि—नृपा-

बभूव तेन सः ॥ १२ ॥ सर्वत्र नगरे ख्याति—स्तदा तयोरजायत ॥ प्रजजल्प महीशोऽप्य—त्रीष्टं मार्गयथो युवां ॥ १३ ॥ तौ प्राहतुर्न कोऽप्यस्ति । वांछितार्थप्रदायकः ॥ नृपतिः प्राह दास्येऽहं । मावादिष्टामिदं युवां ॥ १४ ॥ हास्येन प्राहतुस्तौ त्वं । यदि दास्यति कामितं ॥ तदावयोर्न काप्यस्ति । रंधनप्रविधायिनी ॥ १५ ॥ पुत्रीं तदर्थमात्मीयां । प्रसादेन समर्पय ॥ विज्ञास्यते तदावाभ्यां । दाता त्वत्तः परोऽस्ति न ॥ १६ ॥ युग्मं ॥ श्रुत्वैतच्च क्रुधा रुक्मी । तौ निर्वासितवान् पुरः ॥ प्रद्युम्नेन तदा प्रोचे । सांबस्य सोदरस्य तु ॥ १७ ॥ आवाभ्यां यदि संग्रामः । क्रियतेऽनेन सांप्रतं ॥ जननी रुक्मिणी गेहे । संस्थिता दुःखमाप्स्यति ॥ १८ ॥ ततो यथा तथा तस्य । सुतायाः पाणिपीडनं ॥ स्ववाचः पालनार्थं च । कृत्वा मया तु गम्यते ॥ १९ ॥ परस्परमिति भ्रात्रो—र्विचारप्रविधायिनोः ॥ विमला रजनी जाता । जैवातृकोपशोभिता ॥ २० ॥ प्रद्युम्नो विद्यया ताव—द्गत्वा रुक्मिसुतालये ॥ सुप्तां जागरयामास । प्रीत्या तामनुरागिणीं ॥ २१ ॥ आकर्ण्य सहसा वाक्य—मुद्भिता सा चमत्कृता ॥ सोचे कोऽसि तदा लेखं । रुक्मिण्याः स च दत्तवान् ॥ २२ ॥ तस्यां च वाचयत्यां तं । प्रद्युम्नस्याभिधागता ॥ यस्यात्र लिखितं नाम । स एवाहं शुभानने ॥ २३ ॥ साव-

करपीडनं ॥ १ ॥ उक्त्वेति सोऽथ सांबेन । साकं भोजकटं ययौ ॥ तत्र ताभ्यां कृतं रूपं । चांडा
लयोः सुगायतोः ॥ २ ॥ तयोर्गानकलोद्भूता । वार्ता नृपेन संश्रुता ॥ तेनाप्याकार्य तद्गानं । श्रु·
तं कर्णप्रमोदकं ॥ ३ ॥ तौ पप्रछ महीपालो । दापयित्वा घनं धनं ॥ कुतो युवां समायाता—वी·
दृक्कलाविलासिनौ ॥ ४ ॥ तावूचतुर्महीभर्त—रावां द्वारवतीपुरे ॥ समेतौ स्वर्गलोकाच्च । कुतूह·
लानि वीक्षितुं ॥ ५ ॥ मुकुंदस्य निवासाय । वासिता धनदेन सा ॥ करोति तत्र साम्राज्यं । ना·
रायणो नरेश्वरः ॥ ६ ॥ तातोत्संगस्थिता कन्या । तदा वैदर्भ्यभाषत ॥ प्रद्युम्नं नंदनं विष्णो—र्वि·
जानीथो युवां नरौ ॥ ७ ॥ विकस्वरेण वक्रेण । तदा सांबोऽब्रवीत्तमां ॥ औदार्यवर्यचातुर्यं । प्रद्यु
म्नं न हि वेत्ति कः ॥ ८ ॥ समाकर्ण्य वचस्तस्य । वैदर्भी रागविह्वला ॥ बभूव तस्य भर्तृत्व—क
रणैकमनोरथा ॥ ९ ॥ जगदुः सेवकास्ताव—न्नाथ हस्ती मदोत्कटः ॥ बहिस्तात्स्तंभमुन्मूल्य । वि·
निर्गतोंकुशावशः ॥ ९ ॥ निशम्यैतद्वचो नृपः । पटहं पर्यघोषयत ॥ स्वायत्तं यः करोत्येनं । ददा·
मि तस्य वांछितं ॥ १० ॥ समाकर्ण्येत्यधावंत । प्रवरा नागरा नराः ॥ न केनापि वशीकर्तुं । सम
र्थः सोऽभवद्गजः ॥ ११ ॥ ततश्चांडालवेषाभ्यां । ताभ्यामेत्य तदंतिके ॥ गीतगानं समारेभे । वशी·

मानीय । स्थापितान्यनिकेतने ॥ जातायां लग्नवेलायां । वरस्तोरणमागतः ॥ ९० ॥ तस्य सुवा-
सिनीस्त्रीभिः । कृतो मांगलिको विधिः ॥ करग्रहणकाले च । साभवद् वृद्धरूपभाक् ॥ ९१ ॥ च-
पेटया हतस्तेन । रूपेण भयकारिणा ॥ पपात पृथिवीपीठे । सुभानुर्भानुसोदरः ॥ ९२ ॥ भामा-
या येऽभवन् भृत्याः । पातयित्वा च तानपि ॥ हसन् समागतः सांबः । पुरुषोत्तमपर्षदि ॥ ९३ ॥
अन्यदा प्रेषितो दूतो । रुक्मिण्या बांधवांतिके ॥ याचिता तत्पुत्री च । प्रद्युम्नस्य कृते तया ॥९४॥
गत्वा तत्र नमस्कृत्य । रुक्मिणं धरणीधवं ॥ रुक्मिण्या कथितस्तेन । समाचारो निरूपितः ॥९५॥
स तं श्रुत्वा प्रकोपेन । प्रजजल्पाविचारितं ॥ यत्पुरा समभूत्कृत्यं । मम संजातमेव तत् ॥ ९६ ॥
अथ चांडालपुत्राय । मया पुत्री प्रदीयते ॥ न पुनः पापचित्तस्य । नारायणस्य सूनवे ॥ ९७ ॥
वैदर्भीप्रार्थनां कृत्वा । गत्वा भोजकटे नरः ॥ रुक्मिणीं कथयामासो—दंतं रुक्मिनिवेदितं ॥९८॥
रुक्मिण्यापि च वृत्तांतः । कथितोऽयं हि दुःखतः ॥ प्रद्युम्नस्याग्रतो दूत—प्रोक्तो रुक्मिनिवेदितः ॥
॥ ९९ ॥ प्रद्युम्नोऽपि निशम्यैनं । वृत्तांतं जननीं जगौ ॥ मातस्त्वमपि चित्ते ते । चिंतां मा कुरु
सर्वथा ॥ २०० ॥ मारणायोचितो नासौ । मातुलत्वेन सर्वथा ॥ अस्योचितं विधायैव । करिष्ये

कोऽयं प्रियोऽभवत ॥ ७७ ॥ द्वेधापि शाखिनां गायां । पौरलोका विलोकितुं ॥ गता नृपतिभिः
साकं । कांता आदाय केलये ॥ ७९ ॥ तत्र काश्चन गायंति । नार्यो नृत्यंति काश्चन ॥ निशम्य
मधुरं गीतं । सुभानुर्विह्वलोऽभवत् ॥ ८० ॥ कामप्रचंडबाणेन ; मार्यमाणः सुभानुकः ॥ स्खलद्गति-
स्ततो मूर्छा—मूर्छितः पतितः क्षितौ ॥ ८१ ॥ सेवकाः कदलीपत्र—वातैः कृत्वा सचेतनं ॥ गेहं
तमानयन् यत्नात् । परं स प्राप नो सुखं ॥ ८२ ॥ पंचबाणस्य बाणेन । पीडितं तं निजांगजं ॥
दृष्ट्वा व्यचिंतयद्भामा । विवाहायोचितो ह्ययं ॥ ८३ ॥ ततो मंत्रिण आहूय । सत्या तेषां पुरो ज-
गौ ॥ भवंतो मायया गत्वा । कन्यां पश्यंतु सत्वरं ॥ ८४ ॥ आगच्छत तथा यूयं । यथा वेत्ति न
कश्चन ॥ लोकेऽपि किंवदंती स्या—न्नात्र विवाहमेलिका ॥ ८५ ॥ तेऽपि स्वस्वामिनीवाक्य—मं-
गीकृत्य ततोऽचलन् ॥ तयापि प्रेपिता कन्या । रहोवृत्त्या घने वने ॥ ८६ ॥ समेताः सचिवा यात्र
—त्तावल्लोकैरबुध्यत ॥ सुभानुककुमारस्य । विवाहो मिलितोऽधुना ॥ ८७ ॥ सत्यभामापि मत्तेभ—
मारुह्य कामभीतितः ॥ समानेतुं कनीं सर्व—समक्षं सन्मुखं गता ॥ ८८ ॥ स्थापयित्वा निजोत्सं-
गे । महोत्सवैश्चतुःपथे ॥ मिलित्वा समुदायेन । सानीता निजमंदिरे ॥ ८९ ॥ प्रतोल्यां तां स-

मागतः ॥ अजायत तदा तंद्रा—नंगो रंगोपघातकः ॥ ६६ ॥ तेनाहं रुदितुं लग्ना । भृशं शोकेन दुःखिता ॥ आश्वासितापि तातेन । नामुंचं रुदनं क्षणं ॥ ६७ ॥ तेनातिविह्वलीभूत—स्तात एकाकिनीमपि ॥ मामिहैव विमुच्यागा—त्तेनाहमत्र संस्थिता ॥ ६८ ॥ सत्यभामाजणद्भद्रे । खेदं मा कुरु मानसे ॥ विवाहं ते करिष्ये मे । सूनुना सह भानुना ॥ ६९ ॥ चेत्पाणिग्रहणं तेन । साकं त्वं प्रकरिष्यसि ॥ तदा हि रूपलावण्ये । सफले ते भविष्यतः ॥ ७० ॥ मयापि परिचर्या त्वां । नीत्वा गेहे करिष्यते ॥ अपरा अपि किंकर्यः । सेविष्यंते पदौ तव ॥ ७२ ॥ श्रुत्वेति सत्यभामाया । वचनं सा कुमारिका ॥ दर्शयंती जगादाथ । कृत्रिमं प्रेम तांप्रति ॥ ७३ ॥ मुरारिः पृथिवीनाथः । श्वशुरो यदि मे भवेत ॥ श्वश्रूस्त्वं पट्टराज्ञ्यस्य । भूरि भाग्यं तदा मम ॥ ७४ ॥

इति तस्या वचः श्रुत्वा । सार्धमादाय तां तदा ॥ प्रापयद्भुवनं भामा । कस्य स्वार्थो हि न प्रियः ॥ ७५ ॥ निकेतने समानीय । सत्या तां च कुमारिकां ॥ ददौ भूषणवस्त्राणि । तस्यै संमदसंयुता ॥ ७६ ॥ तत्रेति तिष्ठति कामं । कन्यारूपेण सांबकः ॥ तावद्वने समायातो । वसंतः सकलप्रियः ॥ ७७ ॥ वृक्षाणामपि भृंगाणां । कामिनीनां च कामिनां ॥ छायापरागकामानां । दाय

स्कृत्य पदद्वयं ॥ प्रद्युम्नादेशतः सत्य—भामायाः काननं ययौ ॥ ५५ ॥ कन्याया अतिमान्याया । रूपं कृत्वा मनोरमं ॥ फलानि फलदानां स । भुंजानस्तत्र तस्थिवान् ॥ ५६ ॥

अथान्यदागता तत्र । सत्यभामा रिरंसया ॥ तावद् दृष्टा मनोऽभीष्टा । कन्या रूपवती तया ॥ ५७ ॥ तामालोक्य हृदि प्राप । विस्मयं स्मयसंकुला ॥ अस्मिन्नहो वने कन्ये—दृशी कुतः समागता ॥ ५८ ॥ किं विद्याधरपुत्रीयं । किंवा सुरवधूरियं ॥ पातालसुंदरीयं किं । राज्ञो वा कस्यचित्सुता ॥ ५९ ॥ चिंतयंतीति साप्राक्षी—त्तां विस्मेरांबुजाननकां ॥ विजनेऽत्र वने पुत्रि । समेतैकाकिनी कुतः ॥ ६० ॥ सा प्राह शृणु मातस्त्वं । तनयाहं नरेशितुः ॥ आबाल्यान्मां समादाय । मातुलो जग्मिवान् पुरं ॥ ६१ ॥ तत्र कियंति वर्षाणि । तिष्ठंती वृद्धिमादधत् ॥ तदा पित्रा विवाहार्थं । मामादातुं समागतः ॥ ६२ ॥ तेनापि सह तातेन । सामग्र्या प्रेषिताप्यहं ॥ पित्राप्यारोपिता चारु—शिबिकायां सुखाय मे ॥ ६३ ॥ बभूवुर्वासरा द्वित्रा । यावत्सार्थस्य गच्छतः ॥ तावद्वनेऽत्र संध्यायां । स्थापिता मम शिबिका ॥ ६४ ॥ प्रजातायां त्रियामायां । सकला अपि सार्थगाः ॥ श्रांता निद्रालवः सुप्ता । नृपोऽपि चलनेच्छया ॥ ६५ ॥ स्थितायां शिबिकायां मे । मातुलः स्मृति-

लोकाः । सशोका अभवंस्तदा ॥ ४३ ॥ सर्वे जना मिलित्वातो । गत्वा गोविंदसन्निधौ ॥ प्रणम्य
कथयामासुः । स्थानमस्माकमर्पय ॥ ४४ ॥ तदावादि मुकुंदेन । युष्माकं दुःखमस्ति किं ॥ ते प्रा-
हुर्दत्तराज्येन । सांबेन पीमिता वयं ॥ ४५ ॥ गृहेऽस्माकं वधूः पुत्री । स्वसा रूपवती पुनः ॥ शी-
लस्य खंडनं तासा—मेतेन कार्यते बलात् ॥ ४६ ॥ अश्राव्यं वचनं श्रुत्वा । हाहाकारवचो वदन्
॥ तान्प्रजजल्प गोविंदः । स्वस्थीभवत सांप्रतं ॥ ४७ ॥ मासमेकं वचो मेऽस्ति । तदतः प्रचलेन्न
हि ॥ पश्चादस्य महाशिक्षा । भवतां सुखकारिणी ॥ ४८ ॥ स्वस्थीकृता मुकुंदेन । गताः स्वमंदिरे
नराः ॥ मास एकश्च संपूर्णः । संजातः क्षणवत्ततः ॥ ४९ ॥ अथ तातप्रणामार्थं । सांबः समाग-
तस्तदा ॥ वासुदेवोऽब्रवीद् द्वेषात् । स्थेयं राज्ये न मे त्वया ॥ ५० ॥ रे पापिष्ठ त्वया तत्र । गंत-
व्यं मत्पुराद्बहिः ॥ नामापि श्रूयते नैव । मयका यत्र तावकं ॥ ५१ ॥ कथयित्वेति कृष्णेन । प-
त्रत्रयस्य बीटकं ॥ समर्प्य कर्षितः सांब—स्तेनापि तदुपाददे ॥ ५२ ॥ प्रद्युम्नोऽवक्तदा कृष्णं । क-
दायमागमिष्यति ॥ कृष्णोऽवदद्यदा भानु—जनन्याकारयेदमुं ॥ ५३ ॥ सन्मुखं गजमारुह्य । गत्वा
प्रौढोत्सवेन सा ॥ यदा समानयेदेनं । तदायातु ममांतिके ॥ ५४ ॥ जनकस्य जनन्याश्च । नम-

र्द्वतेति सन्मतिः ॥ मया साम्राज्यमेतस्य । मासमेकं प्रदीयते ॥ ३१ ॥ विचार्येति मुकुंदेन । तस्य राज्यं समर्पितं ॥ मासस्यावधिमाधाय । सर्वलोकसमक्षकं ॥ ३२ ॥ उत्सवैरभिषिक्तोऽसौ । द्वितीये वासरे स्थितः ॥ नारायणासने रम्ये । राजराजिविराजितः ॥ ३३ ॥ बलेन पांडवैरन्यै—रपि क्ष्माधिनायकैः ॥ मस्तकैः प्रणतः सांबो । नम्यः कस्य हि न प्रभुः ॥ ३५ ॥ वयसा सदृशैर्मित्रै—र्भुक्त राज्यमदभुतं ॥ दुर्लभं सर्वथान्येषां । जनार्दनसमर्पितं ॥ ३६ ॥ राज्यग्रहणं तारुण्ये । रक्षितु मुत्तमं विना ॥ समर्थो नेतरः कश्चित । सर्वथैव प्रजायते ॥ ३७ ॥

इति सांबस्य राज्यासि—र्वयोऽपि खलु यौवनं ॥ मिलने चैतयोर्योगे । विकारोऽभूदनंगजः ॥ ॥ ३८ ॥ रूपवत्यस्ततो या या । बभूवुर्योषितः पुरि ॥ ताः समानीय भुज्यंते । सांबेन सेवकैः सह ॥ ३९ ॥ यस्य पुंसो रसः स्त्रीणा—मसौ तासां वशीभवेत ॥ इति याति त्रियामायां । स तासां वसतिष्वपि ॥ ४० ॥ भवेयुः प्रायशो लोके । कामिन्यः कामविह्वलाः ॥ प्रत्युत प्रेरिता राज्ञा । प्रजायंते विशेषतः ॥ ४१ ॥ गृहेषु च स्वनाथेष्व—कुर्वाणा श्चरतिं ततः ॥ ताः सांबैकहृदो जाताः । स्त्रीणां हि कामदः प्रियः ॥ ४२ ॥ सांबेन कुलकांतानां । विधाय शीलखंडनं ॥ पीडिता नागरा

ह्यां । विद्यां कामस्तदा ददौ ॥ १८ ॥ बलं दर्शयितुं सैवं । सांबोऽप्यादाय तां शुभां ॥ निर्गतः पुरतो बाह्ये । विकुर्व्य कटकं महत् ॥ १९ ॥ व्यानशे कटकेनैव । तदा सर्वमिलातलं ॥ सैन्यं विना किमप्यन्य—न्न दृश्यतेऽध्वगैर्जनैः ॥ २० ॥ सुभानुसांबयोः सैन्ये । मिलिते समजायत ॥ दंडादंडि महायुद्धं । कुंताकुंति गजागजि ॥ २१ ॥ विद्याप्रभावतः सांबो । विजयं प्राप्तवान् द्रुतं ॥ यशोऽपि तस्य मह्यां च । व्यानशे जगदुज्ज्वलं ॥ २२ ॥ पणद्विगुणमादत्त । वित्तं दत्वा च याचकान् ॥ बभूव प्रथितः सांबो । महादानीति भूतले ॥ २३ ॥ चित्ते प्रद्युम्नमाहात्म्यं । ध्यायन् सांबोऽवदद्वचः ॥ सत्यभामे किमप्यद्या—प्यस्ति ते भवने धनं ॥ २४ ॥ सामर्षेण प्रयुक्तापि । श्रितमौनेव नावदत् ॥ पुनः सांबस्तदापृच्छत् । कथं देवि ब्रवीषि न ॥ २६ ॥ निःश्वस्य सावदद्वत्स । सांप्रतं किं वदाम्यहं ॥ जयाजयौ प्रवर्तेते । पुण्यपापप्रभावतः ॥ २७ ॥ मिलित्वा बलदेवेन । पांडवैरखिलैरपि ॥ विज्ञप्तं वासुदेवस्य । सर्वकार्यविधायिनः ॥ २८ ॥ अस्माकमनुजे नाथ । सांबे प्रदर्शितौजसि ॥ आधिक्यं कुरु त्वं किंचि—द्यथायं ज्ञायते जने ॥ २९ ॥ तेषां वचनमाकर्ण्य । चिंतयामास केशवः ॥ सर्वकार्यसमर्थस्यै—तस्य किं क्रियते मया ॥ ३० ॥ विचारं कुर्वतस्तस्य । प्रादु-

विलक्षया तया प्रैषि । हारः षोडशकोटियुक् ॥ मन्मथार्पितहारेण । सोऽपि वेगाज्जिगाय तं ॥७॥
द्वात्रिंशत्कोटिसंयुक्ते । कुंडले प्रेषिते तया ॥ जिते प्रद्युम्नसाहाय्या—त्सांबेन ते अपि द्रुतं ॥ ८ ॥
तया कौस्तुभमाणिक्यं । प्रेषितं कृष्णपर्षदि ॥ विजेतुश्च चतुःषष्टि—कोटीः समर्पयाम्यहं ॥ ए ॥
वरं वरमिति चोक्त्वा । विधिनाक्रीडतां च तौ ॥ जिग्ये तत्रापि सांबेन । प्रद्युम्नस्य प्रभावतः ॥१०॥
पणे तद्द्विगुणं द्रव्यं । विधाय सत्यभामया ॥ उच्चैःश्रवा इव कश्चि—त्संप्रेषितस्तुरंगमः ॥ ११ ॥
कामप्रकटिताश्वेन । सांबेन स पराजितः ॥ पणे प्रजल्पितं द्रव्यं । गृहीतं कलयात्मनः ॥ १२ ॥
तदशेषमपि द्रव्यं । दत्वा याचकसंचये ॥ सर्वस्यापि प्रियः सांबो । दाता हि कस्य न प्रियः ॥१३॥
प्रयासा विहिता ये ये । सांबस्य विजिगीषया ॥ सुभानुभानुभामाभिः । सर्वेऽपि ते मुधाभवन् ॥
॥ १४ ॥ श्राद्धीव दिग्पटी यस्या । मोक्षे विफलिताः क्रियाः ॥ विलक्षवदना सत्य—भामा सांबज
येऽभवत् ॥ १५ ॥ ततः प्रेष्य चिरं सत्या । प्रद्युम्नं पर्षदि स्थितं ॥ ज्ञात्वा प्रैषीन्महत्सैन्यं । ज्ञातुं
मायाविजृंभितं ॥ १६ ॥ द्यूतकारिषु सांबोऽय—मस्ति जेता महान् यदि ॥ तदेतज्जयतात्सोऽथा—
न्यथा कामबलाज्जयी ॥ १७ ॥ सत्यभामोदितां वाणीं । सांबः श्रुत्वेति कर्णयोः ॥ अभून्मौनमुखो

दादिकयादवान् ॥ ७५ ॥ सांबः सुभानुना साकं । रममाणो निजेछया ॥ प्रत्यक्षमपि सर्वेषां । स्वर्णकोटिं जिगाय च ॥ ७६ ॥ ततः सांबकुमारोऽवक् । तदैव रम्यते मया ॥ स्वर्णकोटिर्यदा पूर्वं । समानीता जविष्यति ॥ ७७ ॥ इत्युक्ते सत्यजामायाः । पार्श्वादानीय भानुना ॥ हेमकोटिर्ददे सोऽपि । याचकानां समार्पयत ॥ ७८ ॥ भामया प्रेषितः पश्चात । कश्चित्कुर्कुट उत्कटः ॥ एनं विजयते यः स । लजेत कोटियामलं ॥ ७७ ॥ एवं पणे कृतेऽन्योन्यं । सांबेन बुद्धिधारिणा ॥ प्रद्युम्ननिर्मितेनाशु । कुर्कुटेन स निर्जितः ॥ १०० ॥

जित्वा तमपि सांबेन । कोटिद्वयमुपाददे ॥ तदप्यर्थिमनुष्याणां । प्रदानाय समर्पितं ॥ १ ॥
सत्यजामा ततोऽमर्षा—त्प्रेषयामास सत्फलं ॥ विजयेद्यः स एतच्च । लाति कोटिचतुष्टयं ॥ २ ॥
पणं कृत्वेति यावत्तौ । क्रीडयामासतुर्मुदा ॥ तावत्तदपि सांबेन । जित्वा कोटीश्च दत्तवान् ॥ ३ ॥
ततो वस्त्रयुगं सत्य—जामया प्रेषितं निजं ॥ एतज्जयति यस्तस्य । कोट्यष्टकं ददाम्यहं ॥ ४ ॥
जरीकृत्येति सांबेन । प्रद्युम्नमुखमीक्षितं ॥ तेन तद्युगलं दत्तं । तेनापि तत्पराजितं ॥ ५ ॥ स्वर्णवारिमयैः कूर्चैः । प्रक्षाल्य स्वर्णतंतुभाक् ॥ कृत्वा समर्पितं तच्चा—ददे कोट्यष्टकं क्षणात ॥ ६ ॥

जानुं शुभानुगं ॥ अध्यापयदुपाध्याय—पार्श्वे विद्यामनेकधा ॥ ८४ ॥ कलाभिः कुशलौ जातौ । वयस्यवृंदसंश्रितौ ॥ कुमाराविव देवस्य । चिक्रीडतुर्यदृच्छया ॥ ८५ ॥

अन्यदा रममाणौ तौ । द्वावपि सुमनोव्रजैः ॥ देवनाथसभातुल्यां । विष्णुसंसदमाश्रितौ ॥ ॥ ८६ ॥ पांडवैर्यादवैर्देवै—र्बलदेवेन सेवितः ॥ सभामध्यस्थितः कृष्ण—स्ताभ्यामिंद्र इवेक्ष्यत ॥ ॥ ८७ ॥ उत्तमा बाल्यतोऽपि स्यु—र्विनीता एवमादितः ॥ नत्वा नारायणं ताभ्या—मुचितस्थानके स्थितं ॥ ८८ ॥ सांबः प्रद्युम्नपार्श्वेऽस्था—द्भानूपांते सुभानुकः ॥ तौ द्वावपि स्थितौ याव—त्पर्षदानंददायिनौ ॥ ८९ ॥ पांडवैर्बलदेवेन । सत्रा तावद्दुरोदरं ॥ प्रवर्तते सदोमध्ये । सर्वलोके प्रपश्यति ॥ ९० ॥ तौ सद्वेषधरौ बालौ । दृष्ट्वा बलेन पांडवैः ॥ निवेदितं युवाभ्यां च । द्यूतक्रीडा विधीयतां ॥ ९१ ॥ कामनाम्बोर्मुखं वीक्ष्य । तावूचतुर्मनीषया ॥ यत्र वृद्धा रमंतेऽत्र । बालानां न प्रयोजनं ॥ ९२ ॥ पांडवाद्याग्रहादेव । प्रद्युम्नानुवाचया ॥ तौ प्राहतुर्यदा कश्चि—त्पणः स्यात्तर्हि रम्यते ॥ ९३ ॥ सर्वैरपि तदा प्रोक्तं । भव्यं भव्यमुदीरितं ॥ कथयित्वेति पार्षद्यैः । स्वर्णकोट्याः पणः कृतः ॥ ९४ ॥ तं विधाय ततो द्यूत—केलिं सांबसुभानुकौ ॥ चक्रतुः साक्षिणं कृत्वा । मुकुं·

इत्यभिधा कृता ॥ ७२ ॥ जांबवत्या प्रसूतस्य । तनयस्योत्सवान्नवान् ॥ श्रुत्वा त्रयाणां चान्येषां । भामा बभूव दुःखिनी ॥ ७३ ॥ अहो मया प्रसूतश्च—त्सुतस्तस्योत्सवानहं ॥ अकरिष्यमिति ध्याना—त्साप्यसूत सुतं वरं ॥ ७४ ॥ प्रविधायोत्सवांस्तस्या—प्यनल्पान् सत्यभामया ॥ सुभानुक इति प्रीति—कारकं नाम निर्मितं ॥ ७५ ॥ क्षीरपानं तयोः काचि—त्तथा काचन मज्जनं ॥ उत्संगारोपणं काचित् । काचिद्भोजनमंडनं ॥ ७६ ॥ क्रीडामकारयत्काचि—त्तयोः क्रीडनकैः परैः ॥ स्वर्णरत्नसमुद्भूतै—र्विविधैर्घोटकादिभिः ॥ ७७ ॥ सर्वेषामपि लोकाना—मभीष्टौ प्रियदर्शनौ ॥ वर्णनीयलसद्रूप—संपदौ विगतापदौ ॥ ७८ ॥ पाणेः पाणेर्गृह्यमाणौ । दर्शनीयौ मणीव तौ ॥ स्थापयित्वा निजोत्संगे । गीयमानौ वधूजनैः ॥ ७९ ॥ वपुः परिहितादभ्रा—भरणानां महारवैः ॥ किंकिणीनां च निर्घोषैः । संपूरितालयांगणौ ॥ ८० ॥ देहस्थानां च वस्त्राणां । भूषणानां विभूषया ॥ चित्ते जनयतो नृणां । चमत्कारमतीव तौ ॥ ८१ ॥ प्रद्युम्नभानुकप्रीत्या—दत्तभूषणवाससौ ॥ तौ सदा परिधानेन । देवाविव विरेजतुः ॥ ८२ ॥ सप्तभिः कुलकं ॥ वयःपरिणीतं ज्ञात्वा । सांबं जांबवतीसुतं ॥ प्रद्युम्नः पाठयामासो—पाध्यायसविधे कलां ॥ ८३ ॥ सुभानुमपि तं भानु—र्गूढ-

दरगर्भा—ज्जांबवत्याश्च सुंदरः ॥ वार्तामिति पुरीमध्या—दश्रृणोत्सत्यभामिका ॥ ६१ ॥ तां श्रुत्वा
प्राह सा लोका । मूर्खाः संति विदंति न ॥ प्रद्युम्नसदृशः पुत्रो । जविता मेऽपरेण किं ॥ ६२ ॥
चिंतयंतीति गर्वेण । सत्यभामा गृहे स्थिता ॥ प्रथमं जांबवत्यैव । सुतोऽसूत दिने शुभे ॥ ६३ ॥
यस्य तेजो भवेत्प्राज्यं । स बाल्यादपि दर्शयेत ॥ इतीव तेन बाल्येऽपि । तेजः प्रदर्शितं तनौ ॥
॥ ६४ ॥ भानूनां मिलितं तेजो । द्वादशानामपीह किं ॥ शैशवादपि यं वीक्ष्य । लोका इति श-
शंकिरे ॥ ६५ ॥ लक्षणैर्व्यंजनैश्चारु—शरीरस्थितिधारकः ॥ आकारेणावलोकेन । सर्वचित्तापहा
रकः ॥ ६६ ॥ तस्मिन्नेव दिनेऽभवत्—न्नारायणनरेशितुः ॥ सारथेः पद्मनाभेश्च । मंदारकाभिधः
सुतः ॥ ६७ ॥ तस्यैव वर्तते मंत्री । वीराख्योऽतीवसौख्यभाक् ॥ बुद्धिसेनस्तदा तस्य । तनयः स
मजायत ॥ ६८ ॥ विख्यातगरुडकेतोः । कृष्णस्यैवांह्रिसेविनः ॥ जयसेनाभिधः पुत्रो—ऽभवत्पवि-
त्रकांतिमान् ॥ ६९ ॥ एकस्मिन् दिवसे जातै—स्त्रिभिरेव स्तनंधयैः ॥ जांबवत्याः सुनः साकं । श
र्मधर्मभिरेधत ॥ ७० ॥ तस्मिन् विवर्धमाने च । पित्रोः प्रीतिरवर्धत ॥ अन्येषां प्रीतिवृध्यर्थं । कृतं
काराविमोचनं ॥ ७१ ॥ कृष्णेनाप्यथ दीनानां । प्राज्यं दानं समर्पितं ॥ महोत्सवैः कुटुंबेन । सांब

सौ ॥ साब्रवीन्नासिकाहीना । कथमेषागताऽभवत ॥ ४९ ॥ स्यंदने मिलिते तां च । सामर्षा नि-
जगाद सा ॥ पापे त्वं दूरतो याहि । संमुखं मिलिता कथं ॥ ५० ॥ ततो जांबवती प्राह । मदांधे
शृणु मद्वचः ॥ यत्फलार्थं प्रयासि त्वं । तत्फलं तु मयार्जितं ॥ ५१ ॥ परस्परविवादेन । ज्ञात्वा का-
लविलंबनं ॥ मुक्त्वा तत्रैव तां सत्य—भामा कृष्णांतिकं ययौ ॥ ५२ ॥ तस्या आगमनं सोऽपि ।
वीक्षमाणो मुहुर्मुहुः ॥ तस्मिन्नवसरे सापि । प्रयाता संमताभवत् ॥ ५३ ॥ तयापि सह भोगायो-
द्यतो हरिरजायत ॥ कामिनां हि वशायोगे । कामावाप्तिर्भवेद्बहुः ॥ ५४ ॥ कटाक्षविभ्रमैः स्वैर—
भणितैर्हसितैरपि ॥ रेमे तेन समं सापि । तनूजाविर्भवाशया ॥ ५५ ॥ ततस्तस्या महाभाग्या—
च्च्युत्वा कोऽपि सुरो दिवः ॥ कुक्षाववातरच्चार—प्रभावेण महोदयः ॥ ५६ ॥ हितेन सुरतेनापि ।
सापि संतोषिता भृशं ॥ गेहं गता च गोविंदो—ऽप्युत्सवैर्नगरीमगात् ॥ ५७ ॥ सिंहस्वप्नेन भूयिष्ट
—मोहदैरेव दोहदैः ॥ सुतेन भाविना सांब—जीवेनांबा प्रमोदिता ॥ ५८ ॥ गर्भोऽपि सत्यभा-
माया । वर्धमानो दिने दिने ॥ जननीं तोषयामास । शुभख्यापनसूचकः ॥ ५९ ॥ प्रद्युम्नो विद्य
या सांब—भानुमात्रोस्तनूजयोः ॥ दोहदानि प्रजातानि । पूरयामास सर्वदा ॥ ६० ॥ सत्यभामो-

न त्यवातरत ॥ ३७ ॥ उदारपुत्रबीजं च । हारं धृत्वा गले निजे ॥ उत्तार्य मुद्रिकां दध्रे । रूपं स्वा-
भाविकं तया ॥ ३८ ॥ तां समालोक्य गोविंदो । बभूवाश्चर्यधारकः ॥ क्वेयं किमु तया जात—मे-
तत्कर्मविचारितं ॥ ३९ ॥ पुनरप्यच्युतश्चारु । स्वचेतसि व्यचिंतयत ॥ विधिर्यत्र बली तत्र । पुं-
सां स्याद्विफला क्रिया ॥ ४० ॥ विचार्येति जगौ तां स । त्वं जाना कथमीदृशी ॥ प्रद्युम्नो मिलि-
तः किं ते । विद्यया पररूपकृत ॥ ४१ ॥ साचख्यौ चरणांभोजं । प्रणम्य नरकद्विषः ॥ स्वामिन पु-
रातनं कोपं । मुक्त्वा कुरु कृपां मयि ॥ ४२ ॥ एवमाकर्णने कृष्णो । जगाद तां प्रियेऽथ न ॥ चिं-
तनीयस्त्वया कोपः । सर्वथा भेदकारकः ॥ ४३ ॥ अतःपरं ममासि त्वं । प्राणेभ्योऽप्यतिवल्लभा ॥
प्रिये प्रद्युम्नसंकाशः । सुतस्तव भविष्यति ॥ ४४ ॥ इति जांबवती प्रीति—कारकैर्वाग्विलासकैः ॥
संतोष्य प्रेषिता गेहे । सत्यभामाभिशंकया ॥ ४५ ॥ सापि गोविंदवाक्येन । संतुष्टा मंदिरे ययौ ॥
पुत्रप्राप्तिर्हि कस्या न । पतिस्नेहगिरा भवेत ॥ ४६ ॥ भूषयित्वाथ भूषाभि—र्निजांगानि प्रमोदतः
॥ मानं प्रदधती भामा । चचालाच्युतसन्निधौ ॥ ४७ ॥ जांबवतीं पथि प्रीता—मागछंतीं विलोक्य
च ॥ जगौ परिजनं भामा । केयमायाति मत्पुरः ॥ ४८ ॥ परिछदस्तदावादी—त्समेति जांबवत्य-

केंद्रियाणामपि स्फुटं ॥ वृक्षाणां ददतश्चारु—संपदं दृष्टिमोहिनीं ॥ २६ ॥ येषां संपत्तिमालोक्य । पंचेंद्रिया अपि क्षितौ ॥ संप्राप्नुवंति संमोहं । तिर्यंचः पुरुषाः स्त्रियः ॥ २७ ॥ यस्मिन्मधुव्रता भू रि—झंकारैर्गानमादधुः ॥ कंपमानाः समीरेण । नृत्यंति तरवोऽपि च ॥ २८ ॥ पल्लवोद्भूतरक्तत्व —दर्शनात्पादपैरपि ॥ रागित्वं दर्श्यते यत्र । लोकानां केलिकारिणां ॥ २९ ॥ वीक्ष्यागेष्वपि रागित्वं । हारं लात्वाच्युतोऽप्यगात ॥ निवेद्य भामायै चैत्र—वलक्षदशमीदिने ॥ ३० ॥ रैवतकाचलाभ्यर्णे । कारयित्वा सुमालयं ॥ तस्थौ रंतुं हरिस्तत्र । पुत्राकांक्षी दिनत्रयं ॥ ३१ ॥ शृंगारमंडनं कर्तुं । सत्यभामा स्थिता गृहे ॥ गंतुकामा मुकुंदस्य । समीपे प्रमदान्विता ॥ ३२ ॥ इतः समयमालोक्य । प्रद्युम्नः शुद्धबुद्धिभाक् ॥ जांबवत्या गृहे गत्वा । दत्तवान् निजमुद्रिकां ॥ ३३ ॥ तां दत्वा भाषितं तेन । दिव्यानुभावयानया ॥ साक्षात्त्वं सत्यभामाया । रूपधर्त्री भविष्यसि ॥ ३४ ॥ सिद्धे कार्ये समादाय । रूपं स्वाभाविकं त्वया ॥ देया मन्मुद्रिकेत्युक्त्वा । मत्या रूपेण सा कृता ॥ ॥ ३५ ॥ कृत्वा तां तादृशीं विष्णु—समीपे प्रेषिता निशि ॥ कंठे प्रक्षिप्य तं हारं । तेनापि बुभुजेऽथ सा ॥ ३६ ॥ संभोगांते महाशुक्रा—च्च्युत्वा कैटभजीवकः ॥ पुण्याज्जांबवतीकुक्षौ । पुत्रत्वे-

वती जाता । मद्दुःखेनैव दुःखिनी ॥ १४ ॥ मद्दुःखेन विषादं सा । कर्त्री हर्षेण संमदं ॥ वर्तते
जांबवत्येका । मामकीनस्य शासने ॥ १५ ॥ यदि दापयितुं हारं । शक्तिस्तव प्रवर्तते ॥ तस्या ए-
व त्वया दाप्य । उपायेन यथातथा ॥ १६ ॥ किंतु तस्या विरोधोऽस्ति । समं नरकवैरिणा ॥ कष्टे-
न दापनीयः स । जविष्यति त्वयांगज ॥ १७ ॥ अस्य हारस्य माहात्म्या—द्यदि तस्याः सुतो भ-
वेत् ॥ जातरूपस्य सौरन्य—मेवान्यत्किमतः शुजं ॥ १८ ॥ मातुरेवं वचः श्रुत्वा । गत्वा जांबव-
तीगृहं ॥ नत्वा तच्चरणौ प्राह । प्रद्युम्नः कौतुकांकितः ॥ १९ ॥ तव चेन्मत्स्वरूपस्य । तनयस्य स्पृ-
हा जवेत् ॥ तदा ददामि मन्मातु—रिष्टायास्ते सुतं किल ॥ २० ॥ सा प्राह तनयो वत्स । या-
दृशस्तादृशोऽपि च ॥ दुर्लजो वर्तते स्त्रीणां । किं पुनस्त्वादृशः सुतः ॥ २१ ॥ पुनरप्याह सा पुत्र
। कथं त्वमर्पयेर्मम ॥ जनकेन त्वदीयेन । वैरुध्यमस्ति सांप्रतं ॥ २२ ॥ श्रुत्वेत्यूचेऽथ प्रद्युम्न—
स्तांप्रति प्रीतिसूचकं ॥ वचनं समये मातः । सर्वं जावि शुजास्पदं ॥ २३ ॥ स तस्याः कथयित्वेति
। समेतश्च स्वमालयं ॥ प्रपश्यन् समयं तस्थौ । सामग्रीमिलनोचितं ॥ २४ ॥ अन्यदा शाखिनां
सार—पत्रपुष्पफलप्रदः ॥ वसंतस्य समायातः । समयः संमदप्रदः ॥ २५ ॥ अहो सामर्थ्यमेतस्यै—

प्रियेऽपमानिता केना—प्यथवाज्ञा विखंडिता ॥ निःश्वस्य न्यगदत्सापि । द्वयोः किंचिदपीश न ॥ ॥ ३ ॥ जीवितव्यं तदा मेऽस्ति । चेत्प्रद्युम्नोपमः सुतः ॥ अन्यथा मरणं ज्ञेयं । त्वयि सत्यपि भर्तरि ॥ ४ ॥ प्रद्युम्नस्य समानस्य । नंदनस्य समीहया ॥ तां मुमूर्षुं हरिर्ज्ञात्वा—राधयन्नैगमेषिणं ॥ ५ ॥ अष्टमेन प्रसन्नः सो—ऽभवत्सामर्थ्यसंयुतः ॥ विष्णोः पौषधशालायां । स्थितस्य ध्यानयोगतः ॥ ६ ॥ प्रसन्नीभूय स प्राह । त्वया कथमहं स्मृतः ॥ कृष्णोऽवक् देहि भामायै । प्रद्युम्नोपममंगजं ॥ ७ ॥ इत्युक्ते तेन देवेन । तस्मै हारो ददे मुदा ॥ उक्तं च भुज्यते यावत् । कंठे स्थाप्यस्त्वया निशि ॥ ८ ॥ तिरोदधे स तं हारं । समर्प्य नरकद्विषः ॥ तेनापि सत्यभामायै । संतोषाय समर्पितः ॥ ९ ॥ शुभाशुभोपदेशायाः । प्रज्ञप्तेः कथनेन सः ॥ अज्ञासीत्सत्यभामाया । हारदानस्वरूपकं ॥ १० ॥ तद्विदित्वा स्वजननीं । सोऽजल्पदंब चेत्तव ॥ मत्समानसुताकांक्षा । स्यात्तं ते दापयामि तत् ॥ ११ ॥ रुक्मिण्यप्यवदद्वत्स । त्वयैवाहं कृतार्थिनी ॥ उदरे भारभूतैः किं—मपरैः शूकरोपमैः ॥ १२ ॥ पुनः पुत्रोऽब्रवीन्मात—र्यदि कांक्षा तवास्ति न ॥ तर्हि कस्या अपि प्रीति—मय्याः सख्या हि दापय ॥ १३ ॥ सा जगौ त्वद्वियोगेन । दुःखमासीन्महन्मम ॥ तदा जांब-

नीं प्राज्या—मभुंक्त भानुरप्यलं ॥ विराजत्परमं सौख्यं । नाकिनामपि दुर्लभं ॥ २२ ॥ प्रद्युम्नोदा-
र्यसौभाग्य—मयी कीर्तिर्मनोहरा ॥ देशे देशे पुरे ग्रामे । प्रससारार्कभा इव ॥ २३ ॥ संगमः पि-
तृसुखावहो भवेत् । संकटादपि च यस्य देहिनः ॥ प्राग्जनुर्जनितधर्मजं फलं । ज्ञेयमाप्तपुरुषेण त-
स्य तत् ॥ २४ ॥ विद्यालब्धिरनेकधा सुखकरी धर्माद्यशो निर्मलं । धर्मेण स्वजनप्रसंगभवनं धर्मेण
संपत्तयः ॥ संग्रामे विजयो भयोज्झितमतिर्विद्याधराः किंकराः । साहाय्यं सुकृतस्य सर्वमपि तत्संस्तू-
यमानोदयं ॥ २५ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणि-
विरचिते श्रीशांबप्रद्युम्नचरित्रे प्रद्युम्नस्य युद्धस्वजनसंगविवाहोत्सववर्णनो नामैकादशः सर्गः समाप्तः
॥ श्रीरस्तु ॥

---

॥ अथ द्वादशः सर्गः प्रारभ्यते ॥

अथ वृंदारकस्येव । भुंजानस्य महासुखं ॥ प्रद्युम्नस्योदयं दृष्ट्वा । दूना भामा बभूव सा ॥ १ ॥
एकदा जर्जरे मंचे । सा सुप्ता दुःखपूरिता ॥ तदा हरिर्गतस्तत्र । तथा दृष्ट्वेति तां जगौ ॥ २ ॥

च संमदात् ॥ कृतः कनकमालायाः । प्रमोदो हृदयंगमः ॥ १० ॥ आगताः स्वजना विद्या—धरा
नरा वनीपकाः ॥ दत्वा दानं यथायोगं । सर्वे तेऽपि विसर्जिताः ॥ ११ ॥ ततः प्रचलिते काल—
संवरे जगतीपतौ ॥ पुरुषोत्तमरुक्मिण्यौ । प्रमोदादनुजग्मतुः ॥ १२ ॥ तौ गत्वा कियतीं भूमि—
मपावृत्यागतौ गृहं ॥ प्रद्युम्नस्तु गतो दूरं । स्नेहं दर्शयितुं निजं ॥ १३ ॥ कालसंवरभूपेन । राज्ञ्या
कनकमालया ॥ अत्यर्थमाग्रहं कृत्वा । मन्मथः प्रतिचालितः ॥ १४ ॥ प्रभूतपरिवारेण । प्रस्थाप्य
कालसंवरं ॥ स्मरंस्तस्य गुणग्राम—मविशद् द्वारिकां पुरीं ॥ १५ ॥ द्युम्नप्रद्युम्नसंभूतां । भाग्यसौ-
भाग्यसंपदं ॥ समीक्ष्य संमदं कस्य । न जायते शरीरिणः ॥ १६ ॥ इति प्रद्युम्नसंपत्तिं । वीक्ष्य स-
र्वेऽपि नागराः ॥ बभूवुरुल्लसच्चित्ता ! वित्तान्विता अपीश्वराः ॥१७॥ नारदर्षिः समालोक्य । रुक्मि-
ण्याः प्रबलोदयं ॥ दुःखं च सत्यभामायाः । कृतार्थो मुमुदे हृदि ॥ १८ ॥ यया हि यादृशं कर्म ।
कृतं तयापि तादृशं ॥ फलं प्राप्तमिति तुष्टः । स्वस्थानं प्रययौ मुनिः ॥ १९ ॥ विषण्णा सत्यभामा-
पि । कामपाणिग्रहोत्सवं ॥ दृष्ट्वा निजतनूजार्थ—मन्यां कन्यामयाचत ॥ २० ॥ मार्गयित्वा परां
कन्यां । विवाहस्य महोत्सवः ॥ विशेषेण तयाकारि । स्वसुतस्यापि भूतये ॥ २१ ॥ परिणीय क-

ददानोऽर्थिजने दान—मगमद्विपिनं महत ॥ ९८ ॥ कामरत्योरभूत् पाणि—ग्रहणं तत्र कानने ॥ स्वजनानां प्रमोदश्च । संजातो वचनातिगः ॥ ९९ ॥ खेचरीर्भूचरीः कन्याः । कालसंवरकेशवौ ॥ उदवाहयतां तस्य । प्राज्या उदधिसंयुताः ॥ २०० ॥ हृद्यैर्विद्याधरैः क्ष्मापैः । कृतवैवाहिकोत्सवः ॥ परिणीय कनीः कांता । नगरीं प्रविवेश सः ॥ १ ॥ विधायाप्युत्सवैस्तस्य । पाणिग्रहणमद्भुतं ॥ तस्थिवांसः कियत्कालं । स्वजनास्तत्र तोषिताः ॥ २ ॥ गेहे चलितुकामोऽव—केशवं कालसंवरः ॥ आकारितस्त्वयायातः । समग्रपरिवारयुक् ॥ ३ ॥ चेत्तवाथ भवेदाज्ञा । स्वं पुरं तर्हि याम्यहं ॥ प्रस्तावे पुनरप्यत्रा—यास्यामि मिलनाय ते ॥ ४ ॥ आबाल्यादपि यद्येष । पालयित्वा प्रवर्धितः ॥ अथ चास्य मया दृष्टा । समृद्धिरीदृशी शुभा ॥ ५ ॥ विष्णुस्तस्य वचः श्रुत्वा । जजल्प पुत्रपालनात ॥ प्राप्तैश्वर्यः सुतोऽयं मे । यथा तथा तवाप्ययं ॥ ६ ॥ यथा विद्याधरेशस्य । केशवेन निवेदितं ॥ रुक्मिण्यपि तथा प्रीत्या । बभाषे कनकस्रजः ॥ ७ ॥ मुरारिरुक्मिणीभ्यां च । स्नेहेनालाप्य तोषितौ ॥ जातौ चलितुकामौ तौ । दंपती स्वपुरंप्रति ॥ ८ ॥ गोविंदेन तदा दत्वा । वाजिवारांगनागजान ॥ भृशं संतोषितः काल—संवरो वसुधाधवः ॥ ९ ॥ वस्त्राभरणदानेन । रुक्मिण्यापि

॥ ८५ ॥ कालसंवरभूपेन । कृत्वा प्रीतिं ततो हरिः ॥ प्रवेशं कारयामास । महोत्सवैर्मनोहरैः ॥
॥ ८६ ॥ युग्मं ॥ रुक्मिण्यपि सुतप्रेमा—वर्जिताभिमुखं द्रुतं ॥ मिमेल कनकमालां । वृद्धैर्विरा
जिकानने ॥ ८७ ॥ क्वचित्करेणवो मत्ताः । क्वचिद्वेगधरा हयाः ॥ क्वचित्पदातिकाः शूराः । स्यंद-
नाश्चिविताः क्वचित ॥ ८८ ॥ क्वचिन्मुक्ताफलव्राताः । क्वचिद्धारा मनोहराः ॥ क्वचिच्च सुमनःपुंजाः
। स्त्रीणां गीतानि कुत्रचित् ॥ ८९ ॥ तदा द्वारवतीशोभा । बभूव भूयसी शुभा ॥ यथा शिरसि
सौभाग्य—वत्या मुकुटसंस्थितिः ॥ ९० ॥ समृद्धिं मानसाभीष्टां । संप्राप्य च मनोभवः ॥ प्रपूजनं
जिनेंद्राणां । विधाय विधिपूर्वकं ॥ ९१ ॥ आगत्य रुक्मिणीपार्श्वे । नत्वोवाच कृतांजलिः ॥ मात
स्थापि तां सत्य—भामां विगोपयाम्यहं ॥ ९२ ॥ रुक्मिणी वचनं तस्य । निशम्य व्याकुलाभवत्
॥ समागतं सुतं प्राह । मावादीरिति नंदन ॥ ९३ ॥ पतितस्य पदाभ्यां न । कुट्टनं युज्यते सतां
॥ विगोपनं विगुप्तस्य । तथा समुचितं न हि ॥ ९४ ॥ विगोपिता त्वयैवेयं । पुरास्ति सपरिच्छदा
॥ विगोपनमथैतस्या । नोचितं महतस्तव ॥ ९५ ॥ मातुर्वचनयोगेन । कामो मुक्त्वाथ तां कथां ॥
विवाहाय हयं चारु—मारुरोह विभूषितः ॥ ९६ ॥ कालसंवरविद्याभृ—न्माधवाभ्यां सहोत्सवैः ॥

रुक्मिण्युदयसंभवे ॥ सत्यभामां विना भानुं । सर्वेऽपि तुतुषुर्जनाः ॥ ७४ ॥ बलभद्रो मुकुंदश्चा-
परे सर्वेऽपि पार्थिवाः ॥ हर्षेण भोजनं चक्रु । रुक्मिण्या विनिमंत्रिताः ॥ ७५ ॥ तस्थिवांसो मही-
पाला—स्तत्रैव कियतो दिनान् ॥ अन्यदा सचिवाः प्रोचु—र्विष्णुं मुदा समन्वितं ॥ ७६ ॥
अथैतस्य विवाहस्य । प्रकुरुध्वं महोत्सवं ॥ कामस्तदावदन्नाहं । करिष्ये करपीडनं ॥ ७७ ॥
तत्तदैव करिष्यामि । यदा कनकमालिकां ॥ समादाय समं काल—संवरेशः समेष्यति ॥ ७८ ॥
कामस्येति गिरं श्रुत्वा । गोविंदः संमदान्वितः ॥ तत्र प्रेषितवान् दूतं । सुताकूतं प्रजल्पितुं ॥७९॥
तेन तत्र द्रुतं गत्वा । तत्स्वरूपमभाष्यत ॥ तन्निशम्याभवत्सोऽपि । तत्रागमनवांछकः ॥ ८० ॥ वि-
लंबं लज्जया कुर्वन् । यावत्ततः स नाचलत ॥ तावद्दूतोऽवदत्स्वामिन् । विलंबं कुरु मा मुधा ॥८१॥
त्वयि तत्र समायाते । एव पाणिग्रहोत्सवः ॥ अन्यथा किल तत्रापि । भविष्यति विलंबता ॥८२॥
दूतोक्त्या प्रेरितः सोऽपि । मेलयित्वा महद्बलं ॥ लात्वा कन्या बहूः सार्थे । रतिपुत्रीरिवाचलत् ॥८३॥
सामग्रीमतुलां कृत्वा—गच्छंतं कालसंवरं ॥ श्रुत्वा कामो ययौ हर्षाद् । द्रुतं पित्रोश्च सन्मुखं ॥८४॥
आत्मनो यो भवेदिष्ट—स्तस्यापीष्टश्च यो भवेत् ॥ उत्तमः कुरुते तेन । साकं प्रीतिं गरीयसीं ॥

॥ ६२ ॥ प्राक्पयोऽशिना काचि—द्धन्या कनकमालिका ॥ लालयित्वा यथोत्संग । आबाल्या-
दपि वर्धितः ॥ ६३ ॥ काचिज्जजल्प हृष्टो भो । विद्याभृत्कालसंवरः ॥ शिलोपरि स्थितो येना
—ददे रत्नमिवाद्भुतः ॥ ६४ ॥ काचिज्जगाद धन्योऽयं । यस्य कष्टेऽपि संपदः ॥ बभूवुः सकला-
भीष्टा—श्चमत्कारविधायिकाः ॥ ६५ ॥ काचिद्बभाण भो भद्रे । किं जल्पसि पुनः पुनः ॥ पुंसां
पुण्यवतां किं किं । न स्यात्पुण्यप्रभावतः ॥ ६६ ॥ एतेन भगवत्पूजा । कृतामुत्र भविष्यति ॥ दत्तं
दानं सुपात्रेषु । चारित्रं पालितं शुभं ॥ ६७ ॥ शीलमाचरितं नूनं । तपस्तप्तं च दुस्सहं ॥ षण्णां जी-
वनिकायानां । रक्षा कृता भविष्यति ॥ ६८ ॥ समृद्धिरीदृशी तेन । संप्राप्ता तेन धीमता ॥ कुरु-
ष्व त्वं तदा पुण्यं । यदि वांछा सुखे भवेत् ॥ ६९ ॥ स्वयशोवादसंभूतां । नानोक्तिमिति नागरीं ॥
शृण्वानश्चामरैर्वीज्य—मानश्छत्रस्फुरच्छिराः ॥ ७० ॥ मिथो वादं प्रकुर्वाणै—रिव वादित्रनिःस्वनैः ॥
सहेडेणेव कृष्णेन । जयंत इव सोऽस्फुरत् ॥ ७१ ॥ शोभायै स्वजनानां च । शृंगारितस्य सद्मनः
॥ स्वः स्पर्धयेव तुल्यत्वं । दृष्टुं तत्र समागतं ॥ ७२ ॥ अष्टादशभिः कुलकं ॥ तत्रापि भूरिनारीभिः
। सुवासिनीभिरादरात् ॥ निष्पादितैर्गीतगानै—र्नार्याचारो विनिर्मितः ॥ ७३ ॥ तनूजमिलनेनैव ।

त्पत्युर्वचो न सा ॥ प्रमाणविषयीकृत्य । तद्वाचं सागमत्पुरं ॥ ५१ ॥ प्रमोदतस्तया गत्वा । प्रेषयि-
त्वा च सेवकान् ॥ पुरी शृंगारिता चित्र—कर्मभिस्तोरणध्वजैः ॥ ५२ ॥ भर्तुर्योगे कृतश्रीका । सु-
वासिनीव शोभना ॥ मनुष्यैस्तरुणैर्दृश्या । रेजे शृंगारिता पुरी ॥ ५३ ॥ वर्याणामेव तूर्याणा—
मारवैः पूरितेंबरे ॥ पुत्रसैन्ययुतो हर्षा—द्विवेश केशवः पुरीं ॥ ५४ ॥ नृत्यत्सु पात्रवृंदेषु । गाय-
त्सु गायनेषु च ॥ वाद्यमानेषु वाद्येषु । लसत्सु बिरुदेषु च ॥ ५५ ॥ द्वयोरपि रूपनामभ्यां । प्रद्यु-
म्नेन समं तदा ॥ पुर्यां विशति गोविंदे । उत्सवो योऽभवन्महान् ॥ ५६ ॥ तेनैव केनचिद्रूढं ।
निदानमग्रजन्मनि ॥ ईदृशानुत्सवान् लप्स्ये । भव्यं भाग्यं च तर्हि मे ॥ ५७ ॥ युग्मं ॥ प्रद्युम्न-
दर्शनाद्देशः । केनचिन्मंदबुद्धिना ॥ केनचित्तस्य विद्याया—श्चमत्कारः स्तुतः पुनः ॥ ५८ ॥ रूपं
मान्मथमालोक्य । कयाचिद्विस्मयाढ्यया ॥ विफलं स्वपतित्वेऽस्य । वांछया विहितं मनः ॥ ५९ ॥
अपरा लकुटप्रायः । प्राप्तः पतिर्यदि मया ॥ तदा नार्यवतारस्य । किं साफल्यं भवेदिह ॥ ६० ॥
उवाच काचिदेतस्य । धन्या माता च रुक्मिणी ॥ नवमासान् यया धृत्वो—दरे प्रसुषुवे सुतः
॥ ६१ ॥ काचिदूचे हरिर्धन्यो । यत्कुलेंगज ईदृशः ॥ विद्याकन्यासमन्वीत । एवागात्संकटादपि ॥

नोऽजल्पत । प्रत्युताधोमुखोऽभवत् ॥ ३९ ॥ तदा जगाद हास्येन । नारदर्षिर्विशारदः ॥ संसारे
सर्वमर्त्यानां । वल्लभा कामिनी निजा ॥ ४० ॥ कृष्णोऽवदत् कथं साधो । त्वयेदं विनिवेदितं ॥
सोऽजल्पञ्जल्पने देव । स्खलितस्त्वं ततोऽहसं ॥ ४१ ॥ स्वमातरं वधूटीं चा—नयेत्युक्तं कथं न
हि ॥ विष्णुरूचे न जानामि । प्राप्तानेन कुतो वधूः ॥ ४२ ॥ नारदर्षिर्जगौ जिष्णो । दुर्योधनेन
या कन्नी ॥ प्रेषिता समन्नुद्धानु—कृते देवांगनानिभा ॥ ४३ ॥ आयांती वर्त्मनि सैन्य—युतानेन
सुतेन ते ॥ गृहीता युद्धपूर्वं सा । परिणीता सुखेन च ॥ ४४ ॥ निशम्य नारदप्रोक्तं । वचनं पु-
रुषोत्तमः ॥ प्रभूतं प्रमदं प्राप । ध्यायन् पुत्रपराक्रमं ॥ ४५ ॥ मुरारिणा ततः प्रोचे । तनय त्वं स्नु-
षायुतां ॥ जननीमानय क्षिप्रं । सन्निधौ मम शर्मणे ॥ ४६ ॥ तातस्य स्नेहिलं वाक्यं । समाकर्ण्य
मनोभवः ॥ वधूयुक्तां विमानस्थां । रुक्मिणीमानयद् द्रुतं ॥ ४७ ॥ विमानं वीक्ष्य सर्वेऽपि । बभू-
वुर्विस्मयाकुलाः ॥ अद्भुतस्य विलोकेन । भवेत्कस्य न विस्मयः ॥ ४८ ॥ साप्यागत्य स्वकीयस्य ।
भर्तुर्विनयमाचरत् ॥ तदा निगदितं भर्त्रा—मात्यैः सह पुरे व्रज ॥ ४९ ॥ तत्र गत्वा तनूजस्य ।
प्रवेशोत्सवमाचर ॥ महःकरणमेतस्य । संप्रत्येव प्रवर्तते ॥ ५० ॥ पतिव्रतांगना या स्या—ल्लुंपे-

ऽस्ति । वैताढ्यपर्वतादयं ॥ विद्यां दर्शयितुं सर्व— मेतदेतेन निर्मितं ॥ २७ ॥

इति कृष्णोक्तमाकर्ण्य । लज्जिताः पांडवादयः ॥ गजाश्वरथमारूढा । बभूवुः पार्श्ववर्तिनः ॥ ॥ २९ ॥ प्रद्युम्नमच्युतोपांते । वीक्ष्य विद्याविभूषितं ॥ गजाश्वरथमारुह्य । नेमुस्ते कृष्णमन्मथौ ॥ ३० ॥ प्रद्युम्नोऽपि कुलीनत्वात् । सर्वान् प्रतिननाम तान् ॥ ऐश्वर्येऽपि कुलीनो हि । विनयं न विमुंचति ॥ ३१ ॥ समुद्रविजयाधीशा । बलदेवेन संगताः ॥ मिलिताः प्रेमयोगेन । प्रदायालिंगनं भृशं ॥ ३२ ॥ वर्तामहे वयं धन्या । यद्विभोरीदृशः सुतः ॥ तुष्यंत एवमन्येऽपि । प्रणता वसुधाधवाः ॥ ३३ ॥ प्रद्युम्नरूपमालोक्य । सर्वेऽतुष्यंश्च पार्थिवाः ॥ प्रमोदते न को मर्त्यः । कामरूपविलोकनात ॥ ३४ ॥ प्रभूतमर्त्यसंघाता–दितो निःसृत्य भानुकः ॥ अगच्छत्सत्यभामाया । अविलंबं निकेतनं ॥ ३५ ॥ व्रजित्वा तत्र वेगेन । यावन्मातुः स भाषते ॥ प्रद्युम्नागमनं चित्त—शल्यवद् दुःखदायकं ॥ ३६ ॥ तावता वाटिकावापी—वनानां स्यंदनस्य च ॥ कन्याहरणपुष्पाणा—मपराधाः समागताः ॥ ३७ ॥ तान् श्रुत्वा सत्यभामाया । यादृशी दुःखवेदना ॥ शक्यते गदितुं नैव । ज्ञानिनापि च तादृशी ॥ ३८ ॥ अथ कृष्णः सुतं प्राह । वत्सानय स्वमातरं ॥ इत्युक्तेऽपि स

विधायिनी ॥ १५ ॥ न हतोऽत्र विपक्षोऽपि । येन द्रोहविधायकः ॥ स कथं निजतातस्य । बंधुसैन्यविघातकः ॥ १६ ॥ तव विद्याचमत्कारः । पुत्रेणायं प्रदर्शितः ॥ न कोऽपि मारितो हस्ती । हयः पत्तिश्च विद्यते ॥ १७ ॥ संतोष्य वाग्विलासेन । गोविंदमिति नारदः ॥ प्रद्युम्नमवदद्वत्सा—द्यापि क्रीडां करोषि किं ॥ १८ ॥ महतोऽत्र मनुष्यस्य । चिरं हास्यं न युज्यते ॥ विशेषाज्जगता पूज्ये । ताते घातेन वर्जिते ॥ १९ ॥ संहृत्येमां ततश्चेष्टां । विश्वां विद्यासमुद्भितां ॥ पृथिव्यां पतितानेता—नुत्थापयाखिलान् भटान् ॥ २० ॥ उत्थाप्य सकलान् वीरान् । मूर्छितांस्त्वं च विद्यया ॥ संतोषय स्वतातस्य । हृदयं दुःखपूरितं ॥ २१ ॥ इति नारदवाक्येनो—त्थापितास्तेऽखिला अपि ॥ कुलीनः कृपया युक्तो । मुनिवाक्यं करोति हि ॥ २२ ॥ येन ध्यानेन शय्येत । निद्रालुभिः शरीरिभिः ॥ उच्चरंतस्तदेवास्या—दुत्तिष्ठंति समेऽपि च ॥ २३ ॥ शस्त्रं गृह्णंतु गृह्णंतु । द्रुतमेवेति चाननात् ॥ उच्चरंतो रणध्याना—दुत्थिताः सात्वतादयः ॥ २४ ॥ आत्मनोऽपि स्वपुत्रस्य । जानन् विद्याबलं बहु ॥ माधवः प्राह तान् भो भो । यूयं सर्वेऽपि निर्जिताः ॥ २५ ॥ सर्वविद्यानिधानेना—नेन युष्मान् विजित्य च ॥ प्रदर्शिता कलाक्रीडा । व्रीडाकर्यभवत्खलु ॥ २६ ॥ मिलनार्थं समेतो·

स्तकं ॥ गाढं चालिंगनं दत्वा । चुचुंबे वक्त्रवारिजं ॥ ४ ॥ तदा देहस्थिना रोम—राजयोऽभ्युत्थकोटयः ॥ पृथिव्य इव वर्षाया—मासन्न प्रोल्लासधारिकाः ॥ ५ ॥ चिरं तनयमालिंग्य । स्थितो यावज्जनार्दनः ॥ नारदर्षिजगौ ताव—दुच्चयः श्रेयोऽभिलाषुकः ॥ ६ ॥ यथा त्नोः क्रियते पुष्टं । काननं स्थिति निर्मितेः ॥ कथं न नगरीमध्ये । गम्यते सांप्रतं द्रुतं ॥ ७ ॥ युष्मदागमनं पौर—लोकोऽपि भृशमीहते ॥ नगर्यां गमनेनैव । युवयोर्वर्तते शुभं ॥ ८ ॥ कृष्णो विमुच्य निःश्वासान् । जगौ गद्गदवाचया ॥ विना बांधवसैन्याभ्यां । प्रवेशः क्रियते कथं ॥ ९ ॥ प्रथमं मम पुत्रस्य । दुःखं शल्यमिवाभवत् ॥ मिलितश्चेत्स भाग्येन । तदानुत्तर्हि भूरिशः ॥ १० ॥ बंधुं विना दिशः शून्या । अहं स्वसैन्यमंतरा ॥ पत्नींविना गृहं शून्यं । कथं प्रविश्यते पुरे ॥ ११ ॥

द्वावप्येकाकिनावावां । कः स्वामी कश्च सेवकः ॥ को मस्तकोपरिछत्र—धर्ता चामरवीजकः ॥ १२ ॥ वदंतं दीनतायुक्तां । वाचमिति नरायणं ॥ प्रमोदान्नारदोऽवादीत । खेदं त्वं मा कृथा हरे ॥ १३ ॥ जीवन्नस्ति तव भ्राता । समस्तमपि ते बलं ॥ कांतापि सुखसंयुक्ता । भाग्यौ भाग्योदयौ तथा ॥ १४ ॥ यस्य प्रद्युम्नसंकाश—स्तनयो विद्यते बली ॥ न कापि न्यूनता तस्य । लोकनिंदा-

षि त्वमिहाकुलः ॥ ९५ ॥
वैताढ्याख्यगिरौ विद्या—भृत्कालसंवरेशितुः ॥ कुले वृद्धिमवाप्यासा—वागतोऽस्ति सुतस्तव
॥९६॥ लाभैः षोडशभिर्युक्त—स्तातं त्वां मिलितुं ह्ययं ॥ स्वविद्यादर्शनार्थं चा—गतोऽस्ति भूरिभ-
क्तिभाक् ॥ ९७ ॥ तेन सार्धं त्वया देव । संग्रामो यद्विधीयते ॥ पुण्योत्तममनुष्याणां । युक्तं शोभा-
करं न तत ॥ ९८ ॥ कथयित्वेति गोविंदं । मुनिः प्रद्युम्नसन्निधौ ॥ गत्वा प्राह किमारब्धं । त्वया
शैशवबुद्धिना ॥ ९९ ॥ कुलीनो विनयी पुत्रो । यः स्याद्विवेकसंयुतः ॥ भक्तिमेव स्वतातस्य ।
करोति न तु विग्रहं ॥ १०० ॥ तस्मात्त्वमपि निःशेषां । विद्याचेष्टां विमुच्य च ॥ तातस्याभिमुखं
गत्वा । नत्वा पादौ भजस्व तं ॥ ९९ ॥ इति स्वहविधातृणि । श्रुत्वा वाक्यानि केशवः ॥ नार-
दतः सुतप्रेम्णा । समेतोऽभिमुखं शनैः ॥ १०० ॥ आगत्य प्राह भो वत्सा—गछ स्वछतराकृते ॥
आलिंगितुं प्रयत्नस्व । बाहुं स्नेहादयो मम ॥ १ ॥ इति तातवचः श्रुत्वा । तत्वार्थमोहसूचकं ॥ प्र-
द्युम्नोऽपि समायातो । विनयात्सन्मुखं हरेः ॥ २ ॥ मत्वा विमान एव स्व—जननीं वर्णिनीं पुनः
॥ ननाम चरणौ चारु—भक्त्या तातस्य स द्रुतं ॥ ३ ॥ जनकेनापि पाणिभ्यां । गृहीत्वा सुतम-

हं ॥ ८३ ॥ विमृश्येति रथाद्विष्णु—रुत्तीर्य वीर्यसंयुतः ॥ चक्रे चरणयोर्घातं । कातरस्वांतघातकं ॥
॥ ८४ ॥ मन्ये कातरमर्त्यानां । प्रवेशयावनीतले ॥ विवराणि प्रजूतानि । तदा तेनाभवन् भृशं ॥
॥ ८५ ॥ रथादुत्तीर्णमालोक्य । जनकं कोपजीषणं ॥ प्रद्युम्नोऽपि रथाद्वेगा—दुत्तीर्णो योध्धुमुद्यतः
॥ ८६ ॥ मल्लयुद्धविधानाय । यावत्तौ मिलितावुजौ ॥ बद्धकक्षौ जुवः पोक्षौ । मल्लावजिनवाविव ॥
॥ ८७ ॥ तावन्मातृवधूज्यां तौ । विलोक्य युद्धकारकौ ॥ विषादः प्रबलः प्राप्तो । मनश्चापख्यकारणं
॥ ८८ ॥ एतौ प्रकुरुतो युद्धं । गणयंतौ न जीवितं ॥ स्वभुजोर्जितशौर्यान्न । मानयंतौ किमप्यलं
॥ ८९ ॥ द्वयोरेकतरस्यापि । क्षयो यदि जविष्यति ॥ अस्माकमेव जूयिष्ट—दुःखिता जविता त-
दा ॥ ९० ॥ वैसंस्थौख्यमिति स्वांते । दधाते जननीस्त्रियौ ॥ विचिंत्येत्यूचतुस्ते च । नारदं पार्श्व-
वर्तिनं ॥ ९१ ॥ विद्यमाने त्वयि स्वामिन् । संग्रामः पितृपुत्रयोः ॥ जवेच्चेन्न तदा भव्यं । तवावयो-
रपि ध्रुवं ॥ ९२ ॥ तयोरिति वचः श्रुत्वो—पकारकृतितत्परः ॥ उवाच नारदस्तत्रा—गन्तस्त्वद्भम-
ना रणे ॥ ९३ ॥ तारुण्यात्तरुणो वृद्ध—वाक्यं प्रायो न मन्यते ॥ विदन्निति मुनिर्विष्णु—समीपं
प्रथमं ययौ ॥ ९४ ॥ गत्वाभाषिष्ट भो शिष्ट । सर्वापकृष्टकष्टभित् ॥ विष्णो केन समं युद्धं । करो-

रुह्य । वरवाजिसमन्वितं ॥ विद्यामयाय शुभ्राय । व्यमुंचद्वह्निमार्गणं ॥ ७२ ॥ विनिर्मितः क्वचित्तेन । फात्कारो विद्युदाकृतिः ॥ स्फुलिंगवर्षणं भीमं । क्वचिद्दाहश्च दुस्सहः ॥ ७३ ॥ आगच्छंतं स्वसैन्यस्यां—तिके वह्निमयं शरं ॥ प्रज्वलंतं समालोक्य । सोऽमुंचन्मेघमार्गणं ॥ ७४ ॥ यथा यथा हरेर्बाणं । स्फुलिंगानि ववर्ष च ॥ तथा तथा पयोराशिं । मुमोच मान्मथः शरः ॥ ७५ ॥ तेन कृष्णस्य बाणस्य । पराकृते पराक्रमे ॥ शस्त्रं मुमोच वायव्यं । रणे विक्षोभकारकं ॥ ७६ ॥ उड्डायिताः क्षणात्तेन । मत्तगजतुरंगमाः ॥ पत्रव्रजा इव बल—शस्त्रस्यंदनपूरुषाः ॥ ७७ ॥ प्रद्युम्नोऽपि ततोऽमुंच—दस्त्रं तामससंज्ञकं ॥ तस्यांधकारतो जाता । अंधा इव हरेर्भटाः ॥ ७८ ॥ एवं विविधजातीयै—रायुधैर्बहुधेरितैः ॥ संग्रामस्तातपुत्राभ्यां । व्यधीयत परस्परं ॥ ७९ ॥ प्रद्युम्ने कोपतः कृष्णो—ऽक्षिपन्मार्गणधोरणीः ॥ तथापि तस्य भाग्येन । नासंस्ताः परिभाविकाः ॥ ८० ॥ अमोघान्यपि शस्त्राणि । यान्यभवन् वृषाकपेः ॥ मुक्तानि तानि निःशेषा—ण्यप्यासन् विफलानि च ॥ ॥ ८१ ॥ आयुधानाममोघाना—मपि नैष्फल्यदर्शनात ॥ ईक्षणाच्च स्वसैन्यस्य । क्षयस्याचिंतयद्धरिः ॥ ८२ ॥ पापोऽयं बलसंयुक्तो । मल्लसंग्राममंतरा ॥ मया न शक्यते जेतुं । तस्मात्तं विदधाम्य-

सद्यः प्राणापहं शत्रो—रपरं धनुराददे ॥ ५९ ॥ येनैकशो जयः प्राप्तः । स एवास्तु जयी सदा ॥
इति द्वितीयमप्येत—च्छित्वावादीद्वितर्कतः ॥ ६१ ॥ ज्ञातं ज्ञातं तव स्थाम । धनुर्विद्यासमुद्भितं ॥
विच्छेदितं मया धन्व । मार्गणे संधिते सति ॥ ६२ ॥ समरे वीरमर्त्याना—मुपहासकरीदृशी ॥ कु·
तोऽसौ शिक्षिता विद्या । मानभ्रंशविधायिनी ॥ ६३ ॥ पांमवा बलभद्राद्या—स्त्वत्तोऽभूवन् नयोत्त·
माः ॥ यैर्युध्यापि महत्त्वं स्वं । रक्षितं च भुजार्जितं ॥ ६४ ॥ तेषां च नायको लोकै—र्निगद्यसे
विशेषतः ॥ शुद्धिस्तव न कोदंम—धरणेऽपि प्रवर्तते ॥ ६५ ॥ यस्य स्याद्बस्त्रशिक्षायां । कौशलं
प्रबलं करे ॥ स एव विजयं युद्धे । लभते नापरो नरः ॥ ६६ ॥ कलांविना कथं युद्धं । करोषि
त्वं मया समं ॥ किं स्त्रियो बंधुवर्गस्य । मोचनेन प्रयोजनं ॥ ६७ ॥ युद्धकर्म न यावत्त्वं । शिक्ष·
से गुरुसन्निधौ ॥ गत्वा मत्पुरतस्तावद् । भुंक्ष्व सौख्यानि मंदिरे ॥ ६८ ॥ श्रुत्वोपहासवाक्येन ।
हसितं पुरुषोत्तमः ॥ वह्निरिवेंधनैः कोपा—त्तृतीयमग्रहीद्धनुः ॥ ६९ ॥ तेन मुक्तैः शरव्रातै—र्नि·
जितं मान्मथं बलं ॥ नाशितास्तुरगाध्वस्ताः । स्यंदनध्वजकेतवः ॥ ७० ॥ स्वकीयं नाशितं सैन्यं ।
समालोक्य मनोभवः ॥ विद्यया स्यंदनं चान्यत् । प्रविधायोद्यतोऽभवत ॥ ७१ ॥ कृष्णोऽपि रथमा·

न विजानामि कारणं ॥ ४७ ॥ मदीयां मानिनीं मुक्त्वा । जीवन् याहि ममाग्रतः ॥ कथं निरर्थकं प्राणान् । रणेन त्यजसि स्वकान् ॥ ४ए ॥

इति प्रोक्ते हसित्वोचे । प्रद्युम्नः सपराक्रमः ॥ वीरमानिन् रणे स्नेहः । केनापि क्रियते न हि ॥ ५० ॥ हर्ताहं तव भार्याया । बंधूनां घातकोऽप्यहं ॥ यत्कर्तव्यं त्वया देव । मयि तत्कुरु शक्तितः ॥ ५१ ॥ संग्रामे स्नेहिलैर्वाक्यै—र्न कस्यापि रसो भवेत् ॥ संतोषो भुजवीर्यस्य । प्रदर्शनेन वैरिणः ॥ ५२ ॥ दर्शयित्वा ततो बाहु—वीर्यं शौर्यसमन्वितं ॥ गृहाण त्वं निजां भार्यां । सामर्थ्यं यदि विद्यते ॥ ५३ ॥ सामर्थ्यं यदि संग्राम—करणे तव नो भवेत् ॥ तर्हि त्वमंगनाभिक्षां । दीनवाक्येन मार्गय ॥ ५४ ॥ वर्तेऽहमपि कारुण्य—संयुतः कठिनोऽस्मि न ॥ त्वयका प्रार्थितां तां च । भिक्षां दास्यामि भावतः ॥ ५५ ॥ उत्कटं वैरिणो वाक्यं । निशम्य पुरुषोत्तमः ॥ सज्जीकृत्य शरवृंदं । प्रययौ सन्मुखं रिपोः ॥ ५६ ॥ समाछादयतो विष्णो । रोदसीं मार्गणव्रजैः ॥ छिछेत्सो-दर्धचंद्रेण । प्रद्युम्नस्तस्य कार्मुकं ॥ ५७ ॥ अयं हि दृश्यते कश्चि—द्विद्यासिद्धः कलायुतः ॥ युद्धे यथातथानेन । विजयो न भविष्यति ॥ ५७ ॥ इति व्याकुलचित्तोऽसौ । बलिष्टोऽपि वृषाकपिः ॥

कोऽन्ध्रियद्विपाः ॥ ३६ ॥ उभयोरपि संग्राम—स्तथा समभवत्तमां ॥ फेरुकादिकजीवानां । पूर्णो
मांसरसो यथा ॥ ३७ ॥ संग्रामं इति संजाते । मुरारिसेनया सह ॥ पांडवान् बलचंद्रं च । कामो
जघान मायया ॥ ३८ ॥ पराहतान्निजान् वीरान् । समालोक्य नारायणः ॥ भयकोपेन संयुक्तो ।
गजं त्यक्त्वाश्रयद्रथं ॥ ३९ ॥ आरुह्य स्यंदने विष्णु—र्युद्धोन्मुखोऽभवत्स्वयं ॥ कांतावंधपराहतौ ।
प्राणान् को गणयेत्पुमान् ॥ ४० ॥ कुर्वंतं मंडपं बाणै—र्दीपणं रक्तलोचनं ॥ प्रद्युम्नः पितरं दृष्ट्वा
—नयद्रथं शनैः शनैः ॥ ४१ ॥ केशवस्य क्षणात्ताव—द्दक्षिणं चक्षुरस्फुरत् ॥ तदेव चकुवाग्दिष्ट-
पुत्रसंगमसूचकं ॥ ४२ ॥ तदा मुरारिणाभाणि । सारथे किं निबंधनं ॥ दक्षिणं स्पंदते चक्षु—
र्लाभः को मे भविष्यति ॥ ४३ ॥ देवी मम हृतानेन । सहोदरोऽपि घातितः ॥ इति कष्टे कुतः
सौख्यं । दुरापं भविता मम ॥ ४४ ॥ सांप्रतं सर्वथा क्षीणा । दशा मम प्रवर्तते ॥ विजृंभते विप-
क्षश्च । पर्युल्लसत्पराक्रमः ॥ ४५ ॥ वार्तामेवं प्रकुर्वतौ । विषादं दधतौ हृदि ॥ मुरारिसारथी प्राप्तो ।
शत्रुस्यंदनसंनिधिं ॥ ४६ ॥ उत्कटं तं समालोक्य । निजगाद जनार्दनः ॥ कांताहरणतो बंधु—
मारणात्परमो रिपुः ॥ ४७ ॥ तथापि दर्शनात्ताव—त्कीनाद्वैरप्रवर्धकात ॥ जायते स्नेहिलं चित्तं ।

। पुरः कः स्थातुमर्हति ॥ २४ ॥ तथा युयुधिरे वीर—रसेन पांडवादयः ॥ न शुद्धिर्महीपाताल—व्योम्नामपि यथाऽभवत् ॥ २५ ॥ अर्धचंद्रभिधा बाणा । यदा मुक्ताः परस्परं ॥ गात्राणि लूनदंडानि । पेतुस्तदा क्षमातले ॥ २६ ॥ किमुत्तीर्णा नभोमध्या—चंडा युद्धदिदृक्षया ॥ पतितानि क्षितौ तानि । वीक्ष्य लोकाः सशंकिरे ॥ २७ ॥ रणोत्सुकास्तदा वीरा । आहूय नामपूर्वकं ॥ मिथो युयुधिरे रोमो—ल्लसध्धृतांगकंकटाः ॥ २८ ॥

कश्चिदूचे प्रतीक्षस्व । कोलाहलं करोषि किं ॥ संयम्य शिरसः केशां—स्त्वया युद्धं करोम्यहं ॥ २९ ॥ कश्चिच्चाकथयद्वीर । जायसे किं समुत्सुकः ॥ पृथिव्यां पतितं शस्त्रं । गृहीत्वा युध्यते मया ॥ ३० ॥ अन्योऽवादीदरे मूर्ख । रणे किं म्रियसे मुधा ॥ रणो हि कथितो वीरै—र्देहसंदेहसंयुतः ॥ ३१ ॥ तव चंद्रमुखी भार्या । संस्थितास्ति निकेतने ॥ दुःखं त्वद्विप्रयोगार्त्ता । प्राप्नुवंती भविष्यति ॥ ३२ ॥ संग्रामे साधनीयौ न । स्वर्गमोक्षौ मनागपि ॥ कथं त्वं मंदबुद्धित्वात् । समरं विदधासि भोः ॥ ३३ ॥ इत्यन्योन्यं प्रजल्पंतो । हसंतो मान्मथा भटाः ॥ नृत्यंतः समरं चक्रु—र्घोरं कृष्णभटैः सह ॥ ३४ ॥ मायामयेषु कुर्वत्सु । युद्धं प्रद्युम्नसेविषु ॥ निहता वासुदेवस्य । भटः

योस्तद्रणांगणे ॥ १३ ॥ चाक्रिकैश्चक्रहस्ताश्च । खाड्गिकैः खड्गपाणयः ॥ कौंतिकैः कुंतहस्ताश्च । क्रोधाद्युयुधिरे भटाः ॥ १४ ॥ केचित्खड्गदाये खड्गान् । मार्गणान्मार्गणदाये ॥ ददुर्भल्लदाये भल्लान् । मुद्गरान्मुद्गरदाये ॥ १५ ॥

लब्धलुब्धा यशोलब्धाः । स्वस्वामिकार्यकारकाः ॥ येऽभवंस्तैः पुनर्नैव । स्वप्राणा अपि चिंतिताः ॥ १६ ॥ हतेभाश्वमनुष्याणां । शरीरैः पर्वतायितं ॥ रुधिरैर्निर्गतैस्तेभ्यो । भुवि च निम्नगायितं ॥ १७ ॥ जायमाने रणेऽन्योन्यं । सर्वस्यापि भयंकरे ॥ कौतुकेन स्थिता व्योम्नि । चुक्षुभिरे सुरा अपि ॥ १८ ॥ प्रद्युम्नस्य बलं ध्वस्तं । यादवीयैस्तदैकशः ॥ हारयत्येकशो वप्तु—रग्रे प्रायो हि नंदनः ॥ १९ ॥ सज्जीभूय भटैस्तस्य । युध्यमानैर्विशेषतः ॥ नाशितं वैष्णवं सैन्यं । प्रभूतमपि रंकवत् ॥ २० ॥ दृष्ट्वा पलायमानं त—द्बलं बलविवर्जितं ॥ पांडवान् बलदेवं च । विससर्ज नरायणः ॥ २१ ॥ तैस्तूर्णं मान्मथं सैन्यं । प्रणाशितं समंततः ॥ कस्यापि स्याज्जयो युद्धे । कस्यापि च पराजयः ॥२२॥ प्रणश्यदात्मनः सर्वं । सैन्यमालोक्य मन्मथः ॥ शीघ्रं प्रेषितवान् वीरां—स्तादृशान् रणकारिणः ॥ २३ ॥ महतोऽपि मुकुंदस्य । कटकं तैर्दिशो दिशं ॥ प्रापितं कामसैन्यस्य ।

॥ १ ॥ निर्गताः सैन्ययोर्मध्या—त्कल्पांतांभोधितुल्ययोः ॥ तरंगा इव योद्धार—श्चक्रुरास्फालनं मिथः ॥ २ ॥ दिर्दिनैरिव खड्गानां । कृते तमसि धामभिः ॥ गर्जंतः सुभटा मेघा । इवावर्षन् शरोदकं ॥ ३ ॥ महामात्रैर्महामात्राः । सादिभिः सादिनः समं ॥ रथिकै रथिकास्तत्र । पदातिकैः पदातिकाः ॥ ४ ॥ मातंगैः सह मातंगा—स्तुरंगमैस्तुरंगमाः ॥ रथै रथा अयुध्यंत । याष्टिकैर्याष्टिकाः पुनः ॥ ५ ॥ संग्रामासक्तयोरेव—मुभयोरपि सैन्ययोः ॥ रीतिभंगो यथा नाभू—त्तथा युद्धमजायत ॥ ६ ॥ अहो संसारवासस्य । वैपरीत्यं प्रवर्तते ॥ यत्तातसुतयोर्हेतुं । विनापि जायते रणः ॥ ॥ ७ ॥ क्षुरप्राभिधशस्त्रेण । केचिन्मुंडितमस्तकाः ॥ बभूवुः केचिदुच्छिन्न—श्रवणत्वितया रयात् ॥ ॥ ८ ॥ केचिच्चक्षुर्विहीनाश्च । केचिन्नासां विना कृताः ॥ केचिद्रसनया हीनाः । केचिदुच्छिन्नमौलयः ॥ ९ ॥ कबंधाश्चाप्ययुध्यंत । व्याप्ता जीवप्रदेशकैः ॥ श्वसंतः पतिताः केचित । केचिन्मौनावलंबिनः ॥ १० ॥ अर्धछिन्नपदाः केचित । केचित्तथैव पाणयः ॥ केचित्तथा दधुर्ग्रीवां । केचित्तथा करांगुलीः ॥ ११ ॥ हस्तिनो हस्तिभिः साकं । तुरगास्तुरगैस्तथा ॥ पत्तयः पत्तिभिर्वीरैः । पतिताः समरावनौ ॥ १२ ॥ केशेषु व्यलगन् केचित् । केचिच्च बाहुकोटरे ॥ केचित्कर्णयुगे केचि—त्पाद-

येः ॥ अत्र प्राणविधो नास्ति । विनोद एव वर्तते ॥ ३० ॥ केशवस्य च कामस्य । स्थिते इति वले उन्ने ॥ समीपवर्तिनिर्वीरै—रक्षोभ्ये कलयात्मनां ॥ ३१ ॥ देवा दैत्याः समायाताः । कौतुकाय नभस्तले ॥ स्वरूपमुभयोश्चम्वो—र्निरीक्ष्य जगदुर्मिथः ॥ ३२ ॥ जयः पराजयः कस्य । न जानीमो भविष्यति ॥ इति कौतुकयोगेन । तस्थुर्गगनमंमले ॥ ३३ ॥ दत्वा भुमित्रलिष्टवक्षसि पदं येन स्वमातृद्विष—स्तस्या एव वनादिकं च सकलं शोभाविहीनं कृतं ॥ प्रद्युम्नोऽजनयत्स्वकीयजननीकार्यं समस्तं क्षणात् । संजातं सुकृतेन पूर्वजनुषा निष्पादिते नैव तत् ॥ ३४ ॥ धर्मतो जनकमातृमोदनं । धर्मतः स्वजनबंधुसंगतिः ॥ धर्मतो विजयलब्धिरद्भुता । धर्म एव विबुधैर्विधीयतां ॥ ॥ ३५ ॥ इति पंडितचक्रचक्रवर्तिपंमितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीशांबप्रद्युम्नचरित्रे श्रीप्रद्युम्नमातृमिलनसैन्यारोपणवर्णनो नामैकादशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

———

॥ अथ द्वादशः सर्गः प्रारभ्यते ॥

अथ केशवकामोद्य—त्कटके मिलिते सति ॥ स्वरूपं यन्मिथो जातं । सांप्रतं तन्निरूप्यते ॥

स्तेन । धारितं मस्तकोपरि ॥ १८ ॥ काचिज्जजल्प मे भर्तु—र्वर्तते शौर्यमीदृशं ॥ अहमुद्धरिता
दाने । संग्रामे खड्ग एव च ॥ १९ ॥ काचिदूचे सखीं सैन्ये । यश्चामरेण वीज्यते ॥ स एव मम
विज्ञेयो । भर्ताखिलापदांहरः ॥ २० ॥ इत्यादीनि वशावक्र—संभूतानि वचांसि च ॥ शृण्वाना न·
गरद्वारं । संग्रामायागता भटाः ॥ २१ ॥ केचिद्विचारणां कर्तुं । प्रतोल्यामेव संस्थिताः ॥ शत्रुमक्रा-
ममाणाश्च । सैन्येऽधावंत केचन ॥ २२ ॥ धावंतः सुभटाः शौर्यात् । केचिद्रणसमुत्सुकाः ॥ आवेष्ट·
यन् रिपोः सैन्यं । जयश्रीवांछयाभितः ॥ २३ ॥ असाध्यं वसुधानाथै । प्रतीहारादयो भटाः ॥ रणा·
न्निवारयामासु—र्भूयोबलयुता अपि ॥ २४ ॥ उभयोः सैन्ययोर्हस्ति—घटा चाथ समुच्छिता ॥ ध्व·
नयः कोलाहलोद्भाश्च । व्याकुलत्वं प्रचक्रिरे ॥ २५ ॥ भेरीझंझादिवादित्र—पवित्रनिनदा भृशं ॥
रोदसीव्यापयंतस्ते । बाधिर्यं कर्णयोर्दधुः ॥ २६ ॥ गजसैन्यपदोद्भूते । रेणौ विस्तरतां गते ॥ चं·
डांशोरपि चंपानि । तेजांस्यापुर्न दीप्तितां ॥ २७ ॥ मन्येऽहमथवा रेणु—र्वारणायैव यात्यसौ ॥
वैरी नायं सुतः किंतु । कः कोपोऽयं निरर्थकः ॥ २८ ॥ प्रौढोन्मत्तकरेणूनां । मदः कपोलतो गल·
न् ॥ व्रजंतं वारयामास । तं रणेऽस्त्रकवर्षणे ॥ २९ ॥ अहो रेणो कथं गच्छत् । कस्कं त्वं निवार·

नारदपादांते । संस्थिता विनयान्विता ॥ सवधू रुक्मिणी तां तु । मुक्त्वा सोऽप्यागमद्भुवं ॥ ७ ॥
विपुलां विपुलां प्राप्य । विचक्रे तेन विद्यया ॥ विविधा महती सेना । हस्त्यश्वरथपत्तिभिः ॥ ८ ॥
माधवप्रमुखास्तत्र । यावंतः कटके नराः ॥ तावंत एव ते स्वस्यां । सेनायां तेन निर्मिताः ॥
॥ ९ ॥ समस्तान्यपि चिह्नानि । तान्येव जनितानि च ॥ त एव तूर्यनिर्घोषा । वंदिनां जल्पनं त·
था ॥ १० ॥ हयेभस्यंदनानां चा—कारास्तथैव निर्मिताः ॥ जनितान्यभिधानानि । तथैव सकले
बले ॥ ११ ॥ सैन्ययुग्मं समालोक्य । तुल्यमेवोत्कटत्वभृत ॥ जगुः पुरनरा नार्यो । मंदिरोपरि सं·
स्थिताः ॥ १२ ॥ काचित्प्रोचे प्रवर्तेत । नारायणः कदाग्रही ॥ एतावत्करणं नार्य—मस्यामस्य च
योषिति ॥ १३ ॥ एतेषु विद्यमानेषु । येनेदृशं कृतं बलं ॥ विज्ञायते विपक्षोऽपि । दुर्जयोऽयं यथा
तथा ॥ १४ ॥ उभयोर्मिलने विष्णो—रेतस्य पुरतो जयः ॥ दुःसाध्यो ज्ञायते चिह्नैः । स चेत्
स्याद्भाग्यमद्भुतं ॥ १५ ॥ काचिज्जगाद मद्भर्ता । हारितो नास्ति कुत्रचित ॥ परं युद्धेऽत्र संदेहो
। वर्तते मम मानसे ॥ १६ ॥ जानाम्यहं तदा श्रेष्ठं । यदेतयोरनीकयोः ॥ न जायते मिथो युद्धं
। शांतिरेव च सत्वरं ॥ १७ ॥ काचिज्जगौ सखीं प्राण—नाथो मे सर्वतो बली ॥ आतपत्रं तत·

ह्यद्विपरथारूढाः । कोदंडाखंडहेतयः ॥ निःस्वानरणतूर्याणां । नादैरपूरयन् दिशः ॥ ९५ ॥
वादयंतः प्रभूतानि । वादित्राणि नृपांगणे ॥ संस्थिताः परितो व्याप्य । सर्वेऽपि मिलिता भटाः ॥
॥ ९६ ॥ प्रलंबस्थूलदशना—श्चलंतः पर्वता इव ॥ वर्षणैर्मदवारीणां । कर्दमीकृतभूमयः ॥ ९७ ॥
प्रेरिता इव कल्पांत—समीरेण समागताः ॥ धाराधरा इव श्यामाः । स्तंबेरमा विरेजिरे ॥ ९८ ॥
कुद्दालैरिव भूभाग—खननेन खुरोत्करैः ॥ भानुमुच्छालिता धूलि—राछादयत्समंततः ॥ ९९ ॥
तथा विधीयते हेषा । तुरगैर्हृदयंगमैः ॥ स्यादाकारणमन्येषां । वाजिनां वेगराजिनां ॥ ११०० ॥
शस्त्रतूणीरसन्नाह—संपूर्णाया रथावलेः ॥ निर्गच्छंतश्च चीत्काराः । सीत्कारा इव वैरिणां ॥ १ ॥ वा-
तेन कंपितेनेवा—कारयंतो भयद्रुतान् ॥ ध्वजेन सहिताः सर्वे । स्यंदनाश्चेलुरद्भुताः ॥ २ ॥ कृ-
पाणबाणतूणीर—कुंतोग्रखेटपाणयः ॥ उच्छलंतः समायाता । बलीयांसः पदातिकाः ॥ ३ ॥ शाक-
वाजयकारीणि । निमित्तान्यखिलान्यपि ॥ समालोक्यापि ते वीराः । समराय प्रतस्थिरे ॥ ४ ॥
यादवाः पांडवाः पेतु—रकुर्वतो विचारणां ॥ पतंगा इव संग्राम—प्रदीपेषु मुमूर्षवः ॥ ५ ॥ प्रभूतं
कटकं वीक्ष्य । प्रद्युम्नोऽपि स्वमातरं ॥ अकुर्वन् क्षोभनं चित्ते । मुमोच नारदांतिके ॥ ६ ॥ सापि

न् ॥ ८३ ॥ नृपालतनया अन्ये । तारुण्यबलगर्विताः ॥ कातरान् कंपमानांगान् । जरतो जहसु-
र्भृशं ॥ ८४ ॥ केचित्क्रुधा निरुद्धाक्षा । युद्धे धृतमनोरथाः ॥ मिथ आस्फालयामासु—र्भुजा इव
दिनेऽपि च ॥ ८५ ॥ केचिद्दधुः शिलां प्रौढां । हस्ते खेटकसन्निभां ॥ केचिद्दृषन्मयान् स्तंभान् ।
मद्भतो मुद्गरानिव ॥ ८६ ॥ उल्लालयंति कुंतालिं । केचिदौत्कट्ययाजिनः ॥ खड्गानाकृष्य कोशेभ्यो
। भ्रामयंति च चक्रवत ॥ ८७ ॥ तान् केचन समालोक्य । भीता जीवितनाशनात् ॥ केचिदूचुस्त-
था नायं । जेयो वैरी भवादृशैः ॥ ८८ ॥ संग्रामसूचिकां भेरीं । दापयंतु ततो द्रुतं ॥ सुभटास्ते-
न नादेन । मिलिष्यंत्युत्कटा हठात् ॥ ८९ ॥ तानादाय समं युद्धं । क्रियते वैरिणा यदि ॥ दु:सा-
ध्यो विजयोऽस्माकं । तदैव भविता भुवि ॥ ९० ॥ इति श्रुते तु रामेण । रणभेरी प्रवादिता ॥
॥ तेऽपि तस्या निनादेन । गेहाद्योद्धुं समाययुः ॥ ९१ ॥ कस्यचित्कामिनी हस्तं । कस्यचिच्चरणां-
बुजं ॥ कस्यचिद्वसनप्रांतं । भयेन व्यलगत्तदा ॥ ९२ ॥ विन्यती स्ताः समाश्वास्य । युद्धोद्यता वि-
निर्गताः ॥ शूरतादर्शनार्थं ते । वर्माण्यंगे न पर्यधुः ॥ ९३ ॥ संग्रामायोल्लसच्चित्ताः । केचित्संवर्मिता
अपि ॥ तथा प्रफुल्लिता देहे । यथा वर्माणि तुत्रुटुः ॥ ९४ ॥

वाक्य—माकर्ण्यैत्यच्युताग्रजः ॥ वानक्षोभितपाथोधि—रिव प्रचलतां दधौ ॥ ७२ ॥ तया मूर्गाज-
लेनालं । दृढचित्तोऽपि सात्वतः ॥ मग्नस्तदा च सत्यानां । स्फाटितो धैर्यपोतकः ॥ ७३ ॥ अतिधी-
रैस्तदा प्रोक्तं । स्वस्थीकृत्योपचारकैः ॥ समस्तानां त्वमाधारो । धरसि क्षोभतां कथं ॥ ७४ ॥ नाथ
वर्तामहे ताव—त्कीना अनुचरा वयं ॥ एनं विद्वेषिणं दुष्टं । हनिष्यामः क्षणादपि ॥ ७५ ॥ तेषां
वाक्येन चैषोऽपि । धैर्यालंबनमादधौ ॥ धीरो हि धीरसान्निध्या—द्धीरतां दधतेऽधिकां ॥ ७६ ॥ य-
था कृशानुनाध्मातं । रूप्यं रक्तं प्रजायते ॥ सात्वतो गौरवर्णोऽपि । रक्तः कोपादजायत ॥ ७७ ॥
कृत्वा ललाटपट्टे स । भ्रुवौ वक्रत्वसंयुते ॥ बभूव भीषणः कोपा—द्विरूपो हि भवेन्नरः ॥ ७८ ॥
यावत्पांडुमहीशस्य । भीमादयश्च सूनवः ॥ संग्रामायोत्थिताः सर्वे । मानिनो भूरिकोपतः ॥ ७९ ॥
तावता धर्मपुत्रेण । बोधिताः संज्ञयैव ते ॥ ज्ञायते शकुनाभावे । युष्माकं स्थिरता रणे ॥ ८० ॥
प्रकुप्यते भवद्भिः किं । मुधा निजाभिमानतः ॥ ज्ञास्यते शत्रुसंयोगे । स्थिरत्वं धरताधुना ॥८१॥
केचिद्भव्यमिवारातिं । जानते निजचेतसि ॥ कर्षंत इव तत्राग्रे । जगदुर्दुष्टया गिरा ॥ ८२ ॥
वराकोऽयं दुराचारः । कियन्मात्रोऽस्ति नः पुरः ॥ प्रजल्पंत इति क्रोधात् । कर्तयामासुरोष्ठका-

भटा ये मदोत्कटाः ॥ ६० ॥ समस्ता अपि ते राज—लोकाः श्लोकाभिलाषिणः ॥ यूयं भवत यु-
क्ताय । सज्जा लज्जास्ति वो यदि ॥ ६१ ॥ तनया भीष्मभूपस्य । रूपस्य मंदिरं वरा ॥ प्राणप्रिया
मुकुंदस्य । नाम्ना ख्यातास्ति रुक्मिणी ॥ ६२ ॥ वराकदमघोषस्य । तनयं नयवर्जितं ॥ हत्वा सा-
त्वतविष्णुभ्यां । यानीता तां हराम्यहं ॥ ६३ ॥ भवंतो बहवः संति । संग्रामग्रामकारिणः ॥ हीयते
तेषु युष्मासु । सत्सु सैकाकिना मया ॥ ६४ ॥ युष्माकं जीवितव्येन । तर्हि किं लोकनिंदिना ॥
एकाकिनोऽपि मे पार्श्वा—द्यदि चेयं न मोच्यते ॥ ६५ ॥ भवतां चेच्च शक्तिः स्या—न्निजानाम-
पि रक्षणे ॥ कृत्वा संग्राममुद्दामं । मोचयध्वममूं तदा ॥ ६६ ॥ विना युद्धविधानेन । नैनां मोक्षा-
म्यहं क्षणं ॥ मत्तो न चिंतनीया भी—र्वर्तेऽहमपि मानवः ॥ ६७ ॥ युष्माकं युद्धकर्तॄणां । परा-
क्रमपरीक्षणे ॥ अतीवमहती वांछा । प्रवर्तते ममैकशः ॥ ६८ ॥ ततः सर्वेऽपि संभूय । दर्शयिष्यं-
ति चेद्रणं ॥ तर्ह्यहं रुक्मिणीमेनां । मोक्षामि नान्यथा पुनः ॥ ६९ ॥ न देवो व्यंतरो नाह—म-
सुरो न नटो विटः ॥ मया मनुष्यमात्रेण । हृतास्त्येषा स्वशक्तितः ॥ ७० ॥ धीरा ये सुभटाः खेचरा
। भवेयुर्वीरमानिनः ॥ ते सर्वेऽपि ममाभ्यर्णा—दानाय मोचयंत्विमां ॥ ७१ ॥ तस्याभिमानिकं

मनाकिंतु । ममैकं वचनं कुरु ॥ ४९ ॥ सा प्रोचे वचनं तर्हि । किं मम त्वं प्रजल्पसि ॥ सोऽवो-
चद्यत्र वर्तेते । नारदर्षिश्च ते वधूः ॥ ५० ॥ प्रसादं प्रविधाय त्वं । समेत्य च मया समं ॥ तत्र ति-
ष्ठ तयोः पार्श्वे । भयेन परिवर्जिता ॥ ५१ ॥ न च चिंता त्वया कार्या । मुक्त्वैकं नेमिनं जिनं ॥
इतरेभ्यो न मे भीतिः । कृपालुस्तीर्थकृत्स तु ॥ ५२ ॥ पौत्रं वचः समाकर्ण्य । विद्यापराक्रमोत्कटं
॥ जननी चिंतयामास । प्रकरोम्यथ किं विधे ॥ ५३ ॥ यद्यस्य वचनं कुर्वे । नाहं तर्हि पतिव्रता ॥
अन्यथा रोषयोगेन । वैताढ्येऽयं प्रयास्यति ॥ ५४ ॥ कल्पनामिति कुर्वत्या—स्तस्याः प्रादुरभून्म-
तिः ॥ पुत्रस्यैव वचः कुर्वे । स प्रिय उभयोरपि ॥ ५५ ॥

कृत्वा विचारणामेवं । पुत्रेण सह धीमता ॥ प्रयाणमुररीचक्रे । स्नेहलालसया तया ॥ ५६ ॥
तदा स्वविद्यया तेन । मातरं करसंपुटे ॥ गृहीत्वोत्पतितं व्योम्नि । भारंडपक्षिणेव च ॥ ५७ ॥ ग-
त्वा तत्र क्षणं स्थित्वा । जनार्दनसभोपरि ॥ लीलया संस्थितान् सभ्यान् । विनोदाय जगाद सः
॥ ५८ ॥ अहो वीरा रणे धीराः । किं यूयं शर्मणा स्थिताः ॥ युष्माकं स्वामिनी विष्णु—कामि-
नी मयका हृता ॥ ५९ ॥ अहो यादवसंदोहाः । पांडवा रणतांडवाः ॥ अन्येऽपि वासुदेवस्य । सु-

पि नृपिष्ट—न्नाग्यतः शक्तिमद्भुतां ॥ ज्ञात्वा हर्षोल्लसच्चित्ता । माता सा तमन्नापत ॥ ३८ ॥ येन
त्वमुद्यमं कृत्वा । मेलितो मम बंधुना ॥ अथ तं नारदं दृष्टु—काममुत्सहते मनः ॥ ३९ ॥ परो-
पकारिणं तं च । त्वं मेलयाविलंबतः ॥ इत्युक्ते तनयोऽवोच—त्कथं तौ मेलयाम्यहं ॥ ४० ॥ स्व-
स्मिन् यदि कुटुंबेऽहं । प्रथमं मिलितोऽभवं ॥ तर्हि मे मेलयाम्येतौ । सोचे प्राग्जनकं मिल ॥
॥ ४१ ॥ तेजस्विराजिभिः प्राज्यै—र्यादवौघैर्निषेवितं ॥ प्रणामकरणेन त्वं । स्वतातमपि तोषय ॥
॥ ४२ ॥ स प्राहाज्ञातवंशो यः । सुतो विद्याबलान्वितः ॥ विद्याबले दर्शयित्वा । पश्चात्स्वयं प्रका-
शयेत् ॥ ४३ ॥ ततोऽहमेकशः पूर्वं । पित्रा च बांधवैः सह ॥ युद्धं करोमि पश्चान्मां । ज्ञास्यंति
तेऽखिला अपि ॥ ४४ ॥ गत्वा गृहे रंक इव । स्वाख्यां किं कथयाम्यहं ॥ त्वदीयस्य तनूजस्य ।
युक्तमेवं न न्नाषणं ॥ ४५ ॥ तदा माता जगौ वत्स । मावादीस्त्वमिति ध्रुवं ॥ गुरून् प्रणमतां नृ-
णां । न्नवेत्प्रत्युत गौरवं ॥ ४६ ॥ जनकश्च पितृव्यस्ते । बलिनो यादवा अपि ॥ शक्यंते न त्वया
जेतुं । समुदायो हि दुर्जयः ॥ ४७ ॥ एतेषां पुरतः पुत्र । हारिते नमनं हि यत् ॥ तद्भविष्यति
निंदायै । नम प्रथममेव तत् ॥ ४८ ॥ स्वविद्याशक्तिविश्वासं । जानन्नाह स मातरं ॥ मा न्नैषीस्त्वं

नाशितं कथं । स कुत्र वर्तते मुनिः ॥ २५ ॥ तनयोऽज्यदधन्मात—र्यो वैताढ्यशिलोच्चयात ॥ म-
या समं समायात—स्त्वमेव त्वं प्रजल्पसि ॥ २६ ॥ इत्थमेवेति सा प्राह । तदावादीदसौ मुदा ॥
मुक्तोऽस्त्यसौ सकांतश्च । द्वारिकाया बहिर्मुनिः ॥ २७ ॥ हसित्वा मुदिता सोचे । त्वं मयापि समं
हसेः ॥ अपाणिगृहीतस्यापि । क्व ते कांतासमुद्भवः ॥ २८ ॥ प्राज्यां जनयितु प्रीतिं । मातरं प्र-
जजल्प सः ॥ अविनीतं विजानासि । किं मां यदिति जाषसे ॥ २९ ॥ हास्यं यदि करिष्यामि ।
संति स्थानानि भूरिशः ॥ त्वया सह कथं तर्हि । मया तत्प्रविधीयते ॥ ३१ ॥ दुर्योधनेन या क-
न्या । भानवे प्रेषिताजवत ॥ सा मयापहृता जिल्ल—वेषं विधाय वर्त्मनि ॥ ३२ ॥ पुरापि स्वीकृतं
ह्येत—द्युवाभ्यामभवद् ध्रुवं ॥ आद्य उद्वहते पुत्रः । कन्यां दुर्योधनार्पितां ॥ ३३ ॥ आद्योऽहं म-
यि सत्येतां । जानुरुद्वहते कथं ॥ विचार्येति मया हृत्वा । सोढा रक्षति तां मुनिः ॥ ३४ ॥ मयैव
सकलं सत्य—जामया रक्षितं वनं ॥ विनाशितं सरोवापी—कूपादयोऽपि शोषिताः ॥ ३५ ॥ व्य-
त्ययः सर्ववस्तूनां । वसुदेवपराभवः ॥ जनितं सत्यजामाया । विडंबनं मयैव च ॥ ३६ ॥ पित्रोरनु-
द्यमे नैव । पाणिग्रहणनिर्मितेः ॥ वैरिणां च पराभूति—कृतेः संतोषमाप सा ॥ ३७ ॥ आबाल्याद-

तु ॥ १३ ॥ पुंसा चिरंतनेनापि । मध्ये नृपालसद्मनः ॥ सिंहस्य संस्थितिर्दृष्टा । न संश्रुता कदा·
चन ॥ १४ ॥ यदयं दृश्यते गेहा—द्विनिर्गछन् जयंकरः ॥ लीलयास्फालयन् पुछं । रुक्मिण्यास्त·
द्धि चेष्टितं ॥ १५ ॥ नेयं मम लघुभ्रातु—रुचिता मंत्रतंत्रिणी ॥ कुर्यात्कार्मणमप्येषा । विरक्ता
स्त्री हि पापिनी ॥ १६ ॥ ध्यायन्निति पुरः कृत्वा । वामं तं दुर्जयौजसं ॥ स्वहस्तमुत्तरीयेण । संवे·
ष्ट्याकारयच्च तं ॥ १७ ॥ तेन हक्कारितः सोऽपि । रोषात्सन्मुखमागतः ॥ पाणिभ्यां चरणाभ्यां च ।
बलभद्रमताडयत् ॥ १८ ॥ रामोऽपि बलदेवत्वा—त्तस्य घातेन नो मृतः ॥ सज्जीभूय पुनः सोऽ·
पि । द्रुपद्भिस्तमतर्जयत् ॥ १९ ॥ तथापि न मृतः सोऽपि । निरुपक्रमजीवितः ॥ इति युद्धे मिथो
जाते । न कोऽप्याप जयाजयौ ॥ २० ॥ ततः प्रादुर्भवत्पुण्यः । प्रद्युम्नः सिंहरूपभाक् ॥ चपेटैर्बल·
मास्फाल्य । प्रापयद्विष्णुपर्षदि ॥ २१ ॥ पुरतः सात्वतस्यापि । संप्राप्य जयमद्भुतं ॥ स्वरूपं प्रकटीकृ·
त्य । मातरं प्रणनाम सः ॥ २२ ॥ मात्रा पराक्रमं सूनो—रवलोक्य प्रहृष्टया ॥ पृष्टं तया त्वया व·
त्स । क्व मुक्तो नारदो मुनिः ॥ २३ ॥ उपकारी विना हेतुं । बंधुः संबंधमंतरा ॥ अनाहूतः सहा·
यः स । भक्तः संपूर्णवत्सलः ॥ २४ ॥ पूर्वं शुद्धिः कृता येन । येन त्वं मेलितो मम ॥ येन मे

स्तवास्ति वल्लभः ॥ २ ॥ अनल्पबलसंयुक्तै—रपि यादवसंचयैः ॥ आदेशः खंड्यते नास्य । देव-
तादिष्टवाक्यवत ॥ ३ ॥ बलेन कलया शस्त्र—संभारैरपि सङ्गणे ॥ अनेन सदृशः कोऽपि । योद्धा
न वर्तते भुवि ॥ ४ ॥ एतस्य पादयोः पुत्र । पतनेनैव जीवनं ॥ अन्यथा न ततोऽस्यांह्रि—द्वित
यं प्रणम द्रुतं ॥ ५ ॥ स्मित्वाह तनयो मातः । कृत्वा संग्राममेकशः ॥ एतस्य मम चाशेष—वीरः
त्वं दर्शयामि ते ॥ ६ ॥ पश्चात्सुखकरं वाक्यं । वदसि त्वं यथा मम ॥ तथाहं प्रकरिष्यामि । कुर्वे
पूर्वं कुतूहलं ॥ ७ ॥ प्राप्तस्य चिरकालेन । मा भूदेतस्य घातनं ॥ स्नेहेनेति पुनः प्रोचे । वत्स त्वं
लग पादयोः ॥ ८ ॥ स कोऽपि भुवने नास्ति । युध्यतेऽनेन यः पुमान् ॥ बलीयानपि रामस्य ।
प्रणामेनैव जीवति ॥ ९ ॥

सुतोऽवक् क्षणमेकं त्वं । निःशंका पश्य कौतुकं ॥ इत्युक्त्वाश्वासिता तेन । जननी स्नेहला
लसा ॥ १० ॥ प्रतोलीस्थेन विप्रेण । योद्धुं समेति सात्वतः ॥ तावता संहृता तेन । माया विप्र-
मयी कृता ॥ ११ ॥ तां संहृत्य मृगेंद्रोऽसौ । बभूव भूरिकेसरः ॥ चारुदंष्ट्र ऊर्ध्वपुच्छः । सिंहनादेन
संयुतः ॥ १२ ॥ तं गेहांतरतो वीक्ष्य । समागच्छंतमुत्कटं ॥ रामोऽपि क्षोभनं प्राप्तः । सहसा दर्शनेन

धम ॥ स्वरूप वात ।वनाया । तर्हि ब्रूपे कथ मम ॥ ९१ ॥ कोपेनोचे तदा रामो । माकार्षीः स्त्वं कदाग्रहं ॥ तंनत्का मया प्रोक्त—मुत्तिष्ठोत्तिष्ठ दुष्टधीः ॥ ९२ ॥ उत्त्रास्यसि न यर्हि त्वं । तत्कदाग्रहजं फलं ॥ गृहाणेति भणित्वा स । तत्क्रमौ पाणिनाग्रहीत् ॥ ९३ ॥ गृहीत्वा तौ पुरद्वार—प्रांतं यावत्स सात्वतः ॥ अघर्षत्त पुनः पृष्ठे—ऽपश्यत्तत्रैव तद्वपुः ॥ ९४ ॥ विद्याप्रयोगमालोक्य । मुशली रुक्मिणीं जगौ ॥ मयापि सह चेष्टां त्वं । करोषि विद्यया स्वयं ॥ ९५ ॥ त्वं नूनं न हि सामान्या । शाकिनी वर्तसेऽथवा ॥ त्यजत्येव गृहं सापि । त्यक्तोऽहमपि न त्वया ॥ ९६ ॥ एका स्त्री मानिता भर्त्रा । सापि विद्यासमन्विता ॥ अन्यं कं मानयेन्मर्त्यं । तुच्छप्रकृतिका मदात् ॥९७॥ ततो मामपि विद्याया । बलेनेयं न पीडयेत् ॥ तथा विडंबयाम्येनां । यथा जानात्यसावपि ॥९८॥ भाषमाणो निजावक्त्रा—दिति कोपारुणेक्षणः ॥ पुनरप्यागतो द्वार—देशे संकर्षणः क्षणात् ॥ ॥ ९९ ॥ तं वीक्ष्य भृकुटीभीमं । प्रद्युम्नः प्राह मातरं ॥ वीरमानी क्रुधाक्रांतः । कोऽयं समेति पूरुषः ॥ १००० ॥ सोचे पुत्र पितृव्यस्ते । श्वशुरोऽयं समस्ति मे ॥ ज्येष्ठः सहोदरस्ताव—कीनस्य जनकस्य च ॥ १ ॥ निःशेषकार्यकर्तायं । संग्रामायैति सात्वतः ॥ प्राणेभ्योऽपि निजेभ्यश्च । पितु·

ज्ञास्याम्यहं तस्याः । प्रत्ययं स्तंज्ञाने हृदि ॥ ७९ ॥ प्रजल्पन्निति रुक्मिण्या । गृहद्वारं स यावता ॥
समेतस्तावता तत्र । सुप्तं ब्राह्मणमैक्षत ॥ ८० ॥ अन्नेन जठरं भृत्वा । रुध्ध्वा मार्गं समंततः ॥ द्वा-
रे प्रसुप्तमालोक्य । वाडवं प्रजजल्प सः ॥ ८१ ॥ अहो ब्राह्मण मार्गं त्वं । गंतुं मुंचोत्सुकस्य मे
॥ सद्भिरुल्लंघनीयो न । नूनं विप्रो विशेषतः ॥ ८२ ॥ तेनेत्युक्ते स भूदेवो । जगाद यादवोत्तम ॥
सत्यभामागृहे भुक्त्वा—धुनैवाहं समाययौ ॥ ८३ ॥ पदमात्रमपीतोऽहं । नास्मि गंतुमहो क्षमः ॥
पणं कृत्वा गृहे तस्या । भुक्तमन्नं महत्तमं ॥ ८४ ॥ वलित्वा त्वमतो याहि । सांप्रतं कृपया मम ॥
उल्लातुमक्षमो वर्ते । श्रुत्वेति सात्वतोऽवदत ॥ ८५ ॥ कुक्षिंभरे अरे विप्र । भृत्वा जठरमात्मनः ॥
सुप्तः कार्यवियुक्तस्त्व—मस्माभिः सह भाषसे ॥ ८६ ॥ कालक्षेपविधानेन । मम कार्यं विसीदति ॥
अस्ति प्रयोजनं प्राज्यं । भवने गमने मम ॥ ८७ ॥ आकंठं परकीयं त्वं । लब्ध्वा यत्नं विनान्नकं
॥ भुक्त्वाजगरवद्भूमौ । पतितो वर्तसे द्विज ॥ ८८ ॥ भांडान्यन्नेन पूर्णानि । संभवेयुः कदाचन
॥ उदरं तु त्वदीयं न । संभवेद्धास्यवाधम ॥ ८९ ॥ भवेद् द्विजन्मनां प्रायो । भक्षणे लौल्यमुच्च-
कैः ॥ भक्षितं त्वयका तेन । भविष्यत्यप्रमाणकं ॥ ९० ॥ एवमुक्ते द्विजेनोचे । त्वमहो क्षत्रिया-

कुशलं तव देहस्य । यदि पुत्र भविष्यति ॥ समस्तमपि संपूर्णं । समस्ति वस्तु तर्हि मे ॥ ६८ ॥
जनन्या वचनं श्रुत्वा । निःशंकं नंदनोऽगदत् ॥ बलदेवजनैरेतै—र्मा मां भापय सर्वथा ॥ ६९ ॥
यथा हरेः पुरो हस्ति—घटा नश्यति दूरतः ॥ तथापी त्वत्प्रसादेन । नंक्ष्यंति पुरतो मम ॥ ७० ॥
कथयित्वेति मातुः स । विद्यां प्रैषीत्स्वशक्तितः ॥ गत्वा प्रतोलिकां सापि । बभूव विप्ररूपभृत ॥
॥ ७१ ॥ अतिस्थूलोदरं श्रांत—प्रौढदेहं भयावहं ॥ रूपं कृत्वा च विस्तार्य । क्रमौ तद्द्वार्यशेत सः
॥ ७२ ॥ तावत्समागतास्तत्र । रामेण प्रहिता भटाः ॥ विद्यया स्तंभयित्वा तान् । मुमोचैकं प्रज
ल्पितुं ॥ ७३ ॥ तेन केशवसंसद्या—सीनस्य नीलवाससः ॥ प्रोक्तं सोऽपि क्रुधाध्मातो । जगाद
कठिनं वचः ॥ ७४ ॥ माननीया न केनापि । रुक्मिणी मंत्रधारिणी ॥ संजातास्ति यतः कृष्णो—
ऽनया मंत्रैर्वशीकृतः ॥ ७५ ॥ मंत्रस्य बलमेतस्या । गत्वा पश्याम्यहं द्रुतं ॥ इत्युदित्वा स उत्थाय
। रुक्मिणीगेहमागमत् ॥ ७६ ॥ गृहासन्नं समागत्य । हसित्वा चाह रुक्मिणी ॥ विद्यासिद्धा प्रजा-
तासि । सेविता कापि योगिनी ॥ ७७ ॥ त्वेयदा जनितो वश्यो । बलीयानपि माधवः ॥ ममापि
सेवका युद्धे । योद्धारः स्तंभितास्त्वया ॥ ७८ ॥ भवेच्च स्तंभनं मेऽपि । तव यद्यत्र विद्यया ॥ तर्हि

नीं प्रोचे । मातस्त्वं सुकुमालधीः ॥ दृढा विद्याधरी सैव । सोढं मे रुदनं यया ॥ ५६ ॥ जनन्याः
पूरयित्वेति । कामनां मदनो मुदा ॥ जग्राह पुण्यतारुण्य—वरेण्यं रूपमद्भुतं ॥ ५७ ॥ ननाम ते
न रूपेण । जननीक्रमणद्वयं ॥ विनीतो हि सुतो मातुः । पूरयित्वा स्पृहां नमेत ॥ ५८ ॥ निरी
क्ष्य तनयं सर्व—मनोरथप्रपूरकं ॥ विद्याप्रद्योततः सद्य—स्तुतोष जननी हृदि ॥ ५९ ॥ सर्वरत्ना
धिकं पुत्र—रत्नं ज्ञात्वा विशेषतः ॥ पुनरालिंगनं दत्वा । जननी यावता स्थिता ॥ ६० ॥ लुंटितुं
निलयं ताव—द्बलभद्रेण कोपतः ॥ उत्कटाः सुभटास्तत्र । संप्रेषिताः समाययुः ॥ ६१ ॥ तान् स
मालोक्य बीभत्सान् । विविधायुधधारिणः ॥ प्रद्युम्नो मातरं प्राह । क एते वीरमानिनः ॥ ६२ ॥
सावोचत्सत्यभामाया । लोकास्त्वया विडंबिताः ॥ तयोक्तं बलदेवस्य । ते नैते प्रेषिताः क्रुधा ॥६३॥
पणः कृतो यदा पूर्वं । मया च सत्यभामया ॥ तदायं प्रतिभू रामो । यादवेषु कृतोऽभवत् ॥ ६४ ॥
तेन संप्रेषिता एते । लुंटिष्यंति गृहं मम ॥ नैषां निवारकः कोऽपि । वर्तते हि बलो बली ॥ ६५ ॥
इति दीनवचो मातु—र्निशम्य मदनोऽवदत् ॥ निरीक्षस्व बलीयस्त्वं । रामस्य दर्शयाम्यहं ॥ ६६ ॥
मातोवाचाधुना बाल—स्त्वमेते युद्धकारिणः ॥ तिष्ठ तिष्ठ ततो वत्स । मौनमाधाय मंदिरे ॥६७॥

दर्शयामि चमत्कार—कारं तं तर्हि वेगतः ॥ ४४ ॥ कथयित्वेति बालस्य । रूपमादाय सुंदरं ॥ स
स्थितः पुरतो मातु—स्तयापि स निरीक्षितः ॥ ४५ ॥ तं दृष्ट्वा जननी चित्ते । व्यचिंतयदहो मम
॥ अथाप्यस्ति महद्भाग्यं । सुतो विद्यायुतो यतः ॥ ४६ ॥ तमादाय निजोत्संगे । संस्थाप्य च प्र·
मोदतः ॥ अगायद्बालगीतानि । मधुरेण स्वरेण सा ॥ ४७ ॥ आत्मीयकामनापूर्ति—करणार्थं त·
यांजसा ॥ स्तन्यपानं तनूजस्य । तस्याकार्यत हर्षतः ॥ ४८ ॥ तस्य खेलनवस्तूनि । चानितानि
तया पुनः ॥ सुवर्णरूप्यरत्नादि—विनिर्मितान्यनेकशः ॥ ४९ ॥ सोऽपि तानि समादाया—खेल·
च्छैशवतः क्षणं ॥ क्षणं रेणौ क्षणं भूमौ । मातुरुत्संगगः क्षणं ॥ ५० ॥ क्षणं मातुः करांगुल्यां ।
विलग्नः प्रांगणे चलन् ॥ किंकिणीनां रणत्कारैः । सोऽपूरयन्निकेतनं ॥ ५१ ॥ बालकोचितभूयिष्ठा—
भरणैः स विभूषितः ॥ प्रतिबिंबमिवार्कस्य । रराज देहतेजसा ॥ ५२ ॥ क्रीडां कुर्वन्मनो मातु—
र्मोहयन् मिष्टभाषया ॥ ययाचे भक्षणं सापि । पक्वान्नं तं समार्पयत् ॥ ५३ ॥ तदा बालोऽब्रवीत्तन्न
। याचेऽहं सुखभक्षिकां ॥ वदित्वेति तथारोदी—द्यथा सा सोढुमक्षमा ॥ ५४ ॥ कठोरं रुदनं त·
स्य । निशम्य जननी जगौ ॥ अलं बाल त्वदीयेन । भीमेन रुदनेन तु ॥ ५५ ॥ हसन् स जन·

केतनं निकेतनं ॥ ३२ ॥ अथाभ्रच्छन्नमार्तंड । इवावृतमहोदयः ॥ सूनो वियोगिनीं मां त्वं । संता-
पयसि किं मुधा ॥ ३३ ॥ दुःखिनीं स्नेहिलां वाणीं । मातुराधाय चेतसि ॥ तेन व्यक्तीकृतं रूपं ।
विद्यया क्रियते न किं ॥ ३४ ॥ लक्षणैर्लक्षितं सर्वै—र्भूषणैश्च विभूषितं ॥ नरनारीमनोहारि । रू-
पं स्वाभाविकं बभौ ॥ ३५ ॥ जननीमनसस्तुष्टि—पुष्टिसंपादनाय सः ॥ तद्रूपं प्रकटीकृत्या—नम
त्तस्याः क्रमांबुजं ॥ ३६ ॥ तदा देवकुमाराभं । रूपमालोक्य रुक्मिणी ॥ प्रीतिं यां प्राप तां देवा ।
अपि नो वक्तुमुद्यताः ॥ ३७ ॥ मिलितं चिरकालेन । तनयं विनयान्वितं ॥ आलिलिंग चुचुंबो-
च्चै—र्मौलौ मालिसमं कुले ॥ ३८ ॥ आलिंग्य जननीपुत्रौ । मुहुर्मुहुः प्रमोदतः ॥ सुखदुःखभवां
वार्तां । पप्रच्छतुः परस्परं ॥ ३९ ॥ तदा रुक्मिण्यवक्पुत्र । दुःखं तव वियोगतः ॥ इयंतं समयं या
व—द्भूयो बभूव दुस्सहं ॥ ४० ॥ किंतु पुण्यप्रसंगेन । त्वमद्य मिलितो मम ॥ न मया शैशवं किं-
तु । पापिन्या तव वीक्षितं ॥ ४१ ॥ कष्टेन नवमासांस्त्वं । मयका जठरे धृतः ॥ धन्या कनकमा
ला सा । यया बाल्येऽपि लालितः ॥ ४२ ॥ पुत्रस्य शैशवालोक—स्नेहयालु मनो विदन् ॥ प्रद्यु
म्नो मातुराचख्यौ । सर्वविद्याविचक्षणः ॥ ४३ ॥ मातर्मे शैशवं द्रष्टु—मभिलाषस्तवास्ति चेत् ॥

सुरः ॥ २१ ॥ स्थितमग्रे समालोक्य । रुक्मिणी प्रजजल्प तं ॥ यो विद्याभृत्कुले वृद्ध—स्त्वं मे वत्सः प्रवर्तसे ॥ २२ ॥ विना विद्याभृतां विद्यां । न भवेद्भक्तिरीदृशी ॥ मायारूपं ततो मुक्त्वा । स्वस्वरूपं प्रदर्शय ॥ २३ ॥ वत्सातुच्छगुणस्त्वं च । त्वं मे सांत्वय मानसं ॥ कुलीनस्य तनूजस्य । हास्यं योग्यं न मातरि ॥ २४ ॥

नारदेनोदितो यस्त्वं । विद्याधरीप्रवर्धितः ॥ युक्तः षोडशभिर्लाभै—स्त्वमेव तनयो मम ॥२५॥ उपाया बहवः पुत्र । त्वदर्थं जनिता मया ॥ प्रेष्याश्च प्रेषिताः स्थाने । स्थाने त्वदीयशुद्धये ॥२६॥ संप्राप्ता कापि शुद्धिर्न । त्वदीया पापतो मया ॥ किंचिदद्यापि जागर्ति । सुकृतं मिलितोऽसि यत् ॥ २७ ॥ तनये जनकान्मातुः । प्रायो रागोऽधिको भवेत् ॥ इति प्रेमपरीक्षायै । तेन तस्याः प्रतीरितं ॥ २८ ॥ हे भद्रे येन पुत्रेण । सुंदराकारधारिणा ॥ लोके स्यान्महती कीर्तिः । पुत्रः स एव सौख्यदः ॥ २९ ॥ कुरूपैर्मादृशैः पुत्रै—रुपहास्यविधायिभिः ॥ किं करिष्यसि भूयिष्ठ—परिवारर्द्धिसंयुता ॥ ३० ॥ श्रुत्वा तद्वचनं सोचे । मनाग्बाष्पार्द्रलोचना ॥ यादृक्तादृक्सुतो भूया—त्स एव कुलमंडनं ॥ ३१ ॥ विना तेन परीवार—समृद्धिं सकलामपि ॥ अहं वृथा विजानामि । स-

॥ रुक्मिणीसत्यभामाभ्यां । पणः कृतोऽत्रवत्पुरा ॥ १० ॥ तदर्थं प्रेषिता दास्यः । सत्यया सत्यभा
मया ॥ तया तस्या मनुष्याणां । कृतेदृशी विडंबना ॥ ११ ॥ नाशाकर्णशिरःकेश—हीनं भामाप-
रिछदं ॥ अवलोक्य हसित्वेष—ज्जगाद हलिनंप्रति ॥ १२ ॥ पतिर्यस्या न विद्यते—लये एका
किनी तु सा ॥ इयंतोऽमी बलीयांसो । विडंबिताः कथं तया ॥ १३ ॥ इति हास्यवचो विष्णो—
र्डुःखैर्निशम्य सात्वतः ॥ प्रजजल्प प्रकोपेन । हास्यं भ्रातः करोषि किं ॥ १४ ॥ पणः कृतस्तया कृ-
त्वा । साक्षिणं यादवेषु मां ॥ अधुना चेत्करोत्येषा । विरुद्धं कृत्यमीदृशं ॥ १५ ॥ अहमेव प्रदा-
स्यामि । शिक्षां तस्याः किलोचितां ॥ चालिताः कथयित्वेति । बलदेवेन मंत्रिणः ॥ १६ ॥ तुष्टि-
वाक्यप्रदानेन । गृह्णंतो हलिनो गुणान् ॥ सत्यभामागृहं जग्मु—र्मिष्टं वाक्यं हि सौख्यकृत ॥१७॥
गतेषु तेषु भामाया । धाम रामेण सेवकान् ॥ आकार्यावादि रुक्मिण्या । लुंटनीयं गृहं द्रुतं ॥
॥ १८ ॥ संप्राप्य बलदेवस्या—देशं तस्या निकेतने ॥ लुंटनाय गता याव—त्ते तावद्यदजायत ॥
॥ १९ ॥ कथयामि समासेन । तच्चमत्कारकारकं ॥ भव्याः शृणुत रुक्मिण्याः । प्रद्युम्नस्य स्वरूपकं
॥ २० ॥ विगुप्ते सत्यभामाया । लोके गेहं गते सति ॥ पूर्वरूपं स आदाय । तस्थिवान् काकिणी-

रामस्य । हष्टिरागविधायिनः ॥ ९७ ॥ किं तदशस्य कृष्णस्यो—पालंभं दापयाम्यहं ॥ रुक्मिणीकृतमन्यायं । रामस्यैव वदाम्यहं ॥ ९८ ॥ विमृश्येति निजामात्या—नाकार्य भामयोदितं ॥ रामस्य पुरतो यूयं । मम वाक्येन गच्छत ॥ ९०० ॥ गत्वा विडंबितं सर्वं । ज्ञात्वा परिकरं मम ॥ साक्षिणो बलभद्रस्य । प्रदर्शयत सत्वरं ॥ १ ॥ कथनीयं च युष्माभिः । पुरो रामस्य साक्षिणः ॥ केशदानमकृत्तस्याः । प्रतिपन्नं तया पुरा ॥ २ ॥ पापया तु तदर्थं च । निकेतने गतो मम ॥ विडंबितः परीवारः । कथं नक्रादिकर्तनात् ॥ ३ ॥ स्वीकृत्य वचनं तस्या—स्ततस्तेऽपि प्रतस्थिरे ॥ गदितुं बलदेवस्य । स्थितस्य विष्णुसंसदि ॥ ४ ॥ सभामध्ये समायातं । सत्यभामापरिच्छदं ॥ कदर्थितं समालोक्य । जहास मधुसूदनः ॥ ५ ॥ समीक्षितुं मुकुंदस्य । स्वरूपं सत्यभामया ॥ कुत्रा संस्थितया जाला—तराले प्रविलोकितं ॥ ६ ॥ स्वतंत्रदर्शनात्कृष्ण—हास्यं चाप्यवलोक्य सा ॥ चित्तेऽज्ञासीदनेनैव । शिक्षिता साकरोदिदं ॥ ७ ॥ ततोऽस्य पुरतो नैव । कथनेन प्रयोजनं ॥ तथापि सात्वनस्यैवा—वश्यं निवेद्यमेव च ॥ ८ ॥ इति ज्ञात्वा स्वभृत्यं सा । ज्ञापयित्वा निवेदितं ॥ तेन मंत्रिपुरः प्रोक्तं । मंत्रिणोऽप्यवदन् बलं ॥ ९ ॥ हे सात्वत विधाय त्वां । जनार्दनं च साक्षिणं

कचान् ॥ ७६ ॥ रुक्मिणीस्तुतिमाकर्ण्य । भामाभाणीदमर्षतः ॥ वर्णिता ये गुणास्तस्या—स्तस्यां संतु नवाथ ते ॥ ७७ ॥ गुप्तास्तु केन दुष्टेन । केन छिन्ना च नासिका ॥ श्रवणच्छेदिनाः केन । केन मस्तककुंतलाः ॥ ७८ ॥

तयेत्युक्ते स्वहस्तान्यां । तत्र दास्यो व्यलोकयन् ॥ तावत्तदुदितं सर्वं । विदांचक्रुः सवेदनं ॥ ॥ ७९ ॥ तदा तासां समस्तेषु । छिन्नेष्वंगेषु वेदना ॥ बभूव महती चक्रु—र्विलापांस्ता तया भृशं ॥ ९० ॥ विलपंतीरमूर्दृष्ट्वा । सत्यभामाथ कोपतः ॥ अब्रवीत्केन युष्माकं । वपुःपीडा विनिर्मिता ॥ ९१ ॥ ताः प्राहुर्न विजानीमो । वयं पीडानिबंधनं ॥ त्वत्प्रेषिता गतास्तत्र । साप्यदाद्वेणिकां मुदा ॥ ९२ ॥ तां समादाय तुष्यंत्य—स्त्वद्गृहं या वदागताः ॥ त्वया पृष्टाभिरस्माभिः । मा ज्ञाता छेदसंभवा ॥ ९३ ॥ दासीनामुदितं श्रुत्वा । भामा बभाण चेर्ष्यया ॥ नैतेन केवलं यूय—मेवाहमपि पीडिता ॥ ९४ ॥ अकृत्यं यदिदं जातं । तद्रुक्मिणीप्रभावतः ॥ अन्यथा दासदासीर्मे । न हि कोऽपि पराभवेत ॥ ९५ ॥ दासीषु परिभूतासु । विडंबिताहमेव हि ॥ पातकिन्यानयालज्जा । रक्षिता सर्वथा न मे ॥ ९६ ॥ विवेकः स्नेहतस्तस्यां । न वर्तते मनागपि ॥ सगोविंदस्य

प्रभावादुग्रद्विलोव च ॥ ७६ ॥ दासीनां मध्यतस्तासां । प्रेषितानां च ज्ञामया ॥ महत्याश्च शिरःके-
शां—श्छिेद नापितः पुनः ॥ ७७ ॥ निःशेषान् सदृशान् कर्तुं । सार्थे याः पुरुषस्त्रियः ॥ तासाम-
पि तथाछेत्सित् । ताभिर्ज्ञातं यथा न वा ॥ ७७ ॥ कुतूहलविलोकाय । तत्पुरो मानवा गताः ॥
ताश्च तांश्चेदृशान् वीक्ष्या—हसन्मिथः शनैः शनैः ॥ ७८ ॥ केशानां पटलीं भृत्वा । हृष्टा दास्यो
यदा गताः ॥ तदा मार्गेऽपि ता दृष्ट्वा । हसंति मानवाः समे ॥ ७९ ॥ हसतस्तान् समालोक्य ।
दास्योऽजानन् स्वचेतसि ॥ अस्माकं रूपसंपत्ती—र्दृष्ट्वा हसंति नागराः ॥ ८० ॥ अहो धन्या स-
त्त्वाढ्या । मान्यापि नरकद्विषः ॥ सौजन्यात्प्रददौ केशान् । वाचं पालयितुं निजां ॥ ८१ ॥ गायं-
त्य इति रुक्मिण्या । मुदा गुणगणावलिं ॥ नृत्यंत्यश्चातिहर्षेण । प्रापा ज्ञामानिकेतनं ॥ ८२ ॥ स-
त्यभामाप्रणद्दासी । रे रे कस्याः स्तुतिं मुखैः ॥ जनयंत्योऽतिहर्षेण । यूयमागछथालयं ॥ ८३ ॥
रुक्मिण्या यादृशी दृष्टा । सौजन्यगुणसंततिः ॥ न तादृश्यपरस्त्रीणां । विलोकिता मनागपि ॥८४॥
एका तु वल्लभा विष्णो—रन्यत्सौजन्यसद्गुणाः ॥ तृतीयं तच्छिरो मृष्टं । वर्ण्यतेऽसौ ततो भृशं ॥
॥ ८५ ॥ अस्माभिस्त्वद्वचोयोगा—द्रुक्मिणीमंदिरे गतं ॥ स्ववचःपालनार्थं सा । विनयात्प्रददौ

किमर्थं यूयमागताः ॥ ताः प्रोचुः प्रेषिताः सत्य—भामया वयमागताः ॥ ६५ ॥ पुनरप्यब्रवीत्सैवं । लोकनापितसंयुताः ॥ किं कारणं समुद्दिश्य । भामया प्रेषिता इह ॥ ६६ ॥ ताः प्राहुर्विनये नैव । पुरा स्वामिनि यः पणः ॥ कृतोऽभवद्युवाभ्यां च । तदर्थं प्रेषिता वयं ॥ ६७ ॥ तत्स्वकीयं पणं स्मृत्वा । चेद्दास्यसि शिरोरुहान् ॥ तर्हि त्वं देहि नो देय—मस्माकं खलु दूषणं ॥ ६८ ॥ तासामेवं समाकर्ण्य । वचनं चित्तशोचनं ॥ मायामयी तदावादी—द्युष्माभिः सुंदरं कृतं ॥ ६९ ॥ सेव्यसे वकभावो हि । तादृशो वर्तते खलु ॥ ततो दोषो न युष्माकं । स्वस्वामिनीवचःकृतेः ॥ ७० ॥

आकार्याश्च दिवाकीर्तिं । यूयं गृह्णीत वेणिकां ॥ गृहीत्वा च स्वस्वामिन्यै । प्रदेया संमदाय सा ॥ ७१ ॥ इत्युक्ते नापितं तूर्ण—माकार्य ता बभाषिरे ॥ समेत्य रुक्मिणीदेव्या । गृहाण त्वं शिरःकचान् ॥ ७२ ॥ विन्यंस्तासां गिरा याव—त्तत्पार्श्वं स समागतः ॥ एषाप्यभिदधत्ताव—द्वेणीं गृहाण निर्भयं ॥ ७३ ॥ तथेति कथिते सोऽपि । ग्रहीतुं मौलिकुंतलान् ॥ उद्यतोऽभूच्च दासीभि—रधश्च पटली धृता ॥ ७४ ॥ तदा विद्याप्रभावेण । स्वकीय नक्र एव सः ॥ क्षुरप्रं वाहयामास । छिन्ननक्रश्च सोऽभवत् ॥ ७५ ॥ ततस्तत्रागतानां स । क्रमेणांगुलिकर्णयोः ॥ छेदश्चकार विद्यायाः ।

॥ ५० ॥ मयापि स्वीकृतं तस्या । वचनं दुःखदायकं ॥ साक्षिणौ तत्र गोविंद—रामौ प्रजनितौ तथा ॥ ५१ ॥ मम पुत्रस्तु केनापि । पापिना नाकिना हृतः ॥ ग्रामादास्यः समायांति । ग्रहीतुं मम कुंतलान् ॥ ५२ ॥ किं कुर्वेऽथेति दिङ्मूढा । संजातास्मि मुनीश्वर ॥ बुद्धिः शुध्यति केचिन्न । ततो रोदिमि दुःखिता ॥ ५३ ॥ पुरा शिरःकचोच्छेद—भयादुद्भमानसा यदा ॥ जाताहं मेलयिष्यामि । तनयं तव रुक्मिणि ॥ ५४ ॥ एवमाश्वासिता गेहे । स्थिताहं नारदर्षिणा ॥ पुत्रकामनया पूर्व—मेव वा न मृता ननु ॥ ५५ ॥ न मया मरणं पूर्वं । तस्य वाक्येन निर्मितं ॥ सुतोऽपि मिलितो मे न । केशदानं त्वजायत ॥ ५६ ॥ मुनिर्वक्ताण चिंतां त्वं । मा कृथा मानसे वृथा ॥ अद्यापि प्रबलं भाग्य—मस्ति पुण्योदयोऽपि ते ॥ ५७ ॥ मिलिष्यति तनूजोऽपि । केशदानं विना तव ॥ इत्युक्त्वाऽस्थापयत्तत्र । मायारूपां च रुक्मिणीं ॥ ५८ ॥ तावत्समागता दास्यः । प्रेषिताः सत्यभामया ॥ तां स्थितामासने दृष्ट्वा । प्रणेमुस्ताः समा अपि ॥ ६० ॥ प्रणिपत्यावदन् दास्यो—ऽस्माकं देवि न दूषणं ॥ चिंतनीयं त्वया चित्ते । दोषादोषविचारिके ॥ ६१ ॥ वयं वर्तामहे दास्यो । दास्योचितवपुर्लताः ॥ स्वामिन्युदितकर्तव्य—निष्पादनोपजीविनाः ॥ ६२ ॥ मायारूपावदद्दासी ।

समानयत सत्वरं ॥ ३९ ॥ तयेति स्पर्धया प्रोक्ते । दास्यः पटलिकाकराः ॥ कुर्वत्यो गीतगानानि
। यययू रुक्मिणीगृहं ॥ ४० ॥ तासामागमनं ज्ञात्वा । रुरोद सापि भूरिशः ॥ बलं हि रुदनं चैव ।
स्त्रीणां दुःखे समागते ॥ ४१ ॥ अश्रुपातं प्रकुर्वाणां । तां दृष्ट्वा मुनिरूचिवान् ॥ किं संप्रत्येव ते
दुःख—कारणं येन रोदिषि ॥ ४२ ॥ सा जगाद पुरस्तात्त । मुने किं कथयाम्यहं ॥ अश्रव्या सु-
खिभिर्लोकै—र्निंद्या कर्मकथा मम ॥ ४३ ॥ मायामुनिर्जगौ मात—र्निःशंकं पुरतो मम ॥ त्वं नि-
वेदय दुःखानां । कारणं कर्णदारणं ॥ ४४ ॥ तेनेत्युक्ते जगादासौ । वाक्येन गद्गदेन तु ॥ सत्य
भामादिमा देवी । स्वामिनो वर्तते हरेः ॥ ४५ ॥ रूपेण चाभिमानेन । लावण्येन समृद्धि
भिः ॥ साधिका वर्तते मत्तो । मत्तेवोरुविलासिनी ॥ ४६ ॥ अहं तु नारदप्रोक्त—गुणैर्जातानुरा-
गिणी ॥ परिणिता मुकुंदेन । मयि रागं च बिभ्रता ॥ ४७ ॥ मानिताहं नवीनत्वा—न्माधवेन वि
शेषतः ॥ मात्सर्यं सा मया साकं । चकार सविकारहृत ॥ ४८ ॥
मात्सर्यतस्तयान्येद्यु—र्निवेदितं पुरो मम ॥ यस्याः पुत्रस्य वीवाहः । प्रथमं स्यान्महोत्सवैः ॥
॥ ४९ ॥ तस्या अपरया देयाः । शिरःसर्वशिरोरुहाः ॥ पुत्रक्रमणपूजायै । पण एवं विधीयते ॥

मिति प्रमोदपूरतः ॥ इतश्चावादि दासीभिः । सत्यभामापुरो द्रुतं ॥ ३१ ॥ वनपालाः समेत्यात्र ।
कथयंति भयद्रुताः ॥ भानुवीवाहकृत्यर्थं । रक्षितं यदभूद्वनं ॥ ३२ ॥ तत्सर्वमपि केनापि । पापेन
पापशालिना ॥ कृतं फलादिभी रिक्त—मुद्वसीभूतगेहवत् ॥ ३३ ॥ केनापि तृणयुक्तापि । निस्तृ-
णा पृथिवी कृता ॥ जलाशयाश्च केनापि । पानीयेन विना कृताः ॥ ३४ ॥ केनापि तुरगारूढो ।
भानुर्निपातितो भुवि ॥ न ज्ञायते क उत्पातो । भावी स्वामिनि दुस्सहः ॥ ३५ ॥ जपंती जाप-
मास्येन । श्रुत्वा दास्युदितं वचः ॥ कासौ या मामपि जापात् । क्षोभयतीत्यचिंतयत् ॥ ३६ ॥
ध्यानमध्येंतरायस्य । भवनेन मनोरमं ॥ रूपं भावि न मे हाहा । दाढर्येनेति जजाप सा ॥
॥ ३४ ॥ तदापि तुमुलं कृत्वा । दासा दास्योऽपि मालिकाः ॥ प्रजजल्पुर्भयाध्यानं । मुक्त्वोक्तं स-
त्यभामया ॥ ३५ ॥ अरे दास्यो द्विजन्मा स । मयि सौभाग्यवर्धकः ॥ दृश्यतां वर्तते कुत्र । ताः
प्राहुस्तस्य चेष्टितं ॥ ३६ ॥ गतं पुरातनं रूपं । नवीनमपि नागतं ॥ संजातोभयतो भ्रष्टा । हा हा
विधिविलासतः ॥ ३७ ॥ कर्तव्येन निजेनैषा । विषादमिति तन्वती ॥ जगौ सपत्न्यमर्षेण । दासी-
श्चेतसि विह्वला ॥ ३८ ॥ नापितं च समादाय । रुक्मिणीसद्म गच्छत ॥ गत्वा च तच्छिरःकेशान् ।

नयमालोक्य । हसिष्यति विशेषनः ॥१८॥ ईदृशोऽपि मया सूतः । सुतो भावी न सर्वथा ॥ सोऽपि मातुः पितुश्चैष—दनुसारेण जायते ॥ १९ ॥ एतस्मिन् कुत्सिते रूपे । द्वयोरन्यतरस्य न ॥ अनुसारः प्रवर्तेत । कथमेष सुतो मम ॥ २० ॥ न मे स्थास्यति मानोऽपि । बहुधा समुपार्जितः ॥ भविष्यति तद्भंगेन । जीवितव्यविनाशनं ॥ २१ ॥ अथवा नारदेनैव । निवेदितमनूत्पुरा ॥ वर्धते त्वत्सुतः सौख्यै—र्विद्याधरनिकेतने ॥ २२ ॥ स एव हृद्यविद्यायाः । प्रभुत्वाद्रूपमीदृशं ॥ विधाय मत्परीक्षार्थं । समागतो भविष्यति ॥ २३ ॥ मनस्येव स्वकीये सा । कल्पनामिति कुर्वती ॥ पप्रच्छ यतिनं स्वामिन् । कुलादि कथयात्मनः ॥ २५ ॥ स प्राह त्वं विवेकेन । समन्विता विचक्षणा ॥ जैनधर्मप्रवीणासि । कथं पृच्छसि तद्वदः ॥ २६ ॥ निर्ग्रंथानां कुलादीनां । प्रश्नेन न प्रयोजनं ॥ धर्माचारविधानेन । शासनीयं समस्ति तत ॥ २७ ॥ जात्या महर्द्धिको यद्वा । हीनो वाचंयमोऽस्म्यहं ॥ करिष्यस्यधिकेन त्वं । किं तर्हि वदतान्मम ॥ २८ ॥ यतीनां जनकः को वा । का माता कः सहोदरः ॥ धर्मकर्तव्यकर्तारो । निजा एवाखिला अपि ॥ २९ ॥ त्वमेव मम मातात्र । पिता गोविंद एव वा ॥ बांधवा यादवा ज्ञेयाः । संसारे स्वजना इति ॥ ३० ॥ कुरुतस्तौ मिथो वार्ता—

प्सितं ॥ स प्राह मम भोज्यं त्वं । प्रयछ स्वछमानसे ॥ ७ ॥ निलयांतर्गता तस्माद् । द्रव्याणि प्रविलोकितुं ॥ हृदयोद्वेगधारित्वात् । किमप्याप्तं तया न हि ॥ ८ ॥ वह्निसंधुक्षणं चक्रे । तत्पाकाय द्रुतं तया ॥ सोऽपि न प्रकटीभूतः । स्तंभितस्तेन विद्यया ॥ ९ ॥

तदा मुनिर्जगौ काल—क्षेपं त्वं विदधासि किं ॥ त्वद्गेहे यद्भवेद्भुक्तं । तदेव त्वं प्रदेहि मे ॥ १० ॥ सा प्राह मोदकाः शुद्धा । वर्तंते मम मंदिरे ॥ किंतु कृष्णंविना ते स्यु—र्दुर्जराः क्षीणवर्ष्मणां ॥ ११ ॥ यतिहत्याभवं पापं । भवेत्तेषां प्रदानतः ॥ ततस्तान्न प्रदास्यामि । क्षुधितस्यापि ते मुने ॥ १२ ॥ स्मित्वेषत्साधुराचख्या—वस्मात्तपःप्रभावतः ॥ दुर्जराः सुजरा एव । स्युः प्रक्षीणवपुष्यपि ॥ १३ ॥ तद्वाक्येनैक एकोऽपि । प्रदायि मोदकस्तया ॥ शीघ्रं शीघ्रमभुक्तासौ । मातृदत्तं च मोदकं ॥ १४ ॥ भुंजानं तं च निःशंकं । दुर्जरानपि मोदकान् ॥ हसित्वा रुक्मिणी दुःखे—ऽप्याख्यत्त्वं बलवानसि ॥ १५ ॥ दर्शं दर्शं च बालर्षिं । सा जातोच्छ्वसिताकुला ॥ प्रस्रवत्स्तनदुग्धेना—तीवार्द्रीभूतकंचुका ॥ १६ ॥ चित्तांतः सा तदाज्ञासी—न्माभूदेष ममांगजः ॥ भविष्येच्चेत्त्रपाहेतु—स्तदापि मे कदाकृतिः ॥ १७ ॥ सत्यभामा स्वभावेन । मय्यस्ति मत्सरान्विता ॥ एनं त-

सा जगाद त्वया प्रोक्तं । यत्तपः षोडशाब्दिकं ॥ तदसत्यं चतुर्थादि । संवत्सरांतमस्ति तत् ॥ ९६ ॥ सोऽवोचत्किं तवैतेन । विवादेन प्रयोजनं ॥ यदि स्याच्छास्त्रि ते किंचि—त्तद्देहि मम सत्वरं ॥ ९७ ॥ रुक्मिण्युवाच बालर्षे । मे मंदिरे विषण्णता ॥ वरीवर्ति किमप्यद्य । पाचितं न ततो मया ॥ ९८ ॥ मुनिर्बभाण ते गेहे । किं विषाद निबंधनं ॥ सोचे सुतवियोगेन । तदस्ति बहुदुःखकृत ॥ ९९ ॥ आराधिता मया पूजो—पवासैः कुलदेवता ॥ अनेहसमियंतं च । सूनुसंगमकाम्यया ॥ ८०० ॥ न ताभिरपि मत्पुत्रो । मेलितो ऽाग्विषादहृत् ॥ दातुकामाजवं मौलिं । ततोऽहमतिदुःखिता ॥ १ ॥ यावदेवं च कुर्वेऽहं । तावद्देव्योऽपि मां जगुः ॥ मा नूस्त्वमुत्सुका वत्से । तव पुत्रो मिलिष्यति ॥ २ ॥ मया पृष्टा महादेव्यः । कदा मे स मिलिष्यति ॥ प्रोचुस्ताः सहकारोऽयं । फलिष्यति यदा तव ॥ ३ ॥ आशया फलितः सोऽपि । न पुनर्मिलितः सुतः ॥ अयथार्था ततो वाणी । देवीनामप्यजायत ॥ ४ ॥ सीमंधरजिनोक्तानि । चिह्नानि निखिलान्यपि ॥ मिलितानि तथाप्यासो । नांगजो हृदयंगमः ॥ ५ ॥ तदर्थं त्वमपि प्रीत्या । होरालग्ने विलोकय ॥ स प्रोचे रिक्तपाणीनां । न स्यातां ते फलप्रदे ॥ ६ ॥ रुक्मिण्याख्यदहो साधो । किं ददामि तवे·

यतो मे दर्शिता एते । पदार्थाः सैन्यवर्तिनः ॥४२॥ यूयमेव विजानीथ । यत्सारं मम भोगकृत ॥ दत्वा तत्कुशलेनातः । काननाद्व्रजत द्रुतं ॥ ४३ ॥ भवतां चलतां विघ्नो । भविष्यत्यन्यथाध्वनि ॥ संतोषिते शुल्काध्यक्षे । निर्विघ्नता भवेत्खलु ॥ ४४ ॥ केचिद्वदंति हास्येन । सैन्येऽत्र सकलादपि ॥ सारं भोगकरं भूमि—पालपुत्री प्रवर्तते ॥ ४५ ॥ सारे वस्तुनि चेद्वांछा । विद्यते तव चेतसि ॥ तर्हि त्वं तां समादत्स्व । स्वब्ररूपविलासिनीं ॥ ४६ ॥ हसित्वोचे तदा भिल्लो । भवंतो भाग्य-भाजिनः ॥ महांतः संति मेदिन्यां । तामेव दीयतां मम ॥ ४७ ॥ एकाकित्वेन तिष्ठामि । गहने काननेऽत्र हि ॥ कापि रंधनकर्त्री मे । नास्ति स्त्री परिचारिणी ॥ ४८ ॥ तेऽपि जल्पयितुं प्रोचु-र्ग्रथिलत्वयुतं वचः ॥ भक्षणं परिधानं च । त्वत्तः सा मार्गयिष्यति ॥ ४९ ॥ स प्राह मम किं नास्ति । वनेऽत्र भक्षणं वरं ॥ बदरीवटवृक्षादि—फलानि संति भूरिशः ॥ ५० ॥ भूर्जत्वग्बर्हिबर्हाणि । डाकपरिधापगिष्यते ॥ कारयिष्यामि शृंगारं । गुंजाफलकपर्दकैः ॥ ५१ ॥ मयि संतोषितेऽवश्यं । सारसंपत्तिसंयुते ॥ युष्माकमुपरि प्रीतिं । मुकुंदोऽपि करिष्यति ॥ ५२ ॥ कृष्णेनापि मम प्रीत्यै । प्रोक्तमस्ति वचः पुरा ॥ सार्थेऽत्र वहमाने य—द्रोच्यं ग्राह्यं त्वयैव तत् ॥ ५३ ॥ ततश्चेतसि माका

रूपं वीक्ष्य पूरुषाः ॥ धनुःसंधितबाणं तं । जहसुः स्थितमध्वनि ॥ ३१ ॥ यावत्ते भोजनं कृत्वा ।
चेलुरग्रे धियामया ॥ मार्गं निरुध्य तावत्स । जगौ तान् कोपपूरितः ॥ ३२ ॥ यूयं यद्यपि वर्तध्वे ।
सुभटाश्च मदोत्कटाः ॥ तथापि पदमात्रं न । गंतुं दास्यामि सर्वथा ॥ ३३ ॥ कुमाराः कौरवा वीरा
। हसंतः क्रीडयाब्रुवन् ॥ किमर्थं रे पुलिंद त्वं । मार्गं रुध्वा स्थितः पुरः ॥ ३४ ॥ आरोप्य भृकु
टिं भाले । कोदंडे च शिलीमुखं ॥ सोऽवक्साधुस्थितोऽस्म्यत्र । युष्माकं जनकस्य किं ॥ ३५ ॥
पुनस्ते जगदुः कस्य । सेवकस्त्वं प्रवर्तसे ॥ क्रोधेनाप्यवदत्सोऽपि । विष्णोः शुल्कधरोऽस्म्यहं ॥
॥ ३६ ॥ कृष्णस्य शौल्किकत्वेन । तेऽपि कोमलया गिरा ॥ आचख्यू रे किमस्माकं । करिष्यसि
वनेचर ॥ ३७ ॥ अथवा कथमस्माकं । गंतुं दास्यस्यतो वनात् ॥ सोऽप्याह भागधेयं मे । दत्वा
यात नृपा इव ॥ ३८ ॥ कृष्णप्रीत्यै जगुस्तेऽपि । विष्णोस्त्वं शौल्किकोऽसि यत् ॥ ततः संताप्यते-
ऽस्माभिः । कथं वृद्धत्वसंयुतः ॥ ३९ ॥ कटकेऽत्र प्रवर्तंते । गजवाजिपदातिकाः ॥ रथा वस्त्राणि
रत्नाद्याः । पदार्था अपरेऽपि च ॥ ४० ॥ तेषु यत्त्वं विजानीया—स्तवोचितं च सुंदरं ॥ शुल्कस्था-
ने गृहीत्वा त—देहस्मान् गंतुमुत्सुकान् ॥ ४१ ॥ अमर्षादवदत्सोऽपि । किं सार्थलुंटकोऽस्म्यहं ॥

न्यं । यियासा वर्तते मम ॥ १७ ॥ भवेद्यदि तवादेशो । मयका तर्हि गम्यते ॥ मुनिर्जगाद गंतुं
च । प्रदास्यामि न सर्वथा ॥ १९ ॥ चपलो वर्तसे त्वं तु । चापल्यं प्रकरिष्यसि ॥ तस्मिन् विधी-
यमाने हि । विलंबः प्रबलो भवेत् ॥ २० ॥ कुमारः प्राह चापल्यं । न करिष्याम्यहं मुने ॥ कट-
कस्य बलं दृष्ट्वा । समायास्याम्यहं द्रुतं ॥ २१ ॥ मुनिर्बभाण तर्हि त्वं । समीक्ष्यागच्छ सत्वरं ॥ इ-
त्युक्तोऽगात्स तत्रैव । स्तंभयित्वा विमानकं ॥ २२ ॥ सैन्येन वेष्टिता कन्या । चारुरूपेण वीक्षितुं ॥
न शक्यत इतीवायं । भिल्लरूपमचीकरत् ॥ २३ ॥ यत्र तत्कटकं सर्वं । भोजनार्थमवस्थितं ॥ समे-
तो भिल्लरूपेण । मदनस्तत्र कौतुकी ॥ २४ ॥ वपुस्ताम्रायमानं च । हस्तिहस्तोपमौ करौ ॥ शा-
खिशाखासमे जंघे । हस्तांह्री सूर्पकाकृती ॥ २५ ॥ राजादनशुष्कफल—मिव संकुचितं मुखं ॥ दं-
ता गर्दभदंतानां । महत्वेनोपमां दधुः ॥ २६ ॥ चिपिटा नासिका श्मश्रु । पिंगलं गुरुतान्वितं ॥
कठिनं जठरं प्रौढं । शरीरं श्यामवर्णभाक् ॥ २७ ॥ स हस्ते वंशकोदंडं । तूणीरं भूरिमार्गणं ॥
शरीरे दधते वस्त्रं । खंडितं सर्वतोऽपि च ॥ २८ ॥ शिरःकेशान् जटाजूटान् । लोचने अरुणारुणे
॥ जल्पने मुखनिर्गच्छ—न्निष्ठीवो रुंडरूपभृत ॥ २९ ॥ षड्भिः कुलकं ॥ ईदृक्षं कुरुदेशीयाः । कु-

योग्यं जानन् युधिष्ठिरं ॥ राज्येऽभिषिच्य भूपालः । पांडुरप्यादादे व्रतं ॥ ७ ॥ जनकैश्वर्यभोगाच्च ।
स्वकायादपि वीर्यतः ॥ तृणवन्मन्यमानोऽन्यान् । मानी दुर्योधनोऽभवत् ॥ ८ ॥ सर्वेऽपि पांडवास्ते-
न । देशान्निर्वासिताश्छलात ॥ बिभ्रता तेषु मात्सर्य—महंकारमयाशयात् ॥ ९ ॥ स दुर्योधनभू-
पालः । साम्राज्यं पाति संप्रति ॥ अस्ति तस्य पवित्रश्रीः । पुत्रिकोदधिनामिका ॥ १० ॥ यस्या रू-
पेण गिर्वाण—नितंबिन्यो विनिर्जिताः ॥ यथा तथा ह्रिया वक्त्रं । दर्शयंति न भूस्पृशां ॥ ११ ॥
यस्या नयनसंभूतै—स्तीक्ष्णैः कटाक्षमार्गणैः ॥ विद्धा भवनवसितुं नालं । भवंति भूस्पृशो भुवि ॥
॥ १२ ॥ यत्पाणिग्रहणं चित्ते । वांछंत एव कामिनः ॥ अप्राप्त्या कर्म शापंति । स्वकीयं धनिनो-
ऽपि च ॥ १३ ॥ शैशवादपि चापल्या—चरणेनेव चक्षुषोः ॥ चलत्वं चारुचित्तानां । चिनोति च
सुरांगिनां ॥ १४ ॥ रूपेण लसता रंभा । पौर्णिमेंदुमुखेन च ॥ लावण्येन पयोराशि—र्बाल्येऽपि
विजितस्तया ॥ १५ ॥ अजातस्यापि ते दत्ता—भवद्दुर्योधनेन सा ॥ वत्स त्वं तु हृतो जात—
मात्रोऽप्यसुरवैरिणा ॥ १६ ॥ शुद्धिस्तव कृता बह्वी । संप्राप्तश्च तथापि न ॥ अथ त्वदनुजाय दातुं ।
तातेन प्रेषितास्ति सा ॥ १७ ॥ वनिताया विलासेन । संतुष्टो मदनोऽगदत् ॥ निरीक्षितुमिदं सै-

सुलक्षणं ॥ राधायै निजभार्यायै । सुतत्वेन स दत्तवान् ॥ ९५ ॥ सापि पुत्रतया मोहा—त्पाल
यामास तं शिशुं ॥ कर्ण इत्यभिधानेन । दंपतीभ्यां स गद्यते ॥ ९६ ॥ वयसा वर्धमानश्च । स
गुणैरप्यवर्धत ॥ बाल्यादपि प्रमिष्ठोऽभू—द्वल्लभो नृपतेरपि ॥ ९७ ॥ पांडुकुंत्योश्च संबंध—मथ
विज्ञाय तत्पिता ॥ समक्षं पौरलोकानां । तस्मै तां प्रददे महैः ॥ ९८ ॥ मद्रकक्ष्मापतेः पुत्री । म-
द्रकी भद्रकीर्तिभाक् ॥ कांता स्वयंवरासाद—दन्या पांडुमहीपतेः ॥ ९९ ॥ गांधारदेशभूपस्य । भू-
तले सबलेशितुः ॥ संजाताः शकुनेरष्टौ । गांधार्यादिसुता मताः ॥ २०० ॥ शाकुनेर्गोत्रदेवोभि—
रुक्तैरष्टापि ताः पिता ॥ प्रददौ धृतराष्ट्राय । भावि कर्म हि नान्यथा ॥ १ ॥ देवकस्य महीशस्य ।
नाम्ना कुमुदिनी सुता ॥ जाता जेवातृकस्येव । विदुरस्य नितंबिनी ॥ २ ॥ पांडुकुंतीस्फुरद्भोगा—
दुत्पन्नाः पंच नंदनाः ॥ युधिष्ठिरादयो युद्ध—योद्धारो भुवि विश्रुताः ॥ ३ ॥ विचित्रवीर्यभूपालो ।
विभज्य राज्यमात्मनः ॥ धृतराष्ट्रकपांडुभ्यां । दत्वा चारित्रमग्रहीत् ॥ ४ ॥ धृतराष्ट्रनृपस्यापि । गां-
धारीकुक्षिसंभवाः ॥ सुता एकशतान्यासन् । शौर्यौदार्याभिमानिनः ॥ ५ ॥ धृतराष्ट्रस्तनूजेषु । श-
तेषु तेषु सांप्रतं ॥ ज्ञात्वा दुर्योधनं राज्यं । प्रदाय प्राव्रजन्मुदा ॥ ६ ॥ तेषु पंचसु साम्राज्य—

सर्वेभ्यो गोपमानापि । दक्षा सा गर्भमादधौ ॥ तथापि ज्ञातमालीभिः । कथंचिच्चिह्नदर्शनात् ॥
॥ ८३ ॥ अज्ञाता नूतना वार्ता । स्त्रीणां समाति नो हृदि ॥ कयाचिदिति तन्मातुः । स्वरूपं त-
न्निरूपितं ॥ ८४ ॥ तयापि निजनाथस्य । तेनोक्तं देवि पृच्छ्यतां ॥ पातकिन्या तया वंश—कलं-
किता कथं कृता ॥ ८५ ॥ विहायवक्रया मात्रा । तत्र दुःखात्समेतया ॥ पृष्टा पुत्र्युदरे वृद्धिः । क-
थं ते ब्रूहि सूनृतं ॥ ८६ ॥ सोचे जननि माकार्षी—र्विषादं त्वं मनागपि ॥ पांडुना क्रीडिता वर्ते
। न त्वन्येन नरेण हि ॥ ८७ ॥ मया स तु पतित्वेन । प्रतिश्रुतः प्रवर्तते ॥ स एवानृतसमेतोऽत्र
। पश्य तत्पाणिकंकणं ॥ ८८ ॥ पांडुनामांकितं वीक्ष्यां—गदं स्वर्णमणीमयं ॥ स्वयमेव वृतत्वेन
। जाता सा हर्षखेदभाग् ॥ ८० ॥ तथापि कथितं राज्ञः । पुरः सोऽप्याह दीर्घदृग् ॥ प्रसिद्धिरत्र
नो कार्या । लोकानां पुरतो मनाक् ॥ ९१ ॥ गुप्तवृत्त्या दधाना सा—धानं धन्या मीनषिणी ॥
सुषुवे पूर्णकालेन । पुत्रं प्राचीव भास्करं ॥ ९२ ॥ तं क्षिप्त्वा कांस्यपेटायां । ह्रिया कुंती महानि
शि ॥ समुद्रिकं वयस्याभि—र्मंदाकिन्यामवाहयत् ॥ ९३ ॥ वातेन प्रेर्यमाणोच्चैः । सा हस्तिनापु-
रस्तटे ॥ संप्राप्ता वीक्षिता प्रीत्या । सूतसारथिना प्रगे ॥ ९४ ॥ ततो गृहीतपेटायाः । कृष्ट्वा बालं

बभूः पांडुरजायत ॥ ७१ ॥ मुद्रिकाया अपि प्रोक्त—मस्ति माहात्म्यमद्भुतं ॥ तत्किं सत्यमसत्यं वा । परीक्षितुमिवागमत ॥ ७२ ॥ यद्वा स्नेहः स एवेह । सशल्य उभयोरपि ॥ इति ज्ञापयितुं मन्ये । तत्र पांडुरपोथिवान् ॥ ७३ ॥ चतुर्भिः कलापकं ॥ आगत्य चानुसारेणो—पलक्ष्य तां नृपो गले ॥ पाशच्छोटनदंभेन । भुजाभ्यां पाशमादधौ ॥ ७४ ॥ स्पर्शात स्नेहिलपाणिभ्या—मुल्लासि-रोमकंचुका ॥ दृष्टितुष्ट्या पतिं ज्ञात्वा । रागभावानदर्शयत ॥ ७५ ॥ दर्शनात्स्पर्शनाच्चैव । प्रीतिर्जाता द्वयोरपि ॥ कृत्वा गांधर्ववीवाहं । कुंत्या स पर्यणीयत ॥ ७६ ॥ क्वाहं क्वेयं च दैवेन । योगोऽयं मेलितो यदि ॥ प्रस्तावोऽथ विलंबस्य । नोभयोरपि विद्यते ॥ ७७ ॥ यथा पूर्वं समानं च । बभूव मानसं द्वयोः ॥ तथा सांप्रतमप्येवं । कृत्वा ताभ्यां कृतं रतं ॥ ७८ ॥ कुंती तेनैव भोगेन । दधावाधानमुत्तमं ॥ समुद्रे शुक्तिका स्वाति—सलिलेनेव शुक्तिजं ॥ ७९ ॥ आत्मनः कामितं कृत्वा । पांडुर्जिगमिषुर्यदि ॥ ऋतुस्नाता लज्जमाना । तत्पुरं कुंत्यवक् तदा ॥ ८० ॥ जातमस्ति ममाधानं । नाथ त्वयोप्तबीजतः ॥ लोकानामुत्तरं दास्ये । किमहं त्वं तु गच्छसि ॥ ८१ ॥ अभिज्ञानाय दत्वा स्वं । कंकणं लिखिताभिधं ॥ मुद्राया एव माहात्म्यात । प्रत्यगच्छत्पुरं नृपः ॥ ८२ ॥

संतोषयोगेन । विद्याधरो विसर्जितः ॥ कुंतीमेव हृदि ध्यायन् । नृपोऽपि प्रस्थितः पुरे ॥ ६१ ॥ इ-
तोऽथकच्छ्णिणाङ्कं । गत्वा फलकधारकः ॥ पांडोरैश्वर्यरूपादीन् । गुणान् राज्ञः पुरोऽस्तवीत् ॥ ६२ ॥
वर्ण्यमानान् गुणान् पांडोः । श्रावं श्रावमनेकधा ॥ प्रतिज्ञामकरोत्प्राज्ञा । कुंती तातांकमाश्रिता ॥
॥ ६३ ॥ पांडुरेव पतिर्मेऽस्मिन् । भवे भवतु निश्चितं ॥ भवांतरेऽपि चास्यैव । करिष्ये करपीडनं ॥
॥ ६४ ॥ मनस्येवं प्रतिज्ञातं । जानाति मन एव तत ॥ अन्यस्मिन् पुरुषे वक्तु—मक्षमा क्षीणता-
मगात ॥ ६५ ॥ क्रीडयान्येद्युरुद्याने । गता कुंती सखीयुता ॥ दुर्लभां पतिसंप्राप्तिं । मत्वा चाश्र-
द्रुमे गुणं ॥ ६६ ॥ कंठे बध्वापि सा रज्जु—मत्यधादतिदुःखतः ॥ भोः कुलदेवता यूयं । मच्चिंतां
चेत्करिष्यथ ॥ ६७ ॥ तदा मदीयवृत्तांतं । व्रजित्वा ब्रूत तत्पुरः ॥ अन्यथा कल्पितस्वाम्य—प्रा-
प्त्या मर्तुमना अहं ॥ ६७ ॥ पांडुरेव प्रतिज्ञातो । भर्तृत्वेनात्र जन्मनि ॥ जन्मांतरेऽपि युष्माकं ।
प्रसादादयमेव हि ॥ ६८ ॥ चिंतयिष्यथ नो यूयं । यदि मां विपदाकुलां ॥ तदानेन हि पाशेन ।
मरिष्ये शरणं विना ॥ ६९ ॥ वदंतीति मुखादुदुःखा—ध्यायंती पांडुसंगमं ॥ त्यजंति पितृसंमोहं ।
यावन्म्रियति कानने ॥ ७० ॥ माकार्षीन्मरणं माम—कीनाद्वियोगतस्त्वियं ॥ इतीव मोहपाशेन ।

स्त्वं । जानन् बभ्राम कानने ॥ ४९ ॥ त्रिभिर्विशेषकं ॥ ददृशे भ्रमता तेन । चंपकद्रुमपंक्तिषु ॥
यंत्रितो लोहनाराचै—र्नर एको विमूर्छितः ॥ ५० ॥ कामेनात्याकुलत्वेऽपि । तं दृष्ट्वा पांडुपार्थिवः
॥ कोऽयमत्रेति संकल्प्य । गतः स तस्य सन्निधौ ॥ ५१ ॥ यावत्तत्र गतस्तावत् । खड्गं नृपतिर्तं पु
रः ॥ दृष्ट्वा चादाय पाणिभ्यां । प्रत्याकारमथैक्षत ॥ ५२ ॥ औषध्यौ लिखिते खड्गे । तत्र द्वे तेन
वीक्षिते ॥ वपुर्विशल्यका ह्येका । व्रणसंरोहिणीतरा ॥ ५३ ॥ ते द्वे अपि समादाय । मुक्त्वा खड्गं
जगौ नृपः ॥ हे मर्त्य वर्तसे त्वं क—स्तवावस्थेदृशी कथं ॥ ५४ ॥ दीनस्वरेण सोऽप्याह । परो-
पकारमानसः ॥ नाम्नानिलगतिर्वर्ते । विद्याभृतामधीश्वरः ॥ ५५ ॥ कांताशनिवता विद्या—धरेण
मम कामिनी ॥ विद्ययापहृता तस्य । पृष्ठेऽहमपि निर्गतः ॥ ५६ ॥ उभयोर्मिलने युद्धे । जाते
तेन नियंत्रितः ॥ अथ त्वं मां कृपां कृत्वा । कष्टादस्माद्विमोचय ॥ ५७ ॥ इति श्रुते महीजानि-
स्तं च बंधनसंकटात ॥ मोचयित्वा स्वहस्ताभ्यां । तदीयं देहमामृशत् ॥ ५८ ॥ अद्यापदि जीवित-
स्य । दाता त्वं वर्तसे मम ॥ स्वस्थीभूतेन तेनेत्यु—दित्वौषध्यौ समर्पिते ॥ ५९ ॥ पुनः प्रत्युप-
काराय । वांछितस्थानगामिनी ॥ तस्यैका मुद्रिका दत्ता । सख्यं च स्वीकृतं मिथः ॥ ६० ॥ नृपः-

न्यां । कुचाभ्यां कलशावलीं ॥ दोर्दंडेन मृणालान्यं— गुलीभ्यां वरपल्लवान् ॥ २९ ॥ धीराणाम
पि जंतूनां । जयंकरमपि द्रुतं ॥ कथ्या पंचाननं भीमं । वनावस्थितिकारिणं ॥ ३० ॥ समस्ताग्य·
पि वामाक्षी—ष्वेषा रेखासमन्विता ॥ शैशवेऽपि जयत्यंग । यौवने किं करिष्यति ॥ ३१ ॥ वि·
श्विर्विशेषकं ॥ इयं मनुष्यधर्मत्वा—द्विवाहाय सुपर्वणां ॥ न योग्या सर्वथा मर्त्य—लोके को भ·
विता पतिः ॥ ३२ ॥ विमृशन्निति नृपालो—ऽपृच्छत्फलकधारिणं ॥ रूपं कस्या इदं नूनं । वद त्वं
पुरुषोत्तम ॥ ३३ ॥ सोऽपि प्राह महाराज । रूपं कुंत्या इदं खलु ॥ अंधकवृष्णिनृपाल—तनुजाया
मनोहरं ॥ ३४ ॥ इत्युक्त्वा पुरुषः सोऽपि । प्रणम्य नृपतिं ततः ॥ ययौ फलकमादाय । स्थानकं
स्वेप्सितं द्रुतं ॥ ३५ ॥ ध्यायन्नथो धरापाल—स्तामेव हृदि संस्थितां ॥ परितः फलितान् वृक्षान् ।
पश्यंश्चित्तं द्विधा व्यधात् ॥ ३६ ॥ तस्य क्ष्माधिनाथस्य । द्वैविध्येनेव चेतसः ॥ सर्वत्रापि तथैवाभू·
त । सर्वहेतु हृदेव हि ॥ ४६ ॥ नारिंगं नागरंगं च । बकुलं कलिकारकं ॥ अशोकं शोककर्तारं ।
क्रकचं क्रमुकच्छदं ॥ ४७ ॥ कदलीं स्तंभसंकाशां । नागवल्लिं लतामिव ॥ मालतीं प्रौढसंतापां ।
जातिं जातिविनाशिनीं ॥ ४८ ॥ उष्णत्वं वापिकावारि । दीर्घिकास्वप्यदीर्घतां ॥ स कासारेष्वसा·

श्री—र्विदुरो विदुरो मतः ॥ १७ ॥ अत्यासक्ततया कामे । विचित्रवीर्यनृपानुजः ॥ वपुः सांऽमपि ग्रस्तं । रोगेण राजयक्ष्मणा ॥ १८ ॥ तेन प्राणा अपि ग्रस्ता—स्तस्य सत्वरमेव च ॥ ततस्तदास्य देऽमात्या—श्चक्रुः पांडुं प्रजापतिं ॥ १९ ॥ तस्य राज्ये प्रजामूर्ध्नि । न्यायेन करमोचनं ॥ अन्वहं देवस्य पूजाया । आदानमिव वृद्धये ॥ २० ॥ तस्य दीप्तप्रतापस्य । न्यायेन राज्यपालनात् ॥ सापि न्याययुता जाता । प्रजा राजानुयायिनी ॥ २१ ॥ अन्यदा द्रष्टुमारामं । दलैः सुमैः फलैरपि ॥ वर्धितश्रियमायातो । वसंत इव नृधवः ॥ २२ ॥ क्षणं स मालतीपुष्पं । क्षणं जातिसुमं पुनः ॥ आम्राणां मंजरीं जिघ्रं—श्चंचरीक इवाभ्रमत् ॥ २३ ॥ क्षणं गृह्णन् स्वहस्ताभ्यां । विविधानि फलानि च ॥ अशोकादिकपुष्पाणि । तत्र कामीव सोऽजनि ॥ २४ ॥ समंतात्स्वेच्छया भ्राम्यन् । वीक्षमाणो वनश्रियं ॥ सहकारतले मर्त्यं । स्थितं ददर्श पार्थिवः ॥ २५ ॥ आच्छादितं सुवस्त्रेण । दर्शनार्थमिवेशितुः ॥ पश्यंतं फलकं नृप—स्तं निरीक्ष्याब्रवीन्नृपः ॥ २६ ॥ अहो पुरुष किं वारं—वारं त्वमवलोकसे ॥ इत्युक्तः पुरुषः सोऽपि । दर्शयामास तं नृपं ॥ २७ ॥ फलके चित्रितं रूपं । दर्शं दर्शं महीपतिः ॥ दधानो मदनोऽद्रेकं । विस्मयेन व्यचारयत् ॥ २८ ॥ नीलोत्पलानि नेत्रा-

॥ ५ ॥ तावत्तुंगैर्गजैः प्राज्यै—र्जविनां वाजिनां व्रजैः ॥ अदभ्रैः स्यंदनैर्युक्तं । संख्यातीतैः पदातिभिः ॥ ५ ॥ निःस्वानडुंडुभिभेर्या—दिकवाद्यरवैर्भृतं ॥ नभागे परितो दृष्टं । गर्जनां जनयद्बलं ॥ ६ ॥ युग्मं ॥ सार्वभौमस्य सैन्येन । साम्यं बिभ्रन्निरीक्ष्य तत् ॥ मदनो मुनिमप्राक्षीत् । कौतुकान्वितमानसः ॥ ७ ॥ कस्येदं वर्तते सैन्य—मनल्पबलगर्वितं ॥ स्मित्वा सोऽवक् यदर्थं त्व—मानीतस्तदिदं बलं ॥ ८ ॥ समाकर्णय वत्स त्व—मत्रास्ति कारणं महत् ॥ बलीयसापि मर्त्येन । दुर्वार्यमुद्यमेन हि ॥ ९ ॥ दुर्योधनो महावीर्यो । दुर्योधनोऽपरैरपि ॥ कुरुवंशसमुत्पन्नः । प्रवर्तते प्रजाप्रभुः ॥ १० ॥ श्रीयुगादीशतीर्थेश—तीर्थे प्रथमदान्यभूत् ॥ श्रेयांसः श्रेयसा शाली । विशालीकृतसद्यशाः ॥ ११ ॥ तस्य वंशे क्रमेणाभू—द्विश्वविश्वप्रियंकरः ॥ शांतचेताश्च भूतेषु । नामतः शांतनुर्नृपः ॥ १२ ॥ सुतो विचित्रवीर्योऽभूत । तस्य नृपस्य भास्वतः ॥ जाता विचित्रवीर्यस्य । कांतास्तिस्रो मनोहराः ॥ १३ ॥ तिस्रोऽपि रूपलावण्य—भृतोंबा प्रथमेरिता ॥ अंबिका च द्वितीयोक्ता । तृतीयांबालिका मता ॥ १४ ॥ तिसृणामपि स्वसृणां । सत्यस्नेहधृतेरिव ॥ त्रयोऽपि तनया जाता—स्त्रिजगज्ज्ञानविश्रुताः ॥ १६ ॥ धृतराष्टोऽधृतराष्टो । निजप्राज्यपराक्रमात ॥ पांडुः पांडुरदेह·

विराजंते मतंगजाः ॥ ७३ ॥ क्षरन्मदरसास्वाद—लुब्धा गुंजंत उच्चकैः ॥ तेषां कपोलयोर्मूलं । न त्यजंति षडंह्रयः ॥ ७४ ॥ जलाश्रये समायांति । शुंडादंडेन लीलया ॥ प्रक्षिप्तां विग्रहे धूली —मिव क्षालयितुं द्विपाः ॥ ७५ ॥ नानावर्णयुतत्वेन । नभोरत्नकरैः समं ॥ स्पर्धंते यस्य रत्नानि । वर्णवैचित्र्यधारणात ॥ ७६ ॥ विलोकय महाबाहो । विततं तं शिलोच्चयं ॥ रोहणाचलनामानं । नानारत्नविराजितं ॥ ७७ ॥ युग्मं ॥ अग्रे गतः पुनः प्राह । प्रद्युम्नं मुनिनारदः ॥ निरीक्षस्व न-दीमेनां । गंभीरनीरपूरितां ॥ ७८ ॥ गंधोदकमिवैतस्याः । सुगंधि सलिलं शुचि ॥ जानाना मनु-जाः स्नांति । कर्तुं सुगंधि विग्रहं ॥ ७९ ॥ समस्तीदं महातीर्थं । रौद्रकर्मविदारणं ॥ इति बुद्ध्या जना अत्र । समेताः संति शुद्धये ॥ १०० ॥ इतीव हंसचक्राद्या । अन्येऽपि जलजंतवः ॥ अ-स्याः सेवां प्रकुर्वंति । स्वस्मिन् सुखाभिलाषिणः ॥ १ ॥ स्वकीयान्यमलक्षेपा—न्नैर्मल्यमवरक्षत्रे ॥ तत्सर्वं दर्शयत्येषा । लोलकल्लोलकैतवात ॥ २ ॥ अनेकनाकिसंसेव्यां । किन्नरीकृततांडवां ॥ गंगा-मेनां प्रपश्य त्वं । तुष्टिपुष्टिप्रदां सदा ॥ ३ ॥

इति पृथ्वीगतं नृपः । कौतुकं मुनिदर्शितं ॥ पश्यन् समतिचक्राम । यावद् घनाश्रयं घनं ॥

द्युम्नः प्रमदं ययौ ॥ आपद्यपि सुखं यस्मा—त्तां दृष्ट्वा को न मोदते ॥ ८२ ॥ ततः पुरो विमाने ऽग्र । चलिते मुनिराह तं ॥ पश्य पश्य कुमार त्वं । मृगयूथानि ज्रतले ॥ ८३ ॥ घंटानां मधुरध्वान—श्रवणैरमिका मृगाः ॥ कर्णानुध्धृत्य शृण्वंति । स्वकीयहरिणीयुताः ॥ ८४ ॥ वल्गंति शिशवस्तेषां । मिथः केऽपि विनोदतः ॥ केऽपि स्वजनकान्न केऽपि । मातॄणां च पयोधरान् ॥ ८५ ॥ दर्शितं मुनिना तेन । कौतुकं वीक्ष्य मन्मथः ॥ वोढ्हिवद्विमानं त—न्नभोमार्गे ह्यचालयत ॥८६॥ ततोऽपि चलितं याव—द्विमानं त्वरितं कियत् ॥ तावज्जगाद तं हर्षा—च्चित्रं दर्शयितुं मुनिः ॥ ॥ ८७ ॥ ऊर्ध्वीकृत्य स्वपिछानि । नृत्यंति शिखिनो मुदा ॥ गुरुसान्निध्यनव्यस्त—मपि तन्नृत्यमीक्ष्यतां ॥ ८८ ॥ लांगूलचामरा गावः । खेलंत्यत्र यदृच्छया ॥ एतासां दर्शनादेव । प्रमोदो जायते महान् ॥ ८९ ॥ निजोदरेषु चालंब्य । बालकांश्चपल्लानपि ॥ समारोहंति वृक्षाणां । प्रतिशाखाः प्लवंगमाः ॥ ९० ॥ पश्य पंचाननेनात्म—शब्दप्रकंपिताद्रिणा ॥ आरुह्य हस्तिनः पृष्टे । कुंभस्थलं विदार्यते ॥ ९१ ॥ तस्माद्विनिर्गतैर्मुक्ता—फलैर्निपतितैः क्षितौ ॥ उद्योतः परितः प्राज्यः । क्रियते ग्लौकैरिव ॥ ९२ ॥ सल्लकीभक्षणेनापि । रेवासलिलपानतः ॥ मत्ता शैलायमानांगा ।

वाचया ॥ ७० ॥ मय्यागतेऽपि नो यर्हि । त्वं समागच्छसि द्रुतं ॥ ज्ञायते तर्हि नो विद्या—भूल्लो· कं त्यक्तुमीहसे ॥ ७१ ॥ विलंबे क्रियमाणे त्व—न्मातुरेव पराभवः ॥ त्वदीयागमनं पश्चा—न्नू· नं व्यर्थत्वमेष्यति ॥ ७२ ॥ शृणु वत्स तवाभीष्टा । जननी वक्ति न ॥ तथाप्यहं प्रजल्पामि । त्वदीयहितवांछया ॥ ७३ ॥ पितृभ्यां ते विवाहाय । महीयसां महीभुजां ॥ कन्याः सुरूपलावण्याः । प्रभूताः संति मार्गिताः ॥ ७४ ॥ न त्वं यास्यसि वेगेन । मम वाक्यमनानयन् ॥ तर्हि ताः परि· णेष्यंति । सर्वा अपि तवानुजाः ॥ ७५ ॥ एवं वाक्श्रुतिमात्रेण । तेनौत्सुक्येन चालितं ॥ विमा· नं खलु कन्यानां । वरणं कस्य नो मुदे ॥ ७६ ॥ श्रोतव्यानि चरित्राणि । बभूवुस्तस्य वर्त्मनि ॥ तानि कानि विविच्यंते । विस्मयोत्पादकानि च ॥ ७७ ॥ चलनानंतरं तस्मा—त्स्थानादध्वनि नृ· रिशः ॥ कुत्रचित्पर्वताः प्रौढा । नानाकारा निरीक्षिताः ॥ ७८ ॥ कुत्रचिन्नालिकेराश्च । कुत्रचित्स· हकारकाः ॥ कुत्रचिद्गुरुपुन्नागाः । कुत्रचिन्नागवल्लयः ॥ ७९ ॥ कौतुकानीति पश्यंतौ । विमानस्था· वुभावपि ॥ तदद्भुतरमणोद्यानं । विचरंतौ समागतौ ॥ ८० ॥ यावत्तत्र समेतौ द्वौ । तावता नार· दर्षिणा ॥ यतो बालोऽयमादत्तो—ऽभूत्सा शिला प्रदर्शिता ॥ ८१ ॥ तां चक्षुर्भ्यां समालोक्य । प्र·

न्यां विमानकं ॥ स्थिताभ्यां गुरुशिष्याभ्या—मिव ताभ्यामभासत ॥ ५९ ॥ विमाने व्योम्नि गच्छत्या—स्तदीयकेळ्यै स विद्यया ॥ वज्रभारोपमां चक्रे । जटां नारदमूर्धनि ॥ ६० ॥ खंड्यते जल्पने जिह्वा—कंपमानमभूद्वपुः ॥ भग्ना दंता मुखाद्दृष्टा—विवाभूतां करक्रमौ ॥ ६१ ॥ तदोचे व्याकुलीभूतः । प्रौढकोपश्च नारदः ॥ कदर्थनां कथं वत्स । यथेच्छं यच्छसि मम ॥ ६२ ॥ जननीं जनकं बंधून । कुटुंबं मिलितुं निजं ॥ उत्साहेन प्रयासि त्वं । मां पीडयसि किं मुधा ॥ ६३ ॥ रुक्मिणी तव या माता । सा तातमिव सांप्रतं ॥ मानयत्येव मे भक्तिं । विदधाति पितापि ते ॥ ६४ ॥ समस्ता अपि सेवंते । यादवाः सेवका इव ॥ सर्वेषामपि लोकाना—महं पूज्योऽस्मि देववत ॥ ॥ ६५ ॥ यौवनादविजानानः । स्वरूपं मम मन्मथ ॥ व्याकुलं कुरुषेऽत्यंतं । त्वं मां निर्दयमर्त्यवत ॥ ६६ ॥ एवं मुनिर्यदोवाच । शरीरे पीडितो भृशं ॥ कौतुकेन तदावादीत् । प्रद्युम्नः कुटिलाशयः ॥ ६७ ॥ बुद्धं बुद्धं मया तात । चरित्रं तव दांभिकं ॥ समागच्छन्नहं शीघ्रं । तुभ्यं रोचे न मानसे ॥ ६८ ॥ ततोऽहं नागमिष्यामि । त्वमेव व्रज सर्वथा ॥ मतं मे गमनं नावि । तत्र यास्यामि नारद ॥ ६९ ॥ इत्युदित्वा विहायस्य—स्तंभयत्तद्विमानकं ॥ तदा मुनिर्जगौ कोपं । संहृत्य मृदु॰

जविद्याबलेन तु ॥ ४६ ॥ जातरूपमयं सर्वं । रत्नैः षोडशजातिभिः ॥ खचितं लंबमानाभि—र्महा-
घंटाभिरन्वितं ॥ ४७ ॥ वायुना कंपमानेन । ध्वजेनाभिलिहन्नभः ॥ शोभितं दीर्घिकावापी—कूप-
कासारभासुरं ॥ ४८ ॥ हंससारसकादंब—मयूरैरुपशोभितं ॥ नालिकेरकदल्यादि—नानावृक्षविमं-
डितं ॥ ४९ ॥ परितो जटितक्षुद्र—घंटिकानिःस्वनैः पुनः ॥ मुक्ताफलललसज्जालै—र्भूरिशोभाधरं
बभौ ॥ ५१ ॥ विधायेति विमानं त—न्नारदं च नयान्वितं ॥ प्रद्युम्नो मुनिमाचख्यौ । योग्यं जा
नासि चेदिदं ॥ ५२ ॥ समारोह तदेतत्त्वं । विलंब च विना विभो ॥ अदृष्टां रचनां दृष्ट्वा । मुनि-
रप्याह संमदात् ॥ ५३ ॥ सप्तभिः कुलकं ॥ समारोह त्वमप्येतत । कालक्षेपं करोषि किं ॥ वत्स
र्ति वियोगार्त्ता । जननी दुःखिनी तव ॥ ५४ ॥ इत्युक्तेऽपि स लीलातो । मंदं मंदमचालयत् ॥
तदर्षिः पुनरप्याख्य—द्वत्सैतच्चालय द्रुतं ॥ ५५ ॥ वियोगवह्निना दग्धा । रुक्मिणीवदनद्युतिः ॥
त्वद्वक्त्रसुधया सिक्तां । तां नवपल्लवां कुरु ॥ ५६ ॥ जनन्या यदि मान्याया—स्त्वत्तो दुःखं न या-
स्यति ॥ त्वया शक्तियुतेनापि । पुत्रेण किं प्रयोजनं ॥ ५७ ॥ मुनिना प्रेरितेनेति । विमानं तेन
चालितं ॥ वायुवेग इवाचाली—त्तदपि स्खलनं विना ॥ ५८ ॥ शक्तिजाग्र्यां नारदर्षि—प्रद्युम्ना-

भारमेतत्सहिष्यति ॥ ३५ ॥ हसित्वोचे मुनिर्बाल । स्वरूपमस्य वेत्सि न ॥ अर्कतूलसमानोऽयं । किंमात्रो भार आवयोः ॥ ३६ ॥ एतस्मिन् स्थूलवस्तूनां । यदि भाराः सहस्रशः ॥ प्रक्षिप्यंते तथा- प्यस्य । न भंगः सर्वथा भवेत् ॥ ३७ ॥ मदनोऽभिदधातिस्म । यद्येवं वर्तते मुने ॥ आरोहाम्यह मेतत्तत । सोऽवक्त्वं शीघ्रमाश्रय ॥ ३८ ॥

इत्युक्ते मुनिना तेन । स यावत्पादमादधौ ॥ त्रटत् त्रटत प्रकुर्वाणा—स्त्रुटितास्तस्य संधयः ॥ ॥ ३९ ॥ चालिनीव विमानं त—त्सछिद्रं समभूत्क्षणात् ॥ हसंस्तदा स आचख्यौ । मुनेरेतद्वि- मानकं ॥ ४० ॥ क्रममात्रे प्रदत्तेऽपि । यदासीत त्रुटितं खलु ॥ निर्वाहकं कथं नाथ । तदग्रे तद्भ- विष्यति ॥ ४१ ॥ यथेच्छं भ्रमता देशे । देशे त्वया मुनीश्वर ॥ विद्येदृशी कुतः प्राप्ता । विमानर- चनाकरी ॥ ४२ ॥ त्वयि विद्या त्वयि ज्ञानं । विज्ञानमपि च त्वयि ॥ एतावंतं मुदे कालं । प्रती- तिरिति मेऽभवत ॥ ४३ ॥ लज्जितो मुनिरप्याख्यत । किं त्वं हससि भूरिशः ॥ जराजर्जरितांगस्य । कार्यमीदृक्मेव हि ॥ ४४ ॥ स्फुटत्तारुण्यलावण्य । सर्वविद्याविशारद ॥ त्वमेव रचय क्षिप्रं । वि- मानं वेगगामुकं ॥ ४५ ॥ इत्यादेशं मुनेः प्राप्य । प्रद्युम्नेन मनस्विना ॥ विमानरचना चक्रे । नि-

॥ २३ ॥ बांधवानपि संतोष्य । स्वजनान् सकलानपि ॥ पुनरप्यागमिष्यामि । कथयित्वेति निर्ययौ ॥ २४ ॥ तदा प्रत्यर्थिभिर्ज्ञातं । समीचीनमभूदिदं ॥ उत्तीर्णं शिरसः शल्यं । सुखेन विचरिष्यते ॥ २५ ॥ सुजनैर्विदितं नृणां । भविष्यत्यथ का गतिः ॥ अधमाः प्रसरिष्यंति । दुष्टेष्वयमभूत्सृणिः ॥ २६ ॥ नीचतादर्शनाभावा—दुच्चतादर्शनान्नृणां ॥ गणैः सर्वैरपि स्तूय—मान एवाचलत्पुरात ॥ २७ ॥ उपेत्य नारदाभ्यर्णे । नत्वा तत्क्रमयामलं ॥ प्रद्युम्नोऽवक्कियत्यस्ति । स्वामिन् द्वारवती पुरी ॥ २८ ॥ तदाह नारदो वत्स । वैताढ्यगिरिरस्त्ययं ॥ वसंति खेचरा एव । न पुनर्भूचरा इह ॥ २९ ॥ इतोऽस्ति महती भूमि—र्यावत्सा पूस्तदाह सः ॥ तामुल्लंघयितुं पद्भ्यां । भविष्यावः कथं क्षमौ ॥ ३० ॥ नारदर्षिरवादीत्तं । तच्चित्ततुष्टिपुष्टये ॥ माकार्षीश्चिंतया युक्तं । हृदयं सुकुमारधीः ॥ ३१ ॥ विमानं रचयिष्यामि । वेगान्मार्गावगाहकं ॥ आवां तत्र समारूढौ । प्राप्स्यावस्तां पुरीं द्रुतं ॥ ३२ ॥ प्रद्युम्नोऽभ्यदधत्स्मित्वा । रच्यतां रच्यतां जवात् ॥ पश्याम्यहमपि स्वामिन् । रचनां रचितां त्वया ॥ ३३ ॥ ततस्तेन विशेषेण । विधाय रचनां बहुं ॥ किंकिणीचित्रसंयुक्तं । विमानं रचितं ततं ॥ ३४ ॥ मदनस्तत्समालोक्य । जगाद नारदं मुनिं ॥ द्वयोरप्यावयोः प्रौढ—

मा: पुरुषा नैव । निर्नाथमपराधिनं ॥ दीनं द्रविणहीनं न । विश्वसयंति सर्वथा ॥ ८ ॥ तवैव बा-
लको वर्ते । त्वयैवाहं विवर्धितः ॥ त्वयैव प्रापितो भव्या—मियतीं पदवीमपि ॥ ९ ॥ शैशवे या
मयावज्ञा । बालकेन विनिर्मिता ॥ सा स्मर्तव्या युवाभ्यां न । गंभीराभ्यां कदाचन ॥ १० ॥ युव-
योर्यदि निर्देशो । भवेत्पालकयोर्मम ॥ तर्ह्यहं जन्मदातारौ । पश्यामि पितरौ निजौ ॥ ११ ॥ कु-
लीना नंदना ये स्युः । पित्रोराज्ञां विना न तैः ॥ किमपि क्रियते कृत्यं । शुभं वा ह्यशुभं खलु ॥
॥ १२ ॥ अवज्ञाप्रविधाताप्य—पराधशतकारकः ॥ स्वकीयतनयत्वेन । स्मर्तव्योऽहं निरंतरं ॥ १३ ॥
ममैव कुक्षिसंभूतो । विनीतोऽप्यस्त्ययं शिशुः ॥ विचिंतनीयमित्येव । त्वया मातर्न चान्यथा ॥१७॥
बालका बालभावेन । निःस्नेहा निर्दया यदि ॥ भवेयुरविनीताश्च । पितरौ स्नेहलालसौ ॥ १८ ॥
पितरौ मिलितुं यामि । यद्यप्यहमितः पितः ॥ तथापि युवयोः पाद—पद्मे मच्चित्तषट्पदः ॥ १९ ॥
लोकेऽपि कथ्यते सर्वै । पुत्रा यदि कुपुत्रकाः ॥ पितरौ भवतः सर्व—सहौ मोहानुषंगतः ॥ २० ॥
आत्मनो दूषणाभावे—ऽप्यंगीकृत्य स्वदूषणं ॥ प्रद्युम्नः कथयन् पित्रा । न मनागप्यजल्प्यत ॥२१॥
आदेशमार्गणे मौन—मप्यादेशाय संभवेत ॥ उत्सुकः स विमृश्येति । पितरौ भक्तितोऽनमत् ॥

युक्तः ॥ ५५ ॥ इति पंडितचक्रचक्रवर्तिपंन्नितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीशांबप्रद्युम्नचरित्रे श्रीप्रद्युम्नकुमारस्य षोडशलाभप्राप्तिपितृबंधुजनविरोधनारदागमनवर्णनो नाम नवमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ दशमः सर्गः प्रारभ्यते ॥

अथोचे नारदर्षिस्तं । प्रद्युम्नं द्युम्नदायकं ॥ वत्सावाभ्यामविक्षेपं । गम्यते द्वारिकापुरि ॥ १ ॥
तदावादीत्कुमारस्तं । कृतज्ञैकशिरोमणिः ॥ युक्तं न गमनं नाथा—नापृच्छ्य पितरौ मम ॥ २ ॥
यस्माद्यो वयसा वृद्धिं । प्राप्तोऽथवा विभूतिभिः ॥ उपकारविधातारं । तं न ह्युपेद्विचक्षणः ॥ ३ ॥
अत्रैव त्वमतस्तिष्ठ । व्रजित्वाहं पुरि द्रुतं ॥ पृष्ट्वा मत्पितरौ सत्रा । त्वयैवायामि नारद ॥ ४ ॥ मु
निं तं कथयित्वेति । मुक्त्वा तत्रैव मन्मथः ॥ जगाम जनकागारं । निर्विकारं दधन्मनः ॥ ५ ॥
माता कनकमालापि । तत्रैव संस्थिताभवत् ॥ तौ द्वावपि नमस्कृत्य । बभाषे मदनो नृपं ॥ ६ ॥
युवयोरहमन्यायी । दुष्कर्मकारकोऽपि च ॥ क्षमेतामथ मन्मंतु । युवां कारुण्यसागरौ ॥ ७ ॥ उत्त

॥ वनाए नामिनीं नृपो । न किंचित्तव दूषणं ॥ ४५ ॥ यत्पूर्वमर्जितं कर्म । तदेव सुखदुःखकृत ॥
अतो हर्षविषादौ न । कर्तव्यौ संपदापदोः ॥ ४६ ॥ दुःखाढ्यमपि नृपालं । राज्ञी पप्रछ वल्लभं ॥
सर्वेऽप्यत्र समायाता—स्तनया न्यायसंगिनः ॥ ४७ ॥ निःश्वस्य पार्थिवः प्राह । दूरे तिष्ठंतु तेऽखि-
लाः ॥ एकोऽपि न समेतोऽस्ति । मम वाक्यविधायकः ॥ ४८ ॥ खेदात्तौ वदतो याव—द्भयया
मदनेन तु ॥ मुक्ता वापीजलात्तेऽपि । श्यामास्यास्तावदागताः ॥ ४९ ॥ भग्नं सैन्यमिवालोक्य ।
समस्तमपि तद्बलं ॥ राज्ञ्या दुश्चरितं सर्व—लोकैर्ज्ञातं विनिश्चितं ॥ ५० ॥ कृतस्य प्रकटं यद्वा ।
रहःकृतस्य कर्मणः ॥ प्रसिद्धिः सर्वथा पंगु—र्न स्यादभ्रगतार्कवत् ॥ ५१ ॥ अहार्यस्यापि सैन्यस्य
। तस्य योऽभूत्पराजयः ॥ राज्ञीपापफलं सर्व—मपि तत्समभूद्द्विषोः ॥ ५२ ॥ ततः सर्वेऽपि जल्पं-
ति । धर्मादेव जयो भवेत ॥ पापादेव क्षयस्तत्र । पापं कार्यं मनीषिभिः ॥ ५३ ॥ पुण्यं कार्यं स-
ज्जयोत्पत्तिकारं । पापं वार्यं बालकैर्जेयदर्पं ॥ स्तुत्यो निंद्यः पुण्यपापाद्भवेतां । जेयाजेयौ मानवौ यु-
द्धमध्ये ॥ ५४ ॥ पुण्यादेवातिशयविशदान् योमशोत्तुंगलाभान् । भूस्पृग्भूयोभयदविषमस्थानकेऽ-
प्याप विद्यां ॥ एकाकित्वेऽप्यरिजयकरो यो महे संप्रहारे । स प्रद्युम्नो विलसति सुखं देवमुन्यादि-

वीर्या । त्वदीया जननी च सा ॥ ३४ ॥ सपत्नी वर्तते तस्याः । सत्यभामाभिमानिनी ॥ विडंबयति मात्सर्या—न्मृदुलां तव मातरं ॥ ३५ ॥ त्वदीयाकारणार्थं त—दहं संप्रेषितस्तया ॥ मया सह त्व-मागच्छ । वत्स स्वच्छमना द्रुतं ॥ ३६ ॥ स्वरूपं निजवंशस्य । शस्यं निशम्य मन्मथः ॥ मुमुदे क-स्य न स्यात्स्व—वंशदीप्तिश्रुतिर्मुदे ॥ ३६ ॥ प्रद्युम्नस्तत आचख्यौ । नारदं किं करोम्यहं ॥ तेनो-क्तं पतितानेता—नुत्थाप्याप्यखिलान् व्रज ॥ ३७ ॥ नारदर्षिगिरा तेनो—त्थापिताः कृपया भटाः ॥ ब्रुवाणा हतहतेति । प्रमीलात इवोत्थिताः ॥ ३८ ॥ नारदेन तदा प्रोक्तं । ज्ञातं ज्ञातं भवद्बलं ॥ हतो हतोऽस्त्रियुष्माभि—र्मौनमेवाथ धीयतां ॥ ३९ ॥ सर्वेभ्योऽपि बलिष्ठेन । मदनेन दयालुना ॥ मुक्ता जीवितदानार्थं । गेहं गच्छत मंगलैः ॥ ४० ॥ नारदर्षिवचोयोगा—द्विलक्षवदना भटाः ॥ अ-पि प्रत्युत्तरं दातुं । शक्ताः समभवन्न हि ॥ ४१ ॥ पितापि भक्तिरागेण । दृढबंधनकष्टतः ॥ विमु-क्तः सोऽपि लज्जालुः । प्रद्युम्नं न किमप्यवक् ॥ ४२ ॥ यथा गंधगजेंद्रस्य । पुरः स्युरपरे गजाः ॥ वीरा गलितदर्पास्ते । प्रद्युम्नाग्रे तथाभवन् ॥ ४३ ॥ बलेन मदहीनेन । युक्तो मौनावलंबभृत् ॥ न्यस्तलोचनो राजा । पुरं साधुरिवागमत् ॥ ४४ ॥ विषादेन समन्वीतो । गत्वा निकेतनं निजं

र्योपितो रक्ताः । स्वाभिलाषप्रपूरणात् ॥ तस्य निर्दविणस्यापि । दद्युः प्राणानपि स्वकान् ॥ २२ ॥
यस्मात्पुनर्विरक्तास्ताः । स्ववाक्याननुयायिनः ॥ सद्रूप्यं सुंदराकारं । स्वयमेव निहंति तं ॥ २३ ॥
अद्यापि तव जागर्त्ति । भाग्ययोगो मनस्विनः ॥ प्रस्ताव ईदृशेऽपि त्वं । जीवन्नेवोज्झितस्तया ॥२४॥
नारदर्षिवचः श्रुत्वा । मदनो दुःखगर्जितं ॥ जगाद वचनं नाथ । निराधारोऽस्म्यहं क्षितौ ॥ २५ ॥
न माता मे पिता मे न । स्वजना बांधवा न मे ॥ तैर्विना निष्फलं जन्म । कथ्यते नरजन्मनि
॥ २६ ॥ पितृभ्यां रहितः कुत्रा—हं गच्छाम्याश्रयामि कं ॥ वर्तसे दीर्घदर्शी त्वं । जीवनोपायमा-
दिश ॥ २७ ॥ कालसंवररूपो मे । पिता तेनैव वर्धितः ॥ माता कनकमाला तु । स्तन्यपानमका-
रयत ॥ २८ ॥ तयोस्तु कार्यमीदृक्षं । यथा कुर्यान्न वैर्यपि ॥ तदाधारवियुक्तस्य । का गतिर्मे भवि-
ष्यति ॥ २९ ॥ प्रद्युम्नस्य महादुःख—वाक्यमाकर्ण्य नारदः ॥ जगाद मा कृथा दुःखं । तव पुण्यं
विजृंभते ॥ ३० ॥ प्राज्यास्ते स्वजनाः संति । स्कंधोद्धुराः सहोदराः ॥ हरिवंशसमुत्पन्ना । यादवा
बलशालिनः ॥ ३१ ॥ द्वारिकानगरीनाथः । केशवो नवमो बली ॥ कृष्ण इत्यभिधस्तेऽस्ति । पि
ता गर्जन् गजेंद्रवत् ॥ ३२ ॥ स्वप्राणेभ्योऽप्यभीष्टास्ति । वल्लभा तस्य रुक्मिणी ॥ शीलादिन्निर्गुणै

नानीतस्तदंतिके ॥ तथापि न मदोन्मत्तः । किंतु लज्जानमच्छिराः ॥ १० ॥ स्वशक्तिदर्शनार्थं सो
—ऽजल्पद्भक्तियुतोऽत्र यः ॥ स त्रोटयतु मत्तातं । पतितं बंधनापदि ॥ ११ ॥ तेनेत्युदीर्यमाणे द्वि
। कुर्वन्नृत्यं घनाश्रयात ॥ उत्तीर्णो नारदस्तत्र । समाययौ पवित्रहृत ॥ १२ ॥ तत्र तेन समेतेन ।
कालसंवरपार्थिवः ॥ प्रद्युम्नस्य पुरो बद्धो । दृष्टो हृष्टोऽभवत्तदा ॥ १३ ॥ अहो जातमिदं भव्यं ।
यदेतयोः परस्परं ॥ विरोधोऽभूदथ ह्यागमे । फलिष्यति मनोरथः ॥ १४ ॥ मत्वेति नारदोऽप्राक्षी-
द्विजानन्नपि मायया ॥ युवयोः प्रीतिभाजोः किं । बभूव रणकारणं ॥ १५ ॥ तदोचे मदनः स्वा·
मिन् । मात्रा मम विरूपकं ॥ किंचित्पितुः पुरः प्रोक्तं । मद्वधाय तदागतः ॥ १६ ॥ सहसालीकवा·
र्तया भाषिताया मृगीदृशा ॥ अविचारात्समायातो । मारणार्थं पिता मम ॥ १७ ॥ ततो द्वयोरपि
प्रीति—मतोर्निरपराधयोः ॥ पितृसून्वोरपि प्रादु—र्भूतोऽतिदारुणो रणः ॥ १८ ॥ व्यक्तं मातुरपि
प्रोक्तं । सर्वं स्वरूपमादितः ॥ पुरस्तस्य मुनेस्तेन । कलंकभीतचेतसा ॥ १९ ॥ आच्छाद्य श्रवण
द्वंद्वं । तदैव नारदर्षिणा ॥ चक्षुर्निमीलनं कृत्वा । मस्तकं धुन्वतोदितं ॥ २० ॥ वत्साश्राव्यं स्त्रीच·
रित्रं । मा श्रावय ममाधुना ॥ स्त्रीस्वरूपं न जानासि । त्वमद्याप्यसि बालकः ॥ २१ ॥ यस्मिन् स्यु·

विधे । पुत्रं च विलपत्यसौ ॥ ९८ ॥ स्वयं कथं मया हात्वा । महत्त्वं जीवितं निजं ॥ धुन्वन्निति
शिरो राजा । विषादेन विनिर्गतः ॥ ९९ ॥ ममैव पालकः पुत्रो । मयैव परिवर्धितः ॥ मत्त एवा·
स्त्र तत्त्वं । सोऽपि मां मारयिष्यति ॥ ६०० ॥ रणे यदि न गच्छामि । शोभापि च न तादृशी ॥
एवं दोलायमानेन । तेनायातं चत्रे निजे ॥ १ ॥ प्रातः समेत्य युद्धोर्व्या—मवादीन्मदनं नृपः ॥
रे दिग्मूढ कथं गूढ—वाणास्त्रं दधसे मुधा ॥ २ ॥ शिक्षितोऽस्यधुनैव त्वं । तद्विमुंच पुरा शरान्॥
मयैव वर्धितं बालं । हन्म्यहं प्रथमं कथं ॥ ३ ॥ प्राणा नृणां क्षणात्क्षीणा—श्चावं व्रजंति सर्वथा
॥ ध्यात्वेति क्षत्रियो मर्तु—कामोऽपि न त्यजेत्स्मयं ॥ ४ ॥ ततः स त्वभुजेत्युक्तो । हसित्वा पि·
तरं जगौ ॥ पितः स एव मूढात्मा । स्त्रीवाक्यं विदधाति यः ॥ ५ ॥ अविचार्यैव तद्वाक्या—त्स्व·
यमेव प्रवर्धितं ॥ बालकं मूढतायुक्तो । निर्मंतु हंतुमादिशेत् ॥ ६ ॥ पूज्यत्वात्प्रथमं वृद्ध—कृत्यं प·
श्चाच्छिशोर्भवेत ॥ अतस्त्वमेव वृद्धत्वात् । प्रथमं मुंच मार्गणं ॥ ७ ॥ तस्मिन्निति प्रकुर्वाणे । वित·
र्कणां रणांगणे ॥ मुक्तः शिलीमुखः कोपा—त्कालसंवरत्वभुजा ॥ ८ ॥ प्रद्युम्नस्य रथस्तेन । भं
जितस्तत्क्षणादपि ॥ तथापि केलये तेन । मुक्तः सुवेगमार्गणः ॥ ९ ॥ निबध्य नागपाशेन । ते·

—दरोदीत्स्त्रीचरित्रकैः ॥ ७७ ॥ तेन राज्ञा तदा ज्ञात—मेषास्ति व्यभिचारिणी ॥ कृतानि तानि भावीनि । चरित्राण्यनयैव हि ॥ ७८ ॥ चिह्नेन ज्ञायते धूर्त—मनीषयाऽनयाऽनयात ॥ पुरा ह्य्रु पि सद्विद्ये । दत्ते तस्य भविष्यतः ॥ ७९ ॥ विमृश्येति जगौ राजा । कथं त्वं सुभ्रु रोदिषि ॥ रोदनस्य तु वेला न । विद्ये प्रदेहि सत्वरं ॥ ८० ॥ गतनिःशेषवित्तेव । रुदती गद्गदस्वनं ॥ अभणन्नृपतिं कांता । कांतारसंस्थितेव सा ॥ ८१ ॥ प्रभो पातकिना तेना—नेकप्रकारवंचिना ॥ न वक्तुं तस्य पापस्य । किंवदंत्यपि युज्यते ॥ ८२ ॥ प्राणनाथ मया ज्ञात—मयं बाल्ये विवर्धितः ॥ आवां सौख्यप्रदानेन । वार्धके पालयिष्यति ॥ ८३ ॥

इति ज्ञात्वा मयान्येद्युः । क्रोडे संस्थाप्य रागतः ॥ शैशवे शिक्षिता तस्य । विद्याद्वयी मया विभो ॥ ८४ ॥ न मुग्धचित्तया नाथ । पापिन्या विदितं मया ॥ ईदृशो यौवनं प्राप्य । कृतघ्नोऽयं भविष्यति ॥ ८५ ॥ हाहाहं वंचितानेन । पापिना तनुतापिना ॥ तस्य दुश्चरितं नाथ । किं वदामि पुरस्तव ॥ ८६ ॥ इत्युक्त्वा रुदिता याव—त्तावद् ज्ञातं महीभुजा ॥ विद्ये दत्वा करोत्येषा । स्त्रीचरित्राणि निश्चयात् ॥ ८७ ॥ स्त्रीकृतानि चरित्राणि । न ज्ञायंते बुधैरपि ॥ नाशयित्वा च मे

दानां । संजातरोमकंचुकाः ॥ संग्रामं सुभटाः कर्तु—मुत्साहभाजिनोऽभवन् ॥ ६६ ॥ नायका ना·
यकैर्मर्त्यै—र्गुरवो गुरुभिस्तदा ॥ सामान्यैः सह सामान्या । मध्यमा मध्यवर्तिभिः ॥ ६७ ॥ अश्व·
वारैरश्ववारा । निषादिनो निषादिभिः ॥ रथिका रथिकैः साकं । पदातिकाः पदातिकैः ॥ ६८ ॥
इति द्वयो रणे रौद्रे । जायमाने परस्परं ॥ पूज्यत्वात्पितृसैन्येन । नाशितं मान्मथं बलं ॥ ६९ ॥
दिशोदिशं बलं सर्वं । प्रणश्यन्मदनो निजं ॥ वीक्षमाणो महाकोपा—च्चिंतयामास भीषणः ॥७०॥
संग्रामे कः पिता पुत्रो । जानन्नितीव विद्यया ॥ कृत्वा गजादिभिः सैन्यं । स सैन्याभिमुखं ययौ ॥
॥ ७१ ॥ प्रद्युम्नस्य बलेनाथ । क्षणाद्वसुमतीपतेः ॥ त्रासितं कटकं कः स्या—न्मदनस्य पुरो जयी
॥ ७२ ॥ दुर्जयोऽस्ति दुरात्माय—मिति विज्ञाय भूभुजा ॥ मंत्रिणो जगदे ताव—द्रक्षणीयं बलं
त्वया ॥ ७३ ॥ समानयाम्यहं याव—न्मम रामासमीपतः ॥ प्रज्ञप्तिरोहिणीविद्ये । सद्यः शत्रूपघा·
तिके ॥ ७४ ॥ आचख्यौ धीसखो नाथ । गत्वा विद्ये समानय ॥ रक्षिष्यामि भवत्सैन्य—महं ता·
वत्प्रयत्नतः ॥ ७५ ॥ यथाशक्ति करिष्यामि । संग्राममपि दारुणं ॥ एतद्विषयिणी चिंता । न कर्त·
व्या विभो त्वया ॥ ७६ ॥ इत्युक्त्वा निशि गत्वा स । स्त्रीपार्श्वाद्यावदर्थयेत् ॥ विद्याद्वयीमियं ताव

यथातथा विजेतुं स । शक्यते न त्वया विभो ॥ ५३ ॥ कोपेऽप्यमात्यवाक्येन । प्रद्युम्नं दुर्जयं ज
वात् ॥ ज्ञात्वा द्वेधापि नृपालो । रणभेरीमवादयत् ॥ ५४ ॥ तेन भेरीनिनादेन । मेलयित्वा मह-
द्दलं ॥ जेतुमेनं च प्रद्युम्नं । चचाल पृथिवीपतिः ॥ ५५ ॥ वीक्षमाणो महत्सैन्यं । प्रद्युम्नो हृद्यचिं-
तयत ॥ अहो विचक्षणस्यापि । जनकस्य विमूढता ॥ ५६ ॥ पंडितैर्योषितां प्रायो । वचनं मन्यते
न हि ॥ तस्या असत्यवाक्येन । मद्वधाय समेत्ययं ॥ ५७ ॥ तस्मिन् विचिंतयत्येवं । कटकं निर्ग-
तं बहु ॥ मार्गस्थाः कर्करास्तेन । पांसूपमाः प्रचक्रिरे ॥ ५८ ॥ तुरंगमखुरोत्खातै । रजोभिश्च घ
नाश्रयैः ॥ छादितेष्वर्कतेजस्सु । दिवसेऽप्यभवन्निशा ॥ ६० ॥ प्रोत्तुंगानां गजेंद्राणां । कपोलाभ्यां
गलन्मदैः ॥ जज्ञलध्धूलिशांतौ च दृग्भ्यां मार्गो विलोक्यते ॥ ६१ ॥ कोलाहलेन पत्तीनां । वा-
दित्राणां महारवैः ॥ हयानां हेषितैर्मत्त—वारणानां च बृंहितैः ॥ ६२ ॥ स्यंदनानां च चीत्कारै—
ष्टंकारैर्धनुषां पुनः ॥ वरीतुं जयलक्ष्मीं च । सैन्यं रणांगणेऽचलत् ॥ ६३ ॥ महांतं बलविस्तारं । नि-
रीक्ष्य मदनो बली ॥ कियन्मात्रमिति स्मित्वा । दध्यावभीष्टदेवतां ॥ ६४ ॥ तया मतंगजान्मत्तान्
। वाजिनो जविनो घनान् ॥ रम्यान् रथान् पदातींश्च । विकुर्व्य कटकं कृतं ॥ ६५ ॥ विरुदैर्बंदिवृं-

कथितं दर्शितं च स्त्री—कैतवेन भविष्यति ॥ ४२ ॥ तस्या एव प्रकोपेन । तातेन निखिलानपि ॥ आहूय नंदनान् प्रोक्तं । मन्मारणं भविष्यति ॥ ४३ ॥ अत एवाग्नवन्नेते । मारणार्थं ममोद्यताः ॥ अन्यथैतैर्नराकैः किं । हंतुं शक्येऽहमंजसा ॥ ४४ ॥ अथ चेन्मारयाम्येतान् । दंभात्कल्पितमारणान् ॥ सर्वेषामपि शिक्षा स्या—न्मयि पापधियां तदा ॥ ४५ ॥

विमृश्येति तटस्थेन । रूपेणानीय डाकिशिलां ॥ पिधानमिव वाप्यास्त—न्मानं स विधायाकरोत् ॥ ४६ ॥ तथैव तत्र ते वापीं । पिधाय चावलंबिताः ॥ ऊर्ध्वं पादा अधो वक्त्रा—स्तेन वल्गुलिका इव ॥ ४७ ॥ एकं विमुच्य तन्मध्यात् । कथितं तस्य तेन च ॥ व्रजित्वा त्वं पितुः पार्श्वे । मत्कृतं कथय द्रुतं ॥ ४८ ॥ श्वासपूरितवक्त्रेण । तेन व्याकुलचक्षुषा ॥ अतिदुःखेन तातस्य । तत्स्वरूपं निवेदितं ॥ ४९ ॥ तदाकर्ण्य महीनाथः । कोपाटोपेन रक्तदृक् ॥ निर्ययौ खड्गमादाय । कर्तुं पुत्रसहायितां ॥ ५० ॥ तदा निवारितोऽमात्यै—र्नाथौत्सुक्यं विधेहि मा ॥ सहसा विहितं कृत्यं । न सौख्याय भवेन्नृणां ॥ ५१ ॥ बद्धा वापीजले येन । वीराः पंचशती सुताः ॥ यस्य षोडश लाभाश्च । स्फुरंतः संति सन्निधौ ॥ ५२ ॥ माज्ञासीस्तं नरं शक्ति—युक्तं सामान्यवृत्तिकं ॥

पिकां गताः ॥ ३० ॥ तत्र प्रक्षिप्तवाह्लुंकी—कर्षणार्थं समुद्यतः ॥ एक एकः पतित्वाशु । कर्षेत्फत्र मनाकुलः ॥ ३१ ॥ केव्या वारेण वारेण । विशत्सु तेषु दंभिषु ॥ सरलस्य समायातो । मदनस्यापि वारकः ॥ ३२ ॥ वारके स निजे याव—त्तत्र निष्कपटः पतेत ॥ पुण्येन विद्यया तावत । कथितं तस्य कर्णयोः ॥ ३३ ॥ माकार्षीः पतनं वाप्या—मस्ति दंभस्तवोपरि ॥ मारयिष्यंत्यमी पापा—स्त्वामपराधवर्जितं ॥ ३४ ॥ इति श्रुत्वा द्वितीयं च । रूपं विधाय विद्यया ॥ संप्रेषितं स्वयं तूच्चैः । सूक्ष्मीभूय स्थितो बहिः ॥ ३५ ॥ रूपभेदापरिज्ञानात् । सर्वेऽपि मंदबुद्धयः ॥ प्रद्युम्नं पतितं दृष्ट्वा । युगपत्पतिता मुदा ॥ ३६ ॥ झंपापातं प्रकुर्वाणा । मार्यतां मार्यतामयं ॥ ब्रुवाणा इति वक्रैस्ते—ऽगृह्णंस्तं भुजकोटरे ॥ ३७ ॥ गृहीत्वा मार्यते याव—त्तावत्स प्रजजल्प तान् ॥ घात्यते पितुरादेशा—द्युष्माभिः स्वेच्छयाथवा ॥ ३८ ॥ ते प्रोचुः पितृनिर्देशा—देव त्वं मार्यसेऽधुना ॥ तातादेशं विना केन । निहंतुं शक्यते भवान् ॥ ३९ ॥ तदा तेन हृदि ज्ञातं । मातुरेतद्विचेष्टितं ॥ मद्दूषणं तथैवोक्तं । पितुः पुरो भविष्यति ॥ ४० ॥ मायया कल्पनां कृत्वा—लीकमेव वदेद्दशा ॥ रागेण सखो मर्त्यो । जानाति सत्यमेव तत् ॥ ४१ ॥ ततस्तयैव पापिन्या । वैरूप्यं परिकल्प्य च ॥

मज्ञात—नीचोच्चजातिशालये ॥ कारुण्येन मयानीतः । सुतत्वेनापि पालितः ॥ १९ ॥ परं मत्तेन-
वद्दुष्टो । वर्धमानवया भृशं ॥ यौवनं प्राप्य युष्माकं । मम सोऽनूद्यशोहरः ॥ २० ॥ मया तदैव
विज्ञातं । पादचारेण काननात् ॥ भवद्भिरागतं माना—ऽध्यारूढेन तेन तु ॥ २१ ॥ नो युष्माकः
मवज्ञाया । विधानादेव नंदनाः ॥ चित्तान्ममायमुत्तीर्णो । रक्षितो न गुणाय वै ॥ २२ ॥ ततो य-
था न जानाति । कोऽपि मारणकारणं ॥ तेनोपायेन वध्योऽसौ । दुरात्मा तापकारकः ॥ २३ ॥
नुपदिष्टमिवाभीष्टं । वैद्यैर्हृद्यैः कुबुद्धयः ॥ श्रुत्वा स्वपितृवाक्यं ते । प्रभूतं प्रमदं ययुः ॥ २४ ॥ मा-
रणेच्छा पुरास्माक—मासीदेतस्य दुर्मतेः ॥ तातस्याप्यधुना वाक्यं । वर्तते समनूद्वरं ॥ २५ ॥ सं-
चिंत्येति गता गेहं । प्रद्युम्नस्य छलान्विताः ॥ गत्वा च चाटुभिर्वाक्यै—र्जगुस्ते खेचरांगजाः ॥२६॥
क्रीडायामात्मनां साकं । कृतायां बहवो दिनाः ॥ जातास्तेन त्वमागच्छ—वयं तर्हि रमामहे ॥२७॥
बांधव त्वां विना क्वापि । पुरापि न गता वयं ॥ इदानीमपि नास्माक—मुत्सहते मनो मनाक् ॥
॥ २८ ॥ भ्रातस्ततस्त्वमागच्छ । गच्छामः क्रीडितुं यथा ॥ इत्युक्तः सत्यमेवायं । जानन् विनिर्गतो
गृहात ॥ २९ ॥ सर्वेऽपि समुदायेन । मिलित्वा स्वांतकैतवाः ॥ कानने गहने गत्वा । महतीं वा-

पिकां गताः ॥ ३० ॥ तत्र प्रक्षिप्तवाल्लुंकी—कर्षणार्थं समुद्यतः ॥ एक एकः पतित्वाशु । कर्षेत्पत्र मनाकुलः ॥ ३१ ॥ केव्या वारेण वारेण । विशत्सु तेषु दंभिषु ॥ सरलस्य समायातो । मदनस्यापि वारकः ॥ ३२ ॥ वारके स निजे याव—त्तत्र निष्कपटः पतेत ॥ पुण्येन विद्यया तावत । कथितं तस्य कर्णयोः ॥ ३३ ॥ माकार्षीः पतनं वाप्या—मस्ति दंभस्तवोपरि ॥ मारयिष्यंत्यमी पापा—स्त्वामपराधवर्जितं ॥ ३४ ॥ इति श्रुत्वा द्वितीयं च । रूपं विधाय विद्यया ॥ संप्रेषितं स्वयं तूच्चैः । सूक्ष्मीनूय स्थितो बहिः ॥ ३५ ॥ रूपन्नेदापरिज्ञानात् । सर्वेऽपि मंदबुद्धयः ॥ प्रद्युम्नं पतितं दृष्ट्वा । युगपत्पतिता मुदा ॥ ३६ ॥ झंपापातं प्रकुर्वाणा । मार्यतां मार्यतामयं ॥ ब्रुवाणा इति वक्रैस्ते—ऽगृह्णंस्तं भुजकोटरे ॥ ३७ ॥ गृहीत्वा मार्यते याव—त्तावत्स प्रजजल्प तान् ॥ घात्यते पितुरादेशा—द्युष्माभिः स्वेच्छयाथवा ॥ ३८ ॥ ते प्रोचुः पितृनिर्देशा—देव त्वं मार्यसेऽधुना ॥ तातादेशं विना केन । निहंतुं शक्यते भवान् ॥ ३९ ॥ तदा तेन हृदि ज्ञातं । मातुरेतद्विचेष्टितं ॥ मद्दूषणं तथैवोक्तं । पितुः पुरो भविष्यति ॥ ४० ॥ मायया कल्पनां कृत्वा—लीकमेव वदेद्वशा ॥ रागेण सरलो मर्त्यो । जानाति सत्यमेव तत् ॥ ४१ ॥ ततस्तयैव पापिन्या । वैरूप्यं परिकल्प्य च ॥

मज्ञात—नीचोच्चजातिरालये ॥ कारुण्येन मयानीतः । सुतत्वेनापि पालितः ॥ १९ ॥ परं मत्तेन-
वद्दुष्टो । वर्धमानवया भृशं ॥ यौवनं प्राप्य युष्माकं । मम सोऽनुद्यशोदरः ॥ २० ॥ मया तदैव
विज्ञातं । पादचारेण काननात् ॥ भवद्भिरागतं माना—ऽश्वारूढेन तेन तु ॥ २१ ॥ ततो युष्माकं
मवज्ञाया । विधानादेव नंदनाः ॥ चित्तान्ममायमुत्तीर्णो । रक्षितो न गुणाय वै ॥ २२ ॥ ततो य-
था न जानाति । कोऽपि मारणकारणं ॥ तेनोपायेन वध्योऽसौ । दुरात्मा तापकारकः ॥ २३ ॥
नुपदिष्टमिवाभीष्टं । वैर्यैर्हृद्यैः कुबुद्धयः ॥ श्रुत्वा स्वपितृवाक्यं ते । प्रद्युम्नं प्रमदं ययुः ॥ २४ ॥ मा-
रणेच्छा पुरास्माक—मासीदेतस्य दुर्मतेः ॥ तातस्याप्यधुना वाक्यं । वर्तते समनूहरं ॥ २५ ॥ सं-
चिंत्येति गता गेहं । प्रद्युम्नस्य द्विषान्विताः ॥ गत्वा च चाटुभिर्वाक्यै—र्जगुस्ते खेचरांगजाः ॥२६॥
क्रीडायामात्मनां साकं । कृतायां बहवो दिनाः ॥ जातास्तेन त्वमागच्छ—वयं तर्हि रमामहे ॥२७॥
बांधव त्वां विना क्वापि । पुरापि न गता वयं ॥ इदानीमपि नास्माक—मुत्सहते मनो मनाक् ॥
॥ २८ ॥ भ्रातस्ततस्त्वमागच्छ । गच्छामः क्रीडितुं यथा ॥ इत्युक्तः सत्यमेवायं । जानन् विनिर्गतो
गृहात ॥ २९ ॥ सर्वेऽपि समुदायेन । मिलित्वा स्वांतकैतवाः ॥ कानने गहने गत्वा । महतीं वा-

भो ॥ यथातथाप्यतः पापा—न्न जातं शीलखंडनं ॥ ७ ॥ शीलस्य खंडनं यत्र—चविष्यन्मम व-
ह्निं ॥ अहं तर्ह्यकरिष्यं हि । प्राणत्यागं क्षणादपि ॥ ८ ॥ रक्षणीयं कुलस्त्रीभिः । शीलरत्नं यथा
तथा ॥ तद्भंगे जीवितव्येन । निंद्येन किं प्रयोजनं ॥ ९ ॥ मंडनं शीलमेव स्या—द्वरं कुलीन-
योषितां ॥ भूषणैर्भारभूतैः किं । चीवरैः सुंदरैरपि ॥ १० ॥ शीलेन मानयेद्भर्ता । पितरौ स्वजना
अपि ॥ समस्ता अपि लोकाश्च । रक्ष्यं तदेव योषिता ॥ ११ ॥ भूयः कदर्थना नाथ । तेन प्रज-
निता मम ॥ तथापि त्वत्प्रभावेण । शीलं मया च रक्षितं ॥ १२ ॥ अथ यद्यपि दुष्टोऽयं । बलवि-
द्यासमन्वितः ॥ सुभटैरपि कष्टेन । मारणीयः प्रवर्तते ॥ १३ ॥ रक्ताविलं तथाप्यस्य । वीक्षे शिरो
भुवद्भुवि ॥ तदा हि जीवितव्यं मे । जानामि सकलं विभो ॥ १४ ॥ मायाविन्यः स्त्रियो लोके ।
स्त्रियः कौटिल्यकेलयः ॥ प्रतारयंति नीरागा—नपि वंचयमान् भुवि ॥ १५ ॥ तर्हि दुर्बलकर्णानां
। रागिणामविचारिणां ॥ सहसाकार्यकर्तॄणां । राज्ञां किं वंचनेऽद्भुतं ॥ १६ ॥ ततस्तस्या महामा-
या—वंचितः कालसंवरः ॥ श्रुत्वा दृष्ट्वा स्वरूपं त—दाकारयत्सुतान् क्रुधा ॥ १७ ॥ तानाकार्य ज
गौ राजा । गूढकोपप्रपूरितः ॥ चेन्मद्वचोऽनुगा यूयं । प्रद्युम्नस्तर्हि हन्यतां ॥ १८ ॥ वनाद्वाल्येऽय-

म्यहं ॥ ९४ ॥ विमृश्येति पुमान् कामी । जोगस्यावसरे यथा ॥ करोति कामिनीकाये । व्रणानि नखैः स्वकैः ॥ ९५ ॥ स्वयमेव तया तानि । प्रचक्रिरे रुषा तथा ॥ गल्लयोरोष्टयोरेवं । कुचयोर्जंघयोः पुनः ॥ ९६ ॥ कचान् विसंस्थुलान् कृत्वा । रजोधूसरविग्रहा ॥ चक्षुषोरंजनैः सर्वं । श्यामं मुखं विधाय च ॥ ९७ ॥ रुदती सुदती तीव्र—दुःखेन नृपसन्निधौ ॥ समेत्यासत्यतायुक्तं । जगौ गद्गदया गिरा ॥ ९८ ॥ रे नाथ कुत्राथ त्वं । स्थितोऽसि किं न जाषसे ॥ शून्ये वने त्वयादत्तो । यो बालः पुत्रलिप्सया ॥ ९९ ॥ त्वदाज्ञया गृहीत्वा स । पालितो वर्धितो मया ॥ त्वयापि मेऽस्य रागेण । यौवराज्यं समर्पितं ॥ ५०० ॥ युग्मं ॥ आगछंती तवोपांते । कृत्वा शृंगारमंमनं ॥ तारुण्ययौवराज्याभ्यां । मत्तो मां व्यलगन्मदात् ॥ १ ॥ मिथो विलगतोर्भूरि—प्रतिघादुजयोरपि ॥ अहं तु कथमप्याशु । नष्टा निपतिता क्षितौ ॥ २ ॥ धूलीधूसरदेहापि । विशीर्णकुंतलापि च ॥ कुलदेव्यनुभावाच्च । त्वत्पुण्यादागतास्म्यहं ॥ ३ ॥ अनुमाने यथा धूमा—द्वह्निज्ञानं समुद्भवेत ॥ तथैतस्य कुकर्तव्या—ज्जातिर्नीचानुमीयते ॥ ५ ॥ लालितः पालितः पुत्र—बुध्या मया त्वदाज्ञया ॥ पापबुद्धिं कथं कुर्या—दन्यथा मयि मातरि ॥ ६ ॥ वैरूप्येऽपि च संजातं । कार्यमेकं शुभं प्र-

त्वमपि तादृशी ॥ ७३ ॥ तस्येति स्नेहलां वाणीं । समाकर्ण्य तमाह सा ॥ हृद्यां विद्याद्वयीमेतां । गृहाण विधिपूर्वकं ॥ ७४ ॥ इष्टं करिष्यतेऽनेन । जानंती मृष्टया गिरा ॥ तस्मै विद्याद्वयं दत्वा । सा जगौ मदनातुरा ॥ ७५ ॥ विद्याद्वयीं पुरादाय । पश्चाद्दपुर्लतां च मे ॥ द्वयोरपि त्रियामायां । परीक्षां कुरु सुंदर ॥ ७६ ॥ तवैतद्वचनं त्रुया—दित्युक्त्वा विनयेन सः ॥ सम्यगाम्नायमादाय । प्रद्युम्नः प्रजजल्प तां ॥ ७७ ॥ मान्ये धन्ये महापुण्ये । शरण्ये शरणार्थिनां ॥ वरेण्ये पुण्यकारुण्ये । नीतः कष्टं नगेऽरिणा ॥ ७८ ॥ तदा मया न माता न । तातो ज्ञातो मनागपि ॥ त्वमेव मम रक्षायै । बव्हविध गुणान्विते ॥ ७९ ॥ त्वमेव शरणं तस्मात । त्वमेव जननी मम ॥ कालसंवरभूपाल । एव मे जनकः पुनः ॥ ८० ॥ ततो यत्ते भवेत्कृत्यं । स्वकीयतनयोचितं ॥ त्वं मे कथय निःशंक—मुद्यमेन करोमि तत ॥ ८१ ॥

इति तस्य वचः श्रुत्वा । वज्रघातानुकारकं ॥ न नीरं मे च नो तीरं । बभूव सेत्यचिंतयत ॥ ८२ ॥ आरोपयाम्यकार्येऽमुं । बलेनेत्युद्यता यदा ॥ मदनः सहसा नत्वा । तां तदा स्वगृहं गतः ॥ ८३ ॥ तदा ज्ञातं तया हाहा । वंचितैतेन पापिना ॥ तर्ह्यस्य पापिनः पाप—फलं प्रदर्शया·

शाब्दिकः ॥ कृतं पापं जघन्येन । यतो दशगुणं भवेत् ॥ १२ ॥ कस्याः कस्यापि कामिन्या । म-र्त्यस्य च कदाचन ॥ बालवृद्धयुवादीनां । न कार्यो विरहो बुधैः ॥ १३ ॥ हसने क्रीडने तेन । जल्पने कल्पने पुनः ॥ शयने भोजने याने । विधेयं पापकर्म न ॥ १४ ॥ इत्याकर्ण्य यतेर्वाचं । नत्वा तत्पदपंकजं ॥ जगाम जननीगेहे । देहं कृत्वा विभूषितं ॥ १५ ॥ गत्वा विशारदस्तत्रा—विधायैव नमस्कृतिं ॥ किंचिदूर्ध्वमधः पश्यं—स्तत्पुरो निषसाद सः ॥ १६ ॥ तस्याः पुरः प्रणामेन । रहितः स यदा स्थितः ॥ तदा तत्कारणे ज्ञातं । तया पापमनीषया ॥ १७ ॥ मदीयरूपपाशेन । बद्धः समागतोऽस्त्ययं ॥ करिष्यत्यथ मद्वाक्यं । जानामीति च चेष्टया ॥ १८ ॥ चिंतयित्वेति त-त्काम—भोगस्पृहातिविह्वला ॥ तन्वंती हावभावांश्च । सा प्रद्युम्नमवीवदत् ॥ १९ ॥ मम चेद्वचनं कुर्या—श्चातुर्यधैर्यसंयुत ॥ तत्कालफलसौख्यानां । कारकं दुःखहारकं ॥ ८० ॥ विद्ये प्रज्ञप्तिरोहि-ण्यौ । निःशेषदोषमोषिके ॥ समर्पयामि ते तुभ्यं । मन्मनोरथपूर्तये ॥ ८१ ॥ युग्मं ॥

इति प्रोक्ते तया प्राह । हसित्वा मदनः सुधीः ॥ किं कदा वचनं ताव—कीनं नास्ति कृतं मया ॥ ८२ ॥ करिष्येऽथ विशेषेण । दासोऽहं किंकरोऽस्मि वा ॥ यस्या भव्यते वाक्यं । न सा

शिशुपालाय सा पुरा ॥ ६० ॥ नारदर्षिमुखात् श्रुत्वा । वर्णनं नरकद्विषः ॥ प्रेषयित्वा जनं रुक्मि-
ण्यनुरक्ता तमाह्वयत् ॥ ६१ ॥ पाणिग्रहणवार्तापि । संसारिणां भवेत्प्रिया ॥ प्रेष्यस्य प्रेषणात्कस्य ।
न स्यात्संमदलब्धये ॥ ६२ ॥ ततस्तद्वाक्यसंतुष्टि—धरो गोविंद आगतः ॥ शिशुपालनृपं जित्वा ।
रुक्मिणीं वनमानयत ॥ ६३ ॥ तत्रानीय स्वयं पाणि—पीडनं प्रविधाय च ॥ तां नीत्वा द्वारिकां
तेन । चक्रेऽग्रमहिषी मुदा ॥ ६४ ॥ तयोः पुत्रः पवित्रश्री—स्त्रस्तशत्रुरजायथाः ॥ निशि त्वं द्वेषि-
दैत्येन । हृत्वानीतोऽत्र वैरतः ॥ ६५ ॥ प्रद्युम्नः पुनराचख्यौ । विनयाद्ज्ञानिनं मुनिं ॥ येन मात्रा
वियोगो मे—ऽभवत्तत्पापमस्ति किं ॥ ६६ ॥ साधुनाभिदधे वत्स । भवतः पातकं न तत ॥ प्राग्ज-
न्मनि कृतं तत्त्व—न्मातुरेवावगच्छतात ॥ ६७ ॥ विप्रपुत्र्यान्यदा लक्ष्मी—वत्या वने प्रयातया ॥ म-
यूरबालको दृष्टो । मातुः पार्श्वे वराकृतिः ॥ ६८ ॥ घटीः षोडश यावत्स । गृहीत्वा रक्षितस्तया ॥
क्रीडार्थं बहुसौख्येन । न पुनः पापबुद्धितः ॥ ६९ ॥ पुत्राविलोकनाद्वीक्ष्या—क्रंदंतीं शिखिनीं च
तां ॥ लोका लक्ष्मीवतीं प्रोचु—र्मयूरीयं मरिष्यति ॥ ७० ॥ विलापं जनयंत्यास्त्व—मेतस्या मुंच
नंदनं ॥ तद्वाक्येन तया मुक्तो । मातृपार्श्वे स बालकः ॥ ७१ ॥ तद्वाक्जन्मातृपापेन । विरहः षोड-

गत्वा तत्पुरतः स्थिता ॥ साप्यपृच्छत्तदा भद्रे । का त्वं जातिस्तवास्ति का ॥ ४९ ॥ सोचे धीवरजातीया । प्रवर्तेऽहं तपस्विनि ॥ दुःखिन्यपि मया सौख्यं । संप्राप्तं तव दर्शनात् ॥ ५० ॥ इति प्रोक्ते व्रतिन्यापि । चक्रे धर्मोपदेशनं ॥ तस्यास्तदुपदेशेन । धर्मश्रद्धाभवद्बहुः ॥ ५१ ॥ अजानंती स्वसामर्थ्य—मन्यस्मिन् धर्मकर्मणि ॥ नानाभेदं तपः कर्तुं । प्रवृत्ता धीवरांगजा ॥ ५२ ॥ जनयंती तपः प्रौढं । साध्व्याश्च चरणद्वयं ॥ तत्रैव सेवमाना सा । तिष्ठति प्रीतिसंयुता ॥ ५३ ॥ अन्येद्युरार्यिका यात्रा—कृते राजगृहं पुरं ॥ धीवर्यपि तया सार्कं । ययौ चैत्यानि वंदितुं ॥ ५४ ॥ गिरिमारुह्य साध्वी च । नत्वार्हत्प्रतिमा मुदा ॥ आत्मरक्षाविधानाय । गुहामध्ये स्थिता निशि ॥ ५५ ॥ धीवरी तु जिनाधीश—धर्मध्यानेन जाग्रती ॥ कायोत्सर्गोपवासाभ्यां । कंदरातः स्थिता बहिः ॥ ॥ ५६ ॥ तत्रागतेन व्याघ्रेण । भक्षिता सा कृशोदरी ॥ शुभध्यानेन सा मृत्वा । द्वितीयस्वर्गमीयुषी ॥ ५७ ॥ तत्र भुक्त्वाद्भुतस्वर्गि—वरभोगोचिता सुरी ॥ अभीष्टान् बुभुजे भोगान् । कृतो धर्मो हि सौख्यदः ॥ ५८ ॥ जीवितांते ततश्च्युत्वा । कुंडिनाख्ये महापुरे ॥ श्रीमतो भीष्मभूपस्य । दुहिता समजायत ॥ ५९ ॥ पूर्वपुण्यानुभावेन । रुक्मिणीत्यभिधा कृता ॥ रुक्मिणा बंधुना दत्ता ।

तेन पापविपाकेन । कर्मोपार्जितमीदृशं ॥ ३७ ॥ यः पूर्वं निंदितः साधुः । स तु त्वमेव नायक ॥
तत्पापान्मोचय त्वं मां । कृपालुरसि जंतुषु ॥ ३८ ॥ अथ त्वं तादृशं धर्मं । प्ररूपय मुनीश्वर ॥ ये-
न निंदाकृतं कर्म । कदापि मां न पीडयेत् ॥ ३९ ॥ इत्युदित्वा स्मरंती सा । स्वरूपं पूर्वजन्मनः ॥
रुरोद प्रौढशब्देन । स्त्रीणां हि रुदनं बलं ॥ ४० ॥ तदा दयासमुद्रोऽव—ग्वाचंयमो हितावहः ॥
मारोदीस्त्वं च दुःखं हि । भुज्यते स्वककर्मणा ॥ ४१ ॥ रोदनेन जनैर्नैव । कदापि प्राप्यते सुखं
॥ सुखेच्छा ते भवेद्यर्हि । तद्धर्ममार्हतं कुरु ॥ ४२ ॥ येनानेकभवोद्भूतं । सर्वं कर्म विलीयते ॥
येन संप्राप्यते सौख्यं । येन कैवल्यसंगमः ॥ ४३ ॥ गृहस्थानां स उक्तश्च । सम्यक्त्वद्वादशव्रतः ॥
गृहस्थया त्वया कार्यो । धर्मः स एव सहृदयः ॥ ४४ ॥ प्रमाणीकृत्य निर्ग्रंथ—वचनं पापपावनं ॥
दधौ सम्यक्त्वमूलानि । द्वादशोच्चव्रतानि सा ॥ ४५ ॥ कुले नीचेऽपि भाग्येन । संप्राप्तश्राद्धधर्मया
॥ धीवर्या वंदितः साधुः । प्रतस्थे स्थानकात्ततः ॥ ४६ ॥ धीवर्यपि कियत्कालं । तत्र स्थित्वा दया-
धिया ॥ कुतश्चित्कार्यतोऽगच्छ—दयोध्यां नगरींप्रति ॥ ४७ ॥ सा तत्र प्रथमं गत्वा । प्रयाता श्री-
जिनालये ॥ तत्रैव मिलितां साध्वीं । मुमुदे सा निरीक्ष्य तां ॥ ४८ ॥ उपाश्रये ततोऽसौ च ।

तं समीक्ष्योल्लसच्चित्ता । पूर्वकर्मदयेण सा ॥ व्यचारयदयं शीत—शर्वर्यां किं करिष्यति ॥ २६ ॥
यद्यप्यस्ति तृणागारं । वस्त्रप्रावरणं मम ॥ तदप्यत्र सरिच्छीतं । न सोढुं शक्यते मया ॥ २७ ॥ त-
तः कथमचेलोऽसौ । साधुः शीतं सहिष्यति ॥ विमृश्येति तया तस्यां—तिके प्रज्वालितोऽनलः ॥
॥ २८ ॥ अव शीतमत्र शीतं । चिंतयतीति भक्तितः ॥ आप्रभातं स्थिता साग्नि—वस्त्राभ्यां तन्नय-
वारयत् ॥ २९ ॥ पारयित्वा प्रगे कायो—त्सर्गं स्वर्गापवर्गधीः ॥ प्रोचे लक्ष्मीवति प्रीति—मत्यस्ति
कुशलं तव ॥ ३० ॥ सोमशर्मद्विजस्य त्वं । वत्से प्रवर्तसे सुता ॥ सा नामांतरमाकर्ण्य । व्यचिंत-
यन्निजे हृदि ॥ ३१ ॥ साधुः किमीदृशं ब्रूते—ऽसत्यवाचं विचारवित् ॥ असत्यं ब्रुवते नैव । जै-
ना लोकोक्तिरीदृशी ॥ ३२ ॥ अभीक्ष्णं चिंतयंतीति । तन्मयत्वमुपेयुषी ॥ सा जातिस्मरणं लब्ध्वा
—पश्यत्पूर्वभवान्निजान् ॥ ३३ ॥ यथोक्तांस्तान समालोक्य । श्रद्दधाना मुनेर्वचः ॥ जैनं धर्मं स-
मीचीनं । विदंती तं ननाम सा ॥ ३४ ॥ नत्वोचे नाथ किं चैत—ज्जातं मे भवनर्तनं ॥ नाना-
जन्मसमुद्भूतं । भूयोयोनिविधायकं ॥ ३५ ॥ द्विजानां कुत्र मे जाति । कैवर्तककुले त्वियं ॥ पूर्वे
भवे स्वरूपं मे । क्वात्र रूपमिदं क्व वा ॥ ३६ ॥ विनिर्मिता मया निंदा । पातकिन्या तपस्विनः ॥

र्था मिथः प्रवर्धते ॥ इतीर्ष्ययेव तस्याश्च । रोगः प्रावर्धताधिकं ॥ १४ ॥ तेन कुष्टामयेनेयं । प्रा-
प्नुवंत्यरतिं बहुं ॥ सप्तमे दिवसे वह्नौ । रागेण व्याकुलाविशत् ॥ १५ ॥ ज्वलत्कृशानुना दह्य—
मानार्त्तध्यानधारिणी ॥ सा मृत्वा रासभीभूता । प्रभूतभारधारिणी ॥ १६ ॥ ततोऽपि दुःखिता मृत्वा
। संजाता सा च शूकरी ॥ मारिता कोट्टपालेन । शुनी सा समजायत ॥ १७ ॥ एकदा सारमेयी
सा । हेमंते सूतबालका ॥ वाटिकासन्निधौ गत्वा । नीवारवारसंस्थिता ॥ १८ ॥ आगच्छंती स्वबाला-
नां । मोहेनान्यत्र कुत्रचित ॥ वह्निना तत्र लग्नेन । दग्धा सा भूद्ददामि तत ॥ १९ ॥ कैवर्तस्य ना-
विकस्य । कुले पुत्री बभूव सा ॥ पूतिगंधसमन्वीत—विग्रहा शेषकर्मणः ॥ २० ॥ वपुर्दौर्गंध्ययो-
गेना—निष्ठ सा स्वजनैरपि ॥ निष्कासिता गृहान्निंदा—कृतं कर्म हि दुस्त्यजं ॥ २१ ॥ ततो नि-
र्गत्य गंगायाः । पार्श्वे कृत्वा कुटीरकं ॥ स्थिता सात्र तरंडेनो—त्तारयत्यतुलान् जनान ॥ २२ ॥ त-
दुत्तारणमूल्येना—जीविकां विदधाति सा ॥ तन्मयाद् द्रविणं किंचित । प्रेषयेत्सा पितुर्गृहे ॥२३॥
अनेन विधिना काल—क्षेपं प्रजनयत्यसौ ॥ देहदौर्गंध्यतो लोकै—र्दुर्गंधेत्यभिधा कृता ॥ २४ ॥
अथान्येद्युः स एवागा—न्मुनिर्ज्ञानी हिमागमे ॥ मदान्धस्यानया निंदा । कृता समभवत्पुरा ॥२५॥

जंबूद्वीपे जगद्दीपे । भरते विरतेऽधमैः ॥ देशे परिहृतक्लेशे । मगधे विबुधेर्हिते ॥ २ ॥
पुरं लक्ष्मीपुरं नाम्ना । लक्ष्मीपूरसुसंश्रितं ॥ शोमशर्मा द्विजस्तत्र । वसतिस्मोरुनीतिवित ॥ ३ ॥ ष-
ट्कर्मादीनि कर्माणि । सत्यापयन्निरंतरं ॥ जपहोपविधाता स । ध्याता ब्रह्महरीश्वरान् ॥ ४ ॥ तस्य
प्रवर्तते पत्नी । सपत्नीभूतनीरधेः ॥ कमलानामतस्तस्या । अपि लक्ष्मीवती सुता ॥ ५ ॥ रूपेण दे-
वकन्येव । चातुर्यवर्यविग्रहा ॥ नभ्रचक्रं प्रचक्रे सा—न्यांगनां रूपदर्शनात् ॥ ६ ॥ अन्यदा मंदिरे
तस्या । भिक्षार्थं साधुरागतः ॥ मलक्लिन्नशरीरश्च । कुर्वन् मासेन पारणं ॥ ७ ॥ विश्वोद्योतितपोयु-
क्तो । धर्मध्यानपरायणः ॥ सर्वशास्त्रकृताभ्यासो । मित्रामित्रपवित्रधीः ॥ ८ ॥ तदा परिदधानांगे ।
विभूषणानि कन्यसौ ॥ पश्यंती रूपमात्मीयं । प्रमोदेन प्रवर्तते ॥ ९ ॥ पृष्टे समागतस्यर्षे—र्दर्पणे
प्रतिबिंबितं ॥ दृष्ट्वा रूपं मदांधा सा—हंकारेण व्यचिंतयत ॥ १० ॥ क्व बीभत्समिदं रूपं । मनु-
ष्याणां भयंकरं ॥ दर्शनीयं ममेदं क्व । लोचनप्रमदप्रदं ॥ ११ ॥ मुहुर्मुहुर्मुने रूपं । निंदंत्या गुण-
धार्यपि ॥ स्तुवंत्या च निजं रूपं । घोरकर्मार्जितं तया ॥ १२ ॥ तेनैव कर्मणा तस्याः । कायेऽल्पै-
रेव वासरैः ॥ कुष्टरोगः समुद्भूतो । यतिनिंदा हि दुःखदा ॥ १३ ॥ अक्षामितो महाक्रोधो । य-

ऽनन्यरूपस्त्वमेव च ॥ ९१ ॥
बांधवेन समं तत्र । भुक्त्वा सौख्यमनुत्तरं ॥ तस्याः कुक्षौ समुत्पन्नो— विमुक्तो मारणेच्छया ॥ ९२ ॥
दैत्येन जातमात्रस्त्वं । वैरेण पूर्वजन्मनः ॥ हृत्वा टंकशिलामध्ये । संजाता स्मरपीडिता ॥
प्राग्जन्मोत्थेन मोहेन । वीक्ष्य त्वां स्नेहविह्वला ॥ राज्ञी कनकमालापि । दुस्त्यजौ दुःखदायकौ ॥
॥ ९३ ॥ गुरूणामपि पुंस्त्रीणां । द्वेषरागौ यतो दृढौ ॥ पुराजननसंभूतौ । तेनोपायेन तद्
॥ ९४ ॥ विद्याद्वयस्य दानेच्छा । तस्याः प्रवर्ततेऽनघा ॥ गृहीतव्या त्वया येन । त्वं महानु
द्भुतं ॥ ९५ ॥ तदाकर्ण्य कुमारोऽवक् । मुनीशमुल्लसन्मनाः ॥ त्वद्वाक्यं प्रकरिष्यामि । आबा
पकारकः ॥ ९६ ॥ प्रभो पृच्छाम्यहं किंचि— दन्यच्च जनवल्लभ ॥ मात्रा सत्रा वियोगो य । इति व्यक्तं त्वया
ल्यादपि मेऽभवत् ॥ ९७ ॥ स किं मद्दोषतः किं वा । जननीदोषतोऽजनि ॥ स मातृ
नाथ । निरूप्यतां पुरो मम ॥ ९८ ॥ तदा प्राह मुनिस्वामी । वियोगो यस्तवाभवत् ॥ प्रजज
दोषतो जातो । न पुनस्तव दोषतः ॥ ९९ ॥ प्रद्युम्नः पुनरप्याह । कथं प्रभो बभूव सः ॥ प्रा
रुप तदाचार्यः । समाकर्णय सद्गुण ॥ ४०० ॥ प्रायो वियोगसंयोगौ । भवेतामिह देहिनां ॥
ग्जन्मसेवितैः सांद्रैः । कर्मभिरस्तशर्मभिः ॥ १ ॥

तं त्रिःप्रदक्षिणीकृत्य । प्रथमं प्रणिपत्य सः ॥ विनयेन यथास्थान—मुपाविशत्कृतांजलिः ॥ ७९ ॥
संजाते विजनेऽप्राक्षी—त्कुमारः श्रमणप्रभुं ॥ मन्माता वीक्ष्य मामेव । कथं कामातुराभवत ॥८०॥
मुनिनाथस्तदा प्राह । शृणु वत्सास्ति कारणं ॥ न विना पूर्वसंबंधं । रागद्वेषोद्भवो भवेत ॥ ८१ ॥
इतस्तृतीयजन्मन्य—भवस्त्वं मधुभूधवः ॥ कैटभो नामधेयेन । तवाभवत्सहोदरः ॥ ८२ ॥
तदा हेमरथेशस्य । प्रमदेंदुप्रभाभिधा ॥ गृहीत्वा स्वगृहेऽस्थापि । रागानुषंगतस्त्वया ॥ ८३ ॥ भुंजा-
नस्य तया साकं । नानाभोगान् पुरस्तव ॥ अन्यदा कश्चिदानीत—स्तरुणः पारदारिकः ॥ ८४ ॥
त्वयादिष्टो वधस्तस्य । तदैवेंदुप्रभाभ्यधात ॥ नाथान्यललनाभोगे । कश्चिद्दोषोऽपि वर्तते ॥ ८५ ॥
तद्वाक्येन प्रबुद्धेन । चारित्रं जगृहे त्वया ॥ भवता सह देव्यापि । प्रीतितो बंधनादिव ॥ ८६ ॥
सम्यक्चरणमाराध्य । तपस्तप्त्वा च दुर्धरं ॥ महाशुक्राभिधे स्वर्गे । त्रयोऽप्यायुःक्षयेऽगमन् ॥ ८७ ॥
सप्तदशातरोद्भूत—मानमायुः प्रपूर्य च ॥ तत इंदुप्रभा च्युत्वा । जाता विद्याधरान्वये ॥ ८८ ॥
वैताढ्ये मेघकूटाख्य—पुरेशः कालसंवरः ॥ नाम्ना कनकमालेति । तस्य प्राणप्रियाभवत् ॥ ८९ ॥
द्वारिकायां महापुर्यां । गोविंदो राज्यपालकः ॥ तस्य रूपेण देवीव । देवी समस्ति रुक्मिणी ॥९०॥

नेंडैरिंद्रवंदितैः ॥ तत्सत्यं चिंतयित्वेति । जगाद जननीमयं ॥ ६७ ॥ अत्र परत्र लोकेऽपि । विरु द्धं किं प्रजल्पसि ॥ किं चिंतयसि वा चित्त । मातर्नैपुण्यसंयुते ॥ ६८ ॥ विरुद्धजल्पनादेव । निंदा भवति भूयसी ॥ चिंतनात्परलोके हि । संप्राप्तिर्घोरदुर्गतेः ॥ ६९ ॥ कुलीनानां नराणां च । नारीणां धर्मचेतसां ॥ नोचितं भाषणं दुष्टं । सर्वलोकापवादकं ॥ ७० ॥ मावादीर्वचनं पापं । मा तस्ततस्त्वमीदृशं ॥ माकार्षीश्चिंतनमपि । परजन्मनि दुःखदं ॥ ७१ ॥ यथांकुशेन हस्ती च । यथा मंत्रेण पन्नगः ॥ सुकृतेन यथा मर्त्यो । वार्यते कुप्रवृत्तितः ॥ ७२ ॥

इतस्ततस्ततो गच्छ—न्मातर्गुणगणान्विते ॥ शुभध्यानेन चेतः स्वं । तथा त्वमपि वारय ॥७३॥ बोधितापि धनैर्वाक्यैः । प्रद्युम्नेन वचस्विना ॥ सोच्चैस्तद्दर्शनाल्लेभे । प्रत्युतानंगपीडनं ॥ ७४ ॥ तत्स्वरूपं तथा वीक्ष्य । विषण्णो जननीगृहात् ॥ स निर्गत्य पुरो दूरे । जगाम घनकाननं ॥ ७५ ॥ चित्रैर्विचित्रिते तत्र । जिनाधीशनिकेतने ॥ ववंदे जिननाथार्चा । विश्वक्लेशविनाशिनीं ॥ ७६ ॥ धर्मसाराभिधः सूरि—स्तत्रास्ते मुनिपुंगवः ॥ प्रभूतपरिवारेण । युक्तः प्रौढसभास्थितः ॥ ७७ ॥ व्याख्याता द्वादशांगानां । जिनोक्तानां समस्ति सः ॥ प्रज्ञास्वदवधिज्ञान—ज्ञानापरस्वरूपकः ॥७८॥

गवं च पातकं महत् ॥ ५५ ॥ एतदूरीकुरु त्वं च । मदीयं वचनं गुणिन् ॥ कार्ये विचार्यमाणे हि । काललक्षेपः प्रजायते ॥५६॥ तवाहं जननी नास्मि । यः प्रोक्तः सोऽपि नो पिता ॥ अधुना भोगयोग्योऽसि । तत्पूरय मनोरथं ॥ ५७ ॥ इत्यश्रव्यं वचस्तस्या । निशम्य हृद्यचिंतयत ॥ विषयग्रथिला स्त्री न । कार्याकार्यं विचारयेत् ॥ ५८ ॥ विषयादपवादः स्या—द्विषयादविवेकिता ॥ विषयान्नरकप्राप्तिश्च । विषयाद्दुःखसंभवः ॥ ५९ ॥ स्त्रियस्तद्वशवर्तिन्यो—ऽकार्यं किं किं न कुर्वते ॥ मारयंत्यपि भर्तारं । सूर्यकांतेव नृपतिं ॥ ६० ॥ कटाक्षैर्वाग्विलासेन । बाह्यरागेण चेष्टया ॥ चतुरा अपि के के न । वंचिता अनया नराः ॥ ६१ ॥ पंडितानां च पांडित्यं । चातुर्यं चतुरांगिनां ॥ धीराणामपि धीरत्वं । चलेद्यस्याः पुरः क्षणात् ॥ ६२ ॥ लोकेऽप्याकर्ण्यते कांता । ब्रह्माणं चतुराननं ॥ विष्णोर्विडंबनां चक्रे । मृत्युं शंभोरकारयत् ॥ ६३ ॥ सहस्राक्षस्य शापं च । भानोः किरणतक्षणं ॥ शशांकस्य कलंकित्वं । रावणस्य कुलक्षयः ॥ ६४ ॥ विश्वासं कामिनीनां ये । प्रकुर्वंति मनीषिणः ॥ तत्पांडित्यमपांडित्यं । तच्चातुरी त्वचातुरी ॥ ६५ ॥ कामाधिक्येन संयुक्ता । क्लेशसंतापकारिका ॥ भेदसंपादयित्री स्त्री । संग्रामोद्वेगकारणं ॥ ६६ ॥ शास्त्रेष्विति प्रणीतं य—ज्ञि-

कारितं तथा ॥ ४४ ॥ सा जाते विजनेऽजल्पत । क्वणंती कामपीडया ॥ समाकर्णय मद्वाक्य-मेकाग्रेण वियोगजित ॥ ४५ ॥ विजानासि यया कुक्षौ । धृत्वा सूतस्त्वमंगजः ॥ सा का ते जननी को वा । जनको यस्य वीर्यजः ॥ ४६ ॥ हसित्वोचे कुमारोऽपि । किमेतत्पृच्छ्यते त्वया ॥ मम त्वमेव मातासि । पिता च कालसंवरः ॥ ४७ ॥ समाकर्ण्येति सा देवी । मनोभवमवीवदत् ॥ आदितस्तव वृत्तांतं । मन्मुखादवधारय ॥ ४८ ॥

अन्यदा स्वामिना सार्धं । क्रीडां कर्तुं गताभवं ॥ सरित्सरोद्रहाराम—वापीकूपाद्रिसानुषु ॥ ॥ ४९ ॥ केलिं यदृच्छया कृत्वा । तेषु स्थानेषु भूरिशः ॥ पुरींप्रति निजामावां । दंपती प्रतिचेलतुः ॥ ५० ॥ वैताढ्यभूधरे भूत—रमणारामसंस्थिता ॥ अस्ति टंकशिला तस्या । उपरि त्वं स्थितोऽभवः ॥ ५१ ॥ गच्छद्विमानमाकाशे । स्तंभितं तव पुण्यतः ॥ उत्तीर्णाभ्यां तदावाभ्यां । दृष्टस्त्वं सुंदराकृतिः ॥ ५२ ॥ ततो मया समादाय । समानीतो निकेतने ॥ अयं मम पतिर्जीवी । प्रमोदादिति वर्धितः ॥ ५३ ॥ अथ त्वं ममतां वांछा—मनल्पकालचिंतितां ॥ भोगान् भुक्त्वा मया सार्धं । संपूर्णीकुरु सुंदर ॥ ५४ ॥ ततो ममाखिलप्राण—दानं तव भविष्यति ॥ अन्यथा रमणीहत्या-

निद्रा निशासु च ॥ इत्यहोरात्रमप्यस्या—श्चान्तसंतापकारकं ॥ ३३ ॥ समस्तानामपि ङगे । नॄणां स्त्रीणां तदीक्षणात् ॥ बभूव प्रचुरं दुःखं । राज्ञी हि जननीनिभा ॥ ३४ ॥ ततश्चिकित्सकैः प्राज्या । चिकित्सा प्रविनिर्मिता ॥ तथापि न तनौ तस्याः । समाधिः समजायत ॥ ३५ ॥ कुमारस्य सभास्थस्य । कालसंवरभूभुजा ॥ निवेदितं तदान्येद्यु—र्मातुर्देहे व्यथास्ति ते ॥ ३६ ॥ गतः समन्नवो वत्स । समाधिप्रश्नहेतवे ॥ सोऽवक् श्रुतमपि स्वामि—न्मयका नास्ति सर्वथा ॥ ३७ ॥ व्यथाप्यस्ति च तेऽथाज्ञा । तर्हि गच्छामि सांप्रतं ॥ इत्युक्त्वा तेन यातेन । तत्स्वरूपमदृश्यत ॥ ॥ ३८ ॥ आकारेण गिरा नेत्र—विकारेणांगचेष्टया ॥ विक्रिया मन्मथस्यैव । ज्ञाता तेन दुरासदा ॥ ३९ ॥ कामस्य विकृतिं ज्ञात्वा । चिंतयामास चेतसि ॥ शरीरे कथमेतस्याः । समाधिर्हि भविष्यति ॥ ४० ॥ सर्वेषामपि रोगाणां । चिकित्सा वर्तते बहुः ॥ कंदर्पस्य विकारस्य । भोगादेव प्रतिक्रिया ॥ ४१ ॥ कल्पनामिति यावत्स । प्रकुर्वाणो व्यचिंतयत ॥ तावत्कनकमालाख्य—नंगचेष्टामचीकरत ॥ ४२ ॥ कुमारेण तदा पृष्टं । मातस्ते कास्ति वेदना ॥ तया विततनिःश्वासै—रेवोत्तरं समर्पितं ॥ ४३ ॥ अत्याग्रहाद्यदा पृष्टं । मदनेन विवेकिना ॥ कृत्वा परिकरं दूरे । विविक्तं

सूर्पणखा जाता । कंदर्पदर्पविह्वला ॥ २० ॥ तथा कनकमालापि । मनोभुवातिपीडिता ॥ विस्मार्य
पुत्रसंबंधं । वियोगव्याकुलाभवत् ॥ २२ ॥ प्रद्युम्नः संस्थितो याव—द्वत्सलो मातृभक्तये ॥ पत्युः
पराङ्मुखीभूता । दध्यौ तावन्मनस्यसौ ॥ २३ ॥ गते तस्मिन् जराभीरु—बाणैः पीडितविग्रहा ॥
व्याकुला प्राप वैकल्यं । कामस्पृहा हि दुस्सहा ॥ २४ ॥ कपोलयोः क्षणं हस्तौ । दत्वा रुरोद भू
रिशः ॥ क्षणं पयोधरद्वंद्वे । क्षणं स्वरूपमीक्षते ॥ २५ ॥ क्षणं कुंदाभदंतैः सा । चर्वयामास चा-
धरौ ॥ नाभेरुपर्यपश्यच्चा—करोत्कक्षांतरे करौ ॥ २६ ॥ क्षणं पीनस्तनद्वंद्वे । जंघयोरकुन व्रणान्॥
क्षणं मुमोच निःश्वासान् । क्षणं मौनावलंबिनी ॥ २७ ॥ यथा यथेति चक्रे सा । कामचेष्टामने-
कधा ॥ तथा तथा दिदीपेऽस्या । अंगेऽनंगधनंजयः ॥ २८ ॥ तस्योपशांतये नीरै—रभिषिक्ता
सुशीतलैः ॥ तापव्यापपरिध्वंसै—र्विलिप्ता चंदनद्रवैः ॥ २९ ॥ वेष्टिता कदलीपत्रैः । कर्पूरैर्मर्दिता
तनौ ॥ शायिता पुष्पशय्यायां । तथापि न शशाम सा ॥ ३० ॥ तस्याः काये शशांकस्या—दह-
नायत रश्मयः ॥ असर्पायंत हाराश्च । मणिमौक्तिकसंयुताः ॥ ३१ ॥ बभूवुर्भारभूतानि । भूषणा
न्यखिलान्यपि ॥ सूक्ष्माणि पट्टकूलानि । स्थूलवस्तूपमानि च ॥ ३२ ॥ अन्नपानारुचिर्जाता । नष्टा

आघ्रायते जगध—कर्पूरादिसमुद्भवः ॥ ७ ॥ रदनैश्चर्वितं चंच—त्तांबूलमस्य वक्त्रजं ॥ जक्षयेद्रस
ना सैव । मनोहरा न चापरा ॥ ८ ॥ तदेव हि वपुर्वच्मि । श्लाघनीयं सुखावहं ॥ नित्यमालिंग्य-
ते येन । साकमेतस्य वर्ष्मणा ॥ ९ ॥ भूयः शुचिपयोदाग्याः । सैरिन्ध्याः सुपयोधरात् ॥ तत्काल-
कर्षितं दुग्धं । हेमंतेऽनेन पीयते ॥ १० ॥ वल्लभेन सहैतेन । शय्यायां शाय्यते मया ॥ शीतं
भूयोऽपि देहं नो । शिशिरे कपयेत्तदा ॥ ११ ॥ पुष्पैः फलैर्दलैर्वल्ग—द्भोज्ये पल्लविते वने ॥
क्रीडामेतेन कुर्वेऽहं । वसंते व्रीडयोज्झिता ॥ १२ ॥ कर्पूरकुंकुमाभ्यां च । मिश्रितं चंदनं यदा ॥
देहे विलिप्यतेऽनेन । नोष्णतापो भवेत्तदा ॥ १३ ॥ दीपैः प्रद्योतिते गेहे । देहे भवति शर्मणि
॥ वर्षासु सारिपाशाभ्यां । रम्यतेऽनेन तद्वरं ॥ १४ ॥ एलाकर्पूरसंयुक्तं । नीरं शरदि पीयते ॥ ऋ-
तूनामित्यपि षण्णां । शर्मानेनानुभूयते ॥ १५ ॥ चित्ते कनकमालेति । कल्पमाना मुहुर्मुहुः ॥ प्र-
द्युम्नरूपमालोक्या—भवत्सूर्पणखोपमा ॥ १७ ॥ सिद्धविद्यं सुतं द्रष्टुं । माता प्रीत्या समागता ॥
लक्ष्मणेन हतं वीक्ष्य । खेदमासेदुषी भृशं ॥ १८ ॥ हंतारमविजानंती । पश्यंतीनस्ततो रुषा ॥ पद-
पंक्त्यनुसारेणा—याता रामं ददर्श सा ॥ १९ ॥ सुतघातभवं दुःखं । विस्मार्य रामदर्शनात् ॥ यथा

॥ कपाटानुकरं वक्षो । मृगेंद्रानुकृतिः कटी ॥ ९५ ॥ जंघे स्तंभसमे गूढे । जानुनी चरणौ शुभौ॥
सत्पल्लवा इवांगुल्य—स्तलं रक्तोत्पलायते ॥ ९६ ॥ रूपेण लक्षणैः सर्वै—र्युक्तेन सुंदरार्चिषा ॥
पुनस्तस्य जनन्याश्च । नेत्रयोरुत्सवायितं ॥ ९७ ॥ तदा कनकमालापि । तद्रूपं वीक्ष्य भासुरं ॥
विद्धा मन्मथबाणेनो—द्ववसितुं नाभवत्क्षमा ॥ ९८ ॥ यतस्तारुण्यरूपाढ्यं । भ्रातरं पितरं सुतं ॥
दृष्ट्वा स्त्री विषयौत्कट्या—द्भोक्तुं तमपि वांछति ॥ ९९ ॥ कांतायाश्छिन्ननासायाः । शतवर्षतनोर
पि ॥ विश्वासो न विधातव्यः । पुरुषेण मनीषिणा ॥ ३०० ॥ किं पुनश्चारुतारुण्य—रूपचातुर्यसं
पदः ॥ क्रियते प्रत्ययश्चित्ते । तरेण सरलात्मना ॥ १ ॥ प्रथमं त्ववतारोऽस्ति । स्त्रीणां दुःखपरंपरः
॥ अन्यच्च चिंतितप्राप्ति—र्जायते न कदाचन ॥ २ ॥ ततः कांतासु सर्वास्व—हमेव मंदभाग्यतः
॥ अधन्या गतपुण्याह—मेव नान्या मनस्विनी ॥ ३ ॥ उपलब्धिरभीष्टस्य । भाग्योदयाद्भवेद्यदि
॥ सममेतेन संबंध—स्तर्हि स्तात्परमेश्वर ॥ ४ ॥ तावेव श्रवणौ धन्यौ । याभ्यामेतस्य वक्त्रतः ॥
निर्गतं वाक्यपीयूषं । पीयते सर्वदा मुदा ॥ ५ ॥ तदेव लोचनद्वंद्वं । भव्यं मद्वक्त्रसंस्थितं ॥ वंद
नांबुजमेतस्य । प्रेमाढ्यं येन वीक्ष्यते ॥ ६ ॥ सैव नासा समीचीना । ययैतस्यास्यनिर्गतः ॥ गंध

जे । भूरिभालविभूषितः ॥ ८४ ॥ तत्रागत्य नमस्कृत्य । जनकस्य क्रमांबुजं ॥ उपाविशद्यथास्था-
नं । पुत्रो हि पितृपूजकः ॥ ८५ ॥ आलिंग्य जनकेनापि । प्रमोदरससेचनात ॥ मौलेरुपरि सं-
स्थाप्य । हस्तौ क्षेममपृच्छ्यत ॥ ८६ ॥ प्रद्युम्नोऽप्यवदत्तात । तव प्रोद्यत्प्रसादतः ॥ शुभमस्ति न किं
किं स्या—न्महतां ह्यनुभावतः ॥ ८७ ॥ स्थितस्तत्र क्षणं याव—त्तावत् प्रोवाच भूपतिः ॥ जनन्या
अपि ते वत्स । त्वं नमस्करणं कुरु ॥ ८८ ॥ विनीतो यो भवेत्सूनु—स्ताताज्ञां स न खंडयेत् ॥
इति तस्य गिरा तत्र । सहसैव स जग्मिवान् ॥ ८९ ॥ गत्वा तत्र नमस्कार—मकार्षीद्विनयाय सः
॥ चिरं जीवेति मात्रापि । तस्याशीर्वचनं ददे ॥ ९० ॥ मदीयास्ति जनन्येषा । ज्ञात्वेत्यस्थात्तदं-
तिके ॥ तावत्तद्रूपमद्राक्षीत् । सुरूपं हि स्त्रियः प्रियं ॥ ९१ ॥ स्निग्धाः कुंतलाः काला । अराला
मौलिमंजुलाः ॥ ललाटमष्टमीरम्य—रजनीकरसन्निभं ॥ ९२ ॥ पौर्णिमेंदुसमाना श्री—र्वदनस्य
विराजते ॥ लांछनभ्रममाधत्ते । भ्रूयुग्मं कार्मुकोपमं ॥ ९३ ॥ नेत्रे सरोरुहायेते । दोलायेते श्रुती
पुनः ॥ कपोलौ मुकुरायेते । बिंबायतेऽधरद्वयं ॥ ९४ ॥ दशना दाडिमबीज—सदृशाश्चिबुकं वरं
॥ कंठः कंबुरिवाभ्राज—त्स्कंधौ वृषसहोदरौ ॥ ९५ ॥ भुजावालानसंकाशौ । रक्तोत्पलोपमौ करौ

कोऽपि च समीचीन । ईदृशस्तनयो गुणी ॥ ७३ ॥ चतुर्भिः कलापकं ॥ स्थानात्स्थानान्मृगाक्ष्यो ऽपि । समायांति विलोकितुं ॥ काश्चित्समारुहंत्यूर्ध्व—मधस्तात्काश्चनोत्सुकाः ॥७४॥ मस्तकस्योपरि ग्वीयं । काश्चित्क्षिपंति मस्तकं ॥ स्कंधस्योपरि काश्चिच्च । कक्षापुटेषु काश्चन ॥ ७५ ॥ काश्चित्कटीप्रदेशेषु । काश्चिदूर्वोर्द्वयोरपि ॥ काश्चिच्चरणयोर्मध्ये । काश्चिद्वसुमतीतले ॥ ७६ ॥ त्रोटयंति तदा काश्चित । केशान् काश्चन मुष्टिभिः ॥ हंति काचिच्चपेटाभिः । कूर्पराभ्यां च काचन ॥ ७७ ॥ तस्मिन्नवसरे यद्य—त्संजातं योषितां तनौ ॥ तत्सर्वमपि हर्षाया—भवद् द्वेषाय नो पुनः ॥ ७८ ॥ चतुर्भिः कलापकं ॥ वर्तते रमणो यस्याः । पांशुवद्गुणवर्जितः ॥ भाषते सेदृशो भर्ता । देयो मम त्वया विधे ॥ ७९ ॥ यस्या रूपं न तादृक्षं । वर्यचातुर्यसंयुतं ॥ सा ब्रवीति विधे माम—कीनमप्यस्तु चेदृशं ॥ ८० ॥ काश्चिद्वदंति कांताया । रूपमस्ति मनोहरं ॥ भर्तुः काश्चन काश्चिच्च । सादृश्यमुभयोरपि ॥ ८१ ॥ काश्चिदाख्याति नारीणा—मवतारो विधे त्वया ॥ न देयो दीयते यर्हि । देयस्तद्योग ईदृशः ॥ ८२ ॥ कामः संकल्पमात्रोऽपि । सुखायते शरीरिणां ॥ प्रत्यक्षरूपधर्नायं । कस्य हर्षाय नो भवेत ॥ ८३ ॥ मोदयन्नरनारीणा—मिति स्वांतेक्षणानि सः ॥ नृपालभवनं ने

यावत् । स चादाय विनिर्ययौ ॥ तावदेवामिलत्तस्य । तत्रैव शकटासुरः ॥ ६२ ॥ कथमेष स्त्रिया सत्रा । पादचारी गमिष्यति ॥ ध्यात्वेति दर्शनात्तस्य । संतुष्टः प्रददाविदं ॥ ६३ ॥ आरोहणोचितं पुष्प—स्यंदनं सुंदराकृति ॥ वांछितस्य पदार्थस्य । दायिकां कामगां पुनः ॥ ६४ ॥ युग्मं ॥

अथैनं स्यंदनारूढं । कामिन्या सममागतं ॥ दृष्ट्वा ते खेचरा जाताः । श्यामाननाः समेऽपि च ॥ ६५ ॥ यावत्स्यादात्मनो भाग्यं । यावत्पापं विलज्यते ॥ भवेन्न द्वेषिणा ताव—त्पराभूतिर्मनागपि ॥ ६६ ॥ स्त्रिया सत्रा रथारूढः । स्वामीव मदनो बभौ ॥ पदातय इवाभूवन् । खेचराः पादचारिणः ॥ ६७ ॥ परितो वेष्टितो वज्र—मुखादिभिः सहोदरैः ॥ लाजैः षोमशभिर्भास्वन् । प्रत्यागच्छत्पुरीमसौ ॥ ६८ ॥ गच्छंतं पथि पश्यंति । ये ये तं पुण्यधारिणं ॥ अहो पुण्यफलं ह्यस्य । प्रशंसंतीति नागराः ॥ ६९ ॥ केचिद्वदंति धन्यः स । पिता यस्येदृशः सुतः ॥ केचिच्च जननी मान्या । यया कुक्षावयं धृतः ॥ ७० ॥ धन्या कन्या त्वसौ केचि—देतेन सह रूपिणा ॥ विवाहः समभूद्यस्याः । सादृश्ययोगशोभनः ॥ ७१ ॥ शतानि पंच पुत्राणां । राज्यौचित्यधृतामपि ॥ लघोरप्यस्य पुण्यं हि । वर्तते सर्वतोऽधिकं ॥ ७२ ॥ क्रियते किं घनैः पुत्रैः । क्लेशसंतापदायकैः ॥ ए-

ष्यति तं प्रीत्या । प्रकाशय पुरो मम ॥ ५० ॥ तदा तेनोदितं नृप । द्वारिकानगरीविभुः ॥ त्रिखं
मनायकः कृष्णः । समस्तखंडशासनः ॥ ५१ ॥ तस्यास्ति रुक्मिणी पत्नी । तस्याः कुक्षिसमुद्भितः
॥ सुतः प्रद्युम्ननामास्ति । सोऽस्या भर्ता भविष्यति ॥ ५२ ॥ भाग्यसौभाग्यसंपन्नो । धैर्यौदार्यसम-
न्वितः ॥ क्रीडां प्रजनयन् काल—वनं समागमिष्यति ॥ ५३ ॥ संतुष्टस्तद्वचोयोगा—त्प्रसन्नजनम-
हीपतिः ॥ तनयां कथयामास । तत्र स्थेयं त्वयाधुना ॥ ५४ ॥ तातस्य वचसात्मीय—भर्तुर्विलोक-
नाय च ॥ स्थितात्र ध्याने भर्तार—मेव पश्यति कन्यका ॥ ५५ ॥ त्वमेव चेष्टया नूनं । संभाव्य-
से मया धवः ॥ एतस्या भाग्ययोगेन । समागतोऽसि सुंदर ॥ ५६ ॥ युवयोर्जातरूपोरु—मण्योरि-
व परस्परं ॥ चेत्पाणिग्रहणं स्यात्तत् । प्रयासः सफलो विधेः ॥ ५७ ॥ तं मामेव वदत्येष । प्रमोद
मेवमाश्रयन् ॥ इति हृष्टो निजे चित्ते । प्रद्युम्नोऽपि जगाद तं ॥ ५८ ॥ मदीयमपि भूयिष्टं । पुण्यं
यत्कानने भ्रमन् ॥ अत्रागतस्त्वदीयं च । दर्शनं समजायत ॥५९॥ अन्योन्यं क्रियमाणायां । वा-
र्तायां तुष्टिसंभवात् ॥ तत्पाणिग्रहणं साकं । तया कारितवान् सुरः ॥ ६० ॥ एकः स मदनो मर्त्य—
स्तरुणोऽन्यच्च कामिनी ॥ तादृशी मिलिता शोभा । वर्ण्यते तर्हि कीदृशी ॥ ६१ ॥ नवोढां प्रमदां

तामीदृशीं समालोक्य । प्रद्युम्नो विस्मयाकुलः ॥ स्वचित्ते चिंतयामास । तद्रूपमग्नलोचनः ॥ ३९ ॥ रंभा किमुर्वशी नाग—कुमारकामिनी किमु ॥ किं किन्नरी किमिंद्राणी । किं वा पातालसुंदरी ॥ ॥ ४० ॥ सर्वासामपि कांताना—मादाय रूपसंपदः ॥ एतस्या विधिना रूपं । चक्रे लावण्यवारिधि ॥ ४१ ॥ रूपं तस्याः समालोक्य । चित्रचित्रितमर्त्यवत् ॥ इतस्ततः प्रयातुं न । समर्थो मदनोऽभवत् ॥ ४२ ॥ तत्र स्थितो बलिष्ठोऽपि । जितानेकसुरोऽपि च ॥ मदनस्त्वक्षमो गंतुं । पीडितो मदनेषुभिः ॥ ४३ ॥ तावत्समागतस्तत्र । श्रीवसंताभिधः सुरः ॥ प्रणम्य तत्पुरः सेवा—कर्तेव सोऽपि संस्थितः ॥ ४४ ॥ प्रद्युम्नेन तदा पृष्टं । महाभाग निवेदय ॥ केयं कन्या कथं चास्मि—न्नरण्ये समुपागता ॥ ४५ ॥ कस्य वा तनया लीला—वत्या अस्याश्च नाम किं ॥ इत्युक्तः स पुरस्तस्य । तदा जगाद सादरं ॥ ४६ ॥ प्रभंजन इवाराति—पयोदपटलीहतौ ॥ अत्र प्रभंजनो विद्या—धराणामस्ति नायकः ॥ ४७ ॥ ख्याता सरस्वती तस्य । वनिता विनयान्विता ॥ तयोः पुत्री रतिर्नाम्ना । ददाते रतिमेव च ॥ ४८ ॥ एकदास्याः पितुर्धाम्नि । समाययौ निमित्तवित ॥ पुत्रीवात्सल्यतस्तस्य । पृष्टं पित्रा प्रपूज्य च ॥ ४९ ॥ स्वामिन्नस्याः सुताया मे । पाणिग्रहणकारकः ॥ को भवि-

संप्राप्य चिंतितार्थं स । भवेन्नाकीव भूतले ॥ मन्यमानः प्रतीतिं त—द्वचने मदनोऽगमत् ॥ २७ ॥
वनस्य तस्य मध्ये स । यावद्राजस्यतो गतः ॥ तावत्तेन जयंताह्वः । समैक्ष्यत शिलोच्चयः ॥ २८ ॥
नदी तस्य समीपेऽस्ति । पद्मगंधिजलान्विता ॥ उपतीरं तमालाद्यैः । पादपैः परिवेष्टिता ॥ २९ ॥
एकस्याधस्तमालस्य । शैलपट्टेऽतिसुंदरे ॥ पद्मासनसमासीना । ध्यानलीनास्ति कामिनी ॥ ३० ॥
चलेक्षणापि स्थिरदृग् । चलचित्तापि बद्धहृत ॥ चलांग्यपि दृढतनु—र्ध्यानयोगेन साभवत ॥ ३१ ॥
योगिनीमिव नासाग्र— निहितेक्षणयामलां ॥ बिभ्रतीं स्फाटिकीं मालां । पाणौ जापचिकीर्षया ॥
॥ ३२ ॥ देहे परिहितक्षीरो—दकां श्लथशिरोरुहां ॥ आच्छादितांसयुग्मां च । ध्यानैकाग्रसमन्वितां
॥ ३३ ॥ तन्वंगीं सुविशालाक्षीं । पीनोन्नतपयोधरां ॥ स्फारवक्षःस्थलां सूक्ष्म—कटिप्रदेशधारिकां ॥
॥ ३४ ॥ दधानामपि दंतेषु । श्वैत्यं रक्तत्वमोष्ठयोः ॥ प्रसन्नत्वं मुखे भूयः । कृष्णत्वं दृष्टितारयोः ॥
॥ ३५ ॥ स्वर्णं निर्भर्त्सयंतीं च । स्वशरीरस्य कांतिभिः ॥ विनीलैस्तिलकैर्देह—श्रितैरिंदीवरश्रियं
॥ ३६ ॥ सकलैर्लक्षणैः पूर्णां । वर्णनीयां विचक्षणैः ॥ मनोनयनसंतोष—कारकाकृतिसुंदरां ॥ ३७ ॥
राहित्यतः कलंकस्य । वदने सदने रुचां ॥ जयंतीं षोडशकला । बिभ्राणमपि चंद्रकं ॥ ३८ ॥

वान् ॥ निःशंकमत्र यो गछे—त्स लाभं लभते शुभं ॥ १५ ॥ लाभलुब्धस्तदीयेन । वचसा म-
दनो ययौ ॥ तेन ध्वस्तेन दैत्येना—स्येषुपोष्यं धनुर्ददे ॥ १६ ॥ उन्मादनं शोषणं च । तापनं
मदनं हृदि ॥ मोहनं मानिनीनां च । पोष्याः पंच शरा अमी ॥ १७ ॥ मोहनेन मृगाक्षीणा—मु-
न्मादनेन देहिनां ॥ प्राग्जन्मपुण्यपुण्येन । यथार्थो मदनोऽभवत ॥ १८ ॥ युग्मं ॥ क्षेमेण लाभ-
संपूर्णं । तं दृष्ट्वा मत्सरात्खगाः ॥ कातराणां महाभीति—मगछन् भीमकाननं ॥ १९ ॥ गत्वोचे
वज्रदंष्ट्रेण । यो गछत्यत्र मानवः ॥ कामरूपकरीं शक्तिं । स संप्राप्नोत्यनारतं ॥ २० ॥ तद्वाक्यान्म-
दनः शूरो । जनयन्न विचारणां ॥ गतवांस्तत्र यावत्स । तावत्तत्पतिरागतः ॥ २१ ॥ युद्धेन स जि-
तो याव—त्तावत्तेन समर्पिता ॥ दिव्या सुमनसां शय्या । छत्रं च कुसुमोत्तमं ॥ २२ ॥ तदादाया-
गतं वीक्ष्य । जगदुः क्रोधतः खगाः ॥ ज्येष्ठबंधो दुराचारं । मारयामो ह्यमुं वयं ॥ २३ ॥ स प्रोवा
च प्रतीक्षध्व—मद्यापि स्थानकद्वयं ॥ तेनैवास्य वधश्चेत्स्या—दात्मन्निर्हन्यते कथं ॥ २४ ॥ मान्यं
स्यादाग्रजं वाक्य—मिति तद्वचनेन ते ॥ मायया तं पुनर्निन्युः । काननं विपुलाभिधं ॥ २५ ॥
तत्र शैलो जयंतोऽस्ति । जयंत इव दुर्धरः ॥ तमालोक्याग्रजः प्राह । गत्वायात्यत्र यो नरः ॥२६॥

ष्यत्या—गतस्तद्धरणं तव ॥ ३ ॥ बंधनान्मोचय त्वं मां । वर्तसेऽन्योपकारकः ॥ न कुर्वंति विलंबं हि । परोपकारिणो नराः ॥ ४ ॥ तेनेत्युक्ते कुमारोऽवक् । त्वं चिंतां हृदि मा कृथाः ॥ अधुना मोचयिष्यामि । त्वां विद्याधरबंधनात् ॥ ५ ॥ एतस्य मनसि भीति—र्माभूदिति विचिंत्य सः ॥ सत्यीकर्तुं वचः स्वीयं । मोचितस्तेन बंधनात् ॥ ६ ॥ विमोचितोऽप्यनालाप्य । प्रद्युम्नमुपकारिणं ॥ अधावद्वैरिणः पृष्टे । मनोजवो जिघृक्षया ॥ ७ ॥ नश्यंतमपि तं धृत्वा । मदनस्य पुरो द्रुतं ॥ समानीयावदद्विद्या—धरो विनययोगतः ॥ ८ ॥ उपकारविधातारं । त्वामपृष्ट्वैव यत्नतः ॥ तदेनं शत्रुमानेतुं । यातो राजस्यतो ह्यहं ॥ ९ ॥ प्रसादादेव ते मर्त्या—द्यप्रभृत्यस्ति जीवनं ॥ चित्ते त्वयेति विज्ञेयं । कृतज्ञस्य गिरा मम ॥ १० ॥ इत्युक्त्वा विद्ययोर्युग्मं । तस्मै हारं मनोहरं ॥ इंद्रजालविधात्रीं च । विद्यां ददौ स तुष्टितः ॥ ११ ॥ प्रद्युम्नवचसान्योन्यं । वैरे प्रशामिते सति ॥ मनोजववसंताभ्यां । मैत्री तस्याभवद्वरा ॥ १२ ॥ ततो वसंतकेनापि । निजा सुतातिसुंदरी ॥ कन्या धन्या सलावण्या । मदनाय समर्पिता ॥ १३ ॥ ततोऽपि लाभवंतं तं । दृष्ट्वा सर्वेऽपि खेचराः ॥ स्वेदात्कालवनं निन्यु—स्तं च वक्रस्वरूपकाः ॥ १४ ॥ तस्य दूरे स्थितो वज्र—मुखोऽभाषिष्ट बांध-

कः ॥ ९१ ॥ मैत्रीं मया समं चाथो । कर्तुमेतद्गृहाण भोः ॥ कंठिकांगदकटक—युग्माग्रकटिसूत्रकं ॥ ९२ ॥ तस्तेन सहितो याव—दागछन् ददृशे दृशा ॥ व्यषीदन् हृदि सर्वेऽपि । तावद्विद्याधरांगजाः ॥ ९३ ॥ अथोऽग्रजस्ततो यानो—ऽवोचद्वज्रमुखाभिधः ॥ शूकराकृतिरेषोऽद्रि—स्तादृगेव मुखं दधत ॥ ९४ ॥ सहसैव विशेदत्र । स एव स्यान्महीपतिः ॥ इति तद्वाक्यतो वेगा—त्तं कुमारोऽधिरूढवान् ॥ ९५ ॥ तावत्सानुमता तेन । मेलितं वदनं निजं ॥ कूर्पराभ्यां कुमारेण । विदार्यावेशि निर्भयं ॥ ९६ ॥ शूकरास्येन दैत्येन । क्रुद्धेनारब्ध उत्कटे ॥ युद्धे जित्वा पुष्पधनु—र्जयशंखं ततोऽप्यलात ॥ ९७ ॥ तत्रयुक्तं च तं दृष्ट्वा । कोपात्कमलकाननं ॥ तं नीत्वा वज्रतुंगोऽव—भिर्यात्यत्र प्रविश्य यः ॥ ९८ ॥ अतिवर्यं महैश्वर्यं । तस्यैव स्यादखंमितं ॥ इति तद्वचनेनाशु । प्रद्युम्नस्तत्र जग्मिवान् ॥ ९९ ॥ स [illegible] गतवान् याव—त्तावत्तत्र वने घने ॥ निबद्धो दृढबंधेन । विद्याभृत्तेन वीक्षितः ॥ २०० ॥ तं समालोक्य पप्रछ । मदनो मदवर्जितः ॥ वनेऽत्र विजने केन । बद्धोऽसि दृढबंधनैः ॥ १ ॥ सोवक् मनोजवो नाम्ना । विद्याधरोऽस्मि पूरुष ॥ बद्धो वसंतकेनाहं । प्राग्वैरात खेचरेण हि ॥ २ ॥ सांप्रतमेव गत्वेतो । वृक्षस्योपरि स स्थितः ॥ असौ मां मारयि·

॥ ८० ॥ विशेदत्र मनुष्यो यो । मनःशंकाविवर्जितः ॥ राज्यमेकातपत्रं स्या—त्तस्य शुभ्रगुणश्रि
यः ॥ ८१ ॥ तिष्ठंत्वत्र भवंतोऽहं । यामीत्याहाग्रजोऽनुजान् ॥ तदाख्यन्मदनो गछा—म्यहं भ्रात-
स्त्वदाज्ञया ॥ ८२ ॥ गछ त्वमेव तेनेति । प्रोक्तो यदा स जग्मिवान् ॥ सन्मुखं तावदागछ—त्त
स्य क्रुद्धो भुजंगमः ॥ ८३ ॥ आगछंतं गृहीत्वा तं । पुछे सोऽभ्रामयद्यदा ॥ अधिष्ठाता तदा त-
स्या—सुरो भेजे प्रसन्नतां ॥ ८४ ॥ अश्वरत्नं मुदा तेन । छुरिकां कांचनानि च ॥ मुद्रिका ददिरे
तस्मै । प्रद्युम्नाय यशस्विने ॥ ८५ ॥ एवं तं च वशीकृत्य । नागमागात्स लाभवान् ॥ तदा तं वी-
क्ष्य ते जाता । विशेषेण विषादिनः ॥ ८६ ॥ अहो पापोऽयमायाति । लाभवानेव सर्वतः ॥ एनं
निराकरिष्यामः । कथं शल्यमिवोत्कटं ॥ ८७ ॥

एवं विचिंतयंतस्ते । गताः शरावपर्वतं ॥ गत्वा वज्रमुखस्तत्रा—भिदधावनुजान् प्रति ॥८८॥
आरोहत्यस्य शृंगं यः । शक्त्या स्वकीयया नरः ॥ प्राप्नोति खेचराणां स । कमलां सकलामपि ॥
॥ ८९ ॥ तस्य गीःश्रवणेनेति । स गत्वारुह्य भूधरं ॥ पादाभ्यां चालयेच्छृंगं । तावत्प्रकटितोऽसुरः
॥ ९० ॥ तेन सार्धं महायुद्धं । भुजाभ्यां प्रविधाय सः ॥ यावत्पराजितस्ताव—त्प्रोचेऽहं तव सेव-

तेनापि । सुधाकुंभः किरीटकः ॥ पादुके व्योमगामिन्या—वदीयंतास्य संमदात् ॥ ६९ ॥ असुरा-
र्चितमालोक्या—गच्छंतं तं च खेचराः ॥ प्रकोपेनाग्रजं प्रोचु—र्बंधोऽमुं हन्तुमक्षमाः ॥ ७० ॥ घा-
तयामस्ततो दुष्ट—मेतं प्रत्यर्थितोऽधिकं ॥ स जजल्पोत्सुका यूयं । माभूत भ्रातृवत्सलाः ॥ ७१ ॥
ततः कपित्थकांतारं । तमादायागमन् खगाः ॥ तत्र गत्वाग्रजोऽजल्प—दत्र गच्छति यो बली ॥७२॥
समीहितार्थमादाय । स जायते महीपतिः ॥ वैताढ्यवासिनां विद्या—धराणामिति भाषितं ॥ ७३ ॥
इति तस्य वचोयोगा—दुद्यतो मदनोऽभवत ॥ अनिषिद्धप्रचारो हि । सर्वत्रोद्यमते बली ॥ ७४ ॥
अहं यामीत्युदित्वा स । यावत्तत्र वने गतः ॥ आरूढस्तं तरुं ताव—न्मत्तंगजः समागतः ॥ ७५ ॥
स वनस्थायिनो वृक्षान् । मुक्त्वा स्वबालकानिव ॥ अंजनाद्रिरिवोत्तुंगः । कुमारं प्रत्यधावत ॥ ७६॥
आत्मनः कलयेन्नं तं । क्रीडयित्वा निषादिवत् ॥ आरुरोह कुमारोऽपि । पृष्ठस्योपरि तस्य तु ॥७७॥
प्रसन्नत्वं श्रयन् हस्ति—रूपधर्ताऽसुरोऽवदत ॥ तवाहमस्मि कामेन्द्रः । स्मर्तव्योऽवसरेऽनिशं ॥७८॥
इति तद्वाग्विलासेन । रंजितः पूजितः पुनः ॥ आगच्छन् स यदा दृष्टः । खेदं दधुस्तदा खगाः ॥
॥ ७९ ॥ तं च खेदेन ते निन्युः । शिखरं भुजगाश्रितं ॥ गत्वा तत्रावदज्ज्येष्ठो । दधत्कपटपाटवं

ऽयमपि स्वीयं । लोभवान् हि परित्यजेत् ॥ ५७ ॥ बंधूनां पुरतस्तेन । यावदेवं निवेदितं ॥ ताव-
त्सर्वेऽपि ते माया—योगेन मिलिताः पुनः ॥ ५८ ॥ मदनोऽप्यलगत्पादौ । ज्येष्ठबंधोश्च भक्तये ॥
दुष्टोऽग्रजस्तु वैताढ्य—सन्निधौ च निनाय तं ॥ ५९ ॥ कौतुकानि प्रपश्यत्सु । सर्वेषु तत्र सर्वतः
॥ ददृशे वज्रदंष्ट्रेण । सहकारो मनोहरः ॥ ६० ॥ तं दृष्ट्वा फलितं विष्वग् । जगौ वज्रमुखोऽनु
जान् ॥ अस्योपरि समारुह्य । भक्षयेत्तत्फलानि यः ॥ ६१ ॥ सौभाग्येन मनोज्ञेन । वर्धमानेन
संततं ॥ चमत्कारकरं स्त्रीणां । यौवनं तस्य जायते ॥ ६२ ॥ स्थाने स्थाने महालाभ—प्राप्तितस्त-
स्य वाचया ॥ विश्वासं हृदये बिभ्र—त्तमाम्रं मदनोऽगमत् ॥ ६३ ॥ आरुह्य कंपयेद्याव—त्तावत्त
स्येश्वरोऽसुरः ॥ कुर्वन् दंतैः कटत्कारं । प्रोचे वानररूपभृत् ॥ ६४ ॥ रे धृष्ट कथमारूढः । सहका-
रेऽत्र मामके ॥ यदारूढो निपात्यंते । फलान्यस्य कथं तदा ॥ ६५ ॥ अन्योन्यं गालिदानेना—
जागरीन्मदनस्य रुक् ॥ अहो वानरमात्रोऽपि । गालीर्दत्ते ममाप्ययं ॥ ६६ ॥ इति क्रोधेन लांगू
लं । गृहीत्वा निजपाणिना ॥ भ्रामयन्नजितो ऽत्यक्त—मास्फालयितुमुद्यतः ॥ ६७ ॥ स तदाह म-
हाभाग । मुंच मुंच कृपानिधे ॥ इत्युक्ते तेन मुक्तः सो—ऽसुररूपधरोऽभवत् ॥ ६८ ॥ प्रादुर्भूतेन

केनापि प्राग् जितो नाहं । जितस्त्वया कुमार चेत ॥ तदादत्स्वामिना धौत—मिदं स्वर्णांशुकद्वयं
॥ ५६ ॥ हेमवस्त्रे समादाय । जीवंतं वहितोऽपि तं ॥ समागच्छंतमालोक्य । सर्वेऽपि चुकुपुर्हृदि ॥
॥ ५७ ॥ मेषाकारं ततोऽप्यङिं । गत्वा वज्रमुखोऽभ्यधात ॥ शंकाशून्यो विशेच्चोऽत्र । स प्राप्नोति
हि चिंतितं ॥ ५८ ॥ मदनो वचसा तस्य । प्रेरितोऽतिपराक्रमः ॥ ज्येष्ठबंधुं नमस्कृत्य । जगाम त-
त्र वीक्षितुं ॥ ५९ ॥ देवताधिष्ठिते स्थाने । यावद्गतः कुतूहलात् ॥ तावद्दिव्यानुभावेन । मिलितं
शृंगयामलं ॥ ६० ॥ बलिष्ठाभ्यां स्वहस्ताभ्या—मितस्ततो विधाय तत ॥ गुहायां तत्र तामस्यां ।
चक्रवर्तीव सोऽविशत् ॥ ६१ ॥ देवस्तत्संगतोंह्रिभ्यां । व्यापादित इवोच्चकैः ॥ कोपात्प्रकटितो युद्धे
। कुमारेण पराजितः ॥ ६२ ॥ ततः स्वतोऽधिकं जान—न्नसुरस्तत्पराक्रमं ॥ स्वीकृत्य सेवकीभावं ।
ददौ कुंडलयामलं ॥ ६३ ॥ श्रुत्योः परिहितद्वंद्वं । तं निरीक्ष्य खगा जगुः ॥ अग्रजैनं दुरात्मानं ।
मारयामोऽधुना वयं ॥ ६४ ॥ यतस्ततस्त्वयं लाभ—मादायायाति संप्रति ॥ दुःसाध्यो वर्धितो भा-
वी । दुष्टव्याधिरिवात्मनां ॥ ५५ ॥ तदा वज्रमुखोऽवोच—द्धीरा भवत बांधवाः ॥ स्थानान्यद्यापि
संत्यस्य । दश मृत्युचितानि च ॥ ५६ ॥ मृतिस्तेषु भविष्यत्य—वश्यमेतस्य लोभिनः ॥ जीवित-

कुमारेण ततो लेभे । जयो विस्मयदायकः ॥ ४३ ॥ नमेदाक्रांत एवात्र । प्रोक्ततो नान्यथा मदा
त ॥ इत्याक्रांतः कुमारेण । वापीपतिस्तमानमत् ॥ ४४ ॥ स जजल्प नमस्कृत्य । कुमार किंकरोऽ
स्मि ते ॥ अथ मेऽनुग्रहाय त्वं । गृहाण मकरध्वजं ॥ ४५ ॥ बहुशः कथिते तेन । जगृहे तेन
स ध्वजः ॥ मकरध्वज इत्याख्य—स्तदादिमर्दनोऽभवत ॥ ४६ ॥ ततोऽपि लाभसंयुक्तं । वीक्ष्या-
गतं तमग्रिमिः ॥ खगाः खगा इवाब्रुवन् । विवेकपरिवर्जिताः ॥ ४७ ॥ सुवर्णस्य परीक्षा स्या—
दग्निप्रक्षेपणाद्यथा ॥ पुण्यस्यास्य तथा वह्नि—प्रक्षेपात्सा विधीयते ॥ ४८ ॥ इति तं प्रापयंस्तेऽग्नि
—कुंडस्य ज्वलतोंतिकं ॥ तत्र प्राप्याग्रजः प्रोचे—ऽनुजाः शृणुत मद्वचः ॥ ४९ ॥ प्रविशेदग्निकुं
डेऽत्र । साहसेन निजेन यः ॥ चिंतितार्थं समादाय । स भवेद्धरणीधवः ॥ ५० ॥ गत्वात्रापि प-
रीक्षेऽहं । मत्पुण्यमिति चिंतयन् ॥ प्रद्युम्नस्तस्य वाक्येना—विशत्तत्राविलंबतः ॥ ५१ ॥ तत्र प्रज्व-
लतोंगारान् । विद्यासिद्धः पुमानिव ॥ हस्ताभ्यां समुपादाय । चिक्रीड लीलयैव सः ॥ ५२ ॥ ज-
लकुंभ इव ज्वाला—निकुंडेऽस्य खेलतः ॥ प्रादुर्भूयासुरः कोपा—दधावन्मारणेच्छया ॥ ५४ ॥
निहंतुं धावमानं तं । निरीक्ष्य मदनेन तु ॥ गत्वाभिमुखमाक्रम्य । जितो जजल्प सोऽसुरः ॥५५॥

कीयरद्धिकां ॥ ३१ ॥ दृष्ट्वा नागगुहातोऽपि । तं विद्याभरणैर्युतं ॥ सर्वेऽपि चिंतया ग्रस्ता । अब्रुवन् खेचरात्मजाः ॥ ३२ ॥ स्नानं विना न शोभंते । भूषणानि नृणां तनौ ॥ देवताधिष्ठितां वापी—मेवं तमनयन् खगाः ॥ ३३ ॥ तां तं नीत्वावदद्वज्र—मुखो वज्रकठोरहृत् ॥ अस्यां यः स्नाति निःशंकं । स स्यात्स्वरूपभाग्विभुः ॥ ३४ ॥ तेनोक्तमेवमाकर्ण्य । प्रद्युम्नः साहसान्वितः ॥ सहोदरान पृष्ट्वैव । झंपापातं प्रदत्तवान् ॥ ३५ ॥ तत्र तेन गतेनांभः । सर्वमप्यवगाहितं ॥ तदा तस्या अधिष्ठाता । सुरः प्रादुरभूद्रुषा ॥ ३६ ॥ तेनोचे प्रकटीभूय । रे पापिंस्त्वं न वेत्सि किं ॥ देवाश्च देव्य एवात्र । क्रीडां कुर्वंति नापरे ॥ ३७ ॥ ततः कथं त्वया दुष्ट । ममापूतं कृतं जलं ॥ याहि पुरस्तान्मे प्राणा—नन्यथा त्यक्षसि स्वयं ॥ ३८ ॥ क्षणिका हि मनुष्याणां । प्राणा भवंति विग्रहे ॥ वराक त्वमतो गच्छ । मा स्वच्छांभोऽपवित्रय ॥ ३९ ॥ धैर्यवान् मदनः प्रोचे । दूरतः किं प्रजल्पसि ॥ यदि त्वं वर्तसे शूरो । धीरो वीरो रणं कुरु ॥ ४० ॥ तदोभयोः परिज्ञानं । धीराधीरत्वसंभवं ॥ भविष्यति मनुष्यत्व—देवत्वप्रकटीकरं ॥ ४१ ॥ वचनेन तदीयेन । सोऽपि प्रादुर्भवत्क्रुधः ॥ योद्धुं सार्धं कुमारेण । प्रारेभे तेन सोऽपि च ॥ ४२ ॥ जयः पुण्यवतो जंतो—स्तयोर्युध्यमानयोः ॥

वर्तंते । व्यंतरा असुरा अपि ॥ आराधिता प्रसन्नाः स्यु—र्न तु नागकुमारकाः ॥ २० ॥ सर्वेऽप्यो-
ऽपि शरीरिभ्यो । नागाः स्युः कोपकारिणः ॥ अतोऽयं नीयते नाग—गुहायां यदि तद्वरं ॥ २१ ॥
ध्यात्वेति खेचराधीश—तनया नयवर्जिताः ॥ आनयन्न सरलात्मानं । तं भीमं नागकंदरं ॥ २२ ॥
तस्या दवीयसि स्थाने । स्थितो वज्रमुखोऽवदत् ॥ यः प्रविश्यात्र निर्गच्छे—च्चिंतितार्थं लभेत सः ॥
॥ २३ ॥ युष्मानत्रैव संस्थाप्य । गच्छाम्यहं ततोऽनुजाः ॥ तदोचे मदनो बंधो । यामि चेन्न विषी
दसि ॥ २४ ॥ अब्रवीदग्रजो वत्स । तवैवार्थोऽस्तु चिंतितः ॥ अस्मिन्नर्थे विषादः किं । विधीयते
मयानुज ॥ २५ ॥ गच्छ गच्छ मनःस्वच्छा—गच्छ प्राप्य समीहितं ॥ इत्युक्तः स ततोऽचाली—द्दली-
कवचनोज्झितः ॥ २६ ॥ स यावत्कृतवांस्तत्र । तावत्तस्य प्रचारतः ॥ फुफुत्कारं प्रकुर्वाणो । विनिर्ययौ
भुजंगमः ॥ २७ ॥ वीक्ष्य सन्मुखमायांतं । प्रकोपारुणलोचनं ॥ स जांगुलिकवत्पार्श्वे । समेत्य त
मखेलयत् ॥ २८ ॥ हृद्यसद्यस्कविद्यायाः । प्रयोगात्तं भुजंगमं ॥ तस्य खेलयतस्तुष्टो—ऽसुरोऽभव-
त्तदाश्रितः ॥ २९ ॥ नागतल्पसमन्वीतां । शय्यां च वल्लकीं वरां ॥ विष्टरं पादपीठं च । चीवराभ-
रणानि च ॥ ३० ॥ विद्यां निलयकर्त्रीं च । प्रत्नरत्नसरत्निकां ॥ ददौ तस्मै कुमाराया—सुरः स्व

त्वा तत्र कृतस्तेन । महाशब्दो भयंकरः ॥ ११ ॥ आयातस्तेन शब्देना—धिष्ठाता तस्य वेगतः ॥
समेत्य कथितं तेन । प्रकोपारक्तचक्षुषा ॥ १२ ॥ सहसा मृत्युदाताहं । नात्र किं रे श्रुतस्त्वया ॥
यदागत्यात्र निर्घोषान् । स्वैरं करोषि भीषणान् ॥ १२ ॥ अब्रीभणत्कुमारोऽपि । रे त्वं कुप्यसि किं
वृथा ॥ यदि त्वयि भवेद्भक्ति—र्युद्धायैहि तदा द्रुतं ॥ १३ ॥ दग्धस्योपरि भूयिष्ट—दुःखकृत्स्फो-
टकोपमं ॥ समाकर्ण्य वचस्तस्य । सोऽप्यभूत्क्रोधभीषणः ॥ १४ ॥ रक्ताक्षो व्यलगद्योद्धुं । यद्वस्ते-
न सह द्रुतं ॥ अहंस्तथा कुमारस्तं । स आक्रंदं यथाकरोत ॥ १५ ॥ यदा जितः कुमारेण । प्र-
सन्नः सोऽभवत्तदा ॥ प्रसन्नतास्वरूपस्य । दर्शनार्थं स चानमत् ॥ १६ ॥ निर्मलं चामरद्वंद्वं । पवि-
त्रं कनकासनं ॥ नष्टारितरवारि चा—नीय तस्मै स दत्तवान् ॥ १७ ॥ पुनः सुनंदकं दत्वा । प्रसू-
नान्यंशुकानि च ॥ तवाहं सेवकोऽस्मीति । कुमारमसुरोऽब्रवीत् ॥ १६ ॥ इत्युक्तेऽपि कुमारस्तं । सं-
स्थाप्य तत्र तुष्टितः ॥ ततोऽसुरार्चितांगोऽसौ । भूषितश्च विनिर्गतः ॥ १७ ॥ अत्रापि मारितो नायं
। चिंतयंत इतीर्ष्यया ॥ ते भूषितं तं समालोक्य । बभूवुर्दीनमानसाः ॥ १८ ॥ यतस्ततोऽप्ययं ला-
भं । समानयति सत्वरं ॥ अत्रास्य जीवितस्यापि । विनाशो वै भविष्यति ॥ १९ ॥ देवा देव्यश्च

करश्चास्मि । ब्रूहि कार्यं करोमि किं ॥ ९९ ॥ कुमारोऽपि तमाचख्यौ । त्वमेवं यदि भाषसे ॥ अ-
हमाकारयामि त्वां । समेतव्यं त्वया तदा ॥ १०० ॥ असुरो वरमित्युक्त्वा । प्रणम्य च तिरोदधे ॥
ततो धीरः कुमारोऽपि । चचाल भूषणान्वितः ॥ १ ॥ असुरेण समं युद्धा—दिकं प्रकुर्वतो भृशं ॥
तस्यासीन्महती वेला । तैस्तदा हृदि चिंतितं ॥ २ ॥ एतावत्यन्नवद्वेला । तत्रैव तस्य दोष्मतः ॥
हतो दैत्येन नूनं स । नान्यथा सा प्रजायते ॥ ३ ॥ सर्वेऽपि ते प्रमोदेन । परस्परमवीवदन् ॥ वि-
नौषधिं गतो व्याधि—र्हो हि भाग्यमात्मनां ॥ ४ ॥ विमृशंत इति स्वांते । तेऽद्राक्षुः प्रतिकंदरं
॥ भूषितं तत्र तं दृष्ट्वा । सर्वे जाता गतस्मयाः ॥ ५ ॥ मिलित्वा पुनरप्येते । दंभाद्विद्याधरांगजाः
॥ निन्युस्तं सरलं तूर्णं । कंदरां मरणप्रदां ॥ ६ ॥ परीतो दूरतस्तस्याः । स्थित्वा भूत इव क्षणात
॥ जगौ वज्रमुखो बंधून् । प्रविशेत्सहसात्र यः ॥ ७ ॥ इष्टसिद्धिमवाप्याय—मायाति प्रीतिसंयुतः ॥
भवंतोऽत्रैव तिष्ठंतु । गत्वायाम्यविलंबितं ॥ ८ ॥ लब्धः स्यादेकशो येन । विजयो जगतीस्फुरन् ॥
स एव पुनरप्यत्र । प्रवर्तेत तदाशये ॥ ९ ॥ ततः स एव बंधूनां । पुरतो न्यगदन्मुदा ॥ अहमेव
प्रयास्यामि । तिष्ठंत्वत्राखिला अपि ॥ १० ॥ उक्त्वेति वीक्षमाणेषु । बांधवेषु स जग्मिवान् ॥ ग-

तदा श्रीनमिसार्वेण । प्रोचे शृणु नरेश्वर ॥ भविष्यत्यस्य यो नाथो । वदामि तं पुरस्तव ॥ ८८ ॥
श्रीमतो नेमिनस्तीर्थे । हरिवंशाब्जिनीपतिः ॥ द्वारवत्यां भविष्यत्य—च्युतोऽच्युताग्रजोपमः ॥ ८९ ॥ रुक्मिणी रमणी तस्य । प्रशस्यगुणधारिणी ॥ तस्याः कुक्षिसमुद्भूतो । भावी प्रद्युम्ननंदनः ॥ ९० ॥ पुण्यो नैपुण्यपुण्येन । धीरो गुणगणान्वितः ॥ भविष्यत्यस्य स स्वामी । समेत्येदं हि गोपुरं ॥ ९१ ॥ इति श्रीनमिनाथस्य । समाकर्ण्य स्फुटं वचः ॥ हिरण्यवसुधाधीशः । कथयामास मांप्रति ॥ ९२ ॥ स्वपराक्रमयोगेन । गर्जन्नन्यमचिंतयन् ॥ समेत्यात्र त्वया सार्धं । यो युध्येत स ते पतिः ॥ ९३ ॥ तावद्विद्यागणाधीश । स्थेयं त्वयात्र शर्मणा ॥ उदित्वेति हिरण्येशो । जैनं चरणमादधे ॥ ९४ ॥ चिरं चारित्रमाराध्य । दृढकर्माणि मूलतः ॥ विध्वस्य तपसा ज्ञान—मासाद्य स शिवं ययौ ॥ ९५ ॥ स्थितोऽत्र वचसा तस्य । त्वदर्थमत्र मंडले ॥ अचिंत्यमहिमागार—मरदं मिलितोऽसि च ॥ ९६ ॥ अथ त्वमासामादत्स्व । विद्यानां संचयं द्रुतं ॥ महीयान् समयो नाथ । स्थितस्यात्र ममाभवत् ॥ ९७ ॥ दत्वा मंत्रगणं तस्य । मुकुटं रत्नसंचितं ॥ कुमारं पूजयित्वावक् । तदधिष्टायकोऽसुरः ॥९८॥ नमिनाथेन यः प्रोचे । स त्वमेव मम प्रभुः ॥ अहं ते किं-

य राज्यमात्मनः ॥ दत्वा सिद्धवनं विद्या— साधनाय स जग्मिवान् ॥ ७५ ॥ तत्र गत्वा तपः कृत्वा । हृद्यां विद्यामसाधयत ॥ विधिना साधयित्वा ता—मागान्मंदिरमुत्सवैः ॥ ७६ ॥ न्यासार्पणमिव क्षिप्रं । तद्राज्यमनुजार्पितं ॥ सिद्धविद्यो हिरण्याख्यो । नृपतिर्बुभुजे मुदा ॥ ७७ ॥ महतामतिभोगेन । विरक्तिर्वार्धके भवेत ॥ विरक्तिरिति तस्याभूद् । घोरसंसारवासतः ॥ ७८ ॥ शुभे दिने ततो राजा । राज्यं न्यस्य निजांगजे ॥ श्रीनमिनाथसार्वस्य । सभायां नंतुमागतः ॥ ७९ ॥ आगत्य च जिनं नत्वा । विनयान्नतमस्तकः ॥ प्रजजल्पावनीपालो । ज्ञानवैराग्यपूरितः ॥ ८१ ॥ वर्तते नाथ संसार—स्वरूपं क्षणभंगुरं ॥ ततः शाश्वतसौख्याय । चारित्रं त्वं प्रदेहि मे ॥ ८२ ॥ निशम्य वचनं तस्य । बभाण भगवानपि ॥ क्षमाधिनाथ सौख्यं ते । यथा भवेत्तथा कुरु ॥ ८३ ॥ नमिनाथवचः प्राप्य । दीक्षां गृहीतुमुद्यतः ॥ विद्यानां निकरस्ताव—त्प्रोचे हिरण्यपार्थिवं ॥ ८४ ॥ वैराग्यरसपूरेण । गृह्णासि संयमं नृप ॥ वद त्वं कोऽस्मदाधार—स्तिष्ठामश्च यमाश्रिताः ॥ ८५ ॥ विद्यागणोदितं श्रुत्वा । वचोऽवग्नेमिनं नृपः ॥ स्वामिन्नस्य स्वरूपं य—द्भवेत्तत्कथय प्रभो ॥ ८६ ॥ प्रोद्यद्विद्यागणस्यास्य । नायकः को भविष्यति ॥ विधाय करुणां नाथ । सांप्रतं तन्निवेदय ॥ ८७ ॥

वर्यचातुर्यधैर्यभृत ॥ सतीगुणसमायुक्ता । वियु-
तिस्तत्र संमतः ॥ ६३ ॥ तस्यानिलेति ज्ञार्यास्ति । वियोगरहितान् पुनः ॥ तावज्ञास्तां न गर्भ-
त्कौकृत्यकर्मज्ञिः ॥ ६४ ॥ ज्ञुंजानावद्भुतान् ज्ञोगान् । स्वर्गलोकात्सुरोऽज्ञवत् ॥ हिरण्या-
तं । कालं कलंकवर्जितौ ॥ ६५ ॥ तयोः पुत्रोऽन्यदा च्युत्वा । विज्ञाय तनये निजे ॥ त-
ज्ञिधया ख्यातो । रूपेण निर्जरोपमः ॥ ६६ ॥ राज्यभारस्य योग्यत्वं । द्वादशांगीमधीत्य च
त्समर्प्य ज्ञवोद्विग्नः । प्राव्राजीन्मुक्तये नृपः ॥ ६७ ॥ पालयित्वा चिरं दीक्षां । ज्ञव्यलोकान् प्रबोध्य सः
॥ स्फुरत्तरं तपस्तप्त्वा । केवलज्ञानमाप सः ॥ ६८ ॥ केवलज्ञानयोगेन । राज्यं प्रपाल्यते तथा
॥ अष्टकर्मक्षयं कृत्वा । सिद्धिसौधमशिश्रयत ॥ ६९ ॥ हिरण्याख्येन ज्ञूपेन । प्राज्यं कंटकव-
॥ कंटकाः काननं ज्ञेजु—र्यथा बब्बुलपादपान् ॥ ७० ॥ सम्यक्पालयति राज्यं । प्रासादशिखर-
र्जितं ॥ तथाप्यधिकलाभाय । हृदयं तस्य वर्तते ॥ ७१ ॥ कौतुकेन ततोऽन्येद्युः । विज्ञूत्या स विरा-
स्थितः ॥ पश्यतीतस्ततस्ताव—द्दैत्यराजं ददर्श सः ॥ ७२ ॥ प्रज्ञूतसैन्यसंयुक्तं । तथा सि-
जितं ॥ तं दृष्ट्वा चिंतयामास । हाहा ममेदृशं न हि ॥ ७३ ॥ साधयामि ततो विद्यां । 
द्धसमर्पितां ॥ यथा मम प्रसन्ना सा । सर्वां ददाति संपदं ॥ ७४ ॥ विचार्येति स्वकीयाया—नुजा-

त्सुवं ॥ ५२ ॥ तदा नागकुमारस्त—दधिष्ठाता प्रकोपतः ॥ प्रत्यक्षीभूय रक्ताक्षो । व्याचष्ट निष्ठुरं वचः ॥ ५३ ॥ रे पापिन्न रे डुराचार । रे निर्लज्जशिरोमणे ॥ किमकृत्यं त्वयारब्ध—मकालमरणेच्छुना ॥ ५४ ॥ किं त्वयाकर्णितं नास्ति । यावदेतावतो दिनान् ॥ एतदस्ति सुरस्थान—मव ज्ञातुर्विघातकं ॥ ५५ ॥ प्रजजल्प कुमारोऽपि । किं त्रापयसि रे मुधा ॥ तव स्याद्यदि सामर्थ्यं । तद्युध्यस्व मया समं ॥ ५६ ॥

इति प्रोक्तः क्रुधाध्मातः । समागत्यासुराधमः ॥ शरीरे व्यलगत्तस्य । मारणार्थं समुद्यतः ॥ ॥ ५७ ॥ व्यलगत्तं कुमारोऽपि । युद्धं जनयितुं तदा ॥ तेन यष्ट्या तथा मुष्ट्या । परिभूतः स निर्जरः ॥ ५८ ॥ हारितः पुरतस्तस्या—सुरो भग्नपराक्रमः ॥ कुमारः फणिपत्योच्चै—रूचेऽस्मि तव सेवकः ॥ ५९ ॥ अद्यप्रभृति नाथस्त्वं । ममासि पुरुषोत्तम ॥ तस्योपवेष्टुमित्युक्त्वा । सिंहासनं समर्पितं ॥ ६० ॥ तत्र स्थितः कुमारोऽवक् । किमत्र विषमास्पदे ॥ संस्थितोऽस्यसुरः प्राह । त्वदर्थमेव केवलं ॥ ६१ ॥ कुमारः पुनरप्यूचे । मदर्थं केन हेतुना ॥ स्थितोऽसि सोऽप्यवग् यर्हि । त्वं पृच्छसि तदा शृणु ॥ ६२ ॥ अत्रैव पर्वते लंका—भिधं नगरमद्भुतं ॥ नाम्ना कनककेतुश्च । नृप·

तद्बृहद्भानु—मिवांतर्दधतः क्रुधं ॥ वज्रदंष्ट्रादयस्ते तं । निन्युर्वैताढ्यमस्तकं ॥ ४१ ॥ यावत्ते तत्र सर्वेऽपि । गताः कौतुकचेतसः ॥ तावत्प्रासादमुत्तुंग—मेकमैक्षंत सुंदरं ॥ ४२ ॥ चतुर्द्वारं सहस्राणि । शिखराणि दधद्वरं ॥ निरीक्ष्यार्हतगेहानि । प्राविशंस्तेऽखिला अपि ॥ ४३ ॥ प्रविश्य विधिना तत्र । नत्वा च मूर्तिमार्हतीं ॥ विनिर्गत्य बहिः प्रीति—पूरेण द्वारि संस्थिताः ॥ ४४ ॥ तत्र स्थित्वा यदाद्राक्षु—रितस्ततः स्वदृष्टिभिः ॥ तदा गोपुरमैक्षंत । शृंगे शिखरिणश्च ते ॥ ४५ ॥ तद्वीक्ष्य वज्रदंष्ट्रः स—कपटोऽवकसहोदरान् ॥ भ्रातरो वचनं माम—कीनं शृणुत सादरं ॥ ४६ ॥ प्रविश्य कुशलेनाया—त्यस्यांतर्गोपुरस्य यः ॥ चिंतितार्थं स आप्नोति । वृद्धखेचरवागिति ॥ ४७ ॥ ततः सहोदरा यूय—मत्रैव तिष्ठत क्षणं ॥ परीक्षां तत्र गत्वाहं । ऽकरोमि यथा स्वयं ॥ ४८ ॥ इत्युक्ते वज्रदंष्ट्रेण । प्रद्युम्नोऽभ्यधाद्बली ॥ सर्वेषामपि बंधूना—माज्ञा चेत्तद्व्रजाम्यहं ॥ ४९ ॥ तदुक्तं वाक्यमाकर्ण्य । जगदुः कपटेन ते ॥ साधु साधु त्वया प्रोक्तं । विलंबं त्वं विधेहि मा ॥ ॥ ५० ॥ संतुष्टो वचसा तेषा—मवलंब्य स साहसं ॥ तद्गोपुरं ससोपानं । शिरोगृहमिवाचटत् ॥ ॥ ५१ ॥ अधिरुह्य महाबुंबा—रवं कुर्वन् स्वलीलया ॥ पद्भ्यां गिरिगुरुभ्यां स । कुट्टयामास तद्-

समायांति । नितांतं विनयाश्रिताः ॥ २७ ॥ प्रणता मातरः सर्वा—स्तैः सुतैरन्यदा मुदा ॥ तावत् कोपेन ताः प्रोचु—स्तनयान् जनितांजलीन् ॥ २८ ॥ रे पुत्रा जीवितव्येन । यौष्माकीनेन किं तदा ॥ भवत्सु सत्सु साम्राज्यं । गृह्यतेऽन्यनरेण चेत ॥ २९ ॥ अज्ञातकुलशीलेन । जातिहीनेन पापिना ॥ एतत्कुलक्रमायात—मस्मद्राज्यमपावितं ॥ ३१ ॥ ततो यथातथा दुष्टो । मारणीयोऽयमंजसा ॥ यथा स्याद्भवतां नाम । प्रसिद्धिश्च महीतले ॥ ३२ ॥ कामिनी तुच्छबुद्धिः स्या—दिति तासां मनीषया ॥ ते सर्वेऽपि सुता मुग्धाः । संजातास्तुच्छबुद्धयः ॥ ३३ ॥ मातरो यदि युष्माकं । वर्तामहे सुता वयं ॥ चिंतितं वः करिष्याम । इत्युक्त्वा ते विनिर्गताः ॥ ३४ ॥ निर्गत्य जननीपार्श्वा—द्गत्वा कुमारसन्निधौ ॥ सर्वेऽपि मिलितास्तत्र । क्रूरभावेन शत्रवः ॥ ३६ ॥ मायया भोजनं पानं । शयनं क्रीडनं पुनः ॥ सदैव ते तु कुर्वंति । विश्वासयितुं तन्मनः ॥ ३७ ॥ अन्येद्युरशनं पानं । तांबूलं कुसुमं फलं ॥ सर्वमप्यददंस्तस्य । कृत्वा ते विषमिश्रितं ॥ ३८ ॥ तस्य प्राग्जन्मपुण्येन । विषमप्यमृतायितं ॥ आश्चर्यं नात्र पुण्येन । किं किं शुभं न जायते ॥ ३९ ॥ यदा तस्य पराभूता—वपि भूतिः पराभवत ॥ तदा मत्सरकर्तारो—ऽभूवंस्ते कोपसंकुलाः ॥ ४० ॥ आह्वादि-

। विहितास्तेन ते वशे ॥ १५ ॥ दुष्टानां खेचरेंद्राणां । देशेषु सकलेष्वपि ॥ पितुः प्रवर्तयित्वाज्ञां
। स यशस्वी समागतः ॥ १६ ॥ समागच्छंतमाकर्ण्य । कृत्वा दिग्विजयं वरं ॥ ङगं शृंगारयित्वा तं
। प्रावेशयत्पितोत्सवैः ॥ १७ ॥ कालसंवरनृपेन । वीक्ष्यांगजमचिंत्यत ॥ मयास्य जातमात्रस्य । यौ·
वराज्यं पुरार्पितं ॥ १८ ॥ अथातुलेषु नृपेषु । नागरेषु नरेषु च ॥ वीक्षमाणेषु हर्षेण । तत्पदं प्र·
ददाम्यहं ॥ १९ ॥ परिकल्प्येति नृपालः । प्राह प्रद्युम्नमंगजं ॥ दत्तमासीत्पुरा बाल्ये । यौवराज्यं
मया तव ॥ २० ॥ साक्षिकं नृरिनृपानां । सांप्रतं त्वं गृहाण तत् ॥ इत्युक्तोऽवकसुतो ह्रीमान् । यो·
ग्यस्य तत्प्रदीयतां ॥ २१ ॥ महीपालोऽवदत्तत्तु । योग्यस्यैव प्रदीयते ॥ कथयित्वेति तद्दत्तं । महैः
पश्यत्सु राजसु ॥ २२ ॥ यौवराज्यं सुते दत्वा । दानानि याचकेषु च ॥ नृपेषु बहुमानानि । मुमु·
दे कालसंवरः ॥ २३ ॥ प्रसन्नस्योपरि प्रायः । स्नेहिनो देहिनोऽवनौ ॥ पदव्यामुपलब्धायां । सं·
जाता तन्मयी पुरी ॥ २४ ॥ निकेतनेषु हट्टेषु । मार्गेषु च चतुःपथे ॥ स्वाध्याये क्रियते लोकै–
स्तस्यैव भाग्यवर्णनं ॥ २५ ॥ अथ तस्य प्रभोः संति । कांताः पंचशतानि च ॥ पृथग्पृथग् सुता·
स्तासां । विद्यादभ्रपराक्रमाः ॥ २६ ॥ स्वस्याः स्वस्या जनन्यास्ते । नमस्कर्तुं क्रमद्वयं ॥ स्पष्टनक्तेः

॥ ३ ॥ पुरुषाणां च नारीणां । हरणाच्चित्तचक्षुषां ॥ रूपं शैशवतस्तस्य । तस्करतामशिश्रयत् ॥४॥
प्रयाति वयसा वृद्धिं । बालकोऽसौ यथा यथा ॥ पित्रोर्गृहेऽतुलं चैति । धनधान्यं तथा तथा ॥५॥
शस्त्रशास्त्रकलाभ्यासं । स कुर्वन् पाठकांतिके ॥ धवलप्रतिपच्चंद्र । इवैधत कलादिभिः ॥ ६ ॥ प्रा-
णेभ्योऽप्यधिकं मातू । राज्यसारं महीपतेः ॥ भाग्यसौभाग्ययोग्यत्वा—न्मान्योऽभूत्रगरेऽखिले ॥
॥ ७ ॥ यौवनं पावनं प्राप । विकृतिस्थितिवर्जनात् ॥ प्रभूतानां मनुष्याणां । स्त्रीणामाश्चर्यकारणं ॥
॥ ८ ॥ पुण्यलावण्यतारुण्यं । तस्य वीक्ष्य मृगीदृशः ॥ दर्शयंति स्त्रियो नेत्र—विकारान्न तु स स्व-
यं ॥ ९ ॥ अभूत्सुभटकोटीना—मधृष्यः स भुजौजसा ॥ शौर्येण पुरतस्तस्य । न कोऽप्यमंडयद्रणं
॥ १० ॥ येऽभवन् बलिनो दुष्टा । वैरिणो वैरकारिणः ॥ सर्वेऽपि तस्य माहात्म्या—त्तन्मित्रतामशि-
श्रयन् ॥ ११ ॥ हठ्यापि बलगर्वेण । येऽभूवन्नतिमानिनः ॥ स्वकीयकलया जित्वा । तेन तेऽपि व
शीकृताः ॥ १२ ॥ स पार्श्ववर्तिनः शत्रून् । वशीकृत्याखिलानपि ॥ तान् दूरवर्तिनो जेतुं । पितुरा
ज्ञामयाचत ॥ १३ ॥ तेनापि तस्य सामर्थ्यं । विज्ञाय सा समर्पिता ॥ कटकेन प्रभूतेन । ततो ब
ली चचाल सः ॥ १४ ॥ शूरा वीरा रणे धीरा । येऽभवन् खेचरा नराः ॥ निःशेषानपि जित्वा तान्

॥ २३ ॥ गत्वा तस्या गृहे स्थानं । विद्यालाभाः समुच्चयः ॥ तस्यागमनचिह्नानि । कालोऽपि च निवेदितः ॥ २४ ॥ श्रीसीमंधरसार्वेण । स्वामिना यन्निरूपितं ॥ समस्तमप्युदित्वा तत् । स्वस्थानं गतवान्मुनिः ॥ २५ ॥ नारदर्षेर्गिरा ज्ञात्वा । स्वकीयतनयागमं ॥ तस्थौ सुखेन गेहे स्वे । रुक्मिणी हर्षधारिणी ॥ २६ ॥ एवं जीवो भ्रमति दुरिताद् दुष्टसंसारयोनौ । पुण्यात्सोऽपि सुपदजननीं भूरिमाप्नोति लक्ष्मीं ॥ त्याज्यं तस्मान्निबिडविपदां कारकं पापवृंदं । कार्यं पुण्यं निखिलसुखकृद्यत्ततः प्राप्तपुण्यैः ॥ २७ ॥ इति पंक्तिचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीशांबप्रद्युम्नचरित्रे श्रीप्रद्युम्नपूर्वभववर्णनो नाम अष्टमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

## ॥ अथ नवमः सर्गः प्रारभ्यते ॥

अथ विद्याधराधीश—कालसंवरमंदिरे ॥ कल्पशाखीव मेरौ स । वर्धते वयसा शिशुः ॥१॥ सौम्यत्वेन शशीवासौ । प्रतापेनार्यमेव च ॥ आशैशवादपि द्वाभ्यां । गुणाभ्यां भासुरोऽभवत ॥ ॥ २ ॥ प्रद्युम्नो वर्ततेऽनंगो—ऽप्यपरेषां विकारकृत् ॥ प्रद्युम्नोऽप्यद्भुतं सांगो । रूपेणायं प्रमोदकृत्

॥ ११ ॥ यत्र रेणुः पतेत्साधु—क्रमद्वयपवित्रिनः ॥ भवेयुस्तत्र भद्राणि । मद्गृहं तत्पवित्रय ॥१२॥
इति प्रोक्ते नृपेणासौ । जगामांतःपुरालयं ॥ तमागच्छंतमालोक्यो—त्थितं कमलमालया ॥ १३ ॥
समुत्थायासनं दत्वा । विनयेन नतस्तथा ॥ सोऽपि तद्विनयात्प्रीतः । प्रीणनीयः स कस्य न ॥१४॥
कुशलादि मिथः पृष्ट्वा । पप्रछ मुनिनारदः ॥ गूढगर्भतया वत्से । यः सूतः स सुतोऽस्ति कः ॥१५॥
तेनेति कथिते राज्ञ्या । प्रीत्या मुनिरभाष्यत ॥ स्वामिंस्तव प्रसादेन । समस्ति मे स बालकः ॥
॥ १६ ॥ जगाद नारदस्तर्हि । तं द्रुतं मे प्रदर्शय ॥ तेनेत्युक्ते तमानीय । सा तदंघ्र्योरपातयत ॥
॥ १७ ॥ दृष्ट्वा तेन तु तं बालं । सर्वलक्षणलक्षितं ॥ मुमुदे हृदये सौवे । सौवमित्रत्वतो भृशं ॥
॥ १८ ॥ यावच्चंद्रोदयो याव—त्सूर्योदयो भवेद्भुवि ॥ तावत्कालं चिरं नंद । चिरं जीव स्तनंधय
॥ १९ ॥ वयसा वर्धमानेन । सुपर्वशाखिनेव च ॥ पूरणीयास्त्वया पित्रो—श्चित्तस्थिता मनोरथाः
॥ २० ॥ तवाप्ययं सुतो देवि । भवतात्सुखकारकः ॥ दत्वेत्याशिषमुत्थाय । ततश्चाल नारदः ॥
॥ २१ ॥ प्रद्युम्नशुद्धिमादाय । प्रथमं द्वारिकापुरि ॥ निवेदयितुमानंदात् । कृष्णाग स समागतः ॥
॥ २२ ॥ तत्स्वरूपं निरूप्याशु । किंचिन्नरकवैरिणे ॥ जगाम रुक्मिणीगेहं । स्नेहं वर्धयितुं हृदि ॥

ततः प्रायुंक्त शीघ्रं स । विभंगज्ञानमात्मनः ॥ ५०० ॥ तेनाज्ञासीत्स जायाया । हरणं पूर्वजन्मनः ॥ रुक्मिण्याः कुक्षिजातेन । प्रद्युम्नेन विनिर्मितं ॥ १ ॥ सुखेन जननीपार्श्वे । ज्ञात्वा तं संस्थितं शिशुं ॥ स्वककांतापहारोत्थं । तस्य वैरमजागरीत् ॥ २ ॥ अपाक्रियत वैरेण । तेनासौ धूमकेतुना ॥ ततः केनापि नो सार्धं । वैरं कार्यं विचक्षणैः ॥ ३ ॥ वैरेण प्रबलं दुःखं । वैरेण प्रीतिनाशनं ॥ वैरेण मानसोद्वेगो । वैरेण स्यादधोगतिः ॥ ४ ॥ श्रीसीमंधरसार्वस्य । श्रुत्वेति वचनं शुचि ॥ सर्वेऽपि क्षमयामासु—र्वैरं मिथः सभासदः ॥ ५ ॥ समस्तमपि वृत्तांतं । प्रद्युम्नस्य निशम्य च ॥ नारदोऽपि जिनं नत्वा । मेघकूटपुरं ययौ ॥ ६ ॥

कालसंवरभूपोऽस्ति । तत्र वित्रस्तशात्रवः ॥ तस्य मध्यसभामाप । मुनिर्बालदिदृक्षया ॥ ७ ॥ भूपेनापि समालोक्य । नारदर्षिं समागतं ॥ उत्थाय सहसा दत्तं । विनयेन स्वमासनं ॥ ८ ॥ दत्वाशिषं मुनींद्रेणो—पविष्टं शिष्टविष्टरे ॥ भूयःप्रेमरसाद्वार्ता । ताभ्यां चक्रे परस्परं ॥ ९ ॥ क्षणमात्रं मुनिस्तत्र । स्थित्वा प्रोवाच पार्थिवं ॥ राजंस्तेंतःपुरं द्रष्टु—मुत्कंठा वर्तते मम ॥ १० ॥ भूपः प्राह किमप्यस्ति । गोप्यं त्वत्तो मुनीश्वर ॥ अत्रार्थे पृछसि त्वं किं । दृश्यतां दृश्यतां त्वया ॥

वैताढ्यशिखरिण्यस्ति । नगरं गिरिपत्तनं ॥ तत्रास्ति हरिनृपाल— स्तस्य स्त्री हरिवत्यभूत् ॥
॥ ८९ ॥ भुंजानयोस्तयोर्भोगां—स्तनयस्थापिताशयोः ॥ सुता हरिवतीकुक्षौ । जाता च्युत्वा सु-
रालयात ॥ ९० ॥ तस्याः कमलमालेत्या—ख्या पितृभ्यां विनिर्मिता ॥ मेघकूटपुरे काल—संव
रेण विवाहिता ॥ ९१ ॥ मधुक्षोणीपतेर्जीव—श्च्युत्वा शुक्रत्रिविष्टपात ॥ द्वारिकायां हरिसूनू । रु
क्मिणीकुक्षिजोऽभवत् ॥ ९२ ॥ यः कैटभानुजस्तस्या—भवत्परमवल्लभः ॥ भविष्यति सुतो विष्णो
—र्जांबवत्याः समुद्भवः ॥ ९३ ॥ यो हेमरथभूपोऽभू—त्स स्त्रीवियोगदुःखतः ॥ कुर्वाणो ग्रथिलां
वृत्तिं । निर्नाथवन्मृतिं गतः ॥ ९४ ॥ मृत्वा भ्रांत्वा च नीचासु । भूयोदुःखासु योनिषु ॥ संप्राप्य
मानुषं जन्म । तीव्रं बालतपोऽकरोत ॥ ९५ ॥ ततोऽसौ तपसा तेन । बभूवासुरकोटिषु ॥ धूमके-
तुश्च तेजस्वी । भूयिष्टशक्तिधारकः ॥ ९६ ॥ विमानसंस्थितोऽन्येद्यु—र्लीलया पर्यटन्नसौ ॥ विया-
मायां समायातो । द्वारिकानगरींप्रति ॥ ९७ ॥ तस्यामागछतस्तस्य । कौतुकस्थितचेतसः ॥ रुक्मि-
ण्या निलयस्योप—र्यागतं तद्विमानकं ॥ ९८ ॥ यावत्तत्र समायातं । बालेन महिमाभृता ॥ की-
लितवस्तुवत्ताव—त्सहसा तदजायत ॥ ९९ ॥ विमानं स्खलितं ज्ञात्वा । क्रोधस्तस्याभवद् द्रुतं ॥

विचार्यैत्यवदन्नृपः । स्वामिन् संसारवासतः ॥ भीतो न्यस्य सुते राज्यं । प्रव्रजिष्यामि तेंतिके ॥ ७८ ॥ कथितं यतिना राजन् । यथा सुखं तथा कुरु ॥ इति यतिवचः श्रुत्वा । नत्वा नृपोऽगमद्गृहं ॥ ७९ ॥ गेहमागत्य नृपाल—श्चारित्रग्रहणेच्छया ॥ स्वराज्ये स्थापयामास । विनीतं ज्येष्ठमंगजं ॥ ८० ॥ स्थापयित्वा सुतं राज्ये । राजा वैराग्ययोगतः ॥ दीक्षां केवलिनः साधोः । पार्श्वेऽग्रहीन्महोत्सवैः ॥ ८१ ॥ पतिव्रता भवेद्या स्त्री । सा स्यात्पत्यनुगामिनी ॥ तयेत्यग्रमहिष्यापि । चारित्रमुररीकृतं ॥ ८२ ॥ कैटभनामधेयो यो—ऽनुजोऽभूत्तस्य नृपतेः ॥ तेन स्वयोषिता साकं । जगृहे चरणं मुदा ॥ ८३ ॥ उभाभ्यामपि भ्रष्टाहं । संजातेति निजे हृदि ॥ मत्वा सेंदुप्रभाराज्ञी । जग्राह व्रतिनीव्रतं ॥ ८४ ॥ चारित्रं ते समादाय । कुर्वाणा विनयं गुरोः ॥ अध्यगीषंत शास्त्राणि । वैराग्योत्पादकानि च ॥ ८५ ॥ तपःकृशानुना कर्तुं । कर्मेंधनानि भस्मसात ॥ दुस्सहं तपयामासु—स्तपः कर्मक्षयाय ते ॥ ८६ ॥ अधीत्यानल्पशास्त्राणि । कृत्वा तीव्रतमं तपः ॥ मृत्वा समाधिना जग्मुः । सर्वेऽपि त्रिदशालयं ॥ ८७ ॥ इंदुप्रभापि चारित्रं । सम्यक्प्रपाल्य पुण्यतः ॥ गत्वा स्वर्गं सुखं भुक्त्वा । च्युतायुःक्षययोगतः ॥ ८८ ॥

तेऽवोचन्नाथ युष्मद्भि—र्यतिर्यः प्रतिलाभितः ॥ केवलज्ञानमुत्पेदे । तस्यर्षेः कर्मणः क्षयात ॥६७॥ कोलाहलस्ततो ह्येष । वृंदारकविनिर्मितः ॥ श्रुत्वेत्यवनिनाथोऽपि । हर्षभेरीमवादयत ॥ ६८ ॥ वादिताया महीशेन । भेर्या नादेन नागराः ॥ मिलिताः स्थानतः स्थाना—ल्लोकाः सर्वापदुज्झिताः ॥ ॥ ६९ ॥ तैः सत्रा गजमारुह्य । चित्रवादित्रनिःस्वनैः ॥ जगाम जगतीजानि—र्नंतुं केवलिनं मुनिं ॥ ७० ॥ प्रदक्षिणात्रयीं दत्वा । सत्वानुकंपिताशयः ॥ नत्वा क्रमौ महीनाथो । यथास्थानमुपाविशत ॥ ७१ ॥ उपविश्याशृणोद्धर्म—देशनां पापनाशिनीं ॥ श्रुत्वा नृपोऽवदन्नाथ । जैनधर्मं प्रदर्शय ॥ ७२ ॥ इत्युक्ते भूभुजा साधु—रभ्यधाच्छृणु पार्थिव ॥ साधुश्राद्धधर्माभ्यां । जिनैर्धर्मो द्विधोदितः ॥ ७३ ॥ तत्र वाचंयमानां यः । स तु पंचमहाव्रतः ॥ जिनेंद्रैः कथितो धर्मः । श्राद्धानां द्वादशव्रतः ॥ ७४ ॥ तन्मध्याद्यत्र ते शक्ति—स्तं धर्ममुररीकुरु ॥ निशम्येति यतेर्वाक्य—मचिंतयन्मधुर्नृपः ॥ ७५ ॥ परस्त्रीसेवनादीनि । घोराणि पातकानि च ॥ विहितानि मया दुष्ट—चेतसा रागबुद्धितः ॥ ७६ ॥ यथा विशुद्धिः पापानां । तेषां खलु भविष्यति ॥ गुरुशिक्षा ततो दीक्षा । शुद्ध्यै समुचिता मम ॥ ७७ ॥

क्षणिका एते । संसारे मोहकारिणः ॥ ५५ ॥ त एव संसृतौ धन्या । एतेभ्यो ये शरीरिणः ॥ स्व-साधनं प्रकुर्वंति । महानंदयियासया ॥ ५६ ॥ भावना भावयन्नेवं । युवानं कामिनं नरं ॥ वधाच्च मोचयित्वा तं । भुनक्ति नृपतिः सुखं ॥ ५७ ॥ कुर्वन्माधुकरीं वृत्तिं । पंचापि समितीः श्रयन् ॥ आहारार्थं यतिः कश्चि—त्तावत्तत्र समागतः ॥ ५८ ॥ समालोक्य मुमुक्षुं तं । सहसोत्थाय हर्षतः ॥ ववंदे चरणौ तस्य । नृपालो भक्तिभासुरः ॥ ५९ ॥ वंदित्वा च गृहे नीत्वा । स्त्रियेंदुप्रभया समं ॥ शुद्धैश्चतुर्विधाहारै—र्नृपस्तं प्रत्यलाभयत् ॥ ६० ॥ हर्षेण बहुमानेन । रोमांचेन स्फुरद्गिरा ॥ अनुमोदनया तस्या । दत्वा नृपोऽप्यमूमुदत् ॥ ६१ ॥ वाचंयमोऽपि निर्दोषा—हारावाप्तेर्नृपालये ॥ मोदमानो महीनाथ—विनतः काननं गतः ॥ ६२ ॥

गत्वा साधुविधिं कृत्वा । समस्तमपि सादरं ॥ मुनिराहारयामास । गृध्रत्वेन विनाकृतं ॥ ६३ ॥ शुद्धमाहारमाहृत्य । ध्यानलीनो मुनीश्वरः ॥ अवाप केवलं ज्ञानं । विश्वस्वरूपदर्शकं ॥ ६४ ॥ विज्ञाय केवलज्ञानं । निष्पादयितुमुत्सवं ॥ देवा दुंदुभिनिर्घोष—मकुर्वन् पूरितांबरं ॥ ६५ ॥ समाकर्ण्यानकध्वानं । कोलाहलं च नाकिनां ॥ श्रूयतेऽयं कुतः शब्दो । नृपो भृत्यान् जगाविति ॥ ६६ ॥

तः कृतः ॥ ४३ ॥ आसक्त्या स्वककांतापि । सेवनीया न धर्मिभिः ॥ दुरात्मा परशमाया । भोगे लुब्धोऽल्पधीरहं ॥ ४४ ॥ परदारेषु लुब्धानां । यो दंडः प्रविधीयते ॥ ममाप्येष समायातो । दुष्कर्मप्रविनिर्मितः ॥ ४५ ॥ श्लेष्मागारं मुखं स्त्रीणां । मांसग्रंथी स्तनौ पुनः ॥ कथं तत्र मया मोहो । विधीयते दुरात्मना ॥ ४६ ॥ यतो रक्तोचिता स्त्रीणां । तत एव बिभीषिका ॥ धिक्कंदर्पशरैर्विद्धं । मामकीर्तिनिकेतनं ॥ ४७ ॥ श्रवणैः श्रवणस्वाद—धारिणो हरिणाः क्षणात् ॥ प्राणानपि परित्यज्य । देहं ददति देहिनां ॥ ४८ ॥ चक्षूरसविकारेण । मेम्रियंते पतंगकाः ॥ न प्राणान् गणयंति स्वान् । प्रविशंतो हुताशने ॥ ४९ ॥ भ्रमंति भ्रमरा विष्व—वासिकारसयोगतः ॥ स्थिताः कमलकोशेषु । न जानंत्यात्मबंधनं ॥ ५० ॥ शीतकाले महाशीतं । सहंते जलसंस्थिताः ॥ रसनारससंपर्कात् । प्राप्नुवंति मृतिं झषाः ॥ ५१ ॥ तुंगोऽपि मदमत्तोऽपि । करिणीवशमानसः ॥ स्पर्शनेंद्रियसंयोगात् । पतति चारिषु द्विपः ॥ ५२ ॥ एकैकेन रसेनैवं । तिर्यंचोऽप्यापुरापदं ॥ पंचेंद्रियरसाढ्यस्य । का गतिर्मे भविष्यति ॥ ५३ ॥ विषया विषसंकाशाः । पाशाश्च विषया नृणां ॥ विषया मोहसंचारा । विषयाः सुखवर्जिताः ॥ ५४ ॥ रूपं तारुण्यमैश्वर्यं । द्रविणं चाबला बलं ॥ सर्वेऽपि

द्देव—ऽन्यत्नक्षणतः पुमान् ॥ सप्तवारं जघन्येन । सप्तमं नरकं व्रजेत् ॥ ३२ ॥ परस्त्रीसंगमाद्दुःखं
। भवेच्च नरकोद्भवं ॥ शास्त्रेऽपीति त्वया देवि । श्रुतमद्यापि नास्ति किं ॥ ३३ ॥ परस्त्रीन्नजनाद्भू·
मा—वयशोऽपि नृणां ज्ञवेत ॥ अन्यस्त्रीश्रयणाद्भयो । वैरं मित्रजनेष्वपि ॥ ३४ ॥ तदेंडुप्रन्नया
प्रोचे । स्वामिन् जानासि चेदिति ॥ तर्हि त्वयान्यकांतापि । रक्षिताहं गृहे कथं ॥ ३५ ॥ याचि·
त्वा पितृपार्श्वेऽहं । परिणीता त्वया न च ॥ मनसापि पुरा वांछा । न मया विहिता तव ॥ ३६ ॥
प्रस्तावोचितमाकर्ण्य । तद्वचो रागमोचनं ॥ बिन्यन्नरकदुःखेभ्यो । वैराग्यं प्राप पार्थिवः ॥ ३७ ॥ य·
त्कर्म जनितं राग—वशेन सहसाधमं ॥ राजा वैराग्यपूरेणा—निंदत्तच्चेतसा सह ॥ ३८ ॥ हा हा
दुरात्मना दुष्टं । किं मया कर्म निर्मितं ॥ अवगणय्य निःशेषान् । वृद्धान् प्रधानपूरुषान् ॥ ३९ ॥
कुलाचारो मयाल्लोपि । कोपिता ऊढयोषितः ॥ हितकारि वचः कस्या—प्यंगीकृतं न पापिना ॥
॥ ४० ॥ परलोकन्नयाद्भीत—श्चित्तेऽहं न मनागपि ॥ इहलोकापवादोऽपि । मानितो न मया ध्रुवं
॥ ४१ ॥ रूपवत्यो वशाः किं न । मम संति मनोहराः ॥ कथं मयान्यकामिन्यां । मोहः प्रजनितो
भ्रमात् ॥ ४२ ॥ सप्तधातुमयं कायं । विजानतापि योषितां ॥ अभिलाषः कथं हाहा । वैकल्यवश·

मदद्भुतं ॥ दुःखितात्यतिदुःखेन । विनयाय समुत्थिता ॥ २० ॥ प्राज्यप्रेमरसात्सोऽपि । कंठे कृत्वा निजौ करौ ॥ स्थित्वा शिरोगृहे याव—द्वीक्षते नागरीं श्रियं ॥ २१ ॥ तावच्च कोट्टपालेना—द्वि-धया चंडकर्मणा ॥ बध्ध्वा निबिडबंधेना—नीतः कश्चिद्वरो नरः ॥ २२ ॥ तमानीय महीशस्य । पार्श्वे स विनयाज्जगौ ॥ नाथायं यौवनाढ्योऽस्ति । परदारनिषेवकः ॥ २३ ॥ ततो दंडं यथा ब्रूषे । तथास्य स विधीयते ॥ इत्युक्त्वा स स्थितो याव—द्भूपस्तावदुवाच तं ॥ २४ ॥ चंडकर्म किमत्र त्वं । विजानन्नपि पृच्छसि ॥ परद्रव्यपरस्त्रीषु । भवेयुर्ये रता नराः ॥ २५ ॥ शूलिकारोपणं तेषां । कार्यते यदि तद्वरं ॥ अन्येषामपि मर्त्यानां । तर्हि शिक्षा प्रजायते ॥ २६ ॥ दुरात्मनस्ततोऽस्यापि । परदारनिषेविणः ॥ शूलाधिरोपणं कार्यं । न विचार्यं मनागपि ॥ २७ ॥ श्रुत्वेति नृपतेर्वाक्यं । स्मित्वा चेंदुप्रभाब्रवीत् ॥ परस्त्रीसेवने कश्चि—द्दोषोऽपि किं प्रवर्तते ॥ २८ ॥ यतोऽस्य पुण्यतारुण्य—लावण्यरूपसंपदः ॥ सहसादिश्यतेऽघांतः । प्राज्यपातककारकः ॥ २९ ॥ तयेत्युक्ते नृपः प्राह । नैतावदपि वेत्सि किं ॥ परस्त्रीसेवया पापं । घोरं स्याद् दुर्गतिप्रदं ॥ ३० ॥ कथ्यंते चैकतः सर्वा—ण्यपि पापानि पापिनां ॥ परस्त्रीजनोद्भूत—मेकतस्तन्निगद्यते ॥ ३१ ॥ अन्यस्त्रीसेवना-

कथं व्रजेत ॥ ७ ॥ पौर्णिमेंदोरवस्थां चे—न्मद्वियोगेन वक्ष्यसि ॥ तवाप्यस्ति महामोहो । धाति
कल्पनया तथा ॥ ८ ॥ निशम्येंदुप्रभावाक्यं । धात्री चित्ते व्यचारयत ॥ महाकथाश्रद्धया पश्चा—
दप्येषा पीडयिष्यति ॥ ९ ॥ ततः सांप्रतमेवाहं । तस्याः पतिं प्रदर्शये ॥ मनसीति विचिंत्यासौ ।
प्रोवाच वचनं शुचा ॥ १० ॥ आगच्छागच्छ पुत्रि त्वं । समीपे मम सत्वरं ॥ प्रत्ययोत्पादनार्थं ते ।
दर्शयामि पतिं यथा ॥ ११ ॥ इत्युक्ता कौतुकाद्याव—त्सा गता तत्समीपके ॥ सोऽप्यधस्ताद्गवाक्ष-
स्य । तावत्समागतो विधेः ॥ १३ ॥ तं दृष्ट्वेंदुप्रभां धात्री । प्रोचे चाकारलक्षणैः ॥ स्वं पतिं शस-
योच्छित्त्यै । पश्य त्वं प्रवराकृते ॥ १४ ॥ तयेति कथिते यावत । सा समागत्य पश्यति ॥ स तावद्द-
ष्टितो बाले—दृष्टो वैकल्यमादधत् ॥ १५ ॥ हा कांते हा कुरंगाक्षि । जल्पंतमिति लक्षणैः ॥ सा-
पि हेमरथं क्ष्माप—मुपलक्ष्य व्यचिंतयत् ॥ १६ ॥ अहं तु मधुभूपेन । समं पंचेंद्रियोचितान् ॥ भुं-
जे भोगानयं त्वासी—न्मद्वियोगेन दुःखितः ॥१७॥ धिग्धिग्जीवितं जन्मा—वतारं योषितां पुनः ॥
यतोऽसौ चिरजीवास्ति । भोग्या भाग्यवतानिशं ॥ १८ ॥ विदंतीति विषादेन । वहंती हृदि दुःखि-
तां ॥ धात्र्या सवा स्थिता याव—त्तावत्तत्रागतो नृपः ॥ १९ ॥ मधुभूपागमं ज्ञात्वा । दातुं विष्टर

इति दुःखेन संपूर्णा । धात्री रुरोद नृशिशः ॥ ९४ ॥ प्रविलोक्य रुदंतीं तां । राज्ञ्येंदुप्रभयोच्यत ॥ अकस्माद्रोदिषि त्वं किं । दुःखेन रहिता सती ॥ ९५ ॥ केनापि परिभूता त्वं । केनापि वा वचस्तव ॥ सम्यक्तया कृतं नास्ति । गालिर्दत्ता व केनचित् ॥ ९६ ॥ वल्लभस्य स्वकीयस्या—निष्टः कश्चिदुदंतकः ॥ समागतोऽथवा किंचिद् । दुःखं तस्य भविष्यति ॥ ९७ ॥ पृष्टा बह्वाग्रहेणैवं । धात्र्युवाच सगद्गदं ॥ महतामपि जायंते । कर्मतो विपदोऽभितः ॥ ९८ ॥ यतो हेमरथो राजा । योऽभूद्भर्ता पुरा तव ॥ विधियोगात्स जातोऽस्ति । विकलस्त्वद्वियोगतः ॥ १ ॥

धात्रीमुखादिति श्रुत्वा । वचनं दुःखसूचकं ॥ जगाविंदुप्रभा कोपा—द्विधाय श्यामलं मुखं ॥ ॥ २ ॥ स्तन्यपानप्रदानेन । धात्र्यसि मातृसन्निभा ॥ अतःपरं न वक्तव्यं । त्वया वचनमीदृशं ॥ ॥ ३ ॥ संस्मारयति या दुःखं । विस्मारितं चिरंतनं ॥ मुग्धान्योऽपि च सा मुग्धा । कथनीया वशा जनैः ॥ ४ ॥ यो मे पुराभवद्भर्ता । तस्यैवं स्यादृशा कथं ॥ कथं मम वियोगेन । विकलः स प्रजायते ॥ ५ ॥ वहंति पार्थिवास्तस्य । शासनं मित्रयंति च ॥ कियंतः सेवकीभूय । प्रवर्तंते च तेष्वपि ॥ ६ ॥ संत्यस्य वाजिनः प्राज्या । मतंगजाः पदातयः ॥ रमण्यो रूपधारिण्यः । स एकाकी

मनोजवपिशाचेन । वर्धमानस्य तस्य तु ॥ वैकल्यस्यापनोदाय । उपचारा जनैः कृताः ॥ ८३ ॥ तथापि तस्य शांतिर्न । समभूदखिलैरपि ॥ लोकैर्मुक्तः स एकाकी । कष्टे हि कोऽपि नो सखा ॥ ॥ ८४ ॥ कुर्वाणो विविधां चेष्टा—मेकाकी पर्यटन् भुवि ॥ भवितव्यतया मोहा—त्सोऽयोध्यां नगरीं गतः ॥ ८५ ॥ स्त्रीणां कदंबकं तत्र । विकलः प्रविलोक्य सः ॥ देवि देवीति कृत्वोच्चै—र्दधावेंदुप्रभाधिया ॥ ८६ ॥ अस्मान् समीक्ष्य रे मूर्ख । किं त्वं ग्रथिल धावसि ॥ ताभिः स्त्रीभिर्भणित्वेति । कुट्यते लकुटादिभिः ॥ ८७ ॥ अस्माकं कामिनीनां किं । त्वं विलग्नोऽसि रे जड ॥ कसामुष्टिप्रहारेण । ताडितोऽसौ पुरीनरैः ॥ ८८ ॥ स्वकीयकर्मयोगेन । यत्र यत्र व्रजेदसौ ॥ तत्र तत्र व्यधुर्लोका । महीयसीं विडंबनां ॥ ८९ ॥ तथापि देवि देवीति—कृतारावः पुरेऽखिले ॥ पर्यटन् सहते कष्टं । पौरलोकविनिर्मितं ॥ ९० ॥ सोऽबलाबालमर्त्यानां । सहमानः कदर्थनां ॥ दृष्ट इंदुप्रभाधात्र्या । गवाक्षस्थितयैकदा ॥ ९१ ॥ वृद्धा हेमरथं भूमी—पालं समुपलक्ष्य सा ॥ चिंतयाचिंतयच्चित्ते । धात्री धात्रीव दुःखभृत ॥ ९२ ॥ हाहा प्रभुत्वमस्यैव । कीदृग्समभवत्पुरा ॥ सहते चाधुना सोऽपि । कीदृग्लोककदर्थनां ॥ ९३ ॥ धिग्धिग् हेमरथस्यापि । राज्ञोऽभूदीदृशी दशा ॥

नि ॥ ७१ ॥ त्वांविना नगरं शून्यं । त्वांविना मंदिरं पुनः ॥ त्वांविना हृदयं शून्यं । त्वांविना च व-
पुर्मम ॥ ७२ ॥ शून्या त्वयाविना शय्या । दीर्घा रात्रिस्त्वयाविना ॥ अन्नपानरुचिर्नास्ति । दिवसे-
ऽपि त्वया विना ॥ ७३ ॥ मया तवापराद्धं किं । विरुद्धं यदिवोदितं ॥ देवि त्वं प्रकटीभय । निवे-
दय यथास्थितं ॥ ७४ ॥ विजानाम्यथवा माम—कीनप्रमादयोगतः ॥ निलये रक्षितासि त्वं । म-
धुना द्रोहवर्धिना ॥ ७५ ॥ वक्रेणेंदुप्रभेव त्व—मिंदुप्रभे हितैषिणि ॥ त्वदेकध्यानलीनं मां । विना
तेऽमृतकथं सुखं ॥ ७६ ॥

एवं विलापवाक्यौघै—र्विलपन्नगराद्बहिः ॥ नृपो ग्रथिलवत्सोऽपि । परिभ्रमति सर्वतः ॥ ७७ ॥
ग्रथिलत्वान्नागरैश्चान्यैः । परित्यक्तो जनैः समैः ॥ मा व्यहार्षीदथैकाकी । इत्यसौ बालकैर्वृतः ॥७८॥
द्रवीकृत्य स्वमूत्रेण । रक्षां च छगणादिकं ॥ स्वशरीरे ह्यसौ कुर्या—द्विलेपनं समंततः ॥ ७९ ॥ व-
स्त्राणां पत्रपर्णानां । खंडान्यादाय भूतलात् ॥ पर्यधत्त शरीरेऽसौ । निवारितोऽपि बालकैः ॥८०॥
वनतो बहुजातीनि । लात्वा पुष्पफलानि सः ॥ चेष्टां कुर्वन्निजे कंठे । हारकल्पनयाक्षिपत् ॥८१॥
वरेण्यसुरभिस्थाने । प्रबलां धूलिमक्षिपत् ॥ ग्रथिलोऽसौ निजे काये—ऽसमंजसं भृशं वदन् ॥८२॥

बलीयांसं मधुं ज्ञात्वा—मात्या हेमरथं जगुः ॥ ६० ॥ नाथ त्वत्तो मधुक्ष्मापो । बलेन वर्तते महान् ॥ ततोऽधुना शतैर्वैर—प्रलापैर्न प्रयोजनं ॥ ६१ ॥ सत्यान्यमात्यवाक्यानि । जानन् हेमरथो हृदि ॥ संस्थितो मौनमालंब्य । लुंटिताशेषवस्तुवत् ॥ ६२ ॥ स्मारं स्मारं प्रियादुःखं । हृद्यजस्रं नृपोऽन्वभवत् ॥ वातुलः क्रमतस्तेन । वैकल्यं चोररीकृतं ॥ ६३ ॥ वैकल्येनाभवत्तेन । ग्रथिलः पार्थिवोऽप्यसौ ॥ ततो गायति रागेण । कदाचिद्रोदिति स्वयं ॥ ६४ ॥ कदाचिद्धसति स्वैरं । शेते कदाचिदालये ॥ कदाचिच्च सभामेति । नायात्यपि कदाचन ॥ ६५ ॥ याति कदाचिदुद्याने । वातायने कदाचन ॥ इंदुप्रभांविना सर्व—मपि शून्यं स चकलत ॥ ६६ ॥ हा प्रिये क गतासि त्वं । हा प्रिये किं न जल्पसि ॥ हा प्रिये भ्रूविकारांश्च । कथं दर्शयसि न मे ॥ ६७ ॥ हा प्रिये जल्पिना त्वं न । कदापि मौनमाश्रयः ॥ मम स्नेहपरीक्षार्थं । सांप्रतं किं ब्रवीषि न ॥ ६८ ॥ देवानां या भवेद्देवी । सा तत्वान्मनसापि च ॥ मिलद्देव्यपि सुभ्रु त्वं । कथंचिदपि नो मिलेः ॥ ६९ ॥ प्राणेभ्योऽप्यधिकं मेऽत्र—स्त्वमेवेंदुप्रभे प्रिये ॥ स्थिता प्रच्छन्नवृत्त्या किं । दक्षता कलितापि च ॥७०॥ संति प्राणास्त्वदायत्ताः । किं न जानासि कोविदे ॥ त्वांविना ते कथं देहे । स्थास्यंति मम मानि-

भापि च वल्लभा ॥ ४८ ॥ अन्योन्यनिबिडप्रीति—भावनेन निरंतरं ॥ तौ द्वावपीहितैर्भोगै—रजानीतां जनुर्वरं ॥ ४९ ॥ अथेंदुप्रभया साकं । ये मंत्रिसौविदल्लकाः ॥ तत्र मुक्ता अभूवंस्ते । गत्वा हेमरथं जगु. ॥ ५० ॥ स्वामिन्मित्रतया योगी—कृतस्त्वया मधुनृपः ॥ रिपुभ्योऽपि विशेषेण । रिपुर्ज्ञेयस्त्वया स हि ॥ ५१ ॥ दुरात्मना पुरा तेन । या मैत्री जनिता त्वया ॥ केवलं तव कांतार्थं । सा कापट्येन निर्मिता ॥ ५२ ॥ यदर्थं विहिता मैत्री । दंभिना मधुभूभुजा ॥ सा कृता सफला तेन । तव स्त्रीरक्षणादहो ॥ ५३ ॥ तन्मुदिति वृत्तांतं । श्रुत्वा हेमरथोऽवदत् ॥ युष्माभिर्हस्यते किं वा । यथातथं निगद्यते ॥ ५४ ॥ ते प्रोचुर्नाथ हास्यस्य । संति स्थानान्यनेकशः ॥ मधुना रक्षिता ते स्त्री । जल्पामः सत्यमेव तत् ॥ ५५ ॥ स्वनारीरक्षणोदंत—माकर्ण्य मूर्छया भुवि ॥ पपात भग्नरथव—द्धेमरथोऽतिदुःखतः ॥ ५६ ॥ सेवकैः स्वामिनो भक्तैः । शीतलैरुपचारकैः ॥ यावत्सज्जीकृतो नृप—स्तावदूचे स विह्वलः ॥ ५७ ॥ सज्जीभवत रे भृत्याः । सन्नाहं परिधीयतां ॥ लुंटित्वा सकलायोध्यां । बध्वानयत तं मधुं ॥ ५८ ॥ कियन्मात्रो मधुर्दुष्टो । यो रक्षति मम स्त्रियं ॥ गत्वा तत्राधुनैवाहं । छिनद्मि तस्य मस्तकं ॥ ५९ ॥ व्याकुलं स्त्रीवियोगेन । लपंतमसमंजसं ॥

पलक्षितः ॥ ३५ ॥ समये जनितं कृत्य—मखिलं सौख्यहेतवे ॥ यत्कृतं समये नैव । तत्प्रांतेऽनु-
शयाय च ॥ ३६ ॥ ततो यथा तथा वेगा—दनया सममेकशः ॥ विहाय सर्वथा व्रीडां । कामक्री-
डां करोम्यहं ॥ ३७ ॥ विमृश्येति च नृपालो—ऽनंगपीडा वशानुगः ॥ रेमे बलादपि राज्ञ्या । त
याबला करोति किं ॥ ३८ ॥ मद्भवितव्यतायोगा—द्यद्भावि भूतमेव तत ॥ अनेनैव समं भर्तृ—
संयोगभवनादथ ॥ ३९ ॥ विमृश्येति द्वितीयस्यां । निशायां स्वयमेव सा ॥ तेनैव रमयामास ।
स्त्रियो हि कामविह्वलाः ॥ ४० ॥ तृतीयायां त्रियामायां । साक्रीडद्व्रीडयोज्झिता ॥ वांछंत्येव स्त्रियः
प्राय । उच्चमुच्चादिपूरुषं ॥ ४१ ॥ हावभावैर्विलासैश्च । विभ्रमैर्भ्रमकारिभिः ॥ राजानं रंजयामास ।
कलाभिः सा निरंतरं ॥ ४२ ॥ विनोदैर्हास्यवार्ताभि—रार्यागाथाकथादिभिः ॥ गीतैर्नृत्यैश्च वादि-
त्र—वादनैस्तमरंजयत् ॥ ४३ ॥ आरामे पादपे रम्ये । विशाले दीर्घिकाजले ॥ पर्वते वितते रंतुं ।
यत्र यत्राव्रजन्नृपः ॥ ४४ ॥ तत्र तत्र समादायें—दुप्रभामेव कामिनीं ॥ केवलं तद्गुणासक्तो । ग
च्छति क्षितिनायकः ॥ ४५ ॥ एकपक्षा भवेत्प्रीति—र्न सुखाय मनीषिणां ॥ तन्मयो मधुरप्यासी—
दिंदुप्रभापि तन्मयी ॥ ४६ ॥ पाणिगृहीतकांताक । इव प्रावर्तत प्रभुः ॥ विवाहवृत्तवार्त्तां वे—उप-

रक्तप्रदः ॥ किं तत्र क्रियते वांछा । त्याज्यान्यस्त्री हि पंडितैः ॥ २४ ॥ कुत्राप्याकर्णितं नाथ । पानीयाद्वह्निसंभवः ॥ मेघादंगारवृष्टिश्च । कर्कटीभक्षणं वृतेः ॥ २५ ॥ आदित्यात्तामसोद्भाव । उष्णता शशिनः करात् ॥ क्ष्माभारं किं त्यजेच्छेषो । मर्यादामंबुधिश्च किं ॥ २६ ॥ भवेयुर्ये महीनाथा—स्ते परस्त्रीपराङ्मुखाः ॥ मर्यादां न विमुंचंति । किं प्रारब्धं त्वया विभो ॥ २७ ॥ चक्रवाकी समीहेत । स्वं चक्रवाकमेव हि ॥ मेघमेव तडिच्चंद्र—मेव वा चंद्रगोलिका ॥ २८ ॥ कुलीना या भवेत्कांता । सा स्वकीयं पतिं विना ॥ न वांछति स्वके स्वांते । मर्त्यमन्यं कदाचन ॥ २९ ॥ बहुधेत्युपदेशानां । वाक्यानि प्रोचिरे तया ॥ तथापि विषयाणां च । न स्पृहा व्यरमन्मधोः ॥ ३० ॥ महतामपि मेघाना—मूषरे वर्षणं यथा ॥ यथा दुग्धसितापान—माराधितस्य भोगिनः ॥ ३१ ॥ वैश्वानरे हविः क्षेपो । ज्वरितस्याज्यभोजनं ॥ खले यथोपकाराः स्यु—स्तथा तस्योपदेशकाः ॥३२॥ समाकर्ण्य तदीयानि । वचनानि महीपतिः ॥ मनोभूमार्गणैर्विद्ध—श्चिंतयामास मानसे ॥ ३३ ॥ इयमेकाकिनी चास्ति । त्वहमप्येकाकितां भजन् ॥ त्रियामावसरश्चेद्द—त्समयो न मिलिष्यति ॥ ॥ ३४ ॥ विवर्णेभ्योऽपि मूर्खः स । पशुभ्योऽप्यधिकः स च ॥ आत्मनः समयो येन । संसारे नो·

स्मिन् प्राप्ते रतीक्षा न । तन्मूर्खत्वं महत्तमं ॥ १२ ॥ तद्विमुच्य त्रपां शीघ्रं । रमस्व त्वं मया समं ॥
आगच्छागच्छ मत्क्रोड—मागमलं कुरु द्रुतं ॥ १३ ॥ हेमरथाभिधो यस्ते । महीशः प्राणवल्लभः ॥
ममैवानुचरः सोऽस्ति । प्रेष्यवत्प्रेषणोचितः ॥ १४ ॥ देवि त्वमपि दक्षासि । विजानासि हिताहितं
॥ मुक्त्वा विषादमानंद—स्थाने स्वीकुरु मद्वचः ॥ १५ ॥ स्वीकृत्य वचनं माम—कीनं प्रेमप्रवर्धनं
॥ अंतःपुरे मदीये च । पट्टराज्ञी भव प्रिये ॥ १६ ॥ कलावता मनुष्येण । रूपिणा धनिना सह
॥ एकांते मिलने जाते । प्रायो द्रवंति योषितः ॥ १७ ॥ कामातुराणि वाक्यानि । समाकर्ण्य म-
हीपतेः ॥ स्वचित्ते धैर्यमालंब्य । जगादेंदुप्रभा नृपं ॥ १८ ॥ महीपाल प्रजापाल । त्वमस्यपरबोध-
दः ॥ सदान्यदारलुब्धानां । शिक्षादाता च भूतले ॥ १९ ॥ परस्त्रीसंगतो लोका—पवादो भवति
क्षितौ ॥ परस्त्रीतो मिथो वैरं । मित्रेष्वपि प्रवर्धते ॥ २० ॥ परस्त्रीसंगमाद्भावा—न्मनस्तापो निरं-
तरं ॥ परस्त्रीतः शरीरस्य । बलक्षयः प्रजायते ॥ २१ ॥ विश्वासो न विधातव्यो । मनुष्येण विवे-
किना ॥ स्वकीयानामपि स्त्रीणां । विशेषतः परस्त्रियः ॥ २२ ॥ राज्यभ्रंशः परस्त्रीभ्यः । परस्त्रीभ्यो
धनक्षयः ॥ कुल्यानामपि मर्त्यानां । भवेत्कुलकलंकिता ॥ २३ ॥ परस्त्रीसंगमो लोके । गदितो न-

।। ३०० ।। इति संचिंत्य मुंचंती । निःश्वासान् प्रबलान्मुखात् ।। दूतीभिः कतिभिः सार्धं । जगाम
नृपसद्म सा ।। १ ।। आयांती परिवारेण । ज्ञाता यावन्महीभुजा ।। स तावत्सप्तमीं भूमि—मारूढो
व्यपदेशतः ।। २ ।। समस्तमपि संस्थाप्य । परिवारमधोभुवि ।। उपर्येकाकिनी दूत्या । नीता सेंदुप्र-
भांगना ।। ३ ।। उभयोरपि संयोगं । हर्षविषादकारकं ।। मेलयित्वा गता दूती । कृतार्थिनी निके-
तनं ।। ४ ।। प्रायः स्युर्यौवनान्वीता । ये मर्त्या योषितोऽथवा ।। संस्थिताः समुदायेषु । ह्यात्मानं र-
क्षितुं क्षमाः ।। ५ ।। अहमेकाकिनी भूपो—ऽप्ययमेकाकी वर्तते ।। अस्मिन् विकलितेऽथात्मा ।
रक्षिष्यते मया कथं ।। ६ ।। चिंतयंतीति भूपालं । विजनस्थानमाश्रितं ।। एकाकिनं समालोक्य ।
सा बभूव भयद्रुता ।। ७ ।। दुष्टव्याघ्रसमीपे तु । स्थिता गौरिव बिभ्यती ।। लज्जया सा कुलस्त्रीव
। नेशाभिमुखमैक्षत ।। ८ ।। तावदादाय पाणिभ्यां । कामाकुलेन भूभुजा ।। शय्याया उपरि स्नेहा-
त् । स्थापिता सा विलासिनी ।। ९ ।। तथापि किंचिदाचख्यौ । न सा स्नेहलया गिरा ।। चाटुभि-
र्वचनैर्भूप—स्तां मोहयितुमभ्यधात ।। १० ।। तारुण्यपुण्यलावण्या । भूरिद्रव्यसमन्विताः ।। प्रायो
मर्त्याश्च कामिन्यो । न मिलंति कदाचन ।। ११ ।। मिलितेष्वपि तेष्वस्ति । सुरतावसरश्च न ।। त-

मधुभूपेन तच्छृणु ॥ ८९ ॥ जगाद सापि भो दूति । यदुक्तं मधुभूभुजा ॥ उपविश्यात्र सौख्येन ।
निःशंकं वदतान्मम ॥ ९० ॥ इत्युदिते तया दूती । जजल्प विनयान्विता ॥ मार्गात्ते पतिना दू·
तः । प्रेषितोऽस्ति मधुप्रभोः ॥ ९१ ॥ मया साकं दृढा मैत्री । यौष्माकीना भवेद्यदि ॥ मज्जाया
द्राक् तदा प्रेष्या । भूषयित्वा सुभूषणैः ॥ ९२ ॥ दूतेन सह ते भर्त्रा । प्रोक्तमस्तीति भूरिशः ॥
तेन श्रीमधुभूपाल—स्त्वामाकारयति द्रुतं ॥ ९३ ॥ प्रमदानां स्वकीयानां । तवापि च मृगेक्षणे ॥
भूषणानि च वस्त्राणि । नृपोऽद्य निशि दास्यति ॥ ९४ ॥ प्रदाय तव नाथस्य । समीपे प्रातराद·
रात ॥ प्रेषयिष्यति भूपाल—स्ततस्त्वमेहि सत्वरं ॥ ९५ ॥

दूतीवाक्यं समाकर्ण्य । क्षोभनाप्रविधायकं ॥ व्यचिंतयन्मनस्येवं । सा विषादसमन्विता ॥९६॥
कामिनीनां कुलीनानां । स्वभर्तृबद्धचेतसां ॥ निशायामन्यमर्त्यस्य । न गेहे गमनं वरं ॥ ९७ ॥
भूपोऽयमबलाहं तु । यास्याम्यस्य गृहे यदि ॥ तर्ह्ययं मां कलत्रत्वं । प्रापयिष्यति निश्चयात् ॥९८॥
अनेनाकारिता यर्हि । नाहं यास्यामि सर्वथा ॥ प्रभूतं प्राप्स्यति द्वेषं । भर्तुर्यद्वा ममोपरि ॥९९॥
अयं न ज्ञायते द्वेषात । किं किं कष्टं करोति मे ॥ एकशोऽहं ततो यामि । यद्भावि तद्भविष्यति

अथवा परकामिन्या । समं रिरंसया निशि ॥ लुंपत्येष कुलाचारं । नृपोऽपीति गतोऽर्यमा ॥ ७८ ॥
संकोचितानि वक्त्राणि । सरसीषु सरोरुहां ॥ दुःखादिव परित्यक्ता । क्रीडा विहंगमैरपि ॥ ७९ ॥
मय्यस्ति क्षणिको रागः । पंचवर्णात्मको यथा ॥ तथा सांसारिको ज्ञेयः । सध्येत्यदर्शयन्मधोः ॥
॥ ८० ॥ तत्स्वरूपं समीक्ष्यापि । तेन नृपेन चेतसः ॥ लग्नो रागो विमुक्तो न । दुर्मोच्यः कामि-
नां स हि ॥ ८१ ॥ संध्यारागोपमं रागं । सांसारिकं समीक्ष्य यः ॥ मोहमाप्स्यति कालिम्ना । शी-
घ्रं तस्य भविष्यति ॥ ८२ ॥ इति दर्शयितुं राज्ञः । समेतेव विभावरी ॥ कामिनां कामबाणानां ।
प्रसरप्रविधायिनी ॥ ८३ ॥ दुःखितं विरहवद्भि—र्मुदितं तस्करैर्नरैः ॥ घूर्णितं लोचनाभ्यां च । प्र-
सृतं तामसोत्करैः ॥ ८४ ॥ नभोमरकतस्थालं । भृत्वोद्यत्तारकाक्षतैः ॥ वर्धापयितुमायाता । स्वामि-
नं शशिनं निशा ॥ ८५ ॥ यथा यथा शशांकेशो—दयोऽजायत पुष्करे ॥ तथा तथा मधुक्ष्मापः
। स्मरबाणैरपीड्यत ॥ ८६ ॥ प्रजल्पितुमशक्तोऽपि । जजल्प धीसखं नृपः ॥ कथं समानयेर्नाद्या-
प्यमात्येंदुप्रभां स्त्रियं ॥ ८७ ॥ मंत्रिणा नृपवाक्येन । प्रथमे प्रहरे निशः ॥ दूती संप्रेषिता पार्श्वे ।
पत्न्या हेमरथेशितुः ॥ ८८ ॥ गत्वा तदंतिके साप्य—वोचन्मधुरया गिरा ॥ इंदुप्रभे यदुक्तं ते ।

नां ॥ ६६ ॥ यत एकाकिनीं पत्नीं । मां मुक्त्वा प्राणवल्लभ ॥ राज्यं भोक्तुं गृहे यासि । प्रभूतसुखलिप्सया ॥ ६७ ॥ यद्यत्र मां विमुच्य त्वं । निजगेहं गमिष्यसि ॥ स्थापयिष्यति दुष्टात्मा । स्वकलत्रेषु तर्ह्ययं ॥ ६८ ॥ तदा हेमरथोऽवोच—न्मावादीदशुभं वचः ॥ त्वच्चित्ते कल्पना यादृ—ग्भो तादृग्मधुनृपतेः ॥ ६९ ॥ यदायमावयोर्गेह—माकारितः समागतः ॥ तदावाभ्यां कृता भक्ति—स्तेन प्रीतिं करोत्ययं ॥ ७० ॥ इदमेव विदित्वायं । स्नेहं दर्शयतीत्यलं ॥ ततस्त्वया न कर्तव्या । चिंता चित्ते मनागपि ॥ ७१ ॥ भर्त्रा पुनः पुनः प्रोक्तं । स्वीकृतं वचनं तया ॥ विमुच्य सोऽपि तां तत्र । चचालाशकुनेष्वपि ॥ ७२ ॥

हेमरथे महीपाले । प्रस्थिते स्वपुरंप्रति ॥ उवाच मधुनृपालो । मंत्रिणं स्मरपीडितः ॥ ७३ ॥
हेमरथस्त्वितोऽचाली—न्मया संतोषितो भृशं ॥ धीसख त्वं ममोपांत—मिंदुप्रभामथानय ॥ ७४ ॥
मंत्र्यवोचन्महीपाल । यावत्समेति शर्वरी ॥ विधाय चेतसो दार्ढ्यं । तावत्त्वया प्रतीक्ष्यतां ॥ ७५ ॥
प्रधानवचनं श्रुत्वा । मोदमानो महीपतिः ॥ स्वकीयकामनासिद्धिं । जानन् सुखेन तस्थिवान् ॥ ७६ ॥
मंत्रींदुप्रभायोगो । निशायां शर्मणे भवेत ॥ इतीवास्तमितो भानु—रुभयोर्विघ्नभीतितः ॥ ७७ ॥

मासमेकं वसंतस्य । कृत्वा क्रीडां नृपैः सह ॥ मधुराजा समायातो । मंदिरं सपरिच्छदः ॥ ५५ ॥ स-
मागत्यात्मनः सद्म । सकलत्रान् क्षमाभृतः ॥ दत्वा भूषणवस्त्राण्यौ—चित्येन विससर्ज सः ॥ ५६ ॥
प्रोचे हेमरथं राजा । भवतस्तव योषितः ॥ उचितं भूषणं मित्र । निष्पन्नं नास्ति सांप्रतं ॥ ५७ ॥
विलंबे कार्यमाणे तु । मया प्राज्यहितैषिणा ॥ देशं विनाशयिष्यंति । तव प्रत्यर्थिनो नृपाः ॥५८॥
तेन त्वमधुना गच्छ । स्वच्छातुच्छमतिस्थिते ॥ अन्येभ्यो वैरिभूपेभ्यो । रक्ष देशं त्वमात्मनः ॥५९॥
देवीमिंदुप्रभामत्र । विमुंच प्राणवल्लभां ॥ भूषणं कारयित्वाहं । तस्या दास्यामि हस्तयोः ॥ ६० ॥
मया च कार्यमाणं त—द्विशेषेणास्ति भूषणं ॥ समीपे स्वर्णकारस्य । निगद्यते मया ततः ॥६१॥
एवमेवास्तु ते स्वामिन् । वचनं सौख्यसूचकं ॥ वदित्वेति हेमरथः । स्वस्त्रीपार्श्वे समाययौ ॥ ६२ ॥
आगत्य दयितापार्श्वे । कथयामास भूपतिः ॥ गच्छाम्यहं स्वके देशे । मुक्त्वात्र त्वामपि प्रिये ॥
॥ ६३ ॥ योग्यं निष्पादितं नास्ति । परिधानार्थमावयोः ॥ भूषणं मधुभूपेना—द्यापि निगद्यते त-
तः ॥ ६४ ॥ यदा त्वां भूषणं दत्वा । प्रेषयेन्मधुपार्थिवः ॥ सौविदल्लैः समं वीरैः । समेतव्यं त्वया
तदा ॥ ६५ ॥ श्रुत्वेतींदुप्रभा दुःख—पूरसंपूरितावदत् ॥ अभाग्यं प्रकटीभूत—मस्ति नाथ तवाधु-

यत्पुरा वर्णितं भूपा—ज्ञया तत्सेवकैरपि ॥ सश्रीकं प्रवरैर्वस्त्र—तोरणैस्तद्वनं कृतं ॥ ४४ ॥ कुसुमा-
नां सुगंधीनां । जलानामपि हारिणां ॥ वर्षणेन क्षमा तत्र । सिक्ता सेवकसंचयैः ॥ ४५ ॥ वापी-
नां दीर्घिकाणां च । विश्वेषां सरसामपि ॥ प्रभूतैः सुरभिद्रव्यै—र्वासितानि जलान्यपि ॥ ४६ ॥
भूषणैः पट्टकूलैश्च । पादपाः परिधापिताः ॥ रामा इवेति चारामाः । सुशोभां दधिरे तनौ ॥ ४७ ॥
श्रुत्वा शृंगारितं सर्वं । वनं सांतःपुरो नृपः ॥ सकांतैः सह भूकांतैः । क्रीडां कर्तुमगाद्वने ॥ ४८ ॥
भूपालस्य पुरो रम्यं । ढौकनं क्रियते बुधैः ॥ पादपैरिति दत्तानि । पत्रपुष्पफलान्यलं ॥ ४९ ॥
आगतस्य महीशस्य । पुरस्तैरेव पादपैः ॥ पत्रैः पुष्पैः फलैश्चक्रे । प्राभृतं निजभक्तये ॥ ५० ॥ म-
धोः समागमाद्भूषा । वनस्य वर्धतेऽधिका ॥ द्वेधापीति मधोर्योगे । ववृधे तस्य साद्भुता ॥ ५१ ॥
तत्र वापीजलैश्चारु—श्रीखंडकुंकुमान्वितैः ॥ सुवर्णशृंगिकां भृत्वा । केलिं चकार पार्थिवः ॥ ५२ ॥
भूरिविभ्रमधात्रीभिः । सर्वाभिरंगनाभिभिः ॥ समंततः पुरेणापि । सोऽरमत व्यवहारतः ॥ ५२ ॥
तथापींदुप्रभाविप्र—योगार्दितो महीपतिः ॥ रममाणो वसंतेऽपि । मानसे रतिमाप न ॥ ५३ ॥
भूपाला अपरे ये ते । समं सौवमृगीदृशा ॥ क्रीडां कृत्वा वसंतस्य । मेनिरे सफलं जनुः ॥ ५४ ॥

नृजः ॥ ३२ ॥ सेवकानामपि चैव—मादृशो यो हि नृभृतः ॥ विनाशहेतुरेवासौ । विज्ञेयो दक्षबुद्धिभिः ॥ ३३ ॥ अल्पबुद्धेरपि स्वामिं—श्चेन्मानयसि मे वचः ॥ विमुच्य तर्हि मामत्र । यूयमेव च गछत ॥ ३४ ॥ मामादाय प्रभो सार्धं । यूयं यदि च गछथ ॥ तदा स मायया नृप—स्त्वां कष्टे पातयिष्यति ॥ ३५ ॥ निशम्य वचनं राज्ञ्या । जजल्प जगतीपतिः ॥ महतां निंदनीयं किं । ब्रवीषि मृगलोचने ॥ ३६ ॥ अयं महानरेंद्रो हि । तात इव क्षमातले ॥ तस्य तु त्वादृशा दास्यः । प्रवर्तंते सहस्रशः ॥ ३७ ॥ मा भैषीस्तेन देवि त्वं । माकार्षीश्च विकल्पनं ॥ मम सार्धं समायाहि । भव्यमेव भविष्यति ॥ ३८ ॥

इत्युक्त्वा स समादाय । साकमिंदुप्रभांगनां ॥ जायमानेष्वशकुने—ष्वचलद्वसुधाधिपः ॥३९॥ हेमरथं महीनाथं । समाकर्ण्य समागतं ॥ सन्मुखं मधुनृपोऽपि । समाजगाम मायया ॥ ४० ॥ प्रवेशं कारयित्वा स । स्वनिकेतनसन्निधौ ॥ आवासान् दापयामास । कामी कुर्यान्न किं स्त्रिये ॥४१॥ आवासादिप्रदानेन । तोषयामास तं नृपः ॥ अन्येषामपि नृपानां । ददौ सन्मानमुत्तमं ॥ ४२ ॥ समेतानां महीशानां । प्रत्ययोत्पादनाय सः ॥ वनशृंगारसामग्रीं । निष्पादयितुमादिशत् ॥ ४३ ॥

खितो लेखो । हेमरथस्य नृभृतः ॥ येन मानसजा प्रीतिः । प्रवर्धते परस्परं ॥ २० ॥ वाचयित्वा स तं लेखं । प्रमोदपुलकांकितः ॥ राज्ञ्या इंदुप्रभायाश्च । दर्शयामास वेगतः ॥ २१ ॥ आवयोरुपरि स्नेहो । देव्यहो वर्तते महान् ॥ अयोध्यानगरीभर्त्रा—पीदृशं लिखितं यतः ॥ २३ ॥ अतिस्फार-तयाधारे । मनुष्याणां च पक्षिणां ॥ यथार्थाख्ये वटपुरे । लिख्यते मधुभूभुजा ॥ २४ ॥ यदा तत्र समेतोऽहं । तदा भक्तिस्त्वया तथा ॥ कृता सर्वप्रकारेण । यथाहं रंजितो भृशं ॥ २५ ॥ प्राणाद-पि ततोऽभीष्टो । वर्तसे परमः सुहृत् ॥ त्वया समं च भेदो मे । कदापि मनसापि न ॥ २६ ॥ स-मस्तमपि मद्वस्तु । त्वदायत्तं प्रवर्तते ॥ त्वयापि च तथा ज्ञेयं । विमुच्य मतिकल्पनां ॥ २७ ॥ स-कलत्रा महीपाला । ये मदाज्ञाप्रवर्तिनः ॥ मया त्वाकारिताः संति । तैः समं क्रीडितुं वने ॥२८॥ त्वयाप्यतः समेतव्यं । सहितेन स्वयोषिता ॥ न विलंबश्च कर्तव्यः । स्नेहसंपूर्णचेतसा ॥ २९ ॥ आदरान्मधुभूपेन । पत्रिका लिखितास्ति मे ॥ वाचय त्वमपि प्राण—प्रिये तां प्रेम वीक्षितुं ॥३०॥ पाल्यैव कुलकांताभिः । पत्याज्ञेति विचिंत्य सा ॥ वाचयित्वा च लेखं तं । कंपयंती शिरो जगौ ॥ ॥ ३१ ॥ यो भवेत्सरलो मर्त्यः । सरलत्वेन वेत्ति सः ॥ किंत्वत्र वर्तते किंचित् । कापट्यं मधुभू-

इति चिंतयतश्चित्ते । तस्य प्रादुरभून्मतिः ॥ यथातथास्य भूपस्य । कर्तव्यं कार्यमादरात् ॥ ॥ ९ ॥ अस्मिन् जीवति भूपाले । कार्याणि निखिलान्यपि ॥ भविष्यंति मृते वास्मि—न्नाशं यास्यंति तानि मे ॥ १० ॥ चिंतयित्वेति भूपं स । जगाद मिष्टभाषया ॥ प्रभो त्वया न कर्तव्या । हृदि चिंता मनागपि ॥ ११ ॥ अद्ययावन्मया ज्ञातं । विस्मृता सा भविष्यति ॥ स्वस्त्रीव परकांता तु । विस्मृता ते न दृश्यते ॥ १२ ॥ ततो यथा तथा तस्याः । संयोगः प्रविधास्यते ॥ मद्वाक्येन कुरु स्वास्थ्यं । स्यात्कार्यं हि शनैः शनैः ॥ १३ ॥ मंत्रिविश्वासिवाक्येन । मानसे धीरतां धरन् ॥ तस्थौ तदागमस्वांत—स्वस्थीभूतो महीपतिः ॥ १४ ॥ अथ कापि मतिः कल्प्या । मत्वेति हृदि धीसखः ॥ दूतान् प्रेषितवान् राज्ञा—माकारणाय सर्वतः ॥ १५ ॥ मासमेकं वसंतस्य । क्रीडां भूपतिभिः सह ॥ स्थित्वोद्याने करिष्यत्यं—गनायुग्मधुपार्थिवः ॥ १६ ॥ ततो युष्माभिरप्युच्चैः । प्रीतिभक्तिसमन्वितैः ॥ आगंतव्यं सहात्मीयैः । कलत्रैः क्रीडनोचितैः ॥ १७ ॥ ये ये मधुमहीशस्य । शासने भूभुजोऽभवन् ॥ इति संप्रेषितास्तेषां । लेखा लेखा इव प्रियाः ॥ १८ ॥ लेखानां च तथा तेषां । दर्शनेन महीभुजः ॥ ते सर्वेऽपि समेता हि । नायांति केऽत्र के ॥ १९ ॥ विशेषाद्धि-

तु स्वयं नाम्ना । मधुनृपो द्वितीयकः ॥ मधुरेवागतस्तेनो—द्दीपे विरहोऽधिकः ॥ ९८ ॥ ततो-
ऽसौ विकलात्मेवा—भवच्छून्यमना नृपः ॥ तस्य दुःखेन दुःखाढ्या । जाताः सर्वेऽपि नागराः ॥
॥ ९९ ॥ तथापि न गृहे तस्य । समेतः सामवायिकः ॥ समाधिं वपुषः पृष्टुं । पूर्ववाक्यानि सं-
स्मरन् ॥ २०० ॥ नवमीदशमीकामा—वस्थामध्यगतोऽन्यदा ॥ मुमूर्षुः स्वजनैर्भूमौ । मुक्तोऽन्नपा-
नमोचनात् ॥ १ ॥ नृपभृत्या द्रुतं गत्वा । स्वरूपं मंत्रिणोऽभ्यधुः ॥ धीसखोऽपि तदाकर्ण्य । समा-
ययौ नृपालये ॥ २ ॥ समेत्य च नमस्कृत्य । विविक्ते सुप्तमीश्वरं ॥ यावत्तिष्ठति तावत्स । तेन स-
न्मुखमीक्षितं ॥ ३ ॥ दृष्ट्वावोचन्नृपो मंत्रिन् । विद्यते भवतः सुखं ॥ दुःखात्स प्रत्यवग्नाय । भविता
तन्मृते मयि ॥ ४ ॥ राज्ञः स्वरूपमालोक्य । विरूपं मंत्र्यचिंतयत् ॥ किं कुर्वे कुत्र गच्छामि । पुरः
कस्य ब्रवीम्यहं ॥ ५ ॥ अत्र परत्र लोके य—द्विरुद्धं कर्म दुःखकृत ॥ अवस्थामीदृशीं प्राप्तो । नृ-
पस्तस्या विचिंतनात् ॥ ६ ॥ अस्याहं चेत्सहायः स्यां । मां लोकस्तर्हि निंदति ॥ न भवामि तदा-
वश्यं । प्राणानपि नृपस्त्यजेत ॥ ७ ॥ तदा चिरंतनी लज्जा । मदीया च प्रयास्यति ॥ तथैव सेव-
को धर्मो । व्रजिष्यति पुरानन: ॥ ८ ॥

अजायत रसोत्पत्ति—र्वसंतसमयागमे ॥ ८७ ॥ एकस्तु मधुभूपस्य । करीरस्येव विग्रहे ॥ कथंचि-
दपि नो जातो । रसप्रादुर्भवः क्षणं ॥ ८८ ॥ भवेत्सुंदरतायोगा—दभीष्टेंदुप्रभामधौ ॥ तत्रैव तद्-
भावेन । महादुःखोऽभवन्मधुः ॥ ८९ ॥ अतिशुष्केंधनेनैव । तेन दुःखेन भूयसा ॥ इंद्रियायतने
तस्य । जज्वाल विरहानलः ॥ ९० ॥ यथा यथातिनिःश्वासो—ष्णवासा भवंति तन्मुखे ॥ स प्रा-
वर्धत तैरेव । वातरूपैस्तथा तथा ॥ ९१ ॥ केनचित्तत्र पुष्पाणि । मालतीसंभवानि च ॥ केनचि-
ज्जातिजातानि । रंभादलानि केनचित् ॥ ९२ ॥ केनचिन्नागवल्लीनां । पत्राणि तन्मुखे भृशं ॥
केनचित्सहकाराणां । मंजर्यस्तत्फलानि च ॥ ९३ ॥ चंदनानां सुगंधीनां । कर्पूराणां शशित्विषां ॥
सलिलानि च शीतानि । केनचिद्भक्तिभाजिना ॥ ९४ ॥ केनचित्तालवृंतानां । संपादिताः समीर-
णाः ॥ कंठे मौक्ताफला हाराः । केनचित्परिधापिताः ॥ ९४ ॥ केनचित्सूक्ष्मवस्त्राणि । पट्टकूलानि
केनचित् ॥ देवदूष्याण्युदाराणि । ढौकितानि च केनचित् ॥ ९५ ॥ इति नानाप्रकाराणि । वस्तू-
नि यानि यानि तु ॥ तस्योपशांतये दत्ता—न्यभूवंस्तान्यशर्मणे ॥ ९६ ॥ षड्भिः कुलकं ॥ यथा
विषयिणो धर्म—वार्तापि च विषायते ॥ तथा वियोगिनस्तस्य । तत्सर्वमप्यभूद्विषं ॥ ९७ ॥ प्रथमं

ति ॥ ७५ ॥ परं तस्यान्नवच्चित्तं । दुःखपूरेण पूरितं ॥ उदासीनमनास्तेन । योगीवाभून्महीपतिः
॥ ७६ ॥ आसने शयने याने । भोजने विजने जने ॥ कानने चापि प्रासादे । स क्वापि नाप्त-
वान् रतिं ॥ ७७ ॥ औदासीन्येन राज्यस्य । राजा कार्याण्यसाधयत ॥ धीसखः सोऽप्युपालंभ—
भीत्या नंतुमुपैति न ॥ ७८ ॥ अत्रांतरे वसंतर्तू—राजधानी स्मरेशितुः ॥ समायातश्च पांथानां ।
चेतोऽनलप्रदीपकः ॥ ७९ ॥ मिथोऽत्र दंपती रागं । प्रकटीकुरुतो भृशं ॥ इत्यावि क्रियते रागः ।
कानने किंशुकैरपि ॥ ८० ॥ पत्रैः केचित्सुमैः केचि—त्फलैः केचिच्च पादपाः ॥ भेजुः शोभां स्व-
देहेषु । मधावेकेंद्रिया अपि ॥ ८१ ॥ सुखाप्त्या चित्तवाक्कायैः । पंचेंद्रिया नरा इव ॥ त्रिधापि स-
हकारास्तु । दधुः पल्लवनश्रियं ॥ ८२ ॥ धन्यो धन्यो वसंतोऽयं । यत्प्रसादान्महीरुहाः ॥ अपि नि-
श्छदनाः शुष्का । भवंति नवपल्लवाः ॥ ८३ ॥ समंतात्कानने शोभां । दृष्ट्वा प्रमददायिनीं ॥ कूजि-
तैर्जयनिःस्वाना—नीव चक्रुर्वनप्रियाः ॥ ८४ ॥ भाविनी सौरज्यावाप्ति—रथास्माकं महावने ॥ इ-
ति गुंजारवैर्मत्ता । गानं कुर्वंति षट्पदाः ॥ ८५ ॥ कुत्रचिद्दंपती क्रीडां । प्रकुर्वाते वनावनौ ॥ कु-
त्रचित्पुरुषा एव । कामिन्य एव कुत्रचित् ॥ ८६ ॥ मनुष्याणां मृगादीनां । पादपानामपि स्फुटं ॥

लानगरीशोभां । प्रजास्तत्र निवासिनीः ॥ समीक्ष्य मधुभूपस्य । बभूव प्रतिघो महान् ॥ ६५ ॥ हृ
न्मनोरथाफलना— न्मधुक्ष्मापो विषादवान् ॥ न ताः सत्कारयामास । चुकोप च नियोगिनं ॥६६॥
अहो हा पाप्मनैतेन । मां विप्रतार्य कैतवात् ॥ अत्रानीय समस्तं च । मम कार्यं विनाशितं ॥६७॥
नियोगिनं दुरात्मानं । निर्भर्त्सयाम्यहं तथा ॥ अद्यप्रभृति नो कार्य—मीदृशं कुरुते यथा ॥ ६८ ॥
चिंतयित्वेति रे दुष्ट । स्पष्टमिथ्याप्रलापक ॥ किं मे ते बाभवद्वैरं । येनाभूर्विप्रतारकः ॥ ६९ ॥
प्रदत्ता इत्युपालंभा । मनीषिणोऽपि मंत्रिणः ॥ स तदोचे प्रभो नाहं । वेद्मि वेत्ति च सैन्यपः ॥
॥ ७० ॥ तमाकार्य यदा राज्ञा । पृष्टमाक्रोशभाषणैः ॥ सेनापतिरपि प्रोचे । न ज्ञातं तमसा नि-
शि ॥ ७१ ॥ अपराधं कृपासिंधो । क्षमस्व त्वं ममैकशः ॥ नातःपरं करिष्यामि । कार्यमीदृशमीश्वर
॥ ७२ ॥ महोत्सवैः पुरीमध्ये । क्रियमाणे प्रवेशने ॥ संतुष्टा नागरा लोका । नृपस्त्वभूद्विषादवान्
॥ ७३ ॥ रम्याभिर्गणिकाभिश्च । गीयमानगुणावलिः ॥ तूर्याणां वर्यनिर्घोषै—रगमद्भवनं नृपः ॥
॥ ७४ ॥ तत्र गायंति गीतानि । काश्चित्सारंगलोचनाः ॥ काश्चिद्दर्शयंत्युच्चै—रक्तैरक्तैः शतैः
॥ ७५ ॥ हावभावविलासादीन् । काचिद्दर्शयतीशितुः ॥ काचित्कटाक्षबाणेन । निशितेन च विध्य-

त्य च ॥ अवश्यं प्रकरिष्यामि । तावकीनं समीहितं ॥ ५३ ॥ इति स्मृत्वा पुरा प्रोक्तं । वचनं स-
चिवोत्तम ॥ चतुर्बुद्धिनिधानत्वात् । कुरु कार्यं ममेप्सितं ॥ ५४ ॥ नृपालवाक्यमाकर्ण्य—चिंतय-
त्धीसखो हृदि ॥ किं कुर्वेऽधास्य साद्यापि । विस्मृता न परांगना ॥ ५५ ॥ अभव्यं वा वचो भव्यं
। प्रमाणीकार्यमैश्वरं ॥ अवोचत्सचिवः स्वामिन् । स्मारितं तद्वरं कृतं ॥ ५६ ॥ संतोष्य वचसा नृपं
। विरुद्धं तद्वचो विदन् ॥ सेनाग्रयायिनं मंत्री । दीर्घदर्शी रहस्यवक् ॥ ५७ ॥ अहो तथा त्वया
सेना । चालनीयाग्रतो द्रुतं ॥ यथा वटपुरं मार्गे । नैत्ययोध्या न लंघ्यते ॥ ५८ ॥ इत्यमात्यस्य
वाक्येन । सेनापतिस्तथा निशि ॥ सेनां चालितवान् दूर—वर्त्यभूत्तत्पुरं यथा ॥ ५९ ॥ गछतो
मधुनृपस्य । परिवारेण भूयसा ॥ अथायोध्या नगर्येवा—भवत्समीपवर्तिनी ॥ ६० ॥ निजं तं म-
धुभूपालं । सर्वतो जितकासिनं ॥ समागछंतमाकर्ण्य—शृंगारयत पुरीं जनाः ॥ ६१ ॥ हंसपादैश्च
सिंदूरै—र्हरितालादिवर्णकैः ॥ विचित्रा रचना चक्रे । हट्टे हट्टे गृहे गृहे ॥ ६२ ॥ तोरणैर्मौक्तिकैः
पुष्प—दामभिर्धामधामभिः ॥ पुरीं शृंगारयित्वोच्चैः । समेताः सन्मुखं प्रजाः ॥ ६३ ॥ प्राभृतानि प्र-
भूतानि । विविधानि वराणि च ॥ नृपस्य पुरतो मुक्त्वा । नेमुस्ताः सकला अपि ॥ ६४ ॥ कौश-

येषां भवंति पुण्यान्या—श्रयेयुस्तान् जयश्रियः ॥ इति पुण्यप्रभावात्ता । मधुनृपचमूं श्रिताः ॥ ४२ ॥ श्रितासु जयलक्ष्मीषु । वाहिनीं मधुनृभुजः ॥ भीमनृपो गृहीतश्च । जीवंस्तत्सुभटैर्द्रुतं ॥ ॥ ४३ ॥ गृहीत्वा च वशे कृत्वा । तं च निष्कास्य देशतः ॥ अन्यत्र स्थापयामास । भीमनृपं मधुप्रभुः ॥ ४४ ॥ तत्र देशे मधुक्ष्मापो—ऽस्थापयत्स्वकुलागतान् ॥ एकमुत्थापयत्येकं । स्थापयंति च यन्नृपः ॥ ४५ ॥ भीमोऽपि भीमनृपालो । विजितो मधुनृभुजा ॥ इत्यानयंति नृपाला । उपायनान्यनेकशः ॥ ४६ ॥ वेगिनो वाजिनः केचित् । केचिदुन्मत्तवारणान् ॥ अद्भुतान् स्यंदनान् केचित् । केचिद्वीरान् पदातिकान् ॥ ४७ ॥ केचिद्रूपवतीः कन्याः । केचिदाभरणं वरं ॥ केचिन्मुक्ताफलं प्रीत्या—ढौकयन् नृपतेः पुरः ॥ ४८ ॥ प्राभृतीकृतवस्तून्या—दाय नृपोऽपि दत्तवान् ॥ केषांचित्पत्तनं देशं । नगरं ग्राममुत्तमं ॥ ४९ ॥ दत्वा यथोचितं दानं । संतोष्य सकलान् जनान् ॥ बभूव मधुनृपालः । पुरं जिगमिषुर्निजं ॥ ५० ॥ अथ गंतापि भूमीशः । स्वकीयं नगरंप्रति ॥ मनोमध्ये स्थितामिंदु—प्रभां न व्यस्मरन्मनाक् ॥ ५१ ॥ ततोऽवोचत्स यद्यप्या—वयोर्यानं निजे पुरे ॥ तथापि स्ववचो मंत्रिन् । संस्मर त्वं पुरोदितं ॥ ५२ ॥ जित्वारिं वलमानोऽहं । वटपुरं समे-

योः ॥ ३० ॥ धरणीधवयोरुच्चै—र्बलिनोरुन्नयोरपि ॥ सन्मुखं मिलिते सैन्ये । तूर्णं योध्धुं स्पृहा-
भवत् ॥ ३१ ॥ रणतूरनिनादौघै—र्नृत्यंति वीरमानिनः ॥ अथ किं प्रकरिष्यामः । कंपंते कातरा
इति ॥ ३२ ॥ हयानां हेषितैर्मत्त—हस्तिनां बृंहितैस्ततैः ॥ स्यंदनानां च चित्कारै—र्बंदिनां बिरु-
दारवैः ॥ ३३ ॥ सोत्साहा धृतनाराच—कृपाणमुद्गरादयः ॥ भ्रमंतीतस्ततो वीरा । मकरा इव वारि-
धौ ॥ ३४ ॥ हन्यतां हन्यतामेष । ब्रुवाणा इति वैरिणि ॥ नक्रचक्रा इवांभोधौ । वीराः परिस्फुरं-
ति च ॥ ३५ ॥ परस्पराभिघातेन । निर्गतानि बहूनि वै ॥ रुधिराणि जलानीव । प्रवर्तंते समंततः
॥ ३६ ॥ वीराणामेव मर्त्यानां । योध्धुं प्रकटिता घनाः ॥ हया रंगत्तरंगाभ्नः । प्राप्नुवंति कुरंगतां ॥
॥ ३७ ॥ भिन्नेभ्यः कुंभिनां कुंभ—स्थलेभ्यश्च विनिर्गतैः ॥ शुद्धमुक्ताफलैस्तूर्णं । पूर्णाभून्मेदि-
नी तदा ॥ ३८ ॥ अन्योन्यशीघ्रसंघट्टा—त्समुद्भूतो हुताशनः ॥ वडवाग्निरिव व्याप—द्भस्मसात्क-
र्तुमुद्यतः ॥ ३९ ॥ घोरसंग्रामपाथोधौ । हयादिवहनैरिति ॥ उन्मज्जंति निमज्जंति । वीराश्च का-
तरा नराः ॥ ४० ॥ ये नोत्तीर्णाः पयोधिं तं । मग्नास्तत्रैव ते नराः ॥ समुत्तीर्णाश्च मे प्राज्या—
स्तेऽभुंजंश्च जयश्रियं ॥ ४१ ॥ नवभिः कुलकं ॥

र्ववान् राजा । जगौ मिथ्या ब्रवीषि किं ॥ स कोऽप्यस्ति न संसारे । यः समेति ममोपरि ॥ २० ॥ प्रताप्यन्योऽपि यः कश्चित् । सोऽपि नृपः समेति न ॥ वराकोऽयं कुमारोऽपि । मधुनृपः समेति किं ॥ २१ ॥ अद्य यावत्त्वया मंत्रिन् । न श्रुतं श्रुतिगोचरे ॥ सिंहस्योपरि किं हस्ती । समेति बलवानपि ॥ २२ ॥ एवं सत्यपि यद्येष । समेतोऽस्ति मुमूर्षया ॥ तर्हि तेन समं युद्धं । विधाय घातयिष्यते ॥ २३ ॥ कथयित्वेति नृपालः । सज्जीकर्तुं बलं निजं ॥ कांदिशीकजने ऽङ्गे । रणभेरीमवादयत् ॥ २४ ॥ तदा भीममहीपालं । व्याचष्ट सचिवाग्रणी ॥ विभो क्षमामहीनाथो । बलीयान् वर्तते महान् ॥ २५ ॥ प्रतोलीं दापयित्वा तद् । दुर्गरोधं विधाय च ॥ सुखैस्तिष्ठ कियत्कालं । कालक्षेपो हि सौख्यदः ॥ २६ ॥ भीमेशो भीमवद्भीमः । प्राह रे किं प्रजल्पसि ॥ वराकेऽस्मिन् समायाते । प्रतोली दाप्यते कथं ॥ २७ ॥

राजोक्त्वेति पुरीमध्या—द्धरीतः केसरीव सः ॥ युद्धायोद्यत एकाकी । निर्गतोऽनु चमूः समा ॥ २८ ॥ सैन्योपेतं तदा पुर्या । निर्गतं भीमभूभुजं ॥ निशम्य मधुनृपोऽपि । सज्जीचकार वाहिनीं ॥ २९ ॥ प्रादुर्भवेद्यथा वह्नि—र्घर्षणे वंशवंशयोः ॥ यथा मनोभवो नृयो—र्दर्शने पुरुषस्त्रि-

स्या हि यथातथा ॥ प्रधानेन ततस्तेन । शपथाः प्रतिचक्रिरे ॥ ८ ॥ मंत्रिणाश्वासितो राजा । चिंतयंश्चित्तचिंतितं ॥ समं हेमरथेशेना—चालीद्भूरिपरिछदः ॥ ९ ॥ द्वयोर्महीभुजोः प्राज्ये । मिलित्वा चलिते बले ॥ तुरिगजहयोपेते । रथपत्तियुते द्रुतं ॥ १० ॥ स्खलनं शैलशृंगाणां । कंपनं भूतलस्य च ॥ अनीकसमुदायेन । चलतस्तस्य पथ्यभूत् ॥ ११ ॥ निजाधीशप्रतापेन । निर्भयत्वेन वर्त्मनि ॥ शनैरपि बलं गछ—न्निशीथे प्राप तत्पुरं ॥ १२ ॥ आदित्यशशिनो राज्ञो—र्द्वयोर्बलैरवेष्ट्यत ॥ भीमभूपपुरं विष्वक् । सुराद्रिस्तारकैरिव ॥ १३ ॥ निःस्वानादिकवादित्रैः । परचक्रसमुद्भवैः ॥ पूर्यमाणे नभोदेशे । चुक्षोभ सकलं पुरं ॥ १४ ॥ सुभटानां प्रवेशे यो । जायते दुःखदायकः ॥ तत्तूर्यनिनदैरेव । कोलाहलः पुरेऽभवत् ॥ १५ ॥ तुमुलं नगरे प्राज्य—माकर्ण्य भीमभूपतिः ॥ उवाच सचिवं कोला—हलः किंहेतुकोऽस्त्ययं ॥ १६ ॥ प्लाविता किं समुद्रेण । किंवा प्रज्वालिताग्निभिः ॥ किं विद्युद्भिः समाक्रांता । पृथिवी पृथुतान्विता ॥ १७ ॥ अमात्यः सत्यवाक्प्रोचे । नाथ तर्कयसे किमु ॥ मधुनृपः समेतोऽस्ति । कटकेन महीयसा ॥ १८ ॥ माभूदेतत्पुरीभंगः । परचक्रसमागमात ॥ लोको भयद्रुतस्तेन । कोलाहलं करोत्यलं ॥ १९ ॥ श्रुत्वेति ग-

ष्यति ॥ ए६ ॥ ततस्त्वमधुना स्वामि—न्नाश्वास्य सकलां चमूं ॥ सर्वेण परिवारेण । प्रथमं जय वैरिणं ॥ ए७ ॥ श्रुत्वेत्यूचे मधुर्मंत्रिन् । किं भापयसि मां मुधा ॥ प्रयातु सकलं सैन्यं । कीर्तिरप्यस्तु वा मुधा ॥ ए८ ॥ मम सैन्येन सर्वेण । द्रव्येण न प्रयोजनं ॥ एकमिंदुप्रज्ञाया हि । प्रयोजनं कुरुष्व तत ॥ ए९ ॥ इत्युर्वीशवचः श्रुत्वा । चिंतयामास धीसखः ॥ कामातुरो मधुर्हाहा । विरुद्धं किं प्रजल्पति ॥ १०० ॥ अथवा कामिनो मर्त्याः । कुलाचारं बलं धनं ॥ प्राणानपि त्यजंति स्वान् । विरुद्धजल्पनेन किं ॥ १ ॥ यादृशो रागिणां रागो । रूपिण्यां स्त्रियि वा धने ॥ तादृशो यदि धर्मे स्या—त्तर्हि सिद्धिर्न दुर्लभा ॥ २ ॥ आबालकालतोऽप्येष । वर्धितः पार्थिवो मया ॥ यदि सोऽपीदृशं वक्ति । तदन्यस्य तु का कथा ॥ ३ ॥ अथास्याज्ञानुसारेण । प्रचलेऽहं स्वबुद्धितः ॥ आश्वास्यैनं यथा काल—क्षेपोऽपि च प्रजायते ॥ ४ ॥ विचार्येत्यवदन्मंत्री । येनोद्देशेन नायक ॥ निर्गतस्त्वं कुरुष्वादौ । यतो वैरिजयो भवेत् ॥ ५ ॥ जिते वैरिणि ते भावी । प्रतापस्योदयो महान् ॥ पश्चाद्विधास्यते नाथ । तावकं चित्तचिंतितं ॥ ६ ॥ पार्थिवः प्राह यद्येवं । तर्हि त्वं मम गोचरे ॥ कुरुष्व शपथान् मंत्रिन् । मां विश्वासयितुं द्रुतं ॥ ७ ॥ कामार्ता विकलात्मानो । विश्वा-

रशतैरपि ॥ ८५ ॥ तथापि कथयाम्यस्य । वाक्यमायतिसुंदरं ॥ विमृश्येत्यब्रवीन्मंत्री । कामातुरं मधुनृपं ॥ ८६ ॥ यत्त्वया चिंतितं चित्ते । मत्पुरो यच्च भाषितं ॥ इह लोकेऽन्यलोके त—दपवादकरं तव ॥ ८७ ॥ तदिदं चिंतनं त्यक्त्वा । मत्वा मद्वचनं विभो ॥ निजाभीष्टानि कृत्यानि । विचारज्ञाग्रसमाचार ॥ ८८ ॥ दुष्टेन मंत्रिणानेन । चित्तवार्ता ममाददे ॥ न करोत्युद्यमं तत्र । वारयत्येष मां पुनः ॥ ८९ ॥ ततोऽवदन्महीपालः । कोपाटोपेन धीसखं ॥ याहि त्वं दूरतोऽवश्यं । मरिष्याम्यहमत्र च ॥ ९० ॥ कामी हितोपदेशेन । कार्याकार्यं च वेत्ति न ॥ ततोऽयं सहसा प्राणान् । मात्याक्षीत्कामविह्वलः ॥ ९१ ॥

ध्यात्वेति सचिवः काल—क्षेपं कारयितुं जगौ ॥ नाथ संप्रति रहस्येयं । किंवदंती त्वया हृदि ॥ ९२ ॥ दुष्टं भीमनृपं जेतुं । सांप्रतं गच्छ भूपते ॥ मयका वलमानेन । करिष्यते तवेप्सितं ॥ ॥ ९३ ॥ परदारविलुब्ध त्वं । वचसा मे यदि प्रभो ॥ न गच्छस्यधुना तर्हि । ज्ञेयं दुःखं महत्त्वयि ॥ ९४ ॥ य एते सुभटाः संति । त्वत्तस्ते सकला अपि ॥ परावृत्य गमिष्यंति । सैन्ये भंगो भविष्यति ॥ ९५ ॥ संजाते कटके भंगे । रिपुरुन्मादमाप्स्यति ॥ वैरिण्युन्मादमापन्ने । तवायशो भवि-

। सचिवः परिपक्कधीः ॥ नृपालं कथयामास । धीसखो हि सखेशितुः ॥ ७४ ॥ राजंस्तवास्ति किं दुःखं । समुद्भूतं हृदि द्रुतं ॥ किं हेमरथभूपेना—पमानं ते कृतं ननु ॥ ७५ ॥ किंवा शरीरसंभूत—विषमामयनिर्मितं ॥ केनचिद् द्वेषिणा यद्वा । कृतं वाङ्मनसोज्झितं ॥ ७६ ॥ व्यग्रचित्ते त्वयि स्वामिन् । सैन्यं सर्वमपि क्षणात ॥ यतो भविष्यति व्यग्रं । तद्यथार्थं निवेदय ॥ ७७ ॥ कामातुरमनुष्याणां । न लज्जा न च साध्वसः ॥ इति तेन निजास्येन । कथितं मंत्रिणः पुरः ॥७८॥ न कुतोऽप्यन्यतोऽमात्य । दुःखं मदीयमानसे ॥ स्त्री हेमरथभूपस्य । यतो दृष्टा ततोऽस्ति तत् ॥ ॥ ७९ ॥ तया दर्शनमात्रेण । मदीयं हृदयं हृतं ॥ अन्यस्मादपि सर्वस्मा—द्विरक्तिः कारिता पुनः ॥ ८० ॥ अंतःपुरे मदीये च । बहवः संति योषितः ॥ ईदृशी कापि नो नारी । मनोनयनमोहिनी ॥ ८१ ॥ ततो जाया मदीयेयं । भविष्यति यदि द्रुतं ॥ जीवंतं मां विजानीहि । तर्हि धीसख नान्यथा ॥ ८२ ॥ नृपस्य श्रवणाश्रव्य—मिति नव्यं वचोऽधमं ॥ आकर्ण्य चिंतयामास । सचिवो व्यग्रमानसः ॥ ८३ ॥ दष्टस्य फणिना पुंसो । व्याधिनिर्व्याधितस्य च ॥ अपि लग्नकृपाणस्य । प्रतीकारः प्रवर्तते ॥ ८४ ॥ परं कंदर्पबाणेन । विद्धस्य तु शरीरिणः ॥ न विद्यते प्रतीकार । उपचा-

स्तस्य श्रोत्रे कृतार्थिनी ॥ ६२ ॥ अस्याः सुपर्वनेत्राभ्या—मिवाक्षिभ्यां समीक्षते ॥ यश्चासेचनकं रूपं । सफले तस्य लोचने ॥ ६३ ॥ नृरिसौरभ्यसंयुक्तं । कामिभृंगा मुखांबुजात् ॥ जातं जिघ्रति यो गंधं । तस्य नासा फलेग्रहिः ॥ ६४ ॥ श्लोकैः काव्यैश्च गाथाभिः । किंवदंतीभिरप्यहो ॥ यो जल्पेदनया सार्धं । तस्यैव रसना वरा ॥ ६५ ॥ कुंकुमचंदनद्रव्यै—र्विलिप्तकाययानया ॥ सुरतं कुरुते यश्च । शुभं तत्स्पर्शनेंद्रियं ॥ ६६ ॥ यस्यैतेषु पदार्थेष्व—न्यैकोऽपि प्रवर्तते ॥ अस्मिन्नसार संसार—मध्ये धन्योऽस्ति सोऽपि हि ॥ ६७ ॥ मम त्वेकमपि स्वीय—स्वांतसंतोषकारणं ॥ अनया धन्यया साकं । वस्तु नास्ति मनागपि ॥ ६८ ॥ तां वीक्ष्य पुण्यलावण्यां । चिंतयंतमिति त्वसौ ॥ वर्धाप्य मधुनृपालं । जगामागारमात्मनः ॥ ६९ ॥ स्पृहया च तया साकं । तस्य मानसमप्यगात् ॥ नाद्भुतं हि मधुवांछे—डुप्रभाया भवेद्बहुः ॥ ७० ॥ सोऽप्युत्थाय ततो रात्रि—मिव कल्पयितुं दिवा ॥ तस्थाविंदुप्रभाध्यानः । शय्यायां स तमोगृहे ॥ ७१ ॥ तत्र स्थित्वा न केनापि । सह जल्पति सादरं ॥ रुच्या भुनक्ति नाहारं । न निद्रां कुरुते निशि ॥ ७२ ॥ निजस्य कटकस्यापि । चिंतां च चलनादिकां ॥ विदधाति न कंदर्प—बाणैर्विद्धो महीपतिः ॥ ७३ ॥ तदा समेत्य तस्यैव

श्वरं ॥ ५१ ॥ इति तद्वचनं श्रुत्वा—वदद्वटपुरेश्वरः ॥ विरुद्धं वचनं देवि । त्वयका किं निरूप्यते ॥ ५२ ॥ आवयोस्तातसोदर्य—सन्निभोऽयं मधुप्रभुः ॥ भूयिष्ठास्त्वादृशो दास्यो । भविष्यंत्यस्य भूपतेः ॥ ५३ ॥ ततस्त्वमेव गत्वाशु । विधाय रचनां वरां ॥ मुक्ताफलाक्षतैः कांते—वर्धापय नरेश्वरं ॥ ५४ ॥ विरुद्धं पतिना किंचि—त्सहसा विनिवेदितं ॥ कुलीना कामिनी वेत्ति । तद्वचनं तथा हृदि ॥ ५५ ॥ ज्ञात्वापि चैकशस्तत्त्व—भर्तुः प्रतिनिवेदयेत् ॥ स वक्ति चेत्कुरु त्वं च । सा करोत्येव तद्वचः ॥ ५६ ॥

ज्ञात्वेति भर्तृवाक्येन । वर्धापनाय भूपतेः ॥ अंगे षोडशशृंगारान् । परिधाय गता सभां ॥ ॥ ५७ ॥ समागत्य तयात्मीय—भर्त्रा सह मधुप्रभुः ॥ स्वस्तिकं पूरयित्वाग्रे । वर्धापितोऽक्षतादिभिः ॥ ५८ ॥ किमसावुर्वशी रंभा । सुरी किमसुरी परा ॥ किं सावित्री रमा किं वा । गौरी पातालसुंदरी ॥ ५९ ॥ तस्या वर्धापयंत्याश्च । निरीक्ष्य रूपमद्भुतं ॥ ईदृश्योऽपि भवेयुः किं । नार्यः स इत्यचिंतयत् ॥ ६० ॥ भवेद्यदीदृशी नारी । मर्त्यलोके मनोहरा ॥ स एव तर्हि धन्यो यो । भोगान् भुक्तेऽनया समं ॥ ६१ ॥ एतस्या वदनोद्भूतं । सुधाश्रावि वचोऽनिशं ॥ यः समाकर्णयेन्मर्त्य—

यिवान् ॥ ३९ ॥ आगत्य भूरिभक्त्या स । प्राणमन्मधुभूभुजं ॥ उत्तमाः सहजेनैव । भवेयुर्हि प्र-
णामिनः ॥ ४० ॥ तं समालिंगयामास । मधुभूपोऽपि हर्षतः ॥ उभयोर्मिलनेनैव । प्रीतिर्बभूव भू-
यसी ॥ ४१ ॥ विनयान्मधुभूपालं । हेमरथो व्यजिज्ञपत् ॥ क्रमयो रेणुभिः स्वामिं—स्त्वं पवित्रय
मत्पुरं ॥ ४२ ॥ आदरै रंजितो राजा । पुण्यदाक्षिण्यसंगतः ॥ तद्वाक्यमुररीचक्रे । प्रीतिसंसूचनाय
च ॥ ४३ ॥ तोरणैः केतुभिर्धूप—घटीभिः पुष्पदामभिः ॥ वस्त्राभरणै राज्ञा । सर्वं शृंगारितं पुरं
॥ ४४ ॥ वादित्राणाममात्राणां । बंदिनां च शुभस्वनैः ॥ प्रवेशं कारयामास । हेमरथो नृपं पुरे ॥
॥ ४५ ॥ प्रावेश्य स्वगृहे नीत्वा । स्वकीयास्थानमंडपे ॥ सिंहासने च सौवर्णे । स्थापयामास तं
नृपः ॥ ४६ ॥ पुरतस्तस्य भूपस्य । प्रौढप्राभृतहेतवे ॥ हेमरथेन मुक्तानि । वस्तून्यभिनवानि च ॥
॥ ४७ ॥ सद्ममध्ये समागत्य । प्रजजल्प नृपः प्रियां ॥ वल्लभे त्वं स्वयं गत्वा । वर्धापय मधुप्रभुं ॥
॥ ४८ ॥ नाम्नेंदुप्रभया प्रोचे । मुखेंदुप्रभया तदा ॥ स्वामिन् मनोहरं यद्य—द्वस्तु स्यान्निजसद्मनि
॥ ४९ ॥ तत्सर्वमपि भूपाल—दृग्गोचरे न पात्यते ॥ तत्समीक्ष्य यतस्तस्य । लोचने चलतो द्रुतं
॥ ५० ॥ ततस्तव प्रियाः संति । प्राज्या रूपगुणान्विताः ॥ कांचित्प्रेषय तन्मध्या—द्वर्धापयितुमी-

भीम नृपालनागस्य । पुरः केमरिबालकं ॥ यूयं मामपि जानीत । दधानं शैशवं तनौ ॥ २८ ॥ प्र-
तिज्ञाय तथा यूयं । मेलयतातुलं बलं ॥ स्वयमेव यथा गत्वा । बंभज्येऽहं च तं परं ॥ २९ ॥ प्र-
माणमेव नृपस्य । वचनं क्रियतेऽधुना ॥ इति तद्वचसामात्यै—र्मेलितं कटकं महत् ॥ ३० ॥ स-
हस्रशो गजा मत्ता । लक्षशश्च तुरंगमाः ॥ शतशः स्यंदना वीराः । कोटिशश्च पदातयः ॥ ३१ ॥
आकाशे यदि गछेत्स । तदानयामि तं नृपं ॥ निःश्रेणय इति प्राज्याः । सार्थे तेन प्रकारिताः ॥
॥ ३२ ॥ प्रणश्य यदि पाताल—मूले विशति सोऽधमः ॥ कर्षाम्यहं ततोऽपीति । कुद्दाला दधिरे-
ऽधिकाः ॥ ३३ ॥ इत्यनीकस्य सामग्रीं । कारयित्वा मधुप्रभुः ॥ चचाल शुभघस्रेण । जेतुं भीमा-
भिधं नृपं ॥ ३४ ॥ अनल्पैः पादपैर्मार्गा । येऽभूवन् विषमा भृशं ॥ कटकस्य प्रभूतत्वात । समीभू-
ताश्च तस्य ते ॥ ३५ ॥ अग्रगैः सलिलं प्राप्तं । मध्यगैः पंकमिश्रितं ॥ अंतगैः कर्दमस्तृष्णो—च्छे-
दाय सरसीषु च ॥ ३६ ॥ तुरंगमखुरोत्थेषु । रजस्सु प्रसृतेष्वपि ॥ सूर्यतापमपाकर्तु । छायाकृत्यम-
जायत ॥ ३७ ॥ कटकेन प्रभूतेन । चतुरंगेण भूपतिः ॥ त्रासयन् स्पर्धिनो नृपान् । प्राप्तो वटपुरां-
तिकं ॥ ३८ ॥ आगमं मधुभूपस्य । श्रुत्वा हेमरथेश्वरः ॥ निजां ज्ञापयितु सेवां । संमुखः समुपे

रितः पिता सर्व—लोकानां सुखदानतः ॥ १६ ॥ भीमकांतगुणाभ्यां च । राज्यं पालयतोस्तयोः ॥ शत्रवः शिश्रियुर्मैत्रीं । तां मित्राण्यधिकां पुनः ॥ १७ ॥ नृपः पुरुषपूर्णायां । सभायामन्यदा स्थि· तः ॥ नृपतिर्नगरे कोला—हलं शुश्राव पुष्कलं ॥ १८ ॥ तत श्रुत्वा पार्थिवः प्राह । प्रतीहारान धृ· तायुधान् ॥ किमेतदश्रुतं पूर्वं । मदीये श्रूयते पुरे ॥ १९ ॥ विनयेन प्रतीहारा । ख्यान्यधुर्धरणीध· वं ॥ स्वामिन्नस्ति नृपो भीमो । नाम्ना दुर्गबलोत्कटः ॥ २० ॥ स हि प्रचुरया धाट्या । देशान् ग्रा· मान् पुराणि च ॥ सार्थान् धनप्रभूतार्थान् । निःशंको हृदि लुंटति ॥ २१ ॥ स समेतोऽस्त्ययोध्या· याः । समीपे करुणोज्झितः ॥ हरतेऽसौ पुरोपांते । चरतश्चापि चतुष्पदान् ॥ २२ ॥ तेन सर्वोऽप्ययं लोको । नागरीयो भयद्रुतः ॥ बहुकोलाहलारावं । कुरुते हृदि विह्वलः ॥ २३ ॥ इति श्रुत्वा कु· लामात्यान् । जगाद जगतीपतिः ॥ ललाटे भृकुटिं कृत्वा । कथं रे ज्ञापितं न मे ॥ २४ ॥ तदा· वदन्नमात्यस्तं । नाथ त्वमसि बालकः ॥ ततो न प्रोक्तमस्माभिः । पालनीयो हि सांप्रतं ॥ २५ ॥ राजोचे बलिनो नागाः । श्वापदा अपरेऽपि च ॥ तावद्गर्जंति यावन्न । तत्रायाति हरेः शिशु. ॥२६॥ सिंहबाले समेते तु । सर्वेऽपि यांति दूरतः ॥ युष्माभिर्नेति किं लोके । किंवदंती पुरा श्रुता ॥२७॥

मीयतुः ॥ ४ ॥ परिपूर्णेन कालेन । द्वावप्यसूत सा सुतौ ॥ तेजःपुंजेन संयुक्तौ । मार्तंडशशिना-
विव ॥ ५ ॥ पितृभ्यां विहितौ नाम्ना । तौ च द्वौ मधुकैटभौ ॥ वर्धमानावभूतां तौ । बलदेवाच्यु-
ताविव ॥ ६ ॥ यौवने नृपकन्याभ्यां । धन्याभ्यां खलु संमदात् ॥ पितृभ्यां कारितं पाणि—पीड-
नं सुतयोस्तयोः ॥ ७ ॥ अन्येद्युरुद्यदुद्योत—कलावंताविवोध्धुरौ ॥ चातुर्यवर्यौ तौ वीक्ष्य । हृष्टो
वसा व्यचिंतयत ॥ ८ ॥ विनीतास्तनया भार्या । रूपवत्यो गुणान्विताः ॥ बांधवाः स्नेहला भृत्याः
। कार्यनिर्मितितत्पराः ॥ ९ ॥ मनुष्येषूत्तमा जातिः । शुद्धं कुलं कला वराः ॥ प्रोत्तुंगा हस्तिनश्चा-
श्वा । गेहे द्रव्यमनर्गलं ॥ १० ॥ संसारेऽत्र पदार्था ये । भवेयुः सुखकारिणः ॥ ते सर्वेऽपि मया
लब्धाः । पूर्वपुण्यप्रभावतः ॥ ११ ॥ ततोऽहं सुकृतं कुर्यां । तथा पापक्षयंकरं ॥ यथा प्रजागते मो-
क्ष—स्तेन पुण्येन शाश्वतः ॥ १२ ॥ विचार्येति नृपो राज्यं । समर्प्य मधुनंदने ॥ कैटभे यौवरा-
ज्यं च । प्राव्राजीद्गुरुसन्निधौ ॥ १३ ॥ प्राज्या राजात्मजास्तेन । सार्धं प्रव्रजिता मुदा ॥ स्त्रीणामे-
कसहस्रं च । साधयितुं शिवास्पदं ॥ १४ ॥ यो यत्साधयितुं प्रायः । प्रयत्नं कुरुते पुमान् ॥ साधय-
त्येव तत्कार्यं । तेनेति सूक्तिराददे ॥ १५ ॥ पालनेन महाराज—नीत्यास्ताभ्यां निरंतरं ॥ विस्मा-

ध्यानलीनमनस्कानां । सुधियां योगिनामपि ॥ स्वकीयाभिः कलाभिर्ये । मोहयंति मनांसि च ॥ ॥ १ ॥ ताभिस्त्रिदशकांताभिः । कांताभिः सह लीलया ॥ भुंजते विविधान् भोगान् । मग्नाः सुख पयोनिधौ ॥ २ ॥ पुण्यैर्लभ्यं भवति भविका भूरिशोभाविभाकृत । पुण्यैर्लीला सततमतुला मेदिनीपालयोग्या ॥ पुण्यैः कीर्तिः स्फुरति जगति प्राज्यराज्यप्रदात्री । पुण्यैः स्वर्गः सकलसुखदः स्यात्क्रमेणापवर्गः ॥ ३ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंम्नितश्रीरविसागरगणिविरचिते श्रीशांबप्रद्युम्नचरित्रे तृतीयभवमाणिभद्रपूर्णभद्रजिनधर्मश्रवणसौधर्मगमनो नाम सप्तमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथाष्टमः सर्गः प्रारभ्यते ॥

अथायोध्येति विख्याता । नगरी प्रवरर्द्धिका ॥ विद्यते धनधान्याढ्या । वियुक्ता विपदादिभिः ॥ १ ॥ भाति तस्यामयोध्यायां । पद्मनाभ इति प्रभुः ॥ पद्मनाभ इव प्रोद्य—त्पराक्रमेण भूयसा ॥ २ ॥ तस्यासीद्धारिणी राज्ञी । वरेण्या गुणसेवधिः ॥ स्वर्गाच्च्युत्वा सुपर्वाणौ । धारिण्याः कुक्षि-

विबुधैरप्यसंभाव्यं । किमेतत्सहसाभवत् ॥ विलक्षवदना प्रोचु—रिति सर्वेऽपि विस्मयात् ॥ ८९ ॥
परं केनापि न ज्ञातं । तत्स्वरूपं मनागपि ॥ स्वयंवरेऽप्यहो दीक्षा—भावस्तुच्छभवस्थितेः ॥ ९० ॥
साध्वी दीक्षां समादाय । समाराध्य यथाविधि ॥ छित्वा स्त्रीलिंगमुत्पेदे । प्रथमे त्रिदशालये ॥
॥ ९१ ॥ धर्मतो नरकच्छेदो । दुष्टयोनिर्न धर्मतः ॥ स्वर्गमोक्षावपि धर्मा—द्धर्मः कार्यस्ततो बुधैः ॥
॥ ९२ ॥ प्रसंगेन तयोः पित्रोः । स्वरूपं पूर्वजन्मनः ॥ प्ररूपितं समासेन । प्राज्यवैराग्यकारणं ॥
॥ ९३ ॥ अथ तौ श्रेष्टिनः सूनू । प्रणम्य चलितौ मुनिं ॥ गतौ निलयमात्मीयं । जैनधर्मपरायणौ
॥ ९४ ॥ सम्यगाराध्य धर्मं तौ । पूर्णीकृत्यायुरैहिकं ॥ भोक्तुं च परलोकस्य । सौधर्मे दिवि ज-
ग्मतुः ॥ ९५ ॥ धाराधरे नभोभागे । यथेंद्रधनुरुद्भवेत ॥ तथैवोत्पादशय्यायां । प्रादुर्भवति निर्जरः
॥ ९६ ॥ तत्र देवांगनाभिश्च । स्पृहयितुं मनस्तयोः ॥ प्रारेभे प्रवरं नृत्यं । गीतगानपुरस्सरं ॥
॥ ९७ ॥ अंतर्मुहूर्तकालेन । सर्वेऽत्र तरुणोपमाः ॥ सर्वांगभूषणोपेता । भवेयुरजराः सुराः ॥९८॥
केशास्थिमांसकरज—रोमासृक्त्वग्विवर्जिताः ॥ पुरीषमूत्रनिर्मुक्ता । भवंति देवयोनयः ॥ ९९ ॥
मेषोन्मेषोज्झिताः सर्वे । चित्तोक्तकार्यसाधकाः ॥ स्फाराम्लानस्रजो भूमे—रूर्ध्वगाश्चतुरंगुलैः ॥२००॥

इति संचिंत्य नृपेन । स्वयंवरणमंडपं ॥ प्रारभ्याकारिता नृपाः । सुरूपा बलगर्विताः ॥ ७५ ॥ तत्रागतेषु नृपेषु । नंदीश्वरात्सुरो व्रजन् ॥ नंतुमार्हतचैत्यानि । प्रसंगादवतीर्णवान् ॥ ७६ ॥ दृष्ट-स्तेनावतीर्णेन । स्वयंवरणमंडपः ॥ कौतुकान्मर्त्यरूपेण । तत्र वृंदारकः स्थितः ॥ ७७ ॥ अलंका-रेण संयुक्ता । पुरतो वेत्रधारिणी ॥ यावदेति सभां कन्या । बिरुदश्रुतिपूर्वकं ॥ ८० ॥ जाया ज-न्मांतरीयेयं । वर्तते मम निश्चयात् ॥ अवधिज्ञानतस्ताव—त्कन्या तेन विलोकिता ॥ ८१ ॥ भव-त्रयस्वरूपं यद् । भुक्तं विडंबनाकरं ॥ तत्किं विस्मारितं मुग्धे । सेति देवेन भाषिता ॥ ८२ ॥ सं-सारपापवृक्षस्य । दुर्गतेः फलवर्धकं ॥ स्वयंवरे त्वया किं नु । प्रारब्धं पाणिपीडनं ॥ ८३ ॥ अद्या-पि प्रतिबुध्यस्व । मुक्त्वा च करपीडनं ॥ अनंतसुखसंपादि । त्वं कुरु चात्मसाधनं ॥ ८४ ॥ आस-न्नाराधितधर्मा । ये भवंति शरीरिणः ॥ तेषामल्पोपदेशेन । प्रतिबोधः प्रजायते ॥ ८५ ॥ आस-न्नकृतधर्मत्वात । स्नेहाच्च पूर्वजन्मनः ॥ वाक्येन नाकिनस्तस्य । प्रतिबुद्धा कनी च सा ॥ ८६ ॥ उन्मार्गात्प्रतिवाल्येत । यथा निषादिना गजः ॥ तथा तदुपदेशेन । सा कन्या प्रतिवालिता ॥८७॥ वलित्वा कानने गत्वा । स्मृत्वा च संसृतिस्थितिं ॥ वैराग्यात्साग्रहीद्दीक्षां । श्रुतसागरसन्निधौ ॥८८॥

नमाप्यते ॥ ६३ ॥ चिंतयंताविति स्वांते । जैनधर्मप्रभावतः ॥ भावयंतावनित्यत्वं । तावद्भूतां च जन्मनः ॥ ६४ ॥ इतो भवे तृतीये का । बभूव जातिरावयोः ॥ मिथ्यात्वपापयोगेन । कीदृशी विद्यतेऽधुना ॥ ६५ ॥ स्मरंतौ यतिवाक्येन । स्वकीयां जातिमुत्तमां ॥ शुनीचांमालकौ चित्ते । दधतो दुःखमुच्चकैः ॥ ६६ ॥ अथावयोः समुद्धारो । भविष्यति विनिश्चयात् ॥ प्राप्त्या जैनस्य धर्मस्य । तौ संतुतुषतुर्भृशं ॥ ६७ ॥ चत्वारोऽपि यथा सार्धं । समागता निनंसया ॥ तथा प्रतिगताः स्थानं । मुनिं नत्वा प्रमोदतः ॥ ६८ ॥ सम्यक्त्वपूर्वकाणि द्वा—दशव्रतानि दद्भवत् ॥ सम्यगाराधयामास । चांडालोऽपि कुकर्मकृत् ॥ ६९ ॥ आराध्य मासमेकं स । व्रतानि तानि भावतः ॥ मृत्वा नंदीश्वरे देवः । पंचपल्यायुषाभवत् ॥ ७० ॥ पालयित्वा दिनान् सप्त । धर्मं कुगतिदारकं ॥ तत्रैव नगरे राज्ञ—स्तनया समभूच्छुनी ॥ ७१ ॥ वर्धमाना शशांकस्य । कलेव कलयानिशं ॥ यौवनं पावनं साप्ता । कामिमानसविस्मयं ॥ ७२ ॥ तस्या वीक्ष्यान्यदा रूपं । नृपश्चिंतां चकार च ॥ एतस्याः को वरो भावी । कलारूपादिसंयुतः ॥ ७३ ॥ पुत्रीमेनां प्रदास्यामि । तस्मै वराय शर्मणे ॥ भविष्यति रुचौ योऽस्या—श्चातुर्यकमलायुतः ॥ ७४ ॥

॥ ये नराः कुर्वते निंदां । भवेत्तेषामधोगतिः ॥ ५२ ॥ भुक्त्वायुर्नरके तत्र । पंचपल्यप्रमाणकं ॥ अयोध्यायां समुत्पन्नौ । शुनीचांमालकाविमौ ॥ ५३ ॥ शुनी या वर्तते सा तु । जननी युवयोरभू· त ॥ इतो भवे तृतीयस्मिं-श्चांमालो जनकः पुनः ॥ ५४ ॥ पूर्वजन्माभिसंबंधा-देतयोर्युवयोरपि॥ स्नेहः प्रजायते प्रायः । स्नेहो हि पूर्वजन्मजः ॥ ५५ ॥ जैनधर्मं समाराध्य । युवां ततो दिवं गतौ ॥ स्वर्गाच्च्युत्वा च संजातौ । श्रेष्टिपुत्रावुभावपि ॥ ५६ ॥ तीव्रमिथ्यात्वसम्यक्त्व-फलं समुपलभ्य· ते ॥ भवे तत्रैव वान्यत्र। दुःखसौख्यनिबंधनं ॥५७॥ पूर्वजन्मस्वरूपं च । निजपित्रोर्निशम्य च ॥ जातौ संवेगसंपूर्णा-वुभावपि सहोदरौ ॥ ५८ ॥ भवयुरुत्तमाः पुत्रा । ये धर्ममतिधारिणः ॥ स्व· कीयौ पितरौ धर्मे । ते स्थापयंति भक्तये ॥ ५९ ॥

विचार्येति कृतार्थत्वं । संपादयितुमात्मनोः ॥ दापयामासतुर्धर्मं । तौ पित्रोः साधुसन्निधौ ॥ ॥ ६० ॥ पूर्वजन्मतनूजाभ्यां । वाचंयमसमीपतः ॥ आर्हतो दापितो धर्म-श्चांडालेन धृतो मुदा ॥ ॥ ६१ ॥ श्वपचेन यथाधारि । जैनधर्मः सुखावहः ॥ जगृहे सारमेय्यापि । धर्मस्तेन समं तथा ॥ ॥ ६२ ॥ कथं गतिः कथं जातिः । कथं योनिः कथं जनिः ॥ भ्रमद्भिः संसृतौ जीवै-र्विस्मयस्था·

निनारेन्ने । मुनिर्हि धर्मदेशकः ॥ ४० ॥ धर्मोपदेशमाकर्ण्य । संसारभ्रमनाशिनं ॥ उन्नान्यामपि
विप्राभ्या—मपृच्छ्यत तपोधनः ॥ ४१ ॥ प्रभो ह्यत्रोपविष्टौ स्तः । शुनीचांडालकाविमौ ॥ अनयो
आवयोर्मोहे । को हेतुकः प्रवर्तते ॥ ४२ ॥ कालत्रयस्वरूपस्य । वेत्ता ज्ञेत्ता भवं मुनिः ॥ जवांत
रमत्राषिष्ट । विप्रयोरुन्नयोरपि ॥ ४३ ॥ शालिग्रामे पुरान्नूता—मेतौ ब्राह्मणवंशजौ ॥ आख्यया
सोमदेवोऽनू—दग्निला च तदंगना ॥ ४४ ॥ उभयोरपि दंपत्यो—रिभ्ययोः स्नेहपूर्णयोः ॥ षट्क
र्मासक्तयोः पुत्रौ । तयोरभवतं युवां ॥ ४५ ॥ युवयोः प्रथमस्याख्या—ग्निभूतिरभवत्परा ॥ वायुभू
तिर्द्वितीयस्य । पितृभ्यां प्रविनिर्मिता ॥ ४६ ॥ पितरौ तु प्रभूतेन । मिथ्यात्वेन विमोहितौ ॥ भृशं
बभूवतुर्नित्यं । जैनधर्मपराङ्मुखौ ॥ ४७ ॥ वेदाभ्यासकरौ नित्यं । शौचधर्मं च बिभ्रतौ ॥ तर्पण
श्राद्धहोमादि—निजकर्तव्यतत्परौ ॥ ४८ ॥ युवयोः कष्टसंयोगा—दाद्यजैनधर्मकौ ॥ भुक्तवांतप
रमान्ना—विव वांतार्हतोदितौ ॥ ४९ ॥ त्रिभिर्विशेषकं ॥ आर्हतश्रेयसो वांत्या । तस्यैव च जुगु
प्सया ॥ युवयोः पितरौ मृत्वा । प्रथमे नरके गतौ ॥ ५० ॥ ये निंदामपरस्यापि । जुगुप्सां वा प्रकु
र्वते ॥ ते यांति नरकं घोर—मसंख्यदुःखदायकं ॥ ५१ ॥ विशेषाज्जिनधर्मस्य । जैनवाक्यरतस्य च

नं । तपंतौ निजशक्तितः ॥ २९ ॥ जिनप्रणीतशास्त्राणि । शृण्वानौ गुरुसन्निधौ ॥ परोपकारचेत स्त्वं । धरंतौ धर्मबंधुरं ॥ ३० ॥ सर्वकालोचितान् भोगान् । भुंजानौ च यदृच्छया ॥ गमयामासतुः कालं । तौ द्वौ सुखेन देववत ॥ ३१ ॥ चतुर्भिः कलापकं ॥

अथान्यदा मुनिः कश्चिद् । ज्ञानी ध्यान्यागमद्वने ॥ तत्समागमनं श्रुत्वा । निनंसू तौ बभूवतुः ॥ ३२ ॥ वंदितुं तं मुनिं याव—त्तावगातां प्रमोदतः ॥ चांमालो मिलितस्ताव—त्तयोः शुनीयुतोऽध्वनि ॥ ३३ ॥ शुनीयुक्तेऽपि चांमाले । नेत्रे तयोरतुष्यतां ॥ नृनेत्रे एव पूर्वं हि । रागद्वेषकसूचके ॥ ३४ ॥ द्वयोरालोकनादेव । भ्रात्रोर्विहिततोषयोः ॥ भृशं तुतुषतुर्नेत्रे । शुनीचांमालयोरपि ॥ ३५ ॥ आलिंग्यते मिथो शीघ्र—मिति मोहसमुद्भवः ॥ चतुर्णामपि चित्तेऽन्न—त्संबंधात्पूर्वजन्मनः ॥ ३६ ॥ गच्छतोर्द्विजयोर्मार्गे । चांमालोऽपि शुनीयुतः ॥ मोहोद्रेकेण तत्सार्ध—मन्नवंतुमुत्सुकः ॥ ३७ ॥ विप्राभ्यामपि मोहेन । निषेध्धुं न च शक्यते ॥ चत्वारोऽपि ततः सार्धं । यतिनं वंदितुं गताः ॥ ३८ ॥ श्रावकाभ्यां द्विजन्मभ्यां । वंदितो मुनिरादरात् ॥ तथा शुनीश्वपाकाभ्या—मपि तत्सार्धयोगतः ॥ ३९ ॥ नत्वा पुरो निषसानां । चतुर्णामपि सौख्यतः ॥ देशना मु-

मिथ्यात्वं प्रथमं त्याज्यं । धार्यं सम्यक्त्वमुत्तमं ॥ तद्दूषणानि हेयान्या—देयानि भूषणानि च ॥
॥ १८ ॥ यथाशक्ति व्रतान्यंगी—कर्तव्यानि विवेकतः ॥ पालनीयान्यतीचार—वर्जितानि निरंतरं
॥ १९ ॥ सप्तक्षेत्र्यां तथा दीन—मनुजानां समुध्धृतौ ॥ न्यायोपार्जितवित्तानां । देयं दानं यथो-
चितं ॥ २० ॥ शिष्टाचारैः समं धर्म—कर्मविचारमाचरेत् ॥ कुलशीलसमाचारै—रुद्वहेतान्यगोत्रजैः
॥ २१ ॥ अक्षुद्रः प्रकृतौ सौम्यो । मध्यस्थः सौम्यलोचनः ॥ सत्कथो गुणरागी च । सदाक्षिण्यो
विशेषवित ॥ २२ ॥ सुपक्षो दीर्घदर्शी चा—क्रूरो लोकप्रियोऽशठः ॥ लज्जालुः सदयो भीरु—र्वृ-
द्धानुगो विनीतकः ॥ २३ ॥ लब्धलक्षः कृतज्ञश्च । परेहितार्थकारकः ॥ सौंदर्येण स्वरूपस्य । लो-
कांबकप्रमोदकः ॥ २४ ॥ गुणैरित्येकविंशत्या । संयुतो यः पुमान् भवेत ॥ स द्वादशव्रतार्हः स्याद्
। गृहवासेऽपि सद्गतिः ॥ २५ ॥ श्रुत्वेति तौ मुनींद्रस्य । वचनं पापमोचनं ॥ सम्यक्त्वप्रथमानि द्वा
—दश व्रतानि बिभ्रतुः ॥ २६ ॥ तौ व्रतान्युररीकृत्य । नत्वा च मुनिपक्रमौ ॥ मन्यमानौ कृतार्थ-
त्व—मगच्छतां स्वमंदिरं ॥ २७ ॥ देवार्चनं प्रकुर्वाणौ । त्रिकालं भावपूर्वकं ॥ दयां प्राणिगणे दा-
नं । ददानावर्थिपूरुषे ॥ २८ ॥ जनयंतौ महातीर्थ—यात्रां द्रव्यव्ययेन च ॥ ध्यायंतौ जिनपध्या-

त्ति । बहुकालं च दुःखदं ॥ स्वरूपं संसृतेर्दृष्ट्वा । ह्युद्विग्नोऽस्मि जवाद्विजो ॥ ६ ॥ लोकस्य व्यवहा-
राय । न्यस्य राज्यं सुते निजे ॥ भविष्यति हि मे दीक्षा । भगवन्न युष्मदंतिके ॥ ७ ॥ आकर्ण्य
नृपतेर्वाक्यं । जगाद मुनिपुंगवः ॥ माकार्षीः प्रतिबंधं त्वं । प्रवर्तस्व यथासुखं ॥ ८ ॥ एकघस्रेऽपि
यो दीक्षां । पालयेत्स हि मोक्षगः ॥ वैमानिकोऽथावश्यं । भवत्यत्र न संशयः ॥ ९ ॥ मुमुक्षुरपि
संसारा—द्ध्यानध्यातपदार्थकः ॥ जैनीं दीक्षां विना मोक्षं । न कोऽपि लभते नरः ॥ १० ॥

निशम्येति मुनेर्वाचं । प्रणम्य तत्क्रमद्वयं ॥ राजा जगाम धाम स्वं । संवेगरसपूरितः ॥११॥
गत्वा गेहे महाहर्षा—द्दत्वा राज्यं च सूनवे ॥ चारित्रं समुपादत्त । पार्थिवः स्वजनैः सह ॥ १२ ॥
नृपदीक्षास्वरूपं च । वीक्ष्याकर्ण्य गुरोर्वचः ॥ पूर्णो वैराग्यरंगेण । श्रेष्ठी बभूव कोविदः ॥ १३ ॥
न्यस्य भारं कुटुंबस्य । द्वयोरपि तनूजयोः ॥ कल्याणसुखसंप्राप्त्यै । श्रेष्ठ्यपि प्राव्रजन्न मुदा ॥१४॥
इतश्च श्रेष्ठिनः पुत्रौ । नत्वा मुनीश्वरक्रमौ ॥ गृहस्थमार्गमप्राप्तुं । दीक्षामादातुमक्षमौ ॥ १५ ॥
चारित्रग्रहणे शक्ति—र्नास्ति सांप्रतमावयोः ॥ कृपालो त्वं कृपां कृत्वा । गृहिधर्मं प्रदर्शय ॥ १६ ॥
मुनींद्रोऽपि तयोर्वाक्य—माकर्ण्य श्रुतिगोचरे ॥ धर्मं प्रकाशयामास । गृहिणामपि सौख्यदं ॥१७॥

मुक्तिस्तपश्च संयमः ॥ शौचाकिंचनते सत्यं । ब्रह्मचर्यमितिस्म तत् ॥ ९३ ॥ असौ संयमिनां धर्मः । कथितो जिननायकैः ॥ सम्यक्त्वमूलः श्राद्धानां । स चोक्तो द्वादशव्रतः ॥ ९४ ॥ यः पुण्यवान् भवेज्जीवो । मोक्षं जिगमिषुर्द्रुतं ॥ स स्वीकुरुते साधु—धर्मं कर्मविमर्दनं ॥ ९५ ॥ भवांतरेण यो जीवो । यियासुरपुनर्भवं ॥ धरेत्सम्यक्त्वमूलानि । स द्वादशव्रतानि च ॥ ९६ ॥ धर्मेणैतेन जंतूना—मश्रनामपि कर्मणां ॥ युक्तानामपि दार्ढ्येन । जायते हि क्षयो द्रुतं ॥ ९७ ॥ ज्ञानदर्शनावरण—प्रभृतिकर्मलेपिनां ॥ पापिनामपि मर्त्यानां । जायतेऽतो महोदयः ॥ ९८ ॥ कर्मवृद्धिक्षयावेवं । मुनीश्वरनिरूपितौ ॥ समाकर्ण्य महीपालो । जगाद रचितांजलिः ॥ ९९ ॥ समाकर्णय हे नाथ । जंतुजातकृपापर ॥ मयापृच्छ्यंत यत्पूर्वं । तत्सर्वं कथितं त्वया ॥ १०० ॥ संसारे स्वार्थजा प्रीति—रप्रीतिः सहजेन च ॥ औपाधिकं सुखं दुःखं । प्रजायतेऽनभीप्सितं ॥ १ ॥ पंचवर्णात्मकं देव—नायकस्य धनुर्यथा ॥ तथा स्वजनवर्गस्य । संगरंगा अनेकधा ॥ २ ॥ प्रद्योतते यथा विद्यु—दल्पकालं निशास्वपि ॥ संपत्तिरपि निःशेषा । तथा ज्ञेया विचक्षणैः ॥ ४ ॥ पंचेंद्रियभवा भोगाः । सदा रोगादिकारकाः ॥ संध्यारागोपमं प्रेम । शरीरं क्षणभंगुरं ॥ ५ ॥ अल्पकाले सुखावा-

चेंद्रियमनोऽव्यापो । द्वादशाविरतिप्रथा ॥ ८३ ॥ संज्वलनप्रत्याख्याना—प्रत्याख्यानान्यनंतकाः ॥
एते भेदाश्च क्रुन्मान—मायालोभसमुद्भवाः ॥ ८४ ॥ सम्यक्त्वमिश्रमिथ्यात्व—मोहनीयं स्मितं र
तिः ॥ अरतिश्च भयं शोको । जुगुप्सा नोकषायकाः ॥ ८५ ॥ भवेत्सत्यमनोयोगो—ऽसत्यहृद्यो-
गकस्तथा ॥ सत्यामृषामनोयोगो—ऽसत्यामृषामनः पुनः ॥ ८६ ॥ जायते सत्यवाग्योगो—ऽसत्य-
वचनयोगकः ॥ सत्यामृषावचोयोगो—ऽसत्यामृषावचोविधिः ॥ ८७ ॥ भवेदौदारिको योग—स्त-
थौदारिकमिश्रकः ॥ वैक्रियमिश्र आहार—कश्चामैश्रिकयोगकः ॥ ८८ ॥ तैजसकार्मणाभ्यां च ।
योगाः पंचदशेत्यमी ॥ प्रणीता जिननाथेन । श्रद्धातव्या विवेकिभिः ॥ ८९ ॥ एतैर्भेदैर्भवेयुश्च ।
कषायाः पंचविंशतिः ॥ हेतवः सप्तपंचाश—द्भेदाः क्रमाद्भवंति ते ॥ ९० ॥ रुद्रेणाध्यवसायेन ।
समयंसमयंप्रति ॥ शुभेतराणि कर्माणि । जीवश्च परिवर्धयेत् ॥ ९१ ॥ लौकिकलोकोत्तराभ्यां ।
मिथ्यात्वाभ्यां महीयसीं ॥ स्थितिं कर्म समाप्नोति । प्रभूतकालदुःखदां ॥ ९२ ॥ क्षायोपशमिकं ना-
म । सास्वादनं च वेदकं ॥ क्षायिकमौपशमिकं । सम्यक्त्वं पंचधोदितं ॥ ९३ ॥ एतत्सम्यक्त्वपूर्वेण
। यतिश्रावकधर्मयोः ॥ सम्यगाराधनाज्जंतोः । कर्म प्रक्षीयतेऽखिलं ॥ ९४ ॥ मार्दवमार्जवं क्षांति—

कर्म । कर्म प्रक्षीयते कथं ॥ ७१ ॥ मुनिराजस्तदाजल्प—दाकर्णय महीपते ॥ कर्मणां प्रकृतिः प्रा-
ज्या । वर्तते जिनशासने ॥ ७२ ॥ सप्तपंचाशता कर्म । प्रादुर्भवति हेतुभिः ॥ परिणामेन तीव्रेण
। तत्करणेन च वर्धते ॥ ७३ ॥ मिथ्यात्वेन च तत्कर्म । तिष्ठत्यनेहसं बहुं ॥ क्षीयते शुद्धसम्यक्त्व
—पालनेन निरंतरं ॥ ७४ ॥ मिथ्यात्वपंचकं च द्वा—दशाविरतयः पुनः ॥ पंचविंशतिः कषाया
। योगाः पंचदशात्मकाः ॥ ७५ ॥ आभिग्रहिकमिथ्यात्व—मनाभिग्रहिकं तथा ॥ आभिनिवेशिकं
भूयः—सांशयिकमपि स्फुटं ॥ ७६ ॥ अनाभोगिकनाम स्या—न्मिथ्यात्वं पंचधेरितं ॥ तीर्थंकरैर्ग-
णधरैः । केवलज्ञानभानुभिः ॥७७॥ यो जिनोक्तपृथक्त्वेन । सर्वप्रकारको ग्रहः ॥ दर्शनस्य निज-
स्यैव । तदाभिग्रहिकं भवेत् ॥ ७८ ॥ अवक्रेण स्वभावेन । स्वकीयदर्शनेऽपि च ॥ स्वान्यदेवगुरु
रागो—ऽनाभिग्रहिकमीरितं ॥ ७९ ॥ जानन्नपि जिनोक्तानि । तत्वानि स्वमनीषया ॥ यो नापि
घटयेदर्थां—स्तत्स्यादाभिनिवेशिकं ॥ ८० ॥ सूक्ष्मबादरजीवानां । कथितानां जिनाधिपैः ॥ श्रद्धत्ते
हृदि संदेहां—स्तत्सांशयिकमुच्यते ॥ ८१ ॥ स्यादेकेंद्रियवच्छून्य—मनाः पंचेंद्रियोऽपि च ॥ येन
विचारनिर्मुक्त—स्तदानाभोगिकं भवेत् ॥ ८२ ॥ षण्णां जीवनिकायानां । घातनं द्वेषभावतः ॥ पं-

हर्षप्रकर्षतः ॥ ५९ ॥ आगत्य पार्थिवागार—द्वारं दौवारिकस्य च ॥ दत्वा पुष्पादिकं किंचि—न्म·
ध्यं तेन समागतं ॥ ६० ॥ पुरतः प्राभृतं मुक्त्वा । कृत्वा प्रणाममादरात् ॥ वनपालः क्ष्मापाल—
मवीवदत्सभास्थितं ॥ ६१ ॥ प्रभो पत्रप्रसूनोद्य—त्फलैर्भ्राजति कानने ॥ मुनीश्वरः समेतोऽस्ति ।
यतिसंततिसंयुतः ॥ ६२ ॥ समाकर्ण्य महीशोऽपि । साधोस्तत्र समागमं ॥ तस्य दत्वा बहु द्रव्य—
मन्हृद्वंदितुमुत्सुकः ॥ ६३ ॥ भेरीभांकारयोगेन । मेलयित्वा पुरीजनान् ॥ चचाल विपुलापालो । भ·
क्तितो वंदितुं गुरुं ॥ ६४ ॥ मार्गे प्रमोदयन् लोकान् । महत्तमसमृद्धिभिः ॥ आययौ यावदुद्यान—
संनिधाने भुवो विभुः ॥ ६५ ॥ तवद्नृपतिचिह्नानि । परित्यज्य स्वभक्तये ॥ विवेश वनमध्येऽसौ ।
विनयी हि नयी नृपः ॥ ६६ ॥ समागत्य च सूरींद्रो—पांते दत्वा प्रदक्षिणां ॥ विधातुं मानवं ज·
न्म । सफलं प्रणनाम सः ॥ ६७ ॥ श्रोतुकामो मुनिस्वामि—वचनं दुःखमोचनं ॥ सभायां संघपू·
र्णायां । यथास्थानमुपाविशत ॥ ६८ ॥ रम्या मुनीश्वरेणापि । प्रारेभे पुण्यदेशना ॥ संसारसुखस·
क्ताना—मपि मोक्षप्रदेशना ॥ ६९ ॥ निशम्य देशनां सूरि—पवित्रवक्त्रसंभवां ॥ आनंदितो नृ·
पोऽप्राक्षीत । कर्मबंधननिर्णयं ॥ ७० ॥ कथमुत्पद्यते कर्म । कथं कर्म समेधते ॥ तिष्ठति वा कथं

तरौ परमोत्सवैः ॥ तावध्येतुमुपाध्याय—पार्श्वे तावव्यमुंचतां ॥ ४८ ॥ सर्वा अपि कलास्तस्य । स-
मीपे तौ मनीषिणौ ॥ विनयेनाध्यगीषातां । विनयो हि सुखप्रदः ॥ ४९ ॥ यौवने पावने भाति ।
क्रमात्समागते तयोः ॥ कचाः शुशुभिरे राका—कलाधरकला इव ॥ ५० ॥ कृतार्थस्त्वं जनयितुं ।
पितरौ प्रेमतस्तयोः ॥ उदवाहयतां कन्ये । रूपलावण्यसुंदरे ॥ ५१ ॥ चतुर्वर्गाभिलाषेण । साध-
यंतस्त्रिवर्गकं ॥ अभुंजेतां समं ताभ्यां । भोगांस्तौ द्वावपि प्रियान् ॥ ५२ ॥

मुनीशोऽथ पुरोद्याने । बहुभिः साधुभिः सह ॥ महेंद्रसूरिरुत्कृष्ट—क्रियावान् समवासरत ॥
॥ ५३ ॥ वसंततौ समायाते । दलैश्च कुसुमैः फलैः ॥ प्रेक्षणीया यथा शोभा । काननस्य प्रजाय-
ते ॥५४॥ अचिंत्यशक्तिसंयुक्ता—न्मुनीश्वरप्रभावतः ॥ वने तत्र तथा साभू—चमत्कारविधायिनी
॥ ५५ ॥ काननस्य स्वकीयस्य । शोभां समीक्ष्य तादृशीं ॥ अदृष्टचरमेतत्किं । वनेश इति वि-
स्मितः ॥ ५६ ॥ कश्चिद्दिव्यानुभावोऽय—मिति जानन्नितस्ततः ॥ यावत्समीक्षते ताव—दपश्यत्स
मुनिप्रभुं ॥ ५७ ॥ ददानं देशनां क्लेश—नाशिनीं संघसंसदि ॥ तं दृष्ट्वा वनपालोऽपि । प्रणाम-
मकरोन्मुदा ॥ ५८ ॥ प्रणम्य मुनिनाथं तं । वक्तुं वसुमतीपतेः ॥ कुसुमादि स आदाय । ययौ

मेन । समस्तप्रीतिकारिणी ॥ ३६ ॥ पतिव्रतैकधर्मे सा । समासक्ता त्वहर्निशं ॥ जानाति निजना-
थाज्ञा—पालनं सुकृतं वरं ॥ ३७ ॥ गेहागतस्य मर्त्यस्य । दानौचित्यविनिर्मितेः ॥ पत्युः प्रावर्धय-
च्छोभा—मात्मनोऽपि च सा सदा ॥ ३८ ॥ भुंजानयोर्मिथो भोगान् । दंपत्योर्धनयुक्तयोः ॥ पुत्र-
स्नेहाभवद्वह्वी । तयोर्धर्मैकचित्तयोः ॥ ३९ ॥ भवेयुः सफलाः पुण्य—संयुक्तस्य मनोरथाः ॥ इति
तौ स्वर्गतश्च्युत्वा । हारिण्याः कुक्षिमागतौ ॥ ४० ॥ दिवसेषु प्रपूर्णेषु । तज्जन्मन्यभूतां शुभे ॥ पि
तृभ्यां हर्षतश्चक्रे । प्रभूतो जननोत्सवः ॥ ४१ ॥ प्राज्यद्रविणवस्त्राणां । गणः संख्यातिगो मुदा ॥
पुत्रवर्धापनिकायां । पितृभ्यां प्रददेऽर्थिनां ॥ ४२ ॥ महतामपि भूपानां । संनिधानेष्वयाचिनः ॥
तेन दानेन संतुष्टाः । संजाताः सकलार्थिनः ॥ ४३ ॥ तयोर्जन्म समाकर्ण्य । कुटुंबिभिरपि द्रुतं ॥
याचकेभ्यो ददे दानं । पुण्याढ्या ह्यखिलप्रियाः ॥ ४४ ॥ द्वादशे दिवसे सर्वा—नाकार्य स्वजना
न्निजान् ॥ भोजयित्वा पितृभ्यां च । कृता नामव्यवस्थितिः ॥ ४५ ॥ प्रथमो मणिभद्राह्वः । पूर्ण-
भद्रो द्वितीयकः ॥ पितृभ्यामिति तन्नाम्नी । जनिते सर्वसाक्षिकं ॥ ४६ ॥ कल्पवृक्षाविव द्वौ तौ ।
वर्धमानौ महासुखैः ॥ अष्टहायनसंपूर्णौ । बालौ यावद्बभूवतुः ॥ ४७ ॥ मूर्खत्वं च निराकर्तुं । पि-

पस्य । खड्गे जयोऽपि संश्रितः ॥ २३ ॥ अर्थिलोकेषु कार्पण्यो—द्भूतापवादभीरुणा ॥ श्रितौ दा
नगुणेनापि । हस्तौ यस्य महीपतेः ॥ २४ ॥ श्रुत्वा यस्यापि सौंदर्यं । कंदर्पो दर्पभागपि ॥ तन्मा
त्सपरिणामेन । जराभीरुरजायत ॥ २५ ॥ तस्य प्रियंवदा राज्ञी । नाम्ना लोके प्रियंवदा ॥ वर्णिके
वातिरूपस्य । या विधात्रा विनिर्मिता ॥ २६ ॥ स्वकीयरमणे रक्ता । विरक्ता परपूरुषे ॥ सतीगुण-
समायुक्ता । वियुक्ता क्रूरकर्मभिः ॥ २७ ॥ तया वल्लभया साकं । भुंजानो भोगमद्भुतं ॥ शच्या
सह सुरस्वामि—वत्कालं गमयत्ययं ॥ २८ ॥ तेन राज्ञा विराजंत्यां । पुर्यां श्रीभरसंयुतः ॥ इभ्यः
समुद्रदत्ताख्यः । श्रेष्ठी वसति विश्रुतः ॥ २९ ॥ सदा सोऽयं सदाचारी । विचारी धर्मपद्धतेः ॥ पा-
पकर्मण्यसंचारी । वाचां रीतिधरस्तथा ॥ ३० ॥ जैनधर्मरतो नित्यं । श्राद्धषट्कर्मपालकः ॥ हस्तीव
दानशौंडश्च । दीनोद्धरणकर्मठः ॥ ३२ ॥ जीवाजीवादितत्वानि । प्ररूपितानि पारगैः ॥ जानंस्तद-
नुसारेण । संसारे स प्रवर्तते ॥ ३३ ॥ देशव्रतानि बिभ्रत्स । शुद्धसम्यक्त्वपूर्वकं ॥ श्रावकेषु दक्ष-
रेखां । धर्ममाराधयत्ययं ॥ ३४ ॥ तस्य भार्या गुणैर्वर्या । धैर्यबुद्धिसमन्विता ॥ अहर्निशं तथा भ-
र्तुः । परिचर्यापटीयसी ॥ ३५ ॥ हारिणी नामधेयेन । रूपेण चित्तहारिणी ॥ विकारिणी न का-

स्वयंभूवचनासक्ताः । श्रावका यन्निवासिनः ॥ ब्राम्हा इव षट्कर्म—निरता विरताशयाः ॥ १२ ॥
देवांगना इव प्रोद्य—द्रूपेण यत्र योषितः ॥ अद्भुतं गुरुवाक्येन । शीलं प्रपालयंति ताः ॥१३॥
अन्यत्र स्थानके येऽभूः । क्रूरकर्मकरा नराः ॥ तत्र ते भूप्रभावेण । पुण्यप्राप्तिपरायणाः ॥ १४ ॥
जिनानां सार्वभौमानां । बलार्धचक्रवर्तिनां ॥ महतामपि मर्त्याना—मुत्पत्तिस्थानमस्ति या ॥ १५ ॥
तत्रारिजयकारित्वा—दन्यर्थामभिधां दधत् ॥ भूपालोऽरिजयो भाति । प्रजाहितप्रदायकः ॥ १६ ॥
सूर्योदये न पश्यंति । कौशिकास्तद्विरोधिनः ॥ यामिन्यां चापि कृत्यानि । ते स्वकीयानि कुर्वते ॥
॥ १७ ॥ तथारिजयभूपस्य । प्रतापेनापि चाद्भुतं ॥ वैरिघूका न पश्यंति । रात्रावपि च वासरे ॥
॥ १८ ॥ युग्मं ॥ वर्ण्यते तस्य माहात्म्यं । किं विशारदसंचयैः ॥ प्रोत्तुंगा अपि मातंगा । यत्संगा-
ऽङ्गसंगिनः ॥ १९ ॥ हया दयावतो यस्य । विजयाश्रितवर्ष्मणः ॥ पवनं निजवेगेन । विजयंते
सहस्रशः ॥ २० ॥ एकाकिनोऽपि शत्रूणां । बहूनां जयकारिणः ॥ सेवकाः कोटिशो यस्य । स्व-
स्वामिवाक्यकारकाः ॥ २१ ॥ अन्यनारीषु नो बद्धं । कदापि तस्य मानसं ॥ वाचयापि दृढीभूतं ।
तदा तद्भंगभीतितः ॥ २२ ॥ शीलं वाचापि यस्य स्या—त्तं भजंति सुरा अपि ॥ इतीव यस्य भू-

॥ अथ सप्तमः सर्गः प्रारभ्यते ॥

श्रीक्षेत्रे भरतक्षेत्रे । पवित्रे धर्मकर्मभिः ॥ देशोऽस्ति क्लेशनाशाति—कौशलः कोशलाह्वयः
॥ १ ॥ रंगल्लवंगपुंनाग—नागवल्लीप्रियंगुभिः ॥ अशोकैश्चंपकैश्चापि । वनानि यत्र रेजिरे ॥ २ ॥
यत्र वापी प्रफुल्लाब्ज—लोचना लोकवल्लभा ॥ वल्लभेव सुखं दत्ते । जनानां च विलोकिता ॥ ३ ॥
आधिव्याधिविनाशाय । पीयूषसदृशानि च ॥ सलिलानि यदीयासु । सरसीषु विरेजिरे ॥ ४ ॥
स्रोतस्विन्यो नितंबिन्य । इवांबुनिधिभर्तरि ॥ मिलंति परमाश्चर्यं । ताभिः स हि न माद्यते ॥५॥
असंप्राप्ततलाः कूपा । उपायैरतुलैरपि ॥ पानीयपूरिता यत्र । सज्जना इव रेजिरे ॥ ६ ॥ ईक्षूणां
यत्र निष्पत्ति—भूयस्त्वेन जनाः सदा ॥ प्रभूतसितया दुग्ध—पानं कुर्वंत्यहर्मुखे ॥ ७ ॥ वार्तायां
क्रियमाणायां । विनोदेन परस्परं ॥ दुष्कालस्य च वार्तापि । यत्र न क्रियते नरैः ॥ ८ ॥ तत्राऽ
योध्या बलीयोभि—रयोध्या नामतः पुरी ॥ निर्ग्रंथवचनैर्बोध्या । विराध्या न कदा पुनः ॥ ९ ॥
बिभ्यतः पापकर्मभ्यो । भोगकर्मबुभुक्षया ॥ विरक्ताः परदारेषु । रक्ता जनाः स्वयोषिति ॥ १० ॥
सप्तव्यसननिर्मुक्ता । दानव्यसनधारिणः ॥ आसक्ता धर्मकार्येष्व—नासक्ताः पातके जनाः ॥ ११ ॥

। चमत्कारमवापतुः ॥ १६ ॥ स्वामिनौ केन पुण्येन । सौधर्मेऽत्र समागतौ ॥ अप्राक्षुर्मुदिता देव्यो
। दर्शयंत्यः स्वविभ्रमान् ॥ १७ ॥ तावूचतुर्द्विजन्माना—वावामत्रवतां पुरा ॥ धर्म आराधितो जैन
—स्तेन समागताविह ॥ १८ ॥ ताभिः प्रारब्धसंगीत—नृत्याद्यासक्तमानसौ ॥ पंच पल्योपमानि
चा—त्रूतां तौ जीवितान्वितौ ॥ १९ ॥ स्वर्गापवर्गजननं महिमानमुच्चै—रालोक्य येन सुकृतस्य
कृतस्य सम्यक् ॥ सम्यक्त्वमुज्ज्वलमलंकृतितुल्यमंगे । तत्रापि केवलमपालयतां मुदा तौ ॥ २० ॥
धर्मादेव समीहितार्थमिलनं कष्टेऽपि पुंसो भवे—द्धर्मादेव कलाकलापकलनं चाबाल्यतः सर्वदा ॥
धर्मादेव समृद्धिवृद्धिभवनं प्रत्यूहसंदोहभि—द्धर्मादेव जगतत्रयप्रसृमरं शुभ्रं यशो लभ्यते ॥ २१ ॥
इति पंडितचक्रचक्रवर्तिश्रीराजसागरगणिशिष्यश्रीरविसागरगणिविरचिते श्रीशांबप्रद्युम्नचरित्रे प्रद्यु·
म्नजन्मजातमात्रापहरणतच्छुद्धिकरणार्थनारदमहाविदेहगमनपूर्वभवश्रवणाग्निभूतिवायुभूतिस्वर्गगमनो
नाम षष्ठः सर्गः समाप्तः ॥ श्रीरस्तु ॥

———

तथातथार्हते धर्मे—कर्मणि
मयामासतुर्दिनान् ॥ ४ ॥ यथायथा वयोवृद्धि—स्तयोर्द्वयोरजायत ॥ तथातथार्हते धर्म—कर्मणि
बुद्धिरैधत ॥ ५ ॥ यथायथा वयः क्षीणं । तत्पित्रोः समनूत्तमां ॥ तथातथाभवत्क्षीणा । धीस्तयो-
र्जिनधर्मणि ॥ ६ ॥ क्षीयमाणपरिणामौ । तत्पितरौ निरंतरं ॥ पुनर्मिथ्यात्वमापन्नौ । तिष्ठेन्निःस्वे
हि नो मणिः ॥ ७ ॥ कियत्यपि गते घस्रे । मिथ्यात्वशल्ययोगतः ॥ कथयामासतुः सूनू । पित-
रावस्थिराशयौ ॥ ८ ॥ रे नंदनौ तदास्माभिः । कारणे धर्म आर्हतः ॥ स्वीकृतोऽभूदथ त्याज्यः । स
हि वेदपराङ्मुखः ॥ ९ ॥ वेदोक्तविधिना धर्मः । कर्तव्यो ब्राह्मणैः सदा ॥ वेदमार्गविलोपे हि ।
विप्राणां स्यादधोगतिः ॥ १० ॥ श्रवणानुचितं वाक्यं । समाकर्ण्य तयोरुभौ ॥ चित्तेऽचिंतयतां जै
न—धर्मदार्ढ्यसमन्वितौ ॥ ११ ॥ विरुद्धवचसोर्दक्षः । किं प्रत्युत्तरमेतयोः ॥ विनीतत्वाद्विचार्येति ।
ताभ्यां किमपि नोच्यत ॥ १२ ॥ कर्मकर्माणि कुर्वंता—वथ तावपि बांधवौ ॥ देशव्रतानि भावेन
। पालयित्वा दिवं गतौ ॥ १३ ॥ तत्रोत्पातमहाशय्यां । समुत्पन्नौ सभूषणौ ॥ पूरचित्वा च पर्यासी
—स्तदा यावत्स्थिताविमौ ॥ १४ ॥ तावच्चतुःषु पार्श्वेषु । वीजयंत्यश्च चामरान् ॥ प्रोचुर्जयजयारावं
। सुरूपा देवयोषितः ॥ १५ ॥ विभूतिं देवलोकस्य । दृष्ट्वा सौधर्मणस्तदा ॥ तौ द्वावपि हृदोर्मध्ये

माया । लोभः क्रोधविवर्जितः ॥ विपक्षा इव चत्वार । एते वर्ज्या विदूरतः ॥ ९३ ॥ षट्सु जीव· निकायेषु । रक्षा कार्यात्मजीववत् ॥ परोपकारिता चिंत्या । विद्वेषिषु जनेष्वपि ॥ ९४ ॥

इति श्रीजिनराजोक्तो । धर्मः कर्मविमर्दकः ॥ संसारैकसमुद्धार—कारणं वर्तते भुवि ॥९५॥ यथैधनो घनो राशि—र्भस्मसात्क्रियतेऽग्निना ॥ तथैकशः कृतेनापि । धर्मेण क्षिप्यते तमः ॥९६॥ माहात्म्यमिति धर्मस्य । मत्वा कठिनकर्मभित् ॥ उद्यमः सर्वदा कार्यो । युवाभ्यां धर्म एव च ॥९७॥ मुनिवाक्यं समाकर्ण्य । तौ द्वावपि सहोदरौ ॥ व्रतानि द्वादशाधातां । सम्यक्त्वादीनि भावतः ॥ ॥ ९८ ॥ स्वीकृतार्हतधर्मौ तौ । विज्ञाय स्वांगजौ हृदि ॥ पितृभ्यामपि धर्मः स । स्वीचक्रे करुणा· मयः ॥ ९९ ॥ जैनधर्ममहारत्नं । विप्रवंशेऽतिदुर्लभं ॥ मन्वानौ तत्समासाद्य । सतातौ तौ गतौ मुदं ॥ १००० ॥ धर्मरत्नं यतेः पार्श्वाद् । गृहीत्वा तौ त्रयीमुखौ ॥ तस्य क्रमौ नमस्कृत्य । जग्मतु· र्निलयं निजं ॥ १ ॥ केनचित्स्तूयमानौ तौ । निंद्यमानौ च केनचित् ॥ अध्वन्यगछतां भूरि—कु· टुंबपितृसंयुतौ ॥ २ ॥ पितृभ्यां सार्धमागत्य । क्रमात्तौ च द्विजांगजौ ॥ व्रतानि पालयंतौ च । ध· र्मासक्तौ बभूवतुः ॥ ३ ॥ पूजयंतौ जिनेंद्रार्चां । ददतौ दानमर्थिषु ॥ कुर्वाणौ तौ कृपां जंतौ । ग·

द्विजौ ॥ साधुर्जिनोदितं धर्म—मजल्पत्पुरतस्तयोः ॥ ८१ ॥ निर्ग्रंथश्रावकाचार—वद्द्विधाचारभे-
दतः ॥ सर्वज्ञेन जिनेंद्रेण । द्विधा धर्मोऽस्ति भाषितः ॥ ८२ ॥ तत्र यो यतिधर्मोऽस्ति । ससत्पंच
महाव्रतः ॥ धीराणामेव मर्त्याना—मुचितः पालनाय च ॥ ८३ ॥ यो धर्मोऽस्ति गृहस्थानां । सु-
करः पालनाय सः ॥ सम्यक्त्वं प्रथमं तत्रा—र्हद्गुरुधर्मगोचरं ॥ ८४ ॥ अणुव्रतानि पंचापि । त्रीणि
गुणव्रतानि च ॥ शिक्षाव्रतानि चत्वारी—ति द्वादशव्रतान्यपि ॥ ८५ ॥ द्वाविंशतिरभक्ष्याणि । व-
र्जनीयानि नित्यशः ॥ वर्जनीयाश्च द्वात्रिंश—दनंतकायकाः पुनः ॥ ८६ ॥ तत्र मद्यं मधु मांसं ।
नवनीतं विशेषतः ॥ रजनीभोजनं त्याज्यं । परस्त्रीगमनं पुनः ॥ ८७ ॥ स्वयं पाणिगृहीतायां । स्ने-
हवत्यामपि स्त्रियां ॥ पुसा कामातुरेणापि । विवर्ज्यं मैथुनं दिवा ॥ ८८ ॥ सूक्ष्मबादरजीवानां । स्था-
नं संधानकं भवेत ॥ वर्जनीयं ततः पाप—भीरुणा च विवेकिना ॥ ८९ ॥ दीनानाथजने देयं ।
दानं सन्मानपूर्वकं ॥ पालनीयं यथाशक्ति । शीलं निर्मलताकरं ॥ ९० ॥ विधातव्यं दशप्रत्या—
ख्यानमध्यात्तपो वरं ॥ संसारानित्यतां ध्यायन् । भावयेद्भावनां भवी ॥ ९१ ॥ देवार्चनं गुरुसेवा ।
तपः स्वाध्यायसंयमौ ॥ दानमेवं च कर्माणि । षट् कर्तव्यान्यहर्निशं ॥ ९२ ॥ क्रोधो मानो महा-

क्षांतिः । कार्या त्वया कृपाद्भुना ॥ ६९ ॥ अज्ञानेन प्रकुर्वंति । बालाः पितुः पुरो यथा ॥ कृतं त्व-
यि तथावाभ्यां । क्षंतव्यं क्षमया त्वया ॥ ७० ॥ अवादीत्साधुरस्माकं । धर्मे सर्वतपस्विनां ॥ वर्तते
जीवमात्रस्यो—परि क्षांतिरनारतं ॥ ७१ ॥ युवयोरुपरि द्वेष—स्ततो मे न मनागपि ॥ सहंतेऽत्रो-
पसर्गांश्च । वसुंधरेव संयताः ॥ ७२ ॥ जिनधर्मपरो धीमान् । रागद्वेषौ करोति न ॥ सुखे दुःखे स-
मानो हि । वेत्ति कर्मैव कारणं ॥ ७३ ॥ स्वकीयकर्मयोगेनो—पसर्गा अर्हतामपि ॥ घोराः समा-
गतास्तर्हि । वराकस्य च किं मम ॥ ७४ ॥ शुभाशुभैकभावेन । कर्म यादृगुपार्जितं ॥ अवश्यमेव
तद्भोग्य—मैहिकामुष्मिके भवे ॥ ७५ ॥ कस्योपरि ततो न स्तो । रागद्वेषौ द्विजौ मम ॥ न वि-
चिंत्यं भयं मत्तो । युवाभ्यामपि जातुचित् ॥ ७६ ॥ साधुवाक्यमिति श्रुत्वा । व्याचक्षातां त्रयीमुखौ
॥ रागद्वेषोपसर्गाणां । जेतासि त्वं मुनीश्वर ॥ ७७ ॥ मुमुक्षोस्त्वादृशस्याप्या—वाभ्यां घातो विचिं-
तितः ॥ तत्प्रायश्चित्तदानेनो—द्धर दुर्गतिपाततः ॥ ७८ ॥ ब्राह्मणावपि चांमाल—कर्ममर्मविधायि-
नौ ॥ आवां वर्तावहे नाथ । धर्ममार्गं प्रदर्शय ॥ ७९ ॥ आवयोः पापिनोरेवं । त्वद्वपुःघातचिंत-
नात् ॥ संसारतः समुद्धारो । येन धर्मेण जायते ॥ ८० ॥ संसारभ्रमणाद्भीतौ । ज्ञात्वा धर्मार्थिनौ

सती पद्मावती गौरी । गांधारी लक्ष्मणायुता ॥ सुसीमाख्यापि सर्वास्ता । मुक्तिगाः कथिता इमाः ॥ ॥ ५९ ॥ तासु कांतासु रुक्मिण्या । जांबवत्याश्च कुक्षिजौ ॥ भविष्यत इमौ बंधू । स्नेहस्निग्धौ विमातृजौ ॥ ६० ॥ श्रीमान्नेमिजिनेंद्रस्य । द्वाविंशतितमस्य तु ॥ तीर्थे विगलितानर्थे । दीक्षामेतौ गृहीष्यतः ॥ ६१ ॥ शुद्धं चरणमाराध्य । प्रतिबोध्य जनव्रजान् ॥ परिक्षिप्याष्ट कर्माणि । मुक्तिमेतौ गमिष्यतः ॥ ६२ ॥ मारणार्हौ ततोऽप्येतौ । न वर्तेते त्रयीमुखौ ॥ जनप्रभावनाकर्तु—स्तव जंतुहितैषिणः ॥ ६३ ॥ जांगुलिकाद्यथा मंत्रं । समाकर्ण्य भुजंगमः ॥ कोपाटोपपरीतोऽपि । प्रशांतविग्रहो भवेत ॥ ६३ ॥ तथा यक्षो यतेर्वाक्यं । निशम्य शांतमानसः ॥ कृत्वार्हच्छासनोद्योतं । मुक्त्वा विप्रौ ततो ययौ ॥ ६४ ॥ पुण्यापुण्यफलं वीक्ष्य । लोका इहैव जन्मनि ॥ चमत्कारधरा जाता । धर्मकर्मविधायिनः ॥ ६५ ॥ नृपालोऽपि स्वयं धर्मे । प्रावर्तत विमुक्तये ॥ ग्रामीणानपरान् लोकान् । प्रावर्तयद्विशेषतः ॥ ६६ ॥ तौ द्वावपि द्विजन्मानौ । शांतचित्तौ बभूवतुः ॥ काले हि फलदं तीर्थं । साधवो ऽाकफलप्रदाः ॥ ६७ ॥ जिनधर्मे धृतश्रद्धौ । साधूपकारचेतसौ ॥ क्षमयित्वापराधं स्वं । मुनिं तौ प्रजजल्पतुः ॥ ६८ ॥ अद्यप्रभृति जीवाव—स्त्वत्प्रसादेन हे मुने ॥ आवयोरुपरि

निर्ग्रंथस्य दृढ॰ धं हि। यथा घर्षणमंतरा ॥ शुद्धस्यापि सुवर्णस्य। न जायते परीक्षणं ॥ ४७ ॥ कैवल्यपदसं॰ स्याप्यु—पसर्गसहनं विना ॥ नवेत्तथा न छेदो हि। कर्मणां मर्मभेदिनां ॥ ४८ ॥ श्रुत्वेति प्राप्तौ। हेतू जातौ ततो मम ॥ मारणीयौ कथं यक्ष—राज त्वया द्विजाविमौ ॥ ४९ ॥ यतिना प्रोक्तं। वचो यक्षो जगौ मुदा ॥ मुनीश न्यायमार्गोऽत्र। मया स्वीकृत एव हि ॥ ५० ॥ मया त्वन्यायमार्गेण। यत्र दंभो विधीयते ॥ तस्मिन्निवारणीयोऽहं। सर्वथा श्रमण त्वया ॥ ५१ ॥ यतिः प्रोचे त्वयोक्तं य—त्तत्सम्यक्किंतु यक्षराट् ॥ भूयोनरकदुःखाय। जीवानां हिंसनं भवेत ॥५२॥ य॰ द्यन्यकारणमप्यस्ति। तयोरमारणे पुनः ॥ यक्षराज ततो ह्येतौ। मारणीयौ न सर्वथा ॥ ५३ ॥ य॰ क्षो व्याचष्ट संतुष्टः। कारणं यत्त्वयोदितं ॥ महीयसीं कृपां कृत्वा। तत्तु मम निवेदय ॥ ५४ ॥ इत्युक्ते तेन यक्षेण। जगाद मुनिपुंगवः ॥ प्रभूतज्ञानसंयुक्तो। वियुक्तो दुरितव्रजे ॥ ५५ ॥

द्वारिकानगरीनाथो। नवमो वासुदेवकः ॥ अखंम्डितयशोवादः। कृष्णनामा भविष्यति ॥५६॥ विद्यमानासु कांतासु। रूपहृद्यासु भूरिषु ॥ तस्य चाग्रमहिष्योऽष्टौ। भविष्यंति गुणोत्तमाः ॥५७॥ सत्यभामा रमासत्य—भामानवद्यविग्रहा ॥ रुक्मिणी रुग्मणिश्रेणि—वर्णिता जांबवत्यपि ॥ ५८ ॥

णावेतौ । मदोन्मत्तौ द्विजातिजौ ॥ पूर्वमेव यतोऽनेन । वारितौ न निरर्गलौ ॥ ३५ ॥ भक्त्वेति
वज्रिवज्राभं । दंडमुत्पाट्य पाणिना ॥ निहंतुं नृपतिं यक्षो । दधावे क्रोधभीषणः ॥ ३६ ॥ तदा
मामेति निःशेषै—रपि प्ररूपिते सति ॥ स्वस्थीभूते क्षणं तस्मि—न्नाचख्यौ विनयान्नृपः ॥ ३७ ॥
स्वामिन्नहं न जानामि । वादस्वरूपमेतयोः ॥ मया चेज्जानता नैतौ । वारितौ तर्हि दूषणं ॥ ३८ ॥
समस्तैरपि तत्रत्यै—स्तथैव कथिते सति ॥ अपासरद्वनाधीशो । नृपमारणकर्मतः ॥ ३९ ॥ अपसृ
त्य नृवाक्येन । धराधीशान्निरागसः ॥ निहंतुं धावितो यक्ष—स्तौ द्विजावपराधिनौ ॥ ४० ॥ मामे-
त्यभिदधत्साधु—रभ्यधाद्यक्षनायकं ॥ एतयोर्दूषणं नैव । कर्मणां तत्समस्ति च ॥ ४१ ॥ यक्षस्तदा
जगादाप—कारिष्वप्युपकारिणः ॥ तवावज्ञा कृतैताभ्यां । मार्याविव ततस्त्विमौ ॥ ४२ ॥ वाचंयम-
स्तदा वाच—मुवाच कृपयार्द्रहृत् ॥ यक्षराज ममाचारं । शृणु त्वं शांतचेतसा ॥ ४३ ॥ योऽन्यार्थं
क्रियते जीव—घातः सोऽपि निवार्यते ॥ मदर्थमनयोर्घातं । कथं पश्यामि भो वद ॥ ४४ ॥ अ-
स्माकं यतिनां मार्गे । समस्तमपि तीर्थपैः ॥ कथितं परमब्रह्म—स्वरूपैकनिबंधनं ॥ ४५ ॥ जीवनं
जीवरक्षायै । मरणं शिवशर्मणे ॥ घोराणामुपसर्गाणां । सहनं कर्महानये ॥ ४६ ॥ क्षोपलेन सा॰

कारिणि जायेतो—पकारकः स उत्तमः ॥ २३ ॥ इति ज्ञात्वा कृपां कृत्वा । ह्यावयोरुपरि प्रभो ॥
एतावन्यायकर्तारौ । बालकौ मुंच कष्टतः ॥२४॥ रुदंतौ विलपंतौ च । वदंतौ दीनभाषया ॥ समी-
क्ष्य दंपती साधुः । कायोत्सर्गमपारयत् ॥ २५ ॥ पारयित्वा तनूत्सर्ग—मक्रोधः साधुरभ्यधात ॥ म-
म कस्योपरि द्वेषः । सर्वथा नास्ति बान्धवौ ॥ २६ ॥ समेतस्य निजं स्थानं । रक्षा प्रत्यर्थिनोऽपि च
॥ उत्तमैः पुरुषैरात्म—प्राणैरपि विधीयते ॥ २७ ॥ चिंतयित्वेति यक्षेण । काननस्वामिना निशि
॥ स्तंभितौ मम रक्षार्थं । संभाव्येते इमौ द्विजौ ॥ २८ ॥ वार्तामिति प्रकुर्वाते । यावन्मिथो यति-
द्विजौ ॥ प्रत्यक्षीभूय तावत्स । दंडपाणिः समागतः ॥ २९ ॥ समेत्य च नमस्कृत्य । यतिनं गुण-
मंदिरं ॥ उवाच सोऽपि हे साधो । चिंतां त्वं मा कृथा वृथा ॥ ३० ॥ यदि न्यायवतां पुंसां । दं-
डो मया विधीयते ॥ तर्हि लोकापवादः स्या—त्तावकोऽपि च मामकः ॥ ३१ ॥ अन्यायकारिणां
नृणां । दंडदाने मुनीश्वर ॥ प्रत्युताघनिवृत्तिः स्या—द्यशोवादश्च विष्टपे ॥ ३२ ॥ तत एतौ हनि-
ष्यामि । शिक्षादानस्य हेतवे ॥ नांतराले त्वया किंचि—त्कथनीयं ममाग्रहात ॥ ३३ ॥ ग्रामस्य
प्रथमं त्वस्य । दुष्टनीतिप्रवर्तकं ॥ मारयिष्यामि भूपाल—मपराधविधायिनं ॥ ३४ ॥ त्वयि मत्सरि-

सार्धं । हारितौ तौ तु दुर्मती ॥ ११ ॥ तेन द्वेषेण यामिन्या—मागत्य यतिनोंतिके ॥ घाताय ख-ड्गमादाय । यावत्तौ धावितौ क्रुधा ॥ १२ ॥ तावन्मुमुक्षुपुण्येन । समागत्याथ तत्र च ॥ यक्षेण व-नपालेन । स्तंभितौ तौ त्रयीमुखौ ॥ १३ ॥ निशम्य तत्समाचारं । तन्मुखात्कर्णदुःखदं ॥ पितरौ भू-यसा स्नेह—संयोगेन व्यषीदतां ॥ १४ ॥ सदनात्सहसागत्य । कानने साधुसन्निधौ ॥ स्तंभितौ त-नयौ वीक्ष्या—रोदिष्टां पितरौ भृशं ॥ १५ ॥ हाहा पुत्रौ कथं वादः । कृतस्तपस्विना समं ॥ यदि वादः कृतस्तर्हि । रात्रावत्रागतौ कथं ॥ १६ ॥ अहोरात्रं च भूयिष्ट—सुखोचितशरीरयोः ॥ रे सुतौ युवयोरीह—कावस्था समजायत ॥ १७ ॥ विलापं विविधैर्वाक्यैः । कुर्वाणौ पितरावथ ॥ मुनिं नं-तुमिव क्षोण्यां । दुःखेनालुठतांतमां ॥ १८ ॥ यद्यपि ब्राह्मणैः प्रायो । जैनो मुनिर्न मन्यते ॥ त-थापि निजकार्ये स्यु—स्तेऽपि च नमनार्हकाः ॥ १९ ॥ ततः समीपमागत्य । कायोत्सर्गजुषो यतेः ॥ आनम्य तत्क्रमांभोजं । कथयामासतुश्च तौ ॥ २० ॥ सर्वजीवकृपाकारी । सर्वजंतुहितावहः ॥ सर्वोपकारकः साधु—स्त्वमेव भुवि वर्तसे ॥ २१ ॥ ततस्तनयजिक्षां त्व—मावयोर्वितराधुना ॥ भ-वेयुर्हि महांतस्तु । प्रार्थनाभंगभीरवः ॥ २२ ॥ उपकारिणि भूयांसो । भवेयुरुपकारकाः ॥ योऽप-

॥ ९८ ॥ ताभ्यां विवदमानाभ्यां । हारितं जनसाक्षिकं ॥ ततः कोपाद्यतिं हंतु—मागतौ तौ दुराशयौ ॥ ९९ ॥ कृपाढ्यं सर्वजीवेषु । यतिं तं हंतुमुद्यतौ ॥ विज्ञाय वननाथेन । यक्षेण यंत्रितौ द्विजौ ॥ ९०० ॥ तौ वीक्षितुं प्रयांत्येके । आयांत्येके च वीक्ष्य तौ ॥ पुरुषस्त्रीसमूहेन । वार्ता सैव विधीयते ॥ १ ॥ सेवकोक्तं वचः श्रुत्वा । भूमीपालोऽप्यवीवदत ॥ प्रयास्यामो वयमपि । वीक्षितुं तत्र कौतुकं ॥ २ ॥ सेवकोऽपि क्षमाजानिं । ज्ञात्वा जिगमिषुं वने ॥ सामग्रीं रचयामास । करेणुतुरगादिकां ॥ ३ ॥ तया भूपोऽपि सामग्र्या । मुनिं नंतुं च कौतुकं ॥ वीक्षितुं कानने सौवे । स्वजनैः कलितो ययौ ॥ ५ ॥ भूपालप्रमुखैर्लोकै—र्भूदेवयोर्द्वयोस्तयोः ॥ स्वरूपं वीक्ष्य नेत्राभ्यां । जिनधर्मः प्रशंसितः ॥ ६ ॥ समस्तेभ्योऽपि धर्मेभ्यो । धर्म आर्हत एव च ॥ यत्र जीवदयाधर्मः । प्रथमं कथितो जिनैः ॥ ७ ॥ केचिद्धर्मं प्रशंसंति । जंतुजातसुखावहं ॥ केचन धर्मिणं साधुं । क्रोधरोधविधायिनं ॥ ८ ॥ निंदंति पितरौ केचिद् । द्विजन्मनोस्तयोर्द्वयोः ॥ केचित्तावेव पापिष्ठौ । दुष्टौ विद्याभिमानिनौ ॥ ९ ॥ वार्तायां जायमानाया—मितीतरेतरं पुरे ॥ केनचित्पुरतः पित्रोः । स्वरूपं कथितं तयोः ॥ १० ॥ युवयोस्तनयाभ्यां ह्य—स्तने दिने विनिर्मितः ॥ विवादः साधुना

का मुने ॥ इतीव खड्गदंडेन । तौ वीजयतश्चामरौ ॥ ८६ ॥ तावलोक्य वनदेवा—वुद्घाटितकृपा-
णकौ ॥ निनंसया गताः केचि—त्कुर्वंति कल्पनामिति ॥ ८७ ॥ केचिद्वदंति षड्जीव—निकाय-
रक्षकं मुनिं ॥ समानशत्रुमित्रं च । यद्येनं हंतुमागतौ ॥ ८८ ॥ तदेतौ कर्मचांडालौ । ब्रह्मवंशो-
द्भवावपि ॥ एतयोः पठनं चापि । भस्महुतमिवाजनि ॥ ८९ ॥ ब्रवीति भीरुका काचि—दुद्घाटि
तकृपाणयोः ॥ स्वरूपमेतयोर्दृष्ट्वा । मातर्बिभेम्यहं भृशं ॥ ९० ॥ काचित्प्रोवाच माभैषी—र्नास्त्ये-
वाथोऽनयोर्बलं ॥ साधुं हंतुं समेतौ त—द्यक्षेण स्तंभिताविमौ ॥ ९१ ॥ किंवदंती प्रसिद्धैका । स्त्री-
मुखे चटिता पुनः ॥ तस्याः स्याद्गुप्तवृत्तित्वं । कथं संगोपनैरपि ॥ ९२ ॥ पुरुषाणां समूहेन । क-
लापेन च योषितां ॥ क्रियमाणा मिथो वार्ता । सैव मुखे मुखेऽभवत् ॥ ९४ ॥

भ्रमतोऽथ नरेंद्रस्य । नगरे तत्र लीलया ॥ प्रसरंतीति तस्यापि । सा गता कर्णकोटरे ॥९५॥
ततोऽवक्सेवकं भूमि—पालः प्रवृत्तिरश्रुता ॥ श्रूयतेऽद्य कथं नूनं । श्रमणब्राह्मणस्थिता ॥ ९६ ॥
सोऽपि प्ररूपयामास । ज्ञातसर्वस्वरूपकः ॥ उद्यानेऽस्ति समायातः । श्वेतांबरस्तपोधनः ॥ ९७ ॥
समं मुमुक्षुणा तेन । सर्वजीवाविरोधिना ॥ अत्रत्याभ्यां द्विजन्मभ्यां । कल्ये वादो विनिर्मितः ॥

विशुद्धये ॥ ७४ ॥ या रूपेणाप्सरायंते । लावण्योपचिताः स्त्रियः ॥ नेक्षंतेऽभिमुखं तासां । राग· बुद्ध्या मनागपि ॥ ७५ ॥ द्विरदेषु तुरंगेषु । रथेषु च पदातिषु ॥ जातरूपे च रूप्येषु । ममत्वं ना· स्य विद्यते ॥ ७६ ॥ बुभुक्षितोऽपि नाहार—माहरेन्निशि सर्वथा ॥ मरणांतेऽपि नो नीरं । पिपा· सितोऽपि संपिबेत् ॥ ७७ ॥ महाव्रतयुतस्यापि । मारणार्थं मुनेर्यदि ॥ समायाताविमौ दुष्टौ । शि· क्षयामि च तर्ह्यमू ॥ ७८ ॥ संप्रत्येव हनिष्यामि । दुरात्मानाविमौ द्विजौ ॥ मुनिना निहतावेता— विति निंदा भविष्यति ॥ ७९ ॥ यद्यमू तर्जयित्वैव । मुंचामि पापिनाविमौ ॥ विज्ञास्यंति कथं लो· का । दुश्चेष्टामेतयोस्तदा ॥ ८० ॥ दर्शयित्वा प्रगे नृणां । घोरं स्वरूपमेतयोः ॥ पश्चादहं हनिष्या· मि । क्रूरकर्मकराविमौ ॥ ८१ ॥ ध्यात्वेति तेन यक्षेण । स्तंभितौ तावुभावपि ॥ धृतास्त्रौ बहुह· स्ताभौ । मंतुमत्तस्करोपमौ ॥ ८२ ॥ अथ प्रातः समायाता । जनास्तमभिवंदितुं ॥ मुनिं नत्वान्य· कार्याणि । कार्याणि हि विवेकिभिः ॥ ८३ ॥ साधोरुपरि माकार्षी—त्कोऽपि दुष्टं मनो जनः ॥ इत्यंगरक्षकौ मर्त्या—विवैतौ किं स्थितावुभौ ॥ ८४ ॥ कायोत्सर्गस्थिते साधा—वावाभ्यां स्थीयते कथं ॥ इतीवोर्ध्वं स्थितावेतौ । साधुसेवाचिकीर्षया ॥ ८५ ॥ दीयतामावयोर्मोक्षः । कृपालो त्वय·

जोऽपि जगौ भ्रात—श्चेत्पापं न ग्रहीष्यसि ॥ अहं कथं ग्रहीष्यामि । पापं तद्घातजं ननु ॥ ६३ ॥
एवं विवदमानौ ता—वाकृष्य धन्व संस्थितौ ॥ विचारणां प्रकुर्वंतौ । शास्त्राध्ययनयोगतः ॥ ६४ ॥
शास्त्राभ्यासकरो मर्त्यो । विपक्षोऽपि वरो भुवि ॥ हितकर्ता परं नूनं । माभून्मूर्खो जनः क्वचित ॥
॥ ६५ ॥ प्रविधाय ततः प्रोच्चै—र्विचारणां परस्परं ॥ आगत्य मुनिपार्श्वे तौ । युगपद्धंतुमुद्यतौ ॥
॥ ६६ ॥ तावूर्ध्वीकृत्य कोदंडं । समारोप्य च मार्गणं ॥ प्रतिवेन मुनिं हंतु—कामौ यावदधावतां
॥ ६७ ॥ तावत्तत्पुण्ययोगेन । रक्षां कर्तुमिवोद्यतः ॥ क्षेत्रपालः समायातः । पुण्ये रक्षा ह्यचिंतिता
॥ ६८ ॥ तत्र तेन समेतेन । ददृशाते दृशा भृशं ॥ समुद्घाटितखड्गौ स—शरौ दुष्टाशयौ द्विजौ
॥ ६९ ॥ तौ समालोक्य यक्षोऽपि । बभूव क्रोधपूरितः ॥ यादृशो दृश्यते प्रायः । स्वजातोऽपि हि
तादृशः ॥ ७० ॥ विचारः कोपयोगेऽपि । तद्गुणागुणयोः कृतः ॥ मुनिर्वैरविमुक्तोऽयं । बद्धवैरावि-
मौ द्विजौ ॥ ७१ ॥ सूक्ष्मस्य बादरस्यापि । रागद्वेषकृतोऽप्ययं ॥ समस्तस्यापि जीवस्या—भयदानप्र-
दायकः ॥ ७२ ॥ लघूनामप्यसत्यानां । वचसां महतामपि ॥ प्रौढेऽपि कारणे जाते । वदेदेष क-
दापि न ॥ ७३ ॥ सच्चित्तं वा ह्यचित्तं वा । प्रभूतमथवा तनु ॥ अदत्तं नैष गृह्णाति । निजाचार-

तदवग्रहं ॥ क्षेत्रपालांतिके तेन । स्थितं ध्यानैकचेतसा ॥ ५१ ॥ तावत्तत्र समायातौ । दुष्टौ तौ वा-
डवांगजौ ॥ निरीक्ष्यैकाकिनं ध्यान—लीनं तौ तोषमापतुः ॥ ५२ ॥ वल्लजं पुरुषं वीक्ष्यै—काकि-
नं वैरिणं पुनः ॥ तन्मानसा हि मोदंते । निजकृत्यविधित्सया ॥ ५३ ॥ ततोऽमुं मारयित्वाथो ।
दुरात्मानं तपोधनं ॥ वैरमावां ग्रहीष्यावः । पौरलोकापमानजं ॥ ५४ ॥ एतदेव वरं जातं । यदयं
दृग्पथेऽभवत् ॥ दृग्पथेऽयं यदा जातो । तदार्थसिद्धिरावयोः ॥ ५५ ॥ आवयोर्वर्तते वैर—मेतेनैव
दुरात्मना ॥ प्रथमं मारणीयोऽयं । ततो वैरजिघृक्षया ॥ ५६ ॥ विचार्येति निजे भाले । भृकुटिं ज्यां
च धन्वनि ॥ आरोप्य प्रोचतुर्दुष्टा—ध्यवसायौ द्विजात्मजौ ॥ ५७ ॥ रे पापिष्ट मनोधृष्ट । विशि-
ष्टाचारवर्जितः ॥ यः पौराणां पुरो वादे । मनुः कृतोऽस्ति तं स्मर ॥ ५८ ॥ सत्यकिध्यानलीनत्वा-
न्न जल्पति मनागपि ॥ तदाविर्भूतकोपौ ता—वूचतुश्च द्विजांगजौ ॥ ५९ ॥ मौनं कृत्वा स्थितोऽ-
सि त्व—मेकाकित्वेन रे शठ ॥ मानभंगं च कृत्वा नौ । मौनं वा सर्वसाधनं ॥ ६० ॥ उदित्वे-
ति कनिष्टश्च । ज्येष्टं जगाद बांधवं ॥ वृद्धत्वात्प्रथमं देहि । प्रहारं त्वं सहोदर ॥ ६१ ॥ सोऽप्याह
पूर्वमेवामुं । न हनिष्यामि सर्वथा ॥ यतिहत्याभवं घोरं । पापं शास्त्रेऽस्ति भाषितं ॥ ६२ ॥ अनु-

दर्पय ॥ ३९ ॥ शिरो धुन्वन् गुरुः प्राह । वत्सैताभ्यां समं त्वया ॥ यो विवादः कृतस्तीव्र—स्तद्धरं न विनिर्मितं ॥ ४० ॥ वर्तेते पापिनावेतौ । दुरात्मानौ दुराशयौ ॥ यतिघातविधाने हि । निर्दयत्वसमन्वितौ ॥ ४१ ॥ निर्भर्त्सितौ पितृभ्यां च । रात्रावस्यां समेत्य तौ ॥ मरणांतमुपसर्गं च । साधूनां प्रविधास्यतः ॥ ४२ ॥ गुरुवाक्यप्रतीतिं हि । संदधानः स्वमानसे ॥ साधूपसर्गतो भीतो । तज्जल्प सत्यकिर्व्रती ॥ ४३ ॥ मुनीनामुपसर्गश्चे—ज्जायते मयि सत्यपि ॥ क्षणभंगुरशीलेन । तदा किं जीवितेन मे ॥ ४४ ॥ किंतु कश्चिदुपायोऽस्ति । दुष्टाभ्यां प्रविनिर्मितः ॥ उपसर्गः किलैताभ्यां । येन न स्यात्तपस्विनां ॥ ४५ ॥ गुरुर्जगाद श्रुत्वेति । यत्र वादः कृतस्त्वया ॥ गत्र स्वहमना वत्स । प्रदोषे तत्र कानने ॥ ४६ ॥ वर्तते क्षेत्रपालः स—प्रत्ययस्तदधिष्टितः ॥ तत्पार्श्वे मार्गयित्वाज्ञां । स्थेयं ध्यानैस्त्वया निशि ॥ ४७ ॥ श्रीजिनाख्यामहामंत्र—ध्यानेन संस्थिते त्वयि ॥ क्रोधांधौ तौ समागत्य । स्थास्यतस्त्वज्जिघांसया ॥ ४८ ॥ चतुर्विधस्य संघस्य । तदा रक्षा भविष्यति ॥ विधातव्यं त्वया वत्स । वचनं भाषितं मया ॥ ४९ ॥ एवं श्रीगुरुवाक्येन । क्षामयित्वाखिलानपि ॥ निर्गतः स ततः स्थाना—द्धर्मध्यानपरायणः ॥ ५० ॥ आगत्य विधिना तत्र । याचित्वा

जमंदिरं ॥ २८ ॥ पठितावपि मूर्खौ हा । हारितौ यद्यतेः पुरः ॥ कथं सदनमायातौ । पित्रा तत्रेति तर्जितौ ॥ २९ ॥ युवयोः पठनार्थं यद् । द्रविणं व्ययितं मया ॥ गरिकाया उपरिष्टा—देतल्लेपनवत्कृतं ॥ ३० ॥ पुनः कोपात्पिता प्रोचे । दुरात्मानौ सुतौ युवां ॥ मया निवारितौ पूर्वं । गमने मुनिसन्निधौ ॥ ३१ ॥ यदि मद्वाचमुल्लंघ्य । गतौ च हारितौ युवां ॥ वक्रं दर्शयथः कृष्णं । कथं तर्हि मम स्वयं ॥ ३२ ॥ हारितौ यदि शास्त्रेण । भवंतौ तुच्छचेतनौ ॥ शस्त्रेण विजितस्तर्हि । युवाभ्यां स कथं न हि ॥ ३३ ॥ सत्यं वक्त्यावयोस्तातो । विदंताविति तावुभौ ॥ रुषाचिंतयतां घातं । साधोस्तस्य निरागसः ॥ ३४ ॥ अर्थसिद्धिः कथं भावि—न्यावयोरिति चिंतया ॥ पातकाध्यवसायौ तौ । गमयामासतुर्दिनं ॥ ३५ ॥ त्रियामायां प्रजातायां । चौरवेषं च बिभ्रतौ ॥ कृपाणधन्वबाणादि । शस्त्रमादाय निर्गतौ ॥ ३६ ॥

इतश्च विप्रपुत्राभ्यां । साकं वादं विजित्य च ॥ गुरूणां गदितुं वाद—स्वरूपं सत्यकिर्गतः ॥ ॥ ३७ ॥ गुरूणामंतिके गत्वा । कृत्वा वंदनकक्रमं ॥ विनयाद्वचनं प्रोचे । शिष्यो हि विनयी प्रियः ॥ ३८ ॥ विभो वाग्भवसूनुभ्यां । समं वादोऽद्य निर्मितः ॥ तत्करणेन मेऽभूद्यत । प्रायश्चित्तं त-

चेत ॥ सन्यासिकं तदा शुद्धं । दास्यामः ममहं तव ॥ १७ ॥ स प्राहागामिकालस्या—पेक्षा का प्रविधीयते ॥ अस्थिरेण यतः केना—गामी कालः समीक्षितः ॥ १८ ॥ यदि सौख्यं कुरुध्वं मे । वल्लभाः स्वजना मम ॥ दत्त जैनेश्वरीं दीक्षां । महामोहविनाशिनीं ॥ १९ ॥ शुभाशुभानि कार्याण्ये—कांतत्वेन करोति यः ॥ न कोऽपि लभते तस्य । प्रेरकश्च निषेधकः ॥ २० ॥ स्वीकृत्येति वचस्तस्य । पितृभ्यां स्वजनैरपि ॥ दत्ता जैनेश्वरी दीक्षा । तत्रैवाघनिवारिणी ॥ २१ ॥ वाडवं तं प्रबोधिभं । क्षणात्समीक्ष्य दीक्षितं ॥ केचनानित्यतां चित्ते । जानंतः प्राव्रजन् जनाः ॥ २२ ॥ केचित्सम्यक्त्वमूलानि । सद्द्वादशव्रतानि च ॥ सम्यक्त्वं केवलज्ञान—दायकं केऽपि केवलं ॥ २३ ॥ केचिद्वैरंगिकाः संतः । सप्तक्षेत्र्यां घनं धनं ॥ वपंतः प्रक्षिपंतश्च । कर्माणि सुखमासदन् ॥ २४ ॥ केचन कौतुकाक्रांता । आनीय भस्त्रिके गृहात् ॥ प्रत्ययं यतिवाक्यस्य । दर्शयामासुरंजसा ॥ २५ ॥ दृग्भ्यां ते द्वे समालोक्य । जाताः श्रद्धालवो जनाः ॥ संजातौ भ्रातरौ तौ द्वौ । जायांजनाविलाननौ ॥ २६ ॥ युवयोः पितरौ जन्म । धिग् वांचापि मनीषितां ॥ यदत्र मुनिनानेना—गतौ वादचिकीर्षया ॥ २७ ॥ निंद्यमानौ जनैरेवं । विलक्षीभूतदर्शनौ ॥ अग्निभूतिवायुभूती । जग्मतुर्नि-

द्विजोत्तम ॥ ५ ॥ स मौनी साधुवाक्येन । कुटुंबं तत्र संस्थितं ॥ दृष्ट्वा गत्वामिलत्तूर्णं । गुरुवाक्यं
न लंघयेत ॥ ६ ॥ अद्य यावत्पितर्मात—रवज्ञा या कृता मया ॥ क्षंतव्या सा कुटुंबेन । समस्ते-
न मनीषिणा ॥ ७ ॥ कोमलानि विनीतानि । श्रुत्वा वचांसि कर्णयोः ॥ कुटुंबं सकलं पित्रा—
दिकं रुरोद दुःखतः ॥ ८ ॥ अद्य यावत्त्वया वत्स । किं वयं विप्रतारिताः ॥ रुदंतः कथयामासुः ।
सर्वेऽपि स्वजना जनाः ॥ ९ ॥ सोऽजल्पत्स्वजना यूयं । मा रोदिषुर्मुहुर्मुहुः ॥ अनंतशः सुतत्वेन
। संजातो भवतामहं ॥ १० ॥ मत्कुटुंबतया यूय—मपि जाता अनंतशः ॥ कस्मिन् कस्मिन् भवे
मोहो । विधीयते विचक्षणैः ॥ ११ ॥ यदि कौटुंबिका यूयं । वर्तध्वे मम वल्लभाः ॥ तथा कुरुत
नाभोम्य—वतारं निंद्यमीदृशं ॥ १२ ॥ स्वजना जगदुर्वत्स । स उपायः समस्ति कः ॥ येनेदृशो
न संबंधः । संप्राप्यते शरीरिभिः ॥ १३ ॥ सोऽवादीद्वीतमायेन । दीक्षा जैनेश्वरी यदि ॥ आदाया-
राध्यते सम्य—ग्विरुद्धाः स्युर्न ते तदा ॥ १४ ॥ ततो यदि ममाभीष्टाः । शिष्टाचारपरायणाः ॥ स-
द्यः प्रसद्य दीक्षां मे । समर्पयत शर्मणे ॥ १५ ॥ मत्वा तद्वाचमूचुस्ते । वयं ब्राह्मणजातिजाः ॥
अस्माकं जनने जैनी । दीक्षा न सर्वथोचिता ॥ १६ ॥ संसारसुखतो यर्हि । विरक्तस्त्वं सुतासि

वृंदारकोऽपि तिर्यक्त्वं । चक्री नारकतां व्रजेत् ॥ वासुदेवोऽप्यविष्णुत्वं । बलदेवोऽपि देवतां ॥ ९३ ॥ नृपतिः सेवकश्चापि । सेवको नृपतिर्भवेत ॥ संयोगी च वियोगी स्यात् । पुत्रवान् पुत्रवर्जितः ॥ ॥ ९५ ॥ बहुकांतोऽप्यकांतः स्या—त्सकुटुंबोऽकुटुंबकः ॥ दुःखी सुखी सुखी दुःखी । नीरोगी चापि रोगवान् ॥ ९६ ॥ माता प्रिया प्रिया माता । पिता सुतः सुतः पिता ॥ माता स्नुषा स्नुषा माता । स्नुषा स्वसा स्वसा स्नुषा ॥ ९८ ॥ सांसारिकमिदं रूपं । कर्मवैचित्र्यचित्रितं ॥ भावयन् भविकः पुण्यं । कुर्याद्भवविरक्तधीः ॥ ९९ ॥ कार्यो यत्नस्तथा येन । निंद्यः संबंध ईदृशः ॥ श्रवाच्यो वचनेनापि । सर्वथा लभ्यतेऽत्र न ॥ ८०० ॥

मुनिवाक्यमिति श्रुत्वा । मौनवान ब्राह्मणाग्रणीः ॥ साधुपादौ नमस्कृत्य । विनयेन न्यवेदयत ॥ १ ॥ स्वामिंस्त्वद्वचनेनाहं । विरक्तोऽस्मि भवोदधेः ॥ मेऽथो स्वजनबंधूनां । संबंधे न प्रयोजनं ॥ २ ॥ संसारतारिणीं सद्यो । नरकापत्तिवारिणीं ॥ कल्याणकारिणीं दीक्षां । ततः प्रसद्य देहि मां ॥ ३ ॥ उवाच मुनिनाथोऽपि । तंप्रति मधुरं वचः ॥ यदि दीक्षाजिघृक्षा ते । तर्हि मद्वचनं कुरु ॥ ४ ॥ एकशः पितरौ बंधून् । स्वजनान्निखिलानपि ॥ स्पृष्टया मृष्टया वाचा । प्रजल्पय

प्रतिवेन तयोस्तन्वी । विधाय भस्त्रिके उभे ॥ मेटकस्योपरिष्टात्तु । मुक्ते तेन द्विजन्मना ॥ ८० ॥
वर्तेते ते गृहेऽद्यापि । मूकस्यास्य द्विजन्मनः ॥ कौतुकं युवयोश्चेत्त—त्तत्र गत्वा प्रपश्यतं ॥ ८१ ॥
निशम्य वचनं साधो—रुक्तवंतौ सहोदरौ ॥ व्रतिन्नेतस्य विप्रस्य । मूकत्वं वर्तते कथं ॥ ८२ ॥
उवाच वचनं वाचं—यमो यः प्रवरो द्विजः ॥ मया निगदितः पूर्वं । तज्जीवोऽयं प्रवर्तते ॥ ८३ ॥
प्रवराख्येन विप्रेण । कृत्वा यज्ञादिकं बहु ॥ ततो मृत्वातिमोहेन । समुत्पेदे स्नुषोदरे ॥ ८४ ॥ प·
रिपूर्णे दिने जाते । प्रसूतं स्नुषया तथा ॥ एधितो वीक्ष्य गेहं स्वं । जातिस्मरणमाप सः ॥ ८५ ॥
जातिस्मृतिप्रसंगेन । स्वस्वरूपमवेदसौ ॥ इदं मे सदनं चैषा । वधूरेष सुतो मम ॥ ८६ ॥ अथ
स्नुषां कथं वच्मि । मातरं पितरं सुतं ॥ इति संचिंत्य चित्तेऽसौ । मौनमाश्रितवान् सदा ॥ ८७ ॥
उक्त्वेति वीक्षमाणेषु । मनुष्येषु मुमुक्षुणा ॥ शत्रुमित्रसमानेना—कारितो मौनवान् द्विजः ॥८९॥
प्रवर प्रवरस्वांत । त्वमत्रागछ तुछतां ॥ विमुच्य निजयोः पित्रो—र्मुंच मौनं महामते ॥ ९० ॥
मौनं मुक्त्वा पितरौ च । त्वमाश्वासय बोधवान् ॥ व्यवहारप्रजल्पे हि । न दोषो महतामपि ॥९१॥
तस्मिन्नेव भवे जंतोः । कस्यचित्कर्मयोगतः ॥ भवंति भूरिसंबंधा । भवांतरे तु का कथा ॥ ९२ ॥

तुछं कुलं कुरूपं च । कुत्सितं श्रुतमेव च ॥ ६८ ॥ कुत्सितं च तपःकर्म । कुलान्नं मदनिर्मितेः ॥ इह लोके परलोके । निंदनीयोऽखिलैरपि ॥ ६९ ॥ युग्मं ॥ यो भवेत्पुण्यवान् प्राणी । जात्यादि-मदवर्जितः ॥ प्रोक्तान्येतानि भव्यानि । लभते भविनां वरः ॥ ७० ॥ द्वितीयं च दशांगानि । भवेयुर्यत्र नित्यशः ॥ लभते मानुषं जन्म । तत्र स्थाने स पुण्यवान् ॥ ७१ ॥ धर्मादिभिश्चतुर्भिः स्या—दंगमेकं सुखान्वितं ॥ क्षेत्रवास्तुहिरण्यौघ—पशुदासैः समन्वितं ॥ ७२ ॥ पुत्रपौत्रादिसंयुक्तो । मित्रवान् वर्णवान् पुनः ॥ अल्पातंको महाप्रज्ञो । बुद्धिमान् कीर्तिमान् बली ॥ ७३ ॥ पूर्वोक्तेन किलैकेन । युतो वा सकलांगकैः ॥ व्यादितो वा नवांगैश्च । सुखं भुंक्ते महोदयी ॥ ७४ ॥ ततो हितैषिणा प्राण—धारिणा पुण्यसंग्रहः ॥ पाथेयाय प्रकर्तव्य । ऐहिकामुष्मिकाय च ॥ ७५ ॥ मद्भक्तेऽन्यभवे चेन्न । विश्वासो युवयोर्भवेत् ॥ तदा समक्षं सर्वेषां । प्रत्ययं कमपि ब्रुवे ॥ ७६ ॥ यो विप्रः प्रवरः प्रोक्तः । पूर्वं स हालिकैः सह ॥ वृष्टिव्यपगमात्क्षेत्र—शुद्धेश्चिकीर्षया गतः ॥७७॥ तत्रागतेन तेनैव । हलोपकरणं समं ॥ वातेनेतस्ततः क्षिप्त—मदर्शि प्रवरेण तत ॥ ७८ ॥ हलस्य पुरतो रज्जू—मर्धां भुक्त्वा मृतिं गतौ ॥ तौ शृगालौ समालोक्य । पतितौ प्रचुकोप सः ॥ ७९ ॥

नं ॥ ५७ ॥ कामोद्भूतप्रतापेन । कंपमानशरीरकः ॥ हलोपकरणं सर्वं । मुक्त्वागात्प्रवरो गृहे ॥ ॥ ५८ ॥ बहुकालवियोगित्वा—द्भुक्त्वा च वसुधांगनां ॥ स सप्तभिरहोरात्रै—स्तत्संगाद्विरतोऽभवत् ॥ ५९ ॥ तेन मेघेन जंतूनां । दुःखव्याकुलताभवत् ॥ गोमायुयुग्ममप्यासी—दतीवक्षुधयाकुलं ॥ ॥ ६० ॥ अष्टमे दिवसे वृष्टे—र्विरतौ च क्षुत्पीडितौ ॥ कृशांगौ च शृगालौ तौ । निःसृतौ गुल्म· तो बहिः ॥ ६१ ॥ पृथ्वी हलादिसंबद्धा । दुश्चर्मरज्जवोऽपि च ॥ द्रवीभूतास्तया वृष्ट्या—तिभोगा· दिह्नमेव हि ॥ ६२ ॥ पीडिताभ्यां क्षुधा ताभ्यां । क्षेत्रे तत्रैव संस्थिताः ॥ हलादियंत्रिता आर्द्रा । भक्षिताश्चर्मरज्जवः ॥ ६३ ॥ आर्द्राणां चर्मरज्जूनां । भक्षणेनोदरेऽभवत ॥ शूलव्यथा तयोस्तीव्रा । तौ मृतौ बाधया तया ॥ ६४ ॥ केनचिद्विधियोगेन । तौ द्वावपि शृगालकौ ॥ जातौ सुतौ युवां मृत्वा—त्र विप्रसोमशर्मणः ॥ ६५ ॥ अल्पकालोभ्रितां पूर्वां । जातिं न स्मरथो युवां ॥ ब्राह्मण· जातिमासाद्या—भिमानं कुरुथो घनं ॥ ६६ ॥ समस्तैरपि यद्वर्ज्यं । युवाभ्यां तत्तु भक्षितं ॥ तथा· पि निंदथः साधून् । पौराणां पुरतो युवां ॥ ६६ ॥ स्वरूपमीदृशं सौवं । समाकर्ण्यान्यजन्मनः ॥ सुकृती पुण्यकृत्यानि । करोति पापपिष्टये ॥ ६७ ॥ पुण्येन रहितो जंतु—र्दुष्टां जातिमवाप्नुयात् ॥

द्याम्बावेतौ । पृच्छतः पूर्वजन्म चेत् ॥ ४५ ॥ तर्हि मयोच्यमानं प्रा—ग्जन्मस्वरूपमेतयोः ॥ सावधानं मनः कृत्वा । यूयं शृणुत चित्तकृत ॥ ४६ ॥

शालिग्रामेऽग्रिमेऽत्रैव । प्रवरः प्रवरद्विजः ॥ धनी वनीपकत्यागी । ख्यातोऽत्युत्क्षेत्रकारकः ॥ ॥ ४७ ॥ तस्य शस्यमतेः क्षेत्रो—पांतेऽभवद्वटद्रुमः ॥ तदधः शिवयासूत । चित्रं शृगालयामलं ॥ ॥ ४८ ॥ तृणजलकणतः शीत—पानीयपानतः पुनः ॥ तत्तत्र निर्भयं तिष्ठ—द्वपुषा वृद्धिमासवत् ॥ ॥ ४९ ॥ निर्भयत्वेन तत्रैव । ससुखं तस्य तिष्ठतः ॥ कियंतो वासरा याताः । क्रीडतश्च परस्परं ॥ ॥ ५० ॥ तदा दूरनभोमार्गा—दागच्छंतं घनाघनं ॥ मातंगमिव गर्जंतं । श्यामं प्रवरमैक्षत ॥ ५२ ॥ मदवारि क्षरन् राज—लोकसन्मानितागमः ॥ उज्ज्वालितरजा मेघो । वायुना सममीयिवान् ॥५३॥ कथं मयि सति ग्रीष्म—राजस्तापयति क्षमां ॥ शोषयति तडागांश्च । नदीऽह्रमहीरुहान् ॥ ५४ ॥ दीर्घाद्विरहोद्भूत—तापायाः पृथिवीस्त्रियाः ॥ कामतापं निराकर्तु—मिवाधस्तात्समागतः ॥ ५५ ॥ कांतासंगोत्सुका जाता । निखिलाश्च प्रवासिनः ॥ कर्मापि निखिलं मुक्त्वा । ययुः स्वं स्वं निकेतनं ॥ ५६ ॥ भामिनीभोगसंयोगे । विजनं मृग्यते पदं ॥ इतीव जलदेनापि । कृतं विजनकान·

मुनिनोक्तमिति श्रुत्वा । हसंतावाहतुर्द्विजौ ॥ अयं पृष्टा महान् यस्तु । स्वरूपं तस्य पृच्छति
॥ ३४ ॥ भवांतरस्वरूपस्य । वेत्ता कोऽप्यस्ति भूतले ॥ अस्य बुद्धिपरिभ्रंशो—ऽथवा किं ग्रथिलो-
ऽस्त्ययं ॥ ३५ ॥ इत्युक्ते वेदगर्भाभ्यां । सर्वेऽप्यज्ञानिनो नराः ॥ हस्ततालं ददानाश्च । सशब्दं
जहसुर्भृशं ॥ ३६ ॥ तेष्वेके पंडितमन्या । अवदंस्तत्त्वबुद्धयः ॥ मूर्खा अज्ञानतो यूयं । किं हस-
थाधमा इव ॥ ३७ ॥ अस्यैव पृच्छ्यतां किं त्वं । गतजन्मस्वरूपकं ॥ वचोमात्रेण तत्त्वज्ञ । सम्यग्
जानासि वा मुने ॥ ३८ ॥ सत्यं चेति वचस्तेषां । स्वीकृत्य सकला अपि ॥ स्वस्वतर्कणयाप्राक्षुः ।
पौरा वक्रा विकारिणः ॥ ३९ ॥ स्वकीयमानरक्षायै । विशेषेण द्विजन्मजौ ॥ उपहास्यं प्रकुर्वाणा
—वपृच्छतां मदोत्कटौ ॥ ४० ॥ यदि वेत्सि स्वकीयं वा । परकीयं भवांतरं ॥ ब्रूहि ब्रूहि तदा शी-
घ्रं । स्वविद्वत्त्वं प्रदर्शय ॥ ४१ ॥ पौरलोकैरिति प्रोक्ते । विप्राभ्यामपि चादरात् ॥ मुनिः स कथ-
यामास । तेषां मधुरया गिरा ॥ ४२ ॥ सभ्या भो मे भवं वच्मि । युष्माकमथवानयोः ॥ विनिश्चि-
त्य मिथो यूयं । निवेदयत सत्वरं ॥ ४३ ॥ श्रुत्वेत्यवदतां विप्रा—वुभौ खलौ कुतूहलात् ॥ वद त्व-
मावयोरेव । जन्मांतरस्वरूपकं ॥ ४४ ॥ ताभ्यां निरूपिते साधु—रवदद्भो सभाजनाः ॥ आग्रहा-

ध्यते ॥ २२ ॥ ताभ्यामित्युदिते साधु—रवदन्मृष्टभाषया ॥ निवेदितं युवाभ्यां यत । तत्तु सत्यं द्विजोत्तमौ ॥ २३ ॥ परं मम मनःप्रश्न—भावो गूढप्रभावकः ॥ युवाभ्यामपि दक्षाभ्यां । सर्वथा नावसीयते ॥ २४ ॥ लोकरूढिवदहमपि । जानाम्यकथितामपि ॥ अग्निलाकुक्षिसंभूतौ । सोमदेवद्विजन्मजौ ॥ २५ ॥ अग्निभूतिवायुभूती । नाम्ना द्वावपि बांधवौ ॥ वर्तेथे हृद्यविद्याढयौ । शालिग्रामनिवासिनौ ॥ २६ ॥ मया पृष्टं परं तत्व—ज्ञानं हि युवयोः पुरः ॥ तत्वज्ञाता जनो लोके । प्रोच्यते विदुषां वरः ॥ २७ ॥ तत्वज्ञानेन मोक्षः स्या—त्तत्वज्ञानान्महोदयः ॥ तत्वज्ञानार्जने तस्मा—त्कर्तव्यो ह्युद्यमो जनैः ॥ २८ ॥ अध्येतृभ्यामपि चतु—र्वेदान् शास्त्राणि भूरिशः ॥ तत्वज्ञानस्य लेशोऽपि । युवाभ्यां नावगम्यते ॥ २९ ॥ यदैकशो मया पृष्टं । गदितुं तन्न शक्यते ॥ प्रश्नस्यान्यस्य निर्वाहः । किं भवद्भ्यां भविष्यति ॥ ३० ॥ इत्युक्ते मुनिना तेना—जल्पतां तौ रुषारुणौ ॥ रे मूर्ख यत्त्वया पृष्ट—मावाभ्यामुक्तमेव तत ॥ ३१ ॥ वेदान्यशास्त्रपठने । वर्तमानः सुधीरिव ॥ ज्ञापयितुं स्वपांडित्यं । लोकेषु किं प्रजल्पसि ॥ ३२ ॥ मुनिः प्रोचे कुधीध्मातौ । माभूतं वेदवेदिनौ ॥ पृष्टं मया समायातौ । युवां कुतो भवादिह ॥ ३३ ॥

ध्यतां ॥ ११ ॥ इतः श्वेतांबरो याति । यथायं विप्रतारकः ॥ समक्षं सर्वलोकानां । पणस्तथा विधीयते ॥ १२ ॥ विमृश्येत्यूचतुर्विप्रौ । त्वं हारयसि चेन्मुने ॥ तदा निर्भर्त्स्यमानोऽसि । निष्कास्यो गुरुणा सह ॥ १३ ॥ हारयावो यदावां वा । जैनस्य पुरतस्तव ॥ भवावो भवतो नूनं । शिष्यौ ब्राह्मणजावपि ॥ १४ ॥ साधुः सागरवच्चश्च—द्गभीरो मतिवारिधिः ॥ अंगीचक्रे तयोर्वाक्यं । स्वं ज्ञानमप्रकाशयन् ॥ १५ ॥ जनाभ्यामपि कृत्वेति । पणं तावाहतुर्द्विजौ ॥ अथ त्वं पृच्छ भो साधो । त्वदिष्टं प्रश्नमावयोः ॥ १६ ॥ साधुना भाषितं पूर्वं । प्रश्नं पृच्छामि भो द्विजौ ॥ भमित्यभिहितं ताभ्यां । स्वोत्कर्षाच्चित्तकल्पितात ॥ १७ ॥ ततो वाचंयमोऽप्यूचे । निश्चेतुं पुरतो नृणां ॥ आवयोर्हि विवादेऽत्र । भवंत एव साक्षिणः ॥ १८ ॥ पुरैव पण एताभ्यां । कृतोऽस्ति भवतां पुरः ॥ तस्य निर्मित्यनिर्मित्यो—र्यूयमेव सभासदः ॥ १९ ॥

कथयित्वेति निश्चित्य । पौराणां पुरतो भृशं ॥ साधुस्त्रैकालिकज्ञान—विचक्षणोऽभ्यधत्तमां ॥ ॥ २० ॥ यदि युवां द्विजौ हंत । लोके पंडितमानिनौ ॥ युवां कुतः समायातौ । पृच्छामि युवयोः पुरः ॥ २१ ॥ तदोक्तं किमिदं पृष्टं । ज्ञातं वरं समेष्वपि ॥ शालिग्रामात्समायातौ । नैतावदपि बो-

उवाच सत्यकिर्दूरे । यदर्थं गम्यते जनैः ॥ यद्यवागेव तत्सिद्धि—र्दूरे तद्गमनेन किं ॥१००॥
सद्यो भविष्यतीहैव । युष्मत्प्रत्युत्तरं यदि ॥ तदानूचानपादांते । यानेन किं प्रयोजनं ॥ १ ॥ ततो
ममैव युष्माभिः । पृच्छ्यतां प्रश्नसंशयौ ॥ गुरौ सति वदेच्छिष्य—श्चेत्तत्प्रश्नोत्तरं वरं ॥ २ ॥ जनके
सति चेत्पुत्रो । नृपाले सति वा बलं ॥ श्वश्र्वां सत्यां स्नुषा यद्वा । कृत्यं करोति तद्वरं ॥ ३ ॥ यु-
ग्मं ॥ इति श्रुत्वा हसित्वा तौ । व्याचक्षातां मदोद्धतौ ॥ वर्तसे त्वं कियन्मात्रो । दक्षयोरावयोः
पुरः ॥ ४ ॥ त्वद्गुरूणां गुरुर्यः स्या—त्तेनापि प्राज्यबुद्धिना ॥ अस्मत्प्रश्नोत्तरं दातुं । न शक्यते म-
नागपि ॥ ५ ॥ ततस्तवैव संदेहो । यः कश्चित्स्याच्चिरंतनः ॥ वितंडावादमुश्रित्वा—स्माकं त्वं पृच्छ
तं शठ ॥ ६ ॥ मुनिरूचे द्विजातीयौ । माकार्ष्टमतिमानितां ॥ मदीयप्रश्ननिर्वाहो । युवाभ्यां न भ-
विष्यति ॥ ७ ॥ कोपाटोपेन तौ विप्रा—वूचतुर्यतिवेषभृत ॥ न भवेत्प्रश्ननिर्वाहो । भवेद्वा विदि-
तं कथं ॥ ८ ॥ चित्ते स्यात्तव संदेहः । प्रश्नोत्तरविनिर्मितौ ॥ कश्चिद्विधीयतां तर्हि । पणः समस्त-
साक्षिकं ॥ ९ ॥ वाचंयमस्तदाचख्यौ । ये भवंति मुमुक्षवः ॥ समस्ति सर्वथा नैव । तेषां पणप्र-
योजनं ॥ १० ॥ यदा कदाग्रहग्रस्तौ । हठात्कथयथो युवां ॥ एवमेवास्तु तद्विप्रौ । युवाभ्यामेव क-

निर्गछतोस्तयोः सार्थे । बद्वाद्या मिलिता जनाः ॥ निर्गतौ तौ निजोत्कर्षा—द्वार्तयंतौ च गछतः
॥ ८८ ॥ कश्चिद्वदति दर्पांधः । प्रकाम्यहं षडंगिकां ॥ कश्चिच्च चतुरो वेदान् । मीमांसामपि कश्च·
न ॥ ८९ ॥ आन्वीक्षिकीं पुनः कश्चि—द्धर्मशास्त्रं च कश्चन ॥ कश्चित्पुराणमित्याद्या । हृद्या वि-
द्याश्चतुर्दश ॥ ९० ॥ युग्मं ॥ विद्याविनोदवार्ताश्च । प्रकुर्वतां परस्परं ॥ अध्वन्यागछतां तेषां ।
न्यग्रोध एक आगतः ॥ ९१ ॥ तत्र मनोरमोद्यान—पार्श्ववर्तिवटद्रुमे ॥ श्रीनंदिवर्धनाचार्य—शि·
ष्यः स्थितोऽस्ति सत्यकिः ॥ ९२ ॥ श्रुतकेवलिवद् ज्ञानी । ध्यानी मौनी क्रियापरः ॥ दृष्टोऽयं प्र·
थमं मुरू—स्तं दृष्ट्वेत्यूचतुश्च तौ ॥ ९३ ॥ साधुस्तदाह के यूयं । युष्माभिः कुत्र गम्यते ॥ तावा·
हतुर्द्विजावावां । यावोऽनूचानसन्निधौ ॥ ९४ ॥ सत्यकिः सत्यकीतिश्च । सत्यवाचा विचार्यवक् ॥
यदि त्रयीमुखौ तर्हि । किंचित् स्थः पठितौ युवां ॥ ९६ ॥ तावूचतुर्विशेषेण । वेदाभ्यासविधायि·
नौ ॥ अपराण्यपि शास्त्राणि । विजानीवस्तपोधन ॥ ९७ ॥ मुनिः पुनरपि प्रोचे । धनयौवनगर्वि·
तैः ॥ श्रीआचार्यसमीपे च । भवद्भिर्गम्यते कथं ॥ ९८ ॥ तावाख्यातामर्मषेण । सार्धं त्वन्नंदिवर्ध·
नैः ॥ विद्यायाः कौशलं दृष्टुं । यावो वादचिकीर्षया ॥ ९९ ॥

र्वोऽपि नागरो लोक—स्तेनास्ति विप्रतारितः ॥ ७६ ॥ क्षमावहे तमावां न । व्रजावो युष्मदाज्ञया ॥ वादं विधाय जेष्यावो । तं मायाविसितांबरं ॥ ७७ ॥ अयं संस्थास्यति छित्रा—एयहान्यत्र पुरे यदि ॥ तदानेन जनः सर्वो । विभ्रमे पातयिष्यते ॥ ७८ ॥ आवां ततो वने गत्वा । वादेन सर्वसाक्षिकं ॥ तथा निर्भर्त्सयावस्तं । पाखंडिनमखंडितं ॥ ७९ ॥ यथापमानतो ग्रामा—दस्मात्प्रयाति सत्वरं ॥ स्याद्वादवादिनो जैना । अपि म्लानानना यथा ॥ ८० ॥ पितरावूचतुः पुत्रौ । युवां कलायुतावपि ॥ वादं श्वेतांबरैः सार्धं । मा कार्ष्टं हि कदाचन ॥ ८१ ॥ विद्यंते मंत्रतंत्रादि—विद्यास्तेषां किलार्हतां ॥ कौटिल्यमन्यदप्येषां । जीवितव्यविनाशनं ॥ ८२ ॥ वेदशास्त्रपरिभ्रष्टाः । सिद्धांताध्यायिनोऽनिशं ॥ निपुणाः परदेशेषु । परिभ्रमणनिर्मितौ ॥ ८३ ॥ तावूचतुरहंकारात । किं युवां पितरौ मुधा ॥ बिभीथो मलिनांगेभ्यो । धूर्तेभ्यस्तेभ्य उच्चकैः ॥ ८४ ॥ युष्माकं च प्रसादेन । यत्रैकोऽपि सुतो व्रजेत् ॥ ततो विवादिनो यांति । सिंहादिव मतंगजाः ॥ ८५ ॥ यत्रैतौ किं पुनर्दक्षौ । सुतौ द्वावपि गच्छतः ॥ श्वेतांबरोऽथवा तत्र । दिगंबरोऽस्तु दंभवाक् ॥ ८६ ॥ अस्मदग्रे कियन्मात्रो । वराको नंदिवर्धनः ॥ इत्यौ ताविति जल्पित्वा । निर्गतौ वारितावपि ॥ ८७ ॥ युग्मं.

त्स्यादीनां तदा ज्ञेय—मशैवं न कदाचन ॥ ६४ ॥ विशुद्धा ब्रह्मचर्येण । य एव निर्मला हि ते ॥
कथमुच्येत मालिन्य—साधनाद्वीलशालिता ॥ ६५ ॥ ये लाघवसमन्वीता—स्त एव तारका नृणां
॥ साधवो वहनप्राया । घोरसंसारवारिधौ ॥ ६६ ॥ वेदबाह्यास्त एव स्यु—र्ये यज्ञहिंसनोद्यताः ॥ म·
तिकल्पनया ये च । सम्यगर्थं विदंति न ॥ ६७ ॥ दयादमयुता जैनाः । संयमांचितचेतसः ॥ कथं
जीवदयाधर्मं । ब्रुवाणा वेदतो बहिः ॥ ६८ ॥ मिथोऽभवत्कियद्वेला । विवादं कुर्वतोस्तयोः ॥ मू·
र्खेण तेन किं वा वो । विप्राभ्यामिति चिंतितं ॥ ६९ ॥ एतेन माननीयेना—चार्येण गुरुणा स·
मं ॥ जयावो यदि वादेन । तदावयोर्यशो महत् ॥ ७० ॥ हृदये चिंतयित्वेति । सोमदेवद्विजांगजौ ॥
जिनधर्मानुरक्तं तं । सुश्राद्धं श्राद्धमूचतुः ॥ ७१ ॥ कदाग्रहेण चेत्ताव—कीना मतिर्द्विजेषु न ॥ त·
दा याहि त्वया सार्धं । मुधा प्रलपनेन किं ॥ ७२ ॥ गदित्वेत्यभिमानेन । विसृज्य श्रावकं च तं ॥
अग्निभूतिवायुभूती । जग्मतुः स्वनिकेतने ॥ ७३ ॥ अथैतौ स्वगृहं गत्वा । नत्वा च पितरौ मुदा ॥
विनयेन विनयोपेतौ । कथयामासतुः स्मयात् ॥ ७४ ॥ उद्यन्मनोरमोद्याने । दंभेन यतिवेषवान् ॥
आचार्यो नाममात्रेणा—गतोऽस्ति नंदिवर्धनः ॥ ७५ ॥ धवलांबरधारित्वा—ज्जैनमतप्ररूपिणा ॥ स-

तां भृशं ॥ ३७ ॥ वृंदारका इव प्रोद्य—द्वेषभूषणभूषिताः ॥ नरास्तथा च कामिन्यो । देवांगना इ-
वाबभुः ॥ ३८ ॥ एकतो मर्त्यवृंदं च । कामिनीवृंदमेकतः ॥ गुरुं नंतुं ततो याति । प्रीतिपूरितचे-
तसा ॥ ३९ ॥ लोकान् मनोज्ञनेपथ्या—भरणैर्भासितांस्ततः ॥ बहिस्तौ गछतो वीक्ष्य । श्राद्धं कं-
चिदपृछतां ॥ ४० ॥ किमद्येंद्रमहः किं वा । तमागस्य महो महान् ॥ कौमुदीयो महः किं वा ।
वर्तते नगराद्बहिः ॥ ४१ ॥ यत एते जना यांति । वस्त्राभूषणभूषिताः ॥ भ्रमतो बहिरुद्याने ।
किमस्त्यत्र हि कारणं ॥ ४२ ॥ श्राद्धोऽवग्भो ब्रह्मपुत्रौ । गुरुर्जैनः समागतः ॥ उद्याने हि पुरोपां-
ते । तस्य वंदनहेतवे ॥ ४३ ॥ पौराः सर्वेऽपि गछंति । मोदमेदुरमानसाः ॥ वर्यनेपथ्यभूषाढ्याः ।
परिवारसमन्विताः ॥ ४४ ॥ युग्मं ॥ श्रुत्वेति चित्रितौ चित्ते—ऽवदतां ब्रह्मपुत्रकौ ॥ भोः श्राद्ध को-
ऽस्ति ह्याचारो । गुरोर्जैनस्य तस्य च ॥ ४५ ॥ श्राद्धोऽवग्गुरवो जैनाः । प्रसिद्धा भूमिमंडले ॥ पं-
चमहाव्रतोपेताः । सकलारंभवर्जिताः ॥ ४६ ॥ येषां पुत्रकलत्रादिः । स्यादारंभपरिग्रहः ॥ गुरुंम-
त्यैश्च तैर्विश्वं । विश्वं खलु प्रतार्यते ॥ ६२ ॥ निष्कलत्राश्च निष्पुत्रा । निरारंभपरिग्रहाः ॥ संमताः
साधवो लोके । धर्ममार्गोपदेशकाः ॥ ६३ ॥ बहिःक्षालनतो यर्हि । निर्मलाः स्युः शरीरिणः ॥ म-

नेंद्रस्य । द्वादशस्य जिनेष्वपि ॥ भ्राजमानं तदा तीर्थं । समभूत्पापनाशनं ॥ २६ ॥ इतश्च भरत-
स्तस्य । शालिग्रामस्य सन्निधौ ॥ आस्ते मनोरमोद्यानं । हृद्यानंदप्रदं नृणां ॥ २७ ॥ सुमना इति
नामाभूद् । दक्षो रक्षोपकारकः ॥ तत्रैव समवासार्षी--दाचार्यो नंदिवर्धनः ॥ २८ ॥ याचित्वावग्रहं
योग्यं । वनपालस्य सन्निधौ ॥ विनेयैर्विनयानम्रै--स्तत्रोत्तीर्णो मुनीश्वरः ॥ २९ ॥ निःशेषशिक्षि-
तांगानां । शिष्याणां सौख्यशालिनां ॥ अधीत्यध्यापने दृष्ट्वा । वनपालोऽप्यमूमुदत ॥ ३० ॥ मो-
दमानेन नत्वा तं । श्रीगुरुं भक्तिपूर्वकं ॥ तेन पौरमनुष्याणां । तद्वर्धापनिका ददे ॥ ३१ ॥ तदा-
ननात्समाकर्ण्य । श्रीगुर्वागमनं वरं ॥ सुमतं धर्मिलोकानां । श्राद्धवर्गो मुदं दधौ ॥ ३२ ॥ प्रभूतं
वनपालस्य । दत्तुर्द्रव्यं पुरीजनाः ॥ डाग विवंदिषवोऽभूवन् । भक्तिरागानुषंगतः ॥ ३३ ॥ आक-
र्णितं यतो येन । ततः सोऽपि समुत्थितः ॥ निवासे स्वे समागत्य । प्रचक्रे विधिनार्चनं ॥ ३४ ॥
गजारूढा नराः केचित । केचिद्वाजिनमाश्रिताः ॥ रथारूढास्तथा केचित् । केचित्पादविहारिणः
॥ ३५ ॥ धर्मेण वंदितुं केचित् । केचित्कुलक्रमेण च ॥ प्रमदाप्रेरिताः केचित । केचित्सौहार्दयो-
गतः ॥ ३६ ॥ वंदनौत्सुक्यतो लोकाः । पथि संघट्टनीभृतः ॥ नगोयानकृतेऽवांछन् । स्वविद्याधर

तो मम ॥ वहन्निति स्मयं तत्र । सोमदेवोऽस्ति वाम्नवः ॥ १३ ॥ अग्निलेत्यभिधानेन । प्रसिद्धा त-
स्य कामिनी ॥ मानिनीमाननाशाय । रूपेण विधिना कृता ॥ १५ ॥ भुंजानयोर्मुदा भोगा—न-
नल्पद्रव्यपूर्णयोः ॥ कायादिकारणैः साध्यं । तद्गार्भाधानमादधत् ॥ १६ ॥ आधानसमये पूर्णे । सु-
षुवाते सुतौ तया ॥ अग्निभूतिर्वायुभूति—रित्याख्याश्च कृता तयोः ॥ १७ ॥ निर्गंधानि प्रसूनानि ।
यथा किंशुकशाखिनां ॥ न राजंते तथा विद्या—विहीनाः पूरुषा भुवि ॥ १८ ॥ ध्यात्वेत्यध्यापना-
र्थं ता—वुपाध्यायसमीपके ॥ विमुक्तौ तनयौ ताभ्यां । दूरामोच्यावपि क्षणं ॥ १९ ॥ पूर्वजन्मैक-
संस्कार—वशेनापठतां च तौ ॥ बहून्यन्यानि शास्त्राणि । वेदान् विशेषतः पुनः ॥ २० ॥ कन्ययो
रूपवत्योश्च । द्विजातिजातयोस्तयोः ॥ पितृभ्यां यौवने काले । कारितं करपीडनं ॥ २१ ॥ एकं रूपं
द्वितीयं तु । प्रभूतद्रव्यगर्विता ॥ ब्राह्मणेषु तृतीयं च । वेदादिपारगामिता ॥ २२ ॥ चतुर्थं भ्रातृ-
संयोगः । पंचमं यौवनं वरं ॥ षष्ठं ब्राह्मणजातिश्च । सप्तमं लोकमानिता ॥ २३ ॥ एतेष्वपि पदा-
र्थेषु । ह्येकोऽपि दुस्सहो भवेत ॥ किं पुनर्मिलिताः सप्त । न कस्य मदहेतवे ॥ २४ ॥ ततस्तौ द्वौ
मदोन्मत्तौ । गभीरवेदिनाविव ॥ भ्रमतश्चाभिमानेन । सर्वत्र ग्राम इच्छया ॥ २५ ॥ वासुपूज्यजि-

धिदुर्व्याध्यभावेन । पुष्टिमद्देहधारिणः ॥ १ ॥ काणाः कुब्जाः कुरूपाश्च । ये भविष्यंति देहिनः ॥
तेऽपि तदा सदाकाराः । सुरूपा वररोचिषः ॥ २ ॥ नागरा वरनागर्यो । मोदमेदुरमानसाः ॥ वि-
स्फुरिष्यंति गोविंद—राज्यादपि विशेषतः ॥ ३ ॥ रूपवती सचातुर्या । धनाढ्या कामिनीव हि ॥
पत्यागमे तथा द्वार—वती नूनं तदागमे ॥ ४ ॥ सचेतना अचैतन्याः । पदार्थाः सकला अपि ॥
सुभगत्वं धरिष्यंति । त्यक्त्वा दुर्भगतां निजां ॥ ५ ॥ वैरिणापहृतस्याशु । सुरेण धूमकेतुना ॥ शु-
द्ध्यै कृष्णकुमारस्य । स्नेहेन मुनिरागतः ॥ ६ ॥ हर्षोत्कर्षकरं तस्य । श्रुत्वा स्वरूपमद्भुतं ॥ प्रजज-
ल्प जिनाधीशं । सार्वभौमः सविस्मयः ॥ ७ ॥ तथा प्रोक्तं समासेना—कर्णितं तन्मया विभो ॥
विस्तरेण प्रजल्पास्य । स्वरूपं पूर्वजन्मनः ॥ ८ ॥ ईदृग्भाग्योदयस्तस्या—बाल्यादप्यभवत्कथं ॥
कथं वा तेन देवेन । सार्धं वैरं दुरासदं ॥ ९ ॥ पुनरप्युदिते सार्व—भौमेनेति मनीषिणा ॥ जि
नोऽवग् नरदेव त्वं । यदीच्छसि तदा शृणु ॥ १० ॥ जंबूद्वीपे क्षितिख्याते । समाश्रिते सुपर्वभिः ॥
पवित्रे भरतक्षेत्रे । देशोऽस्ति मगधाभिधः ॥ ११ ॥ शालिभिः पत्रिभिस्तत्र । शालिलक्ष्मीश्च देश-
के ॥ वशालिगीतगानेन । शालिग्रामोऽस्ति शोभनः ॥ १२ ॥ ब्रह्मबीजप्रसूतोऽहं । जातिर्ज्येष्ठा त-

त्कः षोमशन्निर्वाणैः । षोडशभिश्च हायनैः ॥ हृद्यविद्याद्वयीप्रोद्य—त्स्त्रीभूत्पित्रोर्मिलिष्यति ॥ ९० ॥
लक्षणानि भविष्यंत्य—मूनि तस्य समागमे ॥ चमत्कारकराणि च । तान्याकर्णय भूपते ॥ ९१ ॥
कदापि फलदातारो । येऽभविष्यन्न पादपाः ॥ फलानि तेऽपि दास्यंति । महांति तत्समागमे ॥ ९२ ॥
तानि ये ददतोऽभूवन् । दास्यंति ते विशेषतः ॥ फलदा इति सौवाख्यां । सत्यीकर्तुमिवावनौ
॥ ९३ ॥ सौख्यानि वर्धमानानि । भविष्यंति पुरीनृणां ॥ न्यायव्यापारयोगेन । वर्धिष्यंते धनानि
च ॥ ९४ ॥ चित्तं चंचलमप्युच्चै—श्चित्तादपि विलोचने ॥ लोचनाभ्यां सुखं तस्या—तुच्छं सा ल-
प्स्यते तदा ॥ ९५ ॥ मेघवृष्ट्याहृतपुष्प—कदंबशाखिनो यथा ॥ भविष्यंति तद्रोम—राज्यो
ह्यभ्युष्टकोटिकाः ॥ ९६ ॥ चंद्रं दृष्ट्वा समुद्रस्य । वेलायाः संभवो यथा ॥ रुक्मिण्याः स्तनजो भा-
वी । प्रस्तावो वीक्ष्य तं तदा ॥ ९७ ॥ प्रवर्तते पुरा येषां । प्रीतिः कृत्रिमतान्विता ॥ पयसि सा स्थि-
तिरिव । तन्मिलिता भविष्यति ॥ ९८ ॥ विरोधो जायमानोऽभू—द्येषां प्रीतौ परस्परं ॥ स चापि
विलयं तेषां । प्रयास्यत्यविलंबितं ॥ ९९ ॥ नवपल्लवनत्वेन । सर्वेऽपि फलिनो द्रुमाः ॥ तेषां च
भक्षणत्वेन । तिर्यंचोऽपि सपुष्टयः ॥ १०० ॥ तेषां दधिपयःपान—सर्पिः स्वदनतो द्रुतं ॥ आ-

मानस्तंभनात्प्रात—स्तेजस्वी ददृशे शिशुः ॥ ७८ ॥ विमानात्स समुत्तीर्य । तं समादाय बालकं ॥
पत्न्याः कमलमालाया । अपुत्रिण्याः समर्पितः ॥ ७९ ॥ वर्ततेऽस्य सुताः पंच—शतानि शौर्यशा-
लिनः ॥ तेभ्योऽयं पालनत्वेन । हीनो विचिंतयिष्यते ॥ ८० ॥ भविष्यति तदा दुःखं । महीयो
मम मानसे ॥ तत्सोढुं शक्यते नैव । ततोऽस्याग्रहणं वरं ॥ ८१ ॥ चिंतयंतीति दुःखेन । पुत्रस्या-
त्मन्यसंभवात् ॥ पतिना दीयमानं तं । बालकं नाग्रहीदियं ॥ ८२ ॥ तदा जगाद तां पत्नीं । वि-
द्याभृत्कालसंवरः ॥ कथं प्रिये न गृह्णासि । बालकमेनमद्भुतं ॥ ८३ ॥ ततः कमलमालोचे । स्वा-
मिंस्तव सुता मताः ॥ संति पंचशतीमानाः । पुरस्तेषामयं च किं ॥ ८४ ॥ मया स्वीकृतमेतं च ।
पुत्रं त्वं मन्यसे न हि ॥ तदा तु प्रत्युत क्लेशः । स्वीकृत एव केवलं ॥ ८५ ॥ श्रुत्वेत्यूचे स य-
द्येवं । त्वच्चित्तेऽस्ति विचारणा ॥ भूयादद्यप्रभृत्यस्य । यौवराज्यं मयार्पितं ॥ ८६ ॥ उक्त्वेति मुख-
तो बालं । तिलकेन समर्च्य च ॥ यौवराज्यसुतत्वेन । स्वस्त्रियस्तेन सोऽर्पितः ॥ ८७ ॥ एवं स पु-
त्रवत्तत्र । पाल्यमानस्तया मुदा ॥ सुखेन वर्धते स्मापि—राबाल्यादपि सोऽर्कवत् ॥ ८८ ॥ पुण्या-
त्संकेतमात्रेण । ख्यातं नाम द्विनौ सतां ॥ प्रद्युम्न एव तत्रापी—तीव तया ददेऽभिधा ॥ ८९ ॥ यु-

॥ ६६ ॥ पृष्टे सतीति षट्खंड—जर्वा शुश्रूषया तदा ॥ जिनेन्न जगदे यर्हि । शुश्रूषा ते तदा शृ·
णु ॥ ६७ ॥ कृष्ण इत्याख्यया ख्यातो । द्वारवतीपुरीपतिः ॥ तस्यास्ते रुक्मिणी देवी । देवीरूपा·
धिकद्युतिः ॥ ६८ ॥ तया प्रासूयतादित्य—प्रद्योतप्रस्फुरद्वपुः ॥ तनयो विनयोपेत । आजन्मतोऽपि
भाग्यवान् ॥ ६९ ॥ तद्वर्धापनिकां दातु—मागुर्दास्यस्तदंतिके ॥ तेन तासां ददेऽदभ्रं । द्रविणं
निरुपद्रवं ॥ ७० ॥ संजाते दिवसे षष्टे । निजांगजदिदृक्षया ॥ रुक्मिणीनिलयं प्रीत्या । जग्मिवा·
न् पुरुषोत्तमः ॥ ७१ ॥ विनयः प्रतिपत्तिश्च । विष्णोस्तयापि निर्मिता ॥ स्थित्वा सोऽपि सुतं तत्रा—
नाययद्दर्शनोत्सुकः ॥ ७२ ॥ रुक्मिण्यापि स्वहस्ताभ्यां । पुंडरीकाक्षहस्तयोः ॥ चिंतामणिरिवात्मी·
यः । सुतो दत्तः समीक्षितुं ॥ ७३ ॥ द्योतयंतं दिशः स्वांग—द्युतिभिर्वीक्ष्य भानुवत् ॥ भूयात्प्रद्यु·
म्ननामाय—मित्युक्त्वा तं ददौ हरिः ॥ ७४ ॥ द्राक् प्रतिदीयमानं तं । रुक्मिणीकरयोः शिशुं ॥
जह्रे प्राग्जन्मवैरेण । विचालाधूमकेतुना ॥ ७५ ॥ हृत्वा विद्वेषतस्तेन । गते वैताढ्यपर्वते ॥ टंका·
ख्यायाः शिलायाश्चो—परि मुक्तः स मृत्यवे ॥ ७६ ॥ तस्यायुषा शिशोस्तत्रा—गमद्विद्याधराधिपः
॥ कालसंवरसंज्ञाको । युक्तः कमलमालया ॥ ७७ ॥ विद्याधराधिपेनात्म—नगरंप्रति गच्छता ॥ वि·

श्रीवीरश्चरमो जिनः ॥ ५६ ॥ एतेभ्यः सर्वसार्वेभ्यः । आयुषा वपुषा पुनः ॥ विज्ञेया इतरे लोकाः । किंचिदाधिक्यधारिणः ॥ ५७ ॥ मर्त्याः शतायुषः सप्त—हस्तोच्चाः पंचमे त्वरे ॥ षष्ठे षोडशवर्षायु—र्धरा द्विहस्तकोन्नूयाः ॥ ५८ ॥ तीर्थस्य नेमिनाथस्य । वर्तमानतया त्वयं ॥ दशधनुःप्रमाणांगो । विद्यते मुनिनारदः ॥ ५९ ॥ जिनमत्यदधचक्र—वर्ती स्वामिन्नसौ मुनिः ॥ कथमत्र समायातो । दुर्लभ्ये पादचारिणां ॥ ६० ॥

उवाच भगवान् जंबू—द्वीपदक्षिणभारते ॥ नवमो वासुदेवोऽस्ति । कृष्णाख्यो धर्मध्यानवान् ॥ ६१ ॥ तत्पुत्रो जातमात्रश्च । केनापि वैरतो हृतः ॥ तस्य शुद्धिं समादातु—मयमेतोऽस्ति मंतिके ॥ ६२ ॥ शुद्धस्य ब्रह्मचर्येण । देशवैरत्यधारिणः ॥ एतस्य विद्यते विद्या । विहायोमार्गगामिनी ॥ ६२ ॥ परिभ्रमति सर्वत्र । हृद्यया विद्यया तया ॥ अस्यार्गला भयो वा न । वर्ततेंनःपुरेष्वपि ॥ ॥ ६३ ॥ भगवद्भाषितं श्रुत्वा । वचनं रचनांचितं ॥ स्थितिं कृष्णस्य शुश्रूषुः । सार्वभौमो व्यजिज्ञपत् ॥ ६४ ॥ नवमो वासुदेवोऽयं । त्रिखंडप्रभुतायुतः ॥ महाबाहुर्बलोपेतः । संभवेद्विष्णुभावतः ॥ ॥ ६५ ॥ किं नाम का पुरी तस्य । तत्सुतोऽपहृतः कथं ॥ केन प्राग्जन्मवैरेण । तत्सर्वं मे प्रसादय

वितव्यो जगत्प्रभुः ॥ सप्ततिधन्वमानांगो । वासुपूज्यो जिनो बभौ ॥ ४४ ॥ षष्टिवर्षलक्षायुष्को । विमलो विमलोदयः ॥ षष्टिकोदंडमानांगो । बभूव जगदीश्वरः ॥ ४५ ॥ त्रिंशल्लक्षशरन्मान–जीवितोऽनंततीर्थपः ॥ पंचाशद्धन्वमानेन । शरीरेण व्यभासत ॥ ४६ ॥ दशहायनलक्षायु—र्धर्मको धर्मबोधिदः ॥ अशोभततरां पंच—चत्वारिंशद्धनुस्तनुः ॥ ४७ ॥ एकवर्षलक्षायुष्कः । शांतिकृच्छांतितीर्थपः ॥ चत्वारिंशद्धनुर्मानं । शरीरमदधत्तमां ॥ ४८ ॥ कुंथुर्नवनवत्यब्द—सहस्रायुर्जिनाधिपः ॥ पंचत्रिंशद्धनुर्मान—वपुषाशोभयद्भुवं ॥ ४९ ॥ अरोऽर्हंश्चतुरशीति—शरत्सहस्रजीवितः ॥ त्रिंशद्धनुःप्रमाणेन । शरीरेण विराजितः ॥ ५० ॥ श्रीमल्लिः पंचपंचाश—द्वर्षसहस्रजीवितः ॥ पंचविंशतिकोदंड—मानेन वपुषा बभौ ॥ ५१ ॥ त्रिंशद्वर्षसहस्राणां । मानेन जीवितान्वितः ॥ विंशतिधन्वमानांगः । सुव्रतो मुनिसुव्रतः ॥ ५२ ॥ दशवर्षसहस्राणां । मानेन जीविताश्रितः ॥ पंचदशधनुस्तुंगो । नमिर्जिनोऽजनि क्षितौ ॥ ५३ ॥ अब्दैरेकसहस्रेण । मितेन जीवितेन च ॥ दशधन्वप्रमाणेन । देहेन नेमिराबभौ ॥ ५४ ॥ एकशतशरन्मान—जीवितव्येन संयुतः ॥ नवहस्तप्रमाणांगः । श्रीपार्श्वः समजायत ॥ ५५ ॥ द्वासप्ततिशरदायु—र्बभूव त्रिदशार्चितः ॥ सप्तहस्तप्रमाणांगः ।

क्रिणः ॥ ३१ ॥ एवं जनाश्चतुर्थारे । कल्पद्रुमफलाशनाः ॥ पूर्वकोटिमितायुष्का । पंचधनुःशता-
त्र्याः ॥ ३२ ॥ वृषभश्चतुरशीति—लक्षपूर्वायुरीश्वरः ॥ पंचधनुःशतोत्तुंग—शरीरेण व्यभासत ॥
॥ ३३ ॥ द्वासप्ततिपूर्वलक्षा—युरासीदजितो जिनः ॥ सार्धचतुःशतधनुः—प्रमाणवपुरन्वितः ॥३४॥
पूर्वाणां षष्टिलक्षेण । प्रमितं जीवितं दधौ ॥ चतुःशतधनुर्मान—वपुश्च संभवो विभुः ॥ ३५ ॥ पं-
चाशत्पूर्वलक्षायुः—समन्वितोऽभिनंदनः ॥ सार्धत्रिशतकोदंड—प्रमाणदेहधारकः ॥ ३६ ॥ चत्वा-
रिंशल्लक्षपूर्वा—युष्कः सुमतिबोधिदः ॥ धनुस्त्रिशतमानांगो । बभूव सुमतिप्रभुः ॥ ३७ ॥ त्रिंशल्ल-
क्षपूर्वजीवि—तव्यः पद्मप्रभः प्रभुः ॥ सार्धद्विशतकोदंड—प्रमाणदेहधारकः ॥ ३८ ॥ विंशतिलक्ष-
पूर्वायु—र्मितः सुपार्श्वतीर्थपः ॥ धनुर्द्विशतमानांगो । विरराज महीतले ॥ ३९ ॥ दशलक्षपूर्वायु-
ष्को—ऽभवच्चंद्रप्रभः प्रभुः ॥ सार्धशतधनुस्तुंग—शरीरेण समन्वितः ॥ ४० ॥ सुविधिः सुविधिः
सार्वो । द्विलक्षपूर्वजीवितः ॥ धनुःशतप्रमाणांग—मुच्चत्वेन दधार च ॥ ४१ ॥ एकलक्षपूर्वायुष्कः
। शीतलः शीतलद्युतिः ॥ धनुर्नवतिमानांग—वानभूदर्हदुत्तमः ॥ ४२ ॥ वर्षाणां चतुरशीति—श-
तसहस्रजीवितः ॥ अशीतिधनुर्मानांगः । श्रेयांसः श्रेयसान्वितः ॥ ४३ ॥ द्वासप्ततिवर्षलक्ष—जी-

मनुष्ययोनिसंभूतो । नाम्नायं नारदो मुनिः ॥ विख्यातो ब्रह्मचर्यस्य । गुणेन व्रजतीच्छया ॥ २० ॥
तपस्वीव विरक्तोऽपि । विष्णुना सह तुष्टिमान् ॥ चित्रं तस्य तनूजस्य । शुद्धिं पृष्टुमिहागतः ॥२१॥
समाकर्ण्यार्हतो वाक्यं । सार्वभौमो व्यजिज्ञपत ॥ ईदृशाः संति किं मर्त्या । भरतक्षेत्रसंभवाः ॥२२॥
केवलज्ञानविज्ञात—लोकालोकस्वरूपकः ॥ तदा जगौ जिनो राजन् । स्वरूपं भारतं शृणु ॥२३॥
तत्र कालोऽवसर्पिण्यु—त्सर्पिणीभेदतो द्विधा ॥ विंशत्या कोटीनां चापि । सागराणां स पूर्यते ॥
॥ २४ ॥ अराः षडवसर्पिण्या—मुत्सर्पिण्यां षडेव ते ॥ विपरीता इति काल—चक्रं द्वादशभिस्त्वरैः
॥ २५ ॥ एकांतसुखमारोऽत्र । स्याच्चतुःकोटिकोटिमान् ॥ सुखमा सागराणां तु । त्रिकोटिकोटिटंकि-
तः ॥ २६ ॥ संयुक्तः सुखदुःखाभ्यां । सुखमादुःखमारकः ॥ द्विचत्वारिंशदब्दानां । सहस्रैरूनितो
यतः ॥ २७ ॥ दुःखमा त्वेकविंशत्या । सविंशत्या सहस्रकैः ॥ संभवेद् दुःखमारोऽप्ये—कविंशति-
सहस्रकैः ॥ २८ ॥ तत्रारे प्रथमे मर्त्या—स्त्रिपल्योपमजीविनः ॥ त्रिगव्यूतितनूच्छाया । दिनत्रित-
यभोजिनः ॥ २९ ॥ द्वितीयस्मिन् भवेयुस्ते । द्विपल्यप्रमितायुषः ॥ द्विगव्यूतिशरीराश्च । वासरद्वय-
भोजिनः ॥ ३० ॥ तृतीयस्मिन्नरे मर्त्या । एकपल्योपमायुषः ॥ एकगव्यूतिमानांगा । एकवासरभ-

थयिष्याम्यहं शुद्धिं । युवयोस्तनयस्य हि ॥ दत्ता गोविंदरुक्मिण्यो—रिति वाचा मुधा भवेत ॥
॥ ८ ॥ विमृश्यति ततस्तीर्थ—नाथसिंहासनादधः ॥ स्वकीयजीवरक्षार्थं । प्राविशन्नारदो मुनिः ॥
॥ ९ ॥ तावत्तत्र समायातो । जिनधर्मपरायणः ॥ पद्मनाभश्चक्रवर्ती । पार्श्वे सीमंधरप्रभोः ॥ १० ॥
नत्वा स देशनां श्रोतुं । यावत्तत्र स्थितो मुदा ॥ सिंहासनादधस्ताव—दहष्टचरमैक्षत ॥ ११ ॥ च-
क्रवर्ती तमालोक्या—दृष्टाचरशरीरिणं ॥ विस्मयाकुलितस्वांत—श्चिंतयामास चेतसि ॥ १२ ॥ दे-
वो वा मानवो वासौ । किं तिर्यङ्नारकोऽथवा ॥ चतुर्गतिविचालेषु । कीदृग्स्वरूपकोऽस्त्यसौ ॥ १३ ॥
एवं विमृशता तेन । विस्मयव्याप्तचेतसा ॥ मनुष्योऽपि गृहीतोऽसौ । पक्षीव स्वकरांबुजे ॥ १४ ॥
समादाय करे बालं । इव तं शालभंजिकं ॥ तस्य सर्वमपि देहं । भूपतिस्तु व्यलोकयत् ॥ १५ ॥
अस्ति का जातिरेतस्य । का योनिर्वास्य कथ्यते ॥ इति चिंतयतस्तस्य । प्रादुर्भूता मतिर्वरा ॥ १६ ॥
त्रिकालसंशयानां च । हारके सति बोधिदे ॥ मयका मूढभावेन । कल्पना क्रियते मुधा ॥ १७ ॥
चित्ते तेन विमृश्येति । पप्रच्छ जगदीश्वरः ॥ चतसृणां गतीनां च । मध्ये किंगतिकोऽस्त्यसौ ॥ १८ ॥
इत्युक्ते सार्वभौमेन । बभाण भगवान् वचः ॥ स्वरूपं श्रोतुकामश्चे—देतस्य त्वं तदा शृणु ॥ १९ ॥

शेषदोषहारी त्वं । वर्तसे सद्गुणैः सह ॥ स तु दोषाकरो ज्ञातो । ह्युपमीयेत किं त्वया ॥ ९३ ॥
प्रकाशी सूक्ष्मवस्तूनां । विकाशी नृसरोरुहां ॥ उदासीतसमस्ताप—ह्रासीकृतसुरोऽसि च ॥९४॥ निः-
शरण्यस्य मर्त्यस्या—सि त्वं शरणकारणं ॥ अतीतानागतवर्त—मानसंशयहारकः ॥ ९८ ॥ संसारे
बह्वो देवा । देवशब्दस्य वाचकाः ॥ लोकसंतापकत्वेन । जाता एकारवर्जिताः ॥ ९९ ॥ संसार-
तारणान्नाथ । देवस्त्वमेव वर्तसे ॥ दीनोद्धारविधानेन । त्वमेव करुणापरः ॥ ५०० ॥ देवानां दे-
वनाथानां । वृंदारकगुरोरपि ॥ असुराणां तदीशानां । नासन् ये स्तुतिगोचराः ॥ १ ॥ तान् गुणा-
न् योगिनामप्य—नवकाशान् महीयसः ॥ मंदधीरेकजिह्वोऽपि । कथं स्ताद्वदितुं क्षमः ॥ २ ॥ अ-
नंतगुणयुक्तोऽप्य—नंतज्ञानधरोऽपि च ॥ अनंतदर्शनोऽपि च । चित्रं धरसि मत्स्तुतिं ॥ ३ ॥ इ
ति नानाप्रकारेण । स्तुत्वा नत्वा च तीर्थपं ॥ स्थितवानुचितस्थाने । नारदो विनयान्वितः ॥ ४ ॥
अत्रत्यानां मनुष्याणां । धनुषां पंचभिः शतैः ॥ प्रमितानि शरीराणि । वर्तंते सदराणि च ॥ ५ ॥
वर्ते दशधनुर्मान—शरीरोऽहं तु मानवः ॥ ततोऽमीषां पदाहत्या । मरिष्याम्यत्र कीटवत् ॥ ६ ॥ ए-
षां वा पदघातेन । सीमंधरजिनांतिके ॥ म्रियेयदा तदा सम्य—गाराधको भवाम्यहं ॥ ७ ॥ क

वी युगलसंयुक्ता । अभयांकुशधारिणी ॥ पाशमकरहस्ता च । तिष्ठति हैमवप्रके ॥ ८१ ॥ सुरास्तु-
त्वरुखट्वांग—कपालिनम्रमौलयः ॥ तृतीयवप्रतो बाह्ये । तिष्ठंति द्वारपालकाः ॥ ८२ ॥ प्रोक्ताया र-
चनायाश्च । स्वनेत्राभ्यां प्रदर्शनात ॥ शोभां समवसरणे । व्यजानादधिकां मुनिः ॥ ८३ ॥ धन्यो-
ऽहं भरतक्षेत्रे । मया येन समेत्य च ॥ दृष्टाऽदृष्टचरी चारु । रचनेयमिहाद्भुता ॥ ८४ ॥ वरं दै-
त्यारिणा सार्धं । मैत्री मे समजायत ॥ वरं तस्यापि पुत्रस्या—पहारो दुःखकारकः ॥ ८५ ॥ यत-
स्तस्य विशुद्ध्यर्थ—महमत्र समागतः ॥ समेतेन मया दृष्टः । श्रीसमवसृतौ प्रभुः ॥ ८६ ॥ प्रदक्षि-
णात्रयीं दत्वा । कृत्वा च मस्तकेंजलिं ॥ सीमंधरजिनाधीशं । मुनिः स्तोतुं प्रचक्रमे ॥ ८७ ॥ श्री-
सीमंधर सार्वाय । सर्वापायनिवारिणे ॥ स्मरगर्वविनाशाय । सुपर्वसुखदायिने ॥ ८८ ॥ संसारस्थि-
तिमुक्ताय । विविक्ताय भवावने ॥ प्रभूतज्ञानयुक्ताय । संसिक्ताय शमामृतैः ॥ ८९ ॥ भूयोदेवा-
धिदेवाय । कृतसेवाय वासवैः ॥ प्रणमन्नरदेवाय । श्रितदेवाय ते नमः ॥ ९० ॥ यद्यपि ज्योति-
षामिंद्रः । कलावानस्ति चंद्रमाः ॥ तथापि स्वकलंकं स । न हि स्फेटयितुं क्षमः ॥ ९१ ॥ मनु-
ष्यलोकजातोऽपि । त्वं भवाब्धिंऽतोज्झितः ॥ देवासुरमनुष्याणां । कलंकं हरसे द्रुतं ॥ ९२ ॥ निः-

त्तोरणत्रितयं ततः ॥ कुर्वंति व्यंतरास्तत्र । धूपघटीत्रयं तथा ॥ ६९ ॥ सहस्रयोजनदंडा—श्चत्वारः
संति केतवः ॥ वर्धमानगजासिंह—सत्कुंभादिसमन्विताः ॥ ७० ॥ मानमेतदशेषं च । ज्ञेयं सूत्रो-
दितं बुधैः ॥ प्रभुः प्रदक्षिणावर्त—स्तिष्ठत्येवासने वरे ॥ ७१ ॥ श्रीतीर्थाधिपतिः पाद—पीठस्था-
पितपादकः ॥ तीर्थाय नम उक्त्वेति । धर्मं वदति पर्षदि ॥ ७२ ॥ मुनिर्वैमानिकी साध्वी । ह्या
ग्नेय्यां विदिशि स्थिताः ॥ भवनज्योतिर्व्यंतर—योषित्तिष्ठति नैरृतौ ॥ ७३ ॥ भवनव्यंतरज्योति—
र्देवा वायुविदिक्श्रिताः ॥ वैमानिकेशमर्त्यस्त्री—वर्ग ईशानकोणके ॥ ७४ ॥ साध्व्यो देव्यश्चत-
स्रोऽपि । शृण्वंत्यूर्ध्वस्थिता वृषं ॥ साधुमर्त्यस्त्रियो देवाः । स्थिताः प्रथमवप्रके ॥ ७५ ॥ तथा द्वि-
तीयवप्रांत—स्तिर्यंचः सकला अपि ॥ अधस्तृतीयवप्रांते । तिष्ठति वाहनादिकं ॥ ७६ ॥ भवेतां
चतुरस्रे च । द्वे वाप्यौ च मनोरमे ॥ एकैका वापिका वृत्ता । विभाति कोणसंस्थिता ॥ ७७ ॥ पी-
तवर्णाः सुराः श्वेता । व्यंतरास्तत्र वप्रके ॥ ज्योतिष्का भवनाधीशा । रक्तश्यामलवर्णकाः ॥ ७८ ॥
धनुर्दंडसमन्वीतौ । सोमयमौ च निर्जरौ ॥ पाशगदाकरौ ज्ञातः । पाशिवैश्रमणाभिधौ ॥ ७९ ॥
नामतो जयविजयौ । देवौ जितपराजितौ ॥ वलक्षारुणपीताभ्र—श्यामद्युतिविराजितौ ॥ ८० ॥ दे-

षड्धनुःशतमानैक—त्रिंशत्प्रजनितांतरा ॥ धनुर्द्वौ रत्निसंयुक्तै—र्द्वारैर्वप्रा विराजिताः ॥ ५७ ॥ एकधनुःशतस्फाराः । प्राकाराश्चतुरस्रके ॥ सार्धक्रोशांतरान्वीताः । प्रमाच्च द्वितीयाद्यतः ॥ ५८ ॥ द्वितीयाच्च तृतीयस्मा—त्क्रोशांतरं प्रवर्तते ॥ स्वरूपं पूर्ववद्वेष—मन्यद् ज्ञेयं विचक्षणैः ॥ ५९ ॥ सोपानैर्दशसहस्रैः । प्रथमो भाति वप्रकः ॥ यो निःश्रेणिरिव ख्यातो । लोकानां मुक्तिगामिनां ॥६०॥ द्वात्रिंशद्धन्वनिर्गत्वा । समा भूमिः प्रवर्तते ॥ पंचसहस्रसोपानै—र्द्वितीयो भाति वप्रकः ॥ ६१ ॥ गत्वा धनूंषि पंचाश—त्ततरा प्रविराजते ॥ पंचसहस्रारोहणै—स्तृतीयोऽप्यस्ति वप्रकः ॥ ६२ ॥ षड्धनु शतकैरेकं । शोभनं पीठमद्भुतं ॥ चतुर्द्वारं ससोपानं । मध्ये पीठं मणीमयं ॥ ६३ ॥ जिनदेहप्रमाणेन । समं तच्च विराजते ॥ धनुःशतं च दीर्घं त—त्सार्धक्रोशद्वयान्वितं ॥ ६४ ॥ द्वादशगुणमुच्चं स्या—ज्जिनेश्वरशरीरतः ॥ अधिकयोजनं पृथु । चाशोकपादपारुणं ॥ ६५ ॥ देवछंदो भवेत्तत्र । चतुःसिंहासनान्वितः ॥ पादपीठसमन्वीतः । संस्थातुं जगदीशितुः ॥ ६६ ॥ रेजे तदुपरि छत्र—चतुष्टयं ध्वजान्वितं ॥ प्रतिरूपद्विकं चाष्ट । द्वे द्वे चामरधारिणः ॥ ६७ ॥ पुरो हेमारविंदस्थं । धर्मचक्रचतुष्टयं ॥ सछत्राः कलशाः केतु—पांचाल्यादिविभूषणाः ॥ ६८ ॥ प्रतिद्वारं मणिभ्राज—

स्वकीयेन विमानेन । गच्छतस्तस्य वर्त्मनि ॥ सुरस्थानं समायात—श्चंचच्चामीकराचलं ॥ ४५ ॥
शर्वरीभवनात्तत्र । निशायां नारदः स्थितः ॥ प्रातर्देवान्नमस्कृत्य । चारणर्षिश्च सोऽचलत् ॥ ४६ ॥
शीघ्रं गच्छंश्च यानेन । नगरीं पुंडरीकिणीं ॥ संप्राप्तो नारदर्षिः श्री—सीमंधरांह्रिपाविता ॥ ४७ ॥
तत्र श्रीतीर्थनाथानां । केवलज्ञानधारिणां ॥ मनःपर्यायसंयुक्ता—वधिज्ञानविराजिनां ॥ ४८ ॥
अन्येषामपि साधूनां । तपोज्ञानक्रियावतां ॥ साध्वीनां श्रावकश्राद्धी—वर्गस्य धर्मिणस्तथा ॥४९॥
चक्रवर्तिवासुदेव—बलदेवान्यभूभुजां ॥ कदापि विरहो नास्ति । प्रभूतानां च शर्मणां ॥ ५० ॥
त्रिभिर्विशेषकं ॥ यत्र सीमंधरस्वामी । यावत्तत्र गतो मुनिः ॥ तेनेक्षिता समवसृ—त्यपूर्वरचना
दृशा ॥ ५१ ॥ आयोजनं क्षमा वायु—कुमारैर्निजभक्तितः ॥ संवर्तनसमीरेण । शोधिता भाति
सर्वतः ॥ ५२ ॥ सुगंधमुदकं तत्र । वर्षत्यब्दकुमारकाः ॥ वैमानिकाः सुमव्यूहं । रत्नानि व्यंतरासु-
राः ॥ ५३ ॥ वप्रा अभ्यंतरे मध्ये । बहिस्त्रयो विभांति च ॥ मणिरत्नसुवर्णानां । कपिशीर्षसमन्वि-
ताः ॥ ५४ ॥ रत्नसुवर्णरूप्यानां । संदोहरचनान्विताः ॥ कृता वैमानिकामर्त्य—ज्योतिष्कभवनामरैः
॥ ५५ ॥ द्वात्रिंशदंगुलात्रिंश—द्धनुःपृथुलतान्विताः ॥ वृत्ते समवसरणे । धनुःपंचशतोन्नयाः ॥५६॥

जितोऽपि जीयते न च ॥ यस्मिन् भविष्यति स्थाने । सौख्यवानेव तत्र सः ॥ ३३ ॥ पुत्रदुःखनि
राकारि । श्रुत्वा नारदभाषितं ॥ बभाण रुक्मिणी स्वामिन् । प्रमाणं वचनं तव ॥ ३४ ॥ किंचिच्छो-
कनिवृत्तां तां । ज्ञात्वा वचनचेष्टया ॥ प्रत्ययोत्पादनार्थं च । जजल्प नारदो मुनिः ॥ ३५ ॥ सम-
भूदतिमुक्तर्षि—र्ज्ञानी निखिलवस्तुवित ॥ कंसस्य सोदरः सोऽपि । महानंदपदं दधौ ॥ ३६ ॥
श्रीमन्नेमिजिनोज्ञान—त्रयीयुक्तोऽत्र सांप्रतं ॥ नासौ तं भाषते सत्य—वचनोऽपि गभीरधीः ॥३७॥
ततस्तव तनूजस्य । शुद्धिप्रश्नाय रुक्मिणि ॥ यास्यामि प्राग्विदेहेऽहं । दुर्लंघ्ये पादचारिणा ॥३८॥
नगरी पुंडरीकिण्य—स्ति तत्र नगरीवरा ॥ श्रीमान् सीमंधरस्वामी । तत्रास्ते विहरन् जिनः ॥३९॥
तत्र गत्वा समाचारं । तव पुत्रस्य शुद्धिजं ॥ समानीय दास्यामि । ज्ञेयमत्र दृढं वचः ॥ ४० ॥
तदाह रुक्मिणी तात । परोपकारकर्मठं ॥ तव वाक्यं हि कल्याणं । भूयात्तेन ममापि तत् ॥ ४१ ॥
इत्युक्तवचनां किंचि—न्मुक्तशोकां च रुक्मिणीं ॥ आश्वास्य वचनैर्मृष्टै—र्नारदस्तत उत्थितः ॥
॥ ४२ ॥ समुत्थाय विमानं च । कृतमारुह्य विद्यया ॥ मार्गे कुतूहलं पश्यन् । सोऽचलद्गगनाध्वना
॥ ४३ ॥ विमानं गच्छदाकाश—मार्गे दृष्टं सुरैरपि ॥ सहसादृश्यतां प्राप्तं । वृंदारकविमानवत् ॥४४॥

म्यहं शुद्धि—मेवानवद्यविद्यया ॥ २१ ॥ तदोचे रुक्मिणी तात । भरतस्य त्रिखंडके ॥ इंगे ग्रामे पुराद्येषु । शुद्धिः कृता घनैर्जनैः ॥ २२ ॥ तथापि राजमर्त्यैस्तैः । स्वसेवादर्शनोद्यमैः ॥ अत्रापि न स कुत्रापि । चिंतामणिरिवार्जकैः ॥ २३ ॥ रुक्मिणीवाचमाकर्ण्य । जगाद मुनिनारदः ॥ निवेदितं त्वया यत्तत । समीचीनं विचक्षणे ॥ २४ ॥ परं यथातथा शुद्धिं । त्वत्सूनोर्नानयामि चेत ॥ मदीया विफला वाचो । विज्ञेयास्त्वयका तदा ॥ २५ ॥ कथिते नारदेनेति । दुःखिन्यप्याह रुक्मिणी ॥ भूयात्ते सफला वाणी । मम चिंताविधायिनः ॥ २६ ॥ सत्यं शीलं वचः सत्यं । सत्यां परोपकारितां ॥ नारदस्य विजानंती । शुद्धिशक्तिं व्यचारयत ॥ २७ ॥ सूनुशोकनिवृत्त्यर्थं । नारदः पुनरप्यवक् ॥ दुःखं पुत्रि वियोगोत्थं । जातमस्ति तवैव न ॥ २८ ॥ पुरापि जातमात्रस्य । भामंडलविराजिनः ॥ पितोर्नामंभ्लादेस्त—ज्जातमस्त्यपि दारजं ॥२९॥ कियतापि च कालेन । समृद्धिवृद्धिसंयुतैः ॥ समेत्य पितरौ स्वीयौ । सुतैस्तैरपि तोषितौ ॥ ३० ॥ विद्यापत्नीप्रभूतर्द्धि—युक्तस्तवापि नंदनः ॥ करिष्यत्येत्य संतोषं । चिंतां च मा व्यधा हृदि ॥ ३१ ॥ असि त्वं जननी यस्य । पिता यस्य चतुर्भुजः ॥ यो जातो यदुवंशे च । भाग्यवानेव भाव्यसौ ॥ ३२ ॥ मारितो म्रियते नासौ ।

नीं ॥ वत्से तुभ्यं शुभं भूया—त्तिष्ठ तिष्ठेत्यभाषत ॥ १० ॥ शुभाशीर्वाक्यपानीयै—र्ज्वलद्वीोह इ-
वोच्चकैः ॥ दग्धांगी रुक्मिणी तावत् । सिक्तेति नारदर्षिणा ॥ ११ ॥ सूनोर्वियोगदुःखाग्नि—ज्वा-
लोपशांतयेंजसा ॥ निःश्वासै रोदनैर्यावद् । दुःखमुक्ता बभूव सा ॥ १२ ॥ युग्मं ॥ तदोचे रुक्मि-
णी दुःखात । किं वारयसि रोदनात ॥ त्वयि पश्यति मत्प्राणान् । परित्यक्ष्याम्यहं जवात ॥ १३ ॥
मया मात्रा धृताधाने । समुत्पन्ना यतः पितुः ॥ एकस्मादुदराज्जातो—ऽभवद्यश्च सहोदरः ॥ १४ ॥
असौ मातापितासौ वा । बांधवः सर्वदुःखभाक् ॥ मम ये दुःखवेत्तारो । दूरे सर्वेऽपि ते स्थिताः ॥
॥ १५ ॥ युग्मं ॥ जननीतातसोदर्य—मयो मेऽचिंत्यशक्तिमान् ॥ परोपकारिणां धुर्यो—ऽधुना त्व-
मेव मे पिता ॥ १६ ॥ त्वयि सत्यपि चेत्कश्चिद्—दुष्टो मेऽपहरेत्सुतं ॥ तात किं मे तदैतेन ।
जीवितेन प्रयोजनं ॥ १७ ॥ प्राणत्यागं करिष्यामि । शुचाढ्योऽहं मुनीश्वर ॥ मैषाकार्षीददोऽकार्यं ।
भीतो जगाद नारदः ॥ १८ ॥ तव पुत्रो हतो नास्ति । वत्से केनापि पापिना ॥ ममैव जीवितं
किंतु । हृतं तेन दुरात्मना ॥ १९ ॥ तवैव केवलं नास्ति । ततो दुःखं बृहत्तरं ॥ शल्यमिव प्रजातं
तद् । दुःखं ममापि मानसे ॥ २० ॥ अल्पेनानेहसा ताव—त्कीनस्य तनयस्य तव ॥ जनयिष्या-

स्नेहलया दृष्ट्या । निरीक्षस्व नरायण ॥ ९८ ॥ यावन्मुंचसि शोकं न । त्रिखंडभरताधिप ॥ ता-
वन्ममापि दत्तः स । तव दुःखेन दुःखिनः ॥ ९९ ॥ यतसे जातमात्रस्य । त्वं सूनोः शुद्धिनिर्मि-
तौ ॥ तथाहमपि गोविंद । यथा शुद्धिर्भविष्यति ॥ ४०० ॥ मातुः पितुश्च पुत्राणां । बांधवानां च
योषितां ॥ सर्वसंगपरित्यागी । कमपि स्मरतीह न ॥ १ ॥ इत्युपदेशदानेन । नारदप्रतिबोधितः ॥
शोकान्न्यवर्ततोपेंद्र । इंद्रैश्वर्यविभूषितः ॥ २ ॥ मुनिनारदवाक्येन । त्यक्त्वा शोकं जनार्दनः ॥ न
स्मरन्नपि तं चित्ते । व्यवहारमपालयत ॥ ३ ॥ तदा च पुंडरीकाक्षो । नारदर्षिमभाषत ॥ अहं तु
भवतो वाक्ये । स्थितोऽस्मि सर्वदा मुने ॥ ४ ॥ किंतु त्वया पटे यस्या । रूपमालेख्य दर्शितं ॥
पुत्रीत्वेन प्रपन्नाया । या च मत्प्राणवल्लभा ॥ ५ ॥ साधिकान्नवमासांश्च । कुक्षावूढो यया सुतः ॥
गत्वा तस्या गृहे पुत्र—दुःखिनीं तां प्रबोधय ॥ ६ ॥ नारदोऽपि हरेर्वाचं । प्रमाणीकृत्य सत्वरं ॥
जगाम रुक्मिणीगेहं । वाचंयमशिरोमणिः ॥ ७ ॥ आगच्छंतं समालोक्य । रुक्मिणी नारदं मुनिं
॥ विनयात्सहसोत्थाय । तस्यासनमथार्पयत् ॥ ८ ॥ अहो पुत्रवियोगेऽपी—यं विनयं न मुंचति॥
यद्वा महानुभावा या । सा समा सुखदुःखयोः ॥ ९ ॥ नारदश्चिंतयन्नित्थं । रुक्मिणीं वीक्ष्य दुःखि-

इति तदीयदुःखोढा । तदोचे नारदो मुनिः ॥ धरांतःकरणे धैर्यं । त्वं चिंतां मा कृथा हरे ॥ ८७ ॥
सधर्मी त्वं कृतज्ञोऽसि । परोपकारकारकः ॥ तव पुण्यप्रभावेण । शुभमेव भविष्यति ॥ ८८ ॥ सं-
सारे यत्र संयोगो । वियोगस्तत्र संभवेत ॥ यस्य जन्म मृतिस्तस्य । यस्य संपच्च तद्विपत ॥ ८९ ॥
यस्य सौख्यं भवेत्तस्य । महादुःखपरंपरा ॥ यत्र मोहो भवेत्तत्र । द्रोहो दुःखविधायकः ॥ ९० ॥
क इत्यनित्यताभावं । नितांतमवधीरयेत् ॥ सर्वेषामपि भावानां । संसृत्यनित्यतां धर ॥ ९१ ॥ स्ने-
हेन प्राप्यते पीडा । स्नेहेन दुःखसंभवः ॥ तिलोऽपि स्नेहयोगेन । सहते लोकपीडनं ॥ ९२ ॥
स्नेहयोगान्न निर्वाणं । योगींद्रैरपि लभ्यते ॥ पश्य दीपोऽपि निर्वाणं । स्नेहक्षयादवाप्नुयात ॥
॥ ९३ ॥ कस्य माता पिता कस्य । कस्याथवा सहोदराः ॥ कस्य पुत्र्यः सुताः कस्य । कस्य कां-
ता मनोहराः ॥ ९४ ॥ प्रोत्तुंगाः कस्य मातंगा । जविनः कस्य वाजिनः ॥ कस्य पादातिकाः क-
स्य । रथाः कस्य धनानि च ॥ ९५ ॥ हे त्रिविक्रम निःशेष—मप्येतत्क्षणभंगुरं ॥ दृशोर्मीलित-
योः स्वीय—वर्ती ते किमपीह न ॥ ९६ ॥ मामकीनमिदं माम—कीनमेतत्स्वचेतसि ॥ रूप्यभ्रां-
तिरिवाभाति । शुक्तिकाशकले दृशोः ॥ ९७ ॥ तन्मुंच शोकमस्तोक—मनल्पकालदुःखदं ॥ प्रजां

दुःखी त्वं दृश्यसे कथं ॥ ७६ ॥ अभीष्टे मिलिते मित्रे । सुखदुःखे वदेत्सुहृत् ॥ मिलितेऽपि वदे-
न्नो य—स्तन्मैत्री दंभतां भजेत ॥ ७७ ॥ ततः स्वे सुखदुःखे त्वं । निःशंकं पुरतो मम ॥ कथय
श्रीपतेऽभीष्ट—सख्येन स्वीकृतो मया ॥ ७८ ॥ नारदोक्तं समाकर्ण्य । वचनं पुरुषोत्तमः ॥ दुःखो-
द्भवव्याकुलीभूत—मानसः पर्यकल्पत ॥ ७९ ॥ तस्याग्रे कथनीयं स्याद् । दुःखिना दुःखमात्मनः ॥
यो दुःखं शमयेद्यद्वा । यस्य स्यात्तेन दुःखिना ॥ ८० ॥ स्तोऽस्मिन् द्वे अपि सामर्थ्ये । दुःखिता-
दुःखनाशने ॥ ततोऽहं कथयाम्यस्य । दुःखं विरहसंभवं ॥ ८१ ॥ जनार्दनो विमृश्येति । नारदर्षेः
पुरोऽब्रवीत् ॥ विजितातुलसंग्रामो—ऽप्यभवं विरहाकुलः ॥ ८२ ॥ मुनीश भीष्मभूपाल—पुत्री प्रा-
सूत नंदनं ॥ केनापि सोऽरिणा जह्रे । देवेन दानवेन वा ॥ ८३ ॥ ततो भूरितरं दुःखं । विद्यते
मम मानसे ॥ क्व व्रजामि प्रकुर्वे किं । दिङ्मूढतां गतोऽस्म्यहं ॥ ८४ ॥ त्वयि च मिलिते स्वामि
—न्नेतावदपि जल्पितं ॥ प्रोक्तमेवान्यथा नास्ति । वचसा सह केनचित ॥ ८५ ॥ धीरस्यापि मु-
कुंदस्य । श्रुत्वा दुःखमयं वचः ॥ निःसंगोऽपि च नीरागो । दुःखी बभूव नारदः ॥ ८६ ॥ कथिते
दुःखिना दुःखे । श्रोता स्याद्यदि दुःखभाक् ॥ तदैव तन्मनोदुःखे । निवृत्तिर्भवति क्षणं ॥ ८७ ॥

मत्वेति द्वारिकापुर्याः । स्वरूपं विपरीतकं ॥ समीक्ष्य पुरुषं कंचित् । पप्रछ नारदो मुनिः ॥ ॥ ६५ ॥ नारदप्रश्नमाकर्ण्य । वाचा गद्गदया भृशं ॥ सोऽपि शोकातुरो नत्वा । निजगाद मुनीश्वरं ॥ ६६ ॥ रुक्मिणीकुक्षिसंजातो । जातमात्रो हरेः सुतः ॥ हृतो न ज्ञायते केना—पहृत्य मारितो-ऽथवा ॥ ६७ ॥ ततः शोकमयी द्वार—वत्येषा वर्ततेतमां ॥ मया ज्ञातं परं नास्ति । किमप्यन्यन्नि-बंधनं ॥ ६८ ॥ निशम्य वचनं तस्य । श्रवणाश्रव्यमात्मनः ॥ नारदः स्थिरचित्तोऽप्य—स्थिरात्मा समभूत्तदा ॥ ६९ ॥ हाहा येन समं मैत्र्या । दुःखेन दुःखितानिशं ॥ सुखेन सुखिता याव—ज्जी-वमंगीकृता मया ॥ ७० ॥ तस्यापि मम मित्रस्य । कृष्णस्य धीरताजुषः ॥ पुत्रापहारजं दुःखं । जा-यते मयि सत्यपि ॥ ७१ ॥ तदा किं जीवितव्येन । वाङ्मात्रसारताभृतः ॥ लोकापवादशंकातः । परिध्वस्तत्रयस्य मे ॥ ७२ ॥ नारदः परिकल्प्येत्या—गतो नारायणालये ॥ प्रीत्या नारायणेनापि । तस्य प्रदत्तमासनं ॥ ७३ ॥ अनेन पुत्रदुःखेऽपि । प्रदत्तं मम विष्टरं ॥ अहो विनय एतस्य । म-हात्मपुरुषोचितः ॥ ७४ ॥ इति संतुष्टचित्तोऽसौ । संस्थितस्तत्र विष्टरे ॥ मानी हि मानदातॄणां । तुष्टो भवति चेतसि ॥ ७५ ॥ पूर्वमज्ञातवृत्तांत । इव श्रुत्वा स नारदः ॥ पप्रछ श्रीपतिं विष्णो ।

धानेन । विंम्बयसि विग्रहं ॥ ५३ ॥ स्वामिंस्ते चेन्मृतो बालो । देहस्तत्रावतिष्ठते ॥ स नास्ति ज्ञायते तर्हि । केनापि पापिना हृतः ॥ ५४ ॥ अतः शुद्धिं विधास्याम—स्त्वदीयस्यांगजन्मनः ॥ महांतमुद्यमं कृत्वा । शीघ्रं वयमतःपरं ॥ ५५ ॥ स्याद्वादोऽर्हत्प्रणीतोऽस्ति । यद्यप्यार्हतशासने ॥ तथापि नियतत्वेन । त्वं विजानीहि केशव ॥ ५६ ॥ प्रायो वंशे यदूनां ये । संभवंति शरीरिणः ॥ तुच्छायुषो न निर्भाग्या । भवेयुः सर्वथैव ते ॥ ५७ ॥ ततोऽनुमानयोगेन । जानीमस्तेंगजो हरे ॥ कियतानेहसा भूयः । समृद्धिभाक्समेष्यति ॥ ५८ ॥ नानोपदेशदृष्टांतैः । सूनोर्वियोगदुःखिनं ॥ तं समाश्वासयामासु—र्धीसखाः पुरुषोत्तमं ॥ ५९ ॥ वचनैर्मंत्रिणां तेषां । सूनोर्विरहदुःखतः ॥ स्वस्थीभूतो हरिः किंचि—द्व्यवहरत्येव चेतसा ॥ ६० ॥ तावत्समस्तलोकाना—मशर्मसंजिहीर्षया ॥ द्वारवत्यां रमावत्यां । नारदर्षिरथागमत ॥ ६१ ॥ वादित्रवादनैर्गीत—गानैरर्थिप्रदेशनैः ॥ सुवर्णभूषणैर्नव्य—वसनैरुपशोभिता ॥ ६२ ॥ कन्यायाः पुण्यपुण्याया । धन्याया रूपसंपदा ॥ पाणिग्रहणवेलेव । द्वारिकेयमभूत्पुरा ॥ ६३ ॥ सापि संप्रति संजात—विधवत्वसमन्विता ॥ कथं कन्येव दृश्येत । मयका द्वारिकापुरी ॥ ६४ ॥

सम्मेतगिरियात्रार्थं । गच्छत्संघस्य लुंटनं ॥ चिंतितं क्रूरकर्माणि । कुर्वद्भिरेभिरुच्चकैः ॥ ४२ ॥ सम-
भूत्कुंभकारो य—स्तदा तेन विचारितं ॥ महापापकरं तीर्थ—यात्रायात्रिकलुंटनं ॥ ४३ ॥ लुंटयि-
त्वातितुष्यंतो । ग्राम एकत्र ते गताः ॥ तत्रागतैर्जनै राज्ञो । निरुध्य भस्मसात्कृताः ॥ ४४ ॥ चौ-
राणां शुभशिक्षाया । दानोत्थसुकृतेन तु ॥ स्वजनामंत्रितो गेहे । कुंभकारो गतोऽभवत् ॥ ४५ ॥
काऽटवीषु ततो मृत्वो—त्पन्नाः षष्टिसहस्रकाः ॥ तत्रायातो भ्रमन् हस्ती । मर्दितास्ता तदंह्रिणा ॥
॥ ४६ ॥ ततो योनिष्वनेकासु । भ्रांत्वा स्वकृतकर्मणा ॥ कुतश्चित्सुकृतादासन् । सुताः सगरचक्रि-
णः ॥ ४७ ॥ यत्कृतं समुदायेन । तत्सार्थेनैव भुज्यते ॥ अतस्तेऽपि मृताः सर्वे । संगताश्चक्रिणों-
गजाः ॥ ४८ ॥ मृत्वा स कुंभकारोऽपि । वणिक्समृद्धिमानभूत् ॥ ततश्च भूपतिस्तत्र । धर्ममाराध्य
निर्जरः ॥ ४९ ॥ सुरलोके प्रपूर्णायु—र्भुक्त्वा दिव्योचितैः सुखैः ॥ कुंभकारस्य जीवस्त्वं । जन्हु-
सूनुर्बभूविथ ॥ ५० ॥ इति ज्ञानिगुरोर्वाणीं । श्रुत्वेशोऽपि भगीरथः ॥ प्राप्नुवन् भावसंवेगं । न-
त्वा च स्वगृहं ययौ ॥ ५१ ॥ मृतषष्टिसहस्रांग—भुवः सगरचक्रिणः ॥ दृष्टांतं दर्शयित्वेत्य—मा-
त्यो विष्णुमबोधयत ॥ ५२ ॥ त्वत्पुत्रस्य न निर्णीति—र्जीवन्नास्ते मृतोऽथवा ॥ किं त्वं शोकवि-

गौघः । समानीतः पयोनिधौ ॥ गंगासागरसंगं त—त्तीर्थं व्यक्तीकृतं जनैः ॥ ३० ॥ ततो भागीरथी गंगा । जाता भगीरथानयात ॥ गंगासागरसंज्ञं च । ख्यातं तीर्थमजायत ॥ ३१ ॥ प्रीतितः पूजितो नाग—कुमारैश्च भगीरथः ॥ कृत्वा पितामहस्याज्ञा—मयोध्यापुरमासवान् ॥ ३२ ॥ मदाज्ञया कृतं भव्यं । पौत्रेणैतेन धीमता ॥ ध्यात्वेति सगरः पुर्यां । प्रावेशयन्महैरमुं ॥ ३३ ॥ सगरश्चक्रवर्ती च । दत्वा राज्यं भगीरथे ॥ समीपेऽजितनाथस्य । वैराग्याचरणं दधौ ॥ ३४ ॥ चक्रवर्ती भवेद्यः स । राज्यं पालयति समं ॥ चित्रं भगीरथस्तद्व—त्साम्राज्यं पालयत्ययं ॥ ३५ ॥ अन्यदा समवासार्षीत् । सद्ज्ञानातिशयी गुरुः ॥ तत्र संदेहहर्ता चो—पकर्ता भूरिदेहिनां ॥ ३६ ॥ तदीयागमनं श्रुत्वा । क्षमानाथो भगीरथः ॥ प्रचचाल प्रभूतर्द्धि—र्वंदितुं श्रमणोत्तमं ॥ ३७ ॥ वंदित्वा परया भक्त्या । शुश्राव तस्य देशनां ॥ सोऽप्राक्षीद्देशनाप्रांते । स्वसंदेहं चिरंतनं ॥ ३८ ॥ स्वामिन् जन्हुकुमाराद्याः । पुत्राः सगरचक्रिणः ॥ कथं षष्टिसहस्राश्च । संप्राप्ता युगपन्मृतिं ॥ ३९ ॥ इति पृष्टे मुनिस्तेषां । भवं पूर्वं कृपान्वितः ॥ ज्ञानेन पुरतो राज्ञो । जगौ वैराग्यहेतवे ॥ ४० ॥ पूर्वे भवे समेऽप्यास—न्नटव्यां ते पुलिंदकाः ॥ एकश्च कुंभकारश्च । तेषां मित्रमभूत्प्रियं ॥ ४१ ॥

कार्यं कथितं राज्ञा । ह्यष्टापदगिरेरधः ॥ वसति वत्स नागेंद्रो । ज्वलनप्रभनामकः ॥ १८ ॥ पूर्वं
त्वया स नागेंद्रः । समाराध्यस्तदाज्ञया ॥ प्रक्षेप्यो जान्हवीपूरो । दंडरत्नेन सागरे ॥ २० ॥ पिताम-
हस्य वाक्यानि । प्रमाणीकृत्य भक्तितः ॥ परिवारयुतस्तूर्णं । सुमुहूर्ते चचाल सः ॥ २१ ॥ पिताम-
होक्तविधिना—राधितो ज्वलनप्रभः ॥ भीषणः पन्नगो हार—केयूररत्नाकसमागतः ॥ २२ ॥ ततः
सङ्गीतनादेन । पुष्पैश्च तेन पूजितः ॥ प्रसन्नीभूतवान् सोऽपि । तस्य भक्तिप्रसंगतः ॥ २३ ॥ ततः
प्रभृति संजाता । नागपूजा तु विष्टपे ॥ महद्भिः सहजात्कृत्यं । यत्कृतं तत्प्रवर्तते ॥ २४ ॥ प्रोक्त
नागकुमारेण । वयमाराधिताः कथं ॥ हेतुनाराधितो येन । तं हेतुं मे निरूपय ॥ २५ ॥ प्रीत्या
नागकुमारेण । कथिते च कुमारकः ॥ विनयात्तमभाषिष्ट । स्पष्टं वाचातिमृष्टया ॥ २६ ॥ अष्टाप-
दस्य शैलस्य । तलहट्टिप्रवर्तिनः ॥ मंदाकिनीप्रवाहोऽय—मुपद्रवति मानवान् ॥ २७ ॥ भवेद्यदि
त्वदीयाज्ञा । तदोपद्रवकारकं ॥ क्षिपामि दंडरत्नेन । गांगौघं पूर्वसागरे ॥ २८ ॥ तदा नागकुमारो-
व—त्त्वदीयचित्तकामना ॥ यथा भवेत्तथा कार्यं । त्वया निर्भयचेतसा ॥ २९ ॥ आज्ञां नागकु-
मारस्य । समादाय कुमारकः ॥ दंडरत्नेन पूर्वाब्धौ । गांगौघं क्षिप्तवानसौ ॥ ३० ॥ भगीरथेन गां-

स्यतां चित्ते । भावयता मनीषिणा ॥ ६ ॥ प्रभूतैर्वचनैरेवं । प्रतिबोध्य द्विजन्मना ॥ स्वस्थता प्रापिता राज्ञो । भवस्वरूपदर्शनात् ॥ ७ ॥ नीते महीपतौ स्वास्थ्यं । निवेदितं द्विजातिना ॥ यूयं नियोगिनो ब्रूत । स्वरूपं च यथास्थितं ॥ ८ ॥ इत्युक्ते साश्रुनेत्रास्ते । दुःखातुराः सगद्गदं ॥ वृत्तांतं च यथाभूतं । कथयामासुरीश्वरे ॥ ९ ॥ वहंतो हृदये शल्यं । विलपंतो मुहुर्मुहुः ॥ पुनरप्यश्रुपातैस्ते । ह्यरुदन्मुक्तकंठकं ॥ १० ॥ तदा विप्रेण वैराग्य—चंचद्वचनसंचयैः ॥ आश्वासिताः समे तेऽपि । पार्थिवादिनियोगिनः ॥ ११ ॥ सर्वे निवार्य शोकं च । नृपं संस्थाप्य पर्षदि ॥ बान्धवो मंत्रिणश्चान्ये—ऽप्यात्मीयस्थानकं गताः ॥ १२ ॥

इतोऽन्येद्युः सभासीनं । सगरं चक्रवर्तिनं ॥ अष्टापदाचलासन्न—वर्तिन आगता नराः ॥१३॥ समेत्य कथयामासुः । स्वामिन् जन्हुसुतेन ते ॥ गंगाप्रवाह आनीतः । प्लावयेन्नगरादिकं ॥ १४ ॥ तदुपद्रवतः स्थातुं । लोकैर्न शक्यते मनाक् ॥ येन केनाप्युपायेन । वारणीयः स तु त्वया ॥१५॥ लोकैरित्युदिते राज्ञा । परदुःखविनाशिना ॥ विचिंतितं क एतेषां । कष्टध्वंसी भविष्यति ॥ १६ ॥ अपरेषामसामर्थ्यं । विजानन् नरनायकः ॥ भगीरथं कुमारं च । पुत्रमाज्ञापयद् द्रुतं ॥१७॥ आ-

नृपः प्राह महाभाग । नास्ति शक्तश्च कोऽपि हि ॥ यः कालधर्मतो रक्षे—त्कमपि जन्मिनं भुवि ॥ ९५ ॥ किं मत्पुत्रा यदा देव—कुमाराणामपीदृशः ॥ कालधर्मो भवेत्तर्हि । शक्यते केन वारितुं ॥ ९६ ॥ वाग्वोऽभ्यदधत्स्वामिन् । यद्येवं तर्हि ते सुताः ॥ सामुदयिककर्मणः । सर्वेऽपि पंचतां गताः ॥ ९७ ॥ आकस्मिकमसंभाव्यं । श्रुत्वैवं च द्विजोदितं ॥ कथं मे ते मृता ब्रूहि । पृच्छेद्यावदिति प्रभुः ॥ ९८ ॥ संकेतात्तावदाक्रंद—शब्दं विदधतः खरं ॥ मंत्र्यादयः समायाता । रोदयंतोऽपरानपि ॥ ९९ ॥ राजलोके बभूवुर्याः । स्त्रियो येऽपि च पूरुषाः ॥ सर्वेऽपि रुरुदुस्तत्रा—स्तोकशोकाकुला भृशं ॥ १०० ॥ नृपालोऽपि तदा तत्र । वज्रघातादिव स्वयं ॥ मूर्छया सहसा मह्यां । पपाताऽतीवदुःखभाक् ॥ १ ॥ ततः शीतोपचारैश्च । सेवकैर्विहितैर्द्रुतं ॥ स्वस्थीभूतं नृपं प्रेक्ष्य । वाडवोऽभ्यदधन्नयं ॥ २ ॥ परोपदेशदायित्वं । संभवेत्सुलभं भवे ॥ स्वस्मिन् समागते दुःखा—दिके स्याद् दुस्सहं नृणां ॥ ३ ॥ असारस्य भवस्यास्ये—दृशमेव स्वरूपकं ॥ ततो धैर्यं धर स्वांते । कुरु धर्मं महोदय ॥ ४ ॥ संसारेऽनेकशो जाता । मातरः पितरः सुताः ॥ सहोदराः स्वसारश्च । स्त्रियः कौटुंबिकास्तथा ॥ ५ ॥ कस्मिन् जाते ततो हर्षः । कस्मिन् जाते विषण्णता ॥ क्रियतेऽनि-

न्र । रक्षामानयताग्रयात् ॥ ८३ ॥ भृत्यैरपि प्रभोर्वाक्या—त्कृतं सर्वेषु सद्मसु ॥ सर्वेषामपि लोकानां । नाशा तादृक्कथापि सा ॥ ८४ ॥ मातुः पितुश्च पत्युश्च । बंधोः स्वसुर्निजस्य च ॥ प्रत्युत स्मारणं जातं । चिरदुःखस्य मृतस्य च ॥ ८५ ॥ निरीक्ष्य नगरं सर्वं । समीपे चक्रवर्तिनः ॥ जनितांजलयो मौलौ । जगुः समेत्य सेवकाः ॥ ८६ ॥ स्वामिन्निकेतनं तन्न । किमप्यत्र पुरेऽखिले ॥ यत्र कोऽपि मृतो नास्ति । वृद्धो वा बालकोऽथवा ॥ ८७ ॥ यस्य यस्य निवासे चा—स्माभिर्गतं त्वदाज्ञया ॥ तस्य विस्मरितं दुःख—मिव स्मारितमंजसा ॥ ८८ ॥ ततः क्वापि पुरे ग्रामे । नगरे पत्तनेऽथवा ॥ अमृत्युसद्मनो रक्षा । न मिलिष्यति सर्वथा ॥ ८९ ॥ विना वैद्योदितां रक्षा—मुपचारैः परैरपि ॥ यदि जीवेदसौ तर्हि । जीवय त्वमिमं विभो ॥ ९० ॥ इत्युक्ते सेवकैर्नृप—स्तं नृदेवमभाषत ॥ यो जातो म्रियते चेत्स । तर्हि कुर्मो वयं च किं ॥ ९१ ॥ संसारस्थितिरेषास्ति । जन्मिनां मृतिरेव च ॥ ततः शोकं विमुंच त्वं । पुत्रस्य मृतितोऽस्य ते ॥ ९२ ॥ चक्रवर्तिवचः श्रुत्वा । दुःखीभूय द्विजो जगौ ॥ यः सुखी दुःखिनो दुःख—वार्तां वेत्ति न स प्रभो ॥ ९३ ॥ संति षष्टिसहस्रास्ते । पुत्रा ये च धुरंधराः ॥ त्वया किं कालतस्तेऽपि । शक्यंते रक्षितुं न हि ॥ ९४ ॥

त्युक्ते तेन विप्रेण । लोकाः कटकवर्तिनः ॥ प्राहुर्जन्हुकुमारादि—मृतिस्वरूपमश्रुभिः ॥ ७२ ॥ वीः
राः षष्टिसहस्राश्च । सुताः सगरचक्रिणः ॥ तीर्थरक्षां प्रकुर्वाणा । देवेन भस्मसात्कृताः ॥ ७३ ॥
अष्टापदस्य शैलस्य । क्षितौ ते मृतिमाप्नुवन् ॥ नृपभीत्या मरिष्यामो । वयमप्यत्र सांप्रतं ॥ ७४ ॥
तदा जगाद भूदेवो । माकुरुध्वं मरणोद्यमं ॥ प्राक्प्रतिबोधयिष्यामि । सगरं पुत्रदुःखिनं ॥ ७५ ॥
कथयित्वेति सर्वेषां । निवार्य सहसा मृतिं ॥ अनाथं मृतकं लात्वा । नगरे प्रविवेश सः ॥७६॥
आक्रंदंश्च शिरःकेशां—स्त्रोटयन् कुट्टयन्नुरः ॥ रुदंश्च पुत्रपुत्रेति । गतः स सगरांतिके ॥ ७७ ॥ म-
मैक एव पुत्रोऽभूत । सोऽपि दष्टोऽहिना मृतः ॥ त्वदीयैर्भेषजैर्मंत्रै—र्जीवय त्वं चिकित्सकैः ॥७८॥
श्रुत्वेति सार्वभौमेना—कारिता भिषजोऽखिलाः ॥ आकार्य तान् मृतं पुत्र—मस्य जीवयथेत्यवक्
॥ ७९ ॥ जीवयिष्यथ नो यद्ये—तस्य यूयं च नंदनं ॥ कारयिष्यामि युष्माक—मप्यस्यैव सहा-
यितां ॥ ८० ॥ न जीवति मृतः कोऽपी—ति जानंतोऽपि वैद्यकाः ॥ सद्यो बुद्धिं समासाद्य । भू-
पालंप्रत्यबीभणन् ॥ ८१ ॥ यस्य गेहे मृतः कोऽपि । न स्यात्तस्य निकेतनात ॥ रक्षामानय नाथैनं
। जीवयामो वयं यथा ॥ ८२ ॥ नृपा दुर्बलकर्णाः स्यु—रिति सत्यापयन्नयं ॥ तथैवान्यदधद्भृत्या-

र्थो नाव्यनूदिह ॥ स विधातृविलासेन । निष्पन्नो दुःखदायकः ॥ ६० ॥ अथ सर्वं बलं लात्वै—
कशो यामि नृपांतिके ॥ आज्ञया स यथा वक्ति । तथा कुर्मोऽखिला वयं ॥ ६१ ॥ इत्युद्दिश्य ब-
लं सर्व—मप्यादाय स धीसखः ॥ उत्पातकारकात्स्थाना—च्चचाल स्वपुरंप्रति ॥ ६२ ॥ प्रचलत्कट-
कं याव—दयोध्यापुरसीमनि ॥ समायातं तदा वक्ति । कश्चिन्मंत्री नियोगिनः ॥ ६३ ॥ वल्लभान-
पि तत्पुत्रान् । दग्ध्वाष्टापदनूमिषु ॥ वयं सर्वेऽपि जीवंतो । यास्यामः पार्थिवांतिके ॥ ६४ ॥ नस्मी-
भूता यथा मे ते । तनया अतिवल्लभाः ॥ रे पापिष्ठास्तथा यूय—मपि जाताः कथं न हि ॥ ६५ ॥
इति वक्ष्यति नूपालो । यदास्मान्प्रति जीवतः ॥ जातमेव तदा मृत्यु । ह्यस्माकं जीवतामपि ॥६६॥
लघवस्तरुणा वृद्धाः । कातरा याश्च योषितः ॥ कटकाद्यदि ते यांति । यांतु सर्वेऽपि मंदिरे ॥६७॥
म्रियते ध्रुवमस्माभिः । किंतु लज्जासमन्वितैः ॥ रचयित्वा चितां प्रौढा—मत्रैव स्वयशःकृते ॥६८॥
वरं वरमिति प्रोचु—र्वीरा लज्जालवो जनाः ॥ अन्येऽपि च तथैवोचु—र्नयेन कातरा अपि ॥६९॥
संमतेनैव सर्वेषा—मपि निष्पादिता चिता ॥ लोकास्तत्राग्निदानेन । मर्तुकामाः समागताः ॥ ७० ॥
तस्मिन्नवसरे वज्री । द्विजरूपः समागतः ॥ तेन पृष्टं कथं यूयं । व्याकुलीनूतचेतसः ॥ ७१ ॥ इ-

विलेपस्य । कृतये प्रेषितं जलं ॥ ४८ ॥ देहे क्षिप्ते यथा तापो । निर्गच्छेद्बहिरंजसा ॥ धूलिजल· विलेपेन । कृत्तापो न्यसरत्तथा ॥ ४९ ॥ अहो दुरात्मनामेषा—मपराधो मयैकशः ॥ क्षांतस्तथा· पि नो शांता—स्तत्फलं दर्शयाम्यथ ॥ ५० ॥ विचिंत्येति भुजंगेशो । ज्वलन् ज्वलनसन्निभः ॥ विचक्रे दृग्विषान् सर्पान् । दृष्टिमात्रेण घातकान् ॥ ५१ ॥ अवलोकनतस्तेषां । दृष्टमात्रोपघातिनः ॥ सगरस्य सुताः षष्टि—सहस्रा अप्यदीदहन् ॥ ५२ ॥ तेषां मरणसंप्राप्त्या । सर्वेऽपि सचिवादयः ॥ अरोदिषु शिरःस्फोटै—रुरःस्थलविकुट्टनैः ॥ ५३ ॥ नाथ नाथेति जल्पंत्यो । विलपंत्यो मुहुर्मुहुः ॥ कामिन्यः सार्थवर्तिन्यो । मुमूर्छुः सहसैव च ॥ ५४ ॥ त्रोटयंत्यो गले हारान् । स्फोटयंत्यश्च कंकणान् ॥ लोटयंत्यः स्वगात्राणि । मूर्छिता न्यपतन् भुवि ॥ ५५ ॥ विरूपं च स्वरूपं तद् । दृष्ट्वा कटकवर्तिनां ॥ विन्यन् व्यचिंतयन्मंत्री । तदुपद्रवतः पुनः ॥ ५६ ॥ वंदनैस्तीर्थनाथानां । सामुदयिककर्मभिः ॥ कुमारा युगपन्मृत्युं । प्राप्ता एते तु दैवतः ॥ ५७ ॥ अमी तीर्थमहायात्रां । कृत्वा र· दोद्यमं यदा ॥ कुर्वाणा मरणं प्राप्ता । ज्ञायते स्वर्गभाजिनः ॥ ५८ ॥ चतुःषष्टिसुराधीश—सेवितांह्रिसरोरुहाः ॥ बभूव कालधर्मो यत । सर्वेषामर्हतामपि ॥ ५९ ॥ यो भवितव्यतायोगा—त्पदा·

तस्तद्भावयन् सोऽपि । ज्वलन् कोपेन वह्निवत् ॥ विकुर्व्य विकृताकारं । तत्रागाद्रक्तलोचनः ॥३८॥
एत्य च प्रेक्ष्य जन्ह्वादीं—श्चक्रिणस्तनुजान् जगौ ॥ दुरात्मनः किमारब्धं । कर्मेदं सुखहानये ॥
॥ ३९ ॥ खातिकाकरणं ह्येवं । भूमेश्च खननं तथा ॥ अद्यप्रभृति न ज्ञातं । न श्रुतं वा कदाचन
॥ ४० ॥ कोपो नागकुमाराणां । भवेद्भयान् भयावहः ॥ भवेयुः पूजनीयास्ते । मनुष्येण सुखै·
षिणा ॥ ४१ ॥ अर्हणाप्रविधानार्थे । युष्माभिः किं दुरात्मभिः ॥ तेषां मूर्ध्न्यभियोगेन । धूलिः
प्रक्षिप्यतेऽतुला ॥ ४२ ॥ ज्वलनप्रभमालोक्य । कोपाटोपोपटंकितं ॥ जगाद विनयाज्जन्हु—कुमा-
रो मृष्टया गिरा ॥ ४३ ॥ स्वामिन्नज्ञानतोऽस्माभि—र्जनितं यत्क्षमस्व तत् ॥ नातःपरं करिष्यामः ।
कथयित्वेति तोषितः ॥ ४४ ॥ असौ संतोषितो यावत् । स्वकीयं स्थानकं गतः ॥ परिखा जनिता
किंतु । न वरा सलिलं विना ॥ ४५ ॥ विमृश्येति कुमारेण । दंडरत्नेन तावता ॥ मंदाकिन्याः प्र·
वाहोऽपि । समानीतोऽवनीतले ॥ ४६ ॥ एकांते मिलिता प्रायः । पुरुषेण सहांगना ॥ यथा द्रवी·
भवेद्वेगाद् । दृढत्वेनापि संगता ॥ ४७ ॥ अद्भुतं परिखामध्ये । नपुंसकेन वारिणा ॥ मिलिता च
द्रवीभूता । खरापि पृथिवी तदा ॥ ४८ ॥ मूर्ध्नि नागकुमाराणां । धूलिचूर्णं गतं पुरा ॥ तैर्जाने नु

॥ २६ ॥ तथा श्रीवृषभस्याङ्क—द्दूरतो धर्मकर्मकृत ॥ तीर्थयात्राकृते सर्व—मप्येतत्तेन कारितं ।२७।
पुनरप्यवदज्जन्हु—कुमारः सचिवान्प्रति ॥ अन्यमेतादृशं शैलं । यूयं पश्यत सादरं ॥ २८ ॥ य-
थाहमपि तत्रैव । यथाशक्ति शिलोच्चये ॥ प्रासादान् प्रतिमाश्चार्ह—न्नाथानां कारयाम्यलं ॥ २९ ॥
भृत्यैर्जन्हुकुमारस्या—ज्ञया विश्वग्विलोकितं ॥ तथापि क्वापि तेऽद्राक्षु—र्नान्यमष्टापदोपमं ॥३०॥
समेत्य कथयामासुः । परितः प्रविलोक्य ते ॥ स्वामिन्नेतादृशः शैलो—ऽपरः कोऽपि न दृश्यते ॥
॥ ३१ ॥ श्रुत्वेति कथितं जन्हु—कुमारेण मनीषिणा ॥ यद्येवं क्रियते तर्ह्य—स्यैव रक्षा विशेष-
तः ॥ ३२ ॥ शास्त्रेऽपि हि नवीनानां । प्रासादानां विनिर्मितेः ॥ फलमष्टगुणं प्रोक्तं । जीर्णचैत्यो-
द्धृतौ जिनैः ॥ ३३ ॥

एवमेवास्त्विति प्रोचे । सर्वैरप्यनुचारिभिः ॥ उद्यमो विहितस्तेन । तीर्थरक्षाकृते ततः ॥३४॥
खानिता दंभरत्नेन । सहस्रयोजनावनिः ॥ यथा निपतिता धूलि—र्भवनाधिपधामसु ॥ ३५ ॥ अ-
ज्ञातपूर्विणो नाग—कुमारा भीतिभाजिनः ॥ शरणं मार्गयंतोऽगु—र्ज्वलनप्रभसन्निधौ ॥ ३६ ॥
तेषां वचनमाकर्ण्य । महोद्वेगनिबंधनं ॥ प्रयुंज्य चावधिज्ञानं । ज्ञातवान् ज्वलनप्रभः ॥ ३७ ॥ त-

नपि बंधूंश्च देहि मे ॥ १५ ॥ तैः साकं पर्यटन्नन्य—देशतीर्थवसुंधरां ॥ निरीक्ष्य त्वत्प्रसादेन ।
स्वां वांछां पूरयाम्यहं ॥ १६ ॥ मयि सत्यपि चेदस्य । नेयं पूर्णा भविष्यति ॥ कामना मानसी तर्हि
। मयका जनकेन किं ॥ १७ ॥

विचार्येति पिता प्राह । जन्हुकुमार तावकी ॥ या या स्पृहा भवेत्सा सा । पूर्णीकार्या त्वये-
च्छया ॥ १८ ॥ प्रसन्नं वचनं वप्तु—र्निशम्य श्रवणामृतं ॥ कुमारोऽभूमुदत्सर्वं । शीतलीभूतविग्रहः
॥ १९ ॥ रत्नै रथैर्गजैरश्व—पदातिभिस्ततः समं ॥ प्रणम्य तातपादांश्च । जन्हुर्ययौ शुभे दिने ॥
॥ २० ॥ नगराणामनल्पानां । ग्रामाणामध्ववर्तिनां ॥ काननानां च पश्यन् स । कुतूहलान्यमोदत
॥ २१ ॥ अनुक्रामन् प्रसंगेन । प्राप्याष्टापदपर्वतं ॥ तस्यैवोपत्यकायां स । सर्वं बलं न्यवेशयत ॥
॥ २२ ॥ निवेश्य कटकं तत्र । परिवारेण भूयसा ॥ आरुरोहोपरिष्टात्स । जिनेंद्रानभिवंदितुं ।२३।
जिनप्रासादबिंबानां । रचनामवलोक्य च ॥ अर्चित्वा तानि वंदित्वा । कुमारो हृद्यमूमुदत ॥ २४ ॥
जन्हुः प्रमुदितः प्राह । भो धीसखा विशारदाः ॥ प्रासादरचना केनै—ता जिनार्चाश्च कारिताः ॥
॥ २५ ॥ इति पृष्टे कुमारेण । विनयान्मंत्रिणोऽवदन् ॥ यथा त्वमंगजो ज्येष्ठः । सगरस्य बभूविथः

द्बंधनान्नृपः ॥ ३ ॥ दीक्षां गृह्णाम्यहं राज्यं । पालयन्नजितप्रभुः ॥ द्वितीयतीर्थकृन्नाम—कर्मोदयाद-
वेदिति ॥ ४ ॥ तावल्लोकांतिकैर्देवैः । समयो ज्ञापितो विभोः ॥ सोऽपि स्वं सगरे राज्यं । न्यस्य
दीक्षामुपाददे ॥ ५ ॥ दीक्षां लात्वाजितेशेन । तीर्थं प्रावर्त्यत स्वकं ॥ आज्ञा च सगरेणापि ।
चक्रवर्तित्वकर्मणा ॥ ६ ॥ सगरः साधयित्वा च । षट्खंडान् भारतान् क्रमात् ॥ सत्रा स्त्रीणां चतुः-
षष्टि—सहस्रैः सुखमन्वभूत ॥ ७ ॥ भुंजानस्य सुखं तस्य । पुत्राः षष्टिसहस्रकाः ॥ शूराः समभवन्
धीरा । विक्रमाक्रांतभूमयः ॥ ८ ॥ ज्येष्ठो जन्हुकुमारस्तु । समभूत्तेषु सूनुषु ॥ प्रासादोद्धारयात्रादि
—धर्मकर्मपरायणः ॥ ९ ॥ तेन जन्हुकुमारेण । गुणैश्च विनयादिकैः ॥ कथंचित्तोषितोऽन्येद्यु—
रतीव सगरः पिता ॥ १० ॥ हर्षेण जनकेनोचे । पुत्र त्वदीयभक्तितः ॥ अहं प्रमोदितो वर्ते । वरं
वृणु तदिच्छया ॥ ११ ॥ जन्हुर्व्यजिज्ञपत्तात । तुष्टश्चेत्त्वं ममोपरि ॥ तदा कारुण्यमाधाय । मत्काम-
नां प्रपूरय ॥ १२ ॥ जगाद जनको वत्स । सा कास्ति कामना तव ॥ परिपूर्णा न जाता या ।
जनके मयि सत्यपि ॥ १३ ॥ प्रसन्नवदनेनेति । तातेन प्रतिपादिते ॥ जजल्प पितरं जन्हु—कु-
मारो विनयान्वितः ॥ १४ ॥ श्रीतात चेत्प्रसन्नोऽसि । स्वरत्नानि चतुर्दश ॥ समस्तं कटकं सर्वा—

तत्रासीद्भरतान्वये ॥ राज्ञी च विजयाख्यास्य । वर्यचातुर्यसद्गुणा ॥ ९२ ॥ युवराजोऽभवत्तस्य । सुमित्रविजयोऽनुजः ॥ पत्नी यशोमती तस्य । कांतकांतिर्यशोमती ॥ ९३ ॥ ताभ्यां सह भार्याभ्यां । भुंजानौ भोगमद्भुतं ॥ राज्यं पालयतस्तौ द्वा—वपि धर्मपरायणौ ॥ ९४ ॥ जितशत्रुमहीशस्य । विजयायोषितोऽन्यदा ॥ चंचच्चतुर्दशस्वप्न—संसूचितः सुतोऽभवत ॥ ९५ ॥ पुत्रजन्मोत्सवान् प्राज्यान् । प्रविधाय तदाह्वयं ॥ श्रीमानजितनाथेति । पितृभ्यां प्रविनिर्मितं ॥ ९६ ॥ मेरौ कल्प इवागारे । वर्धमानो बभूव सः ॥ तावत्प्राप्ता यशोमत्या । स्वप्नाश्चापि चतुर्दश ॥ ९७ ॥ तैः स्वप्नैः सूचितः सूनुः । समभूत्सगराभिधः ॥ सुलक्षणो यशोमत्या । वलक्षकुक्षिसंभवः ॥ ९८ ॥ राजकन्याः सलावण्या । धन्या रूपेण सुंदराः ॥ तौ द्वावुद्वाहितौ पुत्रौ । पितृभ्यां यौवनागमे ॥ ९९ ॥ एकस्मिन्नेव गेहे किं । पुष्पदंतौ समागतौ ॥ तौ द्वावपि समालोक्या—चिंतयन्निति मानवाः ॥ ॥ २०० ॥ विषाणि विषयाः प्रायः । सज्यंते यौवने जनैः ॥ वार्धके ते तु मुच्यंते । बुधैः कामविमुक्तये ॥ १ ॥ विमृश्येति विजेतुं तान । जितशत्रुर्महीपतिः ॥ सत्यीकर्तुमिवात्माख्यां । ददौ राज्यं सुतेऽजिते ॥ २ ॥ सगरे यौवराज्यं च । दत्वा कर्मजिगीषया ॥ सुमित्रविजयो नामा । प्राव्राजी·

प्रत्यंतरविनिर्मितैः ॥ ८० ॥ निजपुत्रवियोगेन । क्वापि रत्यनवाप्तितः ॥ संज्ञयैव ब्रुवन् कृष्णो—ऽ-
प्यायान्नास्थानसंसदं ॥ ८१ ॥ बांधवा यादवाश्चान्ये । सर्वाण्यंतःपुराणि च ॥ असीदन् राज्यकार्या-
णि । मुकुंदे दुःखिते सति ॥ ८२ ॥ तावन्नियोगिनो वृद्धाः । समेत्य माधवांतिके ॥ दुःखाद्रुदया
वाचा । स्वामिभक्ता व्यजिज्ञपन् ॥ ८३ ॥ पुरुषोत्तम हे नाथा—चिंत्यशक्तिसमन्विताः ॥ ये शत-
क्रतवो देवा । व्यंतरा भवनाधिपाः ॥ ८४ ॥ ये ज्येष्ठा वासुदेवाश्च । बलीयांसोऽच्युताग्रजाः ॥ ये
त्रिखंडोपभोक्तारो । ये च षट्खंडनायकाः ॥ ८५ ॥ हलिनो वासुदेवाश्च । महांतश्चक्रवर्तिनः ॥
विद्याधरा नराधीशा । मंत्रिणः श्रेष्ठिनश्च ये ॥ ८६ ॥ मर्त्यास्तेजस्विनोऽन्येऽपि । रूपवत्यो मृगीदृ-
शः ॥ बाल्येऽपि यौवने वार्ध्ये । गतास्तेऽपि यमालये ॥ ८७ ॥ जानन्नपि मुकुंदेति । ह्यनुभूतं स-
मैरपि ॥ एवं किं शोचसि प्रोच्चै—र्जातमात्रं त्वमर्भकं ॥ ८८ ॥ त्वमेकस्यापि पुत्रस्य । वियोगं
सोढुमक्षमः ॥ षष्टिसहस्रसूनूनां । स सोढः सगरेण च ॥ ८९ ॥ तदा जगाद गोविंदः । स्थविरां-
स्तान्नियोगिनः ॥ कः सागरोऽभवत्पुत्र—वियोगं सोऽसहत्कथं ॥ ९० ॥ इत्युदिते मुकुंदेन । स्थ
विरैको बभाण च ॥ अत्रैव भरते ह्यासी—दयोध्याख्या महापुरी ॥ ९१ ॥ जितशत्रुर्महीशश्च ।

वस्तले ॥ हसंती रुदती चापि । ग्रथिलेव बभूव सा ॥ ६९ ॥ योगिनीव गृहं मुक्त्वा । विचरामि
वने वने ॥ भूत्वाहमथवा साध्वी । देशे देशे व्रजाम्यहं ॥ ७० ॥ एवं चैव भ्रमंत्या मे । कदाचि-
न्मिलति स तु ॥ भवेत्तर्हि समीचीन—मित्यप्याशां बबंध सा ॥ ७१ ॥ जातमात्रांगभूद्दुःखा—
ऽकुला बहुदुःखिनी ॥ दासीभ्यो रुक्मिणीं श्रुत्वा । मुकुंद इत्यचिंतयत् ॥ ७२ ॥ या चास्ति महि-
षीमुख्या । सत्यभामा मम प्रिया ॥ रूपलावण्यसंयुक्ता । साप्येतया विनिर्जिता ॥ ७३ ॥ तस्या अ-
पीदृशी चेष्टा—भवत्सूनोर्वियोगतः ॥ गतस्य मम हस्ताभ्यां । किं करोम्यथ पातकी ॥ ७४ ॥ अ-
थ किं जीवितव्येन । राज्येनापि ममाथवा ॥ सोऽपि शोकातुरो भूत्वा । चिंतामग्न इवाभवत् ॥
॥ ७५ ॥ सर्वेऽप्याकारिताः पौरा । बांधवा यादवा अपि ॥ नरकारातिना सूनु—विप्रयोगानुषंगिना
॥ ७६ ॥ तान् समाकार्य गोविंदः । कथयामास दुःखतः ॥ युष्माभिरपराधो मे । क्षंतव्यः सकलो-
ऽपि वः ॥ ७७ ॥ मया सार्धं वियोगश्चे—द्दैवेन सूनुना समं ॥ जनितस्तन्मरिष्याम्य—वश्यं भो
यादवा द्रुतं ॥ ७८ ॥ इत्युक्ते हरिणा पौराः । सर्वेऽपि शोकसंगिनः ॥ समभूवन् विशेषेण । लो-
काः स्युर्हि नृपानुगाः ॥ ७९ ॥ दंतानां धावनं पौरै—स्तृणैरेव तदादितः ॥ निःश्वसैर्विदधे नित्यं

स्तन्यपानं महत्तव ॥ ५७ ॥ न ज्ञायते मदीयोऽस्ति । पूर्वजन्मरिपुः सुरः ॥ अथवा तावकः कश्चि
—द्योऽहरत्त्वां गुणालय ॥ ५८ ॥ पापिना तेन देवेन । त्वामपहृत्य वैरतः ॥ मूलादुन्मूलितो मा-
म—कीनो मनोरथद्रुमः ॥ ५९ ॥ मनोमोदमरे नारी । स्तन्यपानमथादरात ॥ कारयिष्यति का पु-
त्र । त्वत्वात जननी तव ॥ ६० ॥ रे कुलदेवते नित्यं । यागस्त्वं बलीच्छया ॥ पुत्रशुद्धिविधान-
स्या—वसरे काधुना गता ॥ ६१ ॥ मया ते बलिदाने चा—पराद्धं नास्ति सर्वथा ॥ अपराद्धं च
भवेत्तर्हि । प्रकटीभूय मे वद ॥ ६२ ॥ अंतर्दाह इव त्वं किं । जातमात्रसुतस्य मे ॥ विप्रयोगवि-
धानेन । मुधा दहसि मांव नु ॥ ६३ ॥ यद्वादाय सखी कापि । पुत्रं मे किं वने गता ॥ खेलयि-
तुं स्वगेहे वा । जिनालये गताथवा ॥ ६४ ॥ मम कृत्यविधानार्थं । सख्यः पश्यत पश्यत ॥ अ-
न्यथा किं सखीत्वेन । यौष्माकीनेन साधनं ॥ ६५ ॥ भाषमाणेति वैकल्यं । धरंती मानसे भृशं ॥
अस्वास्थ्येन शरीरस्य । वार्तामप्यकरोन्न सा ॥ ६६ ॥ साकुट्टयत्क्षणं वक्षः—स्थलं चापि ललाटकं
॥ हस्ततालान् क्षणं दद्यौ । जघर्ष क्रमयामलं ॥ ६७ ॥ त्रोटयंती शिरःकेशान् । मोटयंती निजां त-
नूं ॥ स्फाटयंती च वस्त्राणि । भांडानि स्फोटयंती च ॥ ६८ ॥ विलिंपंती मृदा वक्त्रं । विध्रुवंती भ्रु-

निपीडयेज्जगध । एकोऽपि कवलोऽधिकं ॥ अधिकान्नवमासांश्च । न स स्थितोऽप्यपीम्यत ॥ ४६ ॥
हे कृष्ण पुंमरीकाक्ष । हे जनार्दन माधव ॥ हे प्राणनाथ दत्तस्ते । संप्रत्येव करेऽभवत् ॥ ४७ ॥
नाथ त्वत्पार्श्वतो मेऽद्य । यावन्नायातस बालकः ॥ न्यासापहारजं पापं । तावत्तव लगिष्यति ॥४८॥
न्यासापहारपापेभ्य । उत्तमाः किल बिभ्यति ॥ ततस्त्वमुद्यमं कृत्वा—नीय प्रदेहि मत्सुतं ॥४९॥
उत्कटाः शिशुपालाद्या । विजिता लीलया पुरा ॥ पुत्रकृते घनं स्याम । न किं दर्शयसे प्रभो ॥
॥ ५० ॥ लोकेश पूजयत्यत्र । या प्रमदैकमानसा ॥ तव पादांस्त्वदीयाख्या—महामंत्रं च यो ज·
पेत ॥ ५१ ॥ फलं सापि मनोऽभीष्टं । लभते पुत्रसंपदा ॥ सर्वथा पापशांतिं च । शास्वत्सौख्यप·
रंपरां ॥ ५२ ॥ त्वय्येव स्थापितस्वांत—वाक्कायाहमहर्निशं ॥ तथापि मम पुत्रस्य । विप्रयोगोऽभवत
कथं ॥ ५३ ॥ वर्तते सत्यभामा सा । ज्येष्टा च भगिनी मम ॥ कनिष्टा परमाभीष्टा । स्वसा तस्या
अहं खलु ॥ ५४ ॥ रेऽस्या दूतिका दास्यो । धात्र्यस्तथांगसेविकाः ॥ खेलनायापि युष्माभि—र्गृ·
हीतः स्यान्ममार्भकः ॥ ५५ ॥ तदैकशो मुखं तस्य । शिशोर्दर्शयत द्रुतं ॥ युष्माभिः खेलनीयः
स । पुनरप्यविलंबतः ॥ ५६ ॥ रे नंदन मया पूर्वं । ज्ञातमासीत्स्वचेतसि ॥ प्रथमं कारयिष्येयं ।

र्धं । कृष्णस्य विरहः कृतः ॥ तथास्या जातमात्रस्या—प्यभवत्तनयस्य सः ॥ ३४ ॥ भाषितमस्ति
लोकेऽपि । यादृग्विधीयते परे ॥ अल्पेनैव च कालेन । तादृगात्मनि जायते ॥ ३५ ॥ रुक्मिणी-
दुःखमाकर्ण्य । पुत्रापहारजं घनं ॥ अरिष्टनिलये सुप्ता—प्यभूत्सत्याभिनंदिता ॥ ३६ ॥ प्रद्युम्नस्य
कुमारस्या—पहारदुःखदुःखितः ॥ सत्यां तत्परिवारं च । विना लोकोऽपि तिष्ठति ॥ ३७ ॥ मम पु-
त्रापहारश्चे—द्बभूव दुःखदायकः ॥ पुत्रस्य सत्यभामाया । मास्तु च जननोत्सवः ॥ ३८ ॥ इतीव रु-
क्मिणी शोकं । लोकं शोकसमन्वितं ॥ जनयंती नयंती च । पुत्रदुःखान्निजं मनः ॥ ३९ ॥ मुक्तं
स्वकीयया रुच्या । सरसाहारभक्षणं ॥ पानं मनोज्ञपानानां । रुक्मिण्यांगजदुःखतः ॥ ४० ॥ शरीरे
मज्जनं त्यक्तं । कबरीरचनं पुनः ॥ परिधानं सुवस्त्राणां । कज्जलेनांबुकांजनं ॥ ४१ ॥ हारः पाशो-
पमाकार—स्तिलकेन तिलायितं ॥ कुंमलं कुंडलीभूतं । मुक्तमाला च सर्पिणी ॥ ४२ ॥ पुष्पमा-
लां गले नैव । धत्तेंह्र्योर्नूपुरं पुनः ॥ शरीरे चंदनालेपं । लेपनं कुचयामले ॥ ४३ ॥ न धत्ते मेख-
लां कट्यां । करयोः कंकणे अपि ॥ तांबूलभक्षणं नैव । करोति सा शुचाकुला ॥ ४४ ॥ एतैः षो-
मशभिः शस्तैः । शृंगारै रहिताभवत ॥ रुक्मिणी पुत्रदुःखेन । योगिनीव वियोगिनी ॥ ४५ ॥ तुंदं

॥ २१ ॥ मया येन जिता देवा । दैत्यो विद्याधरा अपि ॥ व्यंतर्योऽन्येऽपि भूपाश्च । सोऽप्यहो केन वंचितः ॥ २२ ॥ रुक्मिण्यै दीयमानोऽसौ । हृतश्चेन्मम बालकः ॥ तदा कोऽपि दुरात्मायं । मत्तोऽपि सबलः खलु ॥ २३ ॥ उच्यमाने हरावेवं । राजलोकोऽखिलोऽपि च ॥ रुक्मिणीकृष्णदुःखेन । सदुःखः समभूत्तमां ॥ २४ ॥ ततः प्रधानमर्त्येन । सर्वत्रापि गवेषणा ॥ कारिता निजदूतौघ-प्रेषणेन समंततः ॥ २५ ॥ दूतैरप्यभियोगेन । भरतस्य त्रिखंडके ॥ नगरे नगरे विष्वक् । हट्टे हट्टे गृहे गृहे ॥ २६ ॥ शैले शैले च सर्वस्मिन् । दर्यां दर्यां विशेषतः ॥ प्रपायां च प्रपायां च । ग्रामे ग्रामे वने वने ॥ २७ ॥ बहुशः शोधनेनापि । चिंतारत्नमिवार्भकः ॥ श्रीप्रद्युम्नकुमाराख्यो । भाग्यहीनैरवापि न ॥ २८ ॥ शुद्धिं विधाय सर्वत्र । स्वकीयोद्यमयोगतः ॥ आगत्य कथयामासु-र्दूता अतीवदुःखिताः ॥ ३० ॥ प्राप्यते न यथा प्रायो । नष्टो गतो मृतो हृतं ॥ तथायमपि नो लब्धो—ऽस्माभिस्तावकनंदनः ॥ ३१ ॥ दूतैरित्युक्तमाकर्ण्य । कृष्णः सर्वेऽपि यादवाः ॥ रुक्मिणीदासिका दासा । विशेषाद् दुःखिनोऽभवन् ॥ ३२ ॥ सप्तभिः कुलकं ॥ पुण्यं विजृंभतेऽद्यापि । मदीयं च महाबलं ॥ स्त्रीषु सर्वास्वपि प्रीतिं । सत्यभामा त्विति व्यधात् ॥ ३३ ॥ यथानया मया सा-

क्षणवद्धितं ॥ स्वमानसे चमत्कार—मधरत्कालसंवरः ॥ १० ॥ पार्वणेंदुरिवैतस्य । वदनं तु प्रश-
स्यते ॥ स्वकीयकायतेजोभिः । पूषेव द्योततेऽभितः ॥ ११ ॥ तत्प्रद्युम्नकुमारोऽय—मित्याख्यास्य
प्रभूयतां ॥ परितो द्योतमानस्य । स्वद्योतैश्च दिशः समाः ॥ १२ ॥ विद्यायोगात्कुतश्चिद्वा । विज्ञा-
यैव तदाह्वयं ॥ कृष्णदत्तैव तेनाख्या । दत्ता प्रद्युम्नसंज्ञिता ॥ १३ ॥ प्रदाय नाम संपाद्य—माने
महोत्सवे सति ॥ गूढगर्भाजवन्मे स्त्री—त्यन्यधात्स्वजनेषु सः ॥ १४ ॥ स्वजातस्येव पुत्रस्या—तु-
लस्तस्योत्सवः कृतः ॥ विद्याभृत्स्वामिना काल—संवरेण प्रमोदिना ॥ १५ ॥ पुण्यवंतो नरा यत्र ।
गच्छंति शैशवादपि ॥ तत्रैव संपदस्तेषां । सत्यीकृत्येति स स्थितः ॥ १६ ॥ अथैत्य रुक्मिणी कृष्ण
—मूचे क्वास्ति तवांगजः ॥ विष्णुराख्यत्प्रिये तुभ्यं । संप्रत्येव ददे मया ॥ १७ ॥ रुक्मिण्यन्यद-
धत्स्वामिन् । मां च त्वं किं वितर्कसे ॥ नास्ति वितर्कणावेला । दुःखदात्री ममाधुना ॥ १८ ॥ ह-
रिरप्यन्यधाद्देवि । मया त्वं न वितर्क्यसे ॥ तवैव हस्तयोर्दत्तो । वीक्ष्येषदपि बालकः ॥ १९ ॥ वि-
ष्णोर्निष्कपटं वाक्य—मेवं निशम्य रुक्मिणी ॥ हस्तयोरपि शय्याया—मपश्यंती च मूर्छिता ॥२०॥
जातपुत्रवियोगेन । मूर्छितां पतितां भुवि ॥ निरीक्ष्य रुक्मिणीं कृष्ण—श्छलितोऽस्मीत्यवीवदत् ॥

विमानादहमुत्तीर्य । प्रपश्यामि ततो द्रुतं ॥ अस्मिन् शैले स्वरूपं किं । समस्ति द्वापरछिदं ॥
॥ ९८ ॥ ज्ञात्वेति द्वापरोछित्त्यै । समुत्तीर्य विमानतः ॥ यावत्समंततः पश्येत । क्षितौ पतितरत्नवत
॥ ९९ ॥ आदराद्वीक्षमाणेन । निरीक्ष्य तेन बालकं ॥ पर्वतप्रासरत्नेन । पुंसेव मुमुदे हृदि ॥१००॥
महार्घ्यमणिसंघाता—द्रत्नं लब्ध्वा परीक्षकः ॥ यथा समीक्षतेऽभीक्ष्णं । तं बालं स तथैक्षत ॥ १ ॥
भ्रमरीकालिमोपेत—स्निग्धसूक्ष्मकचावलि ॥ भ्राजदुष्णीकसंयुक्तं । विभ्राजतेऽस्य मस्तकं ॥ २ ॥
अष्टमीचंद्रमस्तुल्यं । भालमेतस्य वर्तते ॥ भ्रुवौ च दर्पिकंदर्प—वरकोदंडसन्निभे ॥ ३ ॥ दोलोप-
म्यं शिशोरस्य । दधाति श्रवणद्वयं ॥ अतिविस्मेरराजीव—पवित्रं नेत्रयामलं ॥ ४ ॥ पार्श्वयोरुन्न-
योरस्य । कपोलौ दर्पणाविव ॥ विभ्राजेते विभूषाभि—र्झात्कारप्रविधायिनौ ॥ ५ ॥ तिलप्रसूनसं-
काशा । नासौष्ठौ हेमकंदलौ ॥ कुंदवृंदेंदुपाथोधि—कल्लोलधवला रदाः ॥ ६ ॥ कंबुकंठो घटौपम्यं
। धत्ते भुजशिरोनुगः ॥ मृणालीयति दोर्दंडः । पत्रीयति करांगुली ॥ ७ ॥ कपाटपाटवं बिभ्र—द्व-
क्षःस्थलं विराजते ॥ आवर्त इव गंभीरो । नाभिरेतस्य दृश्यते ॥ ८ ॥ हस्तिहस्तोपमे जंघे । नि-
गूढे जानुनी पुनः ॥ कूर्मपृष्ठसमावंह्री । तले रक्तोत्पले इव ॥ ९ ॥ दर्शं दर्शं शिशोरस्य । रूपं ल-

स्तान्यामतो बुधैः ॥ ८६ ॥ अस्यास्ततः शिलायाश्चो—परि मुंचाम्यमुं शिशुं ॥ क्षुधाक्रांतो निरा-
हारः । स्वयमेव मरिष्यति ॥ ८७ ॥ स्वचेतसीति संचिंत्य । नाकिना धूमकेतुना ॥ तत्र मुक्तः शि-
शुः सैष । सहजान्मरणेछया ॥ ८८ ॥ कृतं मया समीचीनं । यद्वैरमाददेऽधुना ॥ जानन्निति वरं
तत्र । मुक्त्वा स्थानं गतः सुरः ॥ ८९ ॥ शिशुस्तु चरमांगत्वा—त्सोपक्रमायुरुज्झितः ॥ पपातामल-
पत्राढ्ये । प्रदेशे न पुनर्मृतः ॥ ९० ॥ अग्निज्वालपुरात्प्रातः । स्वकीयनगरंप्रति ॥ हृष्यद्देहो धरा-
धीश—श्चचाल कालसंवरः ॥ ९१ ॥ मार्गे विमानमारूढः । सार्धं कनकमालया ॥ कुर्वन् वार्तां वि-
नोदेन । याति प्रमोदमेदुरः ॥ ९२ ॥ तस्य प्रचलतस्तूर्णं । विमानं यावदद्भुतं ॥ बालकस्योपरि
प्रौढं । समेतमस्खलद् द्रुतं ॥ ९३ ॥ तावत्तत्स्खलयामास । वायुवेगमपि स्फुटं ॥ स्खलितं च वि-
मृश्यादो—ऽचिंतयत्कालसंवरः ॥ ९४ ॥ युग्मं ॥ अधस्ताज्जगदीशस्य । किं प्रासादः प्रवर्तते ॥
कायोत्सर्गेण वा कश्चित । संस्थितः किं मुनीश्वरः ॥ ९५ ॥ अथवा पुण्यवान् कश्चि—दधश्चरमवि-
ग्रहः ॥ वर्तते पुरुषः स्त्री वा । शिशुर्वादभ्रकष्टभाक् ॥ ९६ ॥ अत एव विमाने मे । स्खलनं सम-
जायत ॥ अन्यथा मद्विमानं हि । स्खल्यते नापि केनचित् ॥ ९७ ॥

दर्शं दर्शं कुमारं तं । मुकुंद इत्यचिंतयत् ॥ ७४ ॥ प्राच्या प्रजनितो राज—त्तेजःपुंजमयोऽर्यमा ॥ सर्वा अपि दिशो विष्वक् । प्रद्योततेतमां यथा ॥ ७५ ॥ रुक्मिण्यापि प्रसूतोऽसौ । बालोऽप्यतीव-तेजसा ॥ अधिकेनाखिलेभ्योऽपि । प्राद्योतताभितो गृहं ॥ ७६ ॥ श्रीप्रद्युम्नकुमारोऽयं । तदेत्यूचे मुरारिणा ॥ तत्प्रद्युम्नकुमारोऽसौ । प्रोक्तमित्यखिलैरपि ॥ ७७ ॥ रमयित्वा स्वकं सूनुं । कियद्वेलां प्रमोदतः ॥ रुक्मिण्या अर्पयामास । यत्नतो धरणीधरः ॥ ७८ ॥

इतश्च धूमकेत्वाख्यो । विभंगज्ञानयोगतः ॥ स्मृत्वा प्राग्जन्मवैरं च । क्रुद्धस्तत्रागतः सुरः ॥ ॥ ७९ ॥ आगत्य रुक्मिणीवेषं । कृत्वा चापि जिहीर्षया ॥ दीयमानं मुकुंदेन । रुक्मिण्यै स तमग्रहीत ॥ ८१ ॥ अंतरालादगृहीत्वा तं । प्रयुंज्य करलाघवं ॥ प्रतिवैताढ्यमायातो । धूमकेतुर्जिघांसया ॥ ८२ ॥ तत्रागत्य ययौ भूत—रमणं काननं घनं ॥ तत्र टंकशिला चैका । प्रवर्तते महत्तरा ॥ ८३ ॥ खंडशः खंडशः कृत्वा । बालस्यैतस्य वर्ष्मणः ॥ चतसृष्वपि दिक्ष्वुच्चै—र्बलिं दद्यां सुपर्वणां ॥ ८४ ॥ शिलायां चाथवास्फाल्य । ह्येनं व्यापादयाम्यहं ॥ तत्र स्थित्वा क्रुधाध्मातः । सुरः स इत्यचिंतयत ॥ ८५ ॥ बालहत्याभवं पापं । शास्त्रे महत्प्ररूपितं ॥ बालहत्या न कर्तव्या । स्वह-

॥ ४४ ॥ तावत्तद्वाक्यमेवात्र । वितथं कर्तुमंजसा ॥ रुक्मिण्या सुषुवे सूनु—र्दासीति कृष्णमभ्यधात ॥ ४५ ॥ तद्वर्धापनिकां स्वामिन् । प्रदेहि मम भूयसीं ॥ सूर्योद्योते सुते जाते । कः कुर्यान्न धनव्ययं ॥ ४६ ॥ राजचिह्नं विना भूरि—द्रव्याभरणचीवरैः ॥ सद्वर्धापनिकां दास्यै । प्रददे मधुसूदनः ॥ ४७ ॥ स्वकान् कौटुंबिकान्मर्त्या—नाकारितान् समागतान् ॥ श्रीपतिः कथयामास । कुर्वंतां नागरीं श्रियं ॥ ४८ ॥ हट्टे हट्टे ध्वजारोपो । गेहे वंदनमालिका ॥ स्थाने स्थाने च नृत्यानि । विधीयंतां मदाज्ञया ॥ ४९ ॥ पूजयंतु जिनाधीश—प्रतिमाश्च विशेषतः ॥ अष्टप्रकारया सप्त—दशप्रभेदयार्चया ॥ ५० ॥ दीयंतां दीनदानानि । याचकेभ्योऽपि भूरिशः ॥ मांगलिकानि कृत्यानि । निष्पाद्यंतामनेकधा ॥ ५१ ॥ लघ्व्या अपि सपत्न्या मे । संजातस्तनयोंजसा ॥ वृद्धत्वान्मे न जातोऽसौ । सत्यपि गर्भसंभवे ॥ ५२ ॥ इति चिंतातुरा श्रुत्वा । सपत्नीजं सुतं क्रुधा ॥ यातौकः सत्यभामापि । प्रासूत भानुकं सुतं ॥ ५३ ॥ रुक्मिणीनिलये गत्वा । कृष्णः पुत्रदिदृक्षया ॥ सिंहासने समासीन । आनाययत्स्वनंदनं ॥ ५४ ॥ समानाय्य कुमारं तं । गृहीत्वा च स्वहस्तयोः ॥ आसेचनकमानंद—संदोहाद्रूपमैक्षत ॥ ५५ ॥ किमयं ह्यश्विनीपुत्रः । किं वा बिंबमहर्पतेः ॥

गच्छ गेहे च सत्यायाः । सत्यायासविधित्सया ॥ मद्वचः कथयित्वेति । विधेहि तां मुदन्वितां ॥३३॥
रुक्मिण्या वाक्यमादाय । सांतःसंतोषकारणं ॥ गत्वा गेहे नमस्कृत्य । सत्यभामामवीवदत ॥ ३४ ॥
सत्यभामापि तत्प्रोक्तां । वार्तामाकर्ण्य कर्णयोः ॥ चित्ते विचिंतयामास । कुटिलत्वसमन्विता ॥३५॥
साक्षिणौ च प्रकुर्वेऽहं । बलदेवसनातनौ ॥ तस्या विसंस्थलीभूतं । वचनं न भवेद्यथा ॥ ३६ ॥
विचार्येति निजे चित्ते । दूतिका सत्यभामया ॥ प्रेषिता पुंडरीकाक्ष—बलभद्रकयोः पुरः ॥ ३७ ॥
तयापि स्वामिनीवाक्या—त्कृत्वा संसदि भूपतेः ॥ यादवानां समक्षं च । विस्तरेण निरूपितं ॥३८॥
बलभद्रमुकुंदाभ्यां । स्वीकृतं तच्च भाषितं ॥ दूत्याः संसत्समक्षं च । चित्रं दैवविजृंभितं ॥३९॥ स-
मागत्याथ सा दूती । सर्वं व्यतिकरं जगौ ॥ स्वस्वामिन्यै च तत् श्रुत्वा । सत्यभामाप्यमोदत ॥४०॥
कृष्णवाक्यं मुधा माभू—द्भामा क्रोधातुराथवा ॥ इतीव दैवतस्तस्या । अप्यासीद्गर्भसंभवः ॥ ४१ ॥
पीतातितक्रवत्सत्य—भामाभूदकृशोदरी ॥ अत्युत्तमेन गर्भेण । गूढगर्भा तु रुक्मिणी ॥ ४२ ॥ मा-
त्सर्येण ततोऽन्येद्युः । सत्यागत्याच्युतांतिकं ॥ यावज्जल्पति रुक्मिण्या । वितथं जल्पितं विभो ॥
॥ ४३ ॥ मद्वचने प्रतीतिर्न । यदि तेऽथ जनार्दन ॥ प्रपश्य जठरं नाथ । द्वयोरपि मृगीदृशोः ॥

पुत्रः प्रजायते ॥ स एव प्रथमं पाणि—ग्रहणं विदधाति च ॥ २० ॥ विवाहसमये तस्य । विशुद्धे लग्नवासरे ॥ शीर्षादुत्तार्य सर्वेऽपि । देया मया शिरोरुहाः ॥ २१ ॥ पुण्यान्मम भवेत्सूनु—र्विवाहो यदि तस्य च ॥ त्वयापि च समर्प्यास्ते । तदा मे रुक्मिणि ध्रुवं ॥ २२ ॥ अनीवकृष्णवाल्लभ्या—द्रूपसौंदर्ययोगतः ॥ अभिमानो भवेद्यर्हि । तदेतद्दूरीकुरु ॥ २३ ॥ मया प्रोक्तमिदं सर्व—मपि त्वं रुक्मिणींप्रति ॥ दूति ममकृते गत्वा । गेहे तस्या निवेदय ॥ २४ ॥ रुक्मिण्याः कृष्णमानेन । गर्विताया ब्रुवे कथं ॥ इति भीतापि सत्याया । वचः स्वीकृत्य साचलत ॥ २५ ॥ प्रभूतवातयोगेन । कंपमानेव सा भयात ॥ गत्वा च रुक्मिणीगेहे । मौनमालंब्य संस्थिता ॥ २६ ॥ मौनेन संस्थिताभग्रे । तां समालोक्य दूतिकां ॥ रुक्मिणी जल्पयामास । कौटिल्यरहितोज्ज्वला ॥ २७ ॥ यत्कारणं समुद्दिश्य । समागता मदंतिके ॥ तत्कारणं ममाग्रे त्वं । जल्पथा निर्भया सती ॥ ३० ॥ रुक्मिण्येत्युदिते दूती । बिभ्यती प्रस्खलद्वचाः ॥ सत्यभामोदितं सर्व—मपि वृत्तांतमभ्यधात ॥ ३१ ॥ समाकर्ण्य समाचारं । तथा स्वमुखभाषितं ॥ हसित्वा रुक्मिणी प्रोचे । किमत्र प्रश्नकारणं ॥ ३२ ॥ भगिनी सत्यभामा मे । तस्या रुचिर्यथा भवेत ॥ तद्वचनं तथैवास्तु । प्रमाणगोचरं मम ॥ ३३ ॥

क्मिण्यां चिंतयंत्यलं ॥ ८ ॥ यावत्पुण्योदयः पुंसो । योषितोऽप्यथवा भवेत ॥ केनापि वैरिणा ता
व—त्तदपायो न चिंत्यते ॥ ९ ॥ यद्यपीति विजानंती । सत्यभामा मनीषिणी ॥ तथापि महिषी-
त्वेन । तदपि व्यस्मरत्समं ॥ १० ॥ विस्मार्य मनसश्चेति । रुक्मिण्या मानहानये ॥ उपायो मयका
लब्धः । सत्यभामेत्यमूमुदत ॥ ११ ॥ संतानमपि जायेत । वयोयोगेन योषितां ॥ रुक्मिणी वर्तते
मत्तो । लघुस्तुब्ववयोयुता ॥ १२ ॥ ततोऽस्यास्तनयस्तूर्णं । भविष्यत्यथवा न वा ॥ वृद्धाया वयसा
भावी । मम त्ववश्यमंगजः ॥ १३ ॥ वृद्धत्वात्प्रथमं भावी । यदि मम सुतोत्तमः ॥ परिणेष्यति भू-
यिष्ठो—त्सवात्कृष्णविनिर्मितात् ॥ १४ ॥ एतस्याः सहजेनैव । दुःखं हृदि भविष्यति ॥ मम च प्र-
चुरं सौख्यं । दुःखमस्या विलोकनात् ॥ १५ ॥ ततोऽपि प्रकटीकुर्वे । कलां कामपि बुद्धितः ॥ लो-
कहास्याद्यथा सा स्या—द्विशेषेण विडंबिनी ॥ १६ ॥ साक्षिणौ रामगोविंदौ । योग्यायोग्यविचा-
रिणौ ॥ कृत्वा प्रथमतः पश्चा—त्कुर्वे बुद्धिविचारणां ॥ १७ ॥ सत्यभामा विमृश्येति । दूतीमाकार-
यद्भवात ॥ स्वामिन्याकारणेनैव । प्रीत्या सापि समागता ॥ १८ ॥ आगतां कथयामास । सत्या
संदेशहारकां ॥ याहि त्वं रुक्मिणीगेहे । गत्वा वद वचो मम ॥ १९ ॥ तव पुण्यप्रसादेन । यदि

विरचिते श्रीशांबप्रद्युम्नचरित्रे कृष्णरुक्मिणीपरिणयनशिशुपालजयसत्यभामाविमंबनभ्रजातसुतविवाहमेलनवर्णनो नाम पंचमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ षष्ठः सर्गः प्रारभ्यते ॥

अथ श्रीपतिमानेन । रुक्मिणी रमणी वरा ॥ केवलं सुखपाथोधौ । मग्ना तिष्ठति सर्वदा ॥१॥ यथा यथा सुखांभोधौ । मग्नां पश्यति रुक्मिणीं ॥ तथातथेर्ष्यया सत्य—भामा भवति दुःखिनी ॥ ॥ २ ॥ हा मत्तो लघुरप्येषा । बभूव कृष्णमानिनी ॥ अहं वृद्धापि संजाता । स्वामिनश्चापमानिनी ॥ ३ ॥ तेन केनाप्युपायेन । कष्टमस्या भवेद्यदि ॥ तदैव पुंडरीकाक्ष—माननीया भवाम्यहं ॥ ॥ ४ ॥ व्यधत्त सत्यभामाथ । रुक्मिण्यपायचिंतनं ॥ सपत्न्याश्च सपत्नी हि । प्रायोऽपायं विचिंतयेत ॥ ५ ॥ अपायं चिंतयंत्यापि । सपत्नीभावतस्तया ॥ न लब्धस्तादृशः कोऽप्य—पायोपायो मनागपि ॥ ६ ॥ सत्याया इति दुःखिन्या । गतः कालः कियानपि ॥ तावद्दुर्योधनेशस्य । सा लेखागममस्मरत ॥ ७ ॥ श्रुत्वा लेखागमं सत्य—भामा मनस्यमोदत ॥ दुग्धसिक्ये बिडालीव । रु-

र्योधनोऽपि संबंधं । निश्चिकाय स्वचेतसि ॥ ५४ ॥ ततो वस्त्रादिदानेन । तोषितास्ते च भूभुजा ॥
विसृष्टाश्च गता दूताः । पुरुषोत्तमसन्निधौ ॥ ५५ ॥ समागमेन दूतानां । हर्षपूरितचेतसां ॥ अत्यंतं
पुंडरीकाक्षो—ऽप्यभून्मुदितमानसः ॥ ५६ ॥ वार्ता तां दूतसंभूतां । न विजानाति रुक्मिणी ॥ स·
त्यभामा विजानात्य—नुसारेण मनागपि ॥ ५७ ॥ विचक्षणापि मर्त्यानां । मनश्चौर्यविनिर्मितौ ॥
सत्यभामां विना काचि—न्नातस्तां वेत्ति कामिनी ॥ ५८ ॥ रुक्मिण्या सह भुंजानो । भोगान् पं·
चेंद्रियोद्भवान् ॥ यादवैर्यादवेशश्च । धृताज्ञः सुखमन्वभूत ॥ ५९ ॥ शिशुपालेशदानेन । संकटे प·
तितापि हि ॥ हरिणा पुण्ययोगेनो—पयेमे रुक्मिणी कनी ॥ ६० ॥ कंरुक्षोणीनाथहस्तात्प्रजाता
। वंश्या यष्टिः पुण्ययोगेन विद्युत ॥ पुण्याढ्यस्याधीश्वरस्याथवाभू—न्मर्त्यक्षोभोत्पादि वाज्रं कृपाणं
॥ ६१ ॥ पुण्याद्विष्णोर्द्वारिकां वासयित्वा । यक्षेणाहोरात्रमात्रेण दत्ता ॥ पुण्याज्जित्वा वैरिवारं प्रचं·
डं । गोविंदोऽसौ रुक्मिणीमाससाद ॥ ६२ ॥ वर्यं कार्यं सुकृतमकृतारंभसंभारदंभैः । प्रोक्तं मुक्तप्र·
तिघघनतासंगमैस्तीर्थनाथैः ॥ तस्मात्तत्तत्सुकृतकरणात्स्वर्गलोकापवर्ग—प्रादुर्भूतं भवति भविनां श·
र्म कर्मापहारं ॥ ६३ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणि·

युष्माभिः । स्वीकर्तव्यं वचो मम ॥ ४३ ॥ चिकीर्षुरिह संबंधं । प्रायः सर्वजनो वदेत ॥ अभिमा-
न्यपि वाक्यं हि । विनयेनात्र नाद्भुतं ॥ ४४ ॥ अपत्ये भाविनी वर्ये । वर्तेते आवयोर्यदि ॥ त-
योर्विवाहयोगेन । मैत्री भूयान्मिथो दृढा ॥ ४५ ॥ मिथो भवंति संबंधा । लोकेऽपि बहवो नृणां ॥
पुत्रपुत्रीप्रदानं हि । संबंधं न विना दृढं ॥ ४६ ॥ युष्माकं जायते पुत्र—स्तनया च यदा मम ॥
अथवा दैवयोगेन । पुत्रो मे श्रीमतां सुता ॥ ४७ ॥ तदोभयोरपि प्रौढो—त्सवेन पाणिपीडनं ॥
विधेयमावयोः प्रीति—प्रवृद्ध्यै परस्परं ॥ ४८ ॥ अनेनापि प्रकारेण । संबंध आवयोर्यदि ॥ दूर-
स्थयोरपि प्रीति—रर्काब्जयोरिवैधते ॥ ४८ ॥ लेखमध्ये समालोक्य । लिखितं चैवमच्युतः ॥ मु-
मुदे हृदि संबंध—निर्मितौ को न मोदते ॥ ४९ ॥ सभायामपि गोविंदो । जगादामंदसंमदः ॥
एवमप्युभयोर्योग्ये । संबंधे हानिरस्ति का ॥ ५० ॥ श्रावयित्वेति पार्षद्या—न्निखिलानपि सादरं ॥
वस्त्राभरणदानेन । दूतः संतोषितो भृशं ॥ ५१ ॥ दुर्योधनोक्तविज्ञप्ति—स्वीकारसूचनाय च ॥ सं-
तोष्योच्चैर्निजैर्दूतै—स्तं विससर्ज माधवः ॥ ५२ ॥ हरिणा प्रेषितैर्दूतैः । समं निश्चयसूचकैः ॥ सो-
ऽपि दुर्योधनोपांते । गत्वा निश्चयमब्रवीत ॥ ५३ ॥ केशवप्रेषितैर्दूतैः । सममालाप्य तुष्टितः ॥ दु-

इतश्चैश्वर्ययुक्तेन । दुर्योधनमहीभुजा ॥ लिखित्वा प्रेषितो लेखो । दूतेन सह शार्ङ्गिणः ॥३२॥
अनेहसाचिरेणैव । दूतोऽपि द्वारिकापुरि ॥ एत्य नत्वा हरिं लेख—मर्पयामास मंत्रिणः ॥ ३३ ॥
मंत्रिणापि समादाय । द्रागुन्मुद्य च पाणिना ॥ विनयात्प्रददे लेखः । सभास्थस्य वृषाकपेः ॥३४॥
सचिवस्य प्रदानेन । गृहीत्वा पाणिनात्मनः ॥ कृष्णोऽप्यवाचयत्तं कः । शुभोदंते हि नोद्यमी ॥
॥ ३५ ॥ वाचयित्वा स्वयं लेखं । मंत्रिणोऽर्पयदच्युतः ॥ आनंदकारको लेखो । द्वितीयस्य हि दी-
यते ॥ ३६ ॥ सचिवोऽपीशचित्तज्ञः । श्रावणार्थं सभासदां ॥ वाचयामास तं लेखं । स्फुटार्थं प्रम-
दं वहन् ॥ ३७ ॥ स्वस्तिश्रियां महागारं । कल्याणकलशं सतां ॥ निर्मलकेवलालोका—लोकिता-
लोकलोककं ॥ ३८ ॥ श्रीमंतं तं जिनं नत्वा । तत्वातत्वार्थवादिनं ॥ श्रीमत्यां द्वारवत्यां च । ह-
स्तिनागाभिधात्पुरात् ॥ ३९ ॥ दुर्योधनो भवद्भृत्यः । सप्रणामं ससंमदः ॥ लिखति प्रबलप्रेम—
पूरेण प्रीतिपत्रिकां ॥ ४० ॥ यथा कार्ये समस्त्यत्र । कुशलं कृपया तव ॥ तत्रत्यो नः समस्तोऽप्यु
—दंतो ज्ञाप्यो विशेषतः ॥ ४१ ॥ अत्र स्थितोऽप्यहं यौष्मा—कीण एवास्मि सेवकः ॥ यूयं तु
परमाप्तीष्ठा । वर्तध्वे बांधवा मम ॥ ४२ ॥ ततो विज्ञपयाम्युच्चैः । संबंधं कर्तुमावयोः ॥ महद्भिरपि

अनुजायाश्च मान्यायाः । प्रणामेनार्चनेन च ॥ को दोषो मे विनीतायाः । किं हास्यते मुधा हरे ॥ २० ॥ देवतापूजया यत्र । द्राग्याचितोपयाचिते ॥ मृगीदृशः प्रकुर्वंते । तत्र नैति विवेकवान् ॥ ॥ २१ ॥ वैरिणी तरुणी नैव । प्रकर्तव्या विचक्षणैः ॥ इति सत्या विलक्षास्या । ततो यावत्समुत्थिता ॥ २२ ॥ पूर्वं मत्तोऽप्यसौ मान्या । वृद्धा वाभूद्वृषाकपेः ॥ प्रपूज्या विनयेनेयं । सत्यभामा ममापि च ॥ २३ ॥ विज्ञायेति समुत्थाय । रुक्मिणी विनयान्विता ॥ ननाम सत्यभामांह्री । विनीता हि कुलोद्भवा ॥ २४ ॥ इयं मम सपत्नीति । विजानत्यपि चेतसि ॥ रुक्मिणीं सत्यभामाप्यालिलिंग व्यवहारतः ॥ २५ ॥ सावीवदच्च कल्याणि । कुशलं तव वर्ष्मणि ॥ रुक्मिण्यप्यवदत्क्षेममेवास्ति त्वत्प्रसादतः ॥ २६ ॥ परस्परं मिलित्वा च । निरीक्ष्य रूपसंपदं ॥ बाह्यप्रेमरसान्वीते । गते ते निजमंदिरं ॥ २७ ॥ रुक्मिण्या बहुमानात्स्व—भर्तुश्चात्मन्यमानतः ॥ सत्यभामा तु वृद्धापि । दुःखिनी संस्थिता गृहं ॥ २८ ॥ मुदिता विष्णुमानेन । रुक्मिणी भवने स्थिता ॥ स्वभर्तुर्बहुमानेन । कस्या न स्यादमंदमुत ॥ ३० ॥ प्रभूतदुःखसौख्याभ्यां । पत्यपमानमानतः ॥ प्रायो गमयतः कालं । ते द्वे अपि मृगीदृशौ ॥ ३१ ॥

वन्निर्गत्य कौतुकी ॥ हस्ततालान् ददत्यास्या—त्सत्यभामामवीवदत् ॥ ८ ॥ साधु साधु प्रिये प्रोक्तं
। रुक्मिणीचरणार्चनात ॥ भविष्यति सुसौभाग्य—वशस्ते केशवोऽपि च ॥ ९ ॥ ततस्त्वं पूजयै-
तस्याः । शस्यं चरणवारिजं ॥ मुहुर्मुहुर्नमैतां च । माकार्षीर्मनसि मदं ॥ १० ॥ मुकुंदोदितमाक-
र्ण्य । ज्ञात्वा च तस्य चेष्टितं ॥ सत्यभामा प्रबुध्वापि । चकिता लज्जिता भृशं ॥ ११ ॥ अहो दु-
रात्मनानेन । गोपालेन मुरारिणा ॥ वंचिताहं कुलीनापि । सपत्नीपादपातनात् ॥ १२ ॥ विषादं प्र-
दधानेति । क्रोधं संवृत्य चेतसि ॥ प्रसन्नवदनेवोचे । शृणु मातृमुखाच्युत ॥ १३ ॥ यशोदास्तनपा-
नेन । गोपालो गीयसेतमां ॥ यादृश एव गोपाल—स्तादृश एव वर्तसे ॥ १४ ॥ गोपालेन वि-
ना दुष्टं । चेष्टमीदृशमुत्तमः ॥ न नरः कुरुते कश्चि—त्तथा हास्यमपीदृशं ॥ १५ ॥ सत्यं मयाद्य
विज्ञातं । गोपालो वर्तते भवान् ॥ कुचेष्टा योषिता साकं । गोपालेनैव जन्यते ॥ १६ ॥ दीयते
किमुपालंभो । दुष्टस्य तस्य वेधसः ॥ त्रिखंडाधिपतिर्येन । कृतो मूर्खस्त्वमीदृशः ॥ १७ ॥ मूर्खत्वं
यदि ते स्यान्नो । तदपि ज्ञायते तव ॥ समस्ति समयः कोऽयं । मम हास्यविनिर्मितौ ॥ १८ ॥
पूर्वं मया पुरस्तात्ते । वर्तते प्रतिपादितं ॥ इयं तु मयका मान्या । रुक्मिण्यस्ति ममानुजा ॥ १९ ॥

मर्चित्वा जगौ साशु । रुक्मिण्यागमभीतितः ॥ ९६ ॥ दुर्लभं पुण्यहीनानां । देवतादर्शनं भुवि ॥
देवतादर्शनं प्रायः । पुण्येनैव प्रजायते ॥ ९७ ॥ यद्यद्य विद्यते प्रोद्य—द्योग्यं भाग्यं ममामलं ॥
तदा ते दर्शनं जातं । देवि लोचनगोचरे ॥ ९८ ॥ पूजयित्वा स्मितांभोजै—स्तस्याः पादौ प्रण-
म्य च ॥ स्तुवती सत्यभामापि । संयोज्योचे करद्वयं ॥ ९९ ॥ दर्शनं देवदेव्योश्च । मुधा स्यान्न
कदाचन ॥ ततः प्रसद्य देवि त्वं । मे प्रसन्नं हरिं कुरु ॥ ४०० ॥ स्वामिन्या वचनं सर्वं । मानये·
त्किंकरः पुमान् ॥ त्वं विधेहि तथा नाथो । यथा मे कुरुते वचः ॥ १ ॥ रुक्मिण्या उपरि स्नेह—
रक्तत्वेन करोति न ॥ मय्येव स्नेहमासक्त्या । कुर्याद्देहि तथा वरं ॥ २ ॥ तं रुक्मिण्यामनासक्तं ।
विरक्तं भक्तवर्जितं ॥ मय्येव रक्तमासक्तं । भक्तपानकरं कुरु ॥ ३ ॥ मंत्रेण यंत्रितो मत्तो । यथा
याति न कुत्रचित ॥ मत्प्रेमरसमंत्रेण । बद्धं कुरुष्व केशवं ॥ ४ ॥ देहि देहि वरं मात—र्देवि स·
त्वरमर्तिभित ॥ रुक्मिणी च सपत्नी मे । पश्चात्समागमिष्यति ॥ ५ ॥ इत्युदित्वा मुकुंदस्य । वशी·
करणवांछया ॥ रुक्मिण्यधिकसौभाग्यं । याचितुं साक्षुठद् भुवि ॥ ६ ॥ उक्त्वेत्यतीवचाटूनि । व·
चनानि पुनः पुनः ॥ सत्यभामालुठद्याव—द्रुक्मिणीपादपंकजे ॥ ७ ॥ गुल्ममध्यान्मुकुंदस्तु । ता·

आगंतव्यं त्वया देवि । तामाह्वातुं प्रयाम्यहं ॥ इत्युक्त्वा पुरतो भूत्वा । गुल्मांतर्गतवान् हरिः ॥ ८४ ॥ कां कां करिष्यतश्चेष्टां । सपत्न्यौ मिलिते उभे ॥ इति कौतुकतः कृष्ण—स्तत्रैव रहसि स्थितः ॥ ८५ ॥ वने यावत्समागत्य । सत्यभामा विलासिनी ॥ एकाकिन्यपि नो भीता । समीक्षत इतस्ततः ॥ ८६ ॥ दर्शनीयां प्रसन्नां चा—शोकक्षितिरुहादधः ॥ श्रीदेवीं रुक्मिणीरूपां । साक्षात्तावदैक्षत ॥ ८७ ॥ किमेषास्त्यसुरी देवी । किमेषा व्यंतरी तथा ॥ एषा ज्योतिषिकी किंवा । किंवा वैमानिकी सुरी ॥ ८८ ॥ यदा भाग्यं भवेद्भूरि । देवतादर्शनं तदा ॥ प्रसन्नं तदपि प्रोच्चै—र्दृश्यते तन्महोदयः ॥ ८९ ॥ बहुशः पूजिता पूर्व—माराधिताश्च भूरिशः ॥ एवंविधा प्रसन्नैषा । मया दृष्टा न जातुचित ॥ ९० ॥ देवाश्च गुरवो देव्यः । पूजिता मानिताः स्मृताः ॥ समस्तचिंतितार्थानां । पूरणाय भवंत्यलं ॥ ९१ ॥ ततोऽहमप्यमूं देवीं । पूजयामि सुखाप्तये ॥ चिंतयित्वेत्यगच्छत्सा । वापिकावारिसन्निधौ ॥ ९२ ॥ पूतं वापीजलं लब्ध्वा । हस्तांह्रिमुखधावनैः ॥ तस्याः पूजाकृते तूर्णं । सा देशस्नानमाचरत ॥ ९३ ॥ देशस्नानं विधाय प्राग् । गृहीत्वा जलजानि च ॥ तां मूर्तिं पूजयामास । नार्थिनी विदधाति किं ॥ ९४ ॥ शतपत्रैः सहस्राग्र—पत्रैश्च सरसीरुहैः ॥ ता·

विराजिराजिहंसाद्यै—र्द्वंद्वचारैर्विहंगमैः ॥ स्वेच्छया क्रियते क्रीडा । नयक्रीडाविनाकृतैः ॥ ७३ ॥ त-
स्य शस्यांतिके भास्व—दशोकस्तत्र पादपः ॥ छायानिषेवणां पुंसा—मशोकताविधायकः ॥ ७४ ॥
अधस्तस्य तरोरस्ति । स्फटिकस्योज्ज्वला शिला ॥ निवेश्य रुक्मिणीं तत्र । साक्षाद्देवीमिवावनौ ॥
॥ ७५ ॥ तालवृंतं प्रसूनानां । स्वहस्ताभ्यां विधाय च ॥ वारणायैव भृंगाणां । तत्करे प्रददौ हरिः
॥ ७६ ॥ कृत्वा श्रीदेवतारूपं । दत्वा च व्यजनं करे ॥ तत्र तु स्थापयित्वा तां । सत्यासद्म गतोऽ-
च्युतः ॥ ७७ ॥ तत्र गत्वावदद्विष्णुः । प्रिये चेत्तव चेतसि ॥ रुक्मिणीमिलनोत्कंठा । मेलयामि
तदा द्रुतं ॥ ७८ ॥ सोवाचैका स्वसा मे सा । त्वया या चातिमानिता ॥ मेल्यते यदि सा नाथ ।
प्रसादस्तन्महान् मम ॥ ७९ ॥ इति प्रोक्ते हरिः प्राह । यद्येवं हरिणेक्षणे ॥ आगच्छ प्रथमं तर्हि ।
वने त्वमेव सत्वरं ॥ ८० ॥ पश्चान्निकेतने तस्या । गत्वाहमविलंबितं ॥ भगिनीमानयिष्यामि । मे-
लनार्थं तव प्रिये ॥ ८१ ॥ कृष्णोक्तमेवमाकर्ण्य । सत्यभामाब्रवीदथ ॥ यथा प्रसादयस्यार्य । प्रमा-
णं मे वचस्तथा ॥ ८२ ॥ सत्यभामोदितं श्रुत्वा । निर्ययौ श्रीपतिर्बहिः ॥ सत्यभामापि रुक्मिण्यै ।
कृष्णेन सह निर्गता ॥ ८३ ॥

जंगमं सुरशाखिनं ॥ विनयात्सहसोत्थाय । रुक्मिण्या दत्तमासनं ॥ ६० ॥ तत्र स्थित्वा क्षणं कृष्णो
। बभाण रुक्मिणींप्रति ॥ परिधेहि प्रिये रम्य—वासांसि च सुकंचुकं ॥ ६१ ॥ भूषणान्यपि निः
शेषा—ण्याशिरश्चरणावधि ॥ उचितानि विभूषार्थं । परिधेहितमां तनौ ॥ ६२ ॥ न ज्ञायते यथा
भेदो । लक्ष्म्याश्च तव मूर्तितः ॥ परिधेहि तथा देहे । शृंगारान् सुभ्रु षोडश ॥ ६३ ॥ परिधायां-
शुकादीनि । शोभनानि मया सह ॥ ज्येष्ठायाः सत्यभामाया । एहि प्रमदकाननं ॥ ६४ ॥ प्रमाणं
स्वामिनो वाक्य—मित्यभिधाय रुक्मिणी ॥ देहं शृंगारयित्वोच्चै—र्निर्ययौ हरिणा समं ॥ ६५ ॥
रुक्मिणी यावदायाता । वने तत्र मनोहरे ॥ तावत्पतत्रिणां ध्वानै—र्जयजयारवायितं ॥ ६६ ॥ स-
मीरचालिताशेष—शाखाग्रैः शाखिसंचयैः ॥ पवित्रचित्रवादित्रा—यितं कोमलनिःस्वनैः ॥ ६७ ॥
कोकिलैर्मधुरध्वानै—र्गीतगानायितं भृशं ॥ ऊर्ध्वीकृत्य कलापांश्च । मयूरैर्नर्तकायितं ॥ ६८ ॥ रु-
क्मिणीहृषीकेशाभ्यां । शोभितं काननं च तत् ॥ यथेंद्राणीसुरेशाभ्यां । वनं हि नंदनाह्वयं ॥६९॥
पुष्करिणीव देवानां । भूरिवारिसमन्विता ॥ तत्रैका वापिका चास्ति । पुंडरीकैर्मनोरमा ॥ ७० ॥
वेदिका जातरूपस्य । वररत्नमहीतला ॥ शातकौंभानि सोपाना—न्याधत्ते परितश्च या ॥ ७१ ॥

रणपालिता ॥ ४८ ॥ अध्यापिता चतुःषष्टि—स्त्रीगुणा वर्धिता मया ॥ समीचीनं तदा जातं । सा
चेत्त्वया गुरूकृता ॥ ४९ ॥ स्नेहात्तस्या मलेनापि । शारीरेण विज्ञो त्वया ॥ आनीतेन च चेद्देहो
। विलिप्यतेतमां मया ॥ ५० ॥ तदापि परमं सौख्यं । जायते मम विग्रहे ॥ किं पुनर्मुखभूतेन ।
तांबूलेन हसस्यरे ॥ ५१ ॥ लज्जितापि मनोधाष्टर्यं । कृत्वा सत्या जगौ हरिं ॥ सर्वथा न सतां यु-
क्तं । हसनं कारणं विना ॥ ५२ ॥ वचनं सत्यभामोक्त—मिति श्रुत्वा सनातनः ॥ निजगाद ह-
सित्वा तां । साधु साधु त्वयोदितं ॥ ५३ ॥ मया देवि न विज्ञात—मेतावतमनेहसं ॥ भगिन्या
मुखतांबूल—मीदृशं तव वल्लभं ॥ ५४ ॥ यदीदं वर्तते तस्या—स्तांबूलं वल्लभं तव ॥ आनीय प्र-
त्यहं तर्हि । तुभ्यं दास्यामि स्वामिनि ॥ ५५ ॥ सत्योचे रुक्मिणीवक्र—संभूतं स्वांशुकांचले ॥ ब-
द्ध्वानीतं त्वया नाथ । तत्कथं न प्रियं मम ॥ ५६ ॥ मिथो वार्ता विधायेति । दंपतीभ्यां स्थितं
क्षणं ॥ तावत्सत्यावदद्विष्णुं । नवां दर्शय मे वधूं ॥ ५७ ॥ जगदे च मुकुंदेन । भगिनीदर्शनस्पृ
हा ॥ वर्तते तव चित्ते चेत । पूरयिष्यामि तां तदा ॥ ५८ ॥ इत्युक्त्वा कियतीं वेलां । यावत्स्थि
त्वा हरिस्ततः ॥ जगाम रुक्मिणीगेहे । ययौ स्नेहं वहन् बहु ॥ ५९ ॥ विष्णुमायांतमालोक्य ।

॥ ३६ ॥ त्वया किमविचारेण । कलासंपूर्णयापि च ॥ तेन लिप्तं वपुर्वक्रे । वंचितासि मनस्विनि ॥ ३७ ॥ कथयित्वेति गोविंदः । करतालान् ददद्भहून् ॥ सत्यभामां जहासोच्चैः । कपोलाद्दणोः समुल्लसन् ॥ ३८ ॥ पूगीफललवंगादि—सुरभिद्रव्यसंयुतं ॥ चर्वितं च तया वक्रे । वांतं चैतन्मुखात्ततः ॥ ३९ ॥ द्रव्येण तेन निंद्येन । समस्तैरपि भूतले ॥ त्वया लावण्यशालिन्या । लिलिपे स्वं वपुः कथं ॥ ४० ॥ पद्मिनीजातयः कांता—श्चित्रिणीजातयस्तथा ॥ हस्तिनीजातयश्चापि । शंखिनीजातयो मम ॥ ४१ ॥

परं मम त्वमेवासि । सर्वाभ्योऽपि गरीयसी ॥ त्वमेव पुण्यलावण्या । त्वमेव प्राणवल्लभा ॥ ॥ ४२ ॥ त्वमेव परमाभीष्टा । त्वमेवाग्रमहिष्यसि ॥ तांबूलस्य विलेपेन । दक्षापि वंचिता कथं ॥ ॥ ४३ ॥ अभीक्ष्णं कथयन्नेवं । त्रिविक्रमोऽहसद्यदा ॥ सत्यभामा तदोवाच । रे त्वं हससि मूढ किं ॥ ४४ ॥ पुरा भुक्ता चिरं कालं । भीष्मभूपालनंदिनी ॥ शिशुपालाय दत्ता सा । हठेन जगृहे त्वया ॥ ४५ ॥ उत्तमो यो भवेल्लोके । कन्यां रूपवतीमपि ॥ परादत्तां न गृह्णाति । सर्वथा हि हठेन सः ॥ ४६ ॥ मयैव मलमूत्राणां । क्षालनेन पवित्रिता ॥ लालिता मयका दुग्ध—पानका-

सत्यभामां मनस्विनीं ॥ मुखमाछाद्य सुष्वाप । कृष्णः कपटनिद्रया ॥ २५ ॥ कृष्णेन सुरभिद्रव्यं । यद्बद्धमुत्तरीयके ॥ तस्य गंधेऽन्वितो लुब्धा—स्तावद्भृंगाः समागताः ॥ २६ ॥ द्राक्कुसुमवनादेतां । सुगंधौत्कट्यलोभिनीं ॥ भृंगालीं वीक्ष्य जालेषु । सत्यभामा त्वकुप्यत ॥ २७ ॥ अहो पश्यंतु का-मिन्यः । पुंसां संमोहमीदृशं ॥ ज्येष्ठाप्युपेक्ष्यते ह्येका । लघुरन्या च मन्यते ॥ २८ ॥ मम धाम समागत्य । सुप्तस्याप्यस्य शार्ङ्गिणः ॥ एतावानपि नो स्नेहो—ऽन्नवन्मयेदमर्प्यते ॥ २९ ॥ तस्या एवातिलावण्य—रूपसौंदर्यसंपदे ॥ इदं तु सुरभिद्रव्यं । गत्वा यत्तत्र दास्यति ॥ ३० ॥

चिंतयंतीति कोपेन । सत्यभामात्ममानसे ॥ निद्रागतं हरिं मत्वा । ग्रंथिमछोटयछनैः ॥ ३१ ॥ छोटयित्वा च तद् द्रव्यं । सुरभिसंयुतं मुदा ॥ कुंकुमचंदनोपेतं । मर्दयामास भामिनी ॥ ३२ ॥ म-र्दयित्वा च तद् द्रव्यं । मस्तके च पदद्वये ॥ रुक्मिण्या अधिकं रूपं । धर्तुं लिप्तं वपुस्तया ॥ ३३ ॥ रुक्मिणीतोऽधिकं मेऽस्तु । सौभाग्यं च हरिर्वशः ॥ विलिपंती मुखं सोचे । पतिमानाभिलाषिणी ॥ ३४ ॥ सत्यभामाप्रजल्पंतीं । समाकर्ण्येति भारतीं ॥ सहसा मुखमुद्घाट्य । निजगाद जनार्दनः ॥ ३५ ॥ अये प्रिये परं मुग्धे । किं प्रारब्धमिदं त्वया ॥ एतत्समस्ति तांबूलं । सपत्नीमुखसंभवं ॥

कथमायामि । न्नवत्या न निकेतनं ॥ १३ ॥ इत्युक्त्वा सत्यन्नामाया । वासौको जग्मिवान् हरिः ॥
शय्यासनादिदानेन । तयापि विनयः कृतः ॥ १४ ॥ वर्यां शय्यां समासाद्य । कापट्येन जगौ हरिः
॥ निडायाः पारवश्येन । समायातोऽस्मि संप्रति ॥ १५ ॥ भवेद्यदि त्वदीयाज्ञा । शय्यायामत्र सां-
प्रतं ॥ प्रकरोमि तदा तंडां । प्रयासक्लथहेतवे ॥ १६ ॥ नास्ति भोगार्थमेतोऽयं । निद्राघूर्णितलोच-
नः ॥ इत्यमर्षानुषंगेन । सत्यन्नामा जगौ हरिं ॥ १७ ॥ सत्यं सत्यं त्वया स्वामिन् । पुरस्तान्मम
भाषितं ॥ निडां कर्तुं न दत्तोऽसि । सीमंतिन्या नवोढया ॥ १७ ॥ निद्रां कर्तुमपीहेश । समेतव्यं
त्वयानिशं ॥ न सा तव नवीनत्वा—न्निद्रां कर्तुं प्रदास्यति ॥ १ए ॥ त्वयैवाहं तु त्नुक्तास्मि । चि-
रकालं जनार्दन ॥ ततो न्नोगस्पृहा नास्ति । मम चित्ते मनागपि ॥ २० ॥ त्वयका सैव संतोष्या ।
परिणीता नवा वधूः ॥ कर्तव्यं हि प्रबुद्धेन । नवीनायां मनःस्थिरं ॥ २१ ॥ परं निद्रां विनाहारो ।
नोपैति परिपाकतां ॥ समाधिश्च शरीरे न । न च श्रमपरिक्षयः ॥ २२ ॥ ततो वच्मि हितार्थं ते ।
समागत्य निरंतरं ॥ अत्र निद्रा प्रकर्तव्या । समाधिविधये त्वया ॥ २३ ॥ मुकुंदोऽप्यब्रवीद्देवि । त्व-
मग्रमहिषी मम ॥ कथं न चिंत्यते न्नूयो । हितं त्वया प्रिये मयि ॥ २४ ॥ संतोष्य वचनेनेति ।

र्दनः ॥ १ ॥ यदि ब्रवीषि देवीछं । स्नेहिनी तद्दिदृक्षया ॥ त्वदीयवचसा तुष्ट—स्तस्या यास्यामि मंदिरं ॥ २ ॥ अन्यदा शुक्लशर्वर्यां । स्थितमस्ति शिरोगृहे ॥ मिथः प्रेमप्रपूर्णाभ्यां । दंपतीभ्यां यदृछया ॥ ३ ॥ परिपक्वान्यशुष्काणि । कीटकाभक्षितानि च ॥ नागवल्लीदलानीह । तदा दासी वराणि च ॥ ४ ॥ एलालवंगकर्पूर—पूगीखदिरसारयुक् ॥ वर्ण्यजातिफलाद्याढ्यं । द्रव्यमप्यानयद्वरं ॥ ५ ॥ युग्मं ॥ कृष्णेन निजहस्तेन । रुक्मिण्या मुक्तमानने ॥ तांबूलमतिवाल्लभ्या—द्रुक्मिण्या च हरेर्मुखे ॥ ६ ॥ चर्वयित्वा रसालत्वा—त्तांबूलं मुखमध्यतः ॥ विकिरत्यवनीपीठे । यावता रुक्मिणी वधूः ॥ ७ ॥ विचालादेव तांबूलं । तावदादाय विष्णुना ॥ बद्धं निजांचले शौचा—शौच धीः प्रेम्णि नास्ति हि ॥ ८ ॥ ग्रंथौ निबध्य तत्तस्मात । स्थानादुछाय माधवः ॥ गत्या प्रोत्तुंगहस्तीव । सत्यभामागृहं ययौ ॥ ९ ॥ आगछंतं समालोक्य । पुंडरीकाक्षमीर्ष्यया ॥ जजल्प सत्यभामापि । दग्धा विरहवह्निना ॥ १० ॥ याहि याहि च वैकुंठ । तत्रैव धाम तावकं ॥ यत्र दास इव प्रीत—स्तिष्ठसि त्वमहर्निशं ॥ ११ ॥ सत्यभामावचः श्रुत्वा । वक्रोक्त्या हास्ययोगतः ॥ जगाद पुंडरीकाक्षो । भ्रांत्यात्राहं समागतः ॥ १२ ॥ यदि त्वं प्रथमं मुग्धे । मम दासीव वर्तसे ॥ तदाहं

वाचया ॥ ९० ॥ स्वामिंस्तवोग्रचातुर्य—लावण्यरूपपारगा ॥ ममाग्रमहिषी पत्नी । सत्यन्नामा श्रुता- न्नवत् ॥ ९१ ॥ मया तव प्रिया सा तु । कदाचिदपि नेक्षिता ॥ कथं त्वमपि तन्नेह—मद्य याव- न्नतोऽसि न ॥ ९२ ॥ नारीत्वान्मानिनी मान्नू—देषापि मम मानतः ॥ विमृश्येत्यवदत्कृष्णः । सू- नृतमेव तत्पुरः ॥ ९३ ॥ रूपवत्यपि सा देवि । प्राज्याहंकारधारिणी ॥ अहंकारवती कांता । स्व- प्रियाय न रोचते ॥ ९४ ॥ वपुर्भूषाकरं लोके । प्रभूतसुखकार्यपि ॥ कर्णत्रुटिकरं स्वर्णं । केनापि परिधीयते ॥ ९५ ॥ एतद्वचः समाकर्ण्य । विष्णुना प्रतिपादितं ॥ मानसे रुक्मिणी भीता । न का पत्युर्बिभेति हि ॥ ९६ ॥

एवं मामपि माकार्षी—त्कदाचिन्माननिर्मितेः ॥ अहंकारो बलिष्टोऽयं । बिभ्यतीति ह्युवाच सा ॥ ९७ ॥ यत्त्वया कथ्यते नाथ । तत्सर्वमपि सुंदरं ॥ अहं जानामि नाथत्वात् । प्रमाणं हि प्रभो- र्वचः ॥ ९८ ॥ त्रुटिः श्रवणयोर्येन । जातरूपेण जायते ॥ केनापि यद्यपि श्रुत्यो—स्तन्नैव परिधी- यते ॥ ९९ ॥ तथापि हस्तयोर्लग्नं । पूर्वकर्मानुभावतः ॥ सर्वथा मुच्यते तन्न । सुवर्णं हि मनीषि- णा ॥ ३०० ॥ अदो वचनमाकर्ण्य । रुक्मिण्या वदनोद्भवं ॥ अमंदानंदसंदोह—स्तं जगाद जना-

—माघ्रायाच्युतषट्पदः ॥ ऐद्रत्करीरपुष्पाभां । सत्यभामां हृदापि न ॥ ७९ ॥ रुक्मिण्या अधिकं
मानं । श्रावं श्रावं जनोक्तितः ॥ सत्यभामा सपत्नीत्वाद् । दुःखिनी समभूद् भृशं ॥ ८० ॥ वियो-
गाद्दुःखिनीं पश्ये—त्सत्यभामां यथा यथा ॥ तुष्येदभीष्टसंप्राप्ते—र्नारदोऽपि तथा तथा ॥ ८१ ॥
एकस्य जायते दुःख—मेकस्य जायते सुखं ॥ अहो पश्यत संसार—स्वरूपं विषमं जनाः ॥८२॥
कुलीनापि मुकुंदेन । सत्यभामापमानिता ॥ सपत्नीमानसंश्रुत्या । समजायत दुःखिनी ॥ ८३ ॥ ए-
काकिनी समानीता । स्वयं गत्वा मुरारिणा ॥ रुक्मिणी गुणयोगेन । प्रभूतैरपि पूजिता ॥ ८४ ॥
पूजनीया गुणा लोके । शरीरं न शरीरिणां ॥ कर्तव्य उद्यमस्तस्मा—द्गुणानां समुपार्जने ॥८५॥
भवनाच्चित्तवाक्काये । स्वप्ने च जागरे हरेः ॥ आसीदर्धांगसेविन्य—प्येषा सर्वांगसेविनी ॥ ८६ ॥
स्नानं च भोजनं घस्रे । शयनं मोहनं निशि ॥ रुक्मिण्या एव सज्जन्य—कार्षीन्नारायणो मुदा ॥
॥ ८७ ॥ उग्रसेनसुता कांता । सत्यभामाख्यवल्लभा ॥ केनानेनागुणेनैवं । परित्यक्ता मुरारिणा ॥
॥ ८८ ॥ विज्ञायापगुणं चित्ते । परित्यजतु मां हरिः ॥ तं पृच्छामि सति स्नेह । आजन्मस्नेहवांछि-
नी ॥ ८९ ॥ विशेषेणैकदोत्पन्न—रसस्य सुरतस्य तु ॥ प्रांते त्रिविक्रमः पृष्टो । रुक्मिण्या चाटु-

तः कृष्णः । प्राविशत्स्वनिकेतने ॥ ६७ ॥ स्वप्रासादं गते विष्णौ । कृतकृत्योऽपि सात्वतः ॥ रेवतीदर्शनोत्कंठः । प्रासादं प्राप्तवान्निजं ॥ ६८ ॥ प्राप्य प्रासादमात्मीयं । रेवतीप्रियया समं ॥ शशीव बुभुजे भोगान् । रामः कलंकवर्जितः ॥ ६९ ॥ प्रासादं नवम्रमं च । वासाय रुक्मिणीस्त्रियाः ॥ विचित्ररचनायुक्तं । ददौ च पुरुषोत्तमः ॥ ७० ॥ दासीर्दासांश्च धान्यानि । गोकुलानि धनानि च ॥ हस्तिनो वाजिनो ग्रामान् । रुक्मिण्यर्थं हरिर्ददौ ॥ ७१ ॥ जनार्दनप्रसादेन । प्रासादेन विलासिना ॥ तथा रुक्मिण्यवेत सौख्यं । पितृसद्मापि नास्मरत ॥ ७२ ॥ लावण्येनाग्ररूपेण । गुणेन विनयेन च ॥ शीलेनापि तथा विष्णो—र्मनः संमोहितं तया ॥ ७३ ॥ स्त्रियामन्यत्र कुत्रापि । पवित्रायामपि गुणैः ॥ यथा वाचा शरीरेण । तस्य स्नेहो बभूव न ॥ ७४ ॥ नवीनत्वेन रुक्मिण्यै । यद्ययं तनुचेतसी ॥ दत्तवान् प्रचुरं प्रीत्यै । दीयतां तर्हि दीयतां ॥ ७५ ॥ वृद्धाया धीप्रबुद्धाया । विशुद्धाया मुदे मम ॥ वाङ्मात्रमपि नो दत्ते । धिग्धिग्प्रेम वृषाकपेः ॥ ७६ ॥ गतेषु दिवसेष्वेवं । कतिचित्स्वतिदुःखतः ॥ कांतालापवियोगेन । सत्याभवद्वियोगिनी ॥ ७७ ॥ स्नानं शरीरशुश्रूषा । परिधानं सुवाससां ॥ न च साकरोद्रमण्यो हि । तृषिताः कांतसंगमे ॥ ७८ ॥ रुक्मिणीमालतीपुष्प

अनंगमंगयुक्तं च । माधवं वीक्ष्य मानवाः ॥ रुक्मिणीं च रतिप्रीत्या । प्रत्यक्ततोऽप्यचिंतयन् ॥ ॥ ५६ ॥ काचिद्ब्रवीति नारीषु । रुक्मिण्येव वरीयसी ॥ यदर्थं पुंमरीकाक्षो । जग्मिवान् कुंडिनं पुरं ॥ ५७ ॥ काचित्समस्तमर्त्येषु । भाग्यवान् पुरुषोत्तमः ॥ शिशुपालनृपं जित्वा । जग्राह यो हठादिमां ॥ ५८ ॥ काचिच्च बहुविघ्नेऽपि । फलितश्चेन्मनोरथः ॥ महाभाग्यं वरीवर्त्य—चिंत्यं तदोभयोरपि ॥ ५९ ॥ काचित्तीर्थकृतां पूजा । या कृता पूर्वजन्मनि ॥ सानयोः फलवत्यासी—दत्र जन्मनि सर्वदा ॥ ६० ॥ काचित्पूर्वकृतं दानं । ध्यानं च विविधं तपः ॥ सफलं तद्ब्रूवात । दंपत्योरेतयोरलं ॥ ६१ ॥ लोकैः संस्तूयमानाभ्यां । दंपतीभ्यां प्रमोदतः ॥ द्वारिकायां सशोभायां । प्रवेशो विहितस्तदा ॥ ६२ ॥ अस्त्येषा त्रिदशाधीश—नगरी किं गरीयसी ॥ तां वीक्ष्य रुक्मिणी दध्यौ । सविस्मयमना इति ॥ ६३ ॥ प्रासादांस्तत्र जैनेंद्रान् । समालोक्य च रुक्मिणी ॥ मुमुदे भगवत्पूजा—धर्मकर्मचिकीर्षया ॥ ६४ ॥ अहो भाग्यं महन्मे यत् । कृत्वा पूजनमर्हतां ॥ अवतारं करिष्यामि । फलाढ्यमत्र मानुषं ॥ ६५ ॥ पाणिग्रहणमासाद्य । समेतस्य वरस्य तु ॥ यादृग्विधीयते कृत्यं । मांगल्यं विघ्नशांतये ॥ ६६ ॥ तादृक्कृत्यं कृतं प्राप्य । सुवासिनीभिरुत्सवैः ॥ रुक्मिणीसंयु-

मुकुटं श्रवणस्थाने । काचिद्वैयग्र्ययोगत. ॥ ४४ ॥ कुचयोरुपरि स्फारे । कुंडले काचिदंगना ॥ हारं चरणयोः काचि—न्निनदन्नूपुरं गले ॥ ४५ ॥ वस्त्राणां परिधानं तु । वैपरीत्येन यत्कृतं ॥ उपहा-स्यकरं पुंसां । किमुच्यते मयात्र तत् ॥ ४६ ॥ हावभावविलासान् स्व—भर्त्रा सत्रा वितन्वती ॥ उभयोरपि वैकल्या—त्काचिदुद्वाय निर्गता ॥ ४७ ॥ सीमंतं रचनावर्जं । मुक्त्वा काचिद्विनिर्गता ॥ मुखाग्र आगतैः केशै । राक्षसीव भयंकरी ॥ ४८ ॥ काचित्प्रकारयंती स्त्री । स्तन्यपानं निजांगजं ॥ धृत्वा कटीप्रदेशे च । समायाता सकौतुका ॥ ४९ ॥ काचिन्निजसुतभ्रांतिं । दधानौत्सुक्यतो हृदि ॥ स्वगेहे पालितं चोतु-पोतं धृत्वा समागता ॥ ५० ॥ काचित् त्रुटितहारा च । काचित्स्फुटितकंकणा ॥ प्रालंबरहिता काचि—न्नूपुरेण विवर्जिता ॥ ५१ ॥ काचित्स्फाटितवस्त्रा च । काचिद् घर्ष-द्वपुर्लता ॥ भ्रष्टमुक्ताफला काचि—ल्लोकसंमर्दतोऽभवत ॥ ५२ ॥ काचिज्जालांतरे स्थित्वा । वी-क्षमाणा वधूवरौ ॥ मुक्ताफलसमन्वीतै—रवर्धापयदक्षतैः ॥ ५३ ॥ रुक्मिणीकेशवालोके । वीक्ष्य पौरांगनाकृतं ॥ चित्रं कुतूहलं लोका । जहसुर्दत्त तालकैः ॥ ५४ ॥ रुक्मिणीकृष्णयोर्योगं । दृष्ट्वा ब्रुवंति नागराः ॥ अहो विवेकिना धात्रा । रत्नं रत्नेन योजितं ॥ ५५ ॥

जनार्दनप्रवेशार्थं । शृंगारिता पुरी नरैः ॥ ३२ ॥ गांभीर्यौदार्यचातुर्य—रूपयौवनसंयुता ॥ नूषणै
र्नूषिता नाति । कांतयोगेंगना यथा ॥ ३३ ॥ द्वारवत्यपि पूरेषा । तथोरुतोरणादिभिः ॥ समन्वि-
ता तदा रेजे । नयनानंददायिनी ॥ ३४ ॥ पुरीशोनां विधायैवं । विस्तरेण महीयसा ॥ विष्णोः
सन्मुखमायाताः । सर्वेऽपि नागरा नराः ॥ ३५ ॥ माधुर्यवर्यतूर्याणां । निर्घोषैः पूरितांबरैः ॥ प्रमो-
दिवंदिवृंदानां । नयो जयजयारवैः ॥ ३६ ॥ सुवासिनीमृगाक्षीणां । लसदुज्वलमंगलैः ॥ हर्षोत्कर्ष
ण पौराणां । प्रवेशं कृतवान् हरिः ॥ ३७ ॥ युग्मं ॥ हट्टे विक्रीयमाणानि । क्रयाणकान्यनेकशः ॥
नाणकानि च वासांसि । केचिद्विमुमुचुस्तदा ॥ ३८ ॥ विहाय निर्ययुः स्थान-मर्धं पानं च नोज-
नं ॥ मंडनं खंमनं ध्यानं । कश्चिद्दानं विलेपनं ॥ ३९ ॥ द्राग्मूर्धवेष्टनं कंठे । केचिद् ग्रैवेयकं क-
टौ ॥ मुद्रिकां करयोरंघ्रोः । केयूराणि च पर्यधुः ॥ ४० ॥ वादित्रध्वनिवाञ्छया—त्तस्मिन्नवसरे स्त्रि-
यः ॥ चक्रुश्चेष्टा विशेषेण । संक्षेपतो ब्रवीमि ताः ॥ ४१ ॥ दधाना काचिदौत्सुक्यं । वधूवरदिदृक्ष-
या ॥ च्दणोश्चिक्षेप पुंमूार्थं । घृष्टे कुंकुमचंदने ॥ ४२ ॥ ललाटपदके काचि—दंजनेन महीयसा
॥ तिलकं रचयामास । काचित्कपोलमंमनं ॥ ४३ ॥ मुकुटस्थानके काचि—च्चूमामणिमुपादधत् ॥

स्वरूपमस्य कीदृक्कं । विस्तारः कीदृशस्तथा ॥ २० ॥ दामोदरो जगौ देवी—मस्ति रैवतकाभिधः
॥ निर्जराणामनेकेषां । क्रीडास्थानमयं गिरिः ॥ २१ ॥ विमलाचलतीर्थस्य । द्वितीयं शृंगमस्त्यदः
शतयोजनविस्तार—समन्वितशिलोच्चयः ॥ २२ ॥ स्वरूपमुञ्जयंताद्रे—रीदृगाकर्ण्य रुक्मिणी ॥
अत्र यात्रां करिष्यामि । कल्पमानेत्यमूमुदत् ॥ २३ ॥ भुवनानंदनं तस्य । वनं नंदनसन्निभं ॥ ब
हुजातितरुव्रात—फलपुष्पलतायुतं ॥ २४ ॥ चंद्रादिभिः शुभे लग्ने । तत्र पवित्रकानने ॥ रामेण
रुक्मिणीहर्योः । कारितं पाणिपीडनं ॥ २५ ॥ जातं तदादितस्तस्य । महत्त्वं निखिले वने ॥ कस्य
कस्य क्षितौ स्यान्न । महत्त्वं महताश्रितेः ॥ २६ ॥ क्रीडां कर्तुं वने तत्र । रुक्मिणीरमणीयुतौ ॥
कालं कियंतमानंदा—द्रामत्रिविक्रमौ स्थितौ ॥ २७ ॥ कृष्णेन बलभद्रोऽपि । बलदेवेन माधवः ॥
रुक्मिणी विष्णुभर्त्री च । कुटुंबं सर्वमप्यवेत् ॥ २८ ॥ वनेऽपि वसतां तेषा—मरतिर्नाप्यजायत ॥
प्रत्युतानंदसंदोह—प्रादुर्भावोऽभवद् भृशं ॥ २९ ॥ रुक्मिणीबलभद्राभ्या—मनेकतां विजानता ॥
स्थितं तत्र मुकुंदेना—मंदसंमदसंपदा ॥ ३० ॥ द्वारवत्यां तदा लोकैः । शुश्रुवे स्वजनैरपि ॥ उ-
द्वाह्य रुक्मिणीं जित्वा । शत्रुं च हरिरागमत् ॥ ३१ ॥ तोरणैश्चंदनांभोभि—र्नानाकुसुमकेतुभिः ॥

च मुहुर्मुहुः ॥ ८ ॥ वाक्यैर्बहुविधैरेवं । न्नयःप्रेमरसालयैः ॥ रुक्मिणीप्रीतितो रुक्मी । बलभद्रेण मोदितः ॥ ९ ॥ गोपावेतौ पुरा राम—गोविंदौ कथितौ जनैः ॥ तयोश्च पुरतो रुक्मी । हारितः क्षत्रियोऽप्यहं ॥ १० ॥ स्वसापि मे महीपाल—शिशुपालार्पिता मया ॥ आभ्यामेव हठाद् हाभ्यां । गृहीता रुक्मिणी च सा ॥ ११ ॥ विलक्षवदनो रुक्मी । चिंतयन्निति चेतसि ॥ न्नयोऽभिमानल-ज्जाभ्यां । न प्रत्युत्तरमप्यदात ॥ १२ ॥ युग्मं ॥ महत्वहानितो दुःखं । जानन्नासीदयं हृदि ॥ मत्वे-त्यमुंचतां राम—कृष्णौ तत्रैव रुक्मिणं ॥ १३ ॥ मुक्त्वा न्नीष्ममपि रामो । द्वारिकाभिमुखं रथं ॥ मुकुंदरुक्मिणीराज—ज्ञोऽन्नं शीघ्रमवाहयत् ॥ १४ ॥ प्रत्यूहव्यूहयोगेऽपि । रुक्मिणीकन्यकास्थितः ॥ मेनाते रामगोविंदा—वात्मनोश्च कृतार्थतां ॥ १५ ॥ त्रिविक्रमपतिप्राप्त्या । रुक्मिण्यपि च चेतसि ॥ धन्यंमन्या समस्तासु । कांतासु च मुमोद सा ॥ १६ ॥ रामोऽवादीदिदं सर्वं । भाग्यतस्तव माधव ॥ माधवोऽप्यवदज्ज्ञातः । प्रासादोऽयं तवैव च ॥ १७ ॥ प्रशंसामिति कुर्वाणौ । परस्परं सहोदरौ ॥ कौतुकं पथि पश्यंतौ । प्राप्तौ रैवतकाचलं ॥ १८ ॥ अदृष्टचरमालोक्य । प्रोत्तुंगं तं शिलोच्चयं ॥ रुक्मिणी पुंडरीकाक्षं । विनयेन व्यजिज्ञपत ॥ १९ ॥ स्वामिन्नयं गिरिस्तुंगः । किमाह्वयः प्रवर्तते ॥

—सात्वतौ जितकासिनौ ॥ आगातां रुक्मिणीपार्श्वे । संग्रामाप्तजयश्रियौ ॥ ९७ ॥ राममाधवयो-स्तत्र । जयं प्राप्य समेतयोः ॥ विनयेनाभितस्थौ सा । ह्रियाधःकृतलोचना ॥ ९८ ॥ संप्राप्यावसरं प्रोचे । रुक्मिणी रमणंप्रति ॥ बलेन बद्धं मे बंधुं । सतातं मुंच कष्टतः ॥ ९९ ॥ हसित्वा वक्रदृ-ष्टिर्यां । रुक्मिण्या वीक्ष्य सन्मुखं ॥ मुमोच रुक्मिणं नाग—पाशबंधाज्जनार्दनः ॥ २०० ॥ प्रोवा-च च हरी रुक्मिन् । वर्तसे त्वमतः परं ॥ मदीय एव तेनाथ । चिंता कार्या न च त्वया ॥ १ ॥ जगाद बलदेवोऽपि । तदा कोमलया गिरा ॥ त्यज रुक्मिन् विरोधित्वं । कुरुष्व हृदि संमदं ॥२॥ त्रिविक्रमवृतेर्भव्यं । रुक्मिण्या विहितं यथा ॥ तथा त्वमपि जानीहि । भव्यमेव स्वमानसे ॥ ३ ॥ वीराणामेकतः कोटि—र्भवेच्च हरिरेकतः ॥ तथापि हरिणा सार्धं । तया योध्धुं न शक्यते ॥४॥ ततः स्वसेवकीभावं । प्रतिश्रुत्य वृषाकपेः ॥ भगिन्या उपरि स्नेहं । चिंतय प्रत्युतातुल ॥ ५ ॥ स-कलान्योऽपि कांतान्य—स्त्वदीया रुक्मिणी स्वसा ॥ वरीवर्ति गुणज्ञा यद्—वृणोति रमणं हरिं ॥ ॥ ६ ॥ एतस्या उपरि स्नेह—स्ततः कार्यो विशेषतः ॥ इमां च मिलितुं प्रेम्णा । समेतव्यं त्वया निशं ॥ ७ ॥ विष्णोर्देशे पुरे ग्रामे । स्खलना नास्ति ते मनाक् ॥ प्रणामार्थं मुकुंदस्या—गंतव्यं

द्धं । यथा क्षोभोऽभवद्भुवि ॥ ८४ ॥ क्रियमाणं रणं रौद्र—मुभाभ्यामपि कोपतः ॥ दर्श दर्श न-
नर्तोच्चै—र्नारदो व्योमसंस्थितः ॥ ८५ ॥ विरमेनाप्यथो यावत । संग्रामादेक एकतः ॥ तावद्बाणः
क्षुरप्राख्यो । मुमुचे नरकद्विषा ॥ ८६ ॥ शिशुपालशिरःश्मश्रु—भ्रूकेशान्निखिलानपि ॥ आदाय
तेन गोविंद—जयश्रीर्द्विगुणी कृता ॥ ८७ ॥ केशयानेन नो याताः । कुंतला एव केवलं ॥ किंतु
याता रिपोः शौर्य—चैतन्यकांतयोऽखिलाः ॥ ८८ ॥ देहाच्छौर्यादिकं नष्ट—मेतस्य यदि भूभुजः ॥
तदा किं मारयाम्येनं । निर्वीर्यं गतचेतनं ॥ ८९ ॥ इति संचिंत्य गोविंदो । विज्ञायं च दिवेंदुवत्
॥ विमुच्य शिशुपालेशं । जीवंतं कृपयाचलत ॥ ९० ॥ भवेद् द्वेधापि भूयिष्ट—बलोऽपि वसुधाध-
वः ॥ नूनं पुण्यक्षये सोऽप्य—धिकपुण्येन जीयते ॥ ९१ ॥ एकाकिनापि कृष्णेन । प्रभूतपुण्यधा-
रिणा ॥ शिशुपालो बलिष्टोऽपि । हेलयैव जितस्ततः ॥ ९३ ॥ कातराणां च वीराणां । राजिनां
वाजिनां पुनः ॥ कबंधैर्दंतिनां दंतैः । पूरिता रणभूरभूत ॥ ९४ ॥ तीर्थंकराः क्षमाशूरा । दानशूराः
सितोदराः ॥ वासुदेवा रणे शूराः । साधवश्च तपोधनाः ॥ ९५ ॥ रौद्रमेवं रणं कृत्वा । हत्वा चा-
रिकदंबकं ॥ इति सत्यापयन् कृष्णो । बलगर्वं न चाकरोत् ॥ ९६ ॥ युग्मं ॥ ततो द्वावपि गोविंद

स्वरं ॥ ७२ ॥ द्दष्टेनैकाकिनानेन । व्यापादिता वयं यदि ॥ पुनर्युध्यामहे केचि—ज्जल्पंतीति परस्परं ॥ ७३ ॥ गोधिकापुछवद्वीरा । निर्जीवा अपि केचन ॥ पाणीन् प्रकंपयंति स्वान् । विविधायुधसंयुतान् ॥ ७४ ॥ सर्वस्यामपि वाहिन्यां । समीक्ष्य कोलमुत्कटं ॥ क्रोधेन धावितो रुक्मी । हकारयन् स्वसेवकान् ॥ ७५ ॥ आकर्णं धनुराकृष्य । बलेनागत्य रुक्मिणा ॥ मुमुचे निशितो बाणो । राममारणहेतवे ॥ ७६ ॥ यस्य पुण्यबलं तस्य । कस्यापि न पराभवः ॥ शरेणेति तदीयेन । विघ्नो नाकारि तत्तनौ ॥ ७७ ॥ पर्वशस्यापि वंशस्यो—द्घर्षणेऽग्निर्यथैधते ॥ मुशलिरुक्मिणोर्युद्धे । क्रोधश्चंडस्तथैधत ॥ ७८ ॥ अतीववर्धमानेन । प्रकोपचित्रभानुना ॥ ज्वालयामासतुः सैन्य—वनं तौ द्वावसन्निभौ ॥ ७९ ॥ तयोर्ज्वालयतोस्तत्तु । यावत्कालोऽभवन्महान् ॥ तावद्रुषाहिपाशाह्वं । शरं संकर्षणोऽमुचत् ॥ ८० ॥ पक्षपातकरेणापि । जनकेन समन्वितः ॥ तेन संवेष्टितो रुक्मि—कुमारो बलवानपि ॥ ८१ ॥ यदा संवेष्टितौ तेन । कुमारजनकौ दृढं ॥ तदारोप्य रथे तौ तु । रुक्मिण्यै प्रददे बलः ॥ ८२ ॥ दत्वा रामोऽब्रवीद्भद्रे । बंधुतातविमौ तव ॥ अथैतयोर्मुखान्मोहा—न्मक्षिकोड्डायनं क्रियाः ॥ ८३ ॥ कृष्णोऽपि शिशुपालेन । बलिनापि समं तथा ॥ चक्रे नानायुधैर्यु-

र्थे । कृष्णोऽवादीदमर्षतः ॥ वराकोऽयं कियन्मात्रः । शिशुपालः पुरस्तव ॥ ६१ ॥ परमेनं दुरात्मा-
नं । मुधाभिमानमालिनं ॥ अहमेव च जेष्याम्या—रोप्य स्यंदन एव तां ॥ ६२ ॥ संस्थाप्य रुक्मि-
णीं कांतां । शतांग एव वेगतः ॥ योध्धुं वीराधिवीरौ तौ । सत्वमालंब्य निर्गतौ ॥ ६३ ॥ प्रचचाल
बली विष्णुः । शिशुपालेशसन्मुखं ॥ संकर्षणोऽप्यमर्षेणो—द्दिश्यापि निखिलां चमूं ॥ ६४ ॥ एका-
किनं समायांतं । समालोक्य त्रिविक्रमं ॥ दर्शनादुल्लसद्वैरः । शिशुपालः समुत्थितः ॥ ६५ ॥ युद्धं
दृष्ट्वा तदा घोरं । मुकुंदशिशुपालयोः ॥ सैनिका अपरे क्षुब्धा । नष्ट्वा दूरं स्थितास्तदा ॥ ६६ ॥
कंठीरवस्य गोविंदे । द्विपस्य शिशुपालके ॥ समालोक्योन्नयोर्युद्धं । कल्पनां चक्रिरे जनाः ॥६७॥
अपरां श्वापदाकारां । वाहिनीं बलिनीमपि ॥ चिंतयन्नात्मनः सिंह—साम्यं च युयुधे बलः ॥६८॥
इवेभ्ययेव च हुंकार—वाचयैव तदीयया ॥ प्रणष्टाः सर्वतः केचि—त्सुभटाः कातरा इव ॥ ६९ ॥
खड्गेन खंडिताः केचित् । केचिद्बाणेन मर्दिताः ॥ अर्दितास्त्वर्धचंद्रेण । मर्दिता मुद्गरेण च ॥७०॥
श्रोत्राभ्यां रहिताः केचि—त्केचिच्चक्षुर्विना कृताः ॥ केचिन्नक्रविहीनाश्च । केचिदुच्छिन्नमस्तकाः ॥
॥ ७१ ॥ स्वीयेष्टदेवतां केचित् । केचित स्मारंति मातरं ॥ केचिच्च जनकं केचि—त्क्रंदंति करुण-

दुःखं किं वर्तते तव ॥ ४९ ॥ मत्वेति सा मुकुंदेन । पृष्टाद्यापि किमीदृशी ॥ नूतनायाः स्त्रिया-
श्चित्त—स्थैर्यं कार्यं हि कोविदैः ॥ ५० ॥ उच्यमाने मया माभू—त्काचिदस्य विचारणा ॥ क-
ल्पमानेति नाजल्प—त्सा प्रतिवाक्यमीशितुः ॥ ५१ ॥ पप्रछ पुनरप्येष । कथं प्रतिब्रवीषि न ॥ इ-
त्युक्ता सा विनीताश्रु । पातयंती जगौ ह्रिया ॥ ५२ ॥ स्वामिंस्तवातुलं स्थाम । चमत्कारकरं भुवि
॥ कारुण्येन त्वया मोच्यौ । युद्धे मे पितृबांधवौ ॥ ५३ ॥ एतावदेव याचेऽहं । सांप्रतं युष्मदंति-
कात् ॥ तयोरभयदाने मे । वचः प्रदीयतां प्रभो ॥ ५४ ॥ ख्यातिमंतं विहायापि । शिशुपालं म-
दोद्धतं ॥ यदेयमुररीचक्रे । मामेवानुपलक्षितं ॥ ५५ ॥ मय्येवैकांतरागिण्या । अस्या एवाद्यवास-
रात ॥ वचस्तर्हि मया मान्य—मिति तेनाप्यदायि तत् ॥ ५६ ॥ व्याचष्ट रुक्मिणी हृष्टा । प्रकृष्ट
स्पष्टवाचया ॥ जयो भूयाच्च ते नाथ । संग्रामे रिपुपूरिते ॥ ५७ ॥ रिपुं सबलमालोक्य । जानता-
पि हरेर्बलं ॥ जगदे बलदेवेन । ज्येष्ठो हि लघुचिंतकः ॥ ५८ ॥ वरीवर्ति बृहत्सैन्यं । शिशुपालो-
ऽपि दुर्धरः ॥ भ्रातस्ततस्त्वया तूर्णं । कार्या काचिद्व्यवस्थितिः ॥ ५९ ॥ शिशुपालो दुरात्मास्ति ।
भ्रातस्त्वां च वदामि तत ॥ अहं तमेव जेष्यामि । समस्तामपि तच्चमूं ॥ ६० ॥ रामप्रोक्तं समाक-

त्युक्तोऽप्यदधद्विष्णुः । समाश्वासयितुं हि तां ॥ विखिन्ना सर्वथा मा नूः । सुनु त्वमपि संप्रति ॥३८॥
अंधकारेण सादृश्यं । दधानं प्रबलं बलं ॥ निरीक्ष्य सहसारीणां । हे देवि त्वं बिन्नेषि किं ॥३९॥
एतस्मिन् कटकाकाशे । मयि सूर्ये समुद्गते ॥ सहसैव दिगंतेषु । तत्सर्वमपि यास्यति ॥ ४० ॥ य-
दीक्षा तव चित्ते स्यात् । पश्यंत्यामेव हि त्वयि ॥ प्रेषयामि बलं चैत—त्सनायकं यमालये ॥४१॥
स्वार्थसिद्धिकृते चित्तो—न्नतिः कस्य समस्ति न ॥ विदंतीति हरिप्रोक्ता—प्येषा खेदं मुमोच न
॥ ४२ ॥ तदादाय करात्तस्या । मुद्रिकावज्ररत्नकं ॥ लीलयैव मुकुंदेन । चूर्णीचक्रे चिरंतनं ॥४३॥
तच्चूर्णेनातिसूक्ष्मेण । स्वस्तिकः स्वस्तिकल्पकः ॥ तस्या हस्ते मुकुंदेना—लिलिखे प्रत्ययाप्तये ॥
॥ ४४ ॥ एकपंक्तिगतान् सप्त । तालांश्च पुरतः स्थितान् ॥ अर्धचंद्रेण गोविंद । इक्षुखंडानिवाच्छि-
दत् ॥ ४५ ॥ लोकातिगं बलं वीक्ष्य । रुक्मिणी निजभर्तरि ॥ प्राप्ता विस्मयतां चित्ते—ऽचिंतयच्च
त्किमद्भुतां ॥ ४६ ॥ ईदृक्समस्ति चेत्प्राण—वल्लभस्य पराक्रमः ॥ कोपेन मावधीदेष । तर्हि मे
तातबांधवौ ॥ ४७ ॥ चिंतयंतीति चित्ते सा । दुःखिनी पुनरप्यभूत् ॥ प्रायशो हि भवेत्स्त्रीणां ।
पितृबंधू अतिप्रियौ ॥ ४८ ॥ मद्भक्तिदर्शनेनापि । म्लानमुख्येव यद्यसौ ॥ तत्पृच्छाम्यहमेतस्या ।

कातराणामशूरतां ॥ कुर्वाणैर्भूरिनिःस्वान—वादित्राणां महारवैः ॥ २६ ॥ धनुष्टंकारवैः स्फारै—र्हैषा-
निर्बृंहितैस्तथा ॥ रथानां चित्रचित्कार— क्रंदनैस्तुमुलोऽभवत् ॥ २७ ॥ युग्मं ॥ एकतः शिशुपाले-
शः । कटकेन महीयसा ॥ निर्ययौ भीष्मभूपालो—ऽप्यन्यतो निजसैन्ययुक् ॥ २८ ॥ धावमानाव-
दूरे च । संप्राप्य राममाधवौ ॥ ते च संवेष्टयामासुः । मक्षिका मधुपिंडवत् ॥ २९ ॥ परितोऽतीव-
दुष्टेन । नृपःसैन्येन वेष्टितौ ॥ द्वावेवैकाकिनौ वीक्ष्य । चुक्षोभ हृदि रुक्मिणी ॥ ३० ॥ हाहा स-
कलकांतासु । मंदभाग्यास्मि सर्वथा ॥ रहसि ग्रहणं मे हि । भाव्येतयोः क्षयोऽपि च ॥ ३१ ॥
सिंधुकल्लोलवच्चैतत् । कटकं शैशुपालिकं ॥ सुकुमारौ कुमाराभौ । क्व चैतौ द्वौ सहोदरौ ॥ ३२ ॥
मदर्थं जायते युद्धं । मदर्थं वानयोर्मृतिः ॥ मत्तस्ततो न कापि स्त्री । भाग्यहीनास्ति सर्वथा ॥३३॥
विचिंत्येति विषादं च । जनयंती स्वचेतसि ॥ रुदंती रुक्मिणी प्रोच्चै—र्बलभद्रेण वीक्षिता ॥ ३४ ॥
तां तु तथाविधां वीक्ष्य । संकर्षणो जगौ हरिं ॥ विषीदंतीमिमां पश्य । मुंचंतीं नयनोदकं ॥ ३५ ॥
प्रभूतं कटकं दृष्ट्वा । बलिनि त्वयि सत्यपि ॥ बिभेति हृदि चेदेषा । तव शौर्येण किं वद ॥ ३६ ॥
कथंचिदपि तद्विष्णो । समाश्वासय सुंदरीं ॥ एषापि प्रत्ययं विंद्या—त्तवातुलबलस्य च ॥ ३७ ॥ ह-

योग्यायां । स्थापयित्वा क्षितौ रथं ॥ किंन्नावीतिविदंतीं स्त्री—माश्वास्य संस्थितौ च तौ ॥ १५ ॥ इतः स्वांतोदक्ते केचि—द्देवार्चनचिकीर्षया ॥ कृत्वा देवार्चनं स्नावा—दाहरंतश्च केचन ॥ १६ ॥ केचित्परस्परं वार्ता । कुर्वाणा सुखदुःखयोः ॥ लीलया केचिदासीना । गच्छंतः केचिदध्वनि ॥१७॥ दीव्यंतः शारिपाशाभ्यां । केचिन्मित्रैः समं मुदा ॥ रमंते प्रमदासाकं । केचित्सुप्ताः प्रमीलया ॥ ॥ १८ ॥ उन्मत्तान् द्विरदान् केचि—त्क्रीडयंतो हयान् पुनः ॥ रथांश्च सज्जीकुर्वंति । केचिद्युद्धाभिलाषिणः ॥ १९ ॥ तावदाकस्मिकं वाक्यं । श्रुत्वाहत्क्षोभकारकं ॥ रुक्मिण्याश्च हृतिं ज्ञात्वा । सर्वेऽपि चुक्षुभुर्जनाः ॥ २० ॥ सन्नह्य स्वस्वशस्त्राणि । समादाय च वेगतः ॥ येन तत्र श्रुतं श्रुत्यो—स्ततस्तेन विनिर्गतं ॥ २१ ॥ हृतवान् रुक्मिणीं कन्यां । दुरात्मा यो मलिम्लुचः ॥ गृह्यतां तं च संग्रामात् । कांदिशीकमिति ब्रुवत् ॥ २२ ॥ भागीरथ्याः प्रवाहः किं । वेला किं सरितां विभोः ॥ निर्यद्दिशोदिशं सैन्यं । लोका दृष्ट्वेत्यचिंतयन् ॥ २३ ॥ युग्मं ॥ केचिद् द्विपांस्तथा केचि—द्वाजिनश्च मदोत्कटान् ॥ प्रेरयंतो रथानेके । गच्छंत्येकेंऽद्रिचारिणः ॥ २४ ॥ अग्रगा अग्रतो यांति । मध्यगा मध्यतस्तथा ॥ अंत्यगा अंत्यतो गच्छ—त्येवं ते च मिलंति न ॥ २५ ॥ वीराणां शूरताधिक्यं ।

गेहेनर्दिनां तदा ॥ ३ ॥ सेवकीनूय वा सेवा—वृत्त्या किं कुर्कुरा इव ॥ उपजीवयथ नृत्वं । विदं तो हृदि सेवकाः ॥ ४ ॥ प्रस्तावे यदि शूरत्वं । दर्श्यते न हि सेवकैः ॥ तदा किं वृत्तिदानेन । तेन्यः प्राप्तं सुखं नृपैः ॥ ५ ॥ शिशुपालमहीपाल । प्रदत्ता तव या कनी ॥ त्वयि सा वर्तमानेऽपि । हठेन ह्रियते मया ॥ ६ ॥ जीवितव्येन तत्किं ते । हृत्कल्पिताभिमानिनः ॥ शिशुपालेत्याख्यां लोका । वक्ष्यंति शिशुपालनात ॥ ७ ॥ भो भीष्म तव पुत्री चे—ददत्ता हीयते मया ॥ तर्हि नाम्नैव भीष्मत्वं । न तु ते रणकर्मणा ॥ ८ ॥ रुक्मिन्नपि कुमारत्वे । स्वकीयशौर्यगर्वतः ॥ शिशुपालेशसैन्ये चे—त्साहाय्यं जनितं त्वया ॥ ९ ॥ रुक्मिणी या स्वसा ते सा । मया हृता तथापि हि ॥ तद्रक्षां न विधत्से तत् । किं बाह्यं पुनरप्यभूत ॥ १० ॥ द्वावेवामनेके च । भवंतो वीरमानिनः ॥ तथापि ह्रियते ह्येषा । किं युष्माकं बलं तदा ॥ ११ ॥ कृत्वा कापट्यमेतान्या—मपाह्रियत चेत्कनी ॥ तदा किं क्रियतेऽस्माभि—र्वाच्यं केनापि नो मनाक् ॥ १२ ॥ वीरमानित्वसामर्थ्य—मद्भुतं यदि वो हृदि ॥ तदावाभ्यां समं युद्धं । कृत्वा तदपि दर्श्यतां ॥ १३ ॥ इत्युक्त्वा ज्ञापयित्वा च । सर्वेषामपि शृण्वतां ॥ शंखनादं रथो निन्ये । ताभ्यां योद्धुं वनाद्बहिः ॥ १४ ॥ संग्रामकृति

नापश्यत् । सन्मुखं तस्य लज्जया ॥ शिशुपालेशभीत्येव । कंपमानतनूलता ॥ ९२ ॥ रामोऽप्यव-
ग् रथं सज्जी-कृत्य तावत् त्रिविक्रम ॥ स्वभावेन त्रपां कांताः । कुर्युः कन्यास्त्वतीव तां ॥ ९३ ॥
स्वयमेव समादाय । पाणिभ्यां त्वमिमां कनीं ॥ सज्जीकृते रथे विष्णो । समारोपय सत्वरं ॥९४॥
अद्यापि कामिनीनाथ—स्वरूपं न हि वेत्सि यत ॥ गोपालेष्ववधितो गोप—प्रकृतिमेव वेत्सि तत
॥ ९५ ॥ रामवाक्यं समाकर्ण्य । प्रौढप्रेमा जनार्दनः ॥ रुक्मिणीमालिलिंगात्म—रथारोपणकैतवा-
त ॥ ९६ ॥ आरुह्य बलभद्रेण । डाकू तावच्चालितो रथः ॥ रथेऽथ चालितेऽजल्प—त्संकर्षणम-
धोक्षजः ॥ ९७ ॥ पूरयित्वात्मनो मान्यं । पांचजन्यं महाध्वनिं ॥ ज्ञापयामि महीशादेः । स्ववृत्तां-
तं सविस्तरं ॥ ९८ ॥ अन्यस्तान्यविचारेण । विन्यदप्यच्युताग्रजः ॥ बंधुवाक्येन संतुष्ट । त्वमिति
प्रतिपन्नवान् ॥ ९९ ॥ प्रपन्ने बलभद्रेण । दशार्हेण बलीयसा ॥ पूर्यमाणे महाशंखे । प्ररूपितमि-
दं वचः ॥ १०० ॥ शिशुपालबले ये स्युः । कुंडिनपुःस्थिताश्च ये ॥ वीरंमन्याः समुल्लासा—स्ते शृ-
ण्वंतु वचो मम ॥ १ ॥ पुराणपुरुषेणापि । मया हृतास्ति रुक्मिणी ॥ यूनां येषां भवेद्भक्ति—स्ते
मोचयंतु मत्करात ॥ २ ॥ विद्यमानेषु वीरेषु । गृह्यते रुक्मिणी यदि ॥ युष्माक वीरमानित्वं । किं

व वा किमजीघटत ॥ ८० ॥ सर्वलक्षणसंपूर्णा । तामालोक्येति माधव. ॥ चित्ते विचिंतयन् याव-
न्निकुंजतो विनिर्गतः ॥ ८१ ॥ यदि मत्सुकृतेनात्रा—गतः स्याद् द्वारिकेश्वरः ॥ दीयतां च वनांता-
न्मे । सोंतर्हितश्च दर्शनं ॥ ८२ ॥ पत्यौ सा स्नेहसूचार्थ—मेव यावज्जगाविति ॥ विविक्ते मिलि-
ता कांता । स्वमनो हि प्रकाशयेत ॥ ८३ ॥ मामेवाभिलषत्येषा । नान्यमिति त्रिविक्रमः ॥ निर्ग-
त्य पुरतो भूत्वा । तस्थिवान् बलदेवयुक् ॥ ८४ ॥ सापि तं सुंदराकारं । रूपेण स्मरसन्निभं ॥ अ-
नुमानेन वैकुंठं । रमणं तमकल्पयत् ॥ ८५ ॥ प्रकल्प्य रमणत्वेन । तमेव गुणसेवधिं ॥ मत्वा स्वं
तत्कलत्रत्वं । ह्रिया सास्थादधोमुखी ॥ ८६ ॥ मा लग्यात्तुष्टिदृष्टिर्मे । तस्यानीक्षणं निभालनात् ॥
इतीवाधोमुखी भूमि—मंगुष्टेन लिखत्यभूत ॥ ८७ ॥ इयं प्रवर्तते कन्या । धन्या लावण्यशालिनी
॥ एतया सह जल्पामि । दक्षोऽहं प्रथमं कथं ॥ ८८ ॥ इति संचिंत्य कृष्णेन । संस्थितेन महा-
त्मना ॥ प्रजल्पिता न सा बाला । वांछत्यपि प्रजल्पनं ॥ ८९ ॥ अंगुष्टलिखनव्याजाद् । ज्ञापयं-
तीव जल्पनं ॥ जल्पिता सा मुकुंदेना—तीवस्नेहलया गिरा ॥ ९० ॥ अहं त्वद्वचनेनात्रा—या-
तोऽस्मि द्वारिकाविभुः ॥ ततः स्नेहलया दृष्ट्या । पश्य मां मृगलोचने ॥ ९१ ॥ इति प्रोक्तापि

ध्यायंती हृदि गोविंद—मितस्ततस्तमेव च ॥ वीक्षमाणा दृशागच्छ—त्सार्थभ्रष्टेव कामिनी ॥ ६९ ॥
जराजीरुस्फुरन्मूर्ति—पार्श्वे सा यावदागता ॥ गुल्मांतरस्थितेनापि । तावन्मुरारिणैक्ष्यत ॥ ७० ॥
किं देवी किन्नरी किं वा । विद्याधरी समस्त्यसौ ॥ शशंके तां निरीक्ष्येति । मानसे पुरुषोत्तमः ॥
॥ ७१ ॥ श्यामधम्मिल्लचिह्नेन । पार्वणेन कलाभृता ॥ सद्माननेन तुल्यत्वं । प्रदधौ सा कुमार्यपि ॥
॥ ७२ ॥ नेत्रयोः खंजनौपम्यं । कंठे कंबुसमानतां ॥ कुचयोः कलशाकारं । बिभ्रती शुशुभे च सा
॥ ७३ ॥ सौकुमार्यं च रक्तत्वं । पाण्योः कोकनदोपमं ॥ भूजयोर्मालतीमाल्य—समानत्वं दधार
सा ॥ ७४ ॥ हंसगेन समादाय । स्थूलत्वं जठरादिव ॥ नितंबौ विहितावस्या—स्ततोऽस्त्येषा कृ-
शोदरी ॥ ७५ ॥ जंघयोः कदलीस्तंभ—सन्निभत्वमथातुलं ॥ कूर्मपृष्ठतुलामंघ्रो—स्ताम्रस्निग्धछविं
नखे ॥ ७६ ॥ यदा सा दूरतो दृष्टा । तदा देव्यादिकल्पना ॥ जनिता पद्मनाभेन । रुक्मिण्यागम-
चेतसा ॥ ७७ ॥ पार्श्वे स्थितवती जाता । यदा च सा तदा हरिः ॥ नारीयमिति निश्चित्य । तस्या
रूपेण विस्मितः ॥ ७८ ॥ देहे षोडशशृंगार—परिधानाय युक्तितः ॥ किमीदृश्यप्यहो नारी । धा-
त्रा रूपेण जन्यते ॥ ७९ ॥ रूपलावण्यचातुर्यं । सर्वासामपि योषितां ॥ समादाय विधातैता—मे-

। कर्तुं मूर्तेर्मनोभुवः ॥ सुवासिनीयुता याति । पादपाकीर्णकानने ॥ ५७ ॥ वांछितोऽनूत्पतित्वेन । शिशुपालो नृपः पुरा ॥ यस्य मूर्तेः प्रसादेन । याति साद्य तमर्चितुं ॥ ५८ ॥ ततः कथं निषेध्यैषा—नंगयात्राविधानतः ॥ स्वनाथस्यापि युष्माभि—र्द्रुतं गत्वा निरूप्यतां ॥ ५९ ॥ तया निगदितं श्रुत्वा । गत्वा च पार्थिवांतिकं ॥ सेवकाः कथयामासुः । सर्वं वृत्तांतमादितः ॥ ६० ॥ रुक्मिणीमनुरक्तां च । स्वस्मिन् कुशलकामनात् ॥ जानता शिशुपालेन । यात्राज्ञा प्रददे मुदा ॥ ६१ ॥ प्रमाणीकृत्य निर्देशं । सेवकैर्वसुधाविभोः ॥ कंदर्पमूर्तिपूजार्थं । दत्ता गंतुं च रुक्मिणी ॥ ६२ ॥ अंतराले समुत्पन्न—प्रत्यूहव्यूहनाशनात् ॥ मोदमाना चचालासा—वपि पूजनदंभतः ॥ ६४ ॥ गीयमाना मृगाक्षीभि—र्यावत्सा कानने गता ॥ स्थित्वान्यस्त्रीयुता ताव—देतां जगौ पितृस्वसा ॥ ॥ ६५ ॥ निकुंजे त्वरितं गत्वा । मनोजमूर्तिपूजया ॥ त्वमेवैकाकिनी भद्रे । साधयस्व समीहितं ॥ ६६ ॥ प्रायः कामवशा कांता । परिवारमपि त्यजेत ॥ निर्यात्येकाकिनी चापि । करोति चित्तचिंतितं ॥ ६७ ॥

परित्यज्य ततः सर्व—मप्यात्मनः परिच्छदं ॥ पूजोपहारमादाय । मंदं मंदं विनिर्गता ॥ ६८ ॥

णीगमनं वने ॥ ४५ ॥ गीयमाना वधूटीभी । रुक्मिणी क्वापि कानने ॥ याति नाथ यथाज्ञा ते । तथा वयं प्रकुर्महे ॥ ४६ ॥ यदि प्रसाद्यते स्वामिं—स्तदा गंतुं प्रदीयते ॥ नो चेत्तदा तथास्माकं । त्वरितं त्वं प्रसादय ॥ ४७ ॥ सेवकैरिति विज्ञप्तो । जगाद वसुधाधवः ॥ न देया सर्वथा गंतुं । युष्माभी रुक्मिणी वने ॥ ४८ ॥ इति श्रुत्वा निजस्वामि—मुखादेशं च सेवकाः ॥ न्यवारयंत ते सद्यः । रुक्मिणीं गमनाद्वने ॥ ४९ ॥ भीष्मभूपानुजाजल्प—दाक्रोशवचनैस्तदा ॥ विना शुभं विचारं किं । भवद्भिः क्रियते त्विदं ॥ ५० ॥ ते प्रोचुः को विचारोऽत्र । स्वाम्याज्ञास्माकमीदृशी ॥ ततो नूनं न चास्माभि—र्यातुमेषा प्रदास्यते ॥ ५१ ॥ भूपालभगिनी कोपा–टोपेन पुनरप्यवक् ॥ रे कथं न यथाजाता । समस्त्यत्र विचारणा ॥ ५२ ॥ यतोऽन्येद्युर्गता पूर्व—मेवाहं रुक्मिणी वने ॥ रममाणा वयस्याभिः । समं शैशवचेष्टया ॥ ५३ ॥ तदा तत्र वने दृष्टा । तया मूर्तिर्मनोभुवः ॥ रागेण पूजयित्वा ता—मिदं वाक्यमभाष्यत ॥ ५४ ॥ यदि स्वामिंश्च मे भर्ता । निःशेषदुःख नाशकः ॥ शिशुपालो भवेत्तर्हि । सेत्स्यति मम चेप्सितं ॥ ५५ ॥ तदा लग्नदिनेऽवश्यं । स्वर्ण रूप्यमयैः सुमैः ॥ पूजयिष्यामि ते मूर्तिं । समस्तार्तिविनाशिनीं ॥ ५६ ॥ ततोऽसौ मानितां पूजां

विज्ञायवदनां वीक्ष्य । तामुवाच पितृस्वसा ॥ पुत्रिके सर्वथा दुःखं । माकार्षीस्त्वं मनागपि ॥३४॥
पूर्वमेव मया प्रोक्तं । वर्तते पुरतस्तव ॥ तथोद्यमं विधास्यामि । यथा भावि तवेप्सितं ॥ ३५ ॥
मदीयं वचनं किं नु । कथितं विस्मृतं तव ॥ एकमेव वराणां तु । वचनं दृढतायुतं ॥ ३६ ॥ सं-
तोष्यैवंविधैर्वाक्यैः । कोमलैर्दुःखिनीं कनीं ॥ मुकुंदमिलनोपायं । पितृस्वसा व्यचिंतयत् ॥ ३७ ॥
एकाकिनी त्रियामायां । लात्वैनां यदि याम्यहं ॥ कलंकिता तदा गुर्वी । भविष्यत्युभयोरपि ॥३८॥
अनापृच्छ्यैव पित्रादी—नथवा सह केनचित ॥ अहं किं प्रेषयाम्येतां । न तदप्यस्ति शोभनं ॥
॥ ३९ ॥ विचारे हृदयेनैवं । क्रियमाणे स्वबुद्धितः ॥ प्रादुर्भूता मतिस्तस्याः । शस्या मार्गानुगा-
मिनी ॥ ४० ॥ ध्वस्तांगिदर्पकंदर्प—मूर्तिपूजनकैतवात् ॥ वाद्येषु वाद्यमानेषु । समादाय व्रजाम्य-
मूं ॥ ४१ ॥ वादित्रेषु पवित्रेषु । वाद्यमानेषु वादकैः ॥ गीतेषु गीयमानेषु । तां लात्वा सा ययौ
बहिः ॥ ४२ ॥ चित्रवादित्रसंगीत—गीतध्वानपुरस्सरं ॥ सुवासिनीवृता याव—न्निर्ययौ साथ रु-
क्मिणी ॥ ४३ ॥ तावता शिशुपालेश—सेवकैः समुपेत्य च ॥ बहिर्गमनतः सर्वा । अपि कांता
निवारिताः ॥ ४४ ॥ निवार्य च चरा गत्वा । शिशुपालस्य सन्निधौ ॥ द्रुतं विज्ञपयामासू । रुक्मि-

शयः ॥ २२ ॥ शरीरे विद्यमाने च । समस्तमपि संजवेत् ॥ इंद्रियाणां गणे नष्टे । निःशेषमपि नश्यति ॥ २३ ॥ ततस्तव हितायाहं । निरूपयामि नृरिशः ॥ गंतव्यं महता तत्र । बलेन भवता सह ॥ २४ ॥ रक्षणीयं शरीरं ते । महीपते यथातथा ॥ आत्मीयं हि तदेवात्रा—वसरे कृत्यमेति यत् ॥ २५ ॥ इत्युदित्वा कलिं घोरं । समुत्पाद्य च नारदः ॥ प्रचचाल ततोऽन्यत्र । धरित्र्यां क्लेशमीक्षितुं ॥ २६ ॥

नारदर्षौ गते राजा । शिशुपालाजिधस्ततः ॥ मेलयित्वा बलं प्रौढं । प्रतस्थे कुंडिनं पुरं ॥२७॥ चलनानंतरं स्वल्प—कालेनागत्य तत्र सः ॥ अवेष्टयत्स्वसैन्येन । समंतात्कुंडिनं पुरं ॥ २८ ॥ मागादत्र दूराह्वानः । कोऽपि नृपो रिपुर्मम ॥ इतीव कटके नैवा—कारयत्परितो वृतिं ॥ २९ ॥ लवणोदधिना जंबू—द्वीपो यथा समंततः ॥ तारकैर्वा यथा मेरु—स्तत्पुरं वेष्टितं तथा ॥ ३० ॥ पुरं तद्वेष्टितं श्रुत्वा । रुक्मिणी चिंतयान्विता ॥ कृष्णपाणिग्रहोत्कंठा । जाता च जनकानुजा ॥ ३१ ॥ आगम्यते मुकुंदेन । मां वरीतुं कथं द्रुतं ॥ तमेव रमणं कर्तुं । मयापि गम्यते कथं ॥ ३२ ॥ ततो दीनमुखी सासी—द्विष्णुसंगमनेच्छया ॥ स्नेहिन्यमिलिते प्रायः । स्त्रीणां कष्टं महत्तनौ ॥ ३३ ॥

विनयासनदानेन । नारदस्तेन तोषितः ॥ अजानन्निव पप्रछ । शिशुपालमहीपतिं ॥ १२ ॥ शि-
शुपालमहीपाल । त्वत्पाणिग्रहलग्नकं ॥ गृहीतमस्ति रुक्मिण्या । सार्धमिति श्रुतं मया ॥ १३ ॥ त-
त्किं सत्यमसत्यं वा । वदतात्पुरतो मम ॥ इत्युक्तो नृपतिः स्मित्वा । प्राह सूनृतमेव तत ॥ १४ ॥
उवाच नारदस्तर्हि । त्वमेतल्लग्नपत्रकं ॥ शुभाशुभविचाराय । प्रदर्शयाविलंबतः ॥ १५ ॥ मुनिने-
त्युदिते भूमि—पाल आनाय्य पत्रकं ॥ लपने लज्जमानोऽपि । प्रादर्शयन्मुनीशितुः ॥ १६ ॥ मु-
निर्लग्नं समालोक्य । वाचयित्वा विचार्य च ॥ नृपतेर्मानसे शंकां । प्रविधातुं शिरोऽधुनात् ॥ १७ ॥
कंपिते मस्तकेऽकस्मा—न्मुनिना नारदेन तु ॥ समग्रंकितस्वांत—स्त्वरितं वसुधाधवः ॥ १८ ॥
नृपोऽन्यधान्मुने केन । हेतुना कंपितं शिरः ॥ सोऽप्युवाच क्षमानाथ ! किमप्यस्ति न कारणं ॥
॥ १९ ॥ शिशुपालोऽवदत्तूर्णं । मुने कारणमंतरा ॥ न भवेन्महतां चेष्टा । विशिष्टाचारधारिणां ॥
॥ २० ॥ ततः प्रसद्य सद्यस्त्वं । निवेदय निबंधनं ॥ प्रसह्येति नृपेणोक्ते । जगाद मुनिनारदः ॥
॥ २१ ॥ मया विलोकितं लग्नं । भग्नं च मम मानसं ॥ यतो लग्नेऽत्र यानेन । शरीरे कष्टमस्ति
ते ॥ २१ ॥ अतो यत्नेन गंतव्यं । त्वयका कुंडिने पुरे ॥ अन्यथा ते महीनाथ । मृत्युरेव न सं-

॥ अथ पंचमः सर्गः प्रारभ्यते ॥

श्रीकुंडिनपुरे शिष्ट—त्रिविष्टपानुसारिणि ॥ मेरूत्तीर्णमिदं किं नु । नंदनं नंदनं वनं ॥ १॥
वृक्षैरनेकजातीयैः । सौरभ्यपरमैः सुमैः ॥ औषधीभिरनेकाभि—रिदं हि राजते वनं ॥ २ ॥ स्वरू-
पेणाश्विनीपुत्रा—विव तौ क्षितिराजिनौ ॥ लसद्वनस्थलीं शोभां । द्रष्टुं विविशतुर्मुदा ॥ ३ ॥ प्र-
विश्य तत्र यावत्तौ । वीक्षेयातामितस्ततः ॥ अशोकस्तावता दृष्टो । नृणामशोकताप्रदः ॥ ४ ॥ दू-
तोक्तचिह्नसंसूचा—प्रपंचनपरायणा ॥ वैजयंती तरोस्तस्यो—परि चारु विराजते ॥ ५ ॥ तस्याधो
मान्मथी मूर्तिः । सारस्फूर्तिसमन्विता ॥ कांतानां कामसंपूर्ति—दायिनी च तदा बभौ ॥ ६ ॥ स्यं-
दनं छोटयित्वा च । तत्रान्यत्र तुरंगमौ ॥ मुक्त्वा तौ संस्थितौ छन्नं । रुक्मिण्यागमकामुकौ ॥ ७ ॥
इतश्च द्वारिकापुर्यां । नारायणः करोति किं ॥ गत्वा पश्यामि तं चेति । संजगामर्षिनारदः ॥ ८ ॥
राजलोके समागत्य । पप्रच्छ नारदर्षिणा ॥ युष्माकं स्वामिनो गेहं । वर्तते क्व च केशवः ॥ ९ ॥
रामकृष्णावितस्तूर्णं । रथमारुह्य वेगिनं ॥ चलिताविति तत्रत्यै—स्तस्य प्रकथितं जनैः ॥ १० ॥
नारदोऽनुपविष्टोऽसौ । श्रुत्वेति चलितस्ततः ॥ श्रीचेदिनगरे प्राप्तः । शिशुपालनिकेतनं ॥ ११ ॥

न तदप्यायतिप्रियं ॥ दुःखिताया अपि तस्याः । सांत्वनेच्छा महीयसी ॥ २५ ॥ अहं संकर्षणश्चापि । द्वावेवात इतो द्रुतं ॥ यावः स्यंदनमारुह्य । केनाप्यज्ञातगोचरौ ॥ २६ ॥ समारुह्य रथं रंगं । धरंतावसमं हृदि ॥ निशीथे रामगोविंदौ । ससन्नाहौ प्रचेलतुः ॥ २७ ॥ रहोयाने बलानीव । शस्त्राण्येव बलाच्युतौ ॥ जानंतौ नृरिशः शीघ्रं । सार्थे तान्येव बभ्रतुः ॥ २८ ॥ प्रद्योतनरथौपम्य । धरंतं वेगतो रथं ॥ समारूढौ बलोपेंद्रा—वेयतुः कुंडिनांतिकं ॥ २९ ॥ दृश्यते रिपुसंचारो । महानावां तु रंहसा ॥ द्वावेवात्र समायातौ । पद्धतिः का करिष्यते ॥ ३० ॥ विचारे क्रियमाणे च । समाचख्यौ हली हरिं ॥ यत्रैकाकी भवेत्सिंह—स्तत्र किं श्वापदैः परैः ॥ ३१ ॥ राममुवाच कृष्णोऽपि । भ्रातस्तवानुभावतः ॥ मनागप्यावयोर्भीति—र्नास्ति कुतोऽपि वैरितः ॥ ३२ ॥ द्वौ तौ च सत्वकलितौ बलधैर्यवर्या—वात्मीयशक्तिविजिताखिलदुष्टदस्यू ॥ श्रीकुंडिनाभिधपुरस्य समीपवर्त्यु—द्यानं समेयतुरनोकहराजमानं ॥ ३३ ॥ इति पंडितचक्रचक्रवर्तिपंडितश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे रुक्मिणीपाणिग्रहणाय श्रीकृष्णराजस्य कुंडिनपुरोपांतकाननागमनकथनो नाम चतुर्थः सर्गः समाप्तः ॥ श्रीरस्तु ॥

कनामधेयोऽस्त्य—स्तोकशोकविनाशकः ॥ १३ ॥ वैजयंती निबद्धास्ति । तस्योपरि महत्तमा ॥ द्रा-
क्त्वामाकारयंतीव । वायुना कंपनच्छलात् ॥ १४ ॥ नृपालस्वसृपुत्रीन्यां । पूर्वमेव नरायण ॥ त्वदर्थं
स्थापिता तस्या—धस्तान्मूर्तिर्मनोभुवः ॥ १५ ॥ उपकाररतेनाथ । तत्रागम्यं त्वया द्रुतं ॥ तस्या
जीवितदानार्थं । स्वयं गुल्मांतरालके ॥ १६ ॥ कामार्चापूजनव्याजा—त्स्वभ्रात्रादीन् प्रतार्य च
॥ रुक्मिण्यपि विभो तत्र । संकेतेनागमिष्यति ॥ १७ ॥ युवयोर्निर्भरं स्वांत—स्नेहयोरुभयोर-
पि ॥ मिलनं नाथ तत्रैव । भविष्यति सुखावहं ॥ १८ ॥ केनचित्कारणेनापि । यदि त्वं नागमि-
ष्यसि ॥ त्वद्वियोगेन सा बाला । मरणं तर्हि लप्स्यते ॥ १९ ॥ ममोपरि कृपां कृत्वा । त्वदागम-
नसूचकं ॥ देहि देहि द्रुतं किंचि—द्यथा यामि निजे पुरे ॥ २० ॥ इत्युक्ते तेन दूतेन । पत्रं
सुवर्णभूषितं ॥ स्वहस्तमुद्रिकां दत्वा । श्रीपतिर्विससर्ज तं ॥ २१ ॥ वस्त्रालंकारदानेन । कृष्णेन
तोषितो भृशं ॥ प्रणत्य पुंडरीकाक्षं । स दूतश्चलितस्ततः ॥ २२ ॥ दूतेऽथ प्रस्थिते तत्र । तन्मयः
पुरुषोत्तमः ॥ अविलंबं स्वयं गंतु—मुपायं ह्यचिंतयत ॥ २३ ॥ चेद्बलेन युतो यामि । तद्वार्ता
प्रसरिष्यति ॥ दुःखिनी सत्यभामापि । भविष्यति च मत्प्रिया ॥ २४ ॥ एकाकित्वेन वा यामि ।

लभते रतिं ॥ १ ॥ अंगारानिव शृंगारान् । विदत्यंगे दधाति न ॥ भूमिलोठनतश्चेयं । धूलिलेप-
नधारिणी ॥ २ ॥ राक्षसीवासिता रात्रि—स्तस्या अस्ति भयंकरी ॥ शुक्लायां निशि चंद्रोऽपि । पा-
देरेव निहंति तां ॥ ३ ॥ ततो नान्नरुचिर्विष्णो । तस्याः समस्ति वासरे ॥ वियोगिन्याश्च योगि-
न्या । इव निद्रापि नो निशि ॥ ४ ॥ चक्रवाकी रविं दृष्ट्वा । दिवसे लभते सुखं ॥ चकोरी च वि-
धुं सा तु । त्वां विना कमपीह न ॥ ५ ॥ तवैव नामधेयेन । ध्यानेन च तवैव हि ॥ दुःखिन्यपि
मुकुंदास्ते । जीवति सा च केवलं ॥ ६ ॥ ततः स्वदर्शनेनैव । पयोदेन लतामिव ॥ तत्र गत्वा ह-
रे त्वं तां । प्रेम्णा पल्लवय द्रुतं ॥ ७ ॥ दूतप्रोक्तवचः श्रुत्वा । भूएवाने नीलवाससि ॥ दूतं त्रिवि-
क्रमः प्राह । वरीतुं तां यियासया ॥ ८ ॥ श्रीकुंडिनपुरे तत्र । दूत व्रजाम्यहं कथं ॥ कथंचिद्यदि
गच्छामि । तदा सा मे मिलेत्कथं ॥ ९ ॥ इति पृष्टे मुकुंदेन । दूतो विज्ञपयत्यलं ॥ श्रीकुंडिनपु-
रोपांते । प्रमदाख्यं वनं महत ॥ १० ॥ सफलाः सहकाराश्च । सरसाः सुरपर्णिकाः ॥ सुरंगा नाग-
रंगाश्च । वर्तुला मातुलिंगकाः ॥ ११ ॥ नागवल्ल्यः कदल्यश्च । कुवल्ल्यो गिरिमल्लिकाः ॥ राजं
तेऽनेकजातीया । वने तत्रेति शाखिनः ॥ १२ ॥ प्रभूतैः पादपैस्तत्र । तरुवृत्तः समंततः ॥ अशो-

अत्रांतरे मुनिः प्राप्तो । नारदो नृपपर्षदं ॥ तत्राशीर्वाददानेन । संतोष्य संस्थितः क्षणं ॥ ९१ ॥ स्थित्वा नृमिविभोः शीघ्र—मंतःपुरदिदृक्षया ॥ पृष्ट्वा जिगमिषुस्तत्र । प्राविशन्नारदो मुनिः ॥९२॥ अंतःपुरेऽनवद्भीष्म—नृपस्य विधवा स्वसा ॥ तयासनादिदानेन । मुनिः सन्मानितो भृशं ॥९३॥ सत्कारितः स्थितस्तत्रा—सने पुरस्थया तया ॥ आकार्य निखिला राज्ञो । राज्योर्नृोर्नामिता मुनेः ॥ ९४ ॥ आशीर्वचःप्रदानेन । यावत्तास्तोषिता भृशं ॥ पृथक्सा रुक्मिणी ताव—त्पातिता क्रमयामले ॥ ९५ ॥ प्रणतोऽहं पृथक्त्वेना—नया यदि पदद्वये ॥ अस्याः पृथग्ददाम्याशी—र्वचस्तेनेति तद्ददे ॥ ९६ ॥ द्वारवतीपुरीराजा । यदुकोटिनिषेवितः ॥ त्रस्तसमस्तविद्वेषी । हरिवंशद्वरिर्हरिः ॥ ९७ ॥ स स्तात्तव धवस्त्वं तु । तदग्रमहिषी भव ॥ इत्याशिषमसंज्ञाय्यां । श्रुत्वा सा विस्मिताभवत ॥ ९८ ॥ कथयित्वेति रुक्मिण्या । नारदर्षिः समुच्छ्रितः ॥ त्वदेकमनसा विष्णो । यत्तयाकारि तच्छृणु ॥ ९९ ॥

न धान्यादि क्षुधा भुंक्ते । सखीभिः सह वक्ति न ॥ न च स्नाति जलैर्देहे । परिधत्ते न सा स्रजं ॥ ४०० ॥ स्वजने विजने वाप्यु—द्याने नैव च कानने ॥ प्रासादे सा विषादेन । न कापि

श्रीकुंम्डिनपुरे कुंडा—नुकारे संपदंबुभिः ॥ राजते निजतेजोभि—र्भीष्मराजो जिताहितः ॥ ૮૦ ॥ तस्य प्रिया प्रियालाप—कलापाठविचक्षणा ॥ वलक्षैर्लक्षणैर्देवी—वास्ति किंतु पतिव्रता ॥ ૮૧ ॥ तया पतिव्रताधर्म—भाक्त्वेन सुषुवे जयः ॥ समग्रोदग्रसंग्राम—राजद्विजयराजितः ॥૮૨॥ शंकरस्य यथा सूनुः । समऋद्धिशिखिवाहनः ॥ यथेंद्रस्य जयंतश्च । तस्य रुक्मिसुतस्तथा ॥ ૮૩ ॥ अन्याच तनया न्याय—ऋयो विनयसंयुता ॥ योगिनामपि चेतांसि । कंपयंती कलावती ॥ ૮૪ ॥ पुरंदराद्यथोत्पन्ना । जयंती नामतोंगजा ॥ पारावाराद्यथा लक्ष्मी—र्हिमाचलाद्यथा शिवा ॥ ૮૫ ॥ यथा सरस्वती धातु—श्चंद्रतश्चंद्रिका यथा ॥ तथा भीष्मनृपाज्जाता । रुक्मिणी विश्रुता सुता ॥ ૮૬ ॥ शिशुपालाय सा दत्ता । सहोदरेण रुक्मिणा ॥ गतेन भवनं तस्य । मानितेन मुहुर्मुहुः ॥ ૮૭ ॥ मणीवात्यद्भुताभाभी । रुक्मिणी रमणीषु सा ॥ आपृछ्वैव स पित्रादीन् । ददे संग्रामानतः ॥૮૮॥ तां दत्वा यावदागत्य । स्वजनानां पुरो जगौ ॥ समस्तैरपि तत्ताव—त्स्वीकृतं योग्यतावशात ॥૮૯॥ मिथस्तयोर्विवाहाय । लग्नं पित्रादिभिः शुभं ॥ पृष्टं नैमित्तिकस्यासा—वपि तद्वीक्ष्य दत्तवान् ॥૯૦॥ माघश्वेताष्टमीघस्रे । नक्षत्रे च शुभे विधौ ॥ समस्ति लग्नमादत्तं । रुक्मिणीशिशुपालयोः ॥ ૯૦ ॥

रोंजलिं ॥ देवेंद्र इव देवाल्यां । सन्नास्थः प्रणतो हरिः ॥६७॥ स्वामिन्न वैदेशिकः सोऽयं । यो मया प्रतिपादितः ॥ संसत्स्थपुंडरीकाक्षं । प्रतीहारोऽब्रवीदिति ॥ ६९ ॥ कृष्णस्तद्दर्शनेनैव । समुल्लसितलोचनः ॥ समेतस्त्वं कुतो दूते—त्यप्राक्षीत्स्वयमेव च ॥ ७० ॥ कृष्णराजं तदीयां च । पर्षदं प्रविलोक्य सः ॥ दूतः क्वासर्वमैश्वर्य—मत्रैवास्तीत्यचिंतयत ॥ ७१ ॥ ज्ञः प्रस्तावोचितं जल्पे—न्नत्वेति विनयेन सः ॥ श्रीकुंभिनपुरादेत । इत्यवोचत्स संसदि ॥ ७२ ॥ तदा कृष्णेन विज्ञातं । रुक्मिणानिधया जनः ॥ अन्येन प्रेषितो मान्—न्मम ज्ञापयितुं द्रुतं ॥ ७३ ॥ स्वचेतसीति संकल्प्य । पृष्टुं तं विजने ततः ॥ संसद्विसर्जनोपायं । चिंतयामास केशवः ॥ ७४ ॥ दूतेनाप्युदितं स्वामि—न्नेकांते किंचिदस्ति ते ॥ कथनीयं महाह्लाद—विनिर्मितिपरायणं ॥ ७५ ॥ विसृज्य संज्ञया शीघ्रं । समस्तामपि संसदं ॥ समादाय समं दूत—मुत्थितः सबलो हरिः ॥ ७६ ॥ विजने भवने गत्वा । स्थित्वा योग्यासने च तौ ॥ अप्राष्टां रामगोविंदौ । तं योग्यासनसंस्थितं ॥ ७७ ॥ दूत त्वं प्रेषितः केना—यातो वा केन हेतुना ॥ द्वाभ्यामपीति पृष्टः स । संयोज्य द्वौ करौ जगौ ॥७८॥ निवेदयामि यत्स्वामि—न्नहं तव पुरो वचः ॥ निःशेषमपि विज्ञेयं । त्वयका सत्यमेव तत ॥७९।

समालोक्याभवत्तत्र । दूतो विस्मितमानसः ॥ ५७ ॥ श्रीमुकुंदनरेंद्रस्य । प्रासादोऽयं भविष्यति ॥ आशंक्य गमनात्तत्र । निषिध्यते जनैस्ततः ॥ ५८ ॥ यत्र यत्र व्रजत्येष । उद्दीश्य स्वमनीषया ॥ नेत्ययं कृष्णराजस्य । निषिध्यते ततस्ततः ॥ ५९ ॥ एवं पर्यटतस्तस्य । तत्राजवह्दिनत्रयी ॥ पृष्टं जिज्ञसया तेन । तदा मर्त्यस्य कस्यचित् ॥ ६० ॥ तेन सार्धं समागत्य । प्रासादो नरकद्विषः ॥ दर्शितो दूरतस्तस्य । दूतस्योदंतवादिनः ॥ ६१ ॥ राजद्वारं समायातो । यावत्संदेशहारकः ॥ प्रतीहारेण तावत्स । जल्पितः कुत आगतः ॥ ६२ ॥ सोऽप्युवाच प्रतीहार—महं वैदेशिकोऽस्मि वा ॥ दूरदेशात्समायातः । कृत्यमुद्दिश्य सुंदर ॥ ६३ ॥ ततस्तवाधिनाथस्य । कुतं परोपकारक ॥ त्वं समागमनं गत्वा । मामकीनं निवेदय ॥ ६४ ॥ उक्ताय वचसा तस्य । दूतो वैदेशिकः प्रभो ॥ दिदृक्षुर्दर्शनं तेऽत्रा—यातोऽस्तीति व्यजिज्ञपत ॥ ६५ ॥ युष्माकं चेन्नवेदाज्ञा । ममादेशविधायिनः ॥ युष्माकं दर्शनं द्रष्टुं । समागंतु ददामि तं ॥ ६६ ॥ आकर्ण्य वचनं तस्य । जगाद पुरुषोत्तमः ॥ देहि देहि समागंतुं । तं वैदेशिकमुत्तम ॥ ६७ ॥ शिरस्यारोप्य गोविंद—वचनं द्वारपालकः ॥ प्रत्यागत्य च तं दूतं । समानयन्नृपांतिकं ॥ ६७ ॥ द्वाभ्यामपि समागत्य । सत्वा कृत्वा शि-

तथापि कथयामास । पुरतः सा पितृस्वसुः ॥ कृष्णो गृह्णातु मां वान्यि—र्नान्यः कोऽपि महीतले ॥ ॥ ४७ ॥ समाकर्ण्येति रुक्मिण्या । वचनं दुःखगर्भितं ॥ पितृस्वसा जगौ वत्से । माकार्षीर्दुःखमुच्चकैः ॥ ४८ ॥ यदि त्वं कथयेस्तर्हि । दुःखं त्वरितमेव ते ॥ निराकर्तुमुपायं च । विदध्यामि मनीषया ॥ ४९ ॥ श्रुत्वा पितृस्वसुर्वाक्यं । वरमित्यभिधाय सा ॥ रुक्मिण्युवाच तत्तूर्णं । कुरु त्वं मम शर्मणे ॥ ५० ॥

उभाभ्यामपि गोविंद—संगहृद्भ्यां ततो मुदा ॥ मिलित्वा लिखितं पत्रं । ज्ञापयितुं वृषाकपेः ॥ ५१ ॥ घनाश्रये सहस्रांशु—र्दूरे यद्यपि तिष्ठति ॥ तथापि नलिनी भानोः । सरःस्था करमीहते ॥ ५२ ॥ द्वारिकायां तथा विष्णोः । संस्थितस्य तवैव हि ॥ समीहते करस्पर्शं । रुक्मिणी कुंडिनस्थिता ॥ ५३ ॥ पत्रिकायां लिखित्वेति । ताभ्यां प्रेषयितुं ददे ॥ नाम्ना च परिणामेन । दूताय वत्सलाय सा ॥ ५४ ॥ पत्रिकां तां समादाय । चचाल सोऽपि सत्वरं ॥ अतिक्रम्य बहुं मार्गं । द्वारवतीमवाप्तवान् ॥ ५५ ॥ किमिंद्रस्य पुरी रम्यो—त्तीर्णास्ति किं त्रिविष्टपात ॥ तस्याः शोभां समीक्ष्येति । दध्यौ संदेशहारकः ॥ ५६ ॥ त्रिभूमान्निखिलेभ्योऽपि । प्रासादांश्च लघीयसः ॥

ताः ॥ तस्मात्सत्वोद्यमौ कार्यौ । सुखैषिणा मनीषिणा ॥ ३५ ॥ तत्पाणिग्रहणे विष्णो । कामना
तव चेद्भवेत् ॥ यावदूढा न सा ताव—त्त्वमेव तां वृणीष्व तत् ॥ ३६ ॥ कुमार्यां हि विवोढॄणां ।
शतानि पुनरोकसः ॥ क्ष्मातले समस्तीद—मपि प्रसिद्धमच्युत ॥ ३७ ॥ तस्मात्त्वमेव गोविंद । स-
र्ववीरशिरोमणिः ॥ द्राक्पाणिग्रहणं तस्याः । कुरुष्वाश्रित्य साहसं ॥ ३८ ॥ एकतः शतशो नार्य ।
एकतस्ते सहस्रशः ॥ रुक्मिण्याः पुरतो भाति । न कापि स्त्री मनागपि ॥ ३९ ॥ सर्वासामपि कां-
तानां । भोगा व्यर्थास्तथा तव ॥ इंद्रियाणां यथा भोगा । जीवतामंतरेण तु ॥ ४० ॥ बहुधा व-
र्णनैस्तस्या । मोहयित्वेति माधवं ॥ समुत्थितस्ततः स्थाना—न्नारदः कलिकामुकः ॥ ४१ ॥ समु-
त्थिते मुनौ तस्मि—न्मूर्छामापत त्रिविक्रमः ॥ शीतलैरुपचारैश्च । यादवैः सा निराकृता ॥ ४२ ॥
मूर्छायां विनिवृत्तायां । तस्याः संगममेव हि ॥ वांछंश्च विकलीभूतः । शून्यचित्त इव स्थितः ॥४३॥
इतश्च शिशुपालेन । समं नैमित्तिकं वरं ॥ आपृच्छ्य रुक्मिणीलग्नं । पित्रादिभिरुपाददे ॥ ४४ ॥
रुक्मिण्यापि च तल्लग्नं । विनिश्चितं श्रुतं यदा ॥ तदा चिंतातुरा जाता । सा कृष्णवरणोत्सुका ।४५।
कृष्णस्य शरणं भूया—न्मरणं शरणं व मे ॥ स्वचित्तालोचमात्रेण । निश्चिकायेति रुक्मिणी ।४६।

मवतीर्णास्तु निष्फलाः ॥ २४ ॥

नारदोदितमाकर्ण्य । रुक्मिण्या रूपमद्भुतं ॥ ऊढानूढास्त्यसौ नारी । माधवेनेति ज्ञापितं ॥ ॥ २५ ॥ निशम्य नारदः प्रोचे । सोढा नास्ति परं हरे ॥ शिशुपालमहीशाय । ख्यातायास्ति समर्पिता ॥ २६ ॥ शिशुपालेशितुः पार्श्वे । जेतुं जिगमिषो रिपून् ॥ व्रजितं रुक्मिणा प्रेम्णा । पक्षपातचिकीर्षया ॥ २७ ॥ जित्वा प्रत्यर्थिनः प्रत्या—गच्छतोः स्वनिकेतने ॥ नृभृत्कुमारयोः प्रीति—नैरंध्रं समजायत ॥ २८ ॥ शिशुपालाय तुष्टेन । बंधुना तत्र रुक्मिणा ॥ अनापृच्छ्यैव पित्रादीन् । प्रदत्ता रुक्मिणी स्वसा ॥ २९ ॥ शिशुपालोऽपि नृपालो । विशालकरवालभृत ॥ वैरिकालो मनःकालो । वीरमान्योऽस्ति सांप्रतं ॥ ३० ॥ अचिंत्यशक्तिधाराणां । देवानामपि दुर्लभा ॥ जीवतः तु न सा तेन । मुच्यते रुक्मिणी करात ॥ ३१ ॥ समाकर्ण्येति वैकुंठो । रोमचांचल्यधारणात ॥ लोके यथार्थनामाऽनू—न्मतिचंचलतायुतः ॥ ३२ ॥ सुकृष्णवदनं कृष्णं । निरीक्ष्य नारदोऽभ्यधात् ॥ सर्वथा मा कृथाश्चेत—श्चिंतयान्वितमच्युत ॥ ३३ ॥ सत्वमेवावलंबस्व । मुख्यः सत्ववतामयं ॥ यस्यावलंबनेनैव । सिद्ध्यंत्यर्था हि देहिनां ॥ ३४ ॥ सत्वोद्यमविधातॄणां । फलंत्यर्थाः समीहि-

नाप्यनेनाशु । रूपेण मम मानसं ॥ अक्षोभ्यमपि केनापि । क्षोभितं हस्तिकर्णवत् ॥ १३ ॥ स्तं-
भितं स्तंभनेनेव । मोहनेनेव मोहितं ॥ यंत्रितं यंत्रकेणेव । मंत्रकेणेव मंत्रितं ॥ १४ ॥ पृष्टे स-
तीति भूयिष्ट—तुष्टिमरिष्टनाशिनीं ॥ बिभ्रदभ्रशुभ्रार्चि—रमदो नारदोऽवदत् ॥ १५ ॥ कृष्णना-
माप्यकृष्णास्य । समाकर्णय निर्णयं ॥ अपि दोलायमानात्त्वं । दुःखतां चेतसस्त्यज ॥ १६ ॥ न
नैर्जरं न गांधर्वं । न विद्याधरगं ननु ॥ त्वं विजानीहि मानुष्य—रूपमेतद् वृषाकपे ॥ १७ ॥ श्री-
कुंभनपुरे स्फारे । हारे भ्रायोषितो गले ॥ विभाति भूपतिर्भीष्म—नामा धामाखिलश्रियां ॥१८॥
तस्य राज्ञी कलाप्राज्ञी । भूता नूता विशारदैः ॥ तस्याश्चास्ति ह्यसौ पुत्री । पवित्रीकृतभूतला ।१९।
रुक्मिणी नामतः ख्याता । प्रदधाति स्ववर्ष्मणि ॥ आबाल्यादपि रूपेण । रेखां लेखांगनेव च ॥
॥ २० ॥ वैताढ्यपर्वते गत्वा । श्रेण्योर्द्वयोरपि खलु ॥ रूपं विद्याधरस्त्रीणां । मयका प्रविलोकितं ॥
॥ २१ ॥ भूतलेऽपि च सर्वस्मि—न्निरीक्षिता नृपस्त्रियः ॥ रुक्मिणीक्रमणांगुष्ट—शोभां कापि बि-
भर्ति न ॥ २२ ॥ किं न सा पुण्यलावण्या । त्वया श्रुतवती हरे ॥ तत्किं श्रुतं सभासद्भ्यः । स-
भायां पुरुषोत्तम ॥ २३ ॥ दृष्टा कांता न सा येन । न सा श्रुतवती भुवि ॥ अवतारो मुधा तेषा—

सरसाहारसंप्राप्ता—वप्येषास्ति कृशोदरी ॥ निखिलैरामयैर्मुक्ता । संयुक्ता संस्फुरद्गुणैः ॥ १ ॥ कटिभागतनुत्वेन । सिंहीवासौ प्रवर्तते ॥ नाभिकूपेन लावण्य—पानीयदीर्घिकेव च ॥ २ ॥ नितंबयोश्च पृथुत्वं । धरत्येषा समांसयोः ॥ रंभास्तंभसमानत्व—मूर्वोर्जान्वोश्च गूढतां ॥ ३ ॥ कूर्मपृष्ठसमानेनौ—न्नत्येन च विशेषतः ॥ पादाभ्यां राजमानाभ्या—मेतस्याः शोभते वपुः ॥ ४ ॥ पादपाणितलाशेष—नखेष्वेषा च शोणतां ॥ सारमादाय पद्मादे—र्धत्ते मत्तेभगामिनी ॥ ५ ॥ आपादमस्तकं स्त्रीणां । दक्षलक्षणलक्षितं ॥ अस्ति कस्या अदो रूपं । समस्तेंद्रियसुंदरं ॥ ६ ॥ व्यंतरी किन्नरी वापि । राजत्सर्वसुरीवरा ॥ पातालसुंदरी विद्या—धरी रूपाधिकं त्विदं ॥ ७ ॥ अहो नारदपांडित्यं । कुत एतद्विलोकितं ॥ वीक्षितं च पटेऽनेन । रूपमालिखितं कथं ॥ ८ ॥ इति प्रत्यक्षमानेना—पीक्षमाणो मुहुर्मुहुः ॥ संशयाश्रितचेतस्कः । केशवो विह्वलोऽभवत् ॥ ९ ॥ पुनरप्यच्युतोऽवोच—त्कल्पनैः किं प्रयोजनं ॥ हस्तैककंकणादर्श—प्रयोजनमिवावनौ ॥ १० ॥ अत्याग्रहेण पृच्छामि । नारदमेव केवलं ॥ चिंतयित्वेति गोविंद—स्तमपृच्छत्प्रयत्नतः ॥ ११ ॥ स्वामिन् रम्यमिदं रूपं । समानीतं कुतस्त्वया ॥ सद्यः प्रसद्य हृद्यात्मन् । द्रुतं मे वद तुष्टये ॥ १२ ॥ पटस्थे-

भ्रूद्विधोः स्मयः ॥ पार्वणेंदुकलाखंडं । ध्याते वा स्यादथोऽलिके ॥ ७ए ॥ कंदर्पस्य धनुःशास्त्रे । श्रूयते दृश्यते न च ॥ इतीव भ्रूमिषादस्या । धन्वकामेन दर्श्यते ॥ ए० ॥ एतस्या नेत्रसौंदर्य—योगेनैव जिता इव ॥ सारंग्यो नगरं त्यक्त्वा । वनवासं सिषेविरे ॥ ए१ ॥ यस्य नासा गता तस्य । न वक्रे किमपि स्थितं ॥ अनया नासया कीराः । खे भ्राम्यंति जिता इव ॥ ए२ ॥ बिंबस्य वा प्रवालस्य । मा भूत्स्वशोणतास्मयः ॥ धात्रेवास्याः कृतावोष्ठौ । रक्तत्वेन द्वयोरपि ॥ ए३ ॥ अनयैव गृहीतः स्व—स्वरेण कोकिलध्वनिः ॥ इतीव कालिकां देहे । दुःखेन प्रदधे पिकः ॥ ए४ ॥ स्वहृत्सरलतौज्ज्वल्य—सूचनार्थमिवानया ॥ दंतपंक्तौ धृते कुंद—वत्सरलत्वशुभ्रते ॥ ए५ ॥ रात्रावेव कला मेऽस्ति । मुखस्यास्यास्त्वहर्निशं ॥ इतीव लज्जया नूनं । न दिवा भाति चंद्रमाः ॥ ए६ ॥ अस्या एव वरं रूपं । सर्वस्त्रीष्वित्यसौ गले ॥ रेखां कंबुरिवादध्रे । हृदि किंतु न वक्रतां ॥ ए७ ॥ मध्ये काठिन्ययोगेन । सौकुमार्येण वा बहिः ॥ एतस्या इव कल्याण—कुंभायेते पयोधरौ ॥ ए८ ॥ महाबाहुलते अस्या । विभातःस्म मनोरमे ॥ अद्भुतं कंटकैर्मुक्ते । सौकुमार्येण संयुते ॥ एए ॥ गंभीरत्वेन पाथोधि—समानं मानसं भृशं ॥ एषा च प्रदधानापि । क्षारत्वेन विवर्जिता ॥ ३०० ॥

भवच्च सविस्मयः ॥ ७८ ॥ तथा नूत्वा कियद्वेलां । दैत्यारिरपि तं मुनिं ॥ पप्रच्छ विकलः किंच । स्त्रीर्दृष्ट्वा विकलो न कः ॥ ७९ ॥ स्वामिन्निदं किमालेख—मात्रमस्ति पटेऽत्र च ॥ अथवा विद्य-मानं किं । कलया चित्रितं त्वया ॥ ८० ॥ इति पृष्टेऽब्रवीत्सोऽप्या—लेखमात्रं हि नास्त्यदः ॥ किं-तु दृष्टं वरं रूपं । मया चित्रितमच्युत ॥ ८१ ॥ पुनरप्यच्युतः प्राह—कर्णितं रूपमीदृशं ॥ त्रिवि-ष्टपेऽसुरीणां वा । सुरीणां वडवामुख ॥ ८२ ॥ तावकीना गतिस्तत्र । प्रवर्तते न सर्वथा ॥ मर्त्यलो-के गतिस्तेऽस्ति । न तत्र रूपमीदृशं ॥ ८३ ॥ ततः सम्यक्प्रकारेण । ममाग्रे ब्रूहि सूनृतं ॥ समा-नीतमिदं रूपं । कुतः कस्याः स्त्रियाः स्फुरत् ॥ ८४ ॥ प्रतिबद्धं मनस्तत्र । रूपे मत्वा वृषाकपेः ॥ माधवं नारदोऽवादी—द्विहस्य च मनागपि ॥ ८५ ॥ मनुष्यलोक एवास्ती—दृशं रूपं मनोहरं ॥ चिंतारत्नमिवानीतं । ढौकनाय पुरस्तव ॥ ८६ ॥ दर्शं दर्शं च तद्रूपं । कृष्णः संस्थितलोचनः ॥ कांतेयं चेन्मया नाप्ता । तदाहं मुषितोऽस्मि च ॥ ८६ ॥ वर्तते मर्त्यलोकेऽपी—दृशं रूपं मृगीदृ-शां ॥ न चेद् दृग्गोचरीभूतं । वंचितोऽस्मीत्यचिंतयत् ॥ ८७ ॥ वेणीदंडोऽप्यहो ह्यस्याः । कृष्णभुजं-गमायते ॥ दृष्टमात्रोऽपि चेतांसि । हरते कामिनां नृणां ॥ ८८ ॥ सत्शोम्नशकलाधारि—त्वेन मा-

णीचित्तं । कृत्वा विष्णोश्च वर्णनं ॥ निजापमानदुःखस्य । शांत्यर्थमुद्धितो मुनिः ॥ ६७ ॥ कैला-
सशिखरे गत्वा । स्थित्वा कियदनेहसं ॥ लिलेख रुक्मिणीरूपं । पटे स्वकलया मुनिः ॥ ६८ ॥
पटे लिखितमप्याशु । मनोहारि सतामपि ॥ आदाय रुक्मिणीरूपं । चचाल नारदस्ततः ॥ ६९ ॥
आच्छाद्याध्वनि वस्त्रेण । धृत्वा भुजांतरे भृशं ॥ विष्णोर्दर्शयितुं रूपं । सोऽचलद् द्वारिकां पुरीं ॥
॥ ७० ॥ चारणर्षिमिवाकाश—मार्गेणायातमादरात ॥ वीक्ष्याभ्युद्धितमात्मीय—सभास्थेन मुरारि-
णा ॥ ७१ ॥ गुणान् वर्धयितुं सेवा—नभ्युद्धायासनादिभिः ॥ मुनिमामंत्रयामास । विनयेन जना-
र्दनः ॥ ७२ ॥ आमंत्रितो मुनिस्तत्रा—सने दत्ते मुरारिणा ॥ हर्षादाशीर्वचो दत्वो—पविष्टः सु-
स्थिरो यदा ॥ ७३ ॥ तदा पृष्टो मुकुंदेन । स्वामिन् विचरसीच्छया ॥ वीक्षितं कौतुकं किंचित । का-
पि भूमंडले त्वया ॥ ७४ ॥ मया त्वं परमाभीष्ट—मित्रत्वेन विचिंत्यसे ॥ ततो मदर्थमानीतं । किं-
चिदाश्चर्यकारणं ॥ ७५ ॥ इति प्रोक्ते मुनिर्मौन—माधाय संस्थितो मुदा ॥ पटे लिखितमाकार—
मदर्शयज्जनार्दनं ॥ ७६ ॥ तं समालोक्य गोविंद—श्चित्ते तन्मयतां धरन् ॥ मेषोन्मेषावंबकयो—
र्नाधाच्चित्रपुमानिव ॥ ७७ ॥ अदृष्टचरविभ्राजि—कुतूहलिमनुष्यवत ॥ पटस्वरूपमालोक्य । सोऽ-

संमदादन्यदादत्त । त्वां सुरूपवतीं कनीं ॥ ५६ ॥ विशेषेण ततोऽपीष्ट—गजाश्वादिप्रदेशनैः ॥ सं-
तोषितस्ततोऽचालीत । कन्यादानं हि तुष्टये ॥ ५७ ॥ सन्मानितो महीशेन । यदा रुक्मी निकेत-
ने ॥ युद्धे जयं समादाय । दत्वा त्वां समुपागतः ॥ ५७ ॥ तदा नत्वा पितुः पादान् । स्थित्वा च
सूचितास्पदे ॥ वृत्तांतं शिशुपालेश—मिलनाद्यमचीकथत् ॥ ५८ ॥ प्रवृत्तौ क्रियमाणायां । कुशल-
प्रश्नपूर्वकं ॥ रुक्मिणी शिशुपालाय । मया दत्तेति सोऽवदत् ॥ ५९ ॥ साधु साधु त्वया रुक्मिन्न ।
कृतमेतन्मनीषिणा ॥ सर्वेऽपि बांधवास्ते चा—वीवदन्निति हर्षतः ॥ ६० ॥ संतुष्टेन तव भ्राता ।
शिशुपालाय ऋभृते ॥ रुक्मिणैव प्रदत्ता त्वं । त्वत्पिता न तु रुक्मिणि ॥ ६१ ॥ अत एव पुरस्ता-
त्ते । पुंमरीकाक्षचेतसः ॥ असंभाव्यमपि प्रोक्तं । नावि नारदभाषितं ॥ ६२ ॥ पितृभ्यामेव कन्या
तु । प्रदत्ता याति सर्वथा ॥ सहोदरादिनिर्दत्ता । सतोस्तयोर्न हि व्रजेत् ॥ ६३ ॥ करिष्याम्यहम-
प्युच्चै—रन्नियोगं तथांगजे ॥ भविष्यति यथा ताव—कीनचित्तविचिंतितं ॥ ६४ ॥ पितृस्वसुरिति
श्रुत्वा । वचनं दुःखमोचनं ॥ विष्णुमेव वहत्युच्चै—र्मानसे चैव केवलं ॥ ६५ ॥ योषितः पुरुषे चि-
त्तं । पुंसश्च यदि योषिति ॥ उभयोरपि वीवाहः । समीचीनस्तदैव हि ॥ ६६ ॥ ज्ञात्वेति रुक्मि-

हीत्वा शिशुपालोऽपि । प्राह रे किं करोम्यथ ॥ सोऽवादीन्मार्गयेर्यत्त्वं । दद्यां मां किंतु मावधीः ॥
॥ ४५ ॥ प्रतिवर्षमियान् दंडो । देय उक्त्वेति रुक्मिणा ॥ शिशुपालसमीपात्स । मोचितः कृपया
तदा ॥ ४६ ॥ भद्राणि जीवतां पुंसां । विमृश्येति प्रपद्य च ॥ दंडे मुक्ताफलस्वर्ण—गजाश्वान् स
प्रदत्तवान् ॥ ४७ ॥ रुक्मिसांनिध्यतो जित्वा । पल्लीस्वामिनमुत्कटं ॥ प्राज्यं च दंडमादाय । शिशु-
पालः प्रतीयिवान् ॥ ४८ ॥ एकं निजवयस्यस्य । सूनुर्द्वितीयमस्य हि ॥ साहाय्येनैव पल्लीश—ज-
योऽभूद्भुवि भूपतेः ॥ ४९ ॥ ततः सन्मानयामास । रुक्मिणं भूपतिर्भृशं ॥ मिथश्चाकृत्रिमा प्रीति
—स्तयोरध्वन्यजायत ॥ ५० ॥ एको दत्ते द्वितीयोऽपि । प्रतिगृह्णाति हर्षतः ॥ एको भुंक्ते परो भो-
ज—यत्यादरविशेषतः ॥ ५१ ॥ एको गुह्यं वदेदन्यः । प्रपृच्छति छलोज्झितः ॥ इति षड्लक्षणैः प्री-
ति-स्तयोः समभवद् दृढा ॥ ५२ ॥ जित्वा पल्लीपतिं दुष्टं । शिशुपालेश आगतः ॥ इति ज्ञात्वा पु-
रे लोकैः । प्रवेशस्योत्सवः कृतः ॥ ५३ ॥ कुमारेण समं भूपः । समागत्य पुरे निजे ॥ परस्परवि-
नोदैश्च । प्रीत्या कालमवाहयत ॥ ५४ ॥ प्राच्याद्यदिनादन्य—दिनसादृश्यमेव हि ॥ जानन् प्री-
तौ कियंतं स । कालं तत्र स्थितो मुदा ॥ ५५ ॥ गेहं जिगमिषू रुक्मी । मिलितुं पितरौ निजौ ॥

प्रविधायिनि ॥ चचाल शिशुपालेश—स्तदनंतरमंजसा ॥ ३३ ॥ कुमारेण समं मार्गे । प्रवर्तयंस्ततः सुखं ॥ दुष्टपल्लीपतेः पल्ली—सीमनि समुपेयिवान् ॥ ३४ ॥ शिशुपालं समायातं । श्रुत्वा सीमनि वेगतः ॥ मेलयित्वा बलं प्राज्यं । सोऽपि सन्मुखमागमत् ॥ ३५ ॥ समेतेऽभिमुखं तस्मिन् । शौर्यं दर्शयितुं निजं ॥ शिशुपालक्रुधो वह्नि—र्निर्यज्ज्वालो बभूव च ॥ ३६ ॥ दुरात्मास्त्येष भूपालः । सावधानतया ततः ॥ विशेषेण निशि स्थेयं । महीशोऽकथयद्बले ॥ ३७ ॥ वराकोऽयं कियन्मात्रं । स्वामिंस्तवानुभावतः ॥ समनह्यंत युद्धाय । ब्रुवाणा इति तद्भटाः ॥ ३८ ॥ गेहे शूरा भवंत्येके । तथैके चैव पंडिताः ॥ अन्यस्य मिलिते पुत्रे । यस्तिष्ठेद्बलवानसौ ॥ ३९ ॥ ततो गंधेभसंकाशे । कटके समुपेयुषि ॥ शिशुपालबलं जातं । निर्मदं परहस्तिवत् ॥ ४० ॥ युध्यमानेषु वीरेषु—भयोरप्यभिमानतः ॥ हारितशिशुपालस्य । नष्टं सैन्यं समंततः ॥ ४१ ॥ जयामि निखिलानेता—नित्यहंयुः समुत्थितः ॥ तदग्रे शिशुपालोऽपि । शिशुपाल इवाभवत् ॥ ४२ ॥ तत्स्वरूपं समालोक्य । रुषा रुक्मी समुत्थितः ॥ चक्रे पल्लीपतेः सैन्य—मर्यमेव तपोऽन्वितं ॥ ४३ ॥ दिनांधमिव काकारि—मेकाकित्वेन संस्थितं ॥ बध्ध्वा पल्लीशमानिन्ये । नागपाशैर्नृपांतिकं ॥ ४४ ॥ गृ-

च्छेद्यंते किं न हेलया ॥ २१ ॥ शुंडादंडेन नृपिष्ट—मर्त्यान् त्रापयतां भृशं ॥ भिनत्ति हस्तिनां कुंभ—स्थलानि किं न केसरी ॥ २२ ॥ त्वया पुनः पितः प्रोक्तं । राज्यं धाम्न्येव पालय ॥ लोकैस्तदपि नो साधु । सर्वथा कथयिष्यते ॥ २३ ॥ पुत्रस्य कामना पित्रा । सुखार्थं प्रविधीयते ॥ प्रस्तावे शर्मणे नाभूत् । किं सूतेन सुतेन तत ॥ २४ ॥ ततोऽनुग्रहकृपां कृत्वा । दत्वा चाज्ञां पितर्मम ॥ परीक्षस्व स्वरूपं च । वयोयोग्यात्मकं पुनः ॥ २५ ॥ सहजेनैव नृपाल—शिशुपालेन मां सह ॥ प्रेषयित्वा रणे पश्य । पश्चाद्राज्यव्यवस्थितिः ॥ २६ ॥ इत्यंगजवचः श्रुत्वा । संतुष्यन् क्ष्मानृपतिः ॥ एतस्याहो विनीतत्वं । मनस्येवं व्यचिंतयत् ॥ २७ ॥ सर्वैरपि प्रवर्तिव्य—मस्याज्ञायां विशेषतः ॥ मेलयित्वा बलं सर्वं । शिक्षा दत्तेति नृभुजा ॥ २८ ॥ अत्याग्रहप्रसंगेन । तातेनाज्ञा समर्पिता ॥ कुमारस्यापि पुत्रस्य । विनयेन महीयसः ॥ २९ ॥ प्रेषणाय ततो दत्ता । जनकेन वरूथिनी ॥ नृपस्तरपदातीन—तुरंगमरथैर्युता ॥ ३० ॥ शिरस्यारोप्य पित्राज्ञां । नत्वा पित्रोः पदद्वयं ॥ भवद्भिः शकुनैर्भव्यैः । कुमारः प्रचचाल सः ॥ ३१ ॥ अविच्छिन्नप्रयाणेन । कुमारो वर्त्मनि व्रजन् ॥ शिशुपालेशसेनायाः । सोऽचिरेणैव चामिलत् ॥ ३२ ॥ कुमारे मिलिते भूरि । सान्निध्यं

नो त्रुवि ॥ न दत्ते सर्वथा गंतुं । तातं मूर्धशिरोमणिं ॥ १० ॥ नंदनस्य विनीतस्य । सैव चास्ति विधिर्यतः ॥ ततस्त्वं वद मे तात । किमस्ति कृत्यमीदृशं ॥ ११ ॥ भीष्मनृपोऽवदद्वत्स । शिशुपालोऽस्ति मत्सुहृत् ॥ दुर्धरं नृपतिं जेतुं । चलितः सबलो बली ॥ १२ ॥ सौहार्देनैव तेनाह—माकारितोऽस्मि सत्वरं ॥ यदा न गम्यते तत्र । किं सौहार्दं तदा मम ॥ १३ ॥ ततस्त्वामभिषिच्याहं । कटकेन महीयसा ॥ पुत्रं तव प्रयास्यामि । पक्षपातविधित्सया ॥ १४ ॥

समाकर्ण्य वचो वप्तुः । कुमारोऽपि व्यजिज्ञपत ॥ मयि सत्यपि हे तात । त्वया नूनं न गम्यते ॥ १५ ॥ लोका अपि वदंत्येवं । तिर्यक्सिंहोऽपि सुंदरः ॥ य एकेनैव पुत्रेण । सुखी स्यात्सर्वजन्मनि ॥ १६ ॥ ममादेशप्रदानेन । प्रकटीकुरु मां ततः ॥ स्याद्वचनीयता वा न । यथा लोकेऽपि मे पितः ॥ १७ ॥ नृपोऽप्यधात्कुमार त्वं । सुकुमारश्च बालकः ॥ कठोरं रणकर्मास्ति । येन तेन न जन्यते ॥ १८ ॥ ततस्तवास्ति योग्यं न । कृत्यमेतत्सुतोत्तम ॥ गेह एव स्थितो राज्यं । पालय त्वमकंटकं ॥ १९ ॥ प्रजजल्प कुमारोऽपि । विनयात्पितरंप्रति ॥ प्रसादितं त्वया तात । तत्सर्वमपि सूनृतं ॥ २० ॥ कठिनाः पर्वताः प्रौढा । अभेद्याश्च यथा तथा ॥ लघुनापि हि वज्रेण ।

नासि । शिशुपालार्पितास्म्यहं ॥ ९८ ॥ सोचे जानाम्यहं पुत्रि । माकार्षीश्चित्तमाधिभाक् ॥ पितृ-
भ्यां त्वं न दत्तासि । शिशुपालमहीभृते ॥ ९९ ॥ शिशुपालावनीपाल-पार्श्वेऽन्येद्युर्गतेन तु ॥ मु-
दितेन त्वदीयेन । भ्रात्रार्पितासि रुक्मिणि ॥ २०० ॥ रुक्मिण्युवाच मद्बंधु—र्गतस्तत्राज्ञवत्कथं ॥
तं सर्वमपि वृत्तांतं । प्रसादय ममादितः ॥ १ ॥ पितृस्वसावदद्वत्से । शृणु तत्कथयाम्यहं ॥ शिशु-
पालोऽन्यदाचाली—ज्जेतुमुत्कटपार्थिवान् ॥ २ ॥ तदा त्वदीयतातस्य । स्वीकृतसौहृदस्य च ॥ प-
त्रिका सह दूतेन । प्रेषिता तेन भूभुजा ॥ ३ ॥ द्रुतमत्र समेतव्यं । युष्माभिः प्रीतिधारिभिः ॥
भूयोबलेन साकं हि । पारीद्दयोऽवसरे सुहृत ॥ ४ ॥ पत्रिकां वाचयित्वा स । तत्र गंतुमना नृपः ॥
राज्येऽभिषेकयामास । रुक्मिणं निजनंदनं ॥ ५ ॥ रुक्म्यप्यन्यदधत्तात । सतोऽपि तव गोपतेः ॥
सत्वरमास्पदे सूर्या—श्मेव स्थाप्ये त्वहं कथं ॥ ६ ॥ भीष्मोऽवादीद्भीष्मोक्त्या । समाकर्णय नंद-
न ॥ कृत्ये प्रबलकालीने । नृपेण यदि गम्यते ॥ ७ ॥ तदा स्वकीयसाम्राज्ये । न्यस्यते निजनं-
दनः ॥ महतामपि भूपानां । प्रायशो विधिरस्त्ययं ॥ ८ ॥ समाचख्यौ कुमारोऽपि । प्रभूतकालकर्म-
णि ॥ यथा राज्ञां विधिस्तात ; तथा मे त्वत्प्रसादतः ॥ ९ ॥ भूयिष्टे विषमे कार्ये । विनयी नंद-

मह्यां । वाणीमिव विपश्चितां ॥ त्वामालोक्य मुनिः प्रोचे । कस्येयं तनया नृप ॥ ८७ ॥ भूपालो-
ऽप्यदधत्स्वामिं—स्त्वत्प्रसादादियं सुता ॥ ममास्ति परमेतस्या । विवोढा को भविष्यति ॥ ८८ ॥
मुनिः प्रोवाच भूपाल । यदि मां पृछसि द्रुतं ॥ आकर्णय सकर्ण त्वं । लब्धवर्ण कृतस्तुति ॥८९॥
यदूनामन्वयांभोधि—समुल्लासे शशीव यः ॥ चित्रं कलंकितामुक्तः । कृतारातिरपि स्फुटं ॥ ९० ॥
दुष्टानामपि देवाना—मन्वयैकप्रमाथनः ॥ शिष्टानामपि मर्त्यानां । पालनं विदधाति यः ॥ ९१ ॥
दोषयुक्तः स्वकीयोऽपि । त्यज्यते येन शत्रुवत ॥ निर्दोषः परकीयोऽप्या—द्रियते च स्वमित्रवत ॥
॥ ९२ ॥ नवमो वासुदेवेशो । द्वारिकानगरीपतिः ॥ एतस्याः परिणेता स । भावी भूपालभूषणं ॥
॥ ९३ ॥ इत्यतिमुक्ततातान्यां । क्रियमाणा मिथो मुदा ॥ किंवदंती समीपे तु । संस्थितया मया
श्रुता ॥ ९४ ॥ कृत्वा वार्तामिमां ताव—त्तातेन सह ते शुभे ॥ जगाम मुनिरध्यात्म—तेजा नि-
जतपोवने ॥ ९५ ॥ द्विर्निबद्धं सुबद्धं स्या—दिति न्यायं बुधोदितं ॥ विदंत्यातो मयावादि । स-
त्यं नारदभाषितं ॥ ९६ ॥ यथातथं विजानीहि । ततस्त्वमपि रुक्मिणि ॥ लोकेऽप्यस्ति प्रसिद्धं हि
। नर्षिभाषितमन्यथा ॥ ९७ ॥ रुक्मिणी तु तदावादीत । सत्यं ब्रूषे पितृस्वसः ॥ किंतु त्वमपि जा-

न्यपदा कश्चि—त्तं बंधुमिव मानयेत ॥ ७५ ॥ वासयित्वा निवासाय । द्वारिकानगरी वरा ॥ सुरा-
धीशाज्ञया यस्य । धनदेन समर्पिता ॥ ७६ ॥ एतत्सार्वजनीनं च । प्रथितं कथितं मया ॥ अन्य-
त्तस्यास्ति यत्किंचि—न्माहात्म्यं वर्ण्यते कथं ॥ ७७ ॥ धैर्यशौर्यादिकानन्यान् । गुणान् वर्णयितुं म-
या ॥ नैकया जिह्वया विष्णोः । पुरस्तात्तव शक्यते ॥ ७८ ॥ नारदोक्तमिति श्रुत्वा । स्वरूपमद्भु-
तं हरेः ॥ दधौ तन्मयतां चित्ते । पितृस्वसा च रुक्मिणी ॥ ७९ ॥ अभूदुत्कंठिता तस्य । दर्श-
नाय नृपानुजा ॥ रुक्मिणी तु तदुद्वाह—करणाय समुत्सुका ॥ ८० ॥ मनागपि विहस्योचे । रु-
क्मिणी जनकानुजां ॥ अन्यत्रैवास्मि दत्ताहं । मिलिष्यत्यस्य वा कथं ॥ ८१ ॥ साप्यभ्यधत्त वत्से
य—दनेन नारदर्षिणा ॥ प्रत्यपादि च तत्सर्व—मपि जानाहि सूनृतं ॥ ८२ ॥ यतो वासर एकस्मि-
न् । भिक्षार्थमागतोऽभवत ॥ अस्मद्गृहेऽतिमुक्ताख्यो । मुनिर्ज्ञानी श्रुतान्वितः ॥ ८३ ॥ दत्वा शु-
द्धान्नपानानि । गृहीत्वा सुकृतं च सः ॥ मुनिमामंत्रयामासो—पवेशयितुमासने ॥ ८४ ॥ आगृह्य
तव तातेन । संस्थाप्य चासने क्षणं ॥ स्थित्वा च पुरतस्तस्य । वार्ताऽरच्यत सौकृती ॥ ८५ ॥ ताव-
त्तस्य मुनेश्चक्षु—र्गोचरे सहसापतत ॥ वृंदारककुमारीव । रूपमादधती तनौ ॥ ८६ ॥ गौरवर्णयुतां

र्मरतेर्यस्य । शुद्धाचारप्रवृत्तयः ॥ ६३ ॥ यस्य पक्षे प्रवर्तंते । दशार्हा बलिनो दश ॥ सहस्रशोऽप-
रेऽनेके । कौटुंबिकाश्च यादवाः ॥ ६४ ॥ विनयाद्दर्यचातुर्य—युक्तलाचार्यसन्निधौ ॥ द्वासप्ततिकला-
भ्यासः । कृतोऽस्ति येन हर्षतः ॥ ६५ ॥ विभवानां प्रभूतानां । दानकीर्तिविधायिनां ॥ वर्तते देव-
ता यस्य । पूरका निजशक्तितः ॥ ६६ ॥ कुलिशर्षभनाराच-संहननेन यद्वपुः ॥ सत्समचतुरस्रेण।
संस्थानेन च राजते ॥ ६७ ॥ भुंजानो यौवनावस्था—मेव देव इवावनौ ॥ मानुषत्वेऽपि देवीनां
। भोगसंयोगकारकः ॥ ६८ ॥ संति यत्कटके युक्ताः । शत्रुजयसमुद्यताः ॥ वीरा नृपतयः प्राज्याः
पत्तयश्च गजा हयाः ॥ ६९ ॥ एकतो लक्षशो वीरा । एकतः स जनार्दनः ॥ उभयोरपि संग्रामे ।
जयश्रीर्वृणुते हरिं ॥ ७० ॥ उदपाटयत्पाणिभ्यां । बाल्ये गोवर्धनं गिरिं ॥ जघान पूतनां चासौ ।
मल्लौ चाणूरमुष्टिकौ ॥ ७१ ॥ बबंध कालियं व्याल—मगाधे यमुनांबुनि ॥ स दुष्टस्यापि कंसस्य ।
शिरः कोशमिवाछिदत् ॥ ७२ ॥ अचलोऽपि चलेचारु—रथो चामीकराचलः ॥ न त्वसौ पुंडरीका-
क्षः । स्वकीयधैर्यवीर्यतः ॥ ७३ ॥ दशजातिभवाः कल्पा । युग्मिनो ददतीहितं ॥ पूर्णं दत्ते स ए-
कोऽपि । नृपसामर्थिनामपि ॥ ७४ ॥ अदभ्रद्रव्यदानेन । सोऽकार्षीद्धनिनोऽर्थिनः ॥ आगाद्योऽ-

सत्यवचोधारिन् । ब्रह्मचर्यातिवर्यहृत ॥ रुक्मिण्याशीर्वाग्दाने । त्वया यत्प्रतिपादितं ॥ ५२ ॥ तत्किं
मुनिपते हास्या—त्सहसाकारतोऽथवा ॥ किंवा सत्यतया प्रोक्तं । त्वयैतस्याः प्रणामतः ॥ ५३ ॥
सोऽवादीत्सुभगे नैव । हास्यतः कथितं मया ॥ सहसाकारतो नैव । किंतु सत्यतयोदितं ॥ ५४ ॥
अमोघं मुनिना प्रोक्तं । जानती पार्थिवानुजा ॥ तमेवार्थं दृढीकर्तुं । पुनरप्यवदन्मुनिं ॥ ५५ ॥
प्रणामावसरे नाथ । रुक्मिण्या यो न्यगद्यत ॥ स कोऽस्ति मयका त्वद्य—यावदज्ञातनामकः ॥
॥ ५६ ॥ कुलं शीलं सनाथत्वं । विद्या वित्तं वपुर्वयः ॥ एवं सप्तगुणान्वीतः । प्रायो वरो वरो भ-
वेत् ॥ ५७ ॥ पितृभ्यां च विवेकेन । स्वकीयैः सुजनैः पुनः ॥ तस्यैव दीयते कन्या । पृष्टश्चेति
तया मुनिः ॥ ५८ ॥ तस्य का जननी चास्ति । कल्याणजननी नृणां ॥ कोऽथवा जनको हर्ष—
जनको जनकोपमित ॥ ५९ ॥ तस्य वा कीदृशं शीलं । पक्षः समस्ति कीदृशः ॥ विद्या कीदृग्व-
यः कीदृ—ग्वपुः कीदृग्धनं पुनः ॥ ६० ॥ कटकं कीदृशं तस्य । बलं धैर्यं च कीदृशं ॥ अर्थिनां
कीदृशं दानं । श्रुत्वेति निजगाद सः ॥ ६१ ॥ जननी देवकी तस्य । देवकीर्तितसद्गुणा ॥ जन-
को वसुदेवस्तु । वसुदेवसमांगभृत ॥ ६२ ॥ श्रीमन्नेमिजिनाधीशः । सहोदरो विवेकवान् ॥ जैनध-

हृष्टपुष्टमानसः ॥ जगाम नारदो भीष्म—नृपालभवनं वरं ॥ ४० ॥ तत्रास्ति भगिनी बाल—विध-
वा नृपतेर्न वा ॥ मंडिता पंडितस्त्रीषु । पांडित्येन निजेन च ॥ ४१ ॥ तया पंडितया वीक्ष्या—
गच्छंतमृषिनारदं ॥ विनयैर्बहुमानैश्चा—भ्युत्थायासनमर्पितं ॥ ४२ ॥ स विष्टरे स्थितो याव—त्पुरश्च
स्थितया तया ॥ तावदाकारिताः सर्वा । अपि नंतुं नृपांगनाः ॥ ४३ ॥ रुक्मिण्यपि समाहूता । त-
या ताभिः समं मुदा ॥ रूपसौंदर्यवामाक्षी—प्रीतिकृद्रूपधारिणी ॥ ४४ ॥ समा अपि समागत्य ।
प्रमोदभरपूरिताः ॥ नेमुर्नारदपादौ हि । नम्यो मुनिः सभैरपि ॥ ४५ ॥ नतानामपि सर्वासां । स
आशीर्वादमभ्यधात ॥ तस्याशीर्वचसा तेन । समस्ता अप्यमूमुदन् ॥ ४६ ॥ शिशुपालाय दत्तास्ती
—तीव भ्रांतिमपासितुं ॥ रुक्मिण्यास्तु पृथक्त्वेन । तेनाशीर्वचनं ददे ॥ ४७ ॥ कृष्णाग्रमहिषी व-
त्से । भूयास्त्वं किल रुक्मिणि ॥ महिलानां चतुःषष्टि—कलागुणविशारदे ॥ ४८ ॥ नारदर्षेरसं-
भाव्यं । निशम्य सहसा वचः ॥ रुक्मिण्या विस्मयेनाशु । दृष्टं पितृस्वसृमुखं ॥ ४९ ॥ तन्मुखाभि-
मुखं वीक्ष्य । संज्ञया ज्ञापितं तया ॥ किमुक्तं मुनिनानेन । पृच्छ पितृस्वसुर्द्रुतं ॥ ५० ॥ रुक्मिण्या
जनितां संज्ञा—मवगम्य नृपानुजा ॥ विनयात्स्नेहलैर्वाक्यैः । पप्रच्छ मुनिनारदं ॥ ५१ ॥ स्वामिन्

प । इत्याशीर्विचनं जगौ ॥ २७ ॥ अस्य मातुरपत्यानि । कियंति संति ते नृप ॥ पृष्टं तेनानुरूपायाः । सुताया ज्ञानहेतवे ॥ २ए ॥ अजल्पद्भूपतिः स्वामिं—स्तवादभ्रप्रसादतः ॥ अपत्ययुग्ममेवास्ति । मातुरस्य सुतस्य तु ॥ ३० ॥ एकोऽयं तनयो बालः । पुरस्ताद्यः स्थितस्तव ॥ विद्यते तनया चैकै—तस्माद्बालकतो लघुः ॥ ३१ ॥ रूपिणोऽस्य कुमारस्या—नुसारेण मनोज्ञता ॥ सुताया यदि रूपस्य । फलिष्यति मम स्पृहा ॥ ३२ ॥ ध्यात्वेत्यस्य पुनः पृष्टं । तेनापि नारदर्षिणा ॥ परिणीतास्त्यनूढा वा । किं सा रूपवती सुता ॥ ३३ ॥ नृपोऽभाणीन्महाभाग । परिणीता न सा सुता ॥ नृपालशिशुपालाय । किंतु चास्ति समर्पिता ॥ ३४ ॥ साधु साधु तदावादी—न्नारदो हृष्टवान् हृदि ॥ सत्यभामापमानाय । सपत्न्येषा भविष्यति ॥ ३५ ॥ परं वीक्षे कुमारीं तां । सा रूपेणास्ति कीदृशी ॥ ध्यायन्निति कियत्या च । वेलया स समुत्थितः ॥ ३६ ॥ उत्तिष्ठन् सोऽवदद्भूपं । त्वदीयाज्ञा भवेद्यदि ॥ गत्वा सद्मनि तां कन्यां । पश्याम्यंतःपुरं च ते ॥ ३७ ॥ बभाण धरणीजानिः । पृच्छसीदं मुनीश किं ॥ भाग्येनैव भवेद्गेहे । क्रमरेणुर्भवादृशां ॥ ३७ ॥ सद्यः प्रसद्य शुद्धात्मं—स्ततस्त्वं मां पवित्रय ॥ मदीयगृहयानेन । शुद्धांतर्दर्शनेन च ॥ ३ए ॥ नृभृद्वचनमासाद्य । संतु-

त्रिर्निर्विशेषकं ॥ राज्ञस्तस्य प्रिया राज्ञी । रूपलावण्यसंयुता ॥ श्रीमती प्रीतिमंती च । यानारतं प-
तिंप्रति ॥ १७ ॥ वर्यचातुर्यगांभीर्य—शीलौदार्यलसद्गुणैः ॥ ख्याता सा रुक्मिरुक्मिण्यौ । लालयं-
ती सुतांगजे ॥ १८ ॥ तयासौ देववद्दिव्यं । भुंजानो भोगमद्भुतं ॥ साम्राज्यं पालयन् राजा ।
सभायां संस्थितोऽन्यदा ॥ १९ ॥ जनतापूरितामेतां । सभां तूर्णं समागतः ॥ तस्य क्ष्माधिनाथ-
स्य । नारदः कलिदोहदः ॥ २० ॥ आगछंतं तमालोक्य । भूपादयः सभासदः ॥ सर्वेऽप्युछितवंतो
हि । विनयो महतामयं ॥ २१ ॥ सारसिंहासने सौवे । भूपालेन निवेशितः ॥ स श्रीगुरुरिव भी-
त्या । ब्रह्मचर्यविभूषणः ॥ २२ ॥ अपरेऽपि क्ष्मापाला—दयः सर्वेऽपि पार्षदाः ॥ विनयेन पुरस्त-
स्य । सुशिष्या इव संस्थिताः ॥ २३ ॥ क्षेमप्रश्नेन कुर्वंति । प्रवृत्तिं वाचनामिव ॥ तावद्भीष्मपतेः
पुत्रो । नारदेन निरीक्षितः ॥ २४ ॥ तं दृष्ट्वा तस्याहृष्यत् । प्रफुल्लं नयनद्वयं ॥ उच्छ्वसितं शरीरे
च । रोम्णामभ्युष्टकोटिभिः ॥ २५ ॥ उवाच पृथिवीनाथं । नारदर्षिः प्रहर्षितः ॥ कस्यासौ विद्यते
सूनु—र्नृपाशेषप्रमोदकः ॥ २६ ॥ उत्तमा मानिनो न स्यु—रित्यधोवदनोऽवदत् ॥ क्ष्माजानिस्त-
वैवायं । प्रसादो मम केवलं ॥ २७ ॥ संतुष्टः पृथिवीभर्तु—र्मृष्टवाक्येन नारदः ॥ तच्चिरं जीवतादे-

दृशः ॥ राज्ञामाज्ञामवाप्याशु । नारदेन निरीक्षिताः ॥ ५ ॥ सत्यनामाक्रमांगुष्ठ—कलामपि न ता
दधुः ॥ कलां नार्हति चंद्रस्य । ताराणामिव कांतयः ॥ ६ ॥ उत्तरस्यां द्वितीयस्यां । भृशं तेन नि-
रीक्षिताः ॥ परं न धर्मिणाऽशुद्ध—क्रियेव कापि सेक्षिता ॥ ७ ॥ चाषनीडश्रुतां चित्र—लतामि-
वोद्यमेन तां ॥ अप्राप्यातीवखिन्नोऽभू—न्नारदश्चिंतयान्वितः ॥ ८ ॥ यस्य स्थानस्य विश्वासो—ऽ-
भवत्तत्प्रविलोकितं ॥ अर्थसिद्धिर्न मे जाता । कुत्रापि किं करोम्यथ ॥ ९ ॥ उद्यमे स्यान्न दारिद्र्यं
। चिंतयन्निति चेतसि ॥ भूचराणां नरेशानां । स प्राप्तश्च सभांतरं ॥ १० ॥ भ्रांत्वा राज्ञां प्रभूतानां
। शुद्धांतेषु च सद्मसु ॥ सुसूक्ष्मेक्षिकया तेन । मानिना प्रविलोकितं ॥ ११ ॥ कुमारी तरुणी वा-
र्ध—जरती कापि कामिनी ॥ तस्या रूपाधिका काप्य—नूढा तेन च नेक्षिता ॥ १२ ॥ इतश्च भ्र-
मता तेन । प्राप्तं पद्मानिकेतनं ॥ रत्नमिवास्तचिंताकं । श्रीकुंभं कुंडिनं पुरं ॥ १३ ॥ अहर्निशं प्र-
तापेऽपि । काकारीनिव वासरे ॥ घूकारीनिव रात्रौ च । विपक्षेशान् करोति यः ॥ १४ ॥ तत्राति-
मात्रमाहात्म्य—दानशौर्यादिकैर्गुणैः ॥ चित्तं कुर्वन्निदं राजा । यो वर्ण्योऽस्ति बुधैरपि ॥ १५ ॥ ना-
म्ना भीष्मोऽप्यभीष्मश्च । स्वप्रजापालनोद्यमे ॥ संतापनाऽरिपुस्त्रीणां । नामसत्यार्थतां धरन् ॥ १६ ॥

त्य यास्यति ॥ ९३ ॥ पुरुषोत्तमसंभोग—वियोगेनैव विह्वला ॥ स्वभावेनैव कष्टे सा । पतिष्यति
स्मरातुरा ॥ ९४ ॥ तव दुःखेन मे दुःखं । तव सौख्येन वा सुखं ॥ प्रतिपन्नमपि चैत—त्समं नर-
कवैरिणा ॥ ९५ ॥ अस्या वियोगतो विष्णु—र्भविष्यत्यतिदुःखितः ॥ तदपि स्वीकृतं भावि । मु-
धा दुर्जनवाक्यवत् ॥ ९६ ॥ चिंतयामि द्वितीयं तत् । किमपि स्फुटदुःखदं ॥ तस्याश्च सत्यभामा-
या । एवं मनोरथश्च मे ॥ ९७ ॥ हावभावविलासेन । रममाणामतीव तां ॥ सममन्येन मर्त्येन ।
दर्शयामि च विद्यया ॥ ९८ ॥ नैतदपि समीचीन—मेषा सतीशिरोमणिः ॥ ज्ञास्यते तादवस्थ्यं
न । विष्णुस्तस्या अपि ध्रुवं ॥ ९९ ॥ नारदोऽलीकवादीति । मां मुकुंदोऽपि वेत्स्यति ॥ प्रत्युता-
स्या यशोवादो । भविष्यत्यखिलेष्वपि ॥ १०० ॥ प्रसिद्धाया महासत्या । मृषा यन्न्याख्यानमुत्कटं ॥
तत्प्रदानभवं पापं । ममापि च लगिष्यति ॥ १ ॥ एवं संकल्पपाथोधिं । मुरारेरिव मथतः ॥ लक्ष्मी-
रिव समुत्पन्ना । नारदर्षेश्च शेमुषी ॥ २ ॥ दृष्ट्वा कुतश्चिदेतस्याः । सपत्नीमानयामि च ॥ सपत्नीजं
स्त्रिया दुःखं । महाशल्यमिवास्ति हि ॥ ३ ॥ संचिंत्येति ततः स्थाना—दुड्डाय नारदो मुनिः ॥
स्फारताढ्यं च वैताढ्यं । जगाम तां विलोकितुं ॥ ४ ॥ तस्मिंश्च दक्षिणश्रेण्यां । राजकन्या मृगी-

मुग्धयाप्यविवेकिन्या—नया निस्त्रपया खलु ॥ ददृशेऽहं च नो दृग्भ्या—मुलूकीतुल्यया दिवा ॥
॥ ८३ ॥ तदास्या एव माहात्म्य—हानिः किल भविष्यति ॥ सर्वत्रापि प्रपूज्यस्य । किं मे मुनेर्ग-
मिष्यति ॥ ८४ ॥ सत्यभामाथवा विष्णो—र्मुख्या देवी प्रवर्तते ॥ तयापमानितस्तर्हि । किंचिन्ना-
रददूषणं ॥ ८५ ॥ अतःपरं परा कापि । मानिनी मानयोगतः ॥ माकार्षीदिह्यमावासं । गतस्य मम
शीलिनः ॥ ८६ ॥ प्रसन्नो नारदो यस्य । कल्पवृक्षस्तदंगणे ॥ येन सार्धं विरोधित्वं । प्राप्तस्तस्या-
पदोऽखिलाः ॥ ८७ ॥ लोक आबालगोपाल—प्रतीतस्य गरीयसः ॥ मान्नयात्प्रत्ययस्यापि । हानि-
र्मानवतो मम ॥ ८८ ॥ मत्तामेतामपायेऽहं । कथंचित्पातयामि चेत् ॥ तदा मे दुःखशांतिः स्या-
न्निद्रा तस्या अपि स्फुटं ॥ ८९ ॥ सत्यभामागृहे जाता—पमानाद्दुःखितो मुनिः ॥ एवं संकल्प-
यामास । तत्र गत्वा कलिप्रियः ॥ ९० ॥ चतुर्दशभिः कुलकं ॥

अथ केन प्रकारेण । तस्याः कष्टं ददाम्यहं ॥ नारदो व्याकुलो जातः । सत्यभामार्तिचिंतना-
त ॥ ९१ ॥ अथ विद्याधरस्याहं । मिलित्वा कस्यचिद्बहु ॥ अस्याः स्वरूपमालिख्य । फलके दर्श-
यामि च ॥ ९२ ॥ रूपमस्याः समालोक्य । स संमोहितलोचनः ॥ अहंकारवतीमेता—मितोऽपहृ-

संहर्षेण महीयसा ॥ चिकीर्षुः सास्ति संमोहा—न्मनो मोहयितुं हरेः ॥७१॥ तस्मिन्नवसरे तस्याः
। पृष्टे नारद आगतः ॥ भस्मधूसरितांगश्च । जटावान् वल्कलांशुकः ॥ ७२ ॥ नारदर्षिं न जानंती।
दर्पणे प्रतिबिंबितं ॥ बीभत्सं किमिदं रूपं । वक्रीकृत्याह सा मुखं ॥ ७३ ॥ चंद्रः कलंकितायोगा—
न्मादृशां वदने तुलां ॥ कदाप्यलभमानः सन् । समुदेति ह्रिया निशि ॥ ७४ ॥ ततोऽत्र समये
चेदं । कस्य रूपं भयंकरं ॥ शृंगाररसघाताय । समजायत हा विधे ॥ ७५ ॥ स्वरूपमीदृशं तस्या
। निरीक्ष्याकर्ण्य वाचया ॥ विलक्षवदनो वेगा—न्मंदिरान्निरगान्मुनिः ॥ ७६ ॥ श्रीदविलासकैला-
स—सन्निभात्स्थानकात्ततः ॥ निर्गत्य नारदः कोपा—त्कंपां दातुमिवोद्यतः ॥ ७७ ॥ ये भवंति
महात्मानो । विशुद्धाचारचारिणः ॥ एकाकित्वेन कस्यापि । भवने तैर्न गम्यते ॥ ७८ ॥ विशेष-
तोऽतितारुण्य—रूपलावण्यसंपदा ॥ उन्मत्ताया अबुद्धायाः । स्त्रियाश्च न हि धामनि ॥ ७९ ॥
न दोषः सत्यभामाया । अत्र दोषो ममैव हि ॥ अज्ञातकुलशीलाया । गेहेऽस्या गमनं कृतं ॥
॥ ८० ॥ यौवनेन च रूपेण । भर्तृमानेन मत्तया ॥ एतस्मिन्नवतारेऽह—मनयैवापमानितः ॥८१॥
सर्वदाहं त्वहंकार—धनो हंसगतिः क्षितौ ॥ अस्मि प्रद्योतनप्रोद्य—त्खद्योत इव हृद्यहृत ॥ ८२ ॥

यित्वेति कृष्णोऽवग् । नारदर्षेश्च सस्मितं ॥ ५९ ॥ हितैषी मम मित्रं च । ज्येष्ठो गुरुः सहोदरः ॥
वर्तसे परमाभीष्ट—स्त्वं प्राणेभ्योऽपि वल्लभः ॥ ६० ॥ अतस्त्वत्तोऽस्ति किं गोप्यं । लोप्यं च वच-
नं तव ॥ मदंतःपुरनारीणां । पश्य स्वरूपमिच्छया ॥ ६१ ॥ श्रुत्वेत्यसौ मुकुंदस्य । वाक्यमंतःपुरे ग-
तः ॥ निस्पृहाणां गतिः क्वापि । निषिध्यते न केनचित ॥ ६२ ॥ अष्टाग्रमहिषीमुख्या । सत्यभा-
मा मुरारिणा ॥ कृतास्ति प्रथमं तेन । वीक्षे तामेव वल्लभां ॥ ६३ ॥ विमृश्येति गृहे तस्याः । पौर-
स्त्यं नारदो मुनिः ॥ कौतुकाकुलितोऽचाली—चातुर्यादि परीक्षितुं ॥ ६४ ॥ तावत्षोडशशृंगार-
परिधानाय भूघने ॥ तयादौ मज्जनं चक्रे । शुद्धगंधोदकादिभिः ॥ ६५ ॥ नेत्रयोरंजनं कर्ण—या-
मले कुंडले दधौ ॥ चारुमुक्ताफलोपेतं । नासिकाभूषणं तथा ॥ ६६ ॥ कलया विनिर्मितं चीन-
देशे गुरूपदिष्टया ॥ चारुचीनांशुकं क्षौमं । साधत्त प्रमदोत्तमा ॥ ६७ ॥ आदर्शमेकहस्तेन । गृ-
हीत्वाननसन्मुखं ॥ पुटं ललाटपट्टे सा । मुदा विरचयंत्यभूत ॥ ६८ ॥ पुष्पमाला गले हारो । ह-
स्तयोः कंकणे तथा ॥ किंकिणीमेखला कट्यां । देहे चंदनचर्चना ॥ ६९ ॥ लेपनं गंधधूल्याद्यैः
। कुचयोः कुंभिकुंभयोः ॥ क्वणन्नूपुरमंघ्रोश्च । घंटिकाजालसंयुतं ॥ ७० ॥ एवंविधांश्च शृंगारान् ।

ऽपि पप्रच्छु—रितरेतरमादरैः ॥ आनंदिताः स्थिता नेमि—रामकृष्णर्षिनारदाः ॥ ४८ ॥ नानादे- शमयीर्वार्ताः । प्रकुर्वाणाः सभासदः ॥ नारदं कियतीं वेलां । दृष्ट्वा स्थितममूमुदन् ॥ ४९ ॥ सौ- म्यास्यं विनयोपेतं । कलिकारमपीह तं ॥ मुदिताः सकला लोका । अज्ञासुः साधुनूषणं ॥ ५० ॥ यत्र स्याद्विजयी राजा । वरेण्यविनयी नयी ॥ तत्र प्रजापि तादृग् हि । यथा राजा तथा प्रजा ॥ ॥ ५१ ॥ ततः संसदि सर्वस्या—मप्युद्यद्विनयेक्षणात् ॥ मुदितो नारदोऽवादी—दादरेण परेण तु ॥ ५२ ॥ अहं गोविंद गछामि । बहुषु स्थानकेषु च ॥ करोमि जिनयात्रां च । प्रणमामि मुनीश्व- रान् ॥ ५३ ॥ किंतु मे मानसी प्रीति—स्त्वद्गुणैस्त्वयि यादृशी ॥ न काप्यन्यत्र तादृश्य—नवज्जा- नीहि सर्वथा ॥ ५४ ॥ ततस्तव सुखी सौख्यै—र्दुःखैश्च दुःख्यतः परं ॥ इत्यन्योन्याश्रयो जात— स्त्वदीयसुखदुःखयोः ॥ ५५ ॥ यद्यथ स्यात्त्वदादेशो । व्रजित्वांतःपुरेष्वहं ॥ लावण्यसुंदरं रूपं । प- श्यामि ते मृगीदृशां ॥ ५६ ॥ लावण्येन विवेकेन । पुण्येन विनयेन च ॥ ते महिष्यादयः कां- ता—स्त्वद्योग्याः संति वा न हि ॥ ५७ ॥ विस्मयो नारदस्यात्र—चातुर्यादीक्षणे यथा ॥ कौतुकेन तथा विष्णो—रप्यसौ तद्विलोकने ॥ ५८ ॥ परीक्षा सहजेनैव । स्त्रीणां मम नविष्यति ॥ चिंत-

पूज्योऽसि चक्रवर्तिभिः ॥ ३६ ॥ तथापि हि स्वभावा—त्समचित्ततयापि च ॥ मादृशामपि बालानां । पूजां गृह्णासि च स्तुतिं ॥ ३७ ॥ गुरुभिः स्तुतिभिर्येन । संस्तुतस्तस्य देहिनः ॥ अल्पाभिरपि ताभिश्च । भक्त्यास्यापि नृस्पृशः ॥ ३८ ॥ दुर्गस्वर्गापवर्गादि । ददासि सदृशं फलं ॥ नात्र चित्रं भवेयुर्हि । महांतो नतवत्सलाः ॥ ३९ ॥ युग्मं ॥ देवा विडंबिता येन । मनुष्याश्च कदर्थिताः ॥ प्रसर्पद्दर्पकंदर्पः । सोऽप्यजीयत शैशवात् ॥ ४० ॥ त्वत्तस्ततः परो वीरो । धीरो न कोऽपि विष्टपे ॥ स्वच्छनीरोपमः कर्म—पंके गांभीर्यवारिधिः ॥ ४१ ॥ नमो देवाधिदेवाय । भव्यलोकौघतायिने ॥ गीर्वाणकृतसेवाय । निःकारणोपकारिणे ॥ ४२ ॥ ब्रह्मज्योतिःस्वरूपाय । चिदानंदमयाय ते ॥ नम ॐकाररूपाय । ह्रींकारपरमात्मने ॥ ४३ ॥ योगाभ्यासकृतां नृणां । पिंडस्थपदधारिणे ॥ अर्हन् पदस्थरूपाय । रूपातीताय ते नमः ॥ ४४ ॥ रागद्वेषौ स्वयं मुक्त्वा । चात्मनः प्रथमं हृदः ॥ परेषामपि चित्तास्त्व—मेव मोचयितुं क्षमः ॥ ४५ ॥ दद्याः शिवं हृदा ध्यातः । कीर्तिं च कीर्तितो गिरा ॥ पूजितोंगेन संपत्ती—स्त्रिधापि च सुखावहः ॥ ४६ ॥ इति प्राज्यप्रकाराभिः । स्तुतिभिः शिवशांतिभिः ॥ स्तुत्वास्थान्नारदो नेमे—राज्ञया विष्टरे परे ॥ ४७ ॥ क्षेमं सर्वे-

।। २४ ।। नारदोऽपि जगादोच्चै—र्मानितः सत्कृतोऽपि च ।। ...गमिष्यमत्राहं । द्वेधापि पुरुषोत्तम
।। २५ ।। तदाह्लादप्रदानानां । सज्जनानां भवादृशां ।। रामादिपार्थिवानां चा—भविष्यद्दर्शनं कुतः
।। २६ ।। युग्मं ।। भयोरपि संतोषे । संजाते वाग्विलासतः ।। द्वितीये विष्टरे कृष्णः । स्थितोऽव-
ग्नारदाज्ञया ।। २७ ।। कांताकाननसंमोह्हं । विनार्जिततपोनिधिः ।। अद्भुतं कामचारी च । शीलरत्न-
धरोऽप्यसि ।। २८ ।। भूयोभूपसभामध्ये । परदेशेषु गच्छसि ।। चारु चित्तचमत्कार—कारं किंचिद्वि-
लोकितं ।। २९ ।। सोऽप्यूचे कृष्ण भूरिष्व-परदेशपदेषु च ।। महतामपि भूपानां । पर्षत्सु जग्मि-
वानहं ।। ३० ।। किंतु ते नगरीतुल्या । न दृष्टा नगरी मया ।। तव नीतिसमा नीति—र्न क्वापि
ददृशे पुनः ।। ३१ ।। धर्मस्य स्थापको यादृ—ग्वर्तसे त्वं जनार्दन ।। धर्मसंस्थापकोऽन्यत्र । न दृ-
ष्टः क्वापि तादृशः ।। ३२ ।। यावदेवमुभौ वार्तां । प्रकुर्वाते मिथो मुदा ।। तावत्तत्र त्रिलोकेशः ।
क्रीडन् श्रीनेमिरागतः ।। ३३ ।। आगच्छंतं तमालोक्य । सभ्याः सर्वेऽपि पार्थिवाः ।। बलदेवो मुकुं
दोऽप्यु—दतिष्ठन्नारदोऽपि च ।। ३४ ।। निवेश्य विष्टरे सौवे । श्रीमंतं तं जगद्गुरुं ।। संतुष्टो नारदः
स्पष्टं । तुष्टावारिष्टनेमिनं ।। ३५ ।। नाथ त्वं सर्वगीर्वाणै—र्विश्वैरपि पुरंदरैः ।। बलदेववासुदेवैः ।

ण्या—मभ्युत्थानादिकं कृतं ॥ तत्र तस्य समेतस्य । विहायोगतिविद्यया ॥ १४ ॥ कमंडलजटाधारी । कलिकारी परस्परं ॥ निजचेतस्यहंकारी । सर्वचारी नभश्चरः ॥ १५ ॥ एवंविधोऽपि पूज्यः स । ग्राह्यः सर्वनृपादिभिः ॥ सिद्धिं यात्यल्पसंसारी । ब्रह्मचारी यतोऽनिशं ॥ १६ ॥ रक्तः श्रीजिनधर्मे च । विरक्तः कामिनीरते ॥ आसक्तः स्वप्रतिज्ञाया—मनासक्तश्छलाशये ॥ १७ ॥ स्वनिकेतनमेतस्य । बहुमानं रिपोरपि ॥ यदि प्रदीयते तर्हि । किं मुनेर्गुणिना नृणा ॥ १८ ॥ विमृश्येति सरामेण । मुकुंदेन विवेकिना ॥ अभ्युत्थाय निजे सिंहा—सने स उपवेशितः ॥ १९ ॥ निवेश्य तत्र तं कृष्णः । स्वागतप्रश्नपूर्वकं ॥ उवाच विनयेनोच्चैः । स्वामिन्नद्य कृतार्थितः ॥ २० ॥ अद्य भाग्योदयो जातो—ऽवतारः सफलो मम ॥ अद्य सर्वार्थसंसिद्धि—रद्य भद्राण्यनेकशः ॥ २१ ॥ अद्य मे परमा प्रीति—रद्य वा महती मतिः ॥ अद्य मे परमा ख्याति—रद्यानीतितमोहतिः ॥ ॥ २२ ॥ समायातः पुमान् गेह—मभ्युत्थानेन वा गिरा ॥ यदि संतोष्यते तर्हि । स्वस्यैव गौरवं भवेत ॥ २३ ॥

इति स्तुतिमयैर्वाक्यैः । स्नेहलैर्विनयान्वितैः ॥ नारदं प्रीणयामास । वासुदेवो मुदा तदा ॥

दत् ॥ २ ॥ इतो विमानमाकाशा—दुत्तरद्ददृशे दृशा ॥ सदस्यां हृद्यपार्षद्यै—स्तेजःपुंजविराजितं
॥ ३ ॥ इदं विद्याधराणां किं । किं वा सुपर्वणामिदं ॥ तदेत्यालोक्यमालोक्य । शशंकिरे सभा-
सदः ॥ ४ ॥ अत्यासन्ने समायाते । ऊहापोहौ विमुच्यते ॥ ज्ञात्वा तं नारदमेव । चिच्छेदुर्निजसं-
शयं ॥ ५ ॥ नारदस्तत उत्तीर्य । पवित्रचित्रवेषभृत् ॥ शीलावधिर्निधिस्तत्र । गुणानां समुपेयिवा-
न् ॥ ६ ॥ स्त्रीसंसर्गपरित्यागात् । कश्चित् कश्चिच्च नैःस्व्यतः ॥ पुमान् कश्चिदसत्यागात् । कश्चि-
द्वार्धकयोगतः ॥ ७ ॥ गत्वा कश्चिदरण्ये च । स्थित्वा कश्चिच्छिलोच्चये ॥ कश्चिदेकाकितां कृत्वा ।
मुक्त्वा कश्चिद् गृहादिकं ॥ ८ ॥ सामग्रीविरहात्कश्चि—त्कश्चिद् भूमीशसाध्वसात् ॥ कश्चिल्लावण्य-
शून्यानां । स्त्रीणां रूपविलोकनात् ॥ ९ ॥ यस्मात्सिंहादिभीतिर्न । विद्यासिद्धिर्यतो भवेत् ॥ य-
स्माच्च भाग्यसौभाग्यं । यस्मात्सिद्धिः शरीरिणां ॥ १० ॥ अंतःपुरेषु भूपानां । गत्वा स्त्रीरूपदर्शनं
॥ कथाहास्यविनोदानां । करणं तासु निर्भयं ॥ ११ ॥ प्रवर्तनं यदृच्छाभिः । स्मरसंहारतः क्षणं ॥
कुतूहलेन भूपाला—दिषु संग्रामकारणं ॥ १२ ॥ तथापि मानसब्राह्मी—वपुःशुद्ध्या स्वजन्मतः ॥
अद्भुतं नारदस्यैत—त्तस्य शीलस्य पालनं ॥ १३ ॥ त्रयोदशभिः कुलकं ॥ मत्वेति रामकृष्णा-

॥ पीयंते गुरुवाक्यानि । धीयंते च गुणालयः ॥ २७ ॥ ब्राह्मी यत्र रमा तत्र । न स्यादिति विरोधिता ॥ विद्वत्तासुखिताभ्यां सा । जनैर्यत्र निराकृता ॥ २८ ॥ त्रिवर्गेऽपि रसाद्धर्मे । यशोऽभूद्भुवनत्रये ॥ सर्वत्र ख्यातिमत्तस्य । ख्यातिर्धर्माद्धि जायते ॥ २९ ॥ धर्मेशराजधानीव । सौख्यैरिंद्रपुरीव या ॥ न्यायेन यास्त्ययोध्येव । द्रविणैरलकेव या ॥ ३० ॥ राज्यं पालयतो हरेः सहलिनः श्रीद्वारिकायां तदा । पारावारतटे दशार्हयदुभिः सत्रा पवित्राकृतेः ॥ नृपाः केचिददढौकयन्निजकनीः खानीः सुरूपश्रिया—मश्वान् केचिदिभांश्च केचिदवनौ वस्त्वद्भुतं केचन ॥ ३१ ॥ इति पंम्डितचक्रचक्रवर्तिश्रीराजसागरगणिशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीसांबप्रद्युम्नचरित्रे रामकृष्णारिष्टनेमिजन्मकंसवधद्वारिकानिवेशराज्यपालनवर्णनो नाम तृतीयः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥

अथान्यदा सभायां च । सुधर्मायामिव श्रिया ॥ बभौ वज्रीव गोविंदो । यादवैर्निर्जरैरिव ॥ ॥ १ ॥ युवराजोपमं रामं । दशार्हान् सुदशान् दश ॥ नृपान् सन्यानमात्यांश्च । सोऽपरानप्यमूमु

कृष्णकांत्या लसद्रूप—वतीनां बहुयोषितां ॥ संप्राप्यंते महाभोगाः । पुरुषेणाथवा न हि ॥ १६ ॥ इतीव तत्परीक्षार्थं । कृष्णरूपधरोऽपि च ॥ भोगानभुंक्त कृष्णोऽप्य—न्यासां प्राज्येष्टयोषितां ॥ ॥ १७ ॥ युग्मं ॥ कपोलमूलयोर्निर्य—द्दानलोलुपषट्पदाः ॥ प्रोत्तुंगा द्विरदा यस्या—धुरैरावतकल्प नां ॥ १८ ॥ मेयमध्या मुखे क्षामाः । पीनाः पश्चिमभागयोः ॥ लंबकर्णा उरोऽमानाः । स्कंधोग्रा जविनो हयाः ॥ १९ ॥ क्वणंतीभिरदभ्राभिः । किंकिणीभिर्विभूषिताः ॥ केतुभिश्चित्रयंतः खं । रथा यस्य सदाभवन् ॥ २० ॥ एकाकित्वेति साहस्रा । लक्षाः शतनियोधिनः ॥ विपक्षयो विपक्षाणां । पत्तयो यस्य भूरिशः ॥ २१ ॥ संख्यायां विद्यमाना—मपि यस्य बलं सदा ॥ असंख्याततया लोकै—र्निगद्यते प्रतापतः ॥ २२ ॥ प्रामाण्यं राजधर्मे स्या—दाज्ञाया एव भूपतेः ॥ समुद्रविजयादीशा । अप्याज्ञां तस्य चक्रिरे ॥ २३ ॥ कालेन कालधर्मस्य । जरायाश्चाप्यसंभवात् ॥ यत्र यौवनसंपन्ना । यादवा निर्जरा इव ॥ २४ ॥ पुण्यलावण्यधारिण्यो । मोहिन्यो भर्तृचेतसां ॥ हारिण्योऽपरचित्तानां । स्त्रियो देवांगना इव ॥ २५ ॥ यद्यपि तत्र दीनास्या । दानार्थिनो न याचकाः ॥ तथापि परदेशेभ्यः । समेतानामयं विधिः ॥ २६ ॥ दीयंते यत्र दानानि । चीयंते सुकृतानि च

णां च । वधूवक्त्राब्जरोचिषां ॥ ४ ॥ युग्मं ॥ यस्य दीप्रप्रतापस्य । पुरतो हारितो दिवा ॥ रत्नाव-
स्तमिवाप्नोति । तेजःपुंजोऽपि गोपितः ॥ ५ ॥ यस्य वक्त्रस्य सौम्यत्वं । दृष्ट्वा कुमुदिनीपतिः ॥ म-
न्ये स्वस्मिन् विदन्न्यूनं । रात्रावुदेति लज्जितः ॥ ६ ॥ संग्रामस्य पुरो यस्यो—त्कटद्विद्दर्पमर्दिनः
॥ सर्वेऽपि तत्यजुर्गर्वं । विश्वेऽपि वीरमानिनः ॥ ७ ॥ परिध्वस्तेऽर्थिनां नैःस्व्ये । येन द्रव्यप्रदानतः
॥ दानेच्छां तदभावेऽत्र । व्यस्मारयत्सितोदरः ॥ ८ ॥ सत्यभामा प्रिया सत्य—भायुता तस्य शा-
र्ङ्गिणः ॥ पुण्यलावण्यनैपुण्य—धन्यानन्यवरेण्यहृत ॥ ९ ॥ रतिप्रीती रतिप्रीते । रूपेण विजिते
यया ॥ पतिस्तयोरनंगोऽभू—न्मन्येऽस्याश्च चतुर्भुजः ॥ १० ॥ अष्टाग्रमहिषीमध्ये । यथेंद्रस्य शची
वरा ॥ रूपशीलेन विख्याता । सत्यभामा हरेस्तथा ॥ ११ ॥ भोग्यभोगान् यथा भुंक्ते । शच्या स-
ह शतक्रतुः ॥ सावित्र्या च यथा ब्रह्म । पार्वत्या शंकरो यथा ॥ १२ ॥ मोहिन्या विद्ययेवोच्चैः ।
स मोहितः कलश्रिया ॥ भोगान् भुंक्ते तया सार्धं । महिष्या सत्यभामया ॥ १३ ॥ युग्मं ॥ विष-
यव्यासक्तचित्तोऽपि । महिष्या सह मानवः ॥ न भुंक्ते प्रायशो भोगान् । भुंक्ते चेद्विरमेद् द्रुतं ॥१४॥
प्रीतिपात्रं महिषीयं । सत्यभामा हरेरभूत ॥ तथापि न तया साकं । भोगेभ्यो व्यरमत्स हि ॥१५॥

ण । दीनादिकशरीरिषु ॥ स्वभुजार्जितवित्तानि । ददत्यत्र स्थिता जनाः ॥ ९३ ॥ संतोषिणः स्व
दारेषु । परोपकृत्यतोषिणः ॥ भोगिनोऽपि स्वसंतत्यै । शीलं च पालयंत्यमी ॥ ९४ ॥ तपसा ह-
न्यते कष्टं । तपसा सिद्धिराप्यते ॥ तपसा क्षीयते व्याधि—स्तपांसि विदधत्यमी ॥ ९५ ॥ उत्प-
द्यंते म्रियंते च । जीवाः संसारवर्तिनः ॥ दुःखिनः सुखिनः केऽपि । भावयंत्यपि भावनां ॥ ९६ ॥
न हि स्वार्थं विना माता । पिता भ्राता सुताः स्त्रियः ॥ मत्वेति गुरुपार्श्वेऽत्र । दीक्षामाददतेंगिनः
॥ ९७ ॥ गृह्णंति तदसक्ताश्च । व्रतानि द्वादशानिशं ॥ धरंति धरणीं धीरा । वीराः कुकर्मनाशने
॥ ९८ ॥ आबाल्यादपि कंदर्प—दर्पजेतुर्जिनेशितुः ॥ श्रीनेमेश्चरणांभोज—करंडेणुपवित्रिता ॥
॥ ९९ ॥ नवमो बलदेवोऽत्र । संजातो युवराजवत् ॥ विमात्रेयोऽपि बिभ्राणः । स्नेहं कृष्णे सदा-
धिकं ॥ ६०० ॥ कृष्णोऽत्र राजते कृष्ण—कांतिरपीनपीनरुक् ॥ प्रतापेन धरन् राज्यं । नवमो वासु-
देवकः ॥ १ ॥ पुरंदरपुरीतोऽसा—वित्यधिका पुरी वरा ॥ भूरिभूषणभूषाभिः । शक्रपूःसन्निभापि च
॥ २ ॥ अष्टादशभिः कुलकं ॥ अहोरात्रं प्रकाशित्वा—देवाधिकोऽर्कतेजसः ॥ प्रासीसरत्प्रतापो
द्रा—क्कृष्णस्य वसुधेशितुः ॥ ३ ॥ चित्रं कुवलयोल्लासी । विनाशी परिपंथिनां ॥ उत्कटानां नृपा-

वतीं पुरीं ॥ ८२ ॥ त्रिभिर्विशेषकं ॥ प्रदत्ताज्ञा सुरेंद्रेण । वासिता धनदेन तु ॥ आश्रिता रामकृ-
ष्णाभ्यां । साधाब्धोभां वचोऽतिगां ॥ ८३ ॥ तत्रौकस्स्वसन् कुबेररचितेषूच्चैर्दशार्हा हली । दैत्यारि-
श्च परेऽपि सर्वयदवो गोविंदनिर्देशतः ॥ रूप्यस्वर्णमयैर्घनैश्च वसनैः पात्रैर्ववर्षांबुभि—र्धान्यैः सा-
र्धदिनत्रयं जनकृते तां पूरयन् यक्षपः ॥ ८४ ॥ अलकास्ति पुरीयं किं । किं वा देवेंद्रपूरियं ॥ अ-
न्यदेशागता लोका । यां वीक्ष्येति शशंकिरे ॥ ८५ ॥ तर्कयंति पुनस्तेंत—र्न सा कैलाससंस्थि-
ता ॥ न सापि यतः सा तु । शाश्वतत्वेन शोभिता ॥ ८६ ॥ इयं तु पृथिवीपीठे । वैषम्येण वि-
वर्जिता ॥ पारावारसमीपेऽस्ति । सुखमासुखमाश्रिता ॥ ८७ ॥ कारिता लसत्कीर्ति—र्नवोढेयं
वधूरिव ॥ श्रीदेन स्वर्णमाणिक्यै—र्भूषितास्ति प्रमोदतः ॥ ८८ ॥ तथा तत्र स्थिता देवाः । स्वव-
सूनि मनागपि ॥ ददतेऽर्थिनृणां नैव । प्रसन्नाः प्रार्थिता अपि ॥ ८९ ॥ देवी भुक्ता सुरैः प्राग्
या । सा परैरपि भुज्यते ॥ प्रत्यहं विषयासक्ता । न शीलं पालयंति ते ॥ ९० ॥ कृत्वा तपांसि भू-
यांसि । बुभुक्षिता इतो गताः ॥ पौरुषीमात्रमप्येते । न कुर्वंति कदाचन ॥ ९१ ॥ प्रभूतैश्वर्यभा-
त्त्वेन । सर्वदा तदवस्थया ॥ जराधिव्याध्यभावात्ते । भावना भावयंति न ॥९२॥ सप्तक्षेत्राविशेषे-

माल्यवान् दक्षिणादिशि ॥ पश्चिमायां सौमनस । उदीच्यां गंधमादनः ॥ ७१ ॥ ततः पीतांबरे पी-
तां—वराय धनदो ददौ ॥ वरं माल्यं किरीटं च । कौस्तुभाख्यं महामणिं ॥ ७२ ॥ धनुः शार्ङ्गं च
तूणीरा—वक्षय्यमार्गणौ गदां ॥ कौमोदकीं नंदकं च । खड्गं तार्क्ष्यध्वजं रथं ॥ ७३ ॥ नीलवस्त्रे
च रामाय । रथं तालध्वजं तथा ॥ मुशलं वनमालां च । तूणौ पूर्णशरौ हलं ॥ ७४ ॥ दशार्हे-
भ्यो दशभ्योऽपि । भूषणान्यपराणि च ॥ धनदः प्रददौ प्रीत्यै । राममाधवयोस्तदा ॥ ७५ ॥ एकं
तु कृष्णवासाय । प्रदानं द्वारिकापुरः ॥ वात्सल्यमीदृशं चान्यद् । ब्रूमः श्रीदस्य कान् गुणान् ॥७६॥
जानंतो वासुदेवत्वं । कृष्णस्य यदवोऽखिलाः ॥ पश्चिमांभोनिधेस्तीरे—ऽभिषेकं चक्रिरे मुदा ॥
॥ ७७ ॥ सिद्धसिद्धार्थसूतेन । रामस्य प्रेरितो रथः ॥ हरेर्दारुकसंज्ञेन । द्वारिकाभिमुखं तदा ॥
॥ ७८ ॥ अन्येऽपि यादवाः स्वान् स्वान् । सज्जीकृत्य रथांस्ततः ॥ जन्या इव वरेणासा—स्ताभ्यां
सार्धं तदाचलन् ॥ ७९ ॥ अमात्रैश्चितवादित्रै—श्चतुर्विधैः प्रमोदतः ॥ वाद्यमानैर्महाध्वानै—र्गीतगा-
नैर्मृगीदृशां ॥ ८० ॥ गीयमानैर्जनैः प्रोच्य—मानैर्जयजयारवैः ॥ दीयमानैर्महादानै—र्भूयमानैर्म
होत्सवैः ॥ ८१ ॥ कुबेरेण समं राम—गोविंदौ प्रविवेशतुः ॥ स्वविमाने मृगांकार्का—विव द्वार-

वतीं पुरीं ॥ ८२ ॥ त्रिभिर्विशेषकं ॥ प्रदत्ताज्ञा सुरेंद्रेण । वासिता धनदेन तु ॥ आश्रिता रामकृष्णाभ्यां । साभाच्छोभां वचोऽतिगां ॥ ८३ ॥ तत्रौकस्स्वसन् कुबेररचितेषूच्चैर्दशार्हा हली । दैत्यारिश्च परेऽपि सर्वयदवो गोविंदनिर्देशतः ॥ रूप्यस्वर्णमयैर्घनैश्च वसनैः पात्रैर्ववर्षांबुभि—र्धान्यैः सार्धदिनत्रयं जनकृते तां पूरयन् यक्षपः ॥ ८४ ॥ अलकास्ति पुरीयं किं । किं वा देवेंद्रपूरियं ॥ अन्यदेशागता लोका । यां वीक्ष्येति शशंकिरे ॥ ८५ ॥ तर्कयंति पुनस्तेंत—र्न सा कैलाससंस्थिता ॥ न सापि यतः सा तु । शाश्वतत्वेन शोभिता ॥ ८६ ॥ इयं तु पृथिवीपीठे । वैषम्येण विवर्जिता ॥ पारावारसमीपेऽस्ति । सुखमासुखमाश्रिता ॥ ८७ ॥ कारिता लसत्कीर्ति—र्नवोढेयं वधूरिव ॥ श्रीदेन स्वर्णमाणिक्यै—र्भूषितास्ति प्रमोदतः ॥ ८८ ॥ तथा तत्र स्थिता देवाः । स्ववसूनि मनागपि ॥ ददतेऽर्थिनृणां नैव । प्रसन्नाः प्रार्थिता अपि ॥ ८९ ॥ देवी भुक्ता सुरैः प्राग्या । सा परैरपि भुज्यते ॥ प्रत्यहं विषयासक्ता । न शीलं पालयंति ते ॥ ९० ॥ कृत्वा तपांसि भूयांसि । बुभुक्षिता इतो गताः ॥ पौरुषीमात्रमप्येते । न कुर्वंति कदाचन ॥ ९१ ॥ प्रभूतैश्वर्ययत्नात्त्वेन । सर्वदा तदवस्थया ॥ जराधिव्याध्यभावात्ते । भावना भावयंति न ॥९२॥ सप्तक्षेत्राविशेषे-

माल्यवान् दक्षिणादिशि ॥ पश्चिमायां सौमनस । उदीच्यां गंधमादनः ॥ ७१ ॥ ततः पीतांबरे पी-
तां—बराय धनदो ददौ ॥ वरं माल्यं किरीटं च । कौस्तुभाख्यं महामणिं ॥ ७२ ॥ धनुः शार्ङ्गं च
तूणीरा—वक्षय्यमार्गणौ गदां ॥ कौमोदकीं नंदकं च । खड्गं तार्क्ष्यध्वजं रथं ॥ ७३ ॥ नीलवस्त्रं
च रामाय । रथं तालध्वजं तथा ॥ मुशलं वनमालां च । तूणौ पूर्णशरौ हलं ॥ ७४ ॥ दशार्हे-
भ्यो दशभ्योऽपि । भूषणान्यपराणि च ॥ धनदः प्रददौ प्रीत्यै । राममाधवयोस्तदा ॥ ७५ ॥ एकं
तु कृष्णवासाय । प्रदानं द्वारिकापुरः ॥ वात्सल्यमीदृशं चान्यद् । ब्रूमः श्रीदस्य कान् गुणान् ॥७६॥
जानंतो वासुदेवत्वं । कृष्णस्य यदवोऽखिलाः ॥ पश्चिमांभोनिधेस्तीरे—ऽभिषेकं चक्रिरे मुदा ॥
॥ ७७ ॥ सिद्धसिद्धार्थसूतेन । रामस्य प्रेरितो रथः ॥ हरेर्दारुकसंज्ञेन । द्वारिकाभिमुखं तदा ॥
॥ ७८ ॥ अन्येऽपि यादवाः स्वान् स्वान् । सज्जीकृत्य रथांस्ततः ॥ जन्या इव वरेणासा—स्तार्क्ष्यां
सार्धं तदाचलन् ॥ ७९ ॥ अमात्रैश्चित्रवादित्रै—श्चतुर्विधैः प्रमोदतः ॥ वाद्यमानैर्महाध्वानै—र्गीतगा-
नैर्मृगीदृशां ॥ ८० ॥ गीयमानैर्जनैः प्रोच्य—मानैर्जयजयारवैः ॥ दीयमानैर्महादानै—र्भूयमानैर्म-
होत्सवैः ॥ ८१ ॥ कुबेरेण समं राम—गोविंदौ प्रविवेशतुः ॥ स्वविमाने मृगांकार्का—विव द्वार-

॥ ऐशान्यां कृष्णतातस्य । कुबेरश्छदनामभृत ॥ ५९ ॥ स्त्रीविहारक्षमः पृथ्वी–पालमार्गस्य सन्निधौ ॥ उग्रसेनावनीनाथ—प्रासादस्तत्र राजते ॥ ६० ॥ मंदारतरुसंदोह—युताः सर्वेऽपि सुंदराः ॥ प्रासादास्तत्र राजंते । भृशं प्राकारकेतुभिः ॥ ६१ ॥ प्रासादः सर्वतोभद्रः । सर्वतो भद्रभासुरः ॥ सदष्टादशभूमोऽभूत् । स्वर्णरत्नमयो हरेः ॥ ६२ ॥ प्रासादो हलिनश्चापि । चतुरस्रोऽभवद्वरः ॥ गवाक्षमंडितः स्वर्ण—रत्नराजिविराजितः ॥ ६३ ॥ सभैका सन्निधौ तस्य । राजतेऽतिमनोहरा ॥ सुधर्मासखीसंकाशा । भूरिस्तंभमनोहरा ॥ ६४ ॥ आर्हतप्रतिबिंबाना—मष्टोत्तरशतेन तु ॥ सिद्धायतनवत्तत्र । जिनेंद्रायतनं कृतं ॥ ६५ ॥ शालिपांचालिकास्तंभं । जात्यहेमविनिर्मितं ॥ तोरणजालकै रेजे । तत्सभागर्भगं वरं ॥ ६६ ॥ दीर्घिकासारकासार—चैत्यवापीवनानि च ॥ कुबेरो रचयामास । द्रुतं दिव्यस्वशक्तितः ॥ ६७ ॥ त्रिभिर्विशेषकं ॥ एकाकिनोऽपि कुर्वंति । नृलोकं स्वर्विमानवत ॥ देवाः स्वशक्तितस्तूर्णं । सर्वशोभासमन्वितं ॥ ६८ ॥ देवलोके तु देवानां । विमानानि च भूरिशः ॥ नृलोकेऽपि तथा कुर्वे । सांप्रतं निजशक्तितः ॥ ६९ ॥ इतीव वासुदेवाय । कृत्वा द्वारवती मुदा ॥ दत्ता श्रीदेन संतुष्ट–मानसेन शुभास्पदा ॥ ७० ॥ युग्मं ॥ उज्जयंतः पुरस्तस्या ।

भाभूयस्त्वशोभना ॥ ४७ ॥ अष्टादशकरोत्तुंगं । नवहस्तमितं क्षितौ ॥ द्वादशहस्तविस्तारं । प्राकारं तत्र सोऽकरोत ॥ ४८ ॥ जरासंधबलं मागा—दितीव धनदो विदन् ॥ परिखां परितस्तस्या—श्चक्रेऽब्धिजलपूरितां ॥ ४९ ॥ तत्र केचन वृत्ताश्च । चतुरस्राश्च केचन ॥ त्र्यस्राः केचिद्गिरिकूटाः । केचन स्वस्तिकोपमाः ॥ ५० ॥ केचिच्च सर्वतोभद्रा । वर्धमानाश्च केचन ॥ आयता मंदराः केचिदवतंसाश्च केचन ॥ ५१ ॥ प्रासादा इति नामानो । लक्षशस्तत्र चक्रिरे ॥ केचिदेकैकभूमाश्च । द्विभूमाः संति केचन ॥ ५२ ॥ त्रिभूमाश्च चतुर्भूमाः । पंचभूमाश्च केचन ॥ षड्भूमाश्च तथा सप्त—भूमास्तेन विचक्रिरे ॥ ५३ ॥ जात्यस्वर्णमणिभिश्च । चैत्यानि श्रीमदर्हतां ॥ चत्वरेषु च शृंगाटे—ष्वकार्षीत्स सहस्रशः ॥ ५४ ॥ समुद्रविजयेशस्या—ग्नेय्यां दिशि चकार सः ॥ प्रासादं शातकौंभं स—प्राकारं स्वस्तिकाकृतिं ॥ ५५ ॥ अक्षोभ्यस्तिमितप्रोद्य—त्प्रासादौ दक्षिणादिशि ॥ नंद्यावर्तगिरिकूट—संज्ञामभवतां क्रमात् ॥ ५६ ॥ प्रासादः सागरस्यापि । नैरृत्याख्यविदिश्यभूत् ॥ पंचमस्य च षष्टस्य । प्रासादौ वर्धमानकौ ॥ ५७ ॥ वायव्यां धरणस्याभू—त्प्रासादः पुष्करान्निधः ॥ पूरणस्य ततोऽप्यासी—दालोकदर्शनस्ततः ॥ ५८ ॥ अभिचंद्रस्य तत्पार्श्वे । विमुक्तोऽभवदाख्यया

भान्नूयस्त्वशोभना ॥ ४७ ॥ अष्टादशकरोत्तुंगं । नवहस्तमितं क्षितौ ॥ द्वादशहस्तविस्तारं । प्राकारं तत्र सोऽकरोत ॥ ४८ ॥ जरासंधबलं मागा—दितीव धनदो विदन् ॥ परिखां परितस्तस्या—श्चक्रेऽब्धिजलपूरितां ॥ ४९ ॥ तत्र केचन वृत्ताश्च । चतुरस्राश्च केचन ॥ त्र्यस्राः केचिद्द्विरिकूटाः । केचन स्वस्तिकोपमाः ॥ ५० ॥ केचिच्च सर्वतोभद्रा । वर्धमानाश्च केचन ॥ आयता मंदराः केचि—दवतंसाश्च केचन ॥ ५१ ॥ प्रासादा इति नामानो । लक्षशस्तत्र चक्रिरे ॥ केचिदेकैकभूमाश्च । द्विभूमाः संति केचन ॥ ५२ ॥ त्रिभूमाश्च चतुर्भूमाः । पंचभूमाश्च केचन ॥ षड्भूमाश्च तथा सप्त—भूमास्तेन विचक्रिरे ॥ ५३ ॥ जात्यस्वर्णमणिभिश्च । चैत्यानि श्रीमदर्हतां ॥ चत्वरेषु च शृंगाटे—ष्वकार्षीत्स सहस्रशः ॥ ५४ ॥ समुद्रविजयेशस्या—ग्नेय्यां दिशि चकार सः ॥ प्रासादं शातकौंभं स—प्राकारं स्वस्तिकाकृतिं ॥ ५५ ॥ अक्षोभ्यस्तिमितप्रोद्य—त्प्रासादौ दक्षिणादिशि ॥ नंद्यावर्तगिरिकूट—संज्ञामन्नवतां क्रमात् ॥ ५६ ॥ प्रासादः सागरस्यापि । नैरृत्याख्यविदिश्यभूत् ॥ पंचमस्य च षष्टस्य । प्रासादौ वर्धमानकौ ॥ ५७ ॥ वायव्यां धरणस्याभू—त्प्रासादः पुष्कराभिधः॥ पूरणस्य ततोऽप्यासी—दालोकदर्शनस्ततः ॥ ५८ ॥ अभिचंद्रस्य तत्पार्श्वे । विमुक्तोऽन्नवदाख्यया

तीयायां त्रियामाया—मष्टमस्य प्रभावतः ॥ आसनक्षोभनात्तस्य । प्रसन्नोऽनिमिषोऽभवत ॥ ३७ ॥ पांचजन्यं सुघोषं च । रत्नदाम मनोहरं ॥ दिव्यांशुकं ददौ देवो । वासुदेवाय तुष्टितः ॥ ३८ ॥ नंष्टेतस्य मनुष्यस्या—वष्टंभः शरणार्थिनः ॥ महते सुकृताय स्या—दितीवोवाच सोंजसा ॥ ३९ ॥ ध्यातः कथं स्मृतश्चाहं । गोविंद वद कारणं ॥ सुस्थितो नामतो नाकी । किं ते कृत्यं करोम्यहं ॥ ४० ॥ तद्वाक्यात्स्नेहलात्सद्यः । प्रीतोऽवादीज्जनार्दनः ॥ या दत्ता पूर्वविष्णूनां । वासाय द्वारिका पुरी ॥ ४१ ॥ सांप्रतं तदभावेना—च्छादिताब्धिजलैस्त्वया ॥ प्रदेहि प्रकटीकृत्य । तद्वासाय ममापि तां ॥ ४२ ॥ ओमिति प्रतिपन्नोऽपि । सोऽवक्पृच्छामि वज्रिणं ॥ स्वस्वामिवचसा कृत्यं । संपूर्णफलदायि हि ॥ ४३ ॥ कृष्णेन वरमित्युक्तः । स देवः शक्रसन्निधौ ॥ गत्वा च विनयादूचे । विनयो हि महाफलः ॥ ४४ ॥ मथुरात इहायातः । प्रभोऽस्ति नवमो हरिः ॥ मत्पार्श्वे याचते द्वार—वतीं वासाय वासव ॥ ४५ ॥ ततः श्रीदस्य दत्ताज्ञा । हरिणा त्वं प्रदेहि तां ॥ इत्याज्ञां प्राप्य संतुष्टोऽभवद्वैश्रमणो भृशं ॥ ४६ ॥ एकं तु विष्णुवासाय । दानमन्यद्विभोर्वचः ॥ इति रत्नमयीं चक्रे । नगरीं तां सितोदरः ॥ ४७ ॥ द्वादशयोजनायामा । नवयोजनविस्तरा ॥ कृता स्वशक्तितस्तेन । शो·

म्य च ॥ जनितः प्रथमोद्धारो । यात्रापि भरतेन तु ॥ २६ ॥ इंद्रस्य पुरतः ख्यातः । स सीमंधर-
शंभुना ॥ तीर्थं शत्रुंजयो यत्र । घोरपापविनाशकः ॥ २७ ॥ अतिमुक्तोक्तविश्वासा—दतिमुक्तभ-
यः सुखैः ॥ समुद्रविजयो राजा । सुराष्ट्राराष्ट्रमापतत ॥ २८ ॥ दशभिः कुलकं ॥ श्रीशत्रुंजयती-
र्थस्य । द्वितीयं शिखरं महत् ॥ यत्रास्ति गिरिनाराख्यं । सर्वसिद्धिनिबंधनं ॥ २९ ॥ अत्युक्ता का-
मिनी युक्ता । भूयो रूपवती सती ॥ पालनं ब्रह्मचर्यस्य । यत्र तत्रातिदुष्करं ॥ ३० ॥ इतीव ज्ञा-
नवान्नेमि—र्विचार्य निजमानसे ॥ आरुरोहोज्जयंताद्रि—र्यत्र पर्वतभूषणं ॥ ३१ ॥ प्रतिश्रुतो म-
यैवायं । स्वीकृतं पालयेद्बुधः ॥ तत्रैवेतीव चक्रेऽर्हत् । त्रीणि कल्याणकानि सः ॥ ३२ ॥ उज्ज-
यंताचलात्तस्मा—त्प्रतीच्युत्तरभागके ॥ यादवा द्वादशकुल—कोट्यः स्वशिबिराण्यधुः ॥ ३३ ॥ स-
त्यभामा हरेः कांता । तत्र द्वौ सुषुवेंगजौ ॥ भानुभामरसंज्ञाकौ । भानुर्भिर्भानुभासुरौ ॥ ३४ ॥
दिवसे क्रोष्टुकिप्रोक्ते । स्नानं विधाय माधवः ॥ संप्रसादयितुं देव—मर्चयामास वारिधिं ॥ ३५ ॥
स्थित्वैकत्र पदे तत्र । पवित्रे पुरुषोत्तमः ॥ उपवासत्रयं चक्रे । न सिद्धिर्हि तपोविना ॥ ३६ ॥ अ-
धिष्ठाता समुद्रस्य । लवणाख्यस्य निर्जरः ॥ आराधितो मुकुंदेनो—पवासत्रितयेन तु ॥ ३६ ॥ तु-

वन्नायतौ नः किं । भावि प्रसद्य तद्वद ॥ १४ ॥ सोऽपि प्रोवाच युष्माकं । का चिंता तमसस्तते: ॥ द्वाविंशतितमो यत्रा—र्हन्नेमिर्नाति नानुवत् ॥ १५ ॥ एतौ मुशलिगोविंदौ । जरासंधं निहत्य च ॥ बलदेववासुदेवौ । त्रिखंडेशौ नविष्यतः ॥ १६ ॥ नरतार्धाधिपावेता—वतिख्यातार्धचक्रिणौ ॥ सुपर्ववासितद्वार—वत्यां राज्यं करिष्यतः ॥ १७ ॥ अतिमुक्तमुखादेवं । श्रुत्वा संतुष्टमानसः ॥ विससर्ज मुनिं नत्वा । श्रीनेमिनगवत्पिता ॥ १८ ॥ सर्वेष्वपि नरतेषु । सर्वेष्वैरवतेषु च ॥ तुल्यत्वेऽपि विशिष्टं य—त्तीर्थशत्रुंजयस्थितेः ॥ १९ ॥ नरतेऽत्रापि षट्खंमा । वैताढ्यखंडितास्त्रयः ॥ तत्रापि बहवो देशा । आर्यानार्यप्रनेदतः ॥ २० ॥ जननेन जिनानां च । ते सार्धपंचविंशतिः ॥ आर्याः स्युरपरेऽनार्या—स्तद्विपरीतलक्षणाः ॥ २१ ॥ आर्यदेशेऽप्यतीवार्यः । सुराष्ट्रादेश उत्तमः ॥ न दुर्भिक्षादिदुःखानि । यत्र लोकः सुखी सदा ॥ २२ ॥ अयोध्यानगरीतश्च । यत्रैव समवासरत ॥ नवनवतिपूर्वाणि । वृषनः प्रथमः प्रनुः ॥ २३ ॥ सर्वज्ञाः समवासार्षु—स्त्रयोविंशतिरादरात ॥ यत्र तीर्थे च धर्मस्य । वृद्धये नेमिनं विना ॥ २४ ॥ अनंताः पुंमरीकाद्याः । साधवः सममानसाः ॥ यत्र सिद्धिपदं प्रापु—स्तिर्यंचोऽपि दिवं गताः ॥ २५ ॥ सचतुर्विंशतावस्यां । यन्माहात्म्यं निश-

खे । स्यान्महानपि कातरः ॥ १ ॥ एकस्य जायते दुःख—मन्यस्य परमं सुखं ॥ अदृष्टानां हि वै-
चित्र्यात् । संसारस्थितिरीदृशी ॥ २ ॥ इति कर्तुं समीचीनं । कालस्य परिपंथिनः ॥ ननंदुर्मरणं
श्रुत्वा । समुद्रविजयादिकाः ॥ ३ ॥ प्रशशंसुस्तदा केऽपि । महाभाग्यौ बलाच्युतौ ॥ समुद्रविजयं
केऽपि । केऽपि नैमित्तिकं पुनः ॥ ४ ॥ केऽपि श्रीजिननाथार्चा । प्रकुर्वते विशेषतः ॥ एकशो
विघ्नविध्वंसे । केऽपि दानं ददुर्मुदा ॥ ५ ॥ जगुः केचन गीतानि । ननृतुः केचनाद्भुतं ॥ अवा-
दयंश्च निःस्वाना-दिकवाद्यानि हर्षतः ॥ ६ ॥ ज्ञानीव सत्यवादी त्वं । क्रोष्टुकिं संस्तुवन्निति ॥ कृ-
तज्ञोऽपूजयत्प्रोच्चैः । समुद्रविजयोऽध्वनि ॥ ७ ॥ निमित्तं सत्यतायुक्तं । यद्यस्माकमसावदात ॥ त-
दास्यातिधनं दत्वा । नैस्व्यं न्यक्क्रियतेंजसा ॥ ८ ॥ इत्यालोच्य ततः सर्वै—र्वसुदेवादिभिर्नृपैः ॥
स स्वर्णरूप्यमाणिक्या-दिकदानेन पूरितः ॥ १० ॥ मार्गेऽथ गच्छतां तेषा—मेकत्र तस्थुषां पदे ॥
अतिमुक्तश्चारणर्षि—रागतोऽनभ्रवृष्टिवत् ॥ ११ ॥ अभ्युत्थानादिसत्कारैः । समुद्रविजयादिभिः ॥
यादवैरपि निःशेषैः । पूजितस्तोषितस्तथा ॥ १२ ॥ स्वस्थीभूतोऽतिसंतुष्ट—स्तेषामादरयोगतः ॥
क्षणमेकं स्थितस्तत्र । स्यादादरोऽजरामरः ॥ १३ ॥ समुद्रविजयेशेन । तदा पृष्टो मुनीश्वरः ॥ भग-

चेदभूत ॥ जीविष्यति तदा कोऽत्र । पुरुषो वसुधातले ॥ ९० ॥ शोचंते संस्मरंतश्च । कालस्यापि
गुणानथ ॥ मंत्रिणो नृभुजश्चापि । पवनाद्याश्च सोदराः ॥ ९१ ॥
अथोदिते सहस्रांशौ । प्राचीमंडलमंडने ॥ न चितां न गिरिं चापि । ददृशुस्ते चमत्कृताः ॥
॥ ९२ ॥ देवतारचितं सर्व—मिंद्रजालमिवाभितः ॥ सर्वेऽप्येदंत कालस्य । किंतु सत्यतया मृतिं
॥ ९३ ॥ सततं देवता भाग्यात । सांनिध्यं कुरुते ययोः ॥ रामकृष्णौ सपुण्यौ तौ । हंतव्यौ क-
थमात्मभिः ॥ ९४ ॥ तयोरेव वृषेणेति । देवताभिर्विकुर्व्य च ॥ अकालेऽपि बली कालो । मारि-
तः शौर्यभागपि ॥ ९५ ॥ स्वामिनो यादवा दूर—मगमन्नात्मवैरिणः ॥ इत्येत्य कथयामासु—स्तेभ्यः
स्वगूढपूरुषाः ॥ ९६ ॥ तद्गत्वाग्रे किमस्माभिः । कालं विना करिष्यते ॥ इत्यालोच्य निवृत्तास्ते ।
पवनादिकनृभूतः ॥ ९७ ॥ जरासंधाय ते चेत्य । यावत्कालमृतिं जगुः ॥ पुत्रमृतिश्रुतेस्ताव—न्मू-
र्छया सोऽपतद्भुवि ॥ ९८ ॥ प्रभूतैरुपचारैः स । लब्धसंज्ञोऽभवद्यदा ॥ व्यलपत्कालकालेति । कं-
सकंसेति च स्मरन् ॥ ९९ ॥ जामातुरेव चैकस्य । दुःखमासीत्पुरा मम ॥ पुत्रस्य मरणात्तत्तु ।
द्विगुणं प्रत्युताभवत ॥ १०० ॥ स्वयं रुदन् परानप्या—रोदयन् स विलापतः ॥ समेते हि महादुः-

॥ ७८ ॥ विलपंती गदित्वेत्या—क्रंदंती तत्र शोकतः ॥ मामाशब्दैर्निषिद्धापि । काले पश्यति सा विशत ॥ ७९ ॥ वर्धमानमहाज्वाला—व्याजेनेव स्वपाणिभिः ॥ आकारयति तं काल—मातिथ्याय चिता द्रुतं ॥ ८० ॥ अथोचे बांधवान् कालो । मदागमनजीतितः ॥ गेहेनार्दिन एतेऽगु—र्नंष्ट्वा शिखिनि यादवाः ॥ ८१ ॥ आत्मनो भगिनीभर्तु—र्घातकौ राममाधवौ ॥ कृष्ट्वा यदूंश्च चित्याया । हत्यायास्यामि वोंतिके ॥ ८२ ॥ पूर्वं मयैव तातानां । पुरस्तादिति संश्रुतं ॥ अतोऽहमेव मद्वाचा । प्रवेक्ष्यामि हुताशने ॥ ८३ ॥ विनयात्पवनोऽवादी—ज्ज्ञातः कृत्यं तवात्र किं ॥ आनयिष्याम्यहं वह्ने—र्धृत्वा केशेषु यादवान् ॥ ८४ ॥ उवाच सहदेवोऽपि । कृत्यमेतत्तवापि न ॥ अहमेव प्रविश्याशा—वानयिष्यामि तान् द्रुतं ॥ ८५ ॥ तथा परेऽपि सोदर्याः । सर्वेऽपि वसुधाधवाः ॥ मंत्रिणोऽपि च कालं तं । कथयामासुरुच्चकैः ॥ ८६ ॥ कालस्तथाप्यमर्षेण । वार्यमाणोऽपि बांधवैः ॥ प्रविवेशानले तूर्णं । विचारं च विना मृतः ॥ ८७ ॥ तादृशं देवताकृत्यं । मृत्युत्पत्तिश्च तादृशी ॥ यादृशं चाशुभं कर्म । शरीरिणां हि संभवेत ॥ ८८ ॥ देशांतरे सहस्रांशौ । गते चास्ताचले क्रमात् ॥ शर्वर्यामुषितास्तस्यां । तत्रैव पवनादयः ॥ ८९ ॥ परेषां मारकः कालो । मृतिस्तस्यापि

यादवान् यदि ॥ समागच्छामि ते पार्श्वे । तदाहं स्यां न चान्यथा ॥ ६७ ॥ प्रतिज्ञामिति कृत्वा स
। पितृदत्तबलेन च ॥ पंचशत्या महीशानां । समं तीव्रमदोत्कटः ॥ ६० ॥ बंधुना पवनेनापि । स-
हदेवेन चान्वितः ॥ भवत्स्वंशकुनेषूच्चैः । कालश्चाल कालवत् ॥ ६ए ॥ जरासंधभयत्रस्ता । न-
ष्टाः सर्वेऽपि यादवाः ॥ मार्गे प्रचलतानेन । श्रुतमेवं जनोक्तितः ॥ ७० ॥ तेषामनुपदं गच्छन् । शु-
द्धिं लब्धुं ततो द्रुतं ॥ यादवादित्सया प्राप्तो । विंध्यगिरेरुपत्यकां ॥ ७१ ॥ अतिवेगेन तत्पृष्टे ।
समायांतमनंतरं ॥ कालं कालमिवाज्ञासू । रामकृष्णेष्टदेवताः ॥ ७२ ॥ दुष्टोऽसौ मावधीदेतान् । य-
दून् भाविमहोदयान् ॥ ताभिरित्याशु चक्रेऽद्रि—रेकद्वारश्चितोपमः ॥ ७३ ॥ यदुसेना च सर्वात्र ।
वह्निना भस्मसादभूत् ॥ रुदतीं ताश्चितापार्श्वे । वशामेकां व्यकुर्वत ॥ ७४ ॥ तदा तदंतिके कालः
। समायातो बलेन तां ॥ अप्राक्षीत्किमिदं भद्रे । रोदिषि त्वं कथं पुनः ॥ ७५ ॥ सोवाच मायया-
ब्रुवन् । यादवा मम बांधवाः ॥ कुमारास्तरुणा वृद्धा । मत्प्राणतोऽपि वल्लभाः ॥ ७६ ॥ जरासंधसुतं
काल—मागच्छंतं च पृष्ठतः ॥ आकर्ण्य तेऽत्र सर्वेऽपि । ज्वलिता मारणद्रुताः ॥ ७७ ॥ एकाकि-
न्यत्र किं स्थित्वा । प्रकरिष्यामि तान् विना ॥ अतोऽहमपि वक्ष्यामि । दुःखिन्यत्र चितामले ॥

ध्याचलं मार्गे । चेद्गुः सर्वेऽपि यादवाः ॥ ५५ ॥ सोमकोऽथ जरासंध—पार्श्वे गत्वा प्रकोपतः ॥ वृत्तांतं कथयामास । निःशेषमपि मूलतः ॥ ५६ ॥ समुद्रविजयोपांते । गतः स्वामिंस्त्वदाज्ञया ॥ घूत्कारिषु प्रवृत्तेषु । तत्र घूक इवाभवं ॥ ५७ ॥ एतावंतमहं कालं । जानन्नासं नरेश्वर ॥ त्वं त्रिखंडाधिपस्तत्र । त्वदाज्ञा वर्त्तिते च ॥ ५८ ॥ समुद्रविजयाभ्यर्णे । प्रेषितस्त्वदरं कृतं ॥ त्वदाज्ञापालनभ्रांति—र्निवृत्ता मम मानसात ॥ ५९ ॥ स्वल्पराजधरा एते । समुद्रविजयादयः ॥ न तेऽपि पालयंत्याज्ञां । पालयिष्यंति के तदा ॥ ६० ॥ क्रोधाग्निर्वर्धमानश्च । कुरुते विकृतित्रयं ॥ आत्मतापं परतापं । प्रेत्यहानिं स्वरूपतः ॥ ६१ ॥ इतीव वचनं सत्यं । विधातुं सोमकोऽकरोत ॥ जरासंधं महाकोपं । तद्वृत्तांतनिवेदनात ॥ ६२ ॥ निष्कासनं मदाज्ञातः । किमेषां कारयाम्यहं ॥ किं चक्ररत्नहोमार्थं । यद्वाग्नौ भस्मसादमून् ॥ ६३ ॥ खंडं खंडं प्रकुर्वे किं । यादवान् सकलानपि ॥ गृहीत्वा यदिवात्मीय—हस्ताभ्यां मर्दयामि किं ॥ ६४ ॥ सोमकोदितवृत्तांत—श्रवणान्मगधेश्वरं ॥ विकल्पानिति कुर्वंतं । दृष्ट्वा कालः सुतोऽभ्यधात ॥ ६५ ॥ वराका यादवाः केऽमी । तात तन्मे समादिश ॥ नभोनृलोकपाताला—नलेभ्यः कर्षयामि तान् ॥६६॥ आनयामि ततः कृष्ट्वा । सकलान्

श्चिद्वदति नष्टा क्व । गमिष्यामो वयं भयात ॥ ४४ ॥
इत्यालापे मिथः सर्वैः । क्रियमाणे सहोदरैः ॥ समुद्रविजयोऽवादीत । पृच्छ्यते क्रोष्टुकिः पु-
रा ॥ ४५ ॥ साधु साधु तदा सर्वे—ऽप्यवादिषुः सहोदराः ॥ पृच्छ्यतां द्रुतमाकार्य । क्रोष्टुकिः स
निमित्तवित ॥ ४६ ॥ सकलैरेवमालोच्या—कारितः क्रोष्टुकिस्तदा ॥ पृष्टो भावि किमस्माकं । हि-
ताहितमतः परं ॥ ४७ ॥ सोऽवादीत्सर्वथा यूयं । चिंतां माकार्ष्ट मानसे ॥ एताभ्यां रामकृष्णाभ्यां
। युष्माकमुदयो महान् ॥ ४८ ॥ प्रतिविष्णुं जरासंधं । हत्वा तच्चक्रशक्तितः ॥ तद्राज्यभोगिनौ रा-
म—कृष्णावेतौ भविष्यतः ॥ ४९ ॥ प्रतिविष्णुविघाताय । धृतावतारिकाविमौ ॥ क्ष्मावीरौ रामकृ-
ष्णौ स्त—स्त्रिखंडैश्वर्यधारिणौ ॥ ५० ॥ पश्चिमांबुनिधेस्तीरं । यूयं गच्छत गच्छत ॥ तत्र शत्रुक्षयो
भावी । युष्माकं च महोदयः ॥ ५१ ॥ गच्छतां यत्र युष्माकं । सत्यभामा सुतद्वयं ॥ जनयेत्तत्र सं-
स्थेयं । वासयित्वा पुरीं मुदा ॥ ५२ ॥ प्रमाणीकृत्य तद्वाचं । समुद्रविजयस्ततः ॥ अत्याक्षीन्मथुरा-
मेका—दशभिः कुलकोटिभिः ॥ ५३ ॥ द्राक्शौर्यपुरमागत्य । ततोऽप्यादाय सप्त च ॥ कुलकोटीः
समुद्रांतं । समुद्रविजयो गतः ॥ ५४ ॥ उग्रसेनोऽपि सार्थेऽगा—त्समुद्रविजयेशितुः ॥ अंतर्विं-

॥ ३२ ॥ सोमकोदितमाकर्ण्य । वचनं कोपसूचकं ॥ अनाधृष्णिरमर्षेण । तमूचे विकलोऽसि किं
॥ ३३ ॥ एकवारं निषिद्धोऽपि । श्रीतातेन सुधागिरा ॥ रामकृष्णावधीक्षणं रे । रंकवद्याचसे कथं
॥ ३४ ॥ पक्षपातविधातार—स्तस्य सर्वेऽपि बांधवाः ॥ अक्रूराद्यास्ततोऽजल्पं—स्तंप्रति चारुणेक्षणाः
॥ ३५ ॥ यथा जामातृघातेन । त्वत्स्वामी खेदवानभूत् ॥ तथा किं न वयं खिन्ना । अस्मतषट्बंधु-
घाततः ॥ ३६ ॥ अनेहसमियंतं तु । जरासंधपराभवः ॥ सोढोऽस्माभिः सहिष्यामो । नातःपरं म-
नागपि ॥ ३७ ॥ याहि याहि मुखं लात्वा । त्वं कुशलेन सोमक ॥ ब्रूहि ब्रूहि समाचार—मस्म-
दीयं विशेषतः ॥ ३८ ॥ रुषानाधृष्णिनेति द्राक् । तर्जितः सोमकोऽचलत ॥ समुद्रविजयेनाप्य—
पमानितो निजं पुरं ॥ ३९ ॥ मेलयित्वा द्वितीयस्मिन् । वासरे स सहोदरान् ॥ समुद्रविजयोऽप्रा-
क्षीत् । किं कर्तव्यमथात्मभिः ॥ ४० ॥ स्वस्वबुध्या विचारो यः । समुत्पद्येत सुंदरः ॥ कथनीयः
समस्तोऽप्या—यतिसाधुर्विचार्य मे ॥ ४१ ॥ कश्चिद्वक्ति जरासंधः । कियन्मात्रः प्रवर्तते ॥ न वा-
च्यमिति कश्चिच्च । त्रिखंडाधिपतिः स तु ॥ ४२ ॥ कश्चिद्वक्ति सहैतेन । मरिष्यंति युयुत्सवः ॥ क-
श्चिद्वदति नानेन । संग्रामेण प्रपूर्यते ॥ ४३ ॥ कश्चिद्ब्रवीति नश्यामो । जीवरक्षाकृतेऽधुना ॥ क-

कुरुत सत्वरं ॥ २१ ॥ हिमवद्दीपकत्वेन । वह्नेः शीतत्वसाधकाः ॥ अनुमातुं यथाशक्ती—र्धरेत्प्रामा-
णिकाग्रणीः ॥ २२ ॥ धृत्वा सहानुमानेन । संमतेन मनीषिणां ॥ निर्भर्त्सयेद्यथा चाशु । तमङ्गं
स विचक्षणः ॥ २३ ॥ युग्मं ॥ सोमकस्य तथा वाचः । श्रावं श्रावं जनार्दनः ॥ तं तु निर्भर्त्सया-
मास । कुमारोऽपि स्वशक्तितः ॥ २४ ॥ अवध्यो दूतकर्मत्वा—त्पुरस्तान्मम गच्छतात् ॥ रे किं प्रा-
प्तोऽस्त्यस्त्वं । जरासंधात्तवेशितुः ॥ २५ ॥ वयं तु सुकुमाराः स्मः । कुमारा वर्धमानत्वाः ॥ खाद-
न्न खादन्न जरासंधो । जरासंधिमवाप्तवान् ॥ २६ ॥ तं प्रेषयामि चेत्कर्तुं । स्वजामातुः सहायतां ॥
सत्या दैत्यारिरित्याख्या । षष्ठीतत्पुरुषा तदा ॥ २७ ॥ सा मे षष्ठीबहुव्रीहि—समासे संस्थितान्यथा ॥
ज्ञेया त्वया निजाधीशां—बुजसोमक सोमक ॥ २८ ॥ आकर्ण्य वचनान्येवं । विष्णुवक्रोचितानि
च ॥ समुद्रविजयं प्राह । कोपाटोपेन सोमकः ॥ २९ ॥ समुद्रविजया यूयं । वंशरक्षणतत्पराः ॥
युष्मद्वंशे परं विष्णु—र्विषवल्लिरिवास्त्ययं ॥ ३० ॥ यूयं जीवत विद्वांसः । सदायतिसुखैषिणः ॥
शीघ्रं युष्मान्निरुन्धेद्यो । बाल्यादपि शिशुस्त्वसौ ॥ ३१ ॥ जीवन्नलाद् द्वादशभिश्च हायनै । रामोऽ-
पि राज्यं च नलोऽपि नृपतिः ॥ जीवन्महानंदपदं च साधये—ज्जीवन्न पुमान्न पश्यति मंगलावलीः

कदापि वधहेतवे ॥ १० ॥ दूषणं च तवैवात्र । जरासंधस्य भूभुजः ॥ विनाशकालसंसूचि । विपरी
तमतिस्थितेः ॥ ११ ॥ एतावन्मात्रमप्यंतः । स च वेत्ति न दर्पतः ॥ एतयो रामविष्णवोः किं । स्व-
जामातृकृते वधः ॥ १२ ॥ सोमकस्तद्वचः श्रुत्वा । समुद्रविजयं जगौ ॥ मा वदिष्ट गिरो यूयं । स-
र्वथेत्यविचारिताः ॥ १३ ॥ सेव्यसेवकभावः स्या—द्यत्र राजन् परस्परं ॥ आज्ञाया एव तत्रास्ति ।
प्रामाण्यं केवलं नृणां ॥ १४ ॥ जनकांगजयोर्घाते । जंपत्योरनुरक्तयोः ॥ यथा बंधुमतीसिद्ध—
मित्रयोर्न विचारणा ॥ १५ ॥ षण्णामपि तु गर्भाणां । ततो जातो यथा वधः ॥ द्वयोरप्येतयोः सो-
ऽस्तु । तथा स्वनायकेच्छया ॥ १६ ॥

भवंतः सर्वतोछिन्न—जननालयसंचयाः ॥ एताभ्यां हि भविष्यंति । यादवाः सकला अपि ॥
॥ १७ ॥ केन सूत्रकृते हार—स्त्रोट्यते बुद्धिशालिना ॥ भूयो बंभज्यते केन । प्रासादः कीलिका-
कृते ॥ १८ ॥ जीवितार्थी पुमान् को नु । व्यालवक्त्रे करौ क्षिपेत् ॥ को वा केसरिणं सुप्त—मुत्था-
पयेत्क्षुधान्वितं ॥ १९ ॥ बलिष्टेन समं मानो—त्कर्षस्तस्य हि मत्सरं ॥ जनयेत्तेन तन्नूनं । शुभा
य जायते न हि ॥ २० ॥ ततोऽहमुपकाराय । युष्माकं कथयाम्यलं ॥ जरासंधत्रिखंडेश—वाक्यं

॥ ९८ ॥ अथ यूयं मदादेश—पालकाः सेवका वराः ॥ सुखेन निजसाम्राज्यं । ततः पालयता-
निशं ॥ ९९ ॥ स्वकवंशमहाकक्षे । बृहद्भानुसमीरणौ ॥ किंत्वेतौ हलिगोविंदौ । मा वर्धयत सर्व-
था ॥ ४०० ॥ देवक्याः सप्तमो गर्भः । कृष्णो यः कथ्यते जनैः ॥ स तु प्रागेव कंसेन । वसुदे-
वाद्धि मार्गितः ॥ १ ॥ ततो द्वावपि मत्पार्श्वे । प्रहेयावविलंबतः ॥ रामकृष्णौ भवंतस्तु । राज्यं पां-
तु यदृच्छया ॥ २ ॥ गोविंदगोपनाद्रामः । कंसघाताच्च केशवः ॥ दीयतां मम गृह्णामि । यथा वैरं
तदंतिकात् ॥ ३ ॥ जरासंधनृपोऽस्माकं । स्वाम्याज्ञापयतीति च ॥ सोमकोक्तवचः श्रुत्वा । समुद्रवि-
जयो जगौ ॥ ४ ॥ आर्जवाद्वसुदेवेन । गर्भाः षडपि वाचया ॥ दत्ताः कंसस्य तन्नूनं । न न्याय्यं
प्रविनिर्मितं ॥ ५ ॥ कंसेन निहता गर्भाः । षट् जाताः कृष्णबांधवाः ॥ तद्वैरेण हतः कंसो । ना-
त्र दोषो हरेर्मनाक् ॥ ६ ॥ प्रद्योतिपुष्पदंताभ्यां । यदुवंशघनाश्रयः ॥ बालाभ्यां हलिजिष्णुभ्या—
माभ्यां शोभेऽहमुच्चकैः ॥ ७ ॥ यद्भविष्यत्प्रजातं त—दज्ञातं पूर्वमेव तु ॥ दीयेते नु कथं राम—
कृष्णौ तौ जीवता मया ॥ ८ ॥ मनुष्यैर्गालिदानेन । यदि गालिः प्रदीयते ॥ किं षण्णामपि बंधू-
नां । वधाद्वैरं न गृह्यते ॥ ९ ॥ सर्वथैव ततो राम—कृष्णयोर्नात्र दूषणं ॥ दानमप्येतयोर्नास्ति ।

मूले । ज्वालिते हि फलोद्भवः ॥ ८७ ॥ जरासंधोऽन्यथा[illegible] [illegible]स्ततः परं ॥ रोदयिष्या
म्यहं तेऽरि-स्त्रीरुद्वेद्य ससंततीः ॥ ८८ ॥ करिष्यामि यदा पुत्रि । यादवान् भस्मसादहं ॥ अथवा
समुद्रमर्यादि—देशत्यागविधायिनः ॥ ८९ ॥ सत्यसंधो जरासंधो । ज्ञेयस्तदा त्रिखंडराट् ॥ अ-
न्यथा दुर्जराग्रस्त—संधोऽहं तु विचक्षणे ॥ ९० ॥ युग्मं ॥ सबालस्त्रीविघातादे—र्न स्याच्चेत्पापि-
नी मतिः ॥ प्रतिविष्णोः कथं तर्हि । नरकस्य गतिर्भवेत ॥ ९१ ॥ इतीव चित्तवाक्कायैः । कृत्वा
त्रिधापि तुल्यतां ॥ जरासंधोऽब्रवीदंत-काले ज्ञापयितुं गतिं ॥ ९२ ॥ नाम्नाथ सोमको नृपो । ज-
रासंधमहीभृता ॥ समुद्रविजयाभ्यर्णे । प्रैष्यत त्वरितं रुषा ॥ ९३ ॥ मथुरापुरि गत्वा त्वा-त्समुद्र-
विजयेशितुः ॥ कथनीयं त्वया सम्य—क्सामदामादिभेदतः ॥ ९४ ॥ सोमकः स्वपतेः शिक्षा—
मादाय चलितस्ततः ॥ मथुरायां समेत्योचे । समुद्रविजयं नृपं ॥ ९५ ॥ समुद्रविजयाधीशाः । स-
मुद्रविजयाश्रिताः ॥ युष्मान् वदति नः स्वामी । जरासंधो नराधिपः ॥ ९६ ॥ मदीया प्राणतोऽपी-
ष्टा । जीवयशाः सुता मता ॥ तस्याः शस्याकृतेः कंसं । पतिं कोऽपि न बुद्धवान् ॥ ९७ ॥ शिशु-
भ्यां सीरिशार्ङ्गिभ्या—मव्यक्ताभ्यां भुजौजसा ॥ सर्वेषु वीक्षमाणेषु । कंसो योधोऽपि यद्धतः ॥

त्रिखंमन्नरतेशस्य । जरासंधस्य तेजसा ॥ ह्यहंकारतो जीव—यशास्तु प्रददौ न तान् ॥ ७६ ॥
गोपालहलिविष्णुभ्यां । समं तान् यादवानपि ॥ प्रथमं जस्मसात्कृत्वा । पश्चाद्दास्ये जलांजलिं ॥
॥ ७७ ॥ वदंतीति स्ववक्रेण । रुदती विरहातुरा ॥ प्रवेदयाम्यन्यथा वह्नौ । प्रतिज्ञामिति सा दधौ
॥ ७८ ॥ प्रतिज्ञाय जरासंध—वप्तू राज्यं प्रकुर्वतः ॥ प्राप्ता राजगृहडंगे । सा त्रिविष्टपसन्निभे ॥
॥ ७९ ॥ अथो स केशवादेशात । समुद्रविजयाधिपः ॥ उग्रसेनं नृपत्वेना—स्थापयन्मथुरापुरि ॥
॥ ८० ॥ उग्रसेनार्पिता सत्य—भामा यौवनसंयुता ॥ उपयेमे मुकुंदेन । क्रोष्टुकिदत्तवासरे ॥
॥ ८१ ॥ इतो जीवयशाः सापि । क्रमेण रुदती भृशं ॥ विकीर्णचिकुरायाता । जरासंधस्य सन्नि-
धौ ॥ ८२ ॥ मुषिता मुषिता तात । जाताहं दुःखिता क्षितौ ॥ मत्पतिर्मारितो राम—कृष्णाभ्या-
मभिमानतः ॥ ८३ ॥ सशल्य इव तद्वाक्या—ज्जरासंधनृपो जगौ ॥ पुत्रिके भवतात्स्वस्था । वद
वृत्तांतमादितः ॥ ८४ ॥ किं जातं मारितः केन । कारणेन पतिस्तव ॥ पित्रा पृष्टातिमुक्तोक्तं । वृ-
त्तांतं सादितोऽवदत् ॥ ८५ ॥ श्रुत्वा पुत्र्युदितां वार्ता । जरासंधोऽप्यवीवदत ॥ कंसेन षट् हता ग-
र्भा—स्तद्भव्यं न मनाक्कृतं ॥ ८६ ॥ एकस्यामेव देवक्यां । हतायां सुतसंभवः ॥ नाभविष्यत्तरो-

पप्रछे सोदरैरेवं । वसुदेवाय धीमते ॥ ६४ ॥ पृष्टेन बांधवैः सर्वै—र्वसुदेवेन चोच्यत ॥ सर्वोऽपि
विष्णुवृत्तांतो—ऽतिमुक्तेन निवेदितः ॥ ६५ ॥ विष्णुव्यतिकरं श्रुत्वा । समुद्रविजयेशिता ॥ संस्थाप्य
कृष्णमुत्संगे । रामं शशंस पालनात ॥ ६६ ॥ समेत्य देवकी पुत्र्या । तत्रैकनासया समं ॥ यदु-
भिर्भ्रियमाणं चा—दायालिलिंग माधवं ॥ ६७ ॥ अवदन् वसुदेवं च । यादवाः साश्रुलोचनाः ॥
स्वामिन्नेकाकिना योगे—ऽप्यजेयोऽसि जगज्जयी ॥ ६८ ॥ ततः कंसेन दुष्टेन । जातमात्रान् स्व·
बालकान् ॥ कथं त्वं मार्यमाणांस्तान् । ज्ञात्वोपेक्षितवानसि ॥ ६९ ॥ अवादीद्वसुदेवोऽप्या—ज-
ननं सुनृतं व्रतं ॥ अपालि मयका तेन । नात्र दुष्टं च किंचन ॥ ७० ॥ देवकीवचसा कृष्णः ।
पालितो नंदगोकुले ॥ ततो लात्वा कुमारीयं । देवक्या अर्पिता मया ॥ ७१ ॥ सप्तमस्तनयागर्भ—
स्तेनावगणितः खलु ॥ कंसोछेदितनासा या । सास्त्येषा नंदनंदिनी ॥ ७२ ॥ बांधवान् यादवांश्चा·
था—नुज्ञाप्य निखिलानपि ॥ वसुदेवयुतः कृष्णो । निजावासं ययौ मुदा ॥ ७३ ॥ कंसस्य जन·
नी पत्न्यो । बांधवाः स्वजना अपि ॥ कंसव्यापत्तिकृत्यानि । चक्रिरे यमुनाजले ॥ ७४ ॥ सशो·
कास्ते ततः सर्वे । साश्रुनेत्रा नदीजले ॥ ददुस्तस्मै तदा लोक—व्यवहाराज्जलांजलीन् ॥ ७५ ॥

इतश्चाणूरमल्लंव । मुष्टिकं प्रापिता मृतिः ॥ विनिश्चित्यात्मनो जर्तु—रपि तां पार्श्ववर्तिनीं ॥
॥ ५३ ॥ स्वकीयकायरक्षार्थं । ये च कंसेन रक्षिताः ॥ सुजटा ब्रबितास्तेऽपि । कोपादिव सहेत-
यः ॥ ५४ ॥ युग्मं ॥ आगच्छेयुर्हरिं हंतुं । यावत्त तावदुच्चकैः ॥ रामस्तान् हक्कयामास । दोर्यष्ट्या
कुर्कुरानिव ॥ ५५ ॥ समुच्छेद्यत एवाशु । वैरी व्याधिरिवेति हि ॥ न्यस्य कंठे क्रमौ कंसं । श्रीपु-
रुषोत्तमोऽप्यहन् ॥ ५६ ॥ ततः पुरा जरासंध—मुक्ताश्चारभटा हठात् ॥ कंसस्य घातिविद्वेषा—त्स-
ज्जीभूताः सितासयः ॥ ५७ ॥ वर्मादिपरिधानेन । सज्जितो वीक्ष्य तान् भटान् ॥ समुद्रविजयादी-
शाः । प्रसस्रू रविरश्मिवत् ॥ ५८ ॥ तेषामायुधवृंदानां । प्रजाभिः परितो भटाः ॥ नष्टा घूका इ-
वादित्य—तेजोभिर्विवराण्यगुः ॥ ५९ ॥ ततोऽनाधृष्णिरारोप्य । हलिविष्णू स्वके रथे ॥ अनय-
द्वसुदेवौकः । समुद्रविजयाज्ञया ॥ ६० ॥ इतश्च तं समागत्य । तत्र विश्वेऽपि यादवाः ॥ मिलिताः
कलिसंभ्रांता । मिथः प्रश्नविधित्सया ॥ ६१ ॥ आबाल्यादपि गांभीर्य—शौर्यधैर्यादिकैर्गुणैः ॥ यु-
क्तोऽपि श्रीपतिः पुत्रो । मया बाल्ये न खेलितः ॥ ६२ ॥ इत्यर्धविष्टरे रामं । समारोप्यांकमच्युतं
॥ उत्तमांगे चुचुंबाश्रु—पातैरानकदुंदुभिः ॥ ६३ ॥ अज्ञातपूर्वमेतत् कि—मकस्माज्जातमुत्कटं ॥

रे कंस रे दुराचार । बालहत्यापरायण ॥ तवैवास्ति रसो भूयान् । मल्लयुद्धविलोकने ॥ ४२ ॥ प्रे
षयामि ततोऽहं त्वा—मेव तद्युद्धमीक्षितुं ॥ यद्यस्य पुरस्त्वं मे—ऽघातयिष्यस्तदा निजान् ॥ ४३ ॥
इत्युदित्वा महामंच—स्थितं कंसं च विप्रियं ॥ उत्प्लुत्य सद्यस्तं कृष्णः । केशाचौरमिवाग्रहीत् ॥
॥ ४४ ॥ तदा तस्य भयेनेव । बालहत्यापराधतः ॥ अस्खलन्मुकुटो देहा—दन्यान्याभरणान्यपि
॥ ४५ ॥ नवीनान्यपि वासांसि । श्रोत्रादीनींद्रियाण्यपि ॥ तथा तनुस्थजीवोऽपि । कंसः शवमिवा-
भवत ॥ ४६ ॥ युग्मं ॥ खट्वायां रक्षतेऽन्योऽपि । न मर्त्यो मृत्यवनेहसि ॥ इतीव श्रीपतिः कंसं
। मंचाद्भूम्यामपातयत् ॥ ४७ ॥ स्मार्यंते पुण्यपापानि । तस्मिन्नवसरे नृणां ॥ इतीव बालहत्यादि
। तस्यास्मारयदच्युतः ॥ ४८ ॥ मृतस्येव कचांस्तस्य । गृहीत्वा हरिरब्रवीत ॥ बालहत्या त्वयात्मीय
—जीवरक्षाकृते कृता ॥ ४९ ॥ स्याज्जीवरक्षयान्यस्य । जीवरक्षात्मनः किल ॥ घातेन घात एव
स्या—न्न ज्ञातं कंस रे त्वया ॥ ५० ॥ जिजीविषुरधर्मेण । त्वं प्रभूतमनेहसं ॥ नरकादौ तदेदा-
नीं । गत्वा जीव यदृच्छया ॥ ५१ ॥ बंधेन यौत्रिकेणाथ । नियंत्र्य मल्लमुष्टिकं ॥ चाणूरावित्यहीक-
तुं—मिवाहन्मुशली द्रुतं ॥ ५२ ॥

धावमानं समीक्ष्य तं ॥ जघान च महाध्वानं । पृष्टे मुष्ट्या शिलात्यया ॥ ३० ॥ पततं तेन घाते-
न । मल्लं चाणूरनामकं ॥ विष्णुराश्वास्य हर्षेण । युद्धायाकारयत्पुनः ॥ ३१ ॥ नूयात्प्राणक्षयो मा-
म—कीनो मेति सविस्मयं ॥ विदन्नेष विनिन्नांग—शल्य इवोत्थितो मदात् ॥ ३२ ॥ गोदोहभांड-
वद्भीर्ष । क्षिप्त्वा जानुविचालके ॥ युध्यमानो हरिश्चक्रे । मुखोद्भरुधिरश्रवं ॥ ३३ ॥ शरीरे रुधिरं
सारं । निर्गच्छेद्यदि तन्मुखात् ॥ तत्कथं स्थीयतेऽस्माभिः । प्राणैरपीति निर्गतं ॥ ३४ ॥ चाणूरं मृत-
मालोक्य । प्रकर्तुं तत्सहायतां ॥ कोपाटोपारुणः कंस । इत्यादिशत्स्वसेवकान् ॥ ३५ ॥ अकार्यका-
रिणौ दुष्टौ । चाणूरमल्लघातिनौ ॥ हन्येतां रामगोविंदौ । युष्माभिश्च दृढायुधैः ॥ ३६ ॥ ये नैतौ
वर्धितौ दुग्ध—पानेनेव नुजंगमौ ॥ तं नंदमपि हन्यास्त । यशोदायोषिदन्वितं ॥ ३७ ॥ पालितौ
लालितौ येन । कुटुंबेन च खेलितौ ॥ तत्सर्वमपि गोपाल—कुटुंबं हंत वेगतः ॥ ३८ ॥ नंदस्य
तस्य वा सर्व—सेवकानां धनादिकं ॥ गृहीत्वा नस्मसात्कुरुत । क्रियतां मन्नियोगतः ॥ ३९ ॥ चा-
णूरेण समं युध्य—मानयो रामकृष्णयोः ॥ यथा कलां प्रपश्येयुः । सर्वेऽपि प्रेत्यजन्मनि ॥ ४० ॥
समाकर्ण्येति गोविंदो । रक्ताक्षो नीषणाकृतिः ॥ अमर्षात्तर्जयामास । कंसं सन्नाविधायकं ॥ ४१ ॥

लमवान् ॥ १७ ॥ वल्गंतौ कृष्णचाणूरौ । मिथो मुशलिमुष्टिकौ ॥ बिभ्यंत इव देवाः खे । डाक्षु
मंचस्थसंस्थिताः ॥ १८ ॥ रौहिणेयमुकुंदाभ्यां । मुष्टिचाणूरमल्लकौ ॥ वाससी रजकाभ्यां वा—कु-
ट्येतां करमुद्गरैः ॥ १९ ॥ ताभ्यामेवाहिपाशाभ—भुजैर्नियंत्र्य लीलया ॥ उत्क्षालितौ च तौ शुद्ध
—क्रीडाकंदुकवद् द्रुतं ॥ २० ॥ सर्वत्र जयिनावेव । विलोक्य राममाधवौ ॥ दुष्टस्तौ मावधीत्कंस
। इत्यत्रूशंकितो जनः ॥ २१ ॥ आद्येन वासुदेवेन । भुजिष्ठबलशालिना ॥ उदपाटि यथा कोटि-
शिलोर्ध्वं निजमस्तकात् ॥ २२ ॥ वैकुंठबलभद्राभ्यां । संयुताभ्यां पराक्रमैः ॥ तथैवोत्पाट्यमानौ
तौ । समीक्ष्य तुतुषुर्जनाः ॥ २३ ॥ युग्मं ॥ चक्रिणा चरमेणेव । बलादुत्पाट्यते यथा ॥ देवता-
धिष्ठिता सा भू—पीठादाचतुरंगुलं ॥ २४ ॥ चाणूरमुष्टिकाभ्यां तौ । तथैवोत्पाटितौ भुवः ॥ चक्रि-
त्वमिव साहस्य—मनयोर्बुबुधुर्जनाः ॥ २५ ॥ युग्मं ॥ विष्णुवक्षसि चाणूरो । दत्तवान् स्वीयमुष्टि-
कां ॥ तदा ध्यानस्थयोगीव । कृष्णोऽभून्मीलितांबकः ॥ २६ ॥ घातयैनं त्वमाभीरं । तत्तल्लोपलं-
घिना ॥ कंसेन संज्ञयाज्ञापि । चाणूरस्याभिमानिनः ॥ २७ ॥ तत्संज्ञाप्रेरितः सोऽपि । दुरात्मा
शोणितेक्षणः ॥ द्विधापि व्यालवक्रोऽभि—दधावे तं जिघांसया ॥ २८ ॥ बंधोर्जिघांसया रामो ।

मारोऽस्ति । सुकुमारसुमोरुरुक् ॥ नैतस्य युज्यते युद्धं । सहानेन दुरात्मना ॥ ६ ॥ केचिद्वदंति
सिंहस्य । पुरस्तात् किं लघोरपि ॥ प्रौढांगोऽपि द्विपः स्थातुं । प्रशक्नोति मनागपि ॥ ७ ॥ प्रेक्षणा-
य महीशेषु । सर्वेषु संस्थितेष्वपि ॥ तदेति व्याकुलः शब्दः । परस्परमजायत ॥ ८ ॥ तुमुलश्रव-
णात्कंसो । रंगभंगं विदन्नवक् ॥ केनाहूताविमौ गोपौ । गोपयःपानमेदुरौ ॥ ९ ॥ प्रोचुस्तत्सेव-
काः स्वामिन् । नृपान् विहाय गोदुहौ ॥ आकार्येते इमौ केन । स्वयमेव समागतौ ॥ १० ॥ यु-
वैतावनाहूता—वुन्मत्तौ समुपस्थितौ ॥ निषेध्येतामिमौ केन । तदा युद्ध्यात्परस्परं ॥ ११ ॥ अन-
योः कुर्वतोर्युद्धं । यस्य बाधा ततो भवेत् ॥ रक्षार्थे वपुषस्तेन । कथनीयं पुरा मम ॥ १२ ॥ कंस-
वाक्यमिति श्रुत्वा । निःशेषोऽप्यपरो जनः ॥ कृष्णाग्रे वैदतैषोऽपि । स्मित्वाब्रवीदिदं वचः ॥ १३ ॥
पीनांसो राजजोज्येन । नित्याभ्यासविधायकः ॥ चाणूरोऽस्ति महादेह—स्त्वया स्नेहेन पोषितः ॥
॥ १४ ॥ वज्रेणेव मयैवायं । लघुनापि नगाकृतिः ॥ खंड्यमानो युगंधर्याः । कणवत्संप्रतीक्ष्यतां ॥
॥ १५ ॥ कुरंग इव सिंहस्य । तस्य वाक्येन भीतिमान् ॥ समुदस्थापयत्कंसो । मुष्टिकं हस्तिसन्नि-
भं ॥ १६ ॥ विष्णोः पंचाननस्येव । द्वितीयो बंधुवत्सलः ॥ भेत्तुं कुंभस्थलं तस्य । गजाभं तं वि-

च नागरैः ॥ रामकृष्णौ समायातौ । मल्लयुद्धास्पदं तदा ॥ ९४ ॥ महामंचस्थितौ तत्र । द्वौ समु
त्ताप्य निर्जयौ ॥ उपविष्टौ स्वगोपाल—कलितौ हलिमाधवौ ॥ ९५ ॥ स्ववैरी दर्शितः कंसः । सं
ज्ञया हलिना हरेः ॥ विष्णोरुदलसद्वैरं । तं दृष्ट्वा तातघातिवत ॥ ९६ ॥ तातपादाननुज्येष्टान् ।
बंधूंश्च स्वजनादिकान् ॥ हरेर्गोपप्रवृत्तस्य । रामः स्फुटमदर्शयत ॥ ९७ ॥ अधिकामधिपेऽयोऽपि ।
धरंतौ रूपसंपदं ॥ एतौ देवकुमारौ का—वित्यशंकंत भूमिपाः ॥ ९८ ॥ युयं मल्ला नियुध्यध्व—
मिति कंसनियोगतः ॥ अनेकेऽनेकधा युद्ध—मन्योन्यं ते प्रचक्रिरे ॥ ९९ ॥ चाणूर मल्लमातंग ।
त्वं समुत्तिष्ठ सत्वरं ॥ स्वाम्यादेशमवाप्याय—मुदतिष्ठद्बलोद्धतः ॥ ३०० ॥ यः कश्चिद्वीरमानी स्या
—दमुष्यां प्रौढपर्षदि ॥ नियुध्यतां मया सार्धं । तदानेन बलीयसा ॥ १ ॥ पंचानन इवाह्वाने ।
पुवाक्षोटं धरन्निति ॥ भुजास्फोटं प्रकुर्वाण—श्चाणूर उच्चितोऽवदत ॥ २ ॥ युग्मं ॥ तद्वाक्यमक्षमी
जिष्णु—र्भुजास्फोटनपूर्वकं ॥ कंसादशंकमानश्च । सभायां योध्धुमुत्थितः ॥ ३ ॥ विष्णुना च कृते
बाहा—स्फोटे क्षोभात् त्रिधा जगत ॥ आसीत्स्वर्गनृपाताल—लोकत्रयव्यवस्थया ॥ ४ ॥ बहुशः कृत-
युद्धोऽयं । युद्धशिक्षाविचक्षणः ॥ चाणूरोऽस्ति प्रचंडांगः । क्रूरकर्मैककर्मठः ॥ ५ ॥ अयं तु सुकु-

व सेवकः ॥ ८४ ॥ यद्यहं सेवकीकृत्य । कंसेन परिचिंतितः ॥ तद्विष्णुं तद्द्विषं हन्मी—त्यधावत्तं
सरीसृपः ॥ ८५ युग्मं ॥ फणास्थितमणिश्रेणि—प्रद्योताद् द्योतयन् दिशः ॥ गृहीत्वा नासिकायां
स । नस्तितो नरकारिणा ॥ ८६ ॥ तत्पृष्टोपरि चारुह्य । विध्वस्तसाध्वसेन सः ॥ विष्णुना यमुना-
नीरे । तरंड इव वाहितः ॥ ८७ ॥ खेलितो हरिणा ताव—द्यावन्निर्जीव आस सः ॥ ततस्तं वा-
लयामास । कोदंडमिव शुद्धधीः ॥ ८८ ॥ निर्गतौ यमुनानद्या । यावद् द्वावपि तौ बहिः ॥ स्त्रा-
निकैर्वेष्टितौ ताव—त्तौ नारायणकेशवौ ॥ ९० ॥ एतयोः सदृशः कोऽपि । वरीवर्ति न भूतले ॥
शशंसुरिति गोपास्तौ । नागराश्च द्विजादयः ॥ ९१ ॥ रामकृष्णौ बलीयांसौ । धरंताविति शंसनं ॥
नरैः परिवृतौ प्राप्तौ । मथुरागोपुरं च तौ ॥ ९२ ॥ तयोरागमनं श्रुत्वा । कंसेनोक्तं निषादिनां ॥
पद्मोत्तरचंपकेभ्यौ । हंतुं तौ कुरुताग्रतः ॥ ९३ ॥ त्रित्तिकीलाविवामूला—दाकृष्य दशनौ हरिः ॥
पद्मोत्तरं चंपकं तु । धावमानमहन् हली ॥ ९४ ॥ यशोदानंदयोरेतौ । यशोदानोचितौ सुतौ ॥
बलिनौ विदितौ लोके । शत्रुघातमहाबलौ ॥ ९५ ॥ दिवो देवविमुक्तोरु—वनमालाविलासिनोः
॥ एतयोः सन्मुखं कोऽपि । न हि तिष्ठति सर्वथा ॥ ९६ ॥ गोपालैः स्तूयमानौ तौ । दर्श्यमानौ

कारयित्वा हली स्नान—मपृच्छन्नरकांतकं ॥ विलक्षो दृश्यसे किं त्व—मपमानितमर्त्यवत् ॥ ७४ ॥
सोऽवग्गद्गदया वाचा । बंधो मज्जननी त्वया ॥ दासीति कथिता किं नु । सामर्षं खलु शत्रुवत ॥
॥ ७५ ॥ कोमलाभिर्हली वाग्भि—रुवाच पुरुषोत्तमं ॥ यशोदासौ न ते माता । नंदाख्योऽपि च
नो पिता ॥ ७६ ॥ त्वदीया देवकी माता । देवराजांगजासमा ॥ जनको वसुदेवस्ते । वसुदेवः
क्ष्मातले ॥ ७७ ॥ मासे मासे व्यतिक्रांते । त्वदाननं निरीक्षितुं ॥ निर्यत्स्तन्याययावत्र । देवक्य
तिप्रमोदिनी ॥ ७८ ॥ कंसस्याग्रहयोगेन । संस्थितो मथुरापुरि ॥ आवयोर्वर्तते तातो । वसुदेवः
प्रसिद्धिमान् ॥ ७९ ॥ गुरुभिरथ तैस्तातै—र्बालकस्नेहलालसैः ॥ मुक्तस्तेऽपायरक्षार्थं । ज्येष्ठोऽहं
च विमातृजः ॥ ८० ॥ भो सहोदर तातो मे । यदि शौरिः प्रवर्तते ॥ कथं तेनात्र मुक्तोऽहं । प-
प्रच्छेति हरिर्बलं ॥ ८१ ॥ पृष्टे तु वासुदेवेन । बंधुं हलधरो जगौ ॥ आदितः कंसवृत्तांतं । स्वबांध-
ववधादिकं ॥ ८२ ॥

श्रुत्वा राममुखात्सर्वं । कृष्णः कृष्णमनाः क्रुधा ॥ कंसघातं प्रतिज्ञाय । कालिंद्यां स्नातुमीयि-
वान् ॥ ८३ ॥ कालिंद्यामेष्यति स्नातुं । कृष्णः कंसेन नृत्तुजा ॥ कालियाहिस्वरूपेण । किं मुक्त इ-

शौरिः । सहसोवाच तंप्रति ॥ गच्छ हनिष्यति प्रोच्चैः । कंसो धन्वाधिरोपकं ॥ ६२ ॥ पितुः साक्षेप-
वाक्येना—नाधृष्णिर्जयमुद्वहन् ॥ गोविंदेन समं नंद—गोकुलेऽगच्छदिच्छया ॥ ६३ ॥ तत्र रामहरी
पृष्ट्वा । स शौर्यपुरमासवान् ॥ धनुरारोपितं नंद—नंदनेनेत्यनूद्यशः ॥ ६४ ॥ कोदंडारोपणात्कंसो
विदधाति महोत्सवं ॥ उद्दिश्येत्यादिशद्भृत्यान् । मल्लयुद्धाय सोऽन्यदा ॥ ६५ ॥ स आकार्य बहून्
नृपान् । मंत्रिणश्च पुरोहितान् ॥ मंचेष्वस्थापयद्दंभाद्—दुर्विचारैकमानसः ॥ ६६ ॥ तद्दुष्टमानस-
ज्ञेन । शौरिणा दीर्घदर्शिना ॥ सार्थेऽक्रूरादिकान् सूनून् । लात्वा तत्र समागतं ॥ ६७ ॥ कंसेनो-
च्चतरे मंचे । वसुदेवो निवेशितः ॥ अक्रूराद्यैः सुतैस्तत्र । देवैरिंद्र इवाबभौ ॥ ६८ ॥ मल्लयुद्धं
निशम्योच्चैः । श्रीपती राममब्रवीत ॥ तदावामपि पश्यावो । व्रजित्वा तत्र पर्षदि ॥ ६९ ॥ अंगीकृ-
त्य वचो विष्णो—र्यशोदां राम ऊचिवान् ॥ यास्यावो मथुरामावां । स्नानं सज्जीकुरु द्रुतं ॥७०॥
आलस्यं बिभ्रतीं वीक्ष्य । रामः साक्रोशमाह तां ॥ केशवस्य पुरा बंधु—मारणज्ञापनाय च ॥७१॥
अरे किं ते विसस्मार । दासीभावः पुरातनः ॥ उष्णोदकादिसामग्रीं । यद्विदधासि नांजसा ॥७२॥
विलक्षवचसा तेनो—पादाय माधवं गृहात् ॥ स्नानाय यमुनानद्या—मनयन्मुशली बली ॥ ७३ ॥

यस्या यस्माद्भवेत्कृत्यं । सैव तत्परिवारिणी ॥ ५० ॥ अनाधृष्णिहरी वीक्ष्य । त्यक्त्वा तत्रादिमं गुरुं ॥ मनसा सा परिवव्रे । विष्णुं स्त्री लघुवांछिनी ॥ ५१ ॥ धनुरारोपयेद्याव—दनाधृष्णिः समुद्यतः ॥ पपाताग्रे करौ कृत्वा । मिथ्यादृशां प्रणामवत् ॥ ५२ ॥ वीक्षमाणेषु नृपेषु । पतितोऽयं क्षितौ द्रुतं ॥ शरीरेऽस्य तदस्माभिः । सौस्थ्येन स्थीयते कथं ॥ ५३ ॥ मौलिर्मौलेः पपातेति । हारस्तुत्रोट कंठतः ॥ द्वेधापि कटकैः पाणे—र्बभंजे चुक्रुन्नेऽपरैः ॥ ५४ ॥ कांतत्रोगार्तकांताव—द्भ्रष्टशृंगारभूषणं ॥ तत्स्वरूपं निरीक्ष्येशाः । सत्यभामादयोऽहसन् ॥ ५५ ॥ नृपाः स्वयमनारोपा—द्विलक्षवदना अपि ॥ हसंत्येते न जानंति । बहुरत्ना वसुंधरा ॥ ५६ ॥ चिंतयित्वेति कृष्णेन । तेषां हास्यासहिष्णुना ॥ धन्वाधिज्यं कृतं सद्यो । वालयित्वाब्जनालवत ॥ ५७ ॥ बिभ्रौजोधनुषा रम्या । कादंबिनीव पुष्करे ॥ बभौ कृष्णतनुस्तस्यां । सभायां तेन धन्वना ॥ ५८ ॥ विष्णुनारोपिते धन्व—न्यासे जयारवे सति ॥ अनाधृष्णिस्ततः स्थाना—दथमारुह्य निर्ययौ ॥ ५९ ॥ स्यंदनस्थं हरिं द्वारि । मुक्त्वानाधृष्णिरंजसा ॥ गत्वा च जनकागारं । व्याचष्ट स्पष्टवाचया ॥ ६० ॥ एकाकिना मया तात । शार्ङ्गमारोपितं धनुः ॥ शक्रधनुरिवाशक्यं । ग्रहीतुमपि पार्थिवैः ॥ ६१ ॥ श्रुत्वा तद्वचनं

बलिं व्यधात् ॥ ३८ ॥ सत्यभामां निजां जामिं । तदधिष्ठायिकामिव ॥ संस्थाप्य संनिधौ कंसो—ऽकार्षीत्पूजोत्सवान् बहून् ॥ ३९ ॥ गुणमारोपयेदस्मिन् । धनुषि यो महागुणी ॥ सत्यभामां ददे तस्मै । कंस इत्युदघोषयत ॥ ४० ॥ विद्याकृष्टा इवानेके । निशम्योद्घोषणां च तां ॥ आकारिताः समन्येयुः । क्षितिपालाः स्मराकुलाः ॥ ४१ ॥ ग्रहीतुमपि केनापि । देवाधिष्ठितवस्तुवत् ॥ तन्नाशक्यत शक्येत । समारोपयितुं कथं ॥ ४२ ॥ वसुदेवमदनवेगा—सुतोऽनाधृष्णिनामकः ॥ वीरंमन्यस्तदाकर्ण्य । प्राचलन्निजगेहतः ॥ ४३ ॥ अध्वन्यागछता तेन । समेतं नंदगोकुले ॥ तत्र रामहरी दृष्ट्वो—वासैकां रजनीं मुदा ॥ ४४ ॥ आरुह्य स्यंदनं पृष्टे । विसृज्य हलिनं पुनः ॥ विष्णुमेकाकिनं सार्धं । लात्वा स मथुरामगात् ॥ ४५ ॥ संकीर्णे पादपैरध्व—न्यग्रुद्धयग्रोधपादपः ॥ लग्नस्तत्र रथो गंतुं । शक्तो नोपायकोटिभिः ॥ ४६ ॥ तावन्नारायणेनाशु । मूलादुन्मूल्य तं वटं ॥ अध्वा स्यंदनयानाय । प्रांजलो जनितः क्षणात ॥ ४७ ॥ बलं तस्य समालोक्य । तं चारोप्य रथे स्वयं ॥ अनाधृष्णिश्चमत्कारं । बिभ्रत्तेनाध्वनाचलत् ॥ ४८ ॥ उत्तीर्य यमुनातो द्वा—वप्येत्य मथुरापुरीं ॥ शार्ङ्गपूजोत्सवास्थान—मागातां नृपपूरितं ॥ ४९ ॥ सत्यभामार्चितुं मुक्ता । समीपे शार्ङ्गधन्वनः ॥

सशृंगं कंपयन्मौलिं । निहंतुं धावितो हरेः ॥ २७ ॥ धर्तुं मे पाणिनैकेन । माभूद् दुःखं द्वितीयके ॥ उभाभ्यामिति हस्ताभ्यां । शृंगे द्वे अपि सोऽग्रहीत ॥ २८ ॥ गृहीत्वा ते च पादाभ्यां । मर्दयित्वेव मृत्तिकां ॥ चक्रवद्भ्रामयित्वा तं । दूरे स व्यकिरत्करात ॥ २९ ॥ अरिष्टं तं तथा दृष्ट्वा । वृषं व्यापादितं तदा ॥ पुपूजुरायतौ पूज्यं । गोपाः प्रत्यागतं हरिं ॥ ३० ॥ कंसस्य मदधीशस्य । वृषभोऽनेन मारितः ॥ ग्रहीतुमिव वैरं द्रा—क्केशी तुरंग आगतः ॥ ३१ ॥ माभूदेकाकिनस्तस्य । दुःखं वृषस्य मारणात ॥ मन्ये सहायतां कर्तुं । हतः सोऽपि च जिष्णुना ॥ ३२ ॥ एक एकः समागाद्यः । स तु कृष्णेन मारितः ॥ अन्येद्युः खरमेषाभ्यां । द्वाभ्यां तेन समागतं ॥ ३३ ॥ एकोऽपि हन्यते येन । दुष्टो भूरिपराभवः ॥ तदीया जायते ख्याति—र्महीयसी महीतले ॥ ३४ ॥ अनेन बालकेनापि । खरमेषौ मदोद्धतौ ॥ संतापकौ मनुष्याणां । जघ्नाते लीलयैव च ॥ ३५ ॥ विश्वस्यामपि विश्वायां । बलीयानयमेव हि ॥ प्रसिद्धिः समभूदेवं । वैकुंठस्यापि शैशवे ॥ ३६ ॥ शक्ये तैकाकिनानेन । न द्वाभ्यां सह किंचन ॥ चित्तेऽनयोर्मदो माभू—त्तौ द्वावपीति मारितौ ॥ ॥ ३७ ॥ एतान्नैमित्तिकप्रोक्तान् । हतान् श्रुत्वा वृषादिकान् ॥ रिपोः सम्यक्परीक्षायै । कंसः शार्ङ्ग-

वक्रीगर्जः । सप्तमस्तव घातकः ॥ १५ ॥ मात्रार्च्यमानमास्ते ते । शार्ङ्गधनुर्निकेतने ॥ तदारोपण-
योग्यत्वं । तस्यैव संभविष्यति ॥ १६ ॥ अन्यच्च कालियव्याल—चाणूरयोर्विघातकः ॥ नूनं राजन्
स विज्ञेयो । घातकस्ते च दुर्जयः ॥ १७ ॥ अशक्यैरपरैरेतै—र्लक्षणैरुपलक्षितः ॥ कंस साधुवचः
सत्यं । स्वमनस्यवधारय ॥ १८ ॥ निजप्रत्यर्थिनं वेत्तुं । कंसोऽरिष्टादिकानधात ॥ कानने च श्रमं
कर्तुं । मल्लौ चाणूरमुष्टिकौ ॥ १९ ॥ शरत्कालेऽन्यदारिष्टो—ऽनरुवान् वृंदावने व्रजन् ॥ गोपान् त्रा-
पयितुं लग्नो । मदोन्मत्तगजेंद्रवत् ॥ २० ॥ कांश्चिद्विध्यति शृंगेण । मणिकारो मणीनिव ॥ चा-
लिन्यामिव केषांचि—त्तनौ छिद्राण्यचीकरत् ॥ २१ ॥ गृहीत्वा शृंगयुग्मेन । कंदुकमिव लीलया ॥
उत्क्षाल्य हविषोऽमत्रा—ण्यस्फोटयदसौ द्रुतं ॥ २२ ॥ रक्ष रक्ष महादक्ष । पुंडरीकाक्ष दक्षधीः ॥
बलवन् बलभद्रेति । बभूव गोदुहां रवः ॥ २३ ॥ तत श्रुत्वा हलिविष्णू च । धुर्यौ परोपकारिषु ॥
प्रस्थितौ वृषभं हंतुं । स्थाम्ना सिंहमिवोत्कटं ॥ २४ ॥ निहंतु सुरभीरेष । स्फोटितुं सर्पिषो घटान् ॥
प्रत्यायतं युवां वेगा—द्गोपैरित्युच्यते बहु ॥ २५ ॥ मयि सत्यपि किं राम—स्तिरश्चोऽस्योपरि व्रजेत ॥
हक्कयामास तं कृष्णो । निजशौर्येण गर्जितः ॥ २६ ॥ हक्कामसहमानः स । सिंहवत्तस्य सन्मुखं ॥

मां ॥ ४ ॥ स्थाने स्थाने ततः प्राज्यान् । वसुदेवादिका नृपाः ॥ महोत्सवान् प्रकुर्वंति । प्रोद्यत्प्रमोदमेदुराः ॥ ५ ॥ तदर्थं क्रियमाणांश्च । महोत्सवान् महीयसः ॥ श्रुत्वा कंसोऽस्मरद्गर्भः । सप्तमोऽयं भविष्यति ॥ ६ ॥ सर्वत्र शंकते शंकां । प्रायशः शंकितो जनः ॥ अशंकितमपि स्वांते । शंकते शंकिताशयः ॥ ७ ॥ सूक्ष्मबादरजंतूना—मुपरि यः कृपाऽहृत ॥ ततः श्रीनेमितोऽप्येष । कंसोऽभून्मृत्युभीतिभृत् ॥ ८ ॥

ततः कंसोऽन्यदा द्रष्टुं । देवकीगृहमागतः ॥ छिन्ननासां सुतां तत्र । वीक्ष्य चित्ते व्यचारयत ॥ ९ ॥ ऋषिणा सप्तमो गर्भो । यः प्रोक्तो मम घातकः ॥ स तु स्त्रीमात्र एषोऽस्ति । छित्वा नासां मयांकितः ॥ १० ॥ आकाशपुष्पवज्जाने—ऽहं तु साधोर्वचो यथा ॥ परं तथापि पृच्छामि । कंचिन्नैमित्तिकं बुधं ॥ ११ ॥ संकल्प्येति समाहूया—प्राक्षीन्नैमित्तिकं स तु ॥ मद्घाता देवकीगर्भः । सप्तमोऽस्ति न वा वद ॥ १२ ॥ सोऽप्यूचे साधुवाक्यं स्या—न्नान्यथा वज्रलेपवत् ॥ प्रत्ययार्थं तवाधीश । कंस यद्वच्मि तच्छृणु ॥ १३ ॥ अरिष्टाख्यमनड्वाहं । केशिनं च तुरंगमं ॥ खरमेषौ बलिष्ठौ त्वं । नूनं वृंदावने धर ॥ १४ ॥ क्रीडां कुर्वन्निजस्थाम्ना । योऽमून् विदारयिष्यति ॥ स ज्ञेयो दे-

बर्हाणां च बर्हाणां । विधाय चारुचारिकां ॥ नृत्यंति पुरतो विष्णो—र्हल्लीसकेन गोपिकाः ॥९३॥
सारंगान् वरसारंगां—श्चित्रितान् स्तंभितानिव ॥ कुर्वंश्च मधुरं वेणुं । कुंजेषु वादयेद्धरिः ॥ ९४ ॥
गायंतीषु च गोपीषु । पीनोरुस्तनचारुषु ॥ नोदयत्युल्लसत्तालान् । रामे नृत्यति माधवः ॥ ९५ ॥
इत्येकादश वर्षाणि । रामेण सह खेलतः ॥ कृष्णस्याकृष्टचित्तस्य । सुखं नंदकुलेऽभवन् ॥ ९६ ॥
हस्ती वृषो हरिर्लक्ष्म्य—भिषेको दाम चंद्रमाः ॥ सूर्यो ध्वजस्तथा पद्म—सरोंबुधिर्विमानकं ॥९७॥
रत्नराश्यनलज्वाले । इति स्वप्नांश्चतुर्दश ॥ दत्वा कार्तिकके श्याम—द्वादश्यां चैत्रके विधौ ॥९८॥
अपराजिततेजस्का—पराजितविमानतः ॥ च्युत्वा शंखस्य जीवः श्री—शिवोदरेऽवतीर्णवान् ॥
॥ ९९ ॥ नात्युष्णोदकमाहार—मदती दधती सुखं ॥ संपूर्णदोहदासूत । सा सुतं समये शुभे ॥
॥ ३०० ॥ यत्कृत्यं दिक्कुमार्यस्तु । षट्पंचाशद्वितेनिरे ॥ यस्य चक्रुश्चतुःषष्टि—रिंद्रा अपि जनु-
र्महं ॥ १ ॥ रात्रौ जन्माभिषेकेषु । कृतेष्वाखंडलादिभिः ॥ समुद्रविजयो राजा । प्रातर्महानकारयत्
॥ २ ॥ स्वप्नेऽपश्यदरिष्टस्य । चक्रधारां प्रसूर्मुदा ॥ अरिष्टनेमिरित्याख्या । पितृभ्यां प्रविनिर्मिता ॥
॥ ३ ॥ जातेऽर्हति मुदं प्रापु—र्नारका अपि भूरिशः ॥ कथं तर्हि स्वकीयास्तं । न वयं कुर्महेत-

कितः शौरी । रक्षोपायं व्यचिंतयत् ॥ ८० ॥ विनिश्चित्येत्यसौ पार्श्वे । स्वप्रियां रोहिणीं ततः ॥
शौरिशकार्यं चालाप्य । शौर्यपुर्याममोचयत् ॥ ८१ ॥ अयं विश्वंभरस्ताव—कीनो लघुसहोदरः ॥
कंसभीत्या विवृद्ध्यर्थं । मुक्तोऽस्ति नंदगोकुले ॥ ८२ ॥ दास्यामि तत्सुतत्वेन । वत्स त्वामपि राम
भोः ॥ एकाकित्वेन संस्थेयं । युवाभ्यां स्नेहनिर्भरं ॥ ८३ ॥ न वाच्यं किंतु कस्यापि । त्वया न्या-
यावतारिणा ॥ शिक्षयित्वेति तत्पार्श्वे । तं नंदगोकुलेऽमुचत् ॥ ८४ ॥ उभौ दशधनुर्मान—शरी-
रधारिणौ ततः ॥ क्रीडतो विविधक्रीडा–विलासैर्वृद्धिमागतौ ॥ ८५ ॥ प्रचंडकांडकोदंड—कलाके-
लिपरौ ततः ॥ वर्धमानौ च गोपाना–मानंदं ददतश्च तौ ॥ ८६ ॥ वयस्यौ जातुचिद्भूत्वा । छा-
त्राचार्यौ च कर्हिचित् ॥ एक एकं विना स्थातुं । न शक्नोति मनागपि ॥ ८७ ॥ सर्वदा युगपत्प्री-
त्यै । रतिप्रीत्योः स्वयोषितोः ॥ भोगं भोक्तुमिवानंगो । द्वे रूपे विदधेतमां ॥ ८८ ॥ प्रद्युम्नजन-
कत्वेन । दधिसारादनेन तु ॥ कामरूपस्मरोऽप्येका—द्विष्णुर्वाभूद्विरूपभाक् ॥ ८९ ॥ प्रत्यहं दधिपिं-
डस्या—दनेन गोपयोषितः ॥ मदनोत्कटतापूर्णा—स्तौ द्वौ दृष्ट्वेत्यशंकत ॥ ९१ ॥ त्रिर्निर्विशेषकं
॥ रात्रौ समुदयीभूय । पुरस्तान्नरकद्विषः ॥ दीर्घातिमधुरध्वानै—र्गायंति गोधुगंगनाः ॥ ९२ ॥ प्र-

दामबंधोऽस्य । गोपालैः प्रविलोकितः ॥ तद्दामोदर इत्याख्या । सौख्याय प्रकटीकृता ॥ ७० ॥ कुर्वंत्युपद्रवान् विष्णो—र्यान् बाल्ये खेचरादयः ॥ दशार्हदेवतास्निस्ते । न्यक्क्रियंते स्वमातृवत ॥ ॥ ७१ ॥ आभीरैर्मौलिवन्मौला—वाभीरीभिश्च स ततः ॥ कामकुंभ इव प्रेम्णा । स्थाप्यते खेलनाय सः ॥ ७२ ॥ शैशवेऽतीवचापल्या—न्मंथन्या गोपयोषितां ॥ गृह्णाति नवनीतानां । पिंडान् स्नेहान्न वार्यते ॥ ७३ ॥ पदानि निदधद्भूमौ । विदधत्कूर्दनक्रियां ॥ वाणीमभिदधन्नंद—यशोदानंददोऽभवत् ॥ ७४ ॥ पर्यस्तं शकटं भूयो । ध्वस्ते शकुनिपूतने ॥ कृष्णेन बाल्ययोगेऽपि । भंजितौ यमलार्जुनौ ॥ ७५ ॥

इति गोपाद्यशः श्रुत्वा । स्वसूनोः शौरिरद्भुतं ॥ बाल्येऽपि स्थामघाताभ्या—मभूद्धर्षविषादवान् ॥ ७६ ॥ यद्यप्याह्लाद्यते भानु—रत्रैर्बाल्येन वा हरिः ॥ तथापि स्वकरौजोभ्यां । भवेतां विश्रुताविमौ ॥ ७७ ॥ तथानेन समं किंचि—न्न हि शक्यति कस्यचित ॥ बाल्ये तथाप्यमुं कंसो । माज्ञासीद्दैवया विना ॥ ७८ ॥ अक्रूरनामधेयाद्याः । कंसेनावसिताः समे ॥ रामस्तवद्यापि न ज्ञातः । समस्ति रोहिणीभवः ॥ ७९ ॥ कंसात्संगोपितोऽप्येष । माभूत्ख्यातः स्वतेजसा ॥ शैशवाद्वं-

क्षुधितः ॥ ५८ ॥ आकर्ण्येति यशोदापि । कृष्णैकाकित्वमोचनात् ॥ हा हतास्मीति जल्पंती । स्वकार्याणि शुशोच च ॥ ५९ ॥ भूतप्रेतपिशाचानां । शाकिन्या भीश्च मास्मभूत ॥ यस्य वेला नवेत्तस्य । रक्षास्तु तव नंदन ॥ ६० ॥ मज्जीवं न्युंछनीकुर्वे । वत्स ते मस्तकोपरि ॥ स्त्रीस्वभावेन चाटूनि । वाक्यानीति जजल्प सा ॥ ६१ ॥ वत्स वत्स न भेतव्यं । त्वया त्वयातिभासिना ॥ सा निजांके समारोप्य । चुचुंब मस्तकानने ॥ ६२ ॥ कस्मादप्यस्य भीतिर्न । जानत्यस्ति तथापि सा ॥ कृष्णमेकाकिनं न क्वा—मुंचज्जीवं तनूरिव ॥ ६३ ॥ विष्णुं दाम्नोदरेऽन्येद्यु–र्बध्ध्वा सा तमुदूखले ॥ कार्याय विभ्यती चागात् । प्रातिवेश्मिकमंदिरं ॥ ६४ ॥ तदा सूर्पकविद्याभृ—दाययौ विष्णुसन्निधौ ॥ धरन् पितामहद्वेषं । यमलार्जुनतामधात् ॥ ६५ ॥ प्रक्षिप्योदूखले विष्णुं । खंडयामीति चिंतयन् ॥ पार्श्वे तं नीतवान् यावद् । दुष्टो विद्याधरोऽथ सः ॥ ६६ ॥ यस्य तु चिंत्यते यादृ—ग्तादृगात्मनि जायते ॥ अर्जुनौ दूरतः कृत्वा । देव्या स एव खंडितः ॥ ६७ ॥ विष्णुना वारणेनेवो—च्छेदितौ यमलार्जुनौ ॥ यशोदाशोभितो नंदो । गोपालेभ्योऽशृणोदिति ॥ ६८ ॥ धूलीधूसरितांगं च । रममाणं क्षितौ शिशुं ॥ गृहीत्वा हस्तयोर्मौलिं । चुचुंबतुश्च दंपती ॥ ६९ ॥ उदरे

चैकाकिनं हरिं ॥ मुक्तं नंदयशोदाभ्यां । तत्रास्तां हंतुमुद्यते ॥ ४७ ॥ शाकुन्या रुद्र्या चाधः—कृत्वा कृष्णः कदर्थितः ॥ स्तन्यं पूतनयाक्षेपि । तन्मुखे च विषाविलं ॥ ४८ ॥ देवीभिः कृष्णभक्ताभि—रपहृत्य च तद्विषं ॥ ते द्वे अप्यनसैव द्रा—ग्मर्दिते मारिते पुनः ॥ ४९ ॥ मृते निपतिते ते द्वे । रक्ताक्षे भीषणानने ॥ खेचर्यौ वीक्ष्य नंदोऽवग् । हा हा हतोऽस्मि वेधसा ॥ ५० ॥ किमेते मारिते केन । जातं किंचात्र वा खलु ॥ पप्रछाहूय गोपाला—न्नंदो वेगात्तमाधवः ॥५१॥ तेऽप्यूचुर्न वयं विद्मो—ऽनुसाराद् ज्ञायते परं ॥ अनेनैव बलिष्टेन । बालेनापि हते इमे ॥ ५२ ॥ भैरवे मारयित्वैते । रक्षितं निजजीवितं ॥ आबाल्यादपि पुण्यात्मा । भवेद्धि शौर्यधैर्यभाक् ॥५३॥ गोपालेभ्य इति श्रुत्वा । संस्पृशन् शिशुमस्तकं ॥ नंदोऽपश्यत्समस्तेष्व—प्यंगेषु पुरुषोत्तमं ॥५४॥ तमक्षतशरीराढ्यं । दृष्ट्वा नंदोऽप्यमूमुदत ॥ तदायातां यशोदां स । कथयामास भूरिशः ॥ ५५ ॥ रत्नरक्षाकृते यत्नः । कार्यः सुखाभिलाषिणा ॥ तन्मुक्त्वैकाकिनं बालं । कृष्णं त्वं क्व गताभवः ॥५६॥ ये स्युः प्रत्यर्थिनस्ते त्व—न्वेषयंति छलं ततः ॥ एताभ्यां तु क्षतांगो न । जातोऽयं पुण्यपूरुषः ॥ ॥ ५७ ॥ पततो हविषां कुंभा—स्त्यक्त्वास्यैव शिशोस्त्वया ॥ अहोरात्रं प्रकर्तव्या । देवा देवार्य·

गछेर्निजं सुतं दृष्टुं । वत्सं गोरिव गोकुले ॥ ३५ ॥ प्रस्तावज्ञापि सा दक्षा । पतिवाक्यानुयायिनी ॥ उपायं रचयामास । पुत्रवक्त्रदिदृक्षया ॥ ३६ ॥ आगंत्र्यो योषितो यास्ता । आगछंतु मया सह ॥ गोपूजावासरो मेऽद्य । तद्गमिष्यामि गोकुले ॥ ३७ ॥ सर्वेषां सा च विश्वासो—त्पादनाय तथाथ गाः ॥ अर्चितुं चंदनं लात्वा—गात्स्त्रीभिस्तत्र भूरिभिः ॥ ३८ ॥ एवं गाः पूजयंती सा । जगाम नंदमंदिरे ॥ तत्र यशोदया सार्च्चि । पूजनात्पूजनं भवेत ॥ ३९ ॥ स्वछश्रीवत्सनिर्गछ—दतुछछविराजितं ॥ कृष्णकायं द्विधाप्येषा । पुंडरीकाक्षमैक्षत ॥ ४० ॥ शंखचक्रगदापाणि—मिंद्रनीलप्रभं सुतं ॥ नंदस्त्रीक्रोडगं दृष्ट्वा । देवक्या व्यरमन्न दृग् ॥ ४१ ॥ खेलयंत्यंगजं बाल्ये । धन्या मत्तोऽप्यसौ वशा ॥ यथा तथैधतां वात्र । मातामहनिवासवत ॥ ४२ ॥ कुक्षिजस्तु ममैवायं । विकल्पानिति तन्वती ॥ सुतास्यदर्शनात्प्राप—त्सा मुदं वरनातिगां ॥ ४३ ॥ तत्र पुत्रेक्षणेछाभि—र्गोपूजादंभतोऽनिशं ॥ कुर्वत्यागमनं तस्मा—ज्जज्ञे गोपूजनं जने ॥ ४४ ॥ महद्भिर्महतीभिश्च । क्रियते कारणेन यत् ॥ तत्सर्वमपि लोके हि । पर्वरूपेण जायते ॥ ४५ ॥ अथ तातस्य विद्वेषा—दुर्न्ने सूर्पणखासुते ॥ शाकुनिपूतने एते । मातृवैरजिघृक्षया ॥ ४६ ॥ खेचर्यौ ते महादुष्टे । दृष्ट्वा

कृते कार्ये । उज्झिता यामिकाः समे ॥ शौरिं विलोकयामासु—र्न दृष्टः केनचित्स तु ॥ २४ ॥ के-
चिद्वदंति किं कृत्यं । वसुदेवस्य सत्वरं ॥ कृत्यं सप्तमगर्भस्य । स एव दृश्यतां द्रुतं ॥ २५ ॥ समे-
त्य देवकीपार्श्वे । यामिकैः कंससेवकैः ॥ विलोकितं तदा लब्धा । सुता सुतो न सप्तमः ॥ २६ ॥
ते तामपि समादाय । सर्वेऽपि कंसकिंकराः ॥ कंसस्य पुरतस्तूर्णं । ढौकयामासुरादरात् ॥ २७ ॥
अहो एषा वराकी किं । मद्घातं प्रविधास्यति ॥ छित्वोत्कर्षेण तन्नासां । देवक्यै प्रतिदापिता ॥
॥ २८ ॥ अयमासीन्न सर्वज्ञो । यत्सत्यमेव जल्पति ॥ क्रुद्धेन भाषितं मिथ्या—तिमुक्तेन तपस्वि-
ना ॥ २९ ॥ हंता मेऽथ न कोऽप्यस्ति । मिथ्या जानन् यतेर्वचः ॥ स्वचित्तचिंतितान्माना—द्रा-
ज्यं पाति स पूर्ववत् ॥ ३० ॥ तस्य कृष्णशरीरत्वा—त्कृष्ण इत्युच्यतेऽभिधा ॥ देवीभिः सेव्यमा-
नोऽसौ । नंदगेहे समैधत ॥ ३१ ॥ गर्भस्याधानपोषाभ्यां । स्नेहो मातुर्महान् भवेत् ॥ देवकीतीव
सोत्कंठा । जाता पुत्रस्य दर्शने ॥ ३२ ॥ ततो मासे व्यतिक्रांते । देवकी वसुदेवकं ॥ यास्यामि
गोकुले द्रष्टुं । तनूजमित्यचीकथत ॥ ३३ ॥ शौरिः प्रोवाच कुर्वत्या । गमनागमने तव ॥ कंसो
ज्ञास्यति निःशेषां । वार्ता तत्का विचारणा ॥ ३४ ॥ कारणानि समुद्दिश्य । ततस्त्वं मृगलोचने ॥

। निर्ययौ यामिकालयात ॥ १२ ॥ शीर्षोपर्यातपत्रं च । प्रसूनवृष्टिमादधे ॥ प्रदीपैरष्टनिर्मार्गं । दीपयंत्यश्च देविकाः ॥ १३ ॥ कृत्वोज्ज्वलर्षभरूपं । नृत्वा देवीभिरग्रतः ॥ पुर्या उद्घाटितं द्वार—मवबुद्धं न केनचित् ॥ १४ ॥ शौरिं प्राप्तं पुरो यत्र । चोग्रसेनोऽस्ति पंजरे ॥ किमस्ति हस्तयोस्ते न्नोः । स चित्रादिति पृष्टवान् ॥ १५ ॥ सोऽप्यूचे तेऽरीभूतस्य । ध्रुवं कंसस्य वैर्ययं ॥ उक्त्वेति दर्शयित्वा तं । वसुदेवोऽब्रवीत्पुनः ॥ १६ ॥ सुवर्णसदृशादस्मा—त्कंसः कांस्यं भविष्यति ॥ एतन्मूल्येन तन्मूल्यं । भविता न मनागपि ॥ १७ ॥ यदुवंशोदयोऽमुष्मा—दस्मात्कंसपरासुता ॥ अस्माच्च ते शुभं भावि । न कथ्यं कस्यचित्त्वया ॥ १८ ॥ वसुदेवो वदित्वेत्या—नंदान्नंदस्य मंदिरं ॥ जगाम तेजसां धाम । रामाभिराममोहनं ॥ १९ ॥ नंदोऽप्यथ निशीथे तं । समायातं विलोक्य च ॥ व्याचष्ट सहसोत्थाय । स्वामिन्नत्रागमः कथं ॥ २० ॥ सोऽप्यभ्यधत्त तं पश्चा—त्किंवदंती विधास्यते ॥ सांप्रतं ते यशोदायाः । पार्श्वेऽमुं मुंच बालकं ॥ २१ ॥ तदा तयापि सूनास्ति । सुता सौभाग्यशालिनी ॥ तां लात्वा तत्र तं मुक्त्वा । शौरिस्ततोऽथ जग्मिवान् ॥ २२ ॥ तां बालां देवकीपार्श्वे । मुक्त्वा रहसि संस्थितः ॥ प्रमीलामकरोत्सद्यः । सुखेन कार्यसाधनात ॥ २३ ॥ अविघ्नेन

वसुदेवस्ता—नुवाच निजबुद्धितः ॥ प्रिये स्वप्नानुसारेण । श्रेष्ठः पुत्रो भविष्यति ॥ १ ॥ साप्यवा-
दीद्यदि स्वामिन् । सुतरत्नं भविष्यति ॥ तद्रत्नं रक्षितुं कंसा—दावाभ्यां शक्यते कथं ॥ २ ॥ वसु-
देवोऽवदत्सुभ्रु । चिंतां त्वं मा कृथा वृथा ॥ स एव निजभाग्येन । वर्तिष्यति जीवितः ॥ ३ ॥
पूर्णे मासे निशीथे च । शुभे चंद्रादिके सति ॥ नभोमासे सिताष्टम्यां । प्रासूत देवकी सुतं ॥४॥
आबाल्यादपि देवानां । सान्निध्यं भजते हरिः ॥ ततस्योपद्रवान् सर्वान् । निराकुर्वंति देवताः ॥
॥ ५ ॥ तद्देवताभिरन्येषां । हर्षः प्रादायि जन्मतः ॥ कंसमुक्तभटानां तु । निद्रावस्वापिनी तदा ॥
॥ ६ ॥ प्रत्यूहोऽस्य मनाग्मासू—न्नंदौकोमुक्तिकर्मणि ॥ इति ताभिस्ततः सर्वे । मृता इव विनि-
र्मिताः ॥ ७ ॥ अथाकार्य पतिं देव—क्यूचे रहसि सत्वरं ॥ स्वामिन्नस्मि विपक्षेण । बद्धा कंसेन
वाचया ॥ ८ ॥ यो यो गर्भो मया जातो । हतोऽनेन स पापिना ॥ षण्णामपि च गर्भाणां । जनि-
तं हननं तथा ॥ ९ ॥ सिंहादिसप्तकस्वप्न—सूचितेऽत्रापि सप्तमे ॥ गर्भेऽवस्था यदा सैव । ज्ञेया
ऽऽगमे मृतिस्तदा ॥ १० ॥ वसुदेवोऽवदद्देवि । गर्भस्यास्य तदा कथं ॥ रक्षां करोमि सावोच—न्मुं-
चैनं नंदमंदिरे ॥ ११ ॥ सत्यं सत्यं प्रिये प्रोक्तं । वसुदेव इति ब्रुवन् ॥ लात्वा द्वाभ्यां कराभ्यां तं

चारयिष्यामि । गर्भेषु देवकीस्त्रियः ॥ ८८ ॥ ये गर्भा देवकीदेव्याः । कंसेन हंतुमर्थिताः ॥ गर्भस्थांस्तांस्त्वदीयेऽहं । गर्भे क्षेप्स्याम्यसंशयं ॥ ८९ ॥ एवमस्तु तयेत्युक्ते । नैगमेषी सुरोत्तमः ॥ पुष्पवत्या समं चक्रे । गर्भिणीं सुलसां च तां ॥ ९१ ॥ निजशक्त्या ततो देव—श्चक्रे मुदितमानसः ॥ विनिमयं तयोर्नूनं । गर्भयोर्नैगमेषी सः ॥ ९२ ॥ व्यापन्नमपि तं बालं । गृहीत्वा कंससेवकाः ॥ स्वसेवासूचनार्थं ते । ददुः कंसाय दुर्धियै ॥ ९३ ॥ दुरात्मा निर्दयः सोऽपि । तमाददे स्वपाणिना ॥ मन्मारकोऽयमित्युक्त्वा—स्फालयद् दृषदा सह ॥ ९४ ॥ षट्स्वप्येतेषु गर्भेषु । श्रुत्वा कंसकदर्थनां ॥ दंपती गलितौ तौ च । जीवन्मृतौ बभूवतुः ॥ ९५ ॥ षडेते नामतोऽनीक—यशाश्चानंतसेनकः ॥ अजितसेनकः ख्यातो । निहतारिस्तथापरः ॥ ९६ ॥ देवयशाः स्फुरद्देव—यशाश्च शत्रुसेनकः ॥ सर्वेऽपि सदृशाकारा—स्तुल्यलावण्यधारिणः ॥ ९७ ॥ अथ स्वप्नेऽन्यदापश्य—द्देवकी सिंहमुत्तमं ॥ रवींदू्अग्निं वृषं चापि । विमानाब्जसरस्तथा ॥ ९८ ॥ जीवोऽथ गंगदत्तस्य । च्युत्वा शुक्रदिवस्तदा ॥ पद्मास्यदेवकीकुक्षौ । तस्यां रात्राववातरत् ॥ ९९ ॥ निरीक्ष्य देवकी स्वप्नान् । स्वभर्तारं व्यजिज्ञपत ॥ स्वामिन्नद्य मया स्वप्ना । दृष्टा सिंहादिका वराः ॥ १०० ॥ निशम्य

तन्भिये ॥ सप्तापि जातमात्रांस्ते । गर्भान् कंसवशान् कुरु ॥ ७८ ॥ पतिवाग्भंगभीतेव । सापि त-
त्प्रत्यपद्यत ॥ कुलीना या भवेत्कांता । सा हि पत्यनुगामिनी ॥ ७९ ॥ दंपत्योर्निश्चलत्वं त—ज्ञा-
नन् संतुष्टमानसः ॥ विसृष्टो शौरिणा मद्य—शौंडः कंसोऽगमद्गृहं ॥ ८० ॥ द्वादशयोजनायामा ।
गर्जनेव पयोमुचः ॥ प्रासरद्यतिना प्रोक्ता । वाग्जीवयशसो भुवि ॥ ८१ ॥ साधवीयाममोघां तां ।
विष्वगाकर्ण्य दंपती ॥ अमुष्णान्मायया कंस । आवामिति व्यषीदतां ॥ ८२ ॥

इतश्च नागनामेभ्यो । भद्दिले हि तदाभवत ॥ तस्य पुण्यवतो भार्या । सुलसा श्राविकाग्रणी
॥ ८३ ॥ नश्यत्प्रासूतिका भावि—न्यूचे बाल्येऽपि तामिति ॥ चारणर्ष्यतिमुक्तेन । तपःसंजातल-
ब्धिना ॥ ८४ ॥ वंध्यत्वं यतिनो वाचा । जानती नैगमेषिणं ॥ आराधयत्तपोभिः सा । निजसं-
तानभूतये ॥ ८४ ॥ प्रसन्नीभूतवांस्तस्या । अवादीत्सोऽथ निर्जरः ॥ तपोभिस्तेऽस्मि संतुष्टो । याच-
स्व धर्मिणीप्सितं ॥ ८५ ॥ सा प्रोचे यदि तुष्टोऽसि । शक्तिमान् हितचिंतकः ॥ अपुत्रिण्यास्तदा
पुत्रान् । देहि मे त्वं प्रसादतः ॥ ८६ ॥ निंदुरेषेति विज्ञाया—वधिज्ञानधरः सुरः ॥ जगादेति च
तच्छील—गुणरंजितमानसः ॥ ८७ ॥ त्वमसि श्राविका श्रेष्ठा । ततो गर्भान् मृतांस्तव ॥ अहं सं-

विधाता च । त्वत्तः परो न कोऽपि मे ॥ ६४ ॥ एवमावर्जयामास । वसुदेवं स दुष्टधीः ॥ निजार्थे हि न को भावी । मृष्टवाक्यादिजल्पकः ॥ ६५ ॥ शौरिर्जगौ मया मित्र । कृतमत्र धनादि च ॥ सर्वमपि त्वदायत्तं । किमन्यस्य प्रयोजनं ॥ ६७ ॥ कंसोऽभ्यधत्त यद्येवं । हितं मयि विचिंत्यते ॥ तद्देवक्या इतो देहि । गर्भान् सप्तापि जन्मतः ॥ ६९ ॥ कापट्यं सुहृदे मा भू—त्प्रार्थनाभंगताथ-वा ॥ मया निगदिता वाणी । मास्तु वा फलवर्जिता ॥ ७० ॥ कुटिलं सरलात्मा तु । जानन् सर-लमात्मवत् ॥ वसुदेवः प्रपेदे त—द्वचनं प्रांजलोज्ज्वलः ॥ ७१ ॥ लोकेऽपि यो भवेध्धूर्तः । कार्यं कुर्यान्निजं दृढं ॥ ततोऽवग्वसुदेवाय । कंसः पुनरपि द्रुतं ॥ ७२ ॥ तवाहं वल्लभो बंधो । ततस्त्वया प्रतिश्रुतं ॥ परं यावन्न देवक्या । तावत्पूर्णा न मे स्पृहा ॥ ७३ ॥ कंसेनेत्युदिते शौरि—रपश्यत स्वप्रियाननं ॥ अज्ञातपूर्ववृत्तांता । प्रत्यपद्यत सापि तत् ॥ ७४ ॥ प्रत्युतोचे च सा देवी । रे कंस मम वर्तसे ॥ त्वं बांधवस्तथाभीष्टं । मित्रं मत्स्वामिनोऽपि च ॥ ७५ ॥ तदा श्रीवसुदेवस्य । नंद-नानां प्रमोदिनां ॥ तवापि तनूजानां किं । भेदोऽत्रापि प्रवर्तते ॥ ७६ ॥ वसुदेवोऽवदत्कांते । कां-तेक्षणे कुरंगवत् ॥ सोपचारैः सितामृष्टै—स्त्वदीयैर्वचनैरलं ॥ ७७ ॥ रत्नगर्भेव पुंरत्न—गर्भा त्वमसि

यथाहिदमनीयोगा—त्सर्पस्य विषमुत्तरेत् ॥ तस्य वाचा तथा सद्य—स्तन्मदोत्कटता गता ॥ ५३ ॥
चित्तात्तस्यां गतायां सा । सावधानाजवद्यदा ॥ तद्वाक्यवज्रघातेन । जातं शल्यमिवावहत ॥ ५४ ॥
हा हा संतापितः साधु—र्मया दुष्टं विचेष्टितं ॥ निंदंतीति स्वकर्माणि । रुदंती सा धवं गता ॥५५॥
ततागत्य तया सर्वं । स्वस्वरूपं निरूपितं ॥ समाकर्ण्याजवत्कंसः । कांदिशीको महानपि ॥ ५६ ॥
पश्चिमायां दिशायां चे—दहो कदाचिदंशुमान् ॥ उदियात्साधुवाक्यं न । तथापि विफलं भवेत ॥
॥ ५७ ॥ दध्यौ कंसो मृतेर्भीतो । यावत्कोऽपि न वेत्त्यदः ॥ गर्भान्न सप्ताप्यनुत्पन्नां—स्तावद्याचे
स्वमित्रतः ॥ ५८ ॥ न मे दास्यत्यसौ गर्भान् । देवक्या प्रार्थितो यदि ॥ तदोपायं करिष्येऽहं । परं
जीवितरक्षणे ॥ ५९ ॥ ध्यात्वेत्युत्पिंजलत्वं स । बिभ्रच्चित्ते मुखेऽपि च ॥ दर्शयन् वसुदेवाय । दू-
रादेव नमो व्यधात ॥ ६० ॥ समुत्पिंजलमालोक्य । कंसं शौरिर्जगावहो ॥ मित्रेदृशं स्वरूपं किं ।
वद त्वं सुहृदो मम ॥ ६१ ॥ मद्वचो वसुदेवोऽयं । प्रकरिष्यति वा न वा ॥ एवं संकल्पनां मुक्त्वा
। निःशंकं वद मे सुहृद् ॥ ६२ ॥ बहुधा वसुदेवेन । कंसस्येत्युदिते सति ॥ विनयी प्रांजलिर्भूत्वा
। सोऽवक् स्नेहलया गिरा ॥ ६३ ॥ केवलं त्वं न मे मित्रं । भ्राता माता पिता प्रभुः ॥ ऋद्धिर्वृद्धि-

शुरौकसि ॥ आसीज्जिगमिषुः शौरि—रादाय देवकीं ततः ॥ ४१ ॥ आगातां मथुरां शौरि—कं-
सौ नंदसमन्वितौ ॥ मित्रपाणिग्रहाहर्षे । कंसश्चक्रे निजे गृहे ॥ ४२ ॥ पूर्वं जनकदुःखेन । समा-
दत्तव्रतो मुनिः ॥ कंसानुजोऽतिमुक्तोऽगा—त्पारणे कंससद्मनि ॥ ४३ ॥ वर्षाकाले यथा नद्यो ।
मदकाले मतंगजाः ॥ यवना मद्यपानेषु । विवाहे च यथांगनाः ॥ ४४ ॥ तथा द्वेधापि सौवस्य ।
भर्तुर्मानेन मानिनी ॥ कंससीमंतिनी जीव—यशा अस्ति मदोद्धता ॥ ४५ ॥ तदा कंसनिशाते
स्व—पारणायागतस्य तु ॥ सा तपःकृशदेहस्या—तिमुक्तस्य गलेऽलगत् ॥ ४६ ॥ रे किं देवर सं-
सार-सुखेच्छा ते न यौवने ॥ अथवा किं त्वया त्यक्तं । स्वकीयमौढ्ययोगतः ॥ ४७ ॥ अथापि म-
यका साकं । त्वं रमस्व यथासुखं ॥ गीतगानैः फलादानै—र्विनोदैर्वरनर्तनैः ॥ ४८ ॥ गले जीव-
यशास्तस्य । लगित्वेति जगौ मुनेः ॥ गृहस्थस्येव बहुला । तया कृता कदर्थना ॥ ४९ ॥ शीतं
यद्यपि पानीय—मुष्णं स्यादग्नियोगतः ॥ शांतस्यापि तथा साधोः । क्रोधस्तस्याभवत्तदा ॥ ५० ॥
ज्ञानी मुनी रुषाब्रूत । रे किं वदसि दुर्मते ॥ उच्छृंखला मदोन्मत्ता । विह्वला पतिगर्विणी ॥५१॥
यदर्थं क्रियते गीत—गानादिरुत्सवस्त्वया ॥ तदीयः सप्तमो गर्भो । हंता ते पतितातयोः ॥ ५२ ॥

मुह्राय च सत्कृतः ॥ २८ ॥ देवक्या निजताततत्वात । प्रणतोऽसौ विशेषतः ॥ पुत्र्यजीष्टो वरस्तेऽस्तु । ददावित्याशिषं तदा ॥ २९ ॥ देव्यै देव इवावोच–द्देवको देवकीपिता ॥ प्रियेऽयाचत कंसोऽद्य । वसुदेवाय देवकीं ॥ ३० ॥ मया तस्य न दत्ता त—द्विप्रयोगात्सहिष्णुना ॥ श्राकर्ण्येति विषादेन । संपूर्णा देव्यजायत ॥ ३१ ॥ नारदोक्तगुणैश्चित्ते । प्रविष्टं तं पतिंविना ॥ मात्नूदन्यो वरः कोऽपी–त्यरोदीद्देवकी भृशं ॥ ३२ ॥ शौरावेव तयोश्चित्तं । विज्ञाय देवकोऽन्यधात ॥ पृष्टुमत्र समेतोऽस्मि । मा खेदं कुरुतं युवां ॥ ३३ ॥ देवी प्रोवाच यद्येवं । तदैषा भाग्ययोगतः ॥ स्वयमेव समेतस्य । शौरेरेव प्रदीयतां ॥ ३४ ॥ राज्ञेत्युक्ते नृपः प्रोचे । मंत्रिन्नानीय ताविह ॥ सत्कारयौकसो दानात् । प्रायः स्त्र्यनुचरो जनः ॥ ३५ ॥ स्वसुतादित्सया शौरे । राज्ञापि स्वार्थसाधिना ॥ तयोः सत्यापनारेन्ने । स्वार्थे ह्यादरकृज्जनः ॥ ३६ ॥ नैमित्तिकानथाकार्य । मुहूर्ते स्वामिनेङ्गिते ॥ देवक्या वसुदेवस्य । विवाहोऽज्नून्महोत्सवैः ॥ ३७ ॥ एकेन गोकुलेन स्या—द्गवां दशसहस्रकं ॥ सौरभेयीकुलान्येवं–विधानि दश यानि तु ॥ ३९ ॥ गोकुलानां पतिं तेषां । नंदं यशोदया युतं ॥ कोटिरत्नसुवर्णादि । देवकः शौरये ददौ ॥ ४० ॥ युग्मं ॥ श्रत्र मे तिष्ठतो मात्नू—द्विगानं श्व-

वस्ते । नृपादित्यप्यधीयत ॥ १७ ॥ आकर्ण्येति तया पृष्टं । वसुदेवोऽस्ति को भुवि ॥ सोऽवोचत्स
दशार्होऽस्ति । दशमो खेचरीहितः ॥ १८ ॥ वर्ण्यते बहुधा किं य—द्रूपापमानिताः सुराः ॥ जा-
नाना म्लानितामात्म—न्यदृश्यत्वमिवागमन् ॥ १९ ॥ नारदो वर्णयित्वेत्यु—भयोर्हितविचिंतकः ॥
तिरोदधे स्वविद्याभि—र्दैवतेव क्षणादपि ॥ २० ॥

क्रमेणाथ चलंतौ तौ । नगरीं मृत्तिकावतीं ॥ शौरिकंसौ समायातौ । न केनापि पराजितौ ॥
॥ २१ ॥ समाकर्ण्य समेतौ तौ । देवको वसुधाधिपः ॥ संमदात्संमुखं गत्वा । प्रावेशयदिमौ पुरि ॥
॥ २२ ॥ गृहमानीय तैलांबु—स्नापितौ भोजितौ पुनः ॥ समेतौ हेतुना केन । तौ नृपेनेत्यपृच्छ्य-
तां ॥ २३ ॥ कंसोऽवग्वसुदेवस्य । विवोढृगुणशालिनः ॥ उचितां देवकीं कन्यां । प्रदापयितुमाग-
तः ॥ २४ ॥ श्रुत्वेति देवकोऽवादी—न्नायं धर्मः सुनृस्पृशः ॥ आकारणंविना कन्या-विवाहाय य-
दागमः ॥ २५ ॥ अहं स्वयंवरे कन्यां । प्रदास्ये देवकीमिमां ॥ नापरस्मै मनुष्याय । सद्गुणभ्राजि-
नेऽपि च ॥ २६ ॥ तौ द्वावपि विलक्षास्यौ । स्वं बलं प्रविवेशतुः ॥ महतां मानभंगे हि । महद्-
दुःखं प्रजायते ॥ २७ ॥ शुद्धांतःस्वकशुद्धांत—माविवेश ततो नृपः ॥ विनयात्सहसा राज्ञ्या । स-

नं कः ॥ ५ ॥ द्वाभ्यामप्यथ गच्छद्भ्यां । दृष्टो वर्त्मनि नारदः ॥ तथा सैषोर्चितस्ताभ्यां । यथा स
प्रीतिमानभूत् ॥ ६ ॥ अर्चा हि प्रीतिकर्त्री स्या–दतः प्रीतः स नारदः ॥ तावब्रवीद्युवां कुत्र । च-
लितौ केन हेतुना ॥ ७ ॥ शौरिणाभाणि मां लात्वा । कंसो यात्येष सौहृदात् ॥ देवकीं देवकेश-
स्यो—द्वाहयितुं कुमारिकां ॥ ८ ॥ श्रुत्वेति नारदोऽवादी—त्कंसेनाकारि सुंदरं ॥ वसुदेवदेवक्यो
—र्योग्या योगविनिर्मितिः ॥ ९ ॥ नरेषु वसुदेवस्य । रूपमेकं विनिर्मितं ॥ तथैव पुद्गलैः सारै—
र्देवक्याः कामिनीषु च ॥ १० ॥ माभूद्विसदृशो योग । एतयोरिति वेधसा ॥ चिंत्यमानेन विहितं
। शर्करादुग्धयोगवत् ॥ ११ ॥ युवयोरुभयोर्योगे । धातापि ज्ञास्यति ध्रुवं ॥ स्वकीयोद्यमसाफल्यं ।
वैफल्यमन्यजंतुषु ॥ १२ ॥ विद्याधर्यस्त्वयाप्यूढा । विद्यंते बहवः पराः ॥ देवक्यंगुष्ठमात्रेण । ता ना-
र्हंति कलामपि ॥ १३ ॥ वरे सप्तगुणोपेते । देवक्या मिलिते सति ॥ प्रत्यूहव्यूहसंपादी । माभूत
कोऽपि विभेदकृत् ॥ १४ ॥ वसुदेवगुणान् गत्वा । देवक्यै कथयामि तत् ॥ मुनिः स इति संचिं-
त्यो—त्पत्यागाद्देवकीगृहं ॥ १५ ॥ अभ्युत्थानादिभिर्गेहा—गतोऽसौ पूजितस्तया ॥ विनयं नोत्तमे
मुंचे—द्विशेषाद्गृहमागते ॥ १६ ॥ तस्या आशीर्वचोदाना—वसरे नारदेन तु ॥ विवोढा वसुदे-

स्मिन् यस्मिन् स्थानके पूर्वमूढा—स्तस्मात्तस्मात्स्वाः समादाय कांताः ॥ विद्याभृद्भिः सेव्यमानो ग-
रिष्टः । शौरिः शौर्यं पत्तनं चाससाद ॥ २८ ॥ रोहिण्यां वै चारुपंचेंद्रियाणां । भोगान् भुंजानस्य
शौरेर्वभूव ॥ रामः पुत्रो निर्मितो वै विधात्रा । यो निःशेषाणां समादाय रूपं ॥ २९ ॥ इति पंडि-
तचक्रचक्रवर्तिश्रीराजसागरगणिशिष्यपंडितरविसागरगणिविरचिते श्रीप्रद्युम्नचरित्रे प्रद्युम्नकुमारपिता-
महवसुदेवपाणिग्रहणशौर्यपुरागमननिरूपको द्वितीयः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

## ॥ अथ तृतीयः सर्गः प्रारभ्यते ॥

एकदा वसुदेवोऽथ । मैत्रीं ज्ञापयितुं दृढां ॥ कंसेनाकारितः प्रीत्या । मथुरापुरमागमत ॥ १ ॥
द्वयोर्मिलितयोस्तत्र । जीवयशःसमन्वितः ॥ शौरिं प्रोचेऽन्यदा कंसः । पुर्यस्ति मृत्तिकावती ॥ २ ॥
पितृव्यो देवकस्तत्र । राज्यं पालयति प्रियं ॥ तस्यास्ति देवकी पुत्री । पुत्रीव सरितां विभोः ॥ ३ ॥
तस्याः सौभाग्यशस्यायाः । कुरु त्वं पाणिपीडनं ॥ यद्यहं त्वदभीष्टस्त—न्मा कृथाः प्रार्थनां वृथा ॥
॥ ४ ॥ तमित्युक्त्वास्य दाक्षिण्या—त्सकंसो वृष्णिनंदनः ॥ प्रचचाल वरीतुं तां । स्त्रियै यत्स्पृहते

विविक्ते वसुदेवाख्यो । रोहिणीमन्यदा जगौ ॥ पाणविकोऽप्यहं नृपां-स्त्यक्त्वा वृत्तः कथं प्रिये ॥ ॥ १६ ॥ सोचे प्रज्ञप्तिविद्यायाः । पूजां करोम्यहं सदा ॥ सोवाच दशमो भावी । दशार्हो रमण-स्तव ॥ १७ ॥ कथं स ज्ञायते पृष्टा । सावक्पटहवादनात् ॥ सर्वान् नृपांस्ततो मुक्त्वा । त्वमेवेश वृ-तो मया ॥ १८ ॥ समुद्रविजयाधीशे—ष्वासीनेष्वेकदा सभां ॥ आशिषं वसुदेवस्य । काप्यर्धज-रती ददौ ॥ १९ ॥ सवित्री बालचंद्राया । वर्तेऽहं वसुदेव सा ॥ त्वद्वियोगाग्निसंतप्त—देहा स्नेहा-कुला त्वयि ॥ २० ॥ वरं त्वदागमात्रेण । स्नेहिवद्दर्शनोदकं ॥ वर्षय त्वत्प्रसंगाब्दं । वायुनेव मये-रितः ॥ २१ ॥ आगृहीते तयेत्युच्चैः । समुद्रविजयाननं ॥ ददर्श वसुदेवोऽपि । यथाकथनकारकः ॥ २२ ॥ समुद्रविजयोऽवादी—ज्ञातर्व्रज परं त्वया ॥ सर्वेषां वल्लभत्वेन । स्थेयं न पूर्ववद्बहु ॥२३॥ समुद्रविजयादीशा—नथानुज्ञाप्य बांधवान् ॥ प्रचचाल तया साक-मातंकपरिवर्जितः ॥ २४ ॥ त-या कृप्तविमाने स । संस्थितो व्योमवर्त्मना ॥ प्रचलन् प्राप्तवान् ढंगं । नाम्ना गगनवल्लभं ॥ २५ ॥ समुद्रविजयोऽपीशा—मुक्त्वा कंससमन्वितः ॥ वसुदेवागमोत्कंठां । धरन् शौर्यपुरं ययौ ॥ २६ ॥ वप्त्रा कांचनदंष्ट्रेण । विद्याभृद्विभुनार्पितां ॥ बालचंद्रामुपायंस्त । वसुदेवो महोत्सवैः ॥ २७ ॥ य

ग्रहं युद्धे । मार्गणः प्रेष्यते नृपैः ॥ तत्पुरः प्रेषितस्तेन । स्वनामांकितमार्गणः ॥ ४ ॥ तं लात्वा वाचयित्वेषु—वर्णांश्च ज्येष्ठबांधवः ॥ न मे बंधुंविना कोऽपी—दृशः स्यादित्यमुमुदत ॥ ५ ॥ निर्गतः कपटेनैव । निजभाग्यं परीक्षितुं ॥ वसुदेवो नमत्येष । तुभ्यं भ्राम्यन्निहागतः ॥ ६ ॥ लघुरप्येष वा वृद्धः । पूर्णशक्तिधृतेरिति ॥ समुद्रविजयो मत्वा । मिलितुं बंधुमागमत् ॥ ७ ॥ विमुच्य गुरुवन्मान—मागछंतं निरीक्ष्य तं ॥ सोऽपि सन्मुखमागत्य । प्राणमत्तं तु शिष्यवत ॥ ८ ॥ वत्स वर्षशतेनैव । मिलितस्त्वं ममाधुना ॥ समुद्रविजयश्चेति । गदित्वालिंगयच्च तं ॥ ९ ॥ अतिष्ठोऽब्दशतं बंधो । क्वेति पृष्टो नृपेण सः ॥ यथाजातं स्ववृत्तांतं । स्वयमेवोदितोऽवदत ॥ १० ॥ तस्य स्वरूपमाकर्ण्य । प्रत्यक्षेण निरीक्ष्य च ॥ समुद्रविजयोऽतुष्य—द्विशेषाद्रुधिराधिपः ॥ ११ ॥ जरासंधोऽपि विज्ञाय । स्वसामंतसहोदरं ॥ चित्तात्पाणिविकभ्रांतिं । भ्रंशयामास सर्वथा ॥ १२ ॥ संतुष्टेषु समस्तेषु । हृष्टोऽथ रुधिरोऽपि च ॥ अकारयत्तयोः पाणि—ग्रहणं प्रवरे क्षणे ॥ १३ ॥ पूर्णेषु द्वाहकृत्येषु । जरासंधादिकाधिपाः ॥ पूजिता रुधिरेशेन । जग्मिवांसुः स्वमास्पदं ॥ १४ ॥ आगृह्य रक्षिताः संतो । यादवाः साधुवादिनः ॥ तत्रैव हायनं यावत । कंसेन सहिताः स्थिताः ॥ १५ ॥

बलीयान् समज्जूदयं ॥ तमेवादित एवासौ । बभंज सर्वतो बली ॥ ९२ ॥ केवलं पटहस्यैव । वाद-
कोऽयं न सर्वथा ॥ अतिशायी परं कोऽपि । पुमानेष प्रवर्तते ॥ ९३ ॥ शंकितात्मा जरासंधः । स-
मुद्रविजयं जगौ ॥ योग्यस्त्वमेव युध्यस्व । सहानेनाभिमानिना ॥ ९४ ॥ वामनं वामनीकृत्य । गृ-
हीत्वा तत्करात्स्त्रियं ॥ जितकासी त्वमेवात्र । सर्वस्मिन् कटके भव ॥ ९५ ॥ समुद्रविजयेशोऽपि ।
जरासंधमबीभणत् ॥ परस्त्रिया न मे कृत्यं । करिष्ये त्वद्गिरा रणं ॥ ९६ ॥ ततः स कटकं सज्जी-
कृत्य संग्रामसाधकः ॥ बभूव भूरिकोदंम—प्रचंडाखंममार्गणः ॥ ९७ ॥ पातालमधिगच्छंत—श्चेटकाः
पाणिपादयोः ॥ ऊर्ध्वं च मस्तकादीनां । माभूवन्मार्गणा रणे ॥ ९८ ॥ पश्यंति निर्जरा यत्रां—
तराल इव संस्थिताः ॥ तदेदृशं महाघोरं । रणं भ्रात्रोरजायत ॥ ९९ ॥ यस्य पुण्यबलं प्राज्यं ।
तस्यान्यस्य बलेन किं ॥ इति न क्षोभणं प्राप—द्वामनोऽप्यधिको गुरोः ॥ २०० ॥ यदि नायं म-
या सत्रा—पसरत्याहवादहो ॥ तदायं ज्ञायते कोऽपि । शक्तिमानन्यवेषभृत् ॥ १ ॥ निजं महत्त्व-
मेतस्मा—दक्षिष्यते मया कथं ॥ समुद्रविजयो याव—द्दध्यौ दृष्ट्वा चलद्दलं ॥ २ ॥ प्रदर्श्यते च-
मत्कारो । बांधवस्य निजस्य वै ॥ द्विषेव तेन सार्धं न । युध्यते बंधुना रणे ॥ ३ ॥ निषेद्धुं वि-

क्रुधोद्धतः ॥ समुद्रविजयादीशा—नुवाच सुभटोत्कटान् ॥ ८० ॥ अहो घृणाकरोद्भूत—न्यायात्प
ट्टवादनात् ॥ एतेषु सत्सु भूपेषु । वृतानेन नृपात्मजा ॥ ८१ ॥ तथाप्यस्य न संतुष्टिः । प्रजायते
दुरात्मनः ॥ प्रत्युत वक्रवाक्यानि । प्रजल्पत्येष वामनः ॥ ८२ ॥ ततो न प्रधरो भावो । सर्वथा
शिक्षया विना ॥ दीयतां केनचिच्छिक्षा । तदीयमुखभंजनात् ॥ ८३ ॥ रुधिरोऽप्यस्ति दुष्टात्मा । नृ-
पोद्वेगविधायकः ॥ आकारितेषु भूपेषु । दत्तवामनपुत्रिकः ॥ ८४ ॥ रागद्वेषमहादस्यू । शूरा वयं
यमा इव ॥ द्वावप्येतौ ततो यंतु । लोके सुभटमानिनौ ॥ ८५ ॥ जरासंधादिति श्रुत्वा । समुद्रवि-
जयादिकाः ॥ पूर्वं विलक्षवक्त्रत्वा—द्भूवुर्योद्धुमुद्यताः ॥ ८६ ॥ ह्यविद्याधराधीश—स्तदा दधि-
मुखाभिधः ॥ रथे सारथ्यमाश्रित्या—रोपयद्वसुदेवकं ॥ ८७ ॥ वेगवत्या तडिद्वत्यां—गारवत्या स-
मर्पिता ॥ आददे शौरिणा तूण—स्थिता तदेषुधोरणी ॥ ८८ ॥ जायमाने मिथः संख्ये । जरा-
संधस्य भूभुजः ॥ कटकं भंजयामास । रुधिरस्य क्षमेशितुः ॥ ८९ ॥ देहेऽपि चलितं दृष्ट्वा । रु-
धिरं रुधिरेशितुः ॥ कलया प्रेरयामास । तदा दधिमुखो हयान् ॥ ९० ॥ छेद्यते विषवल्ली चे—
दादावेव सुखार्थिना ॥ ततः प्रथममतोऽभांक्षी—दसौ शल्यनृपं दृढं ॥ ९१ ॥ अस्माकं सर्वसेनाया ।

ह्मिणी तस्य हर्षतः ॥ ६८ ॥ रोहिणीसहिते चंद्र । उदिते तारका इव ॥ आसन् सर्वेऽपि नृपाला—स्तस्मिन्नवसरे परे ॥ ६९ ॥ रटंति सिंहवत्केचित । केचिद्गर्जंति हस्तिवत् ॥ क्रुध्यंति हृदये केचित । कोपारुणविलोचनाः ॥ ७० ॥ तदावकोशलाधीशो । रुधिरंप्रति नृपतिं ॥ अहो अस्त्येष आजन्म । नूनं पाणविकः किल ॥ ७१ ॥ यदि पाणविको नायं । तेन पटहवादनात् ॥ कथं बाधिर्यकोपाभ्यां । सर्वेऽपि व्यालवत्कृताः ॥ ७२ ॥ मदनोत्कटता बह्वी । यदा जायेत योषितां ॥ तदा कृत्यमकृत्यं वा । वैकल्यतो न वेत्ति सा ॥ ७३ ॥ मन्यते स च रोहिण्या । सद्रूपनृपदर्शनात् ॥ त्यक्तवेशांस्तत एवास्य । कंठे चिक्षेप सा स्रजं ॥ ७४ ॥ इत्युक्ते रुधिरोऽरावीत । स्वयंवरणमंरूपे ॥ कन्या स्वकल्पितं कुर्या—न्न चान्यच्चित्तचिंतितं ॥ ७५ ॥ राजंस्तव विचारेण । सृतं वक्रोक्तिधारिणः ॥ कापि सांप्रतमन्यैव । प्रविधेया विचारणा ॥ ७६ ॥ अथावग्विदुरः सर्वे । किं वहंति विषण्णतां ॥ पृच्छयतां स्पष्टवाक्येना—स्यैव सर्वं कुलादिकं ॥ ७७ ॥ भृकुटीभीषणीभूया—भिदधाति स वामनः ॥ यादृशस्तादृशः सोऽहं । युष्माकं किमरे ततः ॥ ७८ ॥ इयं न रोचते कन्या । यस्मै मत्करपीडनात् ॥ सज्जीभूयात्स युद्धाय । करोमि तस्य चिंतितं ॥ ७९ ॥ तस्योत्कर्षवचः श्रुत्वा । जरासंधः

॥ ५६ ॥ तत्रास्ति रुधिरो राजा । द्विषद्रुधिरकर्बुरः ॥ धारिणी तस्य भार्यास्ति । जटींमन्यातिगर्वि-
णी ॥ ५७ ॥ रोहिण्यस्ति तयोः पुत्री । पवित्रतमशीलभ्रा ॥ अगण्यपुण्यलावण्या । स्पष्टसंतुष्टिव-
र्णिनी ॥ ५८ ॥ अयोग्यो वर एतस्या । मा भवत्वसमीहितः ॥ इति स्वयंवराटोप—स्तेन नृपेन
मंन्मितः ॥ ५९ ॥ स्वकीया बांधवाः क्वापि । कुत्रचिन्मंत्रिणस्तथा ॥ दूताः क्वापि च पूतास्याः । प्रे-
षितास्तेन नृभुजा ॥ ६० ॥ तदाकारणयोगेन । प्रतिविष्णुर्महाबली ॥ जरासंधः समायातो । बहु-
पुत्रनृपान्वितः ॥ ६१ ॥ समुद्रविजयं राजा । बांधवैरष्टभिः सह ॥ धृतराष्ट्रः शतैः पुत्रैः । पांडुश्च पं-
चभिः सुतैः ॥ ६२ ॥ विदुरो विदुरो लोके । परेऽपि च महीभुजः ॥ आययुर्न हि कः पाणि—ग्रह-
णायोद्यतो भवेत् ॥ ६३ ॥ गतेषु नवसु स्वीय—बांधवेषु स्वयंवरे ॥ यद्यहं न प्रयास्यामि । ममैव
हीनता तदा ॥ ६४ ॥ इतीवागतवान् लोक—हास्यवामनरूपभृत ॥ आडंबरेण सर्वेषां । तत्रागम-
नदर्शनात ॥ ६५ ॥ जरासंधादिनृपेषु । संस्थितेषु समंततः ॥ मध्यवर्ती बभूवासौ । मरालेषु बला-
कवत् ॥ ६६ ॥ समस्तेषु प्रपश्यत्सु । पटहस्तेन वादितः ॥ देवताधिष्ठितो देव—सान्निध्यात्किं न
सिध्यति ॥ ६७ ॥ तेजस्विनो महातेज—स्विनो नृपान् विमुच्य सा ॥ मालामारोपयत्कंठे । रो-

दि द्विट्रिभिवत्ततः ॥ ४५ ॥ यो जेष्यति पुमानावां । तस्यैव सुकलावतः ॥ उद्वाहं प्रकरिष्यावः । प्रतिज्ञायेति तिष्ठतः ॥ ४६ ॥ नदीसंनिभयोर्भूयः—कलाजलप्रपूर्णयोः ॥ वसुदेवसमुद्रस्य । पुरस्तात्किं बलं तयोः ॥ ४७ ॥ ततस्ते द्वे कलाभिः स । विजित्य पाणिपीडनं ॥ अकरोच्चतुरो मर्त्यः । स्वीकुर्याद्धि भुजार्जितं ॥ ४८ ॥ रतिप्रीतिमृगाक्षीभ्यां । सार्धं संकल्पभूरिव ॥ दीव्यंस्ताभ्यां समं कालं । सुखेनैवात्यवाहयत् ॥ ४९ ॥ तस्माद्विजयसेनाह्वा । रममाणा कियच्चिरं ॥ निंद्यत्वं भुवि वंध्यानां । विदंती गर्भमादधौ ॥ ५० ॥ शुभैः स्वप्नैः शुभैरेव । दोहदैः समये शुभे ॥ सुषुवे सुतरत्नं सा । रूपेण वसुदेववत् ॥ ५१ ॥ अक्रूरो दर्शने लोकै—र्दृश्यते स्पृश्यतेऽपि च ॥ अक्रूर इति तन्नाम । पितृभ्यां प्रददे मुदा ॥ ५२ ॥ सर्वत्र भोगिनां भोगाः । शास्त्रोक्तमिति संस्मरन् ॥ पुनर्भाग्यपरीक्षायै । ततोऽप्यग्रे चचाल सः ॥ ५३ ॥

अथ पर्यटतस्तस्य । कुतूहलविलोकिनः ॥ मार्गेऽभवन्न स ग्रामो । नगरं तन्न पत्तनं ॥ ५४ ॥ एकस्या वा द्वयोर्यत्र । तिसृणां वा मृगीदृशां ॥ न बभूव महाहर्षा—त्प्रायशः पाणिपीडनं ॥ ५५ ॥ युग्मं ॥ स्त्रीपाणिग्रहणान्यंगी—कुर्वन् कालेन भूयसा ॥ देवतावचनाद्भ्राम्यन् । सोऽरिष्टपुरमाप्तवान् ॥

प्रविष्टः शोकपाथोधौ । निःश्वासैर्जल्पति प्रभुः ॥ ३४ ॥ किं तनोत्येष निःश्वासा—नित्याशंक्य स-
होदरैः ॥ पृष्टं बंधो प्रभूतं च । किं ते निःश्वासकारणं ॥ ३५ ॥ नृपः पुनः पुनः पृष्टो—ऽवादीद्गद्ग-
दया गिरा ॥ अभूत्सौभाग्यगेहं म—त्प्राणाभो लघुबांधवः ॥ ३६ ॥ मानी दानी शुभध्यानी । ज्ञा-
नी केनापि हेतुना ॥ चितां कृत्वा प्रविष्टोऽसौ । वह्निना भस्मसादभूत् ॥ ३७ ॥ श्रुत्वेति बांधवाः
सर्वे—ऽप्यपरेऽपि च यादवाः ॥ समेऽपि नागरा लोका । वज्राहता इवाभवन् ॥ ३८ ॥ ततस्तद्भा-
ग्यसौभाग्या—न्संस्मरंतो गुणावलीः ॥ क्रंदंतो रुदतः सर्वे । मृतकार्याण्यकुर्वत ॥ ३९ ॥ स्वपुरस्ये-
ति लोकोक्त्या । प्रवृत्तिं विस्तृतां भुवि ॥ आकर्ण्य वसुदेवोऽगा—न्निःशंकः शुभ्रनिर्मितेः ॥ ४० ॥
मार्गे धन्यानि वन्यानि । ग्राम्याणि नागराणि च ॥ कौतुकानि प्रपश्यन् स । प्राप्तो विजयखेटकं ॥
॥ ४१ ॥ सुग्रीवस्तत्र सुग्रीवः । प्रजाहितो महीपतिः ॥ राज्यं निष्कंटकं भुंक्ते । हरंश्चौरपराभवान् ॥
॥ ४२ ॥ तस्य राज्ञश्चतुःषष्टि—कलाशास्त्रविचक्षणे ॥ प्रवर्तेते उभे कन्ये । श्यामाविजयसेनके ॥
॥ ४३ ॥ अयोग्योऽपि कलाप्राप्ता—वभिमानः कलावतां ॥ पुंसां यदि भवेत्स्त्रीणां । तत्किं ताभिर्न
सोऽधिकः ॥ ४४ ॥ आवां जेता कलाभिर्न । कलावान् कोऽपि पूरुषः ॥ दधारेते स्मयोद्रेकं । ह-

टीक्रियते मिथः ॥ २२ ॥ हितं यद्दूषणत्वेन । तन्मानवैर्विचिंत्यते ॥ तर्हि किं जीवितेनेति । व-
ह्नौ योऽत्र प्रविष्टवान् ॥ २३ ॥ मम सत्यमसत्यं वा । दूषणं चित्तचिंतितं ॥ समग्रं सहनीयं त—द्दु-
रुभिश्च पुरीजनैः ॥ २४ ॥ गुरूणां क्षामणार्थं स । लिखितामिति पत्रिकां ॥ स्तंभे बध्ध्वा चचाला-
ग्रे । वसुदेवो महामतिः ॥ २५ ॥ तमवर्त्मनि गच्छंतं । वीक्ष्य वाडववेषिणं ॥ गच्छंती तातवेश्माव—
काचित्कांता रथस्थिता ॥ २६ ॥ आरोपय रथे मातः । श्रांतमेनं द्विजोत्तमं ॥ तद्गिरारोपयामास ।
सा पुण्याय निजे रथे ॥ २७ ॥ सार्धमेव समानीय । रथस्थं तं स्वमंदिरे ॥ आतिथ्यं जनितं ता-
भ्यां । तैलकाभ्यंगनादिभिः ॥ २८ ॥ स्नात्वा भुक्त्वा सुखेनैव । तत्र स्थित्वा च वासरं ॥ रजन्यां
शयनार्थं स । जगाम यक्षमंदिरं ॥ २९ ॥ इतः शौर्यपुरे प्रातः । समुद्रविजयः प्रभुः ॥ शुद्धिं का-
रितवान् प्रेष्यै—र्वसुदेवगवेषणात् ॥ ३० ॥ इतस्ततः प्रपश्यद्भिः । सद्भिः सेवकसंचयैः ॥ वापीकूप-
तडागेषु । वनेषु च विलोकितं ॥ ३१ ॥ तथापि तस्य शुद्धिर्न । जीववत्प्रापि कुत्रचित् ॥ अ-
थैकेन श्मशानोर्व्याः । स्तंभे पत्रं निरीक्षितं ॥ ३२ ॥ समादाय ततः स्तंभा—च्चिंतातुरस्य भूपतेः
॥ त्वरितं निजहस्तेन । पत्रं तेन समर्पितं ॥ ३३ ॥ लिखितं वाचयित्वा त—द्वृत्तं सकलमप्यलं ॥

दत ॥ ११ ॥ मादृशीमपि यर्हि त्वं । विलगस्यंतराध्वनः ॥ पदमात्रमपि त्वत्तो । गंतुं नान्यास्तु शक्नुयुः ॥ १२ ॥ समुद्रविजयेशेना—यतिसुंदरबुद्धिना ॥ वरं मर्कटवद्गेहे । त्वं नियंत्र्यासि रक्षितः ॥ १३ ॥ श्रुत्वेति कुब्जिकावाचं । वसुदेव उदारधीः ॥ अरे नियंत्रणं मे कि—माक्रोशात्तामवीवदत् ॥ १४ ॥ तत आमूलचूलं सा । सर्वं व्यतिकरं जगौ ॥ गुह्यं न तिष्ठति स्त्रीणां । चित्ते दास्या विशेषतः ॥ १५ ॥

आकर्ण्य किंवदंतीं स । धृत्वा च निजचेतसि ॥ भृशं विचारयामासा—पमानोद्विग्नमानसः ॥ ॥ १६ ॥ अहो राजा निजं बंधु—मपि जानाति मां विटं ॥ स्त्रीलांपट्यादयं भ्राम्यन् । समस्तेऽस्मिन् पुरे ॥ १७ ॥ यद्येवं तर्हि किं मेऽत्रा—वस्थानेन प्रयोजनं ॥ विमृश्येत्यकरोद्बुद्धिं । परदेशदिदृक्षया ॥ १८ ॥ अतिक्रम्य दिनं रात्रौ । स क्षिप्त्वा गुटिकां मुखे ॥ कृत्वा वेषांतरं चासि—मादाय निर्ययौ पुरात ॥ १९ ॥ बहिर्निर्गत्य तेनैव । श्मशाने रचिता चिता ॥ मानरूग्येण मर्त्येन । किं किं न प्रविधीयते ॥ २० ॥ अरणीकाष्ठसंयोगा—द्रचयित्वा हुताशनं ॥ शबं निर्नायकं तत्र । दाहयामास वह्निना ॥ २१ ॥ विधीयते हितार्थेन । गुरुर्निर्थन्निजे जने ॥ दूषणत्वेन तल्लोकैः । प्रक-

देवस्य रूपेण । मोहिता योषितोऽखिलाः ॥ मर्यादारहिता जाताः । कार्मणेनेव संयुताः ॥ १००॥
येन केनाप्युपायेन । मंदिरे निष्कुटेऽथवा ॥ नित्यं स खेलतु स्वेछं । स्यात्प्रजारक्षणं यथा ॥ १ ॥
युष्मदीयां करिष्यामि । वांछामाश्वास्य तां प्रजां ॥ व्यसर्जज्जगतीजानी । राज्यप्रजाहितोद्यतः ॥
॥ २ ॥ सोऽन्यदा विनयात्तं च । प्रणामार्थमुपागतं ॥ संस्थाप्य बंधुमुत्संगे । गिरा स्नेहलयाब्रवीत्
॥ ३ ॥ बंधो केलिनिमित्तेन । बहिर्निर्गछति त्वयि ॥ शीतातपान्यदोषौघाः । कष्टयिष्यंति ते वपुः
॥ ४ ॥ ततोऽस्मन्मंदिराद्येषु । क्रीडां कुरु यथासुखं ॥ शस्त्रशास्त्रवराभ्यास—गीतनृत्यविनोदनैः ॥
॥ ५ ॥ यद्वाधीतां वरां विद्यां । संस्मर त्वं निरंतरं ॥ सरलो वरमित्युक्त्वा । नत्वेशं स गृहं गतः ॥
॥ ६ ॥ स्वकीयस्य च नृपस्य । प्रासादेष्वेव सर्वदा ॥ आरणाच्युतयोर्देवा—धिनाथ इव दिव्यति
॥ ७ ॥ अन्यदा निजपत्यर्थं । घृष्टचंदनमिश्रितं ॥ प्रेषयत्सुरभिद्रव्यं । दास्या सार्धं शिवा प्रिया ॥
॥ ८ ॥ आगछंती तदादाय । समुद्रविजयालये ॥ वसुदेवेन सा दृष्टा । पृष्टा दासि करेऽस्ति किं॥
॥ ९ ॥ सोचे संप्रेषितं देव्या । सुगंधिद्रव्यमस्त्यदः ॥ ग्रीष्मर्तुवपुरुत्ताप—व्यापव्यापादने क्षमं ॥
॥ १० ॥ विलेपयाम्यहं देहे । देहि तेन ममापि तत ॥ तेनेत्युक्त्वाददे गंध—द्रव्यं सा कुपिताव-

थितेऽपीति । नामोच्चयन्नशस्तधीः ॥ पूर्वजन्मनिदानेन । प्रत्युताभूद् रुषारुणः ॥ ८८ ॥ भुजंगमे यथा दुग्ध—पानं चापि भवेद्विषं ॥ मातुर्वाक्यं तथा कंसे—ऽभवत्क्रोधाधिकत्वकृत ॥ ८९ ॥ प्रायो गत्यनुसारेण । मतिर्भवेत्तनूभृतां ॥ एतस्यापि तथा ज्ञेया । धीर्हि गत्यनुसारिणी ॥ ९० ॥ जरासंधाज्ञया नृपः । समुद्रविजयाभिधः ॥ सहोदरैः समन्वीतः । समाययौ निजं पुरं ॥ ९१ ॥ श्रीमच्छौर्यपुरे वर्ये । वर्यपौरसमन्विते ॥ वसुदेवो देववर्यो । देववद्दिवि दिव्यति ॥ ९२ ॥ मोहिन्या विद्यया कृष्टा । इवानुयांति योषितः ॥ संतुष्टभूपतद्रूप—प्रविलोकनलालसाः ॥ ९३ ॥ प्रकुर्युर्या न मार्तंड—दर्शनमात्रमप्यहो ॥ संमुखं नापि पश्येयु-रन्यस्य पुरुषस्य च ॥ ९४ ॥ ता अप्यभिलषंतिस्म । निजभर्तृचिकीर्षया ॥ पतिव्रता अपि चक्रु—स्तस्य सौभाग्यवर्णनं ॥ ९५ ॥ यत्र याति स यत्रापि । तिष्ठति क्रीडति क्षणं ॥ मोहिता इतराः सर्वा । अप्यकार्षुस्तथैव ताः ॥ ९६ ॥ पौरीणां सर्वदा स्त्रीणां । दृष्ट्वा स्वरूपमीदृशं ॥ समुद्रविजयेशस्य । जगदुर्नागरा नराः ॥ ९७ ॥ चेन्न प्रजापते कुप्ये—र्विज्ञप्तीरवधारय ॥ प्रवदामो रहोवृत्त्या । वयं ते दुःखमात्मनां ॥ ९८ ॥ प्रजास्तु निजपुत्राच्च । बंधोरप्यधिकं हिता ॥ विचिंतयन् प्रजापालो—ऽवादीत्तानभिधीयतां ॥ ९९ ॥ वसु-

जामातः स्फुरत्सात—कृते याचस्व सत्वरं ॥ एकं नगरमापूर्णं । नृयिष्टद्रविणाकरैः ॥ ७६ ॥ अप-
राधंविना जात—मात्रस्यापि ममाखिल ॥ कारिता यदि तातेन । तावत्येवं विमंबना ॥ ७७ ॥ त-
र्ह्यहं मथुराराज्य–मेवार्थयामि सादरं ॥ यथा मद्वैरमादातुं । पितरं पीडयाम्यहं ॥ ७८ ॥ कंसेन शु-
द्धवंशेन । चेतसीति विचारतः ॥ ययाचे मथुराराज्यं । दत्तं च श्वशुरेण तत ॥ ७९ ॥ ततो जी-
वयशःपत्न्या । सहागान्मथुरां पुरीं ॥ पितरं पंजरे लोह—मये चिक्षेप दुर्मतिः ॥ ८० ॥ सोढुं न
शक्यतेऽस्माभि—र्नित्यं पितुर्विमंबना ॥ न पुनः शक्यते साकं । किमप्येतेन पापिना ॥ ८१ ॥
दुःखितेषु समस्तेषु । तनयेष्वतिमुक्तकः ॥ उग्रसेनस्य दुःखेन । वैराग्यादाददे व्रतं ॥ ८२ ॥ आ-
बाल्यात्पालयित्वाह—मृद्धिमेतावतीं यदि ॥ संप्रापितः सुभद्रेण । सभद्रेण कृपालुना ॥ ८३ ॥ त-
दुपास्तिकृतज्ञत्वा—त्तर्हि तस्य महात्मनः ॥ प्रत्युपकारितां कुर्वे । यथेच्छवसुपूरणात ॥ ८४ ॥ ततः
शौर्यपुरात्प्रेष्यै–राकार्य वणिजं वरं ॥ कंसः संतोषयामास । प्रत्युपकारको धनैः ॥ ८५ ॥ वत्सैतत्का-
र्यनिर्मित्यां । दूषणं न पितुस्तव ॥ मयैवाज्ञानयोगेन । निःशेषमपि निर्मितं ॥ ८६ ॥ ततः स्वकी-
यतातं म—त्प्राणनाथं निरागसं ॥ सुवासिनीत्वसद्देष—दातारं मोचय द्रुतं ॥ ८७ ॥ धारिण्या क-

था ॥ पत्रिका मुद्रिका तत्र । विलोकिता मया मुदा ॥ ६३ ॥ सैषेति कथयित्वासौ । सुभद्रः क्रय-
विक्रयी ॥ राज्ञे समर्पयामास । जातिज्ञानाय तद्द्वयीं ॥ ६४ ॥ दोहदस्यानुभावेन । मातृत्तातवि-
घातकः ॥ सपत्रमुद्रिकः क्षिप्त्वा । पेटायां वाहितोऽस्त्ययं ॥ ६५ ॥ पत्रिकालिखितं सर्वं । वाचयि-
त्वा महीभुजा ॥ उग्रसेनांगजोऽस्त्येष । नान्यस्येति विनिश्चितं ॥ ६६ ॥ अन्यथान्यस्य नो वीर्यं ।
संभवेदीदृशं तनौ ॥ तातवीर्यानुसारेण । प्रायो वीर्यं दिने दिने ॥ ६७ ॥ दोहदाद्विदितोत्पात—
भीतया निजभर्तरि ॥ धारिण्या सर्वमप्येतत । कंसे संभाव्यते कृतं ॥ ६८ ॥ समुद्रविजयेशोऽथ ।
कंसेन बलिना समं ॥ यात्वा सिंहरथं बद्धं । प्रददौ प्रतिविष्णवे ॥ ६९ ॥ स्वामिन् कंसो महायो-
द्धा । वोढा शास्त्राणि भूरिशः ॥ बलेन कलया चायं । बहुभ्योऽपि विशिष्यते ॥ ७० ॥ उग्रसेन-
सुतत्वेन । दधानेनातिशूरतां ॥ अनेनैव रणे जिग्ये । नृपः सिंहरथो ह्ययं ॥ ७१ ॥ कंसस्तुतिमि-
ति श्रुत्वा । समुद्रविजयोदितां ॥ जरासंधः सुतां तस्य । समभूद्दातुमुत्सुकः ॥ ७२ ॥ सम्यक्कुला-
दिकज्ञानात् । प्रमोदेन महीयसा ॥ प्रतिविष्णुसुतां कंसः । पाणिग्राहितवान्महैः ॥ ७४ ॥ निजजी-
वयशापुत्र्याः । पाणिविमुक्त्यनेहसि ॥ सुखं भोक्ता त्रिखंडस्य । कंसस्य श्वशुरोऽवदत् ॥ ७५ ॥ भो

तैषिणा ॥ ५१ ॥ जीवयशा इति ख्याता । जरासंधस्य या सुता ॥ पितृभर्तृकुलोछेद–कारिणी सा कुलक्षणा ॥ ५२ ॥ त्वयानीतोऽस्त्ययं बध्ध्वा । नृपः सिंहरथाभिधः ॥ तत्पारितोषिके तां ते । जरासंधः प्रदास्यति ॥ ५३ ॥ येन तेन प्रकारेणो—पायस्तत्कोऽपि चिंत्यते ॥ यथास्या विषकन्याया । निषेधः स्यात्त्वदंतिकात् ॥ ५४ ॥ ततोऽवग्वसुदेवस्तं । स्वामिन् सिंहरथं नृपं ॥ आनैषीत्समरे बध्ध्वा । कंसः प्राज्यपराक्रमः ॥ ५५ ॥ ततस्तस्यैव सा कन्या । दीयतां परितुष्टये ॥ स्वीकृतं च मुदा तेन । जरासंधस्य नृभृतः ॥ ५६ ॥ नास्य वणिक्सुतत्वेन । मदीशस्तां निजांगजां ॥ बलेन क्षत्रियत्वं च । दधतोऽस्यापि दास्यति ॥ ५७ ॥ तव देहात्समुत्पन्नः । पालितोऽस्त्यथवा सुतः ॥ आकार्य शपथं दत्वा । पप्रछ वणिजं नृपः ॥ ५८ ॥ सोऽप्याचख्यौ यदि स्वामिन् । सत्यं त्वं मम पृछसि ॥ आकर्णयास्य वृत्तांतं । त्वं यथार्थमथादितः ॥ ५९ ॥ कंसे स्वरूपमात्मीयं । श्रोतुकाम इव स्थिते ॥ स वणिक्कथयामास । वृत्तांतं वसुधेशितुः ॥ ६० ॥ कालिंद्यां वहमानागा—त्पेटा कांस्यमयी रयात् ॥ गतेन तत्र शौचार्थं । प्रातर्वीक्ष्याददे मया ॥ ६१ ॥ यावदुद्घाटिता गेहे । समानीय निरीक्षितुं ॥ तावद्देवकुमाराभं । बालकं दृष्टवानहं ॥ ६२ ॥ श्रीउग्रसेनधारिण्यो—र्नामधेयांकिता त-

॥ ३९ ॥ बालेन क्षीरपानं स्या—न्न तु संग्रामनिर्मितिः ॥ सिंहरथो गदित्वेत्य—धावत्सिंहपराक्रमः ॥ ४० ॥ उभौ युद्धं प्रकुर्वंतौ । जनता वीक्ष्य सादरं ॥ रावणलक्ष्मणाख्यौ किं । समेताविस्यशंकत ॥ ४१ ॥ अथ सारथितां त्यक्त्वा । परिघेण गरीयसा ॥ कंसः सिंहरथं नृपं । बभंज बलभाजनं ॥ ४२ ॥ असिं सिंहरथोऽपि—धावत्कंसवधाय सः ॥ क्रुद्धः स्वकोशतस्ताव—द्वसुदेवस्तमग्रहीत् ॥ ४३ ॥ गृहीत्वा च क्षुरप्रेण । दीप्रेण तीक्ष्णधारया ॥ मुंडितास्तच्छिरःकेशा । वेगात्तेन बलीयसा ॥ ४४ ॥ ततः सिंहरथं बध्ध्वा । भुजंगपाशबंधनैः ॥ चिक्षेप वसुदेवस्य । रथे कंसः सकैतवः ॥ ४५ ॥ श्वापदेषु समस्तेषु । यद्यपि केसरी बली ॥ तथापि वसुदेवस्य । पुरः सिंहस्य किं बलं ॥ ४६ ॥ ततः सिंहरथं लात्वा । नाशयित्वा च तच्चमूं ॥ विजयी वसुदेवस्तु । निजपुरं क्रमादगात ॥ ४७ ॥ समुद्रविजयो राजा । बांधवं जितकासिनं ॥ आगच्छंतं समाकर्ण्य । सन्मुखं समुपेयिवान् ॥ ४८ ॥ मनस्तुष्टिं प्रपन्नासु । समस्तासु प्रजासु च ॥ नृपः प्रवेशयामास । पुरांतस्तं महामहैः ॥ ४९ ॥ षट्कर्णीभवनान्मंत्रो । मा भिनत्तु कदाचन ॥ समुद्रविजयेनेति । भ्रातू रहसि भाषितं ॥ ५० ॥ बंधो क्रोष्टकिसंज्ञेन । ज्ञानिना स्वनिमित्ततः ॥ प्रोचे पूर्वजनुःपुण्या—न्ममायतिहि-

चिन्मार्गणसंयुक्ताः । केचिद्बाहुलसंगिनः ॥ जालिकाशालिकाः केचि—त्केचित्परिहितांशुकाः ॥
॥ २७ ॥ केचिद् गृहीतनाराचाः । केचिदादत्तकुंतकाः ॥ खड्गान्वितकराः केचि—त्केचित्कोदंडपा-
णयः ॥ २९ ॥ केचन मुद्गरारंभाः । केचित त्रिशूलशूरताः ॥ सुभटानां हि शस्त्राणां । भूयस्त्वेन
बलिष्टता ॥ ३० ॥ केचिन्मत्तगजारूढा । हयारूढाश्च केचन ॥ केचिचारुरथारूढाः । केचिच्चरणचा-
रिणः ॥ ३१ ॥ समुद्रविजयेशेन । रचयित्वेति वाहिनीं ॥ दत्वा च सुमुहूर्तेन । लघुबंधुर्व्यसर्ज्यत ॥
॥ ३२ ॥ संजातैः शकुनैः सद्भि—श्चलनानंतरं ततः ॥ वसुदेवोऽल्पकालेन । सीमां सिंहपुरो ययौ
॥ ३३ ॥ जरासंधमहीशस्य । निर्देशमुररीकुरु ॥ यदि नो तर्हि संग्राम—कृते सज्जीभव द्रुतं ॥
॥ ३४ ॥ तत्र स्थित्वेति दूतेना—ज्ञापि सिंहरथस्य तु ॥ सकंसवसुदेवेन । संतो न हि सकैतवाः ॥
॥ ३५ ॥ दूतोक्तवाक्यमाकर्ण्य । क्रुद्धः सिंहरथो बली ॥ युद्धाय निर्गतश्चभ्वा । सह मानेन सिंह-
वत् ॥ ३६ ॥ उभयोर्दलसंपर्के । पर्वराहर्कयोगवत ॥ उत्थिते रेणुभिर्जाता । सति सूर्येऽपि यामि-
नी ॥ ३७ ॥ रणांगणे रणत्तूर्य—ध्वाने चाम्लानविग्रहाः ॥ अनृत्यंश्च भटा रंग—मंडपे नर्तका इव
॥ ३८ ॥ जायमाने मिथो युद्धे—ऽक्षोभयत्तच्चमूं नृपः ॥ दधावे वसुदेवेन । कंससारथिना सह ॥

विष्णुना राज्यं । पाल्यते वैरिजिष्णुना ॥ अलंकरिष्णुना नूमे—राज्यभारसहिष्णुना ॥ १५ ॥ तदा सिंहरथस्तत्र । राज्यं करोत्यशंकितः ॥ दुर्धर्षः सिंहवद्धर्ष—प्रकर्षोऽमर्षभृद्रिपौ ॥ १६ ॥ तं शल्यवज्जरासंधं । स्वात्कुर्वाणमवेत्य च ॥ दूतेनादिशदत्यंतं । समुद्रविजयं नृपं ॥ १७ ॥ आनीयतां द्रुतं बध्ध्वा । दुष्टं सिंहरथं विभु ॥ अहं दास्ये पुरं चैकं । तस्य जीवयशःसुतां ॥ १८ ॥ सर्वं व्यतिकरं श्रुत्वा । द्रुतं दूतमुखादिति ॥ समुद्रविजयो जात—श्चिंतांचितः स्वचेतसि ॥ १९ ॥ विज्ञप्तं वसुदेवेन । तस्मिन्नवसरे भृशं ॥ नैतत्कृत्यं भवद्योग्यं । करिष्येऽदोऽहमेव च ॥ २० ॥ समुद्रविजयः प्रोचे । कनिष्टं बांधवंप्रति ॥ अद्यापि ते न संग्राम—समयो विद्यते किल ॥ २१ ॥ वयसः प्रौढिमा पूर्वं । ह्यधापि बलन्नरिता ॥ तथैव दीप्तशक्तिस्ते । युज्यते रणकारिणः ॥ २२ ॥ वसुदेवोऽवदत्स्वामिन् । युष्मत्प्रसादधारिणः ॥ सुसाधं भावि मे सर्वं । न किं हि सत्प्रज्ञावतः ॥ २३ ॥ सिंहेनेव बलिष्टेना—कर्ण्य तद्बांधवोदितं ॥ समुद्रविजयाधीशः । सेनासामग्रिकां व्यधात् ॥ २४ ॥ केषांचिच्छतयोधित्वं । केषां सहस्रयोधिता ॥ केषांचिल्लक्षयोधित्वं । केषांचिद्वीरमानिता ॥ २५ ॥ केचित्कवचसंयुक्ताः । केचित्सन्नाहधारिणः ॥ जंघात्राणयुताः केचि—त्केचिच्छीर्षण्यधारिणः ॥ २६ ॥ के-

तीर्थाधिनाथजीवस्य । च्यवनं स्वर्गलोकतः ॥ सुखायते समस्तानां । भृशं यत्र शरीरिणां ॥ ४ ॥
उच्छिन्नजन्ममृत्यूनां । प्रभूतानां स्वयंभुवां ॥ नव्यैः संपूरितं द्रव्यै–र्जन्मना पितृमंदिरं ॥ ४ ॥ सर्व-
सावद्ययोगानां । त्यागानेहसि तीर्थपैः ॥ दारिद्र्यं भेदितं नृणां । भूयिष्टद्रव्यदानतः ॥ ५ ॥ ज्ञा-
नावरणादिचतुः—कर्मणां क्षयसंभवात ॥ विलसत्केवलज्ञान–समुत्पत्तिरजायत ॥ ६ ॥ जातेऽपि
जिननिर्वाणे । तेषां गणधरादिभिः ॥ रक्षितः सौकृतः पट्टः । शिष्या गुर्वनुगा यतः ॥ ७ ॥ एवं
कल्याणकैर्जैनैः । पंचभिः सुखसंचयैः ॥ कल्याणानि प्रवर्धंते । यत्र देशे विशेषतः ॥ ८ ॥ यत्र
तीर्थाधिराजानां । विहारेण वरीयसा ॥ सप्तेत्युपद्रवा ध्वस्ता । सुषमारकवत्सुखं ॥ ए ॥ बहुधान्य-
समुत्पत्त्या । दुर्भिक्षभववार्तया ॥ उत्तमे कुप्रवृत्त्येव । न प्रासारि कदाचन ॥ १० ॥ तत्र पावित्र्य-
संयुक्ते । मगधे विबुधेहिते ॥ देशे सुरसुखावेशे । पुरं राजगृहं बृहत् ॥ ११ ॥ अष्टभिः कुलकं ॥
गतो बृहद्रथस्तत्र । क्रमात्तत्संततावपि ॥ राजा जटाद्रथो जातो । दीप्रतापप्रतापभृत ॥ १२ ॥ तत्सु-
तोऽभूज्जरासंधः । सत्यसंधः स्वभाषणे ॥ भारतीयत्रिखंडेशः । प्रतिविष्णुरनुष्णरुक् ॥ १३ ॥ विद्या-
धरतत्कांताढ्य—वैताढ्यशैलसन्निधौ ॥ पुरं सिंहपुरं चारु—लीलावलिविलासकं ॥ १४ ॥ श्रीपति-

तनूजेना—परैरप्यतुलैः सुतैः ॥ राज्यं प्रकुरुते प्राज्यं । समुद्रविजयः प्रभुः ॥ ७० ॥ अथ युधि-
ष्ठिरो भीमो । भीमोऽर्जुनोऽर्जुनोपमः ॥ नकुलः सहदेवाख्यो । विद्यते भूरिविक्रमः ॥ ७१ ॥ अमी-
भिः पंचभिः पुत्रै—र्हस्तिनागपुरे वरे ॥ पांडुभूपः सुखं भुंक्ते । जीवः पंचेंद्रियैरिव ॥ ७२ ॥ एवं
क्षोणिपतित्रयी विलसति त्रैलोक्यसाधारणे । खंडंगत्रितये नयेन निखिलाः संमोदयंती प्रजाः ॥
ऐशानी नयनत्रयीव जगति ज्योतिःप्रपंचावहा । सद्विद्यात्रितयीव सर्वमनुजे माहात्म्यसंश्लेषिणी ॥
॥ ७३ ॥ इति पंडितचक्रचक्रवर्तिश्रीराजसागरशिष्यपंडितश्रीरविसागरगणिविरचिते श्रीप्रद्युम्नचरित्रे
श्रीजंबूस्वामिप्रश्नवर्णनो नाम प्रथमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

—

॥ अथ द्वितीयः सर्गः प्रारभ्यते ॥

इतः पूर्वान्यदिग्भाग—द्विपुटा शुक्तिकेव च ॥ भाविनीतिलसन्मुक्ता—फला शुक्तिमती पुरी
॥ १ ॥ तस्यामभूद्वसो राज्ञः । सुवसुर्नंदनस्ततः ॥ गतो नागपुरे नंष्ट्वा । सोऽन्यदा पृथिवीपतिः ॥
॥ २ ॥ आसीत्तस्य सुतस्तत्र । बृहद्रथेतिनामकः ॥ दोर्दंडत्रासितानेक—वैरिभूपालमंडलः ॥ ३ ॥

ददाति च ॥ लाति पित्रोरुपालंभान् । रममाणः स सर्वदा ॥ ५८ ॥ बाल्यावस्थाप्रसंगेन । यादृग्बा-
लैर्वितीर्यते ॥ पितृभ्यां तादृशं शोभा—दिकमासाद्यते यतः ॥ ५९ ॥ सुभद्रो वसुदेवस्य । तत
उद्विग्नमानसः ॥ दशवर्षधरं कंसं । सेवाकृत्याय दत्तवान् ॥ ६० ॥ सेवकेभ्योऽपि सर्वेभ्यो । विशे-
षावर्जनादिना ॥ स ततः प्रीणयामास । वसुदेवस्य मानसं ॥ ६१ ॥ कंसेन सहितोऽप्येष । वसु-
देवो महोदयात् ॥ नित्यराहाश्रितश्चंद्र । इव प्रीतिधरो बभौ ॥ ६२ ॥ आसीत्कंसानुजा राजी—
मती राजीमतीद्युतिः ॥ नेमिना नवजन्मालि—स्नेहपालनहृत्सती ॥ ६३ ॥ उग्रसेनो द्विधाप्यत्र ।
राजीमतीलसत्पिता ॥ प्रजां मोदयते न्यायै—र्मथुराराज्यपालनात् ॥ ६४ ॥ दशस्वपि दशार्हेषु ।
मुख्यो ज्येष्ठः सहोदरः ॥ राज्यं शौर्यपुरे पाति । समुद्रविजयो नृपः ॥ ६५ ॥ तस्य राज्ञी महाप्रा-
ज्ञी । भूरिसेवकसेविता ॥ सुमुखी विदुषीमुख्या । प्रियास्ति नामतः शिवा ॥ ६६ ॥ सततं धनदा-
नेन । दुःखविध्वंसनेन च ॥ नीतिशिक्षाविधानेन । प्रजाः पाति पितेव सः ॥ ६७ ॥ सूर्यातीतप्र-
तापेन । भुवनव्यापिना भृशं ॥ अक्षोभ्यरिपुविक्षोभ—कारिणा स्थैर्यधारिणा ॥ ६८ ॥ आसमुद्रां-
तमुद्भूत—राजद्विजयधारिणा ॥ समुद्रविजयेत्याख्या । सत्या तेन विनिर्मिता ॥ ६९ ॥ महानेमि-

हीशस्य । पट्टराज्यस्ति धारिणी ॥ ४७ ॥ एकदामंत्रितस्यापि । मासक्षपणपारणे ॥ तापसस्य क्ष-माभर्त्रा । यत्कारितं न पारणं ॥ ४८ ॥ उग्रसेनक्षमायाहं । भूयांसमिति तद्भृशं ॥ निदानीकृत्य तज्जीवो । धारिणीकुक्षिमागमत ॥ ४९ ॥ पत्युर्वक्षःस्थलस्थं च । मांसमद्मीति दोहदः ॥ प्रारभ्य तद्दिनात्तस्या । मानसे समजायत ॥ ५० ॥ पूर्णीभूतेषु मासेषु । सासूत वैरिणं सुतं ॥ दास्याक्षे-पयद्भूपात—भयतः कांस्यसंपुटे ॥ ५१ ॥ मातुः पितुश्च नामांकां । मुद्रिकां पत्रिकांकितां ॥ क्षिप्त्वा रत्नानि चेयं तं । यमुनांबुन्यवाहयत् ॥ ५२ ॥ जातो मृतः सुतः क्षोणी—धवायेति शशंस सा ॥ पेटा सा वायुना नीय—माना शौर्यपुरं ययौ ॥ ५३ ॥ रसवणिक्सुभद्राख्यो । देहशौचार्थमीयिवान् ॥ तां पेटां वीक्ष्य कालिंद्या । आकर्षज्जलतो बहिः ॥ ५४ ॥ तस्यामुद्घाटितायां स । सपत्ररत्नमु-द्रिकं ॥ तेजसेव शिशुं सूरं । दृष्ट्वा बालममोदत ॥ ५५ ॥ समंजूषान्वितं बालं । समादाय निके-तने ॥ स्वकांतायै सुतत्वेन । पालनार्थं वणिग्ददौ ॥ ५६ ॥ गृहीतः कांस्यपेटातः । कंस इत्याह्वयः सुतः ॥ यथार्थो दंपतीभ्यां तु । ताभ्यां प्रादुष्कृतस्तदा ॥ ५६ ॥ प्रत्यहं वयसा तन्वा । प्रकृत्या कल-हेन च ॥ वर्धमानः प्रसिद्धोऽभू—त्स्वकीयैरेव लक्षणैः ॥ ५७ ॥ यष्टिमुष्टिपट्टगोली—बालकेऽसौ

शौर्यपुरमवासयत ॥ ३५ ॥ सुता अंधकवृष्ण्याद्या । बभूवुः शौरिभूभृतः ॥ भोजवृष्ण्यादयः पुत्राः । सुवीरस्यापि चाभवन् ॥ ३६ ॥ भोजकवृष्णये दत्वा । स्वराज्यं मथुरापुरः ॥ सौवीरपत्तनं न्यस्य । सिंधावस्थात्सुवीरराट् ॥ ३७ ॥ अंधकवृष्णिमात्मीये । राज्ये संस्थाप्य शौरिराट् ॥ प्रतिष्ठितयतेः पार्श्वे । प्रव्रज्य दिवमासवान् ॥ ३८ ॥ पालयतः सतो राज्यं । भोजवृष्णेश्च माथुरं ॥ उग्रसेनाभिधानोऽभ्र—स्थामधामसुतोऽजनि ॥ ३९ ॥ सुभद्राकुक्षिजा एतें—धकवृष्णेर्दशाभवन् ॥ समुद्रविजयः पूर्वो । ह्यनिद्रविजयांचितः ॥ ४० ॥ अक्षोभ्यशात्रवोऽक्षोभ्यः । स्तिमितः स्तिमिताशयः ॥ सागरश्चाकरः कांते—र्हिमवान् हिमकांतिरुक् ॥ ४१ ॥ अचलोऽचलधीर्दीनो—द्धरणो धरणो भुवि ॥ चंद्रवक्रोऽभिचंद्राह्वो । वसुदेवोंगदेवभः ॥ ४२ ॥ दशापि सुदशा आसन् । दशार्हा इति नामतः ॥ स्फुरत्पराक्रमाक्रांत—दोर्दंडाश्चंडताहृताः ॥ ४३ ॥ अनुजे प्रथिते तेषां । कुंतीमाद्र्यौ बभूवतुः ॥ तातः कुंतीं ददौ पांडो—र्दमघोषस्य मद्रिकां ॥ ४४ ॥ समुद्रविजये शौर्य—पुरराज्यं निधाय च ॥ प्रव्रज्य सुव्रतान्यर्णे—धकवृष्णिरयाद्दिवं ॥ ४५ ॥ भोजवृष्णिरपि स्वीय—राज्यं न्यस्योग्रसेनके ॥ मथुरायामदाद्दीक्षा—मतुच्छोत्सवपूर्वकं ॥ ४६ ॥ प्रजां पालयतः पुत्र—पुत्रीवन्मथुरापुरि ॥ उग्रसेनम-

जंबूस्वामिन आचख्यौ । प्रद्युम्नस्य चरित्रकं ॥ २४ ॥
चंद्रमंमलसंकाशे । रत्नराजिविराजिते ॥ वृत्ताकारतया कांते । विराजद्विजयाश्रिते ॥ २५ ॥
जंबूद्वीपे जगत्ख्याते । ध्यातेऽप्यमरनायकैः ॥ द्विलक्षयोजनायाम—लवणांबुधिभूषिते ॥ २६ ॥
योजनैः पंचशत्या च । षडशीत्या समन्वितं ॥ षड्भिः कलाभिराभाति । क्षेत्रं भरतनामकं ॥ २७ ॥
त्रिभिर्विशेषकं ॥ श्रीमतां तीर्थनाथानां । यत्र स्याज्जननादिकं ॥ अथवा यत्र जायंते । रामचक्रय-
र्धचक्रिणः ॥ २८ ॥ आर्यावर्तो जिनैः ख्यातः । स देशः क्लेशनाशनः ॥ तत्र नाम्नास्ति सौवीरो ।
देशो जनप्रमोदकः ॥ २९ ॥ तत्र चित्तपवित्राङ्गे । त्रस्तशात्रवसंहतौ ॥ अमरीकेलिकालिंद्या । र-
राज मथुरापुरी ॥ ३० ॥ चतुरा मथुरा सेयं । यमभीतिनिराकृता ॥ स्वस्वसूवासरागेण । भूरिभूभृ-
समाश्रिता ॥ ३१ ॥ हरिवंश्याद्वसुपुत्रा—त्तस्यां बृहद्भुजात्तथा ॥ भूतेषु भूरिभूपेषु । समभूद्भूप-
तिर्यदुः ॥ ३२ ॥ आसीदपि यदोः सूनुः । शूरः शूरमतिस्थितिः ॥ पुत्रौ शौरिसुवीरौ द्वौ । शूरस्या-
पि बभूवतुः ॥ ३३ ॥ प्राज्ये राज्ये मुदा शौरिं । यौवराज्ये सुवीरकं ॥ न्यस्य शूरोऽतिवैराग्या—
द्दीक्षां गृहीतवान्मुदा ॥ ३४ ॥ मथुरायास्तु साम्राज्यं । शौरिर्दत्वानुजाय च ॥ गत्वा कुशार्तदेशेषु ।

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीसांबप्रद्युम्नचरित्रं प्रारभ्यते ॥

( कर्ता—श्रीरविसागरगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

प्रणतमानवदानवनायकः । प्रथमतीर्थपतिः शिवदायकः ॥ विजितदुस्सहमन्मथसायकः । प्रकुरुतां मतिमस्तकषायकः ॥ १ ॥ जगति शांतिजिनः सुखकारकः । सकललोकभवांबुधितारकः ॥ हृदतमोविपदामयवारकः । सुरनरस्तुतदीधितिधारकः ॥ २ ॥ विषममन्मथमानविनाशकः । शुचियशा भुवनत्रयभासकः ॥ जयति नेमिजिनो जनशासकः । शिववधूकमनीयविलासकः ॥ ३ ॥ विकटसंकटपेटकपाटनः । प्रवरतां दधदस्तभवाटनः ॥ विगलिताखिलसंसृतिनाटनः । स्फुरति पार्श्वजिनो मदमोटनः ॥ ४ ॥ विनतमेरुगिरेरपि धीरतां । जलनिधेरपि भूरिगभीरतां ॥ रजसि कर्ममये

कारणं ॥ स्वोचितानि व्रतान्यंगी—कृत्वावपुर्गृहं जनाः ॥ १४ ॥ जंबूस्वाम्यथ संजात—श्रद्धो मुदितमानसः ॥ सुधर्मस्वामिनं सम्य—क्चतुर्ज्ञानं व्यजिज्ञपत् ॥ १५ ॥ श्रीअंतकृद्दशांगस्य । चतुर्थे वर्ग आदरात ॥ प्रज्ञप्ता जगवन् केऽर्थाः । श्रीवीरेण सविस्तराः ॥ १६ ॥ आस्तृशतोऽर्हतः पाद—सरोरुहमहर्निशं ॥ ममार्थाश्च समायाता—नायुष्मन् ब्रुवतः शृणु ॥ १७ ॥ तद्यथा—जालि १ मयालि २ उवयालि ३ । पुरिससेणे अ ४ वारिसेणे अ ५ ॥ पज्जुन्न ६ संब ७ अनिरुद्ध ८ । सच्चनेमी अ ए दढनेमी १० ॥ १८ ॥ पन्नासं पन्नासं । जज्जा जवइ अ बारसंगधरा ॥ सोलसं परिआया । सिद्धा सित्तुंजए दसवि ॥ १ए ॥ शब्दादिशास्त्रबोधारो । योद्धारो रणकर्मणि ॥ बलीयांसो बहुवांसो । दशैते सिद्धिगामिनः ॥ २० ॥ कंबुकंठः पुनर्जंबू—स्वामी जूमीशवंदितः ॥ अप्राक्षीत्क्षीणकर्मैक—मर्मा शर्मनिबंधनं ॥ २० ॥ श्रीमच्छत्रुंजये तीर्थे । सर्वतीर्थविजूषणे ॥ दशस्वेतेषु निर्वाणं । प्रद्युम्नः कथमासवान् ॥ २१ ॥ नगरी का गरीयासी—त्सुखान्यस्य च बिभ्रतः ॥ का माता च पिता को वा । को बंधुर्हृदयंगमः ॥ २२ ॥ इत्यन्यूनमपि स्वामिन् । स्वरूपं पंकवर्जितं ॥ सोत्साहं श्रोतुमीहेऽहं । युष्मद्वदनवारिजात् ॥ २३ ॥ श्रीसुधर्मा सुधर्माण—मध्वानं प्रदधत्ततः ॥

च समीरता—मतति वीरजिनस्य सुधीरता ॥ ५ ॥ इति मतिसुधनानां पंचतीर्थी जिनानां । प्रमु-
दितभुवनानां नम्रदेवांगनानां ॥ प्रणतसमजनेंद्राश्चोग्रबुध्यै जिनेंद्रा । घनतमसि दिनेंद्रा द्रव्यदाने
धनेंद्राः ॥ ६ ॥ मतिमहिमविधाना भारती भाप्रधाना । विशदगुणनिधानापादने सावधाना ॥ प्र-
विलसदभिधाना स्तूयमानावधाना । जनयतु विबुधानामिहितं शंदधाना ॥ ७ ॥ स्तुवदमरहरिभ्यः
क्षिप्तकर्मारिभ्यः । स्मयशिखरिपविभ्यः काममुक्ताकिरिभ्यः ॥ त्रिदशवरतरुभ्यः कामितार्थप्रदेभ्यः ।
स्वमतिजितगुरुभ्यस्तान्नमः श्रीगुरुभ्यः ॥ ८ ॥ प्रणिपत्य जिनाधीशान् । प्रातिहार्यविराजिनः ॥ श्रु-
तदेवीमजाभ्यां च । श्रीगुरून् सुकृताध्वनः ॥ ९ ॥ प्राज्या विष्णुसुता आसं—स्तेषु योऽभून्महर्द्धि-
कः ॥ विद्योपहारलीलाभिः । प्राग्जन्मसुकृतोदयात् ॥ १० ॥ स्वकीयपरबोधार्थ—मष्टमांगाद्गुरोर्गिरा
॥ श्रीप्रद्युम्नकुमारस्य । चरित्रं तस्य वक्ष्यते ॥ ११ ॥ त्रिभिर्विशेषकं ॥ जंबूद्वीपाभिधे द्वीपे । भरते
सुषमाश्रिते ॥ अभूच्चंपापुरी भूरि—भूरिसूरिविराजिता ॥ ११ ॥ पूर्णभद्रे लसद्भद्रे । चैत्ये नित्येऽसि-
तप्रदे ॥ तत्रैव समवासार्षीत् । पंचमो गणनायकः ॥ १२ ॥ नाकिनिर्मितकल्याण—नलिने संस्थि-
तः प्रभुः ॥ सुधर्मस्वाम्यथो तत्र । भव्यजीवानुपादिशत ॥ १३ ॥ तेनोपदिष्टमाकर्ण्य । धर्मं कैवल्य-

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीसांबप्रद्युम्नचरित्रं प्रारभ्यते ॥

( कर्ता—श्रीरविसागरगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

प्रणतमानवदानवनायकः । प्रथमतीर्थपतिः शिवदायकः ॥ विजितदुस्सहमन्मथसायकः । प्रकुरुतां मतिमस्तकषायकः ॥ १ ॥ जगति शांतिजिनः सुखकारकः । सकललोकभवांबुधितारकः ॥ हृढतमोविपदामयवारकः । सुरनरस्तुतदीधितिधारकः ॥ २ ॥ विषममन्मथमानविनाशकः । शुचियशा भुवनत्रयभासकः ॥ जयति नेमिजिनो जनशासकः । शिववधूकमनीयविलासकः ॥ ३ ॥ विकटसंकटपेटकपाटनः । प्रवरतां दधदस्तभवाटनः ॥ विगलिताखिलसंसृतिनाटनः । स्फुरति पार्श्वजिनो मदमोटनः ॥ ४ ॥ विनतमेरुगिरेरपि धीरतां । जलनिधेरपि भूरिगभीरतां ॥ रजसि कर्ममये

॥ श्रीजिनाय नमः ॥

# ॥ श्रीसांबप्रद्युम्नचरित्रं ॥

( कर्ता—रविसागरगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४३. विक्रमसंवत—१९७३. सने—१९१७.

किं. रु.-११-८-०

श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

# ॥ श्रीविमलनाथचरित्रं ॥

( संस्कृत—श्लोकबद्धं )

( कर्त्ता श्रीज्ञानसागरसूरिः )

छपावी प्रसिद्ध करनार.

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाला )

संवत्—१९६६. सने १९१०

किं. रु ९—०—०

॥ श्रीजिनाय नमः ॥

# ॥ अथ श्रीविमलनाथचरित्रं महाकाव्यं प्रारभ्यते ॥

( कर्त्ता श्रीज्ञानसागरसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

स्वस्ति श्रीवृषभं स्वर्ण—वर्णं वर्णनिषेवितं ॥ धर्मकर्मविधातारं । वंदे श्रीवृषभप्रभुं ॥१॥ ब्राह्मीमतः कलाधार—श्छायाभृद्वृत्ततास्पदं ॥ गोमंडलयुतो जीया—न्मृगलक्ष्मा जिनः सदा ॥ २ ॥ शिवानंदकरैश्वर्यं । समुद्रविजयोद्भवं ॥ श्रीमन्नेमीश्वरं नौमि । सेनानीगणपूजितं ॥ ॥ ३ ॥ सनातनो रुचेः स्थानं । पद्माकरजराजितः ॥ सुदेवोऽस्तु तमोहंता । श्रीपार्श्वः पुरुषोत्तमः ॥ ४ ॥ श्रीवीरं गुणगम्भीरं । धरं धीरंजितामरं ॥ समीरं नीरं संतापे । सेवे सीरंभयावनेः ॥ ५ ॥ केवलज्ञानविभवः । समहाः सगुणालयः ॥ विमलो ददतां हर्षं । तीर्थराजस्तथा परे ॥ ६ ॥ श्रीपुंडरीकप्रमुखाः । प्रमुखा गणधारिणां ॥ यच्छंतु पुंडरीकाद्रि—पुंमरीकोपमां मम ॥ ७ ॥ श्रीगौतमं गणधरं । शिवानंदं जनार्चितं ॥ नौम्यहं भावतः सर्व—मं-

गलानंददायकं ॥ ८ ॥ सरस्वतीमहं स्तौमि । बहुधान्योपकारिणीं ॥ घनागमप्रदां नित्यं । वर्षेवामृतवर्षिणीं ॥ ए ॥ ज्ञानदीप्राश्च सूरींद्राः । प्रसन्ना मे नवंतु ते ॥ यत्तेजसेह लक्ष्यंते । गहनागमकूपकाः ॥ १० ॥

वचोऽक्रमोऽपि यद्वच्मि । गुरुरेवात्र कारणं ॥ ब्रह्मतत्त्वविदस्तस्य । कृपया रचयाम्यदः ॥ ११ ॥ डुर्जना दुर्जया लोके । सदोक्ता हि शरा इव ॥ गुणारोपं विलोक्यैव । नैव तिष्टंति कस्यचित् ॥ १२ ॥ अथ चेद्दूषणोद्धारे । कुशलाः संति ते खलाः ॥ ग्रंथनिर्मलतादानात् । सतां सद्गुणकारिणः ॥ १३ ॥ दोषान्नावं रविरिव । स्वयं कर्त्तार एव ते ॥ अन्यर्थये सतां किं नु । कृत्वांजलिमिमां ततः ॥ १४ ॥ काव्यस्येवास्य काव्यस्य । सर्वदानवसद्गुरोः ॥ कृतांतजनकांतस्य । दृष्टिर्देया पदे पदे ॥ १५ ॥ युष्मद्दर्शनसंजाता–धिकशुद्धप्रनावतः ॥ यथा द्विगुणतेजस्त्वा–द्गुरोरप्यस्य मान्यता ॥ १६ ॥ तथाहि—संयता पंचेंद्रियता । मानुजो मानुजो नवः ॥ आर्यदेशश्चार्यदेशः । सुकृताशाकुलं कुलं ॥ १७ ॥ कायो रक्षितषट्कायो । [2]मानसं

१ आर्यदस्य शुन्नदस्य ईशः । २ । मानससर इव गंन्नीरमित्यर्थः ।

मानसं तथा ॥ अवंचनं च वचनं । धनं त्यागनिबंधनं ॥ १८ ॥ दारा सुदारा शालाश्च । विशालाः प्रवरा वराः ॥ सन्नंदना नंदनाश्च । चीवराणि वराणि च ॥ १९ ॥ देवो नतानेकदेवो । गुरुस्तत्वगुरुः सदा ॥ भूपालः सर्वभूपालः । सिंधुरा गंधबंधुराः ॥ २० ॥ [1]सैंदिराणि मंदिराणि । वाजिनो वेगभाजिनः ॥ [2]समायो व्यवसायश्च । स्वजनः सज्जनोऽखिलः २१ ॥ सदयं हृदयं चैव । वाक्पाटवमचाटवं[3] ॥ सौख्यमयः समयश्च । धर्माद्भवति निश्चितं ॥ २२ ॥ पभिः कुलकं ॥ ततः शुभार्थिना कार्यो । धर्मः शर्मकरः परः ॥ परं ह्यखंरूपाखंड–खंडितः सोऽधुना मनाक् ॥ २३ ॥

अतो विचार्य कार्योऽसौ । स्वहृदा सुहृदा सदा ॥ विचारसारं यत्कार्यं । तन्न वार्यं परैर्नरैः ॥ २४ ॥ यथा पर्वसु दीपाली । देवतासु सरस्वती ॥ गौतमस्वामी गुरुषु । मंत्रेषु प्रणवः[4] पुनः ॥ २५ ॥ तीर्थेषु चोज्जयंताद्रि–र्ग्रहेषु चंद्रमास्तथा ॥ अध्यात्मविद्या विद्यासु । सर्वलोकमता स्मृता ॥ २६ ॥ तथा सर्वेषु धर्मेषु । सर्वदर्शनदर्शितः ॥ परोपकारः संसार–सा-

१ लक्ष्मीसहितानि । २ सम्यग् आयो लाभो यस्मिन् । ३ चाटुभावरहितं । ४ ॐकारः।

रः सद्भिः प्रकीर्त्तितः ॥ २७ ॥ स चानेकप्रकारोऽस्ति । विश्वाधारो धरातले ॥ परं परोपदेश-स्य । तुलनां याति कोऽपि न ॥ २८ ॥ अतो हितोपदेशार्थं । किंचिद्वच्मि धियाल्पया ॥ वदन् बालोऽपि पूज्यानां । यद्भवेद्धर्षहेतवे ॥ २९ ॥ सुविस्तरेऽत्र सिद्धांते । सति किं कृतिरस्य वा ॥ यतोऽस्मिन् गोपतेर्गावः । स्तोकाः श्लोकार्थदा सदाः ॥ ३० ॥ तेन सूक्ष्मपदार्थानां । ज्ञप्तिः स्यात्कामुनाधुना ॥ नो वाच्यमिति यद्गेहे । प्रौढद्वारे प्रकाशिनि ॥ ३१ ॥ यथा क्षुद्रेण छिद्रेण । ज्ञानुना ह्यागता मिता[1] ॥ दर्शनं सूक्ष्मरेणवादेः । कुर्यान्ना ता तथा घनाः[2] ॥ ३२ ॥ त्रिभिर्विशेषकं ॥ मणयो हि पराकुर्युः । पुरा दोषोद्भवं तमः ॥ अधुना तत्पुनर्दीपै—स्त-स्मादेतन्मयोच्यते ॥ ३३ ॥ अंगोपांगैः पुराऽकुर्व—न्नुपकारं परेऽपरे ॥ स्वस्मिंस्त्वहं चरित्रेण । पूर्वकारानुकारिणा ॥ ३४ ॥ तद्यथा—

श्रीरत्नसिंहसूरीणां । सारं [3]व्याहारमाप्य च । मंदिरं कारयामास । श्रीशाणो रैवताचले ॥ ३५ ॥ नवीनं श्रयति स्वर्ण—कायं यः सेवनकृते ॥ तथापि विबुधाः सत्यं । विश्वरूपं वदंति

१ परिमिता, मनागित्यर्थः । २ सूरिज्ञानुज्ञास इत्यर्थः । ३ उपदेशं ।

यं ॥ ३६ ॥ स यत्र विमलस्वामी । चामीकरसमप्रभः ॥ सुरासुरनरैः पूज्यो । जयति प्रभु-
ताश्रितः ॥ ३७ ॥ श्रीमंडपात्समागत्य । स्वं सुवर्णं निरूप्य च ॥ यत्र श्रीअजितस्वामी ।
सौवर्णं वपुरादधे ॥ ३८ ॥ यत्र चिंतामणिः पार्श्व—श्चिंतामणिगणाधिकः ॥ चंद्रप्रभाजितौ
द्वारे । कायोत्सर्गधरौ परौ ॥ ३९ ॥ स्फुरत्समवसरणं । शरणं भवभीभृतां ॥ शरणं सर्वल-
क्ष्मीणां । भाति यत्र पवित्ररुक् ॥ ४० ॥ अंतःसमवसरणं । कथं माति कथेति का ॥ सम-
स्तसुंदरवती । जगती यस्य मध्यगा ॥ ४१ ॥ कांचनवर्णानिर्वर्ण्य—मास्त्वन्याः प्रतिमास्तथा
॥ कांचनबलानकाख्यं । बुधा यस्य वितेनिरे ॥ ४२ ॥ जितप्रासादमासाद्य । प्रासादं तं व-
रा नराः ॥ गतमादं प्रसादं के । न भजंति सृजंति वा ॥ ४३ ॥ नवभिः कुलकं ॥
तन्मध्ये श्रीविमलस्य । मूलनायकताभृतः ॥ त्रयोदशजिनेशस्य । चरितं मयकोच्यते ॥
॥ ४४ ॥ तद्यथा—तिर्यग्लोके विभात्युच्चै—र्मध्यस्थो वृत्तपशोलः ॥ पुण्याचारपरः साधु—रिव शा-
श्वत्क्रमाधरः[1] ॥ ४५ ॥ मद्दच्चित्रमसंख्याता—स्तदनंताश्रितानिह ॥ असंख्यान् द्वीपसमुद्रान्

[1] मेरुः ।

। संख्यावतो[1] वदंति यत् ॥ ४६ ॥ तेषूत्पत्तिर्विपत्तिर्वा । मानवानां न विद्यते ॥ असार्द्धद्वित-
यद्वीपं । नार्हतां गमनं तथा ॥ ४७ ॥ ग्रहादीनां पुनश्चारो । नो नगा नापगा अपि ॥ न
मेघवृष्टिर्नो शस्यं । बादराग्निर्नवाकराः ॥ ४८ ॥ तन्मध्ये सार्द्धद्वितय–द्वीपः श्रीप इवास्ति
च ॥ सुदर्शनचक्रधरः । कमलाकरमालितः ॥ ४९ ॥ पंचचत्वारिंशल्लक्ष–योजनायामविस्तृ-
तः ॥ मानुषोत्तरभूमांध्र–वेष्टितः परितः सदा ॥ ५० ॥ जायंते मनुजा अत्र ।
॥ षष्ठो वर्गो हि पंचम–वर्गगुणो विधीयते ॥ ५१ ॥ अंका भवंति यावंत–स्तावंतः स्यु-
र्जघन्यतः ॥ उत्कृष्टतः पुनर्ज्ञेया । कोटिकोटयः ॥ ५२ ॥ सप्ततिशतं जिनाना–मुत्कृ-
ष्टं चात्र लभ्यते ॥ विंशतिस्तु जघन्येन । ग्रहचारादिकं तथा ॥ ५३ ॥ साधिकस्य जनाश्चेह
। मुदं नोशुभभ्राजिनः ॥ संशोभितरसो बाढं । ददतां वा सुसाधवः ॥ ५४ ॥ शितौ प्रपति-
तं दृष्ट्वा । बृहद्भानुं तु सौंबरं ॥ भानुर्भ्रमति लात्वा स्वान् । राजापि तमनुव्रजेत् ॥ ५५ ॥
पंचदशकर्मभूमि–त्रिंशदकर्मभूमयः ॥ सुषट्पंचाशदंतर–द्वीपा अत्र प्रकीर्त्तिताः ॥ ५६ ॥

१ बुद्धिवंतः ।

॥ ६ ॥

अकर्मभूमौ मनुजा । नित्यं युगलधर्मिणः ॥ कल्पवृक्षफलाहारा । अंतरद्वीपिनस्तथा । ५७ ।
तत्र स प्रथमो जंबू–द्वीपः स्याल्लक्षयोजनः ॥ योगिव [1]योगसहितः । [2]पुरुषार्च्यसदालयः ॥
॥ ५८ ॥ अकर्मभूमयः षट् च । तिस्रः स्युः कर्मभूमयः ॥ द्वीपेऽत्र जंबूसन्नाम–वृक्षप्रासा-
भिधाज्जुषि ॥ ५९ ॥ वर्षाणि संति सप्तात्र । षड् वर्षधरास्तथा ॥ अष्टत्रिंशच्च वैताढ्या । म-
हानद्यश्चतुर्दश ॥ ६० ॥ विस्तारे दशसहस्र–मुच्चत्वे लक्षयोजनः ॥ स्वर्णवर्णोऽस्ति तन्मध्ये
। मेरुनामा महीधरः ॥ ६१ ॥ द्विलक्षयोजनायाम–लवणोदधिवेष्टितः ॥ अंतरद्वीपा अत्र
स्युः । सर्वेऽपि युगलान्विताः ॥ ६२ ॥ ततोऽस्ति धातकीखंडं । चतुर्लक्षमितं हितं ॥ षट् क-
र्मभूमयो ह्यत्र । द्विगुणा इतराः स्मृताः ॥ ६३ ॥ ततः कालोदधिश्चाष्ट–लक्षयोजनविस्तृतः ॥
तत्प्रमाणं च पुष्कर–वरद्वीपार्द्धमूहितं ॥ ६४ ॥ पूर्वप्रमाणा अत्रापि । स्युः कर्माकर्मभूमयः
॥ जंबूद्वीपंविनैकत्र । संमील्य द्विगुणं सृजेत् ॥ ६५ ॥ जंबूद्वीपस्य लक्षं य–त्तत्क्षेप्यं तत्र-
कोविदैः ॥ पंचचत्वारिंशल्लक्ष–मानं पूर्णं ततो भवेत् ॥ ६६ ॥ इतश्च—

१ पक्षे—यः अगैः पर्वतैः सहितः । २ पक्षे—पुरुषैरर्च्यश्च सर्वदा लयो ध्यानं यस्य ।

यत्खंममिव पत्राढ्यं । सच्छ्रीकं श्रीफलान्वितं ॥ सुमनःश्रेणिसंयुक्तं । [1]सुवयोभिः समाश्रितं ॥ ६७ ॥ पुन्नागपुंजसंयुक्तं । [2]साशोकं सवृषं तथा ॥ कुंजरासनसंपूर्णं[3] । [4]कनकप्रभरांकितं ॥ ६८ ॥ धात्रीयुतं सकरुणं[5] । सत्पूगं कमलोत्करं ॥ सवंशं सुविशालं च । सुशाखघनदालयं ॥ ६९ ॥ सत्संतापहरं वज्र—कलितं सरथद्रुमं ॥ तन्नाति धातकीखंड—मखंम्श्रीविराजितं ॥ ७० ॥ चतुर्भिः कलापकं ॥ महाविदेहद्वितयं । भरतद्वितयं तथा ॥ ऐरावतद्वयं यत्र । सुमेरुद्वितयं पुनः ॥ ७१ ॥ तस्मिन् श्रीधातकीखंमे । धातकीखंममंडिते ॥ शोभते प्राग्विदेहाख्य—क्षेत्रं क्षेत्रधरैः श्रितं ॥ ७२ ॥ पंचशतधनुर्देहाः । पूर्वकोट्यायुषः सदा ॥ तीर्थंकरा नराश्चान्ये । भवंत्यत्र बलातुलाः ॥ ७३ ॥ मानवा [6]मानवा यत्र । प्रमदाः प्रमदाः सदा ॥ साधवः साधवः साक्षा—ज्जंगमाऽजंगमास्तथा ॥ ७४ ॥ सूत्रधाराः सूत्रधारा । हरयो

---

१ पक्षे—सुपक्षिभिः । २ पक्षे हर्षसहितमित्यर्थः । ३ पक्षे—कुंजेषु रस्य कामसंबंधिन आसनैः संपूर्णं । ४ पक्षे—कनकप्रभया रया अभिनांकितं । ५ पक्षे—करुणनामवृक्षविशेषयुक्तं । ६ लक्ष्या नवाः ।

हरयोऽपि वा ॥ बहुलोहा बहुलोहा । धीवरा धीवरा अपि ॥ ७५ ॥ सेना सेना सबालाश्च ।
। बालाश्च सरसा रसा ॥ गंधर्वाश्च सगंधर्वा । वनानि सवनानि च ॥ ७६ ॥ सभूभृतो भू-
भृतश्च । साकरा आकरा अपि ॥ साश्ववारा अश्ववाराः । कलाश्च सकलाः पुनः ॥ ७७ ॥
कमलाकमलागारा । द्विधापि सप्रियाः प्रियाः ॥ क्रमाश्च सक्रमा नित्यं । संवराश्च ससंवराः
।७८। ईदृशे पूर्वविदेहे । [1]पूर्वविदेह भाषिते ॥ विजयो भरतो नाम । भरतक्षेत्रसन्निभः ॥७९॥
विभज्य क्षेत्रं यत्रोच्चै–र्गृहीत्वा शस्यसंपदं ॥ स्वाभिषेकं च वैताढ्यो । भूभृत्सु कृतवान् कि-
ल ॥ ८० ॥ तस्मिन् श्रीविजये प्राप्त–सुजये भरताह्वये ॥ महापुरीति विख्याता । जिताम-
रपुरी पुरी ॥ ८१ ॥ विहाराः सप्रतीहारा–स्तक्ताहारा[2]विभांति च ॥ तथा विहाराः साधूनां
। प्रतिमाभरभासुराः ॥ ८२ ॥ मुनयो यत्र राजंते । द्विधांगोपांगसंगताः ॥ सद्दर्शनासहृदयाः
। पुण्याः [3]सवरणास्तथा ॥ ८३ ॥ यत्र द्विधापि विबुधाः । सालंकाराः सलक्षणाः ॥ सत्सा-
हित्याः स्मृतियुताः । पुराणमतयस्तथा ॥ ८४ ॥ सतां मनांस्यनांसि च । मार्गगानि सरां-

१ पूर्वविदा श्रुतकेवलिनेत्यर्थः । २ त्यक्तचौर्यादिक्लेशाः । ३ वेष्टनयुक्ताः ।

सि वा ॥ सच्चक्रकलितान्युच्चै-र्जिनालययुतानि च ॥ ७५ ॥

तस्यां पुरि प्रशस्यायां । वश्यायां स्वामिनः सदा ॥ तीर्थकृज्जन्मभूमित्वा-न्नमस्यायां सुरासुरैः ॥ ७६ ॥ [1]सदानंदकरः प्रौढां । वहन् [2]बलयुतां श्रियं ॥ पद्मसेनमहीपालो । विष्वक्सेन इवाभवत् ॥ ७७ ॥ युग्मं ॥ कलासौम्यसदाचारैः । राजा राजेव[3] योऽजनि ॥ परं दोषाकरो नायं । न राकागमनादरः[4] ॥ ७८ ॥ प्रतापतपनो यस्य । करप्रकरभासुरः ॥ तद्युक्तं यन्निजान् मुक्त्वा । नवदेहकरो[5] परे ॥ ७९ ॥ [6]राजतुल्यं यशो यस्य । परांश्चक्रधरा-

१ पक्षे—सदा नंदनामा निधिः खड्गो वा करे यस्य । २ पक्षे—बलदेवसहितां । ३ चंद्र इव । ४ पक्षे—नूतनऋतुमतीस्त्रीसंगेऽनादरयुतः । ५ व्यंग्ये तु नवसंख्यदेहकरणातस्तस्य करप्रकरत्वं युक्तियुक्तं ध्वनितमिति । ६ चंद्रतुल्यं श्वेतवर्णोपेतमपि यस्य यशः परान् रिपून् चक्रधरान् कृष्णान् श्यामवर्णोपेतान् चक्रे इति विरोधः, परिहारे तु चक्रधरान् कुंभकारसदृशानकरोत्. स्वकीयांश्च हलधरोपमान् पीतवर्णोपेतानकरोदिति विरोधः, परिहारे तु कृषिवलानिवाकरोदितिगमनिका. ।

निव ॥ तन्न युक्तं स्वकीयान् य–श्चक्रे हलधरोपमान् ॥ ९० ॥ को दंडमिव कोदंडं । [1]मार्ग-
णान्नं च मार्गणं ॥ नामन्यतात्र स्वदृशा । जिते येन रिपुव्रजे ॥ ९१ ॥ लोकेभ्यो यो नयं
दत्ते । गुरुभ्यो विनयं पुनः ॥ व्यत्ययेन तु तस्मै ता–वददुः किमु संगतं ॥ ९२ ॥ दंडश्छत्रे
मणौ त्रासो । विवादे करपीडनं ॥ [2] रोषणे भंगवार्त्ता च । यस्मिन् रक्षति मेदिनीं ॥ ९३ ॥
विशदौदार्यगांभीर्य–धैर्यवीर्यादिभिर्गुणैः ॥ युतो नृपोऽन्यदा दध्यौ । मनस्येवं निशात्यये ॥
॥ ९४ ॥ यथा दृष्टिमतो दृष्टौ । सत्यां च स्वस्थताजुषि ॥ सूर्यं विना भवेन्नैव । सम्यग्दर्श-
नताद्भुता ॥ ९५ ॥

पानीये सत्यपि प्रायः । समुद्रस्य विधुं विना ॥ न स्याद्धनरसस्योच्चै–र्वृद्धी रत्नयुतस्य
च ॥९६॥ पाषाणरूपतापन्न–सुवर्णस्य धनंजयं ॥ विना संपद्यते नैव । लोके कल्याणनाम-
ता ॥ ९७ ॥ जनश्रुत्या नो कुर्कुट–कुंभकारशिशोर्यथा ॥ दृष्टिरुद्धटते कृष्ण–चित्रकं श्रूयते
विना ॥ ९८ ॥ अगुरोर्विबुधस्यापि । नापवर्गपदं यथा ॥ अतो धर्मगुरुः कोऽपि । चेत् स-

[1] भिक्षुकसदृशं । [2] हेमघर्षणोपले भषरभूमौ वा

मेति तदा वरं ॥ ९९ ॥ प्रातःकृत्यं च कृत्वासौ । सज्जां यावदभूषयत् ॥ एवं निर्माय धर्माय । चिंतां चित्तोद्भवां नवां ॥ १०० ॥ पंचेंद्रियसंवरभाग् । नवधा ब्रह्मगुप्तियुक् ॥ चतुःकषायनिर्मुक्तः । पंचाचारप्रपालकः ॥ १ ॥ पंचमहाव्रतरतो । गुप्तित्रयपवित्रितः ॥ समितीनां पंचकं च । दधन् धर्मधुरंधरः ॥ २ ॥ षट्त्रिंशता गुरुगुणै–रेवमन्यैस्तथाश्रितः ॥ ब्रह्मगुप्ताभिधः सूरि–र्भूरिसाधुपरिवृतः ॥ ३ ॥ आगात्तावद्बहिर्देशे । साकं भूपमनोरथैः ॥ यतः पुण्यवतां पुंसां । शीघ्रं फलति चिंतितं ॥ ४ ॥ चतुर्भिः कलापकं ॥

वनपालोऽवनीपाल–मथागत्य व्यजिज्ञपत् ॥ दिष्टयाद्य वर्द्धसे देव । गुर्वागमनजेन भोः ॥ ४ ॥ तदाकर्ण्य सकर्णोऽसौ । दत्वा चास्मै धनं बहु ॥ हर्षौत्सुक्यवशाद्देहे । रोमांचकवचं वहन् ॥ ५ ॥ हाराऽर्द्धहारकोटीर–कटकादिविभूषितः ॥ हस्तिनं च समारुह्या–श्ववारश्रेणिशोभितः ॥ ६ ॥ प्रधानमंत्रिसामंत–श्रेष्ठिसेनापतिश्रितः ॥ अंतःपुरीपुरीलोक–कलितः पत्तिपंक्तियुक् ॥ ७ ॥ गंधर्वगीतसंगीत–वारनारीभरान्वितः ॥ बंदिकोलाहलोत्ताल–वादित्रवराजितः ॥ ८ ॥ दीनादिभ्यो ददद्दानं । वरनेपथ्यभाग्नृपः ॥ श्रीगुरुं वंदितुं भक्त्या । युक्त्या

युक्तो वनं ययौ ॥ ९ ॥ पंचभिः कुलकं ॥ विहाय चामरे छत्र–मुकुटे शस्त्रवाहने ॥ गुरुद-
ष्टौ तदा पंचा–भिगमं कृतवान् स्वयं ॥ १० ॥ कांश्चन ध्यानसंयुक्तान् । परान् पाठपरायणा-
न् ॥ अन्यान् पाठनपरांश्च । कायोत्सर्गधरान् परान् ॥ ११ ॥ एवंविधान् स विबुधान् । वि-
विधाधेयधारकान् ॥ साधून् दृष्ट्वा सदाचारान् । राजा हर्षभरं दधौ ॥ १२ ॥ दत्वा प्रदक्षि-
णास्तिस्रो । गुरून् कल्पतरूनिव ॥ ववंदे जंगमान् राजा । विधिवद्विहितादरः ॥ १३ ॥ अ-
न्यान् धन्यान्मुनीन्नत्वो–चितस्थानस्थितो मुदा ॥ गुरूनाशातनाभीरू–राजा चैवं व्यजिज्ञ-
पत् ॥ १४ ॥ निर्ग्रंथोऽपि गुरुर्दत्ते । सुवर्णौघं सरत्नकं ॥ जगत्प्रभुः पुनः शेषं । ततस्तेनाधि-
कोऽसि मे ॥ १५ ॥ गुरुत्वं भवतां ज्ञात्वा । वसतिं वः समागतः ॥ कुरुताच्चमतः शीघ्रं ।
सादरं मामथाऽभयं ॥ १६ ॥ ततो गुरुरुवाचैवं । कविस्त्वं तेजसां पदं ॥ मा विषीद निषी-
दातः । पुरो देवगुरोः शृणु ॥ १७ ॥ एतत्प्राणिगणाधारो । गुणाब्धर्मसाधनं ॥ पर्वस्थितिर्गु-
रुर्दत्ते । सुवंशो [1]मौक्तिकं सुखं ॥ १८ ॥ मदीयः सुवंशोऽपि–भवतो यास्ति संप्रति ॥ तद-

१ पक्षे–मुक्तिसंबंधि ।

र्थिनां तु जीवानां । दुर्लभा भुवि सा यतः ॥ १९ ॥

अनादिरेष संसारो । जीवः कर्माणि वा तथा ॥ ब्रूते चेत्कोऽपि भो जीव—कर्मणोः प्रथमोऽत्र कः ॥ २० ॥ तत्पार्श्वे पृछ्यते पूर्वः । कुर्कुटांडकयोस्तु कः ॥ मृत्तिकास्वर्णसंयोगो । यथानादिस्तथानयोः ॥ २१ ॥ यथा पावकसंयोगा—त्स्वर्णं तस्याः पृथग्भवेत् ॥ तथा ध्यानानलबला—त्कर्मणो जंतुरेषकः ॥ २२ ॥ वनस्पतावयं जीव । उत्सर्पिण्यवसर्पिणीः ॥ अनंता वसति प्रायः । कायस्थित्या निरंतरं ॥ २३ ॥ अनंतान् पुद्गलपरा—वर्त्तांस्तत्र स पूरयेत् ॥ द्रव्यक्षेत्रकालभाव—भेदैस्ते स्युश्चतुर्विधाः ॥ २४ ॥ अकामनिर्जरायोगा—त्कथमप्युध्धृतस्ततः ॥ बादरनिगोदेऽनंतास्ता—स्तिष्ठेदव्यवहारवान् ॥ २५ ॥ पृथिव्यादिष्वसंख्यास्ता—विकले शरदः पुनः ॥ गणेयाः पंचेंद्रियेषु । सप्त चाष्टौ भवान् वसेत् ॥ २६ ॥

एवं कायस्थितिं विद्धि । सर्वेषां प्राणिनां परां ॥ तदनु स्यात्परावर्त्तः । कायतः कायवर्त्तिनां ॥ २७ ॥ व्यवहारप्रपन्नानां । स्थितिरेषा निगद्यते ॥ व्यवहारवर्जितानां । निगोदेष्वेव संस्थितिः ॥ २८ ॥ पृथ्व्यादयोऽत्र पंचापि । सूक्ष्माः सर्वत्र संत्यहो ॥ सूक्ष्मनिगोदसंज्ञेषु ।

परं सूक्ष्मवनस्पतेः ॥ २९ ॥ बादरास्तु यथास्थाने । ते भवंति त्रिविष्टपे ॥ साधारणवनस्येव । निगोदाख्या हि बादराः ॥ ३० ॥ साधिका निगोदभवाः । प्राणाः सप्तदश स्मृताः ॥ द्वाविंशतिः क्ष्माकाये ! जले सप्त वने दश ॥ ३१ ॥ वायौ वर्षसहस्राणि । त्रीणि वह्नौ त्रयो दिनाः ॥ । द्वींद्रिये समुदाहृताः ॥ ३२ ॥ दिना एकोनपंचाशत् । षण्मासाश्चतुरिंद्रिये ॥ पंचेंद्रिये पुनर्ज्ञेया–स्त्रयः पल्योपमा बुधैः ॥३३॥ त्रिभिर्विशेषकं ॥ सुरनारकयोर्मध्ये । त्रयस्त्रिंशच्च सागराः ॥ एवं भवस्थितिर्विज्ञै–रुत्कृष्टा गदितागमे ॥ ३४ ॥ दशवर्षसहस्राणि । सुरनारकयोर्भवः ॥ अंतर्मुहूर्त्तमन्येषां । जघन्ये द्वे स्थिती पुनः ॥ ३५ ॥ स्थितिगत्यागतीः कुर्वन् । जीवयोनीः पुनः पुनः ॥ चतुरशीतिलक्षांका । जीवः सर्वाः प्रपूरयेत् ॥ ३६ ॥ आसु सर्वासु सर्वाशा–पूरको मानुषो भवः ॥ दुष्प्रापः स्याच्च जंतूनां । दृष्टांतैर्दशभिर्भृशं ॥ ३७ ॥

तत्राप्यनार्यबाहुल्या–दार्यदेशस्तु दुर्लभः ॥ यथा वृक्षेषु कल्पद्रु–श्चिंतामणिर्मणिषु च ॥ ३८ ॥ तस्मिन्नपि सुवंशाप्ति–र्धर्मकर्मसुकर्मठा ॥ यतः कुलप्रमाणं च । शीलं भवति भू-

स्पृशां ॥ ३९ ॥ पुरे वासो मुदावासो । गुरुवासपवित्रिते ॥ याहग्वासस्तथाऽभ्यासो । यतो लोकेऽपि कीर्त्यते ॥ ४१ ॥ धीजितामरगुरूणां । परोपकृतिकर्मणां ॥ गुरूणां श्रीगुरूणां च । संयोगोऽगण्यपुण्यतः ॥ ४१ ॥ पंचेंद्रियतापटुता । कटुतावर्जिताद्भुता ॥ धर्मोपदेशश्रवणं । श्रवणामृतपारणं ॥ ४२ ॥ ततोऽपि च श्रद्दधानं । प्रधानं परमं मतं ॥ कायो निरामयो धर्म-कर्मोपायो भवेऽकृतः ॥ ४३ ॥ आलस्यादिपरित्यागः । मागःप्राणिषु दुर्लभः ॥ तथा धर्मनृपप्राप्तौ । काष्टिकास्तु त्रयोदश ॥४४॥ दूरेऽस्तु धर्मकरणं । तरणं भवतोयधेः ॥ पक्षपातोऽपि धर्मस्य । स दुःखे सुखदायकः ॥ ४५ ॥

निर्धने धनदाता चा-ऽसहाये प्रवरः सखा ॥ सुबुद्धिरिव सर्वस्मिन् । जंतौ भवति निश्चितं ॥ ४६ ॥ कोऽयं सुबुद्धिरित्येवं । पृष्टे राज्ञा गुरुर्जगौ ॥ पृथ्वीभूषणनगरं । राजते राजतेजसा ॥ ४७ ॥ नदारा अप्यनुदारा:[१] । सांगजा अप्यनंगजाः ॥ धनदा अप्यधनदाः । पावका अप्यपावकाः ॥ ४८ ॥ कुशला अप्यकुशला । नीतिज्ञा [२]अप्यनीतयः ॥ यत्र लोका

१ अनुवर्त्तंते दाराः स्त्रियो येषां । २ ईतयोऽनावृष्टयादयस्ताभी रहिताः

वसंत्युच्चै–स्तत्रापि ह्यविरोधिनः ॥ ४९ ॥ युग्मं ॥ तस्मिन् पुरे श्रीप्रवरे । लंकापुरीविजित्व-
रे ॥ सासारः पंककृत्स्फुर्ज–त्कंदलो दुर्दिनप्रदः ॥ ५० ॥ जितशत्रुर्महीपालो । वर्षाकाल इ-
वान्नवत् ॥ परं स जीवनोपाय–स्तेन मान्यः प्रजासु यः ॥ ५१ ॥ युग्मं ॥ चतुर्बुद्धिनि-
धिः कामं । चतुर्धाधर्ममर्मवित् ॥ सुबुद्धिनामा तस्यासी–न्मंत्री मंत्रविशारदः ॥ ५२ ॥ त-
स्य बुद्धिबलेनासौ । प्राज्यं राज्यं करोति यत् ॥ लोके सर्वबलेभ्योऽपि । गरीयः स्याद्बलं धि-
यः ॥ ५३ ॥ न जानंति जनास्तस्मिन् । मति दंडोद्भवं भयं ॥ करोऽपि सुकरो जज्ञे । चौ-
रवार्त्तापि नार्त्तिदा ॥ ५४ ॥ क्रूरोऽपि राजा सौख्याय । सगुणे सेवकव्रजे ॥ सौम्योऽपि दुष्ट
तस्मिन् । व्यालाक्रांतद्रुमो यथा ॥ ५५ ॥ सुबुद्धित्वात्सदा लोके । धर्मवार्त्तां करोत्यसौ ॥ वि-
शेषात्तामथारेभे । सभ्राभ्राजि नृपेऽन्यदा ॥ ५६ ॥ धर्मं पर्वमिवासाद्य । सगुणं वरवंशजं ॥
रिपौ रोषमकुर्वाणा । अपि पौरुषभ्राजिनः ॥ ५७ ॥ भवेयुः प्रबला विश्वे । पुरुषाः पुरुषोत्त-
माः ॥ अबलास्तु शिलाकाया । अपि नार्हंति पौरुषं ॥ ५८ ॥ युग्मं ॥ धर्माद्वरकुलोत्पत्ति–
र्धर्मात्स्युः सर्वसंपदः ॥ धर्मात्प्रभुत्वमैश्वर्यं । तीर्थकृत्त्वं च धर्मतः ॥ ५९ ॥ अन्यच्च यच्छुभं

वस्तु । त्रैलोक्ये सचराचरे ॥ धर्मप्रसादात्तत्सर्वं । भवतां भवति स्फुटं ॥ ६० ॥
तत् श्रुत्वा नृपतिः प्राह । कूटमेतत्त्वयोदितं ॥ यद् हृद्यं त्रिषु लोकेषु । तत्सर्वं पापतो
यतः ॥ ६१ ॥ जीवान् हन्मि मृषा वच्मि । गृह्णाम्यन्यधनं बलात् ॥ ततो मे राज्यवृद्धिः
स्या-दतः पापाच्छुभं भवेत् ॥ ६२ ॥ मंत्री ततोऽवदद्राजन् । भानुश्चेत्पश्चिमाचले ॥ उदे-
ति च शीतो वह्निः । स्यात्तदा पापतः शुभं ॥ ६३ ॥ जीवघातादिना यत्ते । राज्यवृद्धिः प्र-
जायते ॥ तदपि प्राच्यपापानु-बंधिपुण्यप्रभावतः ॥ ६३ ॥ पुण्यानुबंधिपुण्याच्च । पापानुबं-
धिपुण्यतः ॥ द्विधापि राज्यं भवति । नरकांतमपि ह्ययं ॥ ६४ ॥ चोरोऽपि चौरिकां कुर्वन्
। लभते यद्धनं बहु ॥ तत्फलं तदपि ज्ञेय-मन्यथा याति मस्तकं ॥ ६५ ॥ राजा प्राह भुवं
गेहे । तव याः संपदः सदा ॥ कस्य प्रसादात्ता ब्रूहि । मंत्री प्रोवाच धर्मतः ॥ ६६ ॥ मद्दत्ताः
सोऽवदच्चैता । धर्मदत्ताः प्रभाषसे ॥ तदा मदीया मह्यं त्वं । दत्वान्यत्र व्रजाशु भोः ॥ ६७ ॥
देशे मदीये न स्थेयं । क्रेयं नैव क्रयाणकं ॥ याच्ञा न कार्या कस्यापि । धर्मादेवार्जय श्रियः
॥ ६८ ॥ पापाच्चेन्मन्यसे लक्ष्मी-स्तदात्र तिष्ठ शिष्ट हे ॥ ददामि द्विगुणास्तेऽमू-रर्द्धराज्यं च

संप्रति ॥ ६९ ॥ तत् श्रुत्वा सोऽवदद्राजन् । न वदामि धनाप्तये ॥ अन्यालीकमपि प्रौढं । धर्मासत्यं ततः कथं ॥ ७० ॥ ब्रह्महत्यादिपापानि । यानि देहोद्भवानि वै ॥ तेषां शुद्धिर्भवे-त्तीर्थ-गमनात्तपसस्तथा ॥ ७१ ॥ कुधर्माधर्मदुष्कर्म-स्थापनस्थानजान्यहो ॥ वाचिकानि तु यानि स्यु-स्तेषां शुद्धिः कुतोऽपि न ॥ ७२ ॥ तीर्थकृतो हि छद्मस्थाः । कुर्वंति कायिकीं क्रियां ॥ परं मौनावलंबं ते । व्रजंते भुवि निश्चितं ॥ ७३ ॥ यतः—शामकः कायिको दोषः । प्रायोऽत्यर्थस्तु वाचिकः ॥ यतः पश्चादवस्थायि । व्यापकं च वचो जने ॥ ७४ ॥ गृहाण मम सर्वस्वं । पापजेन ह्यनेन किं ॥ परदेशेऽप्यहं गत्वा—ऽर्जयिष्ये धर्मजं धनं ॥ ७५ ॥ ग्रहसारं ततो राज्ञे । दत्वा नत्वा जिनं तदा ॥ शिक्षयित्वा कुटुंबं स्वं । सचिवः प्रस्थितो गृहात् ॥७६॥ अजानन् धर्मभावेन । क्षुत्तृष्णामार्गजं क्लमं ॥ परमेष्टिमहामंत्रं । स्मरन्मंत्री चलत्यसौ ॥ ॥ ७७ ॥ नृपदेशं नृपादेशा—न्मुक्त्वा गादन्यमंडलं ॥ प्रसादजनकं जैन—प्रासादं तत्र चासवान् ॥ ७८ ॥ नैषेधिकीप्रमुखोद्ध—दशकत्रितयं वरं ॥ विधाय विधिना देवं । स्तोतुमेवं प्रचक्रमे ॥ ७९ ॥

॥ १९ ॥

सुरासुरनराधीश–महितं सहितं गुणैः ॥ अर्हंतं रहितं दोषै–र्हितं सर्वेष्वहं स्तुवे ॥७०॥
शंभुस्त्वं चेत्तदाधीश । [1]भवानीहितकृद्भव ॥ [2]अनंगमंगयुक्तं य–त्तनोषि नदिहाद्भुतं ॥ ७१ ॥
जिन त्वं चेत्तदा जिष्णु–र्जगन्नाथोऽस्तु वा भवान् ॥ जनार्दनो जलशयो । नासि तन्मेऽत्र
चित्रकृत् ॥ ७२ ॥ स्वयंभूरथ वा त्वं चेत् । सुरज्येष्ठस्तदा भव ॥ तत्ते न शोभते शंभो । ना-
सि यन्मे भवांतकृत् ॥ ७३ ॥ जिनेश चीवरं हित्वा । [3]शचीवरनिवेशितं ॥ अंबरं ध्यायसि
त्वं किं । शून्यमुक् शून्यताश्रितं ॥ ७४ ॥ लब्धोऽस्युपाधिना येन । ह्रस्वं मा कुरु तं विभो
॥ चेत्करोषि तदा छिंधि । छद्मस्थो न भवामि यत् ॥ ७५ ॥ त्वत्संताने सकर्माहं । न लेभे
केवलश्रियं ॥ सर्वस्वं लेभिरे पूर्वे–स्त्वत्तोऽकर्मन्निरीश किं ॥ ७६ ॥ संस्तवं च स्तवं कर्त्तु–म-
ज्ञानोऽहं न वेद्मि ते ॥ सर्वज्ञोऽपि वदान्योऽपि । किं न त्वं रासि मे प्रियं ॥ ७७ ॥ अंतरगा-
रिषड्वर्गं । हंसि बाह्यानुपेक्षसे ॥ किं त्वं वा कारणं ज्ञातं । किंकरास्त्वद्धतस्य ते ॥ ७८ ॥
येऽचिंत्यत्वत्स्वरूपज्ञा । वीतरागं वदंतु ते ॥ त्वां सरागमहं वच्मि । विश्वरंजनहेतुना ॥७९॥

१ पक्षे—संसारानिच्छितकृद्भव । २ अशरीरिणं सिद्धं । ३ इंद्रन्यस्तं

योगान्निरुध्य योगं त्वं । पुरांगीकृतवान् किमु ॥ रायं कृत्वा सकल्याणं । कल्याणं व्रजसे कथं ॥ ९० ॥ पुण्यवतां पुण्यदस्त्वं । पापहर्त्ता च पापिनां ॥ जगत्प्रभो प्रजारूपे । मयि माध्यस्थ्यमत्र किं ॥ ९१ ॥ द्विधापि सवितेवासि । वरसंवरदानतः ॥ अतःपरं विदेहं मे । क्षेत्रं दर्शय गोचरैः ॥ ९२ ॥ ईनं वदंतु केऽपि त्वां । जितवान्मे द्विधा बुधाः ॥ अनयावर्च-या किंमो । मोहं दूर करेत्वहं ॥ ९३ ॥

त्रिकालविदपीमं किं । वेत्सि नो भाविनं विशं ॥ परमेष्ठिन् यतस्तस्थे । हंसेन चरसि स्वयं ॥ ९४ ॥ विश्वेऽत्र विबुधास्तेऽर्चां । सुमनोभिः प्रकुर्वते ॥ एकेषां सिद्धिमन्येषा-मृद्धिं दत्से परत्र किं ॥ ९५ ॥ रागोऽयं रोचते नो चे-द्धेऽहं यं तवोपरि ॥ तर्हि मे समतां यच्छ । यथा त्वत्समतां श्रये ॥ ९६ ॥ इति साधारणनाम । स्तवनं भवनं वियामधीते यः ॥ जिन-साधारणकारण-पदवी न दवीयसी तस्य ॥ ९७ ॥ इति साधारणस्तवनं ॥ जिनेशस्तवनं शस्तं । श्रुत्वाधिष्ठायकः सुरः ॥ हृष्टः कष्टच्छिदेऽस्योच्चै-श्चेतस्येवमचिंतयत् ॥ ९८ ॥ कोऽयं स्तौतीह सर्वज्ञं । सर्वज्ञस्तुतिगोचरं ॥ इति ज्ञातुमुपयोग-मवधेर्दत्तवान् सुरः ॥ ९९ ॥ द्वि-

॥ २१ ॥

धापि विबुधः सोऽयं । सुबुद्धिं च द्विधापि तं ॥ ज्ञात्वा धर्मविधौ धीरं । वीरक्रमनिषेविनं ॥ ॥ १०० ॥ विचारचतुरः सोऽयं । शासनोन्नतिहेतवे ॥ वीराधिष्ठायकस्तस्मै । कामकुंभं ददौ मुदा ॥ १ ॥ सुवृत्तं सुमनःशोभं । कामितार्थप्रदायकं ॥ मूर्तं पुण्यमिवादत्त । कामकुंभं स निर्मलं ॥ २ ॥

इमं कामघटं विश्वे । दुर्घटं पापशालिनां ॥ दर्शयित्वा नृपस्योच्चैः । कुर्वे धर्मप्रभावनां ॥ ३ ॥ लोकानां स्थिरता धर्मे । भविष्यत्यधुना ध्रुवं ॥ इत्थं विचार्य सचिवो । ववले स्वपुरंप्रति ॥ ४ ॥ अत्यौत्सुक्यवशात्तस्य । रात्रावप्यटतः सतः ॥ मिलितश्च छलान्वेषी । कोऽपि रात्रिंचरोऽन्यदा ॥ ५ ॥ तं दृष्ट्वा धीसखः साक्षा—न्मार्दवादिगुणान्वितः ॥ मातुलेति वचः प्रोच्य । ज्योत्कारं कृतवान् कृती ॥ ६ ॥ यतः—मृदुभिर्नम्रतामेत्य । परतापं हरंति ये ॥ तान् धृत्वा नदीपूरः । पातयत्येव पादपान् ॥ ७ ॥ राक्षसोऽपि ततोऽवोच—त्कालोऽयं कुनयस्य न ॥ बुभुक्षाक्षामकुक्षिर्मे । महामांसं समर्पय ॥ ८ ॥ सचिवस्तद्वचः श्रुत्वा । तं जगौ सदयाशयः ॥ सश्लोको हि शुको नास्ति । पतत्प्राण्यपि भोः पलं ॥ ९ ॥ विबुधत्वात्सुधादोऽ-

सि । पलादोऽसि कुकर्मणा ॥ लोकेन कर्मणा नाम । प्राणिनां प्रणिगद्यते ॥ १० ॥ अपवि-
त्रं सदा मांसं । परं पापकरं तथा ॥ अतो मुंच पलाहारं । त्वं च पुण्यजनोऽसि यत् ॥ ११ ॥
क्षुधा चेद्बाधते वाढं । त्वां च तच्छांतये तदा ॥ दिव्याहारान् गृहाण त्वं । मत्प्रदत्तान् मुदेप्सि-
तान् ॥ १२ ॥ तत् श्रुत्वा राक्षसो दध्यौ । मानवो मत्प्रियं कथं ॥ आहारं दास्यतीह द्राक् ।
पातयामि ततश्छले ॥ १३ ॥ रक्षः प्राह विचिंत्येति । भवत्वेवं परं यदि ॥ नो ददासि ममा-
भीष्ट—मत्स्यामि त्वां तदा ध्रुवं ॥ १४ ॥ धीसखो गदतिस्मोच्चै—रेतदेवास्तु सांप्रतं ॥ राक्ष-
सेन ततो यद्य—द्याचितं दुर्घटं स्फुटं ॥ १५ ॥
कामकुंभप्रभावेण । तत्तत्तस्य प्रपूरितं ॥ ततः सविस्मयोऽवोच—त्कुणपस्तंप्रति प्रगे ॥
॥ १६ ॥ त्वया मानवमात्रेण । पूरितं चिंतितं मम ॥ ब्रूहि कस्य प्रभावेण । स्वभावेन तु
नेदृशं ॥ १७ ॥ कामकुंभस्वरूपं स । कथयामास [1]मास्पदं ॥ यातुधानः पुनः प्राह । दंभो
मेऽस्ति प्रभावयुक् ॥ १८ ॥ यो याति कथिते स्थाने । स्वयं वैरिजयं तथा ॥ कृत्वा तत्र स-

1 लक्ष्मीस्थानं

मन्येति । यत्रास्ति प्रेषकः प्रभुः ॥ १९ ॥ अन्यदपि प्रचंडं यत् । कृत्यं कृत्यविदो भवेत् ॥ तदखंडमसौ कृत्वा । दंडोऽन्येति स्वमाश्रयं ॥ २० ॥ देहि मे कामकुंभं त्वं । विधेहि सुमित्रतां ॥ दंडं लाहि जनान् पाहि । याहि त्वं स्वपुरं वरं ॥ २१ ॥ तेन तद्वचसा शीघ्रं परावर्त्तः कृतस्ततः ॥ दंडं लात्वा पुनर्मंत्री । चचालाचलपुण्यभाक् ॥ २२ ॥ कियत्यपि गते मार्गे । सचिवो दंडमूचिवान् ॥ विजित्य राक्षसं मेऽद्य । कामकुंभं समानय ॥ २३ ॥ तथाकृतेऽथ दंडेन । मंत्र्येकस्मिन् पुरे गतः ॥ बहिस्तत्र महानेकः । श्रीसंघोऽस्ति निवासितः ॥ ॥ २४ ॥ श्रीसंघे निर्भये तत्र । सुप्ते सौप्तिकमागमत् ॥ तद्भयाद्रक्षकाः सर्वे । पलायांचक्रिरे तदा ॥ २५ ॥ लुंट्यमानेऽथ संघे स । प्रेक्षावान् प्रेष्य दंडकं ॥ हत्वा चौरान् मुदा गौरान् । स संघपुरुषान् व्यधात् ॥ २६ ॥ प्रभाते परया भक्त्या । श्रीसंघं सकलं कलं ॥ निमंत्र्य भोजयामास । वस्त्राणि च तथा ददौ ॥ २७ ॥ संघपतिस्तदा हृष्टो । व्रणसंरोहिणीं वरां ॥ औषधिं मंत्रिणेऽयछत् । मानपूर्वमपूर्वरुक् ॥ २८ ॥ तद्वस्तुत्रियतं लात्वा । गत्वा च नगरं निजं ॥ सुखेन स्वगृहे तस्थौ । धर्मध्यानपरायणः ॥ २९ ॥

अथागतं स तं ज्ञात्वा । कामकुंभादिसंयुतं ॥ कियन्मुखात्पुना राजा । न च नक्तंच-
रार्दितं ॥ ३० ॥ तदा धर्मपरीक्षायै । बीजपूरद्वयं स्वयं ॥ आनाय्य राजा चैकस्मिन् । रत्न-
मेकमचिक्षिपत् ॥ ३१ ॥ युग्मं ॥ यथास्थं तद्द्वयं शाका-पणे दास्याः शयेन तत् ॥ विक्र-
यार्थं गूढवृत्त्या । प्रेषयामास भूपतिः ॥ ३२ ॥ सचिवस्य तदा दासी । तत्र शाकार्थमागता ॥
रत्नयुतं बीजपूर-माददे चाल्पमूल्यतः ॥ ३३ ॥ द्वितीयं तु यथावस्थं । राजदासीभयाल्ललौ
॥ न कोऽपि च तदा राज्ञे । सायमादाय सा ददौ ॥३४॥ रिक्तं निरीक्ष्य तेनोचे । द्वितीयं के-
न चाददे ॥ सा जगाद मंत्रिदास्या । ततो मौनमयं दधौ ॥ ३५ ॥ कामकुंभप्रभावेण । नि-
शायां मंत्रिणा तदा ॥ सुवर्णकलशाकीर्ण-मेकविंशतिभूमिकं ॥ ३६ ॥ मत्तवारणशोभाढ्यं
। गवाक्षव्रातसंकुलं ॥ विशालं चंद्रशालाढ्यं । विचित्रं चित्रसंयुतं ॥ ३७ ॥ सौधं निर्माय नि-
र्मायः । कर्मस्थानसमन्वितं ॥ विचितं रत्नसंपूर्णं । तस्थे स्वस्थेन चेतसा ॥ ३८ ॥ त्रिभिर्वि-
शेषकं ॥ धामधामभिरुद्योते । विहिते सति सर्वतः ॥ मेरुपर्वतशंकाभी-र्दिग्जालभवाथवा
॥ ३९ ॥ राज्ञश्चित्ते च लोकानां । प्रभाते पृथिवीपतिः ॥ ततो विमर्शयामास । मेरुः स्याद्-

॥ २६ ॥

चलः क्षितौ ॥ ४० ॥ इंद्रजालं कियत्कालं । चिरकालं पुनस्त्विदं ॥ अतो न ज्ञायते सम्यग्। दैवतं वा किमद्भुतं ॥ ४१ ॥ त्रिभिर्विशेषकं ॥

एवं चिंतयतो राज्ञ । उदितेऽर्के स धीसखः ॥ स्थालं प्रपूर्य रत्नौघैः । प्रतोलीद्वारमाययौ ॥ ४२ ॥ प्रतीहारेण राज्ञोऽग्रे । स्वरूपेऽस्य निरूपिते ॥ असौ विस्मयमापन्नः । प्रवेशादेशमादिशत् ॥ ४३ ॥ सोऽथ राजसभां गत्वा । नत्वैतच्चरणांबुजं ॥ तत्पुरतोऽमुंचच्चंच—त्स्थालं रत्नचयांचितं ॥ ४४ ॥ किमेतदिति राज्ञोक्ते । जगाद सचिवाग्रणीः ॥ पुण्यस्य फलमेतद्धि । विद्धि सिद्धिनिबंधनं ॥ ४५ ॥ पुनः पृष्टेन वृत्तांते । वितते कथिते सति ॥ सचिवेन ततो नृप—श्चमच्चक्रे स्वचेतसि ॥ ४६ ॥ लोभाभिभूतचित्तोऽथ । नृपः प्रोवाच मंत्रिणं ॥ मह्यं कामघटं देहि । गेहिगेहविभूषणं ॥ ४७ ॥ मंत्रीजगावहो राजन् । पापिनां गोचरोऽपि न ॥ नायांति कल्पवृक्षाद्या । गेहे स्थितिरतः कुतः ॥ ४८ ॥

राजावदद्विचारेण । स्वधिया कल्पितेन किं ॥ अग्रे सर्वं भलिष्येऽहं । वितर त्वरितं त्विमं ॥ ४९ ॥ सचिवो नृपतेर्मत्वा । दुर्ग्रहं च कदाग्रहं ॥ निमंत्र्य स्वगृहे शीघ्रं । भोज-

थित्वार्पयच्च तं ॥ ५० ॥ महेन महता राजा—ऽनीय स्वीयगृहे च तं ॥ उत्कटैः सुभटै रक्षां
। कारयामास सादरं ॥ ५१ ॥ प्रभाते तेन दंडेन । वैरिघातकरेण सः ॥ स्वगृहे चानयामास ।
कामकुंभं कृतादरः ॥ ५२ ॥ ततो राज्ञा हृदि ज्ञातं । सत्यं जातं वचः शुचि ॥ सचिवस्य
परं चासी—द्भूया मे सुभटक्षयः ॥ ५३ ॥ ये घातविधुराः संति । तेऽपि जीवंति चेत्तदा ॥ वरं
चित्ते विमृश्येति । स धीसखमथाह्वयत् ॥ ५४ ॥ तत्स्वरूपं निवेद्यासौ । सचिवेनौषधीयुजा
॥ सज्जानचीकरत्सर्वा—नुपकारपरेण तान् ॥ ५५ ॥ अज्ञोऽप्यन्यः स धन्योऽत्र । यः स्वमित्रं
सुरक्षति ॥ कुकर्मादल्पमेधावी । नैवं किंधीसखोऽप्यहं ॥ ५६ ॥ अन्यदा पुण्यदानार्थी । स-
चिवः स्थिरसौहृदः ॥ स्वचित्ते संदधार्येति । राजानं पुनरूचिवान् ॥ ५७ ॥ युग्मं ॥ धर्मं वि-
ना सुवंशोऽपि । लकुटोपमतां व्रजेत् ॥ [1]गोगणस्य स पीडायै । गोपाल त्वं विचारय ॥५८॥
प्राप्तेऽपि वंशजे धर्मे । [2]जीवारोपविवर्जिते ॥ [3]विग्रहांतर्गताराति—जयो नृणां न जायते ॥
॥ ५९ ॥ धर्माधारा धराधीश । धरान्नृनृत्वमुच्चकैः ॥ धर्मं विना त्वयि प्रौढ्य । कथं तिष्टेद्ध-

[1] पक्षे—प्रजासमूहस्य । [2] पक्षे—शिक्षारोपरहिते । [3] पक्षे—शरीरस्थांतरंगारिषड्वर्गजयः

सुंधरा ॥ ६० ॥ तां विना वंशसंस्थानं । क्व ते भूप भविष्यति ॥ अतो विचार्य धर्मोऽयं ।
स्वीकार्योऽनार्यवर्जकः ॥ ६१ ॥

तथा पापाग्रहं बाढं । मुंच सिंच दयाद्रुमं ॥ भावनानीरपूरेण । दूरेण त्यज दुर्धियं ॥
॥ ६२ ॥ श्वेतवर्णो मंडलभृत् । कौमुदीशः कलाधरः ॥ निष्कलो जायते विश्वे । [1]राजापि
तमसो ग्रहात् ॥ ६३ ॥ यदात्तं तन्न मोक्तव्य–मिति चेन्मन्यसे तदा ॥ कुलपुत्रकवद्गाढ–मं-
गभंगं प्रयास्यसि ॥ ६४ ॥ क्वापि ग्रामे मातृमुखः । कोऽप्येकस्तस्य चान्यदा ॥ गृहीतं पुत्र
न मोच्य–मिति शिक्षां ददौ प्रसूः ॥ ६५ ॥ ततो यद्यत्स वै किंचि–द्वचो गृह्णाति नित्यशः
॥ तत्तत्सत्यमसत्यं वा । न मुंचति कदाग्रही ॥ ६६ ॥ उपेक्षितस्ततो लोकैः । कोऽपि वाद-
यते न तं ॥ अन्यदा वृषभं मत्तं । दृष्ट्वा पुच्छेऽस्य सोऽलगत् ॥ ६७ ॥ स लोकैर्वार्यमाणोऽपि ।
तस्य पुच्छं च नामुचत् ॥ अंगभंगं ततः प्राप । तद्वत्त्वमपि मा भव ॥ ६८ ॥ अतः कदाग्रहं
मुक्त्वा । प्रत्यक्षे धर्मजे कुले ॥ प्रतीते पक्षपातं त्वं । विधेहि विधिभाषणैः ॥ ६९ ॥ सुक-

[1] पक्षे—चंद्रोऽपि ।

तस्य पक्षपातः । पक्षपातो भवेन्नृणां ॥ पातकस्य पुनः पक्ष–पातः पक्षस्य पातकः ॥ ७० ॥ मुक्तशैलोपमः साक्षा–त्पार्थिवस्तं पुनर्जगौ ॥ घूणाक्षरन्यायतश्चे–ल्लब्धा श्रीरेकदा तदा ॥ ॥ तेनैव त्वं सगर्वोऽसि । यन्निक्षयसि मामपि ॥ इयंतीं सकलां वृद्धिं । प्राप्तोऽस्मि तव शिक्षया ॥ ७१ ॥

धर्मतः कामकुंभादि–प्राप्तिं यत्त्वं च भाषसे ॥ कोऽत्र साक्षी बलं कृत्वा । बलं वानीतवान्न भवान् ॥ ७२ ॥ मार्गे लात्वा कलत्रं चे–न्मह्यं दत्वा स्वगेहगं ॥ सर्वस्वं पुनरन्यां त्वं । लक्ष्मीमानयसीह भोः ॥ ७४ ॥ मानयामि तदाहं त्वां । तथा धर्मफलं कलं ॥ नत् श्रुत्वा सचिवोऽवोच–द्भवत्वेवं क्षमापते ॥७५॥ राज्ञो गत्वा च तद् ज्ञात्वा । पुरोहितं पुरो हितं ॥ वचः प्रपंचयामास । सर्वशास्त्रविशारदः ॥ ७६ ॥ प्रमाणं खलु प्रत्यक्षं । मन्यंते नास्तिका अपि ॥ धर्मप्रमाणं प्रत्यक्षं । क्षमाभृदपि त्वं न किं ॥ ७७ ॥ अधुनापि च धर्मं त्वं । मन्यसे चेत्क्षमापते ॥ न विनष्टं तदा किंचि–न्महत्वं स्याच्च सत्सु ते ॥ ७८ ॥ सकलोऽपि हि विबुधः । सुमनोभिः कदाचन ॥ सूत्रधारसमीपस्थो–ऽप्यप्रतिष्ठो न पूज्यते ॥ ७९ ॥ पानीयं यस्त्यजेत्स्वीयं

। तस्य कोऽपि सुहृन्नहि ॥ यथा पद्मस्य तस्यागा–द्रुजेन्मित्रोऽप्यमित्रतां ॥७९॥ अतिमथिता-
त्सुधाब्धे–रपि तज्जातमुल्बणं ॥ कालकूटं यतः प्राप । महेशो नीलकंठतां ॥ ८० ॥ सचिवस्य
यद्विदेश–गमनादेशमीहसे ॥ तन्न हृद्यं मत्यर्गत । यत्नं कुरु सुदुर्लभे ॥ ८१ ॥
रत्नाकरस्तु रत्नौघे । गृहीते दानवारिभिः ॥ निशारत्नममं रत्नं । दुरापं नाप भूतले ॥
॥ ८२ ॥ सोमो घनाश्रयं गत्वा । धिष्ण्यस्वामी सदाप्यभूत् ॥ भस्थं तं लातुमारास्त–बी-
चिबाहून् प्रसारयेत् ॥ ८३ ॥ तथापि सोऽवधिं नायाति । चेदायाति कदाचन ॥ कलाकला-
पसंपूर्णः । सैष राजा भवेत्तदा ॥ ८४ ॥ दीर्घं विमृश्य संस्थाप्यो । धीसखो धीनिधिस्त्वयं
॥ पश्चात्कथयिष्यसि त्वं । मम केनापि नोदितं ॥ ८५ ॥ शुनः पुच्छमिवासौ स्वां । तथापि
न जहौ यदा ॥ वक्रतां तां तदा मौनं । विदधे स पुरोहितः ॥ ८६ ॥ कामकुंभादि संगोप्या
–न्यच्च दत्वा नृपाय सः मंत्री कलत्रसंयुक्तः । प्रतस्थे स्थेमभासुरः ॥ ८७ ॥ ततो लोकैर्नृप-
स्योच्चै–र्विमृश्य सकलैर्ददे ॥ कुबुद्धिरिति नामास्य । गौणमप्यगुणोद्भवं ॥ ८८ ॥ क्रमेण ग-
च्छता तेन । क्रमाभ्यां चंक्रमैस्तथा ॥ गंभीरेण स्वभावाच्च । प्राप्तं गंभीरपत्तनं ॥ ८९ ॥ क-

स्यचिच्छौल्किकस्यायं । मिलितस्तेन मानितः ॥ प्रियायुतः स्थितस्तत्र । तद्दत्ते च निकेतने
॥ ९० ॥ मंत्रिप्रिया सदाऽभ्येति । तक्राचाम्लादिहेतवे ॥ शौल्किकावसथे स्वच्छा । सतीजन-
मतल्लिका ॥ ९१ ॥

अन्यदोपरि चैतस्या । दृगस्य पतिनाऽमता ॥ पतितश्च परं सोऽभू—त्सतीचरितमद्भुतं ॥
॥ ९२ ॥ तद्दिनाद् दृष्टिहीनोऽयं । यदभूत्तन्न चित्रकृत् ॥ चक्षुश्चातुर्यमस्यास्तु । यन्नाश्चर्यं तद-
त्यद्दो ॥ ९३ ॥ ज्ञाततत्वा ततः सापि । कदाप्येति न तद्गृहे ॥ परं स विविधोपायान् ।
सापायांश्चिंतयेत्स्वयं ॥ ९४ ॥ एकदा चिंतितं तेन । सचिवो यावदत्र वै ॥ स्थास्यति प्रसन्नं
ताव—न्मम कार्यं न सेत्स्यति ॥ ९५ ॥ तस्यादेशस्ततस्तेन । दत्तो ग्रामांतरालये ॥ ऋजुस्व-
भावयुक्तेन । प्रतिपन्नोऽमुना मनाक् ॥ ९६ ॥ गृहमागत्य पत्न्यै स । कथयामास सांप्रतं ॥
मम ग्रामांतरं चास्ति । भोज्यं त्वं कुरु सत्वरं ॥ ९७ ॥ प्रियया पूर्ववृत्तांते । कथिते सचि-
वाग्रणी ॥ किंचिद्देहमिषं कृत्वा । तस्थौ वक्रतयान्वितः ॥ ९९ ॥ इतश्च तत्र नगरे । श्रेष्ठी
सागरदत्तकः ॥ प्रभूतधनसंयुक्तः । परं लोभनिकेतनं ॥ १०० ॥ स शस्तवस्तुभिः पोतं । प्र-

पूर्य तूर्यपूर्वकं ॥ रत्नद्वीपजिगमिषुः । शौल्किकावासमागमत् ॥ १ ॥ निवेदिते स्ववृत्तांते । दानादानकृतेऽमुना ॥ सोऽपि कर्णे लगित्वास्मै । स्वरितस्वरपूर्वकं ॥ २ ॥ कथयामास तत्सर्वं । सृतं दानादिना किल ॥ वैदेशिकं नरं ह्येनं । नय देशांतरं परं ॥ ३ ॥ युग्मं ॥

ततस्तेनेति कथितं । वहनं प्रापयोच्चकैः ॥ ततः परं त्वलिष्येऽहं । चिंता कार्यास्य न त्वया ॥ ४ ॥ दानादानमिषात्तेन । वहने प्रेषितस्ततः ॥ चटनानंतरं शीघ्रं । बोहित्थं पूरितं प्रगे ॥ ५ ॥ पृष्टवातवशात्पोत—श्चलितः स्पर्द्धयास्य किं ॥ रत्नद्वीपं ततः प्राप—द्दिनैः स्तोकतरैर्वरं ॥ ६ ॥ उत्तीर्य वाहनाच्छ्रेष्टी । मिलितो नृपतेर्मुदा ॥ कृत्वा स्तोकतरं दानं । मानं दत्तं महीभुजा ॥ ७ ॥ उत्तार्य वस्तु जातं च । गृहीत्वोत्तारकं स्थितः ॥ परं वारवधूलुब्धो । जातः सपदि तत्र सः ॥८॥ अतः सचिववर्यस्य । समर्प्य सकलं धनं ॥ क्रयविक्रयशिक्षा च । दत्ता निश्चितताकृते ॥ ए ॥ सोऽपि सर्वकलादक्षो । व्यवसायपरायणः ॥ नव्यं द्रव्यं सदा लभ्यं । ऽव्यं चोपार्जयत्ततः ॥ १० ॥ पण्यं पुण्यमिवादाय । [1]नानादेशसमुद्भवं ॥ द्रव्यक्षेत्र-

[1] पक्षे—विविधोपदेशजं

त्ता ततः साह । पृछामेकां कुरुष्व मे ॥ स जवाच फलं किंचि-दानय त्वं डुतं शुन्ने ॥ ४७ ॥ आनीते च फले किंचिद् । ध्यानं कृत्वा पुनर्जगौ ॥ जीवचिंतास्ति ते चित्ते । सापि द्विपदगा खलु ॥ ४० ॥ सा दृष्टप्रत्ययाऽाचष्ट । पुत्र्येका मम वर्त्तते ॥ परं न ज्ञायते कस्मा-न्मौनमालंब्य संस्थिता ॥ ४ए ॥ ग्लं न्नो विद्यते तस्या-श्छलं चोत्पातसंन्नवं ॥ तथा कुरु यथा द्वार-मुद्घाटयति वक्ति च ॥ ५० ॥

तन्निशम्यावदत्सोऽप्ये-तत्स्थानं मे प्रदर्शय ॥ यथा यथोचितां तस्या । विदधामि प्रतिक्रियां ॥ ५१ ॥ तयापवरके तस्य । दर्शिते दर्शनोचितं ॥ मुक्तिद्वारमिव द्वारं । स प्रापाश्वघवर्जितं ॥ ५२ ॥ ततस्तेन पुनः प्रोक्त-मेतत्स्थानादिमाः समाः ॥ निष्कासयान्यथैतासां । ग्लं किंचिद्भविष्यति ॥ ५३ ॥ तया तथा कृते सोऽपि । द्वारे चंदनमंडलं ॥ कृत्वा हुंफट्स्वधास्वाहा-मंत्रमुच्चार्य चावदत् ॥५४॥ धारावालान्निधे ऽंगे । महीपालः प्रजापतिः ॥ सुबुद्धिस्तत्र सचिवो । रक्षोजेता त्विहागतः ॥ ५५ ॥ संकेतः कथितोऽयं ते । द्वारमुद्घाटय स्वयं ॥ इहागच्छ मुदागच्छ । तथा वद वदोच्चकैः ॥ ५६ ॥ इत्युक्ते सा पतिं स्वीयं । विज्ञाय विधिन्ना-

स- ॥ ५७ ॥ ततः कर्णे लगित्वास्याः । स-
पर्णैः ॥ शीघ्रं समेत्य विश्वस्ता । तदूद्वारमुदघाटयत् ॥ ५७ ॥ ततः कर्णे लगित्वास्याः । स-
चिवेन निवेदितं ॥ यदहं ते करोम्युच्चै–स्तत्सर्वं हितहेतवे ॥ ५८ ॥ सोढव्योऽतोऽपराधो मे ।
त्वया हि पतिभक्तया ॥ इमित्युक्ते स केशेषु । तां धृत्वा बहिरानयत् ॥ ५९ ॥ तेनैव शि-
क्षिता साऽवक् । क्षामकुक्षिर्बुभुक्षया ॥ अहं शक्नोमि नो स्थातुं । मोदकान् मे प्रदापय ॥६०॥
अक्षामाकार्य सद्यः स । आनाय्य वरमोदकान् ॥ भोजयामास तां धीमान् । पुनर्म-
ध्ये च नीतवान् ॥ ६१ ॥ मंदं मंदं जगौ भद्रे–ऽत्रानीता कथमेतया ॥ साह स्वामिन् यदा
मुक्त्वा । बहिर्यूयं गता हि मां ॥ ६२ ॥ तदैवैषा समायाता । मां प्रत्याह त्विदं वचः ॥ का
त्वं प्राघूर्णिका कस्य । कुतः स्थानात्समागता ॥ ६२ ॥ मया मुग्धतया सम्यक् । सर्वमस्या
निवेदितं ॥ ततोऽनया मे कथितं । तवानयनहेतवे ॥ ६३ ॥ तव भर्त्रा प्रेषितास्मि । शीघ्र-
मागच्छ मद्गृहं ॥ ततोऽहमेतया सार्द्धं । समेता खट्वया युता ॥ ६४ ॥ भवंतोऽत्र मया नैव
। दृष्टाः किंत्वसमंजसं ॥ वीक्ष्य दत्वा कपाटे झक् । स्थिता शीलं च रक्षितुं ॥ ६५ ॥ स-
चिवेन पुनः प्रोचे । कियत्कालं स्थिरा भव ॥ पश्चात्सर्वं भलिष्येऽहं । समक्षं नृपतेः प्रिये ॥

उक्त्वैवं पुनरायातः । कपाटे पुनरेतया ॥ दत्तेऽक्रया स पृष्टः को । दोषोऽस्या विद्यतेऽ-
नघ ॥ ६७ ॥ स प्राह शाकिनीदोषो । दूरे स्थेयमतस्त्वया ॥ मम साध्यास्ति मा भीस्त्वं ।
सर्वं हृद्यं भविष्यति ॥ ६८ ॥ पूर्वसेवा च मंत्रस्य । कृतास्ति मयका पुरा ॥ अधुनोत्तरसेवां
च । कृत्वायास्याम्यहं पुनः ॥ ६९ ॥ इत्युदीर्य सगांभीर्यः । स गतो भवनाद्बहिः ॥ तावता
मिलितो लोको । दृष्टप्रत्ययरंजितः ॥ ७० ॥ परं कस्य गृहे नैव । याति वक्ति न केनचित् ॥
घनैर्जनैर्वृतः सोऽगा—च्छौल्किकस्य निकेतनं ॥ ७१ ॥ शुल्काध्यक्षेण ते लोकाः । पृष्टाः किं
भोस्तदा तकैः ॥ वेश्याभाषणवृत्तांतो । गदितो मूलतोऽद्भुतः ॥ ७२ ॥ ततस्तेनापि सन्मा-
न्य । नीतो यत्रास्ति तत्प्रिया ॥ सापि संभाषिता पूर्व—संकेतस्य प्रभाषणैः ॥ ७३ ॥ रत्नद्वीप-
राजपुत्री । सचिवस्य प्रिया तु या ॥ सापि श्रेष्ठिभयाद् द्वारं । पिधायांतः स्थितापि च ॥
॥ ७४ ॥ ततस्तत्र गतोऽस्तोकै—र्लोकैर्वेष्टितविग्रहः ॥ वाक्यात्सागरदत्तस्य । भाषयामास ता-
मपि ॥ ७५ ॥ तिसृणां स्थानकं साक्षाद् । ज्ञातं विज्ञानतो मया ॥ आज्ञांविना तु नृपते—
र्गृहीतुं ता न शक्यते ॥ ७६ ॥

एवं विज्ञाप्य वेश्यायाः । स पुनर्गृहमापयौ ॥ इष्टगोष्ठीं प्रकुर्वाण-स्तस्थौ मायासम-
न्वितः ॥ ७७ ॥ तदा सोऽप्यनया प्रोचे । वृद्धभावो विडंबकः ॥ सर्वेषां प्राणिनां लोके-ऽस्मा-
कं विद्धन् विशेषतः ॥ ७८ ॥ यतः-दूरेऽस्तु लोपवत्सर्वा-पहारी मृत्युरंगिनां ॥ जरैवादेशव-
द्रूपं । प्रकाशयति वान्यथा ॥ ७९ ॥ अलंकरोति हि जरा । राजामात्यभिषगूयतीन् ॥ वि-
डंबयति पण्यस्त्री-मल्लगायकसेवकान् ॥ ८० ॥ अतः प्रसद्य सद्यस्त्वं । वयःस्थां कुरु मां
समां ॥ ततः कृष्णांजनेनैता-मुष्ट्रिकामकरोत्स च ॥ ८१ ॥ पर्याणयित्वा करभीं । चटि-
त्वा च चतुष्पथे ॥ असौ तां ताडयामास । कशाघातैः सकर्कशं ॥ ८२ ॥ ततस्तस्याः परी-
वारः । पूत्कुर्वन् परितो भ्रमन् ॥ परं स नोत्तरं दत्ते । चित्ते चिंतासमन्वितः ॥ ८३ ॥ प्रभुं वि-
ना प्रभुर्नान्यो-ऽस्य शिक्षां दातुमत्र वै ॥ वेश्यावर्गो विचिंत्येति । ययौ नृपतिसन्निधौ ॥८४॥
ताभिः स्वरूपे कथिते । प्रथिते सर्वतः पुरे ॥ नृपस्तदाकारयामास । वारयामास तं तथा ॥
॥ ८५ ॥ सोऽपि करभ्या उत्तीर्या-ऽकार्यमस्या न्यवेदयत् ॥ शौल्किकश्रेष्ठिनोश्चापि । ततो रा-
जा चमत्कृतः ॥ ८६ ॥ पूर्वप्रियां स्वगेहस्थां । वेश्यागृहगतामपि ॥ श्रेष्ठिगेहगतं स्वीयं । र-

त्स्वर्णादि तामपि ॥ ८७ ॥ सोऽयं राजजनाज्ज्ञात्वा । नृपपार्श्वं समानयत् ॥ पार्थिवः श्रेष्ठिनः सर्वं । गृहीत्वा वधमादिशत् ॥ ८८ ॥ युग्मं ॥

दृष्टाः श्रुताः स्मृताः स्पृष्टा । मृत्युदा ये सुधाभुजां ॥ विषतो विषयास्तेन । यकाराधिकतामिताः ॥ ८९ ॥ सचिवस्योपरोधेन । क्रोधेन कलितोऽपि च ॥ जीवन्मुक्तोऽमुना मत्तो । जातो मंत्रिणश्चसौ ततः ॥ ९० ॥ शौल्किककस्य यथायोग्यं । दंडं कृत्वा महीभृता ॥ दक्षा शिक्षा पुनर्दत्ता । चित्तवित्तानुसारतः ॥ ९१ ॥ श्वेतांजनाद्यथावस्थां । कारयित्वा पणांगनां ॥ उचितं निचितं दंडं । कृतवान्नृपतिः स्वयं ॥ ९२ ॥ ज्ञात्वाथ मंत्रिणो भाग्यं । सौभाग्यं च तथाविधं ॥ स्वकन्यां प्रददौ चैकां । सलक्ष्मीकां विशांपतिः ॥ ९३ ॥ कियतो दिवसान् स्थित्वा—ऽन्यदा गत्वा नृपांतिकं ॥ स्वकीयं धर्मवृत्तांतं । कथयामास पूर्वकं ॥ ९४ ॥ राजापि तद्वचः श्रुत्वा । धर्मकर्मसुमर्मवित् ॥ तं प्राह यच्च ते न्यूनं । तत्पूर्णं कुरु सांप्रतं ॥ ९५ ॥ सोऽत्रोचद्धर्मतो नूनं । न्यूनं मे नास्ति किंचन ॥ परं चेन्मन्यते पुण्यं । क्षितीशोऽहं तदा सुखी

पोतानीता हयास्तत्र । तथा क्रीताः स्ववस्तुभिः ॥ लात्वा तान् घोटकांश्चापि । राजा-

देशमवाप्य च ॥९७॥ प्रियाचतुष्कसंयुक्तः । सोऽष्टकोटीसुवर्णभाक् ॥ धाराङ्गसमायात—से-
नानीपरिसेवितः ॥ ९७ ॥ तत्रत्यनृपमित्रौघ—प्रहितागण्यसैन्ययुक् ॥ अचलां चंचलां कुर्वन्
। चंचद्बलबलेन च ॥ ९८ ॥ स्थाने स्थाने प्रचंडं च । दंडं गृह्णन् सुचेतसां ॥ निगृह्णन् दुर्म-
दान् नृपान् । क्रमेणाप पुरं निजं ॥ ९९ ॥ त्रिभिर्विशेषकं ॥ खट्वामारुह्य रात्रौ स । ग-
त्वा स्वप्नवनं द्रुतं ॥ दंडं कामघटं चैवा—ऽनयन्नयबलं बलं ॥ ५०० ॥ प्रज्ञायुक्ते प्रभाते स ।
सेनानीपुरतोऽवदत् ॥ भेदो दंभोऽथवा कर्त्तुं । युज्यतेऽस्य वदाधुना ॥ १ ॥ सेनानीस्तं जगौ
दंभः । सांप्रतं सांप्रतं विभो ॥ अस्याऽन्यायवतोर्जैतो—र्भेदो वा मर्मभेदकः ॥ २ ॥ दूतं ज्ञात-
जनोदंतं । शिक्षयित्वा विशेषतः ॥ सत्वरं प्रेषयामास । गुणावासः स धीसखः ॥ ३ ॥ ततो
दूतो नृपाहूतो । द्वारपालनिवेदितः ॥ सप्रणामं गुणाग्रामं । प्रथमं स प्रभोर्जगौ ॥ ४ ॥ त-
तस्तस्य प्रजापस्य । बलभेदं द्विधाभ्यधात् ॥ तन्निशम्य नृपः क्रुद्धो । युद्धोद्युक्तोऽभणत्क्रुधा
॥ ५ ॥ पूर्वं कर्मकरो मेऽसौ । कर्मणा गतशर्मणा ॥ समुपार्ज्य धनं किंचित् । तद्बलेन ब-
लं तथा ॥ ६ ॥

कियत्कृत्वा समेतोऽस्ति । दंडं मां याचतेऽधुना ॥ निर्धनो हि धनं प्राप्य । तृणवन्मन्य-
ते जगत् ॥ ७ ॥ गृहीष्येऽहं परं सर्वं । स्वयमेव समागतं ॥ रसनेव सुखेनाहो । दंतचर्वि-
तवस्तुवत् ॥ ८ ॥ यथाभूते ततो दूते—नागत्य कथिते सति ॥ जगदेकभटः सारं । सेनानी-
रवदद्वचः ॥ ९ ॥ धर्माज्जयो भवेल्लोके । तं चासौ न प्रपद्यते ॥ तेन भंगोऽस्य भविता । स-
विता साक्षिकस्त्विह ॥ १० ॥ अन्योऽपि भूभुजा द्वेषी । छेद्यः सद्यः स्ववीर्यतः ॥ किं पुनर्ध-
र्मविद्वेषी । विश्वशत्रुर्नयोज्झितः ॥ ११ ॥ मध्यवर्ण शिरश्छेदे । नखच्छेद्याविहितेऽपि हि ॥
आचारो लेखमध्ये स्या—दाधारो रणधीजुषां ॥ १२ ॥ सचिवस्तद्वचः श्रुत्वा । न्याययुक्तं न-
यी वरः ॥ धर्मरक्षां प्रकुर्वाणो । युद्धाय प्रगुणोऽभवत् ॥ १३ ॥ सन्नह्य स्वकीयं सैन्यं । कुबुद्धिः
शुद्धिवर्जितः ॥ शकुनैर्वार्यमाणोऽपि । निर्ययौ स्वपुराद्बहिः ॥ १४ ॥

मंत्री विचारयामास । द्विवापि मदयो हृदि ॥ अन्यैः पुण्यघनैर्धन्यै—र्हतैः पापं महन्म-
म ॥ १५ ॥ परं पापपरं भूपं । दुर्बुद्धिं च रणोद्यतं ॥ निजबुद्ध्या प्रबुद्धं च । कुर्वे सर्वैरिमैः
किमु ॥ १६ ॥ प्रभाते चटिते सैन्ये । दैन्येन परिवर्जिते ॥ दंडं वरे करे कृत्वा । स गत्वा नृ-

तृ-
पमब्रवीत् ॥१७॥ धर्मं चेन्मन्यसे त्वं रे । कुरु धर्मं तदा हृदि ॥ अन्यथास्ये त्यक्तदास्ये । तृ-
णं रक्षाकरं रणे ॥ १८ ॥ अधोमुखोऽन्वृत्तत् श्रुत्वा । तदा सोऽधोगतेः किमु ॥ मार्गं विमा-
र्गयन् साक्षा-दिवासौ धर्मवर्जितः ॥ १९ ॥

नुपेक्षितस्ततस्तेन । पूर्णपुण्येन चाधमः ॥ पापं लात्वा गतोऽन्नीष्ट-मलक्ष्मीं च तदु-
द्भवां ॥ २० ॥ राज्यधर्मपरित्यक्तो । न्वरक्तो जनाशयः ॥ द्विजदत्ततृणः सोऽगा-द्वनं कर्म-
फलाप्तये ॥ २१ ॥ सचिवस्य प्रवेशोऽन्नू-न्महेन महता पुरे ॥ पट्टाभिषेको विदधे । विधि-
ना सैन्यपेन च ॥ २२ ॥ दीपालिकापर्वतुल्यो-त्सवो जातस्तदा जने ॥ अलक्ष्मीरूपपर्वस्य
। निर्गमात्सरमागमात् ॥ २३ ॥ अन्यदा श्रीगुरुमुखा-दात्तद्वादशसद्व्रतः ॥ परमः श्रावकः
सोऽन्नू-च्छासनस्य प्रभावकः ॥ २४ ॥ प्राज्यं राज्यमसौ धर्मा-त्सौधर्मादपि सौख्यदं ॥
अवाप्य धर्मसाम्राज्य-मेकच्छत्रं तदाकरोत् ॥ २५ ॥ सत्वैकरक्षारम्यस्य । गुणाढ्यस्य जि-
नस्य सः ॥ प्रासादान् विशदान् धर्म-नृपस्येव व्यधापयत् ॥ २६ ॥ विशालाः पौषधशाला
। हस्तिशाला इवातनोत् ॥ सदानास्त्रिपदीयुक्ता । दुष्टवारणशब्ददाः ॥ २७ ॥ संघासक्तां जि-

कां । समितिप्रबलादरां ॥ वर्षे वर्षे सदा यात्रां । पापत्रामिव सोऽकरोत् ॥ २७ ॥
अंगानीवाऽघराजस्य । व्यसनानि न्यवारयत् ॥ सप्तक्षेत्रीं च तत्स्थाने । स्थापयामास
ऽचिरात् ॥ २९ ॥ मारिं निषेधयामास । ह्यनीतिमिव सर्वतः ॥ पटहं न्यायघंटां चा-ऽ-
मारेर्घोषयतिस्म सः ॥ ३० ॥ तस्मिन् धर्मपरे राज्य-लोका धर्मधुरंधराः ॥ जातास्तद्युक्तमे-
वाहो । यथा राजा तथा प्रजा ॥ ३१ ॥ अन्यदा धर्मघोषाख्या । चागतास्तत्र सूरयः ॥ व-
नपालमुखाद् ज्ञात-वृत्तांतो वंदितुं गुरुं ॥ ३२ ॥ चतुरंगचमूयुक्त-छत्रचामरशोभितः ॥ अं-
तःपुरीपरीवार-सहितो नृपतिर्ययौ ॥ ३३ ॥ युग्मं ॥ पंचधाभिगमं कृत्वा । वंदित्वा विधिव-
द्गुरुं ॥ यथा स्थानोपविष्टे च । नृपे धर्मं गुरुर्जगौ ॥ ३४ ॥ देवराजादयो यत्र । राजानः सं-
ति विष्टपे ॥ सर्वे धर्मप्रसादात्ते-ऽन्यथा राज्यं कुतस्ततः ॥ ३५ ॥ तामाप्य धर्मराजस्य ।
शुद्धाज्ञां येऽत्र कुर्वते ॥ धर्मराजाभयं तेषां । भवतीह कदापि न ॥ ३६ ॥ तदाज्ञां ये न
मन्यंते । तेषां राज्यक्षयो भवेत् ॥ जायते वनवासस्तु । सदा मरणभीतियुक् ॥ ३७ ॥ दो-
षारंभोऽपि राज्यस्मिन् । शुद्धे द्विघटिकारुचिः ॥ शुक्लपाक्षिकतां कुर्या-त्ततो वृद्धामिमां कुरु

सोऽपि धर्मो द्विधा प्रोक्तो । यतिश्राद्धप्रभेदतः ॥ मेरुसर्षपतुल्यत्वं । यकयोः परिकी-
र्त्तितं ॥ ३९ ॥ तत् श्रुत्वा नृपतिर्भावं । यतिधर्मे मुदाऽकरोत् ॥ प्रौढानां भवति प्रौढ-व-
स्त्वादाने यतो मतिः ॥ ४० ॥ अतः पुत्रे पवित्रे स । न्यस्य राज्यभरं गुरुं ॥ गुरोर्दीक्षां च शि-
क्षां च । विधिनाऽदत्त दत्तरा ॥ ४१ ॥ त्यक्तराज्योऽपि राजेव । स रराज क्षमां धरन् ॥ शु-
द्धांतःपुरसंयुक्तः । सदसि प्रीतिमुद्वहन् ॥ ४२ ॥ तंत्रमित्रनमस्कार-मंत्रं स्वहृदये स्मरन् ॥
दुरंतमिव वा कुर्व-न्नंतरंगारिचिंतनं ॥ ४३ ॥ शक्तित्रयीसमां रत्न-त्रयीं बिभ्रत्प्रसिद्धिदां ॥
सेनांगानीव चतुरो । धर्मभेदानुदाहरन् ॥ ४४ ॥ षड्गुणानिव षट्कायान् । पालयन् भाव-
तत्परः ॥ अंगानीव विदन् सप्त-तत्वानीह धरातले ॥ ४५ ॥ चतुर्भिः कलापकं ॥ अरिवर्गं
समग्रं स । जित्वा विषयसंयुतं ॥ अर्जयामास निर्विघ्न-मनंतां केवलश्रियं ॥ ४६ ॥
अथ तुष्टः स केषांचि-त्प्रददौ साधुतां हितां ॥ अनर्घ्याणि च रत्नानि । नानादेशं तथा
क्षमां ॥ ४७ ॥ कल्याणं भव्यजंतूना-मभव्यानां पुनः सुगां ॥ अमानं मानमन्येषां । परेषां
शुद्धिदं पदं ॥ ४८ ॥ युग्मं ॥ एवमायुः प्रपूर्यासौ । जगाम पदमव्ययं ॥ तत्राप्यनंतसुख-

भाग् । जज्ञे विज्ञशिरोमणिः ॥ ४९ ॥ एवं भूपाल धर्मस्य । पक्षपातोऽपि सौख्यदः ॥ इ-
हामुत्र भवेत्पुंसां । किं पुनः करणेऽस्य न ॥ ५० ॥ छायाकरो जनाधारः । सुमनःश्रेणिशो-
भितः ॥ धर्मकल्पद्रुमः सैष । कल्पयेत्कल्पितं फलं ॥ ५१ ॥ स च दानादिभेदेन । चतुःशा-
लः सुशालवत् ॥ सर्वसर्वज्ञव्याख्यान-क्षणे संतापवारकः ॥ ५२ ॥ एकशालविशालत्वं ।
कोऽस्य वर्णयितुं क्षमः ॥ अनंता मार्गगा यस्य । अवापुः परमं पदं ॥ ५३ ॥

धर्मभेदाः सनिर्वेदाः । सर्वे सर्वार्थसिद्धिदाः ॥ परं दातुः करः सर्व-स्योपरि दृश्यते य-
तः ॥ ५४ ॥ गुरुर्मेरुर्गिरिः पूर्वं । ततः पृथ्वी ततोंबुधिः ॥ ततोऽगस्तिस्ततो व्योम । ततः
सूर्यस्ततस्तमः ॥ ५५ ॥ तस्मात्सुदर्शनं चक्रं । ततो जिष्णुकरः परः ॥ सोऽपि दातुः कर-
स्याधः । श्रूयते लोकतोऽपि यत् ॥ ५६ ॥ विश्वे धर्मगुणाधार-पुरुषस्यापि पौरुषं ॥ मार्ग-
णौघमुखाद्याति । ख्यातिं त्यागानुगात्किल ॥ ५७ ॥ तमस्यपि यथा दीपा-द्वस्तुव्रातोऽव-
भासते ॥ अन्ये गुणास्तथा दाना-भान्यैर्दानगुणः पुनः ॥ ५८ ॥ मेघस्य वर्षणं काले । शस्य-
संपत्तिहेतवे ॥ यथा हि यत्र तत्रापि । तथा दानमपि क्षितौ ॥ ५९ ॥

वृक्षेषु कल्पवृक्षत्वं । गोषु वा कामधेनुता ॥ चिंतामणित्वं मणिषु । घटेषु कामकुंभता ॥ ६० ॥ एषां यथा वर्णवृद्धि-र्दानादासीत्स्वजातिषु ॥ स्वजातौ परजातौ च । तथा नृणां प्रजायते ॥ ६१ ॥ शीलादिधारको ह्येक-स्तरतीह भवोदधिं ॥ दानाद्दाता गृहीता च । दानधर्मस्ततोऽधिकः ॥ ६२ ॥ दानेन विपदो दूरे । संपदः स्युः पदे पदे ॥ परोऽपि मित्रतां याति । विषमं समतां तथा ॥ ६३ ॥ कीर्त्तिर्महत्वमानंदो । दानाद्भवति निश्चितं ॥ रत्नचूडकुमारस्ये-वेदं वश्यं जगत्तथा ॥ ६४ ॥ तथाहि-

अस्त्यत्र भरतक्षेत्रे । मध्यखंडविभूषणं ॥ समुद्रतीरगा ख्याता । पुरी ताम्रलिप्ती वरा ॥ ६५ ॥ उत्तुंगा विबुधाधारा । बहुधा च सुधोज्ज्वलाः ॥ प्रासादा यत्र विद्यंते । सतामिव मनोरथाः ॥ ६६ ॥ कमलामोदसाराणि । सुवृत्तकलितानि च ॥ यस्यां हर्म्याणि भांत्युच्चैः । सपयांसि सरांसि च ॥ ६७ ॥ राजते विपणिश्रेणिः । कल्पवल्लीव यत्र च ॥ सुमनोजनसर्वार्थ-साधका साधुमंस्तुता ॥ ६८ ॥

विष्वकोष्टकसंयुक्तो । क्रूरप्रकृतिभासुरः ॥ यंत्रशालीदेव इव । वप्रो यत्र सुरक्षकः ॥

॥ ६ए ॥ तत्रास्त्यजितसेनाख्यो । नृपतिः सार्थकाह्वयः ॥ लक्ष्मीयुक्तः प्रजारक्षा—करो वि-
ष्णुरिवावनौ ॥ ७० ॥ रणे शूरो नेत सोमो । वक्रो वक्रे बुधो बुधे ॥ वाण्यां वाचस्पतिः
काव्ये । कविर्मंदोऽक्रियासु यः ॥ ७१ ॥ तथाप्येनमिनं केऽपि । राजानमपरे जगुः ॥ बुधं प-
रे कविं चान्ये । नतु ग्रहमयं जनाः ॥ ७२ ॥ राजप्रसादसंपन्न—कमलोदयभासुरः ॥ विधौ
रक्तो जिनासक्तो । गंभीरः पोतसंयुतः ॥ ७३ ॥ मणिमुक्ताफलाकीर्ण । आस्ते तस्याश्च वि-
श्रुतः ॥ मध्ये रत्नाकरः श्रेष्ठी । बहिरप्यपरः स च ॥ ७४ ॥ युग्मं ॥ विविधान्यस्य रत्नानि
। गेहे संति तथाप्यसौ ॥ रत्नत्रयीं गुरोर्लब्धां । हृदयान्नैव मुंचति ॥ ७५ ॥ सरस्वतीति त-
स्यास्ति । प्रिया शीलगुणोज्ज्वला ॥ विचारसारचतुरा । देहिनीव सरस्वती ॥ ७६ ॥ पुम-
र्थं सेव्यमानस्य । कामसंज्ञं तथासमं ॥ कियानस्य ययौ कालो । धर्मार्थार्जनपूर्वकं ॥ ७७ ॥
अथान्यदा सांध्यविधिं । विधाय विधिवत्तरा ॥ स्वप्नांतः सुखनिद्राणा । रत्नराशिं ददर्श सा॥
॥ ७८ ॥ ततः सा जाग्रती तस्थौ । धर्मकर्मपरायणा ॥ दृष्ट्वा स्वप्नं शुभं यस्मा—न्न शेयं फ-
लमिच्छता ॥ ७ए॥ प्रगे सा कथयामास। पत्ये तं सोऽपि तद्वचः ॥ श्रुत्वोवाचावयोः किंचि—

भद्रं भद्रं भविष्यति ॥ ८० ॥ विशेषज्ञानबोधार्थं । गत्वा स्वप्नविदो गृहं ॥ उपढौक्य फ-
लाद्युच्चैः । स्वप्नशास्त्रं स पृष्टवान् ॥ ८१ ॥ स ऊचे नवधा स्वप्नः । श्रेष्ठिन् भवति तद्यथा
॥ चिंतोत्पन्नो विकारोत्थो–ऽनुभूतश्च स्वभावजः ॥ ८२ ॥

श्रुतो दृष्टस्तथा धर्म–कर्मजः पापजोऽपि च ॥ देवताद्युपदेशोत्थ । इत्थं ज्ञेयः समासतः
॥ ८३ ॥ प्रकारैः प्रथमैः षड्भिः । स्वप्नः सर्वो निरर्थकः ॥ उत्तरैस्त्रिभिरुत्पन्नः । शुभाशुभफ-
लप्रदः ॥ ८४ ॥ निशायाः प्रथमे यामे । वर्षेण फलदः स्मृतः ॥ द्वितीये चाष्टभिर्मासै–स्त्रि-
भिर्मासैस्तृतीयके ॥ ८५ ॥ चतुर्थे पुनरेकेन । दशाहेनारुणोदये ॥ सूर्योदये पुनः सद्यः ।
शुभाशुभमयोऽपि हि ॥ ८६ ॥ युग्मं ॥ ततः परं तु यो दृष्टो । मालास्वप्नस्तथापरः ॥ मल-
मूत्रादिपीडोत्थः । फलदो नैव स ध्रुवं ॥ ८७ ॥

पूर्वं शुभोऽशुभः पश्चा–दशुभो वा ततः शुभः ॥ पाश्चात्यः फलदो ज्ञेयः । पूर्वदृष्टो नि-
रर्थकः ॥ ८८ ॥ चटनं वृक्षगोहस्ति–शैलप्रासादवाजिषु ॥ वर्चस्कलेपो रुदितं । मरणं च त-
था शुभं ॥ ८९ ॥ स्वप्ने पश्यति यः स्वर्णं । नृपतिं दंतिनं हयं ॥ वृषं धेनुं च तस्य स्यात्

। कुटुंबे वृद्धिरुत्तमा ॥ ९० ॥ तांबूलं मौक्तिकं शंखो । वस्त्रं दधि च चंदनं ॥ कुंदं बकुलजातो च । पद्मं धनविवृद्धये ॥ ९१ ॥ प्रासादोपरि यो भुंक्ते । पद्मपत्रे सरस्सु वा ॥ सिंधुं तरति बाहुभ्यां । सोऽपि राजा भविष्यति ॥ ९२ ॥ कन्यां छत्रं फलं पक्वं । दीपमलं महाध्वजं ॥ अन्नं ना लभते यो हि । तस्य चिंतितसिद्धयः ॥ ९३ ॥

उपानद्दं पादुकां च । कृपाणं निर्मलं तथा ॥ स्वप्ने पश्यति यः कश्चि–त्तस्य ग्रामांतरं भवेत् ॥ ९४ ॥ तर्यां चटति पूर्वं च । यो भग्नायां समुत्तरेत् ॥ प्रवासो जायते तस्या–गमनं सधनं पुनः ॥ ९५ ॥ पतंति दशना यस्य । विशीर्यंतेऽथवा मुखे ॥ वित्तक्षयो देहजा वा । पीडा तस्य विनिर्दिशेत् ॥ ९६ ॥ तल्पद्वारार्गलाभंगे । भार्यामरणमादिशेत् ॥ छेदेंगस्य पुनर्दृष्टे । पितृमातृसुतक्षयः ॥ ९७ ॥ उष्ट्रिकामहिषीभ्यां यो । नीयते दक्षिणां दिशं ॥ देहे तस्य भवेद्व्याधिः । खरोष्ट्राभ्यां पुनर्मृतिः ॥ ९८ ॥ स्नेहाभ्यंगाद्भवेद्रोगः । शृंगिणो दंष्ट्रिणस्तथा ॥ उपद्रवंति यं स्वप्ने । तस्य राजकुलाद्भयं ॥ ९९ ॥ पीतवस्त्रधरां नारीं । पीतगंधविलेपितां ॥ अवगूहति यः स्वप्ने । हत्या लगति तस्य तु ॥ ६०० ॥

कृष्णरक्तांबरां नारीं । कृष्णरक्तानुलेपितां ॥ अवगूहति यः स्वप्ने । तस्य मृत्युः समादिशेत् ॥ १ ॥ श्वेतवस्त्रधरां नारीं । श्वेतमालाविनूषितां ॥ अवगूहति यः स्वप्ने । तस्य लक्ष्मीः प्रजायते ॥ २ ॥ विशेषात् श्वेतसर्पस्य । दशनं चापरस्य हि ॥ जलौकावृश्चिकयोश्च । विजयार्थप्रदं नृणां ॥ ३ ॥ कुर्कुटीं वमवां क्रौंचीं । यः पश्यति शुन्नाशयः ॥ कन्योत्पत्तिर्नवेत्तस्य । प्रियां वा लनते पुमान् ॥ ४ ॥ व्याधिवान् यदि पश्येच्च । मंडलं चंद्रसूर्ययोः ॥ रोगशांतिर्नवेत्तस्य । नीरोगी श्रीपतिः पुनः ॥ ५ ॥ देवताः पितरो गावो । नृपाः सल्लिंगिनः पुनः ॥ कथयंति च यत्स्वप्ने । तत्तथैव समादिशेत् ॥ ६ ॥

दधिलान्नाद्दयोत्पत्ति–र्घृतलान्नाज्जयः पुनः ॥ घृतदाने नवेत्क्लेशो । दधिन्नक्षणतो यशः ॥ ॥ ७ ॥ क्षीरसुरारक्तपेयी । प्राप्नोति धनसंचयं ॥ सप्ताश्वदेवदर्शी च । जयवान् नवति ध्रुवं ॥ ८ ॥ करालं विकटं मुंडं । कृष्णं नग्नं च पिंगलं ॥ हसंतं पश्यति स्वप्ने । यस्तस्य मृतिमादिशेत् ॥ ९ ॥ आसनं वसनं गेहं । देहं वा ज्वलदग्निकं ॥ दृष्ट्वा जागर्त्ति तस्य स्या–ल्लक्ष्मीः सर्वत्र सम्मता ॥ १० ॥ कर्पासन्नस्मतक्रास्थि–वर्जं सर्वं सितं शुनं ॥ गोवाजिगजदे-

वर्पि-वर्जं कृष्णं तु निंदितं ॥ ११ ॥ इत्युक्त्वा स यदा तूष्णीं । चक्रे श्रेष्ठी तदा जगौ ॥ प्रियया रत्नराशिर्मे । दृष्टस्तस्य फलं वद ॥ १२ ॥ पुनराह ततः सोऽपि । श्रेष्ठिंस्तस्य फलं शृणु ॥ शास्त्रे द्वासप्ततिः सर्वे । स्वप्नाः संति महाशय ॥ १३ ॥

तेषां मध्ये द्विचत्वारिं-शत्स्वप्ना इत्युदीरिताः ॥ त्रिंशत्तथा महास्वप्नाः । कथिताः शास्त्रकोविदैः ॥ १४ ॥ चक्रयर्हन्मातरोऽमीषु । पश्यंतीह चतुर्दश ॥ वासुदेवस्य सप्तैव । चतुरः सीरिणः पुनः ॥ १५ ॥ मातरो मंडलीकस्यै-कतरं च समाहिताः ॥ एषु त्रयोदशो रत्नो-च्चयोऽसौ सम्मतः पुनः ॥ १६ ॥ राजमात्रेव त्वत्पत्न्या । दृष्टः स्वप्नः शुभस्त्वयं ॥ अतो नृपसमः पुत्रो । भविता ते न संशयः ॥ १७ ॥ श्रेष्ठी तद्वचनं श्रुत्वा । तुतोषोच्चैः स्वचेतसि ॥ तुष्टिदानं ततस्तस्मै । दत्वागाद्गृहमादरात् ॥ १८ ॥ पत्न्यै निवेदयामास । तत्सर्वं स समाहितः ॥ सापि तद्वचनं श्रुत्वा । चित्ते हर्षं दधौतरां ॥ १९ ॥

तद्दिनादुत्तमं गर्भं । बभार मुदिताशया ॥ यथा यथा वर्द्धतेऽसा-वस्या हर्षस्तथा तथा ॥ २० ॥ तृतीयमास्यभूत्तस्या । दानधर्मेषु दोहदः ॥ श्रेष्ठी तत्पूरयामास । चंचद्रोमांचकंचु-

कः ॥ २१ ॥ तदा सा तस्य गर्न्नस्य । पथ्यः पुष्टिकरश्च यः ॥ आहारश्च विहारश्च । तं व्य-
धाद्धितकाम्यया ॥ २२ ॥ गतेषु नवमासेषु । सार्द्धाष्टमदिनेषु च ॥ अश्लेषामूलगंडांत–वर्जिते
सुदिने तथा ॥ २३ ॥ शुन्नलग्नबलोपेते । सासूत सुतमुत्तमं ॥ ततः श्रेष्ठी समाकार्य । ज्यो-
तिर्विदमथाऽवदत् ॥ २४ ॥ पुत्रोऽयं कीदृशो नावी । विशारद निवेदय ॥ ततः स कथया-
मास । लग्नादेः फलमुत्तमं ॥ २५ ॥ मुदा दानं तदा दत्वा । पिता स्वजनसाक्षिकं ॥ स्वप्ना-
नुसारतो रत्न–चूड इत्यन्निधां व्यधात् ॥ २६ ॥ पाल्यमानोऽतियत्नेन । मातृपितृमनोरथैः ॥
साकं वृद्धिमुपागछन् । समनूत्सोऽष्टवार्षिकः ॥ २७ ॥ ततोऽसौ लेखशालायां । महोत्सवपु-
रस्सरं ॥ कलाकलापशिक्षार्थं । पित्रा मुक्तः शुन्ने दिने ॥ २८ ॥ पूर्वाधीता इवाशेषाः । क-
लास्तेन विपश्चिता ॥ शिक्षिताः सुगुरोस्तस्मा–द्यद् ज्ञानं गुरुसाक्षिकं ॥ २९ ॥ मातृपितृ-
प्रसादेन । संप्राप्ताखिलकामनः ॥ स्वेछया क्रीडतिस्मासौ । सर्वत्र मित्रसंयुतः ॥ ३० ॥ सा-
हंकारतया सोऽथ । हट्टमार्गेऽन्यदा व्रजन् ॥ सौन्नाग्यमंजरीनाम्न्या । वेश्यया ददृशे ज्ञया
॥ ३१ ॥ उत्तरासंगवस्त्रे स । धृत्वा प्रोक्तस्तया मृड ॥ अहंकारः क एषोऽत्र । धनेन वद को-

विद ॥ ३२ ॥ संतः प्रत्युत नम्राः स्यु–र्वनवृद्धौ न चोत्सुकाः ॥ फलवृद्धौ यथा वृक्षाः । पयसश्च पयोमुचः ॥ ३३ ॥ मद्दिष्या वणिजा वा हि । धनं संजीर्यते भुवि ॥ लोकोक्तिरिति या सापि । मृषा चक्रे त्वयाधुना ॥ ३४ ॥ तथा च यः स्वबाहुभ्यां । समुपार्ज्यातुलं धनं ॥ त्यागभोगौ करोत्युच्चै–र्युक्तः साहंकृतिः स तु ॥ ३५ ॥ जनकार्जितवित्तेन । योऽहंकारस्तवानघ सोऽधमोऽतस्त्वया कार्यो । नैव संप्रति सत्तम ॥ ३६ ॥

इत्युदित्वा गता वेश्या । सोऽथ चित्ते व्यचिंतयत् ॥ अनया सत्यमाख्यातं । ममाहो चारुमेधया ॥ ३७ ॥ अतःपरं त्यागभोगा–वहंकारस्तु मे तदा ॥ मदर्जितं यदा भूरि । धनं भाव्यन्यथा न हि ॥ ३८ ॥ ततो मित्राणि सोऽपृच्छ–च्छक्ष्मीर्वसति कुत्र भोः ॥ तेऽवोचन् गुरुवाणिज्ये । कमला कमले न तु ॥ ३९ ॥ वाणिज्यार्थं ततस्तस्य । देशांतरगतिस्पृहा ॥ चित्तेऽवसदतश्चिंता–परः सोऽगान्निजे गृहे ॥ ४० ॥ सव्यग्रं तं समालोक्य । पिता वाचमुपाददे ॥ आधिस्ते मानसे कश्चि–द्व्याधिर्वांगे प्रवर्त्तते ॥ ४१ ॥ उत कापि वरा कन्या । चित्ते ते वासमासदत् ॥ पराभूतोऽथ मित्रेण । राजपुत्रेण वाधुना ॥ ४२ ॥ पतितं वा

किमप्यद्य । शरीरान्तरणं तथा ॥ सचिंत इव येन त्वं । दृश्यसे वद पुत्र भोः ॥ ४३ ॥ इ-
त्युक्तोऽपि यदा मौन–मालंब्यालं स तस्थिवान् ॥ तदा गाढाग्रहः श्रेष्ठी । पुनः प्रोवाच तं-
प्रति ॥ ४४ ॥

अनया चेष्टया तेऽद्य । हृदयं खिद्यते मम ॥ अतो वद यथा तस्य । प्रतीकारं करोम्य-
हं ॥ ४५ ॥ पितृदुःखापनोदार्थं । स जगाद कृतांजलि ॥ तात देशांतरं गंतु । मम इच्छकृत
स्पृहा ॥ ४६ ॥ तस्य तद्वचनं श्रुत्वे–त्यवदत् श्रेष्ठिपुंगवः ॥ वत्स भूरि धनं गेहे । तेन पूरय
वांछितं ॥ ४७ ॥ अप्यवस्कंदचौरारि–नृपधूर्तसमुद्भवाः ॥ दरा भवंति सर्वेऽपि । विदेशे गच्छ-
तां नृणां ॥ ४८ ॥ सुकुमारशरीरस्त्वं । विदेशः कर्कशप्रियः ॥ मुग्धबुद्धिर्भवानस्ति । शठलो-
कमयः परः ॥ ४९ ॥ भूशय्यैकाशनं ब्रह्म–चर्यं शीताद्युपप्लवः ॥ पथिकस्य मुनेश्चापि । वि-
शेषोऽधर्मधर्मजः ॥५०॥ ज्ञात्वा दुःखमधर्मं च । वत्स वांछां त्यजेद्दर्शी ॥ ततो भूयोऽप्युवा-
चासौ । पूज्याः शृण्वंतु मद्वचः ॥५१॥ गत्वोपार्ज्य यदेष्यामि । विदेशे विभवं नवं ॥ न्या-
गभोगौ करिष्यामि । तदाहं नान्यथा पितः ॥ ५२ ॥ वाणिज्यार्थं विदेशे वै । यदि गच्छसि

पुत्रक ॥ वत्स वच्मि च शिक्षां ते । त्वमेकांतमनाः शृणु ॥ ५३ ॥ प्रथमं चंक्रमणक्रमः—कार्यं विनान गंतव्य—मुद्यमे सत्यपि क्वचित् ॥ विमुच्यैकं तु तांबूल—मन्यन्नद्दयं न गछता ॥५४॥ युगमात्रदत्तदृष्टिः । पुनः पश्यन् पदं पदं ॥ रक्षणार्थं स्वदेहस्य । देहिनां च सुधीश्चरेत् ॥५५॥

कार्यार्थं गछता स्थाना—छहन्नाक्रिपदः पुरः ॥ कार्यं शत्रुं कृते यस्मा—ज्जायंतेऽभीष्टसिद्धयः ॥ ५६ ॥ रोगिवृद्धांधपूज्यानां । बालधेनुक्रमाभुजां ॥ भारयुक्तगर्भिणीनां । मार्गं दत्वा बुधो व्रजेत् ॥ ५७ ॥ त्यक्तोद्वर्त्तननिष्ठ्यूत—स्नानांभोरक्तविड्विशः ॥ ज्वलदग्निं शबं श्लेष्म । मूत्रं शस्त्रमहिं तथा ॥ ५८ ॥ व्यंतरादेश्च शेषार्थं । धान्यपुष्पफलादिकं ॥ चतुष्पथादिनिर्मुक्तं । श्रीमानुल्लंघयेन्नहि ॥ ५९ ॥ रात्रौ पादपमूलं नो । कुशलार्थं समाश्रयेत् ॥ नाऽसंपूर्णे व्रजेद्दूर—मुत्सवे सूतके तथा ॥ ६० ॥ दुग्धं पीत्वा रतं रंत्वा । तथा हत्वा गृहस्त्रियं ॥ स्नात्वा वांत्वा च निष्ठीव्य । श्रुत्वा दुःशब्दमुल्बणं ॥ ६१ ॥ तथाश्रुपातं निर्माय । कारयित्वा च मुंडनं ॥ शुभशकुनाऽभावे च । गछेद्ग्रामांतरं न हि ॥ ६२ ॥ युग्मं ॥

परकूलान्निम्नगायाः । क्षीरवृक्षाज्जलाश्रयात् ॥ अन्वागछत्स्वजनं च । विनिवार्य ततो व्र-

जेत् ॥ ६३ ॥ अज्ञातगृहवासं नो । कुर्यान्निशां घनां न च ॥ विश्वासो नैव कस्यापि । कर्त्तव्यो हितमिच्छता ॥ ६४ ॥ असंबलोऽसहायश्च । समं चाऽनुपलक्षितैः ॥ मध्यंदिने निशायां च । सुधीर्मार्गेऽत्र नो चलेत् ॥ ६५ ॥ रक्ताक्षगर्दभोष्ट्राणां । गवामारोहणं तथा ॥ शुभज्ञाजापि नो कार्यं । श्रीमता श्रियमिच्छता ॥ ६६ ॥ हस्तात्करसहस्रेण । शकटात्पंचभिः करैः ॥ घोटकाच्छृंगिणो वापि । गंतव्यं दशभिः करैः ॥ ६७ ॥ न चेटच्छहने जीर्णे । नदीष्वेको विशेन्न च ॥ महोदरेण सार्द्धं च । पथि गच्छेत्कदापि न ॥ ६८ ॥ मार्गे श्रमातुरेणापि । कृत्यं कार्यं सुचेतसा ॥ तथा च नियमाः पाल्या । भ्रष्टः स्यादन्यथा पुमान् ॥ ६९ ॥ अथालोक्याऽनालोक्योपक्रमः—पश्येत्तीर्थानि देशांश्च । वस्तूनि स्वकरं प्रगे ॥ प्रौढपुंसः शकुनांश्च । छायापुरुषमेव च ॥ ७० ॥ न पश्येत्कोविदो नित्यं । ग्रहणं शशिसूरयोः ॥ महाकूपं तथा नीर—काले संध्याक्षणे नभः ॥ ७१ ॥ कन्यायोनिं पशुक्रीडां । नारीमद्भुतरूपिणीं ॥ नग्नां तथा रतं नैवा—खेटकं च विलोकयेत् ॥ ७२ ॥ जलतैलशस्त्रमूत्र—रुधिरेषु कदाचन ॥ नैक्षेत वदनं विद्वा—निच्छमायुःक्षयो यतः ॥ ७३ ॥

अथ विशेषोपदेशक्रमः—प्रतिसंवत्सरं वत्स । निजद्रव्यानुसारतः ॥ पूज्याः स्वगुरवो ज्ञाति—वृद्धाः साधर्मिकास्तथा ॥ ७४ ॥ प्रतिवर्षं विधेया च । तीर्थयात्रा विवेकिना ॥ तथा चालोचना ग्राह्या । सद्गुरूणां समीपतः ॥ ७५ ॥ बालराज्यं च यत्रास्ति । स्त्रीराज्यं यत्र वा भवेत् ॥ द्वै राज्यं मूर्खराज्यं च । तत्र स्थेयं त्वया न च ॥ ७६ ॥ राजा यत्र च सौम्यः स्या—त्तथा व्यापारिणोऽपि च ॥ व्यवहारपरो लोक—स्तत्र स्थेयं त्वया सुत ॥ ७७ ॥ जगौ श्रेष्ठी पुनर्वत्स । दत्ता शिक्षात्र या मया ॥ सर्वसाधारणा साऽतो । विशेषात्तव कथ्यते ॥ ७८ ॥ सपादलक्षा द्वीपा भोः । स्फुटा अप्रकटास्तथा ॥ संति मध्ये समुद्रस्य । प्रकटेषु तथा पुनः ॥ ॥ ७९ ॥ चित्रकूटाभिधो द्वीपो । विद्यते धूर्तलोकभूः ॥ ततोऽनीतिपुरं नाम । पुरमस्ति सुविस्तृतं ॥ ८२ ॥ अन्यायाख्यो नृपोऽमुष्मि—न्नमात्यस्त्वविचारकः ॥ आरक्षकः सर्वग्राही । नाम्नाऽशांतिः पुरोहितः ॥ ८३ ॥ गृहीतभक्षकः श्रेष्ठी । तत्पुत्रो मूलनाशकः ॥ अक्का च यमघंटेति । रणघंटेति तत्सुता ॥ ८४ ॥ इत्थं यथार्थनामानः । संति सर्वे नृपादयः ॥ चौरा द्यूतकृतो धूर्ता । अन्येऽपि बहवो जनाः ॥ ८५ ॥ अविज्ञातस्वरूपो य—स्तत्र याति कदाचन ॥

सर्वस्वं तस्य गृह्णंति । तत्रत्या विविधा जनाः ॥ ७६ ॥ अतस्तत्र न गंतव्यं । गत्वान्यत्र च
सत्वरं ॥ लाभं लात्वा समेतव्यं । वत्स स्वच्छमते त्वया ॥ ७७ ॥ इमित्युक्त्वा ततः कोटि—
स्वर्णमूल्यसुवस्तुभिः ॥ भृत्वा स वहनं प्रौढं । गमनायोत्सुकोऽभवत् ॥ ७८ ॥ सुमुहूर्ते त-
तो ज्योति—र्विदा दत्ते समंगलः ॥ शुभचंद्रबलोपेते । स चचाल जनैर्वृतः ॥ ७९ ॥ सांभः-
कुंभस्तथादर्श—दधिवर्धापनानि च ॥ मृत्तिकाघृतवस्त्राणि । ध्वजमीनफलानि च ॥ ८० ॥ ग-
जाश्वनृपगोवत्स । सुहृद्वीणामधूनि च ॥ एतानि व्रजतस्तस्य । सन्मुखानि प्रजज्ञिरे ॥ ८१ ॥
विनायकखरोष्ट्राणां । दुर्गावेसरवाजिनां ॥ वृषसारसफेरूणां । वामे शब्दोऽभवत्तदा ॥ ८२ ॥
अवदद्दक्षिणे पार्श्वे । पक्षी वृद्धविनायकः ॥ अग्रे हस्ती पुनः पृष्टे । गृध्रस्तस्य महात्मनः ॥ ८३ ॥
कृष्णसारः सारमेयः । काकश्च मधुरस्वरः ॥ अभूवन् दक्षिणात्पार्श्वा—त्तस्य वामगता अ-
मी ॥ ८४ ॥ भ्रमरा हरिणा दुर्गा—नकुलौ चाषखंजनौ ॥ वामभागादमी तस्य । दक्षिणं भा-
गमैयरुः ॥ ८५ ॥ एवं शकुनसंप्राप्ति—लहर्षः स विता स तु ॥ अदूरं तमनुव्रज्य । क्षीरद्रोर्गे-
हमागमत् ॥ ८६ ॥ नत्वंच—पितरं सद्गुरुं मित्रं । सुतं शिष्यं च बांधवं ॥ यस्येच्छेच्छीघ्रमावृ-

त्तिं । न तं दूरमनुव्रजेत् ॥ ९७ ॥ सपंचशब्दं सछत्रं । सपताकं सचामरं ॥ पोतः पोतं समा
रुह्य । स चचाल ततः पुरात् ॥ ९८ ॥ वरवायुवशाच्छीघ्रं । गछता वहनेन सः ॥ कियद्भिर्दि-
वसैः प्रापद् । द्वीपं कंचन वारिधेः ॥ ९९ ॥ तमवाप्य जनाः सर्वे । जहर्षुर्यानपात्रगाः ॥ क-
र्णधारस्ततो निन्ये । तत्र तीरे वहित्रिकं ॥ ७०० ॥ जले बोहित्थमास्थाप्यो-त्तीर्णवान् स कुमा-
रराट् ॥ तटे वासोमयावासं । कारयित्वा च तस्थिवान् ॥ १ ॥ समीपस्थं नरं कंचिद् । दृष्ट्वा
स पृष्टवान् सुधीः ॥ कोऽयं द्वीपः पुरं किंच । राजा कोऽत्र निगद्यतां ॥ २ ॥

तत् श्रुत्वा स नरोऽजल्प-च्छृणु सुंदर मद्वचः ॥ द्वीपोऽयं चित्रकूटाख्यः । पुरं चाऽ-
नीतिसंज्ञकं ॥ ३ ॥ अन्यायाख्यस्तथा राजा । विद्यते विश्वविश्रुतः ॥ श्रुत्वा तेनोदितं वा-
क्यं । चित्ते दध्यौ कुमारराट् ॥ ४ ॥ पित्रा यत्र निषिद्धोऽहं । तत्रैवागां विधेर्वशात् ॥ तथा-
पि प्रचुरो लाभो । भविता मे न संशयः ॥ ५ ॥ यतश्चलनवेलायां । चित्तोत्साहः पुनर्वरः ॥
शकुनाः पवनश्चानु-कूलः सर्वं शुभं ततः ॥ ६ ॥ इत्थं चित्ते विचिंत्यासौ । यावत्तस्थौ वि-
चारवान् ॥ चत्वारो वणिजस्ताव-दाययुः पुरमध्यतः ॥ ७ ॥ ततो गौरवितास्तेना-सनमा

नादिना भृशं ॥ जजल्पुर्मधुरालापै–र्धूर्त्तधीनिधयोऽथ तं ॥ ८ ॥ कुतः स्थानात्कुमारेंद्र । त्व-
मागाः कः पिता तव ॥ किं नामास्ति वदास्माक–मुत्कंठा विद्यते यतः ॥ ९ ॥
त्वयि दृष्टे तथा स्नेह–श्चित्ते नोऽचिंतितोऽजनि ॥ तदत्र कारणं किंचि–दस्ति स्वस्तिनि-
केतनं ॥ १० ॥ कुमारोऽपि ततः सर्वं । मित्रेणाकथयत्स्फुटं ॥ यतो नामापि न ग्राह्यं । स्व-
यं स्वस्य विवेकिना ॥ ११ ॥ उक्तं च–आत्मनश्च गुरोश्चैव । भार्यायाः कृपणस्य च ॥ क्षी-
यते वित्तमायुश्च । मूलनामानुकीर्त्तनात् ॥ १२ ॥ तेऽवोचन् सकलां वार्त्तां । श्रुत्वा तस्य म-
हात्मनः ॥ युक्तमासीद् हृदि स्नेहो–ऽस्माकं त्वं स्वजनोऽसि यत् ॥ १३ ॥ परं त्वं लघुरूप-
त्वा–न्नोपलक्षसि नोऽधुना ॥ तथापि तत्कृतं साधु । यत्त्वमत्रागतोऽधुना ॥ १४ ॥ उत्तिष्ठ
भोः कुमारेंद्र । गम्यते स्वगृहे यतः ॥ त्वादृशाः स्वजना भाग्यै–र्लभ्यंते पूर्वनिर्मितैः ॥१५॥
इत्थं विश्वास्य तैर्नीतो । वृद्धसद्मनि तेषु सः ॥ स्नानभोजनमानाद्यै–र्गौरवं गमितस्तथा ॥
॥ १६ ॥ भोजनानंतरं ते तं । प्रोचुर्धूर्त्तधुरंधराः ॥ कुमार सुकुमारं ते । शरीरं दृश्यते
बहु ॥ १७ ॥ कठोरदेहसंसाध्यो । व्यवसायो निगद्यते ॥ यतो भवेन्न वेलायां । भोजनं शय-

नं तथा ॥ १८ ॥ व्यवसायं कुर्वतश्चे–त्तव देहाऽद्भुता भवेत् ॥ श्रेष्ठिरत्नाकरस्याहो । यद्भा-
मः किं तदोत्तरं ॥ १९ ।

बोहित्थे तेऽस्ति यत्किंचि–त्तत्सर्वं नः समर्पय ॥ पोतं पूर्णीकरिष्याम–स्तवेष्टैर्वस्तुभिर्वयं
॥ २० ॥ इत्युक्ते सोऽवदत्सर्वं । गृह्यतां यानपात्रगं ॥ चत्वारोऽपि ततस्तस्य । सर्वस्वं जगृहु-
र्मुदा ॥ २१ ॥ ग्रहणानंतरं सर्वे । ययुः स्वं स्वं निकेतनं ॥ सौजन्यं ज्ञायते नैव । तेषां कुल
गतं तदा ॥ २२ ॥ कुमारोऽन्यदिनेऽचाली–न्मिलनार्थं महीपतेः ॥ पादुकाकृत्तदा कश्चि–द्दौ-
कयामास पादुके ॥ २३ ॥ कुमारस्तंप्रति प्राह । वद मूल्यं किमेतयोः ॥ सोऽवोचत्तव हर्षा-
य । मयैते प्राभृतीकृते ॥ २४ ॥ तं जगाद कुमारोऽपि । चेदिच्छं त्वामहं तदा ॥ विधास्यामि
सुहृष्टं भो । इत्युक्त्वाऽगमदग्रतः ॥ २५ ॥ यावदेष व्रजत्यग्रे । कियत्यपि हि तावता ॥ एका-
क्षः कितवः कश्चि–त्तं जगादातिधूर्त्तधीः ॥ २६ ॥ कुमार शृणु वृत्तांतं । यदागात्प्राक् पितात्र
ते ॥ तदा मया सहस्रं तु । दीनाराणां च हारितं ॥ २७ ॥ उच्चाटितस्तदाहं तै–र्द्यूतकारैः क-
टूक्तिभिः ॥ मिलित्वा परितः संस्थैः । काकैर्घूक इवाहनि ॥ २८ ॥ तदाहं त्वत्पितुः पार्श्वे ।

गत्वा धनमयाचिषं ॥ सोऽप्युवाच ग्रहणकं । दत्वाऽनुहि धनं धनं ॥ २९ ॥
ततो मया पुनः प्रोक्तं । गेहस्वर्णगवादिकं ॥ द्यूतव्यसनतः सर्वं । गतं मे किं ददामि ते
॥ ३० ॥ सोऽवोचत्तर्हि गच्छ त्वं । न दास्ये ते च किंचन ॥ तदा ताडयितुं लग्ना । मां च द्यू-
तकृतः पुनः ॥ ३१ ॥ विमृष्टं च मया पश्चा—न्मारयिष्यंति माममी ॥ अतः स्वांगं किमप्य-
स्य । दत्वा गृह्णाम्यहं धनं ॥ ३२ ॥ चरणाभ्यां च हस्ताभ्यां । विना न स्यात्कथंचन ॥ अ-
तो मयाचक्षुरेकं । मुक्तं ग्रहणके तदा ॥ ३३ ॥
अत्र यावत् स्थितः श्रेष्ठी । तावन्नासीद्धनं मम ॥ लात्वा नेत्रं गतस्तेन । पिता ते नगरं
निजं ॥ ३४ ॥ गृहीत्वा मेऽधुना द्रव्यं । नेत्रमर्पय सत्वरं ॥ यतोऽनेन विना भाति । न मुखं
मामकं किल ॥ ३५ ॥ इत्युक्तिं तस्य श्रुत्वासौ । निदध्यौ स्वीयमानसे ॥ अनेनाश्रुतपूर्वं मे
। गदितं किं करोम्यतः ॥ ३६ ॥ अथवा चिंतया किं मे । यद्भाव्यं तद्भविष्यति । उपस्थितं प-
रं द्रव्यं । किं त्यजामि मुधाधुना ॥ ३७ ॥ संप्रधार्य मनस्येवं । गृहीत्वा तद्धनं च तं ॥ प्रत्यु-
वाच समेतव्यं । ममोत्तारे त्वया प्रगे ॥ ३८ ॥ चतुःपथे चरंतं तं । कुमारं वीक्ष्य चापरे ॥

चत्वारो वणिजो धूर्त्ता । वादमेवं प्रचक्रिरे ॥ ३९ ॥ तेषु चैकोऽवदन्नीरं । समुद्रस्य हि मी-
यते ॥ गंगाया वालुका चापि । न स्त्रियश्चरितं पुनः ॥ ४० ॥ द्वितीयः स्माह भो मित्र ।
नो वाच्यं पुनरीदृशं ॥ यथा स्त्रीचरितं प्रोक्त-मन्यमानद्वयं तथा ॥ ४१ ॥ तृतीयः प्रोचिवान्
किं भो । वदसीत्थमनर्गलं ॥ सुभाषितानि नो वेत्सि । पूर्वसूरिकृतानि वा ॥ ४२ ॥ यत उक्तं—
सुखदुःखजयपराजय—जीवितमरणानि ये विजानंति ॥ मुह्यंति तेऽपि नूनं । तत्वविद-
श्चेष्टिते स्त्रीणां ॥ ४३ ॥ प्राप्तुं पारमपारस्य । पारावारस्य पार्यते ॥ स्त्रीणां प्रकृतिवक्राणां ।
दुश्चरित्रस्य नो पुनः ॥ ४४ ॥ अतोऽन्यद्वयमानस्य । पारगाः केऽपि भूतले ॥ संति संतो बु-
द्धिमंतो । न हि स्त्रीचरितस्य तु ॥ ४५ ॥ चतुर्थेन ततः प्रोक्तं । धीमानयमुपागतः ॥ स्फेट-
यिष्यति संदेहं । वादं मा कुरुथोद्धतं ॥ ४६ ॥ अथ त्रयोऽपि संभूय । भूयोऽजल्पंश्चतुर्थकं ॥
धीमानयं तदा मान-मस्मदुक्तं करोति चेत् ॥ ४७ ॥ तुर्योऽवदत्तदा चैवं । यस्य मानस्य वो
रुचिः ॥ तत्करिष्यत्यसौ बुद्ध्या । बुद्धेः किं नाम दुष्करं ॥ ४८ ॥ तेऽगदन् दूरसंस्थाया ।
गंगायाः किमु कथ्यते ॥ समीपस्थसमुद्रस्य । मानमेतेन कारय ॥ ४९ ॥ रत्नचूडस्तु तुर्य-

ण । तथा प्रोत्साहितस्तदा ॥ समुद्रनीरप्रमितिं । यथांगीकृतवानयं ॥ ५० ॥ एकीभूय ततः सर्वे । जगदुस्तंप्रतीदृशं ॥ करिष्यस्यधिमानं चे–त्तदास्मत्कमला तव ॥ ५१ ॥

नो चेत्तदा वयं सर्वां । गृहीष्यामस्तव श्रियं ॥ इत्युक्त्वा चक्रिरे तत्र । साक्षिणस्तैः शठाशयैः ॥ ५२ ॥ रत्नचूडस्ततो दध्यौ । पित्रा मे यादृशाः पुरा ॥ इहत्याः कथिता लोका–स्तादृशा एव केवलं ॥ ५३ ॥ अत भत्तारके यामि । नृपोऽप्यत्रेदृशोऽस्ति वै ॥ सोऽपि चेत्संकटे क्षेप्ता । भवित्री का गतिस्तदा ॥ ५४ ॥ इत्थं विमृश्य स स्थानं । जगाम सरलाशयः ॥ तथा च चिंतयामास । संकटान्मोक्षमात्मनः ॥ ५५ ॥ अमीषां हंत धूर्त्ताना–मतिधूर्त्तधिया जयः ॥ दवस्येह प्रतिदवो । यतो देय इति श्रुतिः ॥ ५६ ॥ अतिधूर्त्तधियां स्थानं । विचिंत्य गणिकागृहं ॥ जगाम रणघंटाया । वेश्यायाः स निकेतनं ॥ ५७ ॥ कितवार्पितदीनार–सहस्रं स समर्पयत् ॥ तुष्टयातस्तया चक्रे । तस्य गौरवमुच्चकैः ॥ ५८ ॥ केलिकौतूहलोन्मुक्तं । तं वीक्ष्य गणिका जगौ ॥ किं सचिंत इव स्वामिन् । दृश्यसे वद कारणं ॥ ५९ ॥ यथातथं निवेद्यासा–वुत्तरं पृष्टवान् पुनः ॥ सापि दानवशीभूता । तस्य तथ्यं

न्यवेदयत् ॥ ६० ॥ शृणु सुंदर यः कश्चि—द्दैवाद्वैदेशिको नरः ॥ इहायाति धनं तस्य । गृह्णं-
त्येते सुनिश्चितं ॥ ६१ ॥ गृहीतस्य धनस्यैकं । भागं लाति महीपतिः ॥ सचिवस्तु द्वितीयां-
शं । श्रेष्ठी तृतीयकं पुनः ॥ ६२ ॥ आरक्षकश्चतुर्थांशं । पुरोधाः पंचमं तथा ॥ षष्टं भागं च
मन्माता । यतः सा सर्वबुद्धिदा ॥ ६३ ॥

अतः स्त्रीवेषमादत्स्व । यथावाभ्यां प्रगम्यते ॥ तत्रस्थितस्त्वं मन्मातुः । श्रोष्यसि स्व-
यमुत्तरान् ॥ ६४ ॥ तथाकृतेऽमुना साकं । रात्रौ सागात्प्रसूगृहं ॥ दृष्ट्वा तां यमघंटावक् ।
केयं बाला सुते वद ॥ ६५ ॥ रणघंटावदन्मातः । श्रीदत्तश्रेष्टिनंदिनी ॥ रूपवत्यभिधानेयं
। वयस्या मम विद्यते ॥ ६६ ॥ एषैकवारं मिलति । नाद्य मे मिलिता दिने ॥ तदर्थमागता-
मेतां । लात्वाऽयाता त्वदंतिके ॥ ६७ ॥ अत्रांतरे समायाता—श्चत्वारस्ते वणिग्भुवाः ॥ मा-
यां कृत्वा जगृहे यै । रत्नचूडक्रयाणकं ॥ ६८ ॥ वरासनोपविष्टास्ते । गदिता यमघंटया ॥
सांयात्रिकोऽत्र भोः कश्चि—दागतः श्रूयतेऽधुना ॥ ६९ ॥ ओमित्यूचुस्ततः सर्वे । पुनः सा
निजगाद तान् ॥ भवतां समभूल्लाभो । भविता वा निवेद्यतां ॥ ७० ॥

आसीन्न इत्यवोचंस्ते । कया रीत्याथ सा जगौ ॥ ततस्ते कथयामासुः । सर्वं मायावि-
चेष्टितं ॥ ७१ ॥ तत् श्रुत्वा साऽवदद्धानि-र्भविता भवतां ननु ॥ कथमित्यूचिरे तां ते । सा-
गदन्निशि नोच्यते ॥ ७२ ॥ उक्तं च—दिवा निरीक्ष्य वक्तव्यं । रात्रौ नैव च नैव च ॥ सं-
चरंति महाधूर्त्ता । वटे वररुचिर्यथा ॥ ७३ ॥

तथाप्यत्याग्रहपरान् । वीक्ष्य साऽवददक्कका ॥ यदिष्टवस्तुभिर्यान-पूरणं तेन वः क्षयः
॥ ७४ ॥ तेऽवोचन् कूटवस्तूनि । संति गेहे बहूनि नः ॥ तैः पोतं पूरयिष्यामो । यैरसौ क-
थयिष्यति ॥ ७५ ॥ अथाह धीमती सा तान् । यद्यसौ मशकास्थिभिः ॥ पोतं कारयिता पू-
र्णं । तदा किं भोः करिष्यथ ॥ ७६ ॥ तेऽजल्पन्नीदृशी बुद्धिः । कथं तस्य भविष्यति ॥ य-
तोऽसौ बालको बुद्धि-र्वृद्धानां हि भवेद्भुवि ॥ ७७ ॥ उक्तं च—यदेकः स्थविरो वेत्ति । न तत्त-
रुणकोटयः ॥ यो नृपं लत्तया हंति । वृद्धवाक्यात्स पूज्यते ॥ ७८ ॥

अक्का जगाद भूयोऽपि । नैकांतो विद्यते ह्ययं ॥ बालकोऽपि सुधीः कश्चि-द्रोहकोऽभूद्य-
था पुरा ॥ ७९ ॥ को रोहक इति पृष्टे । सा जगाद वचस्विनी ॥ अवंतीनगरीपार्श्वे । ग्रामोऽ-

स्तिः नटमंडकः ॥ ८० ॥ कुशीलवनटस्तत्र । तस्य प्रेमवती प्रिया ॥ तयोः सुतो रोहका-
ख्यो । बुद्धिवृद्धिसमन्वितः ॥ ८१ ॥ स बालभावतः क्रीडां । करोति विविधां सदा ॥ भोज-
नावसरे माता । तंप्रतीछं प्रजल्पति ॥ ८२ ॥ वत्सागछाधुना गेहे–ऽन्यथा दास्ये न भोजनं ॥
तथाप्युत्सूरमायाति । सा ददाति च भोजनं ॥ ८३ ॥
संसाराऽनित्यतायोगा–न्माता तस्य दिवं गता ॥ कन्यां रुक्मिणीं नाम्नीं । तत्पिता प-
रिणीतवान् ॥ ८४ ॥ क्रीडां कुर्वंतमथ तं । वीक्ष्य सापि तथावदत् ॥ अंबावचनविश्वस्तः ।
पूर्ववत्स समागतः ॥ ८५ ॥ परं माता तदा सा तु । द्वारं दत्वा गता बहिः ॥ वेलातिक्रम-
तस्तस्य । भोजनं न प्रयछति ॥ ८६ ॥ इछं कदाचिन्न प्राप । कल्पवर्त्ती स बालकः ॥ वैका-
लिकं कदाचिन्न । तेनासौ दुर्बलोऽभवत् ॥ ८७ ॥ तं तथाविधमालोक्य । पिता प्रोवाच वत्स
हे ॥ स्वमातुः स्मरसि त्वं किं । दुर्बलो येन दृश्यसे ॥ ८८ ॥ सोऽवोचत्सत्यभाषिण्यां । स-
त्यां मातरि तात मे ॥ कथं कूटप्रवादिन्या । मातुः स्मरणमिष्यते ॥ ८९ ॥ कुशीलवस्त-
तोऽवादीत् । कथं सा कूटभाषिणी ॥ कस्मादियं सत्यभाषा–भाषिणीति प्रजल्प्यतां ॥९०॥

रोदकोऽप्यवदत्तात । पश्चाद्दास्ये न भोजनं ॥ इत्युक्त्वापि प्रयच्छंती । तेन सा कूटभाषिणी ।ए१।
यदासौ भाषते पश्चा-न्न दास्ये तव भोजनं ॥ तदा नैव ददात्येषा । तेनेयं सत्यभाषि-
णी ॥ ए२ ॥ तत् श्रुत्वा भोजनं सार्द्ध-मात्मना कारयत्यसौ ॥ तदा न कुर्यात्सा तस्य ।
स्नानमानादिगौरवं ॥ ए३ ॥ तस्यास्ततोऽपमानार्थ-मन्यदा पितुरग्रतः ॥ श्वसूरमागतस्या-
सौ । निशायां प्रोचिवानिदं ॥ ए४ ॥ पुमानयं गृहाद्याति । यूयं पश्यत पश्यत ॥ इत्युक्तं त-
स्य श्रुत्वा स । जज्ञेऽरागी प्रियांप्रति ॥ ए५ ॥ अरागकारणं तस्माद् । ज्ञात्वा साद्दस्म रो-
दकं ॥ मानं दापय वत्स त्वं । त्वत्सवितुर्ममाधुना ॥ ए६ ॥ सोऽभाणीत्ते तदा मानं । दापया-
मि यदा मम ॥ शुश्रूषां त्वं करोष्युच्चै-रन्यथा न कदाप्यहं ॥ ए७ ॥ साब्रवीद्भोजनं तु-
भ्यं । तिस्रश्च स्नानमेकशः ॥ दिने दास्यामि ते नित्यं । देवस्य शपथो मम ॥ ए८ ॥
मानदानाय तस्याः स । एकदा पितरंप्रति ॥ गायां निर्दिश्य चावादीत् । पश्यामुं नर-
मागतं ॥ एए ॥ तत् श्रुत्वा स नटो दध्यौ । यादृशोऽयं पुमान् किल ॥ पुरातनोऽपीदृगेव ।
निर्दोषेयं ततः प्रिया ॥ १०० ॥ सानुरागस्ततो जज्ञे । रुक्मिण्यां स कुशीलवः ॥ करोति

रोहके न्नक्तिं । सापि बुद्धिवशीकृता ॥ १ ॥ अन्यदा रोहकः पित्रा । सममुज्जयिनीं पुरीं ॥ द्रष्टुं जगाम तातेना–नुशिष्टः स तदा गिरा ॥ २ ॥ नगर्यां वत्स मे वेला । लगिष्यति घना ततः ॥ स्थेयं सिप्रानदीमध्ये । वलमानेन च त्वया ॥ ३ ॥ ओमित्युक्त्वा विशालां स । सुविशालां विलोक्य च ॥ गत्वा सिप्रां स्थितस्तत्र । प्रतीक्षणकृते पितुः ॥ ४ ॥ बालक्रीडावशात्सोऽपि । लिखित्वा सकलां पुरीं ॥ यावत्तस्थौ नृपस्ताव–त्तत्रागादरिकेसरी ॥ ५ ॥

नृपमभ्यर्णगं वीक्ष्य । स प्राह कोपवर्जितः ॥ अनाथामिव किं नाथ । न्नेत्सीमां त्वं पुरीं मम ॥ ६ ॥ उदारं तद्वचः श्रुत्वा । यावदग्रे स पश्यति ॥ तावद्रेणुमयीं रम्यां । ददर्श नगरीं निजां ॥७॥ सार्थकं वचनं श्रुत्वा । विज्ञानं च तथाद्भुतं ॥ राजा चित्ते चमच्चक्रे । धीमान् यद्बालकोऽप्यसौ ॥ ८ ॥ नृपः स्वसेवकान् प्राह । कोऽयं कस्य सुतस्तथा ॥ तेऽवोचान् रोहकान्निरूयः । कुशीलवनटात्मजः ॥९॥ ततो राजान्यमार्गेण । गत्वा रंत्वा बहिः पुनः ॥ हृष्टो जगाम स्वपुरीं । स्वग्रामं बालकोऽपि च ॥ १० ॥ चतुःशतीनवनव–त्युत्तरा मंत्रिणः पुरा ॥ विद्यंते पुनरेकं स । महामंत्रिणमीहते ॥ ११ ॥

तस्य बुद्धिपरीक्षार्थं । नृपो भृत्येन केनचित् ॥ अवीवदन्नटग्राम–जनानेवं विशारदः ॥
॥ १२ ॥ अस्मद्वासाय विस्तीर्णं । एकद्रव्यमयस्तथा ॥ उत्तुंगः स्तंभहीनश्च । प्रासादः का-
र्यतामिति ॥ १३ ॥ आदेशं दुर्घटं मत्वा । ग्रामीणा एकतोऽमिलन् ॥ तथा विमर्शयामासुः ।
परं बुद्धिर्न जायते ॥ १४ ॥ तदा रोहक आगत्य । जगाद जनकंप्रति ॥ उद्दीयतां भोजनायो
–त्सूरः संपद्यते पितः ॥ १५ ॥ नटः प्राहाशनं वत्स । तव स्मरति नो मम ॥ क्षुधादेशो य-
तो राज्ञा । दत्तोऽस्ति ग्रामवासिनां ॥१६॥ रोहकोऽप्यवदत्तात । क आदेशो महीभुजा ॥ द-
त्तो येनाखिलो लोकः । सचिंत इव दृश्यते ॥ १७ ॥ आदेशे कथिते सोऽवक् । पूर्वं भोज्यं
विधीयतां ॥ पश्चादुत्तरं वो वच्मि । ततस्ते भोजनं व्यधुः ॥ १८ ॥ भोजनानंतरं राज–पु-
रुषंप्रति सोऽवदत् ॥ शिलेयं विद्यते दीर्घा । तथोच्चा पर्वतेऽत्र भोः ॥ १९ ॥

भूभृन्निवेदितावासो । भविष्यत्यनया खलु ॥ परं धनादिकं सर्वं । राज्ञा देयं विनिर्मितौ
॥२०॥ राज्ञे तदुक्तमाचख्यु–रागत्य नृपपूरुषः ॥ पुना राज्ञान्यदा प्रैषि । समेषोऽसौ तदंतिके
॥२१॥ कथापितं च मेषोऽयं । पोष्यः प्रतिदिनं त्वया ॥ न पुनः स्थूलदेहोऽयं । कार्यः कार्यवि-

दा सदा ॥ २२ ॥ संपुष्य निभृतं तं च । दर्शयत्येकदा वृकं ॥ तथा तस्य ततो जज्ञे । न स्थूलावयवः स च ॥ २३ ॥ तं वृत्तांतमथ ज्ञात्वा । कुर्कुटः प्रहितोऽन्यदा ॥ कथापितं तथैकोऽयं । योधनीयस्त्वयाऽनघ ॥ २४ ॥ सन्मुखं दर्शितादर्शः । स्वदेहप्रतिबिंबवान् ॥ स योधितश्चिरं तेन । कृतज्ञेन कलावता ॥२५॥ अन्यदा प्रेषयामास । तिलानां शकटं तथा ॥ ज्ञापयामास यंत्रेऽमू–स्तैलं निष्पीड्य नोऽर्पय ॥२६॥ अधोमुखेन मानेन । परं ग्राह्यास्तिला इमे ॥ तेनैव संमुखेनाहो । तैलं देयं पुनस्त्वया ॥ २७ ॥ आदर्शपृष्ठभागेन । तिलान् लात्वा स रोहकः ॥ तस्य सन्मुखभागेन । तैलं स्तोकं ददौ तदा ॥ २८ ॥

पुनर्वृद्धगजो राज्ञा । प्रहितोऽपटुदेहकः ॥ भाणितं चास्य मरणं । यदा भवति मे तदा ॥ २९ ॥ न कथ्यमकथयित्वा । न स्थेयं पुनरादरात् ॥ ततो मृते गजे राजा । विज्ञप्तस्तेन धीमता ॥ ३० ॥ तृणं नात्ति गजः स्वामिन् । नीरं पिबति नैव च ॥ न लात्युच्छ्वासनिःश्वासौ । राजाऽवक् तर्हि किं मृतः ॥ ३१ ॥ स प्राह निगदत्वेतत् । देवो नैव वदाम्यहं ॥ इत्युक्त्वा स गतो गेहं । पुना राजा परेद्यवि ॥ ३२ ॥ तेनाऽकारयदस्तोकां । वर्त्तिं सद्वालुका-

मर्यो ॥ सोऽपि तां दुर्घटां मत्वा-ऽकथयन्नृपतिंप्रति ॥ ३३ ॥ पुरातन्याः खंडमेकं । तस्याः
संप्रेष्यतामिह ॥ यथा तदनुमानेन । नव्या सा क्रियते मया ॥ ३४ ॥

आख्यापयन्नृपो भूयो । नरेण तंप्रतीदृशं ॥ यदत्र न पुरीमध्ये । मिष्टपानीयकूपकः ॥
॥ ३५ ॥ तत्रस्थोऽतः कोऽपि कूपः । प्रहेयो मिष्टनीरयुक् ॥ विमृश्य सोऽपि तं प्राह । ग्रा-
मीणाः कूपका इमे ॥ ३६ ॥ आनीयमाना नगरीं । भयात्पश्चाद्वलंत्यमी ॥ अतो नागरिकः
कोऽपि । कूपः प्राक् प्रेष्यतामिह ॥ ३७ ॥ तेनात्वयं यथा बध्ध्वा-ऽनयामि नगरीं त्वहं ॥
तत् श्रुत्वा नृपतिर्दध्यौ । सत्यं धीमानयं खलु ॥ ३८ ॥

अन्यदाऽऽकारयामास । नृपतिस्तं स्वसन्निधौ ॥ व्यवस्थयानया सद्यः । परस्परविरुद्धया
॥ ३९ ॥ क्षुधितेन समेतव्यं । न कार्यं भोजनं न च । तृपितेन तथा नैव । न पेयं वारि कु-
त्रचित् ॥ ४० ॥ समलांगेन नागम्यं । स्नानं कार्यं न च त्वया ॥ केनापीह न यानेन । पा-
दचारेण नैव च ॥ ४१ ॥ नाऽपथा न च मार्गेण । न रात्रौ न दिने तथा ॥ न कृष्णे न सि-
ते पक्षे । न छायायां न चातपे ॥ ४२ ॥ रिक्तहस्तेन न प्राज्ञ । न सढौकनपाणिना ॥ स

राजपुरुषात् श्रुत्वा । सकलं तद्वचस्ततः ॥ ४३ ॥ सुशीतलफलास्वादात् । क्षुत्तृट्बाधानिरा-
कृतः ॥ पीत्वा पयश्च श्रीखंडो-द्वर्त्तनान्मलवर्जितः ॥ ४४ ॥ हुंडमारुह्य पादाभ्यां । स्पृशन्
भूमिं समंततः ॥ सितपक्षस्य प्रतिप-द्दिनेऽदृष्टसुधाकरे ॥ ४५ ॥
संध्यायां मार्गमध्येन । चालिनीधृतशीर्षकः ॥ मृत्तिकायुक्तपाणिश्च । समागान्नृपसन्नि-
धौ ॥ ४५ ॥ त्रिविशेषकं ॥ अग्रस्थां मृत्तिकां दृष्ट्वा । राजावोचदिदं किमु ॥ स प्राह य-
स्याः पतयो । भवंतः सोपढौकिता ॥ ४६ ॥ ततो रोहकमादाय । राजागाद्वासवेश्मनि ॥ त-
त्र तल्पे च सुष्वाप । गंगापुलिनकोमले ॥ ४७ ॥ निद्राणस्य नृपस्यासौ । पादसंवाहनापरः
॥ श्रांतत्वाद्वालभावाच्च । प्रमीलां प्राप रोहकः ॥ ४८ ॥ ततो निद्राविहीनेन । राज्ञासौ ज-
ल्पितोऽपि च ॥ यदा न वक्ति स तदा । लत्तयाहत्य बोधितः ॥ ४९ ॥ कथितं च प्रसुप्तोऽ-
सि । न सुप्तोऽस्मीति सोऽवदत् ॥ राजा प्राह तदा किं मे । नोत्तरो विहितस्त्वया ॥ ५० ॥
स जगाद सचिंतोऽहं । तदासं तेन नावदं ॥ का चिंतेति नृपेणोक्ते । सोऽब्रवीच्छृणु नृपते ॥५१॥
अजाया उदरे लिंडीः । को बध्नातीह कथ्यतां ॥ नृपेणोचे त्वमेवैतत् । कथयासौ ततो-

ऽगदत् ॥ ५२ ॥ अस्याः संवर्त्तको वायु–रुदरे तिष्टति प्रज्ञो ॥ तेनेमा गुटिकाकल्पा । जायंते नृपसत्तम ॥ ५३ ॥ ज्ञेयं द्वितीययामेऽपि । पूर्वयामसमं समं ॥ किंतु जागरणे हेतु–र्विज्ञेयोऽत्र चुहिंटकः ॥ ५४ ॥ चिंताहेतुस्तथा पृष्टः । स जगादाकृतं प्रज्ञो ॥ कपित्थफलमश्नाति । गजो न्नग्नं च मुंचति ॥ ५५ ॥ परं मध्यस्थितं सारं । मोचनान्न तु दृश्यते ॥ तच्च कुत्र व्रजत्येषा । चिंता मे हृदि वर्त्तते ॥ ५६ ॥ राजाह कारणं ब्रूहि । सम्यग् ज्ञातं त्वमेव ज्ञोः ॥ स प्राह तस्य तुंदस्था–ग्निना सर्वं प्रपच्यते ॥ ५७ ॥ एवं तृतीययामेऽपि । सर्वं निशादिकं तथा ॥ परं जागरणे हेतु–र्वस्त्राघातोऽत्र कीर्त्यते ॥ ५८ ॥ चिंतानिदानं सोऽवोच–दम्लं दृष्ट्वा यदुज्ज्वलाः ॥ दंष्ट्राः श्रवंति राजेंद्र । तत्किं कारणमुच्यतां ॥ ५९ ॥

राजा प्राह त्वमेवेह । कथयासौ जगौ ततः ॥ दंष्ट्रा हि दुग्धनिष्पन्ना । मुंचंतीह ततो जलं ॥ ६० ॥ इत्थं चतुर्थयामेऽवि । प्रमीलादिप्रकीर्त्तनं ॥ बोधनं तर्जनेनेह । चिंताहेतुमथोऽवदत् ॥ ६१ ॥ कियंतः संति जनका–स्तव चिंता ममेति च ॥ तन्निशम्य विषसात्मा । राजाऽवक् किं ब्रवीषि रे ॥ ६२ ॥ सोऽवदत्पंच पितर–स्तव संति नराधिप ॥ कूटं चेन्मन्यसे मा-

ता । प्रमाणं ते तदाधुना ॥ ६३ ॥ ते के राज्ञेति संपृष्टे । सोऽवदत्कुंभकारकः ॥ वृश्चिको रज-
कश्चैव । मंडुरारक्षको नृप ॥ ६४ ॥ ततोऽसौ मातरं प्राह । कति मे पितरो वद ॥ कर्णौ पि-
धाय साऽवोच—द्वत्स किं जल्पितं त्वया ॥ ६५ ॥

एक एव जगन्मान्य—स्तवासीज्जनको ननु ॥ इत्युक्तोऽपि यदा नृपो । मुमोच न कदा-
ग्रहं ॥ ६६ ॥ ऋतुस्नानानंतरं सा । कुंभकारादिदर्शनं ॥ तदास्य कथयामास । तत् श्रुत्वा
स चमत्कृतः ॥ ६७ ॥ पुना रोहकमपृच्छ—त्कथं ज्ञातं त्वया ह्यदः ॥ सोऽवक् लत्तादिदानेन ।
चत्वारोऽप्यनुमेनिरे ॥ ६८ ॥ पंचमः सर्वदिक्स्वामी । लोकपाल इवोत्तमः ॥ पिता श्रीजि-
तशत्रुस्ते । बभूव भुवि विश्रुतः ॥ ६९ ॥ तन्निशम्य मुदा राजा । मुख्यं तं सर्वमंत्रिषु ॥
चकार राज्यचिंतां च । तस्मिन् सर्वां न्यवीविशत् ॥ ७० ॥ तस्य बुद्धिबलेनासौ । प्रौढानपि
महीभुजः ॥ हेलया साधयामास । शौर्याद्बुद्धिबलं वरं ॥ ७१ ॥ एवं बुद्धिबलोपेता । भवेयुः
केऽपि बालकाः ॥ अतो बालस्य न मौग्ध्यं । चिंत्यमेकांततस्त्वया ॥ ७२ ॥ इत्युक्ते यावदु-
स्थु—स्ते चत्वारोऽपि धूर्तका ॥ पादुकाकारकस्ताव—त्तत्रागाद्धर्षसंयुतः ॥ ७३ ॥ पूर्ववत्स तया

पृष्टः । सर्वं वृत्तांतमब्रवीत् ॥ ततः सा कथयामास । तव लाभो न दृश्यते ॥ ७४ ॥ सोऽ-
प्यभाणीन्ममात्यंत-मत्र लाभो भविष्यति ॥ सर्वस्वग्रहणे तस्य । यतो मे हृष्टता भवेत् ॥
॥ ७५ ॥ सागदत्तव हीनस्या-धिकवांछनयानया ॥ मूलनाशो ध्रुवं भावी । सोमशर्मपितुर्य-
था ॥ ७६ ॥ सोऽवदत्कः सोमशर्मा । पितुस्तस्य कथं ह्यभूत् ॥ मूलनाशस्ततः साह । कथ्य-
मानं मया शृणु ॥ ७७ ॥

पुरैकस्मिन्महाग्रामे । बटुश्चटुवचा भ्रमन् ॥ सक्तून् घनतरान् प्राप । नवसक्तुकपर्व-
णि ॥ ७८ ॥ ततः संध्याक्षणे कुंभ-कारगेहे जगाम सः ॥ कुंभं सक्तुभिरापूर्य । सुष्वाप च
महीतले ॥ ७९ ॥ सुप्तोऽसौ चिंतयामासा-मीभिर्लप्स्यामि कुर्कुटीं ॥ जनिष्यते स्तोकका-
ला-दपत्यानि बहूनि सा ॥ ८० ॥ ततोऽहं तानि विक्रीय । गां च तज्जनितैः पुनः ॥ तदप-
त्यैस्तु वडवां । ततो मेऽश्व्यश्वसंहतिः ॥ ८१ ॥ तदाहं घोटकान् सर्वान् । विक्रीय द्रविणं ब-
हु ॥ अर्जयित्वा च सद्मेहं । कारयिष्यामि हर्षदं ॥ ८२ ॥ ततोऽहं रुक्मिणीनाम्नीं । शुद्धब्रा-
ह्मणवंशजां ॥ कन्यामुद्वाह्य सोत्साहं । भोक्ष्ये वैषयिकं सुखं ॥ ८३ ॥ ततः सत्पुण्ययोगेन

। पुत्रो मे भविता वरः ॥ सोत्सवं सोमशर्मेति । प्रदास्ये तस्य नाम च ॥ ७४ ॥ तदा मे नृपसन्मानं । घोटकक्रयविक्रयात् ॥ भविष्यति ततो लोकै–रपि भक्तिः करिष्यते ॥ ७५ ॥ सर्वसौख्यमये काले । व्रजतीछं कदाचन ॥ रुदंतं वीक्ष्य तं बालं । वदिष्यामि प्रियांप्रति ॥ ॥ ७६ ॥ अये किं रोदयस्येनं । तदा सेछं गदिष्यति ॥ भवतां वल्लभोऽयं चे–त्तदा रक्षत सांप्रतं ॥ ७७ ॥ तथेति गदिते क्रोधो । भविष्यति मम ध्रुवं ॥ ततः पादप्रहारेण । हनिष्यामि निजां प्रियां ॥ ७८ ॥ पूर्वोक्तं सकलं चित्ते । चिंतितं तेन दुर्धिया ॥ पादप्रहारदानं तु । प्रत्यक्षं विहितं तदा ॥ ७९ ॥ तत्प्रहारवशात्कुंभः । शतखंडो बभूव सः ॥ कियंतः सक्तवः पश्चा–द्वातेन प्रेरिता ययुः ॥ ८० ॥

भस्मीभूता कियंतश्च । भूमिभस्मनि संस्थिताः ॥ लोभमूलं गता एवं । सकलास्तस्य सक्तवः ॥ ८१ ॥ तवापि पादुके चैते । गते जानीहि संप्रति ॥ यतो लोभस्तवैताभ्यां । जातो घनतरः किल ॥ ८२ ॥ श्रुत्वा तद्वचनं सोऽवक् । मां हृष्टं प्रविधाय सः ॥ चेल्लास्यति तदा लाभो । भविष्यति जगौ तु सा ॥ ८३ ॥ करिष्यति प्रहृष्टं त्वा–मेकवाक्येन सोऽधुना

॥ यतोऽन्यायनृपस्यात्र । पुत्रो जातोऽस्ति संप्रति ॥ ९४ ॥ राजगेहसुतोत्पत्त्या । किं त्वं हृ-
ष्टोऽथवा नहि ॥ इतीरिते हृष्टतैव । सम्मता दृश्यते तव ॥९५॥ तन्निशम्य गतो यावत् । स गे-
हं तावदागतः ॥ कितवोऽग्र तया पृष्टः । स्ववृत्तांतं न्यवेदयत् ॥ ९६ ॥ तदाकर्ण्य जगौ सा-
पि । कूटबुद्धिरहो तव ॥ तथापि यद्धनं तस्य । दत्तं तन्नोचितं कृतं ॥ ९७ ॥ सोऽजल्पत्तस्य
सर्वस्व—ग्रहणोऽयंमया किल ॥ सत्यंकारोऽर्पितो नूनं । सावोचत्तत्कृतं तव ॥ ९९ ॥

सोऽवदत्तं न पश्यामि । मनुष्यं भुवनेऽखिले ॥ यो हि गृह्णाति मद्वित्तं । ततः सोवाच
तंप्रति ॥ १०० ॥ कोऽयं वाऽखर्वगर्वस्ते । बुद्धिमान् यन्नरो भुवि ॥ विधेरपि श्रियं लाति । सु-
बुद्धिरिव बुद्धितः ॥ १ ॥ कोऽयं सुबुद्धिस्तेनेति । पृष्टे साप्यगदत्पुनः ॥ पृथ्वीभूषणनगरे ।
पृथ्वीचंद्रोऽभवन्नृपः ॥ २ ॥ मंत्री सुबुद्धिस्तस्यासी—त्सुबुद्धिर्नरभासुरः ॥ राज्यचिंताकरो नि-
त्यं । नृनृजनपदप्रियः ॥ ३ ॥ राज्ञः पुत्रेऽन्यदा जाते । प्रवृत्ते च महोत्सवे ॥ षष्ठीजागरणे
रात्रौ । सोऽगात्तज्जागयमीक्षितुं ॥ ४ ॥ दत्वा च तांबूलं तत्र । धवलानि तथैव च ॥ प्रसुप्ते का-
मिनीवर्गे । व्योमनि ध्वनिरित्यभूत् ॥ ५ ॥ व्याघोऽयं भविता नूनं । गते काले कियत्यपि ॥

तथा चैकतरं जीवं । सदा व्यापादयिष्यति ॥ ६ ॥ तन्निशम्य विषस्रात्मा । सुबुद्धिर्ध्यातवान् हृदि ॥ राजजातोऽपि नैवायं । राज्ययोग्यः प्रदृश्यते ॥ ७ ॥

द्वितीयेऽपि सुते जाते । षष्ठ्यां सोऽस्थात्तथा निशि ॥ तत्रैवं शब्दमश्रौषीत् । कौलिको भविता ह्ययं ॥८॥ तदा सदा बलीवर्दो–ऽस्यैको भावी गृहे खलु ॥ तत् श्रुत्वा हृदये दध्या–वसावपि न भाग्यवान् ॥९॥ पुत्री जातान्यदा राज्ञ–स्तथा षष्ट्यामपि स्वयं ॥ तथैव स्थितवानेव । शब्दं शुश्राव चोच्चकैः ॥ १० ॥ एषा वारवधूः पुत्री । भाविनी क्रमयोगतः ॥ नरोऽस्या भवने त्वेक । अयास्यति दिनं प्रति ॥ ११ ॥ इतीरितं निशम्यासौ । चिंतयामास मानसे ॥ दशेदृशी चेत्सर्वेषां । भावी राज्यक्षयस्तदा ॥ १२ ॥ चिंतयित्वेत्यसौ यावत् । स्थितो गंभीरमानसः ॥ तावताऽचिंतितं तत्र । परचक्रं समागतं ॥ १३ ॥ अल्पभृत्यस्ततो राजा । युद्धं कृत्वा चिरं रणे ॥ एकोऽपि पंचतां प्राप । धारातीर्थवशात्तदा ॥ १४ ॥

राजपुत्रौ तथामात्यः । केऽपि पौरजनाः पुनः ॥ दिशो दिशस्तदा नष्टा । जीवग्राहं पृथक् पृथक् ॥ १५ ॥ भल्लंठमनुजै राज–पुत्री बालवशाहृता ॥ ततोऽन्यत्र पुरे गत्वा । विक्रेतुं

विधृता पथि ॥ १६ ॥ अत्यंताद्भुतरूपां तां । दृष्ट्वा कापि पणांगना ॥ समर्प्य धनसंदोहं । ज-
ग्राहाग्रहसंयुता ॥ १७ ॥ राजपुत्रावप्यभूतां । व्याधकौलिककर्मिणौ ॥ दुःपूरोदरभृत्यर्थं ।
किं न कुर्वंति मानवाः ॥ १८ ॥ भक्तं च—मानं मुंचति सेवते रिपुजनं दीनं वचो भाषते ।
कृत्याकृत्यविचारणाविरहितो नापेक्षते दुःकृतं ॥ भंडत्वं विदधाति नर्त्तनकलाभ्यासं समभ्य-
स्यते । दुःपूरोदरपूरणव्यतिकरे किं किं न कुर्यान्नरः ॥ १९ ॥ ततः कियद्भिर्दिवसैः । स्वं कुं-
टुंबं सुबुद्धिना ॥ संमेल्य सकलं पश्चाद्—हृदीदं चिंतितं तदा ॥ २० ॥ कुमारयोः कुमार्याश्च
। गवेषणमतः परं ॥ कर्त्तुं मे युज्यते शीघ्रं । तथाविधप्रतिक्रियां ॥ २१ ॥

ततः कुटुंबं संस्थाप्य । कस्मिंश्चिन्नगरे वरे ॥ पुग्ग्रामद्रोणखेट—पत्तनादिषु सोऽभ्रमत्
॥ २२ ॥ एकस्मिन् स पुरे जीर्ण—वस्त्रं दुर्बलगात्रकं ॥ वृद्धं राजकुमारं तं । दृष्ट्वाभूत्सुखदुः-
खभाक् ॥ २३ ॥ लज्जानम्रमुखो जज्ञे । कुमारोऽपि विलोक्य तं ॥ ततः सुबुद्धिरित्याख्य
—ज्ञात्वास्य सविधिं तदा ॥ २४ ॥ ईदृशी दुरवस्था ते । वद राजसुतस्य किं ॥ सोऽवददैवयो-
गेना—जनि मे मतिमूढता ॥ २५ ॥ ततो मयान्यकर्माणि । मुक्त्वा सर्वाण्यपि स्वयं ॥ व्या-

धकर्म समारेन्ने । दैवं हि बलवत्तरं ॥ २६ ॥ तत्राप्येकमहं जीवं । हन्मि न द्वितीयं दिने ॥
तेन तातेदृशी जज्ञे । डुरवस्था ममाऽनमा ॥ २७ ॥ सुबुद्धिस्तु द्वितीयेऽह्नि । तेन सार्द्धम-
गाद्बहिः ॥ कुमारोऽथ शशं प्रेक्ष्य । बाणमुक्तिपरोऽनवत् ॥२८॥ अमात्यो वारयामास । तं
तदा हरिणादिकान् ॥ प्रौढप्रौढतरान् वीक्ष्य । स पुनर्हंतुमुद्यतः ॥ २९ ॥ अनूद्यदा यदा सो-
ऽय्य—वारयत्तं तदा तदा ॥ एवं संध्याक्षणे तत्र । समागाद्गजयूथकं ॥ ३० ॥ युग्मं ॥

ततः सुबुद्धिस्तं प्राहा—मीषु वृद्धं निपातय ॥ सोऽपि पूर्वममोघेन । बाणेनाशु जघान
तं ॥ ३१ ॥ तस्य कुंजस्थलान्मुक्ता—फलान्यादाय तौ ततः ॥ गेहे गतौ सुबुद्धिस्तु । व्यक्री-
णादेकमेषु तत् ॥ ३२ ॥ तस्य मौल्येन सन्नोज्यं । वस्त्राणि क्रीतवांस्तथा ॥ द्वितीयेऽपि दिने
तेन । हस्ती तद्वन्निपातितः ॥ ३३ ॥ सुबुद्धिस्तमुवाचैवं । वत्साहं तव बांधवं ॥ द्रष्टुं पुरादौ
गच्छामि । सदा कार्यं त्वया ह्यदः ॥ ३४ ॥ भ्रममाणोऽन्यदा पृथ्व्या—मेकस्मिन्नगरे स तं ॥
तृणार्थं पथि गच्छंतं । ददर्शैकवृषान्वितं ॥ ३५ ॥ ततः परस्परालापं । विधाय विधिवत्तदा ॥
गेहं गत्वा सुबुद्धिस्तं । प्रोचिवानिदमादरात् ॥ ३६ ॥ वत्सामुं वृषन्नं सद्यो । विक्रीयानय मं-

दिरे ॥ शालिदालादिसद्भोज्यं । घृतखंडसमन्वितं ॥ ३७ ॥ तस्योदितं निशम्यासौ । कुमारो हृद्यचिंतयत् ॥ सचिवोऽयं वरं भोज्यं । भुक्त्वा यास्यति कुत्रचित् ॥ ३८ ॥ परं मे शिरसा भारो—द्वहनं वृषभं विना ॥ प्राघूर्णकाः परार्त्तिं य—न्न जानंतीह तद्वतं ॥ ३९ ॥ उक्तं च—

चोरा चल्लकावि य । दुज्जण विज्जाय विप्प पाहुणया ॥ नच्चणी धुत्त नरिंदा । परस्स पीडं न जाणंति ॥ ४० ॥ उल्लंघ्यवचनो नायं । तथापि मम सांप्रतं ॥ एकतः प्रवरामात्यो—ऽन्यतोऽह्यभ्यागतोऽद्य मे ॥ ४१ ॥ विचिंत्यैवं स तस्योक्तं । सर्वं विहितवांस्तदा ॥ द्वितीयेऽपि दिने गेहे । तं दृष्ट्वा विस्मितोऽभवत् ॥ ४२ ॥ ततो निवेदयामास । सचिवं च स मुग्धधीः ॥ मंत्री तं प्रत्युवाचैवं विक्रीणिया अमुं पुनः ॥ ४३ ॥ तथा कृतेऽमुना तस्मै । सोऽपि शिक्षां ददाविमां ॥ वत्स यो वृषभोऽत्रैति । विक्रेतव्यस्त्वया स च ॥ ४४ ॥ ओमित्युक्ते तदा तेन । सोऽगात्पुर्यां निरीक्षितुं ॥ कुत्रचिद्गणिकागेह—श्रेण्यां तां च ददर्श सः ॥ ४५ ॥

तस्याः सम्यक् स्वरूपं स । ज्ञात्वा प्रोवाच तां प्रति । का त्वं कस्य सुता वासि । ततः सापि जगाद तं ॥ ४६ ॥ अहं राजसुता तात । कर्मणा विधृता भटैः ॥ विक्रीता च गृही-

ता च । गणिकाभिः प्रमोदतः ॥ ४७ ॥ तेनाहमीदृशी जाता । तथापि मम सांप्रतं ॥ एक एव पुमानेति । दौर्भाग्यैकशिरोमणिः ॥ ४८ ॥ निश्चित्य राजपुत्रीं स । ददौ शिक्षां तदेदृशीं ॥ वत्से यच्छति यो लक्षं । स प्रवेश्यस्त्वया गृहे ॥ ४९ ॥ त्रयाणामप्ययं वृत्तिं । कृत्वैवं सौख्यभागभूत् ॥ अन्यदा निशि निद्राणं । विधिस्तंप्रत्यबोधयत् ॥ ५० ॥ गतनिद्रोऽप्यसौ यावन्न ददावुत्तरं तदा ॥ विधिराहस्म किं निद्रा । घना भो वर्त्ततेऽधुना ॥ ५१ ॥ सोऽवग् निश्चिंतचित्तोऽहं । जातः सुप्तं ततो मया ॥ परं कस्त्वं किमर्थं भो । अत्रायातोऽसि सुंदर ॥ ॥ ५२ ॥ स जगाद विधिं विद्धि । भद्र मां क्षुद्रवर्जितं ॥ त्वद्बुद्धिबंधनात्किंतु । स्वं मोचयितुमागतं ॥ ५३ ॥ सुबुद्धिस्तंप्रति प्राह । भवत्वेषां तवोदितं ॥ सोऽवक् सत्यं परं मेऽत्र । गजादिकरणं कुतः ॥ ५४ ॥ ततः सुबुद्धिराचख्यौ । यदा राज्यं ददासि नः ॥ तदा ते संकटान्मोक्षो-ऽन्यथा भावी कदापि न ॥ ५५ ॥ विधिर्बभाषे तर्हि त्वं । वृद्धपुत्रस्य सन्निधौ ॥ गच्छ मौक्तिकवारांश्च । विक्रीय कटकं कुरु ॥ ५६ ॥ चतुरंगचमूं लात्वा । गत्वा स्वनगरे तथा ॥ निर्वास्य वैरिणः सद्यः । पुना राज्यं गृहाण भोः ॥ ५७ ॥

तस्योदितं निशम्यासौ । हृष्टचित्तस्तथाकरोत् ॥ आप्ते राज्ये पुनः सद्यः । स्वजनाद्याः
समेऽमिलन् ॥ ५८ ॥ पट्टाभिषेको विदधे । वृद्धपुत्रस्य तैस्ततः ॥ सुबुद्धिबुद्धितः सोऽपि ।
चिरं राज्यं चकार च ॥ ५९ ॥ बुद्धिमंतो जना एवं । विधेरपि बलाच्छ्रियं ॥ गृह्णंति कतम-
स्त्वं तु । गतमेव ततो धनं ॥ ६० ॥ तथा हृतं च दैवेन । तवैकं लोचनं पुरा ॥ धूर्त्तबुद्ध्याऽ-
नया किंतु । द्वितीयमपि यास्यति ॥ ६१ ॥ कथं गमिष्यतीत्युक्ते । तेन साप्यगदत्पुनः ॥ व-
दिष्यति स एवं ते । नेत्रं मुक्तं यथा त्वया ॥ ६२ ॥ अन्यैरपि तदा तानि । संति मुक्तानि मे
ततः ॥ स्वनेत्रमेकतो मुंच । तोलयित्वार्पयामि तत् ॥ ६३ ॥ अतोऽहं कथयाम्येषा । वृथा
ते कूटसूत्रणा ॥ न बुद्धिरेषा सत्येति । मन्यमानो ययौ स च ॥ ६४ ॥ इतस्तत्राययुः शीघ्रं
। चत्वारो वणिजस्तदा ॥ पूर्वव्भाषितास्तेऽपि । तस्य सर्वं न्यवेदयन् ॥ ६५ ॥ चिंतयित्वा नि-
जे चित्ते । तद्वचः साह त्पुरः ॥ भवन्निर्गद्दसर्वस्वं । हगान्निर्गमितं मुधा ॥ ६६ ॥

तेऽवोचन्नीरधेर्नीर—मानं केनापि नो भवेत् ॥ अतस्तच्छ्रियमस्माकं । गृहे प्राप्तामवेहि
वै ॥ ६७ ॥ साऽवग् विनापि जलधे—र्जलमानं भवच्छ्रियं ॥ गृहीष्यति मेधयासौ । का मे-

धेत्यथ तेऽभ्यधुः ॥ ६८ ॥ साऽब्रवीद्भवतां नूनं । स एवं कथयिष्यति ॥ मया समुद्रनीरस्य । मानमंगीकृतं पुरा ॥ ६९ ॥ निम्नगानीरमानस्य । न प्रतिज्ञा कृता तदा ॥ नदीनीरमतो यूयं । पृथक् कुरुत शक्तितः ॥ ७० ॥ नदीनीरपृथग्भागा–ऽकरणे भवतां श्रियं ॥ लास्यत्यसौ समुद्रस्य । नीरमानं विनाप्यहो ॥ ७१ ॥ ते प्रोचुर्वक्तुमप्येष । नैव जानाति बालिशः ॥ अतः कुतस्तनी तस्ये–दृशी बुद्धिः समृद्धिदा ॥ ७२ ॥ साऽवदद्भावदूकेन । विद्वांसो वादमादरात् ॥ नैव कुर्वंति किंतु द्राक् । सुधीवाण्या जयंत्यमुं ॥ ७३ ॥ अतोऽयं बुद्धिशुद्धेन । स्तोकेन वचसापि वः ॥ हारिमानेष्यति श्रीमान् । सोढ्याः श्रेष्ठिवधूरिव ॥ ७४ ॥ का श्रेष्ठिनो वधूः सोढी । कथं वा निर्जिता तया ॥ तैरित्युक्तेऽब्रवीत्सापि । श्रूयतां मम भाषितं ॥ ७५ ॥ सुसीम्नि ग्रामे सोढीति । नाम्ना कलहकारिणी ॥ वसतिस्म पुरा रंभा । प्रचंडा पातकप्रिया ॥ ॥ ७६ ॥ सा तथा व्रजति ब्रूते । वीक्षते च यथा कलिः ॥ केनचिज्जायते तस्या–स्तं विनान्नं न जीर्यति ॥ ७७ ॥ स्वगृहेऽन्यगृहे मार्गे । त्रिके चत्वरके तथा ॥ येन केनापि सावश्यं । करोति कलहं सदा ॥ ७८ ॥ तद्ग्रामे साऽजनि ख्याता । कलहेन ततो जनः ॥ राटीभीतो-

पराधेऽपि । कोऽपि ज्ञापयते न तां ॥ ७९ ॥ उक्तंच—

उद्यमे नास्ति दारिद्र्यं । जपतो नास्ति पातकं ॥ मौनेन कलहो नास्ति । नास्ति जागरतो भयं ॥ ८० ॥ कलिं विना तदा सापि । न रतिं लभते क्वचित् ॥ रार्टी कर्तुं ततो याति । परग्रामेषु नित्यशः ॥ ८१ ॥ वृषं पर्यणसंयुक्तं । विधाय कलिकर्तृका ॥ अन्यदा ग्रामयानाय । दास्या एवं समादिशत् ॥ ८२ ॥ एकं क्षिप्रं वटिकाया । माणकं भोजनाय रे ॥ लवणस्य माणकानि । पंच संमील्य राध्नुहि ॥ ८३ ॥ तदा प्राघुर्णिका कापि । प्रातिवेश्मिकेगहगा ॥ तत्स्वरूपाऽनभिज्ञा तां । तत् श्रुत्वैवं न्यवेदयत् ॥ ८४ ॥ जामे त्वयान्नपाकश्चेन्न कृतो न विलोकितः ॥ तदा किं न श्रुतोऽप्यस्ति । यदिह त्वं प्रजल्पसि ॥ ८५ ॥ तत् श्रुत्वा सावदद्दासी । मृतं कार्यमिहैव मे ॥ अतः स्वस्था भवाशु त्व-मुत्पर्याणय शांकरं ॥८६॥ सोढी तत उद्धुषित-शिखा कुर्कुटवद्भृशं ॥ प्रहारार्थमुच्छलंती । पिषंती दशनांस्तथा ॥ ८७ ॥ व्याघ्रीवोत्पाट्य धावंती । चपेटां क्रूरदर्शना ॥ महिषीवत्पुरतश्च । पश्चाच्च व्रजती मुहुः ॥८८॥ नृत्यासक्ता नर्त्तकीव । देहचालनतत्परा ॥ समायातकुगंधेव । मोटयंती च नाशिकां ॥ ८९॥

शिरोहतशुनीवाशु । चीत्कारांस्तन्वती तथा ॥ उत्प्लुत्योत्प्लुत्य भेकीव । पतंती च पुनः पु-
नः ॥ ९० ॥ दंशपरा सर्पिणीव । नकुलीव नखान्विता ॥ ग्रहिलेव रुदंती सा । स्खलंती
चालपत्तदा ॥ ९१ ॥ पंचभिः कुलकं ॥ रे रंभे मम गेहस्य । तप्तिः क्लिप्तास्ति किं त्वयि ॥
लोकस्त्यक्त्वात्मीयां तप्तिं । परकीयां करोति हि ॥ ९२ ॥ रंभे एरंडवल्लंबे । प्रविष्टा स्थातु-
मक्षमा ॥ परगृहेऽपि वृद्धेव । यतः शिक्षां ददासि मे ॥ ९३ ॥ भंडे खंभिततुंभे त्वं । पंडि-
तेव ददासि मां ॥ देहि शिक्षां स्वजिह्वायाः । शटितायाश्च कीटकैः ॥ ९४ ॥

भंक्ष्यामि लपनं तेऽद्य । पातयिष्यामि वा रदान् ॥ तालुतः कर्षयिष्ये च । जिह्वां य-
दिति भाषसे ॥ ९५ ॥ त्वया पंडितमानिन्या—ऽनेके मुग्धजनाः पुरा ॥ आक्रुष्टाः संति वा-
चाले । परमत्रास्म्यहं पुनः ॥ ९६ ॥ न दृष्टा चेदहं तत्किं । वार्त्तयापि हि न श्रुता ॥ यदे-
वमन्यजनव—न्मामधिक्षेप्तुमिच्छसि ॥ ९७ ॥ गोधूममूढक इव । हस्तं गोक्षुरमूढके ॥ निक्षि-
पसि चान्यबुद्ध्या । मया यत्कलिमिच्छसि ॥ ९८ ॥ बिले बिले न गोधा स्यात् । सर्पोऽपि कु-
त्रचिद्भवेत् ॥ इत्यादिकटुवाक्यैः सा । भीता प्राघूर्णिकाभवत् ॥ ९९ ॥ ततस्तस्याः पादयोः

ला । पतित्वादोऽवदत्स्वसः ॥ क्षमस्वैकं मेऽपराधं । वदिष्यामीदृशं न तु ॥ १००० ॥ तदा राटिकरी रोषा–त्पादेनाहत्य तां दृढं ॥ अरे लन्नपरे रंडे । मां जामिं किं प्रजल्पसि ॥ १ ॥ अहं जातास्मि ते पित्रा । किं वा ज्ञातासि संप्रति ॥ ब्रूषे नागरिकीन्नंग्या । मातृजातां जनाग्रतः ॥ २ ॥ त्वं पुनर्गोमुखव्याघ्री । धूर्त्तलक्षणलक्षिता ॥ त्वयेव परमस्मान्निः । किंतु दंन्ना न शिक्षिताः ॥ ३ ॥ मां समाक्रुश्य पूर्वं रे । पुनः क्षामयसेऽधुना ॥ पीत्वा नीरं हि पश्चात्त्वं । गृहं पृच्छसि मूढके ॥ ४ ॥ इत्यादिमलिनैर्वाक्यै–राचुक्रोश मुहुर्मुहुः ॥ ततः प्राघूर्णिका वाढं । चिंतयामास चेतसि ॥ ५ ॥ इयं प्रदीपनत्रस्त–गर्दन्नीव प्रवर्त्तते ॥ याग्रे खादति दशनैः । पादाभ्यां हंति पृष्टतः ॥ ६ ॥

ततो विष्टालिप्तमस्या । नब्भुकं ध्रियते यदि ॥ अग्रे ततो दह्यते चे–त्पश्चात्कूथेन लिप्यते ॥ ७ ॥ न शक्यतेऽनया सार्द्धं । कलिं कर्त्तुमलज्जया ॥ न न्नांडान्नीर्जनैर्न्नांड–चरित्राच्छिन्यते पुनः ॥ ८ ॥ कलहोपशमायास्याः । सामवाक्यं यदुच्यते ॥ तत्तप्तघृतमध्ये तु । नीरक्षेपणसन्निन्नं ॥ ९ ॥ यतः—

सामवादाः सकोपस्य । तस्य प्रत्युतदीपकाः ॥ प्रतप्तस्यैव सहसा । सर्पिषस्तोयबिंदवः ॥ १० ॥ अतो मुनेरिव मम । मौनमेव हितावहं ॥ ततः सा तत्समालंब्य । तस्थौ दुःस्थितमानसा ॥ ११ ॥ सोढी शुनीव भषित्वा । भषित्वा सुचिरं तदा ॥ स्वयमेव स्थिता वह्निर्नाशमेति निरिंधनः ॥ १२ ॥ तदादि तस्मिन् देशेऽपि । न वादयति कोऽपि तां ॥ अतो लग्नकपिकच्छु-रिव प्राप रतिं न सा ॥ १३ ॥ अरोचकीव नैवान्न-स्वादं लेभे कलिंविना ॥ महामयवतीवासौ । निद्रां नाप निशास्वपि ॥ १४ ॥ ततः सोत्काणमारुह्य । महाराष्ट्रप्रतिष्टितं ॥ प्रतिष्टानपुरं प्राप । तत्स्वरूपानभिज्ञकं ॥ १५ ॥ राजद्वारे तृणं नीरं । मुक्त्वा नृपतिसन्निधौ ॥ गत्वा चावगदं सोढी । नाम्ना कलहकारिणी ॥ १६ ॥

कलहे कुशलाः सर्वे-ऽन्यत्रस्था जिग्यिरे मया ॥ वीरक्षेत्रमिदं ज्ञात्वा-ऽागताहं कलिहेतवे ॥ १७ ॥ यदि त्वन्नगरे कोऽपि । चेदस्ति कलिशक्तिमान् ॥ स मया कलहं सार्द्धं । करोत्वास्थानसंस्थया ॥ १८ ॥ अन्यथा सर्वथा यूयं । तृणाहारपरायणाः ॥ पानीयं पिबथात्यंतं । तत् श्रुत्वाऽचिंतयन्नृपः ॥ १९ ॥ एतस्या अनुरूपोऽत्र । भविष्यति पुरे पुनः ॥ कस्य-

चित्कथयितुं न । शक्यते रात्रिंदिवे ॥ २० ॥ प्रत्यक्षः स परं भावी । पटहे वाद्यमानके ॥
मांत्रिशब्दश्रवणा—न्माध्यप्रवीणवत्स्वयं ॥ २१ ॥ ततो राजाज्ञया तत्र । पटहो वाद्यमानकः ॥
व्यवहारिपुण्यसिंह—द्वारदेशे समाययौ ॥ २२ ॥

तत्संबंधं च तद्बुध्ध्वा । ज्ञात्वा स्पृष्टः सहेलया ॥ ततस्तैः पुरुषै राज्ञे । तत्स्वरूपं निवेदितं ॥ २३ ॥ तत् श्रुत्वा परितुष्टोऽसौ । श्रेष्ठिनं च तदा नृपः ॥ पुण्यसिंहं समाकार्य । कार्यमेवं जगौ सुगीः ॥ २४ ॥ वध्ध्वा ते पटहः स्पृष्टो—ऽतो राज्यर्थमिहानय ॥ इत्युक्ते सोऽवदद्रूपं । स्वामिन् किं कथ्यते ह्यदः ॥ २५ ॥ किंतु सास्मद्वधूरुच्चै—र्वक्तुं जानाति न प्रभो ॥ विज्ञप्ता देवपादास्त—न्मृषा केनापि निश्चितं ॥ २६ ॥ राजाह यदि मे वाचि । प्रत्ययो न तवाधुना ॥ तर्हि गेहं व्रजित्वा त्वं । वधूं पृष्ट्वेह चानय ॥ २७ ॥ गेहे गत्वा ततः सोऽपि । वधूपार्श्वे नृपोदितं ॥ पृष्टवान् सा तथेत्याह । वचो भूपनिरूपितं ॥ २८ ॥ श्रेष्ठी जगाद वत्से किं । पटहोऽनर्थकारकः ॥ स्पृष्टस्त्वया ततः साबवक् । न ह्यनर्थो भविष्यति ॥ २९ ॥ तदा श्रेष्ठी वधूं लात्वा । जगाम नृपपर्षदि ॥ तां च पप्रच्छ राजेत्य—नया वादं करिष्यसि ॥ ३० ॥

तया शांतस्वरं प्रोचे । चैवं पृछत किंत्विमां ॥ कतिभेदाः कलेः संति । तदुत्पत्तिः कथं भवेत् ॥३१॥ ततो भूपतिना पृष्टा । कलिकर्त्री तदा जगौ ॥ एतद्विकल्पजालं न । पुराहं श्रुतवत्यपि ॥ ३२ ॥ मया हारितमेवातः । कथापयत सांप्रतं ॥ कलिविकल्पकल्पस्य । तत्वं गूढतरं किल ॥ ३३ ॥ ततो वणिग्वधूः सापि । नृपादिष्टा सविस्तरं ॥ राटिं चतुर्विधां तत्र । कथयामास पर्षदि ॥ ३४ ॥ एका दैवसिकी तत्र । परा षाण्मासिकी मता ॥ तृतीया वार्षिकी याव—ज्जीविका स्याच्चतुर्थिका ॥ ३५ ॥ उत्पत्तिः स्याद्यथैतासां । सर्वासां संसृतौ सदा ॥ चित्ते संदेहनाशार्थं । प्रोच्यमानं तथा शृणु ॥ ३६ ॥

एकस्मिन् शकटे भूप । भाटकं क्रियते यदि ॥ कलहो दिवसं याव—द्भवतीह तदा नृप ॥ ३७ ॥ एका वक्ति त्वया पादः । प्रलंबः सर्वथा कृतः ॥ सकलं शकटं रुद्धं । त्वयैव वक्ति चापरा ॥ ३८ ॥ इत्यादिवचसा मार्गे । कलिर्भवति निश्चितं ॥ स्वस्थानगतयोः प्रीतिः । पुनः संपद्यते तयोः ॥ ३९ ॥ चेत्सार्द्धं क्रियते क्षेत्रं । तदा षाण्मासिकः कलिः ॥ धान्येषु च गृहीतेषु । प्रीतिः संजायते पुनः ॥ ४० ॥ गृह्यते पट्टकः सार्धो । यदि कस्यापि कर्मणः ॥ वर्षं

यावत्तदाराटि—र्भवतीह जनाधिप ॥ ४१ ॥ सपत्न्योर्जायते योऽत्र । कलहोऽसौ नराधिप ॥ यावज्जीवमिति श्रुत्वा । राजा हृदि चमत्कृतः ॥ ४२ ॥

श्रेष्ठिनं सवधूकं स । वस्त्रालंकरणादिभिः ॥ सत्कृत्य स्वगृहं प्रैषीत् । राजा तद्बुद्धिरंजितः ॥ ४३ ॥ तया मुक्तं तृणजलं । तस्या एव गले तदा ॥ बध्ध्वा सोढी बहिर्देशा—द्भाग्निष्कासिता गता ॥ ४४ ॥ वाचालापि यथा सोढी । बध्ध्वाल्पवचसा जिता ॥ तथासौ भवतां जेता । भविष्यति न संशयः ॥ ४५ ॥ इत्युक्ते ते ययुः स्वं स्वं । स्थानं मानसमन्वितं ॥ रत्नचूडोऽपि तत्सर्वं । हृद्यधाद्गुरुवाक्यवत् ॥ ४६ ॥ तत उत्थाय तत्स्थानात् । स सार्द्धं रणघंटया ॥ ययौ तन्मंदीरं तां चा—नुज्ञाप्यागात्स्वमाश्रयं ॥ ४७ ॥ निश्चिंतमानसस्तत्र । निशां कृत्वा प्रगे स तान् ॥ समागतान् सामवाक्यैः । सुचिरं समबोधयत् ॥ ४८ ॥ तथाप्यबुध्यमानांस्तान् । लात्वा राजसभां ययौ ॥ द्वात्रिंशल्लक्षणोपेतं । तं दृष्ट्वा विस्मितो नृपः ॥ ४९ ॥ तथाच लक्षणानि—त्रिषु विपुलो गंभीर—स्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ॥ सप्तसु रक्तो राजा । पंचसु दीर्घश्च सूक्ष्मश्च ॥ ५० ॥ वक्षो वक्त्रं ललाटं च । विस्तीर्णं शस्यते ध्रुवं ॥ गंभीरं त्रि-

तयं शस्यं । नाभिः सत्त्वं स्वरस्तथा ॥ ५१ ॥ कंठः पृष्टं च लिंगं च । जंघयोर्युगलं तथा ॥ चत्वारि यस्य ह्रस्वानि । पूजामाप्नोति सोऽन्वहं ॥ ५२ ॥

सांगुलीपर्वभिः केशै–र्नखैर्दंतैस्त्वचापि च ॥ सूक्ष्मकैः पंचभिर्मर्त्या । भवंति चिरजीविनः ॥ ५३ ॥ स्तनयोर्नेत्रयोर्मध्यं । दोर्द्वयं नासिकाहनू ॥ पंच दीर्घाणि यस्य स्युः । स धन्यः पुरुषोत्तमः ॥ ५४ ॥ नाशा ग्रीवा नखाः कक्षा । हृदयं वदनं तथा ॥ षड्भिरभ्युन्नतैर्मर्त्याः । सदैवोन्नतिभाजिनः ॥ ५५ ॥ नेत्रांतरसनातालु–नखरा अधरोऽपि च ॥ पाणिपादतले चापि । सप्त रक्तानि सिद्धये ॥५६॥ स्वं स्वं वृत्तांतमामूल–चूलं तैः प्रकाश्य सः ॥ यमघंटोक्तसद्बुद्ध्या । तानजैषीन्नृपाग्रतः ॥ ५७ ॥ नीरनिधिनीरमान–कारकाणां ततः श्रियं ॥ सर्वां जग्राह कितवो । नंष्ट्वागात्कुत्रचित्तदा ॥ ५८ ॥ पादुकाकृत्सहर्षोऽह–मित्युच्चैरुच्चरन्नपि ॥ अत्यंतकृष्णवदनो । यथागतस्तथा ययौ ॥ ५९ ॥ पूर्वमनागतान् वस्तु–ग्राहिणो नृपपूरुषैः ॥ आकारयित्वा तद्बुद्ध्या । तेषां द्वारिमथानयत् ॥ ५९ ॥

नृपवाक्यात्तदा तेषां । चतुर्लक्षमितं धनं ॥ गृहीत्वा संकटान्मोक्तुं । चकार करुणापरः

॥ ६० ॥ अन्यायनिरतोऽप्युच्चै । राजा प्रोवाच तंप्रति ॥ वरं वृणीष्व तुष्टोऽहं । वयोऽधिकाधि-
या तव ॥ ६१ ॥ रत्नचूडो जगौ स्वामिन् । चेत्तुष्टोऽसि तदा पुरे ॥ अनीतिं वर्जय स्वीये ।
यद्यः श्रीनाशकारणं ॥ ६२ ॥ यतः—नयेन नेता विनयेन शिष्यः । शीलेन लिंगी प्रशमेन
साधुः ॥ जीवेन देहः सुकृतेन देही । वित्तेन गेही रहितो न किंचित् ॥ ६३ ॥ यांति न्याय-
प्रवृत्तस्य । तिर्यंचोऽपि सहायतां ॥ अपंथानं तु गच्छंतं । सोदरोऽप्यवमुंचति ॥ ६४ ॥ न च
सर्पमुखे रक्तं । न च शब्दः कलेवरे ॥ न प्रजासु न भूपाले । वित्तं दुरधिकारिणि ॥ ६५ ॥

इत्याद्यनेककविभिः । कृतैस्तैस्तैः सुभाषितैः ॥ तथा प्रबोधितो राजा । यथांगीकृतवान-
यं ॥ ६६ ॥ पुनर्वभाण राजा तं—न्यायांगीकरणं च यत ॥ तन्ममैव हितं ब्रूहि । स्वेष्टं किं-
चिदतोऽधुना ॥ ६७ ॥ कुमारः प्राह यद्येवं । रणघंटां तदार्पय ॥ नृपवाक्यात्तदा जज्ञे । सा-
प्यस्य गृहिणी वरा ॥ ६८ ॥ स उपार्ज्य धनं भूरि । तत्रैव स्तोककैर्दिनैः ॥ वहनं वस्तुभि-
र्भृत्वा । क्रमेणागान्निजां पुरीं ॥ ६९ ॥ पित्रादिस्वजनवर्गः । सर्वो हृष्टोऽभवत्तदा ॥ सौभा-
ग्यमंजरी सापि । मिलनाय मुदागमत् ॥ ७० ॥ सत्कारपूर्वमूचे सा । तेन भद्र धनं च यत्

तयं शस्यं । नाभिः सत्त्वं स्वरस्तथा ॥ ५१ ॥ कंठः पृष्टं च लिंगं च । जंघयोर्युगलं तथा ॥ चत्वारि यस्य ह्रस्वानि । पूजामाप्नोति सोऽन्वहं ॥ ५२ ॥

सांगुलीपर्वभिः केशै–र्नखैर्दंतैस्त्वचापि च ॥ सूक्ष्मकैः पंचभिर्मर्त्या । भवंति चिरजीविनः ॥ ५३ ॥ स्तनयोर्नेत्रयोर्मध्यं । दोर्द्वयं नासिकाहनू ॥ पंच दीर्घाणि यस्य स्युः । स धन्यः पुरुषोत्तमः ॥ ५४ ॥ नाशा ग्रीवा नखाः कक्षा । हृदयं वदनं तथा ॥ षड्भिरभ्युन्नतैर्मर्त्याः । सदैवोन्नतिभाजिनः ॥ ५५ ॥ नेत्रांतररसनाताल्ु–नखरा अधरोऽपि च ॥ पाणिपादतले चापि । सप्त रक्तानि सिद्धये ॥५६॥ स्वं स्वं वृत्तांतमामूल–चूलं तैः प्रकथाप्य सः ॥ यमघंटोक्तसद्बुद्ध्या । तानजैषीन्नृपाग्रतः ॥ ५७ ॥ नीरनिधिनीरमान–कारकाणां ततः श्रियं ॥ सर्वां जग्राह कितवो । नंष्ट्वागात्कुत्रचित्तदा ॥ ५८ ॥ पादुकाकृत्सहर्षोऽह–मित्युच्चैरुच्चरन्नपि ॥ अत्यंतकृष्णवदनो । यथागतस्तथा ययौ ॥ ५९ ॥ पूर्वमनागतान् वस्तु–ग्राहिणो नृपपूरुषैः ॥ आकारयित्वा तद्बुद्ध्या । तेषां द्वारिमथानयत् ॥ ५९ ॥

नृपवाक्यात्तदा तेषां । चतुर्लक्षमितं धनं ॥ गृहीत्वा संकटान्मोक्षं । चकार करुणापरः

॥ ६० ॥ अन्यायनिरतोऽप्युच्चै । राजा प्रोवाच तंप्रति ॥ वरं वृणीष्व तुष्टोऽहं । वयोऽधिकधि-
या तव ॥ ६१ ॥ रत्नचूडो जगौ स्वामिन् । चेत्तुष्टोऽसि तदा पुरे ॥ अनीतिं वर्जय स्वीये ।
सद्यः श्रीनाशकारणं ॥ ६२ ॥ यतः—नयेन नेता विनयेन शिष्यः । शीलेन लिंगी प्रशमेन
साधुः ॥ जीवेन देहः सुकृतेन देही । वित्तेन गेही रहितो न किंचित् ॥ ६३ ॥ यांति न्याय-
प्रवृत्तस्य । तिर्यंचोऽपि सहायतां ॥ अपंथानं तु गच्छंतं । सोदरोऽप्यवमुंचति ॥ ६४ ॥ न च
सर्पमुखे रक्तं । न च शब्दः कलेवरे ॥ न प्रजासु न भूपाले । वित्तं दुरधिकारिणि ॥ ६५ ॥
इत्याद्यनेकक्कविभिः । कृतैस्तैस्तैः सुभाषितैः ॥ तथा प्रबोधितो राजा । यथांगीकृतवान-
यं ॥ ६६ ॥ पुनर्बभाण राजा तं—न्यायांगीकरणं च यत ॥ तन्ममैव हितं ब्रूहि । स्वेष्टं किं-
चिदतोऽधुना ॥ ६७ ॥ कुमारः प्राह यद्येवं । रणघंटां तदार्पय ॥ नृपवाक्यात्तदा जज्ञे । सा-
प्यस्य गृहिणी वरा ॥ ६८ ॥ स उपार्ज्य धनं भूरि । तत्रैव स्तोककैर्दिनैः ॥ वहनं वस्तुभि-
र्भृत्वा । क्रमेणागान्निजां पुरीं ॥ ६९ ॥ पित्रादिस्वजनवर्गः । सर्वो हृष्टोऽभवत्तदा ॥ सौभा-
ग्यमंजरी सापि । मिलनाय मुदागमत् ॥ ७० ॥ सत्कारपूर्वमूचे सा । तेन भद्रे धनं च यत्-

व नंदनः ॥ स्त्रियावपि महावेश्ये । जाते जातिमदेन भोः ॥ ९२ ॥ दानपुण्यप्रभावेण । संपदो विपदाश्रये ॥ अनूनत्वस्य धर्मस्य । माहात्म्यात्किं न जायते ॥ ९३ ॥ यतः—धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं । धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ॥ कांताराच्च महाभयाच्च सततं धर्मः परित्रायते । सम्यग्धर्म उपासितो हि भवति स्वर्गापवर्गप्रदः ॥ ९४ ॥ अपरं च यथा रत्न—चूडोऽयं तव पुत्रकः ॥ तथा सांसारिको जीवः । या तु वेश्योपदेशदा ॥ ९६ ॥ सा कर्मप्रकृतिः प्रोक्ता । प्रेरका सर्वकर्मसु ॥ यद्यानपात्र चटनं । गर्भवासः स इष्यते ॥ ९७ ॥ यदनीतिपुरप्राप्ति—स्तद्धीनकुलसंभवः ॥ सर्वस्वग्राहका ये च । चत्वारो वणिजोऽधमाः ॥ ९८ ॥ ते तु क्रोधादयो ज्ञेया । धर्मवित्तापहारकाः ॥ पादुकाकृत्स रागो यो । द्यूतकृद् द्वेष एव सः ॥ ९९ ॥ ये वादकारकास्तेऽपि । चतस्रो विकथा मताः ॥ रणघंटा पुनर्बुद्धि—र्भव्या भव्यात्मिका स्वका ॥ ११०० ॥ यमघंटा परा—मिथ्या—दृष्टिः कूटनिकेतनं ॥ इत्येवमंतरंगेऽपि । विद्यते सकलं समं ॥ १ ॥ विकटा यमघंटास्य । वयस्या रणघंटया ॥ यथा सत्यमयी जाता । प्राच्यपुण्यानुभावतः ॥ २ ॥

तथा जीवस्य चेत्सानु–कूला वुद्धिः प्रजायते ॥ मिथ्यादृष्टिरपि प्रायः । सम्यग्दृष्टिर्भवे-
त्तदा ॥ ३ ॥ ततस्तान् सकलान् जित्वा । जीवोऽनंतश्रियं पुनः ॥ उपार्ज्य विश्वसन्मान्यः ।
सुखी स्याद्रत्नचूडवत् ॥ ४ ॥ इति श्रुत्वा गुरोः सम्यग् । श्रेष्ठी रत्नाकरस्तदा ॥ विरक्तः का-
मभोगेभ्यो । दीक्षां भार्यान्वितो ललौ ॥ ५ ॥ रत्नचूडोऽपि सम्यक्त्व–मूलां स द्वादशव्रतीं ॥
गृहीत्वा सफलं जन्म । मन्यमानो गृहं गतः ॥ ६ ॥ ततःप्रभृति स सप्त–क्षेत्रेषु प्रचुरं धनं
वपन् दुःस्थितदीनेषु । दयादानं ददौ मुदा ॥ ७ ॥ द्विकालावश्यकं शुद्धं । त्रिकालं देवपूजनं
॥ पौषधं पर्वघस्रेषु । विधत्ते विधिवत्स च ॥ ८ ॥ प्रतिवर्षं संघयात्रां । संघभक्तिं तथैव च ॥
प्रायश्चित्तविशुद्धिं च । कुरुतेऽसौ सदा तदा ॥ ९ ॥ त्रिवर्गाराधनपरे । तस्मिन् पुत्रोऽन्यदा
ऽजनि ॥ ततश्चतुर्थवर्गार्थ–मयं दीक्षामशिश्रयत् ॥ १० ॥

आराध्य संयमं सम्यग् । दृष्टिवादमधीत्य च ॥ इंद्रसामानिको जज्ञे । स्वर्गे स्वर्गी स
सप्तमे ॥ ११ ॥ स ततोत्कृष्टभोगांश्च । भुक्त्वोत्कृष्टस्थितिं तथा ॥ जन्मोत्कृष्टकुले प्राप्य ।
ततो मोक्षं च यास्यति ॥१२॥ यथैतदन्नदानं ते । दर्शितं सनिदर्शनं ॥ वसत्यादीनि चान्या-

नि । सप्त श्रीजिनशासने ॥ १३ ॥ पात्रान्नयदयाकीर्त्यु–चितदानानि कुत्रचित् ॥ ज्ञानादीनि पुनः क्वापि । कथितानीह संति न्नोः ॥ १४ ॥ तन्मध्येऽन्नयसत्पात्र–दानान्यां मोक्षसंन्नवः ॥ अनुकंपादिकान्याहुः । स्वर्गादिफलदान्यलं ॥ १५ ॥ येनोच्चैरुणमाशुकुंतामितिगीर्वर्णेषु सत्यां परां । विज्ञा यस्य सुवर्णदानमवदन् कल्पद्रुमादिष्वलं ॥ भिन्नं किंचन नो तथापि विहितः सद्वर्णनाशोऽद्भुतं । सोऽयं श्रीविमलोमलोक्तलवलो न्नूयान्मुदे वः सदा ॥ १६ ॥

॥ इति श्रीतपोगणनायकन्नट्टारकश्रीरत्नसिंहसूरिशिष्यन्नट्टारकश्रीज्ञानसागर-
सूरिविरचिते श्रीविमलनाथचरित्रे महाकाव्ये दानधर्माधिकाररूपः
प्रथमः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रं० ( ११२७ )

॥ अथ द्वितीयः सर्गः प्रारन्यते ॥

एवं श्रीधर्मकल्पद्रो–र्दानशाखा प्रकीर्तिता ॥ द्वितीया शीलशाखा तु । कथ्यमाना निशम्यतां ॥ १ ॥ सुंदराः सुंदरास्तेषां । विपदोऽपि च संपदः ॥ विपक्षोऽपि स्वपक्षः स्यात् । काननं जनकाननं ॥ २ ॥ देवता देवताद्वा स्या–दसुरा असु राज्यदाः ॥ श्वापदाः स्वापदाधा-

॥ ११० ॥

राः । प्रधनं प्रधनप्रदं ॥ ३ ॥ पितृगृहं पितृगृहं । विज्ञावसुर्विज्ञावसुः ॥ रत्नगर्ज्ञा रत्नगर्ज्ञा । ये शीलं पालयंत्यहो ॥ ४ ॥ त्रिज्ञिर्विशेषकं ॥ यथैको निर्मलादित्यो । हंति सर्वं तमोज्नरं ॥ वीरो वा वैरिणां वृंदं । विग्रहांतर्गतं जयेत् ॥ सिंहो वारणसंघातं । यथैकोऽपि जयत्यलं ॥ तथैकं विमलं शीलं । सर्वकार्यकरं परं ॥ ६ ॥ युग्मं ॥ यतः—अहो सहोदरं तेज—स्तेजःपतिसुशीलयोः ॥ परेषां तेजसां येन । तमसां च निमीलनं ॥ ७ ॥ संघादिकार्ये जीवानां । हिंसनं कुत्रचिन्मतं ॥ सत्वरक्षाविधानादौ । मृषाज्ञाषाप्युदीरिता ॥ ८ ॥ आत्ते दत्ते द्विषां चित्ते । महत्त्वं नूनजां ज्नवेत् ॥ एकांतेन निषिद्धो न । गृहस्थानां परिग्रहः ॥ ए ॥

तथा दिग्गमनज्नोगो—पज्नोगोऽपि न निंदितः ॥ दाक्षिण्यविषयेऽनर्थ—दंडोऽप्यंगीकृतोऽस्ति च ॥ १० ॥ परं परप्रियासंगो । वारितो विविधागमे ॥ अतो व्रतोत्तमं शीलं । पाल्यमास्तिकमानवैः ॥ ११ ॥ पिशुनोऽपि सुशीलो यः । स प्रयाति परं पदं ॥ महासतीत्वं वामापि । तस्माच्छीलं सदाश्रयेत् ॥ १२ ॥ अकामा अपि सत्कामा । अप्रिया अपि सप्रियाः ॥ सरोगा अपि नीरोगाः । शीलान्मर्त्याः स्त्रियोऽप्यहो ॥ १३ ॥ शूरोऽपि मंदतेजाः स्यात् । शंभु-

रप्यंगभंगभाक् ॥ कलंकयुक्तो राजापि । शीलहीनो हरिः कुट्टक् ॥ १४ ॥ शीलवतीव ये शीलं । पालयंति सदा मुदा ॥ इह तेषां भवेत्कीर्त्तिः । स्वर्गमोक्षौ परत्र च ॥ १५ ॥ केयं शीलवतीत्येवं । राज्ञोक्ते गुरूरब्रवीत् ॥ सुवृत्तपात्रे सज्जंबू–द्वीपे दीपोपमे समे ॥ १६ ॥ समस्ति भारतं क्षेत्रं । सीरिवृषविराजितं ॥ कौटुंबिकजनोपेतं । कर्मनिर्माणकर्मठं ॥ १७ ॥ युग्मं ॥ तत्रास्ति विबुधाधारं । सरंभाप्सरसां पदं ॥ नंदनोद्यानवत्प्रौढं । सद्भायं नंदनं पुरं ॥ ॥ १८ ॥ भद्रजातिभवा यत्र । पुन्नागा दानशालिनः ॥ तद्युक्तं चित्रकृत्त्वेत–द्दशा दानकरा हि यत् ॥ १९ ॥ यद्यशोराजहंसः स–न्मानसे वसतात्परं ॥ यत्क्षीरनीरयोरैक्यं । करोति तन्न सांप्रतं ॥ २० ॥ यस्य प्रतापतपनो ! वर्षाकालेऽपि दीप्तिमान् ॥ द्विट्पुरस्थं च कीलालं । शुशोष स्वकरैरहो ॥ २१ ॥ तत्र श्रीअरिदमनः । कमनप्रभविग्रहः ॥ जगत्प्रियः प्रेमपात्रं । स राजाजनि विश्रुतः ॥ २२ ॥ त्रिभिर्विशेषकं ॥ वेलां लब्ध्वा वनघनो–त्कलिका येन चाहता ॥ तस्मिन् रत्नाकरः श्रेष्टी । स आसीत् सुस्थितिप्रियः ॥ २३ ॥ प्रद्युम्नयुक्ता नालीक–गुरुवासविराजिनी ॥ जिनभक्तिरता श्रीव–त्तस्य श्रीरिति गेहिनी ॥ २४ ॥ श्रीदेवी यत्प्र-

या जज्ञे—ऽमुष्य तत्कौतुकं न हि ॥ अंगजापि यतो लक्ष्मी—र्विविधैर्भुज्यते जनैः ॥ २५ ॥ त-
योस्त्रिवर्गपरयो—र्वासराः शुभ्रभासुराः ॥ यांति भ्रांतिभिदोऽन्योऽन्यं—रक्तयोरवियुक्तयोः ॥
॥ २६ ॥ शर्मधर्ममये काले । कियत्यपि गते सति ॥ अन्यदा निशि स श्रेष्ठी । जागरूको
व्यचिंतयत् ॥ २७ ॥ भूरिदासा ममावासा । लक्ष्मीर्लक्ष्मीनिबंधनं ॥ दाराः शीलगुणाधाराः
। स्वजना विशदाननाः ॥ २८ ॥ पुरे वासो गुणाभ्यासो । व्यवसायोऽपि विद्यते ॥ परं ते-
जो विना राजा । विनाज्यं भोजनं यथा ॥ २९ ॥ नेत्रं विना यथा वक्त्रं । राज्यं च सचि-
वं विना ॥ राज्यांगानि विना भूपं । विना धर्मं च मानवः ॥ ३० ॥ दानं विना धनं यद्व—
द्विना शीलं यथा वशा ॥ न शोभते जने तद्व—द्विना पुत्रं कुलं मम ॥३१॥ चतुर्भिःकलापकं।
प्रभाते श्यामवदनं । प्राह प्रेक्ष्य पतिं प्रिया ॥ स्वामिन् स्वर्णनिधिः कोऽपि । किमं-
गारमयोऽभवत् ॥ ३२ ॥ अमूल्यं बहुमूल्यं वा—ऽपतद्रत्नं करादथ ॥ लेख्यके क्रियमाणे वा
। कस्यचिन्नाम विस्मृतं ॥ ३३ ॥ कन्या चित्तेऽवसत्कापि । व्यवसायोऽथवाधुना ॥ येन चिं-
तापरा यूयं । जाताःख्याताः स्वजातिषु ॥ ३४ ॥ तन्निशम्यावदत् श्रेष्ठी । भद्रेऽन्यत्कारणं न

हि ॥ सुपुत्रविषया किंतु । चित्ते चिंता प्रवर्त्तते ॥ ३५ ॥ तत् श्रुत्वा सा जगौ भूय–श्चिंतेषा ह्यावयोः समा ॥ पुत्रप्राप्त्यै तदा स्वामि–न्नन्यां कन्यां समुद्वह ॥ ३६ ॥

कर्णौ पिधाय सोऽवोच–दाः किमुक्तं त्वयानघे ॥ पुत्रो भवतु मा वा मे । परं कुर्वे न चेदृशं ॥ ३७ ॥ तस्य चिंतापनोदार्थं । सागदङ्गदस्वरं ॥ यक्षिणीमजितबला–मजितस्वामिसेविकां ॥ ३८ ॥ समाराधय नाथ त्वं । सा तुष्टा सुतमद्भुतं ॥ प्रदास्यत्यावयोः सौख्य–दायकं कुलनायकं ॥ ३९ ॥ युग्मं ॥ यतः—सा पुत्रदा ह्यपुत्रेभ्यः । सुखदा दुःखपूरिते ॥ नेत्रदा नेत्रहीनानां । धनदा दुःस्थिते जने ॥ ४० ॥ प्रतीचीसन्मुखो भूत्वा । ततोऽसौ दंतधावनं ॥ अकरोत्प्रागुदिशि स्नान–मुदक्स्थो धौतिकान्यलात् ॥ ४१ ॥

प्रविश्य स्वगृहं वाम–भागसंस्थानसंस्थिते ॥ देवतावसथे सार्द्ध–पंचशाखोन्नतेऽर्चिते ॥ ४२ ॥ पूर्वदिक्सन्मुखो भूत्वो–त्तराशायां गृहस्थिताः ॥ प्रतिमा नीरैः संस्नाप्य । विधिपूर्वकमादरात् ॥ ४३ ॥ हृत्कंठोदरभालेषु । नवांगेषु च चंदनैः ॥ चर्चयित्वा ततः पुष्पै–स्तैर्वैवार्चामसौ व्यधात् ॥ ४४ ॥ प्रतिमाया वामभागे । धूपदाहं च दक्षिणे ॥ दीपदानमकृता-

द्वि–ढौकनं पुरतोऽकरोत ॥ ४५ ॥ चित्तचीवरवाक्काय–पूजाभूस्थितिशुद्धिभाक् ॥ भंग्यालंकारसंयुक्त–स्ततो देवगृहं ययौ ॥ ४६ ॥ तत्र बलानकद्वारे । कृत्वा नैषेधिकीं पुरा ॥ मध्ये विवेश प्रासाद–चिंतां चक्रेऽन्यकर्ममुक् ॥ ४७ ॥ ततो गर्भगृहद्वारे । कृत्वा नैषेधिकीं पुनः ॥ जिनार्चाया विशेषार्चा । व्यधत्त विधिवन्मुदा ॥ ४८ ॥ पाश्चात्यपादचारेण । द्वारं गर्भगृहस्य तु ॥ गत्वा नैषेधिकीं कृत्वा । षष्टिहस्तोचितस्थितः ॥ ४९ ॥ योगमुद्रां विधाय श्री–अजितस्वामिनं जिनं ॥ यक्षिण्याजितबलया । युतं स्तोतुं प्रचक्रमे ॥ ५० ॥

देवेंद्रालिनतं जनोच्चयमतं दीप्रप्रभासंगतं । विद्वद्वृंदनुतं महोदययुतं प्रौढप्रभावाद्भुतं ॥ नित्यश्रीसहितं मनुष्यमहितं श्रीमद्विहारस्थितं । सार्वं श्रीअजितं स्तवीमि रहितं दोषैरशेषैर्हितं ॥ ५१ ॥ स्वस्तिश्रीसुखदं प्रणाशितगदं सद्ब्रह्मतोयह्रदं । दत्तागण्यमुदं समस्तसुहृदं संप्राप्तमोक्षास्पदं ॥ त्यक्तात्यंतमदं स्वभावविशदं निःशेषनष्टापदं । शश्वत्पूज्यपदं तमोरिपुभिदं दुष्टाष्टकर्मच्छिदं ॥ ५२ ॥

सौख्यालीसदनं निरस्तमदनं मोहेभपंचाननं । मुक्तासारघनं निरुद्धनिधनं संतोषसंजी-

वनं ॥ प्रितानेकजनं शमद्रुमवनं विश्वत्रयीपावनं । वंदेऽसदृजिनं सदाजितजिनं संसारिजी-
वावनं ॥५३॥ अंतर्वैरिजयं प्ररूपितनयं संस्कृतजीवान्वयं । प्राप्तापारलयं प्रकाशितदयं सुज्ञानभा
नूनयं ॥ चंचत्कांतिचयं विशुद्धसमयं प्रोधूतपुष्टस्मयं । सर्वत्रातिशयं प्रसिद्धिनिलयं विक्षिप्तनाना-
मयं ।५४। भव्यानंदकरं हृताश्रितदरं विज्ञानरत्नाकरं । पापव्यापहरं शिवोदयधरं पुण्याढ्यदृग्गोच-
रं ॥ संसाराब्धितरं परं जिनवरं विश्वत्रयाविष्करं । नम्रानेकसुरं हतार्त्तिनिकरं विष्वकूतमो-
भास्करं ॥ ५५ ॥ चंचच्चंद्रकलं कलंकविकलं संप्राप्तसत्केवलं । वर्यानंतबलं श्रिनाजितबलं सं-
प्रीणिताखंमलं ॥ मुक्तानंदमलं प्रणष्टतुमुलं संपूर्णविश्वातुलं । प्राप्तप्राणिफलं निषेधितपलं नि-
स्सीमशर्मोज्ज्वलं ॥५६॥ क्लिप्ताखंमभवं कृताखिलशिवं कल्याणकारिस्तवं । शांतक्रोधदवं शु-
भाभ्रुनरवं संतृप्तसन्मानवं ॥ ज्ञातस्वानुभवं जगज्जननवं त्यक्ताखिलंगारवं । तीर्थोत्पत्तिभुवं
सुरासुरनुवं शश्वद्धतोपद्रवं ॥ ५७ ॥

संदस्यत्सुमुखं विधूपममुखं सद्देशनाप्राङ्मुखं । ध्वस्तायुग्विशिखं वरारुणनखं संरुद्ध-
वाग्दुर्मुखं ॥ स्याद्वादिप्रमुखं सदा विजितखं संनम्रवह्निमुखं भ्रस्पृक्पंचमुखं समासमसखं सेवे

जिनेंद्रमुखं ॥ ५८ ॥ इति स्तुत्वा जिनाधीशं । तथाऽजितबलामपि ॥ देव्याश्च पुरतोऽवादीत् । हस्तौ संयोज्य संमदात् ॥ ५९ ॥ देवि चेत्त्वत्प्रसादान्मे । पुत्रोत्पत्तिर्भविष्यति ॥ तदा पुत्रस्य ते नाम । दास्ये स्वास्येन सुंदरं ॥ ६० ॥ तथा नवीनं प्रासादं । कारयिष्ये कृपापरे ॥ नित्यं ते त्रिविधां पूजां । विधास्ये कुसुमादिभिः ॥ ६१ ॥ प्रासादे क्रियमाणे तु । सर्वत्र गुरुता तव ॥ अन्यथा वर्णहीनश्च । त्वमावयोरप्रभावयोः ॥ ६२ ॥ जिनपूजाप्रभावेण । तथा देव्यनुभावतः ॥ अचिरेणैव कालेन । पुत्रो जातः शुभे दिने ॥ ६३ ॥ सुतजन्मोत्सवस्तेन । निर्ममे शर्मशालिना ॥ कुलागतविधिश्चापि । दानसन्मानपूर्वकं ॥ ६४ ॥ हर्षावासे ततो मासे । जाते जातेन संयुतः ॥ देव्या वर्द्धापनं चारु । चक्रेऽचक्रेण चेतसा ॥ ६५ ॥

संपूज्य च जिनं देवीं । संतोष्य स्वजनव्रजं ॥ तनयस्याजितसेन । इति नाम स दत्तवान् ॥ ६६ ॥ हर्षोत्कर्षयुतः श्रीमान् । प्रासादं स्ववसुव्ययैः ॥ कारयामास पूजां च । विधत्ते विधिना सदा ॥ ६७ ॥ धात्रिभिः पाल्यमानोऽसौ । लाल्यमानोऽखिलैर्जनैः ॥ पित्रोर्मनोरथैः साकं । ववृधे वृद्धभाग्यवान् ॥ ६८ ॥ बलक्षपक्षराजेव । स नवां जगृहे कलां ॥ कलां

दिने दिने भव्यां । काकपक्षधरोऽपि च ॥ ६९ ॥ क्रमेण यौवनं प्राप । सौभाग्यभरभासुरं ॥ अकृत्रिमं यत्कृतिनां । देहभूषणमुच्यते ॥ ७० ॥ तत् प्रेक्ष्य जनको दध्यौ । जनकोटिविशारदः ॥ कानुरूपा वरा कन्या । धन्या चास्य महीतले ॥ ७१ ॥ शीलं यस्या अप्रमीलं । सदाचारातुलं कुलं ॥ अनुरूपं तथा रूपं । धर्मकर्मरता तथा ॥ ७२ ॥ वयोविद्यासनाथत्वं । देहमानं गुणास्पदं ॥ लज्जाविनयनम्रत्वं । विषदोषादिवर्जनं ॥ ७३ ॥ युग्मं ॥

ईदृशी चेद्भवेत्कन्या । विवाहोऽपि तदा वरः ॥ भवद्वयविनाशः स्या—दन्यथा मत्सुनस्य ही ॥ ७४ ॥ अतोऽस्य सुगुणा कन्या । क्वापि मृग्या मया नयात् ॥ इति चिंतापरे तस्मि—न्नागादेको वणिक्सुतः ॥ ७५ ॥ त्वदादेशादहं श्रेष्ठिन् । गतः कृतांगलां पुरीं ॥ व्यवसायं प्रकुर्वाणः । स्थितस्तत्र स्थिराशयः ॥ ७६ ॥ तत्राथ जिनदत्तेन । व्यवहारो ममाभवत् ॥ ततः कदाचित्तेनाहं । भोजनार्थं निमंत्रितः ॥ ७७ ॥

दिव्यरूपां तदावासे । दृष्ट्वैकां वरकन्यकां ॥ पृष्टः श्रेष्ठी सुता कस्य । किं नाम्नैषा मयेति सः ॥७८॥ श्रेष्ठी जगौ सुतामेऽसौ । सर्वलक्षणलक्षिता ॥ ठंदोलक्षणसाहित्या—लंकारादि-

विशारदा ॥ ७९ ॥ क्षेत्रं क्षेत्रसमासोक्तं । संग्रहिण्याश्च संग्रहं ॥ प्रकृतिं कर्मप्रकृते–र्वेत्ति चान्यदपि श्रुतं ॥ ८० ॥ निमित्तज्ञानमप्येषा । लिखनाद्यास्तथा कलाः ॥ शकुनारावपर्यंता । जानाति जनतामताः ॥ ८१ ॥ शारदेव कुमारीयं । करसंन्यस्तपुस्तका ॥ सदा कमलहस्ता च । विचारचतुराशया ॥ ८२ ॥ अर्थतो नामतश्चापि । पुत्री शीलवती सती ॥ परं वरं न पश्यामि । योग्यमस्याः क्ष्मातले ॥ ८३ ॥

तेन मे हृदये चिंता–चिता ज्वलति नित्यशः ॥ ततः संतापमंतप्तो । नाप्नोमि हृदि निर्वृत्तिं ॥ ८४ ॥ पुनर्मया दयापन्न–चेतसा जगदेंगदे ॥ सति बाहुविभूषायाः । का चिंता वद कोविद ॥ ८५ ॥ रत्नाकरसुतकरं । प्राप्येयं मुदिता सती ॥ सितांशुका कौमुदीव । संतापं तेऽपनेष्यति ॥ ८६ ॥ कोऽयं रत्नाकरः श्रेष्ठी । विश्रुतस्तन्सुतोऽस्ति कः ॥ इति पृष्टे मया सर्वं । यथावृत्तं निवेदितं ॥ ८७ ॥ रोहिणीव सिद्धियोगं ! तेनेयं मिलिता सती ॥ करोतु ते सद्वितीया । धिष्ण्यमध्यस्थिता स्थिरा ॥ ८८ ॥ जिनदत्तो निशम्यैत–त्तत्वबुद्धिश्रियां निधिः ॥ चित्ते विचारयामास–ऽयतिसुंदरमादरात् ॥ ८९ ॥

श्रेष्टिनोऽस्य पुरे वास–स्तथा च विमलं कुलं ॥ वित्तं बहुतरं चित्तं । विचारचतुरं वरं ॥ ॥ ए० ॥ उदारत्वं स्वदारासु । संतोषत्वं कृपा परा ॥ त्रपा परोपकारित्वं । व्यवहारोऽपि निर्मलः ॥ ए१ ॥ युग्मं ॥ कुमारोऽजितसेनस्तु । तरुणः करणैः पटुः ॥ अतिछेकः सविवेकः । सुशीलश्च स्वन्नावतः ॥ ए२ ॥ पितृमातृयुतः श्रीमान् । देहदूषणवर्जितः ॥ विद्याविनयसंपन्नो । नयज्ञः सकलो ह्रिधा ॥ ए३ ॥ शास्त्रे वरस्य यान्युच्चै–र्लक्षणान्युदितानि वै ॥ तैर्युतः श्रूयते वर्यः । कुमारो माररूपन्नाक् ॥ ए४ ॥ यतः—वपुः शीलं कुलं वित्तं । वयो विद्या सनाथता ॥ एतानि यस्य विद्यंते । तस्मै देया निजा सुता ॥ ए५ ॥ मूर्खनिर्धनदूरस्थ–शूरमोक्षान्निलाषिणां ॥ त्रिगुणाधिकवर्षाणां । चापि देया न कन्यका ॥ ए६ ॥ मानसे संप्रधार्यैवं । मां प्राह विनयादसौ ॥ त्वया ह्युत्तारितः शीघ्रं । चिंताब्धेर्दुस्तरादहं ॥ ए७ ॥ अतस्त्वं स्वपुरं याहि । गृहीत्वा जिनशेखरं ॥ पुत्रं मदीयमुद्वाह–मेलनायाविलंबतः ॥ए८॥ तं लात्वाहं समेतोऽस्मि । तदादेशं प्रदेहि मे ॥ श्रेष्ठी तद्वचनं श्रुत्वा । सहर्षोऽमुं समादिशत् ॥ एए ॥ त्वत्समाना वणिक्पुत्रा । न्नवंति भुवि न्नाग्यतः ॥ एकाकार्यकृते प्रेषि । त्वं मयानेककार्यकृ-

तू ॥ ९९ ॥ श्रेष्ठिपुत्रं जगन्मित्रं । शीघ्रमानय आनय ॥ विलंबो युज्यते नात्र । विवाहविधिकर्मणि ॥ १०० ॥ तेनाहूतस्ततः सोऽपि । समागात्तस्य सद्मनि ॥ यथोचितं च विनयं । कृत्वा सुस्थानमासदत् ॥ १ ॥ दत्वासनप्रदानादि–मानमानंदिताशयः ॥ पप्रछ कुशलं श्रेष्ठी । जिनदत्तस्य गेहगं ॥ २ ॥ तत्स्वरूपं निरूप्यासौ । विवाहविषयां ततः ॥ वार्त्तां निवेदयामास । स्वतातगदितां मतां ॥ ३ ॥

तदाकर्ण्य सहर्षः सन् । श्रेष्ठी रत्नाकरस्तदा ॥ संमेल्य स्वजनव्यूहं । तैः सार्द्धं स व्यचारयत् ॥ ४ ॥ सर्वेषां सम्मते नीते । ज्योतिर्विदमथाह्वयत् ॥ जन्मपत्रीं दर्शयित्वा । तयोर्लग्नं ततो ललौ ॥ ५ ॥ श्रेष्ठिपुत्रः सच्चरित्र–स्ततः स्वनगरं ययौ ॥ स्वरूपं स पितुः सर्वं । शशंस सुमनाः स्वयं ॥ ६ ॥ निशम्य जिनदत्तोऽपि । तदुक्तं व्यक्तमादरात् ॥ चक्रे विवाहसामग्रीं । समग्रां व्यग्रमानसः ॥ ७ ॥ समीपगे शुभे लग्ने । स्वजनादिसमन्वितः ॥ ययौ रत्नाकरः श्रेष्ठि । जिनदत्तपुरं वरं ॥ ८ ॥ सहर्षं स्वजनैः साकं । सर्वकार्याणि जज्ञिरे ॥ सरंगः सर्वथा लोके । विवाहो वर्ण्यते जनैः ॥ ९ ॥ रत्नाकरोऽपि यदसौ । कमलाममृतोद्भवां

हं तदा ॥५१॥ मौनं कुरु ततः काक । मा वराक पुनर्वद ॥ गुणागुणविचारो न । यत्र तत्र वसेन्न हि ॥ ५२ ॥ कदाचित्कर्मवशतः । स्थानं मौनं तदा वरं ॥ गुणोऽप्यगुणतां याति । यतस्तत्र सतां ध्रुवं ॥ ५३ ॥ आचख्यौ तन्निशम्यासौ । किं त्वया गदितं वधु ॥ साप्याह सत्यमेवैतत् । प्रत्यक्षं मयि दृश्यते ॥५४॥ वाग्गुणेन शुको यद्व–द्याति पंजरयंत्रणां ॥ रत्नाकरो रत्नगुणै–र्मथितो विबुधैरपि ॥ ५५ ॥ अगुरुर्गंधगुणेन । वह्निसंतापमाप्नुयात् ॥ तेनैव चंदनतरु–र्भृशं छेदनघर्षणे ॥ ५६ ॥ मुक्ताफलं गुणादेव । वेधं लोके प्रपद्यते ॥ तथा जंतुरुतज्ञान–गुणान्मेऽभूदमान्यता ॥ ५७ ॥

यतो निशि प्रसुप्ताह–मित्यश्रौषं शिवारुतं ॥ नद्यां याति वहन् सालं–कारश्चारुवशाशवः ॥ ५८ ॥ तमाकृष्याभरणानि । स लात्वेनं ददातु मे ॥ तत् श्रुत्वा कुंभमादाया–चकर्ष तद्यादमुं ॥ ५९ ॥ तस्यास्तु कुणपं दत्तं । वित्तं चात्तं मया पुनः ॥ तद्गुणेनाहमियतीं । भूमीं नीता भवादृशैः ॥ ६० ॥ काको मे कथयत्येष । दशलक्षसुवर्णयुक् ॥ यूयं निधानं गृह्णीध्वं । करंबं ददताशु मे ॥ ६१ ॥ ततो निवेदयाम्यस्य । गृहीष्ये नहि कांचनं ॥ यत्कल्पि-

तापराधेऽपि । स्थानं संत्याजितामुना ॥ ६२ ॥ यतः—स्थानं सर्वस्य दातव्य—मेकवारापराधिनः ॥ द्वितीयपतने दंता । वक्त्रेणापि विवर्जिताः ॥ ६३ ॥ तत् श्रुत्वोच्छ्वसितानेक—रोमकूपो जगौ पुनः ॥ सत्यं वत्से निशावृत्तं । साऽवोचद्रतमेव भोः ॥ ६४ ॥ तच्छ्रूयं न मन्यध्वं । काकवाक्यं तदा हृदा ॥ विचारयत येन स्या—त्पाश्चात्येऽपि सुनिश्चयः ॥ ६५ ॥ दत्ते करवे काकेन । दर्शितं निधिभूतलं ॥ क्रमां खनित्वा रात्रौ तं । जग्राह मुदिताशयः ॥ ६६ ॥

लक्ष्मीमिव मन्यमानो—ऽथवा तां गोत्रदेवतां ॥ रथे निवेश्य चलितः । सोऽपृच्छत्पूर्वसंशयान् ॥ ६७ ॥ साऽजल्पदुद्वसप्रायो । ग्रामोऽयं कथ्यते किमु ॥ यत्रावयोर्भोजनादि—सामग्री सकलाभवत् ॥ ६८ ॥ भयात्पलायमानस्य । प्रहारा यस्य पृष्टतः ॥ लगंति हीनसत्त्वस्य । स कुट्टित इति स्मृतः ॥ ६९ ॥ पुरं वासवरं यत्त—दुद्वसं गदितं मया ॥ स्वजनाभाव एवात्र । कारणं वासवारणं ॥ ७० ॥

वृक्षाधस्तात्तथा रात्रौ । न स्थेयं विबुधेन यत् ॥ प्रायः पन्नगचौरादि—भयं तत्र भवेन्नृणां ॥ ७१ ॥ वृद्ध्या धान्यं समादाय । कर्षको यच्च निर्वपेत् ॥ तत्क्षेत्रं भक्षितं ज्ञेयं । नान्नमु-

ज्ञासौ । मंत्रीशो विहितो हितः ॥ सद्यः फलप्रदानेन । देवेभ्योऽप्यधिका नृपाः ॥ ९३ ॥ तस्य बुद्धिबलेनासौ । दमयित्वा बहूनरीन् ॥ स्वं नाम सार्थकं चक्रे । नृपचक्रे प्रतापतः ॥ ॥ ९४ ॥ तस्मिन् देशे क्वचिद्ग्रामे । डुर्बलस्तु कृषीवलः ॥ कोऽप्येको वसति श्रीमन्निश्रया कृतजीवनः ॥ ९६ ॥

सोऽन्यदा कस्यचित्पार्श्वाद् । गृहीत्वा वृषभौ शुभौ ॥ खेटयित्वा चिरं क्षेत्रे । संध्यायां गृहमागमत् ॥ ९७ ॥ कृतनर्दौ बलीबर्दौ । धनिकस्य गृहेऽनयत् ॥ तस्मिन् पश्यति संज्ञाप्य । व्यग्रत्वान्नार्पितौ पुनः ॥ ९८ ॥ निशायां तौ हृतौ श्वेतौ । तस्करैः पापभागरैः ॥ ततस्तेन धृतः स डाक् । प्राक्सत्कर्मविवर्जितः ॥ ९९ ॥ बहुलः कलहो लग्नो । भग्नोऽसौ दुर्बलो यतः ॥ डुर्बलानां बलं राजा । विचिंत्येत्यचलच्च तं ॥ २०० ॥ नंदनं नगरं गच्छन् । भणितः केनचित्तदा ॥ पलायमानं तुरगं । दंडेनाहत्य वालय ॥ १ ॥

लकुटेनाहतस्तेन । मर्मघातादसौ मृतः ॥ ततो धृतो विशेषेण । घोटकस्वामिनापि सः ॥ २ ॥ कलहं कुर्वतां तेषां । लग्ना वेला बहिर्घना ॥ अतस्ते वटवृक्षाधः । सुप्ताः सर्वेऽपि मा-

ज्ञ्चं विधाय तदपि । सुप्तं निद्रा-

नवाः ॥ ३ ॥ नटानां पेटकं तत्र । स्थितमस्यग्रतोऽद्भुतं ॥ नाट्यं विधाय तदपि । सुप्तं निद्रा-
मवाप च ॥ ४ ॥
निद्रान्येषां समायाता । यातायातश्रमाद्घना ॥ क्षुत्तृड्दुःखभराक्रांत—स्वांतः सोऽचिंत-
यत्तदा ॥ ५ ॥ निर्धनस्य मृतस्याहो । अंतरं नास्ति विष्टपे ॥ स यद्घटति तद्दायु—रतः आ-
युःक्षयो मम ॥ ६ ॥ परं न ज्ञायते राजा । विडंब्य विविधैर्वधैः ॥ मारयिष्यति कैः कैर्मां ।
बहुधान्यायकारिणं ॥ ७ ॥ आत्मानं वटशाखायां । बध्ध्वा पाशेन तेन मे ॥ गतत्राणानिमा-
न् प्राणान् । त्यजामि स्वामिनं विना ॥ ८ ॥
विचिंत्येति विभावर्यां । विभावर्यां धियं विना ॥ पटच्चरेण शाखायां । बध्वा पाशं गले
व्यधात् ॥ ९ ॥ भारेण त्रुटितं वस्त्रं । नटस्योपरि सोऽपतत् ॥ ततः कस्य प्रसुप्तस्य । दीर्घ-
निद्रामवाप सः ॥ १० ॥ अतो नटा भटास्ते । बबंधुस्तमबंधुरं ॥ स्वबंधुरहितं सद्यो—ऽवद्यो-
द्यत्कर्मकर्मठं ॥ ११ ॥
प्रभाते च ततो जाते । वातेनेवार्कतूलवत् ॥ सभायां नृपतेर्नीतो । विनीतोऽपि स तैर्ब-

लात् ॥ १२ ॥ स्वस्वरूपे विरूपे तैः । कथिते प्रथिते तदा ॥ तेषां वादच्छिदे राजा—ऽजितसेनं व्यलोकयत् ॥ १३ ॥ सोऽपि दुःस्थजनाधारः । कृपासारः परार्त्तिभित् ॥ सविचारः सदाचार—श्चित्ते चिंतितवानिति ॥ १४ ॥ तमसा लुप्तनेत्रोऽसौ । वराकः काकवद्भृशं ॥ घूकैरिवामुकैर्लोकै—रनेकैर्द्दी विरूब्यते ॥ १५ ॥ तदेनं दीनवदनं । सदनं कदनह्रियः ॥ रक्षामि क्षामकुक्षिं द्राक् । क्षुधया सुधियाधुना ॥ १६ ॥

तेनोचे प्रथमस्तेषु । दृष्ट्या दृष्टौ वृषौ न वा ॥ सोऽवक् दृष्टौ तर्हि दृष्टिं । दत्वास्मै तौ गृहाण भोः ॥ १७ ॥ द्वितीयं प्राह तुरगं । प्रहरेति वचस्त्वया ॥ कथितं वा न सोऽवोचत् । प्रोक्तं जिह्वां तदर्पय ॥ १८ ॥ अश्वं मार्गय मार्गज्ञ जगाद स नटांस्ततः ॥ भव्यः कोऽपि भवन्मध्ये । बध्ध्वा पाशं गले दृढं ॥ १९ ॥ वृक्षाधस्तात्प्रसुप्तस्य । पतत्वस्योपरि स्फुटं ॥ यथा स्वैरं भवद्वैरं । याति भाति भवद्यशः ॥ २० ॥

तत् श्रुत्वा ते यथास्थानं । मानं मुक्त्वा गता नटाः ॥ एवं सोऽन्यानपि न्यायान् । कुर्वन् राज्यधुरां दधौ ॥ २१ ॥ राज्ञः प्रत्यंतभूपाल—स्तस्य सिंहरथो रथी ॥ अस्ति तं प्रत्यचाली-

सती शी-
त्त । कदाचित्कटकान्वितः ॥ २२ ॥ तदा चिंतातुरं दृष्ट्वा—ऽजितसेनं वियोगिनं ॥ सती शी-
लवती प्राह । स्वामिन् बाधास्ति का हृदि ॥ २३ ॥ तदाकर्ण्याऽवदन्मंत्री । नृपोऽद्य चलितः
पुरात् ॥ तेन सार्द्धं मया तत्र । गंतव्यं प्राणवल्लभे ॥ २४ ॥ त्वां लात्वा यामि चेन्नद्गे । गृहं
शून्यं भवेत्तदा ॥ मुक्त्वात्र मंदिरे त्वां तु । गच्छतो मे न निर्वृतिः ॥ २५ ॥ दुस्तटीत इतो व्या-
घ्र । इति न्यायो ममाभवत् ॥ तेन चिंताप्रपन्नोऽस्मि । निदानं नापरं परं ॥ २६ ॥ तन्निश-
म्यागदत्सापि । स्थिरताया मेऽत्र निर्वृतिः ॥ कथं न भवतां स्वामिन् । कामितार्थफलप्रदा ॥
॥ २७ ॥ सोऽवोचन्मत्कृते नान्यो । वृद्धो लघुरपि प्रिये ॥ एकाकिनी हि लघ्वी स्त्री । विना-
शं याति जातुचित् ॥ २८ ॥ यतः—नदीतटे च ये वृक्षा । या च नारी निराश्रया ॥ मंत्रि-
हीनाश्च राजानो । न भवंति चिरायुषः ॥ २९ ॥ निष्पन्नान्नविनाशे हि । का वेला लगति
शुभ्रे ॥ तथा वशाविनाशे न । कलां कालः प्रतीक्षते ॥ ३० ॥ इत्थं तासामिहामुत्र । हानि-
र्म्लानिर्नृणां पुनः ॥ अतो मे मानसे चिंता—संतापो वर्त्ततेऽधुना ॥ ३१ ॥
तदाकर्ण्य जगादासौ । स्वामिन्नेषा कथा वृथा ॥ सीताया राक्षसागारे । क आसीत्तत्र

सविकारैर्घनाकारै—र्वित्तं चित्तमनर्गलं ॥ विज्ञा विज्ञाय सा तस्य । चेतसाऽचिंतयत्त्विति ॥ ७४ ॥ अखंडितोऽप्यहुतं त—च्छीलशीलं विनार्त्ति यत् ॥ लूनः पुनः स्वभावेन । पुष्पांकूरः प्रजायते ॥ ७५ ॥ विकाराच्च संसारत्वं । तद्भवेत्सहजं नृणां ॥ संसारो यस्ततोऽनंतो । वृत्तशून्यभवो हि सः ॥ ७६ ॥ चित्तं तेन स्वयं दत्तं । वित्तं हर्त्तुं पुनस्तया ॥ दृष्टिर्निवेशिता तस्मि—न्नेकवारं सुदुर्लभा ॥ ७७ ॥ शीलवती च यत्तस्मिन् । सम्यग्दृष्टिप्रदायिनी ॥ तन्न चित्रं यतो जंतोः । कुदृष्टौ तत्प्रदा सदा ॥ ७८ ॥ दृष्टिदानादसौ हर्षं । प्रापांध इव सत्वरं ॥ पश्यन् कार्यान्तरं सिद्धं । निषिद्धमपि पूर्वजैः ॥ ७९ ॥ ततो दूतीं शिक्षयित्वा—ऽप्रेषयच्चटुतांचितां ॥ सापि पापोचितां वार्त्तां । शीलवत्या न्यवेदयत् ॥ ८० ॥

तन्निशम्य सती प्राह । व्रतानि द्वादश त्विह ॥ संती सम्कत्त्वमूलानि । स्थूलानि गृहमेधिनां ॥ ८१ ॥ प्राणातिपातविरति—प्रमुखाण्यखिलान्यपि ॥ श्रीगुरूणां मुखात्तानि । गृहीतानि मया धिया ॥ ८२ ॥ तेषु शेषव्रतानां तु । भग्नानां स्यात्प्रतिक्रिया ॥ परं काचघटस्येव । नास्य संधानमर्हति ॥ ८३ ॥

स्त्रीभिस्तत्र विशेषेण । शेषेणेव वसुंधरा ॥ स्वांगेन सततं धार्यं । सर्वनाशोऽन्यथा भ-
वेत् ॥ ७४ ॥ एकं तावन्महत्पापं । तस्मादर्थोऽपि नात्र यत् ॥ तत्फलस्यापि तृप्तिर्नो । प्रवेशो
म्लेच्छपाटके ॥ ७५ ॥ अतो ह्यनर्थदंडं नो । करिष्येऽहं कदाचन ॥ इत्थं व्रतद्वयीनाशे । विनश्ये-
न्मे भवद्वयी ॥ ७६ ॥ दूती दध्यौ तदाकर्ण्य । स्वं चेदस्याः समर्प्यते ॥ अर्पयेत्स्वं तदा युक्तं
। दीयते यत्तदाप्यते ॥ ७७ ॥ तस्मै न्यवेदयत्सर्वं । सापि गत्वा तदंतिके ॥ असौ विमर्शया-
मास । मानने मानसेवधिः ॥ ७८ ॥ युग्मा प्रद्युम्नसिद्धिश्चे–दत्र का मे क्षतिस्तदा ॥ एवं वर्ण-
स्य वृद्धिः स्यात् । प्रसिद्धिश्च नृपादिषु ॥ ७९ ॥ होङ्कोङ्कृते लोके–धार्यते धनसंचयः ॥ तद-
र्थे न व्ययश्चेत्तद् । धारणं दुःखकारणं ॥ ८० ॥

त्रिवर्गेऽपि क्रमो लोके । विक्रमो मे भविष्यति ॥ यतो नर एतदर्थे । ददते मस्तकं स्व-
कं ॥ ८१ ॥ ततो दूतीमिति प्राह । सोऽस्याः सर्वस्वमर्पय ॥ उपस्थितं परं कार्यं । कष्टसा-
ध्यं कुरूत्तरं ॥ ८२ ॥ समेत्य सत्वरं तत्र । दूती तां प्रत्युवाच सा ॥ रतिस्ते कियता राया ।
ह्यर्द्धलक्षेण साऽवदत् ॥ ८३ ॥ सापि प्रहृष्टचित्तास्या । चित्ताशापूरणं द्रुतं ॥ कर्त्तुं हर्त्तुं च त-

स्यार्त्तिं । जगामाशोकसन्निधौ ॥ ए४ ॥ अचित्तं तेन तद्वित्तं । सचित्तं च समर्पितं ॥ तया मुदितया सर्वं । गृहीतं स्वगृहागतं ॥ एए ॥ तया कथापितं तस्य । पंचमे दिवसे त्वया ॥ यामे गते त्रियामायाः । समेतव्यं ममौकसि ॥ ए६ ॥ अवंचनं तद्वचनं । मन्यमानः समानहत् ॥ दुःखेन गमयांचक्रे । सोऽयं दिनचतुष्टयं ॥ ए७ ॥

तावता खानितो गर्त्त—स्तयापवरके वरे ॥ प्रछन्नं पुरुषैः कूप—समानो मानखंमनं ॥ए८॥ तस्योपरिष्टात्पल्यंकः । कृतः शटिततूलया ॥ मुखे चाधोरधोन्नागे । पृथुलस्य समंततः ॥ ॥ एए ॥ चतुर्भिर्दिवसैस्तेन । परिवारः क्वचित् क्वचित् ॥ प्रहितः स्वहितप्राप्त्यै । स एकाकी तदाव्रजत् ॥ १०० ॥ पंचमाहस्तमस्विन्या । गते यामे स आगमत् ॥ गृहमध्यस्थिता शय्या । तया तस्य प्रदर्शिता ॥ १ ॥ मध्ये प्रविश्य शय्यायां । यावदेष उपाविशत् ॥ तूलिकासहितः शीघ्रं । तावद्गर्त्तान्तराऽपतत् ॥ २ ॥ शून्यत्वमनुजूय प्राक् । चेतनासहितस्ततः ॥ चित्ते निध्यातवानेवं । सर्वशून्याश्रितोऽपि सः ॥ ३ ॥ अनया मम सर्वस्वं । गृहीतं नो समोहितं ॥ दत्तं हस्तावतो दग्धौ । पृथुकोऽपि गतो हहा ॥ ४ ॥

ह्रियापि लक्ष्मीर्मूर्खेण । मया निर्नाशिना हठात् ॥ व्यर्थं स्वं नाम चक्रे च । नरचक्रे स्वशत्रुणा ॥ ५ ॥ कुंभीपाकोपमं स्थानं । विपाकेन कुकर्मणां ॥ इह लोके मया लब्धं । परलोके तु किं ब्रुवे ॥ ६ ॥ एषा महासती नूनं । मयि कोपं करोति चेत् ॥ तदा मां भस्मसात्कुर्या–ज्जिनधर्मरता परं ॥ ७ ॥ एवं चिंतयतस्तस्य । दिवसा वत्सरोपमाः ॥ यांति सा कृपया तस्मै । भोजनं च प्रयच्छति ॥ ८ ॥ रज्जुबद्धशरावेण । मध्ये मुंचति किंतु नो ॥ बहिर्निष्कासयेत्तं सा । स्वप्रशंसावहिर्मुखं ॥ ९ ॥ मासे पूर्णे त्रयाणां स । मंत्रिणां राट्पुरोऽवदत् ॥ इयद्भिर्दिवसैर्धीमा–नशोको नागतः किमु ॥ १० ॥

इतस्तृतीयको दर्प–वशादाह विशांपतिं ॥ उत्सुकोऽयं रतिकेली–रतिकेलिकलोद्धुरः ॥ ॥ ११ ॥ अशोको ह्यंह्रिपस्तावत् । वरभूभृत्समाश्रितः ॥ तेनोच्चतां गतः किंतु । वशया भज्यते प्रभो ॥ १२ ॥ खंडीकृतं क्षमानीतं । सुमनःश्रीविवर्जितं ॥ शाखाहीनं निष्फलं तं । विपन्नं वेत्ति को विभो ॥ १३ ॥ मां प्रेषय क्षमानाथ । यथा स्वं नाम सार्थकं ॥ कुर्वे सर्वेषु पुंस्पेषु–वशगां तां विधाय वै ॥ १४ ॥

आकारितो भोजनार्थं । परिवारसमन्वितः ॥ विगोपनं विना तां मे । किमेषा हि क-
रिष्यति ॥ ३६ ॥ इति चिंतयतो राज्ञ—स्तदा पुष्पादिभिस्तया ॥ गर्भद्वारं पूजयित्वा । प्रोचे
रसवतीत्यभूत् ॥ ३७ ॥ तेऽप्यूचुरन्नवत्सर्वा । ततोऽपवरकात्स्वयं ॥ निष्कास्य रसवतीं सा ।
भोजयामास भूपतिं ॥ ३८ ॥ पुष्पतांबूलवस्त्राद्यैः । सेनानीसहितो नृपः ॥ सत्कृतस्तद्धनं स-
र्वं । सचिवात्तं च सार्पयत् ॥ ३९ ॥ तद् दृष्ट्वा विस्मितो राजा । चिंतयामासिवानिदं ॥ सती-
यं देवसान्निध्या—दद्दष्टं हि करोति च ॥ ४०० ॥ अस्या रूपं स्वरूपं च । क्षमो वर्णयितुं हि
कः ॥ यस्या वचनमात्रेण । सर्वं संपद्यते नवं ॥ ४१ ॥ ततः शीलवती पृष्टा । तव का सि-
द्धिरस्ति भोः ॥ साह यक्षाश्च चत्वारः । सिद्धा मे संति सर्वदा ॥ ४२ ॥

नृपोऽवग् देहि यक्षान्मे । यथा स्युश्चिंतितर्द्धयः ॥ तयोक्तं सुमुहूर्ते तान् । पेषयिष्ये भ-
वद्गृहे ॥ ४३ ॥ गते राज्ञि द्वितीयेऽह्नि । तान्निष्कास्य वशा जलैः ॥ स्नपयित्वा चर्चयित्वा ।
चंदनाद्यैः सुगंधिभिः ॥ ४४ ॥ अर्चयित्वा करंडेषु । क्षिप्त्वा वादित्रपूर्वकं ॥ निनाय नृपतेः
स्थानं । मानं चास्यै ददौ नृपः ॥ ४५ ॥ युग्मं ॥ महानसे महानेष । राजा मोचयतिस्म

तान् ॥ जनैर्गखंडश्रीखंडान् । करंडान् परया मुदा ॥४६॥ तस्मिन् दिने सूपकारा। राज्ञा रस-
वतीकृतौ ॥ निविष्टा भोजनस्थाने । वेलायां गतवान्नृपः ॥ ४७ ॥ कुसुमाद्यैरर्चयित्वा । क-
रंडान् सोऽवदत्ततः ॥ अत्रूद्भवती तेऽपि । प्रोचुरासीत् परं न सा ॥ ४८ ॥ ततोऽसौ चिंत-
यामास । तस्या वाक्यवशादसौ ॥ सर्वा यक्षैः प्रदत्ता मे । कथं यच्छंति नाधुना ॥ ४९ ॥ अ-
तो द्वाराणि ह्युद्घाट्य । प्रत्यक्षं यक्षसन्निधौ ॥ पृच्छामि किमु तस्यै सा । दत्ता मह्यं तु नो पु-
नः ॥ ५० ॥ तथा कृतेऽमुना ते तु । राक्षसाभा विलोकिताः ॥ अस्थिचर्मावशेषांगा । बीभ-
त्साकारधारकाः ॥ ५१ ॥ ततो राज्ञा जनाः प्रोक्ता । एतान् प्रत्यक्षराक्षसान् ॥ विनाशयत
नो वा नो । नाशयिष्यंत्यमी ध्रुवं ॥ ५२ ॥ तत् श्रुत्वा ते भयव्यग्रा । राजानं प्रोचिरे मृदु
॥ वयं नो राक्षसाः साक्षात् । किंतु कामांकुरादयः ॥ ५३ ॥

नृपतिर्विस्मितः प्राह । हाऽवस्था वः किमीदृशी ॥ तेऽवोचन् पूर्ववृत्तांतं । शीलवत्या
विनिर्मितं ॥ ५४ ॥ आकार्य राजावोचत्तां । स्मितपूर्वकमुच्चकैः ॥ स्त्रियं यदबलां लोके। वदं-
ति विबुधा अपि ॥ ५५ ॥ तत्त्वयात्र मृषा चक्रे । विजित्य सबलानमून् ॥ प्रायेण विबुधे-

बुद्धि–र्गद्यतेऽत्र गरीयसी ॥ ५६ ॥ संतोषतोषयुतया । वामबुद्धिस्वज्ञावतः ॥ धनमात्तं यदेतेषां । तत्र किं कारणं वद ॥५७॥ सावदन्निर्द्धनानां य–द्धनं दत्तं त्वया धनं ॥ तेनैते डुर्मदा जाता । अनर्थसार्थगास्तथा ॥ ५८ ॥ अर्थादनर्थमधमा । मध्यमा अर्थमेव च ॥ उत्तमाः परमार्थं तु । साधयंति धिया स्वया ॥ ५९ ॥ एतेषां तु मदं हर्तुं । शीलं धर्तुं तथात्मनः ॥ अनर्थमूलमर्थौघं । जगृहेऽहं स्वबुद्धितः ॥ ६० ॥ तन्निशम्य नृपोऽवोच–दनर्थोऽयं मया कृतः ॥ अतो ममापराधोऽयं । क्षंतव्यः सत्क्षमानिधे ॥ ६१ ॥

सा जगाद नराधीश । नापराधो ह्ययं तव ॥ सचिवानां तथा नैवे–दृशाः संसारिजंतवः ॥ ६२ ॥ अंतरंगारिषड्वर्गे । कामोऽयं प्रथमो मतः ॥ क्रोधादयस्ततः प्रोक्ता । यतोऽस्मात्ते जवंत्यहो ॥ ६३ ॥ यतः–कामः क्रोधस्तथा लोजो । मानो हर्षो मदस्तथा ॥ षड्वर्गमुत्सृजेदेन । तस्मिंस्त्यक्ते सुखी जनः ॥ ६४ ॥ बाह्या ये वैरिणः संति । तेन्योऽमी सबलाः किल ॥ लक्ष्मणेऽपि बहिरंगा–दंतरंगो विधिर्बली ॥ ६५ ॥ धर्मादर्थान्निधः सूनु–र्मदनो मूलजस्ततः ॥ सुतस्तस्मात्कथं यातः । पिता पितामहोऽपि च ॥ ६६ ॥ स्वकलत्रधृतेः शुद्धः ।

सकलत्रो भवेत्पुमान् ॥ परावलारतिः किंतु । विश्वे निःस्वाऽवलाऽरतिः ॥ ६७ ॥ इत्यादिवि-
विधैर्वाक्यै–र्नृपतिर्मंत्रिणस्तथा ॥ प्रतिबोध्य तया नीताः । शीलव्रतसुरां परां ॥ ६८ ॥ पश्चा-
त्कामांकुराद्यास्ते । जगदुस्तांप्रतीदृशं ॥ अतःपरं त्वं गुरुणी । धर्मदानाच्च नः सदा ॥ ६९ ॥
अस्माकमश्मरूपाणां । विना संतापमुच्चकैः ॥ कुतः कल्याणता बाढं । विश्वशृंगारतापि
च ॥ ७० ॥ ततः शीलवती राज्ञा । स्वसेव बहुमानिता ॥ सत्कृत्य वस्त्रालंकारैः । स्वगृहं
प्रापिता तदा ॥ ७१ ॥ नृपतिप्रमुखे लोके । स्वस्वधर्मरतेऽन्यदा ॥ दमघोषाभिधः सूरि–र्भू-
रिसाधुः समाययौ ॥ ७२ ॥ भूपतिर्मंत्रिणस्ते त्व–जितसेनोऽपि मंत्रिराट् ॥ शीलवती स-
ती सापि । वंदितुं श्रीगुरुं ययुः ॥ ७३ ॥ धर्मोपदेशे विशदे । गुरुणा विहिते हिते ॥ धर्मा-
चार्यं नृपः प्राह । योजितांजलिकुड्मलः ॥ ७४ ॥ वामा शीलवती सेयं । कथं शीलवती स्व-
यं ॥ तथा बुद्धिमती बाढं । प्रमदाऽप्रमदान्विता ॥ ७५ ॥ गुरुर्जगौ पुरा राज–न्ननया शी-
लमाश्रितं ॥ अस्मिन्नपि भवे तेन । शीललीलामियं दधौ ॥ ७६ ॥ भूपतिः प्राह भगवन् ।
कोऽस्याः पूर्वभवोऽभवत् ॥ जजल्पानल्पसंकल्प–विकल्पभिदुरो गुरुः ॥ ७७ ॥ वरे कुशपुरे

। जाता शीलवती सती ॥ ए८ ॥ ज्ञानज्ञक्तिविशेषेण । कृता पर्वणि यत्तया ॥ तेन शीलवती जज्ञे । ज्ञानविज्ञानजाजनं ॥ एए ॥ तन्निशम्य तयोर्जातं । जातिस्मरणमुच्चकैः ॥ यथा गुरुन्निरादिष्टं । ताज्यां दृष्टं तथा तदा ॥ एए ॥

निजगाद गुरुर्देश–विरत्या पालितं हि यत् ॥ इहापि गुणकृज्जज्ञे । फलं ह्यविकलस्य किं ॥ ४०० ॥ नृपाज्यां तु पुनस्ताज्यां । गुरुंवरगिरंप्रति ॥ जगदे जगदेकाग्र्य–धियं सुरगुरुप्रज्ञं ॥ १ ॥ दीक्षां शिक्षासमां देहि । यथा शीलं हि सर्वथा ॥ पालयावो नवब्रह्म–चर्यगुप्तिधरं परं ॥ २ ॥ गुरुणा दीक्षितौ तौ तु । नृपेणाथ तदा तथा ॥ कामांकुराद्यैः स्ववधू–संतोषव्रतमाददे ॥ ३ ॥ पंचाचारविचारज्ञौ । तौ पंचसमितिश्रितौ ॥ पंचमहाव्रताधारौ । पालयामासतुर्व्रतं ॥ ४ ॥ विशेषतो ब्रह्मचर्यं । धृत्वा मृत्वा च तौ ततः ॥ ब्रह्माभिधं देवलोकं । गतौ ज्ञानान्वितौ युतौ ॥ ५ ॥ अधिके देवलोकानां । तयोः पुण्ये तथाधिके ॥ यद्ब्रह्मदेवलोके तौ । स्थितावत्रास्ति कारणं ॥ ६ ॥ सदा प्रियं तयोर्ब्रह्म । तेन तत्रैव संश्रयः ॥ इष्टे प्राप्ते जनो येन । पदमेकं न गच्छति ॥ ७ ॥

अनुभूय सुखं तत्र । च्युत्वा प्राप्य च मानवं ॥ जन्म कर्मक्षयं कृत्वा । यास्यतो ब्रह्म शाश्वतं ॥ ८ ॥ एवं शीलं प्रपाल्योच्चै–रनेके सविवेकिनः ॥ स्वर्गापवर्गसंसर्ग–सुंदराः किल जज्ञिरे ॥ ९ ॥ एषा श्रीधर्मकल्पद्रोः । शाखाख्याता द्वितीयका ॥ तृतीयां तु तपःसंज्ञां । सद्भ्रान शृणु संप्रति ॥ १० ॥ यानि लौकिकतीर्थानि । यानि लोकोत्तराणि च ॥ तपस्वितपसा तानि । जातानि प्रथितानि च ॥ ११ ॥ वाल्मीकिव्यासप्रमुखा । लौकिका ये महर्षयः ॥ लोकोत्तरास्तथा चान्ये । हरिकेशिवलादयः ॥ १२ ॥ अपि हीनकुलोद्भूताः । प्रभुतामरसेविताः ॥ यज्जाता विश्वविख्याता–स्तदवैहि तपःफलं ॥ १३ ॥ म्लेच्छसंसर्गतो येषां । म्लेच्छता स्यात्कदाचन ॥ तेषामपि भवेद्येन । शुद्धिः सद्भर्णवर्णिता ॥ १४ ॥

ब्रह्महत्यादिपापानि । सतापानि मनस्विनां ॥ यानि तेषां च तपसा । क्षयः स्यात्क्षणमात्रतः ॥ १५ ॥ मिथ्यागुणस्थानकस्थैः । कुतपोऽप्यत्र पूज्यते ॥ तदोत्तरगुणस्थैर्नोः । सुतपः किं न मन्यते ॥ १६ ॥ तपो द्वादशधा भिन्नं । निर्मलं द्वादशात्मवत् ॥ दोषापहं रुचिकरं । भवेत्सच्चक्रयोगकृत् ॥ १७ ॥ चंड्दासलसक्षामा । तपसाक्लिसविग्रहः ॥ क्षमाभृत्कोशही-

जिनं मुनिं ॥ ५९ ॥ ददर्श श्रीमानदेवं । देवदानवसेवितं ॥ तं ववंदे च सद्भक्त्या । साधुसंघातसंयुतं ॥ ६० ॥ युग्मं ॥

केवली तंप्रति प्राह । दुःखात्त्वं मर्त्तुमिच्छसि ॥ किंतु पापोद्भवं चेदं । सहगं मरणेऽपि ते ॥ ६१ ॥ मुनिदानांतरायं य-त्त्वया जडधिया कृतं ॥ तेन लाभांतरायं प्राक् । कर्म बद्धं निकाचितं ॥ ६२ ॥ कर्मणा तेन ते लाभः । कुत्रापि न भवत्यहो ॥ तदाकर्ण्यावदत्सोऽपि । भवं पूर्वं निवेदय ॥ ६३ ॥ सोऽवक् क्षेत्रेऽस्ति पुष्कर-वरद्वीपार्द्धभारते ॥ पुरं रथपुरं तत्र । चंद्रापीडस्तु भूपतिः ॥ ६४ ॥ तस्य जगद्धराभिख्यो । वयस्यः समभूत्तदा ॥ मिथ्यादृष्टिः कुशास्त्रौघ-कुशलोऽकुशलाश्रितः ॥ ६५ ॥ गतः स एकदोद्याने । सूरिं धर्मेश्वरं वरं ॥ सोपहासं प्रणम्यावक् । किंचिद्धर्मं समादिश ॥ ६६ ॥

गुरुर्जगौ मनुष्यत्वं । दुर्लभं प्राप्य मानवैः ॥ देवगुरुधर्मतत्त्वं । श्रद्धेयं वासनापरैः ॥ ॥ ६७ ॥ तत्र देवो वीतरागः । सर्वज्ञः सर्वपूजितः ॥ अष्टादशदोषमुक्तो । युक्तोऽतिशयराशिभिः ॥ ६८ ॥ ये नमंति जिनं भक्त्या । शक्त्या कुर्वंति पूजनं ॥ ते लभंतेऽत्र कल्याणं ।

॥ १५६ ॥

देवपाल इवाद्भुतं ॥ ६९ ॥ तथाहि—जंबूद्वीपस्य भरत—क्षेत्रमध्यमखंडगं ॥ समस्ति हस्तिनपुरं । हस्तिवाजिविराजितं ॥ ७० ॥ तत्र सिंहरथो राजा । सिंहवत्सबलस्तथा ॥ जिनदत्ताभिधः श्रेष्ठी । श्रावको भावुकोऽजनि ॥ ७१ ॥ देवपालोऽस्य गोपालो । गृहेऽभूद्भद्रकः सकः ॥ वर्षाकालेऽन्यदा प्राप्ते । गा लात्वागाद्वने घने ॥ ७२ ॥ तदा नदीप्रवाहेण । पातिताद्विकटात्तटात् ॥ युगादिदेवप्रतिमा । प्रकटाऽभूत्प्रभावयुक् ॥ ७३ ॥ तां प्रेक्ष्य हर्षयुक्तोऽसौ । स्नपयामास वारिणा ॥ पीठं कृत्वा मृदोत्तुंगं । स्थापयामास तत्र तां ॥ ७४ ॥ सुगंधपुष्पपत्राद्यैः । पूजयामास सादरं ॥ तथा च चिंतयामास । धन्योऽहं यस्य चार्हता ॥ ७५ ॥ स्वयं स्वदर्शनं दत्तं । वित्तं मे नास्ति किंचन ॥ परं चित्तं स्थिरीकृत्य । पूजयामि स्वशक्तितः ॥ ॥ ७६ ॥ युग्मं ॥

ततः प्रभृति सोत्कंठं । तस्याः कृत्वार्चनं सदा ॥ पानाशनादि कुरुते । नान्यथा सर्वथा त्वसौ ॥ ७७ ॥ वृष्टिर्बभूव सततं । सप्ताहोरात्रमन्यदा ॥ तद्वशात्तत्र गंतुं स । न शक्नोति परे तटे ॥ ७८ ॥ पूजां विना भोजनं स । न करोति कदाचन ॥ तद् दृष्ट्वा श्रेष्ठिना प्रोचे । जे-

वदन्मा विषीद त्वं । कुरु राज्यं दरंहरं ॥ ५०० ॥ मृन्मयं हस्तिनं शस्तं । कारयित्वा पुरे वरे भ्रमयित्वा तथा राज-पाटिकां विदधेहि त्नोः ॥ १ ॥ मत्प्रसादात्स हस्ती ते । मनोऽन्नीष्टं करिष्यति ॥ तन्निशम्य नृपाद्यास्ते । विधास्यंति तवोदितं ॥ २ ॥ तन्निशम्य निर्वृतात्मा । जगाम न्नवनं निजं ॥ कुंन्नकारान् समाकार्य । कार्यशिक्षां समादिशत् ॥३॥ ततस्तैर्मृन्मयो हस्ती । कृतो नृपकृते गुरुः ॥ तत् श्रुत्वा मंम्लीकाद्या । हास्यं चक्रुर्विशेषतः ॥ ४ ॥ सत्यं गोपाल एवासौ । यश्च मृन्मयहस्तिना ॥ पूर्वाचारवशाद्राज-पाटिकां कर्त्तुमिच्छति ॥ ५ ॥

कुलालैरथ सोऽपाचि । चित्रितश्चित्रकृन्नरैः ॥ त्रिपदीप्रमुखं कृत्यं । जनैः सोऽकारयन्नृपः ॥ ६ ॥ अपरेऽपि गजाः सज्जी-कृताः पर्याणिता हयाः ॥ सन्नद्धाः सुन्नटाः सर्वे । रथाः प्रगुणितास्तदा ॥ ७ ॥ श्रेष्टिनं च समाकार्य । बलच्छलवशात्स्वयं ॥ वेषं स्वसदृशं तस्य । कारयामास न्नूपतिः ॥ ८ ॥ सुमुहूर्त्ते ततो राजा । विदधे राजपाटिकां ॥ अपूर्वं कौतुकं द्रष्टुं । । सर्वतो जनताऽगता ॥ ए ॥ विस्मितः सकलो लोक-श्चिंतयामास चेतसि ॥ विष्णुः स्वयं समेतः किं । सुरो विद्याधरोऽथवा ॥ १० ॥ चलमाने नृपे तत्र । स्थाने स्थाने सुनाटकं

॥ उपचारो मंगलस्य । वादित्राणि पदे पदे ॥ ११ ॥ सर्वेऽपि राजसामंता—श्चमत्कारधरा-
स्तदा ॥ प्रणतास्तस्य शस्तस्य । क्रमयोः क्रमवेदिनः ॥ १२ ॥

आगत्य जवनद्वारं । जिनदत्तस्य चांकुशं ॥ अर्पयित्वाऽब्रवीदेवं । हस्तिनं स्थानमानय
॥ १३ ॥ गजो नैव पदं दत्ते । पादसंज्ञां ततोऽकरोत् ॥ तथाप्यचलिते सोऽस्मि—न्नंकुशेन ज-
घान तं ॥ १४ ॥ तद्घातवशतस्तस्या—ऽभवत्कुंभस्थलं द्विधा ॥ ततो हास्यास्पदं सोऽभू—द्दं-
कारं मुमोच च ॥ १५ ॥ ततःप्रभृति सर्वेऽस्य । देवशेषामिव व्यधात् ॥ आज्ञां मौलौ राज-
वर्ग—लोकः शोकविवर्जितः ॥ १६ ॥ स्वस्वकन्या घनास्तस्य । नृपैर्दत्ताः सवित्तकाः ॥ प्रासा-
दं कारयांचक्रे । श्रीयुगादिजिनस्य सः ॥ १७ ॥ नित्यं जिनार्चनं कर्तुं । हर्तुं पापं तथादिमं
॥ अनुस्मर्तुं नवं पुण्यं । यात्यसौ जनतान्वितः ॥ १८ ॥ एकदा जिनपूजां स । कृत्वाग्रमहि-
षीयुतः ॥ मत्तवारणमासीनो । यावदस्ति प्रशस्तियुक् ॥ १९ ॥ पट्टराज्ञी तदा तत्र । मूर्छा-
माप क्षणादपि ॥ शीतलैर्लब्धचैतन्या । चेति पद्यं जगाद सा ॥ २० ॥ अम्ह विं पती नइं ।
जवतोइ न वुढा हठ ॥ जो ज एङ्कवाम्हीयद । अज्जविसाज अवठ ॥ २१ ॥

तन्निशम्य नृपः प्राह । प्रिये किं जल्पितं त्वया ॥ सावक् जातिस्मृतिर्मेऽद्य । जाता प्रे-
क्ष्य त्वमुं नरं ॥ २२ ॥ जातिः पूर्वभवे का ते । बभूव नृपतिर्जगौ ॥ सावोचदत्र नगरे । दु-
र्गतौ काष्ठवाहकौ ॥ २३ ॥ आवां पुरा पुरासन्न—वासिनौ नामनाशिनौ ॥ अदभ्रप नरच्छा-
या—माश्रितः पादपस्य यः ॥ २४ ॥ युग्मं ॥ काष्ठभारमिदोऽक्षिप्त्वा । स्नात्वा श्रांतिच्छिदे नदे
॥ कल्हारप्रमुखं लात्वा । पूजितोऽयं जिनो मया ॥ २५ ॥ प्रमादतोऽमुना नैव । कथितेऽपि
घने मया ॥ आयुःक्षयेण मृत्वाहं । पुत्री राजकुलेऽभवं ॥ २६ ॥ तथा श्रीभवतः पत्नी । ता-
दृगेवाधुनाप्यसौ ॥ यतो धर्मं विना नात्र । नृणां दुःखक्षयो भवेत् ॥ २७ ॥ ततो राज्ञा स
आकार्य । पृष्टः शिष्टविचारिणा ॥ तेनापि पूर्ववृत्तांतः । कथितस्तादृशोऽखिलः ॥ २८ ॥ त-
दाकर्ण्य नृपो दध्यौ । यथा मे चेह जन्मनि ॥ जिनपूजाफलं जज्ञे । तथास्याः परजन्मनि
॥ २९ ॥ अज्ञानाभ्यां पुरावाभ्यां । निर्द्धनाभ्यां विशेषतः ॥ स्वल्पापि विहिता द्रव्य—पूजा
राज्यप्रदाभवत् ॥ ३० ॥

उत्कृष्टां द्रव्यपूजां ये । विज्ञा अत्र प्रकुर्वते ॥ अच्युतं देवलोकं ते । प्राप्नुवंति सुखांचि-

तं ॥ ३१ ॥ ततश्च्युत्वार्यदेशादि–सामग्रीं प्राप्य ते जनाः ॥ सिद्धिं गच्छंति सिद्धान्य–कार्यद्वारा
गुणान्विताः ॥ ३२ ॥ चतुर्थे पंचमे वापि । षष्टे वा सप्तमे भवे ॥ सिद्ध्यंति नातिक्रामंति ।
ह्यष्टमं भवमत्र ते ॥ ३३ ॥ अंतर्मुहूर्त्तकृतया । सर्वथा भावपूजया ॥ तद्भवे सिद्धिसंप्राप्ति–र्जा-
यते नात्र संशयः ॥ ३४ ॥ सर्वज्ञं हृदये ध्यायन् । सर्वज्ञो भवतीह ना ॥ वीतरागं हृदि
ध्यायन् । वीतरागः पुनः पुमान् ॥ ३५ ॥ जिनतामये जनो य–ज्जिनं ध्यायति तत्किमु ॥ पु-
रुषोत्तमोऽपि नित्यं तं । ध्यायेच्च निधनच्छिदे ॥ ३६ ॥ साकारो हि जिनं ध्याय–न्नक्षरं पदमा-
प्नुयात् ॥ इहामुत्र किमाश्चर्य–मत्र किंतु निशम्यतां ॥ ३७ ॥ जिनार्चाकृच्च गोपालो । गो-
पालत्वं त्यजन्नपि ॥ गोपालपदसत्रोच्चैः । श्रयेत्सर्वशुभार्थदं ॥ ३८ ॥ त्रिविष्टपप्रभुर्जीवो । वि-
ष्टपप्रभुमर्चयन् ॥ यद्भवेत्तच्च नाश्चर्यं । यदसावर्जिताक्षरः ॥ ३९ ॥ जिनो ह्यसंख्यरूपोऽयं ।
स्यादरूपः कथंचन ॥ सर्वगोऽपि च लोकाग्र–गतः सोऽत्र प्रकीर्त्तितः ॥ ४० ॥ स्वभावान्नि-
र्मलः सार्वः–परं संगवशाद्बहिः ॥ तत्तत्स्वरूपतामेति । यथा हि स्फटिकोपलः ॥ ४१ ॥
आत्मापि जलवत्स्वच्छो । रजःपंकवशात्परं ॥ कालुष्यभावमायाति । गोत्राधारत्वमाग-

जिनं प्राप्य स्वभावतां ॥ प्रयात्यतो जिनध्यानं । जनाः
तः ॥ ४२ ॥ कतककोदवत्सोऽपि । जिनं प्राप्य स्वभावतां ॥ प्रयात्यतो जिनध्यानं । जनाः ॥ ते सर्वे वीत-
कुरुत सर्वदा ॥ ४३ ॥ ये सिद्धा ये च सिद्ध्यंति । ये च सेत्स्यंति मानवाः ॥ ते सर्वे वीत-
रागस्या–ऽमानध्यानधुरंधराः ॥ ४४ ॥ इति देवतत्वं ॥ मयकेति देवतत्वं । तव किंचित्प्रका-
शितं ॥ गुरुर्जगौ पुनः स्तोकं । गुरुतत्वं निशम्यतां ॥ ४४ ॥ गुरुं विना जनैर्नैव । कृत्यं वि-
ज्ञायते क्वचित् ॥ अतो गुरुवचो लात्वा । कर्त्तव्याः सकलाः क्रियाः ॥ ४५ ॥ नत्वं गृणाति
यो लोके । मुख्यतः स गुरुर्मतः ॥ विशेषतः क्रियायुक्त–स्तत्सुवर्णस्य सौरभं ॥ ४६ ॥ शा-
स्त्रमपि गुरुत्वेन । कीर्त्यते कविभिर्गवि ॥ कृत्याकृत्यं यतस्तस्मा–ज्जानाति सततं जनः ॥
॥ ४७ ॥ गुरुं विना परं तस्य । स्वरूपं को निरूपयेत् ॥ अतस्तस्माच्च तत्सम्यग् । ज्ञात्वा
कृत्यं समाचरेत् ॥ ४८ ॥ धीगुणैरेव जानाति । वचस्तत्वं गुरोर्गुरु ॥ अन्यथा मुग्धवद्दुःखं ।
लभ्यते बाह्यबुद्धितः ॥ ४९ ॥ तद्यथा—

जंबूद्वीपे सावनीपे । भरतक्षेत्रसंभगं ॥ पुरं पद्मपुरं तत्र । राजा पद्मरथोऽभवत् ॥५०॥
पद्मनामा तथा श्रेष्ठी । पद्मश्रीस्तस्य वल्लभा ॥ मुग्धाभिधश्च तत्पुत्रो । नंदा तस्य वधूः पु-

नः ॥ ५१ ॥ पश्चेन च परं लोकं । गच्छता स्वच्छताजुषा ॥ अन्यदा शिक्षितः पुत्रो । वचोभि- र्विविधैरिति ॥ ५२ ॥ मिष्टं वत्स त्वया भोज्यं । सुप्तव्यं सुखनिद्रया ॥ मार्गणीयं न दत्तं च । ताड्या भार्या वधूयुता ॥ ५३ ॥ वृत्तिश्चर्ममयी कार्या । ग्रामे ग्रामे गृहं तथा ॥ गंगातलं धने क्षीणे । खनितव्यं तदालये ॥ ५४ ॥ सुधीः पाटलिपुत्रेऽस्ति । मन्मित्रं सोमनामकः ॥ पृष्टव्यः सकलोऽर्थोऽस्य । तत्पार्श्वे त्वं न वेत्सि चेत् ॥ ५५ ॥ उपदेशममुं दत्वा । परलोकं गतः पिता ॥ धर्मध्यानयुता काले । जननी च दिवं ययौ ॥ ५६ ॥

तयोः कृत्यं विधायासा—विति दध्यौ स्वचेतसि ॥ तातादेशानहं कुर्वे । विविधान् विधिपूर्वकं ॥ ५७ ॥ ततो नित्यं स मिष्टान्नं । तथा खाद्यं च तद्विधं ॥ स्वाद्यं पानं च सततं । भुंक्ते क्षुत्तृट्विना कृतः ॥ ५८ ॥ रसमूला व्याधयोऽमी । ततो रोगोऽस्य चाभवत् ॥ तथा कुसुमशय्यायां । सुखं शेतेऽतिनिद्रया ॥ ५९ ॥ धनं गृहीतं चौराद्यै—र्निद्राबाहुल्यतस्तदा ॥ कस्यापि पार्श्वतो नैष । दत्तं वित्तं च याचते ॥ ६० ॥ सवधूकान्यदा भार्या । ताडिता वधबंधनैः ॥ गृहं त्यक्त्वा वधूः पितृ—गेहं सद्यो गता ततः ॥ ६१ ॥ ग्रामे ग्रामे गृहं तेन । कारितं

चर्ममद्दृतिं ॥ सर्वंड्व्यक्रयो जज्ञे । प्रकारैः पूर्वनिर्मितैः ॥ ६२ ॥ ततो व्याजेन निर्व्याजं । धनं लात्वान्यपार्श्वतः ॥ गंगां गत्वा तटं लोकैः । खानयामास सादरं ॥ ६३ ॥ तत्रापि हानिरेवासीत् । परं काणकपर्दिका ॥ निःसृता नैव तेनासौ । विलक्षः स्वगृहं गतः ॥ ६४ ॥

ततःप्रभृति तस्याज्ञां । कोऽपि नैव करोत्यहो ॥ धनं दत्ते न मानं च । तेनाभूद्दुःखितो भृशं ॥ ६५ ॥ पश्चाज्जगाम खिन्नात्मा । पितृमित्रपुरे वरे ॥ सोमस्तं दुःखिनं दुःस्थं । दृष्ट्वा चेति जगौ मृदु ॥ ६६ ॥ वत्स तुच्छमते का ते । चिंता चित्ते प्रवर्त्तते ॥ धनक्षयोऽथवा येन । विलक्ष इव लक्ष्यसे ॥ ६७ ॥ ततस्तेन स्वरूपे स्वे । विरूपे कथिते सति ॥ सोमो जगाद नो वेत्सि । तत्वं स त्वं पितुर्गिरां ॥ ६८ ॥ मिष्टं यत्कथितं तेन । तद् द्व्यायं च भुज्यते ॥ निर्वैरिणा सुप्यते यत् । सुखसुप्तमवेहि तत् ॥ ६९ ॥ लात्वाधिकं ग्रहणकं । धनं यद्दीयते परे ॥ दत्वा न मार्गणीयं तत् । सवधूका यदा प्रिया ॥ ७० ॥

तदा सा ताडनीया नो । न वधूं ताडयेत्पुनः ॥ स्वजनान् स्थापयेत्पार्श्वे । वृत्तिश्चर्ममयी तु सा ॥ ७१ ॥ ग्रामे ग्रामे गृहं यच्च । तन्मैत्री केनचित्सह ॥ ग्रामे ग्रामे प्रकर्त्तव्या ।

गंगोज्ज्वलास्ति त-
गृहवत्तत्र सौख्यदा ॥ ७२ ॥ गंगायाः खननं यच्च । तत्तुरंगी गृहे तव ॥ गंगोज्ज्वलास्ति त-
स्यास्त्व–धस्ताद्धनसमुच्चयः ॥ ७३ ॥ ततस्तेन गृहे गत्वा । खानिता भूस्तदुद्भवं ॥ सुवर्णलक्षं
चादाय । मुग्धो जातो धनी पुनः ॥ ७४ ॥

सोमोक्तं सकलं कुर्वन् । सुखी जातः सदा तदा ॥ कथ्यमानं कथाया भो–स्त्वं शृणूपनयं
स्वयं ॥ ७५ ॥ यो मुग्धः सोऽत्र संसारी । जीवः पीवरजाड्यभाक् ॥ पद्मश्रेष्ठी स शास्त्रौघः
। सोमः सुगुरुरिष्यते ॥७६॥ यन्मिष्टं च भोज्यं तद्धि । रुच्या सद्धर्मसेवनं ॥ दत्तं न मार्गणीयं
य–त्तस्याकर्णय निर्णयं ॥ ७७ ॥ दत्वोपदेशं यतिना । याचनीयं न किंचन ॥ दानं दत्वा
गृहस्थेन । विधेयं नोऽतिदानकं ॥ ७८ ॥ अंतरंगारिजयतः । काले यत्सुप्यते नृभिः ॥ सुख-
स्वापः स विज्ञेयो । योगनिद्राथवा मुनेः ॥ ७९ ॥ सवधूका प्रिया यच्च । कुट्टनीया तदन्वयं
॥ सक्षमा च तनूरेषा । तापनीया तपोऽग्निना ॥ ८० ॥ वृत्तिश्चर्ममयी या च । प्रोक्ता मंदि-
ररक्षणे ॥ सा च व्यवहारवृत्ति–स्तत्वनिश्चयरक्षका ॥ ८१ ॥

ग्रामे ग्रामे च यद्गेहं । कर्त्तव्यं स्थितिहेतवे ॥ ध्येये ध्येये च तद् ज्ञेयं । स्थिरिकरण-

मात्मनः ॥ ८२ ॥ निर्धनत्वे समायाते । गंगायाः खननं हि यत् ॥ आगते दुर्घटेऽर्थेऽति—बुद्धेरर्थस्य संग्रहः ॥ ८३ ॥ मुग्धधीरपि संसारी । कुर्वन्नेवं गुरूदितं ॥ अत्रामुत्र पवित्रात्मा । सुखी भवति सर्वदा ॥ ८४ ॥

देवतत्वं हि सुज्ञेयं । यतः सर्वज्ञ एव सः ॥ अनेकवेषधारित्वा—द्गुरुतत्वं तु दुर्घटं ॥८५॥ अतस्ते सुगुरोः किंचि—त्स्वरूपं परिकीर्त्यते ॥ वरं गुरुविहीनो ना । परं कुगुरुभाग् न हि ॥ ८६ ॥ द्रव्यक्षेत्रकालभावान् । व्यवहारं च निश्चयं ॥ उत्सर्गापवादं च । जानात्यायव्ययं च यः ॥ ८७ ॥ पंचमहाव्रती शुद्धः । समित्याः पंचकं दधन् ॥ पंचविधाचारचरो । गुप्तित्रिकविराजितः ॥ ८८ ॥ स्थिरः कषायनिर्मुक्तो । रागद्वेषविवर्जितः ॥ अभिग्रहधरो धीरः । प्रमादरहितो हितः ॥ ८९ ॥ उपदेशपरो नित्यं । सिद्धांतांबुधिपारगः ॥ परेषां शास्त्रवेत्ता च । बुद्धिवृद्धिसमन्वितः ॥ ९० ॥ आदेयवचनः सौम्यो—ऽवसरज्ञो गुणाश्रितः ॥ वक्ता स्मृतियुतश्चैक—वारदृष्टोपलक्षकः ॥ ९१ ॥

स्मारणादिभरायुक्तः । कृतज्ञो मृदुगीः पटुः ॥ पूर्णपंचेंद्रियाधारो । विचारविधुरोऽदरः ॥

॥ ए२ ॥ गंन्नीरो ह्यप्रतिश्रावी । वाह्यसंगनिवारकः ॥ ग्रंथकृत्सदयो युक्तो । विरक्तो विषये-
षु यः ॥ ए३ ॥ इत्यादिगुणसंयुक्तो । मुक्तोऽशेषकदाग्रहैः ॥ तत्वज्ञो गुरुरानंदा–त्सेव्यः स्व-
हितमिच्छुन्निः ॥ ए४ ॥ इति गुरुतत्वं ॥ निदर्शनयुतं किंचि–ज्जुरुतत्वं तवोदितं ॥ धर्मतत्वं द-
यामूलं । स्थूलं प्रथमतः शृणु ॥ ए५ ॥ जीवरक्षामयं धर्मं । शर्मकारणमुच्चकैः ॥ कुर्वन्न् जी-
वोऽमरसिंह । इवाप्नोति शिवं द्विधा ॥ ए६ ॥ तथाहि–

जंबूद्वीपस्य न्नरत–मध्यखंमप्रातिष्ठितं ॥ अमरङंगवच्चंगं । पुरं ह्यमरसंज्ञकं ॥ ए७ ॥
सुग्रीवस्तत्र राजान्नू–दन्यान्यदयितोन्नवौ ॥ तत्सुतौ समरसिंहा–मरसिंहान्निधौ किल ॥ए८॥
परलोकं गते राज्ञि । ज्येष्ठपुत्रो नृपोऽन्नवत् ॥ पापर्द्धिव्यसनात्किंतु । राज्यकार्यं करोति न
॥ एए ॥ द्वितीयोऽमरसिंहस्तु । दयादाक्षिण्यसंयुतः ॥ परोपकारनिरतो–ऽगमयत्कालमात्म-
नः ॥ ६०० ॥

क्रीडार्थं सोऽन्यदोद्याने । जगाम जनसंयुतः ॥ द्विजेनानीयमानं च । तत्रापश्यदजं स्व-
यं ॥ १ ॥ तं दृष्ट्वा दीनवदनं । रटंतं निजन्नाषया ॥ मोचयामास कुमरो । विप्रात्तस्मात्कृपो-

त्तरः ॥ २ ॥ तथापि छगलः पूर्व—वदसौ भाषते पुनः ॥ ततः स वाग्भवः पृष्टः । क्वैनं नयसि भोः पशुं ॥ ३ ॥ सोऽवदद्यज्ञकार्याय । कुमरोऽवगनेन किं ॥ स प्राहास्य फलं स्वर्गो । राजपुत्रोऽगदत्पुनः ॥ ४ ॥ यदि जीववधात्स्वर्गो । नरकः केन कर्मणा ॥ सोऽजल्पद्वैदिकी हिंसा । त्रिदिवाय भवत्यहो ॥ ५ ॥ तावतागान्मुनिश्चैक—स्तं दृष्ट्वा कुमरो जगौ ॥ एष एवावयोर्वाद—निर्णयं भो विधास्यति ॥ ६ ॥ सोऽवग् युक्तं द्वयोर्वाद—स्तृतीयः स्फेटयेद्यतः ॥ साभिज्ञानं पुनर्ज्ञानं । गदिता चेदसौ मम ॥ ७ ॥

भणितश्छगलस्तेन । मुनिना ज्ञानिना तदा ॥ ज्ञात्वा पूर्वभवं तस्य । प्रतिबोधविधित्सया ॥८॥ त्वयैव खानिता गर्त्ता । त्वयैवारोपिता नगाः ॥ यज्ञात्स्वर्गस्त्वयैवोक्तः । किं ब्रूषेऽतः पुनः पुनः ॥९॥ तत् श्रुत्वा मौनमादाय । स्थितश्छगलकस्तदा ॥ तं दृष्ट्वा कुमरोऽवोचत् । मौनी त्वद्वचसा किमु ॥ १० ॥ अनगारोऽगृणात्पूर्व—भवेऽसौ सविताऽभवत् ॥ रुद्रशर्मास्य विप्रस्य । तेनेदं खानितं सरः ॥ ११ ॥ पालावारोपिता वृक्षा—स्तथा यज्ञाः प्ररूपिताः ॥ कालेन कियता मृत्वा । सोऽभूच्छगलकोऽधमः ॥ १२ ॥ अनेनैव सुतेनाजो । यज्ञेऽसौ निहतः पुरा ॥

पंचकृत्वोऽभवद्भागः । सागाः स्वकृतकर्मणा ॥१३॥ अकामनिर्जराप्राप्त्या । षष्ठे जातिस्मृतिर्भवे
॥ जातास्य दुःखदग्धस्य । तेन वक्ति सुतंप्रति ॥१४॥ किं मारयसि मां पुत्र । चेन्मे ते प्रत्ययोऽत्र न
॥ दर्शयामि निधिं तर्हि । त्वत्परोक्षे निवेशितं ॥ १५ ॥ तत् श्रुत्वा वाडवोऽवोचत् । सत्यं चे-
द्भवतोदितं ॥ तदा हिंसां प्रमुंचामि । श्रावकश्च भवामि ते ॥ १६ ॥ तन्निशम्य मुनिश्छागं-
प्रत्युवाचाथ भो पशो ॥ निधिं दर्शय ते सूनो-रक्षैनं च भवार्णवात् ॥ १७ ॥

तत् श्रुत्वा चलितश्छागो-ऽदर्शयच्च निधेर्भुवं ॥ दृष्टे निधाने स तदा । श्रावकोऽभूद्दया-
न्वितः ॥ १८ ॥ छागोऽप्यनशनं लात्वा । मृत्वा स्वर्गी बभूव च ॥ कुमरस्य हि सान्निध्यं ।
कुरुते सततं हितं ॥ १९ ॥ निशायामन्यदागत्य । कुमारं सोऽब्रवीदिति ॥ त्वज्ज्ञाता मरणो-
पायां-स्तव चिंतयति ध्रुवं ॥ २० ॥ ततोऽदो नगरं मुक्त्वा-ऽन्यत्र गच्छ पुनस्तव ॥ राज्यं च
समये भाव्य-धुना स्थातुं न युज्यते ॥ २१ ॥ एनं निगृह्य राज्ये त्वां । स्थापयामि परं तव
॥ विदेशगमने लाभः । प्रतिष्ठा च भविष्यति ॥ २२ ॥ तद्वाक्यतः कुमारोऽसौ । विमलेन
समन्वितः ॥ तदा सचिवपुत्रेण । कुंडिनं नगरं ययौ ॥ २३ ॥ तस्मिन्नवसरे तत्रा-ऽशिवं रो-

गसमुद्भवं ॥ अस्ति तच्छांतिमाधातुं । देवतापुरतो नृपः ॥ २४ ॥ कारयन्नस्ति छागानां । महिषाणां च हिंसनं ॥ तत्प्रेक्ष्य कुमरोऽवोचत् । हिंसकानां पुरस्त्विदं ॥ २५ ॥ युग्मं ॥

मा मारयत भो जीवा–स्तेऽवोचन् वचसा तव ॥ न स्थास्याम इनादेशो । यतोऽस्माकं समस्त्ययं ॥ २६ ॥ इत्युक्त्वा ते पुनर्यावद् । हिंसां कर्त्तुं प्रवर्त्तिताः ॥ तावन्नागसुरेणाशु । स्तंभितास्तेऽखिला अपि ॥ २७ ॥ ततो भानुनृपस्याग्रे । तद्वृत्तांते निवेदिते ॥ आश्चर्यवशतो राजा । गतोऽसौ देवतागृहं ॥ २८ ॥ तत्रामरकुमाराभं । कुमारं वीक्ष्य विस्मितः ॥ सोऽपि भूपं प्रणम्याह । हन्यंते पशवः कथं ॥ २९ ॥ राजा प्रोवाच शांत्यर्थं । जीवघातात्कथं शिवं ॥ कुमारः प्राह जीवानां । तत्कृते त्वं दयां कुरु ॥ ३० ॥ नृपोऽवोचद्देवता मे । चेत्प्ररूपयति स्वयं ॥ तदा हिंसां परित्यज्य । दयां कुर्वे त्वयोदितां ॥ ३१ ॥

निशम्येति कुमारोऽपि । जगौ चैका कुमारिका ॥ आनाय्यतां तदा तूर्णं । यथा तां वादयामि भोः ॥ ३२ ॥ आनीता तत्क्षणादेव । नृपेणैका कुमारिका ॥ मंडले स्थापिता तेन । सावक् मंत्रप्रभावतः ॥ ३३ ॥ जीवरक्षा वसेद्यस्य । कलहंसीव मानसे ॥ पादक्षालननीरेण

। तस्य शांतिर्ज्ञवेदिह ॥३४॥ तन्निशम्य नृपोऽवोचत् । कथं ज्ञेयः स उच्चकैः ॥ सोऽवक्समस्या-
परीक्षा पदतो । ज्ञायते मानसाशयः ॥ ३५ ॥ परं दर्शनिनः सर्वा–नाकारय यथा मया ॥
कु- क्रियते तेषां । समस्यापददानतः ॥ ३६ ॥ ततो नृपेण ते सर्वे । जनै राकारिता द्रुतं ॥
मारोऽपि समस्यायाः । पदे तेषां पुरो जगौ ॥ ३७ ॥

पुरो भ्रमंत्या अपि वारवध्वाः ! स कुंडलं वा वदनं न वेत्ति ॥ तद्वाक्यमाकर्ण्य च केन चित्सा । प्रपूरितैवं विदुषा समस्या ॥ ३८ ॥ चक्षुर्निविष्टं स्तनमंडलेऽस्या–स्तेनैव न ज्ञात-मिदं हि सम्यक् ॥ पुरो० ॥ ३९ ॥ अन्यैः परतीर्थिकैः सा । शृंगाररसराजिता ॥ कथिता राजपुत्रस्य । पुरतो रसतो रयात् ॥ ४० ॥ ज्ञवितव्यनियोगेन । स एव मुनिपुंगवः ॥ पशु-पूर्वज्ञवज्ञाता । तत्रायातो दयान्वितः ॥ ४१ ॥ ततस्तस्यापि पार्श्वे सा । पृष्टैवं स जगौ तदा ॥ साम्यामृतसुधासिंधु–सिंधुरो मुनिसत्तमः ॥ ४२ ॥ मार्गेऽत्र तु स्थावरजीवरक्षा–व्याक्षिप्त-चित्तेन मया न दृष्टं ॥ पुरो० ॥ ४३ ॥ कुमारेण ततः प्रोचे । पादक्षालनवारिणा ॥ अस्यैव रोगशांतिर्मे । ज्ञविष्यति न संशयः ॥ ४४ ॥

ततो ज्ञानुनृपः साधुं । निवेश्य प्रवरासने ॥ स्वयं प्रासुकनीरेण । क्षालयामास तत्पदौ ॥ ४५ ॥ युक्तं ज्ञानुकरस्पर्शा–त्साधुपादांबुजं च यत् ॥ लक्ष्मीयुक्तं परं तन्न । जलसेकेऽपि पंकहृत् ॥ ४६ ॥ ज्ञानोः करौ कृतार्थौ च । जातौ तद्योगतः पुनः ॥ यत्संतापहरा राज्ञः । करा नान्यस्य तत्किमु ॥ ४७ ॥ तन्नीरसेकतः सद्यो । रोगशांतिरज्ञूत्पुरे ॥ तद् दृष्ट्वा विस्मितो राजा–ऽपृच्छत्कोऽसौ कुमारराट् ॥ ४८ ॥ विमलो मंत्रिसत्पुत्रः । कुमारस्याखिलं जगौ ॥ कुलनामादिवृत्तांतं । नृपतेः पुरतस्तदा ॥ ४९ ॥ तन्निशम्य नृपो हर्षा–त्तस्य सन्मानपूर्वकं ॥ स्वपुत्रीं कनकवतीं । राज्यार्द्धं च वितीर्णवान् ॥ ५० ॥ सर्वसौख्यमये काले । कियत्यपि गते त्वसौ ॥ आगतैरमरङ्गा–द्विज्ञप्तः पुरुषैरिदं ॥ ५१ ॥

देव त्वयि पुराद्याते । पापर्द्धिव्यसनातुरः ॥ राजा न कुरुते चिंतां । जनस्यारिसमुद्भवां ॥ ५३ ॥ दुःखी जातो जनस्तेनो–पद्रुतः शत्रुभिस्तथा ॥ तद् दृष्ट्वा सचिवैः साकं । विचार्यायतिसुंदरं ॥ ५४ ॥ मृगयायां गतं ज्ञूपं । मृगव्याजेन सैन्यपः ॥ जघान बाणघातात्तं । व्यसनं यदनर्थकृत् ॥ ५४ ॥ युग्मं ॥ अतः शीघ्रं समागच्छ । राज्यमंगीकुरु प्रज्ञो ॥ लोकान्

पालय दुष्टांस्त्वं । निगृह्णीयाः क्ष्मापते ॥ ५५ ॥ कुमारस्तद्वचः श्रुत्वा । नृपाग्रे तन्निवेद्य
च ॥ चतुरंगचमूयुक्तो । मुदा स्वं नगरं ययौ ॥ ५६ ॥ भीमकांतगुणस्थस्य । नयमार्गानुग-
स्य च ॥ चक्रे पट्टाभिषेकोऽस्य । सोनानीप्रमुखैस्तदा ॥ ५७ ॥ दयातोऽमरसिंहस्य । राज्य-
मासीद्भयोरपि ॥ तथा समरसिंहस्य । हिंसातः श्रीवपुःक्षयः ॥ ५८ ॥ राज्यं प्राप्यामरसिं-
हः । स्वदेशे करुणां व्यधात् ॥ तेन राज्यप्रजावृद्धि–स्तस्याभून्महिमाद्भुतः ॥ ५९ ॥ देवता-
कृतसान्निध्य–श्चिरं भुक्त्वा नृपः श्रियं ॥ स्वपुत्रदत्तराज्योऽसौ । प्रव्रज्यां जगृहे पुनः ॥ ६० ॥
प्रपाल्य सर्वतस्तत्र । दयां निर्मलमानसः ॥ केवलज्ञानमासाद्य । जगाम शिवमव्ययं
॥ ६१ ॥ सम्यग् जीवदयां योऽत्र । पालयेद्भुवि मानवः ॥ मृषावादं न स ब्रूते । परपीडाव-
शात्सुधीः ॥ ६२ ॥ अदत्तमपि नादत्ते । ब्रह्मचर्यं धरत्ययं ॥ परिग्रहप्रमाणं च । करोति नि-
जभावतः ॥ ६३ ॥ लाति दिग्विरतिं चैव । मानं भोगोपभोगयोः ॥ अनर्थदंडविरतिं । तथा सा-
मायिकं व्रतं ॥ ६४ ॥ देशावकाशिकं नित्यं । तथासौ पौषधव्रतं ॥ अतिथेः संविभागं च ।
विधत्ते जीवरक्षणात् ॥ ६५ ॥ धर्मकल्पतरोर्मूलं । दयाख्यं भुवि वर्त्तते ॥ तस्मिन् सति सं-

ति शाखा । विनष्टे नहि किंचन ॥ ६६ ॥

पापबुद्ध्यात्र यत्पापं । तस्य शुद्धिः प्रवर्त्तते ॥ धर्मबुद्ध्या तु यत्पापं । तस्य शुद्धिर्न विद्यते ॥ ६७ ॥ अतो दयामयो धर्मः । सर्वदर्शनसम्मतः ॥ सर्वसौख्यप्रदो नित्यं । कार्यस्तत्वविदा मुदा ॥ ६८ ॥ एकैकं धर्ममार्गी यः । सर्वथात्र प्रपद्यते ॥ इहामुत्र भवेत्तस्य । शिवं सुखसमन्वितं ॥ ६९ ॥ इति धर्मतत्वं ॥ एवं गुरूदितं तत्वं । देवादीनां निशम्य सः ॥ जज्ञे समत्सरो दस्यो । रोचते न हि चंडिका ॥ ७० ॥ नृपमित्येकदा सोऽवक् । स्वपक्षस्थापका इमे ॥ अन्येषां दर्शनं नैव । मन्यंते स्वमतोद्धताः ॥ ७१ ॥ अन्यत्किं क्रियते चैषां । परमत्रं निषेध्यते ॥ यतः स्वविषयं त्यक्त्वा । व्रजंत्यन्यत्र कुत्रचित् ॥ ७२ ॥ राज्ञो मान्यो ह्यसौ तेन । निषिद्धं धान्यमुच्चकैः ॥ तेषां देशे नृपेणाशु । प्रवाद्य पटहं द्रुगात् ॥ ७३ ॥ लाभांतरायनिबिडं । कर्म बद्धं ततस्तदा ॥ मदोत्कुरेण साधूनां । भिक्षादानांतरायतः ॥ ७४ ॥ गूढो विसूचिकादोषो—ऽन्यदा जातोऽचिकित्सकः ॥ तेन पंचत्वमापन्नः । प्रथमं नरकं ययौ ॥ ७५ ॥ सरीसृपो द्वितीयं तु । तृतीयं पक्षितां गतः ॥ ततः सिंहस्ततस्तुर्यं । ततः सर्पो बभूव सः ॥

॥ ७६ ॥ पंचमं नरकं गत्वा । ततो वामाऽजनिष्ट सः ॥ ततः षष्टं पुनर्मीनः । सप्तमं नरकं ययौ ॥ ७७ ॥ ततोऽप्येकेंद्रियादौ स । भ्रमन् भूरिभवान्भवान् ॥ देहे दुःखं सदा सेहे । ज्ञानविज्ञानवर्जितः ॥ ७८ ॥ एवं नरकतिर्यक्षु । विविधां वेदनां घनां ॥ भजन् सर्वत्र क्षुत्तृष्णा–दुःखसंयुक्तजीवनः ॥ ७९ ॥ ग्रामचिंताकरावासे । सुतत्वेनाधुना पुनः ॥ उत्पन्नः कर्मवशतः । स त्वं लाभो न तेन ते ॥ ८० ॥ जातजातिस्मृतिः सोऽथ । संविग्नो गुरुमब्रवीत् ॥ अस्ति कोऽपि ममोपायो । येन कर्मक्षयो भवेत् ॥ ८१ ॥ केवली तं जगौ जंतो–स्तपोभिः कर्मणः क्षयः ॥ भवेन्निकाचितस्यापि । स्पृष्टादीनां तु का कथा ॥ ८२ ॥ अनंतभववेद्यं ते । विद्यते कर्म कर्कशं ॥ स्याद्भवेऽत्रापि शुद्धिश्चे–त्तप्यते दुस्तपं तपः ॥ ८३ ॥ निर्भाग्योऽथ मुनिं प्राह । दीक्षायोग्योऽस्मि चेत्तदा ॥ मां दीक्षय यथा कुर्वे । दुस्तपं तप उच्चकैः ॥ ८४ ॥ योग्यं ज्ञात्वा ततस्तेन । दीक्षितः शिक्षितश्च सः ॥ दीक्षायाः समये तेन । गृहीतोऽभिग्रहस्त्वयं ॥ ८५ ॥ अतःपरं च भोक्तव्यं । मासतो मासतो मया ॥ परं यास्यामि भिक्षायै । परसाधुकृते सदा ॥ ८६ ॥ एवं दीक्षां वर्षलक्षं । प्रपाल्याभिग्रहं तथा ॥ अंते समाधिना मृ-

त्वा । सहस्रारं स आसवान् ॥ ८७ ॥

तत्रोत्कृष्टां स्थितिं स्थित्वा । भुक्त्वा भोगांस्तथाविधान् ॥ च्युत्वा चायुःक्षये चारु-प्रति-
ष्ठानपुरे पुरे ॥ ८८ ॥ राज्ञो मलयकेतोस्तु । सुविलासवती सती ॥ प्रियास्ति तस्या गर्भे स-
मुत्पन्नो भाग्ययोगतः ॥ ८९ ॥ युग्मं ॥ तया स्वप्ने तदा पूर्ण-कलशो ददृशे मुदा ॥ वदने
प्रविश्यमानो-ऽमानमानसमन्वितः ॥ ९० ॥ न्यस्तानि पूर्वपुरुषै । रत्नकोटिभृतानि च ॥ अ-
ष्टौ महानिधानानि । प्रकटानि तदाऽभवन् ॥ ९१ ॥

कालक्रमेण जातोऽस्याः । पुत्रः शत्रुनिवारकः ॥ महोत्सवा मुदाऽभूवन् । विविधा वि-
धिपूर्वकं ॥ ९२ ॥ पूर्णकलश इत्याख्या । तस्य स्वप्नानुसारतः ॥ पितृभ्यां विदधे सर्वं । सं-
तोष्य स्वजनव्रजं ॥ ९३ ॥ श्वेतपक्षशशीवासौ । नेत्रानंदप्रदायकः ॥ दिने दिने कलावृद्धिं ।
लेभे तापनिवारकां ॥ ९४ ॥ क्रमेण यौवनं प्राप । युवतीजनहर्षदं ॥ विक्रमौदार्यगांभीर्य-गु-
णावासनिभं शुभं ॥ ९५ ॥ स्वकीयभवनस्थस्य । कुमारस्यान्यदा सुधीः ॥ पुमान् कोऽपि
समायातः । प्रतीहारनिवेदितः ॥ ९६ ॥ स प्रणम्य यथास्थान-मुपविष्टस्ततो जगौ ॥ कुमा-

रस्तं कुतः स्थाना–दागतः किं नु कारणं ॥ ९७ ॥ श्रावस्ती स जगावस्ति । नगरी नगरा-
जिता ॥ श्रावको जिनदत्ताख्य–स्तत्र भक्तिपरो जिने ॥ ९८ ॥

तन्मित्रं मित्रसेनोऽहं । तत्र वास्तव्य एकदा ॥ दिव्यसौरभ्यसंभार–भासुरं तं निरीक्ष्य
च ॥ ९९ ॥ मया प्रोचे तवेदृक्षो । दिव्यगंधः कुतोऽभवत् ॥ सर्वानुभूतियक्षो मे । मित्र-
मस्तीति सोऽब्रवीत् ॥ १०० ॥ युग्मं ॥ तद्दत्ताकाशविद्याया । बलाद्यामीह शाश्वते ॥ नंदी-
श्वरादौ तीर्थे च । तत्राऽयांति सुरा अपि ॥ १ ॥ दिव्यपूजोपहारेण । वासितांगो भवाम्यहं
॥ तेन मे सततं गंध । ईदृशो वर्त्तते जने ॥ २ ॥ मयोक्तः स तदा देहि । मंत्रं मे येन पु-
ष्करे ॥ गतागतमहाशक्ती । भवतो भुवनाद्भुते ॥ ३ ॥ दत्तो मंत्रस्ततस्तेन । पूर्वसेवा कृता
मया ॥ सेवामुत्तरजां कुर्वे । परं साहाय्यकृन्न हि ॥ ४ ॥ द्वात्रिंशल्लक्षणाधारो । नरो वि-
क्रमभासुरः ॥ साहसी बलसंयुक्तो । विरतो गुरुभीतितः ॥ ५ ॥ एवंविधो बुधो धीरो । वी-
रो गंभीरमानसः ॥ चेन्मे करोति साहाय्यं । तदा मंत्रोऽपि सिद्ध्यति ॥ ६ ॥ कुमारेण ततः
प्रोचे । भवाम्युत्तरसाधकः ॥ कुरु कार्यं निजं शीघ्रं । विघ्नं ते नो भविष्यति ॥ ७ ॥ ततः

॥ १७९॥

कृष्णचतुर्दश्यां । गृहीत्वोपस्करं गुरुं ॥ कुमारेण समं सोऽपि । स्मशानं प्रययौ निशि ॥ ॥ ८ ॥ साधकेनाथ लिखितं । मंडलं पूजितं सुमैः ॥ कुमारो मंडलं लात्वा । तस्थौ धीरमनास्तदा ॥ ए ॥

अक्षतं मृतकं तत्रा–नीय तस्य मुखेऽनलं ॥ प्रज्वाल्य मंत्रपूर्वं स । आहुतीः प्रददौ मुदा ॥ १० ॥ भूतैः कलकलश्चक्रे । वेतालैर्नर्त्तितं तदा ॥ राक्षसैर्हसितं नैव । साधकश्चुक्षुभे पुनः ॥ ११ ॥ तत उत्थाय मृतकं । कक्षायां साधकं तथा ॥ प्रक्षिप्य चलितं दूरं । कुमारोऽपि तमन्वगात् ॥ १२ ॥ तथापि साधके तस्मि–न्नमुंचति सति क्रमात् ॥ मृतकं हक्कितं तेन । मुक्त्वा तं पतितं ततः ॥ १३ ॥ तदा सर्वानुभूतिः स । यक्षः प्रत्यक्षतां गतः ॥ कुमारं प्राह तुष्टोऽस्मि । तव साहसतः सतः ॥ १४ ॥ कुमारेण ततः प्रोक्तं । चेत्तुष्टोऽसि तदा कुरु ॥ साधकस्य मनोऽभीष्टं । सोऽवग् नैवास्य योग्यता ॥ १५ ॥ अहं तवादेशकारी । भविष्यामि न चास्य तु ॥ भवत्समीपे स्थाप्योऽसौ । भवितायमतः सुखी ॥ १६ ॥

इत्युक्त्वाशु गजस्कंधं । तौ तेनारोपितौ द्रुतं ॥ भणितं च कुमारेंद्र । विदर्भविषयेऽक्षये

॥ १७ ॥ इहास्ति कुंभिनं पुरं । विख्यातं सकले जने ॥ दमितारिर्नृपस्तत्र । तंत्ररक्षितदेश-
भूः ॥ १७ ॥ युग्मं ॥ तस्यास्ति कमलादेवी । कमलेव सुदर्षदा ॥ ज्ञानगर्भस्तथा मंत्री ।
मंत्रतंत्रविशारदः ॥ १९ ॥ मुनिचंद्रगुरोः पार्श्वे । सम्यक्त्वं भूभुजान्यदा ॥ गृहीतं भावयुक्तं
च । भक्तेन जिनशासने ॥ २० ॥ आपन्नसत्वा कालेन । कियता तन्नृपप्रिया ॥ अभवच्च नृ-
पस्यापि । रोगो भाग्यविपर्ययात् ॥ २१ ॥ अधर्मकर्मयोगेन । दोषः शंकादिसंभवः ॥ राज्ञो
मरणकालेऽस्य । जातः सम्यक्त्वदूषकः ॥ २२ ॥ तेन यक्षो बभूवासौ । सौधर्मे धर्मतो भवे-
त् ॥ अन्यथोपासकस्याहो । जघन्येनापि सौख्यदः ॥ २३ ॥ सगर्भा कमलादेवी । पुत्रबु-
द्ध्या निवेशिता ॥ मंत्रिभी राज्यभारे सा । परं पुत्रोऽजनिष्ट न ॥ २४ ॥ किंतु पुत्री बभू-
वासौ । राज्ञी तेनातिदुःखिता ॥ धीरिता सचिवेनैवं । मा विषादं कुरु ह्यतः ॥ २५ ॥

इछं कृते राज्यमिदं । यास्यति प्रथितं हितं ॥ इमां त्वं पुत्रवेषेण । पालयातो नृपप्रिये
॥ २६ ॥ पुत्रजन्मोत्सवश्चक्रे । मंत्रिणा सकले पुरे ॥ सोऽवर्द्धिष्ट क्रमेणाहो । कामसेनकृता-
द्वयः ॥ २७ ॥ सोऽहं यक्षोऽवधिज्ञाना—न्मया सर्वमवेक्षितं ॥ परं सा यौवनं प्राप्ता—ऽधुना ते-

नातिदुर्घटं ॥ २८ ॥ अतस्त्वं तत्र चागच्छ । तामुद्वह महाशय ॥ तत्रत्यं त्वं महाराज्य-मिहत्यं च कुरुष्व नोः ॥ २९ ॥ प्रतिपन्नं कुमारेण । ततोऽसौ यक्ष आदरात् ॥ अंकुशं स्वकरे कृत्वा-ऽचालयद्गगने गजं ॥ ३० ॥ समेत्य कुंडिनपुरो-द्यानं तमुदतारयत् ॥ त्वरितं कुंजराद्यक्षः । कुमारं साधकान्वितं ॥ ३१ ॥ विद्यां रूपपरावर्त्त-करीं दत्वा पुनर्जगौ ॥ रूपं कृत्वा स्त्रियोऽवश्य-मुद्वहेमामनुद्वहां ॥ ३२ ॥

कन्यारूपं कुमारेण । कृतं विद्याप्रभावतः ॥ यक्षेण सिंधुराश्वादि-सैन्यं च वैक्रियं स्वयं ॥ ३३ ॥ शिक्षयित्वा साधकोऽसौ । ज्ञानगर्भस्य मंत्रिणः ॥ समीपे प्रेषितः सोऽपि । गत्वा मंत्रिणमब्रवीत् ॥ ३४ ॥ सिंहलद्वीपतो राज्ञा । कामसेनाय भूभुजे ॥ पूर्णकलशी स्वकन्या । प्रेषितास्ति स्वयंवरा ॥ ३५ ॥ अनयोः सनयोद्वाहो । यथा भवति धीसख ॥ तथा त्वं कुरु सामग्रीं । समग्रां सत्वरं वरां ॥ ३६ ॥ मंत्रिणा तद्वचः सर्वं । प्रतिपन्नं तदग्रतः ॥ विसर्जयित्वा तं सोऽथ । देवीपार्श्वे जगाम च ॥ ३७ ॥

स्वयंवरायातकन्या-स्वरूपं सकलं जगौ ॥ सा विषादपरा जाता । तन्निशम्य नृपप्रिया

॥ ३८ ॥ देव्युक्ता मंत्रिणा ताव–न्मा विषादं विधेहि भोः ॥ अधुना कालहरणं । क्रियते नृ-
पवल्लभे ॥ ३९ ॥ पाणिग्रहणकर्मेदं । कार्यते कारणागतं ॥ करिष्ये धीबलात्पश्चात् । सर्वां
कालोचितां क्रियां ॥ ४० ॥ अधुनास्याः स्वरूपं चे–त्कथ्यते वैरिणस्तदा ॥ उपद्रवंति सद्यो-
ऽस्मां–स्ते ग्रसंति नयोज्झिताः ॥ ४१ ॥ उक्त्वैवं कामसेनासौ । रहस्तेनेति जल्पिता ॥ वत्से
पुरुषवेषेण । परिणीया नृपात्मजा ॥ ४२ ॥ युक्तं तदुक्तं सा व्यक्तं । निशम्यायतिसुंदरं ॥
दरं त्यक्त्वा वचो मेने । तेने सोऽपि ततो महं ॥ ४३ ॥ यक्षस्याग्रे साधकेन । वृत्तांते कथि-
तेऽखिले ॥ यक्षश्चकार वीवाह–सामग्रीं सकलां कलां ॥ ४४ ॥
मंत्रिणा च पुरीमध्ये । मंडपादि विनिर्मितं ॥ ग्रायाकृते कृतज्ञेन । विधिपूर्वकमुच्चकैः
॥ ४५ हस्तमेलापके काले । कामसेनेन सा तदा ॥ ज्ञातः पुरुषपाणेः स । पुरुषः क्षणमा-
ततः ॥ ४६ ॥ पूर्वं तु पूर्णकलशी । वेत्ति यक्षप्रसादतः ॥ सर्वमस्याः स्वरूपं सा । तस्या-
श्चिंता कुतस्ततः ॥ ४७ ॥ विवाहानंतरं मार्गे । यांतौ वीक्ष्येति तौ जनः ॥ पुण्यप्रौढौ ग-
जारूढौ । चक्रे चिंतां स्वचेतसि ॥ ४८ ॥ या स्त्री सा पुरुषाकारा । वरो वामानुकारभृत् ॥

संसारनाटकं नैव । ज्ञायते रूपकारणं ॥ ४९ ॥ जगाद कोऽपि नैवेयं । वनिता किंतु निर्जरः ॥ स्वेच्छया रूपमाधाय । क्रीडां कर्त्तुमिहागतः ॥ ५० ॥ अन्योऽप्यन्यं जगौ श्रीमान् । दानवो मा न्नवत्वियं ॥ को वेत्ति क्रीडितं वास्या । लात्वैनं याति कुत्रचित् ॥ ५१ ॥

एवं वाक्यपरे लोके । स्वसौधं तौ च जग्मतुः ॥ कुलक्रमागताचार–परौ सौख्यन्नरोत्तरौ ॥ ५२ ॥ अतिवाह्य दिनं सर्वं । सुखेन महता तदा ॥ विसृज्यामात्यसेनानी–प्रमुखं सेवकव्रजं ॥ ५३ ॥ कुमारः पूर्णकलशो । हसित्वा वाक्यमब्रवीत् ॥ इयंतो दिवसा विप्र–तारिता मुग्धबुद्धयः ॥ ५४ ॥ परं दक्षजनो नैव । विप्रतारयितुं परैः ॥ शक्यते नररूपं त–त्त्यज मुग्धे न्नजाशु मां ॥ ५५ ॥

तत् श्रुत्वा कामसेनापि । जगौ कामसमन्विता ॥ त्वमपीहवशावेषं । मुंच सिंचामृतेन मां ॥ ५६ ॥ कुमारो विस्मयापन्नो–ऽवदक्ष्ऽ त्वया किमु ॥ मृगाक्षि पुरुषोऽहं ह्यग् । ज्ञातो ज्ञानधरे वद ॥ ५७ ॥ सागदच्च करामर्शाद् । ज्ञाता यूयं नराः पुरा ॥ तत् श्रुत्वा कुमरो दध्यौ । बालापि विदुरा ह्यसौ ॥ ५८ ॥ साह स्वामिन्नहं केनो–पायेन विदिता वशा ॥ सो-

ततो द्वाभ्यां स्वस्ववेषो—गीकृतः स-
ऽत्रगू यत्क्षेण मे सर्वो । वृत्तांतः कथितस्तत्र ॥ ५९ ॥ शुभ्रमय्यां विभावर्यां । ग-
म्मदात्तदा ॥ रूपं परस्परं वीक्ष्य । मेने च सफलं जनुः ॥ ६० ॥ स्वामिन् पुनर्व-
तायां विविधैः सुखैः ॥ प्रभाते भणितः काम—सेनया कुमरस्त्विदं ॥ ६१ ॥ कुमा-
शारूपं । कुरु सत्वरमुच्चकैः ॥ येन मातुः पुरो गत्वा । स्वरूपं निखिलं ब्रुवे ॥ ६२ ॥
रेण तथा चक्रे । कामसेना ततः स्वयं ॥ जगाम जननीपार्श्वे । स्त्रीवेषेण समन्विता ॥ ६३ ॥
तथाविधां च तां दृष्ट्वा । चमच्चक्रे भृशं प्रसूः ॥ ततो रहः समाकार्या—ऽपृच्छतां पुत्रि किं
न्विदं ॥ ६४ ॥ तया व्यतिकरः सर्वो । जनन्याः कथितस्ततः ॥ तुष्टा सा मंत्रिणः पुत्री—वृ-
त्तांतं च न्यवेदयत् ॥ ६५ ॥ देवी मंत्री च पुत्री च । कुमारांतिकमागताः ॥ स्त्रीरूपं तं पु-
नर्दृष्ट्वा । राज्ञी प्राह सुतांप्रति ॥ ६६ ॥ वत्से त्वया यदुक्तं प्राक् । तच्च नो दृश्यतेऽधुना ॥
प्रियावाक्याच्चतस्तेन । स्वरूपं प्रकटीकृतं ॥ ६७ ॥ तं दृष्ट्वा नृपतेः पत्नी । हर्षौत्सुक्यसमन्वि-
ता ॥ मंत्रिणं च जगौ विद्व—न्नाश्चर्यं दृश्यतां त्विदं ॥ ६८ ॥ मंत्र्याह वाक्यमाकर्ण्य । त्वर-
शास्त्रविशारदः ॥ चित्रं किमत्र हे देवि । धर्मतः स्यान्न किं यतः ॥ ६९॥ क्षितिः कोशस्थि-

तिस्तेषां । सर्वं राज्यं स्वराज्यवत् ॥ देवाः सेवाकरा नित्यं । दानवा मानवा इव ॥ ७० ॥ दुःकालोऽपि सुकालः स्यात् । दुर्गमं सुगमं भवेत् ॥ खंडं वाऽखंडनगरं । दुर्जनः सज्जनायते
विदेशोऽपि स्वदेशाभो । विषमं सुसमं पुनः ॥ रोगोऽपि भोगतां याति । दुःखं चारुसुखायते ॥ ७२ ॥ कालकूटं सुधाकूटं । संकटं निकटं श्रियः ॥ निधनं धनसंकाशं । परलोकः स्वलोकवत् ॥ ७३ ॥ लक्ष्मीर्लक्ष्मीप्रदा नित्यं । सारदा सारदायिका ॥ स्वकृतं सुकृतं स्फीतं । तेषां स्वस्तिजुषां सदा ॥ ७४ ॥ पंचभिः कुलकं ॥ तस्मिन्नवसरे यक्षो बभूव प्रकटः पुरः ॥ राज्ञ्यादीनामवादीच्च । दमितारिरहं पुरा ॥ ७५ ॥ विराधितं च सम्यक्त्वं । किंचिच्छंकादिदोषतः ॥ तद्विशुद्धिं विना चान्यो । मान्यो धर्मो भवेन्नहि ॥ ७६ ॥ तेनाहं गुह्यको जज्ञे । विज्ञे सम्यक्त्वमुज्ज्वलं ॥ अतो धार्यं सदा वार्यं । शंकादिगुरुदूषणं ॥ ७७ ॥ इयत्कालं मया राज्य-साहाय्यं विहितं हितं ॥ अतःपरं प्रतिष्टान-पुरस्वामित्वशालिनः ॥ ७८ ॥ राज्ञः श्रीमलयकेतोः । सुतोऽयं वः समर्पितः ॥ कामसेनाविवाहार्थं । राज्यरक्षाकृते तथा ॥७९॥ श्रीपूर्णकलशाख्यस्य । कुमारस्यास्य सत्वरं ॥ राज्याभिषेकमाधाय । ह्याज्ञां मन्यध्व

सद्योऽवोचत्कुमारेंद् । कंदर्प-
मादरात् ॥ ८० ॥ अंगीकृतेऽस्य वचने । यक्षो हर्षन्नराचतः ॥ जय त्वं पूर्णकलश । सुम-
समविग्रहं ॥ ८१ ॥ सद्वृत्तः पत्रकलितः ॥ पात्रं घनरसस्य च ॥ तथापि काले स्म-
नः सद्वितोऽश्रदः ॥ ८२ ॥ धर्मतः कार्यसिद्धिस्ते । भविष्यति न संशयः ॥ देवा ध-
र्त्तव्यः । कर्त्तव्यकरणेच्छया ॥ ८३ ॥ इत्युदीर्य लसद्वैर्यः । स जगाम स्वधाम यत् ॥
नं दानवा वा । तिष्ठंति न नरांतिके ॥ ८४ ॥ पट्टाभिषेकश्चक्रेऽस्य । सेनानीसचिवादिभिः ॥
शूरं नयज्ञं राजानं । को न कुर्याज्जनः पुनः ॥ ८५ ॥ मित्रसेनः साधकोऽपि । कुमारेण त-
दा मुदा ॥ कृतो देशाधिपः संतो । यतो ह्याश्रितवत्सलाः ॥ ८६ ॥ मंत्रिणा ज्ञानगर्भेण । त-
द्गृ दृष्ट्वा निजनंदिनी ॥ प्रदत्ता मित्रसेनस्य । नृपमान्योऽर्च्यते जनैः ॥ ८७ ॥ पुण्यानुबंधिपु-
ण्याच्च । लब्ध्वा राज्यं नराधिपः ॥ पुण्यं पुण्यं सदा चक्रे । हृदा वक्रेण वर्जितः ॥ ८८ ॥ य-
थाकालं त्रिवर्गं य—द्विरोधं स विना सदा ॥ साधयेत्तच्च चित्रं न । नृपधर्मोऽयमीदृशः ॥८९॥
उत्कृष्ट आदरोऽपूर्वे । मध्यमे मध्यमादरः ॥ जघन्ये च जघन्योऽस्य । क्रमवेत्ता यतो ह्यसौ ॥
॥ ९० ॥ लक्ष्मीयुतोऽप्यसौ यन्न । जिनधर्मं विमुंचति ॥ तदाश्चर्यं ततश्चित्रं । यदयं न ज-

नार्द्दनः ॥ ९१ ॥ नृपधर्माच्च यदसौ । जिनधर्मं सदोत्तमं ॥ मन्यते तेन तत्कार्यं । कृत्वान्यस्य करोत्ययं ॥ ९२ ॥ गृहिधर्मतरोरिद्धं । गृह्णतः सरसं फलं ॥ अंगपुष्टिरभूत्तस्य । ततोंगजजनोदयः ॥ ९३ ॥ कामसेनासमुद्भूतो । वीरसेनाभिधः सुधीः ॥ सुतोऽभूतो नतोऽनेकैः । सविवेकैर्मतोऽभवत् ॥ ९४ ॥ अन्यदा मित्रसेनस्य । पुरतः कुमरो जगौ ॥ जगतीकौतुकं द्रष्टुं । चिंता चित्तेऽस्ति मेऽधुना ॥ ९५ ॥ मित्ररूपेण तेनाथ । जगदे जगतीपतिः ॥ भवत्वेवं परं यक्ष—सान्निध्याद्गम्यते विभो ॥ ९६ ॥

तद्वक्याच्च कुमारेण । स्मृतो यक्षः क्षणादपि ॥ आययौ मनसा साकं । देवो नैव विलंबते ॥ ९७ ॥ यक्षस्याग्रे स्वस्वरूपे । कथिते प्रथिते सति ॥ सोऽवोचत्तर्हि मातंगे । द्रुतं मे चटतामुभौ ॥ ९८ ॥ यक्षवारणमारुह्य । चलितौ गगनाध्वना ॥ कुमारसाधकौ यक्ष—सान्निध्यात्साधुबंधुरौ ॥ ९९ ॥ विलोकयंतौ जगतीं । नानाकौतुकसंकुलां ॥ संप्राप्तौ कांचनपुरं । कांचनौघविराजितं ॥ ८०० ॥ वर्याश्चर्यधरं प्रौढं । स्वर्णप्राकारराजितं ॥ प्रासादप्रकराकीर्णं । सौधश्रेणिसमाकुलं ॥ १ ॥ हट्टपंक्तिसुवस्त्वाढ्यं । युतं नाटकपेटकैः ॥ इभ्यलोककुलावासं ।

धनधान्यप्रपूरितं ॥ २ ॥ चतुर्भिः कलापकं ॥ चतुष्कयुक्तमुत्सर्गा–पवादविधिबंधुरं ॥ आख्यातकृत्यतद्धित–कृतप्रत्ययवर्णयुक् ॥ ३ ॥ पुरं लक्षणवज्जाति । गुणवृद्धिसमन्वितं ॥ किंतूपसर्गनिपात–न्यासलोपविवर्जितं ॥ ४ ॥ युग्मं ॥

एवंविधं पुरं दृष्ट्वा । कुमारो हर्षनासुरः ॥ यक्षं प्राह दर्शयेदं । पुरं पार्थिवसंयुतं ॥ ५ ॥ ततः करिवरस्कंधा–द्यक्षेणोत्तारितावुन्नौ ॥ कथितं च यदा कार्यं । तदा स्मार्यस्त्वहं त्वया ॥ ॥ ६ ॥ प्रविष्टौ नगरं तौ द्वौ । सकलं दिवसं तथा ॥ कौतुकं विविधं ताभ्यां । दृष्टं दृष्टिसुखप्रदं ॥ ७ ॥ अस्तं गते पुनः सूर्ये । तूर्येण परिपूरिते ॥ कामदेवकुले गत्वा । निद्रामकुरुतामिमौ ॥ ८ ॥ तस्मिन्नवसरे तत्र । सूरसेनो नराधिपः ॥ प्राज्यं राज्यं करोत्युच्चै–र्वसंतश्रीश्च तत्प्रिया ॥ ए ॥ तत्कुक्षिसंभवा प्रीति–युता रतिरिवोत्तरा ॥ मदनश्रीः सुता चास्ति । कलाकेलिप्रिया वरा ॥ १० ॥ तस्याः सखी कामलता । लतेव फलदायिका ॥ दंमाधिपस्य डुहिता । सहिता सुखसंपदा ॥ ११ ॥ द्वितीयाशशिकलेव । निर्मला जनपूजिता ॥ द्वितीया शशिकला त–त्सचिवस्य च पुत्रिका ॥ १२ ॥ मधुश्रीस्तृतीया तत्र । मधुश्रीरिव जंगमा ॥ श्रेष्ठिपु-

त्री सुमनोभ्रूः । पिकस्वरविराजिनी ॥ १३ ॥

एवं चतस्रस्ताः संति । पुण्यावयवसुंदराः ॥ सारं देवगतेर्लात्वा । विधिना या विनि-
र्मिताः ॥ १४ ॥ विद्यानंदन इत्याख्यः । पाठकः पटुबुद्धिमान् ॥ यथार्थनाभा तत्रास्ति । प्र-
शस्तिस्वस्तिकृज्जने ॥ १५ ॥ तस्य पार्श्वे चतस्रस्ता । मूर्त्तिमंत्यो धियः किल ॥ कलानां ग्र-
हणं काले । कुर्वंति कलिवर्जिताः ॥ १६ ॥ तत्र सागरदत्तोऽस्ति । सार्थवाहो महाधनी ॥ स-
मुद्रदत्तस्तत्पुत्रो । रूपलावण्यभाजनं ॥ १७ ॥ सोऽपि तत्र सहाध्यायी । कलाग्रहणतत्परः
वयःस्थः कुलजो विद्वान् । धनवान् सुभगः सुखी ॥ १८ ॥ संसर्गवशतस्तस्मिन् । सतीर्थ्य-
त्वाच्चतसृणां ॥ समानशीलतायोगा–दनुरागोऽभवत्तरां ॥ १९ ॥ एकदालोचयांचक्रु–स्ताश्च-
तस्रोऽपि कन्यकाः ॥ अस्माकं निर्भरस्नेहो । नीलीरागवदुच्चकैः ॥ २० ॥ विवाहं पितरश्चे-
न्नः । करिष्यंति धिया स्वया ॥ पृथक् पृथक् पुरीयोगा–द्विरहो भविता तदा ॥ २१ ॥ अतः
समुद्रदत्तस्य । करं गृह्णीमहे वयं ॥ रूपयौवनसद्विद्या–प्रमुखैः सदृशैर्गुणैः ॥ २२ ॥

इतः समुद्रदत्तं ताः । प्रोचुः सार्य त्वयैत्य वै ॥ कामदेवकुलेऽस्माकं । कर्त्तव्यं पाणिपी-

मनं ॥ २३ ॥ कर्णामृतमयं तच्चा–कर्ण्य हृत्कर्णदुर्बलः ॥ सोऽपि हृष्टमनास्तासां । प्रवेदे व-
चनं तदा ॥ २४ ॥ कुरंगनामा तत्पत्ति–स्तदासीत्सविधौ विधेः ॥ वशात्तेन श्रुतं सर्वं । कथि-
तं तत्पितुस्तथा ॥ २५ ॥

अथ संध्याक्षणे जाते । वंचयित्वा दृशश्छलात् ॥ नृपप्राहरिकादीनां । चेटीं लात्वा वि-
चक्षणां ॥ २६ ॥ विवाहस्योपकरणं । गृहीत्वा सकलं कलं ॥ मदनश्रीः समायाता । प्रासादे
मदनस्य सा ॥ २७ ॥ युग्मं ॥ एवमन्याश्चतस्रोऽपि । तत्राजग्मुर्मुदान्विताः ॥ यत्रास्ते पूर्ण-
कलशः । सुखसुप्तः ससाधकः ॥ २८ ॥ सोऽर्चितः प्रथमं ताभिः । कुसुमैः कुसुमायुधः ॥
यः सेवितो ह्यनंगोऽपि । विधत्तेंगजसंततिं ॥ २९ ॥ श्रेष्ठिसागरदत्तेन । तदाऽचिंति सुतो य-
दि ॥ परिणेष्यत्यमूः सर्वा । अनर्थो मे तदागतः ॥ ३० ॥ साम्ना मे वचनं नैव । करिष्यति
यतो लघुः ॥ अतो भेदेन रक्षामि । कर्मणोऽस्मादमुं जवात् ॥ ३१ ॥

ततः कार्यमिषात्तेन । गृहमध्ये प्रवेशितः ॥ शीघ्रं च तालकं दत्तं । लुप्तं तस्य मनीषि-
तं ॥ ३२ ॥ पश्चाद्विलोकितस्ताभिः । समस्ताभिः समंततः ॥ चिरं परं प्रशस्ताभि–र्न दृष्टः

पूर्वकारणात् ॥ ३३ ॥ आग्निस्तं मृग्यमाणाग्निः । कुमरो दृष्ट इष्टकृत् ॥ चिंतामणिं च ल-
ब्नते । मणिमिच्छुर्यथोदधौ ॥ ३४ ॥ तं दृष्ट्वा मदनश्रीः स्राक् । प्राह किं मदनो ह्यसौ ॥ त-
दा कामलताऽवोचत् । सोऽनंगोऽसौ शुन्नांगन्नृत् ॥ ३५ ॥ परं पुरुषोत्तमोऽयं । ततः शशि-
कला जगौ ॥ स स्याज्जनार्दनः किंतु । जनानंदन एष कः ॥ ३६ ॥ तन्नूनं शंकरश्चासौ । म-
धुश्रीरवदत्ततः ॥ सखि सोऽस्ति विरूपाक्षो । ह्ययं कमललोचनः ॥ ३७ ॥ इंद्रमेनमतो विद्धि
। मदनश्रीर्जगौ पुनः ॥ कंदर्परूपनयन—सहस्रेण स दूषितः ॥ ३८ ॥ अतोऽन्यं मान्यमन्येषां
। समेषां किमपि ध्रुवं ॥ ब्रूहि मे नायमानंद—मस्माकं सारमर्थयेत् ॥ ३९ ॥ साधको वच-
नं श्रुत्वा । तासां शंकाछिदेऽवदत् ॥ कामादिर्नैष किंतु श्री—प्रतिष्ठानपुरेशितुः ॥ ४० ॥ रा-
ज्ञः श्रीमलयकेतोः । पुत्रोऽयं पुण्यपुण्यन्नूः ॥ श्रीपूर्णकलशनामा । रामाकामार्थकारकः ॥
॥ ४१ ॥ युग्मं ॥

तत् श्रुत्वा विस्मताः शस्ता—स्ता अवोचुः परस्परं ॥ तुष्टेन मदनेनोच्चै—र्वरो दत्तो न ई-
दृशः ॥ ४२ ॥ साधकं सकलाः प्रोचु—र्वरमुद्धापय द्रुतं ॥ सांप्रतं समयो येन । वर्त्तते वर-

णोचितः ॥ ४३ ॥ नवापितोऽथ कुमर–स्ता दृष्ट्वा सावकं जगौ ॥ एताः पातालकन्याः किं
। वध्वो विद्याधरस्य वा ॥ ४४ ॥ अथवा सुरांगना न्नोः । सम्यग् विज्ञायते नहि ॥ प्राह
राजसुतादासी । तत् श्रुत्वा च विचक्षणा ॥ ४५ ॥ विकल्पजल्पैस्ते पूर्णं । सम्यग् तत्वं नि-
शम्यतां ॥ सूरसेननृपस्येयं । पुत्रिका प्रथमाऽसमा ॥ ४६ ॥ द्वितीया दंमाधिपते–स्तृतीया
मंत्रिणस्तथा ॥ चतुर्थी च श्रेष्टिसुता । वरणार्थं तत्रागताः ॥ ४७ ॥ अधुना शोभनं लग्नं ।
वर्त्तते सत्वरं ह्यतः ॥ पाणिग्रहणमेतासां । कुरु सुंदर सादरं ॥ ४८ ॥ तेन तद्वचसा तासां
। गत्वा मदनसन्निधौ ॥ गंधर्वेण विवाहेन । विहितं पाणिपीडनं ॥ ४९ ॥ मदनश्रीप्रमुखा-
न्नि–र्जगदे कुमरस्तदा ॥ स्वामिन् यूयं जगद्देश–भ्रमणादरलालसाः ॥ ५० ॥ तथापि निज-
लोकानां । सारा कार्या विशेषतः ॥ पद्मिनीनां यतो लक्ष्मी–र्नीरं न स्याद्विना प्रज्ञो ॥५१॥
यतः–स्त्रीणां न्नवत्यनाथानां । वंधुरप्यन्निभूतये ॥ अजिनीनामिवाब्जोऽपि । चंडोऽनुक्रतन्ना-
स्वति ॥ ५२ ॥ इत्थं गदित्वा ताः सर्वा । गता स्वं स्वं निकेतनं ॥ कुमारः सद्वितीयस्तु । त-
त्र तस्थौ समाहितः ॥ ५३ ॥ तस्मिन्नवसरे तत्र । स्तंभमुन्मूल्य वारणः ॥ प्रासादान् पात-

॥ १९४ ॥

यामास । सौधांश्च विविधान् द्रुतात् ॥ ५४ ॥ क्रोधाद्योऽघ्नन् जघानासौ । शेषाणां का कथा वृथा ॥ नृजातीनपि तदा । गणयामास नैव सः ॥ ५५ ॥ व्यालः स्वभावतश्चायं । विशेषान्मुत्कलस्तदा ॥ मदोत्कटश्च तत्रापि । तथा च नृपतिप्रियः ॥ ५६ ॥ कुकर्मणावर्णवृद्धि—रभूदस्याद्भुतं न तत् ॥ मातंगानामिदमेव । सा भवेद्भुवि निश्चितं ॥ ५७ ॥ तद् दृष्ट्वा नृपतिः प्राह । योऽमुं कुर्याद्वशं गजं ॥ मदनश्रीसुतां तस्मै । यच्छामीच्छाधनान्वितां ॥ ५८ ॥ आधोरणा निशम्यैत—त्तथा क्षत्रियपुत्रकाः ॥ नदायुधाः पुनर्योधा । अधावन् विविधाः क्रुधा ॥५९॥

परं केनापि नो नीतः । स्ववशं स वशापतिः ॥ नृपतिः सर्वलोकश्च । तेनासीद्दुःखपूरितः ॥ ६० ॥ श्रुत्वा कुमारसिंहः स । गजस्य बृंहितं द्रुतं ॥ तत्राजगाम शूरत्वा—त्तेजःपुंजसमन्वितः ॥ ६१ ॥ गजशिक्षाविशेषज्ञः । खेदयित्वा चिरं परं ॥ वशीचक्रे विशोभ्रंतं । करिणं करणि गिरेः ॥ ६२ ॥ आलानस्तंभे नीत्वा स । बद्धः शुद्धधिया स्यात् ॥ ततो लोकैस्ततशोकै—र्नृपाग्रे तन्निवेदितं ॥ ६३ ॥ जाते प्रभाते सा राज्ञ्या । विवाहोपस्करान्विता ॥ दृष्टा पृष्टा च दुहिता । वत्से किं जातमीदृशं ॥ ६४ ॥ मौनं कृत्वा स्थिता सा य—न्मदनश्रीस्तदा हि-

या ॥ तच्च युक्तं कृतं यस्मा—न्मौनं सर्वार्थसाधनं ॥ ६५ ॥ दासी विचक्षणा पूर्वं । वृत्तांतं
निखिलं तदा ॥ जगाद पुरतो मातु—रातुरायाः कथंचन ॥ ६६ ॥ ततो विचक्षणां लात्वा ।
राज्यागान्नृपसन्निधौ ॥ ज्ञदंतो गदितो रात्रि—संबंधी विधिवत्तया ॥ ६७ ॥ राजा जगौ ममा-
प्येष । पूर्वमासीन्मनोरथः ॥ ईदृगेव यतोऽमुष्मै । दास्येऽहं निजपुत्रिकां ॥ ६८ ॥ परमौ-
त्सुक्यवशतो । मयेति प्रतिपादितं ॥ वशीकरोति यो नागं । तस्मै यच्छाम्यहं सुतां ॥ ६९ ॥
प्रतिज्ञां पूरयिष्यामि । कथमंगीकृतामिमां ॥ चिंतितादधिका येन । वाग् नृणां परिकीर्त्तिता
॥७०॥इति चिंतापरो याव—न्नृपतिस्तत्र वर्त्तते ॥ तावद्राजांगणे प्राप्तः । कुमारः सारविक्रमः
॥ ७१ ॥ चित्ते दध्यौ कुमारं स । दृष्ट्वा कोऽयं नरोत्तमः ॥ रूपवान् विनयी दक्षो । द्वासप्त-
तिकलाधरः ॥ ७२ ॥ ततो विचक्षणावोच—द्वचोयुक्तिविचक्षणा ॥ श्रीपूर्णकलशः सोऽयं । जा-
माता तव सत्ववान् ॥ ७३ ॥ तत् श्रुत्वा सचिवैरूचे । सत्यमेतद्यतो तनौ ॥ अस्य वैवाहिकं
चिह्नं । दृश्यते दर्शनोचितं ॥ ७४ ॥ तन्निशम्यावदन्नृपः । शोभनं समभूदिदं ॥ पूर्णा प्रतिज्ञा
मे जज्ञे । मनोऽभीष्टवरोऽपि च ॥७५॥ नृपोऽपि सन्मुखं गत्वा । पदानि कतिचित्तदा ॥ प्र-

णमंतं कुमारेंद्र—मालिंग्यानयदासनं ॥ ७६ ॥ प्राहेति कुशलं पृष्ट्वा । देहगेहगतं नृपः ॥ स्थिते स्वौकसि किं देव—कुले सुप्तं त्वयाऽतुले ॥ ७७ ॥ स्वकीयागमनं प्राङ्गु । यत्त्वया नोदितं हि यत् ॥ स्वभाव एष महतां । वहतां सकलाः कलाः ॥ ७८ ॥ सूरो यदा समभ्येत्य—न्येषां किं कथयेत्तदा ॥ स्वकरैः परं परेषां । तेजोनाशं करोत्यहो ॥ ७९ ॥

घनो यदा समभ्येत्य—न्येषां किं कथयेत्तदा ॥ परं परेषाममृतैः । संतापं नाशयत्यसौ ॥ ८० ॥ सिंहो यदा समभ्येत्य—न्येषां किं कथयेत्तदा ॥ विक्रमैर्वारणत्रासं । किंतु कुर्यान्महीभृतां ॥ ८१ ॥ सोमो यदा समभ्येत्य—न्येषां किं कथयेत्तदा ॥ परं तमोभरं हंति । गोभरैर्विश्वगोचरैः ॥ ८२ ॥ कुमारोऽप्यवदत्स्वामि—न्नागोऽयं वक्रगोऽपि यत् ॥ मयात्र स्तंभितः साक्षा—न्नरेंद्रो ह्यत्र कारणं ॥ ८३ ॥ यद्भेणुः सवितुः साक्षा—न्मंडलं वसुवर्जितं ॥ विदधाति च तद् ज्ञेयं । महाबलविजृंभितं ॥ ८४ ॥ राजोचे पद्मिनी यच्च । हंसांगीकरमाश्रयेत् ॥ पिता किं कारणं तत्र । प्रमाणं प्रीतिरेव तत् ॥ ८५ ॥ बंधुत्वे कारणं मुख्यं । प्रीतिरेवात्र यद्भवेत् ॥ सत्स्वन्येषु सहजेषु । चंद्रः कुमुदबांधवः ॥ ८६ ॥ परं निमित्तमात्रेण । विवाहं प्र-

करोम्यहं ॥ गुरुदत्ता सुता विद्या । शुभदा च सदा यतः ॥ ८७ ॥
इत्युदीर्य सनेपथ्यया । सगजाश्वा सरत्नका ॥ दत्ता सुता नृपेणास्मै । सर्वस्वजनसाक्षि-
कं ॥ ८८ ॥ सेनानीप्रमुखैः शीघ्रं । सुमुखैरवगत्य तत् ॥ सुवर्णवस्त्रसहिताः । स्वसुतास्त-
स्य चार्पिताः ॥ ८९ ॥ वासाय प्रवरावासो । राज्ञा सन्मानपूर्वकं ॥ वितीर्णो वस्तुपूर्णोऽस्य
। सप्तभूमिसमन्वितः ॥ ९० ॥ चतसृभिः प्रियाभिः स । सहितो रहितोऽसुखैः ॥ चतुर्बुद्धि-
निधिस्तत्र । तस्थौ सुस्थितमानसः ॥ ९१ ॥ क्वचित्सिंदूरवर्णाभं । क्वचिन्नीलमणिप्रभं ॥
क्वचित्सुवर्णवर्णं च । शुकपिच्छनिभं क्वचित् ॥ ९२ ॥ क्वचित्स्फटिकसंकाशं । गर्जद्विद्युद्भिरा-
न्वितं ॥ अभ्रं ददर्श गगने । सूरसेनो नृपोऽन्यदा ॥ ९३ ॥ युग्मं ॥ तं दृष्ट्वा विस्मयोत्फुल्ल-
लोचनो यावदीक्षते ॥ तावत्प्रचंडवातेन । तद्गतं चार्कतूलवत् ॥ ९४ ॥ ततो विमर्शयामास
। यथैतन्मेघमंडलं ॥ तथा धनतनूदारा-प्रमुखं ही विनश्वरं ॥ ९५ ॥
हरिश्चंद्रपुरीतुल्या । पुरी मे गत्वरी तथा ॥ स्वजना नाटकानीता-ऽनेकरूपस्वरूपिणः
॥ ९६ ॥ कटकं कंटकस्थान-निभं यमगृहोपमं ॥ मंदिरं मम भीतिदं । क्षितिस्तु क्षतिस-

भिन्ना ॥ ९७ ॥ कमला कमलोत्पन्ना । कमलं च तथाश्रिता ॥ कमलंकरोति सान्यं । कमलेऽपि न या स्थिरा ॥ ९८ ॥ कामारामाभिरामा या । वामा कामानुगा तु सा ॥ कामारामान्यथा वा स्यात् । स्त्रीगृहो दुस्त्यजो ह्यतः ॥ ९९ ॥ श्रीणां स्त्रीणां वरस्त्यागो । भोगो भोग इवावनौ ॥ येन स्पृष्टोऽत्र शिष्टोऽपि । महत्कष्टमवाप्नुयात् ॥ ९९ ॥ विग्रहं प्राप्य शत्रूणां । निग्रहं येऽत्र कुर्वते । सारं तैर्लब्धमन्येषां । प्रधानपुरुषक्रयः ॥ १ ॥

अधुना चेद्गुरुप्राप्ति–र्मम धर्मकरा भवेत् ॥ राज्यभारं तदा त्यक्त्वा । संयमं सम्यगाश्रये ॥ २ ॥ एवं चिंतापरे तस्मिन् ! सद्य उद्यानपालकः ॥ प्रसन्नचंद्रसूरीशा–गमनं न्यगदन्मुदा ॥ ३ ॥ दानं दत्वोचितं तस्या–ऽमानं यानं स भूपतिः ॥ आरुह्यासह्यसेनाभृत् । श्रीगुरुं वंदितुं ययौ ॥ ४ ॥ वंदित्वा विधिवत्सूरिं । निविष्टे स्वोचिते नृपे ॥ स्थाने तदा सावधाने । देशनां स ददौ गुरुः ॥ ५ ॥ द्वात्रिंशच्च सहस्राः स्युः । राजन् भरतनीवृतः ॥ पंचविंशतिरार्याः स्यु–स्तेषु सार्द्धास्त्विमे समे ॥ ६ ॥ अंगो वंगः कलिंगश्च । कोशलो जांगलः कुरुः ॥ पंचालो मगधः सिंधुः । काशी भृंगी कुणालकः ॥ ७ ॥

सुराष्ट्रो मलयश्चेदी । सूरसेनो विदेहिकः
दशार्णो लाटसंदर्भौ । वत्साद्यौ वयराटकः ॥ त्रिषष्टिपुरुषेशाणा—मत्रैव जननं भवेत् ॥
॥ ७ ॥ वर्त्तः कुशार्त्तकेर्गते—रर्द्ध ज्ञेयं बुधैरिह ॥ प्रमादं कुरुते योऽत्र । विप्रवद् दुःख-
॥ ए ॥ एतेषु दुर्लभं लब्ध्वा । मानुषं जन्म रत्नवत् ॥ विष्णुशर्मा द्विजोऽभवत् ॥ पत्नी शीलव-
भाक् स च ॥ १० ॥ तथाहि—प्रतिष्ठानपुरे पूर्वं । परं लक्ष्मीविवर्जितः ॥ प्रा-
ती तस्य । शीलशीलनलालसा ॥ ११ ॥ स चतुर्दशविद्याभृत् । यतः—लक्ष्मीर्यादोनिधेर्यादो।नादो वा-
यो यत्र भवेद्विद्या । लक्ष्मीस्तत्र न दृश्यते ॥ १२ ॥ अपरं च—गुणिनं जन-
दोचितं वचः ॥ बिभ्यंती धीवरेभ्यस्तु । जडेष्वेव निमज्जति ॥ १३ ॥ एकं दा-
मालोक्य । निजबंधनशंकया ॥ राजन् लक्ष्मीः कुरंगीव । दूरं दूरं पलायते ॥ १४ ॥ कन्या-
ग्द्वयमपरं । भूयस्यस्तनयास्तयोः ॥ यदभूवंस्तदग्धस्यो—परिस्फोटकसंभवः ॥ १५ ॥ प्रियवाक्यैस्तमेकदा ।१६।
वाहुल्यतो द्रव्या–ऽभावतश्चाश्च दुःखिता ॥ प्रिया शीलवती प्राह । नोभयोरपि मान्यता
गृही हि धनवानर्च्यो । मुनिस्तु निर्धनः पुनः ॥ विपर्यासे जनाभ्यासे । मन्यते नापरः किमु
।१७। श्रितविष्णुपदं शूरं । मित्रं सच्चक्रबांधवं ॥ मार्गगोऽपि वसुहीनं ।

॥ १८ ॥ कोशाढ्यो ना बद्धमुष्टि-रपि स्यात्पृथिवीधरः ॥ सत्स्वायुधेषु बहुषु । पूज्वी खङ्गस्य
यद्भवेत् ॥ १९ ॥ अग्रे तु येन केनापि । संतोषोऽन्नवदावयोः ॥ अधुना विधिना कन्या । दत्ता-
श्चित्तार्त्तिदाः सदा ॥ २० ॥ पाणिग्रहणाभरण-मेतासां पोषणं तथा ॥ वित्तं विना कथं नाथ
। भविष्यति विचारय ॥ २१ ॥ सोऽपि तद्वचनं श्रुत्वा । दध्यौ चेतसि शुद्धधीः ॥ प्रियया य-
द्वचः प्रोक्तं । तत्सर्वं सत्यसंयुतं ॥ २२ ॥ यतः-मातंगादपि दारिद्र्य-संभवं भुवि निश्चितं ॥
मालिन्यमधिकं येन । स्पृशति स्वजनोऽपि न ॥ २३ ॥ अतो देशांतरं गत्वा । कृत्वा च वि-
विधोद्यमं ॥ आनयामि धनं भूरि । पूरयामि मनोरथान् ॥ २४ ॥ विचिंत्येति चिरं चित्ते ।
चचालैकदिशंप्रति ॥ अनवद्यस्वविद्याभि-स्तोपयामास चोत्तमान् ॥ २५ ॥ भूपतीन् रंजया-
मास । नाससाद परं धनं ॥ ततो वृद्धद्विजं चैक-मपृच्छद् द्रविणं क्व भोः ॥ २६ ॥ सोऽव-
ग् रत्नाकरे रत्न-द्वीपे रत्नवतीश्वरी ॥ देवता सेविता दत्ते । रत्नं यत्नवतां सतां ॥ २७ ॥ तद्वा-
क्यात्स गतस्तत्र । रत्नखानीश्वरी सुरी ॥ यत्रास्ते विधिवत्तां चा-राधयामास सादरं ॥२८॥
कृतोपवस्त्रः सद्वस्त्र-श्चारुचंदनचर्चनैः ॥ अनूनैः सत्प्रसूनैश्च । वरैरिंदीवरैस्तथा ॥ २९ ॥ पू-

दारिद्र्यार्णवतो देवि । मामुत्तारय रत्नदे ॥ ३० ॥
जयित्वा च नत्वैवं । देवीं प्राह कृतांजलिः ॥ देवता प्रकटीभूय । तं जगाद विषादयुक्
युग्मं ॥ एवं सेवां प्रकुर्वाण—मेकविंशतिवासरैः ॥ अतस्त्वं मद्गृहाद्याहि । नोचेत्वक्षे-
॥ ३१ ॥ प्राक्कृतं सुकृतं ते न । विना तेन कुतो धनं ॥ सोऽवोचद्देवतांप्रति ॥ धर्माच्चेन्मे
ल्स्यामि नीरधौ ॥ ३२ ॥ युग्मं ॥ तन्निशम्य विषण्णात्मा । रोगी पथ्येन नीरुक् चेद् । विद्या वैद्यस्य का तदा
धनप्राप्ति—स्तव सेवाफलं किमु ॥ ३३ ॥ चिंतितार्थप्रदाश्चिंता—मण्याद्या अ-
॥ ज्ञानदृष्टिजुषः पुंसः । पुण्या किं वा प्रयोजनं ॥ ३४ ॥ तत् श्रुत्वा सावदत्ते
प्यचेतनाः ॥ वरं परं त्वं विबुधा—ऽपीच्छां मे नो ददासि किं ॥ ३५ ॥ आयतिं नो
ज्ञो—श्चेतनारहिताः सतां ॥ यच्छंति वांछितं नैव । चेत्कुर्वंति तथापि ते ॥ ३६ ॥ युग्मं
विजानंति । तथा स्वपरयोर्हितं ॥ विबुधास्तद्विदंत्युच्चै—स्तेन ते वितरामि न ॥ ३७ ॥
॥ कीदृगुत्तरकालो मे । सोऽगदद्वद सांप्रतं ॥ सावदद्यच्च यच्छामि । तत्ते स्थास्यति नांतिके ॥
॥ ३८ ॥ सोऽजल्पत्कात्र ते चिंता । त्वं देहि मम कल्पितं ॥ पश्चात्सर्वं ज्वलिष्येऽहं । तव
दोषोऽत्र नो सुरि ॥ ३९ ॥ ततः सुरमणिर्देव्या । दत्तस्तस्मै द्विजन्मने ॥ सोऽपि तुष्टमना

लात्वा । पारणं कृतवान् कृती ॥ ४० ॥

यानपात्रमथारुह्य । सोऽचलज्जलवर्त्मना ॥ शीघ्रं स्वनगरे गंतु–मनाश्चारुधनान्वितः ॥ ॥ ४१ ॥ अन्यदा निशि राकायां । प्रेक्ष्य चंद्रमसं दिवि ॥ अचिंतयन्मणिर्दीप्रो । ममायं वा निशाकरः ॥ ४२ ॥ अतो विलोक्य संदेहं । निराकुर्वे स्वचेतसः ॥ सुप्रापेऽर्थे जनः कोऽत्र । तं दधाति निजे हृदि ॥ ४३ ॥ एवं ध्यात्वांबुधौ यत्र । चंद्रोऽस्ति प्रतिबिंबितः ॥ तत्राऽयत्नं स-रत्नं स । जडधीः कृतवान् करं ॥ ४४ ॥ चंद्रबिंबे कलंकं स । निष्कलंकं च तं मणिं ॥ दृ-ष्ट्वा हृष्टः परं किंचि–न्न विवेद तदा हृदा ॥ ४५ ॥ प्रमादतः कराच्च्युत्वा । पपात जलधौ म-णिः ॥ अचेतनस्ततः सोऽपि । पोतमध्येऽपतत्तदा ॥ ४६ । किं ते जातं वदैतन्मे । पोतेशस्त-मब्रावत ॥ सोऽप्यब्राणीत्स्ववृत्तांतं । कृत्तांतःकरणं भृशं ॥ ४७ ॥ सांयात्रिको निशम्यैत–ज्ज-गौ परिकरंप्रति ॥ समुद्राह्वानवस्यौच्चैः । संतापश्चित्रकारकः ॥ ४८ ॥ परमार्थं कथायास्त्वं । सावधानमनाः शृणु ॥ यो विप्रः सोऽत्र संसारि–जीवो बुद्धिः प्रियास्य तु ॥ ४९ ॥ सार्द्धद्वि-तीयद्वीपोऽयं । रत्नद्वीप इह स्मृतः ॥ नुपदेशप्रदो विप्रः । स पुनर्गुरुरुच्यते ॥ ५० । या दे-

वी सा भुक्ता कर्म-प्रकृतिः किल कीर्त्तिता ॥ चिंतामणिर्मर्त्यभवः। संसारो जलधिः पुनः ॥५१॥
प्रमादेन यथा तस्य। करात्तोऽपि मणिर्गतः ॥ एवं मर्त्यभवो जंतो-स्तस्मात्स्याद्दुर्लभः पुनः
॥ ५२ ॥ चतुर्दशपूर्वधराः। प्रमादस्य वशं गताः ॥ निगोदेऽनंतकालं तु। तिष्ठंतीह नराधिप
॥ ५३ ॥ एवं त्वनंताः सततं। मनःपर्यायसंयुताः सूक्ष्मनिगोदे प्राप्यंते। तदा शेषेषु का स्थि-
तिः ॥ ५४ ॥ प्रमादं परित्यज्यातः। कुरु धर्मं जिनोदितं ॥ बृहत्वे जंतवो दीक्षा-योग्याः
स्युर्नो यतः स्मृतं ॥ ५५ ॥ बालो नपुंसको वृद्धः। क्लीबो जडोऽथ जुंगितः ॥ रोगी राजाप-
कारी च। चौरोंधः कर्मकृत्तथा ॥ ५६ ॥ उन्मत्तो मूर्खदुष्टौ वा-बद्धो भृतकः पुनः ॥ ऋण-
भ्राजी शैष्यनिस्फेटी। ते ह्यष्टादश नो नराः ॥ ५७ ॥ दीक्षाऽयोग्याश्च विंशति-वशा बाल-
सुतान्विता ॥ गुर्विणी चाष्टादशप्राग्-नरभेदसमन्विता ॥ ५८ ॥ कृता तृतीयवेदस्य। दी-
क्षा भवति कर्हिचित् ॥ स्वभावेन पुनस्तस्य। कारणेऽपि न सा भवेत् ॥ ५९ ॥ प्रपद्य सं-
यमं राजन्। मोक्षमार्गं प्रसाधय ॥ तिर्यंचोऽपि देवलोकं। व्रजंति नियमान्विताः ॥ ६० ॥
मर्त्यतिर्यग्गती स्यातां। सुरनारकयोर्यतः ॥ मोक्षवर्जाश्चतस्रः स्यु-स्तिरश्चां पंच भूस्पृशां॥

॥ ६१ ॥ मोक्षजनेन मनुजा । जायंते सर्वसत्तमाः ॥ तं विना तु पशुभ्योऽपि । हीना दीनजने जनाः ॥ ६२ ॥ ज्ञानं दर्शनचारित्रे । मध्यमे वयसि त्वकं ॥ तदर्जय ततो येन । सामग्री दुर्लभा पुनः ॥ ६३ ॥

इति श्रुत्वा गृहे गत्वा । दत्वा राज्यं नृपो बलात् ॥ श्रीपूर्णकलशायोच्चै–र्गुरुपार्श्वे व्रतं ललौ ॥ ६४ ॥ तस्मिन्नवसरे पूर्ण–कलशो गुरुमब्रवीत् ॥ चेद्योग्योऽस्मि तदा मे हि । देहि गेहिव्रतान्यलं ॥६५॥ गुरुः प्रोवाच सिद्धांते । श्राद्धानामेकविंशतिः ॥ गुणाः संति तु तैर्युक्तो । धर्मयोग्यो भवेत्पुमान् ॥ ६६ ॥ अक्षुद्रो रूपवान् सौम्यो । विनयी पापभीरुकः ॥ अक्रूरः शठतामुक्तो । मध्यस्थो गुणरागभृत् ॥ ६७ ॥ दीर्घदर्शी लब्धलक्षः । कृतज्ञोऽन्यहितादरः ॥ सदाक्षिण्यो विशेषज्ञः । सदयः सत्कथाकरः ॥ ६८ ॥ पक्षयुक्तो लज्जनश्च । वृद्धभक्तो जनप्रियः ॥ एषु सामान्यतो योग्यः । सप्ताष्टगुणवान् भवेत् ॥ ६९ ॥ त्वं चानेकगुणावासः । कथं नार्हसि योग्यतां ॥ इत्युक्त्वाथ श्राद्धधर्मं । ददौ तस्मै गुरुस्तदा ॥ ७० ॥ सूरसेनमुनीशोऽसौ । विहारं गुरुणा समं ॥ चकार राज्यं श्रीपूर्ण–कलशश्च गुणार्जितं ॥ ७१ ॥ मदनश्री-

प्रियाकुक्षेः । क्रमेण कुमरोऽजनि ॥ मुख्यो मदनवर्माख्यो । दधानो भाग्यसंपदं ॥ ७० ॥ एकदा कुम्भिनङ्गा—न्नरास्तत्र समागताः ॥ श्रीपूर्णकलशराजं । नत्वा विज्ञापनां व्यधुः ॥७१॥ देव देवपुरस्वामी । नरसिंहो नराधिपः ॥ हठेन मंत्रिणं चैवं । ज्ञानगर्भमवीवदत् ॥ ७२ ॥ कियंतं च त्वया कालं । पुत्रवेषेण कन्यका ॥ छलेन कारिता राज्यं । परं ज्ञातं मया न तत् ॥ ७३ ॥ अधुना तु कुमारेण । कुमारेणात्र केनचित् ॥ सुतमुत्पाद्य राज्यं त्वं । यत्कारयसि तत्किमु ॥ ७५ ॥ अतःपरं राज्यभारं । रक्षितुं चेत्समीहसे ॥ मम दंडं तदा देहि । वैहि त्वं शरणं रणं ॥ ७५ ॥

तत् श्रुत्वा सचिवः प्राह । दमिनारिं कथं त्वया ॥ दंडो न मार्गितः पूर्वं । सांप्रतं कथमिच्छसि ॥ ७९ ॥ विलोक्य बालराज्यं त्वं । यच्च दंडं किलेच्छसि ॥ तस्मान्नरसारमेयो । नरसिंहः पुनर्नहि ॥ ८० ॥ अरे दूत निजस्वामी । त्वया वाच्यः स ईदृशं ॥ स्वस्थाने कथयिष्येति—प्रहितोऽसौ नियोगिना ॥ ८१ ॥ मंत्रिणैव वयं चात्र । प्रेषिता हितहेतवे ॥ अतःपरं परं देवः । प्रमाणं राज्यरक्षणे ॥ ८२ ॥ कुमारेण ततः प्रोचे । यूयं व्रजत सत्वरं ॥ निवेद्यं मं-

त्रिणश्चैवं । नयं कार्यं न कस्यचित् ॥ ८३ ॥ अहं शीघ्रं समेष्यामि । शत्रोः शिक्षां प्रदाय वै ॥ इति श्रुत्वा निर्ज्जयास्ते । प्रतस्थुः स्वपुरं प्रति ॥ ८४ ॥ तत्रत्यं राज्यसौस्थ्यं स । कृत्वा सस्मार गुह्यकं ॥ सर्वानुभूतिनामानं । सर्वभूतिप्रदायकं ॥ ८५ ॥ ततः शीघ्रं समेत्यासौ । तं चारोप्य निजे गजे ॥ तत्र निन्ये नरसिंहो । यत्रास्ते कटकान्वितः ॥ ८६ ॥ आकर्ण्य दूतवाक्यं स । नरसिंहः पुरा पुरात् ॥ निःसृत्य कुंडिनपुरं । प्रति प्रस्थानगस्तदा ॥ ८७ ॥ आगच्छंतं नभाकाशे । वीक्ष्य हस्तिगतं द्रुतं ॥ नरसिंहो मनस्येवं । भावयामास चित्रयुक् ॥ ॥ ८८ ॥ एष ऐरावणारूढ । इंद्रोऽभ्यैति स्वयं किमु ॥ उत विद्याधरः कोऽपि । नरशक्तिर्न चेदृशी ॥ ८९ ॥ एवं चिंतयतस्तस्य । कुमारोऽगात्तदंतिके ॥ तं वीक्ष्य नरसिंहोऽपि । कृत्यमूढोऽभवत्तदा ॥ ९० ॥ कुमारस्तमिति प्राह । दंभं यद्दोर्बले नरे ॥ मार्गयसि ज्ञानगर्भं । तन्मे दर्शय सांप्रतं ॥ ९१ ॥ अहं श्रीपूर्णकलशः । कुमारोऽस्मि स्वसेवके ॥ सदा हि पूर्णकलशो । विपक्षे तु कुमारकः ॥ ९२ ॥ नरसिंहो निशम्यैतत् । स्वभटानुत्कटान् जगौ ॥ अरे एनं निगृह्णीत । निगृह्णीत नराधमं ॥ ९३ ॥

तत् श्रुत्वा शस्त्रसंघातं । करे कृत्वोद्भटा भटाः ॥ तत्स्थुः समरायोच्चै–र्हतहंतेतिभा-
षिणः ॥ ९४ ॥ यक्षेण स्तंभिताश्चित्रलिखिता इव ते तदा ॥ अभूवन् भाग्यहीनानां । कु-
तो भवति वांछितं ॥ ९५ ॥ तदानीं नरसिंहोऽपि । तद्वज्जज्ञे तदा यथा ॥ स्तंभं भित्वा रि-
पुध्वंसं । कर्त्तुं नैव शशाक सः ॥ ९६ ॥ कुमारस्तमथाजल्प–त्त्वं किं चिंतां करोष्यथ ॥
आवां युद्धं करिष्यावः । किमेभिः किंकरैः परैः ॥ ९७ ॥ अनेनाकारितो युद्धं । न करोमि
तदा मम ॥ नरसिंहाभिधा मिथ्या–ऽतो युद्धं विदधाम्यहं ॥ ९८ ॥ एवं विचिंत्य चित्ते स ।
संग्रामं च गुणग्रामं । चिरं चक्रे प्रणष्टधीः ॥ ९७ ॥ युग्मं ॥ खेदयित्वा
कुमारेणासमंजसं ॥ यक्षेण कुसुमवृष्टि–श्चक्रे सुजलसंयुता ॥ ९८ ॥
कुमारेण । स बद्धः शिशुवत्तदा ॥ नरसिंहोऽपि तस्यैव । शरणं श्रितवांस्त-
त्तंभिताश्च सुभटाः । कुमारशरणं गताः ॥ दिवा घूक इवारण्ये । तद् ट-
दा ॥ ९९ ॥ ततोऽसौ बंधनान्मुक्तो–ऽप्यधोवक्त्रोऽभवत्तदा ॥ वक्त्रमात्रः सैं-
ष्ट्वा कुमरो जगौ ॥ १००० ॥ नरसिंह मा विषादं । दध्यास्त्वं रणभंगजं ॥
हिकेयो । जनैः किं नात्र पूज्यते ॥ १ ॥ राज्यं कुरु प्रजां पाहि । याहि स्वास्पदमादरात् ॥

इत्युक्त्वा सत्कृतः सोऽवक् । लज्जा मे नैव त्नंगजा ॥ २ ॥ आकाशगामिनीं शक्तिं । तथा स्तंभनसंभवां ॥ दृष्ट्वापि यदहं नैव । बुद्धस्तेनात्र मे त्रपा ॥ ३ ॥ निःशेषविषयावासां । सकुणामंगसंगतां ॥ मम राज्यश्रियं पुत्रीं । त्वं चांगीकुरु सत्वरं ॥ ४ ॥ तत् श्रुत्वा कुमरोऽजल्पद् । गृहीष्ये तनयां तव ॥ यतः सा परगेहस्य । मंडिनी कथ्यते जनैः ॥ ५ ॥ परं राज्यश्रियं स्वीयां । त्नज त्वं स्वभुजार्जितां ॥ स जगौ पृथ्वी खड्गस्य । त्वदीयैषा ततोऽधुना ॥६॥ इत्युदीर्य निजां पुत्रीं । राज्यलक्ष्मीं तथा वरां ॥ दत्वास्मै नरसिंहः स्राक् । सिंहवत्स वनं ययौ ॥ ७ ॥ तत्र स्थितः कुमारोऽसौ । रागश्रीप्रिययान्वितः ॥ राज्यं चक्रे प्रजासौख्यं । दौःस्थ्यत्नंगं च देशगं ॥ ८ ॥ द्विधापि विषयात्नोगं । भुंजानस्य सुतोऽजनि ॥ रागश्रीकुक्षिसंत्नूतो । देवसिंहात्निधः सुधीः ॥ ९ ॥ प्रतिष्टानपुरात्तात–प्रहिता एकदा नराः ॥ आगत्य कुमरस्यैवं विज्ञप्तिं विदधुस्तमां ॥ १० ॥ अनात्नाष्य गते स्थाना–द्देवे सेवकवत्सले ॥ राजा श्रीमलयकेतु–र्दुःखसंत्नारत्नागत्नूत् ॥ ११ ॥ विलासवत्या देव्यास्तु । कथ्यते किं यतः सुते ॥ पितुः सहस्रगुणेन । सवित्री स्नहतोऽधिका ॥ १२ ॥ सांप्रतं रोगयुक्तोऽसौ । राजा

राज्यधरस्त्वकं ॥ अतो वयं प्रेषिताः स्म—स्त्वदानयनहेतवे ॥ १३ ॥ तन्निशम्य विषसात्मा
। यक्षं सस्मार सत्वरं ॥ सोऽपि सद्यः समागत्य । कुमारमनयत्पुरं ॥ १४ ॥ तत्र प्रवेशो ज-
ज्ञेऽस्य । महोत्सवपुरस्सरं ॥ स्वराज्ये स्थापितः पित्रा । सुमुहूर्त्ते तदा स च ॥ १५ ॥ स्व-
यं पंचनमस्कार—स्मृतिनिर्द्धूतकल्मषः ॥ सुरलोकं जगामासौ । सुखेन विगतस्पृहः ॥ १६ ॥
एवं चतुर्णां राज्याना—मधिपोऽनूक्रमेण सः ॥ साधकं सेनाधिपतिं । प्रेष्यान्यान्यप्य-
साधयत् ॥ १७ ॥ स्वस्वस्थानात्समानीताः । पूर्वपत्न्यः सुतान्विताः ॥ अन्या अपि घनाः
कन्याः । परिणीता गुणान्विताः ॥ १८ ॥ अन्यासां तस्य राज्ञीनां । तनयाः सनयाः क्रमात्
अनूवन् भुवनाजय्याः । सत्वसाधितनूमिपाः ॥ १९ ॥ सर्वत्र श्रीजिनधर्मं । स्थापयामास
नूतले ॥ न्यायं प्रवर्त्तयामास । दयादानं विशेषतः ॥ २० ॥ त्रिवर्गमाराधयतः । प्रजां पाल-
यतः सतः ॥ बहूनि वर्षलक्षाणि । व्यतीतान्यस्य सौख्यतः ॥ २१ ॥ वनक्रीडानिवृत्तेना—न्य-
दा कोऽपि मुनीश्वरः ॥ भिक्षार्थं पर्यटन् राज्ञा । मासक्षपणपारणे ॥ २२ ॥ तपःशोषितस-
र्वांगो । जीर्णवस्त्रसमन्वितः ॥ ईर्यासमितिसंयुक्तो । दृष्टो दृष्टिप्रमोदकृत् ॥ २३ ॥ युग्मं ॥

उत्तीर्य तुरगात्तूर्णं । जक्त्या स प्रणतो मुनिः ॥ यतिना च धर्मलाजा–शीर्दत्तास्य स्वजावतः ॥२४॥ सम्यग् निरूप्य तस्याथ । स्वरूपं च विशेषतः ॥ तपोधनस्य जूजानि–श्चेतसीदं व्यचिंतयत् ॥ २५ ॥ मया पुरेदृशं रूपं । दृष्टमस्ति प्रशस्तिदं ॥ कुत्रचित्पुण्यजननं । घनानंदितसज्जनं ॥ २६ ॥ एवं विमृशता तेन । ज्ञातं जातिस्मृतेरिति ॥ ममैव श्रमणरूप–मीदृशं प्राग्जवेऽजवत् ॥ २७ ॥ ततः स्वर्गसुखं मेऽजू–दिह राज्यं तथा पुनः ॥ अतस्तपः करिष्येऽहं । दृष्टपुष्टकलं फलं ॥ २८ ॥ एवं विचिंत्य जणितो । मुनिस्तेन महात्मना ॥ जगवन् गुरवः कुत्र । जवदीया दयामयाः ॥ २९ ॥ यतिनोचे सुमसारो–द्याने संति समाहिताः ॥ प्रजासाख्या ममाचार्या । वर्यशिष्यसमन्विताः ॥ ३० ॥

ततो राज्ञा पूर्णकुंज–नामा पुत्रो निवेशितः ॥ निजराज्ये सुखप्राज्ये । गृहीत्वा सर्वसम्मतं ॥ ३१ ॥ अष्टाह्निकामहश्चक्रे । सर्वेषु जिनसद्मसु ॥ तथा श्रीसंघवात्सल्यं । शासनस्य प्रजावनां ॥ ३२ ॥ अमारिपटहोद्घोषो–ऽकारि तेन समंततः ॥ दीनादीनां पुनर्दानं । मानं स्वजनसंचये ॥ ३३ ॥ महाविजूत्या गत्वा श्री–प्रजासाचार्यसन्निधौ ॥ दीक्षा गृहीता शिक्षा च

। मुक्तिसौख्यप्रदा मुदा ॥ ३४ ॥ पूर्वं तपःफलं ज्ञात्वा । मत्वा कर्मक्षयं ततः ॥ तत्रोद्युक्तो
विशेषात्स । राजर्षिः समभूत्तदा ॥ ३५ ॥ त्रिभिस्त्रिभिरुपवासै–र्निरंतरनिषेवितैः ॥ ज्ञानदर्श-
नचारित्रा–राधनं स मुनिर्व्यधात् ॥ ३६ ॥ एकाशनं नैर्विकृत्या । चामाम्लान शनैः क्रमात् ॥
स कषायजयं नामा–ऽकरोत् षोडशभिर्दिनैः ॥ ३७ ॥
परमार्द्धैकाशनकं । नैर्विकृत्यैः प्रतींद्रियं ॥ आचामाम्लोपवस्त्राभ्यां । तथेंद्रियजयं तपः
॥ ३८ ॥ प्रतियोगं नैर्विकृत्या–चाम्लोपवाससेवनैः ॥ योगशुद्धितपोऽकार्षी–द्योगसिद्धिविधि-
त्सया ॥ ३९ ॥ औपवस्त्रमेकाशन–मेकसिक्थकमुच्चकैः ॥ एकस्थानमेकदत्ति–नैर्विकृत्यं पुन-
र्मुनिः ॥ ४० ॥ आचाम्लमष्टकवलं । चक्रे कर्मैककंप्रति ॥ अष्टकर्मसूदनाख्य–तपःकर्मकृते
कृती ॥ ४१ ॥ युग्मं ॥ शुक्लपक्षेऽष्टभिरौप–वस्त्रैराचाम्लपारणैः ॥ दिनैः षोडशभिस्तेपे । त-
पः सर्वांगसुंदरं ॥४२॥ इत्थमेव कृष्णपक्षे । ग्लानशुश्रूषणापरः ॥ नीरुक्तपस्तपोलीनः । सो-
ऽकार्षीत्कर्मरुक्छिदे ॥ ४३ ॥ मुदा द्वात्रिंशदाचाम्लै–र्मुनिरेकांतरैः परं ॥ विदधे तप उत्सा-
हा–दसौ पंचमङ्गलं ॥ ४४ ॥

एकां प्रतिपदं द्वे च । द्वितीये त्रिस्तृतीयका ॥ एवं यावत्पंचदश–राकास्त्वन्या द्विपक्ष-
गाः ॥ ४५ ॥ उपवासैस्तिथीः कुर्वन् । सुखसंपत्तिनाम सः ॥ वृद्धपक्षोपवासाख्यं । लोको-
क्त्या तु तपोऽतनोत् ॥ ४६ ॥ युग्मं ॥ नवपद्मानि सार्वाणां । प्रतिपद्मं प्रज्ञावतः ॥ अष्टानि-
शैपवस्त्रैः स । तपः पद्मोत्तरं व्यधात् ॥ ४७ ॥ पंचसप्तत्यौपवस्त्रैः । पंचविंशतिपारणैः ॥ भ-
द्रनामतपोऽकार्षीत् । भाविभद्रः स संयमी ॥ ४८ ॥ उपवासानां शतेन । षण्णवत्यधिकेन
सः ॥ महाभद्रमथैकोन–पंचाशत्पारणैस्तपः ॥ ४९ ॥ पंचसप्तत्यधिकेनो–पवासानां शतेन
सः ॥ पारणैः पंचविंशत्या । चक्रे भद्रोत्तरं तपः ॥ ५० ॥ त्रिशतेनोपवासानां । द्विनवत्य-
धिकेन सः ॥ सर्वतो भद्रमेकोन–पंचाशत्पारणैर्व्यधात् ॥ ५१ ॥ सप्तत्रिंशदुपवासै–र्मुनिरेकां-
तरैरसौ ॥ आदौ चांतेष्टमाद्धर्म–चक्रवालं तपोऽकरोत् ॥ ५२ ॥ षण्णवत्या ह्युपवासै–श्चतुःष-
ष्ट्या च पारणैः ॥ असौ वर्गतपोऽकार्षी–दपवर्गसुखेच्छया ॥ ५३ ॥ आदौ प्रांतेऽष्टमं षष्टि–
मुपवासान् विधाय च ॥ अंतरेकांतरान् कर्म–चतुर्थमयमातनोत् ॥ ५४ ॥ चतुःशतदिनैः स-
प्ता–धिकैः स तपसस्तथा ॥ गुणरत्नसंवत्सरं । त्रिसप्तत्या च पारणैः ॥ ५५ ॥ तपो दिनैः स

पंचाश—युतैः शतमितैस्तथा ॥ लघुसिंहनिक्रीडितं । त्रयस्त्रिंशत्सुपारणैः ॥ ५६ ॥ युतैः सप्त-
नवत्या स । चतुःशततपोदिनैः ॥ महासिंहनिक्रीडित—मेकषष्ट्या च पारणैः ॥ ५७ ॥ स
आचाम्लवर्द्धमानै—कावलीकतकावलीः ॥ न्यूनोदरताप्रतर—प्रमुखानि तपांसि च ॥ ५८ ॥
सर्वार्थसिद्धिं चाराध्य । जगाम चायुषः क्षये ॥ त्रयस्त्रिंशत्सागराणि । तत्र लेभेमहासुखं ॥
॥ ५९ ॥ युग्मं ॥ महाविदेहे जन्माप्य । सुकुले विमलेऽतुले ॥ दीक्षां लात्वा सुतपोभिः ।
कृत्वा कर्मक्षयं स्वयं ॥ ६० ॥

सिद्धिं यास्यति शुद्धात्मा । सिद्धानंतचतुष्टयः ॥ एकविंशतिसिद्धगुणै—र्युक्तो मुक्तोऽत्र क-
र्मभिः ॥ ६१ ॥ एवं ह्यनेकतपसा । जंतवो यतनापराः ॥ सर्वार्थसिद्धिं संप्राप्य । सिद्धिं यां-
ति नराधिप ॥ ६२ ॥ कामं निर्विषयं तथापि विबुधा विश्वप्रभुं यं जगुः । प्राप्तं निर्गुणताम-
पीह सगुणं पुण्यं ह्यपुण्यं तथा ॥ चित्रं कोऽपि तपस्विनं पुनरिमं न प्राह शश्वत्तपो—युक्तं
श्रीविमलं प्रणौमि तमहं ज्ञानादिरत्नाकरं ॥ ६३ ॥

॥ इति श्रीतपोगणनायकभट्टारकश्रीरत्नसिंहसूरिशिष्यभट्टारकश्रीज्ञानसागरसूरि-

विरचिते श्रीविमलनाथचरित्रे महाकाव्ये शीलतपोधिकारवर्णनो
नाम द्वितीयः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रं० ( १०८० )

॥ अथ तृतीयः सर्गः प्रारभ्यते ॥

शाखा श्रीधर्मकल्पद्रो–स्तृतीया कथिता तव ॥ तुर्या शाला विशालास्य । कथ्यमाना निशम्यतां ॥ १ ॥ दानादिना केवलेन । केवलं न भवेन्नृणां ॥ एकयाप्यनया तदियं । शिवशक्तिर्गरीयसी ॥ २ ॥ बहुष्वन्नेषु पुष्टिः स्या–न्नीरोगस्य यथारुचेः ॥ तथात्र मात्राहीनस्य । सा धर्मेषु पुनः स्मृता ॥ ३ ॥ भावराशिफलं खेटा । अन्यस्थानस्थिता अपि ॥ यच्छंते न तु तत्रस्था । अपि वक्रातिचारगाः ॥ ४ ॥ रसयुक्ता रसवती । लवणेन यथा भवेत् ॥ भोजनं भो जना यद्वद् । घृतेन सबलं स्मृतं ॥ ५ ॥ पटवासेनैव पटे । पुण्यरंगोऽत्र दृश्यते ॥ चूर्णं चापि भावनया । भावितं सुमुखप्रियं ॥ ६ ॥ सकलोऽपि तथा धर्मो–ऽनया सर्वगुणान्वितः ॥ अतो भावयुतं भव्या । धर्मं कुरुत सर्वदा ॥ ७ ॥ त्रिभिर्विशेषकं ॥

दानादिधर्मसहिता । भावना भवतीह यत् ॥ मिष्टं वैद्योपदिष्टं वा । तत्सुवर्णस्य सौर-

भं ॥ ८ ॥ ज्ञानदानं गुणाधानं । किं तु सम्यग्विचारणां ॥ विना यद्दीयतेऽन्यस्मै । तन्नैव शुभदं मतं ॥ ९ ॥ दयादानं सुखाधानं । परं तद्दुःकरं कलौ ॥ यत आरंभनिरता । जंतवो ह्यखिला किल ॥ १० ॥ वित्तव्ययेन पुनर्य—द्धर्मोपष्टंभमीरितं ॥ कालपात्रादिसंप्राप्ति—स्तत्रापि खलु दुर्लभा ॥ ११ ॥ शीलं मुक्तिरमालीलं । पालनं त्वस्य दुष्करं ॥ नव यद्ब्रह्मचर्यस्य । गुप्तयोऽत्र प्रकीर्त्तिताः ॥ १२ ॥ तपः संसारसंतापा—तपच्छायाद्रुमोपमं ॥ जिह्वेंद्रियजयः किं तु । सुकरः सम्मतो न तु ॥ १३ ॥ ततो भव्याः सुखसेव्यां । भव्यां दधत भावनां ॥ यथा चण्डोदरस्येव । सिद्धिर्भवति वोऽचिरात् ॥ १४ ॥ तथाहि—

लंकेव सुवर्णमयी । सदा पुण्यजनाश्रिता ॥ मंदोदर्यंगनावासा । भाति हस्तिपुरी पुरी ॥ १५ ॥ क्षमाप्रजापतिश्चित्रा—नंदी कुशलवर्द्धितः ॥ तत्र रामोपमो रामो । राजाभूद्विश्ववि-श्रुतः ॥ १६ ॥ अजीवान् जीवसंयुक्तान् । सजीवान् जीववर्जितान् ॥ परान् पराजौ कुरुते । यदसौ तदिहाद्भुतं ॥ १७ ॥ अप्सरस्सु कृतक्रीडा । घनवाहनसंयुता ॥ जयवादिनीव जययुक् । दयितास्य जयावली ॥ १८ ॥ एकदाल्पपरीवारा । वने मदनमर्चितुं ॥ जगाम कामसं-

युक्ता । वियुक्ता दयितेन सा ॥ १९ ॥

कुसुमेषुं कुसुमैः सा । पूजयित्वाऽचलद्यात् ॥ कामरूपनिजस्वामि-दर्शनोत्सुकमानसा ॥ २० ॥ संचरंती पुरो मार्गे । चरणायुधवर्णिनी ॥ घनापत्ययुता दृष्टि-पथं तस्यास्तदापतत् ॥ २१ ॥ तां दृष्ट्वा मानसे मान-रहिता सुदितार्जवा ॥ इति दध्यावहो धन्या । वन्या ह्यज्ञापि कुर्कुटी ॥ २२ ॥

या धृतासून शिशून् स्वीयान् । स्निग्धया स्वदृशा मुदा ॥ सदा पश्यति संसार-द्रुमसाफल्यकारिणः ॥ २३ ॥ निजाज्यां चरणाग्राज्यां । विलिख्य भुवमादरात् ॥ भोजयेच्च कणादीन् या । तथा तान् पृष्टपार्श्वगान् ॥ २४ ॥ अहं पुनर्मंदभाग्या । सौभाग्यालीयुतापि हि ॥ नयनानंदनं येन । नंदनं न विलोकये ॥ २५ ॥

कुलीनापि फलहीना । जाता जातिरिवास्म्यतः ॥ सा तु पुष्पवती राज्ञो । भोगदा न तदाप्यहं ॥ २६ ॥ पंकजा पद्मिनीवाहं । राजहंसनिषेविता ॥ अतो राजप्रसादेऽपि । न विकाशिमुखा सुखात् ॥ २७ ॥ राजप्रसादे श्यामामि । विमला भवति क्षितौ ॥ तमःप्राप्तौ परं

सापि । कदाचित्कृष्णतान्विता ॥ २८ ॥ एवं विचिंत्य विछाया । गयामाम्रतरोर्गुरोः ॥ निपत्याथ विखिन्नाशा । प्राप्य पापवशाद्दशा ॥ २९ ॥

सा रुद्धोच्छ्वासनिःश्वासा । ध्यायंती किंचिदात्मनः ॥ स्वरूपं तस्थौ विरूपं । वनवासे वियोगिनी ॥ ३० ॥ तद्वियोगातुरो राजा । विसृज्य सकलां सभां ॥ ययावंतःपुरं सद्यो । हृद्यो रागसमन्वितः ॥ ३१ ॥ जीवमुक्तं पुरं यद्वत् । पुरं वा स्वजनोज्झितं ॥ जयावल्या विरहितं । मेने सोंतःपुरं तथा ॥ ३२ ॥ सोविदज्ञातवृत्तांत—स्तद्विलंबाऽसहो नृपः ॥ सकामः कामनवनं । प्रत्यचालीत्प्रियाप्तये ॥ ३३ ॥ आम्रवृक्षतलासीनां । दीनां वीक्ष्य प्रियां पथि ॥ राजापि तादृशो जज्ञे । विज्ञैतरमनास्ततः ॥ ३४ ॥

आगतोऽपि नृपोऽभ्यर्णे । तया नाज्ञायि विज्ञया ॥ यत्कौतुकं न तदहो । यतः सा ध्यानगा तदा ॥ ३५ ॥ क्रमान्नृत्स्थिरतां प्राप्य । क्षणेनाह प्रियांप्रति ॥ अन्नङ्ग न्नङ्गे किं तेऽद्य । दृश्यतेऽन्यादृशी यतः ॥ ३६ ॥ तत् श्रुत्वा लब्धचैतन्या । यावदूर्ध्वं विलोकते ॥ तावन्नृपं सकंपं सा । दृष्ट्वा दध्याविदं हृदि ॥ ३७ ॥ स्वामिन्यप्यागते स्फीते । यन्मया नोचितं

कृतं ॥ एकतो मालपातोऽन्य-स्त्रकुटेन शिरोहतिः ॥ ३८ ॥ त्रपावशात्तया तस्य । विदितस्यापि नादरः ॥ विहितो हितकर्त्तव्य-निरतस्य नरेशितुः ॥ ३९ ॥ ततो विशेषतो राज्ञा । गदिता मृदुताजुषा ॥ कुशलेऽकुशलं तेंगे । पितृपक्षे त्वमंगलं ॥ ४० ॥ समस्ति स्वस्तिमन्नंडे । नापराद्धं तथा मया ॥ सपत्नी ते विपत्कर्त्री । विद्यते न मनोहरे ॥ ४१ ॥ युग्मं

तथापि ते महद्दुःखं । प्रत्यक्षं प्रेक्ष्यतेऽत्र यत् ॥ हेतुं तस्य न पश्यामि । वद मानिन्यतस्त्वकं ॥ ४२ ॥ तन्निशम्याऽरुदद्गाढं । सखीभिः परितो वृता ॥ नृपसंतापशांत्यर्थं । कर्त्तुं धारागृहं किमु ॥ ४३ ॥ ततो राजा स्वहस्ताभ्यां । प्रमृज्येक्षणयोर्द्वयं ॥ पुनः पप्रच्छ स्वच्छात्मा । तद्दुःखेन च दुःखितः ॥ ४४ ॥

सावोचद्धीरतां धृत्वा । कृत्वा चाकारगोपनं ॥ स्वामिन्नहं यन्निःपुत्रा । गुरु दुःखं तदेव मे ॥ ४५ ॥ राजा जगाद तत् श्रुत्वा । देव्येतद्दुःखमुल्बणं ॥ ममापि हृदये शल्य-मिव खाटूकुरुते सदा ॥ ४६ ॥ परं कस्येह जीवस्ये-हग्भाग्यं भुवि वर्त्तते ॥ सुतीर्थवेद्यस्ते देवि । द्विधापि सदयः प्रियः ॥ ४७ ॥ तथापि विषवादं मा । विधेहि विविधैर्यतः ॥ तपोभिर्दुस्त-

पैभेडे । भविष्यति सुतस्तव ॥ ४८ ॥ अंतरायकारकाणि । कर्माणि किल देहिनां ॥ तपसा
निकाचितानि । क्षयं यांतीतराणि किं ॥ ४९ ॥ तदाम्रशिखरस्थायी । कीरो गिरमुपाददे ॥
भविष्यति सुतोत्पत्ति–र्धीरा भव नृपप्रिये ॥ ५० ॥ इति कीरवचः श्रुत्वा । सद्रूपश्रुतिवद्धरं ॥
प्रमोदमेदुरस्वांतौ । जातौ जातौत्सुकौ तकौ ॥ ५१ ॥ शुकं विलोकयंतौ तौ । गगने व्योम-
चारिणं ॥ चारणश्रमणं शीघ्रं । विनयंधरनामकं ॥ ५२ ॥ अदाक्षींषातां क्षांत्यादि–दशधाध-
र्मधारकं ॥ तारकं भव्यलोकानां । स्मारकं विस्मृतश्रुतेः ॥ ५३ ॥ युग्मं ॥ क्षणात्क्षमां दधत्
साधुः । क्षमायां पदमाददे ॥ क्षमापतिर्ववंदे तं । कृत्वा तिस्रः प्रदक्षिणाः ॥ ५४ ॥ धर्मला-
भाशिषं सोऽपि । ददौ दुर्गतिभेदिकां ॥ ततः करौ योजयित्वा । राजा प्रोवाच तंप्रति ॥५५॥
मद्युक्ता मही यादो–मंडलं क्षितिकुंडलं ॥ पुरीवांतःपुरी जज्ञे । सुशीला धर्मभूपते ॥५६॥
जनिर्मे भाग्यजननी । वर्षं हर्षप्रदं त्विदं ॥ मासो रम्यरमावासो । दुःखनाशोऽद्यतोऽद्भुतः ॥
॥५७॥ पक्षो ध्वस्तविपक्षोऽयं । वासरो धर्मभासुरः ॥ कामाभिरामो यामोऽपि । घटी पीयू-
षसद्घटी ॥ ५८ ॥ क्षणोऽपि क्षणदो मेऽद्य । त्वत्समागमतोऽभवत् ॥ साधूनां दर्शनं येन ।

भवेद्भाग्यवशाद्विशां ॥ ५९ ॥ उदितेऽपि परं मित्रे । यथांधस्येष्टवस्तुनः ॥ दर्शनं न भवत्येव । स्वकर्मवशतः प्रभो ॥ ६० ॥ माधवे च समायाते । फलपत्रप्रदायिनि ॥ करीरे पत्रसंप्राप्तिः । सुमनोभिः श्रितेऽपि न ॥ ६१ ॥ वारिदेपि समायाते । सर्वशस्योपकारिणि ॥ किंतु जवासकः शुष्येत् । क्रमाद्भाज्यप्यभाग्यतः ॥ ६२ ॥ तवागमेऽपि यद्भो मे । दुःखं याति दयानिधे ॥ तन्मध्ये कर्मणो दोषो । रोषपोषो न कस्यचित् ॥ ६३ ॥ किंत्वालस्यवतो मध्ये । समेता सुरवाहिनी ॥ पापहंत्री न सर्वेषां । परं संतापहाखिले ॥ ६४ ॥

तन्निशम्य मुनिः प्राह । संतापस्तव मानसे ॥ चिरं ध्यानरसोपेते । शेने कौतुकमत्र मे ॥ ६५ ॥ कलाकलापयुक्तेऽपि । त्वयि मालिन्यमुच्चकैः ॥ राज्ञि गोस्वामिनि प्राज्ञ । गुरु वामानुगं हि तत् ॥ ६६ ॥ शुद्धपक्षोदयाध्यक्ष । ब्रूहि त्वं हृद्गतं यतः ॥ राजंस्ते गोभरैर्याति । संतापः सर्वदेहिनां ॥ ६७ ॥ राजावोचदपुत्रत्व—मेव मे दुःखकारणं ॥ अपुत्राणां गतिर्नैव । भणिता लौकिकागमे ॥ ६८ ॥ महाव्रतिशेखरोऽथ । संगतस्तेऽखिलो मलः ॥ राजन् याता मा विषादी—भवातस्तं मुनिर्जगौ ॥ ६९ ॥ अत्रार्थे शृणु दृष्टांतं । मृष्टांतःकरणं त्वकं ॥ दूर-

पाराब्धिवं ड्गं । सरंगं रागधारिणां ॥ ७० ॥ भूमिगेहमधोलोक । ऊर्ध्वलोकः शिरोगृहं ॥
मध्यलोको मध्यभूमिं । यस्य प्रोचुः कवीश्वराः ॥ ७१ ॥

पुरं वशीकृताशेष—भुवनो भवनोदितः ॥ उग्रशासन इत्याख्य—स्तत्पाति ख्यातिमान्नृपः
॥ ७२ ॥ तुष्टेनेव सुमनसां । पदमुच्चैः समर्पितं ॥ रुष्टेनेव द्विजिह्वायां । येन दत्तमधःपदं ॥
॥ ७३ ॥ युग्मं ॥ शुद्धबुद्धिर्बभूवास्य । सचिवो विश्वविश्रुतः ॥ अपारतत्पुरोदार—व्यापारभा-
रभासुरः ॥ ७४ ॥ नृपाज्ञया पुरे तस्मि—श्चरतः सर्वतः सुहृत् ॥ पुरुषाश्रय इत्यस्य । मिलि-
तश्चैक्यमुद्वहन् ॥ ७५ ॥ स शंवरेण संतापं । तस्य वारयितुं पृथुं ॥ निराकरोति न स्वीयं ।
निर्मलेन कदाप्यहो ॥ ७६ ॥ शुचियोगेन तज्जाड्यं । मुदा हरति दुःखदं ॥ परं स्वकीयं नैवा-
सौ । मोहमोहितमानसः ॥ ७७ ॥ सत्सूत्रैः सुगुणैः स्वस्थै—रेतं नानांबरैर्वरैः ॥ संगतं कु-
रुते नित्यं ॥ न स्वं श्वेतांबरैरपि ॥ ७८ ॥ सदागुरुर्छैः सद्वासै—र्वासयत्यमुमादरात् ॥ ना-
त्मानं गंधनिर्मुक्तं । प्रसक्तं प्रकृतिष्वसौ ॥ ७९ ॥ सुवर्णैर्भूषयत्येनं । विशुद्धैरर्थसिद्धिदैः ॥ न
स्वं रूपं विरूपं च । तद्भूषणविचक्षणः ॥ ८० ॥

तं चित्तेऽचिंतयेन्नित्य–मनित्यमपि मानतः ॥ न न्नावयति चात्मानं । स न्नावयतिना-
त्मना ॥ ७१ ॥ सुमनोन्निः सदाप्येनं । पूजयेत्परया मुदा ॥ एकेनापि सुमनसा । नात्मानं
कामसंयुतः ॥ ७२ ॥ सन्मोदकैर्बहुधान्यैः । सरसैः सुमुखप्रियैः ॥ योजयेदाप्तपंक्त्यां तं । न
स्वं रुचियुतं पुनः ॥ ७३ ॥ अंगरागेण तं लब्ध–वर्णं वर्णेषु स सृजेत् ॥ नात्मानं वर्णनिर्मु-
क्तं । सद्वर्णकविवर्जितं ॥ ७४ ॥ सदापत्राणि चित्राणि । धारयेत्तं मुदा शये ॥ धत्ते स घनसा-
राणि । स्वकीये न कदाचन ॥ ७५ ॥ स निर्वृत्तिकरे शुद्धे । स्थापयेत्तं सदालये ॥ स का-
ष्टे तल्पनिर्मुक्ते । नात्मानं लक्कदीपके ॥ ७६ ॥ कांतारागवशादेतं । कुरुते योगसंगतं ॥ ना-
सौ स्वं केवलान्नाव–स्तेन तस्मिन् प्रदृश्यते ॥ ७७ ॥ अलंकरोति रत्नौघै–मर्हर्घैस्तं तमोहरैः
॥ मुधा श्रीगुरुदत्तेन । न स्वं रत्नत्रयेण सः ॥ ७८ ॥ अंगोपांगानि सततं । पोषयेदस्य गोर-
सैः ॥ न तु सौवानि तेनासौ । दुर्बलो जायते जने ॥ ७९ ॥ सम्यग्दृष्ट्या सदा विष्टा–पूरि-
तं दूरितं हिया ॥ असौ विलोकयेदेनं । नात्मानं निर्मलं कलं ॥ ८० ॥ संयोजयति चानंद–
मस्य सन्मौक्तिकैः फलैः ॥ सगुणैर्नात्मनः किंतु । प्रमादप्रमदान्वितं ॥ ८१ ॥ मोहेन धीस-

खोऽप्येवं । करोति विविधं हितं ॥ तस्य मित्रस्य विप्रस्य । पवित्रस्य च वारिणा ॥ ९२ ॥

वयस्योऽपि मंत्रिणं तं । स्थापयित्वा निजे पदे ॥ अहर्निशं स्वहस्तेन । भोजयेदशनादिकं ॥ ९३ ॥ तेन सार्द्धं तथा शेते । भुंक्ते व्यक्ते सुखासुखे ॥ जागर्त्ति याति चायाति । प्रेमभारं प्रदर्शयेत् ॥ ९४ ॥ तं दृष्ट्वा सकलैर्लोकै-र्नित्यमित्रमिति द्रुतं ॥ अभिधानं कृतं तस्य । नित्यासक्ततया तदा ॥ ९५ ॥ अस्य विश्वहिताभिख्यो । मिलितः पुरुषोऽन्यदा ॥ शुद्धबुद्धिप्रदः सोऽपि । तं दृष्ट्वा प्रणतिं व्यधात् ॥ ९६ ॥ ततो विश्वहितो दध्यौ । मद्वचोऽसौ करोतु वा ॥ मा तथापि वरं शुद्ध-बुद्धिदं वचनं ब्रुवे ॥ ९७ ॥

इति ध्यात्वा जगौ तं स । सुहृत्ते कस्य नो मतः ॥ परं यथा रागवांस्त्व-मस्मिन्नासौ तथा त्वयि ॥ ९८ ॥ अयमंतः कुशुद्धोऽस्ति । बहिः किंचन शुद्धिभाक् ॥ परं सत्कृत एवातो । मा विश्वासं धरास्य भोः ॥ ९९ ॥ नो ददासि यदा भोज्यं । स्नानं नो कारयिष्यसि ॥ तदा ते कार्यभारं नो । करिष्यति स निर्मलं ॥ १०० ॥ विधुरेऽयं सखा नो ते । ततोऽन्निमसुखकैः ॥ कुरुष्व कष्टे साहाय्यं । यत्करोति विदांवर ॥ १ ॥ हितस्य तस्य वचन-

मर्वचनमथाखिलं ॥ निशम्य किंचित्संजात–चेतनः स व्यजावयत् ॥ २ ॥ अनेन कथितं यन्मे । तत्सम्यग् ज्ञायते खलु ॥ अतः कृतज्ञनामानं । मित्रं कुर्वे यथोचितं ॥ ३ ॥

ततः कृतज्ञसंज्ञं स । मित्रं पर्वणि पर्वणि ॥ अन्नतांबूलवस्त्राद्यै–स्तोषयेत्स्तोकजक्तिजाक् ॥४॥ तद्विलोक्याखिला लोकाः । पर्वमित्रमिदं जगुः ॥ यतो जना दृष्टिदृष्टं । निगदंति स्वजावतः ॥ ५ ॥ मित्रद्वययुतं वीक्ष्य । शुद्धबुद्धिं स चैकदा ॥ यथार्थनामा श्रीधामा–ऽन्यधाद्विश्वहितस्त्विति ॥ ६ ॥ मंत्रिन् पर्वसुहृत्तेऽयं । त्वद्दुःखे दुःखजाग् मनाक् ॥ अहं तु नेदृशं मित्रं । सम्यग् हितकरं ब्रुवे ॥ ७ ॥ सर्वदुःखस्य हर्त्ता यः । कर्त्ता शिवसुखस्य च ॥ नत्या स्तुत्याथ संगत्या । तुष्टः शिष्टमतिर्हितः ॥ ८ ॥ शुद्धबुद्धिर्निशम्यैत–त्तंप्रति प्रोचिवानिदं ॥ ईदृग् विश्वहितः स्यात्कः । सुहृत्संसारगोचरे ॥ ए ॥ सोऽन्यधात्सोऽस्ति सुस्थाने । लोकनाथाजिधानकः ॥ किंचित्स्वरूपं तस्यातः । शृणु संवृणु संशयान् ॥ १० ॥ सम्यग् ज्ञानोज्ज्वलमुखः । सुदृष्टिः सरलाशयः ॥ सदाचरणसंयुक्तो । विरक्तो वामकर्मसु ॥ ११ ॥ शश्वद्विश्वजनाधारो । ह्यंगोपांगप्रतिष्ठितः ॥ ईदृशः पुरुषः कोऽपि । त्वया कार्यः सुहृत्सुहृत् ॥ १२ ॥

तदाकर्ण्यागदत्सोऽपी—दृशं मर्त्यं जिनालये ॥ कदाचित्साधुशालायां । कदाचिच्च सता गृहे ॥ १३ ॥ पश्यामि किंतु नश्यामि । तं दृष्ट्वा पुरुषोत्तमं ॥ अतःपरं मिलिष्यामि । त्वच्चनतः सतः ॥ १४ ॥ स्वस्थानस्थः कदाचिच्च । कदाचिन्मार्गतः पुनः ॥ गत्वाऽमाने च तत्स्थाने । कदाचित्तं नमत्यथ ॥ १५ ॥ तं निरीक्ष्याभ्यधुर्लोकाः । प्रणामसुहृदं च तं ॥ सोऽपि तुष्टमनास्तस्य । मनोऽभीष्टं प्रयच्छति ॥ १६ ॥ एवं मित्रत्रयीयुक्त । उग्रशासनभूपतेः ॥ व्यापारभारसर्वस्वं । कियत्कालं बभार सः ॥ १७ ॥ एकदा चैकशय्यायां । नित्यमित्रसमन्वितः ॥ निद्रां कृत्वा जागरूको । यावदासीत्स मंत्रिराट् ॥ १८ ॥ योधानुदायुधांस्ताव—त्सर्वतःसर्वतस्करान् ॥ पश्यतिस्म प्रभूद्दिष्टान् । दुष्टान् कालनरोपमान् ॥१९॥ तान् दृष्ट्वा सोऽवदद्यूयं । किमर्थमिह संगताः ॥ तेऽवोचन् प्रभुणादिष्टा । वयमत्र समागताः ॥ २० ॥ क्षेप्स्यामः कूपे त्वामद्य । सद्यः सावद्यकारिणं ॥ तत् श्रुत्वा सोऽगृणत्को मे—ऽपराधोऽत्र प्रवर्त्तते ॥ २१ ॥ तेऽवदंस्तं नराधीश । एव वेत्ति वयं न हि ॥ तस्यादेशं करिष्यामः । किंतु संप्रति कर्कशं ॥ ॥ २२ ॥ तन्निशम्य जजल्पासौ । नित्यमित्रंप्रतीदृशं ॥ उग्रशासनभूमीशो । मयि क्रुद्धोऽस्ति

सांप्रतं ॥ २३ ॥ अत उत्तिष्ठ लोकेष्ट । कुत्रचित्तेन गम्यते ॥ यत्र स्थितस्य मे नूनं । भयं भवति नो ततः ॥ २४ ॥ अवगूढे कृते लोकै—र्यथा सूर्यावलोकनं ॥ क्रियते च तथा कष्टे । मित्रवक्त्रनिरीक्षणं ॥ २५ ॥ दातुः परीक्षा दुर्भिक्षे । प्रियाया विभवक्षये ॥ सुभटस्य च संग्रामे । मित्रस्य विपदि ध्रुवं ॥ २६ ॥ यतः—सरसीव पयःपूर्णे । सर्वमृद्धौ समं भवेत् ॥ नैःस्वे स्वपरयोर्भेदः । शुष्केऽस्मिन्नुच्चनीचवत् ॥ २७ ॥ पितृमातृसुतभ्रातृ—प्रियासन्मित्रतो भवान् ॥ मया भो मित्र यन्नूनं । पालितोऽसि विशेषतः ॥ २८ ॥ मामेकवारं दुर्वारा—दुग्रशासनभूभुजः ॥ रक्ष रक्ष बलादक्ष । श्लाघ्य भुवनप्रिय ॥ २९ ॥ सोऽपि तद्वचनं नैव । शृणोति न च चक्षुषा ॥ प्रेक्षते तं तथा नैवो—पलक्षयति पार्श्वगं ॥ ३० ॥

सकलैः सरलैर्लोकैः । कथंचिद्बोधितो बुधैः ॥ उवाच सचिवं मंद—मावयोः संगतं किमु ॥ ॥ ३१ ॥ त्वं धीसखोऽहं प्रकृतिः । कर्त्ता भोक्ता च कर्मणः ॥ त्वमेवातो भुंक्ष्व कर्म । स्वकृतं स्वयमेव भोः ॥ ३२ ॥ त्वया यन्मेऽन्नपानादि । दत्तं स्वीयहिताय तत् ॥ स्वपित्रोस्तृप्तयेऽन्यस्मै । यथा लोकः सुभोजनं ॥ ३३ ॥ संयोगस्य च संबंधे । भुंक्ते कर्त्तैव तत्फलं ॥ चिं-

तासंताप इष्टानां । केवलं प्रज्ञवेद्यतः ॥ ३४ ॥ करोति पाणिरन्यायं । पाणिरेव सहेत तं ॥ त-
नुते चरणोऽन्यायं । पाद एव सहेत च ॥ ३५ ॥ प्रथमं चेन्ममाग्रे त्व-मगदिष्यस्तदा बला-
त् ॥ मोक्ष्मस्मादकरिष्यं । चरणाधैरहं तव ॥ ३६ ॥ अधुना मयका किंचि-न्नो भवेद्भवति
ध्रुवं ॥ मम पार्श्वमतो मुंचा-ऽन्यथा दुःखी भविष्यसि ॥ ३७ ॥

तदाकर्ण्यारुदत्सोऽपि । पर्वमित्रमपि द्रुतं ॥ तत्रागात्तन्निशम्योच्चै-र्ददर्शामुं च दुःखितं
॥ ३८ ॥ तदग्रे सकलं स्वीय-वृत्तांतं स न्यवेदयत् ॥ ततः पर्वसुहृत्प्राह । मा भैषीः सुवयस्य
भोः ॥ ३९ ॥ सर्वस्वमर्पयित्वास्य । रक्षिष्यामि त्वकं रयात् ॥ इत्थं स्वस्थीकृतस्तेन । क्षणं
तस्थौ भयोज्झितः ॥ ४० ॥ तावता नित्यमित्रेण । गले धृत्वा स्वतो बहिः ॥ कृतो धृतोऽथ नृ-
पतेः । किंकरैर्दुःकरैः करे ॥ ४१ ॥ तद् दृष्ट्वा पर्वमित्रेण । सच्चक्रे नृपकिंकराः ॥ तथोचिरे न-
यध्वं मा-मेतत्स्थाने दयापराः ॥ ४२ ॥ तद्वचोऽमानयित्वा तै-स्तस्मिन्नीते स दुःख्यभूत् ॥
नित्यसुहृत्पुनः पुत्रीं । विवाह्येव प्रसुप्तवान् ॥ ४३ ॥

ततः स किंकरैः कूपा-सन्नं दीनोऽप्यनीयत ॥ तं दृष्ट्वा भयभीतोऽसौ । दध्यौ चित्ते

विषादभाक् ॥ ४४ ॥ पुरा विश्वहितो विश्व–हितं मे वचनं जगौ ॥ दुःखेऽसौ लोकनाथस्त्वां
। पास्यति प्रचुराधितः ॥ ४५ ॥ करालः स च कालोऽद्य । समेतो मेऽतिदुस्सहः ॥ अतो
मतोऽसौ भगवान् । शरणं भवतान्मम ॥ ४६ ॥ इति ध्यायति सचिवे । लोकनाथनिदेशतः
॥ ईयरुत्तरकाष्टात–श्चंडहासधरा नराः ॥ ४७ ॥ तैस्तत्समीपमागत्य । ते योधा जल्पिता
हठात् ॥ अमुं रे मुंचतोदंच–दायुधाः किमिह स्थिताः ॥ ४८ ॥ कुरुध्वमथवा युद्धं । लोक-
नाथनरा वयं ॥ एतं लातुं तथा त्रातुं । समायाताः सतां मताः ॥ ४९ ॥

तन्निशम्य भटाः सर्वे । कोपाटोपवशंवदाः ॥ योद्धुं ढुढौकिरे भूमिं । कंपयंतः समंततः ॥५०॥
तैर्नरैस्ते भटाः केचि–त्क्ष्मायां पातिता बलात् ॥ हठान्निर्लोठिताः केचित् । केचिद्दैन्यं च लं-
भिताः ॥ ५१ ॥ पलायांचक्रिरे केचि–त्केचिच्छस्त्राणि तत्यजुः ॥ केचिदधोमुखीभूय । स्थिता-
श्च प्रस्थिताः परे ॥ ५२ ॥ ततः सचिवसामीप्यं । गत्वा ते जगदुर्वचः ॥ प्रणामसुवयस्य-
स्त्वा–माकारयति सत्वरं ॥ ५३ ॥ तद्वाक्यं स समाकर्ण्य । कर्णामृतरसायनं ॥ हर्षप्रहर्षयु-
क्तोऽभूत् । भूतधात्रीसुखान्वितः ॥ ५४ ॥ तत्स्थानात्तं गृहीत्वा ते । दिव्योल्लोचसमन्वितं ॥

सुवर्णभूमिसंयुक्तं । वरभित्तिविराजितं ॥ ५५ ॥ सर्वांगसुंदरं नाम । सर्ववस्तुविभूषितं ॥ भु-
तुंगस्तंभशोभाढ्यं । प्रासादं प्रापयन्मुदा ॥ ५६ ॥ युग्मं ॥ चंद्रमंडलसच्छत्रं । स्वर्गगंगासुचा-
मरं ॥ नक्षत्रमालाहारांकं । सुवर्णप्रवरासनं ॥ ५७ ॥
सुरासुरनरैः स्तूय-मानं मानविवर्जितं ॥ यद्भुतं भुवि केषांचिद् । रत्नकोटीरनेकशः ॥
॥ ५८ ॥ सुवर्णभारं केषांचि-त्केषांचिद्वारणश्रियं ॥ केषांचित्साधुसंबंधं । केषांचिद्वाजिनां ग-
णं ॥ ५९ ॥ केषांचिद्वितताबासान् । केषांचिद्वाससां चयं ॥ प्रणामसुहृदं तत्र । लोकनाथं द-
दर्श सः ॥ ६० ॥ चतुर्भिः कलापकं ॥ तं विलोक्य सुधासिंधु-मध्यमग्नमना इव ॥ पूर्वं नि-
र्वापयामास । संतापं पापसंभवं ॥ ६१ ॥ ततो गुरुप्रणामेन । तं ननाम महाशयं ॥ ऊर्ध्वी-
कृत्य स तेनापि । स्थापितः सुंदरासने ॥ ६२ ॥ सुस्थीभूते पुनस्तस्मिन् । सोऽपृच्छद्दुःखका-
रणं ॥ असौ प्रकाशयांचक्रे । उग्रशासनजं भयं ॥ ६३ ॥ तत् श्रुत्वा सोऽवदद्भद्र । न भयं
मां श्रितस्य ते ॥ सूर्याश्रितस्य न तमो-दरो भवति कर्हिचित् ॥ ६४ ॥ तथा त्वयेति नो
चिंत्यं । प्रणामादस्य नापरं ॥ मया किंचित्कृतं तेन । किं करिष्यत्यसौ मयि ॥ ६५ ॥ भ-

माः प्रणिपाताज्ञो । हर्षिताः स्युः सदापि हि ॥ सर्वसंपत्तिहेतुर्य–स्संतोषस्तेषु विद्यते ।६६।
अहं ते सर्वार्थ–सिद्धिं दास्ये विशेषतः ॥ मृतोऽपि चामृतं नित्यं । सत्यं मान्यं वचस्त्वया
॥ ६७ ॥ सुखेन तिष्ठ मत्पार्श्वे । वांछितार्थं च मार्गय ॥ कल्पद्रुमाद्या मद्गेहे । संति कर्मकरा
यतः ॥ ६८ ॥ राज्यं ते रोचते चित्ते । वासुदेवपदादि वा ॥ चक्रित्वमथवेंद्रत्वं । तुभ्यमिष्टं
ददामि तत् ॥ ६९ ॥ स तद्वचोऽमृतं पीत्वा । गततापो जगाविति ॥ नम्रशासनत्रूपस्या–
ज्ञा काप्येषु प्रवर्त्तते ॥ ७० ॥ सोऽवग् यदा प्रमत्तोऽहं । सम्यग्दृष्टिं तदा मम ॥ वंचयित्वा
जनं सैष । करोति स्वस्य किंकरं ॥ ७१ ॥ सोऽजल्पत्तर्हि नैवाह–मत्र स्थास्ये सुखेऽप्यलं ॥
अतो नय विज्ञो तत्र । यत्र नामापि नास्य वै ॥ ७२ ॥ लोकनाथस्ततः प्राह । मुक्त्वैकं स्था-
नकं किल ॥ सर्वत्र न्नयमस्त्यस्य । कदाचन कदाचन ॥ ७३ ॥ सोऽन्यधात्तन्महास्थानं । प्र-
धानं प्रापय प्रज्ञो ॥ यत्राहं त्वत्प्रसादेन । वसामि तत्र निर्भयः ॥ ७४ ॥ सोऽवदन्निर्वृतिपुरीं
। तदागच्छ मया समं ॥ यथा तस्याः प्रशस्यायाः । द्वारं ते दर्शयाम्यहं ॥ ७५ ॥ परं मार्गे द-
वस्तत्र । वर्त्तते प्रज्वलन् पटु ॥ प्रवेशं तत्र कर्त्ता चे–न्नाहं त्राता तदा तव ॥७६॥ पर्वतोऽग्रे

विद्यते स । विंध्यवर्द्धतेऽत्र यः ॥ चिरं स्थास्यसि चेत्तत्र । तदा यास्यसि नो पुरीं ॥ ७७ ॥
शीघ्रमुत्तरणीयं तत् । पुरतो वंशजालिका ॥ ऋजुमार्गतया सापि । लंघनीया क्षणेन
भोः ॥ ७८ ॥ खानिः पुरः पुरा लघ्वी । पश्चात्कुर्वी च या भवेत् ॥ तत्समीपे द्विजो वक्ति ।
। भूत्वैनां व्रजताग्रतः ॥ ७९ ॥ तद्वचोऽवगणय्याग्रे । गंतव्यं हितमिच्छता ॥ अन्यथा जन्म
तत्रैव । याति सा तु न पूर्यते ॥ ८० ॥ क्षुत्तृट्व्यथात्र सोढव्या । न तु पक्वफलान्यदो ॥ भ-
क्षणीयानि पेयानि । न च स्वादुजलान्यलं ॥ ८१ ॥ निःस्वादूनि नीरसानि । फलानि च
जलानि च ॥ गृहीत्वा प्राणवृत्तिस्तैः । कार्या कार्यविदा सदा ॥ ८२ ॥ द्वाविंशतिः पुनश्चौरा-
श्चिंतनीयाः प्रयत्नतः ॥ अन्यथा तव सर्वस्वं । गृहीष्यंति पुरार्जितं ॥ ८३ ॥ व्याघ्रसिंहावुभौ
तत्र । ताभ्यां दूरतरेण च ॥ वर्त्तितव्यं त्वया साव—धानसध्ध्यानकर्मणा ॥ ८४ ॥ ओमित्यु-
क्ते ततस्तेन । तत्स्थानं सोऽप्यनीयत ॥ यत्प्राप्यनिवृतात्मासौ । सदा सौख्यमयः स्थितः ॥
॥ ८५ ॥ लोकनाथोऽपि लोकानां । मोक्षप्राप्त्यै ततः स्वयं ॥ स्वस्थानमाप भव्यानां । म-
नोऽभीष्टफलप्रदः ८६ ॥

महात्मनः ॥ २९ ॥ एकदा निशि भूपालो । जागरूकोऽथ मानसे ॥ दध्यौ मंत्रप्रज्ञावान्मे
। सर्वं हृद्यं किलाभवत् ॥ ३० ॥ परं वरशतप्राप्ति–रूपं कार्यं न सिध्ध्यति ॥ अद्यापि व्या-
पिसंताप–कारकं दुःखधारकं ॥ ३१ ॥

तदैव दैवयोगेन । भोगेन सहिता हिता ॥ राज्ञी प्राज्ञी पपौ पुष्टं । शशिनं त्रासवर्जि-
तं ॥ ३२ ॥ अंगजार्थमसुं योऽत्र । स्मरेन्मंत्रं सनातनं ॥ शशमिश्रमौषधीशं । स हि स्व-
प्नेऽपि नो पिबेत् ॥ ३३ ॥ अमृतोपमया वाण्या । राज्ञी राज्ञे तमब्रवीत् ॥ यादृशं भुज्यते
भोज्य–मुद्गारोऽपि हि तादृशः ॥ ३४ ॥ सुधांशुपानतो राज्ञ्या । यत्तापः शांतिमाययौ ॥
तद्युक्तं यत्पुना राज्ञ–स्तच्चित्तं वैक्यमेतयोः ॥ ३५ ॥ यस्याबला अपि परं । राजानं च गल-
त्यहो ॥ अखर्वः सोऽत्र निश्चिंतः । कथं न स्यान्महीपतिः ॥ ३६ ॥ चिंतासंतापनिर्मुक्ता । रा-
जा राज्ञीं जगौ मुदा ॥ कलाकलापयुक्तस्ते । राजेव भविता सुतः ॥ ३७ ॥ स्त्रीलिंगस्वप्ने
प्रायः स्त्री । पुल्लिंगे च पुमान् पुनः ॥ क्लीबलिंगे तथा क्लीबो । जीवो भवति भामिनि ॥
॥ ३८ ॥ शुभस्वप्नेंगजो भव्यो । विपरीते शुभेतरः ॥ अतस्ते तनयः साधु–र्भविता नात्र

संशयः ॥ ३९ ॥ एवमस्त्विति संज्ञाप्य । सा ययौ निजसद्मनि ॥ तौ दृष्टप्रत्ययौ नित्यं । मंत्रं संस्मरतो मुदा ॥ ४० ॥ हृद्यं तु दोहदं तस्या । आसीन्मासे तृतीयके ॥ यादृक्कंदो भवेद्भूमा—वंकूरोऽपीह तादृशः ॥ ४१ ॥

नृपस्तत्पूरयामास । चूरयामास दुःकृतं ॥ गर्भपुष्टिः सुखैर्जज्ञे । स्वेच्छाहारविहारजैः ॥ ॥ ४२ ॥ पूर्णकाले रमापाले । सासूत सुतमद्भुतं ॥ पूर्णमासीव पूर्णेंदुं । नेत्रानंदकरं वरं ॥ ॥ ४३ ॥ सुतजन्मस्वरूपं द्राक् । यो योऽकथयदुच्चकैः ॥ तस्य तस्याधिकं दानं । मुदा भूभुक् ददौ तदा ॥ ४४ ॥ आचारे सकले स्वीये । विहिते विधिपूर्वकं ॥ व्यतीते सूतिके सर्वं । संभोज्य स्वजनव्रजं ॥ ४५ ॥ वस्त्रादिना च सत्कृत्य । कृत्यवित्तस्य भूपतिः ॥ चंद्रोदर इति त्वाख्यां । चक्रे स्वप्नानुसारतः ॥ ४६ ॥ युग्मं ॥ ततोऽष्टवर्षदेशीयं । कलाचार्याय सोऽर्पयत् ॥ असौ द्वासप्ततिश्चेमाः । कलाः शिक्षितवान् कलाः ॥ ४७ ॥ लिखनं ( १ ) गणितं (२) गीतं ( ३ )। नृत्यं ( ४ ) वाद्यं ( ५ ) रसायनं (६)॥ ज्योतिष्कं ( ७ ) पठितं ( ८ ) छंदो ( ९ ) । निरुक्तं ( १० ) गारुडं ( ११ ) स्मृतिः ( १२ ) ॥ ४८ ॥ व्याकरणं ( १३ ) का-

राजन्नसौ लोकनाथो । निर्धनानां धनप्रदः ॥ निःसंतानेषु संतान-दायको विश्वनायकः ॥ ७७ ॥ राज्यार्थिनां राज्यदाता । दुःखिनां दुःखनाशकः ॥ दुर्भगानां सुभगत्व-कारको जनतारकः ॥ ७८ ॥ संतापहर्त्ता लोकानां । काकानामिव तापनः ॥ सद्बुद्धिवृद्धिजनको । जनकोटिनमस्कृतः ॥ ७९ ॥ इष्टकर्त्ता कष्टहर्त्ता । तथोद्धर्त्ता पतन्नृणां ॥ आराधनुहि ततश्चैनं । यथा ते सर्वसिद्धयः ॥ ८० ॥ तदाकर्ण्य नृपोऽवोच-ल्लोकनाथोऽत्र को मुने ॥ तस्याखिलं स्वरूपं मे-ऽपूर्वं पूर्वं निरूपय ॥ ८१ ॥ पश्चात्तापज्वरं मुक्त्वा । पश्चात्सेवे यथाधिपं ॥ अविज्ञातस्वरूपस्य । सेवां कर्तुं न शक्यते ॥ ८२ ॥ ततोऽजल्पन्मुनी राज-न्नंतरंगधिया ह्यमूं ॥ कथाप्रश्नं विचारेण । विचारय विशारद ॥ ८३ ॥ नृभिपापारसंसारो । दूरपाराभिधं पुरं ॥ नत्कृष्टाङ्गः कर्मबंध । उग्रशासनन्नृपतिः ॥ ८४ ॥

आत्मा शुद्धमतिर्मंत्री । नित्यमित्रं पुनर्वपुः ॥ पर्वमित्रं स्वजनौघो । मातृपितृप्रियादिकः ॥ ८५ ॥ गुरूपदेश एवोच्चै-र्ज्ञेयो विश्वहिताभिधः ॥ यद्भिक्रया प्रणामाख्यो । वयस्योऽप्याहृतोऽमुना ॥ ८६ ॥ लोकस्य पालनाल्लोक-नाथं धर्ममवेहि तं ॥ प्रणामेऽपि कृते योऽत्र । दत्ते-

ऽन्नीष्टं मनस्विनां ॥ ९७ ॥ ये योधास्तेऽत्र दुःकर्म-प्रेरिता रोगराशयः ॥ गृह्यमाणं न तै-
र्जीवं । देहो रक्षति कर्हिचित् ॥ ९८ ॥ स च तिष्ठति तत्रैव । याति नैकपदं ह्यनु ॥ क्रंदति
स्वजनः किंतु । रक्षितुं सोऽपि न क्षमः ॥ ९९ ॥ यः कूपः सोऽत्र नरको । ये नराः सुकृतस्य
ते ॥ ज्ञेया अध्यवसाया न्नो । विवेको धर्ममंदिरं ॥ २०० ॥ नीतानपि नरकांतं । कर्मभिर्दंत-
शर्मभिः ॥ स्मृतस्य सुकृतस्याला-ऽध्यवसाया अवंति नॄन् ॥ १ ॥ कियत्कालं सुखेनासौ ।
स्थापिता दृष्टिदानतः ॥ यत्तत्सम्यक्त्वदानेन । सौधर्मादिषु संस्थितिः ॥ २ ॥

पश्चात्स यतिमार्गेण । यथाख्यातेन लंभितः ॥ यां निर्वृत्तिपुरीं विद्धि । पंचमीं गतिम-
त्र तां ॥ ३ ॥ तत्र यो दव आम्नातः । स क्रोधोऽहंकृतिर्गिरिः ॥ माया पुनर्वंशजाली । दुः-
खालिकरणक्षमा ॥ ४ ॥ लोभो गर्त्तोऽत्र दुःपूरः । पूरणैरपि संभृतः ॥ द्विजो मनोरथस्तत्र ।
ज्ञातव्यो विदुषा सदा ॥ ५ ॥ सुस्वादूनि फलानीह । जलानि मधुराणि च ॥ अशुद्धान्यन्न-
पानानि । तानि जानीहि पार्थिव ॥ ६ ॥ ये चौरास्तेऽत्र विज्ञेया । द्वाविंशतिपरीषहाः ॥
व्याघ्रसिंहौ रागद्वेषौ । कद्यान्नं नीरसं मतं ॥ ७ ॥ देहाऽन्नावाञ्छिवे नैव । जरा व्याधिर्मृति-

स्तथा ॥ न भयं परिभवश्चापि । नाबाधा नाऽधिसंभवः ॥ ८ ॥ प्रणामेऽपि कृते येन । तस्य चैवं विनिर्मितं ॥ सर्वथाराधितः सोऽत्र । धर्मः किं न प्रयच्छति ॥ ए ॥ धात्रीधवोऽन्यधात्सा-धो । धर्मध्याने प्रियायुतं ॥ सांप्रतं शिक्षय त्वं मां । यथा कुर्वे तमादरात् ॥ १० ॥ सविचारा मुनिः प्राह । प्रकारा धर्मकर्मणां ॥ राजन्नुदाराः संसार–साराः संति सहस्रशः ॥ ११ ॥

परं पंचनमस्कार–स्तन्मध्ये सुकरः परः ॥ ऐहिकामुष्मिकाभीष्ट–दायको मंत्रनायकः ॥ १२ ॥ विपदोऽस्माद्विलीयंते । लीयंते सर्वसंपदः ॥ अंतरायाः क्षयं यांति । भ्रांतिरत्र न विद्यते ॥ १३ ॥ अतः पंचनमस्कारं । स्मर सुंदर सादरं ॥ प्रियायुतो यतस्तेऽसौ । प्रियं यच्छति पापहृत् ॥ १४ ॥ शुचीभूय शुचिस्थाने । निश्चलासनसंस्थितः ॥ धौतवस्त्रावृतस्वांगः । प्रागुदीच्योश्च सन्मुखः ॥ १५ ॥ संश्लिष्टोष्ठयुगो नाशा–वंशन्यस्तात्मलोचनः ॥ प्रमादरहितो मौन्य–ऽसंस्पृशन् दशनैर्दतः ॥ १६ ॥ अंगुल्यग्रं वर्जयित्वा । तथा मेरोश्च लंघनं ॥ आर्त्तरौद्रे पुनर्ध्याने । जपेन्मंत्रं सुधीरिमं ॥ १७ ॥ त्रिभिर्विशेषकं ॥ श्वेतं मुख्यपदं चात्र । द्वितीयं कुंकुमोपमं ॥ स्वर्णवर्णं तृतीयं तु । नीलवर्णं तुरीयकं ॥ १८ ॥ पंचमं च कृष्णवर्णं । श्वेतं

मोक्षार्थं व्योमरूपं तू-
शांतिकपौष्टिके ॥ वश्याकृष्टौ रक्तवर्णं । स्तंभने पीतवर्णकं ॥ १९ ॥ इत्थं पंचविधं ध्यान
ञ्चाटने कृष्णवर्णकं ॥ तत्तद्वर्णजपमालां । वसनादिसमन्वितां ॥ २० ॥
–मत्र मंत्रे प्रदर्शितं ॥ यथावसरमासाद्य । पदं ध्येयं त्वयानघ ॥ २१ ॥

यदा जपमालिका न । नंद्यावर्त्तादिना तदा ॥ गणनीयो नमस्कारो । न मोच्यो निश्चयः
पुनः ॥ २२ ॥ संग्रामसागरारण्य–शाकिनीभूतसंभवं ॥ भुजंगसिंहव्याघ्रोत्थं । वह्निव्याध्यस-
माधिजं ॥ २३ ॥ वैरिवारविकारोत्थं । दारिद्र्यजनितं ध्रुवं ॥ इह लोके भयं न स्या–ज्जपतोऽ-
मुं जयप्रदं ॥ २४ ॥ अस्यैकाक्षरमपि यो । ध्यायेद्ध्यानगतं पुमान् ॥ नाशयेदायुः स सप्त
–सागरोपमसंभवं ॥ २५ ॥ पंचाशच्च पदेनाहो । समग्रेण पुनः सुधीः ॥ पंचशतीसमुत्थं
स्राक् । श्रद्धाभावितमानसः ॥ २६ ॥ युग्मं ॥ पंचपरमेष्टिमंत्रं । तथा तस्य विधिं मुनिः ॥
शिक्षयित्वा तयोः सोऽगात् । सदने च ययौ नृपः ॥ २७ ॥ साधूक्तं विधिना मंत्रं । पवित्रं
स्मरतोस्तयोः ॥ भृशं कृशं वभूवाशु । दुष्टं कर्मांतरायकं ॥ २८ ॥

राज्यवृद्धिः कार्यसिद्धिः । प्रसिद्धिः सर्वदिक्षु च ॥ तस्याभून्मंत्रमाहात्म्या–त्सात्म्याच्छीघ्रं

महात्मनः ॥ २९ ॥ एकदा निशि भूपालो । जागरूकोऽथ मानसे ॥ दध्यौ मंत्रप्रभावान्मे
। सर्वं हृद्यं किलाभवत् ॥ ३० ॥ परं वरशतप्राप्ति–रूपं कार्यं न सिध्यति ॥ अद्यापि व्या-
पिसंताप–कारकं दुःखधारकं ॥ ३१ ॥

तदैव दैवयोगेन । भोगेन सहिता हिता ॥ राज्ञी प्राज्ञी पपौ पुष्टं । शशिनं त्रासवर्जि-
तं ॥ ३२ ॥ अंगजार्थममुं योऽत्र । स्मरेन्मंत्रं सनातनं ॥ शशमिश्रमौषधीशं । स हि स्व-
प्नेऽपि नो पिबेत् ॥ ३३ ॥ अमृतोपमया वाण्या । राज्ञी राज्ञे तमब्रवीत् ॥ यादृशं भुज्यते
भोज्य–मुद्गारोऽपि हि तादृशः ॥ ३४ ॥ सुधांशुपानतो राज्ञ्या । यत्तापः शांतिमाययौ ॥
तद्युक्तं यत्पुना राज्ञ–स्तच्चित्रं वैक्यमेतयोः ॥ ३५ ॥ यस्याबला अपि परं । राजानं च गल-
त्यहो ॥ अखर्व सोऽत्र निश्चिंतः । कथं न स्यान्महीपतिः ॥ ३६ ॥ चिंतासंतापनिर्मुक्तां । रा-
जा राज्ञीं जगौ मुदा ॥ कलाकलापयुक्तस्ते । राजेव भविता सुतः ॥ ३७ ॥ स्त्रीलिंगस्वप्ने
प्रायः स्त्री । पुल्लिंगे च पुमान् पुनः ॥ क्लीबलिंगे तथा क्लीबो । जीवो भवति भामिनि ॥
॥ ३८ ॥ शुभस्वप्नेंगजो भव्यो । विपरीते शुभेतरः ॥ अतस्ते तनयः साधु–र्भविता नात्र

संशयः ॥ ३९ ॥ एवमस्त्विति संभाष्य । सा ययौ निजसद्मनि ॥ तौ दृष्टप्रत्ययौ नित्यं । मंत्रं संस्मरतो मुदा ॥ ४० ॥ हृद्यं तु दोहदं तस्या । आसीन्मासे तृतीयके ॥ यादृक्कंदो भवेद्भूमा—वंकूरोऽपीह तादृशः ॥ ४१ ॥

नृपस्तत्पूरयामास । चूरयामास दुःकृतं ॥ गर्भपुष्टिः सुखैर्जज्ञे । स्वेछाहारविहारजैः ॥ ॥ ४२ ॥ पूर्णकाले रमापाले । सासूत सुतमद्भुतं ॥ पूर्णमासीव पूर्णेंदुं । नेत्रानंदकरं वरं ॥ ॥ ४३ ॥ सुतजन्मस्वरूपं द्राक् । यो योऽकथयदुच्चकैः ॥ तस्य तस्याधिकं दानं । मुदा भूभुक् ददौ तदा ॥ ४४ ॥ आचारे सकले स्वीये । विहिते विधिपूर्वकं ॥ व्यतीते सूतिके सर्वं । संभोज्य स्वजनव्रजं ॥ ४५ ॥ वस्त्रादिना च सत्कृत्य । कृत्यवित्तस्य भूपतिः ॥ चंद्रोदर इति त्वाख्यां । चक्रे स्वप्नानुसारतः ॥ ४६ ॥ युग्मं ॥ ततोऽष्टवर्षदेशीयं । कलाचार्याय सोऽर्पयत् ॥ असौ द्वासप्ततिश्चेमाः । कलाः शिक्षितवान् कलाः ॥ ४७ ॥ लिखनं ( १ ) गणितं (२) गीतं ( ३ )। नृत्यं ( ४ ) वाद्यं ( ५ ) रसायनं (६)॥ ज्योतिष्कं ( ७ ) पठितं ( ८ ) छंदो ( ९ ) । निरुक्तं ( १० ) गारुडं ( ११ ) स्मृतिः ( १२ ) ॥ ४८ ॥ व्याकरणं ( १३ ) का-

त्यायनं ( १४ ) । शिक्षा ( १५ ) विज्ञान ( १६ ) मागमः ( १७ ) ॥ काव्या ( १८ ) लं-
कार ( १९ ) हसितं ( २० ) । संस्कृतं ( २१ ) प्राकृतं ( २२ ) विधिः ( २३ ) ॥ ४९ ॥
वेदे ( २४ ) तिहास ( २५ ) पुराणं ( २६ ) । अमरी ( २७ ) खेचरीकले ( २८ )
॥ पैशाचिक ( २९ ) मपभ्रंशं ( ३० ) । वेद्यं च नखपत्रयोः ( ३१–३२ ) ॥ ५० ॥ मंत्र
( ३३ ) यंत्र ( ३४ ) रस ( ३५ ) स्वप्न ( ३६ )–वैद्यचि ( ३७ ) द्विष ( ३८ ) नर्त्तनं
( ३९ ) ॥ गंधनं च पुनर्वादः ( ४० ) । शाकुनं ( ४१ ) धूर्त्तसंवलं ( ४२ ) ॥ ५१ ॥ वश्य
( ४३ ) पण ( ४४ ) चित्र ( ४५ ) काष्ट ( ४६ )–कृत्ति ( ४७ ) पाषाण ( ४८ ) धातुतः
( ४९ ) ॥ लेखकाच्च तथा कर्मा–रोहणं च ( ५०–५१–५२ ) गजाश्वयोः ( ५३–५४ ) ॥
॥ ५२ ॥ तयोः शिक्षा देशभाषा ( ५५ ) । सिद्धांतः ( ५६ ) केवलिविधिः ( ५७ ) ॥ यं-
त्रकरसवती च ( ५८ ) । पातालसिद्धिवैद्यके ( ५८–५९–६० ) ॥ ५३ ॥ इंद्रजाला ( ६१ )
युधाभ्यासः ( ६२ ) । प्रासादलक्षणं ( ६३ ) पुनः ॥ रत्नपरीक्षा ( ६४ ) निर्घंटुः ( ६५ )
काष्टघट्टनमेव च ( ६६ ) ॥ ५४ ॥ प्रयोगोपाय ( ६७ ) कपटे ( ६८ ) । संस्कारं दर्शनस्य

च ( ६९ ) ॥ वृक्षचिकित्सा ( ७० ) सर्वंका–रिणी ( ७१ ) सामुद्रिकं ( ७२ ) तथा ॥ ॥ ५५ ॥ इत्यशेषकलाकेलि–मंदिरं सुंदराकृतिः ॥ कलाकेलिरिवाभाति । रतिप्रीतियुतो ह्यसौ ॥ ५६ ॥ यज्जीवो विबुधाचार्यो । लेखशालां व्रजन् भवेत् ॥ तद्युक्तं चित्रमेतत्तु । कलावान् यदभूदसौ ॥ ५७ ॥ कलाचार्यो द्विजेशः स । राज्ञा मंगलदानतः ॥ तथात्र सत्कृतो जज्ञे । नाम्ना धाम्ना यथा समः ॥ ५८ ॥

अनेकपातिसारस्य । मतिसारस्य मंत्रिणः ॥ अन्यदा हितशिक्षार्थं । कुमारो भूभुजार्पितः ॥ ५९ ॥ एकांते तं समानीय । माननीयं सतामपि ॥ जगाद धीसखो धीमान् । कुमारं मारसुंदरं ॥ ६० ॥ वत्सातुच्छमते यत्ते । दक्षां शिक्षां ददाम्यहं ॥ तल्लेखशालाकरणं । सरस्वत्याः प्रकीर्त्यते ॥ ६१ ॥ अथवा पर्वसुधांशोः । कलायास्तत्समर्पणं ॥ सूर्यस्योत्तेजनं तथा । सुराचार्यस्य शिक्षणं ॥ ६२ ॥ तथापि विज्ञै राजाज्ञा । मान्या मानयुतैरपि ॥ अतो वदामि किंचित्ते । धार्यं त्वया हितं हि तत् ॥ ६३ ॥ वत्सेदं मानुषं जन्म । प्राप्य चिंतामणिप्रभं ॥ निश्चिंतो मास्म भूयास्त्व–मस्मान्मार्गय चिंतितं ॥ ६४ ॥

अन्नं हि मृत्तिकास्वर्णं । वर्णयंति जना घनाः ॥ तन्निष्पन्ना तनुश्चासौ । तत्समाना हि कथ्यते ॥ ६५ ॥ येषां हि मृत्तिकारूपा । यांति ते मृत्तिकादिषु ॥ येषां सुवर्णरूपेयं । ते प्रयांति सुवर्णतां ॥ ६६ ॥ जातः पूर्णकलान्मृत्व–मतो धार्या सुवृत्तता ॥ तमसोऽत्र ग्रहो वार्यः । कलंकोऽस्यैष एव हि ॥६७॥ सौवनं यौवनं कर्म । स्वधिया साधयंत्यहो ॥ सूत्रमत्र गुरोर्लब्ध्वा । न रामाधवनं पुनः ॥६८॥ अवाप्य तत्वं ये माना–दपायं नैव कुर्वते ॥ विषयस्थाः क्षयं यांति । ते प्रमादपरा नराः ॥ ६९ ॥ बुधो गुरुः कविर्वक्रः । कलावान् सूर उच्चकैः ॥ वारुणीसंगतो नीचै–र्याति चास्तं परः किमु ॥ ७० ॥ येयं लक्ष्मीरसवती । समाम्नातांगपुष्टिदा ॥ अचैतन्यकरा किंतु । भुक्ता सागरजा यतः ॥ ७१ ॥

शास्त्रमुद्यमयुक्तस्य । दीर्घं चापि परान् जयेत् ॥ प्रमदानामिव प्रौढ–प्रमादवशगस्य न ॥७२॥ धार्याः क्रोधादयो योधा । बहिर्वृत्त्याथवारणे ॥ अंतःपुरंप्रविष्टास्ते । जनयंत्यसमंजसं ॥७३॥ नम्रीभूया गुरुषु त्वं । यथा ते गुरुता भवेत् ॥ स्तब्धस्तु लघुतामेति । छंदोवर्णइवावनौ ॥ ७४ ॥ निजजीवनदे कुर्या–न्नतिमप्यंगभाग् न यः ॥ अधोमुखो हि नरके । स पतेत्पालि-

वृक्षवत् ॥ ७५ ॥ सदा भव समुद्रस्त्वं । यल्लक्ष्मीजनको भवान् ॥ अमुद्रो धीसखोऽप्यत्र
। लक्ष्मीसूर्नैव जायते ॥ ७६ ॥ अहं चोत्तमपुरुष । इति मा बुध विश्वस ॥ त्वं स्या मध्य-
मपुरुषः । परस्यापेक्षया क्षणात् ॥ ७७ ॥ अग्रे स्ववचनं कर्त्तुं । चेत्तेवेहा तदा भव ॥ ह्यो-
क्तावप्रतो येन । तत्परस्य पुरो न तु ॥ ७८ ॥ अहं सलक्षणो विश्वे । इति गर्वं परित्यज ॥
एकारिष्टपदेनापि । तत्सर्वं विफलीभवेत् ॥ ७९ ॥ आत्मने पदमाधातुं । यदीच्छा ते तदाश्रय
॥ सुकर्मभावतां कर्त्ता । परस्मैपददोऽन्यथा ॥ ८० ॥ उपसर्गे समायाते । धातवः स्वार्थसा-
धकाः ॥ प्रायो न स्युस्ततोऽमीभिः । पूर्वं साधय सत्क्रियां ॥ ८१ ॥ ह्रस्वानां दीर्घसूत्रेणा—ऽ-
दीर्घत्वं वीक्ष्य लक्षणे ॥ तत्प्राप्त्यै तादृशो मास्म । भूयास्त्वं धर्मकर्मणि ॥ ८२ ॥ स्वरहीनो-
ऽपि सर्वत्र । योऽग्रगो याति शून्यतां ॥ पृष्टस्योवूर्घोविवर्णानां । सोऽपि संकलयेत्क्वचित् ।८३।
वृध्ध्या महत्वं संप्राप्य । मानं मा कुरु मानसे ॥ कथिता व्याकरणादौ । गुणहानिर्य-
तोऽनया ॥ ८४ ॥ अंत्योपि गुरुतामेति । पदस्थो वर्ण इतिमुक् ॥ अर्थवानपि तद्धीनो । ना-
ममात्रमिहोच्यते ॥ ८५ ॥ भजत्वं वर्णसंयोगं । पाश्चात्यगुरुताकृते ॥ न दत्ते सस्वरोऽप्येको

। गामस्येवान्यगौरवं ॥ ८६ ॥ समानानां स्वकीयेन । दृष्ट्वैक्यं त्वं स्वलक्षणे ॥ मान्नूत्येकदीर्घत्वे । परलोपेऽपि कुत्रचित् ॥ ८७ ॥ यदीछा कार्यनिष्पत्तौ । तदाधाः कृत्यप्रत्ययं ॥ कृतेन तद्धितेनान्ना—न्येन नो सिद्धिरस्य यत् ॥ ८८ ॥ नामरक्षाकृते साधु । विन्नक्तिं मा त्यजाधुना अनयैव पदप्राप्तिः । सुशब्दानां यतो न्नवेत् ॥ ८९ ॥ सालंकारोऽस्म्यतः किं मे । छंदोवृत्तादिसङ्गुणैः ॥ नोचिंत्यमिति साहित्यं । वृत्तं सर्वगुणं स्मृतं ॥ ९० ॥

करे कुरु कृपाणं त—न्नतकोशमपीह यत् ॥ नष्टाकारं न्नवेन्नैव । परलक्ष्मीसमर्पणे ॥ ॥ ९१ ॥ प्रदरं वैरिणो राति । गुणं स्वस्वामिनः पुनः ॥ विग्रहे पृष्टदोऽप्यत्र । यस्तं धर्मे तथाशये ॥ ९२ ॥ पक्षो मे सकलस्तेन । सपक्षोऽहं सदेति मा ॥ कुर्या हर्षं विपक्षोऽसौ । विपरीतः पुनर्न्नवेत् ॥ ९३ ॥ क्षमान्नृदस्मि किं तन्मे । विषयैर्मेति चिंतय—स्वं कलत्राक्षिविषय—स्तेषां मार्ग इहोच्यते ॥ ९४ ॥

क्षमान्नृत्पदयोग्योऽसि । ततो गुरुगुणान् न्नज ॥ गणरक्षा सदा कार्या । शक्त्यांगोपाधतः स्वतः ॥ ९५ ॥ परेणात्ते गुणे स्वीये । न कुर्यात्संमर्दं सुधीः ॥ दोषे द्वेषं पुनर्नो तत् ।

स्थितिप्रस्थितिवांछया ॥ ९६ ॥ अहं सद्रूप इत्येवं । त्वं मानं मा कृथा वृथा ॥ अक्षराणामपीह स्यात् । परावर्त्तः स्वरूपतः ॥ ९७ ॥ ईदृशे त्वयि संजाते । नैव स्यात्तत्वनिर्णयः ॥ वाला नैव प्रतीक्षंते । प्राणायामन्नवां कलां ॥ ९८ ॥

प्रत्यक्षं च परोक्षं च । प्रमाणं त्वं गुरूदितं ॥ मन्यस्व सततं येन । सर्वदर्शी मतो न्नवान् ॥ ९९ ॥ श्लोककर्तास्यतो वर्ण–विन्नक्तियतिसक्रुणान् ॥ गुरून् लघून् यथायोगं । स्थापयस्व पदेष्वहो ॥ ३०० ॥ न्यायमार्गे सदा स्थेयं । देयं दानं मनस्विने ॥ देवतत्वं मुदा ध्येयं । गेयं श्रीगुरुवर्णनं ॥ १ ॥

व्यसनं च सदा हेयं । पेयं सिद्धांतसद्वचः ॥ मेयं तत्वं गुरूद्दिष्टं । जेयं जेतव्यमादरात् ॥ २ ॥ परोपकारः कर्त्तव्यो । हर्त्तव्यो दर्प एनसि ॥ स्मर्त्तव्योऽन्निग्रहः स्वीयो । धर्त्तव्यो धर्म उच्चकैः ॥ ३ ॥ चिंतनीयं सदा शास्त्रं । वंचनीयं न मित्रहृत् ॥ शयनीयं तथा काले । न्नोजनीयं कुटुंबकं ॥ ४ ॥ कार्यं न कार्यं रन्नसा । धार्यं गुरुवचो हृदि ॥ वार्यं कुकर्म दुःखाब्धे–स्तार्यं स्वसुकृतैः कृतैः ॥ ५ ॥ वर्जनीयो दुष्टसंग–स्तर्जनीयो विकर्मकृत् ॥ अर्जनीयो गु-

माराणां पुरस्तदा ॥ ऊर्ध्वीकृत्य निजं बाहुं । जगादेवं स्फुटाक्षरं ॥ ४८ ॥

आकाशवर्त्मना चक्र–द्वयोरंतः शरं वरं ॥ क्षिप्त्वा लक्ष्यदत्तदृष्टि–स्तैलांतःप्रतिबिंबितां ॥ ॥ ४९ ॥ अधोदृगूर्ध्वसंधानी । पुत्रिकावामलोचने ॥ कनिनिकां भेत्स्यति यः । सोऽस्मत्कन्यां वरिष्यति ॥ ५० ॥ युग्मं ॥ अहंपूर्विकया केऽपि । तदाकर्ण्यासनाद् द्रुतं ॥ उत्तस्थुरपरे स्थान–स्थिता यंत्रं व्यलोकयन् ॥ ५१ ॥ तन्मध्ये केनचिद्राज–पुत्रेण त्वरितक्रमैः ॥ गत्वा यंत्रसमीपं द्राग् । खगो मुक्तः खवर्त्मना ॥ ५२ ॥

लक्ष्यच्युतं स तं वीक्ष्य । मार्गणं गुणवर्जितं ॥ स्थूललक्षो विलक्षोऽभू–त्तत्र युक्तं गतस्पृहः ॥ ५३ ॥ प्रेषणावसरे चान्यः । सदर्पोऽभूत्कुमारकः ॥ खगं च खगतं वीक्ष्य । पश्चाज्जज्ञे विषण्णधीः ॥ ५४ ॥ चक्रं विद्धं परः श्रुत्वा । पुराभूदूर्ध्वमूर्धकः ॥ विष्णुपदाश्रितं ज्ञात्वा । नीचैरासीत्ततः परं ॥ ५५ ॥ सज्जातेरपि सुमनः । कृष्णत्वं यद्ययौ शुचि ॥ शिलीमुखे गतेऽन्यत्र । तच्च चित्रकरं जने ॥ ५६ ॥ इषत्कुलग्नचक्रं तु । प्रदरं प्रेक्ष्य शून्यगं ॥ अपरः शून्यतां भेजे । क्षत्रधर्माश्रितोऽपि ही ॥ ५७ ॥ नोदस्थात्स्थानतः कश्चि–त्कश्चित् प्राह ह्य-

पाटवं ॥ कश्चिद्रागावद्धं वीक्षा–कृतेऽत्रागां न लोन्नतः ॥ ५८ ॥ इत्थं केषु विषमेषु । निषमेषु परेषु च ॥ रत्नसेनः समागत्या–ऽवदच्चंद्रोदरं वरं ॥ ५९ ॥ एभिः कुमारैः सकलाः । कलाः स्वगुरुसाक्षिकं ॥ शिक्षिता नो सदाऽभ्यस्ता–स्तेनैता विकलाः किल ॥ ६० ॥ त्वमुत्तिष्ट सता-मिष्ट । सत्प्रतिष्ट प्रदर्शय ॥ नयनानंदजननीं । राधावेधकलां कलां ॥ ६१ ॥ तत् श्रुत्वा नो-त्सुको नैव । साभिमानोऽसमानरुक् ॥ आसनात्स समुत्तस्थौ । स्थामधामा जितश्रमः ॥ ६२ ॥ तुणीरधनुषी लात्वा । गत्वा यंत्रस्य सन्निधौ ॥ राधावेधं मुदा चक्रे । तदा चंद्रोद-रोऽदरः ॥ ६३ ॥ ततः श्रीरत्नसेनेन । सेनेनः स्म प्रवेशितः ॥ सोत्सवं नगरस्यांतः । कांतस्त्वां-तसमन्वितः ॥ ६४ ॥ हर्षाकुले कुले राज्ञो । विवाहविधिवांछया ॥ परं कन्यामुखं श्याम–वर्णं वीक्ष्य जगौ नृपः ॥ ६५ ॥ वत्सेऽथ पूर्णिमास्थाने–ऽमावास्या कथमीक्ष्यते ॥ प्रतिज्ञा येन तऽपूरि । चूरिताशेषकष्टका ॥ ६६ ॥

सोऽयं चंद्रोदरो धन्यः । सौजन्यगुणभाजनं ॥ परोपकारी सकलः । सरूपः कुलजो धनी ॥ ६७ ॥ विक्रमी नयवान् सौम्यो । विद्यावान् विनयी प्रियः । तथापि ते मुखे कृष्ण

—वर्णता किमियं शुन्ने ॥ ६० ॥ चेत्सपत्नीन्नवाशंका । हृदये पग्विर्त्तते ॥ सापि त्वयात्र नो चिंत्या । यतोऽसौ पुण्यवान् खलु ॥ ६९ ॥ तदाकर्ण्य जगौ सापि । सपत्नीजनिता न मे ॥ चिंता प्रवर्त्तते किंतु । प्रतिज्ञा मे न पूरिता ॥ ७० ॥ सोऽन्यो हि राधावेधोऽस्ति । प्रतिज्ञा यस्य मे हृदि ॥ तत् श्रुत्वा सावदन्माता । विस्मिता रत्नमंजरी ॥ ७१ ॥

सुते स ते च को राधा—वेधो बुद्धिविकल्पितः ॥ सावददांतरंगं तं । विद्धि सिद्धिनिबंधनं ॥ ७२ ॥ चक्रे सत्कर्मदुःकर्म—मये ज्ञेये विवेकिना ॥ वेद्यरूपा अरास्तत्र । सृष्टिसंहारन्नाजिनः ॥ ७३ ॥ सुखवेद्याः सृष्टिरूपाः । संहारास्तद्विपर्ययाः ॥ सूक्ष्मलक्ष्यं परं तत्वं । संदेहोच्चययंतन्नृत् ॥ ७४ ॥ विचारपत्रिणा योऽत्र । तद् न्निंद्यात्स च मे प्रियः ॥ बहिर्वृत्त्या घनाः संति । तैर्मे नैव प्रयोजनं ॥ ७५ ॥

वातायनस्थयोरेवं । वार्त्तयंत्योस्तयोस्तदा ॥ राजमार्गे व्रजन् कोऽपि । श्लोकमेकं जगौ नरः ॥ ७६ ॥ राधावेधममुं शुद्धं । सुताया नृपतेः प्रियं ॥ चंडोदरो विजानाति । नान्यो वेत्तीह निश्चितं ॥ ७७ ॥ नृपश्रुतिसमं श्लोक—मेवं श्रुत्वा नृपप्रिया ॥ सुतायुता ददौ दृष्टिं ।

मुदा जालांतरे तदा ॥ ७८ ॥ पश्चि चंद्रोदरं यांतं । वंदिवृंदसमन्वितं ॥ वीक्ष्य पुत्रीं च रूपादि–सादृश्यं सा व्यलोकयत् ॥ ७९ ॥ सर्वात्मना समानत्वं । दृष्ट्वा हृष्टा समादिशत् ॥ कांचित्कर्मकरीं कुत्र । यात्यसौ त्वं विलोकय ॥ ८० ॥ सापि तद्वचसा गत्वा–ऽपृच्छत्तन्मध्यगं नरं ॥ अधुना वर्त्मनानेन । कुमारः कुत्र यात्यसौ ॥ ८१ ॥ सोऽवोचन्मतिसारस्य । मंत्रीश्वरशिरोमणेः ॥ वाक्येन देवपूजार्थं । पुरचैत्ये व्रजत्यसौ ॥ ८२ ॥ वीक्ष्य चंद्रोदरं शुद्धं । वरं पुण्यरुचिं शुचिं ॥ कलाकलापसंयुक्तं । श्वेतवाजिविराजितं ॥ ८३ ॥ सौधाग्रसंस्थिता राज–सुता हर्षभरान्विता ॥ युक्तमासीत्तदा सा त–त्पाणिग्रहणतत्परा ॥ ८४ ॥ युग्मं ॥

राज्ञी हर्षभराकीर्ण–मानसा राजसन्निधौ ॥ गत्वा सर्वं तदाचख्यौ । तत् श्रुत्वा स व्यज्ञावयत् ॥ ८५ ॥ मिष्टं वैद्योपदिष्टं च । दुग्धेऽसौ शर्करापतत् ॥ मध्ये क्षिप्रचटिकायां । घृतं च ढलितं मम ॥ ८६ ॥ चंद्रोदरेण पुत्र्या यत् । प्रतिज्ञा पूरिता मम ॥ अतोऽधुनानयोः कुर्वे । विवाहं कुलसम्मतं ॥ ८७ ॥ समग्रस्वजनान् शीघ्रं । समाकार्य विचारवित् ॥ विवाहविधिमारेभे । ततोऽसौ वृद्धवाक्यतः ॥ ८८ ॥ वाद्यमानेषु वाद्येषु । गीतनृत्यपरेषु च ॥

नटेषु बंदिवृंदेषु । पठत्सु परया मुदा ॥ ८९ ॥

ह्रियाधोमुखयोः स्वैः स्वैः । सन्मुखीक्रियमाणयोः ॥ वधूटीवरयोस्तारा-क्षणे कोलाह-लोऽजनवत् ॥ ९० ॥ तन्निशम्य नृपे चंडो-देरऽपि दिक्षु चक्षुषी ॥ क्षिप्रं प्रक्षिपति कोऽपि । राजानमिदमूचिवान् ॥ ९१ ॥ स्वामिन् वनगजः कोऽपि । विंध्याद्रिरिव जंगमः ॥ सप्तस्था-नक्षरद्दान-वारिनिर्झरमालितः ॥ ९२ ॥ गंडशैलोपमस्थूल-कुंभस्थलविराजितः ॥ शिला-तुल्यापरागांग-पार्श्वकः कृष्णवर्णयुक् ॥ ९३ ॥ अत्रागतोऽस्ति लोकानां । दर्शयन् भयमु-च्चकैः ॥ चतुर्दंतयुतो गुंज-न्मधुव्रतसमाश्रितः ॥ ९४ ॥ त्रिभिर्विशेषकं ॥

गंधहस्तिभयादत्र । शालास्थाः खलु कुंजराः ॥ पलायांचक्रिरे तेऽपि । स्तंभमुन्मूल्य वेगतः ॥ ९५ ॥ योऽश्वमुच्चालयत्युच्चैः । सप्ताश्वायाष्टमं हयं ॥ अर्पणायेव सद्दान-विराजि-करपल्लवः ॥ ९६ ॥ सूरं घूक इव स्वामिन् । कोऽपि तं नेक्षितुं क्षमः ॥ उपविष्टाः कथं यू-यं । सोऽत्र शीघ्रं समेष्यति ॥ ९७ ॥ एवं वदति चैतस्मिन् । हस्ती तत्र समाययौ ॥ तथा कुमारभूपाभ्यां । दृष्टः स कथिताधिकः ॥ ९८ ॥ दलयंतं बलं राज्ञः । कलयंतं कलिं जने

॥ पत्तिपंक्तिं पाटयंतं । गजं प्रेक्ष्यावदन्नृपः ॥ ५९९ ॥ कोऽप्यस्ति क्षत्रियाज्जातो । योऽमुं मा-
तंगमद्भुतं ॥ पीडयंतं प्रजापुंजं । रक्षयेत्स्वीयदोर्बलात् ॥ ४०० ॥ इत्युदीर्य नृपो यस्य । य-
स्य वक्त्रे स्वलोचनं ॥ ददौ स स न्यग्मुखतां । दधौ संत्यज्य धीरतां ॥ १ ॥
मत्तगजेन मत्तेन । हन्यमानं जनं घनं ॥ दृष्ट्वा कुमारसिंहोऽथ । वार्यमाणोऽपि नृभु-
जा ॥ २ ॥ दधानः परमं क्षात्रं । तेजः प्रावारमादरात् ॥ बद्धं वधूत्तरीयेण । त्यक्त्वागाद्गजस-
न्निधौ ॥ ३ ॥ प्रथमं तं सिंहनादं । मुमोच श्रवणोत्कटं ॥ यं श्रुत्वा वारणः सोऽपि । क्षणं
तस्थौ भयाकुलः ॥ ४ ॥ पश्चात्प्रेक्ष्य मनुष्यं तं । क्रोधोद्धत इलातलं ॥ कंपयन्निजवेगेन । द-
धावे कुमरंप्रति ॥ ५ ॥ वामभागेन वलितुं । न शक्नोति गजो जवात् ॥ इति तस्य तत्प्रदे-
शे । कुमारः श्रितवान् बली ॥ ६ ॥ छलेन स्वबलेनापि । दुष्टो जेय इति श्रुतिः ॥ कुमा-
रेण ततो व्यालः । करालः स्ववशीकृतः ॥ ७ ॥
तमारुरोह कुमरो । गजारोहकलाकलः ॥ राजवर्गः समग्रोऽपि । तद् दृष्ट्वा हर्षभाग-
भूत् ॥ ८ ॥ तावद्दंतावलः सोऽपि । पक्षीवोदपतद्दिवि ॥ तन्निरीक्ष्य जनश्चाभू–द्विस्मयस्मेर-

॥ २५३ ॥

लोचनः ॥ ए ॥ क्षरन्मदजलं विष्वक् । गर्जन् गर्जन्नरेण सः ॥ कुमारद्युतिविद्युन्नृत् । धारा-
धर इवाचलत् ॥ १० ॥ चक्षुःपथाद्व्यतिक्रांते । कुमारे च कलावती ॥ दध्यावहं मंदभाग्या
। न योग्या विश ईदृशः ॥ ११ ॥ गतश्चिंतामणिर्हस्ता–दंगणाच्च सुरद्रुमः ॥ कामकुंभस्तथा
गेहा–न्मुखाद्वा कवलो मम ॥ १२ ॥ अनंतपंकजा क्वाहं । क्वायं पुण्योद्भवः प्रभुः ॥ कथं
मे संगमस्तेन । यद्वैरं पुण्यपापयोः ॥ १३ ॥ यन्मातंगगतिर्विज्ञैः । पुराहं वर्णिता वशा ॥
जज्ञे तन्मे करस्पर्शा–त्पतिर्मातंगसंगतिः ॥ १४ ॥ पद्मिनी पंकजा नून–मिनस्य करगोचरं
॥ सुदिने लभते भासैः । परं दोषोदये न तं ॥ १५ ॥ अभूवं वर्णिनी पूर्वं । ललाद्याक्षरयो-
गतः ॥ अवर्णनीयतां प्राप्ता–धुना तस्य विपर्ययात् ॥ १६ ॥

मत्स्यस्य सहजं चैकं । शिक्षणीयं विवेकिना ॥ स्वपानीये गते येन । जीवं स त्यज-
ति ध्रुवं ॥ १७ ॥ कथयिष्यति लोकोऽय–मेषा योषिदकामिणी ॥ यदस्याः करसंयोगाद् । दुः-
खी जातः पतिर्नृशं ॥ १८ ॥ नरकोष्णप्रदेशाग्नो । विरहाग्निरिह स्मृतः ॥ यदग्रे शीतलः
साक्षा–च्चिताग्निः सुखकृत्तथा ॥ १८ ॥ अतो ह्यवर्णवादं तं । दुःखं विरहजं तथा ॥ छेत्तुं चि-

तां प्रविक्ष्येऽहं । सहिष्ये नैव लाघवं ॥ २० ॥ विचार्येति चिरं चित्ते । जनन्यग्रे न्यवेदयत् ॥
सावोचद्यादृशी तेऽत्र । मतिर्मेऽपि च तादृशी ॥ २१ ॥ अंगीचक्रे नृपोऽप्येवं । राजवर्गस्तथै-
व च ॥ तद् दृष्ट्वा सकलो लोकः । प्रपेदे तद्वचः शुचः ॥ २२ ॥ लोको वदति विश्वे य-त्सर्वे-
षां विदुषां किल ॥ एकैव बुद्धिस्तत्सत्य-मत्र जातं पुरेऽखिले ॥ २३ ॥ जनैर्भुवस्तदाऽखर्म ।
खर्म स्वस्वचिताकृते ॥ सखन्नाकर्पणैः शीघ्रं । व्यन्नज्यत पदे पदे ॥ २४ ॥
सुवर्णमूल्यैः सत्काष्टैः । सकाष्टैर्जनसंचयैः ॥ व्यरचयंत चितास्तत्र । शत्रुमित्रसमन्वितैः
॥ २५ ॥ तृणपूलेषु विन्यस्य । बृहद्भानुं मुखानिलैः ॥ संलग्नाः सकला लोका । उद्दीपयितु-
मादरात् ॥ २६ ॥ पुनर्नो ज्वलति ज्योतिः । सर्वेषां शोकसंजुषां ॥ ततो राजादिभिः सर्वै
-र्विमृष्टं किं नु कारणं ॥ २७ ॥ तदा राजसुता दिक्षु । चिक्षेप नयने निजे ॥ ददर्श संयतं
शांतं । कायोत्सर्गस्थितंपुरः ॥ २८ ॥ दध्यावस्य प्रभावेण । ज्वलति ज्वलनोऽत्र नो ॥ अत
एनं नमस्कृत्य । कुर्वेऽहं सफलं जनुः ॥२९॥ इति ध्यात्वा सुता राज्ञो । नृपादिजनसंयुता ॥ त-
त्र गत्वा मुनिं नत्वा । प्रोवाचावसरोचितं ॥ ३० ॥ दयानिधे त्वयाऽरोधि । वह्निः किं तपसा

ज्वलन् ॥ सांप्रतं किं न जानासि । दुःखिनं जनमेतकं ॥ ३१ ॥ कायोत्सर्गं पारयित्वा । जगौ मुनिमतल्लिका ॥ ज्ञाततत्वापि किं मुग्धे—वाधुना त्वं प्रलक्ष्यसे ॥ ३२ ॥

भृगुपाताग्निक्षुत्तृष्णा—कंठपाशजलादिना ॥ म्रियते जंतुना यच्च । तन्निषिद्धं जिनागमे ॥ ३३ ॥ सुश्रेयसो जनस्यापि । मरणैरेतदुद्भवैः ॥ लोके ह्यपगतिप्राया । व्यंतराणां गतिर्भवेत् ॥ ३४ ॥ आत्महत्या च सर्वत्र । निषिद्धास्ति बुधैरिह ॥ अधुना यच्च कुर्वंति । सुबुद्धिरहितं हि तत् ॥ ३५ ॥ अतः कदाग्रहं मुंच । जिनधर्मं प्रपालय ॥ अत्रामुत्र सुखं यस्मा—द्भवेत्ते भुवनाद्भुतं ॥ ३६ ॥ तन्निशम्य जगौ सापि । तपस्यां देहि मे मुने ॥ उभयभ्रष्टता येन । मम स्यान्नैव संसृतौ ॥ ३७ ॥ सोऽवोचदधिकं यत्ते । भदे भोगफलं कलं ॥ कर्म शर्मकरं तेन । चिता दीक्षा च नोचिता ॥ ३८ ॥ गृहस्थापि शासनस्य । भविष्यासि प्रभाविका ॥ यस्यार्थे तेऽयमारंभो । दिने तुर्ये स एष्यति ॥ ३९ ॥

नृपोऽपृच्छत्केन नीतः । कथं वासौ समेष्यति ॥ मुनिर्जगौ च वैताढ्ये । विद्यते मल्लिकापुरी ॥ ४० ॥ राजा रत्नांगदस्तत्र । वरविद्याविशारदः ॥ लीलावतीकुक्षिभवा । रुक्मिणी

तस्य कन्यका ॥४१॥ ह्यस्तने दिवसे तां स । दृष्ट्वावोचत्सभासदः ॥ अस्या योग्यो वरः को-
ऽपि । विद्यते वा न कथ्यतां ॥ ४२ ॥ तेऽवोचन्नेतदधिकः । कांपील्यनगरेऽधुना ॥ चंद्रोदर-
कुमारोऽस्ति । श्रीरामनृपनंदनः ॥ ४३ ॥ तव जामातरं हस्ति-रूपविद्याधरेण सः ॥ अहा-
रयत्सुतोद्वाह-कृते तद्वचनश्रुतेः ॥ ४४ ॥ सानंदमानसेनासौ । कुमारो मानपूर्वकं ॥ विद्या-
धरनृपेणोच्चै-र्विवाहार्थं निमंत्रितः ॥ ४५ ॥ स्वभावेन स संतुष्टः । कुमरः स्मरविग्रहः ॥
वाचंयम इवोदारं । सारं वच उपाददे ॥ ४६ ॥ पाणिपीडनमेवात्र । स्त्रीयोगात्पाणिपीडनं ॥
भवत्येव नृणां तेन । न करिष्याम्यहं तकं ॥ ४७ ॥ एकभार्यां विना न स्या-द्गृहस्थस्य क-
दाचन ॥ गृहकार्यं प्रकुर्वत्या । गृहिण्यैव गृहं यतः ॥ ४८ ॥ एकपत्नीव्रतरत । ईश्वरोऽभून्म-
हाव्रती ॥ स एव द्वितीयासक्तो । जने जज्ञे महानटः ॥ ४९ ॥ एका ह्येका विवेकज्ञा । वशा
भवति चेद्दिशां ॥ परया परया किं स्या-त्कांतया कांतया तदा ॥ ५० ॥

पुमानेको द्वितयः सन् । विधुवद्वर्धतेतरां ॥ सद्वितीयो द्वितीयस्तु । स एव क्षीयतेऽधि-
कं ॥ ५१ ॥ अपिच-द्वे भार्ये पथि च क्षेत्रं । प्रातिभाव्यं कुमित्रता ॥ अजीर्णे भोजनं नैव

। पंच दोषाः स्वयं कृताः ॥ ५२ ॥ द्विजार्यः पुरुषः साक्षी । न भवेत्कूटभाषणात् ॥ राट्कुलादौ च किं तेन । पाणिग्रहणकर्मणा ॥ ५३ ॥ पुनर्जगाद विद्याभृ–द्विनयेन कृतांजलिः ॥ परस्य प्रार्थनाभंगं । न कुर्वंति महाशयाः ॥ ५४ ॥ कुमुद्वतीव मत्पुत्री । तव राजन् करग्रहं ॥ संप्राप्य केवलं चारु । मुदाढ्या भाविनी भृशं ॥ ५५ ॥ अतः करग्रहं चास्याः कुरु सत्वरमुच्चकैः ॥ एषा कदापि नो भाष्या । पश्चात्स्वच्छाशयान्यया ॥ ५६ ॥ इत्यादिविविधैर्वाक्यै–रुपरोध्य कुमारराट् ॥ विवाहितः पुनः सोऽत्र । सकलत्रः समेष्यति ॥ ५७ ॥

अनर्थदंमरकार्थ–मभिस्तंभः कृतो मया ॥ राजन् शोकमतस्त्यक्त्वा । धर्मं कुरु दयामयं ॥ ५८ ॥ निगद्येति मुनिर्व्योम्नि । ययौ जंगमतीर्थकः ॥ राजाद्याः सकला लोका–स्तत्र मंत्रियुताः स्थिताः ॥ ५९ ॥ लात्वा कुमारं यास्यामः । पुरमध्येऽन्यथा न हि ॥ इति निश्चयसंयुक्ता । मुक्ताः कार्यभरैः परैः ॥ ६० ॥ युग्मं ॥

चतुर्थेऽह्नि समायाते । दिवा नागात्कुमारराट् ॥ ततः सशोकास्ते लोका–स्तदा प्रोचुः परस्परं ॥ ६१ ॥ मायाविनात्र मुनिना । वयं सर्वेऽपि वंचिताः ॥ चितां पुनः कुरुध्वं भो ।

यथा दुःखं न दृश्यते ॥ ६२ ॥ तेषां तदुद्यमं दृष्ट्वा । जगाद कुमरी जनान् ॥ कल्पांतेऽपि चलेन्नैव । मुनीश्वरवचोऽखिलं ॥ ६३ ॥ एवं संधीरिता लोकाः । स्थितास्तद्वचसा कृशाः ॥ रात्रावपि सावधानाः । प्रधानाद्यास्तदाऽभवन् ॥ ६४ ॥

निशायां विगताशायां । गगने शब्दमुच्चकैः ॥ एवं ब्रुवाणयोर्वाढं । कयोश्चिच्छुश्रुवुर्जनाः ॥ ६५ ॥ एको वक्ति ममाभीष्टा–मुद्वहेमां क्व यास्यरे ॥ त्वत्तो बलादिमां लास्ये । वीरभोज्या वसुंधरा ॥६६॥ मया व्यूढा परः प्राह । किमाछेत्तुमिहेच्छसि ॥ एह्येहि त्वरितं येन । छिनद्मि तव मस्तकं ॥ ६७ ॥ ततः संभ्रांतचित्तास्ते । दृशं व्योम्नि ददुः समे ॥ आकर्णयंश्च खे खड्ग–खाट्कारान् कर्णदुस्सहान् ॥ ६८ ॥ तत् श्रुत्वा जगदुर्लोकाः । कुमारो मा भवत्वसौ ॥ चेद्भवेज्जयतात्तर्हि । यथा शं सर्वदेहिनां ॥६९॥ एवं वदति सर्वस्मिन् । लोकेऽस्तोकेऽपतद्दिवः ॥ कश्चिद्व्यसुर्वसुव्रात–दीपिताशः पुमान् परः ॥ ७० ॥

चंचलं जीवितं त्यक्त्वा । त्वया वव्रे सुरांगनाः ॥ सहिष्येऽहं कथं नाथ । त्वां विना दुःखमुल्बणं ॥ ७१ ॥ एवं विलापं कुर्वंत्या । वनितायाः विहायसि ॥ अभवन् श्रुत्वा रुदितं ।

लोकाः शोकाकुलास्तदा ॥ ७२ ॥ नृपो दीपमथानाय्य । पुमांसं पतितं मृतं ॥ वीक्षांचक्रे कुमारं स । उपलक्ष्य ततोऽरुदत् ॥ ७३ ॥ ज्ञात्वा कुमारी कुमरं । परासुं परया शुचा ॥ चिताप्रवेशसामग्रीं । कारयामास किंकरैः ॥ ७४ ॥ राजा राज्ञी च लोकोऽपि । सर्वस्तत्कर्मकार्यभूत् ॥ चितामारोप्य कुमरं । स्नात्वा च कुमरी ततः ॥ ७५ ॥ आराधनाविधिं कृत्वा । स्मृत्वा पंचनमस्कृतिं ॥ ददाति झंपां यावत्सा । कुमारो व्योम्नि तावता ॥ ७६ ॥ समेत्य स्वप्रियां प्राह । साहसं मा कुरु द्रुतं ॥ स्थिरा भव यतो लक्ष्मीः । स्थिरताभाजि संभवेत् ॥ ॥ ७७ ॥ त्रिभिर्विशेषकं ॥

उपरिष्टात्ततः साप्या-लोकयल्लोकसंयुता ॥ तदा सर्वप्रदामोदा-त्कुमारं सारविक्रमं ॥ ॥ ७८ ॥ विमानाद्भसोत्तीर्य । कुमारो भूमिचार्यभूत् ॥ परिवारयुतो राजा । सहर्षवदनोऽजनि ॥ ७९ ॥ नृपं नत्वा कुमारोऽपि । सुस्थाने चोपविष्टवान् ॥ व्योमयुद्धं दृष्टियुद्धं । राजा तत्पृष्टवान् पटु ॥८०॥ दुष्टदेवीकृतं किंचि-त्सोऽवक् भद्र भविष्यति ॥ एवं जल्पे क्रियमाणे । मृतकं च खमुद्ययौ ॥ ८१ ॥

सर्वेषां हि पुनर्जन्म । तदासीत्कुमरस्य च ॥ विशेषेण ततस्तस्मिन् । क्षणे जातः क्षणो महान् ॥ ७२ ॥ सुखावेशः प्रवेशः स । सर्वेषां समभून्पुरे ॥ विशेषात्तु कुमारस्य । परिणीतागतस्य च ॥ ७३ ॥ प्रमोदेन पुना राजा । विवाहाधिकमुत्सवं ॥ कृत्वा ददौ कुमाराय । सौदिरं मंदिरं वरं ॥ ७४ ॥ स्वगेहाधिकसौख्येऽपि । रतिं लेभे परं न सः ॥ वासः श्वसुरगेहे य–त्र शोभायै महात्मनां ॥ ७५ ॥

पितृमातृपदांभोज–चंचरीकः स संमदात् ॥ अन्यदा चलनायाज्ञां । नृपतेस्तु व्यमार्गयत् ॥ ७६ ॥ कुमाराय गजाश्वादि । तदा राजा ददौ मुदा ॥ गमनस्य तथादेशं । सवधूकाय कार्यवित् ॥ ७७ ॥ चीवराभरणैः पुत्रीं । सन्मान्य नृपतिर्जगौ ॥ जिनध्यानं न मोक्तव्यं । भोक्तव्यं दानपूर्वकं ॥ ७८ ॥ अभक्ष्यानंतकायादि । त्याज्यं न्याय्यं धनं धनं ॥ सप्तक्षेत्रीषु संयोज्यं । भोज्यं काले च सात्म्यतः ॥ ७९ ॥ कार्यः सदार्यसंसर्गो । निसर्गोदयकारणं ॥ असतीजनव्युत्सर्गो । दुर्गो ब्रह्ममहीपतेः ॥ ८० ॥ सम्यक्त्वं सततं धार्यं । वर्जनीयं कुकर्म च ॥ क्रोधश्च विफलीकार्यः । सपत्नीषु च मत्सरः ॥ ८१ ॥

इत्यादि विविधां शिक्षां । श्रुत्वा प्रोवाच राजसूः ॥ तात कृत्यं भवत्प्रोक्तं । श्रुतं सर्वं मयाऽनघं ॥ ९२ ॥ अबलायाः परं बुद्धिः । प्रायेण भवतीह न ॥ बालायास्तु विशेषेण । हृदि तिष्ठति तन्न हि ॥ ९३ ॥ अतो यथार्थनामास्त्य–मात्यो धर्मरुचिस्तु यः ॥ प्रेष्यतां स मया सार्द्धं । यथा धर्मं सदादिशेत् । ९४ ॥ तत् श्रुत्वा जनको दध्यौ । पुत्र्या मे सुंदरं वचः ॥ कथितं कुमरस्येदं । परं वच्मीति तं जगौ ॥ ९५ ॥ कुमारासौ ब्रह्मचारी । सदा धर्मोपदेशकः ॥ अतः पुत्र्या समं चैनं । प्रेषयामि तवाज्ञया ॥ ९६ ॥ भमिति प्रतिपन्नेऽसौ । कुमारेण सहाचलत् ॥ कियद्भिर्दिवसैः सोऽगा–त्स्वं पुरं सैन्यसंयुतः ॥ ९७ ॥ पित्रा प्रवेशो विदधे । स्वपुत्रस्य च सम्मदात् ॥ कलत्रद्वययुक्तस्य । वियुक्तस्य कुकर्मणा ॥ ९८ ॥

ततश्चंडोदरे राज्य–भारं स्फारं निवेश्य राट् ॥ श्रीरामनामा प्रव्रज्यां । गुरोः पार्श्वे ललौ तदा ॥ ९९ ॥ धीसखे राज्यचिंतां स । आरोप्य गुणरंजितः ॥ राजपुत्र्यां पवित्राया–मनुरक्तोऽभवन्नृपः ॥ १०० ॥ दृशापि नेक्षते किंतु । विद्याधरसुतां च तां ॥ तद् ज्ञात्वा हृदये दध्यौ । राजपुत्री कलावती ॥ ? ॥ एषा मम भगिन्येव । कुलजा पाणिपीडिता ॥ अ-

तोऽपमानमेतस्या–स्तन्न युक्तं नयाध्वनि ॥ २ ॥
राज्ञो भवंति यावंत्यो । गृहिण्योंतःपुरे वरे ॥ वारक्रमेण तावंत्यो । मान्या लंघ्या न तु स्थितिः ॥ ३ ॥ एवं न्यायोऽन्यथाऽपायो–ऽतो नृपं प्रतिबोधये ॥ यथा पापं भवेन्नैव । मम राज्ञोऽपि सर्वथा ॥ ४ ॥ तया मृदुगिरा प्रोचे । लब्ध्वावसरमेकदा ॥ रामराजोपमा स्वामिन् । सर्वत्र परिकीर्त्यते ॥ ५ ॥ तस्मिंस्त्वमुपविष्टोऽसि । शिष्टोऽसि शुभकर्मणा ॥ पृष्टव्योऽसि परं किंचि–न्मया ह्यज्ञानमूढया ॥ ६ ॥
नृपेण जगदे भद्रे । पृच्छ स्वेच्छावशाद्भृशं ॥ साह राज्ञः स्वभवने । प्रिया बह्व्यो भवंत्यहो ॥ ७ ॥ परं वारक्रमेणास्ते । गतिर्वा स्वेच्छया प्रभो ॥ सोऽवग् वारक्रमेणैव । सहजो गदितो नयः ॥ ८ ॥ विशेषस्य वशात्किंतु । प्रकाराः स्युरनेकशः ॥ आयव्ययविचारेण । स्वयं ज्ञेया विवेकिना ॥ ९ ॥ ततो राजसुताऽवोचत् । कुलजा गुणशालिनी ॥ विद्याधरसुता चैषा । न वारोऽस्याः कथं विभो ॥ १० ॥ तदाकर्ण्य नृपोऽजल्प–द्भद्रे त्वं भद्रकाशया ॥ निर्गुणेष्वपि जीवेषु । गुणवीक्षणलक्षणा ॥ ११ ॥ हिमानीव बहिः शीता । परं दाहकरा परे ॥ एषा

विद्याधरसुता । तेन नैतां त्यजाम्यहं ॥ १२ ॥ त्वयापि संगतिश्चास्या । दास्या इव विचक्षणे ॥ कार्ये कार्या बहिर्वृत्त्या । नांतर्वृत्त्या कदाचन ॥ १३ ॥

उत्तमैः सह सांगत्यं । पंडितैः सह संकथा ॥ अलुब्धैः सह मित्रत्वं । कुर्वाणो नावसीदति ॥ १४ ॥ अवंशोऽपि गुणप्राप्त्या । धर्मत्वं व्रजति क्षितौ ॥ तेन हीनः सुवंशोऽपि । दंडत्वं प्राप्नुयात्पुमान् ॥ १५ ॥ रथ्यांबु गंगासंगत्या । महादेवेन मन्यते ॥ मद्यभाजनसंसर्गाद् । दुग्धं चापि जनैर्न तु ॥ १६ ॥ तन्निशम्य जगौ सापि । मान्यैषा मे त्वदाश्रिता ॥ निर्मलाक्षियुना यद्व–त्काणा दृष्टिरिहार्च्यते ॥ १७ ॥ दोषाकरो वक्रतनु–रपि चंद्रः शिवेन वै ॥ उत्तमांगे धृतः शश्व–द्दोषश्चित्यो न चाश्रिते ॥ १८ ॥ अतः प्रसद्य सद्योऽस्यै । वारकं देहि देव हे ॥ सोऽवदद्दुष्टसर्पं हि । दुग्धं पाययसि स्वकं ॥ १९ ॥ तद्वाक्यात्तु नृपेणास्या । वारो दत्तो रुचिं विना ॥ यतोऽनुल्लंघ्यवचना । शुचिनाचरितेन सा ॥ २० ॥ रुक्मिण्या वारके सापि । जिनध्यानधरा निशि ॥ देवलोकाधिकं सौख्यं । मन्यते मन्युवर्जिता ॥ २१ ॥

सा धर्मरुचिना साकं । विचारं धर्मगोचरं ॥ तदा करोति संतोष–पोषयुक्ता दिवानिशं

विशेषादरसंयु-
॥ २२ ॥ सम्यक्त्वमूलं मच्छ्राद्ध—धर्मकर्म गुणास्पदं ॥ त्रिधिज्ञा विदधात्येषा । विशेषादरसंयु-
॥ २२ ॥ सम्यक्त्वमूलं मच्छ्राद्ध—धर्मकर्म गुणास्पदं ॥ त्रिविज्ञा विदधात्येषा ।

॥ २२ ॥ सम्यक्त्वमूलं मच्छ्राद्ध—धर्मकर्म गुणास्पदं ॥ त्रिधिज्ञा विदधात्येषा । विशेषादरसंयु-
ता ॥ २३ ॥ आवालब्रह्मचारी तु । षष्टाष्टमतपःपरः ॥ सदाशुद्धिर्धर्मरुचि—र्दशधा रुचिसंयुतः
॥ २४ ॥ स्वपुत्रीमिव भूपस्य । पुत्रीं स वहुमन्यते ॥ सम्यक्त्वधारिणां यस्मा—द्वंधोः साध-
र्मिकोऽधिकः ॥ २५ ॥ युग्मं ॥ चित्ते राजसुता सैवं । चिंतयेच्चेतनान्विता ॥ रतिं पतिश्चेत्कु-
रुते । रुक्मिण्यां मे तदा वरं ॥ २६ ॥

यथा सदाप्यहोरात्रं । धर्मं कुर्वे समाहिता ॥ इति ध्यानपरा नित्यं । गमयेत्कालमात्म-
नः ॥ २७ ॥ रुक्मिणी तु मुखे मिष्टा । विनष्टा हृदि भावयेत् ॥ मत्सपत्न्याः कदा भावि ।
मरणं शरणं श्रियः ॥ २८ ॥ इति चिंतावशादेषा । रतसौख्येऽपि दुःखिनी ॥ गमयामास ही
कालं । करालं दुष्टचिंतनैः ॥ २९ ॥ अन्यदा नृपतिस्तस्या । वारके गृहमागमत् ॥ गवाक्ष-
जालकैर्धर्म—रुचिं प्रेक्ष्य जगौ मुदा ॥ ३० ॥ धर्मध्यानघना विश्व—विश्वे संति घना जनाः ॥
परं धर्मरुचेस्तुल्यः । कुल्यः कोऽपि न दृश्यते ॥ ३१ ॥ तन्निशम्य सखीनां सा । मुखानि
प्रेक्ष्य न्यक्मुखी ॥ भूत्वा हास्यं चकाराशु । शंकाभून्नृपतेस्ततः ॥ ३२ ॥ तासां मुखविकारं

स । दृष्ट्वाचष्ट विशिष्टधीः ॥ अस्य धर्मरुचेर्धर्म—लोपः किं ददृशे किल ॥ ३३ ॥ एका तासु जगादाशु । दृष्टा धर्मेऽस्य सद्रुचिः ॥ भवत्पट्टमहादेवीं । मुखे ख्याति सुतां पुनः ॥ ३४ ॥ चित्तं तस्यान्यथा चेति । जल्पंती भंगुरभ्रुवा ॥ रुक्मिण्या सा न्यषेध्याली । स्त्रीणां कपट-मुत्कटं ॥ ३५ ॥ युग्मं ॥ नृपोऽवोचद्यदत्राहो । दोषलेशप्रकाशनं ॥ तत्सुधायां विशभ्रोग—शंका शंकितचेतसां ॥ ३६ ॥

रुक्मिणी प्राह रोषेण । स्फुरदोष्टपुटा ततः ॥ यो यत्र लीनः स तत्र । क्षीणः सत्येति लोकवाक् ॥ ३७ ॥ यो यत्र रक्तस्तस्मिन् स । गुणमेव प्रपश्यति ॥ व्याघ्री स्वकीयसूनुं हि । भद्रं सौम्यं च मन्यते ॥ ३८ ॥ अनया च यदुक्तं प्राक् । युष्माकं दर्शयामि तत् ॥ परम-स्यां परो राग—स्तेन तद्विफलीभवेत् ॥ ३९ ॥ राजा प्रोवाच युक्तं चे—द्भविष्यति तवोदितं ॥ तदाहं दर्शयिष्यामि । तस्यास्तस्य च तत्फलं ॥ ४० ॥ सावदत्सायमद्यैव । विलोक्यं तर्हि चेष्टितं ॥ अनयोरित्युदीर्यासौ । संस्थिता व्रततत्परा ॥ ४१ ॥ सापि संध्याक्षणे पूजां । विधाय विधिनार्हतः ॥ धम्मिल्लं धर्मरुचिना । बंधयामास मुग्धधीः ॥ ४२ ॥ साथ तं दर्शया-

कृपा- ॥ ४३ ॥ सोऽपि कोपांधलो जात-स्तद्वीक्षणात्क्षणादपि ॥ ४३ ॥ कृपा-
मास । जालद्वारेण नृपतेः ॥ सोऽपि कोपांधलो जात-स्तद्वीक्षणात्क्षणादपि ॥ ४४ ॥
णं च समाकृष्य । देव्या धम्मिल्लमच्छिदत् ॥ करौ धर्मरुचेश्चापि । विनैव च विचारणां ॥४४॥
अरे सतीछलेन त्वं । रे त्वं धर्मछलेन च ॥ विप्लावयसि मल्लो–मिति जल्पन् स निर्ययौ ॥
॥ ४५ ॥ कलावती सती चित्ते । चिंतासंतापसंभृता ॥ दध्यौ पुरा कृतं कर्म । कर्कशं मे स-
मागतं ॥ ४६ ॥ केशाः क्लेशा इवैते मे-ऽलं चिता दुःखसंचिताः ॥ यच्छिन्नाः स्वामिना शीघ्रं
। तत्सुंदरतरं कृतं ॥ ४७ ॥

परं मृषा कलंकेन । निर्मलं ह्यतुलं कुलं ॥ कलंकितं मे यत्पत्या । तद्दुःखं खाटूकरो-
ति दी ॥ ४८ ॥ असौ साधोर्धर्मरुचेः । शयच्छेदं चकार यत् ॥ क्षमाभृदपि मच्चित्तं । चितेव
ज्वलति ततः ॥ ४९ ॥ सदाचारो गुणाधारो । निर्विकारो निरंतरं ॥ सविचारो धरासारो ।
धर्मोऽयं मूर्त्तिमान् भुवि ॥५०॥ अस्य यच्च कलंकोऽयं । स धर्मस्यैव केवलं ॥ जिनधर्मद्वील-
नातो-ऽनंतसंसारता नृणां ॥ ५१ ॥ अज्ञानांधाश्च मनुजा । दनुजा दुष्टचेतसः ॥ वृंदारका-
स्तु विदुरा । भवंति भुवने परं ॥ ५२ ॥ शासने कोऽप्यधिष्ठाता । पाता नो वर्त्ततेऽधुना ॥

प्रशस्यायाः । कुंतलस्नानवारिणा ॥ ७४ ॥ जिनपूजारतस्याहो । अजिह्मब्रह्मचारिणः ॥ क-
रात्तेन स्नपयंतु । राजानं रोगशांतये ॥ ७५ ॥ युग्मं ॥

तत् श्रुत्वा सचिवैः सद्यः । सतीवर्गः पुरःस्थितः ॥ समग्रोऽपि समाहूतो । वारश्च ब्रह्म-
चारिणां ॥ ७६ ॥ सतीकेशस्नानवारि—ब्रह्मचारिकरस्थितं । कृत्वा सेचनमीशस्य । कारितं स-
चिवैश्चिरं ॥ ७७ ॥ परं नारकसादृश्या । वेदनाऽजनि भूपतेः ॥ ततो विशेषतस्तेषां । चिंता-
भूच्चेतसि क्षणं ॥ ७८ ॥ तद् दृष्ट्वा सचिवाः केऽपि । जजल्पुरंबरध्वनिः ॥ मृषाभूद्भूपतेर्दोषो ।
न शशाम यतोऽधुना ॥ ७९ ॥ जिनदासो बृहन्मंत्री । जगादाशेषमंत्रिणां ॥ पुरस्तात्पटु-
गीरेवं । खेवाणी न मृषा भवेत् ॥ ८० ॥

किंतु स्तोका महासत्य । आबालब्रह्मचारिणः ॥ जिनपूजाकराश्चापि । न रोगोपशमो
ह्यतः ॥ ८१ ॥ क्षणं विमृश्य मंत्र्यूचे । करे चिंतामणौ स्थिते ॥ गेहांगणे कामधेनौ । बहि-
रेतद्गवेषणं ॥ ८२ ॥ धर्मरुचिपट्टदेव्यो—र्गृहस्थितयोः पुनः ॥ अन्ययोश्च ब्रह्मचारि—सत्योरा-
नयनं पुरात् ॥ ८३ ॥ तन्निशम्य नृपः प्राह—भिधानं मा गृहाण भोः ॥ एतयोश्चरितं येन ।

गृहमध्ये तथा दी-
नेदृशं किल वर्त्तते ॥ ८४ ॥ वह्निश्चंडमसं ज्ञात्वा । किरंतममृतं दृशोः ॥ इष्टं
प्र–मुल्लस्पर्शं च पाणिना ॥ ८५ ॥ राज्ञः समीपमागत्य । जिनदासो विवेकवान् ॥ दाहकृत्तथा ॥
निवेदयामास । दक्षलक्षशिरोमणिः ॥ ८६ ॥ चंडोऽमृतमयोऽप्यापि । पावको
तेदेतयोर्विप्लवं मा । वद राजन् विचारय ॥ ८७ ॥ ज्ञानस्य प्रत्ययः सारं । यद्वदंति कवी-
श्वराः ॥ तदद्य सद्य आयातं । व्योमवाणीदृशी यतः ॥ ८८ ॥ इमौ चेत्सत्यसंयुक्तौ । रोग-
शांतिस्तदा तव ॥ अन्यथैतद्विपर्यासः । सम्यग्विज्ञास्यतेऽधुना ॥ ८९ ॥ जगाद नृपतिर्देव्या
। वेणी कृत्ता करौ तथा ॥ धर्मरुचेः कथं तेन । सत्यासत्यपरीक्षणं ॥ ९० ॥
तन्निशम्याऽवदन्मंत्री । हा राजन् किं कृतं त्वया ॥ अविमृश्यतया यच्च । क्रियते तन्न
शोभनं ॥ ९१ ॥ तवांगे या च पीडेयं । साप्येतत्कर्मजा यतः ॥ अत्युग्रपुण्यपापाना–मिहै-
व फलमश्नुते ॥ ९२ ॥ भूमौ स्खलितपादानां । भूमिरेवावलंबनं ॥ इति न्यायात्तव व्याधि–
रान्याभ्येव प्रयास्यति ॥ ९३ ॥ कृत्तकेशावशेषाणां । वारिणा दुःखहारिणा ॥ छिन्नाभ्यामपि
हस्ताभ्यां । सेवये त्वां शिवालये ॥ ९४ ॥ इत्युदीर्य सदुःखात्मा । द्विगुणं गुणसंयुतः ॥ ग-

त्वा राज्ञीसमीपं स । प्रोवाच रचितांजलिः ॥ ए५ ॥ देवि राजा स्वदोषाप्त्या । पीडां लेन्ने घनां ज्वरात् ॥ तमोमय्या तथापि त्वं । गुणेनामुं प्रसज्जय ॥ ए६ ॥

अहो शीलस्य माहात्म्यं । देवि ते वर्त्तते महत् ॥ पुनर्नवः केशपाशो । येन मौलौ प्रदृश्यते ॥ ए७ ॥ शीलेन ज्वलनोऽप्यंन्नः । सर्पो रज्जुसमो न्नवेत् ॥ कालकूटं सुधातुल्यं । शत्रुर्मित्रं नृणां पुनः ॥ ए८ ॥ रोगः शांतिजलेनेव । तव कुंतलवारिणा ॥ राज्ञो व्रजतु दूरेऽयं । प्रन्नावसदनेऽधुना ॥ एए ॥ ततः पानीयमानीय । केशान्प्रक्षाल्य वारि तत् ॥ सुवर्णकलशे न्यस्य । ययौ धर्मरुचेः पुरः ॥ ६०० ॥ तत्करावक्रतौ वीक्ष्य । पतितौ च पुरातनौ ॥ मुदा जगाद ते शीलं । देवानामपि डुर्लन्नं ॥ १ ॥ देवपूजाप्रन्नावस्ते । सुन्नावजनितोऽद्भुतः ॥ सुवर्णपुरुषस्येव । करौ न्निन्नौ यतो नवौ ॥ २ ॥ नपकारकराः संतो । ह्यपकारपराः परे ॥ चंदनागुरुकर्पूरे–क्ववोऽमीषां निदर्शने ॥ ३ ॥ आगच्छ स्वच्छ राज्ञीं ते । त्वं बुधोऽसि यतो जने ॥ तमोग्रहात्तं त्रायस्वा–धुना दोषाकरं ह्यतः ॥ ४ ॥ सोऽपि त्वरितमुछाय । तथा गत्वा नृपांतिकं ॥ अमृतेन करात्तेन । संतापं तस्य चाच्छिनत् ॥ ५ ॥ गततापोऽपि राजा स । पश्चात्ताप-

परायणः । रुच्या धर्मरुचिं शुच्या । क्रमयित्वाऽस्तवीदिति ॥ ६ ॥ मंत्रिंश्चंद्रोदरं विद्धि । गुरुकांताकलंकगं ॥ मिथ्यादृग्दोषगमपि । तथा धर्मरुचिं शुचिं ॥ ७ ॥



गतं प्रमुखोपमानं । हुतं मे कर्मणामुना ॥ सुदिनेऽपि तेन ताप–स्तपनादधिको ह्यभूत् ॥ ८ ॥ तन्निशम्य जगौ मंत्री । संतापं मा कृथा नृप ॥ राजा भिनत्ति लोकानां । करप्रकरमीश यत् ॥ ९ ॥ सुकराः किंतु जायंते । पुनस्ते देवतावशात् ॥ तपनोत्थस्तु संतापो । नृणां जाड्यहरो भवेत् ॥ १० ॥ रुक्मिणीसहितो राजा । कलावतीसतीगृहं ॥ गतो नतो महाभक्तया–ऽनया विनयतोऽर्चितः ॥ ११ ॥ अधिकं लज्जितस्तेना–ऽधोमुखीभूय तस्थिवान् ॥ भूमिं विविक्षुरिव किं । मार्गयन्मार्गमादरात् ॥ १२ ॥ तादृशं भूपतिं दृष्ट्वा । सा जगौ गौरवास्पदं ॥ स्वामिन् यथास्याः पतयो । भवंतो मे तथा पुनः ॥ १३ ॥ निरीक्षध्वमतो यूयं । मामपि प्रणतां विभो ॥ क्रमाधीशा हि सर्वेषु । समाताभाजिनः सदा ॥ १४ ॥



तदाकर्ण्याविदद्राजा । विचारविधुरोऽप्यहं ॥ अविमृश्यकरत्वेन । जज्ञे सन्नामनाशकः ॥ ॥ १५ ॥ त्वन्नाशकरणतो मे । नापितत्वमथैव वै ॥ घटते नो पतित्वं वा । क्रमाधीशत्वम-

प्यहो ॥ १६ ॥ ततो मंत्री जगादैवं । कलावत्याः परीक्षणं ॥ नृपतिश्चेन्न कुरुते । कोऽन्यः कुर्यात्तदा हृदा ॥ १७ ॥ आज्ञायां लक्षणयुक्तान्या—मपवादो विधिर्बली ॥ मुक्त्वोत्सर्गं पुरासेवि । ततो दत्तस्त्वयापि सः ॥ १८ ॥

समानशीलैः संसर्गो । रुचिरो गदितः श्रुते ॥ योगवन्नवतां योगो । महानंदकरोऽस्त्वतः ॥ १९ ॥ रुक्मिणी तु कलावत्या । लगित्वा पादयोस्तदा ॥ उवाच सर्वप्रत्यक्षं । बाष्पपूर्णविलोचना ॥ २० ॥ यद्देवि त्वत्पतिः पूर्वं । मदर्थे हारितो हठात् ॥ कारितो व्योम्नि युद्धं च । दर्शितं शबमुच्चकैः ॥ २१ ॥ तव मृत्युकृते सर्वं । मयैतद्विहितं पुरा ॥ मुधा कलंको दत्तस्ते—ऽधुना पापनिबंधनं ॥ २२ ॥ विरूपं चिंतितं यच्च । नित्यं त्वदुपरि स्वयं ॥ तत्क्षंतव्यं दयां कृत्वा । महासति हितप्रदे ॥ २३ ॥

ततः कलावती प्राह । न दोषस्तव कश्चन ॥ स्वकर्मणः फलं भुंक्ते । सर्वोऽन्योऽत्र निमित्तभृत् ॥ २४ ॥ अपुनःकरणासक्तं । मिथ्यादुष्कृतमादरात् ॥ तदा सर्वैः प्रदत्तं च । निःशल्यगुणकारणं ॥ २५ ॥ स्वस्वस्थित्या स्थिताः सर्वे । गर्वेण परिवर्जिताः ॥ कालं निर्गमयामा-

॥ २७५ ॥

सु–र्वरसौख्यसमन्विताः ॥ २६ ॥ धर्मघोषाभिधाचार्या । बहुशिष्यपरिवृताः ॥ आजग्मुरन्य-
दोद्याने । ज्ञानेन कलिता मताः ॥ २७ ॥ उद्यानपालकात्तच्च । ज्ञात्वा दत्वास्य सद्धनं ॥ या-
प्ययानमथारुह्य । राजागाद्गुरुमर्चितुं ॥ २८ ॥ वंदित्वा विधिवत्तत्र । निविष्टे नृपतौ गुरुः ॥
देशनां विदधे भव्य–जनचित्तप्रमोदिनीं ॥ २९ ॥

वित्तानुसारतो दानं । शीलं चित्तानुसारतः ॥ प्रज्ञानुसारतः शास्त्रं । तपः कायानुसार-
तः ॥ ३० ॥ भावनानुगता जीवा । यावच्चलति शर्मकृत् ॥ धर्मकर्म मुदा ताव–त्कुर्वंति क-
पटं विना ॥ ३१ ॥ यत्र शक्तिर्भवेन्नैव । तत्र केवलभावना ॥ मृगवद्बलदेवर्षि–रथकारनिदर्श-
ने ॥ ३२ ॥ वचोवृत्त्या जनस्तुत्या । भावं यं दर्शयंति तं । सत्यां शक्तौ न कुर्वंति । स भा-
वो न भवेदिह ॥ ३३ ॥ तथाहि–क्षितिप्रतिष्टितपुरे । पुराभूद्धननामकः ॥ श्रेष्टी धनचयैर्यु-
क्तो । मुक्तो दानगुणेन च ॥ ३४ ॥ धनदत्तादयस्तस्य । संति पुत्रा विवेकिनः ॥ उदारा ज्ञा-
तिशृंगारा । राज्याधाराः स्वभावतः ॥ ३५ ॥ परं पितृभयाद्दानं । दीनादौ मानमुत्तमे ॥ न
शक्नुवंति ते दातुं । यतः पुत्राश्चतुर्विधाः ॥ ३६ ॥ एकेऽधिकाः पितुश्चान्ये । सदृशा हीन-

ताजुषः ॥ कुलांगाराः सुता ज्ञेया । एवं शिष्या अपि स्वयं ॥ ३७ ॥ अन्यदा गुरवस्तत्र । समायाता गुणान्विताः ॥ पुत्रैर्ज्ञातं पिता पार्श्वे । गुरूणां प्रेष्यतेऽधुना ॥ ३८ ॥ यथा तद्व-चनं श्रुत्वा । बुद्धिर्वित्तव्यये भवेत् ॥ आदेयवचना यस्मा-द्भवंति गुरवः क्षितौ ॥ ३९ ॥

नीचैर्मार्गे स्वभावेन । जलं सर्वत्र यात्यहो ॥ पात्रेण गुणयुक्तेन । तदूर्ध्वं नीयते क्व-चित् ॥ ४० ॥ एवं विमृश्य मित्रस्य । कस्यचित्पितुरग्रतः ॥ प्रोचिरे सवितारं ते ! गुरुपार्श्वं नय त्वकं ॥ ४१ ॥ तद्वचःश्रवणाद्यस्मा-त्प्रतिबोधो भवेत्पितुः ॥ तमादाय ततः सोऽपि । जगाम गुरुसन्निधौ ॥ ४२ ॥ सूरिं नत्वोपविष्टेऽस्मि-न्नुपदेशं ददौ गुरुः ॥ एष एव गुरूणां य-न्मुख्यो दक्षैर्गुणः स्मृतः ॥ ४३ ॥ पापकर्तुरहो दातु-र्न भवेन्नारकी गतिः ॥ यतो दान-फलं भोगो । विद्यते नैव तत्र सः ॥ ४४ ॥ शीलस्य पालको जंतु-र्न तिर्यङ् नैव नारकी ॥ तपःकर्त्ता राज्यधरः । पुमान् वा देवलोकगः ॥ ४५ ॥ भावनाधारको मर्त्यो । भवनाशं क-रोति वै ॥ इत्येवमुपदेशं स । श्रुत्वागान्निजमंदिरं ॥ ४६ ॥

दध्यौ श्रेष्ठी ततश्चित्ते । दानं वित्तव्ययाद्भवेत् ॥ स्त्रीसंगत्यागतः शीलं । रसरागोज्झनात्त-

॥२७६॥

प ॥ ४७ ॥ अहमेतदतस्त्यक्त्वा । सुकरां भावनां वरां ॥ भावयामि यतो मे स्यात् । सुखेन शिवसंगमः ॥४८॥ तनयैः सनयैं रात्रौ । स पृष्टस्तात किं श्रुतः ॥ धर्मः शर्मकरः सोऽवक् । पीतः प्रीतिपुरस्सरं ॥ ४९ ॥ भोः साधर्मिकवात्सल्यं । करिष्यामः शुभेऽहनि ॥ वत्सा अतुल्यवात्सल्यात् । संमेल्यः स्वजनव्रजः ॥ ५० ॥

खर्जकानि तर्जकानि । कंविकायाः स्वमानतः ॥ मानाच्च सप्तमूढानि । कारयध्वं मृदूनि च ॥ ५१ ॥ मोदकान् जनचित्तानां । मोदकान्नोदकान् रुचेः ॥ सिंहकेसरिकान् स्थूलान् । सद्यो निष्पाद्यताऽवरान् ॥ ५२ ॥ अन्यानि सप्तविधानि । प्रधानानि प्रमोदतः ॥ पक्वान्नानि प्रकर्षेण । प्रसिद्धानि विधाप्यतां ॥ ५३ ॥ खर्जूरखारिका द्राक्षा—नालिकेरीफलावलीं ॥ आम्राणि रसकम्राणि । कदलीफलसंचयं ॥ ५४ ॥ सुगंधिशालिं मुद्गस्य । दालिं त्वक्संगवर्जितां ॥ विविधानि व्यंजनानि । स्नेहलानि दधीनि च ॥५५॥ पूगीफलसुपत्राणि । विचित्राणि विवेकतः ॥ साधर्मिकजनार्थं च । पट्टकूलान्यनेकशः ॥ ५६ ॥ गुरूणां संघपूजार्थं । भैरवीप्रमुखाणि च ॥ आनयध्वं चीवराणि । घृतं च सुरभि द्रुतं ॥ ५७ ॥ चतुर्भिः कलापकं ॥ इत्यादि-

विविधां शिक्षां । दत्वा निशामवाप सः ॥ विमृष्टं च ततः पुत्रै-र्गुरुवाग् गुणकारिणी ॥५८॥

पित्रा गुरुमुखाद्यच्च । श्रुतं पूर्वश्रुतं हि तत् ॥ अपूर्वं निर्गतं बाह्यं । गृहियुक्तं पितुर्मुखात् ॥ ५९ ॥ विस्ताराय विलंबोऽत्र । नो युक्तो धर्मकर्मणि ॥ विलंबाद्बाहुबलिना । पुनर्नो वंदितः पिता ॥ ६० ॥ अतः श्व एव वात्सल्यं । संघस्य क्रियते मुदा ॥ पुत्रास्ते ये मातृपित्रोः । पूरयंति मनोरथान् ॥ ६१ ॥ आकार्य स्वजनान् शीघ्रं । सामग्रीं ते ह्यकारयन् ॥ कोलाहलमथ श्रुत्वा । जजागार पिता ततः ॥ ६२ ॥ तेन ज्ञातं धाटिरेषा । मम गेहं समागता ॥ पूच्चकार तदा बाढं । श्रेष्ठी स्वेष्टविवर्जितः ॥ ६३ ॥ पुत्रास्तत्रागताः प्रोचुः । किं जातं भवतः पितः ॥ सोऽवोचद्गृहमध्ये किं । स्फुटं कलकलोऽधुना ॥ ६४ ॥ सतां मताः सुता भक्ति-युतास्तत्पुरतोऽवदन् ॥ संघवात्सल्यकार्याय । क्रियतेऽयमुपक्रमः ॥ ६५ ॥

सोऽवग् वित्तव्ययो नैव । कर्त्तव्यः कष्टकारकः ॥ किंतु भो भावना भाव्या । श्राव्या दानकथा न मे ॥ ६६ ॥ जनवर्गो बहिः कार्यो । गृहीत्वा मेऽन्यथा वृथा ॥ धनधान्यादिकं याता । कलहं वा करिष्यति ॥ ६७ ॥ तत् श्रुत्वा स्वजनाः सर्वे । स्वं स्वं स्थानं ययुः कृ-

प्रसुप्ताः स्व गृहांतरे ॥ ६ए ॥ साधर्मिकन्नक्तिरूपा । या कृ-
णात् ॥ विगताशाः सुतास्तेऽपि । शक्तौ तत्करणं विना ॥ ६ए ॥
ता श्रेष्ठिना कथा ॥ सा तु नो न्नावना ज्ञेया । शुन्नन्नावस्य चिंत-
सा श्रुते न्नावना प्रोक्ता । शक्तौ सत्कर्मसेवनं ॥ अशक्तधर्मविषये । न्नगवन् कर्मणा केन । छिन्नः केश-
नं ॥ ७० ॥ कलावती क्षणं लब्ध्वा । पप्रछ गुरुसन्निधौ ॥ रुक्मिण्या मत्सरः कस्मा-द-
चयो मम ॥ ७१ ॥ करौ धर्मरुचेः कृत्ता-वपराधं विना वद ॥ परिपाकगतस्याद्य ।
स्माकमुपरि प्रन्नो ॥ ७२ ॥ न्नवाच श्रीगुरुर्न्नद्रे । सर्वः स्वकृतकर्मणः ॥ तत्कर्म धर्मपर-
फलं भुंक्ते शुन्नाशुन्नं ॥ ७३ ॥ अशं न्नृशं यतो जातं । न्नवतोर्न्नवतोयधौ ॥
यो-रपि न्नो शृणुतं युवां ॥ ७४ ॥

श्रीपुरे नगरे पूर्वं । जितशत्रुर्महीपतिः ॥ धारिणी महिषी तस्य । प्रशस्यगुणन्नाजनं
॥ ७५ ॥ राजा तस्यास्तु रूपेण । स्वरूपेण च रंजितः ॥ अन्यां कन्यां न्नजेन्नैव । तस्यां प्रे-
म वहत्यलं ॥ ७६ ॥ अन्यदैका गतालीका । दासी स्नेहलया दृशा ॥ राज्ञा निरीक्षिता तं
च । दृष्ट्वा राज्ञी रुषं दधौ ॥ ७७ ॥

ल्लोकोक्तिरीदृशी ॥ ९८ ॥ त्यजांतरंगं संगं त्वं । बहिरंगादसौ बली ॥ अस्मिंस्त्यक्ते बहिःसं-
गो । विघ्नकृद्भवतीह न ॥ ९९ ॥ परे परःशताः संति । परचिंतापरा नराः ॥ परमात्मस्वरू-
पज्ञ । स्वात्मचिंतां त्वमादर ॥ ७०० ॥ इति तत्वामृतं पीत्वा । नत्वा श्रीगुरुमादरात् ॥ ग-
त्वा स्वस्थानमानंदा—न्मुक्त्वा प्रेम प्रियादिषु ॥ १ ॥ राज्यं दत्वा स्वपुत्राय । कृत्वा ध्यान-
विधिं सुधीः ॥ संयमाचारलीनात्मा । नियमादरसुंदरः ॥ २ ॥ शुभ्रासनधृतस्वांगः । प्राणा-
यामपरायणः ॥ प्रत्याहाराद्भिर्विकारो । धारणाधरणक्रमः ॥ ३ ॥ शुक्लध्यानविधातासौ । स-
माधिभरभासुरः ॥ एवमेकांतमासाद्य । भावयामास भावनां ॥ ४ ॥ रक्ताक्तोऽरिष्टसंसर्गं ।
बाल्यभावे करोति तं ॥ पश्चात्त्यक्त्वा सपक्षः सन् । वनवासं भजत्यसौ ॥ ५ ॥ हंसोऽयं मा-
नसं नित्यं । सेवते जन्मधीर्मुधा ॥ रजोभाक् स्यात्ततो येन । तत्र पंकजराजयः ॥ ६ ॥ जन्म-
जातमेकवारं । मानसं त्यज मानसं ॥ हे हंस येन ते देह—पंकनाशः प्रजायते ॥ ७ ॥ स-
मायाते मेघजाले । मानसं मलिनं भवेत् ॥ तेन तत्र स्थितं वस्तु । सम्यग्न ज्ञायते जनैः ॥
॥ ८ ॥ घनोन्नतेषु तमस्सु । संस्थितिं कुर्वता मया ॥ सुदिनेऽपि दुर्दिनत्वं । स्वयं स्वस्यैव

॥१८२॥

धिक्कृतं ॥ ९ ॥

आत्मन् किं वा नटप्रायै–र्लोकहास्यकरैः परैः ॥ अशेषवेषग्रहणैः । स्वरूपं व्रज सर्वथा ॥ १० ॥ काकपक्षधरो देह–स्त्वं हंसोऽसि निरंजनः ॥ नीचसंगप्रदोषेण । मृत्युं किं यास्यसि त्वकं ॥ ११ ॥ ज्योतीरूपाणि कर्माणि । मलरूपाणि कानिचित् ॥ नीरजा निर्मलोऽरूपी । किं त्वं चैषु मिलस्यहो ॥ १२ ॥ समीपस्थोऽपि त्वोः साक्षा–न्मया त्वं नोपलक्षितः ॥ आवयोरैक्यमेवातः । कथं यासि ममाग्रतः ॥ १३ ॥ रूपे रूपं प्रविष्टं च । स्वस्मिन् जीवे च दर्शिते ॥ स्वरूपाणामेकशेष–श्चित्तात्मनोस्तदाभवत् ॥ १४ ॥ आत्मानमात्मना चैवं । भावयन् भावभासुरः ॥ चंडोदरनृपः प्राप । केवलज्ञानमुज्ज्वलं ॥ १५ ॥ तदासन्नसुरैरस्य । यतिवेषः समर्पितः ॥ केवलज्ञानमहिमा । सुवर्णाब्जं तथा कृतं ॥ १६ ॥ तत्रोपविश्य विधिना । देशना विहिता तथा ॥ यथा लोकाः कृतालोका । मार्गे लग्ना अनेकशः ॥ १७ ॥ कलावती धर्मरुचि–र्जिनदासोऽपि धीसखः ॥ अन्ये धन्या जनास्तत्र । तपस्यां जगृहुर्मुदा ॥ ॥ १८ ॥ बहवो देशविरतिं । सम्यक्त्वमपरे पुनः ॥ ततो विहारं कुर्वन् स । चक्रे धर्मप्र-

भावनां ॥ १९ ॥

पर्यंतेऽनशनं लात्वा । देहं त्यक्त्वा स भूतले ॥ सिद्धिं जगाम शुद्धात्मा । चंद्रोदरयतीश्वरः ॥ २० ॥ एवं भावनयानंता । ययुः शिवपदं कदं ॥ यास्यंति च परे राज-न्नतो भावय भावनां ॥ २१ ॥ इत्थं श्रीधर्मकल्पद्रो-श्चतुर्थी कथिता तव ॥ पद्मसेन महाशाखा । विश्वछायाकरा वरा ॥ २२ ॥ चतसृषु त्वमेतासु । यथायोगं भजस्थितिं ॥ न भवेद्भवसंताप—व्यापातेऽत्र यथा जनिः ॥ २३ ॥ तन्निशम्य जगौ राजा । श्रीगुरुं गुरुगौरवात् ॥ निर्जरा अपि त्वद्वाक्या-न्नमस्यां प्रतिपेदिरे ॥ २४ ॥ भगवन् यस्य धर्मस्य । योग्यतेह भवे भवेत् ॥ दिशंतु मे भवंतस्तं । विचारचतुराशया ॥ २५ ॥ गुरुर्जगाद भूमीश । विशदे मानुषे भवे ॥ योग्यता सर्वधर्मणां । विद्यतेऽवद्यनाशिनी ॥ २६ ॥ भवादृशां विशेषेण । सुदृशां सद्गुणस्पृशां ॥ किंतु क्रमेण चटना-त्पतनं न भवेदिह ॥ २७ ॥ अतः श्रावकधर्मं त्वं । प्रथमं प्रतिपालय ॥ पश्चाद्दीक्षां स्फुरद्दीक्षां । कक्षीकुर्या नराधिप ॥ २८ ॥

उक्त्वेति देशविरतिं । सम्यक्त्वसहितां हितां ॥ नृपाय सकृपायास्मै । ददौ श्रीगुरुरादरा-

त् ॥ २९ ॥ अवाप्य जिनधर्मं य—न्मुमुदे मेदिनीपतिः ॥ सुदर्शनसमायुक्तं । सुगुणं युक्तमेव तत् ॥ ३० ॥ राजा जगाम स्वस्थानं । प्रस्थानं च गुरुर्व्यधात् ॥ दध्यौ च नृपतिश्चित्ते वित्तेन सहितस्ततः ॥ ३१ ॥ गोचरेऽत्र यथा गावः । सरसं नीरसं भृशं ॥ स्वरुच्या विविधं योग्यं । भक्षयत्यतृणं तृणं ॥ ३२ ॥ पश्चात्स्वस्थानमासाद्य । निजसंवरवृद्धये ॥ रोमालयंति सुचिरं । पूर्वप्राप्तं स्वशक्तितः ॥ ३३ ॥ तदुद्भवेन गोरसेन । संतापं सर्वदेहिनां ॥ हरंति स्वांगोपांगानि । तथा पुष्टिं नयंत्यहो ॥ ३४ ॥ प्राप्तं गुरोस्तथा शास्त्रं । पुनस्तस्य विचारणां ॥ विधत्ते धीगुणैर्यो न । पशुर्न्योऽपि स वै पशुः ॥ ३५ ॥ गुरूक्तं वचनं चित्ते । विचार्य सुचिरं सुधीः ॥ तारान्मुक्तिवधूहारान् । विहारान् स व्यधापयत् ॥३६॥ विनिर्धूतवृजिनानां । जिनानां प्रतिमास्तथा ॥ सुवर्णवर्णजनिता । जनतापहरा वराः ॥ ३७ ॥ श्रीसिद्धांतपुस्तकानि । सुशास्त्राणि च दर्पतः ॥ लेखयामास सद्द्रव्यै—रुपकारकृते कृती ॥ ३८ ॥ निरपराधजीवानां । त्रसानां त्रासवर्जनं ॥ क्रमान्नृपदसौ चक्रे । नात्र चित्रं मनागपि ॥ ३९ ॥ साध्वीयुतानां साधूनां । वस्त्रपात्राण्यनेकशः ॥ कल्पानि कल्पनीयानि । चान्नपाने नृपो ददौ ॥ ४० ॥ सश्र-

ध्धानां च श्राद्धानां । श्राद्धीनां च तथैव च ॥ वात्सल्यं कारयामास । राजन्नागनिवारणात्
॥ ४१ ॥ दीनादीनां तथा दान–मुचितं कीर्त्तिकारकं ॥ एवं दानं निर्निदानं । नृपतिर्विदधे त-
दा ॥ ४२ ॥ स्वदारसंतोषव्रतं । यथाशक्त्या तथा तपः ॥ द्वादशधा भावनां च । भावयामा-
स नृपतिः ॥ ४३ ॥ त्रिकालजिनपूजाकृत् । शुद्धसम्यक्त्वधारकः ॥ दर्शनप्रतिमामाद्यां । स
मासेनाकरोत्तदा ॥ ४४ ॥ अणुव्रतधरः सर्व–विधियुक्तो द्वितीयिकां ॥ मासाभ्यां विदधे नृ-
पः । कृपारूपसुधर्मयुक् ॥ ४५ ॥ षड्विधावश्यकं काले । कुर्वन् मासैरसौ त्रिभिः ॥ तृती-
यां प्रतिमां तेने । मेने जन्मफलं तथा ॥ ४६ ॥ चतुःपर्वस्वहोरात्रं । सर्वतः पौषधं दधन् ॥
॥ चतुर्थीं चतुरश्चके । चतुर्भिर्मासकैरसौ ॥ ४७ ॥ चतुर्विधोपसर्गेऽपि । निःप्रकंपः समाधि-
भाक् ॥ प्रतिमां प्रमितां पंच–मासैरेष व्यधात्तदा ॥ ४८ ॥ ब्रह्मचर्यरतोऽकार्षीत् । षड्भिर्मा-
सैः स षष्ठिकां ॥ सचित्तपरिहारी च । सप्तमीं सप्तमासकैः । ४९ ॥

वर्जयन् स्वयमारंभं । मासैरष्टभिरष्टमीं ॥ नवमीं च नवभिर्मासै–र्वर्जयंस्तं परैरपि ॥
॥ ५० ॥ तदुद्दिष्टं वर्जयन् मासान् । दश प्रासुकमप्यसौ ॥ पाश्चात्यविधिसंयुक्तो । दशमीमत-

नोदिमां ॥ ५१ ॥ निस्संगो लिंगधारी च । कृतलोचः सुसाधुवत् ॥ पंचग्रासीं विदधानो । व्य-
धादेकादशीमसौ ॥ ५२ ॥ तदुह्य प्रतिमामिद्धं । दीक्षांलातुमना अभूत् ॥ नृपो यदा तदा दै-
वा—त्स एव गुरुरागमत् ॥ ५३ ॥ उद्यानपालकाद् ज्ञात्वा । राजा तत्र ययौ मुदा ॥ वंदित्वा
विधिना वंद्यां—स्तांश्च विज्ञापनां व्यधात् ॥ ५४ ॥ सुखान्नासाकृद्वामा—न्निर्विण्णोऽहं कृपाप-
ते ॥ देह्यतो मेऽनगारत्वं । शर्मधर्मनिबंधनं ॥ ५५ ॥ गुरुः प्राह महाभाग । प्रथमं दश क-
न्यकाः ॥ परिणेष्यस्यथो तासु । प्रेमबंधो भविष्यति ॥ ५६ ॥ तदा दीक्षां प्रदास्याम—स्तव
नो नृपतेऽन्यथा ॥ तन्निशम्य नृपो दध्यौ । किमुक्तं गुरुणा मम ॥ ५७ ॥ साधूनामीदृशं
वाक्यं । प्रवक्तुं नैव युज्यते ॥ निर्वृत्तिमार्गगा यस्मा—दमी वादवृतीकृतः ॥ ५८ ॥ इत्यादि
त्रिविधं ध्यात्वा । नृपोऽवोचद्गुरुंप्रति ॥ अग्रेतनास्तु त्यक्तुमना । उद्वहे कथमन्यकाः ॥५९॥
गुरुर्जगाद भो राज—न्निमा हस्ते भवंति चेत् ॥ चेतनासहिताः सद्यो । दीक्षापि सफला त-
दा ॥ ६० ॥ परमार्थं नृपैतासां । कथ्यमानं निशम्यतां ॥ येन विज्ञातमात्रेण । गात्रेण स्या-
त्सुखी जनः ॥ ६१ ॥ अस्तीह मानुजे क्षेत्रे । पवित्रे पुण्यकर्मणा ॥ रत्नैस्तिरस्कृतध्वांतं ।

स्वांतं नाम पुरं वरं ॥ ६२ ॥ रुचिराध्यवसायोऽत्र । राजास्ति जनताप्रियः ॥ तस्य प्रिया घनाः संति । क्रमेणासु रमेत सः ॥ ६३ ॥

तास्वेका शांतिनाम्नी च । तस्याः पुत्री क्षमाभिधा ॥ रुचिसंज्ञा द्वितीयास्य । तत्कन्या च दयाह्वया ॥ ६४ ॥ विनयता तृतीया च । तत्कन्या मृदुतोदिता ॥ चतुर्थी समता नाम्नी । तत्कन्या सत्यता स्मृता ॥ ६५ ॥ पंचमी शुद्धता ज्ञेया । तत्कन्या ऋजुता मता ॥ पापत्नीरुता तु षष्टी । तत्कन्या स्यादवैरता ॥ ६६ ॥ नीरागता सप्तमी सा । ब्रह्मरतिस्तु तत्सुता ॥ निर्लोभताष्टमी ज्ञेया । तत्कन्या मुक्तताद्भुता ॥ ६७ ॥ नवमी च प्रज्ञानाम्नी । विद्याभिख्यास्ति तत्सुता ॥ दशमी विरतिगोत्रा । तत्कन्या च निरीहता ॥ ६८ ॥ यदि दीक्षाभिलाषस्ते । हृदये वर्त्ततेऽधुना ॥ पाणिग्रहणमेतासां । तदा त्वं कुरु भूपते ॥ ६९ ॥ एतत् श्रुत्वा नृपः प्राह । श्रीगुरो त्वत्प्रसादतः ॥ कन्यानां स्थानकं ज्ञातं । मातृपित्रोस्तथाभिधा ॥ ॥ ७० ॥ प्राप्त्युपायं परं मेऽद्य । कथय प्रथय प्रज्ञां ॥ यथाहं त्वत्प्रसादेन । सादेन स्यां विवर्जितः ॥ ७१ ॥

गुरुः प्रोवाच चैतासां । पिता स्थाप्यो निजे पुरे ॥ एतावतैव तुष्टोऽसौ । तव दास्यति वांछितं ॥ ७२ ॥ परं विवाहे पुरुषाः । स्त्रीमुखाः स्युः स्वभावतः ॥ अतस्तासां मातरोऽमूर्विशेषात्स्ववशे कुरु ॥ ७३ ॥ आद्या शांतिः सदा मान्या । सत्कांतिं वांछता त्वया ॥ सर्वेषु धार्या सन्मैत्री । सहनीयः पराभवः ॥ ७४ ॥ उपकारकराश्चिंत्यो । ह्यपकारपरः परः ॥ कर्मक्षयसहायत्वात् । कोपः कार्यो न केषुचित् ॥ ७५ ॥ कर्मणो दूषणं देयं । मर्दनीयश्च मत्सरः ॥ सहस्रमल्लमुख्यानां । मुनीनां चिंतनं हृदि ॥ ७६ ॥ करणीयमथो ध्येया । नरकादिव्यथा श्लथा ॥ विधेयं निःप्रकंपं स्वं । मनो मर्कटचंचलं ॥ ७७ ॥ युग्मं ॥ एवं प्रकुर्वतो नित्यं । क्षांतिकन्या स्वयंवरा ॥ समेष्यति समीपं ते । त्वद्गुणाकृष्टमानसा ॥ ७८ ॥ शुचिरुचिः सदा मान्या । सुदयां वांछता त्वया ॥ परोपतापः पापोऽयं । वर्जनीयो विशेषतः ॥ ७९ ॥ मिथ्याशास्त्राणि नो कर्णे । कर्त्तव्यानि कदाचन ॥ त्रिविधेन नो विधेया । षट्कायस्य विराधना ॥ ८० ॥ अभक्ष्यानंतकायादि—स्त्याज्यं वस्तु विशेषतः ॥ आत्मवत्सर्वभूतानि । चिंतनीयानि । चेतसा ॥ ८१ ॥

परोपकारोऽनुष्टेयो । हेय आरंभ आदरात् ॥ वर्जनीयोऽनर्थदंडः । प्रचंडः पापकर्मणां ॥ ॥ ८२ ॥ सदा समितयः पाल्या–स्तिस्रः सद्गुप्तयस्तथा ॥ परस्य व्यसनं दृष्ट्वा । हसितव्यं कदापि न ॥ ८३ ॥ एवं प्रकुर्वतो नित्यं । दयाकन्या स्वयंवरा ॥ समेष्यति समीपं ते । त्वद्गुणाकृष्टमानसा ॥ ८४ ॥ विज्ञा विनयता मान्या । मृदुतामिच्छता त्वया ॥ वार्योऽनार्यो ह्यहंकारो–ऽसारो विबुधधिक्कृतः ॥ ८५ ॥ जातेर्मदो न कार्योऽत्र । सा चेद्विप्रादिवर्णजा ॥ तदा सर्वमेकवर्ण–मग्रेऽभूद् हैध्यभावतः ॥ ८६ ॥ यतः—एकवर्णमिदं सर्वं । पूर्वमासीद्युधिष्टिर ॥ क्रियाकर्मविभागेन । चातुर्वर्ण्यव्यवस्थितिः ॥ ८७ ॥ ब्राह्मणा ब्रह्मचर्येण । क्षत्रियाः शस्त्रपाणयः ॥ वैश्यास्तु वणिजः प्रोक्ताः । शूद्राः प्रेषणकादयः ॥ ८८ ॥

जन्मना जायते शूद्रः । संस्काराद् द्विज उच्यते ॥ वेदपाठी भवेद्विप्रो । ब्रह्म जानाति ब्राह्मणः ॥ ८९ ॥ अथ श्रीमालोपकेश–प्रमुखा जातयः स्मृताः ॥ तदेता ग्रामनामोत्था । विज्ञेया विबुधैः सदा ॥ ९० ॥ अथ मातृभवा सा चे–त्तथापि नोचितो मदः ॥ समानशीलाः सर्वेऽपि । न भवंति तदुद्भवाः ॥ ९१ ॥ यतः—एकोदरसमुत्पन्ना । एकनक्षत्रजातकाः ॥ समा-

नशीला नैव स्यु–र्वदरीकंटका यथा ॥ ९२ ॥ कुलस्यापि मदो नैव । कर्त्तव्यः कुशलैरिह ॥ ज्ञातेरिव कुलस्यापि । पाश्चात्या स्थापना किल ॥ ९३ ॥ अथो पितृन्नवं तच्चे—त्तथापि नोचितो मदः ॥ समानशीला नैव स्यु–र्वदरीकंटका यथा ॥ ९४ ॥ लाज्ञस्यापि मदो नैव। कर्त्तव्योऽत्र हि धीमता ॥ यतो लाज्ञांतरायं हि । जिनस्यापि हि डुस्त्यजं ॥ ९५ ॥ क्षीणे लाज्ञांतराये च । लज्ञते विपुलं धनं ॥ तस्मिन् पुनः समायाते । न प्राप्नोति धनं धनी ॥ ॥ ९६ ॥ ऐश्वर्यस्य मदो नैव । कर्त्तव्योऽत्र हि धीमता ॥ राजापि रोरतां याति । मुंजवच्च मदीतले ॥ ९६ ॥ वलस्यापि मदो नैव । कर्त्तव्योऽत्र हि धीमता ॥ बाहुवल्यादिन्नूपानां । विचार्य वलमुल्वणं ॥ ९७ ॥ रूपस्यापि मदो नैव । कर्त्तव्योऽत्र हि धीमता ॥ श्रुत्वा सनत्कुमारादे–रूपस्यानित्यतामिह ॥ ९८ ॥ तपसोऽपि मदो नैव । कर्त्तव्योऽत्र हि धीमता ॥ श्रीवीरनंदनन्नव–न्नवं चाकर्ण्य सत्तपः ॥ ९९ ॥

श्रुतस्यापि मदो नैव । कर्त्तव्योऽत्र हि धीमता ॥ चतुर्दशपूर्विणोऽपि । पतंतीह प्रमादतः ॥ ९०० ॥ श्रुतेन हि मदाः सर्वे । विजयं यांति देहिनां ॥ तेनैव यो मदं धत्ते । तस्यामृ-

तद्भवं विषं ॥ १ ॥ एतेष्वष्टसु मदेषु । यं यं यः कुरुतेऽसुमान् ॥ तं तं स हीनं लभते । परजन्मनि जन्मभाक् ॥ २ ॥ अष्टौ मदा अतस्त्याज्या । भाव्या तत्त्वविचारणा ॥ दशानामर्हदादीनां । विधेयो विनयो मुदा ॥ ३ ॥ नवनीतपिंडरूपं । कर्त्तव्यं हृदयं मृदु ॥ लघुन्योऽपि श्रुतं ग्राह्यं । सदा विनयपूर्वकं ॥ ४ ॥ एवं प्रकुर्वतो नित्यं । मृदुतानामकन्यका ॥ स्वयंवरा समायाति । त्वद्गुणाकृष्टमानसा ॥ ५ ॥ समता च सदा सेव्या । सत्यताभिद्धता त्वया ॥ क्रोधो लोभो भयं हास्यं । वर्जनीयं प्रयत्नतः ॥ ६ ॥

दोदूयते परो येन । वाक्पारूष्यं यतो भवेत् ॥ अवर्णवादः पैशुन्यं । वक्तव्यं तद्वचो न च ॥ ७ ॥ सत्यामृषामसत्यां च । तथा परोपघातिनीं ॥ वक्तां मर्मयुतां नैव । भाषां ब्रूयाद्विचक्षणः ॥ ८ ॥ एवं प्रकुर्वतो नित्यं । सत्यतानामकन्यका ॥ स्वयंवरा समायाति । त्वद्गुणाकृष्टमानसा ॥ ९ ॥ शुद्धता च सदाराध्या । ऋजुताभिद्धता त्वया ॥ कौटिल्यं सर्वथा वर्ज्यं । धार्या सरलता तथा १० ॥ अवंचनं वचो वाच्यं । मानसं निर्मलं कुरु ॥ माया क्वापि न कर्त्तव्या । विशेषाद्धर्मकर्मणि ॥११॥ पतितं तृणमपि मा । गृह्णीथा लोभतां त्यज ॥ भज

संतोपतां तिष्टा—नुज्ञाप्यावग्रहं परैः ॥ १२ ॥ अचौरतानामकन्या । नित्यमेवं प्रकुर्वतः ॥ स्व-
यंवरा समायाति । त्वद्गुणाकृष्टमानसा ॥ १३ ॥

ब्रह्मरत्याख्यकन्यार्थं । चित्ते नीरागतां धर ॥ सुरमर्त्यतिरश्चां स्त्री—र्मातृकल्पाश्च कल्प-
य ॥ १४ ॥ न वस्तव्यं स्त्रीवसतौ । न कार्या तत्कथा पुनः ॥ न निपेव्या तन्निषद्या । नालो-
क्यानींद्रियाणि च ॥ १५ ॥ कुड्यंतराणि मिथुन—युतानि गृहमेधिनां ॥ न ध्यातव्यं सर्वरति
—सुखं मनसि कर्हिचित् ॥ १६ ॥ युग्मं ॥ त्याज्यः प्रणीत आहार—श्चातिमात्रस्तथाधुना ॥
वर्जनीया प्रयत्नेन । शोज्ञा कायस्य चाधिका ॥ १७ ॥ ब्रह्मरत्याह्वया कन्या । नित्यमेवं प्रकु-
र्वतः ॥ स्वयंवरा समायाति । त्वद्गुणाकृष्टमानसा ॥ १८ ॥ निर्लोज्ञता सेवनीया । मुक्त-
तामिच्छता त्वया ॥ विवेको हृदये धार्यो । वार्योऽनार्यस्य संगमः ॥ १ए ॥

परिग्रहात्पृथक्कार्यो । बाह्याज्यंतरज्ञेदतः ॥ स्वात्मा ग्रंथपिपासा च । शमनीया स्वज्ञा-
वतः ॥ २० ॥ अलग्नमंतःकरणं । बहिरंतश्च धारय ॥ निर्लेपः पद्मवत्तिष्ट । शिष्टाचारपराय-
णः ॥ २१ ॥ सर्वपुद्गलवस्तूनां । देहादीनामनित्यतां ॥ चिंतयात्मोचितां राजं—स्तथैतेपां वि-

शारद ॥ २२ ॥ एवं प्रकुर्वतो नित्यं । मुक्तनामकन्यका ॥ स्वयंवरा समायाति । त्वद् गुणाकृष्टमानसा ॥ २३ ॥ प्रज्ञाराज्ञी सदाराध्या । सुविद्यां वांछता त्वया ॥ श्रुताभ्यासः सदा कार्यः । प्रमादो वार्य एव भोः ॥ २५ ॥ श्रुतस्य श्रुतवतां च । भक्तिः कार्या प्रमोदतः ॥ स्मर्तव्यं सततं शास्त्रं । श्रोतव्यं सुगुरोर्वचः ॥ २६ ॥ एवं प्रकुर्वतो नित्यं । विद्याकन्या स्वयंवरा समायास्यति वेगेन । त्वद् गुणाकृष्टमानसा ॥ २७ ॥ निरीहताकन्यकार्थं । लोभस्य विरतिं धर ॥ स्वरूपं सर्ववस्तूनां । विभावय निजे हृदि ॥ २८ ॥

देहो दुःखोपभोगाय । धनं बंधनकारणं ॥ इच्छा हृदयतापाय । जननं मृत्युहेतवे ॥ २९ ॥ प्रियासंगो वियोगाय । क्लेशाय संग्रहो नृणां ॥ भोगाभिलाषो रोगाय । मुंचामीषु ततो रतिं ॥ ३० ॥ निरीहतानामकन्या । ममत्वं त्यजतस्तव ॥ समेष्यति समीपं स्राक् । त्वद् गुणाकृष्टमानसा ॥ ३१ ॥ तदाकर्ण्याविदद्राजा । कन्यासंयोजनं जने ॥ गुरुरेव करोत्युच्चैः । सर्वेषां शर्महेतवे ॥ ३२ ॥ भगवन् दीक्षाकन्यायां । दत्तायां त्वयका मम ॥ राजा शुभपरिणामः । स्वयमेताः प्रदास्यति ॥ ३३ ॥ अतो मे शोभने लग्ने । दीक्षां देहि विधेहि च ॥ प्रसा-

दं नो विलंबोऽत्र । युज्यते धर्मकर्मणि ॥ ३४ ॥

गुरुणा दीक्षितः सोऽपि । पद्मसेनो महीपतिः ॥ मनुष्यगुणसंयुक्तो । मुक्तो मोहेन कर्मणा ॥ ३५ ॥ कुरुर्जगौ मुने मातुः । सेवा कार्या त्वयाधुना ॥ तां विना चरणं नो य–ल्लोके लोकोत्तरेऽपि च ॥ ३६ ॥ कन्यायां परिणीतायां । प्रायः पुत्रा न मातरं ॥ साहाय्यकर्त्रीं सर्वत्र । मन्यंते प्रोक्तमस्ति यत् ॥ ३७ ॥ मातुश्चित्तपुरे मोह–राजा राज्यं करोत्यसौ ॥ बहुकालागतान् किंतु । सेवकान् प्रेक्ष्य रुष्यति ॥ ३८ ॥ अधोवक्त्रोर्ध्वपादांस्तान् ! गर्भकारागृहे ततः ॥ मलमूत्रादिसंयुक्ते । धारयेत्कर्मकिंकरैः ॥ ३९ ॥ ततो मोहाऽविरोधेन । साहारैस्तांश्च पुष्यति ॥ स्वापयत्यात्मना सार्द्धं । तथा जागरयत्यहो ॥ ४० ॥ उत्पन्नधिषणास्ते तं । हस्तौ संयोज्य मस्तके ॥ एवं विज्ञपयंत्युच्चै–र्मोहराजं सुदुःखिताः ॥ ४१ ॥

अज्ञानांधा वयं राजन् । तथा सज्ज्ञतिवर्जिताः ॥ यत्र तत्र स्थितास्तेन । त्वदाज्ञावशगाः परं ॥ ४२ ॥ तत् श्रुत्वा शांतचित्तः सन् । तस्मात्तान् सोऽत्र मुंचति ॥ गुप्तिपालैर्धृताः पाणौ । ते क्रंदंति तदाबलाः ॥ ४३ ॥ दयामयाशया सैषा । दत्वा स्वर्णादि तान्पुनः ॥ करो-

स्तत्रस्थस्तं ननाम सः ॥ ६४ ॥ तद् दृष्ट्वा विस्मिताः सर्वे । सुरास्तं जगदुस्तदा ॥ स्वामिन् कस्य नमस्कारो । भवद्भिर्विदधेऽधुना ॥ ६५ ॥

इंद्रो जगाद भो देवाः । सेवाहेवाकिनोऽखिलाः ॥ यस्य शस्यमतेर्नूपा । वरदत्तः स साधुराट् ॥ ६६ ॥ महीतलेऽमले चास्ति । चारित्रगुणगौरवः ॥ ईर्यासमितिसंयुक्तो । मुक्तो दुर्ध्यानवैरिणा ॥ ६७ ॥ युग्मं ॥ पूजनीया गुणा यस्मा-द्ततो मान्यो ममापि सः ॥ नमस्करोमि तं तेन । तत्रस्थमिह संस्थितः ॥ ६८ ॥ जीवितव्यं त्यजेत्स्वीयं । वरेर्यासमितिं न यः ॥ स साधुः कस्य नो वंद्यो-ऽनवद्यो निजकर्मणा ॥ ६९ ॥ सम्यक्त्वधारिणो देवा-स्त-न्निशम्य त्रिधा तदा ॥ वरभक्त्या च तं साधुं । सुत्रामेव ववंदिरे ॥ ७० ॥ मिथ्यादृष्टिः पुन-र्देव-स्तत्रैकः श्रद्दधाति न ॥ इंद्रस्य वचनं सत्यं । जिनस्येव सुधर्मगं ॥ ७१ ॥ असौ दध्यौ जीवितव्यं । कस्य नेष्टं भवेदिह ॥ यदर्थे किं न कुर्वंति । मानवा मानवर्जितं ॥ ७२ ॥ येन तृप्तिर्न जायेत । कस्यापि भुवि जातुचित् ॥ कस्तं कीटपतंगादि-कृते त्यजति जीवितं ॥७३॥ यतः—धनेषु जीवितव्येषु । नारीष्वाहारकर्मसु ॥ अत्रत्याः प्राणिनः सर्वे । याता यास्यंति

यांति च ॥ ७४ ॥ परं ये स्वामिनः संति । ते वदंति यदृच्छया ॥ परस्याशंकां हृदये । नानयंति कदाचन ॥ ७५ ॥ इत्यादि चिंतयंतं तं । जगाद त्रिदशाधिपः ॥ तव चेद् हृदये शंका । तदा याहि भुवं ध्रुवं ॥ ७६ ॥ अतीतेऽनागते कार्ये । चित्ते कार्या विचारणा ॥ प्रत्यक्षे को विसंवादो-ऽथवा सादो हृदीह ते ॥ ७७ ॥

तत्परीक्षां विधेहि त्वं । धृतिं धेहि स्वमानसे ॥ स्वकीये कनके शुद्धे । परीक्षकत्रयं न हि ॥ ७८ ॥ तत् श्रुत्वा सोऽगमत्तत्र । यत्रास्ते स मुनीश्वरः ॥ क्षांत्यादिदशधाधर्म-धारको जनतारकः ॥ ७९ ॥ वहिर्भूमिं तदा साधु-र्गच्छन्नस्ति ततस्तताः ॥ मंडुकीर्मक्षिकाकल्पा । वैक्रियाः सोऽकरोत्पथि ॥ ८० ॥ पृष्टे च हस्तिनं दुष्टं । श्रवंतं मदमादरात् ॥ उच्छालयंतं स्वकरं । गत्या जितसमीरणं ॥ ८१ ॥ युग्मं ॥ भो यते त्वं द्रुतं याहि । पाहि पाहि स्वजीवितं ॥ कृतांतसममायांतं । पृष्टे पश्येह हस्तिनं ॥ ८२ ॥ इति ब्रुवाणं लोकौघं । स एव कृतवांस्तदा ॥ देवानां मनसा कार्य-सिद्धिरत्र प्रजायते ॥ ८३ ॥

सिंहावलोकनेनापि । स पश्चान्न विलोकयेत् ॥ शोधयेदुपयुक्तः स-न्नीर्यां वर्यां विशार-

दः ॥ ८४ ॥ चिंतयेन्मानसे सैष । क्रुद्धोऽप्येकं करी हि मां ॥ विनाशयेत्पुनरह—मन्निधावन्न-
सून् घनान् ॥ ८५ ॥ स्वमेकं रक्षितुं नैव । हनिष्यामि बहूनसून् ॥ जीवितव्यं च सर्वेषां ।
वल्लभं भुवि निश्चितं ॥ ८६ ॥ यतः—अमेध्यमध्ये कीटस्य । सुरेंद्रस्य सुरालये ॥ समाना जी-
विताकांक्षा । तुल्यं मृत्युभयं द्वयोः ॥ ८७ ॥

ईर्यां शोधयतस्तन्मे । यद्भवेद्भवताच्च तत् ॥ जीवितं मरणं तुल्यं । धर्मयुक्ते नरे वरे ॥
॥ ८८ ॥ चिंतयन्निति निर्ग्रंथो । यावद्याति शनैः शनैः ॥ तावत्करेण करिणा । धावित्वा ज-
गृहे स च ॥ ८९ ॥ उत्क्षिप्तो गगने दूरं । पतन् सोऽपि व्यभावयत् ॥ मच्छरीरेण मंडूक्यः ।
क्षयं यास्यंति मां हि धिक् ॥ ९० ॥ चारित्रिणा जीवदया । कर्त्तव्या सर्वथा सदा ॥ सूक्ष्मो-
ऽपि जीवो नो हिंस्यः । पंचाक्षाणां तु का क्षतिः ॥ ९१ ॥ व्यापादयंति नो श्राद्धा—स्त्रसान्
जीवान्निरागसः ॥ जानन्नपि मुनिरहं । तान् हनिष्यामि चेत्तदा ॥ ९२ ॥ जनिर्मे निष्फला
साक्षा—द्दीक्षा शिक्षा च तादृशी ॥ वृथा श्रुतमधीतं च । तद्भन्नूनं भविष्यति ॥ ९३ ॥युग्मं॥
एवं ध्यायन् सुरेणासौ । ज्ञानाद् ज्ञातो धृतस्ततः ॥ पतंस्तदा स्वरूपं च । प्रकटं विहितं मतं

॥ ९४ ॥ मुनिं नत्वास्तवीदेवं । धन्योऽसि त्वं महामुने ॥ गोत्रं पिता च जननी । श्लाघ्या ते
दृढधर्मिणः ॥ ९५ ॥
पुनर्विज्ञोऽपि ते श्लाघां । कुरुते सुरपर्षदि ॥ अन्येषां काञ्चिघा तर्हि । धर्मोऽयं बलवान्
जयी ॥ ९६ ॥ इत्यादिवचनैः स्तुत्वा । जगौ स मुनिपुंगवं ॥ मार्गय त्वं वरं किंचि–च्चित्त-
स्थं चेतनान्वितः ॥ ९७ ॥ उवाच वरदत्तर्षि–स्त्यक्तसंगस्य मे किमु ॥ प्रवरेण वरेणाहो ।
सुरोत्तम विचार्य ॥ ९८ ॥ सोऽवोचद्विबुधालोको । निष्फलो नैव जायते ॥ शीघ्रं याचस्व
किंचित्व–मतो मत्तो मतं वरं ॥ ९९ ॥ यदेवं सोऽवदत्तर्हि । मुक्त्वा मिथ्यात्वमाश्रय ॥ स-
म्यक्त्वं विबुधोऽसि त्वं । यतो नाम्ना जगत्त्रये ॥ १०० ॥ ततस्तद्वचसा तेन । सम्यक्त्वं मा-
नसे धृतं ॥ मुनीश्वरः क्षामितश्च । विलग्य चरणद्वये ॥ १ ॥
स्वर्गे गत्वा सुरः सोऽपि । वासवाय न्यवेदयत् ॥ सर्वं यतीशचरितं । सहर्षोऽमर्षवर्जि-
तः ॥ २ ॥ इंद्रादिवंदितोऽप्येवं । चकार न मदं मुनिः ॥ सर्वत्र समतायुक्तः । सिक्तः सद्ध्या-
नवारिणा ॥ ३ ॥ ईर्यासमितिरित्येवं । त्वया पाल्या मुनीश्वर ॥ इहामुत्र यथा ते स्या–

च्छिवं करतलेऽमले ॥ ४ ॥ कार्ये यो भाषते भाषा-मनवद्यामकारणे ॥ मौनमेव समाधत्ते । चित्ते चारुविचारवान् ॥ ५ ॥ क्रोधमानमायालोभ-रागद्वेषभयोद्भवां ॥ मौखर्यहास्यविकथो-पेतां कार्येऽपि नो वदेत् ॥ ६ ॥ वाचंयमाभिधां सत्यां । कुर्वता साधुना सदा ॥ सद्भाषास-मितिः पाल्या । लाल्या वाणी जिनोदिता ॥ ७ ॥

लोकस्थितेर्विरोधो न । जिनप्रवचनस्य च ॥ तथा सुधीर्वदेद्वाक्यं। मुनिः संगतसाधुवत् ॥ ८ ॥ तथाहि-आसीत्संगतकः साधु-रेकस्मिन् सगुणे गणे ॥ विज्ञातागमसंभारो । भाषासमितिभासुरः ॥ ९ ॥ विहरन् गुरुभिः साक-मेकस्मिन्नगरेऽन्यदा ॥ स गतो नगतो धीरः । प्रतिपन्नप्रपालने ॥ १० ॥ ज्ञानेन गुरुभिर्ज्ञातं । कतिचिद्दिवसैरिह ॥ सर्पतोऽपि महावक्रं । परचक्रं समेष्यति ॥ ११ ॥ पुरं भेत्स्यति नैवेदं । परं रोधो भविष्यति ॥ दिनानि कानिचित्किंतु । स्थातुं तेनेह नोचितं ॥ १२ ॥ ततो ग्लानादिकार्याय । मुक्त्वा संगतकं मु-निं ॥ ततः श्रीगुरवोऽन्यत्र । विहारं विदधुस्तदा ॥ १३ ॥

कतिचिद्दिनपर्यंते । परसैन्यं समागतं ॥ लोकानामसुखं जातं । गमागमनिरोधतः ॥१४॥

कथंचिन्नगरात्ततः ॥ बहिश्चमून्नरेऽन्येद्युः । सीदंतं वीक्ष्य रोगिणं
पथ्यादीनामन्नावात्स । तेन पृष्टस्त्वमेकाक्या—गाः कुतः सो-
॥ १५ ॥ न्निक्षार्थं पर्यटंस्तत्र । सेनान्याः पतितो दृशि ॥ सोऽगदन्मुनयो नैव । रा-
ऽवदत्पुरात् ॥ १६ ॥ सेनानीरवदत्साधो । कोऽन्निप्रायो नरेशितुः ॥
जवार्त्तां प्रकुर्वते ॥ १७ ॥

सोऽवदत्तर्हि लोकाना—मन्निप्रायं निवेदय ॥ यथा तदनुसारेण । कार्यं कुर्वीमहे वयं ॥
॥ १८ ॥ मुनिर्जगाद लोकाना—मन्निप्रायं च वेत्ति कः ॥ तुंमे तुंडे मतिर्न्निन्ना । यतः शास्त्रे
निवेदिता ॥ १९ ॥ तथैतदधिकारो न । श्रोतुं वक्तुं च सैन्यप ॥ वाचंयमानामस्माकं । शा-
स्त्रसंत्रवचेतसां ॥ २० ॥ सेनानी पुनरप्याह । कियंतः कुंजरा रथाः ॥ तुरंगाः पत्तयश्चास्य ।
नृपतेः पुरवासिनः ॥ २१ ॥ सम्यग्जानामि नैवाहं । मुनिः प्रोवाच सैन्यप ॥ संख्या हि व-
दतो मेऽत्र । न्नाषा सत्यामृषा न्नवेत् ॥ २२ ॥

सोऽनक् सर्वज्ञपुत्रा न्नो । यूयं ख्याता धरातले ॥ कथयध्वमतोऽस्माकं । कियन्निर्दि-
वसैर्जयः ॥ २३ ॥ निमित्तांगपरिज्ञानं । प्रव्रज्यादिकृते यतः ॥ सोऽवग्नैव न्नवाधाया—नर्थसा-

र्थप्रदायिने ॥२४॥ तदाकर्ण्य स तुष्टोऽपि । बहिर्वृत्त्या क्रुधं दधन् ॥ जगौ वेषपरावृत्त्या—त्रागास्त्वं हेरिकः कुतः ॥ २५ ॥ क्रमान्नृन्मंत्रविदुरा । वयं ते लक्तरूपिणः ॥ मुनिर्जगाद डुःकर्म—नृपमर्मप्रकाशकाः ॥२६॥ नत्तमः पुरुषो लोके । नैव कूटं प्रनाषते ॥ विशुद्धं गदितं वाक्यं । तथा सत्यं च मन्यते ॥ २७ ॥ सत्यं क्रुद्धो द्विजिह्वोऽपि । सर्वन्नक्षी तथानलः ॥ मन्यते सततं लोके । का वार्त्तापरदेहिनां ॥ २८ ॥ येनात्मपरयोः क्लेश—लेशः स्यात्कलहोऽपि च ॥ मुनयस्तन्न नाषंते । परपीडाकरं तथा ॥ २९ ॥

तं नाषासमितिं शुद्धां । पालयंतं मुनीश्वरं ॥ सोनानीर्मानयामास । धर्मं जग्राह चार्हतं ॥ ३० ॥ एवं द्वितीया समिति—स्त्वया धार्या विवेकतः ॥ यथा ते पूज्यता लोके । नवेदत्र परत्र ॥ ३१ ॥ आहारोपधिशय्याद्य—मुद्गमोत्पादनैषणैः ॥ दोषैर्गृह्णाति रहितं । सैषणासमितिर्यतेः ॥ ३२ ॥ तद्यथा—षमूजीवकायमाहत्य । साध्वर्थमशनादिकं ॥ गृहस्थैः क्रियते यच्च । तदाधाकर्म कथ्यते ॥ ३३ ॥ सर्वन्निक्षाचराणां वा । दानार्थं यद्विधीयते ॥ यतिन्निः शुद्धमतिन्नि—स्तदौद्देशिकमूदितं ॥ ३४ ॥ आधाकर्मावयवयुक् । पूतिकर्म नवेदिह ॥ साध-

र्थे स्वगृहार्थे च । तन्मिश्रं पच्यतेऽत्र यत् ॥ ३५ ॥ स्थाप्यते यत्पृथक् साधु—निमित्तं स्थाप-
ना हि सा ॥ गुरूणामागमे पूर्व—मग्रतोऽनागमे पुनः ॥ ३६ ॥ विशेषं कुरुते श्राद्धः । सा
च प्राभृतिका स्मृता ॥ क्रियते प्रकटं देयं । प्रादुःकारः स उच्यते ॥ ३७ ॥
मूल्येन गृह्यते यच्च । साध्वर्थं क्रीतदोषकृत् ॥ उद्धारेण समानीतं । प्रामृत्यदोषकारकं
॥ ३८ ॥ यद्दीयते परावृत्य । तत्परिवर्त्तितं भवेत् ॥ आनीयोपाश्रये यच्च । दीयतेऽभ्याहृतं हि
तत् ॥ ३९ ॥ कुंपिकानां घटानां वा । द्वारमुद्घाट्य दीयते ॥ भवेदुद्भिन्नदोषः स । साधुभिः
परिवर्जितः ॥ ४० ॥ मालादेरुत्तारितं य—न्मालोपहृतमाह तत् ॥ उद्दालितं च दासादे—रुच्छि-
न्नं तद्धि निर्दिशेत् ॥ ४१ ॥ साधारणं ददात्येको । निसृष्टमिदमीरितं ॥ सर्वेषामनुमतौ च ।
शुद्धं स्यात्तदपि श्रुते ॥ ४२ ॥ प्रथमं स्वगृहार्थं भोः । पश्चाद्यत्यादिहेतवे ॥ अन्नादि किंचि-
त्क्षिपति । विद्यादध्यवपूर्वकं ॥ ४३ ॥ उद्गमाः कथिता दोषाः । षोडशैते जनोद्भवाः ॥ अ-
धुनोत्पादनदोषाः । षोडश श्रमणाश्रिताः ॥ ४४ ॥ बालकान् रमयित्वा यद् । धात्रीदोषः स
उच्यते ॥ संदेशैर्लभ्यते यच्च । दूतीदोषः स वै भवेत् ॥ ४५ ॥ निमित्तांगानि लोकानां । निवे-

द्य यदवाप्यते ॥ निमित्तदोषं तं विंद्या–त्पापसंतापकारकं ॥ ४६ ॥ जात्यादिमदयुक्तानां । तज्जातेः कथनाच्च यत् ॥ आत्मनो लभ्यते भिक्षा । भवेदाजीविका हि सा ॥ ४७ ॥

अन्यदर्शनभक्तानां । तद्भक्तं स्वं निरूप्य च ॥ अन्नाद्याप्नोति यत्साधु–र्दोषः सोऽत्र वनीपकः ॥ ४८ ॥ रोगादीनां प्रतीकारा–च्चिकित्सापिंड उच्यते ॥ क्रोधमानमायालोभा । दोषास्तत्पूर्वकाः स्मृताः ॥ ४९ ॥ दानात्प्रागथवा पश्चात् । स्तुत्वा दातारमुच्चकैः ॥ गृह्णाति साधुर्यद्वस्तु । तत्संस्तवभवं किल ॥ ५० ॥ विद्यया यच्च गृह्णाति । स विद्यापिंड उच्यते ॥ मंत्रेण यदिहादत्ते । मंत्रपिंडः स कथ्यते ॥ ५१ ॥ नेत्रांजनादिना यच्च । स भवेच्चूर्णदोषकृत् ॥ पादप्रलेपमुख्यैर्यत् । सयोग इति विश्रुतः ॥ ५२ ॥ दत्वा मूलादि यत्साधु–र्लभतेऽन्नादिसंचयं ॥ तन्मूलकर्मसंविद्या । आहुः पापनिबंधनं ॥ ५३ ॥ गवेषणैषणादोषा । द्वात्रिंशत्कदिता अमी ॥ ग्रहणैषणाया दोषा । दश स्युरुभयोद्भवाः ॥५४॥ शुद्धमपि गृह्यते य–दाधाकर्मादिशंकया ॥ स भवेच्छंकितदोष । एषणासमितौ मुनेः ॥ ५५ ॥ लोकागमगर्हितैर्य–द्वस्तुभिस्तु खरंडितं ॥ अशनादि दीयमान–मृषितं विद्धि तन्मुने ॥ ५६ ॥ पृथिव्यादिषु विन्यस्तं । निक्षि-

सं तद्विचारय ॥ आधादिनं तु सच्चित्तैः । पिहितं न हितं हि तत् ॥ ५७ ॥ निक्षिप्यान्यदथा-
योग्यं । सचित्तेष्वशनादिकं ॥ तद्भाजनेन ददाति । तत्संहृतमुदाहृतं ॥ ५८ ॥ स्थविरांधमत्त-
रोगि-षंढछिन्नकरक्रमः ॥ अदन् पिंजंश्च षट्कायान् । स्पृशन् दाता विवर्जयेत् ॥ ५९ ॥ खंड-
यंतीर्वर्त्तयंती-र्दलयंतीस्तथा कणान् ॥ गुर्विणीर्बालवत्साद्याः । स्त्रीः पुनः परिवर्जयेत् ॥६०॥
अन्येऽपि च दातृदोषाः । स्वयं ज्ञेया विवेकिना ॥ सचित्तं मिश्रमुन्मिश्रं । वर्जनीयं प्रयत्नतः
॥ ६१ ॥ अप्रासचेलं दानादि । प्राद्यापरिणतं तथा ॥ दध्यादिलेपयुक्तं यत् । तल्लिप्तं कथितं
जिनैः ॥ ६२ ॥ उघतस्तच्च न ग्राह्यं । साधुभिः सुविवेकिभिः ॥ यद्ददाति क्षिपन् क्षोण्यां । त-
च्छर्दितमिहोच्यते ॥ ६३ ॥ गृहिसाधुभवा एते । दशदोषाः प्रकीर्त्तिताः ॥ एषणासंभवान् ग्रा-
से । पंचदोषान् शृणूत्तम ॥ ६४ ॥ घृतखंडादिसंयुक्तं । क्षीरादि क्रियतेऽत्र यत् ॥ संयोजना
भवेत्सात्र । रसगौरससंभवा ॥ ६५ ॥ अप्रमाणं द्विधा ज्ञेय-मनिवारं तथा घनं ॥ पुनः पुन-
श्च यद्भुंक्ते । तद्वेदनिवारकं ॥ ६६ ॥

एकस्यामपि वेलायां । द्वात्रिंशत्कवलोपरि ॥ यद्भुंक्ते तद् घनं ज्ञेयं । सिद्धांताचारकोवि-

दैः ॥ ६७ ॥ वरसंयमव्यापारो । जायते ह्यत्र यावता ॥ तावत्प्रमाण आहारः । साधूनां भणितो जिनैः ॥ ६८ ॥ रागेण भुज्यते यच्च । तदंगारं भवेन्मुनेः ॥ द्वेषेण यतिनां यच्च । तद्धूममिह कीर्त्तितं ॥ ६९ ॥ क्षुत्पीडाप्राणसद्ध्यान–रक्षार्थं संयमस्य च ॥ इर्यां च विशोधयितुं । वैयावृत्त्यकृते तथा ॥७०॥ षड्भिश्च कारणैरेभि–र्भोजनं भोजनोचितं ॥ तत्कारणाद्विनं भुक्य–मन्यत्सर्वमकारणं ॥ ७१ ॥ युग्मं ॥ वर्जयेद्भोजनं मोहो–दये रोगोपसर्गयोः ॥ प्राणिरक्षातपोऽर्थं च । प्रांते त्यागकृते तनोः ॥ ७२ ॥ इति सप्तचत्वारिंश–द्दुष्टदोषैरदूषितं ॥ तथा शय्यातराहार–प्रमुखैश्च विवर्जितं ॥ ७३ ॥

अन्नादि साधुर्यो भुंक्ते । एषणासमितिं जने ॥ स एव पालयेन्नित्यं । शेषः स्यात्तद्विराधकः ॥ ७४ ॥ युग्मं ॥ कांताररोगदुर्भिक्ष–भयादौ च कदाचन ॥ अतिचारो भवेदेषु । तदालोचनया शुचिः ॥ ७५ ॥ सचित्तं सलिलं चान्नं । खाद्यं स्वाद्यं तथा महान् ॥ प्राणांतेऽपि मुनिर्नैवा–दत्तेऽत्र धनशर्मवत् ॥ ७६ ॥ तथाहि–उज्जयिन्यां पुरि श्रीमान् । धनमित्रो वणिग्वरः ॥ पुरान्भूरधनशर्माख्य–स्तत्पुत्रः शत्रुवर्जितः ॥ ७७ ॥ ज्ञात्वा ह्यसारं संसारं । गुरुपा-

र्श्वे स एकदा ॥ जग्राह दीक्षां ससुतो । विश्रुतो वरकर्मणा ॥ ७८ ॥ कराले ग्रीष्मकाले स
। विहारं वसुधातले ॥ सपुत्रो विदधे साधु–रन्यदा गच्छसंयुतः ॥ ७९ ॥ अटव्यां पतिताः स-
र्वे । साधवः क्षुत्तृषाकुलाः ॥ क्षुल्लको धनशर्मैषु । विशेषात्पीडितोऽभवत् ॥ ८० ॥ पिपासा-
शुष्ककंठः स । गंतुं शक्नोति नो पथि ॥ तेन पश्चात्स्थितोऽभ्येति । पिता मोहेन तिष्ठति ॥
॥ ८१ ॥ मंदं मंदं यथा क्षुल्ल–श्चरतीह तथा पिता ॥ अग्रतो व्रजति प्राणे–भ्योऽपि वल्लभ-
पुत्रकः ॥ ८२ ॥ तावदेकागता तत्र । नदी जलकलामला ॥ प्रेक्ष्य तां मुमुदे साधू । रोगीवा-
मृतसंचयं ॥ ८३ ॥ पुत्रं प्रोवाच वत्स त्वं । जलं पिब यथा तव ॥ प्राणास्तिष्ठंति सार्थे न ।
गंतुं शक्नोषि चाधुना ॥ ८४ ॥ इत्युक्त्वा स नदीकूलं । परं गत्वा च तस्थिवान् ॥ वृक्षांतरि-
त एवातो । मा भूल्लज्जास्य मत्कृता ॥ ८६ ॥ ततो धनशर्मक्षुल्लो । नदीमध्ये प्रविष्टवान् ॥
सलिलं चांजलौ कृत्वा । विचारं कृतवानिति ॥ ८७ ॥ जलैकबिंदावप्यस्मि–न्नसंख्याता जि-
नोदिताः ॥ भवंति जंतवो नित्यं । प्रत्यक्षाश्च त्रसा घनाः ॥ ८८ ॥
एकजीवकृते तान् हि । कथं त्वं हंसि जीव रे ॥ प्राणातिपातविरतिं । कक्षीकृत्यापि संप्र-

ति ॥ ८९ ॥ अकृत्ये विहिते जीव । कष्टपातं नैव जीव्यते ॥ कष्टपातः किंतु भवति । गृही-
तव्रतखंडनात् ॥ ९० ॥ स्नेहमूढः पिता ते चे-त्पानानुज्ञां प्रयच्छति ॥ सर्वज्ञवचनं नैवो-ल्लं-
घनीयं तथापि भोः ॥ ९१ ॥ इत्यादि भावयित्वा स । मुमोच जलमंजलेः ॥ परकूलं गतो
नद्याः । प्राणैर्मुक्तस्ततः क्षणात् ॥ ९२ ॥ शुभभाववशादेष । देवो वैमानिकोऽजनि ॥ अंत-
र्मुहूर्तकालेन । ज्ञातपूर्वभवोऽवधेः ॥ ९३ ॥ ततोऽसौ मानसे दध्यौ । मुनीनां मरणेन भोः
॥ खेदो मा भवतात्तेना-धिष्ठितं वपुरात्मनः ॥ ९४ ॥ शीघ्रगत्याचलत्सोऽपि । पिता हृष्टोऽ-
भवत्तदा ॥ मान्वानोऽनेन पानीयं । पीतं तेनेति सौख्यभाक् ॥ ९५ ॥

ततोऽसौ क्षुत्पिपासादि-पीडितानवगत्य तान् ॥ स्थाने स्थाने गोकुलानि । विदधे वै-
क्रियाणि वै ॥ ९६ ॥ मुनयस्तेषु तक्रादि । गृहीत्वा पपुरुच्चकैः ॥ परमार्थमजानंतः । संतः
सरलबुद्धयः ॥ ९७ ॥ आसन्नगोकुले ताव-दुपधिस्तेन कस्यचित् ॥ साधोर्विस्मारितः स्वस्य
। ज्ञापनार्थं सुपर्वणा ॥ ९८ ॥ ग्रामं गतेन मुनिना । यतीनां गदितं पुरः ॥ गोकुले चोप-
धर्मोऽद्य । स्थितस्तावत्प्रतीक्ष्यतां ॥ ९९ ॥ यावत्तमानयामीत्यु-दीर्यासौ गोकुले गतः ॥ भ-

पथि प्रेक्षते किंतु । गोकुलं नो विलोकयेत् ॥ १००० ॥
समागत्य समाचारं । मुनीनां स न्यवेदयत् ॥ तैर्देवनिर्मितं ज्ञात्वा । मिथ्यादुष्कृत-
भीरितं ॥ १ ॥ देवोऽपि प्रकटीभूय । मुक्त्वा स्वं जनकं तदा ॥ अन्यान्साधून्नमश्चक्रे । वि-
धिवद्वासनापरः ॥ २ ॥ पृष्टः सुसाधुभिः कस्त्वं । सोऽवदत्क्षुल्लकोऽस्म्यहं ॥ तैरूचे जनकं
स्वीयं । कथं नो वंदसेऽधुना ॥ ३ ॥ सोऽवोचत्पापधीदाता । जनको मेऽभवत्पुरा ॥ तेन वंदा-
मि नैवाह-महिंसाव्रतघातकं ॥ ४ ॥ अनेन कथितं किं ते । मुनिभिर्भाषिते सति ॥ वभाण
पूर्वसंबंधं । देवो जनकजल्पितं ॥ ५ ॥ वभाषे धनमित्रर्षि-र्मिथ्यादुष्कृतमस्तु मे ॥ सिद्धां-
तस्य विरुद्धं य-द्भाषितं तत्क्षमस्व भोः ॥ ६ ॥ देवोऽवदच्च रागेण । द्वेषेण च जिनोदितं ॥
अतःपरं विराध्यं ना-नंतसंसारकारणं ॥ ७ ॥
ततः स क्षामणापूर्वं । मुनीन्नत्वा गतो दिवि ॥ एवमप्रासुकं साधो । ग्राह्यं नैव कदा-
चन ॥ ८ ॥ द्रव्यक्षेत्रकालभावै-र्विरुद्धं ह्यशनादिकं ॥ नादत्ते धर्मरुचिवत् । सैषणासमितिः
स तु ॥ ९ ॥ तथाहि——क्वापि गछे धर्मरुचि-र्नामतो गुणतोऽपि च ॥ साधुरासीत्सदाचा-

र–विचारचतुराशयः ॥ १० ॥ सोऽष्टमादितपा ग्रीष्मे–ऽग्निग्रहग्रहणादरः ॥ आतापयति चा-
त्मानं । परीषहचयैर्जयी ॥ ११ ॥ ग्रामांतरं व्रजन् साधुः । सोऽरण्येऽपतदेकदा ॥ क्षुधापि-
पासाबाधाभिः । कंठस्थनिजजीवितः ॥ १२ ॥ वनसुर्याश्च व्यंतर्या । द्वौ नरौ वैक्रियौ कृतौ ॥
तुंबकं कांजिकाकीर्ण–मेकस्य च करे कृतं ॥ १३ ॥

द्वितीयं स जगादेवं । कांजिकं पिब सोऽवदत् ॥ नैवाहं तृषितोऽस्मीति । ततः प्रोवाच
सोऽपि तं ॥ १४ ॥ वहिष्यत्यस्य भारं कः । सोऽगृणाद्देहि साधवे ॥ निक्षिपावनिदेशे वा–ऽ-
नेन कार्यं न मे पुनः ॥ १५ ॥ तत् श्रुत्वा सोऽवदत्साधुं । चेत्कार्यं तद्गृहाण भोः ॥ तुषोद-
कं त्वकं यस्मा–दुष्णितं भक्ष्यमेतकं ॥ १६ ॥ दत्वोपयोगं द्रव्यादि–विचारं कृतवान्मुनिः ॥
न भवेत्कांजिकं द्रव्यं । सौरभ्यगुणसंयुतं ॥ १७ ॥ अरण्यक्षेत्रे दुःप्रापं । निदाघे पुष्पको-
ष्णितं ॥ सम्यग् निरूपयामास । तौ दृष्ट्वा तत आदरात् ॥ १८ ॥ अनिमेषेक्षणौ प्रेक्ष्य । भू-
म्यलग्नपदौ तथा ॥ ततोऽभ्याहृतदोषादि–भयाज्जग्राह तन्न सः ॥ १९ ॥ प्रत्यक्षीभूय सा दे-
वी । बभाण मुनिपुंगवं ॥ धन्योऽसि त्वं जितो येन । पिपासोत्थः परीषहः ॥ २० ॥

इत्थं स्तुत्वाच नत्वा च । देवतादृश्यतां गता ॥ मुनिस्तु निरहंकारो । विजहार वसुंध-
रां ॥ २१ ॥ एषणासमितिश्चैवं । पालनीया विचक्षण ॥ यथा ते कायशुद्धिः स्या । शुद्धाहार-
निषेवनात् ॥ २२ ॥ दृशा वीक्ष्य प्रमृज्याथ । यद्रजोहरणादिना ॥ गृह्यते मुच्यते वस्तु । सा-
ऽदानसमितिः सतां ॥ २३ ॥ अपालने यथा दोषाः । पालने गुणता यथा ॥ सोमिलार्यस्य
संबंधाद् । ज्ञेयं तत्साधुनाधुना ॥ २४ ॥ तथाहि—एकस्मिन्नगरे पूर्वं । निजपापविशुद्धये ॥
सोमिलार्यो द्विजो दीक्षां । जग्राह गुरुसन्निधौ ॥ २५ ॥ विहर्तुकामा आचार्या । एकदा सो-
मिलार्यकं ॥ प्रोचुः पात्रोपकरणं । प्रगुणं कुरु सत्वरं ॥ २६ ॥

तथा च विहिते तेन । गुरवः कार्यतः स्थिताः ॥ पौरुष्यामागतायां ते—ऽन्यधुस्तंप्रति
सांप्रतं ॥ २७ ॥ प्रतिलेखनां पुनस्त्वं । विधेहि विधिनाधुना ॥ पात्रोपकरणादीनां । सहीना-
धिकतायुतां ॥ २८ ॥ तद्विधिश्चैवं—वस्त्रप्रतिलेखनाया—मेकदृष्टिर्नवा नव ॥ आखोटकाः प्र-
खोटकाः । पुरिमाः षट् च कीर्त्तिताः ॥ २९ ॥ देहस्य तु शिरोवक्त्र—हृदयचरणेषु च ॥ ति-
स्रास्तिस्रश्च प्रत्येकं । चतस्रः पृष्टगाः पुनः ॥ ३० ॥ पात्रस्य द्वादश बहि—र्मध्ये च द्वादश

र–विचारचतुराशयः ॥ १० ॥ सोऽष्टमादितपा ग्रीष्मे–ऽभिग्रहग्रहणादरः ॥ आतापयति चात्मानं । परीषहचयैर्जयी ॥ ११ ॥ ग्रामांतरं व्रजन् साधुः । सोऽरण्येऽपतदेकदा ॥ क्षुधापिपासाबाधाभिः । कंठस्थनिजजीवितः ॥ १२ ॥ वनसुर्याश्च व्यंतर्या । द्वौ नरौ वैक्रियौ कृतौ ॥ तुंबकं कांजिकाकीर्ण–मेकस्य च करे कृतं ॥ १३ ॥

द्वितीयं स जगादैवं । कांजिकं पिब सोऽवदत् ॥ नैवाहं तृषितोऽस्मीति । ततः प्रोवाच सोऽपि तं ॥ १४ ॥ वहिष्यत्यस्य भारं कः । सोऽगृणाद्देहि साधवे ॥ निक्षिपावनिदेशे वा–ऽनेन कार्यं न मे पुनः ॥ १५ ॥ तत् श्रुत्वा सोऽवदत्साधुं । चेत्कार्यं तद्गृहाण भोः ॥ तुषोदकं त्वकं यस्मा–दुष्भितं भैक्ष्यमेतकं ॥ १६ ॥ दत्वोपयोगं द्रव्यादि–विचारं कृतवान्मुनिः–॥ न भवेत्कांजिकं द्रव्यं । सौरभ्यगुणसंयुतं ॥ १७ ॥ अरण्यक्षेत्रे दुःप्रापं । निदाघे पुष्पकोष्भितं ॥ सम्यग् निरूपयामास । तौ दृष्ट्वा तत आदरात् ॥ १८ ॥ अनिमेषेक्षणौ प्रेक्ष्य । भूम्यलग्नपदौ तथा ॥ ततोऽभ्याहृतदोषादि–भयाज्जग्राह तन्न सः ॥ १९ ॥ प्रत्यक्षीभूय सा देवी । बभाण मुनिपुंगवं ॥ धन्योऽसि त्वं जितो येन । पिपासोच्चः परीषहः ॥ २० ॥

च्छं स्तुत्वाच नत्वा च । देवतादृश्यतां गता ॥ मुनिस्तु निरहंकारो । विजहार वसुंध-
रां ॥ २१ ॥ एषणासमितिश्चैवं । पालनीया विचक्षण ॥ यथा ते कायशुद्धिः सा । शुद्धाहार-
निषेवनात् ॥ २२ ॥ दृशा वीक्ष्य प्रमृज्याथ । यद्रजोहरणादिना ॥ गृह्यते मुच्यते वस्तु । सा-
ऽदानसमितिः सतां ॥ २३ ॥ अपालने यथा दोषाः । पालने गुणता यथा ॥ सोमिलार्यस्य
संबंधात् । ज्ञेयं तत्साधुनाधुना ॥ २४ ॥ तथाहि—एकस्मिन्नगरे पूर्वं । निजपापविशुद्धये ॥
सोमिलार्यो द्विजो दीक्षां । जग्राह गुरुसन्निधौ ॥ २५ ॥ विहर्तुकामा आचार्या । एकदा सो-
मिलार्यकं ॥ प्रोचुः पात्रोपकरणं । प्रगुणं कुरु सत्वरं ॥ २६ ॥

तथा च विहिते तेन । गुरवः कार्यतः स्थिताः ॥ पौरुष्यामागतायां ते—ऽन्यधुस्तंप्रति
सांप्रतं ॥ २७ ॥ प्रतिलेखनां पुनस्त्वं । विधेहि विधिनाधुना ॥ पात्रोपकरणादीनां । सहीना-
धिकतायुतां ॥ २८ ॥ तद्विधिश्चैवं—वस्त्रप्रतिलेखनाया—मेकदृष्टिर्नवा नव ॥ आखोटकाः प्र-
खोटकाः । पुरिमाः षट् च कीर्त्तिताः ॥ २९ ॥ देहस्य तु शिरोवक्त्र—हृदयचरणेषु च ॥ ति-
स्रस्तिस्रश्च प्रत्येकं । चतस्रः पृष्टगाः पुनः ॥ ३० ॥ पात्रस्य द्वादश बहि—र्मध्ये च द्वादश

याशनादिकं ॥ व्युत्सृजेच्छुद्धदेशे य-स्सोत्सर्गसमितिः स्मृता ॥ ५३ ॥ असंपाते ह्यसंलोके । स्त्रीषंढपशुवर्जिते ॥ निर्जीवे स्थंडिले छाया-सहिते रहिते बिलैः ॥ ५४ ॥ दिग्ग्रामसूर्यपवनान् । वर्जयित्वा च सन्मुखान् ॥ अवग्रहमनुज्ञाप्य । वर्चस्कं कुरुते सुधीः ॥ ५५ ॥ युग्मं ॥ यो धर्मरुचिवत्साधुः । पंचमीं समितिं सदा ॥ पालयेत्परया शक्त्या । स स्यात्संयमशुद्धियुक् ॥ ५६ ॥ तथाहि—

जातश्च कुत्रचिद्गच्छे । मूलोत्तरगुणाग्रणीः ॥ सिद्धांतपठनोद्युक्तो । मुनिर्धर्मरुचिः शुचिः ॥ ५७ ॥ स्वाध्यायव्यग्रमनसा । शोधितं स्थंडिलं न च ॥ तेनैकदा तु संध्यायां । प्रस्रवणस्य भूमिगं ॥ ५८ ॥ बभूव जठरं स्थूलं । शूलं कुक्षौ तथाजनि ॥ शीतकाले तदा सोऽभू-दाकुलो वेगधारणात् ॥ ५९ ॥ तथापि तनुचिंतां नो । करोति भवभीरुकः ॥ मेरुः कल्पांतकालेऽपि । स्वस्थितिं नो त्यजत्यहो ॥ ६० ॥ विशेषतः स्वयं स्वस्यो-पदेशं दातुमुद्यतः ॥ अजनिष्ट शिष्टलोको-चितमेवं विचारवान् ॥ ६१ ॥ प्रमादतो रे जीव त्वं । भवाद्भवनवान् भवे ॥ भ्रांतोऽसि नैव श्रांतोऽसि । यत्करोष्यधुनापि तं ॥ ६२ ॥ अस्मादतो निगोदे त्वं-भ-

विरी ते गतिस्तदा ॥ कथं सहिष्यसे दुःखं । तज्जं येनाकुलोऽमुना ॥ ६३ ॥
इत्येवं भावयंतं तं । ज्ञात्वा काचन देवता ॥ संहर्तुं च तदार्त्तिं द्राक् । प्रज्ञातं प्रकटं व्य-
धात् ॥ ६४ ॥ प्रतिलेख्य स्थंडिलं स । यावत्प्रस्रवणक्रियां ॥ अकरोत्तावत्संजात-मंधकारं
स्वस्त्रावजं ॥ ६५ ॥ अवगत्य देवमायां । मिथ्यादुष्कृतमब्रवीत् ॥ देवताकृतसान्निध्ये । न ग-
र्वमवदत्पुनः ॥ ६४ ॥ पंचमी समितिः साधो । इत्थं धार्या त्वयानया ॥ यतस्ते सद्यतेः शी-
घ्रं । भविष्यति भवकृतिः ॥ ६५ ॥ निकल्पकल्पनामुक्तं । संसिक्तं समतामृतैः ॥ यन्मनः
सा मनोगुप्तिः । कथिता कुशलैरिह ॥ ६६ ॥ अकोपिमुकुटः कोऽपि । श्राद्धः श्रद्धाधरः स्थि-
रः ॥ इमां दधाति वाधाग्नि-भूतोऽपि जिनदासवत् ॥ ६७ ॥ तथाहि—चंपानगर्यां सुश्राद्ध-
प्रतिमाधारकोऽभवत् ॥ जिनदासाभिधः शुद्ध-हृदयः सदयः सदा ॥ ६८ ॥ सोऽष्टमीमुख्यस-
त्पर्व-दिवसेषु विशेषतः ॥ प्रतिमां प्रमितां धत्ते । शून्यागारे विकारमुक् ॥ ६९ ॥ अन्यदा
निजगेहस्य । प्रत्यासन्ने गृहे निशि ॥ चतुर्दश्यां पौषधिकः । प्रतिमां प्रतिपन्नवान् ॥ ७० ॥
तन्निशायां च तत्पत्नी । परपुरुषसंयुता ॥ निजपल्यंकमादाय । तत्रैवागाद्विधेर्वशात् ॥ ७१ ॥

तमोभिरेतया तत्र । स्थितोऽपि निजनायकः ॥ रुद्धदृष्ट्या न विज्ञातः । प्रकृत्यैव स पार्श्वगः
॥ ७२ ॥ सहानीतश्च पल्यंकः । क्षिप्तस्तत्र तया रयात् ॥ चतुश्चरणविन्यस्त–लोहकीलकनिश्च-
लः ॥ ७३ ॥ कायोत्सर्गस्थितस्यांह्रौ । कीलकश्चैक आगतः ॥ भित्त्वा पादं भूमिदेशे । निवि-
ष्टोऽस्य कथंचन ॥ ७४ ॥ तथाविधां प्रियां ज्ञात्वा । व्यथां पादोद्भवां नवां ॥ सहमानोऽपि
नैवासौ । मानसे खेदमादधे ॥ ७५ ॥ संसारस्य स्वरूपं त–द्विरूपं निजचेतसि ॥ भावया-
मास भव्यात्मा । भावनाभरभासुरः ॥ ७६ ॥ अनाचाराः पुरा दारा । अनंता यास्त्वया कि-
ल ॥ भुक्त्वा मुक्ताः संति तासु । गणयैतामपीतरां ॥ ७७ ॥
ईदृशा एव विदुरै–रिमाः शास्त्रे प्रकीर्त्तिताः । निंबश्चेत्कटुतां स्वीयां । दर्शयेत्तत्किमद्भु-
तं ॥ ७८ ॥ नीचैर्याति जलं यद्व–त्सर्पो वक्रगतिर्यथा ॥ वह्निस्तापकरश्चात्र । वामा वामा-
स्तथा जने ॥ ७९ ॥ व्यापारं चेतसश्चेत्त्व–मत्रार्थे नीचगामिनः ॥ ददासि तत्तदानर्थं । करि-
ष्यति तव ध्रुवं ॥ ८० ॥ अन्यः करोति कर्माणि । बध्नाति मनसा परः ॥ तान्येव चित्तं तद्-
हो । स्थिरं कुरु निजं व्रजन् ॥ ८१ ॥ चित्तायत्तं सुखं दुःखं । तद्व्यापारे तयोर्मतिः ॥ तद्वि-

॥ ३१८

रोधे तयो रोध–स्तस्माद्रुंध्य मानसं ॥ ८२ ॥ नरके त्वयका पूर्व–मतोऽनंतगुणा व्यथाः । भुक्ता निमेषमात्रं नो । सुखं तत्र बभूव ते ॥ ८३ ॥ पापं कृत्वा मनश्चैतद्–दूरं यास्यति तत्वतः ॥ त्वं दुःखं पुनरेकोऽत्रा–नंतकाये सहिष्यसे ॥ ८४ ॥

इत्यादिभावनां कृत्वा । मेरुनिश्चलमानसः ॥ मृत्वा वैमानिको देवो । जातः ख्यातयशा असौ ॥ ८५ ॥ तद्देहे पतिते भूमौ । संभ्रांता सा तदाजनि ॥ ज्ञात्वा व्यतिकरं चामुं । खिन्नचित्ताभवत्पुनः ॥ ८६ ॥ त्रिदशोऽवधिनावेत्य । तत्स्वरूपं स आययौ ॥ तत्र तौ प्रतिबोध्याथ । तयोर्दीक्षामदापयत् ॥८७॥ स्वभावाच्छीतलाः संत–स्तापिता अपि केनचित् ॥ विक्रियां नैव कुर्वंति । क्षीरेक्षुरसनीरवत् ॥ ८८ ॥ गृहस्था अपि यद्येवं । मनोरोधं प्रकुर्वते ॥ दृष्टापराधाः प्रसभं । यतीनां तर्हि का स्तुतिः ॥ ८९ ॥ मौनं यः सततं धत्ते–ऽथवा वाग्वृत्तिसंवरं ॥ स वाग्गुप्तिधरः साधुः । कथ्यते जिनशासने ॥ ९० ॥ भाषासमितिवाग्गुप्त्योः । को विशेषोऽत्र कथ्यतां ॥ पद्मसेनेन मुनिना । कथिते गुरुरब्रवीत् ॥ ९१ ॥ भाषासमितिकः साधु–र्वाग्गुप्तो भवति ध्रुवं ॥ गुप्तो भाषासमितिको । भवेद्वा नो भवेदिह ॥ ९२ ॥

भ्रुचरन् कुशलं वाक्यं । भाषागुप्तधरो मुनिः ॥ मौनी गुप्तिधरः किंतु । न भाषासमितिं भजेत् ॥ ए३ ॥ योऽत्र वाग्गुप्तिमाधत्ते । गुणदत्तसुसाधुवत् ॥ चौरा अपि तस्य चाज्ञां । वहंति शिरसा किल ॥ ए४ ॥ तथाहि—एकस्मिन्नगरे चारु—ज्ञातिख्यातिसमन्वितः ॥ गुणदत्तकुमारोऽभू—द्गुणश्रेणिविराजितः ॥ ए५ ॥ अन्यदा गुरुसंयोगं । योगकारणमुत्तमं ॥ पुण्यप्रसादतः प्राप्य । वियोगरहितोऽपि च ॥ ए६ ॥ त्यक्त्वा भवं च विभवं । चतुरौ पितरौ तथा ॥ वर्य स्वजनवर्गं च । गुणदत्तोऽग्रहीद्व्रतं ॥ ए७ ॥ युग्मं ॥

क्रमेण जातो गीतार्थः । परमार्थचिकीरसौ ॥ स्वजनप्रतिबोधाय । चचाल पथि चैकदा ॥ ए८ ॥ मुषितानेकसत्पौरा—श्चौराः क्रूराशयाऽनयाः ॥ मार्गे तस्यामिलन्म्लेच्छाः । स्वेच्छाहाराः कदाचन ॥ ए९ ॥ निर्ग्रंथत्वात्स तैर्मुक्तो—ऽथोक्तोऽसौ मुख्यदस्युना ॥ कस्यापि कथनीयं नो । चौराः संतीति भो पथि ॥ ११०० ॥ तमित्युक्त्वा ततः सोऽपि । यावद्याति कियत्यपि ॥ तावत्सपितृजननी—प्रमुखः स्वजनोऽखिलः ॥ १ ॥ जन्ययात्रार्थमागच्छन् । मिलितस्तस्य भक्तिभाक् ॥ अभ्यर्थ्य तैश्च स पश्चा—द्वालितश्चलितः पथि ॥ २ ॥ युग्मं ॥ तैरेव चो-

रैः सर्वस्वं । गृहीत्वा विधृताश्च ते ॥ तन्मध्ये स मुनिर्दृष्टो । वाचंयमशिरोमणिः ॥ ३ ॥
ततस्तैः कथितं सोऽयं । यो मुक्तोऽस्माभिराव्य भोः ॥ अहो अनेन भीतेन । कस्यापि
गदितं न तु ॥ ४ ॥ तत् श्रुत्वा जननी तस्य । क्रुद्धा सेनापतिं जगौ ॥ क्षुरिकां त्वरितं देहि
। छित्वा कुर्वे यथोदरं ॥ ५ ॥ सोऽवोचद्धेतुना केन । साह येन कुपुत्रकः ॥ नवमासान् धृतः
कुक्षौ । सोऽगृणत्कुसुतः कथं ॥ ६ ॥

सा जजल्प यतो येन । यूयं ज्ञाता अपि स्वयं ॥ अस्माकं कथिता नैव । तेनासौ मे
कुपुत्रकः ॥ ७ ॥ तन्निशम्य स तं प्राह । चेन्माता ते तदा कथं ॥ वयं निवेदिता नास्या । अ-
स्मन्नयवशात्किमु ॥ ८ ॥ ततोऽभणन्मुनिर्वीत-रागवाक्यस्य खंडनं ॥ विनान्यो मे दरो ना-
स्ति । मेदुरो धर्मकर्मणा ॥ ९ ॥ वाचंयमानां सिद्धांते । वाग्गुप्तिर्गणितास्ति या ॥ सा पा-
ल्या यतिभिः सर्वैः । सर्वज्ञाज्ञाप्रपालकैः ॥ १० ॥

कर्णाभ्यां श्रूयते सर्वं । दृष्टिभ्यां प्रेक्ष्यते तथा ॥ सावद्यं कथ्यते नैव । परं कस्यापि
साधुभिः ॥ ११ ॥ स जगौ भवतादेवं । परेषामग्रतो मुने ॥ परं मातृप्रभृतीनां । पुरतो ज-

छ्यते हितं ॥ १२ ॥ वाचंयमोऽप्युवाचैवं । गृहस्थानामियं स्थितिः ॥ यतीनां त्यक्तसंगानां
। सर्वत्र समता मता ॥ १३ ॥ वारा अनंतशश्चेयं । मम जाता जनन्यहो ॥ अहं सवित्री
चैतस्या—स्तथाऽनूवं पुरा ननु ॥ १४ ॥ मात्रादि स्वजनवर्गो । दुर्गतौ पततां नृणां ॥ सहा-
यो नो भवत्येव । सर्वत्र हितकार्यपि ॥ १५ ॥ यद्येन विहितं कर्म । तत्तेनैव प्रयुज्यते ॥ स्वी-
येषु सत्सु बहुषु । यथा रोगादिकं भृशं ॥ १६ ॥ तया देशनया बुद्धः । सेनानीरवदन्मुनिं ॥
॥ धन्योऽस्यगण्यपुण्योऽसि । मतिर्यस्येदृशी भुवि ॥ १७ ॥ ममापि प्रतिबोधोऽद्य । सद्यः स-
म्यगजायत ॥ अतःपरं चौर्यवृत्तिं । करिष्ये न कदाचन ॥ १८ ॥ मुनिमातापि जननी—तु-
ष्टया कुष्टया कृतार्चिता ॥ समर्पितं च मुषितं । सर्वं सर्वात्मनामुना ॥१९॥ स्वजना ध्वस्त-
वृजिना । जिनाज्ञाचारधारकाः ॥ कृतास्तेन कृतज्ञेन । विज्ञेन विशदात्मना ॥ २० ॥ वाग्गु-
प्तिः सततं धार्या । त्वयैवं गुणशालिना ॥ यथान्यथा वृथा वा वाग् । कथं ते जायते ननु ॥
॥ २१ ॥ अंगोपांगानि संकोच्य । कूर्मवत्कृपयान्वितः ॥ कायोत्सर्गादिना तिष्ठेत् । कायगुप्ति-
धरः स हि ॥ २२ ॥ एतां यो मनुजो धत्ते । निजचित्ते विवेकतः ॥ पालयेत्सोऽत्र दुःखेऽपि ।

पथि प्रस्थितसाधुवत् ॥ २३ ॥ कश्चिद्द्विपश्चित्सत्साधुः । सार्थेन सह संचरन् ॥ सावधानतया पृथ्वी-कायादीन् रक्षयेत्सदा ॥ २४ ॥ प्रदेशे सजले सार्थः । स्वभावेनैव संवसेत् ॥ हरित-त्रसबाहुल्यं । सहजं तत्र संभवेत् ॥ २५ ॥ सर्वत्र सोऽतियत्नेन । भूमिभागं विचक्षणः ॥ संशोध्य तिष्ठति प्रायः । साधवः स्युर्दयालवः ॥ २६ ॥

एकस्मिंश्च दिने सोऽस्था-त्तत्र यत्र त्रसा भृशं ॥ तथा हरितकायोऽपि । तेन स्थानमवाप न ॥ २७ ॥ षट्जीवकायरहित-मेकपादमहीतलं ॥ कृच्छ्रेण तेन संप्राप्तं । वासार्थं विधियोगतः ॥ २८ ॥ दत्वा तत्रैकपादं स । कायोत्सर्गेण तस्थिवान् ॥ विशां कुर्वंश्चमत्कारं । नमस्कारं स्मरन् हृदि ॥ २९ ॥ ईदृशे समये जंबू-द्वीपं चावधिना हरिः ॥ विलोकयन् ददृशे तं । कष्टेन स्थितविग्रहं ॥ ३० ॥ तदा मुदा मघवता । प्रणतः संस्तुतश्च सः ॥ पूर्ववत्तत्र मिथ्यादृग् । कोऽपि देवः समाययौ ॥ ३१ ॥ विधाय सिंहरूपं स । पातयामास तं मुनिं ॥ स मिथ्यादुष्कृतं जल्पन् । कायोत्सर्गं पुनर्दधौ ॥ ३२ ॥ आचिंतयदरे जीव । स्वैकपादस्थितस्य ते ॥ स्तोकं दुःखं पुनः स्वापा-दन्येषां च क्षयो भवेत् ॥ ३३ ॥ अंगोपांगानि भज्यं ते

। कायोत्सर्गस्थितस्य ते ॥ बहिर्वृत्त्यांतरंगानि । जायंते स्वात्मपुष्टये ॥ ३४॥ हरिरूपधरः कोऽपि । तव कर्मक्षयं स्वयं ॥ करोति बंधुबुद्ध्यात—श्चैनं मानय सत्तम ॥ ३५ ॥ व्याधिहर्त्तुः सुवैद्यस्य । कटुकौषधपायिनः ॥ अंगछेदकृतश्चापि । दीयते वित्तसंचयः ॥ ३६ ॥ भावयन्निति देवेन । ज्ञातो ज्ञानबलात्कलात् ॥ ततः स्वं प्रकटीचक्रे । रूपं भूपंकवर्जितं ॥ ३७ ॥

मुनिं नत्वा सुरेंद्रस्य । स्वरूपं प्रणिगद्य च ॥ सुरो जगाम स्वं स्थानं । मानं मुक्त्वा पुराकृतं ॥ ३८ ॥ साधुः सार्थजनैः सर्वैः । प्रणतो भक्तिपूर्वकं ॥ जिनधर्मप्रशंसां च । निर्ममे निजभावतः ॥ ३९ ॥

एवं त्वया कायगुप्तिः । पालनीया प्रयत्नतः ॥ यथा विशुद्धं प्रथमं । व्रतं ते सर्वथा भवेत् ॥ ४० ॥ अन्यच्च—साधुरपि भग्नसूत्रो । लभते नार्थमन्यतः ॥ रक्षणीयं त्वयातस्त—त्सन्मानव्यवसायतः ॥ ४१ ॥ ये भवंति सदाचारा । ऋषयो ध्रुवदर्शनाः ॥ ते भजंत्युत्तरां काष्टां । पूर्वाशामपरां न च ॥ ४२ ॥ ऋषीभूयापि यो विश्वे । दक्षिणाशां न मुंचति ॥ क्रमाभ्रंशैधते सोऽतः । क्षारः श्रीजनको भवेत् ॥ ४३ ॥ जगत्त्रयवदात्मीय—परतां योऽत्र न श्रयेत् ॥ तस्मि-

न दृष्टे जनाश्रितं । यदात्मवरवेदिनः ॥ ४४ ॥ मुक्तिं यः सेवते नात्र । तस्यामुत्र कुतोऽस्तु सा ॥ लोकेनासेविता वामा । यतः स्युः परलोकगाः ॥ ४५ ॥ जातोऽसीह क्रमान्नूत्त्व–मतो धरासमां क्षमां ॥ सुगोत्रार्थं दधानानां । साधूनां पदमुच्चकैः ॥ ४६ ॥

विमुक्तो विक्रमोऽयं स्या–द्विक्रमाय शिवाध्वनि ॥ जिननामकृते कार्य–स्त्रियोगकलितः पुनः ॥ ४७ ॥ इत्याद्यप्रतिबंधेन । विहारं विदधीत ज्ञोः ॥ प्रतिबंधे तनुक्लेशः । पापलेशः पुनर्भवेत् ॥ ४८ ॥ मत्सरं परगुणेषु । तथापरगुणेषु च ॥ मा कुर्याः स्वगुणस्योच्चै–रुत्कर्षं स्वगुणस्य च ॥ ४९ ॥ इत्थं गुरुवचो ज्ञात्वा । सिद्धांतं सकलं कलं ॥ अर्थतः पाठतश्चासौ । स्तोकैर्ग्रस्तैर्व्यलोकयत् ॥ ५० ॥ चतुर्थषष्टाष्टमाद्यं । विशुद्धं विविधं तपः ॥ करोति पूर्वदुःकर्म–क्षयाय सदयाशयः ॥ ५१ ॥ उपसर्गसहं देहं । यः कुर्यात्तस्य नासुखं ॥ अनावृतं सदा वक्त्रं । शीतादि सहते खलु ॥ ५२ ॥

क्षुधापिपासाशीतोष्ण–दंशाचेलारतिस्त्रियः ॥ चर्या निषद्यासत्कारा–ज्ञानसम्यक्त्वयातनाः ॥ ५३ ॥ तृणस्पर्शवधाक्रोश–रोगलाभमलांश्च सः ॥ शय्याप्रज्ञे इति द्वात्रिं–शतं सेहे

परीषहान् ॥ ५४ ॥ आत्मसंवेदनीयांश्च । देवतिर्यग्नरोद्भवान् ॥ सहते स्वहितायासा-वुपसर्गा-
श्चतुर्विधान् ॥ ५५ ॥ एकदासौ गुरूणां च । वचो लात्वा विवेकतः ॥ गणान्निःक्रम्य विदधे ।
साधूनां प्रतिमा इमाः ॥ ५६ ॥ एकैकामशनैः पानै-र्दत्तिं गृह्णन्नसौ मुनिः ॥ प्रथमां प्रतिमां
तेने । मासं यावत्ततो गणे ॥ ५७ ॥ एवं मासस्य दत्तेश्च । वृद्धिं तावदसौ व्यधात् ॥ यावच्च
सप्तभिर्मासैः । सप्तमी प्रतिमाऽभवत् ॥ ५८ ॥ एकांतरोपवासैः स । रचिताचाम्लपारणैः ॥ अ-
पानैर्बहिरुत्तान-शायी ग्रामात्सुनिश्चलः ॥ ५९ ॥ सहमानश्चोपसर्ग-मुदग्रं सप्तभिर्दिनैः ॥
अष्टमीं प्रतिमां चक्रे । पुनर्गच्छेऽगमत्क्रमी ॥ ६० ॥ युग्मं ॥

एवं काष्टगरिष्टः स । नवमीं सप्तभिर्दिनैः ॥ विदधे विधिसंयुक्तः । स्थित उत्कटिकास-
ने ॥ ६१ ॥ इष्टं निष्ठाविशिष्टश्च । कृतवान् ध्याननिश्चलः ॥ वीरासनस्थो दशमीं । सप्तभि-
र्दिवसैरसौ ॥ ६२ ॥ स्थित्वा बहिरहोरात्रं । कृतषष्टतपा व्यधात् ॥ एकादशीं च प्रतिमां ।
प्रलंबितभुजद्वयः ॥ ६३ ॥ कृताष्टमो ध्यानलीनो । द्वादशीमेकरात्रिकीं ॥ प्रलंबितकरस्तेने ।
दत्तमुक्तिशिलात्मदृक् ॥ ६४ ॥ अन्यदा शुद्धविधिव-द्विंशतिस्थानकानसौ ॥ साधुराराधयामा-

स । वासनावासितांतरः ॥ ६५ ॥ तथाहि—अर्हतां स्थापनानाम—द्रव्यभावभिदां मुदा ॥ अ-
भजद्भक्तिं स मुनि—र्नमनस्तवनादिभिः ॥ ६६ ॥ एकत्रिंशद्गुणाधारा—न्निराकारान्निरंजनान् ॥
सर्वमान्यानसामान्यान् । सिद्धांश्चित्ते वभार सः ॥ ६७ ॥ सन्मानदानविनय—विविधावर्जना-
दिना ॥ पूजां चकार चतुरः । श्रीसंघे स चतुर्विधे ॥ ६८ ॥ आसातनापरित्यागा—त्तदाज्ञा-
परिपालनात् ॥ वहुमानाऽनिदानेन । गुरुभक्तिं व्यधत्त सः ॥ ६९ ॥ वयोवृद्धमहर्षीणां । सं-
यमाचारधारिणां ॥ विश्रामणादिकरणैः । शुश्रूषामकरोदसौ ॥ ७० ॥

स द्वादशांगधरेषु । विदुरेषु विशेषतः ॥ उपाध्यायादिवर्गेषु । भक्तिं भेजे सुशुद्धधीः
॥ ७१ ॥ षष्ठाष्टमादितपसा । पारणं देहधारणं ॥ कुर्वाणेषु च वात्सल्यं । तपस्विषु सदा द-
धौ ॥ ७२ ॥ श्रुतस्य पूर्वाधीतस्य । विश्रुतस्य विचारणां ॥ कुर्वन् ज्ञानोपयोगं स । विदधे
मुनिपुंगवः ॥ ७३ ॥ सम्यक्त्वे मोहनिर्मुक्ते । तत्वश्रद्धानलक्षणे ॥ स मनो निश्चलं चक्रे । क्षा-
यके मोक्षदायके ॥ ७४ ॥ मूलं सर्वगुणानां स । विनयं व्रतधारिणां ॥ विदधानो विशेषेण ।
महत्वं लब्धवान् जने ॥ ७५ ॥

कर्मक्षयकारकेषु । तारकेषु भवोदधेः ॥ आवश्यकेषु स मुनि–रतिचारान्निषिद्धवान् ॥७६॥ शीले चित्तप्रशुकीले । विहीले च विवेकिभिः ॥ दधार दृढतां धर्म–सारे मारेण वर्जितः ॥ ॥ ७७ ॥ क्षणे लवप्रमाणेऽपि । काले नासौ प्रमादवान् ॥ किंतु ध्यानविधानैक–मानसः स- मभूत्तदा ॥ ७८ ॥ तपो द्वादशधा भिन्नं । कर्मक्षयकरं परं ॥ निर्ममे निर्ममः सोऽयं । को- पलोभविवर्जितः ॥ ७९ ॥ स्वलब्धिलब्धं वस्त्रान्न–पात्रादि विविधं सुधीः ॥ साधूनामर्पयामा- स । मुदा सन्मानपूर्वकं ॥ ८० ॥ स्वेच्छया स्वच्छयाऽतुल्य–वात्सल्यभररञ्जासुरः ॥ वैयावृत्त्यं व्य- धत्तासौ । बालग्लानतपस्विषु ॥ ८१ ॥

दधौ समाधिं सोपाधिं । वर्जयित्वोपधिं द्विधा ॥ अकरोच्च स तं साक्षा–दसमाधिपरे परे ॥ ८२ ॥ अपूर्वज्ञानग्रहणं । श्रवणाध्ययनादिना ॥ असृजत्सुधिया सोऽयं । विनयं विद- धन् गुरोः ॥ ८३ ॥ ज्ञानातिचारनिषेधा–त्तदुन्नतिविधानतः ॥ श्रुतभक्तिमसौ चक्रे । परपा- ठनतोऽपि च ॥ ८४ ॥ वरव्याख्यानकरणैः । परवादिजयेन च ॥ जज्ञे विज्ञेन युक्तोऽसौ । शासनस्य प्रभावकः ॥ ८५ ॥ अमीभिः स्थानकैस्तेन । विंशत्यात्र निषेवितैः ॥ अर्जितं ती-

श्रेकृन्नाम—कर्म कर्मरुगौपधं ॥ ८६ ॥

ततः संलेखनामेष । विशेषाद्विधिसंयुतः ॥ कृत्वा निजायुषः प्रांते । चकाराराधनामिति ॥ ८७ ॥ अतीता जनतागीताः । शरणं संत्वनागताः ॥ प्रधाना वर्त्तमाना मे । शुक्लध्यानघना जिनाः ॥ ८८ ॥ सिद्धाः प्रसिद्धाः सर्वेषां । सम्मता योगिन्निर्नताः ॥ ध्यानगम्या गुणै रम्याः । शरणं मे सनातनाः ॥ ८९ ॥ वाचंयमाः सनियमाः । समापालितसंयमाः ॥ ये चानेकविधाः संति । शरणं ते न्नवंतु मे ॥ ९० ॥ जिनाख्यातोऽत्र विख्यातो । धर्मः शर्मनिबंधनं ॥ दयामयः शुद्धनयः । शरणं मेऽस्तु संप्रति ॥ ९१ ॥ इति चतुःशरणं ॥

ज्ञाने कालादिका येऽष्टा—वतिचाराः किलान्नवन् ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृतमस्तु मे ॥ ९२ ॥ शंकाद्या दर्शने येऽष्टा—वतिचाराः किलान्नवन् ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृतमस्तु मे ॥ ९३ ॥ चारित्रे मातृगा येऽष्टा—वतिचाराः किलान्नवन् ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृतमस्तु मे ॥ ९४ ॥

ये च पृथ्व्यादयो जीवा । हता एकेंद्रिया मया ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृत-

मस्तु मे ॥ ९६ ॥ कृमिशंखशुक्तिमुख्या । निहता द्वींद्रिया मया ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृतमस्तु मे ॥ ९७ ॥ लिक्षामत्कूणयूकाद्या । निहतास्त्रींद्रिया मया ॥ तेषु सर्वेषु त्रिविधं । मिथ्यादुष्कृतमस्तु मे ॥ ९८ ॥ मक्षिकालिपतंगाद्या । ये मया चतुरिंद्रियाः ॥ निहतास्तेषु त्रिविधं । मि० ॥ ९९ ॥ जलस्थलखचराद्या । हताः पंचेंद्रिया मया ॥ तेषु० ॥१३००॥

क्रोधलोभभयहास्य—वशेन मयकात्र यत् ॥ भाषितं वितथं वाक्यं । मिथ्यादुष्कृतमस्तु तत् ॥ १ ॥ यत्कपटव्यापृतेन । मया परधनं घनं ॥ गृहीतं भवकोटीषु । मि० ॥ २ ॥ तैरश्च्यं दिव्यं मानुष्यं । मैथुनं सेवितं मया ॥ यदनंतेषु भवेषु । मि० ॥३॥ धनधान्यसुवर्णादौ । ममत्वं विहितं च यत् ॥ भवे भवे मया पूर्वं । मि० ॥ ४ ॥ वधादयो गृहस्थत्वे । प्रथमाणुव्रताश्रिताः ॥ येऽतिचाराः कृतास्तेषु । मि० ॥५॥ मिथ्योपदेशप्रमुखा । द्वितीयाणुव्रताश्रिताः येऽति० ॥ ६ ॥ स्तेनाहृतप्रयोगाद्या—स्तृतीयाणुव्र० ॥ ७ ॥

इत्वरागमनाद्यास्तु । चतुर्थाणु० ॥ ८ ॥ बंधनाद्यैर्धनाद्युत्थाः । पंचमाणु० ॥ ९ ॥ स्मृत्यंतर्ध्यानमुख्याश्च । षष्ठव्रतसमुद्भवाः ॥ ये० ॥ १० ॥ भोजनात्कर्मतो वापि । सप्तमव्रतसं-

भवाः ॥ ये० ॥ ११ ॥ अधिकरणयोजनाद्या । अष्टमव्रतजा मया ॥ येऽति० ॥ १२ ॥ मनो-
दुःप्रणिधानाद्या । नवमव्रतजा मया ॥ ये० ॥ १३ ॥ प्रेषणप्रयोगमुखा । दशमव्रतजा मया
॥ ये० ॥ १४ ॥

अनवेक्ष्योत्सर्गमुख्या । एकादशव्रतोद्भवाः ॥ ये० ॥ १५ ॥ सचित्तक्षेपणाद्या वा । द्वाद-
शव्रतसंभवाः ॥ ये० ॥ १६ ॥ रात्रिभोजनविरति-मुख्येषु नियमेषु यत् ॥ स्खलितं मेऽत्र
संजातं । मि० ॥ १७ ॥ यद्बाह्यमंतरंगं च । तपो द्वादशधा मया ॥ विहितं सत्यां शक्तौ नो ।
मि० ॥ १८ ॥ मोक्षमार्गसाधकेषु । योगेषु सततं मया ॥ न प्रयुक्तं च यद्वीर्यं । मिथ्यादु-
ष्कृतमस्तु तत् ॥ १९ ॥ इत्यतिचाराः ॥ श्रीगुरोर्मुखतो यानि । व्रतानि मयका किल ॥ अं-
गीकृतानि भूयोऽपि । ह्यंगीकारोऽस्तु तेषु मे ॥ २० ॥ क्षाम्यंतु सत्वास्ते सर्वे । ये मया पी-
डिताः पुरा ॥ मैत्र्यस्तु तेषु भूतेषु । प्रभूतेषु सदा मम ॥ २१ ॥ इति क्षामणा ॥ प्राणाति-
पातोऽलीकं चा-ऽदत्तमैथुनसंग्रहाः ॥ क्रोधमानमायालोभ-रागद्वेषाः कलिः पुनः ॥ २२ ॥
अभ्याख्यानं परपरि-वादो रत्यरती तथा ॥ मायामृषावादमिथ्या-दर्शनं शल्यमेव च ॥२३॥

इत्यष्टादशपापस्य । स्थानकानां च वर्जनं ॥ सदा मे नवतान्नूनं । विशेषेणाधुना पुनः ॥ २४ ॥ प्रज्ञादितो जिनधर्म—मार्गः स्वर्गापवर्गदः ॥ प्रकटीकृतः कुमार्ग—स्तस्य गर्हां व्रजेऽधुना ॥ २५ ॥ देवे चतुरशीत्यासा—तनाभिर्दुष्कृतं कृतं ॥ त्रयस्त्रिंशता गुरौ च । तस्य मिथ्यास्तु दुष्कृतं ॥ २६ ॥ देवद्रव्यं गुरुद्रव्यं । भक्षितोपेक्षितं मया ॥ तथा साधारणं द्रव्यं । तस्य० ॥ २७ ॥ शासनस्योड्डाहकराः । सामर्थ्ये सति नो मया ॥ वारिता वारितार्थेन । तस्य० ॥ २८ ॥ नोद्यमो विहितो धर्मे । पापे च प्रकटीकृतः ॥ मेलितं चाधिकरणं । तस्य० ॥ २९ ॥ मिथ्यात्वमोहितेन य—त्कुतीर्थं विहितं मया ॥ इहलोके परलोके । तस्य० ॥ ३० ॥ अनन्त्यानंतकायादि । यन्मया भक्षितं पुरा ॥ अकल्प्यमन्नमंभो वा । तस्य० ॥ ३१ ॥ असतीपोषो रचितो—ऽनर्थदंडोऽथवा मया ॥ भवे भवेऽनर्थहेतु—स्तस्य० ॥ ३२ ॥ पृथ्वीकायं गतेनोच्चै—र्लोष्टलोहतया मया ॥ दुःखिता जीववारा य—त्तस्य० ॥ ३३ ॥

जलकायं गतेनोच्चैः । पूरस्वरूपतया मया ॥ दुःखिता जीववारा यत् । तस्य० ॥ ३४ ॥ वह्निकायं गतेनोच्चै—रत्नपाकदवादिना ॥ दुःखिताः० ॥ ३५ ॥ वायुकायं गतेनोच्चै—र्जलकाऊ-

दिना ॥ दुःखि० ॥ ३६ ॥ वनकायं गतेनोच्चै-र्धनुर्दंडशरादिना ॥ दुःखि० ॥ ३७ ॥ वि-
कलेंद्रियसंज्ञेषु । भवेषु भ्रमता मया ॥ दुःखि० ॥ ३८ ॥ पंचेंद्रियजलचर-भवेषु भ्रमता म-
या ॥ दुःखि० ॥ ३९ ॥ पंचेंद्रियस्थलचर० ॥ ४० ॥ पंचेंद्रियाकाशचर० ॥ ४१ ॥ व्याधसूनि-
कधीवर० ॥ ४२ ॥ पंचदशकर्मभूमि० ॥ ४३ ॥ त्रिंशदकर्मभूनर० ॥ ४४ ॥ अंतरद्वीपमनुज०
॥ ४५ ॥ व्यंतरासुरकुदेव० ॥ ४६ ॥ दुःखार्दितेषु नरक-भवेषु भ्रमता मया ॥ दुःखिता जी-
ववारा य-स्तस्य गर्हां करोम्यहं ॥ ४७ ॥ इति पापगर्हा ॥

सप्तक्षेत्र्यां वित्तबीजं । यदुप्तं मयका पुरा ॥ त्रिधा करणयोगेन । कुर्वे तस्यानुमोदनां
॥ ४८ ॥ ज्ञानदर्शनचारित्र-पालनं विहितं पुरा ॥ त्रिधा० ॥ ४९ ॥ सामायिकादिविधिना ।
कृतमावश्यकं मया ॥ त्रिधा० ॥ ५० ॥ श्रीदेवगुरुसद्भक्ति-र्यत्पुरा विहितादरात् ॥ त्रिधा० ॥
॥ ५१ ॥ मत्कायेन जिनस्यार्चा । जिनचैत्यानि चाभवन् ॥ त्रिधा० ॥ ५२ ॥ संघे महायुका-
येन । पथश्रांते सुखं च यत् ॥ त्रिधा० ॥ ५३ ॥ महनस्पतिकायेन । यदभूज्जिनपूजनं ॥
॥ त्रिधा० ॥ ५४ ॥ जिनधर्मोपकारोऽभू-न्मत्कायेन त्रसेन यत् ॥ त्रिधा० ॥ ५५ ॥ इत्यनुमो-

दना ॥ येन मुक्तेन नैव स्या–त्तृप्तिः कस्यापि कुत्रचित् ॥ चतुर्विधस्याहारस्य । कुर्वे तस्यापि संवरं ॥ ५६ ॥ इत्यनशनं ॥ विना येन सुचारित्रं । दानं शीलं तपस्तथा ॥ अन्यच्छुभं च विफलं । शुभभावो भवत्वसौ ॥ ५६ ॥ इति शुभभावना ॥

सर्वपापक्षयो यस्मा–द्यस्मान्मंगलसंचयः ॥ श्रीनमस्कारमंत्रस्य । ध्यानं तस्यास्तु मेऽधुना ॥ ५८ ॥ धर्मध्यानपरश्चैवं । मृत्वा स आयुषः क्षये ॥ सहस्रारदेवलोके । इंद्रसामानिकोऽभवत् ॥ ५९ ॥ आद्यसंस्थानसंस्थाता । पर्याप्तः पटुविग्रहः ॥ वयःस्थनरसंकाशः । सोंतर्मुहूर्त्ततस्ततः ॥ ६० ॥ तछ्पाछादनमुत्सार्या–विरभूद्भूरिभूषणः ॥ सुगंधश्वाससहितः । सप्तधातुनिराकृतः ॥ ६१ ॥ युग्मं ॥ वदन् जयजयारावं । देवदेवीगणास्तदा ॥ मुदा संयोज्य स्वे पाणी । वाणीमेवंविधां जगौ ॥ ६२ ॥ स्वामिन् केनेह पुण्येन । पुण्येन पूर्वजन्मनः ॥ यूयं स्वर्गे समुत्पन्नाः । प्रज्ञाविज्ञातवाग्भराः ॥ ६३ ॥ विज्ञायावधिना सर्वं । कथयामास तत्पुरः ॥ पुराकृतं स्वं सुकृतं । चारित्रेण समर्जितं ॥ ६४ ॥ तत उत्थाय पल्यंका–द्देवदेवीसमन्वितः ॥ गीतनृत्यविनोदेन । क्रीडावापीं ययौ सुरः ॥ ६५ ॥

त्वा स्वस्थानमर्चयत् ॥ नित्यार्हतस्ततः शस्त-पुस्तकान् विधिसंयुतान् ॥ ६६ ॥ वाचया-
मास विबुधो । मनश्चिंतितसिद्धियुक् ॥ सिंहासनमथारुह्य । नाटकादि व्यलोकयत् ॥६७॥ यु-
ग्मं ॥ कदाचिज्जिनयात्रायां । कदाचिन्नंदने वने ॥ कदाचिद्रम्यवापीषु । स जगामामरीयुतः ॥
॥ ६८ ॥ एवं व्रजन् नवनवं । देवलोकभवं सुखं ॥ कालं निर्गमयामास । वासवोपम एष-
कः ॥ ६९ ॥ देवाः कुर्वंति यत्कार्यं । गमनागमनादिकं ॥ तत्र्यामुत्तरवैक्रिय-रूपेणैव तदादि-
शेत् ॥ ७० ॥ केशादिकरणं तत्र । कदाचित्संभवेत्किल ॥ स्वाभाविकं तु केशास्थि-प्रमुखं
नैव जायते ॥ ७० ॥ यः पूर्वं भवमाप्यनाप्यभजनाद्रेखाधिकोऽभूद्भवा-दंगे चारुजिनागमे
च विधुरो जज्ञे लसद्भावनः ॥ रूपाद्यैर्विहितप्रभावन इनैः प्राप्तौ गुणानां भुवा । नाथः श्री-
विमलो विशालकमलो देयात्स वो मंगलं ॥ ७१ ॥
॥ इति श्रीतपोगणनायकरत्नसिंहसूरिशिष्यभट्टारकश्रीज्ञानसागरसूरिविरचिते
श्रीविमलनाथचरित्रे महाकाव्ये विमलनाथपूर्वभववर्णनो नाम तृ-
तीयः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रं० ( १२७२ )

॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥

सुवर्णगोत्रशोभाढ्यो । मंगलश्रीसमन्वितः ॥ राजेव भायासंयुक्तो । जंबूद्वीपो विराजते ॥ १ ॥ यत्षड्वर्षधरांश्चित्र—मत्र प्रौढक्ष्माधरान् ॥ जगुः सिद्धांतकुशला । बाहुल्यायुषि शाश्वतान् ॥ २ ॥ लघीयानपि योजन—लक्षमानविभूषितः ॥ सततं वृत्तयोगेन । मुख्यत्वं स्वेषु लब्धवान् ॥ ३ ॥ तत्रास्ति भारतं क्षेत्रं । नेत्रं सन्मार्गयायिनां ॥ यत्र मध्यमखंडं तु । तारतारासमं त्वदः ॥ ४ ॥ विनिपत्य चांतराले । यकं वैताढ्यभूभृता ॥ द्विखंडितमखंडश्री—मंडितं पंडितं धिया ॥ ५ ॥ हिमवत्सुवाहिनीभ्यां । प्रत्येकं तत्रिखंडितं ॥ गंगायमुनासंज्ञाभ्यां । धन्याभ्यां वारिसंग्रहैः ॥ ६ ॥ तथा गंगामला यत्र । पद्महृदभवा नवा ॥ पद्मिनीव महेशस्यो—त्तमांगं या व्यभूषयत् ॥ ७ ॥

शृणुतास्याः प्रभावं भो । गांगेयं यन्नपुंसकं ॥ चित्तं हरति सर्वेषां । तदेतत्पुत्रकारणं ॥ ८ ॥ कृष्णवर्णा तु यमुना । शिवमाधववर्जिता ॥ ततो नीचकुसंगेन । मलिना सागरं गता ॥ ९ ॥ वैरिवर्गैः कृतादंभे । मध्यखंडे गुणादरं ॥ कांपिल्यपुरमत्रास्ति । सद्भपास्तिज-

नास्पदं ॥ १० ॥ सशूरं सत्कलावंतं । वंगमंगलमंडितं ॥ बुधाश्रितं सुराचार्य—कविधामवि-
भूषितं ॥ ११ ॥ शनैश्चरर्विसंयुक्तं । सर्वद्व्यसमन्वितं ॥ अनंतं यत्पुरं भाति । परं शून्यं क-
दापि न ॥ १२ ॥ यत्रागाराणि ताराणि । ससाराणि विलोक्य किं ॥ गुप्ताकारा दिवा तारा
। रात्रौ शून्यादराश्चराः ॥ १३ ॥

वंशवृद्धिः सुमनसां । नानावर्णमयं चयं ॥ वहिश्चांतस्तथा यत्र । चारुपद्माकरा धरा
॥ १४ ॥ कृतवर्मा गुरुशर्मा । शुभकर्मा नृपोऽजनि ॥ तत्र वैरिज्ञातमर्मा । जिनधर्मादरः
सुधीः ॥ १५ ॥ सपक्षान् मार्गणान् वैरि—पुरे धर्मधुगच्युतान् ॥ अप्रेषयद्यः समिति—प्रधा-
नोऽप्यदयः सदा ॥ १६ ॥ संसक्तांस्ते स्वहृदये । धारयंति द्रुतं च तान् ॥ तथापि न गुणं ते-
षां । ते गृह्णंति कदाचन ॥ १७ ॥ अस्यैव दोर्वलं किंतु । वर्णयंति रणांगणे ॥ सोऽयं श्री-
कृतवर्मा राट् । घृतवर्मा धरातले ॥ १८ ॥ त्रिभिर्विशेषकं ॥ इने तस्मिन् सप्रतापे । राज्यं
कुर्वति भूतले ॥ यच्छाया सर्वलोकानां । प्रबभूव तदद्भुतं ॥ १९ ॥ सुतारा वरनक्षत्र—माला-
मंडितविग्रहा ॥ अस्य राज्ञोऽभवत्पत्नी । श्यामा कामादरस्पृशः ॥ २० ॥ ब्राह्मीव ब्रह्मसंयु-

क्ता । लक्ष्मीरिव जिनप्रिया ॥ रामाभिरामा सीतेव । शिवेव शिवमार्गगा ॥ २१ ॥ सधर्म-
पुत्रा कुंतीव । रोहिणीव विधौ रता ॥ दमयंतीव दौःस्थ्येऽपि । प्रियं यानलसंगता ॥ २२ ॥

अथ पद्मसेनराज्ञो । जीवः पीवरजीवितं ॥ सहस्रारे सौख्यसारे । देवलोके विभुज्य च ॥ २३ ॥ वैशाखशुद्धद्वादश्यां । तिथौ मान्यातिथौ पृथौ ॥ उत्तरभद्रपदासु । वर्त्तमाने विधावुडौ ॥ २४ ॥ ततश्च्युत्वावधेर्मत्वा । च्यवनं भवनं श्रियः ॥ मत्यादिज्ञानत्रययुक् । श्यामाकुक्षाववातरत् ॥ २५ ॥ त्रिभिर्विशेषकं ॥ सुगंधद्रव्यसद्वाते । तदावासे नृपप्रिया ॥ प्रसुप्ता सुखशय्यायां । सज्जायां तूलिकादिभिः ॥ २६ ॥

श्यामादेवी गजादीन् सा । शुभस्वप्नांश्चतुर्दश ॥ आधिव्याधिपरित्यक्ता । ददर्श क्षणदाक्षणे ॥ २७ ॥ मुक्ततंद्रास्तदा चेंद्रा–स्तत्रागत्य चलासनाः ॥ गर्भस्थितं जिनं नत्वा । वक्तुमेवं दुढौकिरे ॥२८॥ अन्ये देवाः किलान्येषां । कुत्रचित्स्युर्महीतले ॥ परं देवाधिदेवत्वा–त्त्वमेवास्माकमर्हसि ॥ २९ ॥ जीमूतपटलांतःस्थो । हंसो हंति यथा तमः ॥ तथा त्वं गर्भसंस्थोऽपि । त्रिजगद्व्यापि तत्किल ॥ ३० ॥ वसुधागतं निधानं । यथा वसुसमृद्धिदं ॥ गर्भा-

तरितोऽपि तथा । त्वं तद्वृद्धिकृते मतः ॥ ३१ ॥ स्वामिन् दिवैकसामेका । रीतिरत्र प्रवर्त्तते
॥ देवलोकाद्यदेहैते । समायांति समाधिना ॥ ३२ ॥
तदा ज्ञानत्रयं तत्र । मुक्त्वा चायांति भूतले ॥ त्वया पुनस्तदानीतं । स्फीतं प्रबलशा-
लिना ॥ ३३ ॥ तथाप्यस्मान्निरीर्ष्या नो । विदिता चिंतितं हृदि ॥ प्रभवो यच्च कुर्वंति । तत्स-
र्वं ज्ञाप्यमेव वै ॥ ३४ ॥ एतावता मृतं नो य-दासनान्यधुना त्वया ॥ चालितानि कथंकारं
। सारं ते चच्चोऽतिगं ॥ ३५ ॥ तथापि पुरुषो भूत्वा । बहिर्निस्सर सुस्वर ॥ सम्यग्दृष्टिब-
लेन त्व-मस्मान्निरुपलक्षितः ॥ ३६ ॥ वयं पृष्टं न मोक्ष्याम-स्तावत्तव शिवप्रद ॥ यावत्त्वं
केवलज्ञान-मस्माकं न प्रयच्छसि ॥ ३७ ॥ प्रभोस्ते सेवकप्राया । न्यायान्यायप्रवर्त्तिनः ॥ अ-
तस्तेषां वचोवृत्ति-रेवं भवति भूतले ॥ ३८ ॥ जगत्प्रभुं गतारंभं । विज्ञप्येति बिडौजसः ॥
श्यामादेवीं प्रणम्योच्चै-र्वदंतिस्म विशारदाः ॥ ३९ ॥ गर्भरत्नधरे देवि । नमस्तुभ्यं शुभंव-
दे ॥ रोहणाद्री रत्नगर्भो । यथा मान्यो महीभुजां ॥ ४० ॥ सूरप्रसूर्यथा पूर्वा । दिक् लोके
पूज्यतां गता ॥ कल्पद्रुमाऽनमा भूमि-र्यथा सेव्या सुपर्वभिः ।४१। मुक्तागर्भा यथा शुक्ती ।

रक्ष्यते यत्नतो जनैः॥ गर्भानुभावतो विश्वे । तथा त्वं सर्वसत्तम ॥ ४२ ॥ गजदर्शनतो देवि । राजमान्यः सदोत्तमः ॥ भद्रजातिर्दानकर-स्तव पुत्रो भविष्यति ॥ ४३ ॥ मार्गयायी कुमाभारो-द्धारोऽतुलबलोज्ज्वलः ॥ शुभदर्शनः सुतस्ते । भावी वृषविलोकनात् ॥ ४४ ॥ अनेकपराजिजेता । वनभाक् साहसाग्रणीः ॥ असहायकार्यकारी । सुतस्ते सिंहदर्शनात् ॥ ॥ ४५ ॥ लक्ष्मीर्वा सर्वसन्मान्यो-ऽवदान्यो वसुधातले ॥ सन्नंदनो नंदनस्ते । श्रियोऽभिषेकदर्शनात् ॥ ४६ ॥ गुणसंसर्गबद्धात्मा । गंधबंधुरबंधकः ॥ स्ववासवासितावासो । दामालोकात्तवांगजः ॥ ४७ ॥ गोभिर्विश्वसंताप-हरः संयोगिसौख्यदः ॥ कलाकलापयुक्पुत्रो । भावी ते चंद्रदर्शनात् ॥ ४८ ॥ पंकहर्त्ता मार्गदर्शी । सम्यग्दृष्टिरुचिप्रदः ॥ दुर्निरीक्ष्योऽन्यलोकानां । त्वत्सुतः सूर्यदर्शनात् ॥ ४९ ॥ प्रासादस्थो ध्वज इव । वंशस्याग्रे चटिष्यति ॥ रत्नकोटीशधाम्नश्च । त्वत्सूनुस्तन्निरीक्षणात् ॥ ५० ॥

सुवृत्तशाली सुमनः-श्रेणीशोभितविग्रहः ॥ अमृतप्रीणितान्यस्त्व-दात्मजः कुंभदर्शनात् ॥ ५१ ॥ तोषितानेकसुवयाः । कमलावलिमालितः ॥ पद्मसरोदर्शनात्ते । दारकस्तापहा-

सदा विधौ धृतप्रीति–स्त्वत्सू: रक: ॥ ५२ ॥ धीवरैः सततं सेव्यो । रत्नस्थानममानवान् ॥ विमानदर्शनाद्देवि । त्न-सागरदर्शनात् ॥ ५३ ॥ देवगीतनृत्ययुक्तो । वासवाधिष्टितांतिकः ॥ नायकस्त्वत्सुतो भावी । विष्यति त्वदुद्वहः ॥ ५४ ॥ अनेकवर्णरत्नाढ्य–श्चिंतितार्थप्रदायकः ॥ रत्नराशिनिरीक्षणात् ॥ ५५ ॥

प्रतापाक्रांतदिक्चक्रो । देवताप्रमुखः शुचिः ॥ जाड्यहर्त्ता शुद्धिकर्त्ता । त्वपुत्रो वह्निदर्श-नात् ॥ ५६ ॥ इत्युदित्वा जिनं नत्वा । गत्वा नंदीश्वरं च ते ॥ अष्टाह्निकामहं तत्र । कृत्वा स्वस्थानमन्ययुः ॥ ५७ ॥ पत्युः पार्श्वे ततो देवी । गत्वा स्वप्नान्न्यवेदयत् ॥ तन्निशम्य नृ-पो हर्ष–भरात्प्राह प्रियांप्रति ॥ ५८ ॥ शुभाः स्वप्ना इमे देवि । ये त्वया वीक्षिताः खलु ॥ वरपुत्रप्रदाः पूर्वं । मया चैते श्रुताः श्रुतात् ॥ ५९ ॥ आवयोः सर्वसंपत्ति–र्विपत्तिर्नैव क-स्यचित् ॥ पुत्रोत्पत्तिर्गुरोर्भक्तिः । पत्तिः सर्वजनस्तथा ॥ ६० ॥ राज्यवृद्धिः परा बुद्धिः । का-र्यसिद्धिर्भविष्यति ॥ प्रसिद्धिः सर्वलोकेषु । समृद्धिर्वरवस्तुनः ॥ ६१ ॥ युग्मं ॥ अग्रेऽपि वज्रि-वचनाद् । ज्ञातार्था राजपत्न्यसौ ॥ पत्युर्वचसा तेनाथ । द्विगुणं हर्षमादधौ ॥ ६२ ॥ सुप्र-

भाते ततो जाते । कृत्यजाते तथा कृते ॥ जनैराकारयामास । स्वप्नलक्षणपाठकान् ॥ ६३ ॥

राज्ञीं यवनिकांतः स्वां । स्थापयित्वांतिके स्वके ॥ पूर्वन्यस्तेष्वासनेषु । विनिवेश्य क्रमेण तान् ॥ ६४ । फलपुष्पौघप्रमुख–मग्रे मुक्त्वा नृपोऽब्रवीत् ॥ दृष्टा गजादयः स्पष्टा। देव्या स्वप्नाश्चतुर्दश ॥ ६५ ॥ तेषां फलं कलं किं मे । भविष्यति निवेद्यतां ॥ तदा विचारं ते चक्रु–रन्योऽन्यं शास्त्रकोविदाः ॥ ६६ ॥ गृहीतार्थेषु सर्वेषु । मुख्यो दक्षो जगौ नृपं ॥ स्पष्टैरेभिर्यतो दृष्टै–र्भवेत्तीर्थंकरः सुतः ॥ ६७ ॥ अस्पष्टैश्च पुनश्चक्री । वासुदेवस्तु सप्तभिः ॥ सीरी चतुर्भिर्विज्ञेय । एकेन नृपतिः पुनः ॥ ६८ ॥

तत् श्रुत्वा नृपतिस्तुष्टः । परिवारपरिवृतः ॥ रोमांचकवचं बिभ्रद् । हर्षाश्रुभरभासुरः ॥ ६९ ॥ संतोष्य वसनाद्यैस्तान् । प्रेषयामासिवान् गृहे ॥ राज्ञ्यै न्यवेदयत्सर्वं । ततः सा निश्चयं दधौ ॥ ७० ॥ युग्मं ॥ संयोज्य स्वकरौ भूपं । सा जगौ मोदमेदुरा ॥ एवमेव मम स्वामिन् । भवताभिवतातिकृत् ॥ ७१ ॥ संतानवाक्यसंतत्या । तयोः सुखनिमग्नयोः ॥ दिवसा रभसा जग्मु–रधिकाधिकसन्मुदः ॥ ७२ ॥ गर्भप्रभावतो राज्ञः । पुरे चांतःपुरे पुरे ॥

स्वदेशे परदेशे नो । आधिव्याधिव्यथाकथा ॥ ७३ ॥ श्यामासौधाजिरं वायु–कुमाराश्चार्यका-
र्यगाः ॥ मार्जयांचक्रिरे शक्रा–दिष्टाः शिष्टास्तदा मुदा ॥ ७४ ॥ गंधोदकैरभ्यषिंचन् । कुमा-
र्यो मेघगा हि तत् ॥ ऋतुदेव्योऽकिरन् पुष्प–प्रकरान् सुकरानिह ॥ ७५ ॥ विदधुर्देहशुश्रूषां
। तस्या व्यंतरदेवताः ॥ ज्योतिष्कप्रमदा रत्ना–दर्शं पुनरदर्शयन् ॥ ७६ ॥ श्यामाकुक्षौ जिन-
राजे–ऽवतीर्णे राजताजनि ॥ सर्वेषां तद्वसंतोऽपि । ऋतुराजस्तदाभवत् ॥ ७७ ॥ प्रभौ भू-
मौ समायाते । भूरुहा भूस्पृशां तदा ॥ प्रसूनफलपत्राणि । ददुरौचित्यशालिनः ॥ ७८ ॥
तपर्त्तावागते वेलां । समुद्रोऽपि मुमोच ही ॥ राजप्रसादमासाद्य । जिनसामीप्यभाज्यपि ॥७९॥
न जहौ श्यामा वामापि । तां तदा धर्मकर्मणि ॥ यतः श्रद्धाभवत्तस्मिन् । जिनयोरंतरं
महत् ॥ ८० ॥ आषाढेऽर्द्धे गते मासे । तृतीये चारुदोहदः ॥ यत्तस्याः सुकृतस्याहो । अभ-
वद्भुवनार्चितः ॥ ८१ ॥ तेनाद्याप्यत्र नारीणां । धर्मश्रद्धा घना भवेत् ॥ महाजनो येन गतः
। स पंथा किल कीर्त्यते ॥ ८२ ॥

प्रावृट्काले मेघवृष्ट्या । तापव्यापः शमं ययौ ॥ सुश्राद्धानां जिनदृष्ट्या । वांतर्दृष्ट्या

यथा सतां ॥ ८३ ॥ घनं घनरसोपेतं । तर्पयंतं घनं जनं ॥ वीचिमाली तदा दृष्ट्वा । शांतो-
ऽनूद्दानवर्जितः ॥ ८४ ॥ अस्ताघं स जिनं दृष्ट्वा । स्वं चागस्तिचुलूकितं ॥ मुमोचोल्लोलतां
स्वीयां । जलगर्वसमुद्भवां ॥ ८५ ॥ सहंसका शरल्लीघ्रं । श्यामासीमंतकर्मणि ॥ मुदाऽऽययौ
कीरपंक्ति–पटुवंदनमालिका ॥ ८६ ॥ जिनांबाभव्यसीमंतो–त्सवे जाते तदा नवे ॥ धूमयो-
निरपि स्वीयं । कृष्णत्वं प्रजहौ मुदा ॥ ८७ ॥ जगत्यां पंकनाशोऽभू–द्दुर्दिनं प्रलयं गतं ॥ ज-
ज्ञे हंसविचारोऽपि । सर्वज्ञे गर्भगे तदा ॥ ८८ ॥ उर्वी तदोर्वरा सर्वा । बभूवर्धिगणोदयः ॥
शस्यं सहस्रगणितं । जातं सार्वप्रसादतः ॥ ८९ ॥ हेमंतेऽप्यनगाराणां । विहारो यदि जा-
यते ॥ गर्भगेहगते देहे । तन्निष्पत्तिस्तदा न किं ॥ ९० ॥

पर्वण्यपि तमोग्रस्तं । स्वं निरीक्ष्य तथा जिनं ॥ सदा तमोहं सूरोऽपि । मंदतेजास्त-
दाभवत् ॥ ९१ ॥ अनेकान्यत्र क्षेत्राणि । कृष्टिपुष्टिकराण्यलं ॥ तर्हि सार्वभवेष्वेषु । तत्पो-
षस्तु किमुच्यते ॥ ९२ ॥ गर्भाधानं किलास्मासु । जन्मस्नात्रमहोऽपि च ॥ श्यामापि ज-
ननी नाम्ना–ऽस्माकं सद्धर्मचारिणी ॥ ९३ ॥ श्यामाभिरेवं शिशिरे । विमृश्य प्रौढिराश्रिता

॥ प्रमदानां वृद्धिरहो । सुखे स्तोकेऽपि संभवेत् ॥ ९४ ॥ युग्मं ॥ नीचैर्मार्गमदो मुक्त्वा ।
तदा जडाशया अपि ॥ स्थिरायां स्थिरतां भेजु–र्हिमीभूताः प्रभोर्वशात् ॥ ९५ ॥ जाड्ये स-
त्यपि जीवानां । स्याच्छुचिः शुचिरत्र यत् ॥ तन्मन्ये जिनजन्मैव । कारणं भवतारणं ॥९६॥
सर्वर्त्तुषु हिताहार–छादनासनमंचकैः ॥ तस्या गर्भस्य यत्पथ्यं । तच्चक्रुर्वृद्धयोषितः ॥ ९७ ॥
व्यतीतेष्वष्टमासेष्वे–कविंशतिदिनेषु च ॥ माघशुक्लतृतीयाया । विभावर्यां शुभे क्षणे
॥ ९८ ॥ उत्तरभाद्रपदास्थे । चंद्रे स्वोच्चग्रहेषु च ॥ तिष्ठत्स्वन्येषु शूकर–लक्ष्माणं कनकप्र-
भं ॥ ९९ ॥ ज्ञानत्रयधरं धीरं । गंभीरं सागरादपि ॥ तनयं सुषुवे श्यामा । तेजःपुंजविरा-
जितं ॥ १०० ॥ त्रिभिर्विशेषकं ॥ बभूराशाः सप्रकाशाः । साकाशाः काशपांडुराः ॥ नार-
काणामपि तदा । क्षणं सुखमजायत ॥ १ ॥ सोच्छ्वासा पृथिवी जज्ञे । तथा च निर्मलं प-
यः ॥ दक्षिणार्चिरभूद्वह्निः । सुरभिर्मारुतो ववौ ॥ २ ॥ पुष्पाढ्यास्तरवो जाता । जाते ख्या-
ते जगत्प्रभौ ॥ जिनस्याचिंत्यमाहात्म्यं । सर्वदा भवति क्षितौ ॥ ३ ॥ घनाश्रये दुंदुभयो ।
नेदुर्गंभीरनिःस्वनाः ॥ सुगंधोदकवृष्टिश्च । पुष्पवृष्टिस्तथाप्यभूत् ॥ ४ ॥ अथासनप्रकंपेन ।


॥ ३४५ ॥

प्रयुक्तावधयो द्रुतं ॥ स्वस्वस्थानाद्दिक्कुमार्य-स्तत्राजग्मुः शुभाशयाः ॥ ५ ॥

भोगंकरा भोगवती । सुभोगा भोगमालिनी ॥ सुवत्सा वत्समित्रा च । पुष्पमाला त्वनिंदिता ॥ ६ ॥ एता अष्टावधोलोक-वासिन्यो दिक्कुमारिकाः ॥ आगत्य सूतिसदनं । जिनं नत्वा च तत्प्रसूं ॥७॥ न भेतव्यं जगन्मात-र्जिनजन्मोत्सवं वयं ॥ कर्त्तुं समागताः स्मोऽद्य । प्रोच्यैवं सूतिकागृहं ॥ ८ ॥ परितो योजनभूमि-शुद्धिं कृत्वा सुवायुना ॥ जिनगीतपरास्तस्थु-स्तदासन्नकृतासनाः ॥ ९ ॥ अथोर्ध्वलोकसंस्थानाः । प्रस्थानादरसुंदराः ॥ आगता भुवनेशस्य । भवनेऽष्टाविमास्तदा ॥ १० ॥

मेघंकरा मेघवती । सुमेघा मेघमालिनी ॥ तोयधारा विचित्रा च । वारिषेणा बलाहिका ॥ ११ ॥ इमा जिनं जिनांबां च । प्रणम्य योजनोन्मितां ॥ गंधोदकैर्भुवं सिक्त्वा । पुष्पवृष्टिं व्यधुस्तरां ॥ १२ ॥ सर्वज्ञस्य तदंबाया । नतिः कार्यप्रकाशनं ॥ गीतगानं स्वदिक्स्थानं । दिक्कन्यानां विधिस्त्वयं ॥ १३ ॥ ततोऽष्टौ पूर्वरुचका-चलस्थानात्सदर्पणाः ॥ तत्रागत्य कृताचारा-स्तस्थुः स्वदिशि सुंदराः ॥ १४ ॥ ताश्च नंदोत्तरानंदे । आनंदानंदिवर्द्धने ॥ विज-

कन्या भृंगारपाणयः
या वैजयंती च । जयंती चापराजिता ॥ १५ ॥ अष्टौ दक्षिणरुचकात् । कन्या भृंगारपाणयः
॥ समायाताः परिज्ञात-विधयोऽवधिसंयुताः ॥ १६ ॥ सुमहारा सुप्रदत्ता । सप्रबुद्धा यशोध-
रा ॥ लक्ष्मीवती शेषवती । चित्रगुप्ता वसुंधरा ॥ १७ ॥

प्रतीचीनरुचकत-स्तालवृंतकराः पराः ॥ एता अष्टौ दिक्कुमार्यो । मार्याधिव्याधिरक्ष-
काः ॥ १८ ॥ इलादेवी सुरादेवी । पृथिवी पद्मवत्यपि ॥ एकनासा नवमिका । सीता भद्रेति
नामतः ॥ १९ ॥ एत्योत्तररुचकतो । विहितोत्तरवैक्रियाः ॥ सचामरा जिनं नत्वा । प्रसूं च
स्वदिशि स्थिताः ॥ २० ॥ अलंबुसा मिश्रकेशी । पुंडरीका च वारुणी ॥ हासा सर्वप्रभा चै-
व । श्रीर्ह्रीरित्यभिधानतः ॥ २१ ॥ युग्मं ॥ विदिग्रुचकतोऽप्येयु-श्चतस्रो दीपपाणयः ॥ चि-
त्रकनका सुतेरा । चित्रा सौत्रामणी पुनः ॥२२॥ आगच्छन्मध्यरुचका-च्चतस्रो दिक्कुमारिकाः
॥ रूपासिका सुरूपा च । रूपा च रूपकावती ॥२३॥ नाभिनालं जिनेशस्य । चतुरंगुलवर्जि-
तं ॥ तच्छित्वा विवरं भूमौ । कृत्वा तच्च निचिक्षिपुः ॥ २४ ॥ रत्नैः प्रपूर्य वर्यै त-द्विवरं वर-
द्रवज्रैः ॥ कृत्वा च पीठिकाबंधं । दूर्वां तत्राध्यरोपयत् ॥ २५ ॥

प्रयुक्तावधयो द्रुतं ॥ स्वस्वस्थानाद्दिक्कुमार्य—स्तत्राजग्मुः शुन्नाशयाः ॥ ५ ॥

न्नोगंकरा न्नोगवती । सुन्नोगा न्नोगमालिनी ॥ सुवत्सा वत्समित्रा च । पुष्पमाला त्वनिंदिता ॥ ६ ॥ एता अष्टावधोलोक—वासिन्यो दिक्कुमारिकाः ॥ आगत्य सूतिसदनं । जिनं नत्वा च तत्प्रसूं ॥७॥ न न्नेतव्यं जगन्मात—र्जिनजन्मोत्सवं वयं ॥ कर्त्तुं समागताः स्मोऽद्य । प्रोच्यैवं सूतिकागृहं ॥ ८ ॥ परितो योजनन्नूमि—शुद्धिं कृत्वा सुवायुना ॥ जिनगीतपरास्तस्थु—स्तदासन्नकृतासनाः ॥ ए ॥ अथोर्ध्वलोकसंस्थानाः । प्रस्थानादरसुंदराः ॥ आगता भुवनेशस्य । न्नवनेऽष्टाविमास्तदा ॥ १० ॥

मेघंकरा मेघवती । सुमेघा मेघमालिनी ॥ तोयधारा विचित्रा च । वारिषेणा बलाहिका ॥ ११ ॥ इमा जिनं जिनांबां च । प्रणम्य योजनोन्मितां ॥ गंधोदकैर्भुवं सिक्त्वा । पुष्पवृष्टिं व्यधुस्तरां ॥ १२ ॥ सर्वज्ञस्य तदंबाया । नतिः कार्यप्रकाशनं ॥ गीतगानं स्वदिक्स्थानं । दिक्कन्यानां विधिस्त्वयं ॥ १३ ॥ ततोऽष्टौ पूर्वरुचका—चलस्थानात्सदर्पणाः ॥ तत्रागत्य कृताचारा—स्तस्थुः स्वदिशि सुंदराः ॥ १४ ॥ ताश्च नंदोत्तरानंदे । आनंदानंदिवर्द्धने ॥ विज-

सनानि प्रपेदिरे ॥ ३६ ॥ युग्मं ॥ सौधर्मेंद्रस्ततस्तेषु । सेनानीं नैगमेषिणं ॥ आहूय कथया-
मास–सुरानाकारयेति द्रुतः ॥ ३७ ॥ घंटां योजनमानां तां । सुघोषां नामतोऽथतः ॥ अवा-
दयत्ततः शीघ्रं । वारांस्त्रीन् हरिशासनात् ॥ ३८ ॥ समकालं तदेकोन–द्वात्रिंशल्लक्षसंख्यया
॥ विमानेषु प्रतिशब्दा । घंटानां घटनामगुः ॥ ३९ ॥

तन्निशम्य सुराः सर्वे । सावधानास्तदाऽभवन् ॥ घंटानिनादे विश्रांते । सेनानीः प्रो-
चिवानिदं ॥ ४० ॥ सुपर्वाणः सुपर्वाद्य । जिनजन्म यतोऽजनि ॥ अतो हरिस्तत्र गंता । यू-
यमप्येत सत्वरं ॥ ४१ ॥ सम्यक्त्वधारिणो देवा–स्तदाकर्ण्य वचो रुचिं ॥ दधानाः सावधा-
नाः स्राक् । गमनाय मुदाऽभवन् ॥ ४२ ॥ इंद्रादेशवलात्केचि–त्केचित्तत्र वचोवलात् ॥ म-
होत्सवदिदृक्षायै । केचिन्निजवशावशात् ॥ ४३ ॥ सर्वे सर्वात्मना तत्र । विविधैर्वाहनैर्युताः ॥
गमनायोत्सुका जाताः । पातापातपराः सुराः ॥ ४४ ॥ पंचशतयोजनोच्चं । लक्षयोजनविस्तृ-
तं ॥ पालको वासवादेशा–द्विमानं पालकाभिधं ॥ ४५ ॥ अदंभ्रस्तंभसंयुक्तं । क्वणत्किंकि-
णीशोभितं ॥ तोरणालिराजमानं । प्रधानं कृतवांस्तदा ॥ ४६ ॥ युग्मं ॥

॥ १४९ ॥

सूतिसौधाच्च त्रीन् पूर्व–दक्षिणोत्तरदिक्षु ताः ॥ रंभागृहांश्चतुःशाल–स्थितसिंहासना-
न् व्यधुः ॥ २६ ॥ दक्षिणौकसि ता नीत्वा। जिनं च जिनमातरं ॥ सिंहासने चतुःशाल–स्थि-
ते रत्नमये न्यधुः ॥ २७ ॥ कृत्वाभ्यंगं दिव्यतैलै–स्तथोद्वर्त्तनकैस्तयोः ॥ उद्वर्त्तनं विधायाशु
। पूर्वरंभागृहेऽथ ताः ॥ २८ ॥ सिंहासने पादपीठ–युते न्यस्य निवेश्य ताः ॥ उभौ सन्नूप-
णौ चक्रुः । स्नपयित्वामलैर्जलैः ॥ २९ ॥ नीत्वोत्तरचतुःशाल–पीठे तौ दिव्यरत्नके ॥ गोशी-
र्षचंदनं कुड–हिमाद्रेराभियोगिकैः ॥ ३० ॥ आनाय्य मथितारणि–काष्ठजेनाग्निना पुनः ॥
दग्ध्वा रक्षापोट्टलिकां । कृत्वा च तत्करे न्यधुः ॥ ३१ ॥ युग्मं ॥ पर्वतायुर्भवार्य त्व–मित्यु-
क्त्वा श्रवणांतिके ॥ एता आस्फालयामासु–रन्योऽन्यं ग्रावगोलकौ ॥ ३२ ॥

जिनं जिनप्रसूं चापि । सूतिकावसथेऽथ ताः ॥ संस्थाप्य परितस्तस्थु–र्गायंत्योऽर्हद्गुणा-
न् बहून् ॥३३॥ अथासनानि सर्वेषां । समकालं बिडौजसां॥ अचलन्निश्चलान्युच्चै–रचलान्याजि-
नि प्रभौ ॥३४॥ विज्ञायावधिना सद्यो । जिनजन्म पुरंदराः ॥ सुंदरादरतः सर्वे । प्रचुरानंदमे-
दुराः ॥ ३५ ॥ गत्वा पदानि सप्ताष्टौ । जिनजन्मदिशंप्रति ॥ नत्वा स्तुत्वा च सर्वज्ञं । स्वा-

॥ कुलिशं चैकया मूर्त्या । दधौ दुष्टनिवारकं ॥ ५७ ॥ अन्यैर्देवगुणैर्युक्तो । भक्तोऽसौ जिनशासने ॥ मेरुशैले जगन्नाथं । निनाय विधिपूर्वकं ॥ ५८ ॥ चूलिकादक्षिणेनायं । वने पांडुकसंज्ञके ॥ अतिपांडुकवलायां । शिलायां धवलद्युतौ ॥ ५९ ॥ सिंहासने स्नात्रयोग्ये । क्रोमस्थापितबोधिदः ॥ पूर्वाशाभिमुखः पूर्व–दिक्पतिः स्राक् न्यषीदत ॥५९॥ युग्मं ॥ ईशाननायकः शूल–पाणिर्वृषभवाहनः ॥ पुष्पकाख्यप्रौढमान–विमानस्थितविग्रहः ॥ ६० ॥ लक्षैस्ततोऽष्टाविंशत्या । विमानानां सुरैः परैः ॥ उत्तीर्य द्वितीयात्कल्पात् । स तिर्यक्दक्षिणाध्वना ॥ ६१ ॥ नंदीश्वरं समागत्य । यानं संक्षिप्य तद्गिरौ ॥ सुरशैले समागच्छ–दतुच्छपरिवारयुक् ॥ ६२ ॥ त्रिभिर्विशेषकं ॥

द्वादशलक्षप्रमितै–र्वृतो वरतरैः सुरैः ॥ आगात्सनत्कुमारेंद्रः । सुमनःसुविमानगः ॥६३॥ अष्टलक्षविमानेशै–र्वृतो माहेंद्रनायकः ॥ श्रीवत्साह्वविमानेन । प्रभोः सामीप्यमागमत् ॥ ॥ ६४ ॥ चतुर्लक्षसुरैर्ब्रह्म–पतिर्वैमानिकैर्युतः ॥ अभ्याययौ नंद्यावर्त्त–विमानेन जिनांतिके ॥ ॥ ६५ ॥ पंचाशतासहस्रैश्च । विमानैनैः समन्वितः ॥ कामगवविमानस्थो । लांतकेंद्रः स-

तत्र सिंहासनं रम्यं । सौधर्मेंद्रस्य निर्मितं ॥ सपादपीठं सोल्लोच–रत्नपीठिकयान्वितं ॥ ४७ ॥ सुत्रामतुल्यदेवानां । देवीनां च सन्नासदां ॥ तत्रांगरक्षकाणां च । पीठानि जूरिशोऽन्नवन् ॥ ४८ ॥ सौधर्मेंद्रः परीवार–सहितः स्वहितश्रितः ॥ जपाविशद्यआस्थानं । गानं देवास्ततो व्यधुः ॥ ४९ ॥ तिर्यग् व्रजन्नुत्तरेण । पथा प्रस्थानकोविदः ॥ वृतो द्वात्रिंशता लक्षै–र्विमानिनां सुरोत्तमैः ॥ ५० ॥ द्वीपं नंदीश्वरं प्राप्या–संख्यद्वीपान्निलंघनात् ॥ चक्रे विमानसंक्षेपं । वासवो वासनापरः ॥ ५१ ॥

नल्लंध्याशेषद्वीपान् । पुरं प्राप्य प्रदक्षिणां ॥ प्रददौ जन्मसौधस्य । सौधर्मेंद्रस्त्रिरुच्चकैः ॥ ५२ ॥ मुक्त्वा विमानमैशान्यां । ययौ सूतिगृहं हरिः ॥ जिनं जिनसवित्रीं च । नत्वा चैवं व्यजिज्ञपत् ॥ ५३ ॥ न्नयं मातस्त्वया नैव । कार्यं वार्यममंगलं ॥ न्नवत्सूनोर्जन्ममहमहं कर्त्तुमिहागतः ॥ ५४ ॥ ततोऽवस्वापिनीं दत्वा । श्यामाया मूर्त्तिपंचकं ॥ चकार वासवः स्वस्य । न्नक्तियुक्तिविशारदः ॥ ५५ ॥ एकमूर्त्तिकरद्वंद्वे । गोशीर्षद्रवचार्चिते ॥ तत्रान्यां प्रतिमां मुक्त्वा । जग्राह स्वामिनं हरिः ॥ ५६ ॥ एकया विशदं छत्रं । द्वाभ्यां चामरयुग्मकं

॥ कुलिशं चैकया मूर्त्या । दधौ दुष्टनिवारकं ॥ ५७ ॥ अन्यैर्देवगुणैर्युक्तो । शक्रोऽसौ जिन-
शासने ॥ मेरुशैले जगन्नाथं । निनाय विधिपूर्वकं ॥ ५८ ॥ चूलिकादक्षिणेनायं । वने पांडु-
कसंज्ञके ॥ अतिपांडुकबलायां । शिलायां धवलद्युतौ ॥ ५९ ॥ सिंहासने स्नात्रयोग्ये । क्रो-
डस्थापितबोधिदः ॥ पूर्वाशाभिमुखः पूर्व–दिक्पतिः स्राक् न्यषीदत ॥५९॥ युग्मं ॥ ईशा-
ननायकः शूल–पाणिर्वृषभवाहनः ॥ पुष्पकाख्यप्रौढमान–विमानस्थितविग्रहः ॥ ६० ॥
लक्षैस्ततोऽष्टाविंशत्या । विमानानां सुरैः परैः ॥ उत्तीर्य द्वितीयात्कल्पात् । स तिर्यक्दक्षि-
णाध्वना ॥ ६१ ॥ नंदीश्वरं समागत्य । यानं संक्षिप्य तद्गिरौ ॥ सुरशैले समागच्छ–दतुच्छप-
रिवारयुक् ॥ ६२ ॥ त्रिभिर्विशेषकं ॥

द्वादशलक्षप्रमितै–र्वृतो वरतरैः सुरैः ॥ आगात्सनत्कुमारेंद्रः । सुमनःसुविमानगः ॥६३॥
अष्टलक्षविमानेशै–र्वृतो माहेंद्रनायकः ॥ श्रीवत्साह्वविमानेन । प्रभोः सामीप्यमागमत् ॥
॥ ६४ ॥ चतुर्लक्षसुरैर्ब्रह्म–पतिर्वैमानिकैर्युतः ॥ अभ्याययौ नंद्यावर्त्त–विमानेन जिनांतिके ॥
॥ ६५ ॥ पंचाशतासहस्रैश्च । विमानेनैः समन्वितः ॥ कामगवविमानस्थो । लांतकेंद्रः स-

मायया ॥ ६६ ॥ मुदागमत्प्रीतिगव–विमानस्थोऽत्र शुक्रराट् ॥ चत्वारिंशत्सहस्राद्य–सुरसंततिसंयुतः ॥ ६७ ॥ सहस्रारसुराधीशो । मनोरमविमानगः ॥ षट्सहस्रविमानौघै–र्देवैर्युक्तः किलागमत् ॥ ६८ ॥ विमलाख्यविमानस्थ । आनतप्राणताधिपः ॥ चतुःशतैर्विमानाग्र–सुरैर्युक्तो मुदाभ्यगात् ॥ ६९ ॥ आरणाच्युतबिडौजा–स्त्रिशतीवरनिर्जरः ॥ तत्रागात्सर्वतोभद्र–विमानस्थानसंस्थितः ॥ ७० ॥

पृथ्व्यां रत्नप्रभाख्यायां । बाहुल्याद्भसतां सतां ॥ भवनव्यंतरेंद्राणा–मासनानि चकंपिरे ॥ ७१ ॥ अवधिज्ञानतो ज्ञात्वा । सुरेंद्रौ चमरो बलिः ॥ धरणेंद्रभूतानंदौ । नागानामधिपौ त्विमौ ॥ ७२ ॥ वेणुदारी वेणुदेवः । सुपर्णानां तु वासवौ ॥ हरिः पुनर्हरिसिंहो । विद्युत्कुमारनायकौ ॥ ७३ ॥ अग्निमाणवाग्निशिखौ । हरी अग्निकुमारगौ ॥ वासवौ पूर्णवशिष्टौ । तथा द्वीपकुमारपौ ॥ ७४ ॥ तथोदधिकुमारेंद्रौ । जलकांतजलप्रभौ ॥ अधिपौ दिक्कुमारणा–ममितामितवाहनौ ॥ ७५ ॥ इंद्रौ वायुकुमाराणां । वेलंबोऽथ प्रभंजनः ॥ महाघोषः सुघोषश्च । स्तनितानां पुरंदरौ ॥ ७६ ॥ तथा कालमहाकालौ । व्यंतराणां सुराधिपौ ॥

माणिभद्रपूर्णभद्रौ । यक्षाणां वरवासवौ ॥
सुरूपः प्रतिरूपश्च । भूतानामधिपौ मुदा ॥ ७७ ॥
तथा भीममहाभीमौ । राक्षसनां सुरेश्वरौ ॥ ७८ ॥ किन्नराणां किंपुरुषः । किन्नरश्च सुराधि-
पौ ॥ किंपुरुषेंद्रौ महापु-रुपस्तुत्यरुषाभिधौ ॥ ७९ ॥
अतिकायमहाकायौ । महोरगगणाधिपौ ॥ गीतयशोगीतरती । गंधर्वत्रिदशेश्वरौ ।८०।
अथाप्रज्ञप्तिपंचप्र-ज्ञप्त्यादीनां तदाययुः ॥ अपराष्टनिकायानां । षोडश त्रिदशाधिपाः ॥ ८१ ॥
तथाप्रज्ञप्तिलेचेंद्रौ । सन्निहितसमानिकौ ॥ हरिधाता विधाता च । पंचप्रज्ञप्तिरक्षकौ ॥८२॥
ऋषिवादितिकासक्ता-वृषिश्च कृषिपालकः ॥ पूतवादितिकाधीशौ । तथेश्वरमहेश्वरौ ॥ ८३ ॥
सुवत्सविशालकाख्यौ । क्रंदितामांचवासवौ ॥ महाक्रंदितिकाधीशौ । हासो हासरतिस्तथा ॥
॥ ८४ ॥ नाम्ना श्वेतमहाश्वेतौ । कुष्मांडानां पुरंदरौ ॥ पंचकः पंचकपतिः । पंचकानां सुरे-
श्वरौ ॥ ८५ ॥ संख्यातीतचंद्रसूर्य-ज्योतिष्काणां पुरंदरौ ॥ इति चतुःषष्टिरिंद्रा । मेरुमूर्ध्नि
तदामिलन् ॥ ८६ ॥ हैमांश्च राजतान् रत्न-मयान् स्वर्णमणीकृतान् ॥ स्वर्णरूप्यमणिमया-
न् । मणिजान् योजनोन्मुखान् ॥ ८७ ॥

मणिरूप्यस्वर्णकृतान् । कलसान् मृत्तिकोद्भवान् ॥ अष्टाधिकं सहस्रं च । प्रत्येकं सुर-
किंकराः ॥ ८८ ॥ अच्युतेंद्रसमादिष्टा । गृहीत्वोत्तमपुद्गलान् ॥ विचक्रुरविरताना—मेतदेव फ-
लं कलं ॥ ८९ ॥ त्रिभिर्विशेषकं ॥ किन्नरेषु गीतगान—परेषु मधुरस्वरं ॥ नृत्यमानेष्व-
मानेषु । देवदेवीगणेषु च ॥ ९० ॥ वाद्यमानेषु वाद्येषु । सनादेषु सुरासुरैः ॥ ज-
ल्पमानेषु वरै—रमरैश्चामरेषु च ॥ ९१ ॥ पठ्यमानेषु मांगल्य—पाठकेषु पटुस्वरं ॥ कुर्वाणेषु
स्तुतिं भावा—च्चारणश्रमणेषु च ॥ ९२ ॥

अन्यद्वाषष्टिशक्रैश्च । युक्तो देवगणैर्वृतः ॥ अच्युतेंद्रो मुदा स्नात्रं । विधिना विदधे वि-
भोः ॥ ९३ ॥ चंदनैश्चर्चितः स्वामी । सुगंधैः कुसुमैः पुनः ॥ पूजितः परया भक्त्या । तथा
शक्त्या जिनेश्वरः ॥ ९४ ॥ प्रथमं प्रथमेंद्रेण । स्नपनं पूजनं स्वयं ॥ न कृतं सुकृतं तेन ।
स्वकृतं मन्यते न सः ॥ ९४ ॥ ईशानेंद्रः पंचमूर्तीः । सौधर्मेंद्र इव स्वयं ॥ कृत्वैकया प्रभुं
स्वांके । धृत्वा सिंहासने वरे ॥ ९५ ॥ न्यषीदत्तैकया छत्रं । द्वाभ्यां च चामरौ दधत् ॥ ए-
कयोल्लालयन् शूलं । मूलं पुण्यमहीरुहः ॥ ९६ ॥ युग्मं ॥ मूर्त्तान् वृषानिव वृषान् । सूर्य-

कांतमणीमयान् ॥ सौधर्मेंद्रो व्यधाद्दिक्षु । चतसृषु ततः सुधीः ॥ ९७ ॥ तच्चंगशृंगनिर्गच्छ–द्धा-
रिधाराभिरष्टभिः ॥ विभोः स वासवश्चक्रे । स्नात्रं पात्रं शुभश्रियः ॥ ९८ ॥ श्रीखंडपुष्पप्र-
मुखैः । पूजयित्वा जिनं व्यधात् ॥ पट्टे मणिमये चाष्ट–मंगलीं रूप्यतंडुलैः ॥ ९९ ॥ कर्पू-
रागुरुसन्मिश्रं । धूपं कृत्वा जिनेशितुः ॥ आरात्रिकं विधायोच्चै–स्तथा मांगल्यदीपकं ॥२००॥
कृतभद्रां योगमुद्रां । गततंद्रां सुराधिपः ॥ ततो निर्माय निर्मायः । स्तोतुमेवं प्रचक्रमे ॥१॥
॥ युग्मं ॥ कल्याणदं श्रीविमलं । कल्याणकविभूषितं ॥ कल्याणवर्णमीशेऽहं । कल्याणप-
दप्रदायकं ॥ २ ॥ तव स्तवं नवं कुर्वन् । बुधो ब्राह्मीसुतोऽस्तु वै ॥ असौ यत्कुरुतामेति । त-
दाश्चर्यकरं परं ॥ ३ ॥
जगत्प्रभुं तथा शंभुं । विदित्वा त्वामहं श्रितः ॥ तथापि यत्परैर्हीये । तन्मन्ये त्वदुपे-
क्षया ॥ ४ ॥ सहस्रनेत्रं यश्चक्रे । मद्वपुः स विधिः सुधीः ॥ अन्यथा तव सद्रूपं । कथं स्वा-
मिन्निरूपये ॥ ५ ॥ परं शतमखस्थाने । मां नो शतमुखं व्यधात् ॥ तव स्तोत्रक्रमं तेन ।
मन्ये तं जडजोद्भवं ॥ ६ ॥ तव जन्ममहं प्राप्य । पुराहं वर्णतोऽर्जुनः ॥ परं पूजाक्षणे सो-

ऽहं । दोःसहस्रधरो न यत् ॥ ७ ॥ शिवेहासंगतः स्वामिं–स्तव कल्याणकागमे ॥ जातो गं-
गाजलधर–स्त्रिधाहं घनवाहनः ॥ ८ ॥ क्ष्माधरेशं त्वां मत्वा । वराहमाश्रितस्ततः ॥ त्वया
स चक्रे लक्ष्मीशो–ऽस्योच्चैराक्रमितं शिरः ॥ ९ ॥

अस्मदीयोऽचलस्तस्मा–त्प्रसादं दीर्घमातनु ॥ सुवर्णदंडदातासौ । नृपसाधुनतःस्तुतः ॥
॥१०॥ युग्मं ॥ क्षणादाभूतशतगुणा । प्राप्य जन्ममहं तव ॥ दोषाभिधानमपि ते । नेष्टं किं
भवदानतः ॥ ११ ॥ पुण्यं स्वभावतोऽप्यर्ण । वः संगाद्धर्णमाप यत् ॥ त्वत्सुवर्णांगसंयोगा-
त् । पवित्रयति कं न तत् ॥ १२ ॥ इति श्रीविमलनाथ–स्नात्रावसरगां स्तुतिं ॥ योऽधीते
विबुधपति–कृतां सतां स सेव्यः स्यात् ॥ १३ ॥ एवं स्तुत्वा जिनं कृत्वा । पुरावद्रूपपंचकं
॥ सौधर्मेंद्रः प्रभुं लात्वा । प्रययौ सूतिसद्म च ॥ १४ ॥

हृत्वावस्वापिनीं देव्या–स्तथा प्रतिकृतिं विभोः ॥ अमुंचत्तीर्थपं पार्श्वे । श्यामांगसुखसंयु-
तं ॥ १५ ॥ जिनस्योच्छीर्षके दिव्ये । वाससी कुंडलं तथा ॥ अमृतं च तथांगुष्ठे । हरिर्भक्तिध-
रो न्यधात् ॥ १६ ॥ धनदो रूप्यकल्याण–रत्नादीनां प्रवर्षणं ॥ नृपौकसि तदा चक्रे । शक्रेण

प्रेरितः प्रगे ॥ १७ ॥ आभियोगिकत्रिदशा । इंद्रादेशवशाद् व्यधुः ॥ एवमाघोषणां देव–नि-
कायेषु चतुर्ष्वपि ॥ १८ ॥

जिनस्य जिनमातुश्च । विरूपं यो निजे हृदि ॥ चिंतयिष्यति तस्याशु । भेत्स्यते सप्त-
धा शिरः ॥ १९ ॥ धात्रीकर्मकरणार्थ–मप्सरःपंचकं त्वसौ ॥ मुक्त्वा नंदीश्वरे यात्रां । कृत्वा
स्वस्थानमासदत् ॥ २० ॥ अन्ये तु वासवा मेरो–रेव नंदीश्वरं ययुः ॥ अष्टाह्निकामहं तत्र ।
कृत्वागुः स्वास्पदं कदं ॥ २१ ॥ तदा यद्दिक्कुमारीभि–र्जन्मकृत्यं गृहोचितं ॥ कृतं प्रभोः
समस्ताभि–र्हस्तन्यस्तस्वकर्मभिः ॥ २२ ॥ तथा शक्रादिभिर्देवै–र्निर्मितश्च वह्निमहः ॥ तेना-
द्यापि पुत्रजनौ । व्यवहारोऽस्ति सोऽखिलः ॥ २३ ॥

पुनर्यस्याधिकारोऽत्र । सोऽपि तत्र गतागतं ॥ द्रुतं प्रकुरुते काले । सौधर्मेंद्र इव ध्रुवं ॥
॥ २४ ॥ सुसुखेऽहर्मुखे जाते । श्यामा कामाभमात्मजं ॥ दृष्ट्वा हृष्टा दिवं मन्ये । न तृणाय
तद्धुभितं ॥ २५ ॥ श्यामापुत्रमुखेंदुं च । वीक्ष्य यत्प्रोज्ज्वलाऽजनि ॥ तद्युक्तं न परं मित्रो–
दये पद्मं सतेजसं ॥ २६ ॥ श्यामायाः परिवारोऽपि । तं प्रेक्ष्य शिवसंगतं ॥ गीतगानादिभि-

स्तत्र । हर्षकोलाहलं व्यधात् ॥ २७ ॥ अहंपूर्विकया पुत्र–जन्मोदंतात्परिछदः ॥ अवर्द्धयन्नृ-
पं सद्यः । प्रपद्य परमां मुदं ॥ २८ ॥ विमुच्य पूर्वापरतां । राजा यद्वसुवर्षणं ॥ स्वरुच्या
विदधे तेषां । राज्ञो धर्मः किलेदृशः ॥ २९ ॥

संसारकारागृहतो । जंतूनेष कृपापरः ॥ मोचयिष्यत्यतो राजा । कारागारममोचयत्
॥ ३० ॥ युगाद्या उच्छ्रिता द्वारे । तोरणाली तथा कृता ॥ मौक्तिकैः स्वस्तिकश्रेणि–र्निःश्रेः-
णिर्हर्षभ्रभ्रृतः ॥ ३१ ॥ गीतगानं तथा दानं । सन्मानं स्वजनव्रजे ॥ भोज्यदानं मुत्प्रधानं ।
कारयामास भूपतिः ॥ ३२ ॥ सुवृत्ताक्षतपात्राणि । सुमनोभिर्युतानि च ॥ चारुवासोभृता-
न्यागुः । क्ष्माभृन्निलये तदा ॥ ३३ ॥ कुलाचारेऽत्र विहिते । निवृत्ते सूतिके तथा ॥ सन्मा-
न्य स्वजनव्रातं । तेषां स पुरतोऽवदत् ॥ ३४ ॥ अस्मिन् गर्भस्थिते मातु–र्विमला यदजाय-
त ॥ मतिः सुतश्च नाम्नासौ । विमलो भवतात्ततः ॥ ३५ ॥

पयोधरपयोऽसौ य–न्न पिबेत्तुष्टिपुष्टिभाग् ॥ क्ष्माधरभरस्वामी । धात्रीदोषोऽत्र कारणं
॥ ३६ ॥ अमृतं शक्रसंसिक्तं । यदंगुष्टात्पिबति प्रभुः ॥ तद्वदंतु विचारज्ञा । विज्ञाः सद्ज्ञान-

पि-
चेतसः ॥ ३७ ॥ सर्वज्ञस्य पुनस्तुंडं । सुधाकुंडं वदाम्यहं ॥ तापादौ सोऽपि तस्मात्तत् । पि-
वति प्रत्युतागतः ॥ ३८ ॥ व्याख्यां वर्षशतं यावत् । करोति भगवान् यदि ॥ क्षुत्तृड्बाधा-
भवं दुःखं । तावच्छ्रोता न वेत्ति यत् ॥ ३९ ॥ जिनवाणी प्रमाणं तत् । सापि सार्वमुखोद्भ-
वा ॥ तत्र चेदमृतं न स्या–त्तदेतत्कथमर्हति ॥ ४० ॥

अन्येषामपि वदने । ह्यमृतं सततं वसेत् ॥ दर्दुरोगाद्युपशम–स्तद्रसेन यतो भवेत् ॥
॥ ४१ ॥ पशूनामपि रसना । यावद्देहे लगत्यहो ॥ तावत्तेषां रुजः शांतिः । प्रत्यक्षं दृश्यते
भुवि ॥ ४२ ॥ यत्क्षिपंति निजांगुष्टं । वदने सदने श्रियः ॥ जिना बाल्ये स्वभावोऽयं । शि-
शूनामधुनाप्यहो ॥ ४३ ॥ कायो निरामयो यस्य । तथा स्वेदमलोज्झितः ॥ श्वासोऽपि सुर-
भिर्वासो । धवलं रुधिरामिषं ॥ ४४ ॥ आहारनीहारविधिः । सन्निधावप्यगोचरः ॥ चत्वारो-
ऽतिशया एते । सहजाः स्युर्जगत्पतेः ॥ ४५ ॥ बद्धमुष्टिर्यतो लक्षं । लभते चेति लोकगीः
॥ बद्धमुष्टिरतः स्वामी । बाल्ये तिष्टेत्तदालये ॥ ४६ ॥

अथार्हन् गर्भयोगींद्रो । योगिभिः पृच्छते ततः ॥ अदृश्यैर्मुक्तिसौख्यं क्व । जिनोऽ-

वगू मुष्टिगं मम ॥ ४७ ॥ न्नण्यते तैः पुनः सार्वे—स्तर्ह्यस्माकं प्रयच्छ तत् ॥ तदा बालस्व-
न्नावत्वा—दंगुष्टं दर्शयेदसौ ॥ ४८ ॥ ततस्ते रुषितैः शंन्नो—रंगुष्टो मर्द्यते हगात् ॥ स्वमुखे
क्षिप्यते तेन । जिनेन स पुनः पुनः ॥ ४९ ॥ अथवा मोहमल्लेन । दूयमानं जगत्त्रयं ॥ वि-
लोक्य मुष्टिलत्ताभ्यां । तं हंति स यतो जिनः ॥ ५० ॥ ते हस्तचरणा युद्दे । यदा श्रांता
न्नवंत्यहो ॥ स्वीयवक्त्रात्सुधाकुंडा—त्पाययेदमृतं तदा ॥ ५१ ॥

यदा मोहजयस्तस्य । जायते त्रिजगत्प्रन्नोः ॥ हस्ततालं तदा सार्वो । हसति प्रमुदाश्रि-
तः ॥ ५२ ॥ मोहक्षयन्नयव्यग्रै—र्मातापित्रादिन्निर्जिनः ॥ विधीयते यदाधस्ता—त्तदा सौख्या-
त्तरन्निव ॥ ५३ ॥ स्वयं तरंतं कलशं । कोऽपि कुर्यादधोमुखं ॥ विशेषतस्तदा सोऽयं । ता-
रयत्यपरानपि ॥ ५४ ॥ पृथ्वीप्रतिष्ठितः स्वामी । यत्तरन्निव दृश्यते ॥ कथयेत्तच्च क्षमया ।
तीर्यते न्नवसागरः ॥ ५५ ॥ सुप्तः पालनके स्वामी । दत्तचंद्रोदयात्मदृक् ॥ संलीनांगः क्षणं
तस्थौ । कायोत्सर्गधरः किमु ॥ ५६ ॥ यत्र तत्र पदार्थेऽसा—वेकदृष्टिस्तदास्ति यत् ॥ तेन स-
र्वज्ञसंज्ञां स । लन्नते बाल्यन्नागपि ॥ ५७ ॥

मुक्तामयं सुवृत्तं च । सगुणं स्वमिव स्वयं ॥ सदालयस्थितं पश्ये-त्कंडुकं स कदाचन ॥ ५८ ॥ व्यापारे चरणस्योच्चै-र्बद्धमुष्टिरपि प्रभुः ॥ क्रमाद्भृत्सु यशो लेभे । चंद्ररश्मिवदुज्ज्वलं ॥ ५९ ॥ अनाहतस्वरे लीनो । धारणासंयुतोऽन्यदा ॥ ईक्षतेतःपुरं सार्वो । देवताचक्रमंभितं ॥ ६० ॥

ऊर्ध्वस्थितः पालनके । गुणयुक् विबुधस्त्रिया ॥ आकृष्टो याति तत्पार्श्वे । परं काष्टाश्रितः प्रभुः ॥ ६१ ॥ स्वस्थाने स्वयमायाति । तदूर्ध्वगुणसंगतः ॥ जिनोऽपि परलोकार्थं । करोतीह गतागतं ॥ ६२ ॥ तत्रस्थं तारकं प्रौढं । फलकव्यूहकल्पितं ॥ इति दृष्ट्वा जगुर्दक्षाः । पोतोऽहो पंजरे स्थितः ॥ ६३ ॥ अव्यक्तं यदसौ शब्दं । कदाचन करोति तत् ॥ निवेदयति लोकानां । मत्स्वरूपं किलेदृशं ॥ ६४ ॥ ज्ञानत्रयधरः स्वामी । यन्मातरिति गीस्तदा ॥ न जगाद ततो मन्ये । मिष्टं ह्यवसरोदितं ॥ ६५ ॥

रमयंते जिनान् देवा । देव्यो वा येति वाग् मुधा ॥ चेष्टया क्रीडयंस्तांस्तां-श्चात्मारामे रमेत सः ॥६६॥ देवादीनां मोचनं य-न्नक्तिरिंद्रस्य साखिला ॥ स्नात्रादिकरणं यद्व-दधुना पर-

मेष्टिनः ॥ ६७ ॥ रिंखन्नसौ सौधमध्ये । बंधूनां कथयत्यदः ॥ सम्यक्चरणबलेन । मार्गे भो गमनं शुभं ॥ ६८ ॥

तस्माद्गृहस्थितैः किंचिद्बलं चरणजं निजं ॥ कार्यं हस्तोऽपि व्यापार्यो । यस्माद्धः सद्गतिर्भवेत् ॥ ६९ ॥ कराधारं पदादीनां । प्राप्य चंक्रमणं पथि ॥ विदधानोऽनगाराणां । समादिष्टति चेष्टया ॥ ७० ॥ यथाख्यातक्रमवीर्य—वारो यावन्न जायते ॥ सालंबनो विहारोऽत्र । तावत्कार्यो मनीषिणा ॥ ७१ ॥ अन्यथा क्रमभंगः स्यात् । क्षितौ वा पतनं भवेत् ॥ अतो गुरुकुलावासो । न मोक्तव्यो विवेकिना ॥ ७२ ॥ तदापि भगवद्वाणी । सम्यग् न ज्ञायते परैः ॥ तर्हि पश्चात्कथं ज्ञेया । हेयादेयस्वरूपयुक् ॥ ७३ ॥

अनाहूतः समभ्येति । नायात्याकारितोऽपि यत् ॥ एतद्धापि जिनस्याहो । चारित्रांगं विदुर्बुधाः ॥ ७४ ॥ मंदं मंदं पदं यच्छन् । संपदं यद्ददौ प्रभुः ॥ क्षमाधरप्रमुखाणां । तच्च चित्रकरं स्मृतं ॥ ७५ ॥ बालमध्ये स्थितः सार्वः । सन्मार्गे चरति स्वयं ॥ साधुमध्यं प्रवचनं । मातृसंगात्पुनश्चरेत् ॥ ७६ ॥ समकालं करतालं । विभुं गोपांगना घनाः ॥ नर्त्तयंति जिनं

भ्रांत्या । नालौ वुद्धस्तु नृत्यति ॥ ७७ ॥ शिवं तं जटिलं नग्नं । परा कात्यायनी वरा ॥ स्वा-
ङ्गीगसंगिनं चक्रे । नायमङ्गीगन्नाकू पुनः ॥ ७८ ॥ दृष्टे वस्तुनि श्रद्धालु-र्यदन्नून्नगवांस्तदा ॥
तथा तन्मार्गणासक्त-स्तदेतडुचितं विन्नोः ॥ ७९ ॥ विन्नोश्चरणयोर्न्यस्त-माणिक्यरूप्यघुर्घ-
राः ॥ सुवर्णकमलासीन-हंसा इव विरेजिरे ॥ ८० ॥ कटिसूत्रं सुवर्णाढ्यं । वह्वर्थकलितं
दधन् ॥ निवेदयति साधूनां । सूत्रं शिक्ष्यं सदेदृशं ॥ ८१ ॥ अंगदं रत्नयुक्तं स । तमःस्तोम-
हरं धरन् ॥ प्ररूपयति लोकाना-मीदृग्धार्यो गुरुर्भुजे ॥ ८२ ॥ सुमनोराजिविन्यस्तं । स
विभ्रन् कुंडलद्वयं ॥ न्नव्यस्योपदिशेदेवं-विधं कर्णे वचः कुरु ॥ ८३ ॥
अलंकारैर्जिनस्यांग-शोन्नायाश्च न संन्नवः ॥ परं मातुः प्रन्नृतीना-मिच्छं हर्षः प्रजाय-
ते ॥ ८४ ॥ सुवर्णं विवदद्येन । कर्बुरत्वं ययौ तदा ॥ अन्नूल्लोहात्तमत्वेऽपि । सुशब्दो नास्य
न्नूतले ॥ ८५ ॥ राज्यं कुर्वति न्नूपाले । पुत्रपालनतत्परे ॥ सामुद्रिकशास्त्रवेत्ता-न्यदा कश्चि-
त्समाययौ ॥ ८६ ॥ न्नूपादिष्टः प्रविष्टः स । निविष्टश्च नृपांतिके ॥ न्नूनाथोत्संगगं नाथं । दृ-
ष्ट्वासौ स्वशिरोऽधुनात् ॥ ८७ ॥

राज्ञा पृष्टः स आचष्ट । विशिष्टजनवल्लभः ॥ लोकशास्त्रे पुरुषाणां । द्वात्रिंशल्लक्षणा-
न्यहो ॥ ८८ ॥ लक्ष्मीगेहे त्वस्य देहे । दृश्यन्ते सर्वदेहिनां ॥ अष्टोत्तरसहस्रं तु । लक्षणानां प्र-
लक्ष्यते ॥८९॥ तेन लोकोत्तरः कोऽपि । पुरुषोऽयं भविष्यति ॥ लक्षणैर्ज्ञायते सर्वं । यतो भा-
वि शुभाशुभं ॥ ९० ॥ दंडचक्रासिनाराच—धनुः शक्तिगदोपमाः ॥ पादपाणितले रेखा—स्ते-
नासौ तद्वरः शुभः ॥ ९१ ॥ तर्जनीगृहबंधांत—र्लेखातः सुखमृत्युभाक् ॥ अनामिकातलेचो-
र्ध्व—रेखातो धर्मवानयं ॥९२॥ सुवृत्तांगुष्ठसंयुक्ता । अंगुल्यः सहिताः समाः ॥ शंभोश्चरण-
संसर्गं । लेभिरे तच्च युक्तिमत् ॥ ९३ ॥ हस्तपादनखा रक्ता । अस्मिन् रक्तं जगत्ततः ॥ भन्न-
तौ च फणौ तेनो—न्नतः स्वामी भविष्यति ॥ ९४ ॥

गूढस्वरूपोऽयं गूढ—गुल्फत्वाज्जगतीतले ॥ सारंगजंघस्तेनास्य । सारंगवि वचोऽतिगं ॥
॥ ९५ ॥ जानुनी मांसले स्निग्धे । राजंस्तेन जगत्यसौ ॥ मानसं मांसलं स्निग्धं । दृश्यते
सर्वदेहिनां ॥ ९६ ॥ विस्तीर्णे वर्त्तुले ऊरू । तेन विस्तीर्णवृत्तभाक् ॥ इष्टकान्ता कटी यस्मा
—दिष्टकार्यकरस्ततः ॥ ९७ ॥

शतकोटिमध्यतो यः । शतकोटिधराचिंतः ॥ वर्षाभूरिव शस्यश्री-र्वर्षाभूसदृशोदरात् ॥ ९८ ॥ गंभीरनाभिकुक्षिभ्यां । भावी गंभीरमानसः ॥ तथा च कूर्मपृष्टत्वात् । क्ष्माभारो-द्धरः परः ॥ ९९ ॥

पृथुस्तनांतरत्वासौ । पृथुचित्तः प्रजापते ॥ सदा सरलबाहुभ्यां । सरलः सर्वजंतुषु ॥१००॥ शंखोज्ज्वलयशाः शंखग्रीवातः पूर्णवक्त्रतः ॥ संपूर्णवक्ता कुंदाभ-दंततः कुंदकुस्मितः ॥ ॥ १ ॥ पद्मपत्राभजिह्वातः । पद्मपत्रैरसौ प्रभुः ॥ पूजां लभिष्यते लोकान् । लोकाग्रगमनोत्सुकान् ॥ २ ॥ चक्षुःस्नेहवशात्स्नेहं । धरिष्यंति प्रभौ न के ॥ उन्नता नासिका चास्य । स-दैवोन्नतिभावतः ॥ ३ ॥ आवर्त्तकरणो यदसौ । तेनावर्त्तकचंदनैः ॥ अस्य शिष्या अपि प्रायो । वंदिष्यंते घनैर्जनैः ॥ ४ ॥

अर्द्धचंद्रललाटत्वा-च्चंद्रभोगप्रभाज्यसौ ॥ छत्राकारवरांगत्वा-न्मूर्ध्नि छत्रं धरिष्यते ॥५॥ मृदुश्यामलसुस्निग्ध-केशपाशवशादसौ ॥ ईदृशाद्वासुदेवादेः । पूजां प्राप्स्यत्यमानहृत् ॥६॥ एकः पुनर्विशेषोऽस्य । मौलावुष्णीषमस्ति यत् ॥ तेन त्रिशृंगकलित एष एव जगत्त्रये ॥७॥

सत्यं ततः कृत्यं । युष्माभिरुचितं हितं ॥ २८ ॥

पुनर्जगाद भूपाल–स्तनयं सनयं सदा ॥ राज्यभारे सति स्फारे । चलनं पथि दुष्करं ॥ २९ ॥ त्वं जिनोऽसि ततः शत्रून् । जय पृथ्वीं च पालय ॥ सुखसागरमध्यस्थो । लक्ष्मीयुक्तः सदा भव ॥ ३० ॥ त्वयि गोवर्द्धनोद्धार–क्षमे न्यस्य त्विमां क्षमां ॥ गुप्तेंद्रियः कूर्म इव । श्रयिष्येऽहं परां वरां ॥ ३१ ॥ ततः पारगतः प्राह । श्राद्धानां द्वादशव्रती ॥ अस्ति स्वस्तिकरा राज–न्नत्रामुत्र सुखप्रदा ॥ ३२ ॥ अनर्थदंडरहितां । सगुणां शक्तिसंयुतां ॥ सत्वरक्षाकरां राज्य–धुरां तां च धरोत्तरां ॥ ३३ ॥ इत्थं कृते गृहिधर्म–स्तथा शर्म भविष्यति ॥ मम राज्येन नो कार्यं । तार्यं स्वं स्वेन यन्मया ॥ ३४ ॥ राज्ये चिंता सदात्यंता । निश्चिंतोऽहं नृपाधुना ॥ भवतां तु सदाप्यस्तं । तेन शस्तं त्विदं खलु ॥ ३५ ॥

अर्थं त्वपत्यशब्दस्य । वत्स वेत्सि स्वयं सुधीः ॥ राजावदत्तथापि त्वं । कथं नोद्धरसीह मां ॥ ३६ ॥ श्यामातमोहरे शूरे । त्वयि तेजोयुते सति ॥ अन्यस्मै राज्यदानं य–त्सांप्रतं तन्न सांप्रतं ॥ ३७ ॥ पालिते श्रावकाचारे । कल्पेषु द्वादशस्वहो ॥ गतिः संभाव्यते नृणां

। तैश्च मे न प्रयोजनं ॥ ३८ ॥ मनो मे रमते मोक्षे । सदासौख्ये सनातने ॥ गृहस्था यत्र
सिद्धाः स्यु-स्तदाश्चर्यकरं जने ॥ ३९ ॥

तव जाते पुनर्जाते । तस्मिन् राज्यं निवेद्य त्नोः ॥ गृह्णीयाः सर्वथा दीक्षां । मोक्षसौ-
ख्यप्रदायिनीं ॥ ४० ॥ अस्मत्कुले त्वयं धर्मः । पूर्वजाचरितः सदा ॥ सुते राज्यज्ञरं न्यस्य ।
पिता दीक्षां प्रपद्यते ॥ ४१ ॥ तव सातावेदनीयं । चेन्नवेन्नो निकाचितं ॥ तदा राज्यं प्रपद्य-
स्व । ज्ञानेनालोकय स्वयं ॥ ४२ ॥ तदावधिं प्रयुंज्यासौ । तत्प्रेक्ष्य प्रचुरं परं ॥ मौनमेव स-
माधत्त । यन्मुनिर्न्नावतस्तदा ॥ ४३ ॥ ततः स्वजनवर्गं स । राजवर्गं तथैव च ॥ पट्टाभिषे-
कं संमेळ्य । चकार समदं विन्नोः ॥ ४४ ॥

पंचदशाब्दलक्षाणि । कौमारे स्थितवान् प्रभुः ॥ पश्चात्पितुर्गिरा राज्य-न्नारमंगीचका-
र सः ॥ ४५ ॥ प्राप्ते गुरौ ततो राजा । स्वयं दीक्षामुपाददे ॥ तादृशा ज्ञचिते कार्ये । विलं-
बं नैव कुर्वते ॥ ४६ ॥ प्राज्यं राज्यं प्रन्नुः प्राप्य । प्रजानां करपीमनं ॥ न चक्रे यत्तदाश्चर्यं
। सोमः स्यादथवेदृशः ॥ ४७ ॥ यथा सुधांशावुदिते । डुष्टकर्म न कुर्वते ॥ चौराद्याः साधु-

अस्य सर्वप्रशस्यस्य । समानं क्रियतेऽत्र यत् ॥ हीनोपमानमिह त–द्विद्येयं भुवनत्रये ॥ ८ ॥ तदाकर्ण्य नृपोऽमुष्मै । पारितोषिकमुच्चकैः ॥ ददौ प्रमोदकलितः । कल्पद्रुरिव जंगमः ॥ ९ ॥

क्रमेण यौवनं प्राप । षष्टिचापतनूच्छ्रितः ॥ भव्यप्रथमसंस्थान । आद्यसंहननः पुनः ॥ १० ॥ सूरः स्वभावात्तेजस्वी । सोऽपि ग्रीष्मदिनाश्रितः ॥ चंद्रोऽमृतद्युतिः स्वभ्रः । पुनः राकागतः सच ॥ ११ ॥ सहजादाम्रः सच्छायो । वसंतर्त्तुयुतो ह्ययं ॥ शस्यभूरुर्वरादेशः । स्वयं सोऽपि शरद्धृतः ॥ १२ ॥

तथा बाल्याज्जगन्नाथो । रूपश्रीकलितः सदा ॥ यौवनेन पुनः शोभां । विशेषादाप पापमुक् ॥ १३ ॥ भोग्यकर्मभरं हर्त्तुं । वचः कर्त्तुं पितुस्तथा ॥ राजकन्या उपायंस्त । बहिर्वृत्त्या जिनाधिपः ॥ १४ ॥ मनोविना विवाहं स विभुर्विहितवांस्तदा ॥ यतः स्वदारसंतोषो । गृहिणां व्रतमुच्चकैः ॥ १५ ॥ यथा कोऽपि महानेकः । समभ्येति पुरे वरे ॥ सर्वे तस्य प्रकुर्वंति । भोजनाय निमंत्रणं ॥ १६ ॥ सोऽथ स्वस्थानयानाय । विनापि रसगौरवं ॥ द्वित्रिधामसु धन्यात्मा । विधत्ते भोजनं दिने ॥ १७ ॥

तथापि तस्य निंदा न । प्रशंसा च प्रवर्द्धते ॥ एवं जिनस्य नोगो हि । कर्मणां क्षयहेतवे ॥ १८ ॥ त्रिवर्गाराधनपरो । मोक्षमार्गादरोऽन्यदा ॥ कृतवर्मा नाविशर्मा । जगौ पुत्रं गुणान्वितं ॥ १९ ॥ लघुत्वे राजतः पुंसः । पतिशब्दस्य वा नवेत् ॥ गुरुत्वे पश्य तस्यैव । नारः स्वर्गत्र्यस्तथा ॥ २० ॥ जरेयं राक्षसी वत्स । मांसं खादति देहिनां ॥ तथा च रक्तं पिबति । सुरापेव दुराशया ॥ २१ ॥ आगछंती जनानां या । दंतान् पातयति द्रुतं ॥ धियं लाति नयं राति । पाति नो शरणागतं ॥ २२ ॥

अवशं बंधुवर्गं च । समग्रं विदधात्यसौ ॥ परावर्त्तयति प्रायः । कायं जनसहागतं ॥ ॥ २३ ॥ विकलं मनुजं कुर्या–चक्षुस्तेजो हरत्यहो ॥ शिरश्च धूनयेत्पाणि–पादादीन् कंपयेत्तथा ॥ २४ ॥ कृतान्नोगास्ततो रोगा । दुर्बलं पीमयंति तं ॥ दुर्बलायां लगेद्वेला । कावृतौ विड्पातने ॥ २५ ॥ आयुर्वित्तं सचित्तं ते । क्रूराश्चौरा इव ध्रुवं ॥ हरंति प्राणिनां सद्यः । प्रपद्य पट्टु वैरतां ॥ २६ ॥ यावन्नायाति सा काये । सन्नाये सकलेंद्रिये ॥ तावत्करोमि स्वहितं । विहितं पूर्वजैर्निजैः ॥ २७ ॥ तन्निशम्य जगौ नाभो । जनकंप्रति चेति वः ॥ वचः

सत्यं ततः कृत्यं । युष्मान्निरुचितं हितं ॥ २८ ॥

पुनर्जगाद नूपाल–स्तनयं सनयं सदा ॥ राज्यन्नारे सति स्फारे । चलनं पथि दुष्करं ॥ २९ ॥ त्वं जिनोऽसि ततः शत्रून् । जय पृथ्वीं च पालय ॥ सुखसागरमध्यस्थो । लक्ष्मीयुक्तः सदा नव ॥ ३० ॥ त्वयि गोवर्द्धनोद्धार–क्रमे न्यस्य त्विमां क्रमां ॥ गुप्तेंद्रियः कूर्म इव । श्रयिष्येऽहं परां वरां ॥ ३१ ॥ ततः पारगतः प्राह । श्राद्धानां द्वादशव्रती ॥ अस्ति स्वस्तिकरा राज–न्नत्रामुत्र सुखप्रदा ॥ ३२ ॥ अनर्थदंमरहितां । सगुणां शक्तिसंयुतां ॥ सत्वरक्षाकरां राज्य–धुरां तां च धरोत्तरां ॥ ३३ ॥ एवं कृते गृहिधर्म–स्तथा शर्म नविष्यति ॥ मम राज्येन नो कार्यं । तार्यं स्वं स्वेन यन्मया ॥ ३४ ॥ राज्ये चिंता सदात्यंता । निश्चिंतोऽहं नृपाधुना ॥ नवतां तु सदाऽन्यस्तं । तेन शस्तं त्विदं खलु ॥ ३५ ॥

अर्थं त्वपत्यशब्दस्य । वत्स वेत्सि स्वयं सुधीः ॥ राजावदत्तथापि त्वं । कथं नोद्धरसीह मां ॥ ३६ ॥ श्यामातमोहरे शूरे । त्वयि तेजोयुते सति ॥ अन्यस्मै राज्यदानं य–त्सांप्रतं तन्न सांप्रतं ॥ ३७ ॥ पालिते श्रावकाचारे । कल्पेषु द्वादशस्वहो ॥ गतिः संजायते नृणां

। तैश्च मे न प्रयोजनं ॥ ३८ ॥ मनो मे रमते मोक्षे । सदासौख्ये सनातने ॥ गृहस्था यच्च सिद्धाः स्यु-स्तदाश्चर्यकरं जने ॥ ३९ ॥

तव जाते पुनर्जाते । तस्मिन् राज्यं निवेश्य नोः ॥ गृहीश्याः सर्वथा दीक्षां । मोक्षसौख्यप्रदायिनीं ॥ ४० ॥ अस्मत्कुले त्वयं धर्मः । पूर्वजाचरितः सदा ॥ सुते राज्यभरं न्यस्य । पिता दीक्षां प्रपद्यते ॥ ४१ ॥ तव सातावेदनीयं । चेद्भवेन्नो निकाचितं ॥ तदा राज्यं प्रपद्यस्व । ज्ञानेनालोकय स्वयं ॥ ४२ ॥ तदावधिं प्रयुंज्यासौ । तत्प्रेक्ष्य प्रचुरं परं ॥ मौनमेव समाधत्त । यन्मुनिर्भावितस्तदा ॥ ४३ ॥ ततः स्वजनवर्गं स । राजवर्गं तथैव च ॥ पट्टाभिषेकं संमेल्य । चकार समदं विभोः ॥ ४४ ॥

पंचदशाब्दलक्षाणि । कौमारे स्थितवान् प्रभुः ॥ पश्चात्पितुर्गिरा राज्य-भारमंगीचकार सः ॥ ४५ ॥ प्राप्ते गुरौ ततो राजा । स्वयं दीक्षामुपाददे ॥ तादृशा उचिते कार्ये । विलंबं नैव कुर्वते ॥ ४६ ॥ प्राज्यं राज्यं प्रभुः प्राप्य । प्रजानां करपीडनं ॥ न चक्रे यत्तदाश्चर्यं । सोमः स्यादथवेदृशः ॥ ४७ ॥ यथा सुधांशावुदिते । दुष्टकर्म न कुर्वते ॥ चौराद्याः साधु-

वर्गश्च । स्वयं मार्गे प्रवर्त्तते ॥ ४८ ॥ तथा कुर्वति साम्राज्यं । सर्वज्ञे सर्वदर्शिनि ॥ कुकर्मणां निवृत्तिश्च । प्रवृत्तिः शुभ्रकर्मणां ॥ ४९ ॥ इंद्रमुक्ताः पुरा देवा । व्यधुः सेवाविधायिनः ॥ निग्रहं शत्रुवर्गस्या–नुग्रहं चानुजीविनां ॥ ५० ॥

युक्तमन्ये नृपा मौलौ । तदाज्ञातपवारणं ॥ अहोरात्रं तदा चक्रु–रिनोऽसौ यत्सदोदयी ॥ ॥ ५१ ॥ सावधानाः प्रधानास्ते । राज्यचिंतां स्वयं मतां ॥ कुर्वंति बुद्धिनिपुणाः । कृपणा ये ह्यसद्व्यये ॥ ५२ ॥ संतः स्वभावतः संतु । सदाचारधरा नराः ॥ परं कियंत एवामी । स्वयंबुद्धादयोऽवनौ ॥ ५३ ॥

उत्तमास्ते जने ख्याता । मध्यमास्तूपदेशतः ॥ साधुश्राद्धादयस्तेऽपि । स्तोकाः श्लोकान्विताः किल ॥ ५४ ॥ अस्तोकाः संति ये लोका–स्तेऽपि राज्यहरात्परात् ॥ अधर्मं तत्यजुर्यस्मा–द्राजाज्ञा बलवत्तरा ॥ ५५ ॥ तदा केऽपि विशालानि । स्वर्णस्थालानि भूरिशः ॥ रत्नैः प्रपूर्य सुजनाः । स्वामिनो मुमुचुर्मुदा ॥ ५६ ॥ सिचयानां चयं केचि–त्केचिद्वर्णभरं-वरं ॥ पुष्पाणां प्रकरं केचित् । केचित्कलफलावलीं ॥ ५७ ॥ गोशीर्षचंदनं केचित् । केचि-

 



दाम्नरत्नोत्करं ॥ केचिच्चंशेदयं नव्यं । भव्यं केचिन्निजं ध्वजं ॥ ५८ ॥ यद्यच्च रुचिरं लोके ।
गतशोके तदाभवत् ॥ तत्सर्वं स्वेच्छया स्वच्छा । ढौकयामासुरर्हतः ॥ ५९ ॥ त्रिभिर्विशेषकं ॥
एके छत्रं पवित्रं च । भक्त्या सच्चामरे परे ॥ स्वामिनो धारयामासु—श्चालयामासुराद-
रात् ॥ ६० ॥ अपरे गीतं गायंति । नृत्यं कुर्वंति केचन ॥ वादित्रं वादयंत्यन्ये । धन्येन मनसा
रसात् ॥ ६१ ॥ दंडयैनं मारयैनं । देशान्निष्कासय त्विमं ॥ पुरोहित इति न्यायं । कुरुते न
प्रभुः स्वयं ॥ ६२ ॥
जिनेशस्यान्यदा पुत्रो । बभूव बहुभाग्यवान् ॥ अरिमर्दन इत्याख्या । स्वजनैर्विदधेऽस्य
तु ॥ ६३ ॥ गतेषु वर्षलक्षेषु । त्रिंशत्यवनिरक्षणे ॥ क्षीणे भोगफलेरीणे । दत्तशर्मणि कर्म-
णि ॥ ६४ ॥ सर्वज्ञोऽचिंतयच्चित्ते । गृहवासे स्थितोऽस्मि यत् ॥ संमील्य चक्षुषी तद् ज्ञा—गं-
धकारं करोम्यहं ॥ ६५ ॥ अज्ञानी यदहो कर्म । कुरुते स्मृतिवर्जितः ॥ भवेत्तस्य फलं स्तो-
कं । बालकस्य यथा भुवि ॥ ६६ ॥
अहं ज्ञानत्रयधरो । वरसंवरसंयुतः ॥ तद्सांप्रतमेवात्र । दीक्षां कक्षीकरोमि न ॥६७॥

॥ १३१ ॥

मया नूरिन्नवे भोगा । रोगा इव महार्त्तिदाः ॥ भुक्ता मुक्ताः पुनर्नैव । मनःसंतोषतः स्वतः ॥ ६८ ॥ राज्यश्रीः श्रीकरीप्राया । गायाकारा वरे नरे ॥ पुण्यवित्तहरा किंतु । बहिः सारांतरावरा ॥ ६९ ॥ शरीरं काष्टं कारीरं । विपत्तं त्राणवर्जितं ॥ लोकस्कंधसमारूढ—मग्निकार्याय जायते ॥ ७० ॥

दाराः कारागृहाकारा । दारका मारका इव ॥ संसारेऽनंतशो लब्धा । लुब्धाः स्तब्धमयानयाः ॥ ७१ ॥ अतस्तृष्णां सदा कृष्णां । मुक्त्वामीषु समेषु च ॥ असारं सर्वं संसारं । मारं जित्वा श्रये व्रतं ॥ ७२ ॥ तदासनप्रकंपेन । प्रेरिताऽवधयः स्वयं ॥ प्रभोर्दीक्षोचितं कालं । समकालं निरीक्ष्य च ॥ ७३ ॥ सारस्वता गर्दतोया । आदित्या वरुणास्तथा ॥ तुषिता मरुतोऽरिष्टा । अव्याबाधाश्च वह्नयः ॥ ७४ ॥ एते लोकांतिका देवा । ब्रह्मलोकनिवासिनः ॥ एकावताराः सत्सारा—स्तत्राजग्मुर्गुणान्विताः ॥ ७५ ॥ त्रिभिर्विशेषकं ॥ नत्वा जिनेश्वरं स्वैरं । वैरं मुक्त्वाखिलांगिषु ॥ साम्यरम्यसुधामग्नं । लग्नं तत्वार्थनिश्चये ॥ ७६ ॥ प्रवर्त्तय धर्मतीर्थं । यतस्तीर्थंकरस्त्वकं ॥ इति विज्ञपयांचक्रु—रवक्रधिषणाश्च ते ॥ ७७ ॥ युग्मं ॥ एत-

स्मिन्नंतरे धर्म–छेदः खेदकरोऽजनि ॥ अतः संधय तं शीघ्रं । यतस्त्वं गुणधारकः ॥ ७८ ॥
यथा नद्या इहोत्तारो । वाह्यतीर्थं विना न हि ॥ संसारसागरोत्तारो । धर्मतीर्थं विना तथा ॥
॥ ७९ ॥ अग्रेऽपि स्वामी दीक्षार्थी । विशेषात्तद्वचःश्रुतेः ॥ स्वयं स्वस्थानगः कोऽपि । पु-
नस्तत्प्रेरकोऽमिलत् ॥ ८० ॥

अथासौ वार्षिकं दानं । प्रारेभे प्रभुरुच्चकैः ॥ यतो धर्मेषु सर्वेषु । मुख्यं वितरणं स्मृतं
॥ ८१ ॥ धनदादेशतस्तिर्यग्–जृंभकाख्याः सुरा वराः ॥ निःस्वामिकनिधानानि । प्रधानानि
धनानि च ॥ ८२ ॥ आनयां चक्रुरुच्छिन्न–स्वामिसत्कान्यसद्मनः ॥ पदे पदे निधानानि । य-
तः पुण्यवतः सतः ॥ ८३ ॥ युग्मं ॥ एकां हिरण्यसत्कोटी–मष्टलक्षयुतां मतां ॥ ददौ प्रति-
दिनं नाथः । कल्पवर्त्तस्तु यावता ॥ ८४ ॥ त्रीणि कोटिशतान्यष्टा–शीतिकोटीयुतानि च ॥
वर्षेणाशीतिलक्षाणि । सुवर्णस्य ददौ विभुः ॥ ८५ ॥ वृष्टे सर्वज्ञपर्जन्ये । पूर्णान्यर्थिसरांसि
च । गततापा क्षमा जज्ञे । मन्ये तद्वरमुच्चकैः ॥ ८६ ॥ आशा हिरण्यवर्णा यत् । हिरण्यं
वर्षति प्रभौ ॥ शांता जाता जनख्याता–स्तदेतदद्भुतं श्रुतं ॥ ८७ ॥ पुरंदरा वराकारा । दी-

क्षाकल्याणके न के ॥ तत्रैयुरथ दातारं । भुवि नाश्रयतीह कः ॥ ८८ ॥ ते तदा तीर्थपानीय-मानीय स्वच्छसौरन्नं ॥ श्रीजिनं स्नपयामासुः । सुरसार्थसमन्विताः ॥ ८९ ॥ स्वन्नावनिर्मलस्यापि । सर्वज्ञस्याभिषेचनं ॥ यच्चक्रुरमराः सर्वे । सा भक्तिः शक्तिसंयुता ॥ ९० ॥

सुधाकराभिरामस्य । यथा गंगाभृतो भुवि ॥ स्नपनं कूपनीरेण । क्रियते लोकपंक्तिभिः ॥ ९१ ॥ आदित्यपुरतो यद्व-द्दीपस्य च निवेशनं ॥ निमंत्रणं च भुक्त्यर्थं । नृपस्य नृपसेवकैः ॥ ९२ ॥ त्रिजगत्स्वामिनोऽपीत्थं । विधिः कार्यो यथोचितः ॥ यतो गतो ह्यवसरो । लभ्यते न कदाचन ॥ ९३ ॥ त्रिभिर्विशेषकं ॥ दिव्यचंदनलिप्तांगो । देवदूष्यविभूषितः कल्पद्रुमसुमश्रेणि-वेणिशेखरराजितः ॥ ९४ ॥ हारार्द्धहारकेयूर-कुंडलादिविभूषितः ॥ सौधर्मेंद्रप्रभृतिभि-र्विदधे विश्वनायकः ॥ ९५ ॥ युग्मं ॥ देवदत्तां स शिबिका-मारुरोह जिनाधिपः ॥ इंद्रकृतां मुदोद्वाह्यां । देवदानवमानवैः ॥ ९६ ॥ तत्र सिंहासनं रत्न-मयं तेजश्चयं दधत् ॥ अलंचक्रे जिनाधीशः । पूर्वाद्रिमिव तापनः ॥ ९७ ॥ आभातां पार्श्वयोस्तस्य । चामरे चामरधूते ॥ तीर्थेशं सेवितुं भूमि-स्वर्गांगने किमागते ॥ ९८ ॥

धर्ममित्रं पुनश्छत्रं । रेजे तस्योपरि स्फुरत् ॥ शुक्लध्यानमिवामानं । शिवच्छायाकरं परं
॥ ९९ ॥ नृत्यतीषु नर्त्तकीषु । गीयमानासु गीतिषु ॥ पठत्सु बंदिवृंदेषु । वादित्रेषु नदत्सु च
॥ ४०० ॥ दीयमानेषु दानेषु । याचकानां समंततः ॥ सहस्राम्रवणं स्वामी । परिवारयुतो
ययौ ॥ १ ॥ युग्मं ॥ शिविकायाः समुत्तीर्य । गत्वाशोकतरोस्तले ॥ मुमोचाभरणाद्भोगं ।
योगं वा भोगकर्मणां ॥ २ ॥ अन्यत्परिग्रहं सर्वं । प्रतिबंधं चतुर्विधं ॥ स्वामी साम्यसुधा-
सिंधुः । प्रजहौ च तदा मुदा ॥ ३ ॥ पंचभिर्मुष्टिभिः केशान् । क्लेशानिव किलासितान् ॥
अर्हन्नुन्मूलयामास । वासवस्तान् ललौ तदा ॥ ४ ॥ माघशुक्लचतुर्थ्याः सो-ऽपराह्णे जन्म-
भे शुभे ॥ नमः सिद्धेभ्य इत्युक्त्वा । कृतषष्टतपाः प्रभुः ॥ ५ ॥ कोलाहलं निवार्योच्चै-र्भग-
वद्वन्द्ववर्जितं ॥ चक्रे सामायिकोच्चारं । त्रिवारं सारमागमे ॥ ६ ॥ युग्मं ॥ वासवो वासना-
वासो । देवदासो जिनस्य यत् ॥ स्कंधे निवेशयामास । वस्त्रपूजा ततोऽजनि ॥ ७ ॥ मनः-
पर्यवसंज्ञं तु । ज्ञानं जज्ञे जिनेशितुः ॥ मघवान् भगवत्केशान् । चिक्षेप क्षीरनीरधौ ॥८॥
सहस्रं राजपुत्राणां । पवित्राणां सुकर्मणां ॥ एकं विवेकसंयुक्तां । ललौ दीक्षां प्रभोरनु ॥९॥

ज्ञाविज्ञश लसन्मुश । इंश नत्वा जिनेश्वरं ॥ विज्ञापनां च विदधुः । सुधामधुरया गिरा ॥
॥ १० ॥ चारित्रं ते यथाख्यातं । विख्यातं भुवनत्रये ॥ भूयात्प्रभूतभूताना–मपवर्गपदप्रदं ॥
॥ ११ ॥ स्वयं संसारसंचारं । जना जानंति भूतले ॥ रोदनं च पयःपानं । शिक्षयेद्बालकस्य
कः ॥ १२ ॥ अनार्यदेशे विज्ञानं । जानंति विविधं जनाः ॥ ज्ञानं तत्रैव यत्र त्वं । हेयादेय-
प्ररूपकं ॥ १३ ॥ गुरुं विना यथा गालीं । बालो वेत्ति ददाति च ॥ शास्त्रं तथा न जानाति ।
धर्मं दानादिकं त्वसौ ॥ १४ ॥ मौनं धत्सेऽधुनापि त्वं । तज्जानीमो वयं स्वयं ॥ शिक्षा परे
न दातव्या । तावद्यावन्न केवलं ॥ १५ ॥ घनाश्रयविहारेण । तापं निर्वापय प्रभो ॥ निःस्व-
नोऽपि घनः किं न । जीवनं राति जंतुषु ॥ १६ ॥ त्वद्दर्शनेनापि जीवा । निवृत्तिं यांति नि-
श्चितं ॥ दृष्टोऽपि हि निधिः किं न । सम्मदं जनयेज्जने ॥ १७ ॥ त्वदीयचरणप्राप्ति–र्दुर्लभा
देहिनां भुवि ॥ रत्नाकरे यथा चिंता–मणिर्गुणगणान्वितः ॥ १८ ॥

इत्यादि विविधं शुद्धं । गदित्वा विबुधाधिपाः ॥ पुत्रं निवेशयामासू । राज्ये श्रीजगदी-
शितुः ॥ १९ ॥ यात्रां नंदीश्वरे कृत्वा । ययुः सर्वे पुरंदराः ॥ स्वं स्वं स्थानं विमानेन । स-

मानेन सुरैः सह ॥ २० ॥ द्वितीयदिवसे सूर्य । उदिते विदिते क्षितौ ॥ निकटे धान्याकंटेऽसौ
। पारणार्थं पुरेऽगमत् ॥ २१ ॥ अशोकाः सकला लोकाः । पारणार्थं पदे पदे ॥ प्रार्थयंति प्र-
भुं को न । कल्पद्रुं चानयेगृहे ॥ २२ ॥ पादयोर्निपतंत्येके । लुठंत्यन्ये भुवस्तले ॥ हस्तौ सं-
योज्य पुरतः । परे तिष्ठंति मानवाः ॥ २३ ॥ स्वकीयागमतः सार्वा–ऽस्माकं कल्याणदो ऽभ-
व ॥ इति विज्ञतिकां केचि–च्चक्रुर्दौर्गत्यजीरवः ॥ २४ ॥ सम्यग्दृष्टिप्रदानेना–स्मदीयं निर्म-
लं कुलं ॥ निर्मापय निर्ममाद्य । परे पौरा इदं जगुः ॥ २५ ॥ कल्प्यमन्नं गृहे नोऽस्ति । त-
तः कल्पय कल्पितं ॥ जल्पंत्यनल्पसंकल्पा । इत्थं केऽपि प्रभोः पुरः ॥ २६ ॥ तदैतेषां च
सर्वेषां । गृहिणोऽपि गृहस्थिताः ॥ चित्ते विचिंतयंतिस्म । प्रमोदपुलकांकिताः ॥ २७ ॥
अस्माकं स्वामिनः स्वीय–स्वामिनं गजगामिनं ॥ गेहे यदानयिष्यंति । यास्यामः स-
न्मुखं तदा ॥ २८ ॥ शिरसा तं नमस्यामो । दास्यामो दानमुत्तमं ॥ गास्यामो गीतमीश-
स्य । लास्यामो जन्मनः फलं ॥ २९ ॥ वर्द्धयंति जिनं काश्चि–न्न्युंछनानि च कुर्वते ॥ अ-
न्या धन्या गृहद्वारे । स्वस्तिकादीनि काश्चन ॥ ३० ॥ मित्रवयस्य सामीप्यं । यात्यसौ द-

शनप्रियः ॥ सोऽतिहर्षभरं धत्ते । विधत्ते च महोत्सवान् ॥ ३१ ॥ यं जहाति जनं स स्राक् । कृष्णत्वं द्राक् प्रपद्यते ॥ दुःप्राप्येऽस्य जनस्याहो । कृष्णत्वे को हि संशयः ॥ ३२ ॥ विवेश भवनं नैव । कस्यापि गृहमेधिनः ॥ प्रासादे जयभूपस्य । प्रवेशं कृतवान् विभुः ॥३३॥ प्रासादे सति सश्रीके । कुटे किं निवसेत्प्रभुः ॥ तान् विमुच्य ततः स्वामी । भूपस्य गृहमभ्यगात् ॥ ३४ ॥ जयराजा जिनं प्रेक्ष्य । मुक्त्वा सिंहासनं रयात् ॥ त्यक्तछत्रादिराट्चिह्नः । सुमुखः सन्मुखं ययौ ॥ ३५ ॥

स्वकेशैः प्रभुपादाब्जं । मार्जयामास भूपतिः ॥ हर्षास्रैः क्षालयामास । रोमांचकवचं दधन् ॥ ३६ ॥ भक्ताय योजितकरो । भूपः शंभुं व्यजिज्ञपत् ॥ अद्य मे सफलं जन्म । धाम कामघटोपमं ॥ ३७ ॥ अनभ्रा वृष्टिसृष्टिर्मे । कल्पवृक्षो ह्यरोपितः ॥ चिंतामणिरचिंत्यो वा । कामधेनुरकामिता ॥ ३८ ॥ अतर्कितः समेतोऽद्य । सद्यः सद्धर्मोऽत्र यत् ॥ अतः प्रसद्य भगवन् । परमान्नं गृहाण मे ॥ ३९ ॥ निरवद्यं स तन्मत्वा । प्राणरक्षार्थमात्मनः ॥ प्रसार्य पाणी जगृहे । गृहे जयनरेशितुः ॥ ४० ॥ यद्भूद् दुंदुभिध्वानो । नात्र चित्रं मनागपि ॥

दातुः सर्वत्र सच्छन्दो । भवतीह सुनिश्चितं ॥ ४१ ॥ कांचनवृष्टिं यद्भेजे । घनवाहनदेवता ॥ चेतपातकाले वा नृनृ-स्वामिस्वाभाविकी स्थितिः ॥ ४२ ॥ नृपोऽन्योऽपि यदाऽन्येति । चेलोत्क्षेपं तदा मुदा ॥ कुर्वंति विबुधाः सर्वे । किं पुनस्त्रिजगत्प्रभुः ॥ ४३ ॥ क्रमायां सुमनोधानं । चक्रुः सुमनसोऽत्र यत् ॥ बोधिदे तु समायाते । तन्नाश्चर्यं जगत्यहो ॥ ४४ ॥

सुधाभुजो वितेनुर्य-त्सुगंधामृतसिंचनं ॥ धरित्र्यां शस्यसंपत्ति-स्तेन जज्ञे तदाऽन्नदा ॥ ४५ ॥ विजह्वार जिनोऽन्यत्र । शत्रुमित्रसमः सुधीः ॥ नैकत्रस्थायिनः सार्वा-श्चंद्रसूर्यादयो यथा ॥ ४६ ॥ पारणोर्वीमिमां पादै-र्मा कोऽपि स्पृशतादिति ॥ ऊर्वीपती रत्नराज्या । तत्र पीठमसूत्रयत् ॥ ४७ ॥ इतश्च जंबूद्वीपेऽत्र । विदेहेषु वरेषु च ॥ अपरेषु दयाधर्म-परेषु सततं नृभिः ॥ ४८ ॥ स्वयथार्थनामधेया । सर्वगेयास्ति सद्गुणैः ॥ अमेयसौख्यविस्तारा । तत्वानंदकरी पुरी ॥ ४९ ॥ आसीन्नंदिसुमित्रोऽत्र । मित्रवज्जनताप्रियः ॥ भूपतिर्भूरितेजस्वी । कमलामोददायकः ॥ ५० ॥ देवैः कृतप्रातिहार्या । अवार्याः परवादिभिः ॥ आजग्मुः सुव्रताचार्या । गुणार्यास्तत्र केचन ॥ ५१ ॥

उद्यानपालकाद् ज्ञात्वा । राजा तान् वंदितुं ययौ ॥ आगते किल कल्पद्रौ । को न गृ-
ह्णाति तत्फलं ॥ ५१ ॥ विधाय पंचाभिगमं । सुगमं ज्ञानशालिनां ॥ उत्कृष्टवंदनेनासौ । व-
वंदे विधिवद्गुरुं ॥ ५२ ॥ साधूनपि यथायोग्य–मुपयोगसमन्वितः ॥ वंदित्वोचितदेशे सो–ऽव-
तस्थे धीगुणैर्युतः ॥ ५४ ॥ गुरुभिर्देशनारब्धा । लब्धावसरमादरात् ॥ गुरूणां श्राद्धसंयोगे
। ह्येतदेवातुलं फलं ॥ ५५ ॥ राजन् राज्येन नो मर्त्य–भवशोभामवाप्नुयात् ॥ वानराणा-
मपीशत्वं । श्रूयतेऽग्रेऽधुनापि च ॥ ५६ ॥ भलयत्यसावधानं । प्रधानमपि वर्णतः ॥ लक्ष्मी-
रियं शाकिनीव । ततोऽसौ ग्रथिलो भवेत् ॥ ५७ ॥ यतः—लक्ष्मीवंतो न जानंति । देश-
कालोचितां क्रियां ॥ ग्रीष्मं त्यक्त्वा हरिः शेते । वर्षासु क्षीरनीरधौ ॥ ५८ ॥ लक्ष्मीर्लक्ष्मी-
प्रदा नैव । सर्वस्य खलु देहिनः ॥ यतो वैराणि जायंते–ऽनया पुण्यक्षयस्तथा ॥ ५९ ॥ म-
नुजत्वं सफलं नो । कलया कलयापि यत् ॥ ऊर्णनाभसुग्रहीणां । विज्ञानं दृश्यतेऽतुलं ॥६०॥
लुलायप्रमुखा जीवा । युद्धं कुर्वंति भूतले ॥ किंतु धर्मेण सफलं । मनुजत्वं प्रजायते ॥६१॥
सोऽप्यनेकविधो विश्वे । विबुधैः परिकीर्त्तितः ॥ तुलनां सर्वविरतेः । कोऽपि नैति परं नृप ॥

॥ ३८० ॥

प्रतीक्षध्वं प्रतीक्ष्या भो-स्तावद्यावद्भ- ॥ ६२ ॥ तदाकर्ण्य जगौ राजा । विचारचतुराशयः ॥ संसारच्छेदस्त्वरितं । कर्त्तं- तं श्रये ॥ ६३ ॥ ऊचुः श्रीगुरवो राजन् । विलंबं मा कुरूत्तरं ॥ व्यो विदुषा त्वया ॥ ६४ ॥

ततोऽसौ स्वपुरे गत्वा । दत्वा राज्यं सुताय च ॥ सप्तक्षेत्रीषु विभव-वीजमुप्त्वा व्रतं ललौ ॥ ६५ ॥ पश्चात्कियंति वर्षाणि । सहर्षाणि स्वभावतः ॥ संयमं पालयामास । ज्ञान- दर्शनसंयुतः ॥ ६६ ॥ गुरुशिक्षामथो लब्ध्वा । पंचाचारविचारवान् ॥ पंचमहाव्रताधारः । समित्याः पंचकं दधन् ॥ ६७ ॥ पंचचारित्रभेदांश्च । विदन् पंचगतीस्तथा ॥ पंचास्तिकाय- विदुरो । ज्ञानपंचकभेदभाक् ॥ ६८ ॥ पंचनमस्कारमंत्रं । जपन् पंचत्वमाप्य सः ॥ पंचा- नुत्तरसुरेषु । समभून्निर्जरो महान् ॥ ६९ ॥ त्रिभिर्विशेषकं ॥ जंबूद्वीपे लसद्वीपे । भरतक्षे- त्र भूपलं ॥ श्रावस्तीनगरी भाति । जनजातिविराजिता ॥ ७० ॥ धनमित्रो नृपस्तत्र । न्या- यवारिपवित्रितः ॥ प्राज्यराज्ययुतः पृथ्वीं । पाति ख्यातिसमन्वितः ॥ ७१ ॥ वलिनामान्य- दा भूप-स्तन्मित्रं कश्चिदागमत् । तेन स्नेहातिरेकात्स । वासं तत्रैव कारितः ॥ ७२ ॥ सद्दै-

व भोजनं तौ द्वौ । कुरुतो गमनं तथा ॥ वनमागमनं चैव । शयनं क्रीडनं तथा ॥ ७३ ॥
कलाकलापयुक्तस्य । यथा चंद्रस्य लांछनं ॥ पद्मावासविशिष्टस्य । पद्मस्य किल कंटकाः ॥
॥ ७४ ॥ गंभीरस्य समुद्रस्य । क्षीरं क्षारत्वदूषितं ॥ तमोभरहरस्यापि । चित्रभानोश्च ताप-
नं ॥ ७५ ॥ धनमित्रनरेंद्रस्य । द्यूतव्यसनमुच्चकैः ॥ तथास्यैको ह्यपगुणः । कृतांतो रत्नदोष-
कृत् ॥ ७६ ॥ त्रिभिर्विशेषकं ॥

कदाचिद्धनसंदोहं । कदाचित्तुरगान् सुगान् ॥ कदाचिद्धस्तिनः शस्तान् । कदाचित्पात्र-
संचयान् ॥ ७७ ॥ रमेते तौ पणीकृत्य । सत्यकृत्यपराङ्मुखौ ॥ द्यूतव्यसनासक्तानां । सु-
कृताचरणं कुतः ॥ ७८ ॥ युग्मं ॥ राज्यं पणीकृतं स्वं स्वं । ताभ्यां द्वाभ्यां किलैकदा ॥
अभाग्याद्धनमित्रेण । हारितं जनसाक्षिकं ॥ ७९ ॥ राज्यहीनोऽभवद्दीनो । मीनोवासौ ज-
लोज्झितः ॥ पराधीनः परीवार—वर्जितस्तर्जितः परैः ॥ ८० ॥ बलेन बलिना सोऽपि । पुरा-
न्निष्कासितस्तदा ॥ रोर इव राज्यभ्रष्टो । नष्टो लात्वा मुखं निजं ॥ ८१ ॥ मित्रत्वं तावदे-
वास्ति । यावत्स्वार्थोऽत्र सिद्ध्यति ॥ तस्मिन् क्षणे पुनर्मित्रं । शत्रुः स्यात्सततं जने ॥८२॥

तश्च सत्यापितं नाम । धनमित्रोऽस्त्ययं य-
मित्रत्वं वलिना त्यक्तं । निर्द्धनत्वेऽस्य यत्किल ॥ उच्छन्न वंद्यते लोकैः । सवि-
तः ॥ ७३ ॥ तस्य स्वजनसंदोहो । वलेः सेवां प्रणीतवान् ॥
वकैरपि स्फुटं ॥ ७४ ॥
असमानदानयुक्तस्य । सेवां कुर्याद्बलेन कः ॥ श्रीपतिर्यत्प्रतीहारो । जनाधारो नृरक्षकः ॥
॥ ७५ ॥ अंतःपुरं पुरं त्यक्त्वा । जगाम स्वपितुः कुटान् ॥ स्त्रीणां दुःखे समायाते । शरणं
तान् विदुर्बुधाः ॥ ७६ ॥ सूपकारो रविर्यस्य । तथा यः सत्यसंगरः ॥ द्यूतव्यसनतः सोऽपि ।
नलराट् विपदं गतः ॥ ७७ ॥ सत्यवादी धर्मपुत्रो-ऽर्जुनभीमादिसंयुतः ॥ सोऽप्यस्माद्व्यस-
नादेव । गतराज्यो वनेऽवसत् ॥ ७८ ॥ एवं भुवनविख्याता । अनेके दुःखिनो नृपाः ॥ द्यू-
तव्यसनतो जाताः । का वार्त्ता शेषभूभुजां ॥ ७९ ॥ यतः—वैरवैश्वानरव्याधि-वादव्यसन-
लक्षणाः ॥ महानर्थाय जायंते । वकाराः पंच वर्द्धिताः ॥ ८० ॥ यूथभ्रष्टो मृग इव । कांदि-
शीको वने भ्रमन् ॥ ददर्श मुनिमेकं स । सविवेकं सुधानिधिं ॥ ८१ ॥ यथा क्षारसमुद्रे श्व
ग । स्वधमिष्टोदकस्थलः ॥ तृषार्त्तो हि सदर्पः स्या-त्तथा स मुनिपुंगवं ॥ ८२ ॥ यतः—

संसारदवदग्धानां । तिस्रो विश्रामभूमयः ॥ अपत्यं च कलत्रं च । सतां संगस्तथैव च
॥ ९३ ॥ ववंदे विधिवत्पादौ । गतसादो मुनेरसौ ॥ सोऽपि धर्माशिषं तस्मै । ददावामोददा-
यिनीं ॥ ९४ ॥ उपविष्टे पुरोभागे । रागेण परिवर्जितः ॥ तस्मिन् धर्मं दिदेशासौ । संतो
यत्स्युर्दयालवः ॥ ९५ ॥ प्राणिनामंतरायं च । ये धर्मे विदधत्यहो ॥ सौख्ये तथैव तेषां स्या
–ज्जंतूनां मानवे भवे ॥ ९६ ॥ बीजं विना यथा शस्यं । न भवेद्भूतलेऽखिले ॥ धर्मं विना
तथा सौख्यं । जायते जातु नो भवे ॥ ९७ ॥ धर्मोत्पत्तिर्भवेन्नैव । भवे देवसमुद्भवे ॥ नर-
केऽस्य कथा नैव । तिर्यक्त्वे तु कदाचन ॥ ९८ ॥ मनुजेषु भवेद्धर्मः । सामग्री किं तु दुर्ल-
भा ॥ आर्यदेशादिका लोके । स्तोकत्वाद् गुणसंभवा ॥ ९९ ॥ प्राप्तायामपि चैतस्यां । दु-
ष्करं सुकृतार्जनं ॥ यतः पंचविधाः पंच–जनाः संति धरातले ॥ ५०० ॥

यथा पंचनराः पूर्वं । नीवीमादाय सत्पुरे ॥ धनार्जनार्थं संप्राप्ता । व्यवसायाभिलाषि-
णः ॥ १ ॥ तेष्वेकस्तत्र पापीयान् । व्यसनानि निषेवते ॥ ततो राज्ञा धृतो नीवीं । लात्वा
क्षिप्तोंधकूपके ॥ २ ॥ द्वितीयोऽस्ति पुनर्मूर्ख–स्तत्रत्यालीकभाषिभिः ॥ कृतो गृहीतसर्वस्वः ।

कूटवस्त्वर्पणाद्धनः ॥ ३ ॥ प्रमादयुक् तृतीयोऽत्र । नवं निर्वाहकृद्धनं ॥ अर्जयेन्नाधिकं किंतु । नीवीभाक् तेन सोऽभवत् ॥ ४ ॥ चतुर्थस्तूद्यमी सम्यग् । वस्तु रत्नादि सोऽग्रहीत् ॥ तेनामयतमो लाभ–स्तस्याभूत्तरक्षिणः ॥ ५ ॥ पंचमो वस्तुतत्वज्ञो । भाग्यवद्विदुरोऽदरं ॥ प्राप चिंतामणिं तत्र । नीवीमूल्येन सप्रभं ॥ ६ ॥ सनयं चास्योपनयं । शृणु सुंदर संप्रति ॥ नीवीरूपो मर्त्यभव । आर्यदेशः पुरं पुनः ॥ ७ ॥ नृपः कर्मपरीणामः । पापानि व्यसनानि च ॥ कूपो नरक एवाहो । बाधाकारी तदाश्रिते ॥ ८ ॥ असत्यभाषिणो मिथ्या–दृष्टयो दुष्टबुद्धयः ॥ अलीकवस्तु मिथ्यात्वं । तस्य तिर्यग्गतिस्ततः ॥ ९ ॥ मर्त्यत्वं मनुजो योऽत्र । लभते स तृतीयकः ॥ स्वर्गप्राप्तिर्भवेद्यस्य । स लाभसहितः स्मृतः ॥ १० ॥

यस्य चिंतामणिः प्राप्त–स्तस्य मोक्षगतिर्मता ॥ एवं विचार्य सुचिरं । रुचिरं कार्यमाचर ॥ ११ ॥ अथासौ कथयामास । स्वरूपं स्वस्य पूर्वजं ॥ मुनिश्च तस्य पुरतो । व्यसनानां दुरंततां ॥ १२ ॥ सोऽवोचन्मे पुना राज्यं । भविष्यति न वा प्रभो ॥ मुनिर्जगाद ते पुण्य–क्षयस्तेन न भाव्यदः ॥ १३ ॥ तदाकर्ण्य जगौ सोऽपि । तर्हि दीक्षां प्रयच्छ मे ॥ यथा

वृथा भवेन्नैव । भवेऽस्मिन् मानवो भवः ॥ १४ ॥ ततोऽसौ दीक्षितस्तेन । पुनरित्थं च शिक्षि-
तः ॥ अंगीकृतं त्वया वत्स । चारित्रं भवदुर्लभं ॥ १५ ॥ रागद्वेषौ च चेदत्र । करिष्यसि त-
रिष्यसि ॥ भवोदधिं तदा नैव । यथा लक्ष्मीधरादयः ॥ १६ ॥ राजर्षिरवदत्साधो । केऽमी
लक्ष्मीधरादयः ॥ मुनिराजस्ततोऽजल्प-दनल्पं गुणसंयुतं ॥ १७ ॥ पुरं विंध्यपुरं नाम । विं-
ध्यवङ्गजसंकुलं ॥ अनेकमुनिसंयुक्तं । नक्तंचरविवर्जितं ॥ १८ ॥ तत्राभूद्वरुणः श्रेष्ठी । प्रचे-
तावरुणोपमः ॥ रत्नाकरालयः किंतु । नासौ जलपतिः क्षितौ ॥ १९ ॥ श्रीकांता विजया चै-
व । तस्य भार्याद्वयं स्वयं ॥ जिनधर्मरतं चासी-द्विरतं पापकर्मणः ॥ २० ॥ प्रद्युम्नोऽसौ र-
तिप्रीति-रूपाभ्यां सहितोऽरुचत् ॥ ताभ्यां किंतु शिवाकांक्षी । रुचिरांगविवर्जितः ॥ २१ ॥
सिद्धिबुद्धियुतो लंबो-दरोऽसौ शोभते तदा ॥ सदा लाभकरो लोके । रुचिकृत्कुरुमोदके ॥२२॥
श्रीकांतायास्त्रयः पुत्रा । लक्ष्मीधरश्च सुंदरः ॥ अर्हद्दत्तस्तथानंदो । विजयायाः सुतोऽजनि
॥ २३ ॥ चत्वारो धर्मरूपास्ते । प्रत्यक्षा एव रेजिरे ॥ संपादितमनःकामा । जनानां गुणसं-
युताः ॥ २४ ॥ इतोऽनादिभवं नाम । पुरमस्ति सनातनं ॥ तत्रातुलबलो मोह-राजा राज्यं

करोति भोः ॥ २५ ॥

अंतःसद्म समासीनं । तं दीनं वीक्ष्य चैकदा ॥ रागकेसरिनामावक् । तनयो विनयो-
चितं ॥ २६ ॥ तात क्रुद्धे त्वयि प्रौढे । विश्वं चिंतातुरं भवेत् ॥ तव चिंता तु या चित्ते । त-
दपूर्वं मयेक्षितं ॥ २७ ॥ त्वदाज्ञाधारका देवा । असुराः किन्नरा नराः ॥ भुवने तं न पश्या-
मि । यस्ते सेवां करोति न ॥ २८ ॥ तवाज्ञां ये न मन्यंते । ते नग्ना मुंडिता वने ॥ एका-
किनो भ्रमंत्युच्चै-रन्नपाननिराकृताः ॥ २९ ॥ त्वद्भक्ता राज्यसंसक्ता । वरावासनिवासिनः ॥
अहर्निशं कृताहारा । दारागणसमन्विताः ॥ ३० ॥ नित्यस्नानाः साभिमाना । नानायानाद-
रा नराः ॥ भोगसंयोगकलिता । दृश्यंते बहवो जने ॥ ३१ ॥ एवं सति तातपादाः । सचिं-
ता यच्च संप्रति ॥ तच्चेत्कथ्यं तदा तथ्यं । ममाग्रे स्राक् प्ररूप्यतां ॥ ३२ ॥ तत् श्रुत्वा मो-
हराजोऽसौ । हृदये हर्षितो भृशं ॥ जगाद तनयं सद्यः । प्रसादविशदाननः ॥ ३३ ॥

वत्स मे नास्ति तत्कार्यं । यत्तवाग्रे न कथ्यते ॥ यतस्त्वं मेऽसि तनयो । विश्वरंजनक-
र्मठः ॥ ३४ ॥ त्वया यत्कदितं वाक्यं । तत्सत्यं च कथंचन ॥ परं मेऽपि विपक्षोऽस्ति । सप-

कोऽतुलत्तहलः ॥ ३५ ॥ कोऽस्माविति च तेनोक्ते । सोऽवोचच्चतुरत्र मे ॥ चारित्रधर्मसन्नामा । कामाजितपराक्रमः ॥ ३६ ॥ यत्सैन्यस्य वशैकापि । मच्चमूं सकलां जयेत् ॥ सा किं ते वि-स्मृता येन । ममेच्छं त्वं प्रजल्पसि ॥ ३७ ॥ यतः—

अहंकारो धियं ब्रूते । मा सुप्तं प्रतिबोधय ॥ उच्छ्रिते परमानंदे । न त्वं नाहं न तज्जगत् ॥ ३८ ॥ कर्मसैन्ये भटोऽस्मीति । कामं माटोपमुद्वह ॥ विजीयसे यत्क्षमया । हेलयापि महेलया ॥ ३९ ॥ प्रविधाय क्षणं मौनं । सोऽवादीद्रागकेसरी ॥ युष्माकं किं कृतं तेनाधुना येनातिदुःखिताः ॥ ४१ ॥ सोऽवक् विंध्यपुरे विद्वान् । वरुणः श्रावकोत्तमः ॥ चत्वारस्तस्य तनयाः । संति लक्ष्मीधरादयः ॥ ४२ ॥ सिद्धांतप्रमुखैस्तैश्च । चारित्रनृपसैनिकैः ॥ तद्धामाधिष्टितं सर्वं । मन्नामापि हृतं पुनः ॥ ४३ ॥ अद्यापि तनयास्तेन । नात्मसाद्विहिता हिताः ॥ संति ते चेत्स्वपक्षे स्यु—रात्मवर्गो बली तदा ॥ ४४ ॥

बलवान् समयरागो । विप्रतार्य करिष्यति ॥ चारित्रधर्मपक्षेऽमूं—स्तदात्मबलसंक्षयः ॥ ॥ ४४ ॥ तेन मे वर्त्तते चिंता । हृदये वत्स सांप्रतं ॥ उत्कृष्टसुभटसाध्यं । कार्यमेतत्परं परं

॥ ४५ ॥ यतस्तस्य गृहे संति । चारित्रनृपपूरुषाः ॥ तेषां च पश्यतां लातुं । दुष्करं तान् तदाश्रितान् ॥ ४६ ॥ तन्निशम्य जगौ राग–केसरी बलगर्वितः ॥ तिष्टत्वन्येऽत्र निश्चिंता । विश्वास्ये तान् वशे त्वहं ॥. ४७ ॥

यतो मे त्रीणि रूपाणि । गुरुकाणीह संति च ॥ अन्यानि सूक्ष्मरूपाणि । तेषां संख्या न विद्यते ॥ ४८ ॥ दृष्टिस्नेहविषयानु–रागरूपैस्त्रिभिस्त्रयः ॥ वशीकृता मया सेवां । करिष्यंति तव ध्रुवं ॥ ४९ ॥ तत् श्रुत्वा मोहभूपेन । चिंतितं निजचेतसि ॥ रागकेसरिपुत्रस्य । भुवि शक्तिर्गरीयसी ॥ ५० ॥ यतः शून्यपुराण्येषो–ऽचलानां वासयेज्जनैः ॥ नृणां वीभत्सरूपेषा । रतिस्थानेषु योजयेत् ॥ ५१ ॥ भ्रामयते तथा लोकैः । सुतंप्रति पितेति गां ॥ सुतांप्रति मवित्रीति । कुदेवान् देवसत्तमान् ॥ ५२ ॥ कुधर्मान् शुद्धधर्मांश्च । कुगुरून् सद्गुरूंस्तथा ॥ अभक्ष्यमपि भक्ष्यं तै–रपेयं पेयमेव च ॥ ५३ ॥ युग्मं ॥

सुरासुरनरान् विश्वे । मदाज्ञावशगांस्तथा ॥ कुरुते तेन मे गेहे । महानायः प्रवर्त्तते ॥ ॥ ५४ ॥ द्वेषद्विपेंद्र ज्ञात्वाय । तदाह पितरं निजं ॥ चतुर्थं नंदनामान–मानयिष्ये वशे तव ॥

॥ ५५ ॥ मोहराजो निशम्यैतद् । दध्यौ मनसि संमदात् ॥ सर्वमान्यां मदाज्ञां ये-ऽवगण-
य्य पुरा नराः ॥ ५६ ॥ वनं गत्वा तपोऽग्निः स्वैः । पूर्वकोट्यार्जितैर्मतैः ॥ तपोधना ज-
ने जाता । विख्याता भुवनत्रये ॥ ५७ ॥ युग्मं ॥ तेषां मुहूर्तमात्रेण । लात्वा सर्वं तपोधनं
॥ दुर्गतौ पातयत्येतान् । मत्सुतः कोपकुंजरः ॥ ५८ ॥

पितरं घातयेज्जंतु । मातरं वैरिणीं पुनः ॥ सुहृदादेर्विपर्यासं । तथा गालीमशिक्षितां
॥ ५९ ॥ संतापयेद्विना वह्निं । जनं रक्तमरक्तकं ॥ अनंथमंधं कुरुते । मौनिनं बहुभाषिणं
॥ ६० ॥ असावपि न सामान्य-स्तेन मे तनयोऽदयः ॥ सुता भाग्येन लभ्यंते । पितुश्चित्ता-
नुवर्तिनः ॥ ६१ ॥ तौ सन्मान्य पिता प्राह । वत्सौ स्वज्ञौ युवां परं ॥ परगेहे परान् जेतुं
। गमनं युवयोरिदं ॥ ६२ ॥ परस्परं तत्सान्निध्यं । विधेयं दुःस्थिते परे ॥ युवाभ्यामहमत्र-
स्थः । करिष्ये युवयोर्हितं ॥ ६३ ॥

तौ प्रणम्य ततस्तातं । गतौ वरुणवेश्मनि ॥ दृष्टिरागाख्यरूपेण । प्रथमोऽधिष्ठितः सु-
तः ॥ ६४ ॥ स्नेहानुरागरूपेण । द्वितीयो मेलितोऽमुना ॥ तृतीयो विषयराग-रूपेण कलितः

कृतः ॥ ६५ ॥ रागकेसरिणा चेदं । स्वकार्यं विहितं तदा ॥ द्वेषेणापि तथा नंद । आत्मरूपो विनिर्मितः ॥ ६६ ॥ क्रीडां कुर्वंति सर्वत्र । ते चत्वारस्तदाश्रिताः ॥ पित्रादीनां न तु श्रीमां । पीडां किंतु प्रकुर्वते ॥ ६७ ॥ विवादो विदिनस्तेषां । वरुणेन प्रमोदतः ॥ तथापि चपलज्ञाव–स्वज्ञावं ते त्यजंति न ॥ ६८ ॥ एकदा कोऽपि तत्रैक–स्तापसः स समाययौ ॥ करोति यः पारणकं । मासेन तपसा सदा ॥ ६९ ॥ वर्षाकाले सदाकाशं । शीतकाले जलाश्रयं ॥ उष्णकाले च पंचाग्निं । सेवते जपधीः सदा ॥ ७० ॥ अज्ञानतपसा तेन । सर्वो लोकः स्वशासने ॥ हृदीकृतस्ततस्तस्य । विधत्ते ज्ञक्तिमुत्तमां ॥ ७१ ॥ लक्ष्मीधरो वने तत्र । रंतुं मित्रयुतो ययौ ॥ जनव्रजं व्रजंतं स । दृष्ट्वापृछत्सुहृद्गणं ॥ ७२ ॥

कुत्र यांति जना एते । पुष्पचंदनपाणयः ॥ तेऽवोचन् रक्तवसन–मर्चितुं यांति ज्ञो जनाः ॥ ७३ ॥ प्रेरितो दृष्टिरागेण । स गतस्तस्य सन्निधौ ॥ वचसा तपसा तेन । रंजितोऽसौ शशंस तं ॥ ७४ ॥ प्रत्यहं याति तत्पार्श्वे । चिरं तिष्ठति सन्निधौ ॥ ज्ञावतो वचनं तस्य । शृणोति कुरुते च तत् ॥७५॥ लोकाग्रे तद्गुणान् वक्ति । ज्ञक्तियुक्तिं करोति च ॥ पालयेत्परया ज्ञ-

॥ १५१ ॥

त्तया । तदाज्ञां निर्विचारणां ॥ ७६ ॥ वरुणेनाथ वृत्तांतो । विज्ञातो ज्ञातिवक्त्रतः ॥ ततः पुत्रं समाकार्य । शिक्षयामास सादरं ॥ ७७ ॥ कथं वत्स विद्यमाने-ऽममाने क्षीरसागरे ॥ सगरे गर्त्तानिकरे । पीयते कलुषं पयः ॥ ७८ ॥ दीपे करस्थिते कूपे । पतनं क्रियते किमु ॥ रत्नादर्शे शयस्थे वा । कांस्ये किं वीक्ष्यते मुखं ॥ ७९ ॥ वीतरागं परित्यज्य । येऽन्यान्न देवान्नमंत्यहो ॥ क्रीणंति काचखंडानि । हित्वा चिंतामणिं हि ते ॥ ८० ॥ निर्ग्रंथं च गुरुं मुक्त्वा । परांस्तान् संश्रयंति ये ॥ विहाय कामकुंभं ते । नीलीभांडानि गृह्णते ॥ ८१ ॥ क्षांत्यादिदशधाधर्मं । त्यक्त्वा येऽन्यान् प्रकुर्वते ॥ विमुच्य कल्पवृक्षांस्ते । बब्बूलादीन् व्रजंति ही ॥ ८२ ॥ शृण्वंति पापशास्त्राणि । मुक्त्वा सिद्धांतमुज्ज्वलं ॥ विमुच्यामृतपानं ते । पिबंति विषमुल्बणं ॥ ८३ ॥ वस्त्रेणाऽगलिते नीर-पूरे स्नानं करोत्यसौ ॥ जीवयुक्ते पुनस्तस्मिन्-श्चीवराणां च धावनं ॥ ८४ ॥

सचित्तमृत्तिकासंगं । शौचार्थं सेवते सदा ॥ विराधनां विधत्तेऽसा-वग्निकायस्य कारणे ॥ ८५ ॥ पारणे ह्यार्द्रकादीनि । शाकानि गृहमेधिनः ॥ पायसादीनि रागेण । सृजंत्यस्यार्थ-

मेव नोः ॥ ८६ ॥ जलादौ त्रसजीवानां । निवहो दृश्यते स्फुटं ॥ अतः कथं दयाधर्मो ।
विद्येत सर्वसम्मतः ॥ ८७ ॥ तथा मिथ्याप्ररूपित्वात् । द्वितीयं व्रतमस्य न ॥ अवग्रहमया-
चित्वा । तिष्टकृह्णाति वा कियत् ॥ ८८ ॥ तेन तृतीयमपि नो । व्रतमस्य प्रवर्त्तते ॥ संघट्टा-
दं तथा स्त्रीणां । नैव शंका कदाचन ॥८९॥ तस्माच्चुर्यं व्रतं शुद्धं । नेष्यतेऽमुष्य शासने ॥
द्रव्यं च ग्रंथौ बध्नाति । तेन नो पंचमं व्रतं ॥ ९० ॥ अतोऽस्य सेवा नो कार्या । धार्या सं-
गतिरुत्तमैः ॥ गुणागुणौ यतः संगा-द्भवतो भुवनत्रये ॥ ९१ ॥ यतः-वधो धर्मो जलं तीर्थं
। गौर्नमस्या गुरुर्गृही ॥ अग्निर्देवो द्विकः पात्रं । येषां तैः कोऽस्तु संस्तवः ॥ ९२ ॥ शंका-
दिदूषणानीह । सम्यक्त्वे पंच संत्यहो ॥ अस्य संसर्गतस्तानि । सर्वाणि स्युः सुधर्मिणां ।९३।
स्थिरीभूते च सम्यक्त्वे । धर्मोऽपि स्थिरतां व्रजेत् ॥ दृढे हि पीठिकाबंधे । प्रासादो दृढतां
श्रयेत् ॥ ९४ ॥ सम्यक्त्वे सति नरक-गतितिर्यग्गती नृणां ॥ भवेतां भुवने नैव । मर्त्यस्व-
र्गापवर्गदे ॥ ९५ ॥ अन्ये देवाः कामसेवा-पराः शस्त्रधराश्वराः ॥ सनृत्तगाना अज्ञाना ।
पुत्रदाराश्रिता रताः ॥ ९६ ॥

मोहितो हितवर्जितः ॥ सर्वक्रियापरिभ्रष्टः । स्तोककालाद्बभूव सः ॥ १८ ॥ अथ द्वितीयपुत्रस्य । सुंदराख्यस्य दारकः ॥ उपयाचितकोटीभि-र्जज्ञे विज्ञेतरेदृशः ॥ १९ ॥

तदा स्नेहानुरागोऽस्य । विशेषात्प्रकटोऽजनि ॥ तेन तं पालयत्युच्चै-र्धात्रीकर्मभिरन्वहं ॥ २० ॥ न जहाति तत्सामीप्यं । दिवा रात्रौ कदाप्यसौ ॥ उत्संगे तं सदा धत्ते । दत्ते शिरसि चुंबनं ॥ २१ ॥ उल्लापनैरसंबद्धै-रुल्लापयति तं बहु ॥ उपहासकराश्चेष्टाः । श्रेष्ठाऽनिष्टाः करोत्यसौ ॥ २२ ॥ वृद्धलज्जा परित्यक्ता । मुक्ता चिंतान्यवस्तुषु ॥ तेन तद्ध्यानयुक्तेन । स्नेहरागांधितेन वै ॥ २३ ॥ पवित्रयति निःशूकं । भोजयत्योदनं स तं ॥ तथा मूत्रपुरीषादि । तस्य व्युत्सृजति स्वयं ॥ २४ ॥ माता करोति नो चिंतां । स्तोकामपि कदाचन ॥ तस्य सूनोर्मनाग् दूनो । जायते नो तथाप्यसौ ॥ २५ ॥

वेलायां भोजनं नायं । करोत्युष्णं न शीतलं ॥ वेत्ति शेते तथा नैव । व्यवसायं श्रयेन्न हि ॥ २६ ॥ विधत्ते धर्मवार्त्तां नो । दूरेऽस्तु करणं पुनः ॥ आवश्यकं न कुरुते । व्रजेद्देवगृहं न च ॥ २७ ॥ न ध्यायति नमस्कारं । मंत्रोदारं कदाचन ॥ प्रेषितोऽपि महत्कार्ये । या-

ति पुत्रं विना न सः ॥ २८ ॥ आमयादिनि पुत्रेऽसौ । विधत्ते भोजनं नहि ॥ तिष्टदुपरि प-
तितः । शोचत्यश्रूणि मुंचति ॥ २९ ॥ तं च तादृग्विधं दृष्ट्वा । पिता प्राह सुतंप्रति ॥ पुत्रो-
परि घनो स्नेहो । दृश्यते वत्स किं तव ॥ ३० ॥ यतः—लोभमूलानि पापानि । रसमूलाश्च
व्याधयः ॥ स्नेहमूलानि दुःखानि । त्रीणि त्यक्त्वा सुखी भव ॥ ३१ ॥ आत्मजात्यंतमोहेन
। राज्ञो दशरथस्य भोः ॥ अतीवदुःखसंजात—प्राणांतकरणं शृणु ॥ ३२ ॥
जातो हरति कलत्रं । वर्द्धितो भोजनं हरेत् ॥ अर्थं समर्थो गृह्णाति । नास्ति पुत्रसमो
रिपुः ॥३३॥ भ्रमद्भिर्भवकांतारे । कांता रे कलिता घनाः ॥ अनयास्तनयाश्चैवा—नंतशः प्रा-
णिभिः पुरा ॥ ३४ ॥ रक्षिताः पितरस्तैर्नो । पतंतो नरकावटे ॥ धर्म एव धरत्युच्चैः । पतंतं
प्राणिनं भवे ॥ ३५ ॥ अंतर्वृत्त्या जिनेंद्रेषु । गुरुषु ब्रह्मचारिषु ॥ रागः कार्यो बहिर्वृत्त्या । पु-
त्रादिषु पुनस्त्वया ॥ ३६ ॥ पुत्रे त्वमतिरागं यत् । करोषि तच्च नोचितं ॥ अर्हत्यप्यतिमोहे-
न । केवलं न भवेन्नृणां ॥ ३७ ॥ अतिसेवनया भव्य—मपि कार्यं भवेदिह ॥ व्यसनं ह्यस्त-
तः प्रोक्त—मति सर्वत्र वर्जयेत् ॥ ३८ ॥

रोगो भवति लोकानां । मिष्टस्याप्यतिभक्षणात् ॥ यतोऽतिसरसे देशे । तद्बाहुल्यं प्रदृश्यते ॥ ३९ ॥ ऐहिकामुष्मिकं कार्यं । क्रियमाणं जनव्रजैः ॥ शोभतेऽवसरे वत्स । वेलातिक्रमणे न हि ॥ ४० ॥ लालनाद्बहवो दोषा । नीतिशास्त्रेऽपि कीर्त्तिताः ॥ अतोऽदो व्यसनं मुक्त्वा । धर्मकर्मपरो भव ॥ ४१ ॥ तत् श्रुत्वा सोऽवदत्तातं । देवानामपि दुर्लभं ॥ पुत्रस्य दर्शनं येन । सरागस्यापि निर्वृतिः ॥ ४२ ॥ पुत्रा भवंति यद्गेहे । तत्फलं धर्मकर्मणः ॥ फलस्यावज्ञया वृक्ष-स्याप्यवज्ञा कृता भवेत् ॥ ४३ ॥ पशूनां पक्षिणां चात्र । विना कार्यं विलोकय ॥ अपत्यानि वल्लभानि । मनुजानां तु किं ब्रुवे ॥ ४४ ॥ लोभाकरलोभनंदि-कथा किं न श्रुताद्भुता ॥ येनेदं जल्पथात्यंतं । भूयो भूयो ममाग्रतः ॥ ४५ ॥ तथाहि—

इहैव भरतक्षेत्रे । पवित्रे शुभकर्मणा ॥ चंपावती पुरी रम्या । विद्यतेऽवद्यवर्जिता ॥ ४६ ॥ श्रीवीरधवलस्तस्यां । बभूव पृथिवीपतिः ॥ तथाभूतां लोभनंदि-लोभाकरवणिग्भुवौ ॥ ४७ ॥ लोभाकरस्य तनयो । गुणवर्माभिधः सुधीः ॥ लोभनंदिः पुनः पुत्र-हीनो दीनो जनेऽजनि ॥ ४८ ॥ तयोर्हट्टस्थयोः कश्चि-दन्यदाऽट्टहासपूर्वकः ॥ भद्राकृतिः पुमानेकः ।

तस्य सश्रीकतां ज्ञात्वा । तेजःप्रमुखसत्कृतैः ॥ अत्यादरः
। सविवेकः समाययौ ॥ ४९ ॥ विश्वस्तेन ततस्तेन । कदाचित्पुरतस्तयोः
कृतस्ताभ्यां । लक्ष्मीवान् कुत्र नार्च्यते ॥ ५० ॥ कियंतो वासरा अत्र । लगिष्यंति पुरे
॥ अन्नाणि तुंबकं चैत-द्रक्षतं मे प्रयत्नतः ॥ ५१ ॥
मम ॥ गमनावसरे चादो । ग्रहीष्ये क्षेमसंयुतः ॥ ५२ ॥
ततस्तत्तुंबकं ताभ्यां । गृहीत्वा रज्जुना दृढं ॥ उपरिष्टात्स्वयं बद्धं । हट्टमध्ये स्वभाव-
तः ॥ ५३ ॥ गालं गालं च तन्मध्या-दपतन् रसबिंदवः ॥ अधःस्थिता लोहमया । हेमीभूता-
कुशाश्च ते ॥ ५४ ॥ तद् दृष्ट्वा लोभयुक्ताभ्यां । गोपितं रसतुंबकं ॥ याच्यमाने पुनस्तस्मि-
न् । ताभ्यामित्युत्तरं कृतं ॥ ५५ ॥ मूषकैर्जग्धबंधं ते । पतितं तुंबकं भुवि ॥ शतखंडं बभू-
वाशु । नाशः स्याच्च कृतस्य नोः ॥ ५६ ॥ तत् श्रुत्वा सोऽवदद्भूय-स्तर्हि दर्शयतं युवां ॥
तानि मे तस्य खंडानि । संशयो येन नो भवेत् ॥ ५७ ॥ ततोऽन्यतुंबकस्योच्चैः । शकलानि
कलान्यलं ॥ आनीय दर्शितान्यस्य । प्रेक्ष्य दध्यौ च तानि सः ॥ ५७ ॥ अस्मिन् सिद्धरसं
ज्ञात्वा । गतौ लोभमिमौ समं ॥ अर्थतो नामतश्चापि । सत्यौ जातौ किलाधुना ॥ ५८ ॥

रोगो भवति लोकानां । मिष्टस्याप्यतिभक्षणात् ॥ यतोऽतिसरसे देशे । तद्बाहुल्यं प्रदृश्यते ॥ ३९ ॥ ऐहिकामुष्मिकं कार्यं । क्रियमाणं जनव्रजैः ॥ शोभतेऽवसरे वत्स । वेलातिक्रमणे न हि ॥ ४० ॥ लालनाद्बहवो दोषा । नीतिशास्त्रेऽपि कीर्त्तिताः ॥ अतोऽदो व्यसनं मुक्त्वा । धर्मकर्मपरो भव ॥ ४१ ॥ तत् श्रुत्वा सोऽवदत्तातं । देवानामपि दुर्लभं ॥ पुत्रस्य दर्शनं येन । सरागस्यापि निर्वृतिः ॥ ४२ ॥ पुत्रा भवंति यद्गेहे । तत्फलं धर्मकर्मणः ॥ फलस्यावज्ञया वृक्ष-स्याप्यवज्ञा कृता भवेत् ॥ ४३ ॥ पशूनां पक्षिणां चात्र । विना कार्यं विलोकय ॥ अपत्यानि वह्वपत्यानि । मनुजानां तु किं ब्रुवे ॥ ४४ ॥ लोभाकरलोभनंदि-कथा किं न श्रुताद्भुता ॥ येनेहं जल्पथात्यंतं । भूयो भूयो ममाग्रतः ॥ ४५ ॥ तथाहि—

इहैव भरतक्षेत्रे । पवित्रे शुभकर्मणा ॥ चंडावती पुरी रम्या । विद्यतेऽवद्यवर्जिता ॥ ॥ ४६ ॥ श्रीवीरधवलस्तस्यां । बभूव पृथिवीपतिः ॥ तथाभूतां लोभनंदि-लोभाकरवणिग्भुवौ ॥ ४७ ॥ लोभाकरस्य तनयो । गुणवर्माभिधः सुधीः ॥ लोभनंदिः पुनः पुत्र-हीनो दीनो जनेऽजनि ॥ ४८ ॥ तयोर्हट्टस्थयोः कश्चि-दन्यदाऽदृष्टपूर्वकः ॥ भद्राकृतिः पुमानेकः ।

। सविवेकः समाययौ ॥ ४९ ॥ तस्य सश्रीकतां ज्ञात्वा । तेजःप्रमुखसद्गुणैः ॥ अत्यादरः कृतस्ताभ्यां । लक्ष्मीवान् कुत्र नार्च्यते ॥ ५० ॥ विश्वस्तेन ततस्तेन । कदाचित्पुरतस्तयोः ॥ अस्त्राणि तुंबकं चैत-द्रक्षतं मे प्रयत्नतः ॥ ५१ ॥ कियंतो वासरा अत्र । लगिष्यंति पुरे मम ॥ गमनावसरे चादो । ग्रहीष्ये क्षेमसंयुतः ॥ ५२ ॥

ततस्तत्तुंबकं ताभ्यां । गृहीत्वा रज्जुना दृढं ॥ उपरिष्टात्स्वयं बद्धं । हट्टमध्ये स्वभावतः ॥ ५३ ॥ गालं गालं च तन्मध्या-दपतन् रसबिंदवः ॥ अधःस्थिता लोहमया । हेमीभूताः कुशाश्च तैः ॥ ५४ ॥ तद् दृष्ट्वा लोभयुक्ताभ्यां । गोपितं रसतुंबकं ॥ याच्यमाने पुनस्तस्मिन् । ताभ्यामित्युत्तरं कृतं ॥ ५५ ॥ मूषकैर्जग्धबंधं ते । पतितं तुंबकं भुवि ॥ शतखंडं बभूवाशु । नाशः स्याच्च कृतस्य भोः ॥ ५६ ॥ तत् श्रुत्वा सोऽवदद्भूय-स्तर्हि दर्शयतं युवां ॥ तानि मे तस्य खंडानि । संशयो येन नो भवेत् ॥ ५७ ॥ ततोऽन्यतुंबकस्योच्चैः । शकलानि कलान्यलं ॥ आनीय दर्शितान्यस्य । प्रेक्ष्य दध्यौ च तानि सः ॥ ५७ ॥ अस्मिन् सिद्धरसं ज्ञात्वा । गतौ लोभमिमौ समं ॥ अग्रेतो नामतश्चापि । सत्यौ जातौ किलाधुना ॥ ५८ ॥

निवेदयामि चेद्भङ्के । तदा गृह्णात्यसौ रसं ॥ एतयोः कथिते किंतु । कदाचिन्मे घटिष्यति ॥
॥५९॥ इति ध्यात्वा निजे चित्ते । तौ जगौ किं युवां मृषा ॥ उत्तरं यच्छथः सद्य-स्तुंबकं मे
॥ ४०० ॥ समर्प्यतां ॥ ६० ॥ भवतोर्हृदये लोभ-श्चेद्भवेत्तर्हि तद्भृतं ॥ किंचिद्रसं प्रयच्छामि । गच्छामि स्वं
पुरं त्वहं ॥ ६१ ॥ दुष्करः सर्वनाशो मे । सर्वग्राहोऽपि दुष्करः ॥ युवयोर्भविता नूनं । वि-
चारं कुरुतं हृदि ॥ ६२ ॥ यतः—अतिलोभो न कर्त्तव्यो । लोभं नैव परित्यजेत् ॥ अतिलो-
भाभिभूतस्य । चक्रं भ्रमति मस्तके ॥ ६३ ॥ तथापि लोभयुक्ताभ्यां । ताभ्यां त-
न्नार्पितं तदा ॥ संस्तभ्य तौ गतः सोऽन्यः । स्वस्थानं मानसंयुतः ॥ ६४ ॥ लोभाकरसुतो
ग्रामां-तरादागात्तदाखिलां ॥ वार्त्तां शुश्राव दृष्ट्वा च । तौ ददर्श तथास्थितौ ॥ ६५ ॥ शो-
भितो ग्राममध्ये स । परं नाशो यतो गतः ॥ ततस्तत्पुरमध्यस्था । आनीता मंत्रवादिनः ॥
॥ ६६ ॥ कृते स्वस्वोपचारे तैः । पीडा वृद्धिं गता तदा ॥ मनागपि गुणो नासी-द्दोषाद- ॥ ५०० ॥
गुण एव यत् ॥ ६७ ॥ यस्मादुत्तिष्टते वह्नि-स्तस्मादेवोपशाम्यति ॥ अतस्तमेव पुरुषं । मा-
नयित्वाहमानये ॥ ६८ ॥ परं न ज्ञायते कुत्र । स गतो वसतीह च ॥ पृच्छता पृच्छता चात्र

। गम्यते मालवेऽपि यत् ॥ ६९ ॥ व्रजामि तं नरं लात्वो–पलक्षयति यो हि तं ॥ इति ध्या-
त्वा जनं लात्वा–ऽचलत्तदुपलक्षकं ॥ ७० ॥

पथि गच्छन्नविश्रांतं । मंदोऽभूत्स जनोऽपि च ॥ तं मुक्त्वा स ततोऽचाली–त्कालीभूत-
मुखोऽसुखी ॥ ७१ ॥ अथासौ नगरं किंचि–दीक्षांचक्रे पुरोऽध्वनि ॥ परं निर्मानुषं तेन । वि-
स्मितस्तत्प्रविष्टवान् ॥ ७२ ॥ तत्र क्वचित्प्रदेशे स । एकं सुंदरपूरुषं ॥ व्यलोकत ततस्तेन ।
पृष्टः कस्त्वं विपन्नधीः ॥ ७३ ॥ वैदेशिकोऽहं स प्राह । साहसैकधनोऽधुना ॥ पथि गच्छन् पु-
रं दृष्ट्वा । मध्येऽहमाविशं पुनः ॥ ७४ ॥ किं तत्पुरं कथं शून्यं । त्वमेकाकी स्थितः किमु ॥
ततोऽवादीत्पुमान् सोऽपि । शृणु संबंधमादितः ॥ ७५ ॥ पुरं पौरमनोहारि । नाऽरिगणवि-
लोकितं ॥ रम्यं रम्यरमावासं । नाम्नेदं कुशवर्द्धनं ॥ ७६ ॥ इहाभून्नृपतिः सूरो । नाम्ना स्था-
म्नापि सत्करः ॥ जयो विजयचंद्रश्च । तस्यावामुभयौ सुतौ ॥ ७७ ॥

कालेन कालधर्मं च । सधर्मं जनके गते ॥ ज्येष्ठभ्राता जयाभिख्यो । राज्ये पितुरुपा-
विशत् ॥ ७८ ॥ अहं पुनरहंकारात् । स्वपुरान्निरगां तदा ॥ भ्रमंश्चंद्रावतीपुर्यां । उद्याने चा-

न्यदा गतः ॥ ७९ ॥ विद्यासिद्धो नरः कश्चि-द्विपश्चिद्ददृशे मया ॥ तत्रातीसाररोगेण। पीडि-
तः पतितो भुवि ॥ ८० ॥ अगण्यपुण्य संजात-कारुण्यवशतः स तु ॥ तथा मया प्रत्यका-
रि । यथा नीरुक् तदाजनि ॥ ८१ ॥ ततस्तुष्टेन तेनाहं । भापितः को भवान् पुमान् ॥ य-
थार्थे कथिते दत्ते । द्वे विद्ये मे समे इमे ॥ ८२ ॥ स्तंभकर्त्री वश्यकर्त्री । पाठसिद्धे भद्रे शु-
भे ॥ रसस्यैकं तथायच्छत् । तुंबकं साधु सम्मतं ॥ ८३ ॥ वस्तुत्रयं समर्प्यैति । कथितं तेन
मे पुनः ॥ रत्नत्रयमिवेदं ते । महोदयनिबंधनं ॥८४॥ तेषु सम्यक्त्ववत्किंतु । तुंबकं यद्रसेन
च ॥ भावितं गिरिसारं तु । सुवर्णं जायते जने ॥ ८५ ॥ यस्य तस्य गृहे नैव । दातव्यं सि-
द्धिदं त्विदं ॥ अनंतलोभतो येन । विनाशोऽस्य भवत्यहो ॥ ८६ ॥

विद्ये अपि निरर्थं नो । प्रयोक्तव्ये कदाचन ॥ कारणे कार्यसिद्धिः स्यात् । पापतापो वृ-
थान्यथा ॥ ८७ ॥ विद्यासिद्धः प्रसिद्धः स । इत्युदित्वा ममोत्तमः ॥ गतः श्रीपर्वते सद्य-श्चि-
रं तिष्ठंति नेदृशाः ॥ ८८ ॥ अहं तु चंद्रवत्यां । प्रविष्टः शिष्टचित्तभृत् ॥ लोभाकरलोभनंद्या
-पणे तत्रागतो भ्रमन् ॥ ८९ ॥ आवर्जितस्तथा ताभ्यां । प्रतिपत्तिपुरस्सरं ॥ यथा विश्व-

स्त चिन्तोऽहं । जातो ज्ञातो न केनचित् ॥ ९० ॥ पुरीशोन्मादिदृक्कायै । स्थितिन्नावमुपेमुपा तद्दृष्टं तुंबकं मुक्तं । मया युक्तं विचार्य च ॥ ९१ ॥ कतिचिद्वासरान् स्थित्वा । पुरीलक्ष्मीर्विलोकिता ॥ ततो मातुर्निनंसायै । गंतुकामोऽन्नवं पुरे ॥ ९२ ॥ मया तत्पार्श्वतस्तच्च । मार्गितं मार्गयायिना ॥ तदा ज्ञातस्वरूपाभ्यां । ताभ्यां दत्तं न मे च तत् ॥ ९३ ॥ तयोस्तदोचितं कृत्वा । प्रतीकारं स्वविद्यया ॥ अहमत्रागतः शून्यं । पुरं दृष्ट्वा विपन्नवान् ॥ ९४ ॥ गुणवर्मेत्यथो दध्यौ । निशम्यैतत् स एव हि ॥ येन मे पितृपितृव्यौ । स्तंभितौ स्वीयविद्यया ॥ ९५ ॥ सम्यक् स्वरूपं यावन्नो । वेद्मि तावत्स्वमात्मना ॥ नाविष्करिष्ये ध्यात्वेति । तं जगादाग्रतो वद ॥ ९६ ॥

जयचंद्रः पुनः प्राह । ततोऽहं परितो भ्रमन् ॥ गतो राजकुलं स्वीय–मात्मीयजनवर्जितः ॥ ९७ ॥ तदुपरिष्टाच्चटितः । सप्तमीं भूमिकां ययौ ॥ विजयाख्यां भ्रातृजाया–मपश्यं तत्र चैकिकां ॥ ९८ ॥ आसनादिप्रदानेन । विनयो विहितस्तया ॥ मया पृष्टा स्ववृत्तांतं । सा जगौ साश्रुलोचना ॥ ९९ ॥ पुरा पुरस्योपवने । पवनेन पवित्रते ॥ आगात्कश्चित्तप-

स्व्येको । मासं मासमुपोषितः ॥ ७०० ॥ एकदा स भवभ्रात्रा । पारणार्थं निमंत्रितः ॥ भूपाज्ञया मया तस्य । जेमतोऽङ्केऽपि मारुतः ॥ १ ॥

तस्य स्वांतं तदा भ्रांतं । जातं दांतं पुरा न यत् ॥ ब्रह्मस्वरूपं न ज्ञात–मीदृशास्ते भवंति भोः ॥ २ ॥ यतः—विषया विनिवर्त्तंते । निराहारस्य देहिनः ॥ रसवर्जं रसोऽप्यस्य । परं दृष्ट्वा निवर्त्तते ॥ ३ ॥ निशि गोधाप्रयोगेण । मम सौधे समागतः ॥ कामांधानां कुतो लज्जा । धर्मो यमनियमे तपः ॥ ४ ॥ सामदंभभवैर्वाक्यैः । कामार्थं मामसौ जगौ ॥ बोध्यमानोऽपि पापात्मा–ऽध्यवसायं मुमोच न ॥ ५ ॥ द्वारदेशे तदा स्वामी । समेतस्तन्निशम्य च ॥ निबिडं बंधयामास । तं तपस्विजनाधमं ॥ ६ ॥ विडंबयित्वा विविधं । राज्ञा चाज्ञाधरैर्नरैः ॥ मारितश्चौरमारं स । कर्मणोऽस्य फलं त्विदं ॥ ७ ॥ मृत्वा स राक्षसो जज्ञे । कर्मणा गतशर्मणा ॥ ईदृशानामीदृगेव । प्रायः संजायते गतिः ॥ ८ ॥ किंचात्राऽज्ञानतपसा । गतिर्दैवसमुद्भवा ॥ विरूपाध्यवसायाच्च । दुष्टजातिषु संभवः ॥ ९ ॥

विभंगज्ञानिना तेन । ज्ञातः पूर्वभवो निजः ॥ इहागत्य ततो भ्राता । तव नीतः क्षयं

तेनेदं नगरं शून्यं । वर्त्तते
स्वयं ॥ १० ॥ जीवग्राहं प्रजा नष्टाः । कष्टाद् दुष्टान्नयाकुलाः ॥ तेनेदं नगरं शून्यं । वर्त्तते
तव सांप्रतं ॥ ११ ॥ नश्यंती भुवि भ्रश्यंती । तेन संधीरिता त्वहं ॥ भ्रजस्थितिमिति प्रोच्य
। त्वमत्रैव भयं न ते ॥ १२ ॥ स्वधिया यास्यसि त्वं चे–न्मां मुक्त्वान्यत्र कुत्रचित् ॥ तस्मा-
त्वामानयिष्यामि । ततस्तिष्ट निराकुला ॥ १३ ॥ अत्र स्थितास्मि तेनाहं । दिवासौ याति कु-
त्रचित् ॥ रात्रौ पुनः समभ्येति । यांत्येवं वासरा मम ॥ १४ ॥ मयोक्तमस्यै तस्याद्य । किं-
चिन्मर्म प्रकाशय ॥ वारयामि यथा वैरं । निजभ्रातुः पुरा कृतं ॥ १५ ॥ सा जगाद शया-
नस्य । पादौ चेत्तस्य मृद्यते ॥ घृतेन निद्रामुद्रास्य । दीर्घनिद्रोपमा तदा ॥ १६ ॥ परं न-
रकरेणैव । पादाभ्यंगे समेति सा ॥ पाणिस्पर्शनतो नैव । नार्या आयाति सा पुनः ॥ १७ ॥
अयं चेच्चरणाभ्यंगा–त्पूर्वं वेत्तीह मानुषं ॥ तदास्य चरणाभ्यंगं । रणं कृत्वा करोत्यसौ
॥ १८ ॥ तयाख्यातं मया ज्ञातं । पुरवृत्तांतमादितः ॥ परं विना सहायं नो । कार्यसिद्धिः प्र-
जायते ॥ १९ ॥ अतः सहायं सत्कायं । वीक्षणार्थमिहागतः ॥ यावत्तावत्त्वमत्रैव । मिलितः
कलितक्रमः ॥ २० ॥ साहाय्यं कुरु मे प्राज्यं । यथा राज्यं वलत्यहो ॥ वैरं स्वैरं निजभ्रातु–

भ्रातुः पृष्ठयाश्च सांप्रतं ॥ २१ ॥ गुणवर्मा ततो दध्यौ । कार्यं मेऽनेन सेत्स्यति ॥ अतोऽस्य वचनं कुर्वे । गर्वेण परिवर्जितः ॥ २२ ॥ उपकारापकारौ तु । सहजनात्मसंभवौ ॥ यादृगारोप्यते बीजं । तादृगेव फलोदयः ॥ २३ ॥

इति ध्यात्वा वचो मेने । तस्य शस्यमतेरयं ॥ तमयोर्लोहयोर्लोके । का वेला मिलने लगेत् ॥ २४ ॥ आत्मीयकार्यं वह्निश्च । द्वाविमावुष्णलक्षणौ ॥ परकार्यं च पानीयं । द्वे इमे शीतले स्मृते ॥ २५ ॥ तदा विजयचंद्रोऽवक् । तर्ह्येतस्य क्रमौ त्वया ॥ घृतेन मृक्षणीयौ द्वौ । यथा निद्रास्य संभवेत् ॥ २६ ॥ स्तोककालात्करिष्येऽह—मवश्यं वश्यमात्मनः ॥ मंत्रसहस्रजापेन । पापेन वर्जितस्त्वमुं ॥ २७ ॥ प्रमाणमिति तेनोक्ते । सामग्रीं सकलां कलां ॥ मेलयित्वा गतौ सौधं । प्रच्छन्नं तस्थतुश्च तौ ॥ २८ ॥ अंधकारे महाघोरे । जाते तत्राययौ हि सः ॥ अथाहो मानुजो गंधो । ब्रुवाणश्चेति तांप्रति ॥ २९ ॥

सा जगादाहमेवास्मि । मानुषी नान्यमानुषं ॥ समदे सति मातंगे । कोऽन्यस्तत्र स्थितिं व्रजेत् ॥ ३० ॥ निश्चिंतोऽसौ ततः सुप्तः । पादौ तस्य वधूमिषात् ॥ घृतेन मर्दयामास ।

गुणवर्मा तदान्वयः ॥ ३१ ॥ पुनर्गंधवशात्सोऽपि । यदोच्चाटुमना भवेत् ॥ विशेषतस्तदा पा-
र्दौ । सोऽन्यंगयति मादृसी ॥ ३२ ॥ अचिंत्यसत्प्रभावस्य । तत्क्षणं फलदस्य च ॥ वशीक-
रणमंत्रस्य । जापे पूर्णे कृते ततः ॥ ३३ ॥ भच्चाय राक्षसं क्षुद्रं । तर्जयामासतुश्च तौ ॥ व-
शीकृतो वराकः स । किंचित्कर्तुं शशाक न ॥ ३४ ॥ युग्मं ॥ अथाह राक्षसः साक्षा—द्युव-
योरस्मि किंकरः ॥ अत आदिशतं कार्यं । यथा कुर्वे तदादरात् ॥ ३५ ॥ तत् श्रुत्वा कुमरो-
ऽवोचत् । प्राकारं कुरु मत्पुरे ॥ भांडागारं रत्नवारैः । सुवर्णौघैश्च पूरय ॥ ३६ ॥ कोष्टागारे
धान्यचयं । विधेहि सुखिनं च मां ॥ आगच्छसि स्मृतस्त्वं चे—त्तदा मोक्षोऽन्यथा न हि ॥
॥ ३७ ॥ सर्वमंगीकृतं तेन । नतेन शिरसा रयात् ॥ तदुक्तं सकलं कृत्वा । स्वस्थानमगम-
त्स च ॥ ३८ ॥ तदा प्रजा समानीता । मंत्रिवर्गोऽपि सत्वरं ॥ तदाश्रिताश्च भूपालाः । स्व-
स्वस्थाने नियोजिताः ॥ ३९ ॥ ततो विजयचंद्रस्य । मूलामात्यैः प्रमोदतः ॥ पट्टाभिषेको
विदधे । रक्षा नो नृपतिं विना ॥ ४० ॥ राजाह गुणवर्माणं । कृतशर्माणमात्मनः ॥ इदं य-
दर्जितं राज्यं । तत्प्रमाणं तवाखिलं ॥ ४१ ॥

गृहाणेदमतो राज्य–मनृणीकुरु मां सखे ॥ दुःखे साहाय्यकर्त्ता य–द्विस्मृतिं नैव गच्छति ॥ ४२ ॥ अवोचकुणवर्माथ । चंद्रावत्यां च यौ पुरा ॥ स्तंभितौ पितृपितृव्यौ । तौ मे जानीहि भूपते ॥ ४३ ॥ अतः प्रसीद राजंस्त्वं । बंधमोक्षं तयोः कुरु ॥ एतावतैव मयका । संप्राप्तं सकलं तव ॥ ४४ ॥ अपराधपरौ सत्य–मकृत्यकरणोद्यतौ ॥ तौ तथापि प्रसीद त्वं । संतः प्रणतवत्सलाः ॥ ४५ ॥ तदाकर्ण्य जगौ राजा । कालकूटात्सुधोद्भवः ॥ आम्रफलानि धत्तूरा–द्यत्त्वं तस्माद्भूरहो ॥ ४६ ॥ कियन्मात्रमिदं कार्यं । त्वं यन्मे कथयिष्यसि ॥ अहं करिष्ये तत्सर्वं । पुनरत्रास्ति कारणं ॥ ४७ ॥ समीपे नगरस्यास्या–स्त्येकशृंगो महागिरिः ॥ देवताधिष्ठिता तत्र । कूपिकैका प्रवर्त्तते ॥ ४८ ॥ उन्मीलन्मीलदस्त्यस्या । मुखमक्षिपुटे इव ॥ प्रविश्य मध्ये तद्वार्या–कर्षणीयं प्रयत्नतः ॥ ४९ ॥ बिभेति चेज्जलग्राही । तदा स म्रियते ध्रुवं ॥ परं यस्यैव पुत्रेणा–कृष्यते तत्पितुर्गुणः ॥ ५० ॥ आछोट्यते तेन चारा–न्निर्मुदा जनको यदा ॥ तदा भवेद्बंधमोक्षो–ऽन्यथा वर्षशतेन न ॥ ५१ ॥ तदाकर्ण्याह सोऽप्येवं । करिष्येऽहं पितुः कृते ॥ यन्मातापितरौ विश्वे । दुःप्रतीकारकौ स्मृतौ ॥ ५२ ॥

विधाय सर्वसामग्रीं । गतौ तौ कूपिकामुखं ॥ दोरकैर्मंचिकां बध्ध्वा । मुखे जाते विकाशिनि ॥ ५३ ॥ वणिक्पुत्रो मंचिकास्थो । मध्ये क्षिप्तोऽथ जूभृता ॥ पुनर्विकाशिवक्त्रे स । जलयुक्तः कृतो बहिः ॥५४॥युग्मं॥ राट्स्मृतो राक्षसोऽप्यागात् । तौ च तत्र निनाय सः ॥ लोभाकरलोभनंदि–गृहे विग्रहसंयुते ॥ ५५ ॥ तेन जलेन विस्तारं । सिक्तः स्राक् गुणवर्मणा ॥ लोभाकरः पिता स्वीय–स्तेन सज्जोऽभवत्क्षणात् ॥ ५६ ॥ आक्रंदन् लोभनंदी तु । तस्थौ दुःस्थस्तथैव सः ॥ पुत्रं विना यतः पुंसां । बंधमोक्षः कथं भवेत् ॥ ५७ ॥ श्रेष्टिपुत्रोपरोधेन । कथंचिद्विजयेंदुना ॥ गृहांतः स्थापितो लोभ–नंदी दीनमुखोऽरुदत् ॥ ५८ ॥

विजयेंदुः पुनः प्राह । श्रेष्टिपुत्रं गुणान्वितं ॥ गृहाण भव्यदेशं मे–ऽथवा व्यापारमादरात ॥ ५ए ॥ नात्तं किंचित्ततस्तेन । सन्मुखं रत्नतुंबकं ॥ सत्कृत्य वस्त्राभरणैः । पुरतस्तस्य ढौकितं ॥ ६० ॥ तुष्टेन तेन तस्यैव । तुंबकं तत्समर्पितं ॥ तादृशानां यतः पुंसा–मुचितं याति न कत्रचित् ॥ ६१ ॥ न्यासापहारजो दोष–स्तदा तज्जनकेन सः ॥ क्षामितो भूपतिः स्वीयं । जगाम पुरमुच्चकैः ॥ ६२ ॥ तात सूरतनूजेन । गतं राज्यं च वालितं ॥ बांधवस्य

तथा वैरं । प्रजा च सुखिनी कृता ॥ ६३ ॥ अंगीकृत्यापि मरणं । स्वपिता गुणवर्मणा ॥ मोचितो बंधनाद्गाढ–मसुतोऽन्यः क्रयं गतः ॥ ६४ ॥ येषामेवंविधास्ताता–वदाता विविधा मताः ॥ कथं न मान्यास्ते पुत्राः । पवित्राः पुण्यकर्मणा ॥ ६५ ॥ तदाकर्ण्य जगौ श्रेष्टी । वत्साहं नो वदामि तत् ॥ एकांततो न मन्यंते । सुताः सत्कर्मविश्रुताः ॥ ६६ ॥ मर्त्ययोग्यं परं पित्रा । मात्रा वामोचितं हितं ॥ कर्त्तव्यं सततं काले–ऽन्यथा वृद्धिं कथं व्रजेत् ॥ ६७ ॥ पशूनामपि कर्त्तव्या । सारा तारा सदार्थदा ॥ कृपालुना पालनार्थं । बालकस्य सुतस्य किं ॥ ॥६८॥ त्वया यद्गदितं पूर्वं । धर्मात्पुत्रा भवंत्यहो ॥ तेषामनादरे धर्म–स्याप्यनादरता भवेत् ॥६९॥ तदसत्यं यतो धर्मा–द्राज्यं नृणां प्रजायते ॥ तस्मिन्नतिरसे जाते । पुंसां नरकमादिशेत् ॥ ७० ॥ पानीयं जीवनं प्रोक्त–ममृतं च तथोदितं ॥ तस्मिन् घने पुनः पीते । रोगोत्पत्तिः प्रजायते ॥ ७१ ॥ यतः——ऋणसंबंधिनः सर्वे । पुत्रो भ्राता पशुस्तथा ॥ ऋणक्षये क्षयं यांति । का तत्र परिदेवना ॥ ७२ ॥ सोऽपि कोपगजेंद्रेण । तदा किंचित्तथाश्रितः ॥ यथा यत्तद् ब्रुवाणोऽसौ । वरुणेन पृथक्कृतः ॥ ७३ ॥ ततो निरंकुशः सोऽयं । मुक्तलज्जः सुधर्महृत् ॥


॥ ४१० ॥

स्नेहरागसमायुक्तः । पुत्रं ध्यायति नित्यशः ॥ ७४ ॥ अथ तृतीयपुत्रस्य । वयःस्थस्य विशे-
षतः ॥ अर्हद्दत्तस्य कामानु-रागेणाकुलितं मनः ॥ ७५ ॥ मन्यतेऽसौ तथा भार्यां । पितरं
नैव मातरं ॥ न बंधुवर्गं नो जामिं । न वृद्धान् गोत्रिणः पुनः ॥ ७६ ॥ विभिन्नं कारितं ते-
न । भवनं भुवनाद्भुतं ॥ परितो वाटिकायुक्तं । नानाचित्रसमन्वितं ॥ ७७ ॥

कर्पूरपूरसंयुक्तं । तांबूलं चार्द्धचर्वितं ॥ त्यजति क्ष्मातले कुर्या-ल्लेपनं यक्षकर्दमैः ॥७८॥
शेते च पुष्पशय्यायां । धूपधूपितधामभाक् ॥ संगीतं सततं तत्र । कारयेद्धारयेद्धनं ॥ ७९ ॥
कामरागे वर्द्धमाने । स्पर्द्धमाने नृपादिभिः ॥ अन्यान्यश्रेष्टिमंत्रीश-सार्थपव्यवहारिणां ॥८०॥
कन्या अन्दा उपयेमे । तावद्यावत्किलाभवन् ॥ प्रियाः पंचशती पूर्णा । संतोषोऽस्य तथा-
पि न ॥ ८१ ॥ युग्मं ॥ ततोऽन्यवनितासंगं । करोति कलितो मदैः ॥ तद् ज्ञात्वा जनकः
प्राह । रे त्वया मंभितं किमु ॥ ८२ ॥ सामान्यकुलसंभूताः । प्रभूताः कर्म दारुणं ॥ पर-
स्त्रीगमनरूपं । नाचरंति कदाचन ॥ ८३ ॥

मदीयकुलसंजातो । यत्त्वं परवधूरतः ॥ तेन ते नरकोऽवश्यं । भविष्यति न संशयः ॥

॥८४॥ सदानो गुरुरुन्मानो । भद्रजातिरपि द्विपः ॥ उच्चैः परवशासंगा—द्वारिदुःसंकटे पतेत् ॥ ८५ ॥ पुण्यजनोऽपि परस्त्री—गमनेच्छां करोति यः ॥ रामाभिषंगतस्तस्या—प्युत्तमांगपरिक्षयः ॥ ८६ ॥ अभिरामगुणग्रामा । रामा पंचशती तव ॥ ताभिश्चेत्ते न संतोषः । कथमाभिर्भविष्यति ॥ ८७ ॥ यतः—स्वदारासु हि संतोषं । भज त्यज परांगनाः ॥ यथा ते परमं सौख्य—मिहामुत्र भवे भवेत् ॥ ८८ ॥ सोऽवोचद्भुक्तभोगाः स्थ । यूयं तेन न रोचते ॥ परमस्मादृशां सौख्य—मेतदेव प्रवर्त्तते ॥ ८९ ॥

एकेंद्रिया अपि स्पर्श—सुखं चानुभवंत्यहो ॥ विबुधाश्च तथा तात । तर्हि किं मम दूषणं ॥ ९० ॥ प्रवृत्तिरेषा संसारि—जीवानां दृश्यतेऽभितः ॥ निवृत्तिर्नग्नमुंडानां । रंडानां वा क्वचिद्भवेत् ॥ ९१ ॥ यत्र मार्गे घना लोका । यातायातं प्रकुर्वते ॥ राजमार्गः स एव स्या—च्चौरमार्गाः परे पुनः ॥ ९२ ॥ भवद्भिः क्रियते धर्म—स्तेन स्वर्गो भविष्यति ॥ तत्रापि विषयसौख्यं । देवानां वर्त्तते पितः ॥ ९३ ॥ प्रत्यक्षं च सुखं त्यक्त्वा । परोक्षं यत्समीहयते ॥ उन्नतं तद्घनं दृष्ट्वा । स्वनीरघटभंजनं ॥ ९४ ॥

नुदरिणीं प्रियां वीक्ष्य । तत्कटिस्थसुतोऽप्रनं ॥ परं जातानि न्नवतां । पष्टिवर्षाणि तन्न
धीः ॥ ए५ ॥ तत् श्रुत्वा जनकोऽजल्पत् । सर्वयोपिन्निवारणं ॥ कथयामि न ते वत्स । परं
परवशास्त्यज ॥ ए६ ॥ विपयार्थमहं धर्मं । न करोमि कदाचन ॥ किंतु धर्मकथायोच्चै–र्वो
खिलान्नकृते तथा ॥ ए७ ॥ त्वया यन्नदितं पूर्वं । यत्र यांति घना जनाः ॥ राजमार्गः स वि-
ज्ञेय–स्तत्सत्यं च त्वदीरितं ।ए८। राजानो यत्र गच्छंति । राजमार्गः स नच्यते ॥ चौरमार्गः स यत्रा-
ल्पा–स्तदसत्यं तवोदितं ॥ एए ॥ स वाह्यमार्गो विज्ञेयो । मोक्षसौख्यप्रदायकः ॥ कर्ममा-
र्गमतस्त्यक्त्वा । निःकर्माध्वानगोऽस्म्यहं ॥ ८०० ॥ सोऽत्रोचत्तेन मोक्षेण । कार्यं मे नास्ति
किंचन ॥ यत्र खाद्यं न तु स्वाद्यं । न पेयं नापि योपितः ॥ १ ॥ श्रेष्टी दध्यौ निशम्यैत
–न्नास्तिकोऽनूदयं ननु ॥ तेन नो संगतिः शस्या । डुष्टस्यास्य कदाचन ॥ २ ॥
विचार्येति चिरं चित्ते । तेन सोऽपि पृथक्कृतः ॥ कुमानुपेण संसर्गः । सर्वत्र परिवर्जि-
तः ॥ ४ ॥ ततो निरंकुशो व्याल । इव इंगे परिभ्रमन् ॥ मदोन्मत्तो डुष्टचित्तो । विनाशं कु-
रुते घनं ॥ ५ ॥ अथ तुर्यं सुतं नंदं । संगं लक्ष्मीधरादिन्निः ॥ कुर्वाणं वीक्ष्य जनको । ज-

गाद मधुराक्षरं ॥ ५ ॥ लक्ष्मीधरादयः पुत्रा । ये मया वत्स निर्गुणाः ॥ दूरीकृताः सत्सुकृता—र्जनवर्जनबुद्धयः ॥ ६ ॥ तैः साकं संगतिं यत्त्वं । करोषि च गतागतं ॥ तदवद्यं सतां निंद्यं । ततस्तत्संगतिं त्यज ॥७॥ संसर्गजा दोषगुणा । भवंत भुविनिश्चितं ॥ गिरिशुकपुष्पशुक—प्रमुखाणां निदर्शनात् ॥ ८ ॥ नंदोऽवदच्च संसर्गा—त्संसारे न गुणागुणौ ॥ विषं वसति दंष्ट्रायां । फणेऽहेस्तु वरो मणिः ॥ ९ ॥ मणेर्गुणा विषस्योच्चै—र्विषदोषास्तथा मणेः ॥ न भवंति ततो नैव । संसर्गतो गुणागुणौ ॥ १० ॥

श्रेष्ठी जगाद द्रव्याणि । द्विविधानि भवंत्यहो ॥ भावुकान्यभावुकानि । कानिचित्कानिचिद्भुवि ॥ ११ ॥ वैडूर्यमणिरत्रायं । परद्रव्यैरभावुकः ॥ विषदोषस्ततस्तस्य । न लगेत्संगसंभवः ॥ १२ ॥ दंष्ट्रासुमणियोगश्चे—न्मिलतीह कदाचन ॥ तदा स्युर्निर्विषा एता—स्तद्योगः किंतु दुर्लभः ॥ १३ ॥ भावुकं जीवद्रव्यं तु । तेन तस्य गुणागुणौ ॥ संसर्गजौ हि भवतो । भवतोऽतो निवेद्यते ॥ १४ ॥ पुष्पादिषु स्थिताः प्रायः । सुगंधा यैस्तिला अपि ॥ गुंफं भारशतं चात्र । तुंबीबीजं विनाशयेत् ॥ १५ ॥ मलिनस्य च संसर्गा—न्मालिन्यं स्याद्गुणोज्ज्व-

ले ॥ यथा मातंगसंगेना–पवित्रो ब्राह्मणो भवेत् ॥ १६ ॥ पावित्र्यकारि सलिलं । चांडालस्य गृहस्थितं ॥ अपवित्रं भवेल्लोके । लोकेन परिवर्जितं ॥ १७ ॥ यथाहि धवलं वस्त्रं । मषीप्रमुखवस्तुभिः ॥ कृष्णं भवति तत्कालं । न मषी धवला भवेत् ॥ १८ ॥

गडूचीमुख्यं कटुकं । शर्करां कटुतां नयेत् ॥ शर्करा न तु गडूची–प्रमुखं मिष्टतां नतां ॥ १९ ॥ अतो दुर्जनसंसर्गा–त्सतां दूषणसंभवः ॥ बाहुल्येन भवेल्लोके । उत्तमाभिश्रितं गुणः ॥ २० ॥ अतोऽमीषां दुर्जनानां । संसर्गं मुंच दूरतः ॥ तवापि दूषणप्राप्ति–रन्यथात्र भविष्यति ॥ २१ ॥ वरुणस्येति भणितं । विज्ञाय द्वेषहस्तिना ॥ तथासौ प्रेरितो बाढं । यथा तातेऽपि दोषधीः ॥ २२ ॥

अजल्पज्जनके सोऽपि । त्वया मद्बांधवा गृहात् ॥ निरागसः कथंकारं । सारं लात्वा बहिष्कृताः ॥ २३ ॥ मामिच्छसि तथा कर्तुं । कूटदोषप्रभाषणैः ॥ परं परे चिंतयते यत् । स्वगृहेऽन्येति तत्किल ॥ २४ ॥ मौनं कृत्वा तिष्ट दुष्ट । वलं ते वर्त्ततेऽधुना ॥ लपने तेन लपसि । भक्ष्यामि तावकं त्विदं ॥ २५ ॥ इत्याद्यनिष्टवचनं । वदंतं वीक्ष्य सज्जनाः ॥ वारया-

॥ ४१५ ॥

मासुरित्येवं । भणितैः सुष्टुमम्मतैः ॥ २६ ॥ कठोरवाक्यं नान्येषां । कथनीयं कदाचन ॥ विशेषतस्तु पूज्यानां । वदतां हितमुत्तमं ॥ २७ ॥ तन्निशम्य जगौ सोऽयं । कोपाटोपवशंवदः ॥ पूज्यो नायं भवेत्किंतु । वैरी मे पूर्वजन्मनः ॥ २८ ॥ ततस्ते श्रेष्ठिनं प्रोचु–र्लाभालाभविचारकाः ॥ हितशिक्षापि नो देया । यस्य तस्य त्वया नयात् ॥ २९ ॥ यतः—

उपदेशो न दातव्यो । यादृशे तादृशे नरे ॥ पश्य वानरमूर्खेण । सुगृही निर्गृहीकृता ॥ ३० ॥ तदासौ वरुणः श्रेष्ठी । निषिद्धः सज्जनैरिति ॥ मौनं कृत्वा स्थितो गेहे । सेहे दुःखं परं हृदि ॥ ३१ ॥ जनकोपेक्षितः सोऽयं । जनैः सह सदा कलिं ॥ करोति करुणाहीनः । पीनः पापेन दुष्टहृत् ॥ ३२ ॥ एकदा वरुणो दध्यौ । चत्वारः संति मे सुताः ॥ कषाया इव नैकोऽपि । तेषु सौख्यकरः परं ॥ ३३ ॥ गृहवासेन किं तेन । यत्र चैवंविधाः सुताः ॥ परलोकहितं कुर्वे । सर्वेण स्वबलेन तत् ॥ ३४ ॥ एवं चिंतापरो याव–ज्जातः ख्यातयशा हि सः ॥ तावता बहिरुद्याने । आगाद्विजयकेवली ॥ ३५ ॥ गुर्वागमनमाकर्ण्य । वरुणो मित्रसंयुतः ॥ ययौ तद्वसतिं या च । तदुपाधिभवांतदा ॥ ३६ ॥ अथवा विबुधाचार्यो । नमस्यः

कृत्यतो भवेत् ॥ ततः प्रणम्य तं भक्त्या । यथास्थानमुपाविशत् ॥ ३७ ॥

उपदेशमसौ दत्वा । कुशलं धर्मकर्मणः ॥ पप्रछ स्वछचित्ताना–मेतत्प्रश्नं किलादिमं ॥
॥ ३८ ॥ श्रेष्टी वभाषे भगवन् । वहिर्वृत्त्या ममाधुना ॥ समस्ति धर्मसंधानं । प्रधानं नांत-
रदृशा ॥ ३९ ॥ अभणत्केवली श्रेष्टिन् । कारणं धर्मवारणं । किमस्ति स्वस्तिहरणं । ततः
श्रेष्टी पुनर्जगौ ॥ ४० ॥ अनयास्तनयाः संति । तेन मे निर्वृतिर्न हि ॥ तांविना धर्मकारणं ।
स्मरणं नेति सांप्रतं ॥४१॥ तेषां किं दूषणं ब्रूषे । केवली तं जगौ पुनः ॥ विनाशयंत्यमून् स-
र्वान् । यतो मध्यस्थिता इह ॥ ४२ ॥ श्रेष्टी प्रोवाच मन्गेहे । कोऽपि तादृग् न विद्यते ॥ अ-
मीषां यो हि कुमतिं । ददाति मुनिपुंगव ॥ ४३ ॥ मोहराजस्य वृत्तांतं । केवली तत्पुरोऽवद-
त् ॥ तत् श्रुत्वा स भयभ्रांत–स्वांत आह गुरुंप्रति ॥ ४४ ॥ अतः परममी दुःखं । विधास्यं-
ति न वा प्रभो ॥ मत्पुत्राणां वद स्वामिन् । केवली पुनरब्रवीत् ॥ ४५ ॥ सर्षपांशसमं दुः-
खं । तेषां तैर्विहितं खलु ॥ अग्रे गुरुतरं मेरू–पमं दास्यंति ते ध्रुवं ॥ ४६ ॥

दृष्टिरागादिभिर्दुष्टा । यास्यंति निधनं त्वमी ॥ परलोके पुनः प्रौढां । दुर्गतिं दुःखसंत-

तिं ॥ ४७ ॥ वरुणेन ततोऽन्नाणि । कोऽप्युपायोऽस्ति न्नोः प्रन्नो ॥ येनैते वेदनारूपे । न्नव-
कूपे पतंति न ॥ ४८ ॥ अजल्पत्केवली श्रेष्टिन् । कर्मामीषां निकाचितं ॥ असाध्यव्याधिव-
द्वैधै—रस्मान्निर्याति नाधुना ॥ ४९ ॥ त्वं कुरुष्व हितं शीघ्र—ममीषां चिंतया किमु ॥ आ-
त्मना तार्यते स्वात्मा । निमित्तं स्यात्परः पुनः ॥ ५० ॥ ज्ञानिनो वचनं श्रुत्वा । तथेति प्र-
तिपद्य च ॥ गेहे गत्वा सप्तक्षेत्र्यां । वित्तबीजमुवाप सः ॥ ५१ ॥ श्रीकांतासहितो दीक्षां ।
ललौ केवलिसन्निधौ ॥ निस्संगो वसुधापीठे । विजहार विचारवान् ॥ ५२ ॥

लक्ष्मीधरादयः पुत्रा । गृहाणि विन्नवं तथा ॥ विन्नज्य जगृहुर्मोह—राजपुत्रवशी-
कृताः ॥ ५३ ॥ दृष्टिरागधरस्याथ । यस्माल्लक्ष्मीधरस्य च ॥ मरणं सौख्यहरणं । जातं त-
न्नो निशम्यतां ॥ ५४ ॥ त्रिषष्टिसहितान्यत्र । शतानि त्रीणि संति यत् ॥ पाखंडिनां तत-
स्तत्र । समायांति नवा नवाः ॥ ५५ ॥ कुदृष्टिरागवशत—स्तत्र तत्र प्रयात्यसौ ॥ नवं नवं
तत्प्रन्नवं । प्रन्नावं प्रेक्ष्य तद्रुचिः ॥ ५६ ॥ मूलत्रिदंडी तद् ज्ञात्वा । दध्यावीर्ष्याकुलो हृदि ॥
अनेन कुलजो धर्मो । मुक्तो मुक्तिनिबंधनं ॥ ५७ ॥ मन्नक्तोऽनूत्कियत्काल—मिंद्रजालसमं

क्वचित ॥ किंचिद् दृष्ट्वा च तद्भक्तो । बभूव चलमानसः ॥५८॥ वार्त्तामपि विधत्ते न । म-
या सह कदाचन ॥ दूरेऽस्तु वंचकादस्मा-त्तद्भक्तिकरणं हि मे ॥ ५९ ॥ दर्शयामि फलं किं-
चि-दस्य दुर्नयसंभवं ॥ इति ध्यात्वा दंभमयः । पुत्रको विहितोऽमुना ॥ ६० ॥

कीलकैर्लोहरूपैः स । विद्धो मंत्राभिमंत्रितैः ॥ ततो भूमितले क्षिप्तः । शप्तश्च कटुका-
क्षरैः ॥ ६१ ॥ तल्पेऽनल्पे शयानोऽसौ । तद्दिनाद्गतिभंगभाक् ॥ अंगोपांगव्यथायुक्तो । मु-
क्तोऽभूदन्यकर्मणा ॥ ६२ ॥ आर्त्तध्यानपरो मृत्वा । निगोदेषु जगाम सः ॥ दुरंतानंतकालं
तु । तत्र स्थास्यति मूढधीः ॥ ६३ ॥ ततोऽप्यव्यवहारराशौ । चिरकालं भ्रमिष्यति ॥ इति ज्ञा-
त्वा दृष्टिरागो । वर्जनीयः प्रयत्नतः ॥ ६४ ॥ इतश्च स्नेहरागेण । पुत्रं ध्यायन् सदा मुदा ॥
आस्तेऽसौ सुंदरो याव-त्तावद्यौवनमाप सः ॥ ६५ ॥ घनं वसुव्ययं कृत्वा । तेनासौ परिणा-
यितः ॥ निजजायारतः सोऽपि । पितरं नैव मन्यते ॥ ६६ ॥ बहिर्वृत्त्या पुनः किंचि-द्विन-
यं विदधात्यसौ ॥ प्रच्छन्नधननिमित्तं । चित्तं संतोषयन् पितुः ॥ ६७ ॥ सुंदरः सुंदराचारं । तं
ध्यायन् धनसंचयं ॥ निधानादिगतं सर्वं । दर्शयामास मूढधीः ॥ ६८ ॥

एकदा तद्वधूः प्राह । विजने निजवल्लन्नं ॥ मोत्कारेण त्वत्पित्रा । गृहं ही मे विना-
शितं ॥ ६९ ॥ वारं वारं निशि द्वारं । सखट्कारं भवत्पिता ॥ उद्घाटयति दुर्वारं । कायचिं-
ताकृते सदा ॥ ७० ॥ कफं त्यजति भूपीठे । सुप्तोऽसौ धुर्धुरायते ॥ शब्दायति तथा बाढं ।
निद्रा नायाति तेन मे ॥ ७१ ॥ एष चेन्नभवेद्गेहे । वरं स्यात्तेन तं गृहाद् ॥ बहिःकृत्वा सुखं
त्वावां । नूनं भुंजावहे स्फुटं ॥ ७२ ॥ तेन तद्वचनं सर्वं । प्रतिपन्नं प्रमोदतः ॥ तेन निष्का-
स्यमानोऽसौ । निस्सरेच्चैव नो गृहात् ॥ ७३ ॥ कलत्रपुरतोऽवादी—त्तत्स्वरूपं स एकदा ॥
साह तर्हि न दास्येऽहं । भोजनं प्रचुरं वरं ॥ ७४ ॥ तेनासौ दुर्बलो भावी । गलेंगुष्टस्त्वया
पुनः ॥ दत्वा मार्यो ह्यनार्योऽसा—वन्योपायो न विद्यते ॥ ७५ ॥ ताभ्यां तथा कृते मृत्वा ।
सोऽभवत्कुक्कुरो गृहे ॥ इति विज्ञाय भो विज्ञ । स्नेहरागं परित्यज ॥ ७६ ॥ अथासाव-
र्हद्दत्तोऽपि । शब्दे रूपे रसे तथा ॥ गंधे स्पर्शे भृशं गृद्धो । गमयेद्दिवसान् रसात् ॥ ७७ ॥

अन्यदास्य क्षत्रियाण्या । प्रोषितप्रियया सह ॥ एकभावेन संयोगो । दुष्टरोगोपमोऽ-
जनि ॥ ७८ ॥ लब्धास्वादा ततः सा तं । गेहान्निस्सरितुं न हि ॥ ददाति प्रातिकौल्यं स ।

मन्यते तद्दिवानिशं ॥ ७९ ॥ अन्यान्यवनितारक्तो । निर्गतः सोऽन्यदा गृहात् ॥ तदा तया कुपितया । हतश्छुरिकया द्रुतात् ॥ ८० ॥ नंष्ट्वा गतः स्वगेहेऽसौ । घातपीडातिदुःखनाक् ॥ गेहिनीभिस्तदा पृष्टं । किं जातमसमंजसं ॥ ८१ ॥ यदा न कथयेत्सत्यं । तदा ताभिर्विमर्शितं ॥ असौ तु स्वेच्छया यत्र । तत्र याति निरंतरं ॥ ८२ ॥ पृष्टोऽपि सत्यं न ब्रूते । तर्हि किं पापरूपिणा ॥ अनेन मारयामोऽद्य । सद्यः संतापकं त्वमुं ॥ ८३ ॥ इति ध्यात्वा विषं ताभि-र्घृते क्षिप्तं तदोत्कटं ॥ तदातिवेदना जज्ञे । तस्य दुष्टमतेस्तनौ ॥ ८४ ॥ मृत्वा मातंगनिलये । सोऽपि जज्ञे नपुंसकः ॥ ततश्च्युत्वा तृतीयायां । पृथिव्यां नारकोऽभवत् ॥८५॥ ततस्तिर्यग्गतिं गत्वा । नारकी स भविष्यति ॥ एवं वारा घनास्तस्य । तिर्यग्नरकसंभवाः ॥८६॥

प्रद्विपतस्तु नंदोऽपि । कलिं कुर्वन घनैर्जनैः ॥ प्रातिवेश्मिकहट्टेशे-नान्यदा तं सहाकगेन ॥ ८७ ॥ तेनासौ लोहदंडेन । तथा मूर्ध्नि हतो यथा ॥ मृत्वाद्यनरके क्रोधा-न्नारकी समजायत ॥ ८८ ॥ रागद्वेषवशादेवं । चत्वारो मरणं गताः ॥ यदत्र चित्रकृन्नैत-च्चिंतनीयं विवेकिना ॥ ८९ ॥ आद्यां यतो यतींद्रास्ते । सुरेंद्राश्चक्रवर्त्तिनः ॥ नरेंद्रा दुर्गतौ यांति । शे-

षाणां तर्हि का कथा ॥ ९० ॥ अग्रेऽप्यनंतं संसारं । भ्रमिष्यति स दुस्सहं ॥ रागद्वेषावतो नैव । कार्यौ कार्यविदा सदा ॥ ९१ ॥

गुरुणेति शिक्षितोऽसौ । तथेति प्रतिपद्य च ॥ चारित्रं पालयामास । चिरकालं स्थिराशयः ॥ ९२ ॥ शुभ्रपाले गते काले । कराले चागतेऽन्यदा ॥ तपसाऽनेन भूयासं । वधायाहं बलेः खलु ॥ ९३ ॥ भवांतरेभवाभ्यासा–त्कर्मवैचित्र्यतस्तथा ॥ गुरुणा वारितोऽप्येष । निदानमकरोदिति ॥ ९४ ॥ युग्मं ॥

हृदं चापि स्तुवे तान–द्यावत्पूर्वसुवर्णयुक् ॥ तस्मिन्नपूर्वे संजाते । जायते सोऽसुहृत्पुनः ॥ ९५ ॥ विधायानशनं प्रांते । दांतेन वपुषा रुषा ॥ कलितः सोऽच्युते कल्पे । विपद्य त्रिदशोऽभवत् ॥ ९६ ॥ दीक्षां लात्वा बलिरपि । प्रतिपाल्य तथा चिरं ॥ सौख्यतल्पे वरे कल्पे । समभूदमरोत्तमः ॥ ९७ ॥ तत्र सौख्यं द्वयं भुक्त्वा । तथा च्युत्वायुषः क्षये ॥ अत्रैव भरतक्षेत्रे । पुरे नंदननामनि ॥ ९८ ॥ यथार्थनामा समर–केसरी नृपतिर्जयी ॥ तत्पत्नी सुंदरी राज्ञी । सुंदराकारधारिणी ॥ ९९ ॥ तत्कुक्षौ स बलेर्जीवो–ऽवतारमभजत्क्रमात् ॥ जा-

ते तस्मिन्न् पिता तस्य । मेराकाख्यां व्यधान्मुखात् ॥ ए०० ॥ त्रिन्निर्विशेषकं ॥

पष्टिचापतनुः कृष्ण–वर्णः प्रणतन्नूपतिः ॥ षष्टिहायनलक्षायुः । प्रतिविष्णुरन्नूदसौ ॥ १ ॥ त्रिखंडन्नोक्ता श्रीयोक्ता । मुक्त्वा दोषव्रजं निजं ॥ एकातपत्रं सन्मित्रं । क्षात्रं राज्यं करोत्यसौ ॥ २ ॥ इतश्च विलसच्चित्रे । क्षेत्रे न्नरतनामनि ॥ द्वारिकेति पुरी रम्या । नम्या नो रिपुसंचयैः ॥ ३ ॥ तत्राक्षुद्रो लसन्नद्रो । रुद्रो नाम्ना महीपतिः ॥ सुप्रन्ना पृथिवी चेति । तस्याऽन्नूतां शुन्ने प्रिये ॥ ४ ॥ जीवो नंदिसुमित्रस्य । सोऽनुत्तरविमानतः ॥ एत्य कुक्षौ सुप्रन्नायाः । सुप्रन्नायामवातरत् ॥ ५ ॥ चतुरा चतुरश्चैषा । महास्वप्नांस्तदार्थदान् ॥ ददर्श हलन्नृज्जन्म–कारकान्न् डुःखवारकान्न् ॥ ६ ॥ वरलग्नादिसंयुक्ते । सुदिनेऽथ सुखान्विता ॥ सुषुवे सुप्रन्ना पुत्रं । पवित्रं धवलं रुचा ॥ ७ ॥ न्नद्रान्निधां व्यधात्सूनो–स्तस्य रुद्रो नराधिपः ॥ परं रुद्रो हि यन्नद्रं । जनयेत्तदिहाद्भुतं ॥ ८ ॥ जीवोऽपि धनमित्रस्य । जनमित्रस्य सौहृदात् ॥ च्युत्वाच्युतदेवलोकात् । पृथिवीगर्न्नगोऽन्नवत् ॥ ए ॥ सुखं सुप्ताथ सा सप्त–महास्वप्नांस्तथैक्षत ॥ वासुदेवसुतप्राप्ति–सूचकान्न् डुःखमोचकान्न् ॥ १० ॥

असूत समये सापि । श्यामांगं शुभलक्षणं ॥ सुतं विश्रुतमैश्वर्या–द्वर्यचातुर्यसंयुतात् ॥ ११ ॥ स्वयंभूनामधेयं स । तस्य सूनोः प्रमोदतः ॥ व्यधत्त विधिना रुद्र–राजा रंजितसज्जनः ॥ १२ ॥ धात्रीभिः पाल्यमानौ तौ । लाल्यमानौ मुदा जनैः ॥ वृद्धिमगछतां नील–पीतवस्त्रधरौ परौ ॥ १३ ॥ धवलकृष्णवर्णौ तौ । गंगायमुनयोरिव ॥ प्रवाहौ संगतौ नित्यं । चरतश्चिरजीविनौ ॥ १४ ॥ अन्यदा बहिरुद्याने । तौ तालगरुमांकितौ ॥ गतौ युतौ च शिबिरं । बहुद्रव्यमपश्यतां ॥१५॥ तत्प्रेक्ष्य हलिना प्रोचे । कटकं पश्य भूभृतः ॥ रत्नयुक् बहुशोभाभृत् । तथा भूषितविग्रहं ॥ १६ ॥ प्राह स्वयंभूस्तत् श्रुत्वा । वाहिनी वनसंगता ॥ तृणाहाराश्रिते लोके । कस्येयं ज्ञायते ननु ॥ १७ ॥ स्वयंभूगदितं वाक्यं । श्रुत्वा धीसखनंदनः ॥ विज्ञाताशेषतद्रूप–स्वरूपोऽथ जगाविति ॥ १८ ॥

प्रेषितं शशिसौम्येन । भूभुजा चार्द्धचक्रिणे ॥ मेरकाय महादंडं । विद्धि वाजिगजादिकं ॥ १९ ॥ शार्ङ्गपाणिर्निशम्यैत–ज्जगाद सचिवात्मजं ॥ दंडः क्षमाभृतामेव । करे शोभामवाप्नुयात् ॥ २० ॥ मंत्रिपुत्रः पुनः प्राह । व्यापारे पार्थिवोद्भवे ॥ चक्रिणामपि दंभोऽयं ।

करे शीर्नां प्रयात्यहो ॥ २१ ॥ क्षमान्नृत्वं च चक्रित्वं । लास्यामोऽस्य वयं स्वयं ॥ नृपाग-
तमतो दंडं । कथं त्यक्ष्याम ईदृशं ॥ २२ ॥ एवमुक्ता तदा ताभ्यां । विकटाः सुभटा इति ॥
आदिष्टा गृह्यतां सर्वं । बलादाक्षिप्य सैन्यगं ॥ २३ ॥ सक्रोधा मुक्तरोधास्त–स्प्रेरिता विविधा-
युधाः ॥ योधा युद्धपरान् बध्ध्वा । सर्वस्वं जगृहुर्मुदा ॥ २४ ॥ जीवमादाय ये नष्टा–स्ते वि-
शिष्टा नगरस्त्वरा ॥ आगत्य मेरकायोच्चैः । शशंसुस्तद्विजृंभितं ॥ २५ ॥ तन्निशम्य सकोपो-
ऽसौ । जगाद स्वनृपानिति ॥ प्रसुप्तः सिंहः केनाद्य । हठाज्जागरितो हहा ॥ २६ ॥ सुप्तस-
र्पस्य यद्विवा । पष्टिकाक्षेपणं मुखे ॥ नृपविष्टस्य व्याघ्रस्य । वत्स इत्यथ जल्पनं ॥ २७ ॥
सुखेन स्थानकस्थस्य । प्राभृतग्रहणं मम ॥ रचितं येन तेनेह । सर्वं सौवाहितं कृतं
॥ २८ ॥ पक्षोद्गमः कीटिकानां । यथा मृत्योश्च कारणं ॥ तथा पराक्रमोऽप्येष । दंडं मे गृ-
ह्णतां नृणां ॥ २९ ॥ तदाकर्ण्यावदन्मंत्री । कश्चिद्बुद्धिनिधिस्त्विति ॥ द्विजिह्वकलितोरुद्रः । क्व
त्वं बुधयुतः क्व च ॥ ३० ॥ तस्य तु द्वौ सुतौ राजं–स्तवानेके विवेकिनः ॥ असौ पितृगृहे
स्थायी । त्वद्ग्रासोऽस्ति सर्वतः ॥ ३१ ॥ स विषादी प्रमोदी त्वं । स हरस्त्वं रमाकरः ॥ स

तपस्वी नरेशस्त्वं । युवयोः समता न हि ॥ ३२ ॥ स मे पराक्रमः कार्यो । न हि तेनाधिके पुनः ॥ सिंहो मृगेऽत्र शरन्ने । स्वं बलं दर्शयेन्न हि ॥ ३३ ॥ धाराधरे जनाधारे । ह्युन्नते स्वपराक्रमं ॥ दर्शयन् शरन्नो नूनं । मृत्युमाप्नोति दुर्धिया ॥ ३४ ॥ स्तोकवीर्योऽपि यो माना–धिकत्वं कलयेद्यदा ॥ तदा स वीर्यतो वार्यो । यथा सिंहो हि वारणं ॥ ३५ ॥ अतोऽहं तत्र गत्वैषां । कुर्वे चित्तपरीक्षणं ॥ पश्चाद्यथोचितं कार्यं । कार्यं युष्माभिरादरात् ॥ ३६ ॥ अज्ञानादथवा क्रीमा–वशतः प्राभृतं तव ॥ भविष्यति गृहीतं चे–त्तदा द्विगुणमानये ॥३७॥

गुमेन म्रियते योऽत्र । तस्य किं दीयते विषं ॥ श्रूयते च तथा शास्त्रे । युद्धस्य विषमा गतिः ॥ ३८ ॥ कदाचिच्छिक्करिकया । घटो भंगमवाप्नुयात् ॥ शिरोमात्रस्तथा राहु । र्ग्रसते शशिभास्करौ ॥ ३९ ॥ यतः–शत्रोः सामर्थ्यमज्ञात्वा । वैरमारभतेऽत्र यः ॥ स पराभवमाप्नोति । समुद्रष्टिट्टिभादिव ॥ ४० ॥ किंचित्पराक्रमोपेतौ । श्रूयेते लोकतस्त्विमौ ॥ यावत्स्वदृग्भ्यां नो पश्ये । तावन्नो प्रत्ययः परं ॥ ४१ ॥ ममादेशमतो देहि । धृतिं धेहि स्वमानसे ॥ विमृश्य कार्यकरणं । शरणं सर्वसंपदां ॥ ४२ ॥ मेरकेण तदा प्रैषि । स एव सचिवा-

मणीः ॥ द्वारिकायां पुरि ज्ञातु । रुद्रराज्ञोऽखिलं बले ॥ ४३ ॥

तस्यादेशमथादाय । गुरोरिव स धीसखः ॥ तत्वसारं गुणाधारं । प्रययौ द्वारिकां पुरीं ॥ ४४ ॥ भद्रस्वयंभूमहितं । रुद्रं नत्वोचिते स्थितः ॥ एवं सोऽवक् नृपपृष्टः । प्रतीहारप्रवेशितः ॥ ४५ ॥ शशिसौम्येन प्रहितं । प्राभृतं भूभुजा हितं ॥ वहिर्भयवशान्मध्ये । तदानीतं च तद्वरं ॥ ४६ ॥ राज्यं श्रीमेरके कुर्व–त्यर्द्धचक्रिणि चक्रिणि ॥ करोति कोऽपि नोऽन्यायं । यदसौ सहते न तं ॥ ४७ ॥ विधत्ते कश्चिदन्यायं । कदाचिद्भवनस्थितः ॥ स्वकीयसदने श्वापि । बलवान् भवति क्षितौ ॥ ४८ ॥ परं तस्य गृहस्थाने । हरिणानुपवेशयेत् ॥ पविशेन्मातुरुदरे चे–दसौ तत्र न तत्स्थितिः ॥ ४९ ॥ अस्य नाम्ना गुर्विणीनां । यतो गर्भा गलंत्यहो ॥ यातुं न शक्यते नंष्टुं । वेगिनो हरिणा यतः ॥ ५० ॥ युग्मं ॥

अस्य भयवशात्कुत्र । गत्वा निश्चितमानसैः ॥ स्थीयते पुरुषैः पश्य । यदसावर्द्धचक्रभृत् ॥ ५१ ॥ स्वचित्तकल्पितागर्वात् । कोऽपि चेत्सन्मुखो भवेत् ॥ सोऽपि मध्ये समुद्रस्य । लघुमुद्दिग्नि ध्रुवं ॥ ५२ ॥ नरेंद्रं तं समालोक्य । मंत्रतंत्रविशारदं ॥ द्विजिह्वोऽपि स्ववदनं

। नो प्रसारयितुं क्षमः ॥ ५३ ॥ अतोऽस्य राज्ये नोऽन्यायी । नृपः कोऽपि प्रवर्त्तते ॥ शंकां
मुक्त्वा ततो दंडं । द्विगुणं तत्प्रदीयतां ॥ ५४ ॥ श्रुत्वा स्वयंभूस्तद्वाक्यं । जगादामात्यपुंग-
वं ॥ यत्त्वं जल्पसि तज्जल्प–जल्पाकत्वाज्जडाशयः ॥५५॥ अन्यः कोऽपि भवेत्तर्हि । तस्य शिक्षां
ददाम्यहं ॥ परं वशिष्टरूपोऽसि । तेन वध्यो न मेऽधुना ॥ ५६ ॥ तातस्य कथ्यते किं भोः ।
अस्माभिः सकलं हि तत् ॥ गृहीतं राजपुत्राणा–मिदमेव कुलक्रमः ॥ ५७ ॥ कियच्चिरं कि-
लास्माभिः । स्थिरीभूय निरीक्ष्य ॥ गृहीष्यामो महीं सर्वां । वीरभोग्या वसुंधरा ॥ ५८ ॥
एकोऽपि सिंहः करिणां । यूथं हंति यथा वने ॥ सूर्योऽपि हि ग्रहादीनां । यथा तेजोभरं वरं
॥५९॥ तथा रणांगणे सर्वान् । वैरिणः स्वैरिणः स्वयं ॥ हनिष्याम्यहमेकोऽपि । किं पुनर्भट-
संयुतः ॥ ६० ॥ कियन्मात्रो मेरकोऽसौ । यत्कृते मत्पिता बलं ॥ तथा मज्ज्येष्टबंधुश्च । द-
र्शयेत्सहजं निजं ॥ ६१ ॥ स्वयंभूर्वै क्षमाभारं । स्वयं लाति बलान्निरुक् ॥ न तस्य कश्चिद्गु-
र्वादि–र्ददाति दययान्वितः ॥ ६२ ॥ अस्यापि पैतृकं नासी–द्भरताद्वै पुरा किल ॥ परं भुजब-
लेनात्तं । गृहीष्येऽहं तथा त्विमं ॥ ६३ ॥ अनेकैर्नेकवल्मीकै–र्मारितैः किं परैर्नरैः ॥ सर्परूपं

॥ ४२८ ॥

त्विमं भूपं । हनिष्ये स्वीयदोर्बलात् ॥ ६४ ॥ तदामात्यो भयभ्रांत–स्वांतः शीघ्रं ततोऽचल-
त् ॥ स्थातुं वह्निसमीपे यद् । व्याघ्रेणापि न शक्यते ॥ ६५ ॥ मंत्रिणा विजने सर्वं । मेर-
काय निवेदितं ॥ तेन प्रज्वलितः सोऽभू–द्घातेनेव हुताशनः ॥ ६६ ॥ ततो निःस्वाननादेन ।
कृतप्रस्थानमंगलः ॥ प्रधानैर्वार्यमाणोऽपि । चचाल द्वारिकांप्रति ॥ ६७ ॥

माता काचित्सुतं वक्ति । तदाजौ प्रस्थितं मुदा ॥ वीरपत्नी पुराप्यस्मि । कुरु वीरप्रसूं
तु मां ॥ ६८ ॥ तदा काचित्प्रियं प्राह । प्रेयसी प्रेमसंयुता ॥ स्वामिन्नहं वीरपुत्री । चिती-
कृतजगद्यशा ॥ ६९ ॥ रणे त्वया तथा कार्यं । वीरपत्नीप्रथा यथा ॥ मम संपद्यते सद्य
–श्चिंता कार्या गृहस्य न ॥ ७० ॥ न मोक्ष्यामि भवत्पृष्टं । जीविते मरणेऽप्यहं ॥ तृष्णाहरा-
मृतकरा । संतापौघनिवारिका ॥ ७१ ॥ त्रिभिर्विशेषकं ॥ कश्चिद्वयस्थस्तनयः । सनयः पि-
तरं निज ॥ वृद्धं यियासुं समरे । प्रोवाच रचितांजलिः ॥ ७२ ॥ तातेयं समितिर्दीक्षा । वृ-
द्धत्वे दुष्करा मता ॥ वरं गृहस्थास्तद्यूयं । तत्र यास्याम्यहं सह ॥ ७३ ॥ युग्मं ॥ कश्चि-
त्सुतं पितावोच–त्तव वार्ता गता मता ॥ नानेतव्या परं लज्जा । कुलस्य सकलस्य नः ॥

॥ ७४ ॥ जगाद बांधवं कश्चि—त्तदेवं रणकातरं ॥ धारातीर्थं क्षत्रियाणां । बंधो पापहरं म-
तं ॥ ७५ ॥ प्रियामोहवशात्कंचि—त्स्थातुंकामं परो जगौ ॥ कैषाबला वरिष्यंति । तव स्व-
र्गांगना घनाः ॥ ७६ ॥ अपरं द्रव्यमोहेन । गेहं मोक्तुमथाक्षमं ॥ परोऽगृणत्कियत्त्वेतद् ।
दिव्यश्रीस्ते भविष्यति ॥ ७७ ॥ इत्यादिविविधालापैः । प्रेरिताः सुभटाः कुटान् ॥ मुक्त्वा
युयुक्षते चेलु—रेकाग्रमनसो रसात् ॥ ७८ ॥ कुंभस्थलगंडशैला । मदनिर्झरहारिणः ॥ प्रत-
स्थुः करिणोऽनेके । जंगमाः पर्वता इव ॥ ७९ ॥ सफेनविविधावर्त्त—वेगव्याप्तमहीतलाः ॥
तुरंगमाः क्षितिं व्यापु—स्तरंगा इव वारिधेः ॥ ८० ॥ घोटकालिसमायुक्ता । वराजिरविभूषि-
ताः ॥ अचरन् स्यंदनाः सद्य—श्चलंतो निलया इव ॥ ८१ ॥ फलाभिकांक्षिणः शाखा—संग-
ताः स्तोकलोभिनः ॥ उच्छलंतो व्रजंतिस्म । प्लवंगा इव पत्तयः ॥ ८२ ॥ आगच्छंतमथो ज्ञा-
त्वा । मेरकं हेरिकैर्नरैः ॥ स्वयंभूभृत्संयुक्तो । जगामाभिमुखं सुखं ॥ ८३ ॥ स्वदेशसीम्नि
गत्वा स । तस्थौ स्थामसमन्वितः ॥ प्रेरको निजसैन्यस्य । मेरकोऽपि समाययौ ॥ ८४ ॥
वीराज्ञया तदा धीराः । सदसि प्रबलादराः ॥ अरिक्षयाय वरणं । शिश्रियुर्देवसाक्षिकं ॥

॥ ८५ ॥ सैन्यद्वयेऽत्र मिलिते । कलिते कलिकर्मणा ॥ प्रासदैन्यं कियत्सैन्यं । वीक्ष्यात्मीयं
विचक्षणः ॥ ८६ ॥ परदर्शितदौर्जन्यं । स्वयंभूः स्वयमादरात् ॥ स्वकीयादितसौजन्यं । पां-
चजन्यमपूरयत् ॥ ८७ ॥ युग्मं ॥ निशम्य तत्स्वरं योधा । मेरकीया रणांगणात् ॥ त्रेसुः सिं-
हस्य बूत्कारं । श्रुत्वेवाखिलवारणाः ॥ ८८ ॥ तदा स तस्थावेकाकी । नाकीव बलवत्तरः ॥ मे-
रकः संपरायेऽसौ । सर्वशस्त्रसमन्वितः ॥ ८९ ॥ दंडादंडि खड्गाखड्गि । केशाकेशि शराशरि
॥ स्वयंभूमेरकाख्यां च । समरो विहितस्तदा ॥ ९० ॥ तथापि रौद्रो भंगं न । याति स्फा-
तिभरोत्तरः ॥ ततोऽर्धचक्री सस्मार चक्रं चक्रं सदा रिपोः ॥ ९१ ॥ स्मृतमात्रं प्रज्ञापात्रं ।
दात्रं शस्यश्रियो द्विषां ॥ हस्ते समागमच्चक्रं । तस्य पापोदयेऽपि तत् ॥ ९२ ॥
करस्थितमसौ चक्रं । वैरिचक्रभयप्रदं ॥ दृष्ट्वा हर्षयुतोऽवोच—द्वलयुक्तं स्वयंभुवं ॥ ९३ ॥
इयत्कालं द्विधा बालं । ज्ञात्वा त्वां क्रीडया मया ॥ युद्धं नो विहितं सत्यं । सांप्रतं वर्त्तते
पुनः ॥ ९४ ॥ छेत्स्यामि मस्तकं तेऽद्य । ततः सद्यः प्रणश्यतां ॥ बालानां तस्कराणां च ।
नश्यतां का त्रपा ननु ॥ ९५ ॥ स्वयंभूरवदत्क्रीडा—युद्धं चेद्विहितं त्वया ॥ तर्हि त्वमेव बा-

॥ ७४ ॥ जगाद बांधवं कश्चि–त्तदेवं रणकातरं ॥ धारातीर्थं क्षत्रियाणां । वंधो पापहरं मतं ॥ ७५ ॥ प्रियामोहवशात्कंचि–त्स्थातुकामं परो जगौ ॥ कैषाबला वरिष्यंति । तव स्वर्गांगना घनाः ॥ ७६ ॥ अपरं द्रव्यमोहेन । गेहं मोक्तुमशक्नमं ॥ परोऽगृणात्कियत्त्वेतद् । दिव्यश्रीस्ते न्नविष्यति ॥ ७७ ॥ इत्यादिविविधालापैः । प्रेरिताः सुन्नटाः कुटान् ॥ मुक्त्वा युद्धक्ते चेलु–रेकाग्रमनसो रसात् ॥ ७० ॥ कुंन्नस्थलगंडशैला । मदनिर्झरहारिणः ॥ प्रतस्थुः करिणोऽनेके । जंगमाः पर्वता इव ॥ ७ए ॥ सफेनविविधावर्त्त–वेगव्याप्तमहीतलाः ॥ तुरंगमाः क्षितिं व्यापु–स्तरंगा इव वारिधेः ॥ ७० ॥ घोटकालिसमायुक्ता । वराजिरविन्नूषिताः ॥ अचरन् स्यंदनाः सद्य–श्चलंतो निलया इव ॥ ७१ ॥ फलान्निकांक्षिणः शाखा–संगताः स्तोकलोन्निनः ॥ उल्लतो व्रजंतिस्म । प्लवंगा इव पत्तयः ॥ ७२ ॥ आगच्छंतमथो ज्ञात्वा । मेरकं हेरिकैर्नरैः ॥ स्वयंन्नूर्न्नटसंयुक्तो । जगामान्निमुखं सुखं ॥ ७३ ॥ स्वदेशसीम्नि गत्वा स । तस्थौ स्थामसमन्वितः ॥ प्रेरको निजसैन्यस्य । मेरकोऽपि समाययौ ॥ ७४ ॥

वीराज्ञया तदा धीराः । सदसि प्रबलादराः ॥ अरिक्षयाय वरणं । शिश्रियुर्देवसाक्षिकं ॥

॥ ८५ ॥ सैन्यद्वयेऽथ मिलिते । कलिते कलिकर्मणा ॥ प्राप्तदैन्यं कियत्सैन्यं । वीक्ष्यात्मीयं विचक्षणः ॥ ८६ ॥ परदर्शितदौर्जन्यं । स्वयंभूः स्वयमादरात् ॥ स्वकीयाहितसौजन्यं । पांचजन्यमपूरयत् ॥ ८७ ॥ युग्मं ॥ निशम्य तत्स्वरं योधा । मेरकीया रणांगणात् ॥ त्रेसुः सिंहस्य बूत्कारं । श्रुत्वेवाखिलवारणाः ॥ ८८ ॥ तदा स तस्थावेकाकी । नाकीव बलवत्तरः ॥ मेरकः संपरायेऽमौ । सर्वशस्त्रसमन्वितः ॥ ८९ ॥ दंडादंडि खड्गाखड्गि । केशाकेशि शराशरि ॥ स्वयंभूमेरकाख्यां च । समरो विहितस्तदा ॥ ९० ॥ तथापि रौद्रो भंगं न । याति स्फातिभरोत्तरः ॥ ततोऽर्धचक्री सस्मार चक्रं चक्रं सदा रिपोः ॥ ९१ ॥ स्मृतमात्रं प्रज्ञापात्रं । दात्रं शस्यश्रियो द्विषां ॥ हस्ते समागमच्चक्रं । तस्य पापोदयेऽपि तत् ॥ ९२ ॥

करस्थितमसौ चक्रं । वैरिचक्रभयप्रदं ॥ दृष्ट्वा हर्षयुतोऽवोच—द्बलयुक्तं स्वयंभुवं ॥ ९३ ॥ इयत्कालं द्विधा वालं । ज्ञात्वा त्वां क्रीडया मया ॥ युद्धं भो विहितं सत्यं । सांप्रतं वर्त्तते पुनः ॥ ९४ ॥ छेत्स्यामि मस्तकं तेऽद्य । ततः सद्यः प्रणश्यतां ॥ बालानां तस्कराणां च । नश्यतां का त्रपा ननु ॥ ९५ ॥ स्वयंभूरवदत्क्रीडा—युद्धं चेद्विहितं त्वया ॥ तर्हि त्वमेव बा-

लोऽसि । कारणात्कार्यसंभवः ॥ ९६ ॥ प्रत्यर्थिलक्ष्मीं गृह्णंत—श्चेद्वीरास्तस्करा मताः ॥ तर्हि त्वं प्रथमस्तेषु । स्वयं दत्तास्ति केन सा ॥ ९७ ॥ चक्रं मुक्त्वा ततो गच्छ । पश्चाद्यातुं न शक्नुयाः ॥ इदं चक्रं मया मुक्तं । तवांताय भविष्यति ॥ ९८ ॥ अथवैतेन ते चित्ते—ऽखर्वगर्वः प्रवर्त्तते ॥ तदा मुंचावयोर्येन । ज्ञायतेऽत्र बलाबलं ॥ ९९ ॥

भ्रमयित्वा तदा चक्रं । स्वचक्रमिव हस्तगं ॥ राज्यदं प्रेषयामास । स्वयंभूवधहेतवे ॥ ॥ १००० ॥ स्वयंभूहृदये लग्नं । यच्चक्रं युक्तमेव तत् ॥ प्रथमे चेष्टसंयोगे । कृत्यमेतत्सतां मतं ॥ १ ॥ परं तत्कर्कशं तेन । क्षणं मूर्छामवाप सः ॥ यथा श्रेणिकसंयोगे । शालिभद्रो बभूव सः ॥ २ ॥ अथवा सा न मूर्छाहो । किंतु संमील्य चक्षुषी ॥ चित्ते विमर्शयामास । किमस्त्येतदिहाद्भुतं ॥ ३ ॥ विमृश्य दक्षिणो बाहु—स्तस्मै दत्तो महीभृता ॥ यावज्जीवं च सौहार्दं । द्वाभ्यामंगीकृतं हितं ॥ ४ ॥ कथितं च न विश्वास—स्तावन्मे हृदि तावकः ॥ यावद्वैरिबले गत्वा । किंचित्कार्यं करोषि न ॥ ५ ॥ चक्रं प्रोवाच तत् श्रुत्वा । गत्वा द्वेषिबले यदा ॥ छित्वा वरांगं मुख्यस्य । सप्तांगं राज्यमानये ॥ ६ ॥ मन्येथा मां तदा स्वामिन् ।

परं प्रेषय सत्वरं ॥ शत्रुच्छेदे विलंबो न । गदितो न्यायकोविदैः ॥ ७ ॥ तदाकर्ण्य सकर्णोऽयं
। श्चित्ते चक्रे विमर्शनं ॥ प्रेषयाम्येकदा चैनं । स्वकीयं परजंजनं ॥ ८ ॥

ततोऽसौ मेरकं प्राह । प्राणप्रियमिदं तव ॥ अतस्त्वदंतिके प्राप्तं । प्राणान् लात्वा समे-
ष्यति ॥ ९ ॥ तस्मात्स्वजीवमादाय । व्रज दूरं कथं वृथा ॥ म्रियसे सन्निरित्युक्त–मात्मार्थं पृ-
थिवीं त्यजेत् ॥ १० ॥ अधुना तु तव प्राणाः । संति मद्धस्तगोचराः ॥ जीवयामि यदाहं
त्वां । तदा जीवसि नान्यथा ॥ ११ ॥ तत् श्रुत्वा मेरकोऽवोच–न्मम नासीदिदं यदि ॥ जवि-
ष्यति ततस्तेऽय । कथंकारं विचारय ॥ १२ ॥ या वशा नात्मनः पत्यु–र्वश्या सोपपतेः क-
थं ॥ सुखदातो विमुंचेदं । खेदं यास्यसि नान्यथा ॥ १३ ॥ इत्युक्तो भ्रमयित्वासौ । मुमोच
चक्रमाद्यगान् ॥ चकर्त्त मौलिकमलं । मेरकस्य च तत्क्षणात् ॥ १४ ॥ दिवोऽपतत्पुष्पवृष्टि–
रुपरिष्टात्स्वयंभुवः ॥ मेरकस्य कबंधोऽपि । पपात पृथिवीतले ॥ १५ ॥ मेरकस्य पृतनापि ।
श्रिश्रिये तं स्वयंभुवं ॥ जन्ययात्रा हि सैवासी–त्परमन्यतरो वरः ॥ १६ ॥ ततश्चक्रानुगो ग-
च्छन् । भरतार्धमसाधयत् ॥ मगधेषु कोटिमर्त्यो–त्पाद्यां कोटिशिलामसौ ॥ १७ ॥

॥ ७४ ॥ जगाद बांधवं कश्चि-त्तदेवं रणकातरं ॥ धारातीर्थं क्षत्रियाणां । वंधो पापहरं म-
तं ॥ ७५ ॥ प्रियामोहवशात्कंचि-त्स्थातुकामं परो जगौ ॥ कैषावला वरिष्यंति । तत्र स्व-
र्गांगना घनाः ॥ ७६ ॥ अपरं द्रव्यमोहेन । गेहं मोक्तुमथाक्षमं ॥ परोऽगृणत्कियत्त्वेतद् ।
दिव्यश्रीस्ते भविष्यति ॥ ७७ ॥ इत्यादिविविधालापैः । प्रेरिताः सुभटाः कुटान् ॥ मुक्त्वा
युद्धकृते चेलु-रेकाग्रमनसो रसात् ॥ ७८ ॥ कुंभस्थलगंडशैला । मदनिर्झरधारिणः ॥ प्रत-
स्थुः करिणोऽनेके । जंगमाः पर्वता इव ॥ ७९ ॥ सफेनविविधावर्त्त-वेगव्याप्तमहीतलाः ॥
तुरंगमाः क्षितिं व्यापु-स्तरंगा इव वारिधेः ॥ ८० ॥ घोटकालिसमायुक्ता । वराजिरविभूषि-
ताः ॥ अचरन् स्यंदनाः सद्य-श्चलंतो निलया इव ॥ ८१ ॥ फलाभिकांक्षिणः शाखा-लग-
ताः स्तोकलोभिनः ॥ उच्छलंतो व्रजंतिस्म । प्लवंगा इव पत्तयः ॥ ८२ ॥ आगच्छंतमथो ज्ञा-
त्वा । मेरकं हेरिकैर्नरैः ॥ स्वयंभूर्भटसंयुक्तो । जगामाभिमुखं सुखं ॥ ८३ ॥ स्वदेशसीम्नि
गत्वा स । तस्थौ स्थामसमन्वितः ॥ प्रेरको निजसैन्यस्य । मेरकोऽपि समाययौ ॥ ८४ ॥
वीराज्ञया तदा धीराः । सदसि प्रबलादराः ॥ अरिक्षयाय वरणं । शिश्रियुर्देवसाक्षिकं ॥

॥ ૮૫ ॥ सैन्यद्वयेऽथ मिलिते । कलिते कलिकर्मणा ॥ प्राप्तदैन्यं कियत्सैन्यं । वीक्ष्यात्मीयं विचक्षणः ॥ ૮૬ ॥ परदर्शितदौर्जन्यं । स्वयंभूः स्वयमादरात् ॥ स्वकीयाहितसौजन्यं । पांचजन्यमपूरयत् ॥ ૮૭ ॥ युग्मं ॥ निशम्य तत्स्वरं योधा । मेरकीया रणांगणात् ॥ त्रेसुः सिंहस्य बूत्कारं । श्रुत्वेवाखिलवारणाः ॥ ૮૮ ॥ तदा स तस्थावेकाकी । नाकीव बलवत्तरः ॥ मेरकः संपरायेऽसौ । सर्वशस्त्रसमन्वितः ॥ ૮૯ ॥ दंडादंडि खड्गाखड्गि । केशाकेशि शराशरि ॥ स्वयंभूमेरकाभ्यां च । समरो विहितस्तदा ॥ ૯૦ ॥ तथापि रौद्रे भंगं न । याति स्फातिभरोत्तरः ॥ ततोऽर्द्धचक्री सस्मार चक्रं चक्रं सदा रिपोः ॥ ૯૧ ॥ स्मृतमात्रं प्रज्ञापात्रं । दात्रं शस्यश्रियो द्विषां ॥ हस्ते समागमच्चक्रं । तस्य पापोदयेऽपि तत् ॥ ૯૨ ॥

करस्थितमसौ चक्रं । वैरिचक्रभयप्रदं ॥ दृष्ट्वा दर्पयुतोऽवोच—द्वलयुक्तं स्वयंभुवं ॥ ૯૩ ॥ इयत्कालं द्विधा वालं । ज्ञात्वा त्वां क्रीडया मया ॥ युद्धं भो विहितं सत्यं । सांप्रतं वर्त्तते पुनः ॥ ૯૪ ॥ छेत्स्यामि मस्तकं तेऽद्य । ततः सद्यः प्रणश्यतां ॥ बालानां तस्कराणां च । नश्यतां का त्रपा ननु ॥ ૯૫ ॥ स्वयंभूरवदत्क्रीडा—युद्धं चेद्विहितं त्वया ॥ तर्हि त्वमेव बा-

लोऽसि । कारणात्कार्यसंभवः ॥ ९६ ॥ प्रत्यर्थिलक्ष्मीं गृह्णंत-श्चेद्वीरास्तस्करा मताः ॥ तर्हि त्वं प्रथमस्तेषु । स्वयं दत्तास्ति केन सा ॥ ९७ ॥ चक्रं मुक्त्वा ततो गच्छ । पश्चाद्यातुं न शक्नुयाः ॥ इदं चक्रं मया मुक्तं । तवांताय भविष्यति ॥ ९८ ॥ अथवैतेन ते चित्ते-ऽखर्वगर्वः प्रवर्त्तते ॥ तदा मुंचावयोर्येन । ज्ञायतेऽत्र बलाबलं ॥ ९९ ॥

भ्रमयित्वा तदा चक्रं । स्वचक्रमिव हस्तगं ॥ राज्यदं प्रेषयामास । स्वयंभूवधहेतवे ॥ ॥ १००० ॥ स्वयंभूहृदये लग्नं । यच्चक्रं युक्तमेव तत् ॥ प्रथमे चेष्टसंयोगे । कृत्यमेतत्सतां मतं ॥ १ ॥ परं तत्कर्कशं तेन । क्षणं मूर्छामवाप सः ॥ यथा श्रेणिकसंयोगे । शालिभद्रो बभूव सः ॥ २ ॥ अथवा सा न मूर्छाहो । किंतु संमील्य चक्षुषी ॥ चित्ते विमर्शयामास । किमस्त्येतदिहाद्भुतं ॥ ३ ॥ विमृश्य दक्षिणो बाहु-स्तस्मै दत्तो महीभृता ॥ यावज्जीवं च सौहार्दं । द्वाभ्यामंगीकृतं हितं ॥ ४ ॥ कथितं च न विश्वास-स्तावन्मे हृदि तावकः ॥ यावद्वैरिबले गत्वा । किंचित्कार्यं करोषि न ॥ ५ ॥ चक्रं प्रोवाच तत् श्रुत्वा । गत्वा द्वेषिबले यदा ॥ भित्वा वरांगं मुख्यस्य । सप्तांगं राज्यमानये ॥ ६ ॥ मन्येथा मां तदा स्वामिन् ।

॥४३२॥

परं प्रेषय मत्वरं ॥ शत्रुच्छेदे विलंबो न । गदितो न्यायकोविदैः ॥ ७ ॥ तदाकर्ण्य सकर्णोऽयं । चित्ते चक्रे विमर्शनं ॥ प्रेषयाम्येकदा चैनं । स्वकीयं परभंजनं ॥ ८ ॥

ततोऽसौ मेरकं प्राह । प्राणप्रियमिदं तव ॥ अतस्त्वदंतिके प्राप्तं । प्राणान् लात्वा समेष्यति ॥ ९ ॥ तस्मात्स्वजीवमादाय । व्रज दूरं कथं वृथा ॥ म्रियसे सन्निरित्युक्त—मात्मार्थे पृथ्वीं त्यजेत् ॥ १० ॥ अधुना तु तव प्राणाः । संति मद्धस्तगोचराः ॥ जीवयामि यदाहं त्वां । तदा जीवसि नान्यथा ॥ ११ ॥ तत् श्रुत्वा मेरकोऽवोच—न्मम नासीदिदं यदि ॥ भविष्यति ततस्तेऽस्य । कथंकारं विचारय ॥ १२ ॥ या वशा नात्मनः पत्यु—र्वश्या सोपपतेः कथं ॥ सुखदाता विमुंचेदं । खेदं यास्यसि नान्यथा ॥ १३ ॥ इत्युक्तो भ्रमयित्वासौ । मुमोच चक्रमादरात् ॥ चकर्त मौलिकमलं । मेरकस्य च तत्क्षणात् ॥ १४ ॥ दिवोऽपतत्पुष्पवृष्टि—रुपरिष्टात्स्वयंभुवः ॥ मेरकस्य कबंधोऽपि । पपात पृथिवीतले ॥ १५ ॥ मेरकस्य पृतनापि । शिश्रिये तं स्वयंभुवं ॥ जन्ययात्रा हि सैवासी—त्परमन्यतरो वरः ॥ १६ ॥ ततश्चक्रानुगो गच्छन् । भरतार्द्धमसाधयत् ॥ मगधेषु कोटिमर्त्यो—त्पाद्यां कोटिशिलामसौ ॥ १७ ॥

दृष्ट्वा वामकरेणोच्चै–र्योजनायामविस्तृतां ॥ लीलयोत्पाटयामास । वासवोपमविक्रमः ॥
॥ १८ ॥ युग्मं ॥ तत्रैव तां पुनर्न्यस्य । दोष्मतामतुलं बलं ॥ दर्शयन् दिवसैः स्तोकै–र्ययौ
द्वारवतीं हरिः ॥ १९ ॥ चक्रं खड्गो धनुः शंखो । वनमाला गजो मणिः ॥ सप्तप्रावाणि स-
प्तास्या–ऽमूनि रत्नानि जज्ञिरे ॥ २० ॥ एवमन्यापि तस्यासी–दर्द्धचक्रवर्त्तिनः ॥ पुण्यानु-
सारतो लक्ष्मी–र्जीवानां जायते यतः ॥ २१ ॥ रुद्रो न्नडेण संयुक्तः । सकलैः पार्थिवैर्वृतः ॥
अर्द्धचक्रयन्निषेकं च । विदधेऽथ स्वयंभुवः ॥ २२ ॥ ददौ दानं स केषांचि–त्केषांचिन्मानमुच्च-
कैः ॥ दानमाने च केषांचि–त्केषांचित्स्थानमादरात् ॥ २३ ॥ यानं प्रधानं केषांचि–न्निधान-
मिव जंगमं ॥ इष्टदानं हि सर्वेषां । वशीकरणमादिमं ॥ २४ ॥ युग्मं ॥ राजधर्मेण लोका-
नां । जिनधर्मेण धर्मिणां ॥ अन्यायं वारयामास । धारयामास सद्यशः ॥ २५ ॥ इत-
श्च विहरन् स्वामी । निर्ममो निरहंकृतिः ॥ क्रोधयोधपरित्यक्तो । मायाजायाविवर्जितः
॥ २६ ॥ लोभक्षोभविनिर्मुक्तो । मोहद्रोहमदोज्झितः ॥ हास्यलास्यरत्यरति–शोकाविरतिन्नी-
तिमुक् ॥ २७ ॥ लीलाप्रमीलासल्लीला–वामकामरतारतः ॥ प्रतिबंधपरित्यागी । नीरागी

निःस्पृहः सहः ॥ २७ ॥ जुगुप्साकेलिकलह–द्वेषश्लेषनिराकृतः ॥ सादप्रसादनिर्ह्राद–विवादस्वादवर्जकः ॥ २९ ॥ मौनी ज्ञानी सदाध्यानी । चारुसंतोषपोषयुक् ॥ अप्रमादी जनाह्लादी । परीषहचयं जयन् ॥ ३० ॥ अष्टांगयोगसंयुक्तो । वियुक्तो भववासतः ॥ शत्रुमित्रैकसच्चित्तः । प्रवृत्तः शुभकर्मणि ॥ ३१ ॥ ज्ञानदर्शनचारित्र–तपोवीर्यक्षमादयाः ॥ मार्दवार्जववैराग्य–मुक्तिसत्यपराजयाः ॥ ३२ ॥ शौचाकिंचनताब्रह्म–चर्यसंयमबुद्धयः ॥ भावनासंवरोदार–निर्जराद्या गुणाश्च ये ॥ ३३ ॥ अनुत्तरैरमीभिः स्वं । भावयन् विमलाधिपः ॥ विहृत्य वर्षद्वितयं । दीक्षास्थानं पुनर्ययौ ॥ ३४ ॥ सहस्राम्रवणस्थोऽसौ । जंबूवृक्षतलेऽमले ॥ प्रपेदे प्रतिमां स्वामी । कृतषष्टतपाः स्थिरः ॥ ३५ ॥ अपूर्वकरणादिस्थः । क्षपकश्रेणिसंगतः ॥ चिछेद घातिकर्माणि । क्षीणमोहगुणांतगः ॥ ३६ ॥ शुक्लध्यानस्थितः पौष–सितषष्ठीदिने ह्युडौ ॥ उत्तरभद्रपदासु । केवलज्ञानमाप सः ॥ ३७ ॥ त्रिभिर्विशेषकं ॥ सर्वज्ञः सर्वदर्शी च । बभूव भुवनप्रभुः ॥ त्रिकालविषयं जानन् । लोकालोकप्रकाशकः ॥ ३८ ॥ देवाधिदेवे भूमिस्थे । हरीणामासने स्थितिः ॥ न युज्यते ततस्तेषां । तानि कंपं प्रपेदिरे ॥ ३९ ॥ ततो घंटानिना-

देन । ज्ञापिताशेषनिर्जराः ॥ पुरंदरा जिनं नंतुं । सादरा अन्ननन् वराः ॥ ४० ॥ सौधर्मेंद्र-
स्मृतः शीघ्रं । करीन्नूय पुरोऽन्नवत् ॥ ऐरावणसुरश्चारु-लक्षयोजनदेहन्नृत् ॥ ४१ ॥

श्वेतवर्णः स्वर्णप्रष्ट-युतन्नालस्थालानि च ॥ दधन्नष्टावाननानि । वदने वदने तथा ॥४२॥
अष्टाष्टदशनान् वाप्यो । रदने रदने पुनः । वाप्यां वाप्यां जलजानि । पद्मे पद्मे दलानि च ॥
॥ ४३ ॥ दले दले नाटकानि । सर्वाण्यष्टाष्टसंख्यया ॥ नाटके नाटके पात्रा-एयत्र द्वात्रिंश-
डुच्चकैः ॥ ४४ ॥ चतुर्न्निः कलापकं ॥ हरिः करिणमुत्तुंगं । चंगं सौधर्मनायकः ॥ आरुरोह
परीवार-सहितस्तं मुदास्पदं ॥ ४५ ॥ ततः स सिंधुरसुर-श्चचाल गगनाध्वना ॥ जना यं प्रे-
क्ष्य कैलास-शंकां चित्ते प्रकुर्वते ॥ ४६ ॥ क्रमात्स संक्षिपन् देहं । प्राक् पालक इव स्वयं ॥
सहस्राम्रवणं प्राप । स्वामिसंगपवित्रितं ॥ ४७ ॥ नुत्ततार स्फुरत्तार-मुख्यशृंगारवारयुक् ॥
सौधर्मेंद्रो गलत्तंद्रो । गजेंद्राज्जर्जसंयुतात् ॥ ४८ ॥ अन्येऽप्येवं स्वस्वयानैः । सगानैर्नृत्तन्नासु-
रैः ॥ सुरैः परैर्युतास्तत्र । न्नद्रा इंद्राः समाययुः ॥ ४९ ॥ अमरा वायुकुमारा-स्तदा योज-
नन्नूमिकां ॥ चेतोवृत्तिमिवात्मीया-ममृजन् विषयाश्रितां ॥ ५० ॥

प्रवरा मेघकुमारा । रजःशांतिं स्वकामिव ॥ सद्गंधशंबरैस्तत्र । विदधुर्विश्वपावनैः ॥
॥ ५१ ॥ सुवर्णै रत्नसंयुक्तै—स्तां क्ष्मां व्यंतरामराः ॥ बबंधुर्बंधुराकारा । विकारालिविवर्जि-
ताः ॥ ५२ ॥ ऊर्ध्वमुखैः सुमनोभिस्तां । भूषयामासुराशु ते ॥ विचित्रवर्णशोभाढ्यैः । प्रबुद्धैः
सरसैर्भृशं ॥ ५३ ॥ वैमानिका ज्योतिषिकाः । क्रमाच्च भुवनाधिपाः ॥ रत्नस्वर्णरूप्यमयं । प्रा-
कारत्रितयं व्यधुः ॥ ५४ ॥ मणिरत्नस्वर्णजानि । कपिशीर्षाणि जज्ञिरे ॥ क्रमेण शालत्रित-
ये । वररत्नत्रयाश्रये ॥ ५५ ॥ शाले शाले गोपुराणि । चत्वारीह चकासिरे ॥ द्वारे द्वारे धू-
पघट्यः । पूर्णकुंभा ध्वजस्तथा ॥ ५६ ॥ मंगलान्यष्ट भूपीठे । पुष्करिण्यो जलैर्भृताः ॥ पु-
त्रिकाभ्रयुक्तानि । तोरणानि वराणि च ॥ ५७ ॥

सोपानानां रूप्यवप्रे । सहस्राणि दशाभवन् ॥ पंचपंचस्वर्णरत्न—शालयोः पुण्यपालयोः
॥५८॥ रत्नवप्रस्य प्राग्द्वारे । वैमानिकसुरोत्तमौ ॥ प्रतीहारौ स्वर्णवर्णौ । तस्थतुः शुभभा-
वतः ॥ ५९ ॥ दक्षिणे व्यंतरौ शुक्लौ । ज्योतिष्कौ पश्चिमे पुनः ॥ रक्तवर्णावुदीच्यां तु । कृ-
ष्णाङ्गौ भुवनाधिपौ ॥ ६० ॥ युग्मं ॥ पूर्वादिक्रमतः स्वर्ण—वप्रे तस्थुरुदायुधाः ॥ जया च

विजया देव्य—जिता तथापराजिता ॥ ६१ ॥ रूप्यशाले प्रतिद्वारं । खट्वांगस्तुंबरुः सुरः ॥ जटाकिरीटो नृशिराः । स्रग्भ्राजी द्वाःस्थतां दधौ ॥ ६२ ॥ मध्यं समवसरणं । चैत्यवृक्षं च व्यंतराः ॥ सविंशतिसप्तशती—चापमानं मुदा व्यधुः ॥ ६३ ॥ तदधो मणिपीठं ते । पीठोपरि च छंदकं ॥ तस्योपरिष्टाच्चत्वारि । चारुसिंहासनानि च ॥ ६४ ॥

चक्रुः सपादपीठानि । छत्रत्रययुतानि च ॥ अष्टौ यक्षाश्चामराली—युतास्तत्रावतस्थिरे ॥ ॥ ६५ ॥ युग्मं ॥ मध्ये सुवर्णशालस्य । विश्रामाय जगत्प्रभोः ॥ ऐशान्यां विदधुर्देव—छंदं व्यंतरनिर्जराः ॥ ६६ ॥ चतुर्विधामर्त्यकोटा—कोटीयुक्तो जिनोऽचलत् ॥ गंतुं समवसरणे । शरणे भवभीभृतां ॥ ६७ ॥ जिनस्य पुरतः स्वर्ण—नवपद्मानि तेनिरे ॥ निधानानीव साक्षात्किं । नाकिनो धर्मचक्रिणः ॥ ६८ ॥ चलन् जिनः करोतिस्म । पादन्यासं द्वयोर्द्वयोः ॥ चालयामासुरन्यानि । देवा भक्त्या पुरः पुरः ॥ ६९ ॥ स्वामी समवसरणं । प्राग्द्वारेण विवेश सः ॥ मित्र इवाकाशदेशं । तमःस्तोमभिदेऽर्चिमान् ॥ ७० ॥ तदा प्रदक्षिणीकृत्य । प्राङ्मुखश्चैत्यपादपं ॥ तीर्थाय नम इत्युक्त्वा । भजे सिंहासनं जिनः ॥ ७१ ॥ अर्हतः प्रतिरू-

णि । दिक्षु त्रीणि परासु च ॥ व्यंतरा रचयामासुः । श्रीसर्वज्ञप्रभावतः ॥ ७२ ॥
भामंडलं मौलिपृष्टे । दिवि दध्वान दुंदुभिः ॥ पुरो रत्नध्वजो रेजे । धर्मचक्रं तथैव च ॥ ७३ ॥ अन्यच्चापीह यत्कृत्यं । तत्सर्वं व्यंतरा व्यधुः ॥ विबुधाः स्वोचिते कार्ये । नालस्यं यत्प्रकुर्वते ॥ ७४ ॥ एवं समवसरणं । सा तु स्वाभाविकी स्थितिः ॥ अन्यथा भक्तिमानेको । विधत्ते सर्वमप्यदः ॥ ७५ ॥ पूर्वद्वारेण चागत्य । कल्पकल्पांगना घनाः ॥ दत्वा प्रदक्षिणास्तिस्र–स्तीर्थं नत्वा जिनं तथा ॥ ७६ ॥ आग्नेय्यां स्थानकं मुक्त्वा । साधुसाध्वीकृतेऽद्भुतं ॥ तदंतरे मुदा तस्थु–र्विहितांजलयः सुखं ॥ ७७ ॥ युग्मं ॥ ज्योतिष्कभुवनपति–व्यंतराणां वरांगनाः ॥ प्रविश्य दक्षिणद्वारा । नैरृत्ये वासमासदन् ॥ ७८ ॥
वायव्यां ते सुरास्तस्थुः । प्रतीचीद्वारवर्त्मना ॥ आगत्य समवसृतिं । जिनध्यानपरायणाः ॥ ७९ ॥ उदीचीद्वारमार्गेण । प्रविष्टाः कल्पनिर्जराः ॥ नरा नार्यस्तथैशान्यां । दिशि स्थितिमधुः क्रमात् ॥ ८० ॥ सौवर्णवरणमध्ये । तिर्यंचस्त्यक्तमत्सराः ॥ सिंहव्याघ्रादयस्तस्थु–र्जिनवाणीकृतादराः ॥ ८१ ॥ रूप्यवप्रांतरे तारा–देवदानवभूस्पृशां ॥ वाहनानि स्थितिं

चक्षुः । स्थितिरेषास्ति यत्सदा ॥ ७२ ॥ उद्यानपालकाद् ज्ञात्वा । विज्ञोः केवलमुज्ज्वलं ॥
सर्वज्ञतनयस्तत्र । समागादरिमर्दनः ॥ ७३ ॥ असौ प्रविश्य तस्यांत-रुत्तरद्वारवर्त्मना ॥ जि-
नं नत्वा स्वधीयोगा-देवं विज्ञप्तिकां व्यधात् ॥ ७४ ॥ जडीकृतं क्रियते नीरं । पशुपक्षिगणैश्च
यत् ॥ पंकोपरि स्थितं तेन । ते पूजा निर्मलस्य का ॥ ७५ ॥ आघ्रातं मधुपैः पुष्पैः । जं-
तुजातान्वितं मितं ॥ आनीतं वाटिकामध्या-न्मालिकैर्मलिनांगकैः ॥ ७६ ॥
अंगरागस्तु सामान्य-जनहस्तापवित्रितः ॥ तथा वैगंध्यमायाति । स्वज्ञावेनात्र योऽ-
चिरात् ॥ ७७ ॥ धूमरूपोऽखिलो धूपो । हुताशनसमुद्भवः ॥ समानः सर्वलोकानां । गंधधू-
ढ्यगुरूत्तरः ॥ ७८ ॥ त्वयि विश्वत्रयोद्योत-करे दीपस्य का कृतिः ॥ पात्राधारेऽत्र यस्तिष्ठेत् ।
पात्राधीशस्त्वमुच्चकैः ॥ ७९ ॥ प्रज्ञोः पुरो ह्यपूर्वस्य । ढौकनं क्रियते जनैः ॥ तादृशं विद्य-
ते नैव । तव किंचन यन्न तत् ॥ ९० ॥ रागद्वेषसमाक्रांतं । स्वांतं मे सर्वदा प्रज्ञो ॥ त्वं पु-
नर्वीतरागोऽसि । तेन ध्यानं क्व ते मम ॥ ९१ ॥ स्तुतिस्ते स्यान्न केनाप्य-सद्गुणारोपणं
यतः ॥ सा ज्ञवेत्ते तवानंताः । संत्यंतः कोऽसतो वदेत् ॥ ९२ ॥ मलमूत्रादियुक् कायः । से-


॥ ४४० ॥

वे त्वां निर्मलं किमु ॥ उत्तमांगेन ते ह्याज्ञां । वहिष्यामि परं प्रभो ॥ ९३ ॥ द्रव्यपूजा गृह-स्थानां । गदिता या तवागमे ॥ त्वदाज्ञयैव सफला । कृता सापि जने भवेत् ॥९४॥ तत्र भा-वार्हतः पूजा । वचनस्य प्रपालनात् ॥ साधोः स्तुत्या तु श्राद्धानां । पुष्पाद्यैः स्थापनार्हतः ॥ ९५ ॥ इत्युक्त्वा वज्रिपृष्टेऽसौ । यथास्थानमुपाविशत् ॥ जगद्गुरुस्ततोऽवोचत् । सत्पीयूष-किरा गिरा ॥ ९६ ॥ भवं भ्रमद्भिर्नो भव्या । भव्या द्रव्यादिका न का ॥ भवद्भिरुपलब्धास्ति सामग्रीह भवे शिवे ॥ ९७ ॥ आद्यं संहननं येन । संस्थानं च तथादिमं ॥ क्षेत्रं तु भरतं कालो । मध्यो भावः शुभः पुनः ॥ ९८ ॥

अतः प्रमादं संत्यज्य । सेवध्वं मोक्षसत्पथः ॥ अनेन सकलं लब्धं । विफलं जायते सतः ॥ ९९ ॥ ज्ञानदर्शनचारित्रा–ण्येव मार्गोऽस्य कीर्त्यते ॥ परं सत्यानि चेत्तानि । कूटानि पु-नरन्यथा ॥ ११०० ॥ सम्यक् श्रुतं कृतं तद्यत् । दशपूर्वधरादिभिः ॥ तथा प्रत्येकबुद्धैश्च । प-रैर्गणधरैर्नरैः ॥ १ ॥ किंतु तत्सूत्रतो ज्ञेयं । श्रोतृवक्त्राद्यपेक्षया ॥ अर्थतः स्याद्विपर्यासः । कदाचित्कुत्रचित्पुनः ॥ २ ॥ चेत्सत्यौ श्रोतृवक्तारौ ॥ तदा सम्यक् श्रुतं हि तत् ॥ अन्यथा

तद्विपर्यासः । स्वकृतस्यापि संभवेत् ॥ ३ ॥ निमित्तादिसमुत्थेन । तत्कृतेनापि नो भवेत् ॥ श्रुतेन विश्रुतेनात्र । मोक्षः सौख्यनिबंधनं ॥ ४ ॥ किंतु तत्वविचारेण । संयुतं यत् श्रुतं हितं ॥ तेनैव जायते सिद्धिः । श्रयध्वं तादृशं ततः ॥ ५ ॥ श्रद्दधाति पुनस्तज्जं । पदं नैकमपीह यः ॥ मिथ्यात्वी सोऽत्र विज्ञेयः । अश्रद्धेयं तद्वचस्ततः ॥ ६ ॥ जानन्नपि विपर्यासं । तस्य योऽत्र करोति ना ॥ जायतेऽनंतसंसारी । स ध्रुवं यतिरप्यहो ॥ ७ ॥ ग्रंथिभेदस्ततः कार्यो । रागद्वेषात्मको यतः ॥ प्रादुर्भवति सम्यक्त्वं । विपर्यासस्तु तस्य न ॥ ८ ॥ अनायुःसप्तकर्माणि । यदोत्कृष्टस्थितीनि च ॥ तदा न जायते जंतो-र्ग्रंथिभेदोऽत्र कस्यचित् ॥ ९ ॥

कोटीकोटेर्यदा मध्य-स्थितीनि स्युरमून्यहो ॥ सामायिकानि चत्वारि । लभंते जंतवस्तदा ॥ १० ॥ अंतर्मुहूर्त्तं सम्यक्त्वं । यो दधाति निजे हृदि ॥ तस्य ह्यपार्द्धपुद्गल-परावर्त्तो भवो भवेत् ॥ ११ ॥ सम्यक्त्वेनापरेणापि । नृणां देवगतिर्मता ॥ उत्कृष्टतः क्षायिकेन । तद्भवे सिद्धिरुच्यते ॥ १२ ॥ त्रिभिर्भवैर्मध्यमेन । देवनारकिकांतरैः ॥ मनुजो युगली चेत्स्या-त्ततो देवस्ततो नरः ॥ १३ ॥ तदा चतुर्भवैर्मोक्षो । जघन्येनापि संभवेत् ॥ अतः सप्ताष्टकं कु-

त्वा । तदादरत सांप्रतं ॥ १४ ॥ अस्मिन्न सत्यपि संसारी । नारको जातु जायते ॥ तद्विना-
चरणं तज्ञो । न्नजर्ध्वं न्नविका इह ॥ १५ ॥ न्यायस्य निश्चितस्यैत-न्मतमस्ति महीतले ॥
चरणस्य वधे यस्माद् । ज्ञानसम्यक्त्वयोर्वधः ॥ १६ ॥

चारित्रस्य घना न्नेदाः । संति सर्वार्थसिद्धिदाः ॥ यथाख्यातेन सिद्धिः स्या-च्चारित्रेण
पुनर्नृणां ॥ १७ ॥ सम्यग्ज्ञानी सदाचार-मंगीकृत्य करोति यत् ॥ यथोद्दिष्टं स्वन्नावेन । त-
द्यथाख्यातमीरितं ॥ १८ ॥ घनघातिकर्ममुक्तो । दग्धरज्जूपमापरः ॥ अमीन्निः केवलज्ञानं ।
जीवः प्राप्नोति शुद्धिन्नृत् ॥ १९ ॥ सर्वज्ञः सर्वदर्शीह । कियत्कालं स तिष्ठति ॥ क्षीणेषु वे-
दनीयायु-र्नामगोत्रेषु कर्मसु ॥ २० ॥ गतिप्रयोगादेरंम-बीजवच्चोर्ध्वमेति सः ॥ समश्रेण्या
तु लोकाग्रं । गत्वा तत्रैव तिष्ठति ॥ २१ ॥ आकाशे विद्यमानेऽपि । तदूर्ध्वं यन्न गच्छति ॥ ध-
र्मास्तिकायद्रव्यस्या-ऽन्नाव एवात्र कारणं ॥ २२ ॥ सर्वदेहपरित्यक्तः । प्राप्तानंतचतुष्टयः ॥
अप्राणो नीरसोऽस्पर्शो । निर्गंधो वर्णवर्जितः ॥ २३ ॥ नाऽचारित्री न चारित्री । नाऽसंज्ञी
तज्ज्ञोऽपि न ॥ स्वशरीरत्रिन्नागोन-प्राप्ताकाशावगाहनः ॥ २४ ॥ मृत्युकालात्मकायानु-का-

रिजीवप्रदेशभाक् ॥ ज्ञानादर्शस्थिताशेष—विश्ववस्तुस्वरूपवित् ॥ २५ ॥ अनंतसिद्धसंयुक्तः । साद्यनंतस्थितिः स्थिरः ॥ चिदानंदसुखास्वाद—सुंदरो दरवर्जितः ॥ २६ ॥ यथा चैवंविधः सिद्धो । बुद्धो जीवोऽत्र जायते ॥ अंगीकुर्वंतु तद्रत्न—त्रितयं सनयं जनाः ॥ २७ ॥

शक्तिश्चेत्सर्वतो नास्ति । तदादो देशतोऽपि च ॥ आद्रियध्वं यतो न स्या—न्निष्फलं जन्म मानुजं ॥ २८ ॥ प्रकारा देशतोऽनेके । साकारा द्वादशव्रते ॥ षड्भंगीप्रमुखाः संति । श्राद्धानां शुद्धचेतसां ॥ २९ ॥ यस्मिन् व्रते यथा शक्ति—स्तद्भंगेन च तद्व्रतं ॥ गृह्णीध्वं येन वो मुक्ति—र्भवसप्ताष्टकैर्भवेत् ॥ ३० ॥ साधुश्रावकसंविग्न—पाक्षिका मुक्तिमार्गगाः ॥ गृहिद्रव्यकुलिंगास्तु । स्मृताः संसारचारगाः ॥ ३१ ॥ संसारासारसंचार—प्रकारान् परित्यज्य तत् ॥ सविचारं सदाचार—सारं भजत भो जनाः ॥ ३२ ॥ जिनवाणीमिमां श्रुत्वा । पंचत्रिंशद्गुणान्वितां ॥ सर्वे जीवा हर्षयुक्ता । जाताः सातानुगास्तथा ॥ ३३ ॥ तया देशनया बुद्धाः । शुद्धां दीक्षां प्रपेदिरे ॥ अन्ये श्रावकधर्मं च । सम्यक्त्वमितरे नराः ॥ ३४ ॥

शिष्येषु मंदरादीनां । पदं गणधराश्रितं ॥ साधूनां सप्तपंचाशत्—संख्यानां प्रददौ प्रभुः

॥ ३५ ॥ उत्पादविगमध्रौव्या–न्वयां लात्वा पदत्रयीं ॥ प्रत्येकं ते तदा चक्रु–र्द्वादशांगीमखंडि-
तां ॥३६॥ क्षेत्रे योजनमात्रेऽपि । देवदानवमानवाः ॥ समाना यच्च तिर्यंचः । कोटिकोटिमि-
ता ममुः ॥ ३७ ॥ तेषां भाषासमा वाणी । तथा योजनगामिनी ॥ भामंडलं मूर्द्धपृष्टे । स-
पादशतयोजने ॥ ३८ ॥ रोगो वैरं तथा मारी । शलभप्रमुखे न यत् ॥ अतिवृष्टिरनावृष्टि–र्भ-
यं स्वपरचक्रजं ॥३९॥ दुर्भिक्षं न तत्प्रमाणं । कर्मक्षयसमुद्भवैः ॥ एकादशाभिरीशस्या–ति-
शयैर्जनितं किल ॥ ४० ॥ चतुर्भिःकलापकं ॥ धर्मचक्रं यदाकाशे । उच्चैरिंद्रध्वजश्च यः ॥
अंह्रिन्यासे पंकजानि । चतुर्वक्त्रांगता तथा ॥ ४१ ॥ प्राकारत्रितयं यच्च । चामराश्चैत्यपादपः
॥ सपादपीठं यत्सिंहा–सनं छत्रत्रयं पुनः ॥ ४२ ॥ ध्वजो रत्नमयो यश्च । दुंदुभिध्वान उच्च-
कैः ॥ अधोमुखाः कंटकाश्च । शकुनाश्च प्रदक्षिणाः ॥ ४३ ॥ द्रुमादतिपुष्पवृष्टि–स्तथा गंधां-
बुवर्षणं ॥ चतुर्विधदेवकोटिः । पार्श्वदेशे जघन्यतः ॥ ४४ ॥ सानुकूलः सदा वातो । ऋतवो
गोचराश्शर्मदाः ॥ एकोनविंशतिश्चैते–ऽतिशया देवनिर्मिताः ॥ ४५ ॥ चतुस्त्रिंशदतिशयै–रमी-
भिः सहितः प्रभुः ॥ केवलज्ञानकलितो । विश्वदर्पप्रदोऽभवत् ॥ ४६ ॥

मयूरवाहनः श्वेतो । यक्षः षण्मुखसंज्ञकः ॥ दक्षिणैः खड्गपाशेषु–फलचक्राक्षसूत्रिनिः ॥ ४७ ॥ वामैः साभीदनकुल–चापारफलकांकुशैः ॥ दोर्दण्डैः संयुतः स्वामि–शासने रक्षकोऽभवत् ॥ ४८ ॥ युग्मं ॥ विदिताख्यया तथा देवी । हरितालसमप्रभा ॥ पद्मासना पाशबाण–धरदक्षिणहस्तका ॥ ४९ ॥ नागकोदंडसंयुक्त–चारुवामकरद्वया ॥ शासने विमलेशस्या–ऽजनि शासनदेवता ॥ ५० ॥ युग्मं ॥ इंद्रा यस्य जनौ महं सुरगिरौ चक्रुर्न तत्कौतुकं । दीक्षायां सदने वने च विशदज्ञाने क्रमोऽयं यतः ॥ पूर्वं चारुसुवर्णवृष्टिकलिते लोके भवेदुत्सवः । सोऽयं श्रीविमलः श्रिये भवतु वः सर्वत्र लक्ष्मीश्रितः ॥ ५१ ॥

॥ इति श्रीतपोगणनायकभट्टारकश्रीरत्नसिंहसूरिशिष्यभट्टारकश्रीज्ञानसागरसूरिविरचिते श्रीविमलनाथचरित्रे महाकाव्ये श्रीविमलनाथजन्मदीक्षाकेवलवर्णनो नाम चतुर्थः सर्गः समाप्तः ॥ श्रीरस्तु ( ग्रं० १२५४ )

॥ अथ पंचमः सर्गः प्रारभ्यते ॥

ततः सूर्येंदुजीमूतो–पमः सर्वसमः प्रभुः ॥ घनाश्रयेषु गमनं । विश्वोपकृतये व्यधात्

॥ १ ॥ स्थाने स्थाने प्रधाने च । चतुर्विधसुरा द्रुतं ॥ चक्रुः समवसरणं । पूर्ववत्पुण्यतत्पराः
॥ २ ॥ दिवि दुंदुभयो नेदु—र्मूर्ध्नि छत्रत्रयं दधुः ॥ चामरे चामराः पार्श्वे । पद्मानि पुरतस्त-
स्थुः ॥ ३ ॥ इत्यादिप्रातिहार्यश्री—र्विहरन् विश्वनायकः ॥ अन्यदा द्वारिकापुर्यां । पावयन् पृ-
थिवीं ययौ ॥ ४ ॥ देवैः समवसरणे । विहिते स्वहितैषिभिः ॥ स्वामी सिंहासनं भेजे ।
पूर्वाशाभिमुखं सुखं ॥ ५ ॥ उद्यानपालका गत्वा । तत् शशंसुः स्वयंभुवे ॥ सार्द्धद्वादशरू-
प्यस्य । कोटीस्तेभ्यो ददौ हि सः ॥ ६ ॥ ततः समवसरणं । जगाम सपरिच्छदः ॥ स्वयंभू-
रुत्तरद्वारा । तं प्रविश्य प्रदक्षिणां ॥ ७ ॥ दत्वा जिनेश्वरं नत्वा । भद्रेण सहितो मुदा ॥ अ-
नुशक्रं प्रभोर्वाणीं । श्रोतुं चासावुपाविशत् ॥८॥ युग्मं ॥ स्वयंभुवमथोद्दिश्य । जगाद जगदी-
शिता ॥ चारित्रयोग्यता नो ते । श्राद्धधर्ममतः शृणु ॥ ९ ॥ अणुव्रतानि पंचेति । सगुणाश्च
गुणास्त्रयः ॥ शिक्षाव्रतानि चत्वारि । श्राद्धानां द्वादशव्रती ॥ १० ॥ सम्यक्त्वसहिता सैषा ।
पालिता स्वीयशक्तितः ॥ देवमर्त्यसुखप्रौढ—लक्षाष्टभवसिद्धिदा ॥ ११ ॥ योऽमीष्वाद्यं व्रतं
श्राद्धः । श्रद्धयांगीकरोति सः ॥ निरापराधजीवानां । त्रसानां ज्ञानतो वधं ॥१२॥ न करोति

सदा पर्व—दिवसेषु विशेषतः ॥ स्थावराणां च जंतूना—मन्येषां सागसामपि ॥ १३ ॥ युग्मं ॥
पर्वण्यपि दयां शुद्धां । पालयेद्यो नरोत्तमः ॥ जवे जवे सुखी स स्या—न्नृपशेखरराजवत् ॥ १४ ॥ तथाहि—सरामे धनदग्रामे । रामजद्राजिधः सुधीः ॥ राजपुत्रः पवित्रात्मा । समजूजडजावतः ॥ १५ ॥ धर्मघोषाजिधः सूरि—र्भूरिशिष्यसमन्वितः ॥ तत्रैकदा चतुर्मासं । स्थितः सुस्थितमानसः ॥ १६ ॥ तुर्यमासदिने श्राद्धैः । सश्रद्धैः पौषधव्रतं ॥ गृहीतं गृहिधर्मस्थैः । स्थैर्यादिगुणशालिजिः ॥ १७ ॥ तद् दृष्ट्वा रामजद्रेण । पृष्टाः श्रीगुरवस्तदा ॥ पूज्याः किमद्य पर्वास्ति । सुपर्वजिनपूजितं ॥ १८ ॥ तदोचे गुरुजिर्जद्र । चतुर्मासिकमद्य जोः ॥ पर्व गर्वहरं तेन । श्राद्धा धर्मं प्रकुर्वते ॥ १९ ॥ एके चतुर्विधाहार—परिहारपरायणाः ॥ सर्वतः पौषधं चान्ये । देशतः प्रतिपेदिरे ॥ २० ॥ अन्ये स्नात्रमहं चैत्ये । चित्त ध्यानधरा नराः ॥ कुर्वंति कष्टनिर्मुक्ताः । प्रसक्ता जिनशासने ॥ २१ ॥ आवश्यकक्रियारक्ता । जपवासपराः परे ॥ एवं स्वशक्त्या सजक्त्या । युक्त्याचारोऽत्र वर्त्तते ॥ २२ ॥ तन्निशम्य जगौ सोऽपि । शक्तिरेषु ममास्ति न ॥ अतः किंचित्परं कृत्यं । समादिश सुधीनिधे ॥ २३ ॥

तदाकर्ण्य गुरुः प्राह । कुरु जीवदयां तदा ॥ सुखी येन भवेऽत्र स्या-त्तथा परभवे भवान् ॥ २४ ॥ प्रतिपन्नं तदा तेन । तद्दिने प्रथमं व्रतं ॥ अर्जितं सुकृतं भूरि । विभूतिभरदं तथा ॥ २५ ॥ तदादि पर्वदिवसे । पालयामास तद्व्रतं ॥ शिक्षितश्च नमस्कारः । सारः संसारसागरे ॥ २६ ॥ प्रतिपाल्य पूर्णमायु-रीशाने स सुरालये ॥ इंद्रसामानिको जज्ञे । विबुधश्रेणिसेवितः ॥ २७ ॥ इतश्च पोतनाभिख्ये । पुरे राजारिमर्द्दनः ॥ चंद्रकांता च तत्पत्नी । मभभूकुणसंयुता ॥ २८ ॥ ततश्च्युत्वा रामभद्र-जीवोऽतीवदयान्वितः ॥ पुण्यशेषो गतद्वेषो-ऽमुष्याः कुक्षाववातरत् ॥ २९ ॥ लक्ष्मीमयेऽथ समये । सुतोऽभूभूपतेः स तु ॥ प्रायेणोत्तमजीवस्यो-त्पत्तिरुत्तमजातिषु ॥ ३० ॥ नृपशेखर इत्याह्वा । कृता पित्रा शुभे दिने ॥ कलाकलापकलितो । वृद्धिं प्राप्तः स राजवत् ॥ ३१ ॥ युवराजपदे राज्ञा-न्यदासौ स्थापितो मुदा ॥ तथापि विनयं नैवो-ल्ललंघे जनकादिषु ॥ ३२ ॥ कश्चिद्विद्याधरस्तत्र । सभायामेकदागमत् ॥ कुमारो विनयं कृत्वा । तं पप्रच्छ कुतो भवान् ॥ ३३ ॥ स जगाद ततो नाद-प्रसादितजनाशयः ॥ वैताढ्यपर्वते चारु-पुरेऽथ रथनूपुरे ॥ ३४ ॥ अहं तु कनकचूडो । विद्या-

धरवराग्रणीः ॥ साधितानेकसद्विद्यो—ऽनवद्यजिनधर्मन्नाक् ॥ ३५ ॥ युग्मं ॥

आवश्यकविधिं कृत्वा । स्मृत्वा पंचनमस्कृतिं ॥ कल्ये यावदहं सुप्तो । धर्मध्यानपरायणः ॥ ३६ ॥ गांधारीप्रमुखा देव्यः । प्रांतयामे तदा मम ॥ आगत्य कथयामासुः । स्वल्पमायुस्तवास्ति न्नोः ॥ ३७ ॥ श्रीपोतनपुरेशाय । नृपशेखरन्नून्नृते ॥ अतोऽस्माकं गताशंकं । देहि धेहि मुदं हृदि ॥ ३८ ॥ तेनेमाः सकला विद्या । प्रदाणाशु सुधीनिधे ॥ सुपात्रे योजिता विद्या । द्वयोरपि शुन्नप्रदाः ॥ ३९ ॥

कुमारेण गृहीतास्ता । बहिर्गत्वा च साधिताः ॥ ततो यावद्गृहेऽन्येति । तावदस्तं ययौ रविः ॥ ४० ॥ प्रतोली च तदा दत्ता । तेनासौ पुरतो बहिः ॥ वृक्षमूले स्थितो जाग्रन् । सावधानमनास्तथा ॥ ४१ ॥ प्रेतस्य पादपस्थस्य । शब्दं शुश्राव स त्विदं ॥ श्रीकुंन्नपुरेशस्य । नरकेसरिन्नूपतेः ॥ ४२ ॥ सौन्नाग्यमंजरी पुत्री । कलाकुशलमानसा ॥ परं नयनपीडायुक् । तेन वह्नौ प्रविक्ष्यति ॥ ४३ ॥ युग्मं ॥ प्रेतप्रिया प्रियं प्राह । तन्निशम्य शुचाकुला ॥ स्वामिन्नयनबाधाहृ—दौषधं नास्ति किं भुवि ॥ ४४ ॥ येन सा म्रियते दीना । तत् श्रुत्वा सो-

वदत्पुनः ॥ घनानि संति भूपीठे । आम्नायास्तु सुदुर्लभाः ॥ ४५ ॥ अस्य वृक्षस्य प-
त्राणि । चेद्बध्यंते प्रिये तदा ॥ अत्तिर्यात्यचिरेणैव । चक्षुषोः खेदकारका ॥ ४६ ॥ तदाकर्ण्या-
वदत्कांता । कांत पत्राणि बंधय ॥ तर्ह्येतस्या नेत्रयोस्त्वं । यथा बाधाक्षयो भवेत् ॥ ४७ ॥
तन्निशम्यागृणत्सोऽपि । नोपकारः प्रिये मया ॥ जनानां शक्यते कर्तुं । हीनजातिवशात्खलु ॥ ४८ ॥ उत्तमैरुपकारो य-त्क्रियते सर्वजंतुषु ॥ अधमैरपकारस्तु । तद्वर्णजनितं फलं ॥
॥ ४९ ॥ श्रुत्वा कुमारस्तत्प्रेत-दंपतीगदितं वचः ॥ उपकारचिकीर्वृक्ष-पत्राणि प्रयतो ललौ
॥ ५० ॥ विद्याबलवशाच्छीघ्रं । स ययौ कुंडिनं पुरं ॥ पटहं वाद्यमानं च । शृणोतिस्म स्व-
यं तदा ॥ ५१ ॥ सौभाग्यमंजरीं पुत्रीं । यः करोति निरामयां ॥ तस्मै सुतायुतं चार्द्ध-रा-
ज्यं राजा प्रयच्छति ॥ ५२ ॥

इति श्रुत्वा सहर्षोऽसौ । पटहं स्पृष्टवान् पटुः ॥ परोपकारनिरता । विरता नैव कस्य-
चित् ॥ ५३ ॥ ततस्ते पुरुषैः शीघ्रं । स नीतो राजमंदिरं ॥ यत्र सा क्षमते कालं । काष्टभ-
क्षणतत्परा ॥ ५४ ॥ बध्ध्वा पत्राणि पत्राणि । सा सज्जा विहिता हिता ॥ विबुधानां वचो

येन । निष्फलं नैव जायते ॥ ५५ ॥ ततोऽर्द्धराज्यसहिता । सा दत्ता भूभुजा मुदा ॥ अमुष्मै नृपपुत्राय । विचित्रगुणशालिने ॥ ५६ ॥ अनुज्ञाप्य नृपं सोऽपि । हस्त्यश्वकलितस्तदा ॥ प्रतस्थे पोतनपुरं । प्रति पत्नीसमन्वितः ॥ ५७ ॥ पुरप्रवेशं पुत्रस्य । कारयामास भूपतिः ॥ प्रथितं स्थापयामास । निजराज्येऽद्भुते च तं ॥ ५८ ॥ स्वयं दीक्षां ललौ मंक्षु । चित्तस्वास्थ्यविधायिकां ॥ महांतो हि प्रकुर्वंति । सदा कालोचितां क्रियां ॥ ५९ ॥ नृपशेखरभूपस्य । मंत्री कनकसागरः ॥ समस्ति तस्य तनयो । मंगलो वक्ररूपभृत् ॥ ६० ॥ उष्ट्रग्रीवश्छागकूर्चः । सूर्पाकारपदस्तथा ॥ सारमेयोदरः कोल–मुखो मूषकदंतकः ॥ ६१ ॥ ततो हास्यास्पदं जज्ञे । सर्वेषां स महीतले ॥ महीपतिर्विशेषेण । तस्यावज्ञां करोत्यलं ॥ ६२ ॥ राज्ञैकदा रासभेऽस्मौ । समारोप्य पुरेऽखिले ॥ भ्रामयित्वा वनमध्ये । मोचितो दुःखसंयुतः ॥ ॥ ६३ ॥ जग्राह तापसीं दीक्षां । स गत्वा तापसाश्रमे ॥ दुःखवैराग्यभाक् तत्र । करोति च वरं तपः ॥ ६४ ॥ वक्रत्वं मंगलस्यासी–द्भून्यवासश्च सा स्थितिः ॥ क्षमासुतत्वं पद्मस्य । हास्यकृत्तज्जने भवेत् ॥ ६५ ॥ मृत्वा वायुकुमारेषु । कालेन कियताप्यसौ ॥ उत्पन्नोऽज्ञानत-

पसा । धर्मः सर्वत्र सौख्यदः ॥ ६६ ॥ गवाक्षस्थोऽन्यदा राजा । श्रीसंघं सकलं कलं ॥ तत्र
चैत्यपरिपाटीं । कुर्वंतं वीक्ष्य सम्मदात् ॥ ६७ ॥ समीपस्थं नरं कंचि—दपृछद्दिवसोऽद्य कः ॥
येन संघोऽनघो देवान् । पूजयेदुत्सवेन त्नोः ॥ ६८ ॥ युग्मं ॥

सोऽप्योचदेव पर्वाद्य । तुर्यमासकमुच्चकैः ॥ विश्वरम्यां जिनपूजां । तेन श्राद्धाः प्रकुर्वते
॥ ६९ ॥ नृपतिस्तद्वचः श्रुत्वा । जातिस्मरणमाप सः ॥ विशेषात्तद्दिने जीव—रक्षादक्षोऽभ—
वत्ततः ॥ ७० ॥ सागारोऽपि त्रसान् जीवा—न्न हन्यामद्य पर्वणि ॥ जग्राह नियमं राजा ।
मनसेति विचारवान् ॥ ७१ ॥ तदा मंगलजीवः स । सुरः स्मृत्वा विडंबनां ॥ पूर्वजन्मकृ-
तां तत्रा—जगाम नृपसन्निधौ ॥ ७२ ॥ मत्कोटाद्या वज्रतुंडा । जीवास्तेन विनिर्मिताः ॥
निशायां नृपतेर्देहं । ते खादंति समंततः ॥ ७३ ॥ तद्दिनाज्ञयाज्ञाजा । सर्वसत्वदयापरः ॥
आत्मकायात्पृथक् नैतां—श्चकार नियमान्वितः ॥ ७४ ॥ ततस्तैस्त्याजितप्राणः । प्राणते कल्प
उत्तमे ॥ इंद्रोपमः सुरो जज्ञे—ऽगण्यपुण्यनिकेतनं ॥ ७५ ॥ ततश्च्युत्वा विदेहेऽसौ । प्राप्य
मर्त्यभवं ध्रुवं ॥ शिवं याता व्रतव्राता—दरः सुंदरमानसः ॥ ७६ ॥ अनेन पालितं यद्व—दर्हि-

स्याव्रतमादरात् ॥ मोक्षसौख्यकृते तद्व-त्पालनीयं नरैः परैः ॥ ७७ ॥ इति प्रथमं व्रतं ॥ निराधारमृषावक्तु-र्बंधस्येव पदे पदे ॥ क्षितौ पातोऽथवा घातो । मार्गस्थस्यापि जायते ॥ ७८ ॥ कन्यालीकप्रमुखाणि । योऽसत्यानीह नो वदेत् ॥ द्वितीयाणुव्रतं तस्य । गृहस्थस्य भवत्यहो ॥ ७९ ॥ एषु स्थापनिकामोषो । दोषोऽस्त्यपायहेतवे ॥ अस्मिन् कृते यतो द्वित्रि-व्रतभंगा भवेन्नृणां ॥ ८० ॥

असत्यवादी चेत्कुर्या-द्देवादिशपथान् बहून् ॥ सर्पदष्टभंड इव । परं कोऽपि न मन्यते ॥ ८१ ॥ अलीकवक्ता ब्रह्मापि । न लोकैरर्च्यते निजैः ॥ सत्यवादी हि काकोऽपि । पूज्यतेऽतिथिवत्परैः ॥ ८२ ॥ घूकोऽपि राजा मार्गस्थै-स्तित्तिरोऽपि विनायकः ॥ दुर्गापि देवी यल्लोकै-रुच्यतेऽस्य फलं हि तत् ॥ ८३ ॥ अनृतं वदतो जंतोरुत्तमाः स्वजना अपि ॥ पक्षपातं न कुर्वंति । विमलस्येव कर्हिचित् ॥ ८४ ॥ सत्यवादी नरो राज-मान्यः स्वजनपूजितः ॥ महत्वकीर्त्तिसंयुक्तो । जायते कमलो यथा ॥ ८५ ॥ तथाहि—अत्रास्ति भारते क्षेत्रे । पुरं विजयसंज्ञकं ॥ राजा कलानिधिस्तत्र । नामतश्चार्थतोऽभवत् ॥ ८६ ॥ तथा च कमलः श्रे-

ष्टी। कमलश्रीप्रियान्वितः ॥ विमलात्मजसंयुक्त–स्तत्रैवाजनि विश्रुतः ॥ ८७ ॥ विमलः स परं नाम्ना । न धाम्ना कर्मणापि च ॥ नामसत्याज्जनैः किंतु । विमलः प्रोच्यते त्वयं ॥ ८८ ॥

व्यवसायकृते सोऽगा–दचलं नगरं वरं ॥ एकदा पण्यमादाय । धनार्जनपरायणः ॥८९॥ वत्रमानोंबुमुक्तृष्ट्या । स्खलितस्तस्थिवानसौ ॥ पुरे रत्नपुरे चारु–जनराजिविराजिते ॥९०॥ सागरादागतस्तत्र । वणिक् सागरनामकः ॥ विजयङ्गवास्तव्यो । वस्तुव्रातसमन्वितः ॥९१॥ एकस्थाननिवासित्वा–त्तेन स्वोत्तारकेऽथ सः ॥ नोजितः कुशलं चापि । कुटुंबस्य निवेदितं ॥ ९२ ॥ सागरं स्वपुरं गंतु–कामं वर्षात्यये पुरा ॥ अस्थापयत्स्वक्रमेकं । ठेकं सोऽन्यपण्यं लोऽन्नवान् ॥ ९३ ॥ सागरः प्रोचिवांस्तर्हि । विक्रयस्व क्रयाणकं ॥ मदीयं क्रमते नैव । स्थितिं यत्तत्पुरातनं ॥ ९४ ॥ विक्रीतं तेन तत्तस्य । परं कूटप्रयोगतः ॥ गृहीतं किंचन द्रव्यं । स्वयं द्रोही यतः स हि ॥९५॥ तौ सार्थे चलितौ पश्चा–त्क्रमेण स्वपुरांतिकं ॥ समेतौ ज्ञातवृत्तांतः । कमलः सन्मुखं त्वितः ॥ ९६ ॥ त्रयोऽपि मिलिता मार्गे । तेषु बुद्धिनिधिस्तदा ॥ सागरो विमलं प्राह । शृणु बांधव मद्वचः ॥ ९७ ॥ पण्याम्रशकटं याति । द्विजः कुटीह

सारथिः ॥ वामन्नागे बलीबर्दः । खंजो वामेतरो गलिः ॥ ए८ ॥ मातंगोऽनुचरस्तत्र । रुष्टा
स्त्री पृष्टगा तथा ॥ प्रसविष्यति पुत्रं सा । सांप्रतं सुखवर्जिता ॥ एए ॥ विमलेन ततः प्रो-
क्तं । कूटमेव त्वयोदितं ॥ तेनोचे मुनिवाणीव । वचो मे निष्फलं न हि ॥ १०० ॥
विमलस्तन्निशम्याह । यदि सत्यं वचस्तव ॥ तदा लक्ष्मीर्मदीया ते । त्वदीया मेऽन्य-
था पुनः ॥ १ ॥ अंगीकृतं सागरेण । तडुक्तं सकलं वचः ॥ तत्र साक्षीकृतो ह्वाभ्यां । कमलः
श्रेष्ठिपुंगवः ॥ २ ॥ त्रयोऽपि त्वरितं चेलुः । शकटं मिलितं ततः ॥ सागरेण यथा प्रोक्तं ।
तथा सर्वं निरीक्षितं ॥ ३ ॥ धनक्षयन्नयव्यग्रो । विमलः स्वं क्रयाणकं ॥ गोपयामास मूढा-
त्मा । संतापकलितो हृदि ॥ ४ ॥ जनकं स्वं तथा प्राह । साक्षी त्वमसि सांप्रतं ॥ पक्षपा-
तो मदीयोऽतः । कार्यस्तातोऽसि येन मे ॥ ५ ॥ कमलो मौनमालंब्य । तदा तस्थौ स्थिरा-
शयः ॥ विवदंतौ ततस्तौ ज्ञाक् । गतौ राजकुलं बलात् ॥ ६ ॥ राज्ञोऽग्रे स्वीयवृत्तांत । न-
न्नाभ्यां कथितोऽखिलः ॥ तन्निशम्य नृपोऽन्नाणीत् । कोऽत्र साक्षी प्रवर्त्तते ॥ ७ ॥ अजल्प-
त्सागरोऽस्यैव । पितास्ति प्रतिन्नूः प्रन्नो ॥ न्नूभुजाकार्य स पृष्टः । स्फुटमाचष्ट तत्पुरः ॥

॥ ८ ॥ सागरेण जितं राजन् । हारितं मत्सुतेन तु ॥ अलीकं नैव जल्पामि । धनलोभेन सांप्रतं ॥ ९ ॥ राजा तुष्टस्ततस्तस्मै । बहुमानं प्रदत्तवान् ॥ आकाशात्पुष्पवृष्टिस्तु । जाता देवविनिर्मिता ॥ १० ॥ निर्वासितश्च विमलः । स्वदेशात्पार्थिवेन सः ॥ हर्षेण सागरः पृष्टः । कथं ज्ञातं त्वया ह्यदः ॥ ११ ॥ सोऽशोचर्क्षवशात–श्चूनस्य शकटं मया ॥ ज्ञातं तथाम्रपतना–च्छौचाचाराद् द्विजः पुनः ॥ १२ ॥ यत्रांह्रिक्षालनं तेन । विहितं हितमिच्छता ॥ मक्षिका बहुलास्तत्र । दृष्ट्वा कुष्टीति चिंतितं ॥ १३ ॥

वारंवारं तथा भूमौ । पतनाद्भूपजो गलिः ॥ वालुकायां वक्रपद–रेखया खंजकोऽपरः ॥ ॥ १४ ॥ यच्छेदिताम्रपत्राणि । फलाच्छादनहेतवे ॥ द्विजोऽखान्नीरसेकाद्य–न्मातंगो विदितस्ततः ॥ १५ ॥ सकंटकवृक्षलग्न–रक्ततंतुविलोकनात् ॥ वनितावगता सा च । रुष्टा व्यावृत्य वीक्षणात् ॥ १६ ॥ कोऽप्येति मामनुनेतुं । न वेति वीक्षितुं तदा ॥ पश्चाद्ग्रीवं तु पश्यंती । ज्ञाता पदनिरीक्षणात् ॥ १७ ॥ विधाय देहचिंतां सो–त्थिता यद्धस्तदानतः ॥ तेनैषा गुर्विणी ज्ञाता । देहभारालसा वशा ॥ १८ ॥ भूमौ यद्दक्षिणो बाहुः । प्रविष्टः प्रसन्नं ततः ॥ पुत्रो ग-

न्नें मया ज्ञातो-ऽतिदुःखात्प्रसवोऽधुना ॥ १९ ॥ तत् श्रुत्वा नृपतिस्तुष्ट-श्चक्रे तं मंत्रिपुंगवं
॥ धीधनानां हि सर्वत्र । पूज्यता जायते जने ॥ २० ॥ नृपेण चान्यैः कमलो । मानितः स-
त्यभाषणात् ॥ विमलस्तु स्वविषया-त्तेन तैश्च बहिः कृतः ॥ २१ ॥

कमलः कमलवासो । ब्रह्मभूः कमलोपमः ॥ हंसाधारः पत्रपूग-कलितः शोभतेतरां ॥
॥ २२ ॥ कमलस्य प्रसादत्वं । विमलस्य च कालिमां ॥ राजा यत्प्रददौ गोभि-स्तदत्र चि-
त्रकृज्जने ॥ २३ ॥ द्वितीयं व्रतमाराध्य । कमलो विमलोदयः ॥ आयुःक्षये पुनर्मृत्वा । सौध-
र्मे त्रिदशोऽभवत् ॥ २४ ॥ सत्येन संगतो लक्ष्मीं । कमलो यदवाप्तवान् ॥ असद्भूतेन विम-
लो । गृहीतो दुःखभाक् तथा ॥ २५ ॥ तत्सांप्रतमतः सत्यं । भाषणीयं विवेकिभिः ॥ महत्व-
ख्यातिसत्कीर्त्ति-प्रमुखाः स्युर्गुणा यतः ॥ २६ ॥ युग्मं ॥ इति द्वितीयं व्रतं ॥ पतितं परकी-
यं स्वं । सर्पवद्यस्तु मन्यते ॥ मन्यते तान् द्विजिह्वोऽपि । क्षुधाक्रोधादिसंयुतः ॥ २७ ॥ पर-
कीयैर्हृतैः स्वीयो । हस्तो दग्धो न यैः पुरा ॥ न दहेत्कृष्णवर्त्मापि । तेषां पुंसां सदाशयं ॥
॥ २८ ॥ येनात्तेनेह चौरोऽय-मिति लोकः प्रभाषते ॥ अदत्तं तच्च नादेयं । किंतु देयं विवे-

क्विना ॥ २९ ॥ स श्लाध्यो भुवि नादत्ते । योऽदत्तं सुरदत्तवत् ॥ यो गृह्णातीह निंद्यः स । स्नवेत्कमलसेनवत् ॥ ३० ॥ तथाहि—

जंबूद्वीपे कृताकंपा । चंपानामपुरी परैः ॥ हरिश्चंद्रोऽत्नवड्राजा । तत्र सत्वगुणान्वितः ॥ ३१ ॥ सुरदत्ताभिधः श्रेष्टी । तत्रत्यः कश्चिदेकदा ॥ देशांतरे वाणिज्यार्थ—मचलत्सार्थसंयुतः ॥ ३२ ॥ क्रूरैश्चौरैः पथि प्रौढः । सार्थोऽस्य मुषितोऽन्यदा ॥ विप्रणष्टोऽत्नवत्सोऽपि । कांदिशीकहृदा तदा ॥ ३३ ॥ गतः सूर्यपुरोद्याने । मानेन परिवर्जितः ॥ ददर्श कृष्णवदनं । स नरं तत्र कंचन ॥ ३४ ॥ ततोऽसौ तमुवाचैवं । कस्त्वं कुत इहागतः ॥ इदृशी किमवस्था ते । संबंधं कथय स्वकं ॥ ३५ ॥ सोऽवक् सूर्यपुरेऽत्नान्नूत् । श्रेष्टी विमलनामकः ॥ धनंजयोऽहं तत्पुत्रो । धनार्थी परदेशगः ॥ ३६ ॥ मत्पिता निधनं प्राप । धनं राजकुले गतं ॥ तथा देशांतरे नव्यं । नार्जितं तेन दुःखन्नाक् ॥ ३७ ॥ सुरदत्तः पुनः प्राह । निधानानि न संति किं ॥ सोऽवक् संति परं स्थानं । तेषां साक्षान्न वेद्म्यहं ॥ ३८ ॥

प्रोक्तं सुरेंद्रदत्तेन । चेन्ममार्द्धं प्रयच्छसि ॥ स्थानं तदा निधानानां । दर्शयामि तवानघ

॥ ३९ ॥ तद्वचोंगीकृतं तेन । ततोऽगौ तन्निकेतनं ॥ गत्वा चैरंमबीजानि । तद्भूमावध्यरोपय-
त् ॥ ४० ॥ तदैकस्मिन् प्ररोहं स । दृष्ट्वा तत्स्थानमादिशत् ॥ खनिते तद्धरापीठे । निधानं
निःसृतं नूतं ॥ ४१ ॥ ताभ्यां विलोकितास्तत्र । चतस्रः स्वर्णकोटयः ॥ द्वे द्वे विभज्य चा-
दत्ते । ततो दत्तोऽगमद्गृहं ॥ ४२ ॥ इतश्च पितृभ्रातृव्यो । नाम्ना कमलसेनकः ॥ सुरदत्तेन वि-
द्वेषं । समं वहति नित्यशः ॥ ४३ ॥ तत्प्रशंसां न सहते । तच्छिद्राणि च मार्गयेत् ॥ परं पु-
ण्यप्रभावेण । सुरदत्तः सुखी सदा ॥ ४४ ॥ सोऽन्यदा देवपूजायै । चलितो दृष्टवान् पथि ॥
मुद्रारत्नं कृतायत्नं । ततः पश्चाद्ययौ क्षणात् ॥ ४५ ॥ दृष्ट्वाथ कमलसेन–स्तं तदा त्वरितागतं
॥ प्रश्नं चकार हे भ्रातः । शीघ्रं त्वं चलितः कथं ॥ ४६ ॥ सोऽनर्थदंडं विज्ञाय । मौनं चक्रे
यदा तदा ॥ जग्राह कमलसेन–स्तत्र गत्वा तदादरात् ॥ ४७ ॥

कूटबुद्ध्या ततः सोऽगा–त्सुरदत्तगृहेऽसहः ॥ औचित्याद्भोजितस्तेन । शायितश्च गृहां-
तरे ॥ ४८ ॥ अनेन निग्रहं चास्य । कारयामि नराधिपात् ॥ चिंतयित्वेति तत्पेटा–मध्ये
क्षिप्तं सुगुप्तकं ॥ ४९ ॥ शृंगारावसरे राज्ञा । मुद्रारत्नं विलोकितं ॥ परं न दृश्यते क्वापि ।

॥ ४६० ॥

वीक्ष्यमाणं जनव्रजैः ॥ ५० ॥ तलारक्षं समाकार्या-ऽस्येत्यादेशं स दत्तवान् ॥ मुद्रारत्नं पु-
रांतस्त्वं । शोधयस्व प्रियाधुना ॥ ५१ ॥ शोधितं न परं लब्धं । पटहो वादितस्ततः ॥ य ए-
तदर्पयेच्छङ्को । तस्य दोषो न सांप्रतं ॥ ५२ ॥ पश्चाद् ज्ञाते स्वयं राजा । तस्य दंडं करिष्यति
॥ तत् श्रुत्वा सुरदत्तस्तं । प्राह वेधो तदर्पय ॥ ५३ ॥ क्व गृहीतं मया सोऽवग् । देवमार्गे
पगोऽवदत् ॥ तन्निशम्याञ्चणत्सोऽपि । कूटं सर्वं तवोदितं ॥ ५४ ॥ गत्वाथ कमलसेनः । पुरो
राज्ञो न्यवेदयत् ॥ गृहीतं सुरदत्तेन । मुद्रारत्नमिति स्फुटं ॥ ५५ ॥

पृष्टं राज्ञा कुतः स्थानाद् । देव देवगृहाध्वनः ॥ सोऽजल्पच्च तदा नृप-स्तलारक्षैस्तमा-
नयत् ॥ ५६ ॥ अथोचन्नृपतिस्तं त-न्मुद्रारत्नं समानय ॥ यद्गृहीतं त्वया देव-मार्गतो मा-
र्गे एव नः ॥ ५७ ॥ सोऽवोचन्नो मया राज-न्नात्तं नृपोऽवदत्तदा ॥ त्वज्ज्ञाता कमलसेनो-ऽ-
कथयदग्रतो मम ॥ ५८ ॥ सुरदत्तो विजानाति । मज्ज्ञात्रेदं विजृंभितं ॥ तथापि राजपुरतो ।
न स जल्पति पापधीः ॥ ५९ ॥ सुरदत्तोऽवदत्तार्हि । स्थानं वेत्स्यत्यसौ पुनः ॥ पेटामध्येऽ-
स्ति सोऽजल्प-च्छोधिता सापि नारतत् ॥ ६० ॥ तदा कमलसेनेन । यत्र क्षिप्तं ततः स्वयं ॥

निष्कास्य दर्शितं राज्ञे । रुष्टोऽभून्नृपतिर्भृशं ॥ ६१ ॥

सुरदत्तं पुनः प्राह । ग्लतो धर्मकर्मणः ॥ ग्लयस्यखिलान् लोकान् । पुण्यश्लोकान् किमत्र रे ॥ ६२ ॥ तस्थौ स मौनमालंब्य । जानन् कर्मस्थितिं स्वकां ॥ नृपस्तदा तलारक्षमादिक्षद्वधहेतवे ॥ ६३ ॥ ततो गर्दभमानीय । तत्रारोप्य तमुच्चकैः ॥ विस्वरैर्वाद्यमानैश्च । वादित्रैर्वधभूमिकां ॥ ६४ ॥ नीयमानं प्रिया तस्य । रुक्मिणी वीक्ष्य दुःखिता ॥ कायोत्सर्गं चकाराशू-द्दिश्य शासनदेवतां ॥ ६५ ॥ युग्मं ॥ क्षणेन देवता तत्र । प्रकटाजनि तत्पुरः ॥ तां प्रणम्य जजल्पासौ । देवि चेन्मे प्रियः शुचिः ॥ ६६ ॥

तत्त्वं कुरु साहाय्यं । यथा स्याच्छासनोन्नतिः ॥ तत् श्रुत्वा देवता शीघ्रं । गता राजकुलेऽतुले ॥ ६७ ॥ तत्रस्थं सर्वमाहार-मदृश्यं विहितं तया ॥ पुरस्योपरि महती । तथा च रचिता शिला ॥ ६८ ॥ आरक्षकनरा बद्धा । आगतास्ते नृपांतिकं ॥ व्याकुलं नगरं तेन । समस्तं समभूत्तदा ॥ ६९ ॥ नृपतिस्तृषितो जातः । पानीयं क्वापि नाप्यते ॥ चतुर्विधस्तथाहारो । यतोऽदृष्टीकृतः पुरा ॥ ७० ॥ भूभुजामात्यपुरत-स्ततः सर्वं निवेदितं ॥ तेनाप्युक्तं

बलिपूजादिकं तत्र । विहितं विधिपूर्वकं ॥ देवता
तदा राजन् । देवतानिर्मितं ह्यदः ॥ ७१ ॥ निरागाः सुरदत्तोऽयं । कथं व्यर्थं विडंब्यते ॥ पा-
प्रकटा तन । जातावोचन्नृपंप्रति ॥ ७२ ॥ अनेन मुद्रारत्नं ते । गृहीतं गोपितं तथा ॥
पात्मा कमलसेन-श्चौरः क्रूरतराशयः ॥ ७३ ॥ अवोचतां तथा तां चा-पराधो देवि
राजामात्यौ तदा देवी-पादयोः पतितौ युतौ ॥ ७४ ॥ बंधनान्मुत्कलं कृत्वा । सुरदत्तं
क्षम्यतां ॥ एकवारं पुनर्नैव । करिष्यावोऽविचारतां ॥ ७५ ॥
विमानतं ॥ पुरो विधाय निन्ये च । समहं राजमंदिरे ॥ ७६ ॥
अपाकृता शिला देव्या । मुक्ता आरक्षकास्तथा ॥ सकलः प्रकटीचक्रे । आहारोऽपि च-
तुर्विधः ॥ ७७ ॥ मुखं कमलसेनस्य । पश्चाद्भागे कृतं द्रुतं ॥ महाबला हि मरुतः । स्वज्ञावे-
न प्रकीर्त्तिताः ॥ ७८ ॥ परिधाप्य ततो राज्ञा । सुरदत्तो निजे गृहे ॥ संप्रेषि कमलसेनः ।
पुनः पितृगृहे रुषा ॥ ७९ ॥ तत्रासौ विविधैर्मारै-र्मारितो नृपपूरुषैः ॥ बभूव नारकी सद्य
। उग्रं कर्म फलत्यहो ॥ ८० ॥ सुरदत्तः समं पत्न्या-ऽवसरे गुरुसन्निधौ ॥ व्रतं ललौ व्ययी-
कृत्य । सप्तक्षेत्र्यां धनं घनं ॥ ८१ ॥ कृत्वा कर्मक्षयं गाढ-तपसा रुक्मिणीयुतः ॥ केवलज्ञा-

नमासाद्य । स ययौ पदमव्ययं ॥ ८२ ॥

अदत्तपरिहारोक्तं । तथा ग्रहणजं फलं ॥ ज्ञात्वा भव्यमभव्यं च । तृतीयं व्रतमुद्वह ॥ ॥ ८३ ॥ इति तृतीयं व्रतं ॥ साचारासु स्वदारासु । संतोषो गृहमेधिनां ॥ तुर्यं व्रतं स्मृतं तद्वज्ञै—स्तथा स्त्रीणां स्वभर्त्तरि ॥ ८४ ॥ तासामपि परित्यागं । ये कुर्वंति रुषं विना ॥ यतिभ्योऽप्यधिकास्तेऽत्र । विज्ञेया युक्तितो जनैः ॥ ८५ ॥ ते तु स्तोकाः कृतालोकाः । संति संतो महीतले ॥ तत्संगः पर्वघस्रेषु । सर्वैर्वर्ज्यः परं सदा ॥ ८६ ॥ अन्यकांताभिलाषं ये । कुर्वंति क्लिष्टबुद्धयः ॥ आचंद्रं चंद्रवद्दुःखं । ते लभंते नरा ध्रुवं ॥ ८७ ॥ तथा स्वदारसंतोषं । ये भजंति कृतादराः ॥ सुरेंद्रदत्तवत्ते स्युः । सुखसौभाग्यभाजनं ॥ ८८ ॥ तथाहि—भरते मिथिलापुर्यां । सुखकर्यां निवासिनां ॥ चंद्रः सुरेंद्रदत्तश्च । द्वावभूतां सहोदरौ ॥ ८९ ॥ चंद्रस्य यानशालाया—मेकदा मुनयः स्थिताः ॥ तुर्यमासं वृषावासं । दत्तरासं वशाव्रजैः ॥९०॥

गुरुभिर्देशना दत्ता । ब्रह्मचर्यव्रताश्रिता ॥ ततोऽन्यवनितात्याग—स्ताभ्यामंगीकृतो हितः ॥ ९१ ॥ कदाचिद्व्यंतरी काचि—त्तयोः शीलं परीक्षितुं ॥ विधाय वनितारूपं । गता चं-

द्रनिकेतनं ॥ ९२ ॥ निशायां तां कृतोद्योतां । सर्वाभरणभूषितां ॥ दृष्ट्वा विस्मयमापन्न–श्चं-
द्रो निस्तंद्रमानसः ॥ ९३ ॥ धिष्ण्यमध्यस्थितां तारां । रोहिणीरूपसंपदं ॥ चंद्रो विलोक्य
तां मोहं । यत्प्राप न तदद्भुतं ॥ ९४ ॥ ततो जगाद तां सोऽपि । का त्वं सुंदरि सावदत् ॥
राट्सुता सोऽगदत्कस्मा–दागता साम्रणात्पुनः ॥ ९५ ॥ त्वद्रूपमोहिता कामा–र्थिनी काम-
मिहागता ॥ तदा स्वनियमं मुक्त्वा । तस्यां रक्तोऽभवत्क्षणात् ॥ ९६ ॥ ततस्तद्वचनं तेन ।
प्रतिपन्नं प्रमोदतः ॥ साह मे दोहदं तर्हि । पूरयैकं मनःस्थितं ॥ ९७ ॥ सोऽवदन्मानसे किं
ते । वर्त्तते तद्वदाधुना ॥ यथा कुर्वे तवेष्टं स्राक् । तत् श्रुत्वा सा जगौ पुनः ॥ ९८ ॥ देहि
मे नासिकां स्वीयां । सोऽपि मोहेन मोहितः ॥ छित्वा स्वां तां ददौ तस्यै । नाऽकृत्यं मूढ-
चेतसां ॥ ९९ ॥ तां लात्वाट्टहास्यं सा । कृत्वा च गगनं ययौ ॥ परीक्षार्थं यतः सा हि ।
समायाता तदंतिकं ॥ १०० ॥ लोकानां दर्शयिष्येऽहं । प्रभाते स्वं मुखं कथं ॥ तदा ध्या-
त्वेति चित्तेऽसौ । जिह्वां छित्वा ततो मृतः ॥ १ ॥ जगाम नरकं घोरं । परदाराभिलाषतः ॥
-श्रतो वांछापि नो कार्या । तस्याः शुद्धधिया नृणां ॥ २ ॥ परजीववधूसंगा–च्चंद्रो यच्च कलं-

कन्नाक् ॥ लमन्नूद्धिश्वविदितो । नात्राश्चर्यं प्रवर्त्तते ॥ ३ ॥

तस्यामेव रजन्यां सा । विशेषावयवाधिका ॥ गता सुरेंद्रदत्तस्य । न्नवनं नवनंदिदं ॥४॥ तेनापि न्नाषिता साऽवक् । स्वरूपं पूर्ववत्स्वकं ॥ दर्शयंती गुरुस्नेहं । तन्निशम्याथ सोऽन्यधात् ॥ ५ ॥ ध्रुवं स्नेहेन दुःखं स्या–ज्जंतूनां ज्वरिणामिव ॥ पश्य दीपोऽपि निर्वाणं । तत्कृयान्नजति स्वयं ॥ ६ ॥ स्वकांतादौ कदाचित्स । कर्त्तव्यो गृहमेधिन्निः ॥ परं परप्रियासक्तो । न युक्तो ज्ञानशालिनां ॥ ७ ॥ अंगीकृतं मया पूर्वं । व्रतमेतद्गुरोर्मुखात् ॥ अतो न्नंगं करिष्ये नो । वचसा तेऽद्य सांप्रतं ॥ ८ ॥ पालनीयं त्वयाप्येत–दबलानां यतो बलं ॥ इदमेव समाख्यातं । विख्यातं सर्वजातिषु ॥ ए ॥ साह पाखंडिन्निः स्वामिन् । वंचितोऽसि यतः सुखं ॥ प्रत्यक्षं त्याजयित्वा ही । क्षिप्तः सांशयिके च के ॥ १० ॥ नियमात्स्वर्गमोक्षौ चे–त्तवेच्छं वर्त्तते हृदि ॥ परलोकं विना तौ न । ततो भुंक्ष्व स्फुटं त्विदं ॥ ११ ॥ सोऽवदद्दूचितोऽहं चे–त्तैर्गतं किं तवाथवा ॥ त्वं स्वस्थानं पुनर्गछ । स्वछं चित्तं तथा कुरु ॥ १२ ॥ इत्युक्त्वा मौनमाश्रित्य । स स्थितः स्थितिकोविदः ॥ सापि तन्निश्चयं ज्ञात्वा । मुक्त्वा च कुं-

डजद्वयं ॥ १३ ॥ जगाम भवनं स्वीयं । तद्गुणावलिरंजिता ॥ धवलोऽपि धर्म एव । रंजय-
त्यपगान् जनान् ॥ १४ ॥ युग्मं ॥

दोषाश्रयेऽपि यद्दृष्टि–स्तमसात्र न लुप्यते ॥ तस्य वामस्वरोऽप्युच्चैः । कौशिकस्येव
भिन्दिः ॥ १५ ॥ जजागार स वेलायां । स्वाध्यायं ध्यातवान् मुदा ॥ वनितायास्तथा दृढ–
स्वरूपं ह्यभावयत् ॥ १६ ॥ आवश्यकमसौ कृत्वा । यावच्छय्यां व्यलोकयत् ॥ तावद्ददर्श त-
त्रस्थं । कुंभलक्षितयं स्वयं ॥ १७ ॥ चंद्रगृहे तदा पत्नी । मृतं दृष्ट्वा निजं प्रियं ॥ गाढस्वरं
च पूत्कुर्वे । वशानां हि स्वभावतः ॥ १८ ॥ मिलितः स्वजनौघोऽस्य । निखिलः पुरमध्यगः
॥ अर्कं सुरेंद्रदत्तोऽथ । विशेषात्तेषु संदधौ ॥ १९ ॥ मृतकार्यं निजभ्रातुः । सकलं कृतवान-
र्गौ ॥ यतोऽतिदुःकरं कार्यं । बंधुस्तिष्ठति भूतले ॥ २० ॥ एकदा ज्ञानिनं साधुं । दृष्ट्वायं पृष्ट-
वान् सुधीः ॥ चंद्रमृत्योश्च वृत्तांतं । कुंभलक्षितयस्य च ॥ २१ ॥ व्यंतर्या निर्मितं पूर्वसंबंधं
स मुनिर्जगौ ॥ असौ वैराग्यवान् जज्ञे । तं श्रुत्वा बंधुविप्लवं ॥ २२ ॥ सर्वसंगपरित्यागं । क-
त्वायं जगृहे व्रतं ॥ तस्यैव सन्निधौ साधो–श्चक्रे चारुतपस्तथा ॥ २३ ॥ अधीताखिलसिद्धां-

॥ ४६३ ॥

तः । प्रतिबोध्य जनान् घनान् ॥ प्रांते सोऽनशनं लात्वा । महेंद्रेऽभूत्सुरोत्तमः ॥ २४ ॥ सु-
रेंद्रदत्तवच्चैवं । ब्रह्मचर्यं धरंति ये ॥ ते देवदानवादीनां । पूज्याः स्युर्मानवा अपि ॥ २५ ॥ इ-
ति चतुर्थं व्रतं ॥

इच्छयापि प्रमाणं यो । धनधान्यादिसंभवं ॥ करोत्युपासकस्तस्य । पंचमं वर्त्तते व्रतं ॥
॥ २६ ॥ गृहीतेऽस्मिंश्च सम्यक्त्व–मूला स्यद्द्वादशव्रती ॥ अंगीकृतैव येनात्र । सर्वेषां नियमः
किल ॥ २७ ॥ परिग्रहप्रमाणं यो । विधत्ते विधिना सुधीः ॥ पालयेच्च यथाप्रोक्तं । स सुखी
देवदत्तवत् ॥ २८ ॥ विशाधयेद्गृहीत्वा यः । स दुःखं मरणादिकं ॥ जयदत्त इवाप्नोति । तस्मा-
त्त्याज्यं विवेकिना ॥ २९ ॥ तथाहि—आसीत्प्रियंकरग्रामे । देवदत्ताभिधो वणिक् ॥ गायेव
सदृगा तस्य । विद्यते च दरिद्रता ॥ ३० ॥ जयदत्ताभिधस्तस्य । वयस्यः सोऽपि निर्धनः ॥
समानशीले मित्रत्वं । यतो भवति भूतले ॥ ३१ ॥ धनार्जनकृते देव–दत्तो ग्रामांतरं व्रजन्
॥ अन्यदा तरुणाटव्यां । ययौ संबलसंयुतः ॥ ३२ ॥ कस्याश्चित्सरितस्तीरे । यावद्भोक्तुमुपा-
विशत् ॥ पाथेयं तावदेकागात् । वनिता वनमध्यतः ॥ ३३ ॥ तां दृष्ट्वा विस्मयापन्नो । याव-

क्षुधया यांति मज्जंतुः ।
ज्ञद्धवति किंचन ॥ जगाद सैव तावत्तं । वंधो मद्वचनं शृणु ॥ ३४ ॥ क्षुधासदृग्न रोगो-
प्राणात्त्राणविवर्जिताः ॥ त्वं क्षेमसि न तद्युक्त-मुक्तमेवं विचारय ॥ ३५ ॥ क
ऽस्ति । प्राणा यांति यतो ह्यतः ॥ अन्नममौषधं नो । यद्भुंक्ते सा व्रजेत्क्षणात् ॥ ३६ ॥
मे स्वसृरतिः सोऽवक् । साजद्धपदेहि मामनु ॥ दर्शयामि यथा तं ते । तत्पृष्टेऽसौ ततोऽ-
चलत ॥ ३७ ॥

क्रियत्यपि प्रयातः सो-ऽपश्यत्तं पतितं भुवि ॥ क्षुधितं तृषितं श्रांतं । भ्रांतं नूतिविव-
र्जितं ॥ ३८ ॥ तेन प्रसारितो हस्तः । स ददौ शंवलं तदा ॥ साऽवक् पानीयमानीय । पतिं
सज्जय सज्जन ॥ ३९ ॥ स जगौ कुत्र वार्यस्ति । सावदन्निकटेऽवटे ॥ तया साऽर्द्धमसौ तत्र ।
जगाम तदनु स्वयं ॥ ४० ॥ कर्षन्नंत्रः स तस्मिन् स्राक् । तया क्षिप्तः सदंत्रया ॥ परं लेभे
वृक्षशाखां । स तन्मध्यगतां पतन् ॥ ४१ ॥ शाखास्थितेन तेनास्य । भित्तौ विवरमीक्षितं ॥
तां मुक्त्वा प्राविशत्तत्र । निर्भयः सदयाशयः ॥ ४२ ॥ अग्रे गच्छन् खेचरं सो-ऽपश्यत्सिंहास-
नस्थितं तया वनितया युक्तं । मुक्तं दुःखभरैः परैः ॥ ४३ ॥ तां प्रणम्यावदत्सोऽपि । स्वसः

किं जातमीदृशं ॥ क्वासौ तवागमश्चेह । कोऽयं वा पुरुषाग्रणीः ॥ ४४ ॥ साह बंधो सुधा-सिंधो । शृणु संबंधमावयोः ॥ वैताढ्यपर्वते रम्ये । विद्याधरविराजिते ॥ ४५ ॥ पुरे श्रीरथ-नूपुर-चक्रवालाह्वये मम ॥ रत्नचूडाभिधः स्वामी । सदा राज्यं करोत्यसौ ॥ ४६ ॥ वैताढ्ये मुख्यभवनं । क्रीडासौधमिहावयोः ॥ खेचराणां च देवानां । क्रीडास्थानं यतो भवेत् ॥४७॥

अन्यदा वरुणाटव्या-मावां क्रीडार्थमागतौ ॥ चंडशर्माख्यव्यंतर्या-श्रितमाम्रवनं घनं ॥ ४८ ॥ तत्राम्रवृक्षं फलितं । दृष्ट्वा हृष्टः प्रियो मम ॥ देवतामननुज्ञाप्य । फलानि जगृहेऽन्यदा ॥ ४९ ॥ रुष्टा देवी तदा सद्यो । बबंध मम वल्लभं ॥ ततोऽहं क्षुरिकां कृष्ट्वा । स्वशिरश्छेत्तुमुद्यता ॥ ५० ॥ तयाहं विधृता हस्ते । भणिता च कथं त्विदं ॥ साहसं कुरुषे वत्से । वरं वृणु समीहितं ॥ ५१ ॥ मयोचे वर एवास्तु । वरो मे किं परैर्वरैः ॥ बंधनान्मुंच सिंचामुं । निजामृतरसै रयात् ॥ ५२ ॥ बंधमोक्षं करिष्येऽहं । सावक् सज्जस्तदा परं ॥ यदा पथिकपाथेयं । भोजनं विदधास्यति ॥ ५३ ॥ कूपे पांथः परं क्षेप्य-स्त्वयासौ लघुहस्तया ॥ तेनांधौ त्वं विनिक्षिप्तो । मया मूढधिया तदा ॥ ५४ ॥ अपराधं क्षमस्वैकं । भ्रातर्भीतिभवं

नवं ॥ उपकारपरे पुंसि । ह्यपकारो महांहसे ॥ ५५ ॥ ममोपरि प्रसादं त्वं । कृत्वा वैताढ्य-
पर्वते ॥ एहि येनावयोः सौख्यं । भवेत्त्वत्संगसंभवं ॥ ५६ ॥

सगौरवं ततो नीतो । देवदत्तो निजे गिरौ ॥ ताभ्यां प्रहृष्टचित्ताभ्या—मुपकारकृते कृती·
॥ ५७ ॥ अनविद्या मुदा विद्या—स्तस्य दत्ता अनेकशः ॥ ततो विद्याधरः सोऽभू—द्दौःस्थ्ये
दानं महत्फलं ॥ ५८ ॥ यतः—संपत्तौ नियमः शक्तौ । सहनं यौवने व्रतं ॥ दारिद्र्ये दानम·
प्यल्प—मपि लाभाय भूयसे ॥ ५९ ॥ उपायंस्त तथा कन्या । धन्या विद्याधरोद्भवाः ॥ जय-
दत्तं तदा सोऽयं । स्वपुरात्तत्र चानयत् ॥ ६० ॥ ये प्राप्य बहुधान्यं ना—कारयंति स्वपक्षिणं
॥ तेभ्यो वरो हि बलिभुक् । तदाकारणतत्परः ॥ ६१ ॥ समित्रं क्रियते यत्तद् । भोजनं पु-
ण्यकारणं ॥ तमोमयं विना तेन । कथितं शुद्धदृष्टिभिः ॥ ६२ ॥ चारणश्रमणस्तत्रा—न्यदा
कश्चिदुपागतः ॥ अवधिज्ञानवान् लब्धि—सहितः स्वहितोद्यतः ॥ ६३ ॥ जयदत्तेन संयुक्तो
। देवदत्तः सुभावभृत् ॥ ययौ मुनीश्वरं नंतुं । क्रंतुं पापभरं तथा ॥ ६४ ॥ असौ प्रदक्षिणी-
कृत्य । नमस्कृत्य च तं तदा ॥ वृत्तांतं पृष्टवान् स्वीयं । व्यंतर्या निर्मितं पुरा ॥ ६५ ॥ त-

॥४७१॥

निशम्य मुनिः प्राह । देवतेयं पुराभवे ॥ तव स्वसाभवत्किंतु । दुःशीला तेन गेहतः ॥६६॥ त्वया निष्कासिता रोषा-त्ततोऽभूत्तापसी त्वसौ ॥ तपः कृत्वा हठान्मृत्वा । व्यंतरी समजायत ॥ ६७ ॥ युग्मं ॥

तव सत्वगुणेनासौ । किंचित्कर्त्तुं शशाक न ॥ अग्राहयत्ततो भोज्यं । विद्याधर्या च तावकं ॥ ६८ ॥ अपातयत्तथा कूपे । सा त्वां त्वद्वधहेतवे ॥ पूर्ववैरं यतो जंतो-र्भवतीह भवे भवे ॥ ६९ ॥ त्वया भाग्यवशात्तत्र । शाखा लब्धा च शाखिनः ॥ पूर्वपुण्यं यतो दुःखे । साहाय्यं कुरुतेंगिनां ॥ ७० ॥ देवदत्तो गुरुं प्राह । नरको जायते कुतः ॥ गुरुर्जगाद राज्याद्भोः । स्वभावेनापि संभवेत् ॥ ७१ ॥ महापरिग्रहाज्जंतो-रारंभो भुवि जायते ॥ तस्माज्जीववधो भावी । ततो नरकसंभवः ॥७२॥ श्रुत्वा संयतवाक्यं तौ । भावनाभाविताशयौ ॥ चक्रतुर्नियमं राज्य-ग्रहणे पापनाशनं ॥ ७३ ॥ इच्छाप्रमाणं स्वीचक्रे । ताभ्यामन्यदपि स्वयं ॥ परिग्रहे नवविधे । धनधान्यादिके स्वके ॥ ७४ ॥ अपुत्रो रत्नचूडोऽथ । मृत आयुःक्षयेऽन्यदा ॥ ततो विद्याधराः प्रोचु-र्देवदत्तं कृतादराः ॥ ७५ ॥ राज्यभारं त्वमादत्स्व । सारं सारंभदेहिनां

॥ लोऽवोचन्नियमो मेऽस्ति । गुरुदत्तोऽस्य संग्रहे ॥ ७६ ॥ ततस्तैर्जयदत्तस्य । कथितं प्रथितं
हितं ॥ मन्यमानो हि तत्सर्वं । राज्यमंगीचकार सः ॥ ७७ ॥ अनिरुद्धाश्रवो जंतुः सुवृत्तोऽ-
पि जनाश्रयात ॥ त्रुडते स्तोककालेन । घटीप्रांते घटी यथा ॥ ७८ ॥
तदा स गोत्रिभी रात्रौ । मारितो घातकारिभिः ॥ जगाम नरकं घोर-मपवादं जने त-
था ॥ ७९ ॥ देवदत्तस्य नियम-पालनात्परमं सुखं ॥ बभूवेह भवेऽमुत्र । द्वादशं कल्पमाप
नः ॥ ८० ॥ सुकाष्ठः स्वल्पसंगः सन् । स्वयं तरति चापरान् ॥ सगुणांस्तारयत्येव । पोत-
वत्पिहिताश्रवः ॥ ८१ ॥ परिग्रहप्रमाणं त-त्पालनीयं परैर्नरैः ॥ पालितेऽस्मिंश्च सर्वाणि ।
पालितानि व्रतानि तैः ॥ ८२ ॥ महाव्रतानामेवात्रा-ऽपेक्षयाणुव्रतान्यहो ॥ एतानि स्युर्गृह-
स्थानां । पंचकं च दयादयः ॥ ८३ ॥ इति पंचमं व्रतं ॥ दशस्वपि सदा दिक्षु । प्रमाणं य-
द्विधीयते ॥ गुणव्रतं तत्प्रथमं । निगदंति सुमेधसः ॥ ८४ ॥ व्रतं दिग्विरतेर्लात्वा । पालयं-
तीह ये नराः ॥ स्वजीवं परजीवांश्चा-ऽवंति ते रौहिणेयवत् ॥ ८५ ॥ अंगीकृतं पुनर्ये हि ।
प्रमादाद्भ्रांततोऽथवा ॥ विराधयंति ते नाशं । तत्पितेव व्रजंति हा ॥ ८६ ॥ तथाहि—

पुरेऽत्र पोतनाभिख्ये । मृगांकमुखभूपतिः ॥ मंत्री नीतिघटस्तस्य । रोहिणी तस्य व-
ल्लभा ॥ ८७ ॥ रोहिणी गर्भिणी जाता—न्यदा नैमित्तिकं तदा ॥ सोऽपृच्छदस्याः किं भा-
वि । सोऽवदत्पुत्रसंभवः ॥ ८८ ॥ परं विंशति वर्षाणि । गुप्तं रक्ष्यः स यत्नतः ॥ अन्यथा
त्वत्कुटुंबस्य । क्षयमेष विधास्यति ॥ ८९ ॥ ततः परं वरं सोऽयं । करिष्यति न संशयः ॥
यथोचितमिति ज्ञात्वा । कार्यं कार्यं त्वयानघ ॥ ९० ॥ धीसखस्तद्वचः श्रुत्वा । ददौ तस्मै
धनं बहु ॥ कालेन सुषुवे पुत्रं । रोहिणी स्थिरतान्विता ॥ ९१ ॥ मध्ये भूमिगृहस्यासौ । तं
मातृसहितं न्यधात् ॥ तस्याश्च भगिनी सूति—कर्म तत्र समाचरेत् ॥ ९२ ॥ सुतस्य तस्य
नो पित्रा । सुगुप्ताद्विहिताभिधा ॥ रोहिणीजननीत्वेन । रौहिणेयः परं हि सः ॥ ९३ ॥

क्रमेण वृद्धिं संप्राप । तत्रस्थः स्थविरस्ततः ॥ अध्यापयदुपाध्याय—स्तं शास्त्रनिचयं
सुधीः ॥ ९४ ॥ मंत्रिगेहसमीपेऽस्ति । रत्नमालाभिधा बुधा ॥ कन्या तयाऽऽग्रहेणासौ । पं-
डितः पृष्ट एकदा ॥ ९५ ॥ क्व यासि नित्यं सत्यं भो । वद सोऽथाभणत्तदा ॥ वृत्तांतं रौहि-
णेयस्य । पाठनादिभवं नवं ॥ ९६ ॥ सुरंगा दापिता शीघ्रं । तया बुद्धिनिधानया ॥ तथा

तत्रागता यत्र । विद्यतेऽसौ विशारदः ॥ ९७ ॥ तां दृष्ट्वा स जगौ कासि । कस्मादत्र समा-
गता ॥ मावोचद्धनदेवस्य । सुताहं कौतुकप्रिया ॥ ९८ ॥ त्वां बुधं रोहिणीपुत्रं । कलाव-
त्प्रियमादगात् ॥ को न द्रष्टुं समायाति । भूगादित्तवासगृहं ॥ ९९ ॥ तव चेत्पुरवीक्षेच्छा ।
हृदयेऽत्र प्रवर्त्तते ॥ मया सह तदागच्छ । दर्शयामि यथाखिलं ॥ १०० ॥ तया सार्द्धं ततः
सोऽपि । पुरं रात्रौ व्यलोकयत् ॥ प्रदेशेऽन्यत्र योग्येको । विद्यासिद्धोऽस्य चामिलत् ॥ १ ॥
सनयं विनयं सोऽस्य । विदधे विधिपूर्वकं ॥ ततोऽसौ हृष्टचित्तोऽभू-न्मानं हि महतां धनं ॥
॥ २ ॥ दत्ताऽमुना तदा विद्या-ऽदृश्यीकरणकारणं ॥ विद्यासौ विन[illegible] येन । मुख्योपायो नि-
गद्यते ॥ ३ ॥

अवारितगतिर्जात-स्तयासौ पाठसिद्धया ॥ मणिमंत्रौषधादीनां । प्रभावोऽचिंत्य एव
यत् ॥ ४ ॥ उदूढा धनदेवस्य । तेन पुत्री तदैकदा ॥ भूमिगृहैकदेशे च । स्थापिता स्थितिव-
र्जितं ॥ ५ ॥ नवीनं पठनं पश्चा-न्निषिद्धं तेन पाठकात् ॥ विद्यया व्यसनं ताव-द्यावन्नो व्य-
सनं परं ॥ ६ ॥ ततो विद्याबलाच्चौर्य-वृत्त्यै स चलितोऽन्यदा ॥ नैमित्तिकवचो नैवा-न्यथा

भवति देहिनां ॥ ७ ॥ मुक्त्वा गृहाणि सर्वेषां । स राजसदनं ययौ ॥ विद्याप्रभावतोऽदृष्ट-स्वरूपः सर्वतो जनैः ॥ ८ ॥ उच्छीर्षकात्खड्गरत्नं । शस्त्रिकां खेटकं तथा ॥ आदत्तौ च ततो राज्ञ । आययौ स्वगृहं पुनः ॥ ९ ॥ पिता नो वेत्ति तस्यैत-च्चरितं त्वरितं खलु ॥ यतो गूढहृदां पुंसां । ज्ञायते नो विचेष्टितं ॥ १० ॥ जागरूको नृपः सर्वं । विज्ञाते स व्यलोकयत् ॥ न ददर्श परं खड्ग-प्रमुखं तच्चतुष्टयं ॥ ११ ॥ प्राहरिकान् तदाकार्य । जगादेति नृपो रुषा ॥ अरे यूयं मम ग्रासं । सदा भक्षयथातुलं ॥ १२ ॥

स्तेनाद् भयपरित्यक्तान् । मम सर्वस्वमोषिणः ॥ न रक्षध्वं कथंकारं । सारं किं वो न वर्त्तते ॥ १३ ॥ जजल्पुस्ते ह्यदो राज्ञः । पुरतः परिमोषिणः ॥ दर्शनं नाभवद्राज-न्नस्माकं जाग्रतामपि ॥ १४ ॥ तर्हि किं कुर्महे तस्य । दस्युमुख्यस्य भूपते ॥ ततो मंत्री जगादैवं । विद्यासिद्धो ह्ययं नरः ॥ १५ ॥ पराक्रमेण नो साध्यः । किंतूपायेन सांप्रतं ॥ वस्तुचतुष्टयं स्वामिन् । चटिष्यति शये तव ॥ १६ ॥ राजा प्रोवाच हे मंत्रि-न्नुपायः कोऽत्र कथ्यतां ॥ सोऽवोचद्राजमार्गस्थः । प्रासादः कार्यतां प्रभो ॥ १७ ॥

सुता वासवदत्ता ते । स्थाप्यनां तत्र सद्मनि ॥ समेष्यतीह सिद्धोऽसौ । तव पुत्रीवशंवदः ॥ १८ ॥ स स्वरूपं छिपाप्यस्य । नैव गोपयिता रसात् ॥ ततोऽसौ प्रकटो भावी । पश्चात्सर्वं समेष्यति ॥ १९ ॥ राज्ञा तथा कृते सोऽपि । तत्र रात्रौ समाययौ ॥ तां प्रेक्ष्य मोहितश्चास्या । निजदेहमदर्शयत् ॥ २० ॥ जितानंगं च तस्यांगं । दृष्ट्वा खड्गादिवस्तु तत् ॥ सकामाजनि सा वामा । दामावलिविराजिनी ॥ २१ ॥ तया स गदितः कस्त्वं । सोऽजल्पद्धे निशास्वहो ॥ चरंति परगेहेषु । तन्मध्ये मां विचारय ॥ २२ ॥ खड्गादिकं समेतं ते । कुतः सा पुनरब्रवीत् ॥ राज्ञः समीपान्मयका । गृहीतं सोऽगदत्ततः ॥ २३ ॥ सावदत्तव का सिद्धि–र्बुद्धिर्वा विद्यतेऽमुना ॥ यथा यासि तथायासि । सर्वतोऽस्खलितो वद ॥ २४ ॥ तदातुलं कुलं स्वीयं । विद्याप्राप्तिं तथा जगौ ॥ अभ्यर्थिनः स्त्रिया को न । सर्वं गुह्यं निवेदयत् ॥ २५ ॥ मनोरंगवशात्तेन । सर्वं तस्याः समर्पितं ॥ दीपाग्निसाक्षिकं पश्चा–द्विहितं पाणिपीडनं ॥ २६ ॥ ततो भूमिगृहं गत्वा । स सुप्तः सुखनिद्रया ॥ वस्तुचतुष्टयं लात्वा । सा ययौ च नृपांतिकं ॥ २७ ॥ खड्गादिके स्वके राज्ञा । दृष्टे जगदे तदा ॥ कुतः प्राप्तं त्वया वत्से । चतु-

ष्टयमिदं वद ॥ २८ ॥ सावदद्दस्युतः सौधा—गतात्तु नृपतिर्जगौ ॥ कथं चौरोऽत्र नानीतो । ज्ञीतोवा सोऽगमत्क्वचित् ॥ २९ ॥

सा ष्वजल्पानयिष्येऽहं । त्वत्समीपं तकं पितः ॥ इत्युक्त्वा सा ययौ मंत्रि—गेहे देहेन शोभिता ॥ ३० ॥ मंत्रिणोऽग्रे तया प्रोचे । मत्पिता तव नंदनं ॥ आकारयति तत् श्रुत्वा । सोऽगृणन्मे न नंदनः ॥ ३१ ॥ ततस्तया स्ववृत्तांतो । गदितो रात्रिसंभवः ॥ संभ्रांतः सोऽन्नवत् श्रुत्वा । गत्वा पुत्रं च पृष्टवान् ॥ ३२ ॥ तेनापि सत्यमेवैत—त्कथितं स्वपितुः पुरः ॥ कुमारीसहितो मंत्री । ततोऽगाद्राजमंदिरं ॥ ३३ ॥ अस्य पुत्रेण ते ताता—ऽदृशीकरणविद्यया ॥ खड्गादिकं गृहीतं सा । जगादेति नृपाग्रतः ॥ ३४ ॥ तत् श्रुत्वा नृपतिः प्राह । धीसखं शरणं गतं ॥ त्वत्सुतेन कृतं स्तैन्यं । शरणं मरणं त्वतः ॥ ३५ ॥ तं नत्वाह स जामाता । विनाशार्हो न जातुचित् ॥ पुत्री पृष्टा नृपेणाथ । सा जगाद यथास्थितं ॥ ३६ ॥ पुनर्निवेदितं राज्ञा । तथाप्यत्र समानय ॥ नैमित्तिकं वचः पश्चा—न्मंत्रिणास्य प्रकाशितं ॥ ३७ ॥ पूर्णेऽथ समये जाते । कृतो भूमिगृहाद्बहिः ॥ रौहिणेयो महाभूत्या । प्रययौ नृपसन्निधौ ॥

॥ ३८ ॥ राज्ञा च तस्य राज्यार्द्धं । दत्तं जामातृमोदतः ॥ ततो नैमित्तिकस्तेन । मानितो
बहुदानतः ॥ ३९ ॥ मंत्रिणा पुत्रयुक्तेन । गुरूणां पार्श्वतोऽन्यदा ॥ अंगीकृतं दिग्विरति–व्रतं
जीवदयान्वितं ॥ ४० ॥

एकदा वैरिसीमाल–भूपालैः सार्द्धमुच्चकैः ॥ युद्धं जातं ततो नष्टा । रौहिणेयेन ते जि-
ताः ॥ ४१ ॥ स पितृप्रेरितः पश्चा–द्धावे तान्प्रति प्रभुः ॥ गते घनतरे मार्गे । बभाण जन-
कं स्वयं ॥ ४२ ॥ आवां स्वकीयपुरतः । कियन्मार्गमिहागतौ ॥ सोऽवोचद्योजनशतं । तत्रै-
वास्मौ ततः स्थितः ॥ ४३ ॥ पिता प्रोवाच हे वत्स । कथं त्वं स्थितवानिह ॥ स जगौ दि-
ग्विरत्याख्य–व्रतभंगभयात्पितः ॥ ४४ ॥ आचख्यौ सविता वत्स । सुखे नियमपालनं ॥ यु-
ज्यते कारणे किंतु । साकारं तन्निगद्यते ॥ ४५ ॥ सोऽजल्पज्जनकाकाराः । स्मृताः परवशे
दिशि ॥ स्ववशे पुंसि नो युक्त । आद्यसंहनने तथा ॥ ४६ ॥ पिता प्रोवाच वत्सामी । मुच्यं-
ते नैव वैरिणः ॥ स जगौ नियमभंगं । न करिष्ये कदाचन ॥ ४७ ॥ क्रूरे तदाग्रहे प्राप्ते । क्रू-
राऽग्नौ यत्र नाभवत् ॥ ज्योतिःशास्त्रविरुद्धं तत् । सौम्य ईदृग्भवेदथ ॥ ४८ ॥ किंचित्सैन्यं

पिता लात्वा । वैरिपृष्टे ततोऽचलत् ॥ सुतेन वार्यमाणोऽपि । मूढवीवैरसंयुतः ॥ ४९ ॥ तं दृ-
ष्ट्वा वैरिभिर्ज्ञातं । तुच्छसैन्ययुतो ह्ययं ॥ अस्माकं किं वणिक्कर्ता । ततस्तैर्ववले बलात् ॥ ५० ॥
रणे तैर्निहतो मंत्री । मरणे कृतनिश्चयैः ॥ नीतिधर्मद्विषां यस्मा–ज्जायते न शुभं नृणां ॥
॥ ५१ ॥ यतः—भीरुः पलायमानो–ऽप्यनुगंतव्यो बुधैर्न यत् ॥ कदाचिच्छूरतामेति । मर-
णे कृतनिश्चयः ॥ ५२ ॥

न निमित्तद्विषां क्षेमो । नायुर्वैद्यकविद्विषां ॥ न श्रीर्नीतिद्विषामेक–मपि धर्मद्विषां न
हि ॥ ५३ ॥ रौहिणेयोऽपि तत् श्रुत्वा । वैराग्यं परमं ययौ ॥ ततो राज्ये न्यस्य सुतं । स्व-
यं दीक्षामुपाददे ॥ ५४ ॥ प्रतिपाल्य व्रतं प्रांते–ऽनशनं प्रतिपद्य च ॥ स जगामाच्युते क-
ल्पे । ह्यनल्पे सुखसंपदां । ५५ ॥ पालितं रौहिणेयेन । ततोऽसौ सुखभागभूत् ॥ इदं व्रतं
च तत्पिता । भग्नं तेन हतः परैः ॥ ५६ ॥ असौ दोषाकरो यच्च । रौहिणेयविवर्जितः ॥ तस्म-
सा ग्रस्तदेहोऽभू–त्तदा तत्सांप्रतं किल ॥ ५७ ॥ इहामुत्र पराभूति–र्द्वयोरासीत्ततो ह्यदः ॥
षष्ठं शिष्टं व्रतं पाल्यं । कष्टं नो येन जायते ॥ ५८ ॥ इति षष्ठं व्रतं ॥ वर्ज्यावर्जनमध्येषु ।

संख्या या क्रियते जनैः ॥ भोगोपभोगरूपेषु । द्वितीयं तद्गुणव्रतं ॥ ५९ ॥ व्रतं भोगोपभोगाख्यं । ये नरा धर्मतत्पराः ॥ स्वर्णशेखरवन्नित्य-मंगीकृत्य धरंत्यहो ॥ ६० ॥ ते लभंते चिरं त्वायुः । परत्र सुगतिं पुनः ॥ महेंद्रवन्महीपीठे । विपरीतं विराधकाः ॥ ६१ ॥ युग्मं ॥ तथाहि—चंदनाख्यपुरे राजा । शंखनामा पुराजनि ॥ शंखोज्ज्वलयशाः श्रेष्ठी । यशोधवल इत्यभूत् ॥ ६२ ॥ अभूतां तनयौ तस्य । महेंद्रस्वर्णशेखरौ ॥ संप्राप्तयौवनावेतौ । पिता पप्रच्छ चैकदा ॥ ६३ ॥ युवां कुटुंबनिर्वाहं । कथंकारं करिष्यथः ॥ तदाकर्ण्य वृहत्पुत्रः । पवित्रः पितरं जगौ ॥ ६४ ॥ व्यवसायमहं कृत्वा । गत्वा देशांतरं वरं ॥ योगक्षेमं कुटुंबस्य । करिष्ये स्वकुलोचितं ॥ ६५ ॥ द्वितीयेन पुनः प्रोक्तं । राजपुत्रीद्वयं स्वयं ॥ परिणीय शंखराजं । निर्वास्य च पुराद्बहिः ॥ ६६ ॥ नृपतीभूय निर्वाहं । कुटुंबस्यापरस्य च ॥ विधास्याम्यत्र का चिंता । तव तात प्रवर्त्तते ॥ ६७ ॥ युग्मं ॥ श्रेष्ठी तद्वचनं श्रुत्वा । रुष्टोऽवोचदमंगलं ॥ अरे वाचाट प्रत्यक्षं । किं जल्पस्यसमंजसं ॥ ६८ ॥ त्यज त्वं मामकं गेहं । दंडं यास्यति नेऽन्यथा ॥ दुःखं लात्वा याहि दूरे—ऽस्माकं पाहि कुलं तथा ॥ ६९ ॥ इत्यादि

तर्जयित्वा स । पित्रा निष्कासितो गृहात् ॥ गतो नागपुरं नाम । ततः सुमतसंगतं ॥ ७० ॥
तत्रासौ लेखशालायां । प्रणिपत्य च पाठकं ॥ चतुर्दशस्फुरद्विद्या—विशारदमिदं जगौ ॥७१॥
अध्यापयत मां काम—मुपाध्यायाः कलाः कलाः ॥ तन्निशम्य जगौ सोऽपि । वत्साधीष्व म-
मांतिके ॥ ७२ ॥

प्रज्ञाधिकं तकं सोऽपि । पाठयामास सादरं ॥ तन्निरीक्ष्य परे लेख—शालिनो मत्सरं द-
धुः ॥ ७३ ॥ स तन्मानसतोषाय । न करोति तदादरं ॥ लोकेऽपि श्रूयते यस्मा—त्समवायो
जयावहः ॥ ७४ ॥ लक्ष्मीपती राजसुत—स्तत्र विद्याः सदाभ्यसेत् ॥ तदंतिकमसौ गत्वा ।
शृणोति विविधं श्रुतं ॥७५॥ लिपयः सकलास्तेन । देशभाषा अनेकशः ॥ विज्ञाता विश्वविख्या-
ताः । प्रसादात्किं गुरोर्न हि ॥ ७६ ॥ इतश्च मगधाभिख्ये । देशे चंडो नराधिपः ॥ मृणालि-
नी च तत्पुत्री । धारिणीकुक्षिसंभवा ॥ ७७ ॥ प्राप्ता सा यौवनं किंतु । परस्तादृग्विधो वरः
॥ वरः क्षत्रियसंजातो । विख्यातो नोपलभ्यते ॥ ७८ ॥ तेन चिंतातुरो जातो । जाता जा-
तापि तत्प्रदा ॥ तत्प्रेक्ष्य दयितावोचत् । स्वामिन् बाधास्ति का वद ॥ ७९ ॥ तदाकर्ण्य नृ-

पः प्राह । सुता मे सततं मता ॥ परं वरं न पश्यामि । योग्यमस्यास्ततोऽसुखं ॥ ७० ॥ हृ-
दि दध्यौ तदा सेति । चंद्रस्यादो मृणालिनी ॥ इष्टाश्रवास्य सवितु-र्युक्तमेतत्प्रभावतः ॥७१॥
सावक् सचिवपुत्राय । दीयते स्थीयते सुखं ॥ यतोऽसौ सुकुमारत्वा-द्बहिर्नायाति कर्हिचित्
॥ ७२ ॥ तत् श्रुत्वा नृप आचख्यौ । मंत्रिणंप्रति चैकदा ॥ विवादस्त्वत्सुतेनात्र । मत्सुताया
विधीयते ॥ ७३ ॥ ततो विमर्शयामास । मंत्री मनसि शंकितः ॥ कुष्टी मे तनयस्तेन । ति-
ष्ठति स्तेनवद्गृहः ॥ ७४ ॥ लोकमध्ये मया वार्त्ता । त्वन्यथा सर्वथा कृता ॥ सांप्रतं मे समा-
यातं । संकटं विकटं नृपात् ॥ ७५ ॥

निवेदयामि सत्यं चे-दधुनैव तदा कृतिः ॥ ततः कालविलंबार्थं । मन्येऽहं नृपतेर्वचः ॥
॥ ७६ ॥ नृपोदितमतस्तेनां-गीकृतं सुकृतं विना ॥ सद्बुद्धिर्जायते सा न । मोक्षः स्यात्संक-
टाद्यथा ॥ ७७ ॥ गेहमागत्य पत्न्यै स । तत्स्वरूपं न्यवेदयत् ॥ सा जगाद विरूपं हा । त्व-
वता नाथ निर्मितं ॥ ७८ ॥ सोऽवदन्मा विषादं त्वं । कुरु दुष्करकार्यगं ॥ गोत्रदेवीं समारा-
ध्य । करिष्ये सर्वमुत्तमं ॥ ७९ ॥ विधिनाराधिता सावक् । वरे नागपुरे पुरे ॥ वनमध्ये कु-

तत्र प्रेष्यः पुनस्त्वया ॥
मारो यो । जनान् प्रेष्य तमानय ॥ ९० ॥ विवाह्य कुमरीं तेन । तत्पुरं प्रहिता न-
इंक्ते कियत्कालं । त्वं कालं नैव पश्यसि ॥ ९१ ॥ तद्वाक्यवशतस्तेन । तुरगारूढ-मागुः स्व-
राः ॥ तस्मिन्नवसरे सोऽपि । क्रीमया वनमाययौ ॥ ९२ ॥ कृत्वा तं कुमारं कृतशृंगारं । वि-
स्थानमाशु ते ॥ भाग्योदये नृणां येन । सर्वं भवति सुंदरं ॥ ९३ ॥ धवलं दीयमाने
धाय विधिना स च ॥ हस्तिस्कंधे तथारोप्य । निन्ये नृपतिमंदिरं ॥ ९४ ॥ तस्मिन्नवस-
र । नृपपुत्र्याः करग्रहं ॥ महोत्सवेन महता । कारितः समये शुभे ॥ ९५ ॥ पूर्वं
र तेन । नृपपुत्रीकराङ्गरात् ॥ मुद्रारत्नं समाकृष्य । निजांगुल्यां निचिक्षिपे ॥ ९६ ॥
विवाहकार्येऽसौ । मुक्त्वा नागपुरं पुनः ॥ आनीय तन्नरैर्येन । धूर्ता आत्मीयकार्यगाः ॥ ९७ ॥
ततश्चिंतापरः सोऽनू-त्सुखं न लभते क्वचित् ॥ यत्र तत्रापि शयनं । भोजनं च करोत्यसौ
॥ ९८ ॥ देवकुल्यां प्रसुप्तः सो-ऽन्यदा शुश्राव सद्वचः ॥ इति प्रीतिकरं लोक-मुखात्सुखनिबं-
धनं ॥ ९९ ॥ विद्यते चंद्रराट् श्वेत-वाजी मगधमंडले ॥ तेन पत्राणि लब्धानि । धन्यमा-
ने सरोवरे ॥ ४०० ॥ परं पत्रलिपिं कोऽपि । न वेत्ति भुवि सांप्रतं ॥ वादयेत्पटहं तेन । न-

गेर चेति पुरुषैः ॥ १ ॥ पत्राणि वाचयेद्योत्रा–ऽमूनि विद्वच्छिरोमणिः ॥ तस्मै राजा निजां
पुत्री–मर्द्धराज्यं च यच्छति ॥ २ ॥ पस्पर्श पाणिना नैव । परं तं पटहं पटुः ॥ कोऽपि को-
विदकोटीर–हीरकान्तस्तु मानवः ॥ ३ ॥ तत् श्रुत्वा प्रययौ तत्र । तं चासौ पाणिनास्पृशत्
॥ ततो राजकुले नीतो । विनीतो नृपपूरुषैः ॥ ४ ॥ सन्मान्य राज्ञा पत्राणि । दर्शितान्यस्य
संसदि ॥ सोऽपि स्राक् वाचयामास । स्वनामेव विशारदः ॥ ५ ॥ तेष्विदं लिखितं चास्त्य-
तः स्थानाद्दशहस्तके ॥ अधश्चतुर्दश स्वर्ण–कोटयः संति भूतले ॥ ६ ॥ राज्ञा विलोकिते ल-
ब्धा । निधयः सुधियस्ततः ॥ जहर्षुर्नृपतिश्चापि । प्रतिपन्नं तदाकरोत् ॥ ७ ॥ सारिभिः क्री-
डितुं लग्नो । गवाक्षस्थः स एकदा ॥ तया कनकमंजर्या । राजपुत्र्या समं मुदा ॥ ८ ॥ सा
वृद्धनागिनीनाम–सहितां मुद्रिकां करे ॥ पत्युर्विलोक्य साश्चर्या । तां लात्वागान्नृपांतिकं ॥
॥ ९ ॥ राज्ञोऽग्रे सा तया मुक्ता । चमच्चक्रे नृपोऽपि तां ॥ दृष्ट्वा कुतस्त्वयात्तेति । लघु पु-
त्री ततो जगौ ॥ १० ॥ सावोचत्तव जामातुः । करात्तात मया हृता ॥ आकारिता वृद्धपुत्री
। तदा संगोप्य तां क्वचित् ॥ ११ ॥ कृशांगी सागता तत्र । नमस्कृत्य पितुःपदौ ॥ सशोकं

पुरतो राज्ञ । उपविष्टासितानना ॥ १२ ॥ पृष्टा ततो नृपेणासौ । वत्से किं ते दशेदृशी ॥ मंदं मंदमथावादी–त्सापि स्वं जनकं तदा ॥ १३ ॥

येनाहं परिणीता प्राक् । सोऽन्यो नो मंत्रिनंदनः ॥ गृहीतमूर्मिकारत्नं । तेन मत्करतस्तदा ॥ १४ ॥ कदाप्यस्य करे तन्न । दृश्यते दृष्टिसौख्यदं ॥ अतस्तं भ्रातृवन्मन्ये । तेन दुर्बलता मम ॥ १५ ॥ स्वर्णशेखरमाकार्या–ऽन्यन्नरपतिस्त्विति ॥ ऊर्मिका चटिता कुत्र । तव हस्ते विशारद ॥ १६ ॥ ततः स सकलं पूर्वं । वृत्तांतं नृपतेः पुरः ॥ जगाद वादरहित–स्तदा राजा मुदं दधौ ॥ १७ ॥ मंत्री पुत्रयुतः शीघ्रं । भूभृताकारितस्ततः ॥ मक्षिकापुंजकलितं । तथा मिलितनाशिकं ॥ १८ ॥ कुष्टरोगग्रहग्रस्तं । प्रशस्तजननिंदितं ॥ तत्सुतं नृपतिः प्रेक्ष्य । तं जगौ गूढकोपभृत् ॥ १९ ॥ युग्मं ॥ इदृशी किमवस्था नो–स्तव पुत्रस्य दृश्यते ॥ विवाहसमयात्सोऽवक् । मत्पुत्रोऽन्नवदीदृशः ॥ २० ॥ विवाहकाले स सर्वै–र्दृष्टः शिष्टतनुः पुनः ॥ अधुनास्य परावर्त्तो । जातस्तव सुतावशात् ॥ २१ ॥ नृपपुत्री तदाकर्ण्या–त्रादीत्स्वकुलदेवतां ॥ एतच्चेद्वचनं सत्यं । तदा मां कुरु चेदृशीं ॥२२॥ मृषावादी यदा स स्या–

तदास्य शतधा शिरः ॥ स्फुटताद्देवि सर्वेषां । पश्यतां पापकारिणः ॥ २३ ॥ ततोऽस्य शतखंडं स्राक् । सतुंडं च शिरोऽभवत् ॥ सतीनां वचनं सद्यः । सत्यं संजायते भुवि ॥ ॥ २४ ॥ मृतोऽसौ दुर्गतिं लेभे । तद्वर्गो निजमंडलात् ॥ राज्ञा निर्वासितः सर्व—स्तत्कालफलदा नृपाः ॥ २५ ॥ ततो मृणालिनी दर्पा—न्नेजे निजपतिं हितं ॥ पत्नीद्वययुतः सोऽपि । भुंक्ते वैषयिकं सुखं ॥ २६ ॥

अन्यदासौ नृपादेशा—च्छंखं साधयितुं नृपं ॥ अचालीत्सैन्यकलितो । मिलितो मंत्रिसत्तमैः ॥ २७ ॥ आगच्छंतमथो ज्ञात्वा । तं तदा स्वर्णशेखरं ॥ नष्टः शंखमहीपाल—स्त्यक्त्वा स्वं चंदनं पुरं ॥ २८ ॥ प्रवेशः पुरमध्येऽस्य । महोत्सवपुरस्सरं ॥ अस्तोकैर्विदधे लोकैः । पुण्यात्सर्वत्र मान्यता ॥ २९ ॥ आयाते जनतां यत्र । पार्थिवे स्वर्णशेखरे ॥ शंखः कंकणतां विभ्रत । प्रजद्दौ युक्तिरेव सा ॥ ३० ॥ वनवासे हि शंखस्य । मा भूयाद्गुणसंग्रहः ॥ तत्रापि जीवनं यत्र । तदाश्चर्यकरं परं ॥ ३१ ॥ स्वर्णस्थालं सरत्नं स । प्राभृतं पुरतोऽद्भुतं ॥ मुक्त्वा श्रेष्ठी यशोनामा । ननाम ससुतोऽथ तं ॥ ३२ ॥ स्वर्णशेखरराजा तं । पप्रच्छ स्वच्छमानसः ॥

नपलक्षयसि भो श्रेष्ठिन् । सोऽवोचत्त्वां न वेत्ति कः ॥ ३३ ॥ सोऽवदद्व्यवहारेण । व्यवहारि-
न् हि वेत्सि मां ॥ परं निजसुतत्वेन । न सुतं स्वर्णशेखरं ॥ ३४ ॥ तदाकर्ण्य तदा श्रेष्ठी ।
चमच्चक्रे सुतान्वितः ॥ तथापि मौनमालंब्य । तस्थौ शंकितमानसः ॥ ३५ ॥ ततश्चसत्कृतस्या-
स्य । निजवृत्तांतमादितः ॥ भूपतिः कथयामास । भाग्यभारभवं नवं ॥ ३६ ॥ प्रधानं ति-
दधे ज्येष्ठ-बांधवं भूपतिस्तदा ॥ श्रेष्ठिपदे च पितरं । स्थापयामास मास्पदं ॥ ३७ ॥
भ्राता सहान्यदा भूपो । नंदनोद्यानसंस्थितं ॥ धर्मघोषाभिधं सूरिं । नंतुं भावयुतो य-
यौ ॥ ३८ ॥ गुरुभिर्देशना दत्ता । द्वादशव्रतसंभवा ॥ वर्णितं तु विशेषेण । व्रतं भोगोपभो-
गजं ॥ ३९ ॥ अंगीकृते व्रतेऽमुष्मिन् । राजन् वर्ज्याणि यत्नतः ॥ द्वाविंशतिरभक्ष्याणि ।
मद्यादीनि विवेकिभिः ॥४०॥ अनंतकाया द्वात्रिंश-त्त्याज्याः कंदादयो भृशं ॥ जंतुयुक्तं फलं
पत्रं । पुष्पं धान्यं च वर्जयेत् ॥ ४१ ॥ अंगारकर्मप्रभृति-खरकर्माणि दूरतः पंचदशापि हेया-
नि । पापमूलानि पंडितैः ॥ ४२ ॥ तन्निशम्य नृपो भ्रातृ-युतोऽदो व्रतमुच्चकैः ॥ अंगीचका-
र संसार-सारं धर्मं दधन् हृदि ॥ ४३ ॥ वसंतसमये जाते । स बंधुसहितोऽन्यदा ॥ क्रीडा-

श्च काननेऽगत्र–दतुच्छपरिवारयुक् ॥ ४४ ॥

फलानि वनपालेन । ढौकितानि नृपाग्रतः ॥ दृष्ट्वा तानि नृपः प्राहा–ऽमीषां नाम कि-
मात्र जोः ॥ ४५ ॥ मालिकोऽथावदद्राजन् । नामैतेषां न वेद्म्यहं ॥ अपूर्वाणि मनोज्ञानि ।
विलोक्यानीतवानिह ॥ ४६ ॥ राजा जगाद नामूनि । तर्हि जोक्ष्ये कदाचन ॥ यतोऽज्ञात-
फलास्वाद–नियमो मे प्रवर्त्तते ॥ ४७ ॥ मर्हेडेण पुनस्तानि । जक्षितानि रसार्थिना ॥ वि-
षवृक्षफलैः प्राप । पंचत्वं स क्षणादपि ॥ ४८ ॥ मृत्वा स व्यंतरो जातो । नृपतिः स्वर्णशे-
खरः ॥ तद्विलोक्य च वैराग्या–त्सुतं राज्ये न्यवीविशत् ॥ ४९ ॥ यशोधरगुरोरंते । स्वयं
दीक्षामुपाददे ॥ मृत्वा चायुःक्षये प्रापो–परिग्रैवेयकं च सः ॥ ५० ॥ युग्मं ॥ इत्थं जोगोप-
जोगस्य । पालनापालनादराः ॥ नरा जवंति संसारे । सुखदुःखधरा इह ॥ ५१ ॥ इति सप्त-
मं व्रतं ॥ अर्थं विना जनो येन । दंड्यते कर्मजूभुजा ॥ धर्मद्व्यापहारेणा–नर्थदंडः स की-
र्त्तितः ॥ ५२ ॥ अजक्षितेऽत्र पानीय–रसवद्दुष्पुरं त्वमुं ॥ ज्ञात्वा वर्ज्यं हि येन स्यात् । तृ-
तीयं तद्गुणव्रतं ॥ ५३ ॥ त्यजंत्यनर्थदंडं ये । वीरसेन इवावनौ ॥ ते सर्वमान्या धन्याः स्युः

। पापकर्मविवर्जिताः ॥ ५४ ॥ कूटमंत्रादिभिस्तं ये । कुर्वंति क्लिष्टबुद्धयः ॥ ते लभंते महद्दुःखं । पद्मसेनवदुच्चकैः ॥ ५५ ॥ तथाहि—

नगरे मलयाभिख्ये । विमलोऽजनि भूपतिः ॥ वीरसेनस्तत्रा श्रेष्टी । तस्य वीरमती प्रिया ॥ ५६ ॥ तत्कुक्षिजनितः पद्म—सेनः सूनुः किलाभवत् ॥ कूटबुद्धिर्मंत्रयंत्र—प्रयोगविहितादरः ॥ ५७ ॥ तस्थुस्तद्यानशालायां । श्रुतसागरसूरयः ॥ अन्यदा पुण्यदायिन्यां । श्रुतसागरपारगाः ॥ ५८ ॥ वीरसेनयुतः पद्म—सेनः कृतनमस्कृतिः ॥ गुरूणां पुरतस्तस्था—वुचितस्थानकेंतिके ॥ ५९ । तदागाद्व्यंतरः कोऽपि । प्रत्यक्षं सूरिगोचरे ॥ तमुद्दिश्योपदेशं स । सूरिराट् प्रददौ हितं ॥ ६० ॥ निरर्थकं त्वं किं पाप—मुपार्जयसि निर्जर ॥ सार्थकं जीवघातं नो । कुर्वंति विबुधा जनाः ॥ ६१ ॥ स्वार्थसिद्धिं विना त्वं यद् । विदधासि न तद्वरं ॥ श्रेष्टी प्राहोपदेशं भोः । कस्य यच्छथ सूरयः ॥ ६२ ॥ व्यंतरस्याहुराचार्याः । स जगौ क्वास्ति स प्रभो ॥ तेऽवोचंस्तव पुत्रस्य । वामे भागे प्रवर्त्तते ॥ ६३ ॥ वीरसेनोऽवदत्तर्हि । किमस्माभिर्नदृश्यते ॥ भवादृशां गुरुः प्राह । न भवेद् दृष्टिगः स हि ॥ ६४॥ श्रेष्टी जगावने-

नेह । कोऽनर्थो विहितोऽहितः ॥ अजल्पाकुरुरेतस्या–कर्णयानर्थनिर्णयं ॥ ६५ ॥
विजयाख्ये पुरे राज–न्नस्ति राजारिमर्दनः ॥ मंत्री सुबुद्धिनामास्य । पंचास्यसमविक्र-
मः ॥ ६६ ॥ विजयो नाम पुत्रोऽस्य । राज्ञः संसदि चान्यदा ॥ कोऽप्याययौ निमित्तज्ञः । कृ-
तज्ञः पुण्यभाजनं ॥ ६७ ॥ भूपस्याशीर्वचः प्रोच्यो–पविष्टो विष्टरेऽथ सः ॥ उपढौक्य फलं
किंचि–द्राजा प्रोवाच तंप्रति ॥ ६८ ॥ निमित्तज्ञ निमित्तं किं । त्वं वेत्सि वद सांप्रतं ॥ भू-
तभाविभवद्भावान् । वेद्मि सोऽप्यवदत्पुनः ॥ ६९ ॥ बभाषे भूपतिर्भूत–भवभव्यां किं प्रयोज-
नं ॥ यदार्थ भाविनं कंचि–द्वद विद्वच्छिरोमणे ॥ ७० ॥ मंत्रिणः सकुटुंबस्य । स जगौ सप्त-
मे दिने ॥ क्षयो भविष्यति स्वामिन् । राज्ञोक्तं कोऽत्र प्रत्ययः ॥ ७१ ॥ सोऽगदत्सांप्रतं ह-
स्ती । स्तंभमुन्मूल्य चेदिह ॥ समेति सत्यवाणी मे । तदा ज्ञेया धराधिप ॥ ७२ ॥ एवं प्र-
वदतस्तस्य । समागात्स मतंगजः ॥ तं दृष्ट्वा विषवादं राट् । प्राप शापयुतो यथा ॥ ७३ ॥
तादृशं भूपतिं वीक्ष्य । मंत्री प्रोवाच किं हृदि ॥ धार्यते दुःखमीशस्य । करिष्येऽहं प्रतिक्रि-
यां ॥ ७४ ॥ नैमित्तिकं गृहे नीत्वा । सोऽपृच्छत्केन हेतुना ॥ कुलस्य मे क्षयो भावी । सोऽव-

दत्तव पुत्रतः ॥ ७५ ॥

श्रेष्ठ्युवाच स किं कर्त्ता । येन भावी कुलक्षयः ॥ सोऽवग् राजगृहेऽन्यायं । करिष्यति ततः क्षतिः ॥ ७६ ॥ तं सत्कृत्य ततो मंत्री–त्येकांते पुत्रमब्रवीत् ॥ वत्स त्वत्तः कुटुंबस्य । क्षयो नूनं भविष्यति ॥ ७७ ॥ तेनोक्तं तर्हि ताताहं । मरिष्यामि स्वयं ध्रुवं ॥ संहारं स्वकुटुंबस्य । करिष्ये नैव कर्हिचित् ॥ ७८ ॥ मंत्री बभाषे त्वन्मृत्यो–श्चेत्कुटुंबं हि जीवति ॥ तदा मे धीसखत्वं क्व । विचारचतुराशयं ॥ ७९ ॥ त्वां तथा स्वं कुटुंबं चे–ज्जीवयामि तदा मम ॥ बुद्धिः सिद्धिकरी ज्ञेया । परं त्वं मद्वचः कुरु ॥ ८० ॥ आह युष्मद्वचोऽस्मौ किं । सोऽवादीत्प्रविशाधुना ॥ मंजुषांतर्दशा ते स्या–त्कुटुंबस्यापि जीवितं ॥ ८१ ॥ ओमित्युक्ते ततस्तेन । पक्वान्नं पानकं तथा ॥ मध्ये प्रक्षिप्य पुत्रश्च । स्थापितो निरुपद्रवं ॥ ८२ ॥ तां च राजसभां नीत्वा । कथयामास भूपतेः ॥ नैमित्तिकवचः स्वामिन् । चेत्सत्यं जायते तदा ॥ ॥ ८३ ॥ अतस्त्वं मम सर्वस्वं । ग्राह्यं देयं विपर्यये ॥ परं स्वदृष्टौ स्थाप्यैषा । यावत् स दिवसो भवेत् ॥ ८४ ॥



॥४९२॥

कुंचिका नृपतेर्दत्ता । राज्ञापि सा सुर-
इत्युक्त्वा नृपदृष्टौ सा । मुक्ता तालकमंयुना ॥ ~~~ ~~~ ~~~
क्षिता ॥ ८५ ॥ ततो मंत्री गृहे गत्वा । गेहं सुस्थं तदाकरोत् ॥ तथा पंचनमस्कार-ध्यान-
माधत्त मानसे ॥ ८६ ॥ सप्तमे दिवसे मंत्रि-पुत्रो राजसुतागृहं ॥ जगाम नृपपुत्रीं च । प्रा-
र्थयामास सादरं ॥ ८७ ॥ तं नेच्छति यदा सा तु । तदा तच्छेणिमच्छिदत् ॥ ततो बुंबारवं चक्रे
। नृपपुत्री भयाकुला ॥ ८८ ॥ सुभटा धाविताः सद्यो । वेणियुक्तो गतस्ततः ॥ नष्ट्वा मंत्रि-
गृहे सोऽपि । योधा राज्ञोऽग्र तज्जगुः ॥ ८९ ॥ सेनापतिं चंडसेनं । प्राहिणोत्पृथिवीपतिः ॥
सकुटुंबमंत्रिपुत्र-वधार्थं पृतनान्वितं ॥ ९० ॥ दत्वा प्रतोलीं मंत्र्याह । सेनान्यंप्रति सादरं
॥ कल्पिता वः पुरा प्राणा । नैमित्तिकवचःश्रुतेः ॥ ९१ ॥ परं राजसमीपे मां । नयध्वं च
यथाधुना ॥ एकवारं सुधासारं । विज्ञप्य नृपमादरात् ॥ ९२ ॥ मंजुषामगतं किंतु । रत्नादि-
द्रविणं तदा ॥ अर्पयामि स्वयं राज्ञे । परीक्षापूर्वकं स्वकं ॥ ९३ ॥
अनायासेन कर्त्तव्य-मिदं पश्चादपि प्रगे ॥ सानुमत्खननं त्वेत-दाखोर्वधकृतेऽन्यथा ॥
॥ ९४ ॥ तदाकर्ण्य नृपस्याग्रे । कथितं तन्निवेदितं ॥ राज्ञा चाकारितो मंत्री । मंजूषोद्घाटि-

॥ ४५१ ॥

ता तथा ॥ ९५ ॥ मध्ये विलोकयेद्याव—त्तावत्सचिवनंदनं ॥ सवेणिवामपाणिं स । क्षुरिका-
युतदक्षिणं ॥ ९६ ॥ तं वीक्ष्य विस्मयापन्नो । नृपतिर्मंत्रिणं जगौ ॥ किमेतदिति सोऽप्या-
ख्य—द्देव मद्बुद्धिकल्पितं ॥ ९७ ॥ युग्मं ॥ राजावदत्केशपाश—स्तर्ह्येतस्य करे कथं ॥ सोऽ-
जल्पद्व्यंतरकृतं । चेष्टितं विद्धि नूपते ॥ ९८ ॥ तावता व्यंतरः सोऽपि । गतो गगनवर्त्मना
॥ क्षुरिकावेणिसंयुक्तो—ऽट्टट्टहास्यपरः सुरः ॥ ९९ ॥ सुतामाहूय राज्ञा सा । पृष्टा किं तेऽ-
धुनाजनि ॥ साह तत्कृतसंबंधं । यथादृष्टं जनैस्तथा ॥ ५०० ॥ सचिवस्य ततो मानं । द-
दौ पुत्रयुतस्य राट् ॥ स व्यंतर इहायातो—ऽधुना तेनास्य कथ्यते ॥ १ ॥ विधेयोऽनर्थदंडो
नो—ऽनर्थपापप्रदायकः ॥ तत् श्रुत्वा व्यंतरो बुद्धः । श्रेष्ठिसुतयुतश्च सः ॥ २ ॥ त्यागं सोऽ-
नर्थदंडस्य । कृत्वागाद्व्यंतरः क्वचित् ॥ वीरसेनपद्मसेनौ । गुरुमूचतुरित्यथ ॥ ३ ॥ आवयो-
रप्यदो देहि । व्रतं सुव्रतसंयुत ॥ तत् श्रुत्वा सद्गुरुः प्राह । दुष्करं युवयोरिदं ॥ ४ ॥ गृही
गृहीते येनास्मि—न्नपध्यानं करोति न ॥ पापकर्मोपदेशं च । हिंसाकृदर्पणं तथा ॥ ६ ॥ प्र-
मादपरिसेवां चौ—षधमंत्रादिजल्पनं ॥ आशातना देवगुर्वो—रतिचारान् पुनः सदा ॥ ७ ॥

तदाकर्ण्य जगौ श्रेष्ठी । यथाशक्त्यास्य पालनं ॥ पूज्यादेशात्करिष्येऽहं । ततोऽस्मै तद्द-
दौ गुरुः ॥ ८ ॥ पद्मसेनो भद्रभावः । पृष्टलग्नः परं पितुः ॥ अंगीचकार तद्बाह्य—वृत्त्या श्रु-
त्वा गुरोर्वचः ॥ ९ ॥ अन्यदा तत्र नगरे । धूर्त्त एकः समागमत् ॥ मंत्रयंत्रादिना लोकान् ।
वंचयामास सादरं ॥ १० ॥ पद्मसेनोऽपि तत्सेवां । विधत्तेऽहर्निशं रसात् ॥ पित्रा ततोऽनु-
शिष्टोऽसौ । त्रिशिष्टोचितभाषया ॥ ११ ॥ मायावी वंचनासक्तो । भक्तोऽसौ दुष्टलिंगिषु ॥
अतोऽस्य सर्वथा संगः । करणीयः कदापि न ॥ १२ ॥ विशेषान्मंत्रयंत्रार्थं । नैव कार्यः क-
दाचन ॥ अनर्थदंडविरतै—र्निरतैर्धर्मकर्मणि ॥ १३ ॥ निवारितोऽपि पित्रेत्थं । सविचारवचश्च-
यैः ॥ न जहौ संगतिं तस्य । पद्मसेनः कदाचन ॥ १४ ॥ एकदा मिलितस्तस्य । रत्नचूडा-
भिधः सुहृत् ॥ तेनापि सन्निधौ तस्य । मंत्रपाठोऽस्ति शिक्षितः ॥ १५ ॥ अतः पृष्टं च त-
त्पार्श्वे । तव मंत्रा मिलंत्यहो ॥ सोऽवदद्वंचितस्तेन । कूटमंत्रादि मेऽर्पितं ॥ १६ ॥ पद्मसे-
नस्तदाकर्ण्य । जगौ तंप्रति चेदृशं ॥ तत्कथितमौषधादि । सर्वं मे सत्यमेव हि ॥ १७ ॥ गृ-
हाण वंध्याकल्पं तं । यतः पुत्रादिसंभवः ॥ निश्चितं जायते स्त्रीणां । महत्त्वं स्वस्य वर्द्धते


॥४९५॥

ततस्तेन गृहीतः स । राजपत्न्याश्च कारितः ॥ सा गता मरणावस्था—मुत्कटौषधयोगतः ॥ १ए ॥ रत्नचूमस्ततो राज्ञा । समाहूतः स्वपूरुषैः ॥ मयूरबंधं बध्ध्वासौ । जननिंदापुरस्सरं ॥ ९० ॥ कथितं च तथा तस्य । किं कृतं रे त्वयाधम ॥ पत्नी जीवितशेषासी—द्येन मे सगुणाधुना ॥ ९१ ॥ सोऽवदत्पद्मसेनेन । वंध्याकल्पो ममाग्रतः ॥ उक्तो मया ततो देव्या । निःपुत्रायाश्च कारितः ॥ ९२ ॥ निरापराधं तं मत्वा । मुमोच पृथिवीतिः ॥ पद्मसेनमथाहूया—दोऽवदत्कोपसंयुतः ॥ ९३ ॥ रत्नचूमस्य कल्पः किं । वंध्यादोषहरो मृषा ॥ त्वयात शिक्षितः सोऽवक् । राजंस्तं नोपलक्षये ॥ ९४ ॥ तन्निशम्य नृपो दध्यौ । कूटज्ञाषी न संशयः ॥ एष एव ततो राजा । तं जजल्प क्रुधा ज्वलन् ॥ ९५ ॥

मम पत्न्या विरुद्धं चे—द्भविष्यति तदा तव ॥ शिरश्छेदं करिष्येऽहं । निश्चयेन स्वदोषजं ॥ ९६ ॥ राज्ञस्तद्वचनं श्रुत्वा । भयभ्रांततनुस्तदा ॥ स वक्षःस्फोटतो मृत्वा । चतुर्थं नरकं ययौ ॥ ९७ ॥ प्रतिपाल्य चिरं चारु । वीरसेनो निजं व्रतं ॥ ईशानदेवलोकेऽगा—त्पापसंतापवर्जितः ॥ ९८ ॥ एवमनर्थदंडस्य । निषेधादरसंभवे ॥ सुखदुःखे च विज्ञाये—ष वा-

र्यी हितमिच्छता ॥ २९ ॥ इत्यष्टमं व्रतं ॥

आशाविरतिमुख्यानि । त्रीण्येतानि गुणाश्रितः ॥ गुणव्रतानि जल्पानां । श्राद्धानां जगदुर्जिनाः ॥ ३० ॥ सामायिकव्रतं चारु । यतीनां सर्वथा सदा ॥ द्विविधं त्रिविधं प्रोक्तं । श्राद्धानां द्विघटीमितं ॥ ३१ ॥ अमुना परिशुद्धेन । प्राप्नोति मनुजः शिवं ॥ तर्हि लक्षसुवर्णस्य । समानं दानमस्य किं ॥ ३२ ॥ सामायिकव्रतं योऽत्र । समतासंयुतः श्रयेत ॥ स तिर्यगपि देवत्वं । लभते वानरो यथा ॥ ३३ ॥ अभूद्भक्तिमतीपूर्वे । सिद्धिनामा नृपाग्रवरः ॥ परं स लोभी मनुजान् । मुनिवर्जांश्च वंचयेत् ॥ ३४ ॥ आर्त्तध्यानपरो मृत्वा । प्रांतेऽसौ वानरोऽजनि ॥ विक्रमी यूथनाथश्च । वने जनविवर्जिते ॥ ३५ ॥ अन्यदा साधवस्तत्र । सार्थभ्रष्टाः समागताः ॥ तदेकस्य पदे लग्नः । कंटको दुस्सहो मुनेः ॥ ३६ ॥

अन्ये तपोधनास्तेन । गदिताः पुण्यशालिना ॥ चलितुं शक्यते नैव । मयातो यात यूयकं ॥ ३७ ॥ क्षमयित्वा गताः सर्वे । सोऽस्थाद्वेदनयान्वितः ॥ तदा वानरयूथं तत् । समेतं कपयस्ततः ॥ ३८ ॥ साधुं दृष्ट्वा कृतक्रोधा । योधा इव दधाविरे ॥ मारणार्थं मुनेर्याव—त्तावद्यू·

ध्येश आगमत् ॥ ३९ ॥ युग्मं ॥ ऋषिदर्शनसंजात—जातिस्मरण एषकः ॥ तान् सर्वान् वारयामास । मुनिघातोद्यतान् श्रितान् ॥४०॥ यतिं नत्वा विशल्याख्यौ—षध्या शल्यं निरस्य च ॥ व्रणसंरोहिणीनाम्न्या । निर्व्रणं तं चकार सः ॥ ४१ ॥ सबाष्पलोचनं दृष्ट्वा । साधुस्तं प्रोचिवानिदं ॥ सदुःखी त्वं कथंकार—मुपकारं सृजन्नपि ॥ ४२ ॥

ततोऽक्षराणि भूम्यौ स । लिखित्वा पूर्वसंभवं ॥ भवं निवेदयामास । मुनेर्मानुजमात्मनः ॥ ४३ ॥ स्वस्थीभूतो मुनिस्तस्मै । प्रतिबोधं ददाविति ॥ आर्त्तरौद्रे न कर्त्तव्ये । ध्याने धन्यविवर्जिते ॥ ४४ ॥ आर्त्तध्यानवशात्पूर्वं । हारितो मानुषो भवः ॥ तिर्यक्त्वं च त्वया लब्धं । रौद्रे नरकसंभवः ॥ ४५ ॥ अपध्यानमिदं मुक्त्वा । श्रय सामायिकं व्रतं ॥ येन स्वर्गापवर्गौ ते । सुलभावन्यजन्मनि ॥ ४६ ॥ सोऽपि तद्वचनं श्रुत्वा । जग्राहाभिग्रहं सुधीः ॥ भावसामायिकस्योच्चै—रनगारांतिके तदा ॥ ४७ ॥

सम्मेतशैले साधुः स । गुरूणां मिलितस्ततः ॥ सामायिकं वानरेणा—न्यदात्तं पर्वतोपरि ॥ ४८ ॥ तत्र सिंहः समायातो । भवितव्यनियोगतः ॥ असौ पुनरार्त्तरौद्र—परित्यागात्स्थितः

स्थिरः ॥ ४९ ॥ सिंहेन भक्षितः सोऽभू-द्व्यंतरो धर्मसंयुतः ॥ जिनशासनसान्निध्य-करो लक्ष्मीसमन्वितः ॥ ५० ॥ तत्र सौख्यचयं भुक्त्वा । काले च्युत्वाथ सोऽमरः ॥ यथार्थनामविदिते । नगरे मणिमंदिरे ॥ ५१ ॥ मणिशेखरराट्पत्नी-मणिमालोदरे वरे ॥ उत्पन्नो निशि सत्स्वप्न-सूचितसूचितक्रियः ॥ ५२ ॥ पूर्णे काले सुतो जज्ञे-ऽरुणदेवोऽभिधानतः ॥ कलाकलापसंपन्नो । यौवनं प्राप्तवान् क्रमात् ॥ ५३ ॥ सुमत्यमात्यसंयुक्तो । वने सोऽगमदेकदा ॥ वयःस्थां दृष्टवान् दोला-रूढां तत्र वशां तथा ॥ ५४ ॥ तया कटाक्षैर्विद्धः स । तथा तत्पृष्टगो यथा ॥ वभूवादृश्यतां किंतु । सा गता तत्क्षणादपि ॥ ५५ ॥

तदा विद्याधरः कोऽपि । प्रकटोऽजनि तत्पुरः ॥ कोपाटोपाकुलोऽत्यंतं । कुमारमिति चाब्रवीत् ॥ ५६ ॥ अरे मया गृहीतां किं । त्वमिच्छसि वशामिमां ॥ ईहसे चेत्तदा युद्धं । मया सह कुरु ध्रुवं ॥ ५७ ॥ इत्युक्त्वा कृतवान् युद्धं । कुमारेण समं तदा ॥ परलोकं सुधा प्राप । विद्यात्रुतकृतः स च ॥५८॥ नात्योन्मत्तेन तद्भ्रात्रा । कुमारसुमती तदा ॥ उत्पाट्य गगने क्षिप्तौ । पतंतौ कूपमीयतुः ॥ ५९ ॥ गोधापुच्छमथालंब्य । ततस्तौ निःसृतौ क्रमात् ॥

तृषाक्रांतः कुमारश्च । सुमतिर्मंत्रिणं जगौ ॥ ६० ॥ मंत्रिंस्तिष्ट त्वमत्रैव । तृषा मे बाधतेऽधिकं ॥ अतो ग्रामादिकं गत्वा । नीरस्थानं विलोकये ॥ ६१ ॥ क्रोशद्वयं ययौ याव–द्विमुच्य सचिवं शिवं ॥ प्राकारं दृष्टवांस्तावत् । कपिशीर्षसमन्वितं ॥ ६२ ॥ तत्र प्रवेशं चक्रेऽसौ । लक्ष्मीदेवीसमन्वितं ॥ ददर्श मंदिरं चैकं । तन्मध्ये कोऽन्नवर्जितः ॥ ६३ ॥ द्वारदेशं गतस्तस्या–ऽपश्यन्नारीं सुदुःखितां ॥ अशोकशाखाबद्धं च । नरं स नरकुंजरः ॥ ६४ ॥ तेन सीमंतिनी पृष्टा । दुःखिनी दृश्यसे कथं ॥ केनासौ पुरुषो बद्ध–स्तत्सर्वं मे निवेदय ॥६५॥

तयोक्तं शृणु संबंधं । लक्ष्मीरमणनामकं ॥ लक्ष्मीदेव्या इदं विद्धि । क्रीडोद्यानं पुरातनं ॥ ६६ ॥ अस्य पुष्पादिकं योऽत्र । गृह्णाति भुवि पूरुषः ॥ श्रीदेवी निग्रहं तस्य । करोति सहसा रसात् ॥ ६७ ॥ मत्प्रियेणास्य पुष्पादि । गृहीतं तेन पद्मया ॥ बद्धः सोऽशोकशाखायां । दुःखं तस्मान्ममाधुना ॥ ६८ ॥ परोपकारी शूरस्त्वं । पुरुषोऽसि ततो मम ॥ भर्त्तारमुत्कलं देव्या । मंक्षु कारय सांप्रतं ॥ ६९ ॥ त्वमिति प्रतिपद्यासौ । वाप्यां गत्वामलं जलं ॥ पपौ स्नानादिकं चापि । चकार सुखहेतवे ॥ ७० ॥ आनीय सचिवं तत्र । स ययौ

श्रीनिकेतनं ॥ पुष्पादिभिः पूजयित्वा—ऽस्तवीत्तामेवमादरात् ॥ ७१ ॥ कमले कमले यत्त्वं
धत्से सत्कमले स्थितिं ॥ तेन तद्भजते लक्ष्मीं । सुमनस्स्वपि पंकजं ॥ ७२ ॥ पद्माकरोऽपि
लोकानां । तृष्णातापौ हरत्यतः ॥ सारदा च स्वहस्तात्त्वं । न मुंचति कदाचन ॥ ७३ ॥

मैत्रीं करोति मित्रोऽपि । तेन सार्धं विलोक्य तं ॥ वीतरागः पदन्यासं । तेषु धत्ते परः
किमु ॥ ७४ ॥ दानं सर्वेषु धर्मेषु । प्रधानं गदितं श्रुते ॥ त्वं पुनर्यस्य गेहे स्या—स्तेनैव त-
त्प्रदीयते ॥ ७५ ॥ तुष्टा लक्ष्मीर्ददौ तस्मै । वरं सोऽथ जगौ रमां ॥ प्रसन्नासि तदा मुंच ।
बद्धं विद्याधरं नरं ॥ ७६ ॥ तत् श्रुत्वा कमला हृष्टा । पुनः प्रोवाच तंप्रति ॥ परकार्यमिदं
किंचित् । स्वकीयं त्वं वदाधुना ॥ ७७ ॥ सोऽवददन्यसत्कार्यं । कुर्वता किं नरेण न ॥ स्व-
हितं विदितं लोके । ततोऽमुं मुत्कलं कुरु ॥ ७८ ॥ तद्वाक्यात्स तया मुक्तो । भक्तियुक्तोऽ-
भवत्स्त्रिया ॥ दत्तं विद्याधरैश्वर्यं । कुमाराय तदा तया ॥ ७९ ॥ लक्ष्मीर्विद्याधरस्याग्रे । ज-
गादेति वचः शुचि ॥ अस्य सेवा सदा कार्या । भवितासौ भवद्विभुः ॥ ८० ॥ भ्रमद्भिर्वनम-
ध्ये तैः । श्रीदेवीनिर्मितो हितः ॥ प्रासादः शांतिनाथस्य । दृष्टो मणिमयस्तदा ॥ ८१ ॥ तं

नमस्कृत्य विधिना । मंडपे स समागतः ॥ तत्र सरस्वतीं दृष्ट्वा । तुष्टाव स्वधिया त्विति ॥
॥ ८२ ॥ सरस्वति नवक्षार-सरस्वति त्वमंगिनी ॥ मंगिनी वर्त्तसे नूनं । दुःखतापसरस्वती
॥८३॥ चक्रांगोऽपि विवेकी चे-त्त्वत्संगादपरो न किं ॥ विशुद्धोऽनयपङ्कस्य । मानसेऽस्य रुचिः
पुनः ॥ ८४ ॥ त्वद्बलेनैव मनुजाः । पदार्थान् दृष्टयगोचरान् ॥ प्रत्यक्षानिव पश्यंत्य-न्यथांधाः सहजेन ते ॥ ८५ ॥ षट्शतेन विभेदेन । देवता अपराः पराः ॥ मन्यंते वादिनो नित्यं
। त्वं पुनः सर्वसम्मता ॥ ८६ ॥ महादेवादयो येऽत्र । विद्यते जनताननताः ॥ तेऽपि त्वां वंदंते भक्त्या । किं न्यन्ये विबुधा बुधाः ॥ ८७ ॥ सापि संतोषिता विद्या-सहस्रं प्रददौ मुदा
॥ तस्मै शांतिमतीं विद्या-धरपुत्रीं तथैव च ॥ ८८ ॥ महाप्रसाद इत्युक्त्वा । स गवाक्ष उपाविशत् ॥ विद्याधरवज्रवेग-पुत्री शांतिमती तदा ॥ ८९ ॥ आगता देवपूजायै । विलोक्य
कुमरं वरं ॥ दृष्ट्वा च प्रेषयामास । प्रतिहारीं तदंतिके ॥ ९० ॥ युग्मं ॥

सापि गत्वा कुमारागा-कथयच्चेति सद्वचः ॥ रत्ननूपुरतो दंगा-द्वज्रवेगोऽत्र खेचरः ॥
॥ ९१ ॥ यावदभ्येति तावत्त्वं । तिष्ठ शिष्टजनप्रियः ॥ यथा शांतिमतीं पुत्रीं । तुभ्यं यच्छति

सोत्सवं ॥ ९२ ॥ युग्मं ॥ तथाकृते कुमारेण । वज्रवेगः समाययौ ॥ युतो विवाहसामग्र्या । प्रभूतप्राभृतान्वितः ॥ ९३ ॥ विवाहं कारितस्तेन । निजपुत्र्या कुमारराट् ॥ प्रदत्तं स्वीयराज्यं च । पुत्रेणास्मै प्रमोदतः ॥ ९५ ॥ ततो निजपुरे नीतः । प्रीतः स्फीतश्रिया नयात् ॥ तत्र राज्यमसौ चक्रे । नरचक्रेण पूजितः ॥ ९६ ॥ एकदा वज्रवेगस्य । कुमारेण निवेदितं ॥ नाढ्योन्मत्तेन कूपेऽहं । पातितो मंत्रिसंयुतः ॥ ९७ ॥ अस्योपरि प्रयाणं त–द्दीयते जीयते त्वयं ॥ प्रतिपन्ने ततस्तेना–मुना विद्याः प्रसाधिताः ॥ ९८ ॥ चतुरंगचमूयुक्तो । गतोऽसौ तत्र पत्तने ॥ शरणं वायुवेगस्य । नाढ्योन्मत्तस्तदा ययौ ॥ ९९ ॥ प्रहितोऽरुणदेवेन । तयोर्दूत इदं जगौ ॥ श्रयेथां शरणं सद्यो–ऽरुणदेवस्य वा रणं ॥ ६०० ॥

तौ तस्य वचनं श्रुत्वा । संग्रामाय कृतोद्यमौ ॥ नगराद्बहिरायातौ । जितौ तेन तरस्विना ॥ १ ॥ ततो विद्याधरैः सर्वै–रुत्तरश्रेणिसंश्रवं ॥ विद्याधरवरैश्वर्य–पदं तस्य प्रकल्पितं ॥ २ ॥ राज्यं सुस्थमसौ कृत्वा । खेचरैः सहितोऽन्यदा ॥ जगाम नगरं स्वीयं । मणिमंदिरनामक ॥ ३ ॥ महोत्सवेन पितास्य । प्रवेशः कारितः पुरे ॥ अस्मै राज्यं तथा दत्तं । स-

॥ ५०३ ॥

वित्तं चित्तहर्षतः ॥ ४ ॥ स्वयं दीक्षामुपादत्त । गुरुपार्श्वे स बुद्धिहृत् ॥ त्रिखंडाधिपतिर्जातो-
ऽरुणदेवस्ततः परं ॥ ५ ॥ अन्यदा नगरस्यांत-र्भ्रमन् जिनरथोऽस्लग्रः ॥ राजद्वारसमीपेऽ-
गा-च्छादित्रस्वरसंयुतः ॥ ६ ॥ नमस्कर्त्तुं जिनं शीघ्रं । राजा तत्र समाययौ ॥ मुनिमेकम-
थो दृष्ट्वा-ऽतुच्छां मूर्छामवाप सः ॥ ७ ॥ जातजातिस्मृती राजा । देवं नत्वा मुनिं तथा ॥ प-
श्चाद्गुरुं नमश्चक्रे । सूरिः प्राह तदा स्वयं ॥ ८ ॥

हे राजन् विपरीतं किं । वंद्यते निंद्यतेऽमुना ॥ कर्मणा प्राक् ततः साधु-रहं पश्चात्त्व-
या कथं ॥ ९ ॥ राजा गुरूंस्तदाजल्प-त्पुराहं वानरोऽभवं ॥ सामायिकव्रतोच्चारः । कारितो-
ऽनेन मे तदा ॥ १० ॥ व्यंतरस्तेन पुण्येन । स्वल्पायुस्त्रिदशस्त्वहं ॥ जज्ञे पुनस्ततश्च्युत्वा-
ऽरुणदेवोऽत्र जन्मनि ॥ ११ ॥ अतो मया वंदितोऽयं । प्रथमं गुरुबुद्धितः ॥ गुरुस्त्रिदेशना द-
त्ता । ततः सामायिकाश्रिता ॥ १२ ॥ गुरूणां वचनं श्रुत्वा । तनूजे पद्मशेखरे ॥ निवेश्य च
नृपो राज्यं । स्वयं दीक्षामुपाददे ॥ १३ ॥ शुद्धं सामायिकं तत्र । पालयन् मुनिपुंगवः ॥ ती-
र्थकृन्नामकर्मासा-वर्जयामास साम्ययुक् ॥ १४ ॥ गृहीत्वानशनं प्रांते । प्राणांस्त्यक्त्वा त-

आत्मनः ॥ विंशत्युदधिसर्वायुः । स जज्ञे प्राणतेश्वरः ॥ १५ ॥ ततश्च्युत्वा विदेहेऽसौ । संप्राप्य मानुजं भवं ॥ तीर्थंकरोऽत्र भविता । भवतापविवर्जितः ॥ १६ ॥ एवं सद्भावनायुक्तं । पाल्यं सामायिकव्रतं ॥ येनेहामुत्र कल्याणं । संभवेद्भवतां सतां ॥ १७ ॥ इति नवमं व्रतं ॥

सचित्तादेस्तु संक्षेपो । दिने रात्रावपीह यः ॥ देशावकाशिकं प्राहु–र्मुख्यतस्तं कवीश्वराः ॥ १८ ॥ दिग्विरतेस्तु संक्षेपो–ऽधुना देशावकाशिकं ॥ व्यवहारमते ख्यातं । विख्यातं दृश्यते श्रुते ॥ १९ ॥ देशावकाशिकं यस्तु । व्रतं लात्वा विराधयेत् ॥ स काकजंघवद्दुःखं । प्रेत्येहापि भजेन्नरः ॥ २० ॥ सोपारकपुरे दासी–सुतः कोकाससंज्ञकः ॥ आसीत्तत्रैव नगरे । सोमिलो रथकृत्तथा ॥ २१ ॥ रथकृत्स्वसुतं नित्यं । पाठयेद्विविधाः कलाः ॥ परमेकापि नायाति । तस्याऽसत्कर्मयोगतः ॥ २२ ॥ कोकासो याति तत्पार्श्वे । बुद्ध्या गृह्णाति तत्कलाः क्रमेण रथकृत्प्रोक्तं । सर्वं शिक्षितवान् सुधीः ॥ २३ ॥ पुत्रेण विद्या नैकापि । ज्ञाता तातार्पिता हिता ॥ सर्वत्र कार्यसंसिद्धि–र्न कर्मोपक्रमौ विना ॥ २४ ॥ निर्विसः सोमिलः पश्चा–द्धर्मं कृत्वायुषः क्षये ॥ परलोकं जगामासौ । कलाभिर्नो गतिक्षयः ॥ २५ ॥ कोकासः सो-

मिलस्थाने । स्थापितौ राजशासनात् ॥ कलावतो यतो मानं । सदानं भुवि दृश्यते ॥२६॥
इतश्च मालवे देशे । विशाला नामतः पुरी ॥ तस्यां विचारधवलो । राजास्ति परमार्हतः ॥ २७ ॥ चत्वारि नररत्नानि । संति राज्येऽस्य भूपतेः ॥ भांडागारिकः सूपकारः । शय्यापालोंगमर्दकः ॥ २८ ॥ भांडागारिककरेणात्तं । भांडाराद्वस्तुसंचयं ॥ क्षीयते नैव तस्यैवं । लब्धिसिद्धिः प्रसिद्धिदा ॥ २९ ॥ सूपकारो रसवतीं । कुर्यात्तां षड्रसान्वितां ॥ यस्यां जनैः प्रभुक्तायां । षण्मासैर्जायते क्षुधा ॥ ३० ॥ शय्यापालः पुनः शय्यां । तादृशीं रचयत्यसौ ॥ रोगार्त्तस्य ह्यनिशलो-ऽपि निद्रा यथा भवेत् ॥ ३१ ॥ अंगमर्दो भृशं याव-त्तैलेनांगं प्रमर्दयेत् ॥ तावत्तैलं पुनर्देहा-द्बहिः कुर्याच्च रोगयुक् ॥ ३२ ॥ विचारधवलो राजा । तै रत्नैः संयुतोऽपि च ॥ सम्यग्रत्नत्रयीं वांछन् । गमयेद्दिवसानसौ ॥ ३३ ॥ अपुत्रत्वात्पुना राज्यं । करोति करुणाधिकं ॥ यतो ह्यनाथां पृथिवीं । दुःखयंतीह दुर्जनाः ॥ ३४ ॥
इतश्च पाटलिपुत्र-नरेशजितशत्रुणा ॥ आगत्य वेष्टितावंती । निरुद्धागमनिर्गमा ॥३५॥ परसैन्यागमे राज्ञो । जठरे शूलमुल्बणं ॥ उत्पन्नं तेन तत्कालं । मरणं तस्य चाभवत् ॥

॥ ३६ ॥ दीक्षामनोरथेनोच्चै–र्देवलोकं जगाम सः ॥ वांछापि किल धर्मस्य । भूरिभाग्यात्प्र-
जायते ॥ ३७ ॥ प्रतोली पौरलोकैर्द्राक् । तत उद्घाटिता भयात् ॥ जितशत्रुर्महीपाल–स्तत्र
राज्ये न्यविशत् ॥ ३८ ॥ तेषां पुरुषरत्नानां । परीक्षा विदधे तदा ॥ एकदा ह्यंगमर्दनं । रा-
ज्ञोंगं मर्दितं मृदु ॥ ३९ ॥ आकर्षितं तेन तैलं । सर्वांगान्नृपतेस्ततः ॥ एकस्या नैव जंघा-
याः । परीक्षार्थं परस्य च ॥ ४० ॥

नृपावकथयच्चैवं । यः कश्चिद्बुद्धिमान् पुमान् ॥ आकर्षयति जंघाया–स्तैलं तस्यास्मि
किंकरः ॥ ४१ ॥ परं केनापि तत्तैलं । नाचकर्षे मनागपि ॥ स्थूला जंघा ततो जज्ञे । काक-
जंघाभिधाऽस्य च ॥ ४२ ॥ ततः प्रभृति राज्ञोऽस्य । काकजंघ इति प्रथा ॥ सर्वत्र विस्तृता
मुख्या–भिधां गृह्णाति कोऽपि न ॥ ४३ ॥ ते चत्वारो यतीभूय । गता मोक्षं गुणान्विताः ॥
सोपारकेऽन्यदा देशे । दुर्भिक्षं समजायत ॥ ४४ ॥ निजं कुटुंबं कोकासो । लात्वावंतीं पुरीं
तदा ॥ ययौ परं स्वकीयोऽस्य । तत्र कोऽपि न विद्यते ॥४५॥ देशकुट्यां स्थितस्तेन । राज-
संगचिकीरसौ ॥ काष्टपारापतान् कृत्वा । कीलिकानां प्रयोगतः ॥ ४६ ॥ भूभुजोऽट्टालके शा-

चरित्रं
॥५०७॥

लि—कणादानकृते कृती ॥ प्रेषयेत्तत्र ते गत्वा । शालीन् लात्वा पुनः कुटीं ॥ ४७ ॥ आयांति शालिबीजानि । कुटुंबं भोजयत्ययं ॥ दृष्टाः पारापताः शालि—रक्तकैरेकदा तदा ॥ ४८ ॥ तत्पृष्टलग्नैस्तैस्तत्रा—गत्य वीक्ष्य तथाविधं ॥ राज्ञोऽग्रे कथितं सर्वं । भूभुजाकारितः स च ॥ ॥ ४९ ॥ पंचभिःकुलकं ॥

राज्ञा पृष्टं यथा चैत—द्विज्ञानं वेत्सि नूतनं ॥ तथान्यदपि जानासि । सर्वं वेद्मि स चाब्रवीत् ॥ ५० ॥ अन्यदा गरुडस्तेन । कृतः सुकृतशालिना ॥ राजा तत्र सपत्नीक । आरूढस्तेन संयुतः ॥५१॥ अयोध्या तामलिप्ती च । चंपा द्वारमती तथा ॥ लंकादिनगरी तेन । दर्शिता नामपूर्वकं ॥ ५२ । अष्टापदोज्जयंताद्रि—श्रीशत्रुंजयपर्वतान् ॥ रथकृद्दर्शयामास । समुद्रप्रमुखं तथा ॥ ५३ ॥ अन्यदा साधुपार्श्वे तौ । गतौ गगनवर्त्मना ॥ श्राद्धद्वादशधा धर्म—स्तयोस्तेन निवेदितः ॥ ५४ ॥ देशावकाशिकं ताभ्यां । गृहीतं साधुसन्निधौ ॥ दिवसे योजनशतं । गंतव्यं नाधिकं त्विति ॥ ५५ ॥ अन्यदा मानसे दध्यौ । विजयाख्या नृपप्रिया ॥ राजा यशोमतीं सार्धं । लाति नो मां कदाचन ॥ ५६ ॥ अतः कुर्वे तथा येन । संकटे पत-

॥५०८॥

तः स्वतः ॥ एवं विमृश्य स्थपति–मन्यमानस्य कीलिकां ॥ ५७ ॥ अपरां कारयामास । य-
या पश्चात्समीयते ॥ तां च साऽगोपयत्क्वापि । तत्स्थाने तां मुमोच च ॥ ५८ ॥ युग्मं ॥
यशोमतीयुतो राजा । गरुडे चटितस्तदा ॥ कोकासोऽपि च तत्रस्थः । प्रेरयामास तं ततः ॥
॥ ५९ ॥ आकाशे गछता तेन । राज्ञा पृष्टोऽस्य वाहकः ॥ कियन्मार्गं समायाताः । सोऽग-
दच्छतयोजनं ॥ ६० ॥ ततो राजा जगादैवं । तर्हि वालय काश्यपिं ॥ यथा नियमभंगो न ।
जायते त्वावयोर्द्वयोः ॥ ६१ ॥ आगम्यते यथा सात्र । कीलिका निहता पुनः ॥ गरुडो नैव वल-
ति । ततो राज्ञा प्रजल्पितं ॥ ६२ ॥

कथं नैव वलत्यद्य । कीलिकाया विपर्ययं ॥ स जगौ तावता पक्ष–भंगोऽभूद्गरुडस्य च
॥ ६३ ॥ स्वर्णकायोऽपतत्तेन । भाग्यात्किंतु सरोवरे ॥ ततस्ते निःसृता सद्यो । दैवं हि वल-
वत्तरं ॥ ६४ ॥ सूत्रधारं तदा राजा । जगाद किमिदं पुरं ॥ स आचख्यौ कलिंगाख्य–देशा-
धिपतिपूरियं ॥ ६५ ॥ सूत्रधारः कीलिकार्थं । पुरमध्ये ययौ द्रुतं ॥ दंपती तु तडागस्य । पा-
र्श्वयां तस्थतुरुच्चकैः ॥६६॥ स वर्द्धकिगृहं गत्वा । ययाचे काष्टमुत्तमं ॥ कीलिकार्थं ततः सोऽ-

पि । तत्सर्वत्र व्यलोकयत् ॥ ६७ ॥ तावता घटितं चक्रं । कोकासेन तदा यतः ॥ आच्छादिता न तिष्ठंति । विद्याकुष्टादयो जने ॥ ६८ ॥ चक्रं दृष्ट्वा सूत्रधार—श्चक्रे चित्ते विमर्शनं ॥ कोकासोऽयं हि नान्यस्ये—दृशी विश्वे कला कला ॥ ६९ ॥ गदितं राजभवनं । गत्वा तेनेति भूपतेः ॥ कोकासोऽत्र समेतोऽस्ति । वैरिवर्गाश्रितोऽहितः ॥ ७० ॥ प्रहित्य राजपुरुषा—नानीतो राजमंदिरं ॥ कोकासो भूभुजा काक—जंघोऽपि प्रेयसीयुतः ॥ ७१ ॥ कोकासो बंधितः काकजंघस्तु दयितान्वितः ॥ पूर्ववैरवशात्काष्ट—पंजरे निहितोऽमुना ॥ ७२ ॥

अमात्यैः कथितं राज्ञे । कलावानेकपूरुषः ॥ अतः किमपि विज्ञानं । कार्यते मार्यते ततः ॥ ७३ ॥ अमात्यवचसा राज्ञा । कोकासो बंधनाद् दृढात् ॥ मोचयित्वा तथानाय्य । पृष्टोऽन्यद्वेत्सि किंचन ॥ ७४ ॥ सोऽवदद्देव विज्ञानं । सर्वं जानामि सुंदरं ॥ परं कारयिता कोऽस्ति । ततो राजा जगाद तं ॥ ७५ ॥ कर्णिकायां तु मद्योग्यं । शतपत्रे कृते पुनः ॥ पत्रेषु भवनान्युच्चैः । कुरु त्वं सत्वरं धिया ॥ ७६ ॥ सदनं कमलाकारं । मंत्रितं तेन धीमता ॥ कलिंगाधिपतेर्मंत्रः । कोकासाय तदा रहः ॥ ७७ ॥ दीपिकाधरमर्त्येन । कथितश्चेत्ययं नृ-

पः ॥ आवासे परिपूर्णे त्वां । त्वन्नृपं च हनिष्यति ॥ ७८ ॥ युग्मं ॥ कोकासेन ततः काक-जंघन्नृविजयान्निधः ॥ ज्ञापितः स्वीयवृत्तांतं । प्रेष्य शीघ्रं वरं नरं ॥ ७९ ॥ तावता नवनं पूर्णं । जातं चैकैव कीलिका ॥ कृता तत्र प्रवेशार्थं । राजा पुत्रयुतो ययौ ॥ ८० ॥ सूत्रधारस्ततोऽवादी-त्स्वस्वस्थाने निवेश्यतां ॥ कीलिकायां च दत्तायां । प्रासाद उत्पतिष्यति ॥८१॥ तथा कृते तु तैस्त्वष्टा । प्रासादाद्बहिरागतः ॥ मत्सरात्कीलिका दत्ता । प्रासादो मिलितस्ततः ॥ ८२ ॥ आवासे संपुटीन्नूते । लोके हाहारवोऽजनि ॥ ततः कोकाससंकेता-द्द्विजयो द्विट्पुरेऽविशत् ॥ ८३ ॥

लुंटितं नगरं सर्वं । पितरौ पंजरात्तथा ॥ निष्कासितौ सकोकासो । राजा स्वं नगरं ययौ ॥ ८४ ॥ एकदा गुरुसंयोगे । राज्यं दत्वा स्वजन्मने ॥ काकजंघः सकोकासो । दीक्षामंगीचकार सः ॥ ८५ ॥ सातिचारं व्रतं राज्ञा । पालितं कर्मयोगतः ॥ सौधर्मदेवलोके च । तेनासौ त्रिदशोऽन्नवत् ॥ ८६ ॥ निरतिचारं सुचिरं । कोकासेन प्रपालितं ॥ महेंद्रदेवलोके च । तेन जज्ञे सुरोत्तमः ॥ ८७ ॥ देशावकाशिकं चैत-त्पालनीयमतो नरैः ॥ दुःखं न जायते ये-

॥५११॥

न । जंतुपीडा तथैव च ॥ ८८ ॥ इति दशमं व्रतं ॥ चतुर्विधश्चतुःपर्व्यां । पौषधः सर्वतो बुधैः ॥ प्रतिमाप्रतिपन्नानां । गदितोऽस्ति जिनागमे ॥ ८९ ॥ शेषाणां शक्तियुक्तानां । तथैव परिकीर्त्तितः ॥ देशतः शक्तियुक्तानां । चतुर्विधोऽप्यसौ भवेत् ॥ ९० ॥ देशतः क्रियमाणेऽस्मिन् । का क्षतिर्गृहमेधिनां ॥ श्राद्धधर्मो यतः पूर्वै-स्तादृगेव निवेदितः ॥ ९१ ॥

परं कुर्यान्न चेदेतं । व्रतभंगस्तदा भवेत् ॥ यथाशक्त्या ततः सर्वै-रेष ग्राह्योऽत्र पर्वसु ॥ ९२ ॥ यथा शरीरसत्कारः । क्रियते पौषधेऽधुना ॥ आहारोऽपि तथा ज्ञेयः । साधुभिर्निर्गतमत्सरैः ॥ ९३ ॥ कर्मरुगौषधं चारु । पौषधं पालयंति ये ॥ देवैः कृतप्रशंसास्ते । स्युः श्रीमलयकेतुवत् ॥ ९४ ॥ भूपतिर्भुवनाभिख्ये । पुरे मलयकेतुकः ॥ मंत्री नयाभिधस्तस्य । समभूद्बुद्धिभाजनं ॥ ९५ ॥ एकदा तौ गतौ बाह्यो-द्याने ध्यानेन संयुतं ॥ दृष्ट्वा मुनिं ववंदाते । ज्ञातेनाचारदेशकं ॥ ९६ ॥ उपदेशमुभौ श्रुत्वा । पापं त्यक्त्वा तथा निजं ॥ गृहिधर्मं जगृहतु-र्विशेषात्पौषधं व्रतं ॥ ९७ ॥

एकदा पौषधो राज्ञा । गृहीतो मंत्रिणा सह ॥ स्वाध्यायं याममात्रं च । कृत्वोचे स-

चिवाग्रणीः ॥ ९८ ॥ कांचिद्धर्मकथां मह्यं । कथयासौ ततो जगौ ॥ राजा वसंतसेनोऽनू-
त्पुरे कांचनसंज्ञके ॥ ९९ ॥ अनंगसेना तत्पत्नी । तत्कुक्षिजनिता सुता ॥ रूपसौभाग्यसंयु-
क्ता । वसंतश्रीर्वराथिंनी ॥ ७०० ॥ धीवरो धीवरस्तत्र । वासी हरिबलाह्वयः ॥ साधुपार्श्वेऽ-
न्यदा तेन । श्रुतो धर्मो दयामयः ॥ १ ॥ ततोऽसौ चिंतयामास । सर्वजीवदयामयः ॥ सर्वत्र
श्रूयते धर्मः । परं जैनैः स पाल्यते ॥ २ ॥ प्राणिवधैः प्राणवृत्ति-र्मत्कुले सर्वदा भवेत् ॥ अ-
तो दयां कथं कुर्वे । मूर्खोऽन्यव्यवसायमुक् ॥ ३ ॥ तथापि वडिशे यो मे । समेष्यति झषः
पुरा ॥ मोक्ष्यामि तमहं नित्यं । नियमं स ललाविति ॥ ४ ॥ मत्स्यार्थमेकदा नद्यां । ग-
त्वा वडिशमक्षिपत् ॥ प्रौढो मीनस्तदा तत्र । तेन सार्द्धं समागमत् ॥ ५ ॥ वराटिकां बंध-
यित्वा । मुक्तोऽसौ विमले जले ॥ पुनर्द्वितीयवारं त-न्निक्षिप्तं झषेहतवे ॥ ६ ॥ स एव दैव-
योगेना-गतस्त्यक्तोऽमुना पुनः ॥ एवं संध्याक्षणं याव-दाययौ स मुमोच तं ॥ ७ ॥ जज-
ल्प प्रांतवेलायां । कैवर्त्तं प्रतिमत्स्यकः ॥ नव सत्वेन तुष्टोऽस्मि । वरं वृणु समीहितं ॥ ८ ॥
असौ जगाद कस्त्वं भोः । सोऽगदज्जलदेवता ॥ स जगौ तर्हि कष्टे मां । रक्षयेथाः समागते

॥ ९ ॥ तद्वचः प्रतिपद्यासौ । भूयोऽजल्पच्च तंप्रति ॥ मत्प्रसादात्तु ते रूपं । भवतादुत्तमं ज-
ने ॥ १० ॥ दिव्यरूपधरः सोऽभू-द्देवतावरदानतः ॥ न जगाम गृहं तेन । गतोऽनंगसुरालये
॥ ११ ॥ इतो राजसुता तत्र । वसंतश्रीः समागता ॥ मदनस्य पूजनार्थं । दिव्यदेहवरार्थिनी
॥ १२ ॥ तं दृष्ट्वा सा सहर्षासीत् । सोऽपि तां प्रेक्ष्य तादृशः ॥ उभाभ्यां विहितस्तेन । सं-
केतो गमनेच्छया ॥ १३ ॥

अश्वाधिरूढौ तौ प्रौढौ । निशायां चलितौ मुदा ॥ गंधर्वेण विवाहेन । कृतवैवाहिकक्रि-
यौ ॥ १४ ॥ गतौ विशालं नगरं । भाटकेन गृहं तदा ॥ लात्वा हरिबलस्तस्थौ । राजसेवा-
परायणः ॥ १५ ॥ नृपो मदनवेगस्तं । जानाति क्षत्रियोद्भवं ॥ अतोऽन्यदा भोजनार्थं । सप-
त्नीको निमंत्रितः ॥ १६ ॥ स वसंतश्रियं वीक्ष्य । राजाभून्मोहितो भृशं ॥ परं हरिबले वि-
द्य-माने तां लातुमक्षमः ॥ १७ ॥ आकार्यातो हरिबलं । कथयामास तत्पुरः ॥ मत्सुताया
विवाहोऽत्र । भविता समहोत्सवं ॥ १८ ॥ बिभीषणेन मे साकं । मित्रत्वं वर्त्ततेऽद्भुतं । त्वया
गत्वाकारणीयः । सोऽन्यो गंतुं न यत्क्षमः ॥ १९ ॥ प्रतिपद्य वचो राज्ञः । स गतो जलधे-

स्तटं ॥ लंकां गंतुं न शक्नोति । परं प्रवहणं विना ॥ २० ॥ तदा राज्ञा वसंतश्री–र्निजदास्या
निमंत्रिता ॥ प्राह चेन्मम भर्ता नो । समेष्यति तदा तव ॥ २१ ॥ सर्वं वाक्यं करिष्येऽहं ।
तत् श्रुत्वा नृपतिर्मनाक् ॥ हृष्टचित्तो बभूवासौ । साम्ना सर्वं हि सिध्यति ॥ २२ ॥ युग्मं ॥
ततो हरिबलेनागा–त्स्मृता सा जलदेवता ॥ विबुधैः प्रतिपन्नं य–त्तन्निष्पन्नं विनिर्दिशेत्
॥ २३ ॥ सा जगाद तकं वत्स । त्वयाहं किं स्मृताधुना ॥ सोऽवक् लंकापुरीं मां त्वं । प्रा-
पयाशु कृपानिधे ॥ २४ ॥ लंकापुरीं ततो नीत–स्तया स क्षणमात्रतः ॥ तत्र शून्यगृहे ग-
त्वा । स्थितः सुस्थितमानसः ॥ २५ ॥ लंबितं तुंबकं तत्र । दृष्टं तेन ततोऽमृतं ॥ गृहीत्वा
चुलुकं कृत्वा । क्षिप्तं रक्षोपरीह तत् ॥ २६ ॥ रक्षापुंजाद्दशा चैक । प्रादुर्भूता तदा जगौ ॥
कस्त्वं कुतः समायातः । किमर्थं सोऽन्यधात्ततः ॥ २७ ॥ नाम्ना हरिबलो राज–सेवकोऽहं
समागतः ॥ विशालाख्यपुरादत्र । विभीषणनिमंत्रणे ॥ २८ ॥ राज्ञा मदनवेगेन । प्रहितो-
ऽहं परं तव ॥ चरित्रं चित्रकृल्लोके । श्रोतुमिच्छामि सांप्रतं ॥ २९ ॥ युग्मं ॥ विभीषणस्य
सा प्राह । मत्स्वामी शस्त्रपालकः ॥ अविश्वासात्परं मां स । भस्मीकृत्य नृपांतिकं ॥ ३० ॥

यात्यागत्य पुनः सिक्त्वा । तुंबकामृतबिंदुना ॥ क्षारपुंजं नवीनां मां । करोति सततं पुनः ॥ ३१ ॥ युग्मं ॥ निर्विण्णाहं निजेशात्त–न्नित्यं मृत्युप्रदायिनः ॥ खड्गरत्नं तुंबकं च । दात्वा यावो यदृच्छया ॥ ३२ ॥ बिभीषणाकारणं य–द्भूभुजेति निरूपितं ॥ विरूपं तदपि स्वामिन् । स्थानं त्याज्यमिदं ततः ॥ ॥ ३३ ॥ गृहीत्वा तद् द्वयं सोऽथ । तया च कुसुमश्रियं ॥ समुद्रतटमागत्य । सस्मार जलदेवतां ॥ ३४ ॥

ततोऽसावागता सद्य–स्तौ विशालपुरं वरं ॥ नीत्वा देवी स्वयं स्थानं । गता मानसमन्विता ॥ ३५ ॥ समेतं सप्रियं गेहं । राजा ज्ञात्वा तमानयत् ॥ खड्गरत्नं पुरो मुक्त्वा । प्रणामं स व्यधात्तदा ॥ ३६ ॥ राजा पप्रच्छ वृत्तांतं । स जगौ दुर्घटान् पथः ॥ उल्लंघ्य जलधेस्तीरं । सनीरं गतवानहं ॥ ३७ ॥ पोतं विना परं राजं–स्तत्र गंतुं न पार्यते ॥ शून्यत्वात्ते तु नो संति । चित्तेऽचिंति ततो मया ॥ ३८ ॥ अंगीकृत्य वचो येऽत्र । सुहृत्स्वामिजिनोदितं ॥ तन्निर्वाहाऽसहास्तेषां । मरणं शरणं ध्रुवं ॥ ३९ ॥ उक्त्वा निमंत्रणाद्युच्चै–रजय्यं च सुरासुरान् ॥ मम रक्षापि संप्राप्या । लंकायां कार्यसिद्ध्ये ॥ ४० ॥ तत् श्रुत्वा राक्षसः

कश्चि–द्यावदायाति सन्निधौ ॥ तावच्चितां प्रविष्टोऽहं । भस्मसाच्चाभवं क्षणात् ॥ ४१ ॥ वृ-
त्तांतमहिता तेन । मम रक्षा विभीषणे ॥ अर्पिताहं ततस्तेना–मृतसेकात्पुनर्नवः ॥ ४२ ॥
विहितोऽवगते तत्वे । पुत्री दत्ता च हर्षतः ॥ अभिज्ञानकृते खड्ग–रत्नं प्रहितमेककं ॥ ४३ ॥
॥युग्मं॥ ममाग्रे कथितं तेन । मदत्कार्यं ममाधुना ॥ वर्त्तते तेन नैवाहं । समेष्यामि त्वया समं
॥ ४४ ॥ परं विवाहवेलाया–मागमिष्यामि निश्चितं ॥ उत्तार्य जलधिं पश्चा–त्तेन मुक्त इहा-
ययौ ॥ ४५ ॥ उच्चैर्बलं हरिबलं । राजा विज्ञाय तं तदा ॥ तस्मै कृताद्भुतायासौ । प्रददौ
पारितोषिकं ॥ ४६ ॥ अन्यदा हरिबलेन । प्रिययोः कथितं रहः ॥ राजा निमंत्र्यते गेहे । भो-
जनार्थं सगौरवं ॥ ४७ ॥ उभाभ्यां कथितं स्वामि–न्नाऽकार्यो नृपतिर्गृहे ॥ तस्मिन् समा-
गतेऽनर्थो । भविष्यति न संशयः ॥ ४८ ॥ तथाप्याकारितस्तेन । सपरीवार आदरात् ॥ ह-
स्ती किं धार्यते कर्णे । सकर्णैरपि कथ्यते ॥ ४९ ॥

तदा ताभ्यां पुनः प्रोचे । चेदानीतो नृपो गृहे ॥ न कार्यं परमस्माकं । दर्शनं स्पर्शना-
दिदं ॥ ५० ॥ सुवेषाभ्यां ततस्ताभ्यां । परिवेषणमप्यलं ॥ कारितं नृपतेस्तेन । बलिनी भ-

वितव्यता ॥ ५१ ॥ ते विलोक्य नराधीशो । मोहितोऽजनि मानसे ॥ महिला मोहनवल्ल्यो । यतः शास्त्रे प्रकीर्त्तिताः ॥ ५२ ॥ सत्कारपूर्वं गेहेऽसौ । तेन राजा विसर्जितः ॥ परं स मारणोपायं । तस्य चित्ते व्यचिंतयत् ॥ ५३ ॥ ततो मंत्रिणमाकार्य । पृष्टवान् नृपतिः स्वयं ॥ केनास्य मरणं नावि । सोऽगददग्नियोगतः ॥ ५४ ॥ राजा जगादासौ मंत्रि–श्चितादग्धोऽपि जीवितः ॥ मंत्रिणोचे कूटमेष । जल्पतीह नराधिप ॥ ५५ ॥ मत्प्रत्ययक्रमसौ वह्निं । चेत्प्रविश्य पुनर्बहिः ॥ निस्सरेन्नोस्तदा मन्ये । सत्यं नैवास्य नाषणैः ॥ ५६ ॥

मंत्रिणा तमथाकार्य । कथितं मृदुनाषया ॥ अस्मद्राज्ये विना त्वां न । कोऽपि कार्यकरः परः ॥ ५७ ॥ यमस्याकारणाय त्वं । गछ शीघ्रं मदाज्ञया ॥ विवाहस्य यतो लग्नं । वर्त्ततेऽत्र समीपगं ॥ ५८ ॥ सोऽपृछत्केन मार्गेण । सोऽवदच्च चिताध्वना ॥ अंगीकृत्य वचस्तस्या–सौ जगाम निजं गृहं ॥ ५९ ॥ प्रियाग्रे कथितं तच्च । तदाऽन्यां जगदे त्विति ॥ आनीतो यन्नृपो गेहे । तस्येदं फलमीश ते ॥ ६० ॥ तथापि माऽधृतिं कुर्याः । कुसुमश्रीर्जगौ पुनः ॥ त्वामहं जीवयिष्यामि । गृहस्थामृतसेचनात् ॥ ६१ ॥ अमात्यवचसा राज्ञा । कारि-

ता निचिता चिता ॥ सर्वसमक्षं तस्यां स । प्रविष्टः सत्वसंयुतः ॥ ६२ ॥ लोकैर्हाहारवश्चक्रे । भस्मीभूतः क्षणादसौ ॥ ततो मंत्रियुतो राजा । ययौ स्वं धाम कामयुक् । ६३ ॥

रात्रौ तमोभरे जाते । कुसुमश्रीः सतुंबका ॥ गत्वा चितायां भूभागं । सुधयाछोटयत्स्वयं ॥ ६४ ॥ प्रादुर्भूतो हरिबलो । गतो निजनिकेतनं ॥ चटनं पतनं चापि । महतां भवति क्षितौ ॥ ६५ ॥ आश्चर्यमिति नो चिंत्यं । मृतोऽसौ जीवितः कथं ॥ मृतो भेकः सजीवः स्यात् । पयसापि पयोमुचः ॥ ६६ ॥ यथा गडुची शुष्काप्य–नंतजीवा जलाद्भवेत् ॥ एवं काष्टादि निर्जीवं । प्रत्यक्षं जीवयुक् जने ॥ ६७ ॥ जनिस्तिलकवृक्षस्य । चांगारात् श्रूयते क्वचित् ॥ जलयोगेन चेदेवं । सुधया किं तदोच्यते ॥ ६८ ॥ अथवावयवस्तेषां । बीजरूपोऽवतिष्टते ॥ तेन नैषु विसंवादो । न वा बाधा जिनागमे ॥ ६९ ॥ परमत्र चितादेर्य–न्मनुजस्य समुद्भवः ॥ कथितो लोकरूढ्या तद् । ज्ञेयं नो जिनभाषया ॥ ७० ॥ वार्त्तयंति त्रयो याव–त्तावत्तत्रायर्यौ नृपः ॥ कुसुमश्रीस्ततोऽवोच–द्राजा द्वारे समागतः ॥ ७१ ॥ अदृश्यीभूय स्वामिंस्त्वं । स्वरूपं च निरूपय ॥ अस्माकं नृपतेश्चापि । ज्ञातं न भवेद्यतः ॥ ७२ ॥

तदा तथाकृते तेन । द्वारमुद्घाटितं तया ॥ एकाकी नृपतिर्मध्ये । प्रविष्टः पापबुद्धियुक् ॥ ७३ ॥ आसनं नृपतेर्दत्वा । तया पृष्टो नृपः स्वयं ॥ रात्रावागमनं कस्मा–द्भवतामत्र कथ्यतां ॥ ७४ ॥ आकारणाय युवयोः । सुवयोयुतयोर्द्वयोः ॥ राजा जगौ ततः सावक् । नेदृशं युज्यते तव ॥ ७५ ॥ प्रजा तव प्रजारूपा । रूपातिशयशालिनी ॥ प्रजापतिरिव त्वं मा । भूया मोहविमोहितः ॥ ७६ ॥ तयेत्थं वारितोऽप्येष । यदा नामुंचदाग्रहं ॥ सा जगाद तदा भूयः । प्रतीक्षस्व दिनं त्विदं ॥ ७७ ॥ आवयोर्वर्त्तते शोको । लोको निंदां करिष्यति ॥ राजा श्रुत्वा च तद्वाणीं । जगाम निजमंदिरं ॥ ७८ ॥ तेन स्मृता तदा तत्रा–गता सा जलदेवता ॥ ज्ञातोदंताभरणानि । ददौ चास्मै सुरं तथा ॥ ७९ ॥ ततः प्रभाते संजाते । दिव्यवेषधरस्त्वयं ॥ परेण दंभयुक्तेन । सुरेण सहितस्तदा ॥ ८० ॥ गतो नृपांतिके हृष्टः । प्रतीहारनिवेदितः ॥ राजामात्यौ विना सर्वा । सभा हर्षाकुलाजनि ॥ ८१ ॥ नमस्कृतो नृपस्तेन । राज्ञासौ गदितस्ततः ॥ कुशलं यमगेहेऽस्ति । सोऽवदद्विद्यते विभो ॥ ८२ ॥

राजा जगौ पुनः कोऽसौ । दूतोऽयं यमभूपतेः ॥ तेनोचे यमदूतोऽपि । जगाद नृपतिं

त्विति ॥ ८३ ॥ धर्मराजस्य राजंस्ते–ऽनेन सर्वं निवेदितं ॥ ततः प्रहृष्टचित्तेन । तेनात्र प्रहि-
तोऽस्म्यहं ॥ ८४ ॥ तथा कथापितं चास्ति । मन्मुखेन तवाधुना ॥ परिवारमेकवारं । सारं
लात्वा मुदा यदा ॥ ८५ ॥ समेष्यसि ममागारं । प्रथमं त्वं तदा वयं ॥ भक्तिं कृत्वा समे-
ष्यामः । सर्वेषां त्वन्निकेतनं ॥ ८६ ॥ युग्मं ॥ तदा मंत्रिमुखं राज्ञा । सम्यग्वृत्त्या निरीक्षि-
तं ॥ मंत्री दृग्विलं दृष्ट्वा । सर्वाभरणभूषितं ॥ ८७ ॥ लोभं गतो नृपं प्राह । देव तत्र प्रग-
म्यते ॥ मैत्री प्रवर्धते येन । गत्यागत्या परौकसि ॥ ८८ ॥ युग्मं ॥ नृपादेशात्ततो राज–पु-
रुषैर्विहिता चिता ॥ अमात्यादियुतो राजा । ययौ तत्र मुदान्वितः ॥ ८९ ॥ यमदूतोऽपत-
त्पूर्वं । चितायां सचिवस्ततः ॥ भूपोऽपि पतितुं तस्यां । यदाचालीत्समुत्सुकः ॥ ९० ॥

तदा दृग्विलेनासौ । बाहौ धृत्वा निवारितः ॥ कथितं च तथा राजन् । पतनं मा कु-
रु त्वकं ॥ ९१ ॥ राजावोचत्कथं सोऽवक् । ज्वलने पतितैः किमु ॥ जीव्यते क्वापि भोः स्वा-
मि–न्निदं महाबुद्धिचेष्टितं ॥ ९२ ॥ अनेन ते कूटबुद्धि–र्दत्ता तेन विनाशितः ॥ स्वामिन्नेहं प-
रं नाहं । करोमीह कदाचन ॥ ९३ ॥ निजावासमतः शीघ्रं । याहि मा हि मुधा मर ॥

तदाकर्ण्य नृपो दध्यौ । न सामान्यः पुमानयं ॥ ९४ ॥ निरागसोऽस्य मयका । विरूपं चिंतितं पुरा ॥ प्राणांतं सापराधेऽपि । मयि चासौ कृपापरः ॥ ९५ ॥ क्रमान्नृत्तदयं सत्यं । गृहस्थोऽप्यहमस्मि न ॥ राज्यं दत्वा ततश्चास्मै । अनगारो न्नवाम्यहं ॥ ९६ ॥ ततो राजा गृहे गत्वा । तस्मै निजसुतां ददौ ॥ करमोचने च राज्यं । ततो दीक्षां स्वयं ललौ ॥ ९७ ॥ चित्ते हरिबलो राजा । चिंतां चक्रेऽन्यदा मुदा ॥ चेन्मे पूर्वगुरुर्ज्ञानी । समेतीह तदा वरं ॥ ॥ ९८ ॥ स एवागाद्विवेर्योगा—द्गुरुर्बुद्धिविशारदः ॥ तद् ज्ञात्वा सपरिस्पंदः । सानंदोऽजनि न्नूपतिः ॥ ९९ ॥ गत्वा गुरुसमीपे स । नत्वा तच्चरणांबुजं ॥ श्रुत्वा च देशनां न्नूपः । श्राद्धधर्मं प्रपन्नवान् ॥ ८०० ॥

पुत्रे जाते निजं राज्यं । तस्मिन्न्यस्य स्वयं गुरोः ॥ समीपे व्रतमादत्त । चित्तसंतोषपोषवान् ॥ १ ॥ व्रतं स निरतीचारं । प्रतिपाल्यचिरं तथा ॥ केवलज्ञानमासाद्य । ययौ सिद्धिं समाधिना ॥ २ ॥ मंत्रिणा नियमसत्का । कथास्य कथिताद्भुता ॥ ततोऽसौ पौषधागार—मध्यदेशं ययौ नृपः ॥ ३ ॥ आवश्यकमसौ कृत्वा । स्वाध्यायं प्रविधाय च ॥ द्वितीये प्रह-

रे कायो–त्सर्गं स कृतवान् सुधीः ॥ ४ ॥ मिथ्यादृग्देवता कापि । तं दृष्ट्वा धर्मतत्परं ॥ उ-पद्रोतुमथारेभे । परं ध्यानाच्चचाल न ॥ ५ ॥ ततः सा प्रकटीभूय । भूयसीं स्तुतिमातनोत् ॥ रागद्वेषौ पुनस्तस्य । नाभूतां भूतदोषदौ ॥ ६ ॥ दत्वाभरणवस्त्रादि । सा गता गगनांगणे ॥ प्रभाते पौषधं सोऽपि । पारयित्वा गृहं ययौ ॥ ७ ॥ एवं स पौषधं कुर्वन् । पर्वघस्रेषु स-र्वदा ॥ सर्वार्थसिद्धिसंज्ञेते । विमानेऽभूत्सुरोत्तमः ॥ ८ ॥ आराध्यः पौषधश्चैव–मन्यैर्धन्यैर्जनै-रहो ॥ सर्वार्थसिद्धिर्येन स्या–दिहामुत्र भवे भवे ॥ ९ ॥ इत्येकादशं व्रतं ॥

किंचिद्दत्वातिथेः पश्चा–द्भुज्यते तच्च भोजनं ॥ अन्यथा स्वोदरस्यात्र । काकादेरपि पूर-णं ॥ १० ॥ सर्वदा चेदिदं न स्या–त्तदा पौषधपारणे ॥ दत्वाशनादि पात्रेभ्यो । जेमनीयं विवेकिना ॥ ११ ॥ अतिथेः संविभागाख्यं । व्रतमाराधयेच्च यः ॥ स स्यात् शांतिमतीवोच्चै–रखंडं सुखभाजनं ॥ १२ ॥ विराधयेत्पुनर्योऽत्र । स दुःखं लभते जनः ॥ इहलोके परलो-के । यथा सा पद्मलोचना ॥ १३ ॥ तथाहि–श्रीविशाले विशालाख्य–पुरे भरतमंडने ॥ सा-धारणोऽभवच्छ्राद्धः । शुद्धश्राद्धगुणान्वितः ॥ १४ ॥ पुत्री शांतिमती तस्य । बाल्यतो विधवा

तु सा ॥ अपरा सधवा पद्म–लोचना पद्मलोचना ॥ १५ ॥

एकदा श्राद्धसद्धर्म–स्ताभ्यां गुर्वंतिके मुदा ॥ गृहीतस्तु विशेषेण । संविग्नागोऽतिथेः पुनः ॥ १६ ॥ व्रतं पालयतो नित्यं । सुखे सति शुभे जने ॥ वर्षाकालेऽन्यदायाते । वृष्टिर्जज्ञे निरंतरा ॥ १७ ॥ तपोधनास्तदा भिक्षा–टनं कुर्वंति नो भियः ॥ जलकायवधस्योच्चैः–स्थितिरेषा तपस्विनां ॥ १८ ॥ पंचघस्रोपवासाश्च । ताभ्यां विदधिरे तदा ॥ पंचमीरात्रिपर्यंते । दध्यौ सा पद्मलोचना ॥ १९ ॥ शांतिमत्या गले बद्धा । कथं कष्टं क्षुधाभवं ॥ सेदेऽन्यदेहसंदेहे । देहेऽहं हंत दुःखिता ॥ २० ॥ विचिंत्येति स्वचित्ते सा । प्रभाते भोजनं घनं ॥ प्रछन्नं विदधे येन । वेदना न क्षुधासमा ॥ २१ ॥ यतो गांधारीवाक्यं–वासुदेव जरा कष्टं । कष्टं धनविपर्ययः ॥ वैधव्यं पुत्रशोकं च । कष्टात्कष्टतरी क्षुधा ॥ २२ ॥ जनको जननी चैवं । तदा शांतिमतीं सतीं ॥ अवोचतां सुतां मान्या–वदान्यां शांतिसंयुतां ॥ २३ ॥ वत्से किं भोजनं स्वछे । न विधत्से यथोचितं ॥ तव प्राणा गतत्राणा । यास्यंत्यन्नं विनाधुना ॥ २४ ॥ तन्निशम्य जगौ सा मे । विद्यते द्वादशं व्रतं ॥ तेन दत्वातिथेः किंचि–द्विदधामीह भोजनं ॥२५॥

वर्षावशाल्लाघवोऽत्र । समायांति कदापि न ॥ तेनोपवासान् कुर्वेऽहं । पितरौ व्रतहेतवे ॥२६॥

तत् श्रुत्वा गदितं ताभ्यां । तर्हि लात्वाऽशनं गृहात् ॥ शीघ्रं चोपाश्रये गत्वा । साधुभ्यो देहि सांप्रतं ॥ २७ ॥ अभ्याहृतं जगौ सेति । नो गृह्णंतीह साधवः ॥ ऊचे पुनस्तदा ताभ्यां । विनान्नं जीवितं कुतः ॥ २८ ॥ भूयोऽभ्यधत्त सा बाला । शश्वद्युष्मत्प्रसादतः ॥ पालितानि व्रतान्युच्चै-र्भंगं कुर्वेऽधुना किमु ॥ २९ ॥ जीवितव्यकृते येऽत्र । खंडयंति निजं व्रतं ॥ कल्पांतं जीव्यते तैः किं । किं वा स्वर्गः प्रजायते ॥ ३० ॥ न त्यजामि नियमं चे-त्स्वजीवो याति जातुचित् ॥ तदा यातु निश्चयं सा । चकारेति विचारधीः ॥ ३१ ॥ अतीवभोजनात्पद्म-लोचनाया विसूचिका ॥ रात्रौ जाता दिने तस्मि-स्ततो मृत्युमवाप सा ॥ ॥ ३२ ॥ व्यंतरी व्रतभंगेन । जज्ञे विज्ञेतराशया ॥ ततो दिनद्वयेनोच्चै-र्वृष्टिसृष्टिः क्षयं ययौ ॥ ३३ ॥ प्रांते सप्तोपवासानां । सुव्रत स नां गुणेर्गिरा ॥ विहर्त्तुं निर्जले देशे । संयताः संगता गताः ॥ ३४ ॥ भ्रमंतो गोचरीच[illegible]ां । ये तत्रागुः कृपालवः ॥ तेभ्यः शांतिमती भिक्षां । दत्वा पारणकं व्यधात् ॥ ३५ ॥

तु सा ॥ अपरा सधवा पद्म-लोचना पद्मलोचना ॥ १५ ॥

एकदा श्राद्धसद्धर्म-स्ताभ्यां गुर्वंतिके मुदा ॥ गृहीतस्तु विशेषेण । संविभागोऽतिथेः पुनः ॥ १६ ॥ व्रतं पालयतो नित्यं । सुखे सति शुभे भवे ॥ वर्षाकालेऽन्यदायाते । वृष्टिर्जज्ञे निरंतरा ॥ १७ ॥ तपोधनास्तदा भिक्षा-टनं कुर्वंति नो भियः ॥ जलकायवधस्योच्चैः-स्थितिरेषा तपस्विनां ॥ १८ ॥ पंचघस्रोपवासाश्च । ताभ्यां विदधिरे तदा ॥ पंचमीरात्रिपर्यंते । दध्यौ सा पद्मलोचना ॥ १९ ॥ शांतिमत्या गले बद्धा । कथं कष्टं क्षुधाभवं ॥ सेहेऽन्यदेहसंदेहे । देहेऽहं हंत दुःखिता ॥ २० ॥ विचिंत्येति स्वचित्ते सा । प्रभाते भोजनं घनं ॥ प्रच्छन्नं विदधे येन । वेदना न क्षुधासमा ॥ २१ ॥ यतो गांधारीवाक्यं-वासुदेव जरा कष्टं । कष्टं धनविपर्ययः ॥ वैधव्यं पुत्रशोकं च । कष्टात्कष्टतरी क्षुधा ॥ २२ ॥ जनको जननी चैवं । तदा शांतिमतीं सतीं ॥ अवोचतां सुतां मान्या-वदान्यां शांतिसंयुतां ॥ २३ ॥ वत्से किं भोजनं स्वच्छे । न विधत्से यथोचितं ॥ तव प्राणा गतत्राणा । यास्यंत्यन्नं विनाधुना ॥ २४ ॥ तन्निशम्य जगौ सा मे । विद्यते द्वादशं व्रतं ॥ तेन दत्वातिथेः किंचि-द्विदधामीह भोजनं ॥२५॥

वर्षविशाल्लाघवोऽत्र । समायांति कदापि न ॥ तेनोपवासान् कुर्वेऽहं । पितरौ व्रतहेतवे ॥२६॥
तत् श्रुत्वा गदितं ताभ्यां । तर्हि लात्वाऽन्नं गृहात् ॥ शीघ्रं चोपाश्रये गत्वा । साधु-
भ्यो देहि सांप्रतं ॥ २७ ॥ अभ्याहृतं जगौ सेति । नो गृह्णंतीह साधवः ॥ ऊचे पुनस्तदा
ताभ्यां । विनान्नं जीवितं कुतः ॥ २८ ॥ भूयोऽभ्यधत्त सा बाला । शश्वद्युष्मत्प्रसादतः ॥
पालितानि व्रतान्युच्चै–र्भंगं कुर्वेऽधुना किमु ॥ २९ ॥ जीवितव्यकृते येऽत्र । खंडयंति निजं
व्रतं ॥ कल्पांतं जीव्यते तैः किं । किं वा स्वर्गः प्रजायते ॥ ३० ॥ न त्यजामि नियमं चे–
त्स्वजीवो याति जातुचित् ॥ तदा यातु निश्चयं सा । चकारेति विचारधीः ॥ ३१ ॥ अतीव-
भोजनात्पद्म–लोचनाया विसूचिका ॥ रात्रौ जाता दिने तस्मि–स्ततो मृत्युमवाप सा ॥
॥ ३२ ॥ व्यंतरी व्रतभंगेन । जज्ञे विज्ञेतराशया ॥ ततो दिनद्वयेनोच्चै–र्वृष्टिसृष्टिः क्षयं ययौ
॥ ३३ ॥ प्रांते सप्तोपवासानां । सुव स नां गुरोर्गिरा ॥ विहर्तुं निर्जले देशे । संयताः संग-
ता गताः ॥ ३४ ॥ भ्रमंतो गोचरीच`ां । ये तत्रागुः कृपालवः ॥ तेभ्यः शांतिमती भिक्षां ।
दत्वा पारणकं व्यधात् ॥ ३५ ॥

एवं सा निरतीचारं । व्रतमाराध्य भावतः ॥ प्रांते चानशनं लात्वा । द्वितीयं कल्पमभ्यगात् ॥ ३६ ॥ ततश्च्युत्वा विदेहेऽसौ । प्राप्य जन्म प्रमोदतः ॥ अंगीकृत्य व्रतं चांते । मोक्षं यास्यति शाश्वतं ॥ ३७ ॥ एवं ज्ञात्वा सदा विज्ञैः । पालनीयमिदं व्रतं ॥ यथा मोक्षं महासौख्यं । संभवेत्कुशलसंभवं ॥ ३८ ॥ इति द्वादशं व्रतं ॥ एभिश्चतुर्भिः पूर्वोक्तैः । संयोगः श्रीगुरोर्भवेत् ॥ ततः शिक्षा जने तेना—ऽमूनि शिक्षाव्रतान्यहो ॥ ३९ ॥ अयं द्वादशधा श्राद्ध—धर्मो द्वादशकल्पदः ॥ द्वादशात्मेव सदृष्टे—रसौ सर्वतमोहरः ॥ ४० ॥ यथा सर्वा रसवती । रुच्या संवरपुष्टिदा ॥ अनंतबलकर्त्री च । तथा सर्वा क्रियानया ॥ ४१ ॥

चरणांगादिसामग्री । प्रवरस्य नरस्य वा ॥ अदर्शनस्य नैव स्या—दप्यक्षरपदेक्षणं ॥ ॥ ४२ ॥ प्रौढे सत्यपि सत्पोते । गुणश्रेणिसमन्विते ॥ परं ध्रुवदर्शनेन । स्यादिष्टस्थानसंगमः ॥ ४३ ॥ सुवर्णं केवलं लोके । गदितं शुद्धिकारणं ॥ अमूल्यरत्नयुक्तं त—न्महोदयनिबंधनं ॥ ॥ ४४ ॥ नायकेन विना हारो । विहारो जिनपं विना ॥ घृतं विना यथाऽऽहारो । न शोभां श्रयति क्षितौ ॥ ४५ ॥ सम्यक्त्वेन विना धर्मो । न शर्मोच्चयकृत्तथा ॥ अतः कुलध्वजेनेव ।

पालनीयमिदं नरैः ॥ ४६ ॥ तथाहि—जंबूद्वीपेऽत्र भरत—क्षेत्रमध्यस्थिताद्भुता ॥ अयोध्याना-
मनगरी । तत्र शंखनृपोऽभवत् ॥ ४७ ॥ धारिणी दयिता तस्य । तनयस्तु कुलध्वजः ॥ सो-
ऽन्यदा वनमध्येऽगात् । क्रीडां कर्त्तुं भटान्वितः ॥ ४८ ॥ स पुष्पावचयं तत्र । क्रियमाणः कु-
मारराट् ॥ सूरिं वृक्षतलासीनं । ददर्शादर्शनिर्मलं ॥ ४९ ॥ केकीव मेघं तं दृष्ट्वा । सहर्षः
सोऽभवत्क्षणात् ॥ ततो ववंदे विधिव—द्गुरुं गुरुगुणान्वितं ॥ ५० ॥

उपविष्टे यथास्थानं । मानं मानसजं निजं ॥ त्यक्त्वा तस्मिन् जगादेवं । गुरुर्धर्मधुरा-
धरः ॥ ५१ ॥ प्राप्य पुण्यं जनत्वं ये । पंचमीं गतिमुच्चकैः ॥ अर्जयंति नरास्तेषां । सफलं
जीवितं स्मृतं ॥ ५२ ॥ सम्यग्दर्शनचारित्र—ज्ञानानि जगदुर्जिनाः ॥ तदुपायं गतापायं । स-
र्वमार्गप्रदर्शिनं ॥ ५३ ॥ तन्मध्ये दर्शनं श्रेष्टं । त्रिवर्गे धर्मवत्पुनः ॥ अतोऽस्मिन् सर्वथा चि-
त्तं । कार्यं कार्यविदा सदा ॥ ५४ ॥ एकविधं द्विविधं तत् । त्रिविधं च चतुर्विधं ॥ पंचविधं
बुधाः प्रोचु—राद्यं तत्वरुचिः शुचिः ॥ ५५ ॥ द्विविधं द्रव्यभावाभ्यां । निश्चयाद्व्यवहारतः ॥
॥ उपदेशनिसर्गाभ्यां । कथितं च जिनागमे ॥ ५६ ॥ त्रिधा कारकरोचक—दीपकानां प्रभे-

दतः ॥ क्षायिकं वा क्षायोपश–मिकौपशमिके अपि ॥ ५७ ॥ औपशमिकं सम्यक्त्वं । सा- स्वादनमिहापरं ॥ क्षायोपशमिकं चैव । क्षायिकं च चतुर्विधं ॥ ५८ ॥ वेदकयुक्तान्येतानि । पंचसंख्यानि संजगुः ॥ पंच लक्षणभूषण–दूषणान्यस्य संति च ॥ ५९ ॥

कुलध्वजेन तत् श्रुत्वा । गृहीतं सुगुरोस्ततः ॥ सर्वसमक्षं सम्यक्त्वं । रागद्वेषनिराकृतं ॥ ६० ॥ तस्मिन्नंगीकृते सूरि–स्तमुवाच विचारवान् ॥ अतः परं त्वया ध्येयं । स्वरूपं परमेष्ठिनः ॥ ६१ ॥ सुगुरुश्च तथाराध्यो । धर्मो जीवदयामयः ॥ शश्वत्कषायाः संत्याज्याः । कार्या संगतिरुत्तमैः ॥ ६२ ॥ तथा स्वदारसंतोषो । दोषो ग्राह्यो न कस्यचित् ॥ नवतत्त्वे रुचिर्धार्या । साधुधर्मे मतिः पुनः ॥ ६३ ॥ इत्यादि कुर्वतस्तेऽत्र । सर्वं श्रेयं भविष्यति ॥ तन्निशम्य निजंधाम । गंतुं मार्गेऽचलत्स च ॥ ६४ ॥ कयोश्चिद्योषितोस्तत्र । कुर्वत्योः कलहं मिथः ॥ कारणं पृष्टवान् राज–कुमारः सुकुमारवाक् ॥६५॥ तदैकावककुमाराहं । लोहकारप्रियानया ॥ रथकारस्त्रिया मार्गो । न मुक्तो रिक्तकुंभया ॥ ६६ ॥ सपानीयो महाकुंभो । मस्तके वर्त्तते मम ॥ तथा सत्प्रियविज्ञानं । कस्य शस्यमतेरिह ॥ ६७ ॥ कुमारेण ततः प्रोक्तं । किं

विज्ञानं प्रियस्य ते ॥ साह लोहमयं मीनं । कृत्वा मत्पतिरंबरे ॥ ६८ ॥ उत्प्लुत्य जलधेर्मध्या
—द्रत्नानि मौक्तिकानि च ॥ आनयेन्मेऽनया तेन । समता नास्ति सांप्रतं ॥ ६९ ॥ युग्मं ॥
तत् श्रुत्वा रथकृद्भार्या । वक्ताथ कुमरंप्रति ॥ मत्स्वामी काष्टतुरगं । कृत्वा भ्रमति पु-
ष्करे ॥ ७० ॥ पश्यामीः सकलां पृथ्वीं । विलोक्य नगरे निजे ॥ पुनः समेति तेनाह—मधि-
कास्या विशेषतः ॥ ७१ ॥ युग्मं ॥ ततस्ते महिले लात्वा । स जगाम नृपांतिकं ॥ राज्ञा पृ-
ष्टस्तयोर्वृत्तं । जगाद निखिलं कलं ॥ ७२ ॥ लोहकृत्सूत्रधारौ तौ । समाकार्य धराधिपः ॥
प्रथमं लोहकारस्य । लोहं मीनकृतेऽर्पयत् ॥ ७३ ॥ अयोमयो झषस्तेन । कृतो विज्ञानशा-
लिना ॥ ततो राजापवरके स । समागात्तेन संयुतः ॥ ७४ ॥ स्थितोऽपवरके तस्मिन् । स
सुभुकूसंयुतो मुदा ॥ दत्ता च कीलिका तत्र । वायुसंदोहधारिणी ॥ ७५ ॥ उत्पपात ततो
मीनो । गगने वायुवेगतः ॥ गत्वा समुद्रे रत्नानि । गलित्वा च समागतः ॥ ७६ ॥ तद् दृष्ट्वा
नृपतिश्चित्ते । चमत्कारं दधन् परं ॥ लोहकारमथाचष्ट । कुतस्ते चेदृशी कला ॥ ७७ ॥
सोऽवददेव देवेन । वरो दत्तोऽस्ति मे वरः ॥ तावता सूत्रधारेण । तुरंगो विहितः स्वयं ॥

॥ ७८ ॥ अश्वमानीय राज्ञोऽग्रे । ढौकितस्तेन धीमता ॥ तदानीं कुमरोऽज्ञाणीत् । पश्येऽहं
वसुधाधिप ॥ ७९ ॥ सूत्रधारं नृपोऽवोचत् । कियद्भिर्दिवसैः पुनः ॥ समागमनमत्राहो । ष-
एमासैः सोऽवदद्विज्ञो ॥ ८० ॥ राजादेशात्कुमारोऽसा—वारुह्य तुरगं सुगं ॥ उत्पपात नज्ञो-
मार्गे । कीलिकायाः प्रयोगतः ॥ ८१ ॥ सोऽपश्यन् वसुधां सिद्धां । पुरीं कामपि सुंदरीं ॥ य-
यौ तत्र स्थातुकामो—ऽपचकर्ष च कीलिकां ॥ ८२ ॥ तद्धीनस्तुरगः शीघ्रं । पपात पृथिवीत-
ले ॥ उत्तीर्णश्च कुमारोऽपि । तस्माद्विस्मितमानसः ॥ ८३ ॥ पृथक्खंडमिमं कृत्वा । दत्वा
तं मस्तके स्वके ॥ सुष्वाप कुमरश्चूत—तले गयाकले कले ॥ ८४ ॥ मालाकारस्तदा तत्र ।
समेतस्तं तथाविधं ॥ अनभ्रगयानिद्राणं । विलोक्याधात्सुविस्मयं ॥ ८५ ॥ निद्रामुक्तं च तं
नत्वा । मानं दत्वा ललौ गृहे ॥ ज्ञोजनं कारयामास । वासस्थानं तथा ददौ ॥ ८६ ॥ तत्र
मुक्त्वा तुरगं स । पुरे बज्राम लीलया ॥ जिनेंद्रज्ञवनं चैकं । दृष्टवान् दृष्टिसौख्यदं ॥ ८७ ॥
मध्ये प्रविश्य चार्हतं । नत्वा यानत्स्तुतिं पठेत् ॥ तावदेका प्रतीहारी । समायाता जिनाल-
ये ॥ ८८ ॥ निःसारयन्नरान् सर्वान् । सावेगद्वात्तदा तु सा ॥ कुमारः कोणके तस्य । लीय-

तेस्म दिदृक्षया ॥ ८९ ॥
राजपुत्री समायाता । स्त्रीवृता जिनमंदिरे ॥ लास्यं कृत्वा जिनं नत्वा । ययौ च स्वी-
यसद्मनि ॥ ९० ॥ निस्सृत्य कुमरस्तस्मा-न्नरं पप्रच्छ कंचन ॥ किं पुरं कस्य पुत्रीयं । सो-
ऽवदत् श्रूयतां विज्ञो ॥ ९१ ॥ इदं रत्नपुरं नाम । तत्रेह विजयो नृपः ॥ तेनैतत्कारितं चै-
त्यं । कन्या भुवनमंजरी ॥ ९२ ॥ अस्या योग्यो वरः कोऽस्ति । राजा मंत्रीश्वरानिति ॥ ए-
कदावक् तदा सैषा । जगाद नृपतिंप्रति ॥ ९३ ॥ ऊर्ध्वचरः स्वशक्त्या यो । व्रजतीह विहा-
यसा ॥ वरं वरिष्ये तमहं । नान्यं मान्यं जगत्त्रये ॥ ९४ ॥ तत् श्रुत्वा नृपतिर्दध्यौ । प्रति-
ज्ञा दुर्घटानया ॥ कृता ततः कथंकारं । पूरयिष्यामि सांप्रतं ॥ ९५ ॥
एवं कालो व्रजत्यस्या । वरो नाद्यापि लभ्यते ॥ तादृक् तेन जिनस्याग्रे । नृत्यगीते
करोत्यसौ ॥ ९६ ॥ तन्निशम्य निशायां स । सज्जीकृत्य तुरंगमं ॥ निशीथसमये सद्य-स्त-
स्या भुवनमभ्यगात् ॥ ९७ ॥ अर्द्धचर्विततांबूलं । तस्या मंचे विमुच्य सः ॥ पुनः स्वस्थान-
मायातो-ऽमङ्क्त स्वं वाजिनं व्यधात् ॥ ९८ ॥ प्रभाते साथ तांबूलं । स्वतल्पे वीक्ष्य विस्मि-

ता ॥ दध्यौ चेतसि केनेदं । त्यक्तं व्यक्तं निशाक्षणे ॥ ९९ ॥ द्वितीयायां पुनारात्रौ । सा सुप्ता कूटनिद्रया ॥ पूर्ववत्कुमरः सोऽपि । तत्रागाद्गगनाध्वना ॥ ९०० ॥ तादृग्विधं च तांबूलं । मुक्त्वा यावद्व्रजत्यसौ ॥ तावद्वस्त्रांचले बाढं । विधृतः स तया रयात् ॥ १ ॥ कस्त्वं कुतः कया रीत्या । समेतोऽसि समादिश ॥ इति पृष्टः स आचष्ट । स्वरूपं सकलं निजं ॥ २ ॥

श्रुतेऽद्भुतेऽस्य वृत्तांते । सा दध्यौ निजचेतसि ॥ दुर्घटा पूरिता पूर्णा । प्रतिज्ञा मेऽधुनामुना ॥ ३ ॥ अतो वृणोम्यमुं राज–पुत्रमंबरगामिनं ॥ ततः सा कथयामास । हृद्गतं ज्ञावमात्मनः ॥ ४ ॥ तन्निशम्य कुमारेण । परिणीता कुमारिका ॥ रात्रौ तिष्ठति तत्रैव । दिवसे नगरे सदा ॥ ५ ॥ अंगानां वृद्धिमालोक्य । तन्मातृपुरतस्तदा ॥ सखीभिः सर्वमाख्यातं । तया च नृपतेः पुनः ॥ ६ ॥ गूढकोपस्ततो जज्ञे । राजा तावत्पणांगना ॥ एका तत्र समायाता । परिवारसमन्विता ॥ ७ ॥ तयाथ मंडितं नाट्यं । लब्ध्वावसरमात्मनः ॥ अद्भुतादृष्टपूर्वा च । नवीना दर्शिता कला ॥ ८ ॥ तथापि नोचितं किंचि–त्तस्यास्तेन समर्पितं ॥ तदा चिंतातुरं तस्माद् । ज्ञातं राज्ञस्तया मनः ॥ ९ ॥

निर्बंधेन तयैकांते । पृष्टो नृपोऽखिलं जगौ ॥ प्रकटं तं करिष्येऽहं । सावोचन्नृपतेः पुरः ॥ १० ॥ सिंदूरं तैलमिश्रं सा । कृत्वा रात्रौ तदंगणं ॥ लिंपयित्वा च प्रछन्नं । जगाम निजमंदिरं ॥११॥ प्रभाते राजपुरुषान् । लात्वा सागच्चतुष्पथे ॥ द्यूतस्थाने कुमारं तं । तल्लिप्तांह्रिं न्यदर्शयत ॥ १२ ॥ तदादेशात्तदा सोऽपि । तैर्धृतो नृपतेः पुरः ॥ आनीतश्च नृपेणापि । शूलारोपो निरूपितः ॥ १३ ॥ तत्स्थाने नीयमानः स । मालाकारगृहांतिके ॥ आनीतो राजमर्त्यांना–मिदं वचनमब्रवीत् ॥ १४ ॥ मम कालः समायातः । कालीं मद्गोत्रजामतः ॥ अत्रस्थां च नमस्कुर्वे । यदि वो वचनं भवेत् ॥ १५ ॥

तद्भक्तैस्तैर्वचो मेने । तस्य वीरशिरोमणेः ॥ सोऽपि गृहे प्रविश्याशु । सज्जं चक्रे हयं स्वयं ॥ १६ ॥ पश्यतामपि तेषां स । गगने गतवान् जवात् ॥ रेखा इवोर्ध्वमूर्धान–स्तेऽस्थुः शून्यहृदस्तदा ॥ १७ ॥ गवाक्षस्थां प्रियां लात्वा । ययौ द्वीपं स सिंधुगं ॥ उत्तीर्य तुरगात्तत्र । सुष्वाप सुखनिद्रया ॥ १८ ॥ तावता तत्र मिथ्यादृक् । कोऽपि देवः समाययौ ॥ कुमारदर्शनाचार–रुचिव्याघातहेतवे ॥ १९ ॥ तत्पत्नीतुरगौ तेना–ऽदृश्यतां गमितौ क्षणात्

॥ कुमारस्य तथा देहे । रोग उत्पादितोऽच्युतः ॥ २० ॥ तद्वेदनावशात्तस्य । निद्रामुद्गगमन्तथा ॥ पत्नीमाकारयामास । स तां तावन्न पश्यति ॥ २१ ॥

अर्ध्वं विलोकयामास । सोऽप्यदृश्यस्तदाभवत् ॥ तेन चिंतातुरो जातो–निर्जितोऽपीह कर्मतः ॥ २२ ॥ तेनैवैको निमित्तज्ञो । विदितः प्रहितस्तथा ॥ तत्पार्श्वे स समागत्य । जगाद कुमरंप्रति ॥ २३ ॥ गतवस्तुनोऽस्ति चिंता । चित्ते ते मद्वचः पुनः ॥ चेत्करोषि तदा सर्वं । तव हस्ते चटिष्यति ॥ २४ ॥ अन्यथा तव देहोऽपि । यास्यत्यन्यस्य का गतिः ॥ तदाकर्ण्यावदत्सोऽपि । वचः किं त वदाधुना ॥ २५ ॥ सोऽवदद्वीतरागो यो । भवतांगीकृतोऽस्ति भोः ॥ सद्दक्षां दुष्टशिक्षां च । न कुर्यात्स कदाचन ॥ २६ ॥ रागद्वेषौ न यश्चित्ते । विधत्ते पूजितार्द्दितः ॥ सर्वत्र समतां धत्ते । स किं दत्ते शुभाशुभं ॥ २७ ॥ अवतारं जनाधारं । कारणेऽपि करोति न ॥ बलान्नो लाति नो राति । किंचिन्नाख्याति पाति न ॥ २८ ॥ करौ शस्त्रधरौ रक्षा–करौ स्यातां परे नरे ॥ तद्धीनौ तौ पुनर्दीनौ । मीनौ वा बलवर्जितौ ॥२९॥ लक्ष्मीर्लक्ष्मीप्रदा नास्य । कर्त्ता हर्त्ता तथा न यः ॥ नात्मीयपरभेदस्तु । खेदस्तस्मात्कथं व-

जेत् ॥ ३० ॥ अवाहनः स्वयं तेऽग्नौ । सहते वाहनं कथं ॥ अप्रियस्तव पत्नीं च । नीरूपो
रूपमव्ययं ॥ ३१ ॥ अतः सवाहनं देवं । श्रीस्त्रीशस्त्रसमन्वितं ॥ साधिकावयवं भक्त-वत्सलं
त्वं समाश्रय ॥ ३२ ॥ तथा च यो गुरुश्चित्ते । वर्त्तते ते निरंतरं ॥ सोऽपि रक्षाविधानादि ।
कुरुते नैव कस्यचित् ॥ ३३ ॥ शांतिकं कुरुतेऽरिष्टे । ज्योतिष्कं च विलोकयेत् ॥ प्रयुंक्ते वैद्य-
कं रोगे । व्यवहारं च वेदजं ॥ ३४ ॥ शापं यच्छति चान्यस्मै । स्वस्मै चानुग्रहं सदा ॥ या-
ति चायाति यः कार्ये । भक्तानां लाति पातकं ॥३५॥ यस्मै यद्रोचते चित्ते । तस्मै तद्भाषते
हितं ॥ ममतामोहसंयुक्तं । तं गुरुं भज सत्तम ॥ ३६ ॥ सार्वोऽपि वांछारहितः । सहितो
दयया त्वया ॥ स्वहितो मन्यते तेन । कथं सिद्ध्येत्तवहितं ॥ ३७ ॥

सर्वदानं द्विजादीनां । सोमपानं मखादिषु ॥ तीर्थस्थानं जलामानं । संतानं चापि ना-
कदं ॥ ३८ ॥ मृता अपि सुतैर्यत्र । तृप्यंते पितरो निजाः ॥ तथा भोजनवेलायां । व्रजेत्का-
कोऽपि पात्रतां ॥ ३९ ॥ पादपोंबरधेन्वादे-रपि पूजा प्रकीर्त्तिता ॥ सपत्नीकोऽपि सल्लोकै-र्म-
न्यते गुरुरादरात् ॥ ४० ॥ सामान्यदेवदेवीभ्यो । निजजीवोऽपि दीयते ॥ अष्टादश सदा व-

र्णा । यत्स्थास्तं धर्ममाचर ॥ ४१ ॥ तत् श्रुत्वा कुमरोऽवोच—द्देवः सर्वज्ञ एव मे ॥ निःसं-गस्तु गुरुर्धर्मो । दयारम्यो वसेद् हृदि ॥ ४२ ॥

वाजी मे खगतिभ्राजी । प्रिया चित्तप्रिया तथा ॥ गतत्राणा इमे प्राणा—श्चेत्प्रयांतु प्रयांतु ते ॥ ४३ ॥ निश्चलं निर्मलं नैव । सम्यक्त्वं स्वं त्यजाम्यहं ॥ सोऽपि तन्निश्चयं ज्ञात्वा । मिश्रदृष्टिस्तदाभवत् ॥ ४४ ॥ तद्रूपं प्रकटीकृत्य । सत्कृत्य च तमादरात् ॥ देवो जगाम स्वं स्थानं । कुमारोऽपि तथाकरोत् ॥ ४५ ॥ क्रमेण राज्यं संप्राप्य । सम्यक्त्वं जगतीजने ॥ स्थापयामास भूपालः । प्रजा राजानुगा यतः ॥ ४६ ॥ प्रतिपाल्य चिरं राज्यं । सम्यक्त्वं च यथाविधि ॥ प्रांते दीक्षामसौ लात्वा । जगाम पदमव्ययं ॥ ४७ ॥ एवं ये निरतीचारं । सम्यक्त्वं हृदये सदा ॥ धरंति मनुजा धन्या—स्ते गण्याः सुकृतात्मसु ॥ ४८ ॥ इति सम्यक्त्वं ॥ एवं च देशनां श्रुत्वा । केऽपि दीक्षां प्रपेदिरे ॥ शिरभृत्प्रमुखाः श्राद्ध—व्रतानि च विवेकिनः ॥ ४९ ॥ अंगीचकार सम्यक्त्वं । स्वयंभूर्जिनसन्निधौ ॥ अन्येऽप्यविरता लोका—स्तदेव जगृहुर्भृशं ॥ ५० ॥

प्रथमं प्रहरं याव-च्चक्रे सद्देशनां विभुः ॥ द्वितीययामे गणभृ-न्मंदिरश्चेति तां व्यधात्
॥ ५१ ॥ भविका एष दुःपारः । संसारक्षारसागरः ॥ जन्ममृत्युजरारोग-लोलकल्लोलमालि-
तः ॥ ५२ ॥ क्रोधवाडवसंयुक्तो । गर्वपर्वतवासयुक् ॥ मायावेलान्वितो लोभ-गम्भीरावर्त्तदु-
स्तरः ॥ ५३ ॥ जीवयोनिनक्रचक्र-प्रमुखैः परितः श्रितः ॥ आश्रवद्वारतटिनी-सपंकजलपू-
रितः ॥ ५४ ॥ परितो हास्यफेनेन । द्वेषदुर्वातदुस्सहः ॥ कुदर्शनवारिवारै-र्दुर्वारैः संभृतोऽ-
पि च ॥ ५५ ॥ तृष्णावृद्धिकरो नित्यं । जलजंतुसमन्वितः ॥ नीचोच्चगोत्रकलितः । पंकानि-
क्षिप्तमानवः ॥ ५६ ॥ पंचभिःकुलकं ॥ सम्यक्त्वं यत्प्रतिष्ठानं । व्रतानि फलकान्यहो ॥ गुणौ-
घा दोरका ज्ञेयाः । कूपको निश्चलं मनः ॥ ५७ ॥ सितध्यानं सितपटो । निर्यामस्तु गुरुः
स्मृतः ॥ केनिपाताः सुनियमाः । क्षांतिः स्यात्क्षेपणी पुनः ॥ ५८ ॥

ज्ञानं ध्रुवोऽत्र विज्ञेयः । संतोषोऽट्टालको मतः ॥ पौलिंदाः स्युस्तपोभेदा । दयानालिः
प्रकीर्त्तिता ॥ ५९ ॥ इदृशं वहनं यस्य । भवेत्पुण्यवतः सतः ॥ स तीर्त्वेमं ध्रुवं याति । म-
हानंदपुरं वरं ॥ ६० ॥ यामे पूर्णे द्वितीयेऽस्या । विररामाग्रणीर्गणी ॥ ततः स्वं स्वं ययुः

स्थानं । देवासुरनराः पराः ॥ ६१ ॥ स्थाने स्थाने जिनस्यैवं । देवाः सेवाकरा वराः ॥ चक्रुः समवसरणं । शरणं शर्मसंपदः ॥ ६२ ॥ श्रमणानामष्टषष्टिः । सहस्राण्यस्य जज्ञिरे ॥ संयतीनां लक्षमेकं । शतान्यष्टौ तथैव च ॥ ६३ ॥ एकादशशतान्यासन् । श्रीचतुर्दशपूर्विणां ॥ अष्टचत्वारिंशत् शता—न्यवधिज्ञानिनां पुनः ॥ ६४ ॥ पंचपंचाशच्छतानि । मनःपर्यवशालिनां ॥ एतावंति शतान्येव । केवलज्ञानिनां तथा ॥ ६५ ॥ चारुवैक्रियलब्धीनां । शतानि नवतिः सतां ॥ सद्विशती त्रिसहस्री । वादिनां सुप्रसादिनां ॥ ६६ ॥ अष्टसहस्रसंयुक्तं । श्रावकाणां द्विलक्षक ॥ श्राद्धीनां च चतुर्लक्षं । चतुस्त्रिंशत्सहस्रयुक् ॥ ६७ ॥ पंचदशवर्षलक्षं । द्विवर्षोनं च केवलात् ॥ उर्व्यां विहरतश्चैवं । परिवारोऽजनि प्रभोः ॥ ६८ ॥ निर्वाणसमयं ज्ञात्वा । सम्मेताद्रिं विभुर्ययौ ॥ आददेऽनशनं षड्भिः । सहस्रैर्मुनिभिः समं ॥ ६९ ॥

मासं यावदनशनं । प्रतिपाल्य पवित्ररुक् ॥ आषाढकृष्णसप्तम्यां । रेवतीस्थे निशाकरे ॥ ७० ॥ कायोत्सर्गस्थितः शुद्ध—शुक्लध्यानविराजितः ॥ पूर्वोक्तैर्मुनिभिः साकं । निर्वाणमगमद्विभुः ॥ ७१ ॥ तदा नरेंद्रा इंद्राश्च । तत्राजग्मुर्विषादिनः ॥ पूर्वं शोकभरं कृत्वा । पश्चात्कृ-

त्यं व्यधुस्तदा ॥ ७२ ॥ इंद्रादेशादाग्नियोगि–सुरैर्गोशीर्षचंदनं ॥ आनीय प्राच्यां ककुभि । वृत्ता नाथाय निर्मिता ॥ ७३ ॥ चिता चेक्ष्वाकुसाधूनां । त्र्यस्राऽपाच्यां तथैव च ॥ प्रतीच्यां तु चतुःकोणा । परेषां रचिता तता ॥ ७४ ॥ युग्मं ॥

क्षीरांबुधेर्जलैः स्नानं । लेपं सच्चंदनैर्घनैः ॥ अकारयद्वज्री शंभोः । परेऽन्येषां तु निर्जराः ॥ ७५ ॥ देवदुष्येण देवेशो । जिनांगं पर्यधापयत् ॥ कल्पवृक्षप्रसूनैश्च । सुगंधैः समभ्यूपयत् ॥ ७६ ॥ शिबिकात्रितयं तत्र । विचक्रुस्त्रिदशा भृशं ॥ प्रभुं नत्वा हरिर्मूल–शिबिकायां न्यधात्स्वयं ॥ ७७ ॥ अन्ययोरन्यविबुधा । अन्येषां चिक्षिपुस्तनूः ॥ यथायोग्यं सुमनसो । नौचित्योल्लंघनस्पृशः ॥ ७८ ॥ सहस्रवाह्यां शिबिकां । बिडौजा उद्दधौ प्रभोः ॥ परेषां तु परे देवा । क्रुद्धर्षकिन्नरान्विताः ॥ ७९ ॥ देवस्त्रीषु ददानासु । रासकान् रसतः स्वतः ॥ तथा सुपर्वगंधर्व–वर्गे तूर्यत्रिकोद्यते ॥ ८० ॥ कुर्वाणेषु पुरो धूपं । गीर्वाणेषु च केषुचित् ॥ ॥ शुभ्रछत्राणि बिभ्रत्सु । भासुरेषु परेषु च ॥ ८१ ॥ अपरेषु सुमनस्सु । वर्षत्सु सुमनःस्रजः ॥ अशेषदोषदंत्रीं च । शेषां गृह्णत्सु केषुचित् ॥ ८२ ॥ पूर्वदिक्पोऽथ पूर्वस्यां । चितायां

चिक्षिपे जिनं ॥ अन्ययोरन्यसाधूनां । वपूंष्यन्यसुरा न्यधुः ॥ ७३ ॥

अग्निरग्निकुमारैस्तु । वातो वातकुमारकैः ॥ कर्पूरपूरो देवैश्चि-श्चितासु निहितस्तदा ॥ ॥ ७४ ॥ अस्थिवर्जेषु दग्धेषु । वह्निना धातुषूच्चकैः ॥ विध्यापयंश्चितां मेघ-कुमाराः क्षीरनीरतः ॥ ७५ ॥ अथोपरितनीं दंष्ट्रां । दक्षिणामग्रहीद्धरिः ॥ आद्यो वामां पुना रम्या-मीशानेंद्रस्तदार्चितुं ॥ ७६ ॥ ललावधस्तनीं दंष्ट्रा-मवामां चमराधिपः ॥ बलिस्तु वामामपरं । दंतालिंश्च यथोचितं ॥ ७७ ॥ अस्थिखंडान्परे देवा । द्विजा अग्निलवान्नवान् ॥ तेषां पूजा ततो जाता । विख्यातास्तेऽग्निहोत्रिणः ॥ ७८ ॥ रक्षापोट्टलिकां कृत्वा । बबंधुर्न्नृभुजादयः ॥ अद्यापि तत्प्रवाहेण । रक्षा रक्षाकरा मता ॥ ७९ ॥ ववंदे त्वपरै रक्षा । शरीरं मर्दितं परैः ॥ नरैस्तदाधुना तेन । दृश्यते तद्विधिर्जने ॥ ८० ॥ अपरे जगृहू रेणू-स्तथा तत्र जना यथा ॥ खातं जातं ततो देवै । रत्नस्तूपोऽत्र निर्मितः ॥ ८१ ॥

ततो नंदीश्वरे यात्रां । कृत्वा सर्वे पुरंदराः ॥ स्वं स्वं स्थानं ययुर्येन । स्थितिरेषा दिवौकसां ॥ ८२ ॥ पंचदशवर्षलक्षाः । कुमारत्वे तथा व्रते ॥ राज्ये त्रिंशत्प्रभोरेव-मायुः षष्ठ्य-

द्भदक्षूत ॥ ९३ ॥ श्रीवासुपूज्यनिर्वाणा—द्विमलप्रभुनिर्वृतिः ॥ सागराणां त्रिंशतौ तु । व्यतीतायामजायत ॥ ९४ ॥ षष्टिहायनलक्षाणि । प्रतिपाल्यायुरात्मनः ॥ स्वयंभूः प्रययौ षष्ठीं । पापतो नरकावनिं ॥ ९५ ॥ वासुदेवस्य कौमारे । वर्षाणां द्वादशाभवन् ॥ सहस्राणि च तावंति । देशाधिपतिस्तत्पदे ॥ ९६ ॥ तथा नवतिवर्षाणि । सहस्राणीह दिग्जये ॥ एकोनषष्टिलक्षाणि । वासुदेवपदेऽर्थदे ॥ ९७ ॥ पंचसप्ततिसहस्रा—धिकानि नवभिः शतैः ॥ मुनिचंद्रमुनेः पार्श्वे । गत्वा दीक्षां ललौ तदा ॥ ९९ ॥ पंचषष्टिवर्षलक्ष—मितमायुः प्रपूर्य सः ॥ तथा कर्मक्षयं कृत्वा । संप्राप परमं पदं ॥ १००० ॥

त्रिषष्टिसच्चरित्रेषु । पवित्रेषु गुणोच्चयैः ॥ चतुर्णां चरितानीह । गदितानि मया धिया ॥ ॥ १ ॥ दानशीलतपोभाव—धर्मभेदा इमेऽमले ॥ श्रीसंघे ददतां विद्या—सौख्यकल्याणसंपदः ॥ २ ॥ अत्रागमविरुद्धं यत् । कविधर्मस्य वा भवेत् ॥ छंदोव्याकरणाद्यूहं । स्वयं तच्छोध्यमुत्तमैः ॥ ३ ॥ श्रीरत्नसिंहसूरींद्रा । विबुधावलिमालिताः ॥ गोसुधर्माधिकोद्योता । जयंतीहार्थसार्थदाः ॥ ४ ॥ उदयवल्लभसूरीशा । महाव्रतधराः पराः ॥ सर्वमंगलाभिरामा । नं-

दंतु गणसंयुताः ॥ ५ ॥ पदार्थाः प्रकटा यद्व–त्प्रसादाच्चंद्रसूर्ययोः ॥ भवंति भूस्पृशां नित्य–मेतयोर्मे तथा किल ॥ ६ ॥ क्व बालस्य पदन्यासे । सामर्थ्यं मम सांप्रतं ॥ सदाशयवशात्किं तु । गुरूणां तत्प्रवीणता ॥ ७ ॥ सरस्वतीव श्रीधर्म–लक्ष्मीर्जीयान्महत्तरा ॥ सुवर्णलक्ष्मजननी ! प्रविणाविधिसंयुता ॥ ८ ॥ स्तंभोऽपि तीर्थवद्यत्र । सदालयनिबंधनं ॥ उच्चैर्गतिः सुकाष्टोद्भूः । स्तंभतीर्थमिदं ततः ॥ ए ॥

वेलाईभाद् द्विवेलं य–त्सेवायै विलुठन् भुवि ॥ रत्नाकरोऽपि तीर्थत्वा–न्महेंद्रीयुक् समेति च ॥ १० ॥ श्रीश्रीमालकुले कल्प–द्रुमकल्पेऽत्र वासभृत् ॥ आसीद् हरपतिः संघ–पतिर्व्यक्तिद्युतिः ॥ ११ ॥ पञ्चबाणयुगर्द्याख्ये । वत्सरे गतमत्सरे ॥ सप्तदेवालयैर्यात्रा । कृता शत्रुंजयादिषु ॥ १२ ॥ श्रीरत्नसिंहसूरीणां । पदं येनात्र कारितं ॥ तथा श्रीरत्नचूलायाः । साध्वीवर्गशिरोमणेः ॥ १३ ॥ नामलदेभवस्तस्य । पुत्रः सज्जनसिंहकः ॥ कौतुकदेवीजनितः । श्रीशाणस्तत्सुतो जयी ॥ १४ ॥ एतच्चरित्रनिष्पत्ति–वर्षे हर्षेण सोत्सवं ॥ शत्रुंजयोज्जयंतादि–तीर्थे तीर्थेशसंख्यया ॥ १५ ॥ देवालयैर्युतो यात्रां । योऽकरोद्विधिसंयुतां ॥ तस्य श्रीशाण-

राजस्था–ग्रहेण विहितो मया ॥ १६ ॥

तस्मिन्नेव पुरे रम्ये । मुनींदुतिथिवत्सरे ॥ श्रावणासितपंचम्या । दिने सोमाश्विनीयुते ॥ १७ ॥ प्रासादात्स्तंभनेशस्य । रत्नसिंहासनस्थितेः ॥ महोदयवल्लभस्य । ज्ञानरत्नाकरस्य च ॥ १८ ॥ ग्रंथोऽयं जयतान्नित्यं । धर्मलक्ष्मीसमन्वितः ॥ जिनभाषितज्ञानादि–रत्नश्रीसहितो जने ॥ १९ ॥ पंचभिः कुलकं ॥ शाखावृद्धिधरः पराश्रितसुरछायाकरः सुंदरः । संतापौघहरः सपुष्पनिकरः सद्भक्तदानादरः ॥ विश्वाधारगुरुः सुवर्णकमलन्यस्तस्वपादोत्तरः । संघे श्रीविमलेश्वरः सुरतरुर्देयात्सदेष्टं फलं ॥ २० ॥ इति श्रीतपागच्छनायक भट्टारकश्रीरत्नसिंहसूरिशिष्यश्रीज्ञानसागरसूरिविरचिते श्रीविमलनाथचरित्रे महाकाव्ये भगवत्सिद्धिगमनवर्णनो नाम पंचमः सर्गः समाप्तः ॥ श्रीरस्तु ॥ अत्र पंचसहस्राणि । चरित्रे षट्शतानि च ॥ अनुष्टुभां द्विपंचाश–द्युतानि जगदुर्बुधाः ॥ आ ग्रंथश्रीजामनगरनिवासि पंडित श्रावक हीरालाल हंसराजे स्वपरनाश्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. श्रीरस्तु ॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

॥ इति श्रीविमलनाथचरित्रं समाप्तं ॥